अ० विषयाः पृष्ठाङ्काः

कृष्णाजिनपुष्करपर्णयोर्द्वाभ्यां मन्त्राभ्यां युगपदभिमर्शनविधानं तन्मन्त्रव्याख्यानं च, अभिमर्शनमन्त्रगतद्वित्वसंख्याया यजमानाग्निरूपेण प्रशंसनं चेत्यादि. ११३–११५

२ मन्त्रमन्त्रार्थसहितं मृत्पिण्डस्याभिमर्शनविधानं, साभ्रिणा दक्षिणहस्तेन केवलेनोत्तरहस्तेन चास्य मृत्पिण्डस्य "त्वामग्ने पुष्करा०" इत्यादिभिः षण्मन्त्रैः परिग्रहणविधानं, परिग्रहणमन्त्राणां व्याख्यानं तत्प्रसङ्गेन मन्त्रगतगायत्रीत्रिष्टुब्बृहतीछन्दसां प्रशंसनं च, परिग्रहणे विनियुक्तानां मन्त्राणां संख्यायाः सम्भूय संवत्सराग्न्यात्मना प्रशंसनं, मृत्पिण्डस्य दक्षिणप्रदेशादुदङ्मुखमाहरणस्य सार्थवादविधानं चेत्यादि. ११६–१२०

३ श्वभ्रेऽपामुपनिनयस्य मन्त्रमन्त्रार्थसहितं सार्थवादं विधानं, मन्त्रमन्त्रार्थयुतं श्वभ्रस्य वायुना सार्थवादं सन्धानकरणविधानं, वषट्करणेनाहुतिः कार्येति कृत्वा प्रशंसनम्, अनामिकयाऽङ्गुल्या प्रागादिदिग्भिः प्रदक्षिणं श्वभ्रस्य सार्थवादं सन्धानकरणविधानम्, आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयोः समन्त्रकमन्तयोरुद्ग्रहणविधानं कृष्णाजिनपुष्करपर्णयोरन्तयोरुद्गृहीतत्वात्त्रिवृता मुञ्जयोक्त्रेण परिवेष्टनरूपस्य बन्धनस्य मन्त्रतत्तात्पर्यसहितं विधानं, मृत्पिण्डमादायोत्थानस्य मन्त्रतद्व्याख्यानसहितं विधानम्, ऊर्ध्वबाहोरध्वर्योर्मृत्पिण्डस्य प्राङ्मुखं समन्त्रकं प्रग्रहणविधानं, स्तावकब्राह्मणातिदेशसहितं सावधि मृत्पिण्डस्याधोनयनविधानं चेत्यादि. १२१–१२६

४ मृत्पिण्डसाहित्येन पश्वभिमन्त्रणविधानं, तत्राश्वरासभाजानामभिमन्त्रणे क्रमेण मन्त्रत्रयं विनियुज्य तदर्थविवरणं, पश्वभिमन्त्रणमन्त्रगतसंख्यायाः प्रशंसनं च, अनुपस्पर्शनपूर्वकमश्वादिपशूनामुपरि मृत्पिण्डस्य धारणविधानं, तत्राश्वरासभाजानामुपरिपिण्डधारणे क्रमेण मन्त्रत्रयं विनियुज्य तदर्थविवरणं, प्रसङ्गान्मध्ये समन्त्रकं मृदाहरणविधानं च, अभिमन्त्रणमन्त्राणां धारणमन्त्राणां च संख्यायाः सम्भूय प्रशंसनं, सकारणक्रमविशिष्टं पशूनामावर्तनस्य विधानं, समन्त्रकमनद्धापुरुषस्येक्षणविधानं, सार्थवादमजस्योपरि मृत्पिण्डं धारयत एवाध्वर्योरागमनविधानम्, अजसकाशान्मृत्पिण्डस्योपावहरणं विधाय तत्र मन्त्रद्वयं विनियुज्य तदर्थविवरणं मन्त्रगतसंख्यायाः प्रशंसनं च, स्तावकब्राह्मणातिदेशसहितं मृत्पिण्डं दक्षिणत उदञ्चमुपावहृत्योद्धृतावोक्षिते सिकतोपकीर्णे परिश्रिते देशे निदध्यादिति विधानं परिश्रितस्य प्रयोजनाभिधानं च, मृत्पिण्डस्य विमोचनं विधाय तत्र मन्त्रं च विनियुज्य तदर्थविवरणम्, अजलोमान्यादाय प्रागुदङ्मुखान्पशूनुत्सृजेदिति दिक्प्रशंसनसहितं विधानं चेत्यादि. १२६–१३६

इति चतुर्थोऽध्यायः।


## अथ पञ्चमोऽध्यायः।


१ सार्थवादमपां पर्णकषितत्वं विधाय तासामब्दैवत्येन गायत्रेण तृचेन सेचनविधानं, तत्र तृचस्य तत्प्रतिपाद्यदेवतायाश्च प्रशंसनं, मृत्पिण्डे सार्थवादं कषायाजलफेनमृदजलोम्नां संमिश्रणविधानं, तत्राजलोमसंमिश्रणे मन्त्रं विनियुज्य तत्तात्पर्यवर्णनं, शर्कराश्मायोरसचूर्णैः

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | संसर्गस्य समन्त्रकं विधानं, अजलोमसंसर्गे शर्करादिसंसर्गे च विनियुक्तमन्त्रगतसंख्यायाः प्रशंसनं, तिसृभिर्ऋग्भिर्मृदः संमिश्रणविधानं तासामृचामभिप्रायप्रदर्शनं ,च, सम्मिश्रणमन्त्रगतत्रित्वसंख्यायास्त्रिवृदग्न्यात्मना प्रशंस्याजलोमशर्करादिसंसर्गे विनियुक्तमन्त्रगतद्वित्वसंख्यया सहोक्तसंख्यायाःप्रशंसनम्, एतस्याः पञ्चसंख्याया उदकसेचनमन्त्रगतत्रित्वसंख्यायाः प्रशंसनं प्रकारान्तरेणाप्येतस्या अष्टसंख्यायाः प्रशंसनं चेत्यादि. | १३७–१४२ |
| २ | उखाया अधस्तलपर्याप्तस्य मृत्पिण्डस्य समन्त्रकं सार्थवादमादानविधानं, मृत्पिण्डस्य समन्त्रकं सविशं प्रथनं विधाय तन्मन्त्रस्य व्याख्यानं, तिर्यक्प्रादेशमात्रं प्रथिताया निधिमृद उपरि मृत्पिण्डप्रक्षेपं समंत्रकं विधाय तन्मत्रव्याख्यानं, प्रथमोद्धेरुपर्यन्यमृत्पिण्डप्रक्षेपं समन्त्रकं विधाय तन्मन्त्रव्याख्यानं, निधेरुद्धिद्वयस्य च समीकरणं सविशेषं समंत्रकं विधाय तन्मन्त्रव्याख्यानं, उखाया ऊर्ध्वपरिमाणस्य सार्थवादं विधानं, सर्वथोखा प्रादेशमात्रीकर्तव्येत्यादिकथनम्, उखायाः परिमाणं पश्चनुष्ठानापेक्षया विकल्पितमिति प्रदर्शनम्, उखाया उत्तरभागे रास्नाकरणस्य मन्त्रतदभिप्रायसहितं सार्थवादं विधानं अन्यासां चतसृणामूर्ध्यानां रास्नानां तूष्णीं करणविधानं, तासामूर्ध्ववर्तीनामग्रेषु गोः साम्येन चतुर्णां स्तनानामुन्नयनकथनम्, एकेषां मतेन द्विस्तनात्मकमष्टस्तनात्मकं च पक्षद्वयमनूद्य तयोर्दूषणम्, उखाया विलस्य साभिप्रायं समन्त्रकं ग्रहणविधानं, मन्त्रमन्त्रार्थसहितमुखानिधानस्य विधानम्, एकेषां मतेन सोपपत्तिकमुखात्रयकरणात्मकं पक्षमनूद्य तं सोपपत्तिकं दूषयित्वा चोखैकैव करणीयेति सिद्धान्ततया प्रतिपादनं उखाया भेदने प्रायश्चित्त्यादिकमुत्तरस्मिन्नन्वाख्याने ब्राह्मणे वक्ष्यत इति प्रतिज्ञा चेति. | १४३–१५१ |
| ३ | संस्कृताया मृदः सकाशादुखानिर्माणात्पूर्वं महिषीकर्तृकायाः पादमात्र्यास्त्र्यालिखिताया अषाढाख्येष्टकायाः सार्थवादं सोपपत्तिकं निर्माणकथनम्, उखाया अषाढान्तरकर्तव्यताभिधानं, विश्वज्योतिःसंज्ञकानां तिसृणामिष्टकानामुखानन्तरकर्तव्यतायाः सार्थवादं विधानं देवतासम्बन्धप्रदर्शनं च, एतासामषाढोखाविश्वज्योतिषामध्यात्मत्वं प्रदर्श्य पुनरेतासामेव मन्त्राहृतमृदोत्पन्नत्वाषाढादिनामवत्वपादमात्रादिपरिमाणवत्वादीनामितरेष्टकानां वैलक्षण्येऽनुवादंकृत्वा प्रशंसनम्, अवशिष्टाया मृदो विनियोगकथनं, सकारणं सप्तभिरश्वशकृद्भिरुखाया धूपनस्य सार्थवादं समन्त्रकं विधानं शकृन्मंत्रदेवतानां सप्तसंख्यात्वेन साम्यस्य प्रशंसनं, संख्यागतसप्तत्वस्य यत्त्रित्वं तस्य प्रशंसनं चेति. | १५२–१५९ |
| ४ | सार्थवादं साभिप्रायमवटखननं सविशेषं विधाय तत्र मंत्रं विनियुज्य तद्व्याख्यानम्, अवटे पचनसाधनतृणादिकमास्तीर्य तत्राषाढायास्तूष्णीमवस्थापनं विधाय ततो न्युब्जाया उखायाः समंत्रकमवस्थापनविधानम् तन्मंत्रव्याख्यानञ्च, निर्माणक्रमप्राप्तानां विश्वज्योतिषां तूष्णी- | |

ब्रा० विषयाः पृष्ठाङ्काः

मवस्थापनम् विधाय पुनस्तत्र पूर्ववत्पचनादिकमास्तीर्य दक्षिणाग्न्यग्निना दीपन विधानम्, दीपने मंत्रं विनियुज्य तस्य व्याख्यानम्, उखामीक्षमाणस्य त्रयाणां यजुषां जपविधानम्, तेषां व्याख्यानं च,खननादिमंत्रगतसंख्यायाः प्रशंसनं, सामिप्रायं सार्थवादमुखाया मैत्रेण यजुषोपावहरणविधानम्, उपवापोद्वापयोः कालं नियम्य तत्रोद्वापे सावित्रस्य यजुषो विनियोजनं, उखायाः पर्यावर्तनस्य गर्तादुद्धरणस्य च समंत्रकं विधानम् तदुभयोर्मंत्रयोर्व्याख्यानं च, उखायाः क्षीरासेचनार्थं पात्रे स्थापनस्य मंत्रमंत्रार्थयुतं विधानम्, तस्यामुखायामाजस्य पयसः सार्थवादमासेचनं विधाय तत्र मंत्रचतुष्टयं विनियुज्य च तस्य व्याख्यानम्, आसेचननिर्माणधूपनमन्त्रगतदेवतैक्यस्य प्रशंसनंचेत्यादि. १५९–१६७

इति पञ्चमोऽध्यायः ।

**अथ षष्ठोऽध्यायः ।**

१ प्राकृतीमाग्नावैष्णवीष्टिं वैकृतीं वैश्वानरद्वादशकपालेष्टिं चादितो विधातुमुपोद्घातः, अतिकर्मशब्दस्य निर्वचनम्, अग्निचित्याया अतिकर्मत्वं प्रदर्शयितुं केषाञ्चिदतिकर्मणां परिगणनम्, आग्नावैष्णव एकादशकपालोऽध्वरस्य वैश्वानरो द्वादशकपाल आदित्यश्चरुश्चाग्नेरिति व्यवस्थापूर्वकं हविषां विधानम्, उभयविधहविषां करणाभिधानम्,अग्निचयनस्याध्वराग्न्युभयविधकर्मत्वाभिधानम्, तत्राप्यध्वरस्य पूर्वमथाग्नेरिति पौर्वापर्याभिधानञ्च, आग्नावैष्णवप्रयोगं सूचयितुमाग्निष्टोमिकब्राह्मणस्यातिदेशकथनम्, अग्नेर्दीक्षणीयं हविरनूद्य तत्प्रशंसनं, प्रकारान्तरेण पुरोडाशदेवतायाः प्रशंसनम्; वैकृते उभे हविषी समुच्चित्य प्रशंसनम्, उभयोर्हविषोः पूर्वापरीभावस्य कथनम्, पूर्वस्मिन्हविषि द्रव्यदेवतयोरेकत्वमुत्तरस्मिन्हविषि तद्बहुत्वं चास्ति तयोरधिदेवताध्यात्मतया प्रशंसनम्, चरोराश्रयभूतं द्रव्यमभिधायैषां त्रयाणां हविषामुपांशुधर्मकत्वप्रतिपादनम्, औद्ग्रभणानि हवींषि विधाय तेषां निर्वचनद्वारेण प्रशंसनम्, औद्ग्रभणहोमानां भूयस्त्वं विधायाग्निकैः सौमिकबाधप्रसक्तत्वाभिधानम्, आध्वरिकाणां पूर्वभावित्वमाग्निकानां पश्चाद्भावित्वं च विधाय तदर्थवादातिदेशकथनम्, आध्वरिकाणां पञ्चसंख्यायाः प्रशंसनम्, आग्निकानामौद्ग्रभणानां सप्तसंख्यारूपस्य हविर्भूयस्त्वस्य सार्थवादं विधानं, सप्तौद्ग्रभणहविर्मन्त्राननूद्य तेषां व्याख्यानं, केषांचिन्मतेन तप्तायामुखायामौद्ग्रभणहोमपक्षं सामिप्रायं सोपपत्तिकमनूद्य तं निराकृत्य च दीक्षणीयाख्ययज्ञे संस्थिते सत्यौद्ग्रभणेषु दीक्षासम्बन्धिषु हुतेषु सत्सु चोखाप्रवृञ्जनं कर्तव्यमिति स्वपक्षस्य सोपपत्तिकं प्रतिपादनं, सार्थवादमुखायां मुञ्जतृणावस्तरणविधानम्, मुञ्जकुलायादप्यन्तरं शणकुलायावस्तरणविधानं चेति. १६८–१७७

२ उखाप्रवृञ्जने उदक्प्राङ्मुखत्वस्थितत्वादिधर्मविशेषं विधाय मन्त्रौ विनियुज्य च तयोर्व्याख्यानं, मन्त्रगतं द्वित्वं छन्दोविशेषत्वं च प्रशंस्य प्रवृ-

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| ज्ञनस्य छन्दोभिमानिदेवताद्वारेण छन्दोगतसर्वदेवतात्मकत्वद्वारेण मन्त्रद्वयगतपादसंख्याद्वारेण च प्रशंसनं, सन्तपनानंतरं जायमानाया उखादीप्ते रेतोरूपेण सन्तापकस्याग्नेः पुरुषरूपेणोखाया योषिद्रूपेण सन्तापस्य सम्भोगरूपेण च प्रशंसनम्; उखायां चिरारोहणविषये केषाञ्चित्पक्षमुपन्यस्य तं सकारणं दूषयित्वा स्वपक्षस्य स्थापनम्, अग्नावारूढे कार्मुक्याः प्रादेशमात्र्या घृते न्युतायाः प्रथमाया समिधः सार्थवादं समन्त्रकमाधानविधानं तन्मत्रव्याख्यानं च, गर्भरूपायाः समिधः सर्वान्तरात्मत्वं प्रशंस्य तत्रोखादीनामात्मत्वादिकल्पनायामुपपत्तेः सप्रयोजनं प्रदर्शनं चेत्यादि. | १७८–१८९ |
| ३ द्वितीयातृतीयाचतुर्थीपञ्चमीनां वैकङ्कत्यौदुम्बर्यपरशुवृक्णाधःशयानां समिधां सार्थवादमाधानं विधाय तत्र प्रत्याधानं मन्त्रांश्च विनियुज्य तेषां व्याख्यानम्, उत्तरासामष्टानां पालाशीनां समिधां सार्थवादमाधानं विधाय तत्र प्रत्याधानं मन्त्रांश्च विनियुज्य तत्र षष्ठसप्तमयोर्मन्त्रयोर्विभज्य व्याख्यानमष्टमनवमदशमानां मन्त्राणां प्रतीकमात्रोपादानेनैकादशस्य मन्त्रस्य साकल्येन प्रदर्शनं च, एकादशस्य मन्त्रस्याख्यायिकया प्रशंसनं, सोपपत्तिकंतासामुक्तैकादशानां समिधां क्षत्रियपुरोहितव्यतिरिक्तत्वाभिधानं, क्षत्रियपुरोहितयोस्तु द्वादशसमिधो भवन्तीति निरूपणं, द्वादश्याः समिध आधाने पुरोहितपक्षे क्षत्रियपक्षे च क्रमान्मन्त्रौ विनियुज्य तयोस्ताःपर्याभिधानं, पक्षान्तरेणोपोत्तमोत्तमे उभे अपि समिधौ सर्वेषामाधातव्ये इति सार्थवादं निरूपणम्, एवमर्थसिद्धां त्रयोदशसंख्यामनूद्य तस्याः प्रशंसनम्, एतासां समित्रां प्रादेशमात्रत्वं विधाय प्रशंसनं, विहितस्य समिदाधानस्य स्वाहाकारान्ततां विधाय तस्याः प्रशंसनं चेत्यादि. | १८९–१९४ |
| ४ **अन्वाख्यानब्राह्मणम्**—समिदाधानानन्तरं सायमस्तमिते आदित्ये प्रातरुदिते आदित्ये च मन्त्रतत्तात्पर्योपेतं भस्मोद्वपनविधानं, नक्तंदिवं क्रियमाणयोः समिदाधानभस्मोद्वपनयोः समुच्चित्य प्रशंसनं, व्रतप्रदानकाले व्रतपयसि समिधं न्यज्याधातव्यमिति विधानम्, अत्र केषाञ्चिन्मतेन न्यञ्जनाभावपक्षं सोपपत्तिकमुदाहृत्य तं निराकृत्य च स्वकीयन्यञ्जनपक्षस्य सयुक्तिकं निगमनं, व्रतपरिग्रहस्य समिदाधानानन्तर्यप्रशंसनं तत्र मन्त्रं विनियुज्य तस्य विभज्य व्याख्यानम्, उखाभेदनादिप्रायश्चित्तिकथने प्रतिज्ञाकरणम्, उखाभेदने सप्रकारकं प्रायश्चित्तनिरूपणं, उख्याग्न्यनुगमने सप्रकारकं प्रायश्चित्तनिरूपणं, विहितं प्रायश्चित्तं सर्वकामसन्तानरूपत्वेन प्रशंस्य उभयविधप्रायश्चित्तं कर्तव्यमित्यभिधाय तद्गतप्रकारविशेषदर्शनं च, तत्राग्निकप्रायश्चित्ते प्रकारविशेषं मन्त्रविशेषं च दर्शयित्वा तन्मन्त्रार्थप्रदर्शनं, प्रसङ्गादुख्याग्न्याश्रयभूतगार्हपत्यस्याप्यनुगमे प्रायश्चित्ताभिधानं, सुत्याहे आहवनीयानुगमे प्रायश्चित्ताभिधानं, विहितस्य सौमिकाग्निकप्रायश्चित्तद्वयस्य व्यवस्था- | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| करणम्, आग्नीध्रीयाग्नेरनुगमने प्रायश्चित्ताभिधानं, सुत्याहे गार्हपत्यस्यानुगमे प्रागुक्तप्रायश्चित्तस्यातिदेशकथनं चेत्यादि. | १९९–२०२ |

इति षष्ठोऽध्यायः।

अथ सप्तमोऽध्यायः।

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| १ रुक्मप्रतिमोकं विधाय तद्धारणस्य बहुधा प्रशंसनं, रुक्मस्य कृष्णाजिने शुक्लकृष्णलोमरेखयोरुपरि त्रिवृता शाणसूत्रेण निस्यूतत्वस्य सार्थवादं विधानं, रुक्मधारणप्रदेशं विधाय तस्य बहुधा प्रशंसनम्, उख्याग्ने रुक्मस्योपरिधारणं विधाय तत्राप्यासन्द्यां धारणं कर्तव्यमिति सार्थवादं विधानम्, आसन्द्या औदुम्बरीत्वं विधाय तत्प्रशंस्य च तस्याः परिमाणविशेषस्याकारविशेषस्य च सार्थवादं प्रतिपादनं, स्तावकार्थवादातिदेश-सहितमासन्द्याः त्रिवृन्मौञ्जीभी रज्जुभिर्व्यूतत्वस्य मृदादिग्धत्वस्य च सप्रयोजनं प्रदर्शनं, आसन्द्यामप्युख्याग्नेः शिक्येन धारणं विधाय तस्याधिदैवताध्यात्मभेदेन प्रशंसनं, तत्र प्रसङ्गाच्छिक्यशब्दनिर्वचनं- शिक्यरूपकल्पनायाः प्रयोजनकथनं- शिक्यपाशानां मौञ्जत्वत्रिवृत्त्वयोः प्रदर्शनं च, उखयैवाग्नेर्धारणं प्रशंस्योखायाः स्वशब्दप्रवृत्तिनिमित्तद्वारा स्वगताक्षरसंख्यया पर्यायान्तरं समुच्चित्य तद्गताक्षरसंख्यया च प्रशंसनम्, उख्याग्नेरिण्ड्वाभ्यां परिग्रहं विधाय तयोरिण्ड्वोरहोरात्रात्मना द्युपृथिव्याख्यलोकद्वयात्मना च प्रशंस्य स्तावकार्थवादातिदेशसहितमिण्ड्वयोर्मुञ्जविधृतित्वत्रिवृत्त्वयोर्विधानं, धर्तव्यस्याग्नेः साधनभूतपदार्थगतसंख्यायाः प्रशंसनं, प्रधानपदार्थगतसंख्यासंपत्कथनानंतरं सर्वविषयायाः संपत्तेः प्रदर्शनं चेति. | २०४–२१४ |
| २ रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रेषु स्थितत्वप्रागुदङ्मुखत्वादिधर्मविशेषकथनं, तत्र रुक्मप्रतिमोके मन्त्रं विनियुज्य तस्य व्याख्यानम्, उख्याग्नेरिण्ड्वाभ्यां परिग्रहणे मन्त्रं विनियुज्य तस्य व्याख्यानं, शिक्यपाशप्रतिमुञ्चनं विधाय तत्र मन्त्रं विनियुज्य तस्य व्याख्यानम्, उख्याग्नेर्विकृतिछन्दस्केन मन्त्रेण सार्थवादं विकरणं विधाय तन्मन्त्रव्याख्यानं, प्रसङ्गात्केषाञ्चिन्मतेन द्रोणचितादिचयनपक्षानुदाहृत्य तान्प्रत्याख्याय च स्वकीयसुपर्णचितचयनपक्षस्य निगमनं, विकृतिछन्दस्केनैव मन्त्रेणोर्ध्वं प्राञ्चमुख्याग्नेः सार्थवादं सप्रकारकं प्रग्रहणं विधाय स्तावकातिदेशसहितं नाभेरुपर्युपावहरणपूर्वकं धारणविधानं, सप्रकारकं विष्णुक्रमक्रमणं विधाय तस्य निर्वचनद्वारेण प्रशंसनं, तत्र मन्त्रचतुष्टयं विनियुज्य तस्य व्याख्यानं, मन्त्रव्याख्यानप्रसङ्गेन तत्तत्क्रमणे प्रकारविशेषकथनं चेति. | २१४–२२२ |
| ३ प्रागुक्तस्य विष्णुक्रमेणाग्नेरूर्ध्वोद्भ्रमणस्योर्ध्वबाहुना धारणप्रकारं हस्तेनाभिनीय तस्य सार्थवादं विधानं, तत्र मंत्रं विनियुज्य तस्य व्याख्यानम्, ऊर्ध्वं धृतस्याग्नेरवरोहणं सार्थवादं विधाय पुनस्तस्यैव प्रकारान्तरेण प्रशंसनं, तत्रावरोहणे मंत्रचतुष्टयं विनियुज्य सोपपत्तिकं सार्थवादं मंत्रचतुष्टयस्य संग्रहेण तात्पर्यार्थप्रदर्शनम्, उपरि नाभि | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | धृतस्याग्नेरभिमंत्रणं विधाय तत्र मंत्रं विनियुज्य च तस्य व्याख्यानं, शिक्यपाशरुक्मपाशयोः सार्थवादमुन्मोचनं विधाय तत्र मंत्रं विनियुज्य तस्य तात्पर्यार्थप्रदर्शनं, पूर्ववत्सार्थवादं सप्रकारकं प्रग्रहणं विधाय तत्र मंत्रं विनियुज्य तस्य व्याख्यानम्, एतस्योख्याग्नेः सोपपत्तिकं साभिप्रायं त्रिभिर्मन्त्रैरुपस्थानविधानं चेत्यादि. | २२३–२३० |
| ४ | साभिप्रायं पुनरेतस्योख्याग्नेर्वात्सप्रेण सूक्तेनोपस्थानविधानं, प्रसङ्गादस्य वात्सप्रसूक्तस्य यज्ञाद्वहिर्भूततया जातस्यायुष्यकरणफलस्य काम्यप्रयोगस्य प्रदर्शनं, वात्सप्रप्रसङ्गात्प्रागमिहिताया: "सुपर्णोऽसि" इत्येतस्या विकृत्या अपि यज्ञाद्वहिर्भूततया जातस्यैव वीर्यवत्त्वफलकस्य काम्यप्रयोगस्य प्रदर्शनं, वात्सप्रोपस्थाने एकादशर्चं सूक्तं विधाय तत्रादिमस्य तृचस्य विभज्य व्याख्यानं, उक्तस्य तृचव्याख्यानस्योत्तरास्वृक्षु समानत्वामिधानं, विष्णुक्रमवात्सप्रयोः समुच्चित्य लोकतदधिष्ठातृदेवतादिसकलजगदुत्पादकतया प्रशंसनं, पुनर्विष्णुक्रमणस्य स्वर्गप्राप्तिसाधनात्मना वात्सप्रस्य तदवसानात्मना च प्रशंसनं, दीक्षाप्रथमदिवसे विष्णुक्रमवात्सप्रयोः समसनविधानं, विहिते विष्णुक्रमवात्सप्रे एकस्मिन्दिने विष्णुक्रमाः अपरस्मिंस्तु दिने वात्सप्रमित्येवं क्रमेण कर्तव्ये इत्येतत्सार्थवादं विधानं, उक्तप्रकारेण संवत्सरपर्यन्तमनुष्ठितवतः फलितप्रदर्शनं, आद्यन्तयोरह्नोरुमयोर्विष्णुक्रमव.त्सप्रस्थानीयत्वं, तयोः समुच्चित्यानुष्ठानं विधाय प्रशंसनं, 'अहर्वै विष्णुक्रमो रात्रिर्वात्सप्रम्" इत्यत्र शङ्कासमाधानप्रतिपादनं, आद्यावन्ते च समासकरणस्य सकारणमभिधानं, चरमदिवसे विधेयानुष्ठानाभिधानं, दीक्षान्त्यदिवसस्य पक्षे विष्णुक्रमीयत्वं पक्षे वात्सप्रीयत्वं च भवति तदाऽनुष्ठानप्रकारस्य विभज्य प्रदर्शनं चेत्यादि. | २३१–२३९ |

इति सप्तमोऽध्यायः ।

## अथाष्टमोऽध्यायः ।

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | वनीवाहनम्–तत्र पूर्वमुख्याग्नेर्गार्हपत्यं प्रतिअनसा प्रापणं । विधातुमुपोद्घातकथनं, साभिप्रायमन्वव्यतिरेकाभ्यां वनीवाहनकर्मविधानं, वनीवाहनस्य प्रकारान्तरेण प्राप्तिमाशङ्क्य तत्समाधानकथनं, दैवं मानुषं चेत्युभयविधमपि वनीवाहनं कर्तव्यमिति सकारणं प्रदर्शनम्, उक्तार्थज्ञानपूर्वकमनुतिष्ठतः फलाभिधानम्, उख्याग्नेगार्हपत्यचयनदेशं प्रति प्रणयनप्रयोगनिरूपणं तत्र साभिप्रायं समंत्रकं सार्थवादं समिदाधानविधानम्, उख्याग्नेरनस उपरि स्थापयितुं सासन्दीकमुद्यमनविधानं, तत्र मंत्रं विनियुज्य तस्य व्याख्यानम्, उद्धृतस्याग्नेरनसि स्थापने विशेषाभिधानं तत्र स्तावकार्थवादातिदेशकथनं च, अनस्यनुडुहोर्योजनं तत्क्रमं च प्रतिपाद्य तत्र मंत्रं विनियुज्य च तस्य व्याख्यानं, गमनसमयेऽनसोऽक्षध्वनौ सार्थवादं जपरूपप्रायश्चित्तनिरूपणम्, उख्याग्नेर्वासेऽवहरणपूर्वकं संस्कृते देशे स्थापनं विधाय तत्र पूर्ववत्साभिप्रायं समंत्रकं समिदाधानं विधाय तन्मंत्रस्य | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | व्याख्यानं, विनियुक्तानां मंत्राणां संपत्तेः प्रदर्शनं चेत्यादि. | २४१—२४८ |
| २ | भस्मन एवाभ्यवहरणस्याख्यायिकया मीमांसाकरणं, तत्राप्सु भस्मप्रक्षेपं तन्मंत्रं च विधाय मंत्रव्याख्यानं. भस्माभ्यवहरणेऽपरं मन्त्रद्वयं विनियुज्य तयोर्व्याख्यानं प्रशंसनं च, मन्त्रगतत्रित्वप्रशंसनं, मन्त्रत्रयेण सकृद्भस्मप्रक्षेपप्रसक्तिं निषिध्य सप्रकारकं त्रिरभ्यवहरणविधानं, अद्भ्यः पुनरीबद्भस्मादातव्यमिति विधाय प्रशंस्य च मंत्रचतुष्टयं विनियुज्य तद्व्याख्यानम्, उत्तरमंत्रद्वयस्य पृथग्विनियोगशङ्काया निराकरणं, भस्मनोऽभ्यवहरणपुनरपादानमंत्रगतायाः संख्यायाः समुच्चित्य प्रशंसनं, प्रत्येत्यात्तं भस्मोखायामोप्योपतिष्ठेतेति सप्रयोजनं सप्रसङ्गं सार्थवादं निरूपणं, तत्र मंत्रद्वयं विनियुज्य स्तावकार्थवादातिदेशसहितं तयोर्मन्त्रयोर्व्याख्यानम्, एतन्मंत्रगतां द्वित्वसंख्यां प्रागुक्तभस्माभ्यवहरणतदपादानमन्त्रगतसंख्यया समुच्चित्य तस्याः समुच्चितायाः संख्यायाः प्रशंसनम्, उपस्थानानंतरं द्विविधप्रायश्चित्तस्य तन्निमित्तस्य च प्रदर्शनं, प्रागुक्तमन्त्रगतनवसंख्यया सह प्रायश्चित्तमन्त्रसंख्यां समुच्चित्य तस्याः प्रशंसनं चेत्यादि. | २४८—२९४ |

इत्यष्टमोऽध्यायः ।

**इति उखासम्भरणनामके षष्ठे काण्डे विषयानुक्रमणिका समाप्ता ॥**

ब्रा० विषयाः पृष्ठाङ्काः । ब्रा० विषयाः पृष्ठाङ्काः

## प्रथमोऽध्यायः ।

१ गार्हपत्याग्निचयनम्—तत्र पूर्वं विधित्सितस्य गार्हपत्यधिष्ण्यचयनस्य पूर्वभवान्भूसंस्कारान्विधातुमादौ तत्स्थानस्य सप्रयोजनं साभिप्रायं समन्त्रकं पलाशशाखया व्युदूहनविधानम्, विहिते व्युदूहने विनियुक्तस्य मन्त्रस्य पादशोऽनूद्य व्याख्यानम्, व्युदूहने विहितस्य पलाशशाखाकरणत्वस्य मन्त्रकरणत्वस्य चानूद्य प्रशंसनं, तस्याः पलाशशाखाया उदङ्निरसनविधानम्, सम्मार्जनानन्तरमूषाणां निवपनस्य सहेतुकं सार्थवादं विधानम्, तस्मिन्निवपने मंत्रं विनियुज्य तदर्थविवरणम्, न्युतैरूषैः प्रच्छादनं विधाय तस्य प्रशंसनम्, सार्थवादं मन्त्रं तदभिप्रायोपेतं सिकतानां निवपनविधानम्, सिकताभिः प्रच्छादनं विधाय शर्कराभिः परिश्रयणस्य सार्थवादं सप्रकारकं विधानम्, तत्र परिश्रयणे मन्त्रं विधाय तस्य व्याख्यानम्, मन्त्रस्थ "सूददोहसः" इति पदस्योच्चारणनिषेधस्योपपादनमेकेन यजुषा बहूनां परिश्रितां स्थापनस्योपपादनं च, परिश्रिद्रूपसिकतानां बाह्याभ्यन्तरमात्रं विधाय तस्य प्रशंसनम्, इत्थं संस्कृतस्य गार्हपत्यायतनस्येष्टकाभिश्चयनविधानम्, विहितस्य चयनस्य निष्पत्तये इष्टकानामुपधानप्रकारविधानम्, उपधेयासु त्रिविधास्विष्टकास्ववयवक्लृप्तिं प्रतिपाद्य तासां चतसृणामिष्टकानामुपधाने चतुरो मंत्रान्विनियुज्य तेषां व्याख्यानम्, एतासामिष्टकानां क्रमेण कृतमुपधानमनूद्य तस्य प्रशंसनम्, सादनसूददोहसोः सकृत्त्वं विधाय तत्प्रशंसनम्, पश्चिमार्ध्ययोरिष्टकयोरुपधानप्रकारकथनम्, तत्र मन्त्रं विनियुज्य तद्व्याख्यानम्, मंत्रतत्तात्पर्योपेतं पाश्चात्ययोरुत्तरस्या इष्टकाया उपधानविधानम्, सार्थवादं सकारणं पाश्चात्ययोरिष्टकयोरुपधानसादनादीनां पृथक्कर्तव्यताभिधानम्, अग्रप्रदेशेन तयोः परस्परसंसर्गस्य विधानम्, समन्त्रकं पूर्वार्ध्ययोरिष्टकयोरुपधानप्रकारनिरूपणम्, एतासामिष्टकानामुपधानस्य प्रादक्षिण्यमुपनयेन दर्शयित्वा तस्य प्रशंसनम्, उपहितानामिष्टकानां सम्भूय संख्यायाः प्रशंसनं, सादनसंख्यामनूद्य तस्याः प्रशंसनम्, संख्याद्वयं सम्भूय तस्य प्रशंसनं, वक्ष्यमाणस्तावकार्थवादातिदेशसहितं लोकम्पृणाख्याया इष्टकाया उपधानविधानम्, सकृत्पठितेन लोकम्पृणेति मन्त्रेण तिसृणां युगपदुपधानविधानम्, तेनैव सकृत्पठितेन मन्त्रेण दशानामिष्टकानामुपधानविधानम्, पूर्वं त्रयोदश लोकम्पृणानां द्वेधा विभागेनोपधानपक्षमभिधायेदानीं त्रेधाविभागपक्षस्याप्यभिधानम्, पूर्वाभिरिष्टकाभिः सहैतासामिष्टकानां संख्यां सम्भूय तस्याः प्रशंसनम्, परिश्रितां संख्यामनूद्य तस्याः प्रशंसनम्, वक्ष्यमाणस्तावकार्थवादातिदेशयुतं पुरीषनिवपनविधानं,

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | सार्थवादं पुरीषाहरणस्थानविधानम्, इत्थं पुरीषान्तां गार्हपत्यचितिमुक्त्वाऽथ तस्याः प्रान्तेषु साम्यस्य स्तावकार्थवादातिदेशसहितमभिधानं गार्हपत्यचितेः सार्थवादं परिमाणं विधाय परितो मण्डलाकारत्वविधानम्, गार्हपत्यचितिरूपस्याग्नेरुख्याग्नेश्च चतुर्भिर्मन्त्रैः संसर्जनविधानम्, तन्मन्त्राणां तात्पर्याभिधानञ्च, चतुर्मन्त्रकरणकमुख्याग्नेर्गार्हपत्यचितिमध्ये सकारणं निवपनविधानम्, रिक्ताया उखाया अध्वर्युकर्तृकस्य यजमानकर्तृकस्य वाऽवेक्षणस्य निषेधं प्रतिपाद्य तस्याः सिकताभिः समगर्तत्वकरणविधानम्, उखायाः शिक्याद्विमोचनस्य सप्रयोजनं सोपपत्तिकं सदृष्टान्तं मन्त्रतदर्थविवरणोपेतं विधानम्, स्तावकार्थवादातिदेशयुतं तस्या उखाया ज्वलनरूपस्याग्नेरुत्तरपार्श्वेऽरत्निमात्रे चितावेव स्थापनं कर्तव्यमित्यभिधानम्, सिकतापूर्णाया उखाया मध्ये तूष्णीं पयस आसेचनस्य सकारणं सदृष्टान्तं विधानम्, सिकतापयसोरधरोत्तरभावमनूद्य तत्प्रशंसनं, उखायां पयस आनयनस्थानस्य विधानञ्चेत्यादि. | १—२४ |
| २ | उरव्यपेण संस्कृतस्य गार्हपत्याग्नेर्विराड्रूपप्रजापत्यात्मत्वं वक्तुं प्रजापतेः संस्कृतिं विवक्षया च तच्छरीरविश्लेषणस्य प्रतिपादनं, अनन्तरमस्य देवैः कृतसंस्कारत्वस्योपवर्णनम्, इत्थं सम्प्रधारितमर्थं कर्तुं देवा अग्निं प्रार्थितवन्तः— सोऽपि तत्प्रार्थनमङ्गीकृतवानित्यभिधानम्, इदानीन्तनप्रसिद्ध्या देवानामग्निमुखत्वस्य दृढीकरणम् उत्क्रान्तानां प्राणादीनां परिणामविशेषस्याभिधानं, प्रकृतमनुसृत्य तस्य कीदृक्किमङ्गमित्यादि सोपपत्तिकमभिधानं, प्रतिष्ठारूपस्य प्रजापतेः संस्कारमभिधाय चित्याग्नेरपि तादृक्संस्कारं वक्तुं तयोस्तादात्म्युपवर्ण्य सोपपत्तिकं संस्कारसामत्वस्योपवर्णनं, समिधामहरहरभ्याधानमनूद्य तत्र कारणं प्रतिपाद्य रुक्मप्रतिमोचनोख्यभरणादीनां संवत्सरकालव्याप्तेरभिधानं, अत्रोक्तेऽर्थे वामकक्षायणर्षेः सामिप्रायं मतनिरूपणं, प्रकृतस्य चयनात्मकस्य प्रजापतेर्लोकत्रयात्मत्वं तदधिष्ठात्रग्निवाय्वादित्यात्मत्वं च प्रतिपाद्य पुनस्तस्याधियाज्ञिकाध्यात्मिकरूपद्वयस्य प्रतिपादनं, चित्यात्मकस्याहवनीयस्य तत्र निधीयमानस्याग्नेश्च क्रमेण शीर्षत्वं शीर्षण्यप्राणत्वं च प्रतिपाद्य तयोरेव पक्षपुच्छवत्त्वस्य सोपपत्तिकं प्रतिपादनं, प्रकारान्तरेणापि तस्याधियाज्ञिकाध्यात्मिकरूपत्वस्य प्रतिपादनं, त्रिचितिको गार्हपत्यश्चेतव्य इत्येकीयं मतं सोपपत्तिकमुपन्यस्य वक्ष्यमाणसम्पत्त्रयातिरेकरूपदोषाभिधानेन तं पक्षं निराकृत्य तथाऽवाङ्प्राणानामुक्तं त्रित्वमङ्गीकृत्य तदपि निराकृत्यैकत्वस्य सोपपत्तिकं निगमनं, पूर्वमुपक्षिप्ताया अनुष्टुब्बृहत्योः सम्पत्तेरभिधानं, तत्र तिस्रोऽनुष्टुभः सम्पाद्य, तासां प्रयोजनपुरःसरमुपयोगकथनं, प्रतिपादितार्थद्वयस्य फलाभिधानं, प्रागुपन्यस्ताया बृहतीसम्पत्तेरुपपादनं, गार्हपत्याग्नीध्रीयाहवनीयानां क्रमेण पृथिव्यन्तरिक्षद्युलोकात्म- | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
| --- | --- |
| कत्वात्क्रमेणैव तेषां संस्कारो युक्त इत्याशंक्य व्युत्क्रमानुष्ठानस्य सकारणं सप्रयोजनमुपपादनं चेत्यादि. | २५-३७ |

इति प्रथमोऽध्यायः ।

## अथ द्वितीयोऽध्यायः ।

| ब्रा० विषयाः | पृष्ठाङ्काः |
| --- | --- |
| १ **नैर्ऋतीष्टकाचयनम्**-तत्र पूर्वं आख्यायिकया प्रयोजनकथनपुरःसरं नैर्ऋतीनामिष्टकानामुपधानस्य विधित्सया तासां हरणाय. संग्रहेण प्रतिज्ञाकरणं, इदानींतनानुष्ठानस्याप्युक्तप्रयोजनार्थत्वाभिधानम्, नैर्ऋतीनामिष्टकानां तमोऽपहन्तृत्वद्वारा नामनिर्वचनं, नैर्ऋतीनां हरणमनूद्य पापरूपस्य तमसो गर्भसम्बन्धिश्लेष्मोल्वादिरूपस्य च पाप्मनो निर्हरणहेतुत्वस्याख्यायिकया दृष्टान्तदार्ष्टान्तिकपद्धत्या प्रतिपादनं, तासां निर्ऋतीष्टकानां सार्थवादं परिमाणं सोपपत्तिकं त्र्यादिलिखितादिकलक्षणरहितत्वं-सार्थवादं पाकप्रकारं सकारणं कार्ष्ण्यं चेत्येतन्निरूपणं, तासामुपधानार्थं दिग्विशेषे साभिप्रायं देशविशेषं दर्शयित्वा पराचीनत्वादिधर्मविशेषकथनम्, तत्र तिसृणामिष्टकानां क्रमेण त्रीन्मंत्रान्विनियुज्य तेषां पादशो विभज्य व्याख्यानम्, इष्टकान्तरवदासु प्रसक्तानामुपस्पर्शनसादनसूददोहसां निषेधकरणं, तासामुपधाने पूर्वमेकं प्रकारमभिधाय तं निषिध्य पश्चात् द्वितीयप्रकारप्रतिपादनम्, तासां नैर्ऋतीनां संख्यामनूद्य तस्याः प्रशंसनं, नैर्ऋतीनां परार्धे भागे आसन्द्यादीनां प्रासनस्य मन्त्रतदर्थव्याख्यानोपेतं सोपपत्तिकं मंत्रगतछन्दःप्रशंसासहितं विधानम्, इष्टकादीन्सम्भूयानूद्य संख्याद्वारा तत्प्रशंसनम्, इष्टकानां मध्ये सार्थवादमुदचमसस्य निनयनविधानं, निषेचनानन्तरं मंत्रतद्व्याख्यानयुतमुपोत्थानं विधाय सार्थवादं धर्मविशिष्टं शालां प्रत्यागमनविधानं, सप्रयोजनं गार्हपत्योपस्थानं विधाय तत्र मंत्रं विनियुज्य तस्य व्याख्यानं चेत्यादि. | ३९-५० |
| २ **प्रायणीयेष्टिः**-तत्रादौ प्रायणीयेष्टिं विधाय प्रधानहविःप्रचारात्पूर्वतनानां हविष्कृद्वाग्विसर्गादीनां केषाञ्चित्पदार्थानामनुवादपूर्वकं प्रायणीयहविषः प्रचारविधानं, प्रायणीयस्य शय्वन्ते सीरयोजनं विधाय सीरस्य नामनिर्वचनद्वाराऽन्नरूपताविष्करणं, सीरोपादानभूतं वृक्षविशेषं विधाय तत्प्रशंसनं, सीरयोजनार्थानां रज्जूनां मौञ्जत्वस्य त्रिवृत्त्वस्य च स्तावकार्थवादातिदेशसहितं विधानं, युज्यमानस्य सीरस्य स्थानविशेषविशिष्टमभिमन्त्रणं विधाय तत्र मंत्रद्वयं विनियुज्य तस्य क्रमात्परोऽक्षप्रत्यक्षवृत्त्या पादशोऽनूद्य व्याख्यानं मंत्रद्वयगतछन्दःप्रशंसकार्थवादातिदेशकथनं च, विहिते सीरयोजने दक्षिणसव्ययोर्धुर्ययोः पौर्वापर्यं विधायानुद्रुहां वैकल्पिकस्य संख्यात्रितयस्य सोपपत्तिकं विधानं, सार्थवादं चित्याग्निक्षेत्रमध्ये विकर्षणविधानं, तत्र विकर्षणं पक्षपुच्छानि विहायात्मन्येव कर्तव्यमित्यभिधानं, परिश्रितां समीपे आत्मनो दक्षिणभागेऽन्तरतः प्रागायतां मंत्रतदर्थसहितां प्रथमां सीतां दक्षिणश्रोणेरारभ्योदगायतां पश्चिमपार्श्वे मन्त्रतदर्थसहितां | |

| क्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| द्वितीयां सीतां उत्तरपार्श्वे प्रागायतां मन्त्रतदर्थयुतां तृतीयां सीतां च विधाय पूर्वपार्श्वे दक्षिणायतताया मन्त्रतदर्थयुताया श्चतुर्थ्याः सीताया विधानम्, उक्तं कर्षणं समन्त्रकमनूद्य तत्प्रशंसनम्, अमन्त्रकं द्वादशसंख्याकानां सीतानां कर्षणं विधाय तत्प्रशंसनं, विहितानाममन्त्रकाणां चतसृणां सीतानां प्रत्येकं त्रित्वं विधाय प्रशंसनम्, अमन्त्रकसीतासंख्यां सम्भूय तस्याः प्रशंसनं, विकर्षणमनूद्य तस्य प्रकारान्तरेण प्रशंसनं, समंत्रकं कर्षणमनूद्य तस्य संख्याद्वारा प्रशंसनं, अमंत्रकं कर्षणं पुनरनूद्य तत्प्रशंसनं, कर्षणानन्तरमनुडुहां विमोचनं विधाय तत्र मंत्रं विनियुज्य तस्य पादशो व्याख्यानं, स्तावकार्थवादातिदेशसहितमुत्तरपूर्वस्यां दिशि तेषामनुडुहां प्रस्थापनं विधाय तेषां दक्षिणाकाले दानविधानं दाने कालविशेषविधानं चेत्यादि. | ९०—९२ |
| ३ दर्भस्तम्बोपधानम्—तत्र दर्भस्तम्बानां कृष्टक्षेत्रमध्ये दर्भनामनिर्वचनसहितं सप्रयोजनं सार्थवादं सोपपत्तिकं तूष्णीमुपधानकरणविधानं, सार्थवादं पञ्चगृहीतेनाज्यद्रव्येणाभिहोमं विधाय तस्य बहुप्रकारेण प्रशंसनं; अभिहोमे मन्त्रं विधाय व्याहृतिरूपेण त्रयोदशधा विभज्य च तस्य चितिपुरीषात्मना प्रशंसनं, त्रयोदशधा विभक्ता मन्त्रावयवा व्याहृतिरूपाः स्युरिति सोपपत्तिकमभिधानम्, आज्यस्य होमसाधनत्वं पञ्चगृहीतत्वं चानूद्य तयोः प्रशंसनम्, अभिहोमे स्रुचामुद्गृहीतत्वं विधाय तत्प्रशंसनं चेति. | ९३—९८ |
| ४ अपां निनयनं सर्वौषधवपनं च—तत्रादौ कृष्टे क्षेत्रे कर्षणक्रमेणोदचमसकरणकमपां निनयनविधानम्, उदकनिनयने चमसकरणत्वं विधाय तत्प्रशंसनं, चमसस्यौदुम्बरत्वं चतुष्कोणत्वं च विधाय तयोः प्रशंसनं, चतसृषु चतसृषु सीतासु त्रयाणां त्रयाणामुदचमसानां निनयनं विधाय तत्प्रशंसनं, कृष्टप्रदेशे द्वादशभिरुदचमसैर्निनयनं विधाय तत्प्रशंसनं, तस्योदकनिनयनस्य कृष्टक्षेत्राधिकरणत्वमनूद्य तत्प्रशंसनं, कृष्टाकृष्टात्मके प्रदेशे यदुदकनिनयनं विहितं तत्करणचमसानामपि त्रिसंख्यामुपजीव्य प्रशंसनम्, उक्तेऽर्थे पुरावृत्तस्य प्रतिपादनं, पूर्ववच्चतसृषु चतसृषु सीतासु त्रयाणां त्रयाणामुदचमसानां निनयनं विधाय तत्प्रशंसनं, कृष्टप्रदेशे द्वादशभिरुदचमसैर्निनयनं विधाय तत्प्रशंसनं, कृष्टप्रदेशे उदकनिनयनस्य प्राणाधिकरणनिनयनरूपतायाः प्रतिपादनं, कृष्टाकृष्टयोरुदकनिनयनचमसगतं त्रित्वमनूद्य तस्याप्यपां निधानहेतुतायाः प्रतिपादनं, पृथग्विहितामुदचमससंख्यां सम्भूय तस्याः प्रशंसनं, प्रकृते औदुम्बरचमसे सर्वधान्यानामावापविधानम्, उक्तं धान्यगतसर्वत्वमनूद्य तत्स्तवनम्, उप्तानामन्नानां मध्ये एकस्यौषधिरूपस्य बीजस्य वर्जनविधानं तत्र धर्मविशेषविधानं च, उदकनिनयनवद्बीजावपनेऽपि चतुरस्रस्यौदुम्बरचमसस्य करणत्वेन विधानं, बीजावपनस्य मन्त्रगतछन्दोद्वारा प्रशंसनं, बीजावापसाधनभूतो ह्यनुवाकः पञ्चतृचात्मकः तत्र सर्वत्र क्रमेण तृचै- | |

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

रेवौषधिवापः कर्तव्य इति सार्थवादं विधानं, कृष्टप्रदेशे द्वादशभिर्ऋग्भिर्वपनं विधाय तत्प्रशंसनं, बीजावापस्य क्षेत्राधिकरणत्वमनूद्य तस्य प्रशंसनं, कृष्टाकृष्टात्मके यद्बीजावपनं विहितं तत्करणमन्त्राणामपि त्रिसंख्यामुपजीव्य प्रशंसनं, एवमन्नचितिरूपेण बीजावापं प्रशंस्य भेषजरूपेणापि तस्य प्रशंसनं, पूर्ववत्सर्वत्वमनूद्य तत्प्रशंसनं, तृचकरणकं बीजावपनमनूद्य तस्यापि भेषजरूपत्वेन प्रशंसनं, चतसृषु सीतासु करणमन्त्राणां द्वादशसंख्यामनूद्य तस्या अपि भेषजरूपत्वेन प्रशंसनं, कृष्टप्रदेशे वपनस्य प्राणभैषज्यरूपतया अभिधानं, कृष्टाकृष्टबीजावपने च मन्त्रगतं त्रित्वमनूद्य तस्यापि भेषजहेतुत्वाभिधानम्, उदचमससंख्यां बीजावापमन्त्रसंख्यां चानूद्य सम्भूय च तयोः प्रशंसनं, बीजावापमन्त्रपदानामनुवादपूर्वकमभिप्रायप्रदर्शनपुरःसरं च मन्त्रव्याख्यानं, उक्तमृग्द्वयव्याख्यानमुत्तरास्वृक्ष्वपि समानमिति तस्यातिदेशकथनम्, अतिदिष्टस्य व्याख्यानस्य यथावन्नियोजनं, ऋचां छन्दोद्वारा भेषजहेतुत्वनिरूपणं, विहितानामनुडुद्योजनाद्योषधिवापान्तानां कर्मणां समन्त्रकामन्त्रकत्वं सम्भूय तत्प्रशंसनं, निरुक्तानिरुक्तानि कर्माण्यनूद्य चित्याग्निरूपस्य प्रजापतेरपि निरुक्तानिरुक्तभेदेन परिमितापरिमितभेदेन च द्विरूपत्वस्याभिधानं, समन्त्रकेण निरुक्तेनानुडुद्योजनादिकर्मणा निरुक्तभागस्येतरेणेतरभागस्य च संस्कारं विभज्य तस्य योजनं, विद्वदनुष्ठानस्य प्रशंसनं, वाह्याभ्यन्तरभावेन निरुक्तानिरुक्तत्वधर्मयोगाच्चित्याग्नेः पशुरूपतां सम्पाद्य तस्याः प्रशंसनं चेत्यादि. ६८-७८

इति द्वितीयोऽध्यायः ।

## अथ तृतीयोऽध्यायः ।

१ **सोमक्रयणादिकम्**—तत्र साग्निचित्ये क्रतौ सोमक्रयणस्य कालं विधाय तत्प्रशंसनं, सोमक्रयस्य मध्येऽनुष्ठानस्याधिलोकतयाऽध्यात्मतया च प्रशंसनं, राजक्रयस्य मध्येऽनुष्ठानस्य कृत्स्नशरीरे रसानुषङ्गहेतुत्वेनापि प्रशंसनम्, आतिथ्यहविष्क्षदन्ते आहवनीयचितिसंस्कारं विधातुं तत्पूर्वतनस्य चोदकप्राप्तस्य सोमातिथ्यादिप्रयोगजातस्यानुक्रमणम्, सौमिकाग्निककर्मणोः परस्परं व्यतिषङ्गस्य सप्रयोजनं सार्थवादं विधानम्, वाग्विसर्जनानन्तरमाहवनीयसमीपदेशगमनविधानम्, गार्हपत्यस्थानवदाहवनीयस्थानस्यापि पलाशशाखया व्युदूहनमेकीयमतेनोपन्यस्य सोपपत्तिकं तस्य दूषणं, गार्हपत्यचितिवत्प्राप्तमूषनिवपनं सकारणं निषिध्याहवनीये प्रतिनियतं विधास्यमानं पुष्करपर्णोपधानमनूद्य तस्य प्रतिनियतफलप्रतिपादनेन प्रशंसनं, गार्हपत्यवदाहवनीयेऽपि सिकतानिवपनं कर्तव्यमिति विधानम्, उभयत्र मन्त्रभेदं विधाय तत्प्रशंसनम्, गार्हपत्यचयने सिकतानिवपनस्य पूर्वभावित्वमनूद्य प्रशंस्य च तत्र पूर्वभावित्वे दोषप्रदर्शनम्, आहवनीयचितौ तु सिकतानिवपनात्पूर्वं परिश्रिद्भिः परिश्रयणमभिप्रेत्य स्तावकार्थवादातिदेशयुतं तदभिमन्त्रणविधानम्, सिकतानिवपनं

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| सार्थवादं विधाय न्युप्तानां सिकतानां सोपपत्तिकं सफलं समन्त्रकमभिमर्शनविधानम्, सार्थवादं लोगेष्टकानामुपधानविधानम्, वेदेर्बाह्यदेशेनेष्टकानामाहरणम् विधाय तत्प्रशंसनम्, आहरणस्याग्निक्षेत्रापेक्षया बहिर्देशवत्त्वं वेद्यपेक्षयाऽपि तथात्वमिति विधानम्, विहितं लोगेष्टकानामुपधानमनूद्य तत्प्रशंसनम्, आहरणस्याग्निबाह्यत्वमनूद्य तत्प्रशंसनं, बहिर्वेदेरित्येतदप्यनूद्य तस्य पृथिवीसकाशाद्बहिर्भूतरसस्थापनहेतुत्वेन प्रशंसनं, लोगेष्टकानामाहरणे साधनं विधाय तत्प्रशंसनं, पूर्वस्माद्दिग्भागादाहरणस्य मन्त्रतदर्थविवरणोपेतं विधानम्, आहृताया इष्टकायाः स्थानविशेषे उपधानविधानम्, एवमेव दक्षिणतः पश्चादुत्तरतश्च क्रमादाहरणं मंत्रतद्गतविषमपदव्याख्यानयुतं विधायाहृतानामिष्टकानां तत्तत्स्थानविशेषे उपधानविधानम्, उत्तरस्यां दिशि मंत्रतदभिप्रायसहितं सिकतानां प्रध्वंसनं विधायोपहितानामिष्टकानां सम्भूय प्रशंसनं, धर्मविशेषं विधाय तत्प्रशंसनं, सकारणं स्थितिगुणविशिष्टं उपधानादीनां पृथगनुष्ठानविधानं, सफलमासां समन्त्रकत्वमनूद्याग्निक्षेत्रस्यात्मभागे एवोपधानं कर्तव्यमिति प्रतिपादनम्, इतरेष्टकावदासां श्रपणाभावादशृतत्वमाशङ्क्य तन्निरसनं, चोदकप्राप्तमुत्तरवेदिनिवपनमस्मिन्नवसरे कर्तव्यमिति सोपपत्तिकमभिधायोत्तरवेदेः परिमाणं च विधाय स्तावकार्थवादातिदेशयुतं सिकतानिवपनविधानं, निवपनस्थस्थानविशेषं विधाय तत्प्रशंसनम्, अस्यात्मभागस्य सिकताभिः प्रच्छादनविधानं, अस्मिन्निवपने " अग्ने तव "—इति षडृचं सूक्तं करणत्वेन विधाय तस्य क्वचिद्विषमपदव्याख्यानं क्वचित्पादशोऽनूद्य प्रतिमंत्रं व्याख्यानं च, विनियुक्तस्यास्य षडृचस्य सूक्तस्य वैश्वानराग्निरूपत्वद्वारा संख्याद्वारा च प्रशंसनं, सिकतानां रेतस्त्वप्रतिपादनाय तत्साम्यत्वस्य प्रश्नपूर्वकमभिधानं, सिकतानां शुक्लकृष्णरूपद्वयस्य प्रश्नपूर्वकं प्रशंसनं, संख्यासम्पत्तेरप्याशङ्कापूर्वकं प्रतिपादनम्, उपधानकरणस्य षडृचस्य यच्छन्दस्तस्य " समुद्रियम् "—इति नाम कस्मान्निमित्तादिति पृच्छाकरणम्, अनन्तानां सिकतानामुपधानं पृथक्पृथक्कथं समंत्रकं स्यादिति प्रश्नपूर्वकं तदुपपादनम्, एतस्मिन्षडृचे सप्तानां छन्दसामन्तर्भावप्रदर्शनाय प्रशंसनम्, उत्सन्नयज्ञभागस्य पुनराहरणार्थत्वेन सिकतानिवपनं प्रशंस्य तासामपरिमितत्वमनूद्य तत्प्रशंसनं विद्वदनुष्ठानप्रशंसनं च, अपरिमितानामप्येतासां संख्याविशेषप्रदर्शनद्वारा प्रश्नपूर्वकं प्रशंसनं, लोगेष्टकावत्सिकतानामप्यात्मभागे एवोपधानविधानं सिकतानामिष्टकात्वाविशेषात्प्रसक्तस्य सादनस्य सकारणं निषेधनं, सार्थवादं समन्त्रकमेतासामभिमर्शनविधानं, तत्र मन्त्राणां क्वचिद्विषमपदव्याख्यानं क्वचिदप्रसिद्धार्थपदव्याख्यानं च, मंत्रगतं द्वित्वं छन्दोविशेषं चानूद्य तत्स्तावकार्थवादातिदेशकथनं, लोगेष्टकादिसंख्यां सम्भूय तत्प्रशंसनं चेति। | ८०–१०१ |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

२ आहवनीयदेशसंस्कारसमनंतरं प्राकृत-मातिथ्यप्रवर्ग्योपसत्प्रचरणमनुक्राम्य प्रागुक्तयोराग्निकसौमिककर्मणोर्व्यति-षङ्गस्य प्रदर्शनं, तत्र पूर्वमानुडुहे चर्मणि प्रथमचित्यर्थानामिष्टकानां समूहस्यो-पशमनं सार्थवादं विधाय तदर्थं लोहित-गुणकस्यानुडुहश्चर्मणः सार्थवादं प्राचीनग्रीवं देशविशेषे स्तरणविधानं, आस्तृते चर्मणि चितेरौष्ण्योपशमं विधायानन्तरं चितेः सार्थवादमाज्येन तूर्ष्णीं प्रोक्षणविधानं, प्रोक्षणमनूद्य हविष्ट्वसम्पादनद्वारा सप्रयोजनं तत्प्र-शंस्य तदीयाज्यकरणत्वमन्त्रकत्वं चानूद्य तयोः प्रशंसनम्, आज्यप्रोक्षणे करण-विशेषं विधाय तत्प्रशंसनं, प्रथमचिति-प्रोक्षणसमये द्वितीयतृतीयादिचित्यर्था-नामिष्टकानां प्रोक्षणस्य विधित्सया ब्रह्मवादिनां प्रश्नोत्तराणां प्रतिपाद-नम्, आहवनीयदेशं प्रति नयनं विधातुमध्वर्योर्होत्रे सम्प्रैषदानविधानं, ततः प्रथमचित्यर्थानामिष्टकानां पूर्वस्यां दिशि हरणं विधाय रक्षोनिरसनहेतुत्वे-नाख्यायिकया प्रशंस्य च तस्य प्रकृते योजनम् उक्तं संप्रैषं व्याख्याय होत्रा-ऽनुवक्तव्यामृचमेकीयमतेनोपन्यस्य तस्या व्याख्यानम्, एकीयमतं प्रति-षिध्य स्वमतस्य निगमनम्, आग्नेयी-त्यादिधर्मानवयुत्यानूद्य तेषां प्रशंसनं, इष्टकाहरणसमये श्वेतस्याश्वस्य पुरतोनयनस्य सार्थवादं विधानं, अश्वप्रमुखर्त्विग्यज-मानानामग्निक्षेत्रसमीपगमनविधानं, स्तावकार्थवादातिदेशयुतमश्वकर्तृकं सप्र-कारकं चितिमभिलक्ष्य तत्तद्दिगाक्रमणा-भिधानं, तस्याश्वस्य प्रत्यङ्मुखनयन-समये चितेरवघ्रापणं विधाय तस्य प्रजासु प्राणप्रतिष्ठापनहेतुत्वेन लोक-त्रयसमावपने हेतुत्वेन च प्रशंसनं, अश्वाव-घ्राणमनूद्य अश्वात्मकप्रजापतिना रूपेण निलीयमानस्याग्नेश्वेतव्यस्य लाभो नान्ये-नेत्याख्यायिकया प्रशंसनम्, अश्वस्य वर्णनियमं सार्थवादं विधायालाभे वर्णा-न्तरविशिष्टत्वस्याप्यभिधानम् अश्वासम्भवे ऽनड्वान्वेति पक्षान्तरनिरूपणं च, अग्निक्षेत्रस्याधिरोहणे प्रकारविशेषस्य विधित्सया प्रशंसनं, तत्रैकीयं मतमुप-न्यस्य तद्दूषयित्वा पुच्छस्योत्तरभागे उत्त-रपक्षस्य सन्धौ चाधिरोहणं कर्तव्यमिति निगमनम्, आरोहणानन्तरं प्राकृतवैकृत-पदार्थानामनुष्ठाने क्रमविशेषस्य प्रति-पादनं, पुष्करपर्णस्योपधानविधानं, सायंकाले कर्तव्यकर्मणो विधानं, तत्रा-श्वस्य परितो नयनं सायमस्तमया-त्प्रागेव कर्तव्यमिति सार्थवादं निरूपणं, परिणयनक्रियायास्त्रिरावृत्तिं विधाय तत्प्रशंसनं, तस्याश्वस्य पुन प्रयोग-विधानं चेत्यादि. १०७—१२०

इति तृतीयोऽध्यायः ।

## अथ चतुर्थोऽध्यायः ।

१ आत्मन्यग्निग्रहणस्य सकारणमवश्य-कर्तव्यत्वमुपपाद्य तस्य मन्त्रतदर्थविवरणो-पेतं सगुणं सधर्मकं सार्थवादं विधानं, प्राग्विहितस्य सत्यसाम्नो गानमनूद्य तत्प्रशंसनम्, उक्तायाः परकृतेः प्रकृते योजनपुरःसरं सत्यपदस्याभिप्रेतमर्थमा-विष्कृत्य तत्प्रशंसनं,—

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

**पुष्करपर्णेष्टकोपधानम्**—सार्थवादं पुष्करपर्णोपधानं, पुष्करपर्णस्याग्नियोनित्वस्यानुवादपूर्वकं सार्थवादमुपपादनं, पुष्करपर्णोपधाने मंत्रं विनियुज्य तस्य पदशो व्याख्यानं,—

**रुक्मेष्टकोपधानम्**—आकाशात्मना स्तुतस्य पुष्करपर्णस्य मध्ये सूर्यात्मना ध्यातव्यस्य रुक्मस्य सोपपत्तिकं सविशेषं सकारणं विधानं, रुक्मस्य पुष्करपर्णे उपधानं सोपपत्तिकं सार्थवादं विधाय तस्य पुष्करपर्णाधिकरणत्वस्याख्यायिकया पुष्करनामनिर्वचनेन प्रतिष्ठारूपत्वं प्रतिपाद्य तद्द्वारा प्रशंसनं, पुष्करपर्णोपधाने मंत्रं विनियुज्य तस्य पादशो व्याख्यानं,

**पुरुषेष्टकोपधानम्**—रुक्ममध्ये हिरण्मयपुरुषस्योपधानं सार्थवादं विधाय तस्य प्रकारान्तरेण मनः—प्राणाद्यात्मकसूक्ष्मशरीरस्थापनरूपेण प्रशंसनं, प्रसङ्गाद्धिरण्यनामनिर्वचनं, पुरुषोपधानस्याधारविशेषं विधाय तत्प्रशंसनं, तत्रोपधाने पुरुषस्योर्ध्वमुखत्वं प्राङ्मुखत्वं च विधायाख्यायिकया तदुपपादनप्रशंसने, तत्रोपधाने मन्त्रद्वयं विनियुज्य पादशोऽनूद्य व्याख्याय च मन्त्रद्वित्वस्य तद्गतछन्दोद्वारा प्रशंसनं च, पुरुषोपधानाङ्गत्वेन चित्रसामगानं विधाय तस्य पुरुषगतवीर्याधानहेतुत्वस्याख्यायिकया विशदीकरणं, यजमानकर्तृकं सर्पनामभिर्मन्त्रैः पुरुषस्योपस्थानं विधाय तस्य लोकत्रयस्थापनहेतुत्वस्याख्यायिकया विशदीकरणं, सर्पनामभिरुपस्थानं प्रकारान्तरेण प्रशंस्य सर्पनाममन्त्रत्रयस्य तात्पर्योपेतं व्याख्यानं, मन्त्रगतत्रित्वसंख्यां प्रशंस्योपस्थाने स्थितिगुणत्वं च विधाय तत्प्रशंसनम्, उपस्थानानन्तरमाज्यद्रव्यकस्याहुतिपञ्चकात्मकस्याभिहोमस्य सप्रकारकं सप्रयोजनं विधानं, तस्मिन्नभिहोमीयाहुतिपञ्चके रक्षोघ्नान्पञ्चमन्त्रान्विधायाभिहोमस्य रक्षोहननहेतुत्वं मन्त्रद्वारा द्रव्यद्वारा प्रतिपाद्य मन्त्रदेवताद्वारा मन्त्रगतछन्दोद्वारा च प्रशंसनं, विहितं परिसर्पणमनूद्य प्रशंस्य च तत्प्रकारस्य सविशेषं निरूपणम्,

**स्रुगिष्टकाद्वयोपधानम्**—स्रुगिष्टकयोः सकारणं दक्षिणोत्तरपार्श्वयोः सार्थवादं विधानं, तत्र च दक्षिणपार्श्वोपधेयायाः स्रुचः कार्ष्मर्यमयत्वमाज्येन पूरणत्वम्—उत्तरपार्श्वोपधेयायाः स्रुच औदुम्बरत्वं दध्ना पूरणत्वं चाभिधाय तेषां साख्यायिकं प्रशंसनं, स्रुचोरुपधानमनूद्य तयोर्बहुरूपतां वक्तुं तदुपादानयोर्वृक्षयोरुत्पत्तेरभिधानं, कार्ष्मर्यमय्याः स्रुच उपधाने आग्नेयं मन्त्रं विधाय तं प्रशंस्य च स्रुचो घृतपूरणत्वमनूद्य तत्प्रशंसनम्, औदुम्बर्या उपधाने ऐन्द्रं मन्त्रं विधाय पुनर्विकल्पेनैन्द्राग्नं मन्त्रं विधाय तं छन्दोदेवताद्वारा प्रशंस्य च स्रुचो दधिपूरणत्वमनूद्य तत्प्रशंसनं, स्रुचोरुपधाने स्थानविशेषमभिधाय तयोस्तिर्यगग्रप्रदयोपधानं सोपपत्तिकं पूर्वपक्षीकृत्य तत्प्रतिषिध्य च सिद्धान्ततया प्रागग्रत्वस्य सोपपत्तिकं निगमनं, स्थापनसादनाधिवदनानां पृथक्त्वं विधाय तत्प्रशंसनम्, उपहितस्य हिरण्मयपुरुषस्य स्रुग्व्यतिरिक्तबाहुकरणं सोपपत्तिकं पूर्वपक्षीकृत्य तत्प्रतिषिध्य

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

च सिद्धान्ततया पुनः स्रुग्व्यतिरिक्त-बाहुकरणस्यैव सोपपत्तिकं सहेतुकं निगमनं चेत्यादि. १२१-१४६

२ **स्वयमातृण्णेष्टकोपधानम्**—तत्र हिरण्मये पुरुषे स्वयमातृण्णेष्टकायाः सार्थवादमुपधानविधानं, विहितां स्वयमातृण्णामनूद्य तस्याः प्राणात्मना विस्रस्तावयवस्य प्रजापतेः प्रतिष्ठात्मना च प्रशंसनं, विहिते उपधाने मन्त्रान्विधाय तेषां व्याख्यानं स्तावकार्थवादातिदेशसहितं सादनाधिवदनाभिधानं, स्वयमातृण्णायां सामगानं विधाय तत्प्रयोजनाभिधायकोऽर्थवाद उपरिष्टाद्वक्ष्यत इति प्रदर्शनं, स्वयमातृण्णायां पुरुषस्थानमिनिहितत्वोपपादनम्,

**दूर्वेष्टकोपधानम्**—दूर्वेष्टकोपधानं तत्स्थानविशेषं च विधाय तत्प्रशंसनं, विहितमुपधानमनूद्यौषधीनां दूर्वायाश्चोत्पत्तिप्रदर्शनपूर्वकं प्रशंसनं, उपधेयाया दूर्वेष्टकायाः सविशेषं लक्षणमभिधाय तत्पुरस्ताद्भूमौ औषधीनां प्ररोहणविधानं, विहिते उपधाने मंत्रद्वयं विनियुज्य तस्य निगदव्याख्यातत्वप्रदर्शनं, मंत्रगतं द्वित्वं प्रशंस्य सादनाधिवदनानुवदनं,

**द्वियजुरिष्टकोपधानम्**-द्वियजुर्नामेष्टकोपधानं विधाय तस्य यजमानस्य स्वर्गप्राप्तिसाधनत्वेन प्रशंसनं, द्वियजुरित्येतन्नामनिर्वचनं, इष्टकाया यजमानात्मना प्रशंसनं, द्वियजुषो यजमानत्वोक्त्या लब्धावसरत्वेन याज्ञिकानां प्रश्नोत्तरकथनं, द्वियजुष उपधानस्यान्वयव्यतिरेकयोर्गुणदोषप्रदर्शनेनावश्यकत्नाभिधानं, अस्या इष्टकाया हिरण्मयपुरुषसमीपे सर्वथाऽनुपधाने दोषप्रदर्शनं तन्नोपधाने तु गुणप्रदर्शनं च, यजमानस्य हिरण्मयपुरुषद्वियजूरूपयोर्दैवमानुषशरीरयोर्मध्ये स्वयमातृण्णादूर्वेष्टकयोरुपधानेन व्यवधानाच्छरीरद्वयस्यापि प्राणेन सह कथमव्यवच्छेद इति प्रश्नमवतार्य तत्समाधाननिरूपणं, द्वियजुष उपधाने मंत्रद्वयं विनियुज्य तद्गतपुनःपुनःप्रयुक्तरुक्पदस्याभिप्रायप्रदर्शनं, पूर्ववत्सादनाधिवदनानुवदनम्,

**रेतःसिगिष्टकाद्वयोपधानम्**—रेतःसिगिष्टकाद्वयोपधानं विधाय तयोरिष्टकयोः पृथिवीद्युलोकात्मना प्रशंस्य च तयो रेतःसिक्त्वोपपादनं, तयोरुपधाने क्रमेण मंत्रद्वयं विधाय तद्गत "विराट्-स्वराट्" शब्दाभिधेयत्वमुपपाद्योपधानमंत्रयोः पार्थक्यं सादनमंत्रस्य चैकत्वमित्यभिधानम्, एतदिष्टकाद्वयमण्डात्मना प्रशंस्य स्थानविशेषे उपधानस्य प्रयोजनकथनं,

**विश्वज्योतिरिष्टकोपधानम्**—विश्वज्योतिराख्याया इष्टकाया उपधानम् विधाय तामग्न्यात्मना प्रशंस्य स्थानविशेषे उपधानमुपपाद्य च तस्या इष्टकायाः प्रजात्मनाऽपि प्रशंसनं, विहिते उपधाने मंत्रं विधाय तद्व्याख्यानं, पूर्ववत्सादनाधिवदनानुवदनम्,

**ऋतव्येष्टकाद्वयोपधानम्**—ऋतव्याख्ययोरिष्टकयोरुपधानस्य सोपपत्तिकं मंत्रतदभिप्रायसहितं विधानं, प्रथमायां चितौ तदुपधानस्य कारणत्वाभिधानं, पुनस्तयोरेव कर्तव्ययोः प्रजापतेः प्रतिष्ठात्मना प्रशंसनं, ऋतव्ययोरिष्टकयो

| क्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | रुपधानस्य स्थानविशेषं विधाय प्रशंसनम्, **आषाढेष्टकोपधानम्**--आषाढेष्टकाया उपधानं चयनस्थलस्य पूर्वभागे कर्तव्यमिति साभिप्रायं विधाय तस्या इष्टकाया आषाढेति नामधेयप्राप्तिं प्रदर्श्योपधानोपयोगप्रदर्शनम्, एतस्या इष्टकाया वागात्मनाऽपि प्रशंसनम्, आषाढेष्टकायाः पृथिव्यात्मकत्वमुपजीव्य वामभृत्संज्ञाप्राप्त्या आधिभौतिकाध्यात्मिकप्राणात्मकत्वस्योपपादनम्, उक्तं प्राणद्वयात्मकत्वमुपजीव्य तस्याः पूर्वभागे उपधानस्योपपादनम्, आषाढायाः पूर्वभागे मंत्रवत्या इष्टकाया उपधानस्य सहेतुकं निवारणं, ननु यदि समंत्रकानामिष्टकानामुपधाने प्राणाविधानं तर्हि अपस्यानां मंत्रविशिष्टानामिष्टकानामुपधानेन तत्कस्मान्न भवतीति प्रतिपादनं, तस्या ऋतव्ययोः समीपे सकारणमुपधानं विधाय प्रशंसनं, प्रकृताया इष्टकाया उपधाने मन्त्रं विधाय तद्व्याख्यानं, दूर्वेष्टकादीनां स्वयामतृण्णायाः पूर्वभागे उपधाने कारणाभिधानं चेत्यादि. | १४६–१६८ |


इति चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः ।


| क्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | **कूर्मेष्टकोपधानम्**—तत्र कूर्मोपधानं विधाय तस्य रसात्मना प्रशंसनं, लोकरसत्वप्रणाल्या कूर्मस्य पृथिव्यादिलोकत्रयात्मत्वमभिधाय तस्यैव तच्छरीरे विविच्य प्रदर्शनं, विहितस्य कूर्मस्य सार्थवादं समन्त्रकं दधिमधुघृतैरभ्यञ्जनविधानम्, अभ्यञ्जनमन्त्राणां छन्दः—संख्ये विधाय तत्स्तावकार्थवादातिदेशकथनं, कूर्म इति नाम्नः प्रवृत्तिनिमित्तमभिधाय कूर्मस्यादित्यात्मना प्रशंसनं कूर्मस्य पुरस्तात्प्रत्यगाषाढाया दक्षिणतोऽरत्निमात्रे प्रदेशे सोपपत्तिकमुपधानं विधाय तस्य कूर्मस्य प्राणात्मनाऽपि प्रशंसनं, वागात्मिकाया आषाढाया दक्षिणे भागे प्राणात्मकस्य कूर्मस्योपधानं सयुक्तिकमित्युपपादनं, कूर्मोपधाने मन्त्रत्रयं विधाय तत्राप्युपधानसमये मध्यमेन मन्त्रेण तच्चालनं विधाय च तेषां मन्त्राणां व्याख्यानम्, उपधानमन्त्राणां त्रित्वसंख्यामनूद्य तस्याः प्रशंसनम्, अभ्यञ्जनमन्त्राणामुपधानमन्त्राणां च संख्यायाः सम्भूय प्रशंसनं, कूर्मस्याधस्तादुपरिष्टाच्चावकास्थापनस्य सप्रयोजनमभिधानं कूर्मोपधानानन्तरमुलूखलमुसलयोरुपधानं विधाय तयोरन्नादत्वसाधनतया प्रशंसनम्, अनयोः स्थानविशेषं विधाय तत्प्रशंसनं, प्रकृते उलूखलमुसले प्रादेशमात्रे कर्तव्ये इति सकारणमभिधानम्, अनयोर्वृक्षविशेषं विधाय तत्प्रशंसनं, विश्लिष्टावयवस्य प्रजापतेः प्राणमन्नमूर्जमस्मिन्नग्नौ प्रतिनिधातुमितिहासकथनं, उक्तेऽर्थे कस्यचिन्मन्त्रस्य संवादं प्रदर्श्य तन्मन्त्रस्य द्वादशो विभज्य व्याख्यानं, उदुम्बरोलूखलशब्दयोर्निर्वचनं, तत्रार्थवादेनोलूखलस्य शिरःसाधर्म्यं सम्पाद्य तद्द्वारा तस्याकारविशेषस्योपपादनं, तदुपसंहृत्य विहिते उलूखलमुसलयोरुपधाने मन्त्रं विनियुज्य तद्व्याख्यानं, उलूखलमुसलयोर्द्वित्वात्तदुपधानमन्त्रस्यापि द्विदेवत्य- | |

| ब्रा० | विषयाः | पृष्ठाङ्काः | ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|---|---|---|
| | त्वमुपपद्यत-इति कथनम्, उलूखलमुसलयोः सादनं तु पृथक् पृथक् सकृच्च कर्तव्यमिति विधानं, पूर्ववत्सादनाधिवदनानुवदनम् । | | | रणोलूखलमुसलयोरौत्तराधर्यत्वप्रशंसनं, सोपपत्तिकं मुसलस्योलूखलदक्षिणभागे उपधानकथनम्, उक्तस्यैवाग्नेः पश्वाकारत्वस्य प्रकारान्तरेण दृढीकरणम् उक्तेऽर्थे लौकिकप्रमाणस्योपन्यसनं चेत्यादि. | १७०-१९० |
| | **उखेष्टकोपधानम्**—उलूखले उखाया उपधानं विधाय तस्य प्रशंसनं, उखायाः प्राजापत्यात्मकत्वेनोलूखले उपधानस्य प्रशंसनम्, उपशयानामोखाभेदे सति तत्प्रतिसन्धानार्थं प्रागवशेषिता मन्त्रसंस्कृता या मृत्तां चूर्णीकृत्योखायाः पुरोभागे निदध्यादिति निरूपणं, इष्टकोपधानप्रदेशे पक्वानामेवोपधानादुपशयायाश्चापक्वत्वात्कथमत्र तदुपधानमिति याज्ञिकाशंकामुत्थाप्य तस्याः पक्वत्वोपपादनपुरःसरं द्वेधोत्तरप्रदानेन समाधानम्, उखोपधाने मन्त्रद्वयं विनियुज्य तद्व्याख्यानम्, | | २ | **पञ्चपशुशीर्षेष्टकोपधानम्**—तत्र पशुशीर्षाणामुपधानं सार्थवादं विधाय तस्य स्थानविशेषविधानं, प्रकारान्तरेणाप्युखायामुपधानस्य प्रशंसनं, तेषां पशुशीर्षाणां श्रीरूपत्वेन प्रशंसनं, तत्रोपधाने कबन्धशिरसां सन्धानं भवतीति प्रदर्शनम्, उखायामुपधानं पुरस्तादारभ्य प्रत्यगपवर्गं कर्तव्यमिति सकारणमभिधानम्, उखायां पशुशीर्षाणामुपधाने प्रजापत्युदरेऽन्नं दधातीति दर्शयितुमाख्यायिकाकथनं, तेषु पशुशीर्षेषु सुवर्णशकलानां प्रक्षेपं विधाय तत्प्रशंसनं, सुवर्णशकलानां संख्याविशेषं विधाय तद्विषये केषाञ्चिन्मतेन पञ्चपशुपक्षवदेकपशुपक्षेऽपि पञ्चकृत्वः सप्तसप्त सुवर्णशकलान्प्रत्यस्येदिति साभिप्रायं पूर्वपक्षयित्वा तं प्रत्याख्याय च एकस्मिन्पशुपक्षे एकवारमेव सप्त सुवर्णशकलान्प्रत्यस्येदिति सिद्धान्ततया सयुक्तिकं निगमनं, तत्र प्रथमं मुखे सुवर्णशकलस्य प्रक्षेपं विधाय तत्र मंत्रं विनियुज्य तस्य पादशो-व्याख्यानं, ततः क्रमेण दक्षिणसव्ययोर्नासापुटयोर्नेत्रयोः श्रोत्रयोश्च सुवर्णशकलप्रक्षेपं समन्त्रकं विधाय तेषां मन्त्राणां साभिप्रायं व्याख्यानम्, उपधानार्थं पुरुष- | |
| | **उखोपरिहोमः**—उपधानानन्तरमुखाया उपरिहोमः सकृद्गृहीतेन स्रुवस्थेनाज्येन द्वाभ्यामाग्नेयीभ्यामृग्भ्यां होतव्य इति विधानं, तयोर्युक्तवत्योर्ऋचोः प्रदर्शनं, उखायामग्नेः संवत्सरभरणपक्षेऽग्निहोमो नियमेन न तूपस्थानं असंवत्सरभरणपक्षे अग्निहोमो वोपस्थानं वेति विकल्प इति निरूपणं, चित्याग्नेः स्वयमातृण्णादिषु त्रयोदशस्विष्टकासु कृत्स्नपश्वाकारत्वं प्रतिपाद्यादित्यरूपत्वस्योर्ध्वचयनेन प्रतिपादनं, स्वयमातृण्णाद्यात्मकस्याग्नेः प्रदक्षिणावर्तनत्वविधानं, प्रकारान्तरेणो | | | | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|

शीर्षोद्ग्रहणस्य सप्रयोजनं समंत्रकं विधानं तन्मंत्रव्याख्यानं च, एतेषां पशूनामुपधानमनूद्य तत्र पुरुषस्य सकारणं प्राथम्यविधानं, पुरुषस्योपधानं मध्ये कर्तव्यमिति सप्रयोजनं विधानं, कस्य कुत्र पार्श्वे उपधानमिति विशेषजिज्ञासायां तद्विस्तरशोऽभिधानं, पुरुषोपधानस्य मध्यस्थानं विहितं तत्र विशेषाभिधानं, विहिते उपधाने मन्त्रं विनियुज्य तस्य पादशो विभज्य व्याख्यानम्, उत्तरतोऽश्वस्योपधानमनूद्य तत्र मंत्रं विधाय तद्व्याख्यानं, दक्षिणतो गोरुपधानमनूद्य तत्र स्तुतिवन्मंत्रं विधाय तद्व्याख्यानं, उत्तरतोऽवेरुपधानमनूद्य तत्र मंत्रं विधाय तद्व्याख्यानं, दक्षिणतोऽजस्योपधानमनूद्य तत्र मन्त्रं विधाय तद्व्याख्यानं, प्रकृतानां पशूनां नानात्वात्पृथगेवोपधानसादनाधिवदनानि कर्तव्यानीति विधानम्, **पशूपरिहोमः**—तत्रोपधानानन्तरं पुरुषशिरसि अभिहोमस्याज्यद्रव्यकस्य सप्रयोजनं विधानम्, अभिहोमे मंत्रं विनियुज्य तस्य पूर्वार्धेनैकाहुतिरपरार्धेनान्या द्वितीयाहुतिरित्येतत्सप्रयोजनं सकारणं प्रदर्श्य तन्मन्त्रस्य व्याख्यानं, अभिहोमानन्तरमुपहितानां पुरुषशीर्षप्रभृतीनां पशुशिरसामुत्सर्गनामकैर्मन्त्रैरुपस्थानस्य सप्रयोजनं विधानम्, अत्र पञ्चानामपि पशुशीर्षाणामुपधानानन्तरमुत्सर्गमन्त्रैरुपस्थानमिति स्वकीयं मतं पुनरत्रानुष्ठानक्रमेऽपरमतेन किञ्चिद्वैषम्यमनूद्य तद्दूषयित्वा पुनरन्यमतेन प्रकारविशेषमनूद्य तस्यापि दूषणम्, अग्नेर्बहिर्देशे तत्रापि बहिर्वेदिशोकमुत्सृजेदिति सप्रकारकमभिधानम्, उत्सर्गमन्त्रैरुपस्थाने स्वाभिमतप्रकारं देशविशेषमध्वर्योरवस्थानविशेषं च प्रदर्श्योपधानक्रमेणैव पुरुषस्य शोकं पूर्वमुत्सृजेदित्यभिधाय च तत्र मन्त्रविशेषं विनियुज्य च तस्य पादशो विभज्य व्याख्यानम्, ततोऽश्वगौरव्यजानां शोकात्सर्गेषु क्रमेण मन्त्रान्विनियुज्य तेषां व्याख्यानं, ततोऽनुद्देश्यानां मयुप्रभृतीनां पशूनां शोकादेवोत्पत्तिं ब्राह्मणस्य तेषामभक्ष्यत्वं च प्रदर्श्य दिग्विशेषे तेषां निधानविधानम्, उपस्थानानन्तरमग्निसमीपमागत्य पुनरुपतिष्ठेतेति सकारणं विधानम्, उपस्थानमन्त्रश्चाग्नेयो गायत्रोऽनिरुक्तो यविष्ठपदयुक्तश्च भवेदित्यभिधायाग्नौ यविष्ठपदप्रवृत्तिनिमित्तं च दर्शयित्वा तन्मन्त्रव्याख्यानम्,

**पञ्चदशापस्येष्टकोपधानं पञ्चछन्दस्येष्टकोपधानञ्च**—तत्रादौ उपस्थानानन्तरमग्निं पश्चाद्भागेनारुह्य स्वयमातृण्णां प्रदक्षिणीकृत्य गत्वा अपस्याख्या इष्टका उपदध्यादित्यभिधाय तत्प्रयोजनं दर्शयितुमेतासामबात्मकत्वोपवर्णनं, तासां पशुशिरःस्वव्यवधानेनोपधानमभिधायैकैकस्मिन्प्रदेशे पञ्चपञ्चोपदध्यादिति विधानम्, प्रतिदिशं पञ्चाना-

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

मुपधाने विंशतिः सम्पद्यते तत्र याः पञ्चदश पूर्वा इष्टकास्ता अपस्या भवन्तीति सोपपत्तिकं प्रतिपाद्यापस्याभ्यः पञ्चदशभ्य उत्तराः ; पञ्चेष्टका विधन्ते ताश्छन्दस्या भवन्तीति प्रतिपादनम्, छन्दस्यानामुपधानेन पशुशूल्कांतमांसप्रतिविधानम् भवतीति निरूपणम्, तासामप्यपस्यावदव्यवधानेनोपधानाभिधानम्, तथैवापस्या अन्तराश्छन्दस्या बाह्या भवेयुरित्यभिधानम्, प्रकारान्तरेण पशूनां लोमसम्पत्तिमभिधाय त्वग्लोमसम्पादने उक्तं पक्षद्वयमप्यभिमतमिति कथनम्,

प्रकारान्तरेणाप्यपस्यानामुपधानस्य प्रशंसनं, तासां पञ्चदशानामपस्यानामुपधाने क्रमेण "अपां त्वेमन्" इत्यादीन्पञ्चदश मन्त्रान्विधाय तेषां व्याख्यानं, तत्र सप्तममन्त्रार्थस्य श्लोकरूपप्रमाणोपन्यासेन दृढीकरणं, "गायत्रेण त्वा" इत्यादिभिः पञ्चभिः पञ्चभिर्मन्त्रैरुत्तरस्यां दिशि पञ्च छन्दस्या उपदध्यादिति विधानम्, आसामपस्यानामङ्गुल्यात्मकत्वमुपवर्ण्य तस्योपपादनं चेत्यादि.

इति पञ्चमोऽध्यायः।

इति हस्तिषडा (घटा) ख्यं सप्तमं काण्डम्।

# चितिनामकेऽष्टमे काण्डे--

ब्रा० विषयाः पृष्ठाङ्काः । ब्रा० विषयाः पृष्ठाङ्काः

## प्रथमोऽध्यायः ।

१ पञ्चाशत्प्राणभृदिष्टकोपधानम्-तत्र प्रथमचितौ सार्धशतं प्राणभृतामुपधानविधानं, ताः पञ्चाशत्संख्याकाः प्राणभृतो दशदशोपधेया इत्यभिधानं, दशसंघातानां संख्यां विधाय तत्प्रशंसनम्, उपहितानां पशुशीर्षाणां समीपे तासामुपधानं विधाय तत्प्रशंसनं, प्राच्याद्यासु पञ्चसु दिक्षु तासामुपधानविधानं, प्राणभृदुपधानमनूद्य तस्य प्रकारान्तरेण प्रशंसनं, प्राच्यां दिशि उपधेयानां प्राणभृतामुपधाने दश मन्त्रान्विनियुज्य तेषां पक्षपक्षान्तरशः सोपपत्तिकमर्थविवरणं, दशानां पूर्वदिगुपधेयानां प्राणभृतामुपधानस्य पार्थक्यं विधाय तत्प्रशंसनं, सादनस्याप्युपधानवत्प्रसक्तं नानात्वं व्यावर्त्य व्यतिरेके बाधं च प्रदर्श्येष्टकायास्त्रिवृत्त्वविवरणं, दक्षिणस्यां दिश्युपधेयानां प्राणभृतां दशकस्योपधाने दश मन्त्रान्विनियुज्य तेषां व्याख्यानम्, उपधानस्य नानात्वं सादनस्य सकृत्त्वमिष्टकायास्त्रिवृत्त्वं च पूर्ववद्विधाय तत्प्रशंसनं चेत्यादि. १—७

२ प्रतीच्यां दिश्युपधेयानां प्राणभृतां दशकस्योपधाने दश मन्त्रान्विनियुज्य तेषां व्याख्यानम्, उपधानस्य नानात्वं सादनस्य सकृत्त्वमिष्टकात्रिवृत्त्वं च पूर्ववद्विधाय तत्प्रशंसनं, उत्तरस्यां दिश्युपधेयानां प्राणभृतां दशकस्योपधाने दश मन्त्रान्विनियुज्य तेषां व्याख्यानम्, उपधानस्य नानात्वं सादनस्य सकृत्त्वमिष्टकायास्त्रिवृत्त्वं च पूर्ववद्विधाय तत्प्रशंसनं, मध्यभाग उपधेयानां प्राणभृतां दशकस्योपधाने दश मन्त्रान्विनियुज्य तेषां व्याख्यानं, उपधानस्य नानात्वं सादनस्य सकृत्त्वमिष्टकायास्त्रिवृत्त्वं च पूर्ववद्विधाय तत्प्रशंसनं, निरुक्तमन्त्रार्थजातस्यान्नरूपताप्रतिपादनं, दशसंख्यामनूद्य तद्रूपेणान्नरूपताप्रतिपादनं, सर्वत उपधानमनूद्य तत्प्रशंसनं, प्राणभृत्संज्ञानिर्वचनं चेत्यादि. ८—१४

३ तत्र प्राणस्वरूपं प्राणभृत्स्वरूपं च विशदयितुं ब्रह्मवादिनां प्रश्नोत्तराभिधानं, पुनः सर्वासां प्राणभृतां प्राजापत्यत्वविषये ब्रह्मवादिनां प्रश्नोत्तराभिधानं, मन्त्रगतानुपूर्व्या ऋक्सामग्रहाणां प्रतीयमानानन्तर्यस्याक्षेपसमाधानार्थम् ब्रह्मवादिनां प्रश्नोत्तराभिधानं, शत्रोपधानविषये ऋक्सामयोराधाराधेयभावलक्षणसम्बन्धविषये च ब्रह्मवादिनां प्रश्नोत्तराभिधानं, प्रथमतस्त्रिषु मन्त्रेषु ख्यापितस्य पितापुत्रभावस्य प्रयोजननिरूपणं, एतासामुपधानमन्त्रेषु प्राणादिलिङ्गदर्शनात्तदुपजीवनेन तेषां दशकानां पृथक्संज्ञाकरणं, अत्र चरकाध्वर्यूणां मतमुपन्यस्य तन्निराकरणं, पूर्वदिशि प्राणभृतामुपधानानन्तरं दक्षिणां दिशं विहाय प्रतीच्यां दिशि कर्तव्यमिति सोपपत्तिकं विधानं, दक्षिणोत्तरदिशोरपि नैरन्तर्येण प्राणभृदुपधानं विधाय तत्प्रशंसनं, मध्ये उपधेयानां प्राणभृतां स्थान-

| ब्रा० विषयाः | पृष्ठाङ्काः |
| --- | --- |
| विशेषं विधाय तत्प्रशंसनं, सर्वत उपधानमनूद्य तत्प्रशंसनं, सर्वासां प्राणभृतामुपधाने धर्मविशेषं विधाय तत्प्रशंसनं, तासामुपहितानां परस्परसंस्पर्शं विधाय तत्प्रशंसनं चेति. | १४–२० |
| ४–तासां पुरुषशिरसः समीपे प्रागादिदिक्षूपधानं पूर्वपक्षीकृत्य तत्प्रतिषिद्धय च हिरण्मयपुरुषस्याभिप्राप्तिर्यथा भवति तथोपदध्यादिति सिद्धान्ततया निगमनम्, आग्नेय्यादिकोणदिग्भागेषु प्राणभृतां वक्ररीत्योपधानमाक्षिप्य तत्समाधाननिरूपणं, प्राणभृदुपधानस्य पशुत्वसम्पत्त्या प्रशंसनं, अन्तिममन्त्रे स्तोमद्वयपृष्ठद्वयप्रतिपादनस्य प्रश्नोत्तररूपेण प्रयोजनकथनं, प्रतीष्टकं कृत्स्नस्याग्नेः संस्कृतेः प्रश्नपूर्वकमुपपादनं, सुपर्णरूपस्य चित्यस्याग्नेः समञ्चनप्रसारणयोर्हेतुत्वेन प्राणभृदुपधानस्य प्रशंसनं, तत्र समञ्चनप्रसारणप्रतिपादकेन मन्त्रेणाभिमृशन्तीत्येकीयमतोपन्यासपूर्वकं समञ्चनप्रसारणयोर्वीर्यहेतुतयाऽवश्योत्पाद्यत्वाभिधानमभिमर्शनमन्त्राभिधानं च, एतदेकीयं मतं शाट्यायनेरप्यभिमतमित्यभिधानम्, अत्र विषये पक्षान्तरं प्रतिपाद्य तस्य दूषणम्, लोकम्पृणाख्ययोरिष्टकयोरुपधानविधानम्, ततः पुरीषनिवपनविधानं चेत्यादि. | २०–२६ |
| इति प्रथमोऽध्यायः । | |
| **अथ द्वितीयोऽध्यायः ।** | |
| १ **द्वितीया चितिः**–तत्र प्रथमं द्वितीयस्याश्वितेरुत्थानं विधाय तदीयप्रयोजनस्य प्रथमचितिप्रयोजनप्रतिपादनपूर्वकमुपपादनम्, तत्राश्विनीनां प्रथममुपधानं विधातुमुपोद्घातकथनम्, एवमुपोद्घातत्वेन द्वितीयचित्युपधानेऽश्विकर्तृत्वं प्रतिपाद्यौपोद्घातिकमाश्विनीनामुपधानं विधाय तत्र मन्त्रचतुष्टयं विनियुज्य तेषां पादशोऽनूद्य व्याख्यानम्, एतासां चतसृणामिष्टकानां संभूय प्रशंसनम्, तासामुपधाने स्थानविशेषं गुणान्तरं च विधाय तयोः प्रशंसनम्, उपधानसादनसूददोहसाधिवदनानां नानात्वं विधाय तत्प्रशंसनम्, मध्ये उपधेयाया आश्विन्याः सार्थवादं विधानम्, विहित उपधाने मन्त्रं विनियुज्य तस्य व्याख्यानम्, एतासामाश्विनीनामात्मभाग उपधानस्यानुवादपुरःसरमाख्यायिकया प्रतिपादनम्, प्रजापत्यवयवसन्धानरूपेऽर्थे मन्त्राणामपि सामर्थ्यमस्तीति प्रतिपाद्य स्थानविशेषस्य सर्वत उपधानस्य चाप्येतदर्थानुगुणत्वस्य सकारणमाविष्करणम्, **ऋतव्येष्टकोपधानम्**–तत्र पूर्वं मंत्रतदर्थविवरणोपेतं सार्थवादमृतव्ययोरिष्टकयोरुपधानं विधाय तद्विधिसिद्धं द्वित्वमनूद्य तस्य प्रशंसनम्, इष्टकयोर्द्वित्वात्पृथक्सादनप्राप्तौ सकृत्सादनत्वाभिधानम्, ऋतव्ययोर्द्वितीयचितावुपधानस्य प्रशंसनम्, अग्नेः संवत्सररूपस्य लोकत्रयात्मकत्वकल्पनायाः प्रयोजनं प्रतिपाद्य पुनः प्रकारान्तरेण प्रशंसनं चेत्यादि. | २७–३६ |
| २ **पञ्चवैश्वदेवेष्टकोपधानम्**–तत्रादौ वैश्वदेवीनामुपधानं विधाय तस्याख्यायिकया प्रशंसनम्, वैश्वदेवीनामुपधानं प्रकारान्तरेण प्रशंस्य | |

| आ० विषयाः | पृष्ठाङ्काः |
| --- | --- |
| तासामुपधाने स्थानस्य सविशेषं सार्थवादमभिधानं तत्राप्याश्विनीनामानन्तर्याभिधानं च, पुनः प्रकारान्तरेण वैश्वदेवीनामुपधानप्रशंसनम्, आसां पञ्चानां वैश्वदेवीनामुपधाने मन्त्रान्विधातुमुपोद्घातकथनम्, अनुषङ्गप्रकारसहितान्मन्त्रान्विधाय तेषां व्याख्यानं, कृत्स्नमन्त्राणां मध्यमभागस्य नानारूपत्वस्य सार्थवादं निरूपणं चेति. | ३६–४१ |
| ३ पञ्चप्राणभृदिष्टकोपधानम्—तत्र प्राणभृदिष्टकानामुपधानं विधाय तत्प्रशंसनं, तासां स्थानस्य सविशेषमभिधानं, तासामुपधाने गुणविशेषकथनं, सार्थवादं दिश्यानन्तर्याभिधानं, प्रकारान्तरेण प्राणभृतः प्रशंस्य तासामुपधानमन्त्रान्विनियुज्य संगृह्य तत्तात्पर्याभिधानं, अपस्येष्टकोपधानम्—तत्रापस्यानामुपधानं सार्थवादं विधायासां प्राणभृद्भ्यो व्यवधानाभावस्य सप्रयोजनं प्रतिपादनम्, अपस्यानामुपधानमन्त्रान्विनियुज्य संगृह्य तत्तात्पर्याभिधानं, एकोनविंशतिवयस्येष्टकोपधानम्—तत्र छन्दस्येष्टकानामुपधानं सार्थवादं विधायासां पूर्ववत्सर्वत उपधानमपस्यानांसान्निध्यं च विधाय ततयोः प्रशंसनं, छन्दस्यानां पशुरूपत्वेन या स्तुतिः कृता पुनस्तस्या एव ज्येष्ठत्वप्रदर्शनम्, इत्थमिष्टकानां पशुरूपतामुपपाद्याथ पूर्वदिश्युपधेयानां चतसृणामिष्टकानां मन्त्रान्विधाय व्याख्याय चार्थाक्षिप्तं गायत्रीरूपमिष्टमिति प्रदर्शनं, गायत्रीछन्दः—सम्पत्तिं प्रदर्श्य या प्रजापतेर्वयस आतिरिक्ता सेदानीन्तनव्यवहारस्य मूलमिति प्रदर्शनम्, आप्तव्यानां पशूनां स्वरूपं सामान्येन निर्दिश्य पशूनां तद्गतसंख्यायाश्च प्रशंसनं, युक्तिभिरुपपादितस्यार्थस्य लोकस्थित्या दृढीकरणं चेत्यादि. | ४१–४७ |
| ४ "पञ्चदशोत्तरे" इति ये पशवः संग्रहेण निर्दिष्टास्तेषामिदानीं दक्षिणोत्तरपश्चिमदिक्षु क्रमेणोपधेयेष्टकामन्त्रव्याख्यानप्रसङ्गेन दर्शनं, सर्वेषु मन्त्रेषु निरुक्तं यत्पशुवयश्छन्दसां पौर्वापर्यमभिहितं तस्य प्रशंसनम्, इष्टकानां पश्वात्मना स्तुतेः प्रयोजनाभिधानं, सोपपत्तिकं शिरआदिरूपोपधानक्रमनिरूपणं, अविभागेन विहितानां पश्वात्मिकानामिष्टकानां यथोचितं मध्याद्यङ्गेषु विभज्य विनियोगप्रतिपादनं तत्रापि विशेषाभिधानं च, शिरःपुच्छयोरणुतरत्वस्य सोपपत्तिकमभिधानं, स्तावकार्थवादातिदेशसहितं लोकम्पृणेष्टकयोः स्थानविशेषे उपधानविधानं, स्तावकार्थवादातिदेशसहितं पुरीषनिवपनविधानं चेत्यादि. | ४८–५४ |

इति द्वितीयोऽध्यायः ।

## अथ तृतीयोऽध्यायः ।

| आ० विषयाः | पृष्ठाङ्काः |
| --- | --- |
| १ तृतीया चितिः—तत्र पूर्वं तृतीयां चितिं विधाय तस्या बहुधा प्रशंसनं, स्वयमातृण्णेष्टकोपधानम्—तत्र स्वयमातृण्णेष्टकोपधानं विधाय तत्र मन्त्रं विनियुज्य तस्य तात्पर्योपेतं व्याख्यानं, स्तावकार्थवादातिदेशसहिते पूर्ववत्सादनसूददोहसाधिवदने, स्तावकार्थवादातिदेशसहितं स्वयमातृण्णेष्टकोपधानाङ्गं सामगानविधानं. | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|


पञ्चदिश्येष्टकोपधानम्--तत्र दिश्येष्टकोपधानं विधाय तत्प्रशंसनं, एतासां दिश्यानां प्रथमचितावेवोपहितत्वान्मध्यमचितौ किमर्थं तदुपधानमित्याशङ्कयात्राप्युपधेयत्वस्य सोपपत्तिकं प्रतिपादनं, दिश्येष्टकानां पुनश्छन्दोलक्षणरूपेणान्नरूपेण च प्रशंसनं, दिश्योपधाने मन्त्रपञ्चकं विनियुज्य तस्य तात्पर्यतो व्याख्यानं चेति। ६६--६२

२ विश्वज्योतिरिष्टकोपधानम्--तत्र मध्यमाया विश्वज्योतिरिष्टकायाः सप्रयोजनमुपधानं विधाय वायुरूपेण तस्याः प्रशंसनं, पूर्वेष्टकाभ्योऽस्या अव्यवहितत्वं विधाय प्रजारूपेण प्रशंसनं, स्वयमातृण्णावद्विश्वकर्मलिङ्गकेन मन्त्रेण सादनं विधाय तन्मंत्रस्य व्याख्यानं, सार्थवादं सूददोहसाधिवदनं च पूर्ववदिति प्रदर्शनं, चतुर्ऋतव्येष्टकोपधानम्--तत्र चतसृणामृतव्येष्टकानामुपधानं समंत्रकं सोपपत्तिकं धर्मविशेषसहितं विधायोपधानमंत्राभिप्रायं प्रदर्श्य च तत्प्रशंसनं, मध्यमचित्यां प्रथमोत्तमचित्योर्वैलक्षण्यमृतव्यानां चतुष्ट्वं तस्य प्रशंसनं, चतुष्ट्वमुक्त्वा पशुत्वमुपजीव्यान्नात्मनाऽपि प्रशंसनम्, उक्तस्यैव चतुष्ट्वस्य शब्दगतचतुःसंख्यायुक्तान्तरिक्षाख्यमध्यमचितेर्योग्यत्वाभिधानद्वारेण प्रशंसनं, पुनस्तस्यैव प्रकारान्तरेणापि प्रशंसनम्, एतासां चतसृणां प्रागुक्ताभिः सह समुच्चित्य विराट्त्वसम्पादनाय तत्प्रशंसनं, दशप्राणभृदिष्टकोपधानम्--तत्र दशानां प्राणभृदिष्टकानामुपधानं सोपपत्तिकं समंत्रकं विधाय तत्प्रशंसनं चेत्यादि। ६३--६७

३ छन्दस्येष्टकोपधानम्--तत्र छन्दस्यानां पशुरूपत्वं पशूनामन्नरूपत्वं मध्यमायाश्चितेरन्तरिक्षत्वं चाभिधाय ताश्छन्दस्याः पूर्वार्द्धे प्राणभृतामुपहितत्वाद्दक्षिणादिदिक्षु द्वादश द्वादश उपदध्यादिति विधानं, उक्ताया एवेष्टकासंख्यायाः पुनर्जगत्यादिद्वारेणान्नात्मनाऽपि प्रशंसनं, पूर्वेष्टकाभ्योऽव्यवधानं विधाय तत्प्रशंसनं, तत्र दक्षिणत उपधेयेष्टकानां मंत्रान्विधाय तेषां व्याख्यानं, तत्राप्युत्तरासामष्टानामिष्टकानां निरुक्तरूपं वैलक्षण्यं दर्शयित्वा तद्विधानं, पश्चादुपधेयानां द्वादशानामिष्टकानामुपधानमंत्राणां प्रतीकमादाय तेषां समनार्थत्वेन' मादिच्छन्दोरूपतामाशङ्कय तद्भिन्नत्वं चोपपाद्य तात्पर्यपुरःसरं तन्मंत्रप्रतीकव्याख्यानं, दक्षिणोत्तरपक्षपुच्छसन्धिषु. निरुक्तानिरुक्तभेदेन द्विविधानामपि छन्दसामुपधानस्यान्यतरोपधानपक्षे दोषप्रदर्शनपुरःसरं प्रशंसनं, प्रतिदिक्षु यद्द्वादशत्वं तस्या बृहतीसम्पत्तिद्वारा प्रशंसनम्, एतासामेवेष्टकानां पुनर्विस्रस्तप्रजापत्यवयवप्रतिसन्धानरूपत्वेन प्रशंसनम्, एतासामिष्टकानां पूर्वोक्ताभिः सह समुच्चित्य प्रशंसनम्, अर्थवादप्रसङ्गेनोक्तस्य चन्द्रमस्त्वस्योपपादनं चेत्यादि। ६८--७२

४ चतुर्दशवालखिल्येष्टकोपधानम्--तत्र पूर्वं वालखिल्येष्टकोपधानं विधाय तत्प्रशंसनं, प्रसङ्गाद्वालखिल्यनामनिर्वचनं, पुरस्तात्पश्चाच्च सप्त सप्त वालखिल्ये-

ब्रा० विषयाः पृष्ठाङ्काः

ष्टका विधाय ताः प्राणात्मना प्रशस्य चेदानीं प्राणशब्देन विवक्षितार्थाभिधानद्वारा तासां प्रशंसनं, पुरस्तात्पश्चाच्चोपधेयानां मध्ये त्रींस्त्रीन्मन्त्रानुदाहृत्य संगृह्य च तेषां तात्पर्याभिधानं, बालखिल्योपधानं प्रकारान्तरेण प्रशस्योक्तप्रकारस्य विभज्य प्रदर्शनं, पुरस्तादुपधेयेष्टकानां चतुरो मंत्रानुदाहृत्य तेषां तात्पर्यप्रदर्शनं, पश्चाद्बालखिल्याप्रसञ्जनाभिधानं, प्रतिगतिप्रकारं विभज्य तथोत्तरांश्चतुरो मन्त्रान्प्रदर्श्य भुवः प्रतिष्ठात्वस्यान्नरूपत्वेन प्रशंसनं, प्रजापतेः शरीररूपेण संस्कारमभिधायाद्या स्वयमातृण्णा–पञ्च दिश्याः-विश्वज्योतिः-चतस्र ऋतव्याः-इत्येकादश वर्जयित्वाऽवशिष्टानां शिरआद्यङ्गकल्पनया तत्रत्य प्राणरूपसंस्कारस्य प्रदर्शनं, स्तावकार्थवादातिदेशसहितं लोकम्पृणेष्टकयोरुपधानविधानं, स्तावकार्थवादातिदेशसहितं पुरीषनिवपनविधानं चेत्यादि. ७३–७९

इति तृतीयोऽध्यायः ।

## अथ चतुर्थोऽध्यायः ।

१ **चतुर्थी चितिः–तत्रादौ अष्टादशस्तोमेष्टकोपधानम्**–तत्रापि पूर्वं चतुर्थ्याश्चित्या उपधानं विधाय तत्प्रशंसनं, अस्यां ब्रह्मण उपधानविधायिन्याख्यायिकाकथनं, स्तोमसंज्ञका इष्टका विधाय तासां ब्रह्मात्मना प्रशंसनं, पुनस्तासां सोपपत्तिकं प्रजापत्यात्मना प्रशंसनं, पूर्वं प्राणद्वारा प्रजापतिरूपत्वेन प्रशस्याधुना चितिप्रयुक्तमृषित्वं प्राणेषु सम्पाद्य तद्द्वारा प्रशंसनं, पुनर्विस्रस्तप्रजापत्यवयवप्रतिसन्धानरूपतया प्रशंसनं, स्तोमेष्टकोपधानमनूद्य तत्र पुरस्ताद्दक्षिणत उत्तरतः पश्चाच्चोपधेयेष्टका––मन्त्रान्विनियुज्य तेषां व्याख्यानं, इत्थं चतुर्दिक्षु वाय्वादिदेवतारूपाणां चतसृणामिष्टकानामुपधानमभिधायोत्तरत्रोपधेयानां चतुर्दशानां संवत्सररूपताप्रतिपादनपुरःसरं तत्र क्रमाच्चतुर्दश मन्त्रानपि विनियुज्य तेषां व्याख्यानं, प्रथमोत्तमस्तोमेष्टकयोर्वायुरूपत्वस्य प्रशंसनम्, उक्ताया अष्टादशसंख्यायास्त्रिवृत्स्तोमद्वयसम्पत्त्या प्रशंसनं पुनस्तस्याः प्रकारान्तरेण प्रशंसनं चेत्यादि. ८०–९१

२ **स्पृदिष्टकोपधानम्**–तत्र दश स्पृदिष्टका विधाय तत्प्रशंसनं, प्रसङ्गात्स्पृन्नामनिर्वचनं, दशानामप्युपधेयानां स्पृदिष्टकानां मन्त्रान्विधाय तेषां सोपपत्तिकं व्याख्यानम्, उक्ताया दशसंख्याया विराडात्मना प्रशंसनं.

**ऋतव्येष्टकोपधानम्**–तत्र च समंत्रकं सार्थवादमृतव्येष्टकयोरुपधानविधानम्, अर्थवादद्वये च प्रजापतेर्लोकत्रयात्मकत्वं संवत्सरात्मकत्वं च प्रतिपाद्य तद्द्वारा यच्च तस्य विश्लिष्टमङ्गं तत्प्रतिसन्धानस्थानीयमिति ऋतव्ययोः स्तवनं चेत्यादि. ९१–९८

३ **सप्तदश सृष्टीष्टकोपधानम्**–तत्र च सप्तदश सृष्टिनामधेया इष्टका विधाय तत्प्रशंसनं, सप्तदशानामप्युपधेयानां सृष्टीष्टकानां मन्त्रान्विधाय तेषां सोपपत्तिकं व्याख्यानम्, उक्तायाः सप्तदशसंख्यायाः संवत्सरात्मना प्रशंसनं, प्रसङ्गात्सृष्टिनामनिर्वचनं चेत्यादि. ९८–१०१

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| ४ प्रतिज्ञापूर्वकं स्तोमेष्टकानां स्पृदिष्टकानां च क्रमदेशयोरभिधानम्, ततः पूर्वोक्तानामेव यजुष्मतीनां देशस्य विधानम्, अस्याश्चतुर्थ्याश्चितेः ब्रह्मचित्यादिनामधेयानि सोपपत्तिकानि प्रतिपाद्य तद्द्वाराऽस्या आर्षेयवतीत्वबन्धुमतीत्वयोरभिधानं, स्तावकार्थवादातिदेशसहितं स्थानविशेषे लोकम्पृणयोरुपधानविधानं, स्तावकार्थवादातिदेशसहितं पुरीषनिवपनविधानं चेत्यादि. | १०६—१११ |

इति चतुर्थोऽध्यायः ।

### अथ पञ्चमोऽध्यायः ।

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| पञ्चमी चितिः--असपत्नेष्टकोपधानम्-- तत्र च प्रथमं विराजामुपधानार्थमुपोद्घातः, प्रागादिचतुर्दिक्षु मध्ये च पञ्चानां देवदृष्टानामसपत्नेष्टकानां सार्थवादमुपधानविधानं, सर्वासु दिक्षु दशानां दशानां विराडिष्टकानां सार्थवादमुपधानविधानम्, असपत्नेष्टकोपधानस्य प्रजापतिदृष्टत्वमप्यभिधाय पापनिर्हरणहेतुत्वेन प्रशंसनं, क्रमात्प्रागादिचतुर्दिक्षु मध्ये चोपधेयाया असपत्नेष्टकाया मन्त्रान्विधाय तेषां व्याख्यानं तत्र मध्ये उपधेयाया असपत्नेष्टकायाः ऽसामिप्रायं धर्मविशेषविधानं, प्राक्पश्चादुपधेययोरसपत्नेष्टकयोः प्राणापानत्वे दक्षिणोत्तरयोरुपधेययोरसपत्नेष्टकयोर्बाहुत्वं मध्ये उपधेयाया असपत्नेष्टकाया अन्नत्वं चोपवर्ण्य तद्द्वाराऽसपत्नासु प्राजापत्यत्वं च प्रदर्श्य पापापहन्तृत्वेन प्रशंसनं, विदुषः पापं न कीर्तयेदिति नैमित्तिकः प्रासङ्गिक उपदेशश्चेत्यादि | ११२—११८ |
| २ चत्वारिंशच्छन्दस्येष्टकोपधानम् - तत्र च सार्थवादं सप्रयोजनं छन्दस्येष्टकानामुपधानं विधाय तत्प्रसङ्गाच्छन्दस्यानामनिर्वचनं, छन्दस्यानां प्रतिदिशं दश दशसंख्यां विधाय तस्या विराड्रूपेण विराजोऽन्नरूपेण च प्रशंसनं, विहिते चत्वारिंशच्छन्दस्येष्टकोपधाने चत्वारिंशन्मन्त्रान्विधाय तेषां तात्पर्यार्थप्रदर्शनं, पुरस्तादुपधेयानां दशानां छन्दस्यानां प्राणाद्यात्मकत्वं दक्षिणत उपधेयानां दशानां छन्दस्यानां अग्न्यादिदशदेवतात्मकत्वं पश्चादुपधेयानां दशानां छन्दस्यानां दशलोकात्मकत्वं--उत्तरत उपधेयानां दशानां छन्दस्यानामृत्वात्मकत्वं च प्रतिपाद्य तद्द्वारा विराट्सम्पत्तिप्रदर्शनं, पुनस्तासामेव प्रकारान्तरेण प्रतिदशकं क्रमात् दशप्राणात्मकत्वं—अग्न्यादिदेवतादशकात्मकत्वं—दशदिगात्मकत्वं—मासर्त्वात्मकत्वं चाभिधाय तद्रूपत्वेन प्रशंसनं, प्रथमद्वितीयतृतीयदशतां भूम्यन्तरिक्षद्यौर्लोकात्मत्वं प्रतिपाद्य देवानामारोहणदृष्टान्तेन यजमानकर्तृकतत्तल्लोकारोहणरूपफलाभिधानेन प्रशंसनम्, उत्तरोत्तरलोकारोहणस्य प्रतिष्ठात्मकत्वं पूर्ववत्सदृष्टान्तमभिधाय तद्द्वारा प्रशंसनम्, इष्टकागतसंख्यां तदुपधानसाधनभूतयजुर्मन्त्रगत--संख्यां च सम्भूय तस्या अन्नरूपत्वेन प्रशंसनं चेत्यादि. | ११९--१२४ |
| ३ एकोनत्रिंशत्स्तोमभागेष्टकोपधानम्-- तत्र चाख्यायिकया स्तोमभागेष्टकानामुपधानविधानं प्रसङ्गात्सोपपत्तिकं स्तोमभागनामनिर्वचनं च, विहिते | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

स्तोमभागेष्टकोपधानं साधनभूतानां मन्त्राणां दिक्प्रदर्शनं कृत्वा तेषामितिहासशेषसंक्षेपेणार्थाभिधानं, स्तोमभागेष्टकोपधानमनूद्य तत्र प्रथमानामेकविंशतीनां स्तोमभागानां क्रमात्त्रैलोक्यात्मकत्वं प्रागादिचतुर्दिगात्मकत्वं चाभिधाय पुनस्तासां सम्भूय प्रतिष्ठात्मकत्वमुपवर्ण्य तद्द्वारा प्रशंसनम्, उत्तमानामष्टानां स्तोमभागानां गायत्र्यात्मकत्वं त्रयीलक्षणब्रह्मात्मकत्वं च प्रतिपाद्य तद्द्वारा प्रशंसनम्, एकेषां मतेन त्रिंशत्तम्याःस्तोमभागेष्टकायाः समन्त्रकं सयुक्तिकमुपधानं विधाय सकारणं सोपपत्तिकं तत्प्रत्याख्यानं चेत्यादि। १२४–१२८

४ सर्वतोऽषाढाया वेलायां स्तोमभागानामुपधानं कर्तव्यमिति सार्थवादं विधानम्, एतासामुपहितानां स्तोमभागानां पुरीषेण प्रच्छादनं विधाय तस्य बहुप्रकारेण प्रशंसनं, स्तोमभागानन्तरीयपुरीषनिपवनस्य पञ्चमचितित्वमभिधाय पञ्चमर्तुत्वेन प्रशंसनम्, अन्यासां चितीनां लोकम्पृणान्तत्वमस्याश्चितेस्तद्रहितत्वं चेति सोपपत्तिकमभिधानं, तत्र चादित्यात्मिकाया लोकम्पृणायाः षष्ठचितित्वमभिधाय षष्ठर्तुत्वेन प्रशंसनं, पुरीषनिवपनं विकर्णीस्वयमातृण्णयोरुपधानं हिरण्यशकलैः प्रोक्षणं अग्नेरभ्याधानं चेत्येतत्क्रियाजातस्य सप्तमचितित्वमभिधाय सप्तमर्तुत्वेन प्रशंसनं, चितिषु प्रासङ्गिकं षट्त्वप्रदर्शनम, अन्यासु चितिषु पुरीषनिवपनस्य समन्त्रकत्वमस्यां चितौ त्वमन्त्रकत्वं चेति सोपपत्तिकमभिधानं, प्रथमोत्तमयोश्चित्योरिदंलोकत्वं मध्यमानां तिसृणां चितीनामन्तरिक्षलोकत्वं चेत्याद्यभिधानं चेति। १२९–१३२


इति पञ्चमोऽध्यायः ।

## अथ षष्ठोऽध्यायः ।


१ पञ्चनाकसदिष्टकोपधानम्—तत्र च सार्थवादं पञ्चनाकसदिष्टकोपधानविधानं नाकसन्नामनिर्वचनं च, तच्च विहितमुपधानं प्रागादिचतुर्दिक्षु मध्ये च कर्तव्यमिति सार्थवादं विधानं, पुरस्ताद्दक्षिणतः पश्चादुत्तरतो मध्ये चोपधेयाया नाकसदिष्टकाया उपधाने मन्त्रान्विनियुज्य तेषां साभिप्रायं व्याख्यानं, नाकसदिष्टकोपधानस्य प्रयोजनाभिधानेन प्रशंसनम्.

पञ्चचूडेष्टकोपधानम्—तत्र च सार्थवादं पञ्चचूडेष्टकोपधानविधानं पञ्चचूडानामनिर्वचन च, पञ्चानां नाकसदां पञ्चानां चूडानां च सोपपत्तिकं वैविध्येन सामानाधिकरण्यं प्रतिपाद्य तद्द्वारा प्रशंसनं, पञ्चचूडेष्टकोपधानस्य प्रयोजननिरूपणं, पुरस्ताद्दक्षिणतः पश्चादुत्तरतो मध्ये चोपधेयायाश्चूडेष्टकाया उपधाने मन्त्रान्विनियुज्य तेषां साभिप्रायं व्याख्यानं, प्रकारान्तरेण चूडेष्टकोपधानस्य प्रयोजनकथनं, पञ्चानां नाकसदां पञ्चानां चूडानां च संख्यां सम्भूय तस्या विराड्रूपत्वेन प्रशंसनं, विराडात्मिकाया अस्याश्चितेरग्नेराशीष्ट्वमन्तत्वमुत्तमचितित्वं चाभिधाय तद्द्वारा प्रशसनं, नाकसच्चूडयोरन्तरा सार्थवादं पुरीषनिवपनविधानं, विहिते उपधाने दिक्पर-

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|

त्वेन क्रमविशेषं विधाय प्रकारान्तरेण फलसम्बन्धप्रदर्शनं चेत्यादि.

२ एकत्रिंशच्छन्दस्येष्टकोपधानम्-तत्र च छन्दस्यानां सार्थवादं सप्रयोजनमुपधानविधानं, छन्दस्यानां तृचेनोपधान विधाय तत्प्रशंसनम्, अतिच्छदाः-शब्दनिरुक्तिपूर्वकं छन्दस्यासु महदुक्थस्यानुप्रवेशवर्णनम्, उपधानसाधनभूतमन्त्रगतछन्दसां शिरआद्यवयवैः सोपपत्तिकं प्रशंसनं, छन्दस्यानामुपधानप्रयोजनाभिधानं, तत्र पुरस्तात्तिसृणां शिरोरूपाणां गायत्रीणां--पुरस्तादेव रेतःसिग्वेलायां तिसृणामुरोरूपाणां त्रिष्टुभां पश्चाद्रेतःसिग्वेलायां तिसृणां श्रोणीरूपाणांजगतीनां--पश्चादेव जगतीभ्योऽनन्तर्हितानां तिसृणां सक्थिरूपाणामनुष्टुभां-अषाढावेलायां पुरस्तात्तिसृणां पर्शुरूपाणां बृहतीनां--बृहतीनां पुरस्तात्तिसृणां कीकसारूपाणां ककुभां-गायत्रीभ्योऽनन्तर्हितानां तिसृणां ग्रीवारूपाणामुष्णिहां--पार्श्वयोस्तत्र दक्षिणतस्तिसृणां पक्षरूपाणां पंक्तीनां उत्तरतश्चतसृणां पक्षरूपाणामेव पदपंक्तीनां--पुरीषवत्याः पुरस्तादुदररूपाया एकस्या अविच्छन्दसः--पश्चात्तिसृणां प्रतिष्ठारूपाणां द्विपदानां-एवमेकत्रिंशच्छन्दस्यष्टकानां सार्थवादमुपधानविधानं तत्रापि पुरीषवती अतिच्छन्दाश्चेते उभे इष्टके संस्पृष्टे पुरीषसहिते प्राच्यौ च स्वयमातृण्णाया दक्षिणत उपदध्यादिति तयोः सार्थवादमुपधानप्रकारविशेषनिरूपणं च, एवमुक्तरीत्या उपधाने कृते यजमानस्यात्मा सुकृतो भवत्यन्यथा दुष्कृतो भवतीति प्रतिपादनं, प्रसङ्गात्पुष्पाख्ययोः साम्नोर्निधने अभिधाय तद्व्याख्यानं चेत्यादि. १४९-१९१

३ अष्टगार्हपत्येष्टकोपधानम्-तत्र चात्मनो मध्येऽष्टानां गार्हपत्येष्टकानां सार्थवादं सेतिहास छन्दस्योत्तमाऽष्टकोपधानसाधनभूतैर्यजुर्भिरेवोपधानविधानं.

अष्टपुनश्चितीष्टकोपधानम्--तत्र च मध्यत एवाष्टगार्हपत्येष्टकावत्पुनश्चितीष्टकानामुपधानविधानम्, एकेषां मतेन पुनश्चितीष्टकानां जघनार्धे पुच्छसन्धावुपधानमभिधाय तत्प्रतिषिध्य च पुनर्मध्यत एवोपधानस्य समर्थनं, पुनश्चितीनामष्टसंख्यां विधाय तस्याः प्रशंसनम्,-एतासामष्टानामिष्टकानां पञ्चकृत्वःसादनं विधाय तत्प्रशंसनं, पुनश्चितिनामधेयनिर्वचनं, पुनरेकेषां मतेन जघनार्धे गार्हपत्येष्टकानामुपधानं पूर्वार्धे च पुनश्चितीनामुपधानमभिधाय तद्द्वयमपि प्रत्याख्याय च प्रागुक्तोपधानपक्षस्यैव समर्थनं, गार्हपत्येष्टकानां पुनश्चितीष्टकानां चोपधानस्य प्रकारान्तरेण पुनः प्रशंसनं, विहितेऽष्टानां पुनश्चितीनामुपधानेऽष्टौ मन्त्रान्विनियुज्य तेषां व्याख्यानं चेत्यादि. १९२-१६०

इति षष्ठोऽध्यायः।

## अथ सप्तमोऽध्यायः।

१ द्वयोर्ऋतव्येष्टकयोरुपधानम्-तत्र च धर्मातिदेशसहितं सार्थवादमृतव्ययोरुपधानविधानं, विहिते उपधाने मंत्रं विनियुज्य तस्य व्याख्यानं सकृत्सादनविधानं च, पञ्चम्यां चितौ अवश्यं कर्तव्यतया ऋतुरूपत्वेनर्तव्ययोरुप-

अ० विषयाः पृष्ठाङ्काः

धानस्य प्रशंसनं, विहितमृतव्ययोरुपधानं प्रथमायाः स्वयमातृण्णायाः प्रथमाया विश्वज्योतिषश्चोपरिष्टात्कर्तव्यमिति सार्थवादं विधानं, पुनः प्रकारान्तरेण-तव्ययोः प्रशंसनम्, एता एवर्तव्याः संयान्य इत्यभिधानम्, अत्रान्या एव संयान्य इति चरकाध्वर्यूणां मतमनूद्य तत्प्रात्याख्यानं.

विश्वज्योतिष उपधानम्-तत्र च स्वयमातृण्णायाः पुरस्तात्सार्थवादं विश्वज्योतिष उपधानविधानं, प्रसङ्गात्प्रथमाया मध्यमायाश्च स्वयमातृण्णाया उपरिष्टादुपधेयायाः प्रथमाया मध्यमायाश्च विश्वज्योतिषः सार्थवादं प्रदर्शनं, विहिते विश्वज्योतिरुपधाने मंत्रं विनियुज्य तस्यार्थविवरणं, पूर्ववत्सादनसूददोहसाधिवदनाभिधानं, पूर्ववद्विश्वज्योतिषामपि संयानीत्वमभिधाय तत्रान्या एव संयान्य इति चरकाध्वर्यूणां मतमनूद्य तत्प्रत्याख्यानं चेति. १६१-१६७

२ सर्वचितिशेषः तत्र लोकम्पृणेष्टकोपधानम्-तत्र पूर्वं लोकम्पृणाशब्दनिर्वचनपुरःसरं पंचम्यां चितौ प्रथमचितिवत्सार्थवादं लोकम्पृणेष्टकोपधानविधानं, लोकम्पृणोपधानस्य सार्थवादं स्थानविशेषविधानं, विहिते उपधाने मंत्रं विनियुज्य तस्य व्याख्यानं, पूर्ववत्प्राप्तं सादनं निषिध्य केवलं सूददोहसाधिवदनाभिधानम्, अस्या लोकम्पृणाया अयातयामत्वस्य सार्थवादं निरूपणं, यजुष्मतीरुपधाय लोकम्पृणया प्रच्छादयतीति सार्थवादं प्रतिपादनम्, आत्मन्येव यजुष्मतीरुपदध्यान्न पक्षपुच्छेषु इति सोपपत्तिकं प्रतिपादनम्, उभयीर्यजुष्मतीश्च लोकम्पृणाश्चात्मन्नुपदधातीत्यनूद्यात्मनः पीनत्वं पक्षपुच्छयोस्तनीयस्त्वं चाभिधाय सोपपत्तिकं चितस्याचितस्य च विज्ञानप्रतिपादनं, लोकम्पृणया स्वयमातृण्णायाः प्रच्छादनमनूद्य तत्प्रशस्य च जीविष्यतो मरिष्यतश्च विज्ञाननिरूपणं, क्रमसाहतं लोकम्पृणाभिः सर्वतः संछादनस्य प्रकारनिरूपणम्, आत्मन एवाधि पक्षपुच्छानां सोपपत्तिकं चयनविधानं, पाकसमये उपधानसमये वा भिन्ना अतिपाकात्कृष्णाश्चेष्टका नोपदध्यादिति सकारणं प्रतिषिध्य भिन्नानां कृष्णानामतिरिक्तानां चोत्कर उत्किरणरूपप्रतिपत्तिकथनं यजुष्मतीनां लोकम्पृणानां चेष्टकाना परिमाणविशेषं सयुक्तिकमभिधाय तिसृणां चितीनां त्र्यालिखितत्वं द्वयोरपरिमिताऽऽलिखितत्वं च सकारणं प्रतिपाद्य पुनः सर्वासां चितीनां त्र्यालिखितत्वस्य सहेतुकं निरूपणं, यजुष्मतीनामिष्टकानां सोपपत्तिकं मध्यमायां चितावावपनस्थानविधानम्, अतिरिक्ता इष्टका नैवोपधेया इच्छा चेदुपधेया वा इति सकारणं प्रतिपाद्य देवानां दृष्टान्तेन नैवोपधेया इति निगमनं चेत्यादि १६७-१७४

३ पुरीषनिवपनम्-तत्र च लोकम्पृणोपधानस्यानन्तरं सार्थवादं पुरीषनिवपनविधानं, तच्च पुरीषनिवपनमादौ स्वयमातृण्णायां कर्तव्यमिति न स्वयमातृण्णायामावपेदित्येकीयमतनिरसनपूर्वकं सोपपत्तिकं सार्थवादमभिधानं,

| ब्रा० | विषयाः | पृष्ठाङ्काः |
| --- | --- | --- |
| | स्वयमातृण्णायामुष्मेन पुरीषेणात्मनः संछादनस्य क्रमसहितप्रकारनिरूपणं, पुरीषेणात्मनः सर्वतः संछादनस्य प्रशंसनं, विहिते पुरीषनिवपने मंत्रं विनियुज्य तस्यार्थप्रदर्शनं, पुरीषनिवपनस्य प्रकारान्तरेण छन्दोदेवताद्वारा प्रशंसनं, ततो विकर्णीं च स्वयमातृण्णां चोभे परस्परं यथा संस्पृष्टे स्यातां तथोपदध्यादिति सार्थवादं विधानं, विकर्ण्या उपधानमनूद्य तत्र सार्थवादं स्थानविशेषविधानं, पुनर्विकर्णीस्वयमातृण्णयोरुपधानमनूद्य तयोरायुरात्मना प्राणात्मना च प्रशंसनं कृत्वा तत्र पूर्वामुत्तरां विकर्णीमुपदध्यादिति प्रतिपादनं, विकर्ण्या उपधाने स्वयमातृण्णाया उपधाने च क्रमात्पूर्वत्रैक उत्तरत्र द्वाविति मंत्रत्रयं विनियुज्य तेषां व्याख्यानं, नानोपधानं सकृत्सादनं समानकरणं शर्करामयत्वं चेत्येतेषां सहेतुकमभिधानं, सार्थवादं पूर्ववत्सूददोहसाऽधिवदनमभिधाय तत्र मंत्रं विनियुज्य तस्य व्याख्यानं चेत्यादि. | १७९–१८१ |
| ४ | स्वयमातृण्णासु सार्थवादमाख्यायिकया साम्नां गानविधानं, तच्च सामगानं "भूर्भुवः स्वः" इत्येतासु व्याहृतिषु कर्तव्यमिति सार्थवादमभिधानं, तानि वै सामानि नानाप्रस्तावानि समाननिधनानीति सोपपत्तिकं निरूपणम्, इष्टकाभिश्चितस्य सपक्षपुच्छस्याग्नेर्हिरण्यशकलैर्द्विभ्यां द्वाभ्यां शताभ्यां पञ्चकृत्वः प्रोक्षणस्य सार्थवादं सप्रकारकं समंत्रकं विधानं. **चितिपुरीषाणां मीमांसा**—तस्यां च सप्तानामपि चितीनां क्रमाद् भूम्यन्तरिक्षद्यौर्यज्ञयजमानस्वर्गामृतरूपत्वं प्रतिपाद्य तासां क्रमात्पशुवयोनक्षत्रदक्षिणाप्रजादेवामृतात्मना पुरीषेण प्रच्छादनमभिधाय तद्द्वाराऽधिदेवतरूपेण प्रशंसनं, पुनस्तासामेव सप्तानां चितीनां सोपपत्तिकमध्यात्मरूपेण प्रशंसनं चेत्यादि. | १८२–१८६ |


इति सप्तमोऽध्यायः ।

**इति चितिनामके अष्टमं काण्डं समाप्तम् ॥**

# सञ्चितिनामके नवमे काण्डे-

ब्रा० विषयाः | पृष्ठाङ्काः

## प्रथमोऽध्यायः ।

१ शतरुद्रियं कर्म तत्रादौ रुद्ररूपतापन्नस्याग्नेरूपशमनरूपप्रयोजनसहितं शतरुद्रियहोमस्य विधानं, विहिते होमे द्रव्यविशेषं विधाय तस्योभयविधानात्मकत्वाच्चयनसंस्कारे जातरुद्रदैवतोचितरूपत्वेन प्रशंसनं, प्रकृते होमे साधनतया चोदकप्राप्ताया जुह्वा अपवादत्वेनार्कपर्णस्य विधानं, प्रकृतहोमस्य परिश्रित्सु कर्तव्यतया विधानं, पुनस्तस्यैव होमस्य शतशीर्ष्णो रुद्रस्येतरेषां च रुद्राणामुत्पत्तिप्रकारं दर्शयित्वा तच्छमनार्थत्वेन प्रशंसनं, होमस्य द्रव्यान्तरं विधाय तत्प्रशंसनं, होमसाधनत्वेन विहितस्यार्कपर्णस्य प्रकारान्तरेण प्रशंसनं, परिश्रितामपि प्रकारान्तरेण प्रशंसनं, तिसृष्वशीतिषु स्वाहाकारः क्रियत इत्युपरिष्टाद्वक्ष्यते तत्र कस्मिन्प्रदेशे स्वाहाकारः कर्तव्य इत्यभिधानं, तत्र होमसाधनभूतमंत्रजातेषु षोडशर्चस्य प्रथमानुवाकस्य प्रथमाया ऋचः साभिप्रायं व्याख्यानं, प्रथमानुवाकीयषोडशमन्त्रेभ्यश्चतुर्दशमन्त्रानवयुत्य तेषां प्रशंसनं, द्वन्द्विभ्यो होमविधानं, ततो जातेभ्यो होमविधानं, तेषां मंत्राणां मध्ये केचन मंत्रा उभयतो नमस्काराः केचनान्यतरतो नमस्कारा इति तद्वैषम्ये कारणप्रतिपादनं, अन्यत्र सर्वत्र प्रतिमन्त्रं द्रव्यप्रक्षेपं स्वाहाकार इत्यत्रापि तथैव प्राप्तौ सार्थवादं तिसृष्वशीतिषु स्वाहाकारकरणविधानं, प्रथमेऽनुवाके तु प्रतिमंत्रं स्वाहाकार इत्यप्यभिधानं, व्याहृतिसंज्ञकयजुर्मन्त्राणां जपं विधाय तेषां व्याख्यानं, उत्तरसंज्ञकयजुर्मन्त्राणां जपं विधाय तेषां मध्ये प्रथममंत्रमवयुत्य तद्व्याख्यानं, एतस्मिन्ननुवाके यजुर्गता सप्तत्वसंख्या कार्त्स्न्येन तृप्तिहेतुर्भवतीत्यभिधानं, प्रथमे चोत्तमेऽनुवाके या संख्या तस्याः सम्भूय प्रशंसनं, अवतानसंज्ञकमन्त्रैर्होमकरणविधानं, अवतानमन्त्रेषु सहस्रयोजनपदप्रयोगात्परमे दूरे धनुषामवरोपणं कृतं भवतीत्यभिधानम्, अग्ने सहस्रयोजनत्वादग्नौ होमेन सहस्रयोजने एव धनुषामवरोपणं भवतीत्यभिधानं, मन्त्रे " असंख्याता सहस्राणि— अस्मिन्महत्यर्णवे " इत्येतत्पदप्रयोगस्याभिप्रायनिरूपणं, विहितानामवतानहोमानां संख्याविशेषं विधाय तत्प्रशंसनं, सार्थवादं सप्रयोजनं प्रत्यवरोहसंज्ञकमन्त्रैर्होमकरणविधानं, तान्प्रत्यवरोहमन्त्रान्प्रदर्श्य तेषां व्याख्यानं, " दश प्राचीर्दश दक्षिणा " इत्यादिना संख्येयं दिग्विशेषं पर्यालोच्य संख्यामात्रमुपजीव्य शंसित्वा- इदानीं तत्सर्वमुपजीव्याञ्जलिकरणहेतुसहितमवशिष्टमन्त्रप्रयोगोपयोगसहितं च प्रशंसनं, " तमेषां जम्भे दध्मः" इत्यत्र तमित्यस्य स्थानेऽमुमिति प्रयुञ्ज्यादभिचारार्थमित्येकीयमतमुपन्यस्य सयुक्तिकं तस्य प्रत्याख्यानं, " प्रत्यवरोहान् जुहोतीति " सामान्येन विहितस्य प्रत्यवरोहहोमस्य सार्थवादं संख्याविशेषे पर्यावर्तनाभिधानं, मन्त्रान्ते

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | स्वाहाकारस्यान्नप्रदत्वात्वादन्नरूपत्वेन प्रशंसनं प्रकारान्तरेण षट्संख्याया उपपादनम् उक्तहोमानन्तरं तद्धोमसाधनमर्कपर्णं चात्वाले प्रक्षिपेदिति सकारणं सोपपत्तिकमभिधानं, प्रतिज्ञापूर्वकं शतरुद्रियहोमसम्पत्तेः प्रश्नोत्तराभ्यां निरूपणं, प्रकारान्तरेणापि शतरुद्रियस्य सम्पत्तेः प्रश्नोत्तराभ्यामेव निरूपणं चेति. | १–१९ |
| २ | अग्नीत्कर्तृकस्याग्नेरद्भिस्त्रिष्कृत्वः परिषेकस्य सहेतुकं सार्थवादं सप्रकारकमभिधानं, विहिते परिषेके मंत्रं विनियुज्य तस्य व्याख्यानं, परिषेकसाधनमुदकुंभं निधाय सार्थवादं त्रिष्कृत्वो विपल्ययनविधानं, त्रिः पर्येत्य पश्चात्साश्मानं कुम्भं कृत्वा नैर्ऋत्यां देशि प्रक्षिपेदिति सार्थवादं सहेतुकं सप्रकारकमभिधानम् उक्ते निरसने मंत्रं विधाय तद्व्याख्यानं, निरस्तस्य तस्याश्मनोऽभेदने किं कुर्यादित्यभिधाय निरसनानन्तरीयकर्तव्यस्य कथनं, ततः प्रत्येत्य इष्टकाधेनूः कुर्यादिति प्रतिपादनं, विहितमिष्टकाधेनुकरणमासीनेन कर्तव्यमिति केषाञ्चिच्छाखिनां मतमुपन्यस्य तिष्ठता कर्तव्यमिति स्वमतस्य सोपपत्तिकं प्रतिपादनं, तिष्ठताऽपि कथं तिष्ठता कर्तव्यमिति तत्प्रकारनिरूपणं, प्रकृते इष्टकाधेनुकरणे स्थानविशेषस्पर्शपूर्वकं मन्त्रं विधाय तद्व्याख्यानं, तस्येष्टकाधेनुकरणस्य वाग्धेनुकरणात्मना सोपपत्तिकं प्रशंसनं, तत्रैव मन्त्रांतरं विधाय तद्व्याख्यानं, ततो मण्डूकाऽवकावेतसशाखाभिरग्निस्थलस्य सर्वतो विकर्षणं कर्तव्यमिति विधानं मण्डूकाऽवकावेतसशाखानामुत्पत्तिप्रदर्शनपूर्वकं तत्सम्पाद्यस्य विकर्षणस्य शमनार्थतां प्रदर्श्य च कृत्स्नान्नरूपत्वेन प्रशंसनं, विकर्षणेन वान्तरसा मण्डूकादयोऽनुपजीवनीया आसन्निति विधानं, मण्डूकादिभिर्दक्षिणे प्रदेशे पश्चिमे प्रदेशे च विकर्षेदिति मन्त्रमन्त्रार्थयुतं सप्रकारकं प्रतिपादनं, पूर्ववदुत्तरप्रदेशे पूर्वप्रदेशे च मण्डूकादिभिर्विकर्षेदिति सप्रकारकं समन्त्रकं प्रतिपादनं, दक्षिणभागादिक्रमेण विकर्षणात्सिद्धस्य प्रादक्षिण्यक्रमस्य प्रशंसनं, तत्रात्मभागविकर्षणस्य प्राथमिकत्वोपपादनं, पूर्ववत्क्रमसिद्धस्य प्रादक्षिण्यस्य प्रशंसनं, पक्षादीनां विकर्षणमात्मानमभिलक्ष्य कर्तव्यमित्यभिधानं, दक्षिणपक्षादीनां विकर्षणेषु मन्त्रान्विधाय तद्गतसप्तत्वसंख्यायाः प्रशंसनं, मण्डूकादीनामवलम्बभूतं वंशमुत्करे न्यसदिति विधानम्, एनमग्निं परितः सामभिर्गायेदिति विधाय तस्य सामगानस्यामृतरूपतया प्रशंसनं, किंनामकं साम कस्मिन्विभागे गायेदिति सोपपत्तिकं सार्थवादमभिधानं, तत्र "प्रजापतेर्हृदय" संज्ञं साम कस्यांचिदपि ऋचि न गीयते किन्तु केवलं प्रजापतिशब्देन गीयते इति सार्थवादमभिधानम्, अग्नेः प्रजाप्रजापत्युभयात्मकत्वात्तत्रैव गाने नोभयत्रापि हृदयं निधीयते इत्यभिधानम्, एतेषां गायत्र्यादीनां साम्नामिष्टकारूपेण प्रशंसनं, सामगाने समाख्याप्राप्तमुद्गातृकर्तृकत्वमपवाद्येतरकर्तृत्वे च दोषमभिधायाध्वर्युकर्तृकत्वस्य प्रतिपादनं चेत्यादि, | २०–४० |

इति प्रथमोऽध्यायः ।

| ऋ० | विषयाः | पृष्ठाङ्काः |
|---|---|---|

## अथ द्वितीयोऽध्यायः।

१ औपवसथ्यदिवसात्प्राचीने दिवसे कर्तव्यं प्रयोगमभिधाय तथा तस्मिन्दिवसे कर्तव्यस्य प्रयोगस्याभिधानं, दर्भमुष्टिनिधानानन्तरं तदाज्यं दध्यादि चादाय चित्याग्निसमारोहणविधानं तत्र मंत्रं विनियुज्य तस्य व्याख्यानम्, अग्निमारुह्य पञ्चगृहीतेनाज्येन स्वयमातृण्णायां व्याघारणं कुर्यादिति विधानं, व्याघारणस्य स्वयमातृण्णाधारकत्वस्य प्रशंसनं, प्रकारान्तरेणापि स्वयमातृण्णायां व्याघारणत्वस्योपपादनं, ननु यद्येषा स्वयमातृण्णाऽग्नेरुत्तरवेदिस्तर्हि तद्व्याघारणं पूर्वोत्तरवेदिवद्धिरण्यदर्शनादिपूर्वकत्वेन भवितव्यमित्यभिधानं, स्वाहाकारवेट्कारयोः प्रत्यक्षत्वपरोक्षत्वाभिधानपूर्वकमाज्येन पञ्चगृहीतेन व्यतिहारमुत्तरवेद्व्याघारणात्तथैवास्या अपि उत्तरवेदित्वेन व्याघारणमुपपन्नमित्यभिधानं, क्रमेण व्याघारणमन्त्रान्प्रदर्श्य तेषां व्याख्यानं, प्रकारान्तरेण मन्त्राभिधानं प्रशस्याहुतीनां पञ्चत्वसंख्याऽग्नेः कार्त्स्न्येन तृप्तिहेतुर्भवतीति प्रतिपादनं, दध्यादीनां सोपयोगं विनियोगमभिधाय तेषां बहुत्वात्सर्वान्नत्वं विहितं तत्समुक्षणं परिश्रिद्भ्यो बहिरपि कर्तव्यमित्यभिधानम्, उपरिष्टाद्दर्भमुष्टिं निदधातीत्युक्तान्दर्भान्समुक्षणे विनियुज्य तत्प्रशंसनं, पुनस्तेषामेव दध्यादीनामग्नेरुपरिष्टाद्भागरूपेण प्रशंसनं, समुक्षणे मन्त्रद्वयं विनियुज्य साभिप्रायं तयोर्व्याख्यानं, प्रत्यवरोहणे मन्त्रजपस्यान्वयव्यतिरेकयोर्गुणदोषाभिधानम्, अग्नेरवरुह्य पश्चात्कर्तव्यप्रयोगस्य कथनं, तत्र प्रवर्ग्यस्य परिष्यन्दे उत्सादनविधानं, प्रवर्ग्योत्सादनस्याग्निरूपं स्थानान्तरं विधाय तत्प्रशंसनं, पुनस्तत्रैवोद्वासनस्य यज्ञस्य शिरःशरीरसन्धानरूपेण प्रशंसनं, यदा त्वग्नावुत्सादनं तदोक्तोद्वासने विशेषप्रतिपादनं चेत्यादि. ४१--५०

२ प्रवर्ग्योद्वासनानन्तरं सञ्चिते इष्टकासमूहे स्थापनायाग्निं प्रणेतुं तावद्गार्हपत्ये आज्यहोमसमिद्धोमयोः सार्थवादं विधानं, तत्राज्यहोमे पूर्वं पञ्चगृहीतं गृहीत्वा तेनैकामाहुतिं हुत्वा पुनरेकस्यां स्रुचि षोडशगृहीतं गृहीत्वा तत्समं विभज्य ताभ्यां समभागाभ्यामपरमाहुतिद्वयं वैश्वकर्मणाऽऽभ्यां जुहुयादित्येवं तिस्र आहुतीर्जुहोतीति सार्थवादं निरूपणम्, एवमाज्यहोमप्रकारमभिधाय समिद्धोमे विशेषाभिधानं, तत्र ताश्च समिध औदुम्बर्यस्तिस्रश्चेति प्रतिपादनम्, उक्तानामाज्याहुतीनां पुरस्तादन्नरूपत्वेन संस्कारसदृशत्वोपवर्णनं, प्रथमाहुत्यर्थं पञ्चवारं ग्रहणस्याग्नेः शीर्षण्यप्राणपञ्चकोपधानरूपेण प्रशंसनं, प्रथमाहुतिहोममन्त्रे तिग्मपदसम्बन्धस्य प्रशंसनम्, आहुतिद्वयार्थं षोडशवारं ग्रहणस्य प्रशंसनम्, एतदाहुतिद्वयमष्टाभिरष्टाभिर्ऋग्भिरित्येवमनुवाकशेषेण होतव्यं तथा चैताः सर्वा ऋचः सम्भूय सप्तदश भवन्ति, तस्या एतस्या मन्त्रगताया संख्यायाः कृत्स्नाग्निसंस्कारहेतुत्वेन प्रशंसनं, मिलिताया ग्रहणसंख्यायाः प्रशंसनं, समिधां होमस्य प्रकारान्तरेण प्रशंसनं, समिद्धोमे मंत्रत्रयं विनियुज्य तन्निगदव्याख्यातमिति प्रदर्शनम्, आज्यसमिदाहुतिसंख्यायाः पूर्वं

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| पृथक्प्रशंसनं, पश्चात् संभूय प्रशंसनं चेत्यादि. | ९१–९९ |
| ३ इत्थमग्निप्रणयनार्थं यथोक्तं होमं विधाय ततस्तत्प्रायणौपयिकीः क्रियाः कर्तुं तदुचितस्य सम्प्रैषस्य प्रतिपादनम् अत्र सम्प्रैषे ब्रह्मन्प्रतिरथं जपेति यदुक्तं तस्योपयोगमभिधातुं पुराकल्पस्य निरूपणं, तत्राप्रतिरथस्येन्द्रत्वं ब्रह्मणो बृहस्पतित्वं च प्रतिपाद्य ब्रह्मणो द्वादशर्चाप्रतिरथसूक्तस्य जपकरणविधानम्, अप्रतिरथसूक्तस्य सोपपत्तिकं तद्गतऋक्संख्याछन्दोद्वारा प्रशंसनं, ततोऽग्नेः समन्त्रकमुद्यमनविधानम्, उद्यमनानन्तरमध्वर्युप्रभृतीनां "पञ्च दिशो दैवीः" इत्यादिभिः पञ्चभिर्मन्त्रैश्चित्यं प्रति गमनं विधाय तेषां मंत्राणां व्याख्यानम्, उक्तैर्मन्त्रैराग्नीध्रपर्यन्तं गत्वा तत्रैकस्य पृश्निवर्णस्याश्मनः स्थानविशेषे उपधानस्य सोपपत्तिकं सार्थवादमभिधानम्, अभिहिते उपधाने मन्त्रद्वयं प्रदर्श्य तस्य व्याख्यानम्, उपधानमन्त्रयोर्द्वित्वं प्रशस्य प्रकृतस्याश्मन इष्टकान्तरवदुपधानस्य विधानात्तद्वदेव सादनसूददोहसाविबदनयोः प्रसक्तौ तयोः सोपपत्तिकं सकारणं निषेधकरणं, तस्योपहितस्याश्मनो रक्षां विधायाहवनीयदेशं प्रति गच्छेयुरिति विधानं, तत्र मंत्रचतुष्टयं विनियुज्य तन्मध्ये द्वितीयमंत्रस्य व्याख्यानमवशिष्टं मंत्रत्रयं निगदव्याख्यातमिति प्रदर्शनं च, उक्तमंत्रैराग्नीध्रादाहवनीयपर्यन्तं गमने सूर्यादूर्ध्वा भ्रातृव्यसम्बन्धिनीश्चतस्रो दिशस्तथैव प्राप्नोतीत्यभिधानं, चित्याग्निसमीपगमनानन्तरं "क्रमध्वमग्निना" इत्यादिभिः पञ्चभिर्मन्त्रैस्तस्यारोहणविधानं तेषां मन्त्राणां व्याख्यानं च, उक्तमन्त्रसाध्येन चित्याग्नेरारोहणेन स्वर्गे लोके विद्यमाना भ्रातृव्यसम्बन्धिनीः पञ्च दिशः पूर्ववत्प्राप्नोतीत्यभिधानं, चित्याग्निसमारोहणानन्तरमस्मिन्नुख्याग्नौ होमस्य सार्थवादं विधानं, विहिते होमे द्रव्यस्य सकारणं सार्थवादं सविशेषमभिधानं, प्रकृतमग्निहोमं प्रकारान्तरेण प्रशस्य तत्र मंत्रद्वयं विनियुज्य तत्र च पूर्वस्य प्रतीकं प्रदर्श्योत्तरस्य व्याख्यानं, मंत्रगतं द्वित्वं प्रशस्योख्याग्नेश्चितीनामुपरि निधानं विधाय च तत्र मंत्रद्वयं विनियुज्य तस्य व्याख्यानं, ततोऽस्मिन्नग्नौ समिधामाधानं विधाय ताः समिधश्चित्याग्निं प्राप्तस्याग्नेरुपरितनान्नरूपेण प्रशस्य तत्र शमीमयीं समिधं प्रथमामादध्यादिति सकारणमभिधानम्, अस्मिञ्छमीसमिध आधाने मंत्रं विनियुज्य तस्याभिप्रायवर्णनं, ततः स्तावकार्थवादातिदेशसंहितं वैकङ्कतसमिदाधानं विधाय तत्र मन्त्रं च विनियुज्य तस्य व्याख्यानं, ततः सार्थवादं कर्णकवत्यौदुम्बरसमिधो होमं विधाय तदभावे प्रतिनिधिं चाभिधाय मन्त्रं च विनियुज्य तस्य प्रशंसनं, समिद्धोमगतत्रित्वसंख्यायाः प्रशंसनं, समिद्धोमानन्तरमाज्याहुतीनां विधानं, तत्र धर्मविशेषमभिधाय मंत्रं च विधाय तस्य छन्दःप्रशंसनसहितं तात्पर्याभिधानं, तत्र द्वितीयामाहुतिं विश्वकर्मणे जुहुयादिति विधाय तत्र मंत्रं च विनियुज्य तस्य व्याख्यानम्। | |

आ० विषयाः पृष्ठाङ्काः

**पूर्णाहुतिः**—उक्ताहुतिद्वयहोमानन्तरं तृतीयां पूर्णाहुतिसंज्ञकामाहुतिमाज्यपूर्णया स्रुचा जुहुयादिति विधाय तत्र मन्त्रं च विनियुज्य तस्य व्याख्यानं, मन्त्रे पौनःपुन्येन समाम्नातः सप्तशब्दप्रयोगः कृत्स्नस्याग्नेस्तृप्तिहेतुर्भवतीत्यभिधानं, समिदाज्यहोमगतां त्रित्वसंख्यामादौ पृथक्पृथक्प्रशस्य ततस्तस्या एव संख्याया सम्भूय प्रशंसार्थं स्तावकार्थवादातिदेशकथनं, समिदाहुतीनामस्थिमांसात्मकत्वात्तत्सन्निवेशानुसारेण तास्तिष्ठन्नासीनो वा जुहुयादित्यभिधानं, अस्थिमांसानुसारेण समिधोऽन्तराऽऽज्याहुतयस्तु बाह्याः कर्तव्या इत्यभिधानं, प्रतिज्ञापूर्वकमस्याग्निप्रणयनात्मकस्य कर्मणः सम्पत्तेरुपपादनं, तत्र चोक्तप्रकारेणानुष्टुभः सम्पादनेनैतासामेकामनुष्टुभमत्राहुतवन्तो भवन्तीति सप्रयोजनं सार्थवादमभिधानं, उक्तार्थवेदनस्य प्रशसनं, प्रकारान्तरेणापि गार्हपत्यादग्नेराहरणस्य प्रशंसनं चेत्यादि. ७६–८१

इति द्वितीयोऽध्यायः ।

**अथ तृतीयोऽध्यायः ।**

१ **वैश्वानरहोमः**—तत्र च द्वादशकपालपुरोडाशद्रव्यकवैश्वानरहोमस्य सहेतुकं सोपपत्तिकं सार्थवादं विधानं, पुनस्तस्य प्रकारान्तरेण प्रशंसनार्थं वैश्वानरशब्दस्य निर्वचनमुपपादनं च, वैश्वानरयागानन्तरं मारुतानां होमं विधाय तेषां प्राणात्मना प्रशंसनं, तेषां मारुतानां प्राणात्मकत्वात्तदनुविधायिनीं संख्यामभिधायोक्तं प्राणत्वमुपजीव्योपांशुयागादिकस्य प्रतिपादनं, द्वन्द्वशो मारुतानां होममनूद्य तेषां तत्तद्द्वन्द्वीभूतप्राणात्मकताप्रदर्शनद्वारा होमस्थानप्रकारनिरूपणं, ततोऽरण्येऽनूच्यस्य पुरोडाशस्य वागात्मना प्रशंसनं, पूर्वं वैश्वानरस्य शिरोरूपत्वं मारुतानां तु तत्तत्प्राणरूपत्वमभिहितमिदानीं तेषामेव वैश्वानरमारुतानां क्षत्रप्रजात्मना प्रशंसनं, तेषामुक्तमेव क्षत्रप्रजात्मकत्वमुपजीव्य तत्संख्यादिकस्य प्रशंसनं, पूर्वं वैश्वानरमारुतानां केवलं होमो विहितः इदानीं तत्र कञ्चिद्विशेषं विधाय तस्य प्रशंसनं, मारुतानामुक्तप्रकारेण होमेन वैश्वानरवद्यागसम्पत्तिर्घटते सा सम्पत्तिः कथं भवतीति प्रश्नपूर्वकं तस्याः प्रदर्शनं, होमक्रमेण तेषां मारुतानां प्रत्येकस्य नद्यादिरूपेण प्रशंसनं, वैश्वानरमादित्यरूपेण मारुतांस्तु तद्रश्मिरूपेण प्रशस्य तत्र मारुतानां मरुद्गणसंख्यानुसारेण सप्तकपालत्वप्रतिपादनं, मारुतानां होमे मन्त्रान्प्रदर्श्य तेषामभिप्रायनिरूपणं चेत्यादि. ८२–९१

२ **वसोर्धाराहोमः**—तत्र च वसोर्धाराहोमं विधाय वसोर्धाराशब्दनिर्वचनपुरःसरं तत्प्रशंसनं, पुनस्तस्यैव वसोर्धाराहोमस्य संस्कृताग्नेरभिषेकात्मना प्रशंसनं, विहितो वसोर्धाराहोमः पञ्चगृहीताज्यपूर्णया स्रुचा कर्तव्य इति स्तावकार्थवादातिदेशसहितं निरूपणं, एतस्य वसोर्धाराहोमस्य वैश्वानरमारुतहोमानन्तर्यत्वप्रशंसनं, वसोर्धाराहोमे स्थानविशेषविधानं वसोर्धारापदस्य प्रकारान्तरेण पुनर्निर्वचनं च, ततः क्रियमाणेयं वसोर्धाराऽऽहुतिः क्षीरादिधारावत्सम्पादयत्

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | इति तस्या धाराकारताप्रदर्शनं, प्रकृतवसोर्धाराहोममन्त्राणां तात्पर्यार्थप्रदर्शनं, अन्यत्र सर्वत्र मन्त्रान्ते कर्मकरणात्तद्वदत्रापि होमप्रसक्तौ कस्यचिद्विशेषस्य प्रतिपादनं, मन्त्रैर्विवक्षितस्यार्थस्य विविच्य दर्शनं, मन्त्राणामवसाने प्राप्तं व्यवच्छेदं बाधित्वा द्वौ द्वौ मंत्रौ संयुञ्ज्यादिति विशेषाभिधानं, मंत्रेषु तत्र तत्रावसानेषु, "यज्ञेन कल्पताम्" इत्याम्नायते तस्योपयोगकथनं, "यज्ञेन कल्पताम्" इत्यत्र यज्ञशब्देनात्मनेत्यर्थो विवक्ष्यत इत्यभिधानं, "यज्ञेन कल्पताम्" इति वाक्यं प्रतिद्वादशमन्त्रावसाने क्वचित्क्वचिच्चतुर्दशस्वष्टासु दशसु त्रयोदशसु च प्रयुञ्ज्यादिति सहेतुकं प्रतिपादनम्। | |
| | **उत्तरहोमाः**—तत्र चादावर्धेन्द्रसंज्ञकमन्त्रकरणकहोमस्य सार्थवादं विधानं, ग्रहसंज्ञकमन्त्रकरणकहोमस्य सार्थवादं विधानं चेत्यादि. | ९१–९९ |
| ३ | यज्ञक्रतुसंज्ञकमंत्रकरणकहोमस्य सार्थवादं विधानम्, अयुजस्तोमसंज्ञकमन्त्रकरणकहोमस्य सार्थवादं विधानं, तत्रायुजस्तोमानामवधित्वं प्रतिपाद्य तस्य प्रशंसनं, युग्मस्तोमसंज्ञकमंत्रकरणकहोमस्य सार्थवादं विधानम्, अत्रापि पूर्ववद्युग्मस्तोमावधित्वं प्रतिपाद्य तस्य प्रशंसनं, ततस्तत्र तत्रोत्तरस्तोमपरिग्रहे वृक्षशाखारोहणक्रमेण तानेव द्विविधान् स्तोमान्प्रशस्य पुनस्तेषामेव स्तोमानामन्नात्मना प्रशंसनं, वयः—संज्ञकमंत्रकरणकहोमस्य सार्थवादं विधानं, नामग्राहसंज्ञकमंत्रकरणकहोमस्य सार्थवादं विधानं, तेषां मंत्राणां संख्या कृत्वाऽग्निप्रीतिहेतुर्भवतीति प्रशंसनं, "वाजाय—स्वाहा" इत्यादिनामग्राहमंत्रहोमानन्तरं "इयं ते राट्" इत्यस्य मंत्रस्य सार्थवादं प्रयोगकथनम्, उक्तं मन्त्रमनूद्य तस्य सोपपत्तिकं व्याख्यानं, कल्पसंज्ञकमन्त्रकरणकहोमस्य सार्थवादं विधानं, कल्पहोमा द्वादश भवन्तीति सार्थवादमभिधानं, कल्पहोमेष्वन्तिममन्त्रस्य व्याख्यानं अस्मिन्नवसरे वसोर्धाराहोमसाधनभूतां तां स्रुचमग्नौ प्रास्येदिति सहेतुकं विधानम्, एतस्या वसोर्धाराया द्युलोकादिषु गवाकारताप्रदर्शनेन पर्यावृत्तिप्रदर्शनम्, उक्तार्थवेदनस्य प्रशंसनं, प्रतिज्ञापूर्वकमस्या वसोर्धारायाः सम्पत्तेरभिधानं चेत्यादि. | ९६–१०३ |
| ४ | **वाजप्रसवीयहोमः**—तत्र च वाजप्रसवीयहोमं विधाय तत्प्रयोजनकथनद्वारा तस्य पदस्य प्रवृत्तिनिमित्तप्रदर्शनं, पूर्वं वसोर्धारया प्रीणितस्याभिषिक्तस्य चाग्नेरयं वाजप्रसवीयो होमो भूयः प्रीणनाभिषेकहेतुर्भवतीति प्रशंसनं, प्रकृतहोमे द्रव्यविशेषं विधाय तत्प्रशंसनं, प्रसङ्गात्तेषां चतुर्दशानामन्नानां मध्ये एकमन्नं परित्यजेत्किञ्च तदन्नं यावज्जीवं नाश्नीयादित्यभिधानं, तत्रैव होमे स्तावकार्थवादातिदेशसहितमौदुम्बरं स्रुवच्चमसलक्षणं पात्रविशेषं विधाय तयोः स्रुवचमसयोराकारविशेषं च विधाय तत्प्रशंसनं, पुनस्तस्यैव वाजप्रसवीयहोमस्य प्रकारान्तरेण प्रशंसनं, पार्थहोमविधानं, तानि पार्थानि | |

| श्रा० विषयाः | पृष्ठाङ्काः | श्रा०. विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

प्रकृतस्य वाजप्रसवीयस्याभितो जुहुयादिति सप्रयोजनमभिधानं, पूर्वोक्तप्रकारेण होमेन सर्वाभिषेकसिद्धिः कथमिति प्रश्ने सोपपत्तिकं तदुत्तरप्रतिपादनं, राजसूयवाजपेयसम्बन्धिनां वाजप्रसवीयकर्मणां पौर्वापर्ये कारणकथनम्, आग्निकानामुत्तमत्वस्योपपादनम्।

अभिषेकः—तत्रेत्थं सक्रमं, पार्थहोममभिधायेदानीं यजमानस्य कृष्णाजिनेऽभिषेकं विधाय तस्य कृष्णाजिनस्य यज्ञात्मना प्रशंसनं "कृष्णाजिनेऽभिषिञ्चति" इति सामान्येन विधानान्निर्लोमप्रदेशे कदाचिदभिषेकः स्यादिति कस्यचित्प्रतिप्रत्तिः स्यात्तस्या निवारणार्थं लोम्नां छन्दोरूपत्वेन प्रशंसनद्वारा कृष्णाजिनस्य सलोमकत्वप्रतिपादनं, स चाभिषेक उत्तरभागे कर्तव्य इति स्तावकार्थवादातिदेशसहितं निरूपणं, कृष्णाजिनस्य संस्थानविशेषं विधाय तत्प्रशंसनं, अभिषेकस्थानविषये सोपपत्तिकं केषाञ्चिच्छाखिनां मतमनूद्य तन्निरसनं, तथैवान्येषां मतमनूद्य तन्निरसनं, उत्तरतः कर्तव्यस्याभिषेकस्य गुणविशेषकथनेन प्रशंसनं, प्राप्तैश्वर्यस्य प्राप्स्यमानैश्वर्यस्य च यजमानस्याभिषेकसंस्थानविशेषस्य विधानं, फलविशेषानुरोधेन धर्मविशेषेऽभिषेकस्य विधानं, विवक्षितस्थानसंस्थानविशेषविशिष्टस्य कृष्णाजिनास्तरणस्य विधानं कृष्णाजिनस्य परिश्रितां स्पर्शो यजमानसम्बन्धिदैवात्माऽभिषेकहेतुर्भवतीति प्रशंसनं, प्रकारान्तरेणापि दैवस्यात्मनोऽभिषेकस्य सिद्धिप्रदर्शनं, अग्नेर्यजमानदैवात्मत्वमुपजीव्य पार्थादिहोमस्याभिषेकस्य च पौर्वापर्यमुपपाद्यास्मिन्नवसरे होमसाधनभूतमौदुम्बरं स्रुवमनुप्रास्येदिति सकारणं विधानं, कृष्णाजिनास्तरणादिकार्यानंतरमस्य यजमानस्याभिषेकमभिधाय तत्र मंत्रं च विनियुज्य तस्य व्याख्यानम्, तदभिषेकसाधनभूतं चमसमग्नौ प्रास्येदिति सकारणमभिधानम्, अभिषेकस्य पूर्वोत्तरपार्थमध्यवर्तित्वस्य प्रशंसनं, पार्थानां पृथग्भूतायाः षट्संख्यायाः प्रशंसनं, पूर्वेषामुत्तरेषां च पार्थमन्त्राणां क्रमाद्बृहस्पतीन्द्रदेवताप्रतिपादकत्वमभिधाय तत्प्रशंसनं चेत्यादि। १०४—११२

इति तृतीयोऽध्यायः।

## अथ चतुर्थोऽध्यायः।

१ राष्ट्रभृद्धोमः—तत्र चादौ राष्ट्रभृतां होमविधानं, राष्ट्रभरणसाधारण्येनैतेषां राष्ट्रभृतां राजत्वमभिधाय तद्राजत्वमुपजीव्य च राष्ट्रभृत्संज्ञकत्वनिरूपणं, प्रकारान्तरेण राष्ट्रभृतां होमस्य प्रशंसनं, राष्ट्रभृतां होमेन प्रजापतेर्मिथुननिधानं घटत इति कथनं, गन्धर्वाप्सरोरूपेणोत्क्रमणात्तदुद्देशेन होमो युज्यत इत्यभिधाय गन्धर्वाप्सरःशब्दानुसारेण तदीयमिथुनत्वस्य प्रदर्शनं, पुनः प्रकारान्तरेणैतासां राष्ट्रभृत्संज्ञासम्बन्धस्य प्रदर्शनं, प्रकृतहोमे द्रव्यस्य तत्परिमाणस्य च स्तावकार्थवादातिदेशसहितं विधानं, मन्त्रगतपुंस्त्रीक्रमेण होमस्य प्रशंसनं, स्त्रीपुंसयोः संख्यायाः प्रशंसनं, प्रसङ्गादेकस्य पुंसो बह्व्यो जाया भवन्तीति प्रतिपादनं, क्रमेण राष्ट्र-

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

भृत्संज्ञकमन्त्राणां व्याख्यानं, राष्ट्रभृद्धोमानन्तरं रथशिरसि होमं विधाय तस्य यजमानाय सर्वात्मना प्रशंसनं, प्रकृतहोमे द्रव्यतत्परिमाणयोः स्तावकार्थवादातिदेशसहितमभिधानम्, अभिषिच्यमानस्य शिरसः सकाशादेव तदभिषेकाद्रथशिरसो होमः प्रशस्यत इत्यभिधानम्, अभिषेकावसरे यजमानः कृष्णाजिनादेरुपरि स्थितः सन्समानेन मन्त्रेण सर्वतः परिहृत्याभिषिच्यत इति सहेतुकमभिधानं, पुनस्तस्यैव होमस्य प्रकारान्तरेण प्रशंसनम्, अस्मिन्रथशीर्षहोमे मन्त्रं विनियुज्य तस्य व्याख्यानं चेत्यादि. ११३–१२०

२ **वातहोमाः**—तत्र च उक्तहोमानन्तरं वातहोमान्कुर्यादिति सार्थवादं विधानं, होष्यमाणो वायुरग्नेर्बाह्यप्रदेशादञ्जलिनाऽऽहरणीय इत्यभिधानं, होमेषु सर्वत्र स्वाहाकारप्रयोगादस्यापि होमः स्वाहाकारेण कर्तव्य इति प्रतिपाद्योपरिधार्यमाणस्य रथस्य धुरोऽधोऽधोभागे जुहुयादिति होमप्रदेशस्य विधानं, वातहोमेषु मन्त्रत्रयं विनियुज्य तेषां मन्त्राणां व्याख्यानं मन्त्राणां त्रित्वसंख्यायाः प्रशंसनं, च, एतेषामेव वातहोमानां सर्वकमनाप्त्यर्थं रथनियोजनात्मना प्रशंसनं, वातहोमानामेव नियोजनसाधनत्वेन प्रशंसनं, वातहोमानां त्रित्वमुपपाद्य लोके धुरोऽधोभागे हस्ताभ्यां विपरिक्रम्य विपरिक्रम्याश्वस्य नियोजनादत्रापि तद्वदेव नियोजनमित्यभिधानम्, अश्वानां नियोजने स्थाननिर्देशपुरःसरं क्रमनिरूपणम्, उक्तप्रकारकक्रमाश्रयणे को गुणस्तद्वैपरीत्ये को दोष इत्यभिधानं, वातहोमानामेवाश्वत्वात्प्रत्यक्षतया तमश्वं रथेनाभियुञ्ज्यादित्याशङ्क्य वाहनं तु दद्यादेवेति सहेतुकं तत्समाधानकथनं, तं रथमध्वर्युगृहपर्यन्तमुपर्येवाहरेयुरित्यभिधानं, तस्य रथस्य दक्षिणादानकालेऽध्वर्यवे दानप्रतिपादनम् ।

**रुक्मतीहोमः**—तत्र च वातहोमानन्तरं रुक्मतीनामृचां होमस्य सार्थवादं विधानं, रुक्मतीनां होमस्य प्रकारान्तरेण प्रशंसनं, रुक्मतीनामृचां प्रदर्शनं, मंत्रेषु पौनःपुन्येन रुक्च्छब्दस्य प्रयोगादस्मिन्नग्नौ अमृतत्वमेव निदधातीत्यभिधायाहुतीनां त्रित्वेन कृत्स्न एवाग्नौ रुचं निदधातीत्यभिधानम् ।

**वारुणीहोमः**-तत्र च वारुणीऋक्साध्यहोमस्य विधानं, विहितं होमं प्रशस्य होमसाधनभूताया ऋचो वरुणसम्बन्धं च प्रशस्य पुनस्तेनैव होमेन विस्रस्तात्प्रजापतेरुत्क्रान्तस्य वीर्यस्य धारणमस्मिन्सम्पाद्यत इत्यभिधानं, होममन्त्रं प्रदर्श्य तस्य व्याख्यानम् ।

**सन्ततिहोमः**—तत्र च अर्काश्वमेधसन्ततिसंज्ञकहोमानां सोपपत्तिकं सप्रयोजनं विधानं, सन्ततिहोमेषु पञ्च मन्त्रान्विनियुज्य तेषां व्याख्यानम्, आहुतीनां पञ्चत्वसंख्याया अर्काश्वमेधयोः सन्धानसाकल्यहेतुत्वेन प्रशंसनं, " स्वर्णघर्मः स्वाहा " इत्यादिमन्त्रप्रयोगस्य प्रकारान्तरेण प्रशंसनं, पुनरपि तस्या आहुतिगतपञ्चत्वसंख्यायाः प्रकारान्तरेण प्रशंसनं, प्रतिज्ञापूर्वकमाहुतीनामावप-

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

नस्य मीमांसाकरणं, तत्र ब्राह्मणोक्तानामाहुतीनां होमं पूर्वपक्षीकृत्य पुनर्होमस्यैव सिद्धान्ततया प्रतिपादनं चेत्यादि. १२१-१२९

इत्याहवनीयाग्निचयनोत्तरकर्माणि ।

३ **अष्टानां धिष्ण्याग्नीनां चयनम्**—
तत्र च प्रत्येत्य धिष्ण्यानां काले धिष्ण्यान्निवपेदिति विधानं, धिष्ण्यानां निवपनेनाग्नीनेव चिनोतीत्यभिधानं, सञ्चितस्याग्नेः क्षत्रत्वादेतेषां धिष्ण्यानां विट्त्वात्क्षत्रं च विशं च चितवान्भवतीति निरूपणं, सञ्चितस्याग्नेरेकत्वात्क्षत्रजातिस्थं प्राधान्यं श्रियं चेत्युभे एकस्थे करोति- धिष्ण्यानां बहुत्वाद्विश्येव बहुत्वं करोतीत्यभिधानम्, एषोऽग्निः पञ्चचितिको भवतीतरे धिष्ण्यास्तु एकचितिका भवेयुरिति सकारणं प्रतिपादनं, क्रमेण पञ्चानां चितीनामुपर्युपरि चयनमितरेषां धिष्ण्यानां तु तिर्यक् चयनमिति सकारणं निरूपणं,यजुष्मत्या लोकम्पृणया चेत्युभाभ्यामिष्टकाभ्यामेनमग्निं चिनोतीति सहेतुकं प्रतिपादनम्, एषां धिष्ण्यानां चयनेन क्षत्रमेव भोग्यरूपायां विशि भोक्तारं निदधातीति स्तावकार्थवादातिदेशसहितं निरूपणं, सर्वानपि न्युप्य पश्चाच्चिनुयादिति चेन्नेत्यभिधानं, पूर्वमाग्नीध्रीयस्याध्वरधिष्ण्यस्य निवपनात्तथैव तं पूर्वमेव चिनुयादित्यभिधानं, तस्य चयनं दक्षिणभागे उदङ्मुख आसीनः सन्कुर्यादिति स्तावकार्थवादातिदेशसहितमभिधानं, धिष्ण्येऽष्टानामिष्टकानामुपधानं विधाय तद्गतसंख्यायाः प्रशंसनं, पृश्न्यावश्मनो निधानेन नवत्वसंख्यां सम्पाद्याग्नौ निहितमग्निं दशमं कृत्वा पुनस्तथैव प्रशंसनम्, आग्नीध्रस्य मध्यप्रदेशत्वान्मध्यत एव दश प्राणान्निदधातीत्यभिधानं, होत्रीये धिष्ण्ये एकविंशतिमिष्टका एकविंशतिपरिश्रितश्चोपदध्यादिति स्तावकार्थवादातिदेशसहितमभिधानं, ब्राह्मणाच्छंसिनो धिष्ण्ये एकादशेष्टका उपदध्यादिति सोपपत्तिकं प्रतिपादनं, इतरेषु धिष्ण्येष्वष्टावष्टाविष्टका उपदध्यादिति स्तावकार्थवादातिदेशसहितमभिधानं, मार्जालीये धिष्ण्ये षण्णामिष्टकानामुपधानस्य सार्थवादं विधानं, धिष्ण्यानां चित्याग्नेश्च संस्थानस्य प्रशंसनम् आग्नीध्रदेशे धिष्ण्योपधानप्रकारस्य निरूपणम्, इष्टकामिश्रितानां धिष्ण्यानां परिश्रिद्भिः परिश्रयणस्य सविशेषं विधानम्, एतेषां धिष्ण्यानां परिश्रितां परिमाणस्य विधानं, स्तावकार्थवादातिदेशसहितमेतेषु धिष्ण्येषु पुरीषनिवापस्य तूष्णीं धर्मविशिष्टं विधानम् ।

**दिशामवेष्टयः**--तत्रादौ अग्नीषोमीयपशुपुरोडाशात्प्राग्भावि कर्म कृत्वाऽग्नीषोमीयस्य पशुपुरोडाशमनु दिशामवेष्टीर्निर्वपेदिति विधानं, तत्र सोपपत्तिकं हविष्पञ्चकस्य विधानं,विहितामिष्टिं पूर्वपक्षीकृत्य दशहविष्कस्येष्ट्यन्तरस्य सकारणं विधानं,एतदिष्टिगतहविःसंख्यायाः प्रशंसनं, पूर्ववद्देवतामयीमिष्टिं पूर्वपक्षीकृत्य देवस्वामेवैतानि हवींषि निर्वपेदितीष्ट्यन्तरविधानं, देवसूःशब्दप्रवृत्तिनिमित्तं द्वेधा इति प्रदर्शनं, एतासामग्न्यादिदेवतानां नामद्वयसम्बन्धमुपपाद्य सामान्येन विहितानामेषां देवस्वां हविषां संख्याविशेषं विधाय तत्प्रशंसनं, नैतानि

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|

हवींषि निर्वपेदित्याशंक्य कामानामतिरेकाभावेन निर्वपेदेवेति तत्समाधानं प्रतिपाद्य निर्वाप्यत्वेऽपि पशुपुरोडाशमनुलक्ष्यैव । कस्मान्निरूप्यन्त इति प्रश्नपूर्वकं तत्कारणाभिधानं, अस्यामिष्टौ पशुपुरोडाशस्योच्चैस्त्वं हविषामुपांशुत्वं प्रैषेषु पशुपुरोडाशे "अनुब्रूहि प्रेष्य" हविःषु "अनुब्रूहि यज" इति प्रकारकत्वं स्विष्टकृदिडयोः समानत्वं चेत्यादिधर्मविशेषनिरूपणं, देवतायागानन्तरं स्विष्टकृदवदानात्पूर्वं "सविता त्वा सवानाम्" इत्यादिना पूर्वाभिषेकाख्येन मंत्रेणैनमग्निमभिमृशेदिति विधानं, उक्तमन्त्राणामभिप्रायकथनं चेत्यादि. १३०—१३७

इति धिष्ण्याग्निचयनम् ।

इत्यग्निचयनं वृत्तम् ।

४ **सुत्याहकर्माणि**—तत्र पूर्वं सुत्याहप्रयोगस्य विवक्षया प्रथममग्नियोगस्य सप्रयोजनं सार्थवादं विधानं, विहितोऽयमग्नियोगः परिधिषु कर्तव्य इत्यभिधानं, परिधिषु नियोजनमपि कथं कुर्यादित्यपेक्षायां परिधिपरिधानक्रमेण मध्यमपरिधौ प्रथमं ततो दक्षिणोत्तरयोश्च परिध्योर्युक्त्वा—क्रमात्तत्र "अग्निं युनज्मि" इत्यादयस्त्रयो मन्त्राः पठनीया इत्यभिधाय तेषां मंत्राणां व्याख्यानं, एतानग्नियोजनमन्त्रानग्नेरात्मपक्षात्मना प्रशस्य तन्मंत्रगतत्रित्वसंख्यायाः प्रशंसनं, प्राकृतौ सोमाऽभिषवहोमौ कुर्यादिति सोपपत्तिकमभिधानं, होमानन्तरं हुतशेषं भक्षयेदित्यभिधाय तयोरेव होमभक्षणयोः पौर्वापर्यस्योपपादनं, एतस्याग्नेर्विमोचनं विधाय तस्य कालविशेषप्रदर्शनद्वारा तस्यैव क्रमस्य प्रदर्शनं, विपक्षे बाधकप्रदर्शनेन यज्ञायज्ञियस्तोत्रात्पूर्वमेव विमुञ्चेदित्यभिधानं, लोके यत्राश्वं युञ्जन्ति तत्रैव तं विमुञ्चन्ति अतोऽत्रापि अग्नेः परिधिषु योजनात्तत्रैवैनं विमुञ्चेदिति प्रतिपादनं, तद्विमोचनप्रकारमभिधाय तत्र मन्त्रद्वयं सोपपत्तिकं विनियुज्य कस्मिन्सन्धौ कं मन्त्रं जपेदित्यप्यभिधाय मन्त्रयोर्मूर्द्धशब्दसम्बन्धस्याप्सु शब्दसम्बन्धस्य च प्रशंसनं, विमोचनमन्त्रयोर्द्वित्वसंख्यां प्रशस्य योजनविमोचनमन्त्राणां संख्यायाः सम्भूय प्रशंसनं, प्रसङ्गादहर्गणेष्वपि योजनविमोचनप्रकारस्य विवक्षया पूर्वपक्षत्वेन केषाञ्चित्पक्षं सोपपत्तिकमनूद्य तं निरस्य च स्वपक्षस्य प्रतिष्ठापनं, तदेव पूर्वपक्षीकृतं मतं तदनभिमतदृष्टान्तप्रदर्शनेन निरस्य स्वमतस्यैव दृढीकरणं, हेत्वन्तरप्रतिपादनेनापि स्वमतस्य दृढीकरणं चेत्यादि. १३८—१४४

इति चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः ।

१ **यजमानव्रतमीमांसा**—तत्रावशिष्टः कृत्स्नोऽपि प्रयोगः, प्रकृतिवदेवेत्यभिप्रायेण तमनभिधाय पयोव्रतस्य मीमांसा क्रियत इति प्रतिज्ञाकरणं पयोव्रतं विधाय तत्प्रशंसार्थमाख्यायिकाकथनं, तस्यां चाख्यायिकायां दीक्षासमनन्तरकाले द्वितीयदिने प्रथमोपसदि द्वितीयोपसद्दिने तृतीयोपसद्दिने च देवा भूयोभूयस्तपस्तप्त्वा क्रमाच्चतुस्त्रिद्व्येकस्तन-

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

दुग्धपयोव्रता अभवन्नुपत्रसथीये चतुर्थ-दिने भूयस्तपस्तप्त्वाऽपि सर्वथा सन्निहिततरस्यापि दुग्धामृतस्याप्राप्त्या तेऽनाशकात्मकं व्रतमकुर्वन्-पञ्चमदिने सुत्याहे तु तदमृतं सोमरूपं प्राप्य कण्डनं कृत्वा तदग्नावजुहुवुरित्याद्यभिधानम्, इत्थं देवानां कथामवतार्य तथैवेदानीन्तनो यजमानस्तत्सर्वं करोतीति सप्रपञ्चं प्रतिपादनम् ।

समिष्टयजुर्मीमांसा—तस्यां चादौ प्रतिज्ञापूर्वकं समिष्टयजुर्मीमांसार्थमाख्यायिकाकथनम्, आख्यायिकायामपि देवासुराः सत्यानृतवदनलक्षणं पितुर्दायं समनुप्राप्य तस्य यथोचितं विभज्य ग्रहणं चक्रुरित्यभिधानं तत्र देवा यत्सत्यमगृह्णंस्तत्त्रयीलक्षणमिति प्रतिपाद्य तदुदितं यज्ञं कृत्वा त्रयीलक्षणमिदं सत्यं विस्तारयामेत्याशयेन दीक्षणीया समिष्टयजुषः पूर्वभाविकर्मान्ता-प्रायणीया शंय्वन्ता—सोमं क्रीत्वाऽनसा पर्युह्य तस्मै आतिथ्येडान्ता तिस्र उपसदः प्रयाजानुयाजवर्जिता सामिधेनीत्रिकमनूच्य प्रधानदेवता यजनमात्राः उपवसथेऽग्नीषोमीयः पशुः समिष्टयजुर्वर्जितः—प्रातःसवनं माध्यन्दिनसवनं च स्वस्वावधिकं तृतीयसवनं च सकलं—इत्येतान्यागान्क्रमेण तदा तदा समनुष्ठितवन्तो यदा यदा च तद्विस्तार्यमानं सत्यमपमहर्तुकामा असुराः समागताः । किञ्च तेषामागमनसमये प्रक्रान्तं यज्ञं यावदनुष्ठितं समाप्य यागान्तरप्रारम्भं चक्रुस्तेन स स याग उपरिष्टादुक्तसंस्थः सम्पन्नः । इतोऽसुरा अप्यन्ततस्तत्सत्यमपहर्तुं न शेकुः प्रत्युत पराभूताः देवाश्च सत्यसमृद्धा अभवन्नित्यादिनिरूपणम्, उक्तार्थं वेदितुरपि स्वस्य सत्यसमृद्धिः शत्रोः पराभूतिरित्येतत्फलं भवतीति प्रतिपादनं, ते देवाः पश्चान्नो इमे यज्ञाः सामिसंस्थिताः यानिमान्यज्ञान्परित्यजन्तो गता वयं तदुपजानीत यथेमान्यज्ञान्संस्थापयामेत्यादिविचार्यैतानि समिष्टयजूंषि समपश्यंस्तैरेतान्यज्ञान्समस्थापयन्नित्यादिनिरूपणं, समिष्टयजुर्नाम्नो द्वेधा निर्वचनम्, एतेषामेव समिष्टयजुषां नवत्वविशिष्टसंख्याप्रदर्शनेन प्रशंसनं, सौमिकान्याग्निकानि पौर्वापर्यक्रमेणोभयान्यपि समिष्टयजूंषि जुहुयादित्यभिधानम्, आग्निके द्वे जुहुयादित्यभिधाय तयोर्द्वित्वस्य प्रशंसनं, तयोरेवाग्निकयोः समिष्टयजुषोर्मन्त्रद्वयस्य विनियोजनं, सौमिकानामाग्निकानां च मिलितायाः संख्यायाः प्रशंसनं, पुनरस्या एव मिलितायाः संख्यायाः प्रकारान्तरेण प्रशंसनम् ।

देविकाहवींषि—तत्र च समिष्टयजुर्होमानन्तरमनुष्ठेयप्रयोगस्य कथनं, तत्र क्रमेण समिष्टयजूंषि हुत्वाऽवभृथं यन्ति अवभृथादागत्योदयनीयेन चरित्वा अनूबन्ध्यस्य पशुपुरोडाशेन चरित्वा च देविकानां हवींषि निर्वपेदिति प्रति-

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

पादनं, अत्र देविकानां हविःषु धात्रो द्वादशकपालो निरुप्यते तत्र धात्रशब्दस्य प्रवृत्तिनिमित्तं प्रदर्श्य तद्वाराऽस्य प्रयोजननिरूपणं, तथैतेषां सर्वेषामपि हविषां सम्भूयोपयोगस्य कथनं, तस्यैव दिङ्निरोधार्थं परिगतस्य धातुर्दिशामुत्क्रान्तरूपस्य च प्रदर्शनं, धातुरादित्यात्मकत्वाद्द्वादशसंख्यासम्बन्धात्तद्देवत्यस्य पुरोडाशस्य द्वादशकपालत्वमुपपाद्य तत्पूर्वोक्तं यद्दिशां परममुत्क्रांतरूपं तान्येतानि पूर्वाणि हवींषीति प्रदर्शनं, तस्य धात्रपुरोडाशस्य होमावसरे पुरोडाशान्तरवदवदानप्रसक्तौ सर्वहोमत्वमभिधाय तदुपयोगस्याभिधानं, देविकाशब्दस्य सोपपत्तिकं निर्वचनं, एतेषां पञ्चत्वसंख्यावत्त्वस्योपपादनं, नैतानि हवींषि निर्वपेदित्याशङ्क्य कामानामतिरेकाभावान्निर्वपेदेवेति तत्समाधानकथनं, पशुपुरोडाशमनु एतद्धविर्निर्वापस्य सकारणमभिधानं, सौमिकानामाग्निकानां चोभयेषामपि पौर्वापर्यक्रमेणानुष्ठेयत्वकथनं, पशुपुरोडाशस्योच्चैस्त्वं हविषामुपांशुत्वं तत्प्रैषानां प्रकारविशिष्टत्वं स्विष्टकृदिडयोः समानत्वं चेत्यादि प्राग्वन्निरूपणं, दीक्षणीयादीनां समिष्टयजुर्होमात्पूर्वभावित्वेन समिष्टयजुर्होमः सिध्यति—अग्नीषोमीयपशोः पुनर्न सिध्यति नासौ पशुस्तत्पूर्वभाव्यतोऽस्य पृथगेव समिष्टयजूंषि जुहुयादित्यभिधानं, तस्य पशोः समाप्तिरूपत्वात्

हृदयशूलेनावभृथमभ्यवेयुरिति प्रतिपादनं, हृदयशूलमुद्वास्य प्रत्येत्य वैश्वकर्मणानि जुहूयादित्यभिधानम् ।

**वैश्वकर्मणहोमः**—तत्र च तेषां वैश्वकर्मणानांहोमस्योपयोगकथनं, वैश्वकर्मणानीति शब्दस्य पक्षद्वयेन व्युत्पत्तिकथनं, तेषां वैश्वकर्मणानां प्रशंसनं, सावित्रवैश्वकर्मणानां प्रायेणोदयनात्मकत्वेनैव तेषामुभयेषामपि होमस्यावश्यकर्तव्यत्वनिरूपणं, वैश्वकर्मणानां सावित्रवदेव संख्यासम्बन्धात्प्रायणवदेवोदयनमपि सम्पाद्यत इत्यभिधानं, तत्र सावित्रेषु सन्ततामाहुतिं जुहुयादिति विधानं, वैश्वकर्मणेषु पुनः स्रुवेण स्वाहाकृत्यार्थात्प्रत्याहुति विच्छिद्य जुहूयादिति प्रतिपादनं, तत्र वैश्वकर्मणानां होमेऽष्टौ मन्त्रान्विनियुज्य क्रमेण तेषां व्याख्यानं, एतेषां वैश्वकर्मणानां संख्यायाः प्रशंसनम् ।

**चित्याग्नेर्नामकरणम्**—तत्र च वैश्वकर्मणहोमानन्तरमस्याग्नेर्नामकरणं विदध्यादिति साभिप्रायं कथनम् ।

**चित्याग्नेरुपस्थानम्**—तत्र नामकरणानन्तरमस्याग्नेरुपस्थानस्य सप्रयोजनं विधानं, विहिते उपस्थाने मन्त्रं विधाय तस्य व्याख्यानं एतन्मन्त्रगतछन्दसः प्रशंसनं, उपस्थानानन्तरं कर्तव्यस्य प्रयोगस्याभिधानम् ।

**मैत्रावरुणीपयस्या**—तत्र उदवसानीयानन्तरं मैत्रावरुण्या पयस्यया सप्रयो-

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | जनं यागकरणविधानं, तस्यैव पयस्यायागस्य प्रकारान्तरेण प्रशंसनं, अस्मिन्नग्नौ पयस्यया होमेन प्रजापतौ रेतोनिधानं भवतीत्यभिधानं, एतस्याः पयस्यायाः मित्रावरुणदेवतासम्बन्धस्य प्रशंसनं, इत्थं देवताविशेषसम्बन्धमुपपाद्य हविषः पयस्यात्मकत्वमुपपाद्य चास्य यज्ञात्मकत्वोपपादनं, अस्य यज्ञस्योपांशुधर्मकत्वमभिधायान्तेऽनुष्ठेयत्वस्य कारणविधानं, एतस्मिन् यागे कालविशेषे दक्षिणादानस्य विधानम्, तत्र माहित्थेर्मतस्यानुवदनं, एकवारमग्निं चितवतो यजमानस्य पश्चात्क्रियमाणे क्रतौ इष्टकावैधुर्यदोषस्य निरूपणं, पश्चात्क्रियमाणे क्रतौ स्वयमातृण्णा एवोपदधीत न पुनरिष्टकान्तरमित्यादि सोपपत्तिकं प्रतिपादनं, अथवा पक्षान्तरेण ऋतव्या विश्वज्योतिषो वा पुनश्चितिमेव वोपदधीतेत्यादिनिरूपणम्, | |
| | **गार्हपत्यस्य पुनश्चितिः**—तत्र च पुनश्चितिमेवोपदधीतेति सोपपत्तिकमभिधानं, उक्त्वाऽपि पक्षानितरस्य प्रकारान्तरदर्शनेन विवक्षितसिद्धिर्भवतीति प्रतिपादनं, अस्याग्नेः संवत्सरभरणमवश्यं क्रियत इति प्रदर्शनं, तत्र षण्मास्यभरणरूपपक्षान्तरकथनं, असंवत्सरभरणपक्षे महदुक्थशंसनमृगशीतिभिः संपाद्यमित्याक्षिप्यैतमग्निं भूयोऽपि विकर्षेदिति प्रतिपाद्य च पुनः संवत्सरासंवत्सरोभयभरणपक्षेऽपि सर्वमेव महदुक्थं शंसेदिति निगमनं, अग्निभरणविषये अन्यानपि कांश्चित्पक्षान्दर्शयितुमुपोद्घातकथनं, पूर्वं संवत्सरमग्निं भृतवतः—संवत्सरं सोममभिषविष्यतः—संवत्सरमग्निहोत्रं हुतवतः—द्वादश मासान्गर्भे उषित्वा प्रसूतस्य च यजमानस्य यथाकाममेतस्याग्नेर्भरणं न तत्र संवत्सरादिनियम इत्यादिनिरूपणं, प्रसङ्गात्प्राणस्य जातवेदस्त्वस्य प्रदर्शनं, उक्तार्थवेदिताऽपि सद्योभृतमपि तं चिन्वीतेत्यभिधानं, तदेवास्य यथा सर्वस्मिन्सञ्चिते पक्षपुच्छवति शाण्डिलेऽग्नौ या आहुतयो हुता एवमेवास्यैता आहुतयो हुता भवन्तीति प्रतिपादनं चेत्यादि. | १४९–१६८ |
| २ | **सर्वचित्यन्तसाधारणोपस्थानम्**—तत्रादौ च इन्द्रदृष्टेन "वार्त्रहत्याय शवसे" इत्यादिसप्तर्चेनोपस्थानं न्यूनातिरिक्तान्यथाऽकरणादिदोषपरिहार—लक्षणप्रयोजनाय विधातुमुपोद्घातकथनं, अनेनोपस्थानेनाग्न्यादीनां त्रयाणां समृद्धिर्भवतीति निरूपणं, तथैव विदुषोऽविदुषो वा यष्टुर्न्यूनातिरिक्तादिदोषनिबर्हणद्वारा यत्किञ्चनानाप्तं तत्सर्वमाप्तं भवति—मंत्रगतानुच्छन्दसि यः कामः- सोऽपि प्राप्तो भवति—नाष्ट्राणां रक्षसामपहननं भवति—नो हैनमनुव्याहारिणः स्तृण्वते अतः काममेवंविदाऽग्निचयनं कर्तव्यमित्याद्यभिधानं, विहिते उपस्थाने सप्त मन्त्रान्विनियुज्य तेषां मन्त्राणामभिप्रायनिरूपणं, उप- | |

ब्रा० विषयाः — पृष्ठाङ्काः

स्थानमन्त्रगतसप्तत्वसंख्यायाः प्रशंसनं, एकेषां मतेनाष्टर्चेनोपस्थानं कर्तव्यमित्यभिधाय तामष्टमीमृचं च प्रदर्श्य तेन मिलितामष्टत्वसंख्यां प्रशस्य तथा न कुर्यादिति तत्प्रतिषिध्य सप्तर्चेनैवोपस्थानं विधेयमिति सकारणं प्रतिपादनं, तत्रैन्द्राग्नीभिरुपस्थानकरणस्य प्रशंसनं, एतच्चोपस्थानमेकेषां मतेन कर्मणः कर्मणः प्रतिपदं विधेयमिति पुनरेकेषां मतेन पुरीषवतीं चितिं कृत्वा कर्तव्यमिति पक्षद्वयं प्रतिपाद्य तत्र यथा कामयेत तथा कुर्यादिति प्रतिपादनं, "अग्निर्यजुषां—महाव्रतं साम्नां—महदुक्थमृचां" एते त्रयः समुद्राः इत्यभिधाय य एतानि परस्मै करोति तस्योत्तरोत्तरं पापीयस्त्वं फलं भवति—यश्चैतानि परस्मै न करोति तस्योत्तरोत्तरं श्रेयस्त्वं फलं भवतीति सोपपत्तिकं सदृष्टान्तमभिधानं, तच्चैके कृत्वा कुर्वते प्रतिकारयन्ते वा तत्रैषा प्रायश्चित्तिरिति कथयित्वा तथा न कुर्यान्नैतस्य प्रायश्चित्तिरस्तीति सदृष्टान्तं सफलमभिधानं, आख्यायिकया प्रश्नपूर्वकमग्निचित्यायाः लोक्यत्वस्य सोपपत्तिकं सम्पादनं चेत्यादि. १६९–१७४

इति पञ्चमोऽध्यायः ।

**इति संचितिसंज्ञके नवमे काण्डे विषयानुक्रमणिका समाप्ता ॥**

श्रीशः शरणम्।

# षष्ठादिनवमान्तेषु काण्डेषु

## अकाराद्यनुक्रमेण विशिष्टनाम्नां सूची।


| नामानि | अ. ब्रा. क. |
|---|---|
| **तत्र षष्ठकाण्डे–** | |
| अक्ताक्ष्यः | २ । १ । २४ |
| अग्राविष्णू | ६ । १ । २ |
| अग्निचित्या | ६ । १ । १ |
| अथर्वा | ४ । २ । १,२ |
| अशनिः | १ । ३ । १४ |
| आङ्गिरसः | १ । २ । २८ |
| आग्नीध्रीयः | ६ । ४ । १९ |
| आग्नेयी दिक् | ७ । ३ । ९ |
| ईशानः | २ । ९ । १७ |
| उग्रः | १ । ३ । १३ |
| उषः | १ । ३ । ७,८ |
| कः | २ । २ । ९,१२ ; ४ । ३ । ४ |
| कुमारः (अग्निः) | १ । ३ । ८,१८ |
| ग्रहपतिः | १ । ३ । ७ |
| चरकाः | २ । २ । १,१० |
| ताण्ड्यः | १ । २ । २९ |
| द्यौः | ७ । २ । २ |
| पर्जन्यः | २ । १ । १९ ; ७ । ३ । १,२ |
| परमेष्ठी | २ । ३ । ९,१० |
| पुरीष्यः | ३ । १ । ३८ ; ३ । ३ । ३,४ ; ४ । १ । १,२ |
| पुरुः (असुरः) | ८ । १ । १४ |
| पुरोहितः | ६ । ३ । १३,१४ |

| नामानि | अ. ब्रा. क. |
|---|---|
| भरतः | ८ । २ । १४ |
| मखः | ९ । २ । १,२ |
| मनुः | ६ । १ । १९ |
| महान्देवः | १ । ३ । १६ |
| माध्याः | ४ । २ । ४ |
| सर्वः | १ । ३ । ११ |
| सिनीवाली | ९ । १ । १९ |
| हिरण्यगर्भः | २ । २ । ९ |
| इति षष्ठं काण्डम्। | |
| **अथ सप्तमे काण्डे–** | |
| अग्निचयनम् | ३ । १ । ४ |
| आङ्गिरसः | १ । १ । ३० |
| आग्नीध्रीयः | १ । २ । १४ ; १ । २ । २१ |
| आयुः | २ । १ । १९ |
| कश्यपः | ९ । १ । ९,२३ |
| द्वियजुः | ४ । २ । १६ ; ९ । १ । ३९ |
| पर्जन्यः | ९ । २ । २७ |
| पुरीष्यः | १ । १ । ४३,३८ |
| भूतिः | २ । २ । ७ |
| मधुः | ४ । २ । २९ |
| माधवः | ४ । २ । २९ |
| वामकक्षायणः | १ । ३ । ११ |
| शाण्डिल्यः | ९ । २ । ४३ |
| सरस्वान् | ९ । १ । ३१ |

| नामानि | अ. ब्रा. क. |
|---|---|
| सारस्वत | ९ । १ । ३१ |
| सूर्याचन्द्रमसौ. | १ । २ । ७ |
| सोमयागः | ३ । १० । ९ । |

इति सप्तमं काण्डम् ।

## अथाष्टमे काण्डे–

| नामानि | अ. ब्रा. क. |
|---|---|
| अनुम्लोचन्ती ( अप्सराः ) | ६ । १ । १८ |
| अरिष्टनेमिः | ६ । १ । १९ |
| असमर्थः | ६ । १ । १८ |
| अवस्. | ४ । २ । ११<br>४ । ३ । १८ |
| आग्नेयी दिक् | ४ । ४ । १०<br>७ । २ । ४ |
| आर्यः | २ । ९ । ८<br>४ । २ । १२ |
| इन्द्राग्नी | ३ । १ । ३ |
| ईशः | ३ । २ । ६ |
| ऊर्जः | ३ । २ । ६ |
| ऋभुः | ४ । २ । १२ |
| ककुप् | २ । ४ । ७<br>९ । २ । ७ |
| क्रतुस्थला: ( अप्सराः ) | ६ । ३ । १६ |
| गांधारः ( नग्नजित् ) | १ । ४ । १० |
| चरकाध्वर्यवः | १ । ३ । ७<br>७ । १ । १४ |
| जमदग्निः ( ऋषिः ) | १ । २ । ३ |
| तपः | ७ । १ । ९ |
| तपस्यः | ७ । १ । ९ |
| तार्क्ष्यः | ६ । १ । १९ |
| नग्नजित् ( स्वर्जित् ) ( नाग्नजित् ) | १ । ४ । १० |
| धाता. | ४ । २ । ९<br>४ । ३ । ६ |
| पर्जन्यः | ६ । १ । २० |
| परमेष्ठी. | ७ । ३ । १४<br>७ । ३ । १९,१६ |
| पूर्वचित्तिः ( अप्सराः ) | ६ । २ । २० |
| प्रम्लोचन्ती. ( अप्सराः ) | ६ । १ । १८ |
| ब्रह्मणस्पतिः | ४ । ३ । ४ |
| माहित्थिः | ६ । १ । १६ |
| मेनका ( अप्सराः ) | ६ । १ । १७ |
| यजमानः | ४ । ३ । १८ |
| यवः–अयवः | ४ । २ । ११ |
| रथगृत्सः | ६ । १ । १६ |
| रथप्रोतः | ६ । १ । १८ |
| रथस्वन्. | ६ । १ । १७ |
| रथेचित्रः | ६ । १ । १७ |
| रथौजाः | ६ । १ । १६ |
| वसिष्ठः ( ऋषिः ) | १ । १ । ६ |
| विश्वाची ( अप्सरा ) | ६ । १ । १९ |
| विश्वामित्रः ( ऋषिः ) | १ । २ । ६ |
| शाट्यायनिः ( ऋषिः ) | १ । ४ । ९ |
| शुचिः | २ । १ । १६ |
| शुक्रः | २ । १ । १६ |
| शुक्रमहः | ४ । ४ । २ |
| शूद्रः | ४ । २ । १२ |
| सहजन्या ( अप्सराः ) | ६ । १ । १७ |
| सुषेणः ( गन्धर्वः ) | ६ । १ । २० |
| सेनजित् | ६ । १ । २० |

| नामानि | अ. ब्रा. क. |
|---|---|
| स्वर्जित् ( नाग्नजित् नग्नजित् गन्धर्वः ) | १।४।१० |
| इत्यष्टमं काण्डम्। | |
| **अथ नवमे काण्डे—** | |
| अग्निचयनम्. | ९।१।४२ ; ९।२।१३,।१४ |
| अग्नीषोमीयः | ४।३।१० ; ९।१।२३ |
| अनुमतिः | ९।१।३८ |
| अप्सराः | ४।१।२ |
| आग्नीध्रः | १।२।४ ; २।३।१ |
| आग्नीध्रीयः | ४।३।९,।६ |
| इन्द्राग्नी. | ९।२।१० |
| कण्वः | २।३।१८ |
| कल्पः ( आहुतिः ) | ३।३।१२ |
| कारोतिः | ९।२।१९ |
| कुहूः | ९।१।१८ |
| कङ्कतीयः | ४।४।१७ |
| जातवेदाः | ९।१।१८ |
| तुरः कावषेयः | ९।१।१९ |
| दैवाप्यातिः | ९।१।६४ |
| धाता | ९।१।३९ |
| भृगवः | २।३।२८ ; ९।१।३१ |
| मन्युः | १।१।६ |
| मार्जालीयः | ४।३।८ |
| राका. | ९।१।३८ |
| वसोर्धारा. ( आहुतिः ) | ९।३।२ ; ३।३।१९ |
| वात्स्यः ( ऋषिः ) | ९।१।६२ |
| शांडिल्यः ( ऋषिः ) | १।१।४३ ; ३।३।१८ ; ९।१।६१ ; ४।४।१७ ; ९।२।१९ |
| शाण्डिल्यायणः ( ऋषिः ) | ९।१।६४ |
| श्यापर्णः ( ऋषिः ) ( सायकायनिः ) | ९।२।१ |
| सिनीवाली. | ९।१।३८ |
| होत्रीयधिष्ण्यः | ४।३।७ |

**इति विशिष्टनाम्नां सूची॥**

इति
शतपथब्राह्मणस्य विशिष्टनाम्नाम्
अकाराद्यनुक्रमेण षष्ठादिनवमकाण्डान्ता
सूची
समाप्ता ॥

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## षष्ठं काण्डम् ६ ।

गंगाविष्णु श्रीकृष्णदास,

मालिक-" लक्ष्मीवेङ्कटेश्वर " स्टीम् प्रेस,

कल्याण-बंबई.

संवत् १९९६, शके १८६१.

1939.

# अथ उषासम्भरणनामके षष्ठकाण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

असद्वाऽइदमग्रऽआसीत् । ( तत् ) तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत्तदाहुः के तऽ ऋषयऽ इति प्राणा वाऽऋषयस्ते यत्पुराऽस्मात्सर्व्वस्मादिदमिच्छन्तः श्रमेण तपसाऽऽरिषंस्तस्मादृषयः ॥ १ ॥

### अथाग्निचित्याब्राह्मणम् ।

असद्वाऽइदमग्रऽआसीत् । तदाहुः—किं तदसदासीदिति । ऋषयो वाव तेऽग्रेऽसदासीत् । तदाहुः—के ते ऽऋषय इति । प्राणा वाऽऋषयः । ते यत्पुराऽऽस्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसारिषन्—तस्मादृषयः ॥ १ ॥

---

* वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥

हिरण्यगर्भकर्तृकैव सृष्टिराम्नाता—असद्वा इदमग्र आसीदिति ' अग्रे ' प्रपञ्चसृष्टेः पुरा ' इदं ' जगत् ' असत् ' अव्यक्तनामरूपम् ' आसीत् ' । श्रुतिः स्वयमेव ब्रह्मवादिविचारमुखेन असदर्थं निरूपयति—तदाहुः किं तदसदासीदिति । ' तत् ' तदानीं ' किम् असद् आसीत् इति ' इदानीन्तनानां ब्रह्मवादिनां विचारः । ' अग्रे ' सृष्टेः पुरा ' असत् ' 'ते' प्रसिद्धाः ' ऋषयो वाव ' ऋषय एव ' आसीत् ' । ऋषिशब्दार्थं प्रश्नोत्तराभ्यामाह—तदाहुः के त ऋषय इतीति । ' ऋषयः प्राणा वै ' अतः सृष्टेरग्रे एव ' असत् ' आसन् । केवललिङ्गशरीरमेवासीदित्यर्थः । प्राणानामृषिशब्दवाच्यत्वे प्रवृत्तिनिमित्तं दर्शयति—ते यत्पुरेति । ' यत् ' यस्मात् कारणात् ' अस्मात् ' जगतः ' पुरा ' ' इदं ' स्वसेव्यं जगत् ' इच्छन्तः ' ' श्रमेण ' ' तपसा ' तपोरूपेण क्लेशेन पर्यालोचनेन ' आरिषन् ' आर्षन् । " ऋषी गतौ " ( धा. पा. तु. प. ७ ) । सर्वे गत्यर्था ज्ञानार्थाः, ज्ञातवन्तः । ' तस्मात् ' ऋषयः इत्युच्यन्ते । " ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः " इति हि यास्कः ( निरु. २ । ३ । ३ ) ॥ १ ॥

---

* अस्य षष्ठकाण्डस्य श्रीहरिस्वामिनो भाष्यं बिकानेरदरबारलाइब्रेरीतः सम्प्राप्तम् । परन्तु तदतीवाशुद्धमिति कृत्वा नात्र मुद्राप्यते । यदि केषाञ्चिन्महाभागानां संविधे शुद्धं भाष्यमास्ते तैः कृपया दीयते च तदाऽन्ते परिशिष्टरूपेण मुद्रापयित्वा संयोजयामोऽथवाऽवसरान्तरे स्वतन्त्रतया मुद्रापयाम इति सादरं निवेदयामः ॥ **कल्याणस्थलक्ष्मीवेंकटेशप्रेसाध्यक्षाः ।**

१—इहैवोपरिष्टात् पुनरिदमाम्नास्यते—" नैवेह किञ्चनाग्र आसीत्, मृत्युनैवेदमावृतमासीद् " ( श. ब्रा. १० । ६ । ५ ) । आत्मैवेदमग्रऽआसीत् " ( बृ. उ. १४ । १ । २ । १ ) इत्यादि । छान्दोग्यब्राह्मणे त्वेवं श्रुतम्—" सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम् । तद्धैक आहुः । असदेवेदमग्र आसीदेकमेवाद्वितीयम् । तस्मादसतः सज्जायते ॥ १ ॥ कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच, कथमसतः सज्जायेतेति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥ तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत "—इत्यादि ८ प्र० २ ख० १–४ । एवमार्चाभ्याम्नाये चैवमाद्यर्चः पर्यालोच्याः—"नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परो यत् । किमावरीवः कुहकस्य शर्म्मन्नम्भः किमासीद् गहनं गभीरम् ॥ न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ॥ इत्यादयः ऋ० सं० १०.१२९.१–७ ॥

१४०९

स योऽयं मध्ये प्राणः । ( ऽ ) एष ऽएवेन्द्रस्तानेष प्राणान्मध्यत ऽइन्द्रियेणैन्द्ध यदैन्द्ध तस्मादिन्धऽ इन्धो ह वै तमिन्द्रऽ इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्त ऽइद्धाः सप्त नाना पुरुषानसृजन्त ॥ २ ॥

तेऽब्रुवन् । ( न्न ) न वा ऽइत्थꣳ सन्तः शक्ष्यामः प्रजनयितुमिमान्त्सप्त पुरुषानेकं पुरुषं करवामेति त ऽएतान्त्सप्त पुरुषानेकं पुरुषमकुर्वन्यदूर्ध्वं नाभेस्तौ द्वौ समौब्जन्यदवाङ्नाभेस्तौ द्वौ पक्षः पुरुषः पक्षः पुरुषः प्रतिष्ठैकऽ आसीत् ॥ ३ ॥

---

स योऽयं मध्ये प्राणः–एष एवेन्द्रः । तानेष प्राणान्मध्यत इन्द्रियेणैन्द्ध । यदैन्द्ध–तस्मादिन्धः । इन्धो ह वै तमिन्द्र इत्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः । तऽइद्धाः सप्त नाना पुरुषानसृजन्त ॥ २ ॥

तेऽब्रुवन्–न वाऽइत्थं सन्तः शक्ष्यामः प्रजनयितुम्, इमान्त्सप्त पुरुषान् । एकं पुरुषं करवामेति । त एतान्त्सप्त पुरुषानेकं पुरुषमकुर्वन् । यदूर्ध्वं नाभेः तौ द्वौ समौब्जन् । यदवाङ् नाभेः तौ द्वौ । पक्षः पुरुषः, पक्षः पुरुषः, प्रतिष्ठैक आसीत् ॥ ३ ॥

---

मध्यमप्राणस्य सर्वेन्द्रियपोषणद्वारा इन्द्रशब्दवाच्यत्वमाह–स योऽयमिति । एतेषां प्राणानां ' मध्ये ' ' यः ' प्राणः, एष एव ' इन्द्रः ' इत्युच्यते । तत्र प्रवृत्तिनिमित्तप्रदर्शनम्–तानेष प्राणान्मध्यत इति । मध्यप्रदेशे स्थितः प्राणः ' इन्द्रियेण ' इन्द्रशब्दवाच्येन स्वबलेन ' ऐन्ध ' । " ञिइन्धी दीप्तौ " ( धा. पा रु. प. ११ ) । लङि रूपम् । स्वबलप्रकाशेन स्वस्वव्यापारसमर्थानकरोदित्यर्थः । ' तस्मात् ' इन्धनसम्बन्धात् ' इन्द्र इति ' उच्यते; देवानां परोक्षनामप्रियत्वात् । प्राणस्य हि वागादीन्द्रियेषु स्वांशसद्भावः । एतस्यैव पोषकत्वं चान्यत्राम्नातम् " या ते तनूर्वाचि प्रतिष्ठिता, या श्रोत्रे या च चक्षुषि । या च मनसि सन्तता, शिवां तां कुरु मोत्क्रमीः " ( अथ० प्र० उप० २।१२। ) इति । ' त इद्धाः प्राणाः सप्त " ' नाना ' नानाविधान् पुरुषान् शरीराणि स्वाश्रयत्वेन ' असृजन्त ' ॥ २ ॥

तेऽब्रुवन्निति । ' ते ' ऋषयः एकैकस्वस्वाश्रयप्रधानानि सप्तशरीराणि सृष्ट्वा परस्परम् अब्रुवन् । ' इत्थं ' एकैकप्रधानशरीराः ' सन्तः ' अचाक्षुषमिमं स्थूलं जगदुत्पादयितुं ' न शक्ष्यामः ' न समर्था भवामः; अचक्षुषो वचनव्यापाराभावात्, अवचनस्य च दर्शनाभावान् एवमिन्द्रियाणां प्रतिनियतव्यापारत्वादभिन्नशरीरत्वे कर्मकर्तृत्वं नोपपद्यत इति । अतः ' एकं पुरुषं ' सर्वेन्द्रियाश्रयं ' करवामेति ' समालोच्य ' एतान् सप्त पुरुषान् ' ' एकम् ' एव ' पुरुषम् ' ' अकुर्वन् ' अकार्षुः । एकस्मिन् पुरुषे सप्तपुरुषसन्निवेशं दर्शयति–यदूर्ध्वमिति । नाभेरूर्ध्वम् ' यत् ' अस्ति, तत्र ' द्वौ ' पुरुषौ समौब्जन् "उब्ज आर्जवे " (धा. पा. तु. प. २३) "अर्जने" इति केचित् ॥ अर्जितवन्तः, स्थापितवन्तः ' नाभेः ' ' अवाङ् ' अधस्तनम्, तत्र ' द्वौ ' पुरुषौ समौब्जन् इति मध्ये देहे चत्वारः पुरुषाः सम्पन्नाः । द्वौ पुरुषौ दक्षिणोत्तरपक्षौ सम्पन्नौ । ' एकः पुरुषः ' ' प्रतिष्ठा ' पुच्छमासीत् । एवं सप्तभिः पुरुषैः शिरोवर्जितस्य एकपुरुषस्य निष्पादनम् ॥ ३ ॥

( दु ) अ॒थ यै॒ते॒षा॒ᳩ॑ स॒प्ता॒नां पु॒रु॒षा॒णां श्रीः । ( यौं ) यो र॒सऽआ॒सी॒त्त॒मू॒र्ध्वᳫ॑ँ स॒मु॒दौ॑ह॒ᳫ॑स्त॒द॒स्य शि॒रोऽभ॑व॒द्य॒च्छ्रि॒यᳩ॑ स॒मु॒दौ॑ह॒ᳫ॑स्त॒स्मा॒च्छि॒र॒स्त॒स्मि॒न्ने॒त॒स्मि॒न्प्रा॒णा॒ऽअ॒श्रय॑न्त त॒स्मा॒द्वे॒वै॒त॒च्छि॒रो॒ऽथ य॒त्प्रा॒णा॒ऽअ॒श्रय॑न्त त॒स्मा॒दु प्रा॒णाः श्रि॒यो॒ऽथ य॒त्स॒र्व॑स्मि॒न्न॒श्रय॑न्त त॒स्मा॒दु श॒री॒र॒म् ॥ ४ ॥

(ᳩ॑) स॒ ऽए॒व पु॒रु॒षः प्र॒जा॒प॒ति॒र॒भ॒व॒त् । (त्स) स य॒: स पु॒रु॒षः प्र॒जा॒प॒ति॒र॒भ॒व॒द॒य॒मे॒व स॒ यो॒ऽय॒म॒ग्नि॒श्ची॒य॒ते ॥ ५ ॥

स वै स॒प्त॒पु॒रु॒षो भ॑वति । स॒प्त॒पु॒रु॒षो ह्य॒यं पु॒रु॒षो य॒च्च॒त्वा॒र आ॒त्मा त्र॒यः प॒क्ष॒पु॒च्छा॒नि च॒त्वा॒रो हि त॒स्य पु॒रु॒ष॒स्या॒त्मा त्र॒यः प॒क्ष॒पु॒च्छा॒न्य॒थ य॒दे॒के॒न पु॒रु॒षे॒णा॒त्मा॒नं व्व॒र्ध॒य॒ति ते॒न व्वी॒र्ये॒णा॒य॒मा॒त्मा प॒क्ष॒पु॒च्छा॒न्यु॒द्य॒च्छ॒ति ॥ ६ ॥

---

अथ यैतेषां सप्तानां पुरुषाणां श्रीः, यो रस आसीत् तमूर्ध्वं समुदौहन्–तदस्य शिरोऽभवत् । यच्छ्रियं समुदौहन् तस्माच्छिरः । तस्मिन्नेतस्मिन्प्राणा अश्रयन्त । तस्माद्वेवैतच्छिरः । अथ यत्प्राणा अश्रयन्त तस्मादु प्राणाः श्रियः । अथ यत्सर्वस्मिन्नश्रयन्त तस्मादु शरीरम् ॥ ४ ॥

स एव पुरुषः प्रजापतिरभवत् । स यः स पुरुषः प्रजापतिरभवत्–अयमेव सः–योऽयमग्निश्चीयते ॥ ५ ॥

स वै सप्तपुरुषो भवति । सप्तपुरुषो ह्ययं पुरुषः–यच्चत्वार आत्मा, त्रयः पक्षपुच्छानि । चत्वारो हि तस्य पुरुषस्यात्मा, त्रयः पक्षपुच्छानि । अथ यदेकेन पुरुषेणात्मानं वर्धयति–तेन वीर्येणायमात्मा पक्षपुच्छान्युद्यच्छति ॥ ६ ॥

---

शिरसो जननं दर्शयति–अथ यैतेषामिति । 'एतेषां' 'पुरुषाणां श्रीः' श्रीभूतः 'यः' 'रसः' सारः आसीत् 'तम्' 'ऊर्ध्वम्' उपरिभागे 'समुदौहन्' समुदितमकार्षुः, स एकीभूतः सारः 'अस्य' पुरुषस्य 'शिरः अभवत्' 'तस्मात्;' श्रीसमुदूहनात् 'शिरः'–इति शब्दनिष्पत्तिः । प्रकारान्तरेण शिरःशब्दनिर्वचनमाह–तस्मिन्निति । 'तस्मिन्' श्रीसमुदूहनेन निष्पादिते शिरसि 'प्राणाः' चक्षुरादीन्द्रियाणि 'अश्रयन्त', श्रितानि, 'तस्मात्' प्राणसंश्रयणात् 'शिरः' इत्युच्यते; यस्माच्छिरसि 'प्राणा अश्रयन्त', 'तस्मात्' प्राणानामपि श्रीत्वम् "श्रिञ् सेवायाम्" ( धा. पा. भ्वा. उ. ९२२ ) इत्यस्मात् व्युत्पत्तेः । 'यत्' यस्माच्च 'एतस्मिन्' सर्वस्मिन् देहे ते सर्वेऽपि 'अश्रयन्त', 'तस्मात्' देहोऽपि 'शरीरम्' उच्यते अत्र पूर्वोक्ताद्धेतोः शरीरशब्दव्युत्पत्तिः कार्या ॥ ४ ॥

य एव पुरुष इति । 'सः' एषः सप्तभिः पुरुषैर्निष्पन्न एकः पुरुषः 'प्रजापतिः' विराट् अभूत् । एवं लिङ्गशरीराभिमानिहिरण्यगर्भकर्तृका विराडुत्पत्तिरुक्ता, तस्य विराजोऽग्निरूपतामाह–स यः पुरुष इति । 'स प्रजापतिः' एव 'अयं' चीयमानः 'अग्निः' इत्यर्थः ॥ ५ ॥

तदेव साम्यमाविष्करोति–स वै सप्तेति । 'सः' चीयमानः अग्निः सप्तपुरुषसम्मितो भवति, 'हि'

( त्यु ) अथ युश्चितेऽग्निर्निधीयुते । यैवैतेषाᳬ सप्तानां पुरुषाणाᳬ श्रीर्यो रुसस्तुमेतदूर्ध्वᳬ समुदूहन्ति तुदस्यैतच्छिरस्तुस्मिन्नेतुस्मिन्त्सर्व्वे देवाः श्रिता ऽअुत्र हि सर्व्वेभ्यो देवेभ्यो जुह्वति तुस्माद्ध्वैवैतच्छिरः ॥ ७ ॥

सोऽयं पुरुषः प्रजापतिरकामयत । भूयान्त्स्यां प्रजायेयेति सोऽश्राम्यत्स तुपोऽतप्यत स श्रान्तुस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याᳬ सैवास्मै प्रतिष्ठाऽभवत्तुस्मादाहुर्ब्रह्मास्य सर्व्वस्य प्रतिष्ठेति तुस्मादनूच्य प्रतितिष्ठति प्रतिष्ठा ह्येषा यद्ब्रह्म तुस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यतु ॥८॥

---

अथ यश्चितेऽग्निर्निधीयते–यैवैतेषां सप्तानां पुरुषाणां श्रीः, यो रसः–तमेतदूर्ध्वं समुदूहन्ति–तदस्यैतच्छिरः–तस्मिन्नेतस्मिन्त्सर्वे देवाः श्रिताः । अत्र हि सर्वेभ्यो देवेभ्यो जुह्वति । तस्माद्धैवैतच्छिरः ॥ ७ ॥

सोऽयं पुरुषः प्रजापतिरकामयत–भूयान्त्स्याम्, प्रजायेयेति । सोऽश्राम्यत् । स तपोऽतप्यत । स श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत–त्रयीमेव विद्याम् । सैवास्मै प्रतिष्ठाऽभवत् । तस्मादाहुः–

---

यस्मात् ' अयं पुरुषः ' प्रजापतिः सप्तपुरुषात्मकः । तस्य सप्तपुरुषात्मकत्वमिदानीमुक्तम्, तच्चीयमानाग्नावपि स्फोरयति[1]–यच्चत्वार इत्यादिना । "हिरण्मयः शकुनिः ब्रह्मनाम इति पक्षित्वेन निरूपणात् पुच्छशब्दव्यवहारः।" चित्याग्नेः सप्तपुरुषीयपुच्छत्वं दशमे वक्ष्यते ( श. प. १० । २ । २ । ९ )। आपस्तम्बेनाप्युक्तम्–" चतुर आत्मनि पुरुषान्मिमीते पुरुषं दक्षिणे पक्षे पुरुषं पुच्छे पुरुषमुत्तर इति । तदु ह वै सप्तविधमेव चिन्वीत सप्तविधो वात्र प्राकृतोऽग्निः " (आ. श्रौ. सू. १६ । १७ ) इति । अथ यदेकेनेत्यादेरयमर्थः–' यत् 'यस्मात् 'आत्मानं' मध्यदिशं पक्षपुच्छेभ्यः पुरुषत्रयसम्मितेभ्योऽपि ' एकेन पुरुषेण वर्द्धयति ' तस्मात् ' अयमात्मा ' चतुःपुरुष-सम्मितत्वात् स्वेन ' वीर्येण ' ' पक्षपुच्छान् ' प्रयच्छति खलु ॥ ६ ॥

एवं विराडात्मकस्य सप्तपुरुषसम्मितस्य चित्याग्नेः शिरो दर्शयितुमाह–अथ यश्चितेऽग्निर्निधीयत इत्यादि । ' चिते ' ऐष्टके, चितेऽग्नौ । ' अग्निः ' आहवनीयो निधीयते । ' या वा एतेषां सप्तानां पुरुषाणां श्रीः ' ' यः ' च ' रसः ' स एवायमग्निरित्यध्याहारः । ' एतद् ' अस्मिंश्चित्याग्नौ ' तम् ' आहवनीयम् ' ऊर्ध्वं समुदूहन्ति ' चित्याग्नेरण्डात्मकत्वात् तत्र निधीयमानस्याग्नेर्हिरण्यगर्भात्मत्वमित्यर्थः । एतच्चैतरेयिणः समामनन्ति–" एवं ह्येव बह्वृचा महदुक्थे मीमांसन्ते, एतमग्नावध्वर्यवः, एतं महाव्रते छन्दोगाः "–इति । आहवनीयस्य शिरोरूपत्वमिदानीमाह–तदस्यैतच्छिर इति । ' अस्य ' चित्याग्नेः एष आहवनीयः ' शिरः ' इत्यर्थः । अत्र शिरःशब्दस्य प्रवृत्तिमाह–तस्मिन्नेतस्मिन् सर्वे देवाः श्रिता इति । ' तस्मिन् ' शिरोरूपे आहवनीये सर्वे देवाः श्रिताः । अत्र कथं देवानां श्रयणं तदाह–अत्र हीति । ' अत्र ' अग्नौ ' सर्वेभ्यो देवेभ्यः ' ' जुह्वति ' ' तस्मात् ' अग्नेः श्रपणाश्रयत्वात् अस्य ' शिरः ' इत्यर्थः ॥ ७ ॥

एवं विराडुत्पत्तिम्, तस्यैव चित्याग्निरूपत्वं चोक्त्वा तत्कर्तृकां चयनोपयुक्तां सृष्टिमाह–सोऽयमिति । ' सः

---

१–' स्फुर, स्फुरणे ' तु. प. १०९ धातोर्णिचि रूपम् ।

सो॒ऽपो॑ऽसृजत । वा॒चऽ ए॒व लो॒काद्वा॒गे॑वास्य॒ सा॑ऽसृ॒ज्यत॒ सेदꣳ॑ स॒र्व्व॑मा॒प्नो॒द्यदि॒दं किं॒ च य॒दाप्नो॒त्तस्मा॒दापो॒ यद॒वृणो॒त्तस्मा॒द्वाः ॥ ९ ॥

सो॑ऽकामयत । ( ता॒ ) आ॒भ्यो॑ऽद्भ्यो॑ऽधि प्र॒जायेयेति॒ सो॑ऽनया त्र॒य्या वि॒द्यया स॒हापः प्रावि॑शत्त॒तऽ आण्डꣳ॑ स॒मव॑र्तत त॒द॒भ्यमृ॑शदस्त्वि॒त्यस्तु भू॒योऽस्त्वि॒त्ये॑व त॒द॒ब्र॑वी॒त्त॒तो ब्रह्मै॒व प्रथ॒मम॑सृज्यत त्र॒य्ये॒व वि॒द्या त॒स्मा॑दा॒हुर्ब्रह्मा॒स्य स॒र्व्व॑स्य प्रथम॒जमि॒त्यपि॒ हि त॒स्मात्पु॒रु॑षाद्ब्रह्मै॒व पू॒र्व्व॑मसृ॒ज्यत त॒द॑स्य त॒न्मु॒ख॒मे॒वासृ॒ज्यत त॒स्माद॒नू॑चानमा॒हुर॒ग्निक॑ल्पऽ इति॒ मु॒खꣳ॑ ह्ये॒तद॒ग्ने॑र्यद्ब्रह्म ॥ १० ॥

---

' ब्रह्मास्य सर्वस्य प्रतिष्ठा ' इति । तस्मादनूच्य प्रतितिष्ठति । प्रतिष्ठा ह्येषा–यद्ब्रह्म । तस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यत ॥ ८ ॥

सोऽपोऽसृजत–वाच एव लोकात् । वागेवास्य साऽ सृज्यत । सेदं सर्वमाप्नोत्–यदिदं किञ्च । यदाप्नोत्–तस्मादापः । यदवृणोत्–तस्माद्वाः ॥ ९ ॥

सोऽकामयत–' आभ्योऽद्भ्योऽधि प्रजायेय ' इति । सोऽनया त्रय्या विद्यया सहापः प्राविशत् । तत आण्डं समवर्तत । तदभ्यमृशत्–' अस्तु ' इति । अस्तु–भूयोऽस्त्वित्येव तदब्रवीत् । ततो ब्रह्मैव प्रथममसृज्यत–त्रय्येव विद्या । तस्मादाहुः–' ब्रह्मास्य सर्वस्य प्रथमजम् ' इति । अपि हि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यत–तदस्य तन्मुखमेवासृज्यत । तस्मादनूचानमाहुः–' अग्निकल्पः ' इति । मुखं ह्येतदग्नेः–यद्ब्रह्म ॥ १० ॥

---

पुरुषः प्रजापतिः ' एक एव सन् एवम् ' अकामयत ' ' अहमेव ' ' भूयान् ' ' स्याम् ' भवेयमिति । भवनम् उत्पत्तिः अग्निना न घटत इति तदाह–' प्रजायेय ' स्वयमेवोत्पद्यमानो भवेयम् ' इति ' कामयित्वा ' सः ' ' अश्राम्यत् ' । " श्रमु तपसि खेदे च " ( धा. पा. दि. प. ९८ ) । ' स तपोऽतप्यत ' कथमुत्पद्येयेति विचारितवानित्यर्थः । तपःपर्यालोचनेन ' सः ' ' ब्रह्मैव ' ' प्रथमं ' सृष्टवान् । ' तेपानः ' इति तपेर्लिटः कानचि रूपम् । ब्रह्मशब्दार्थमाह–त्रयीमिति । ' सैव ' त्रयी विद्या ' अस्मै ' प्रजापतेः ' प्रतिष्ठा ' जाता, उत्तरसृष्टेरालम्बनं जातमित्यर्थः । प्रतिष्ठारूपत्वमेव विशदयति तस्मादाहुरिति । यतः ' सर्वस्य ' त्रयी विद्या ' प्रतिष्ठा ' ' तस्मात् ' त्रयीम् ' अनूच्य ' अधीत्य अनुष्ठाय च ' प्रतितिष्ठति ' तस्यां प्रतिष्ठायामित्यादि स्पष्टम् ॥ ८ ॥

सोऽप इति । अथ ' सः ' प्रजापतिः स्वयमेवोत्पद्य पुनः पर्यालोच्य ' वाचो लोकात् ' उच्चारकात् मुखात् ' अपः ' अबुपलक्षितानि पञ्च स्थूलभूतानि सृष्टवान् । विद्याध्ययनस्थानादुद्भूतत्वाद् वागेव सृष्टेत्यर्थः । अनेनापां वाक्छब्दव्यवहार्यत्वमुक्तमिति मन्तव्यम् । अप्शब्दनिर्वचनमाह–सेदमिति । ' सा ' वाक् सर्वव्यापकत्वात् ' आपः ' उच्यन्ते, जगदावरणाच्चासां वाः-शब्दवाच्यत्वम् । वृणोतेरुत्पन्नो वाःशब्दः ॥ ९ ॥

सोऽकामयतेति । 'आभ्योऽद्भ्योऽधि प्रजायेयेति' विचार्य ' त्रय्या विद्यया सह ' सृष्टाः 'अपः' प्रविष्टवान् ।

(ह्या) अथ यो गर्भोऽन्तरासीत् । (त्सो) सोऽग्निरसृज्यत स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्निरग्निर्ह वै तमग्निरित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाऽ अथ यदश्रु संक्षरितमासीत्सोऽश्रुरभवदश्रुर्ह वै तमश्वऽ इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाऽ अथ यदरसदिव स रासभोऽभवदथ यः कपाले रसो लिप्तऽ आसीत्सोऽजोऽभवदथ यत्कपालमासीत्सा पृथिव्यभवत् ॥ ११ ॥

(त्सो) सोऽकामयत । (ता) आभ्योऽद्भ्योऽधीमां प्रजनयेयमिति ताᳬ संक्लिश्याप्सु प्राविध्यत्तस्यै यः पराङ्रसोऽत्यक्षरत्स कूर्मोऽभवदथ यदूर्ध्वमुदौक्ष्यतेदं तद्यदिदमूर्ध्वमद्भ्योऽधि जायते सेयᳬ सर्वापऽ एवानुव्यैत्तदिदमेकमेव रूपᳬ समदृश्यतापऽ एव ॥ १२ ॥

---

अथ यो गर्भोऽन्तरासीत्—सोऽग्निरसृज्यत । स यदस्य सर्वस्याग्रमसृज्यत—तस्मादग्निः । अग्निर्ह वै तमग्निरित्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः । अथ यदश्रु संक्षरितमासीत्—सोऽश्रुरभवत् । अश्रुर्ह वै तमश्व इत्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः । अथ यदरसादिव—स रासभोऽभवत् । अथ यः कपाले रसो लिप्त आसीत्—सोऽजोऽभवत् । अथ यत्कपालमासीत्—सा पृथिव्यभवत् ॥ ११ ॥

सोऽकामयत—'आभ्योऽद्भ्योऽधीमां प्रजनयेयम्' इति । तां संक्लिश्याप्सु प्राविध्यत् । तस्यै यः पराङ् रसोऽत्यक्षरत्—स कूर्मोऽभवत् । अथ यदूर्ध्वमुदौक्ष्यत—इदं तद्—यदिदमूर्ध्वमद्भ्योऽधि जायते । सेयं सर्वाप एवानुव्यैत् । तदिदमेकमेव रूपं समदृश्यत आप एव ॥ १२ ॥

---

'ततः आण्डं समवर्त्तत' । 'तत् अस्तु इति अभ्यमृशत्' । अस्त्विति शब्दो वक्ष्यमाणसृष्टिनिर्देशार्थः । 'अस्तु इति' वक्ष्यमाणप्रकारेण भवतु, 'भूयः' बहुलञ्च 'अस्त्विति' त्रिवारं प्रजापतिरेतदण्डमभिलक्ष्याब्रवीत् । यस्मात् प्रथमं मुखाद् वागुच्चारिता, तस्माद् 'ब्रह्म' वेदः प्रथममुत्पन्नः । अतः प्रथमोत्पन्नं वेदं योऽधीते तदर्थमनुतिष्ठति च, तम् 'अनूचानमग्निकल्प इति आहुः' । 'हि' यस्मात् 'अग्नेः' चित्याग्निरूपस्य प्रजापतेः 'ब्रह्म' वेदो 'मुखं' भवति ॥ १० ॥

'अथ यो गर्भ इति । ततः 'यः' जातगर्भः, 'सः' 'अग्निः असृज्यत' तस्मात् 'सर्वस्य' स्थूलप्रपञ्चस्य 'अग्रम्' आदौ सृष्टत्वात् अग्निरित्युच्यते । 'तम्' अग्निम् इदानीन्तना अग्निनाम्ना व्यवहारं कुर्वन्ति । तत्र गर्भे 'यत्' यदा 'अश्रु संक्षरितं' गर्भनिर्गमनकाले हि जलं स्रवति, 'सः अश्रुः' 'तम् अश्वः इति आचक्षते' यदा गर्भः 'अरसत्' ध्वनिमकरोत्, तदा 'रासभोऽभवत्' । रसतेर्ध्वन्यर्थादुत्पन्नो रासभशब्दः । 'कपाले' अण्डकपाले 'विलिप्तः' संसृष्टो 'रसः', 'सः' 'अजो' नाम पशुः 'अभवत्' भिन्नकपालमेव 'पृथिवी' आसीत् । एवमण्डादुत्पन्नानामेषाऽन्यश्वरासभाजानां पशूनां सृष्टिरुक्ता ॥ ११ ॥

अथ कपालं पृथिव्यभवदिति यदुक्तम्, तस्माद् बहुधोत्पत्तिं वक्तुमाह—सोऽकामयतेति । पुनः प्रजापतिः 'अद्भ्यः

**सोऽकामयत। भूयऽएव स्यात्प्रजायेतेति सोऽश्राम्यत्स तपोऽतप्यत स श्रान्तस्तेपानः फेनमसृजत सोऽवेदन्यद्वाऽएतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपानो मृदꣳ शुष्कापमूषसिकतꣳ शर्करामश्मानमयो हिरण्यमोषधिवनस्पत्यसृजत तेनेमां पृथिवीं प्राच्छादयत् ॥ १३ ॥**

**( त्ता ) ता वाऽएता नव सृष्टयः। ( ऽ ) इयमसृज्यत तस्मादाहुस्त्रिवृदग्निरितीयꣳ ह्ययमग्निरस्यै हि सर्व्वोऽग्निश्चीयते ॥ १४ ॥**

---

सोऽकामयत—भूय एव स्यात्, प्रजायेतेति। सोऽश्राम्यत्। स तपोऽतप्यत। स श्रान्तस्तेपानः फेनमसृजत। सोऽवेद्—अन्यद्वाऽएतद्रूपम्। भूयो वै भवति। श्राम्याण्येवेति। स श्रान्तस्तेपानो मृदम्, शुष्कापमूषसिकतम्, शर्कराम्, अश्मानम्, अयः, हिरण्यम्, ओषधिवनस्पति असृजत। तेनेमां पृथिवीं प्राच्छादयत् ॥ १३ ॥

ता वाऽएता नव सृष्टयः। इयमसृज्यत। तस्मादाहुः—त्रिवृदग्निरिति। इयं ह्यग्निः। अस्यै हि सर्वोऽग्निश्चीयते ॥ १४ ॥

---

अधि ' अप्सु उदकेषु ' इमां ' भूमिं ' प्रजनयेयम् ' विशेषेणोत्पादयेयम ' इति ' विचार्य ' तां ' पृथिवीं ' सङ्क्लिश्य ' चूर्णीकृत्य ' अप्सु ' ' प्राविध्यत् ' आलोडयामास ' तस्यै ' पृथिव्याः ' यः ' ' रसः ' ' पराङ् अत्यक्षरत्, ' ' स कूर्मोऽभवत् ' यत् ऊर्द्ध्वं समूहितो रसः ' तत् ' ' इदम् ' अब्रूपम् अभवत्। यस्माद् भूमिरुदकेषु प्रविद्धा, तस्मात् ' एकं रूपमेव ' भेदो न दृश्यते, आप एव केवलं दृश्यन्ते ॥ १२ ॥

**सोऽकामयत भूय** इति। ततः प्रजापतिरियं पृथिवी 'भूयः स्यात्' बहुधोत्पद्येतेति विचार्य ताभ्योऽद्भ्यः ' फेनं ' सृष्टवान्। पुनरपि विदित्वा शुष्कार्द्रभावेन द्विविधां मृत्तिकां, ' सिकतं ' वालुकाः, ' शर्कराः ' अल्पपाषाणान्, अश्मानं स्थूलपाषाणम्, ' अयः ' ' हिरण्यं ' सुवर्णम्, ओषधयश्च वनस्पतयश्च एकवद्भावान्नपुंसकम्—ओषधिवनस्पतीति। एतैः शुष्कार्द्रमृदादिभिर्नवभिः ' इमां ' भूमिमाच्छादितवान् ॥ १३ ॥

**ता वा एता** इति। ' एता एव ' शुष्कमृदादिभिर्नव सृष्टय एव ' इयम् ' भूमिः। तस्मात् एतां ' त्रिवृदग्निः '—' इति ' ' आहुः '। स्तोत्रियात्मकस्य स्तोत्रस्य त्रिवृदिति सञ्ज्ञा। अत्र तु संख्यामात्रवाचि। अस्यां भूमौ अग्नेर्वासात् आधाराधेययोरभेदोपचारेण ' अस्यै ' अस्याः ' अग्निः ' इयं ' नवसृष्ट्यात्मिका प्रतिष्ठा भूमिरित्युच्यते ॥ १४ ॥

---

१—" तिसृभ्यो हिं करोति स प्रथमया तिसृभ्यो हिं करोति स मध्यमया तिसृभ्यो हिं करोति स उत्तमयोद्यतौ त्रिवृतौ विष्टुतिः " ( तांड्य ब्रा. २। १ ) अस्यायमर्थः—उपास्मै गायतेत्यादीमानि तृचात्मकानि त्रीणि सूक्तानि सन्ति तेषु तिसृभिर्ऋग्भिर्गायेत्। काभिस्तिसृभिः? प्रथमया त्रिष्वपि सूक्तेषु या प्रथमा तया स उद्गाता गायेत्। तथा सति तिसृभिर्गीतं भवति। सोऽयं प्रथमः पर्यायः। द्वितीये पर्याये सूक्तत्रयगता योत्तमा तया गायेत्। अनेन प्रकारेण त्रिवृत्स्तोमसम्बन्धिनी विशिष्टा स्तुतिः संपद्यते। सेयं स्तुतिः त्रिवृत्स्तोमस्य स्वरूपम्। इति वा. सं. १०। ११ इत्यत्र महीधरः।

(तुऽभू) अभूद्वाऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्सेयꣳ सर्व्वा कृत्स्ना मन्यमानाऽगायद्यदगायत्तस्मादियं गायत्र्यथोऽआहुरग्निरेवास्यै पृष्ठे सर्व्वः कृत्स्नो मन्यमानोऽगायद्यदगायत्तस्मादग्निर्गायत्रऽइति तस्मादु हैतद्यः सर्व्वः कृत्स्नो मन्यते गायति वैव गीते वा रमते ॥ १९ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ६-१-१ ॥ (१. १.) ॥

सोऽकामयत प्रजापतिः । (भूं) भूयऽ एव स्यात्प्रजायेयेति सोऽग्निना पृथिवीं मिथुनꣳ समभवत्ततऽ आण्डꣳ समवर्त्तत तदभ्यमृशत्पुष्यत्विति पुष्यतु भूयोऽस्त्वित्येव तदब्रवीत् ॥ १ ॥

---

अभूद्वाऽइयं प्रतिष्ठेति-तद्भूमिरभवत् । तामप्रथयत्-सा पृथिव्यभवत् । सेयं सर्वा कृत्स्ना मन्यमानाऽगायत् । यदगायत्-तस्मादियं गायत्री । अथोऽआहुः-अग्निरेवास्यै पृष्ठे सर्वः कृत्स्नो मन्यमानोऽगायत् । यदगायत्-तस्मादग्निर्गायत्र इति । तस्माद्धु हैतद्यः सर्वः कृत्स्नो मन्यते-गायति वैव, गीते वा रमते ॥ १९ ॥

सोऽकामयत प्रजापतिः-भूय एव स्यात्, प्रजायेयेति । सोऽग्निना पृथिवीं मिथुनं समभवत् । तत आण्डं समवर्तत । तदभ्यमृशत्-पुष्यत्विति । पुष्यतु-भूयोऽस्तु इत्येव तदब्रवीत् ॥ १ ॥

---

अभूद्वा इति । भवतेर्हि भूमिशब्दनिष्पत्तिः । तस्याः प्रथमाद् बहुधा विस्तरणात् पृथिवीत्वम् । “ प्रथेः षिवन्सम्प्रसारणं च ” । (उ. पा. १ । ४८ । सू.) इति । प्रथेः षिवनि सम्प्रसारणे च पृथिवीशब्दनिष्पत्तिः । ‘ सेयम् ’ भूमिः ‘ कृत्स्ना ’ स्वयं सम्पूर्णाऽजनिषीति मन्यमाना ‘ अगायत् ’ गानमकरोत्, अतो गानादेव भूमेर्गायत्रीत्वम् । तत्र अस्यां भूमौ अग्निरपि स्वयं सम्पूर्णः स्थित इति मन्यमानोऽगायत् अतस्तस्याप्यग्नेः गायत्र इति नाम सम्पन्नम् । “ कै गै शब्दे ” (धा. पा. भ्वा. प. ९४१,९४२) । अस्माद् गायत्रशब्दनिष्पत्तिः । अतः ‘ एतद् ’ इदानीं लोके ‘ यः ’ कश्चन पुरुषो धनपश्वादिभिः ‘ कृत्स्नः ’ अहमिति ‘ मन्यते ’ सः परकृते ‘ गीते ’ ‘ रमते वा ’ ‘ गायति वा ’ स्वयं गायति चेत्यर्थः । तस्मात् सम्पूर्णत्वेनाभिमन्यमानाया भूमेरग्नेश्च गायत्रत्वं सम्पन्नमिति तात्पर्यम् ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
षष्ठकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥ (६-१-१) ॥

द्वितीये ब्राह्मणे वाय्वन्तरिक्षादिसृष्टिः प्रजापतेश्चित्याग्निरूपता चोच्यते-सोऽकामयतेति । भूमिसृष्टेरनन्तरं प्रजापतिरिदं जगदधिकं भवेदिति कामयित्वा ‘ अग्निना पृथिवीं ’ मिथुनत्वेन समयोजयत् । तयोः संयोगेन ‘ अण्डं ’ जातम् । ‘ तद् अभ्यमृशत् ’ नानात्वेन पुष्टम्भवत्विति त्रिवारमण्डमभिलक्ष्य प्रजापतिः अब्रवीत् ॥ १ ॥

---

१-“ प्रथनात्पृथिवीत्याहुः ” इति निरु. १ । ४ । २ ।

( त्स ) स यो गर्भोऽन्तरासीत् । ( त्सु ) सु व्वायुरसृज्यतुाथ यदुश्रु सुंक्षरितमासीत्तानि व्वयाᳪँस्यभवन्नुथ युः कुपाले रुसो लिप्त ऽआसीत्ता मुरीचयोऽभवन्नुथ युत्कपालमासीत्तदन्तुरिक्षमभवत् ॥ २ ॥

( त्सो ) सोऽकामयत । भूय ऽएवु स्यात्प्रजायेतेति सु व्वायुनाऽन्तुरिक्षं मिथुनᳪँ सुमभवत्तत आण्डᳪँ सुमवर्तत तुदुभ्यमृशद्युशो बिभृह्नीति तुतोऽसावादित्योऽसृज्यतैष वै युशोऽथ यदुश्रु संक्षरितमासीत्सोऽश्मा पृश्निरभवदुश्रुर्ह वै तमश्मेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाऽअथ युः कुपाले रुसो लिप्त आसीत्ते रश्मयोऽभवन्नुथ युत्कपालमासीत्सा द्यौरभवत् ॥ ३ ॥

( त्सो ) सोकामयत । भूयऽ एवु स्यात्प्रजायेतेति सु ऽआदित्येन दिवं मिथुनᳪँ सुमभवत्ततऽ आण्डᳪँ सुमवर्त्तत तुदुभ्यमृशद्रेतो बिभृह्नीति तुतश्चन्द्रमाऽ असृज्यतैष वै रेतोऽथ यदुश्रु संक्षरितमासीत्तानि नुक्षत्राण्यभव-

---

स यो गर्भोऽन्तरासीत्—स वायुरसृज्यत । अथ यदश्रु संक्षरितमासीत्—तानि वयांस्यभवन् । अथ यः कपाले रसो लिप्त आसीत्; ता मरीचयोऽभवन् । अथ यत्कपालमासीत्—तदन्तरिक्षमभवत् ॥ २ ॥

सोऽकामयत—भूय एव स्यात्प्रजायेतेति । स वायुनाऽन्तरिक्षं मिथुनं समभवत् । तत आण्डं समवर्तत । तदभ्यमृशद्—यशो बिभृहीति । ततोऽसावादित्योऽसृज्यत । एष वै यशः । अथ यदश्रु संक्षरितमासीत्—सोऽश्मा पृश्निरभवत् । अश्रुर्ह वै तमश्मेत्याचक्षते परोऽक्षम्—परोऽक्षकामा हि देवाः । अथ यः कपाले रसो लिप्त असीत्—ते रश्मयोऽभवन् । अथ यत्कपालमासीत्—सा द्यौरभवत् ॥ ३ ॥

सोऽकामयत । भूय एव स्यात्—प्रजायेतेति । स आदित्येन दिवं मिथुनं समभवत् । तत आण्डं समवर्तत । तदभ्यमृशद्—रेतो बिभृहीति । ततश्चन्द्रमा असृज्यत एष वै रेतः । अथ यदश्रु संक्षरित-

---

तत्राहुः—स यो गर्भोऽन्तरासीदिति । यो गर्भान्तरजातः स वायुत्वेन सृष्टः । अथ- गर्भोदक-कपाललिप्तरस तत्कपालानि त्रीणि च पक्षिमरीच्यन्तरिक्षलोकात्मकानि अभूवन् ॥ २ ॥

सोऽकामयतेत्यादेरयमर्थः—वाय्वन्तरिक्षयोर्मिथुनत्वेन सङ्गात् एकम् ‘ अण्डम् ’ उत्पन्नम् । तस्मात् आदित्य उत्पन्नः; स ‘ एषः ’ आदित्यो ‘ यशः ’ “ यशो बिभ्रिहि ”—‘ इति ’ यशोरूपत्वेन धारणार्थं प्रजापतिना अण्डस्यावमृष्टत्वात्तत उत्पन्न आदित्यो यश इच्युच्यते । पूर्ववद् गर्भोदकादीनि त्रीणि मेघरश्मिद्युलोकात्मकानि जातानि । तदा ‘ पृश्निः ’ नानावर्णः, ‘ अश्मा ’ आकाशाच्छादको मेघः । “ अश्नोतेरश्मा ” इति नैरुक्ताः ( निघं. १ । १० । ९ । ८ ) ॥ ३ ॥

अथ तृतीयपर्याये आदित्यद्युलोकयोर्मिथुनत्वेन गर्भः समजनि तं प्रजापतिः ‘ रेतो बिभृहि ’—‘ इति ’

अथ युः कपाले रसो लिप्त ऽआसीत्ता ऽअवान्तरदिशोऽभवन्नथ यत्कपाल-मासीत्ता दिशोऽभवन् ॥ ४ ॥

( त्स ) सऽ इमाँल्लोकान्त्सृष्ट्वाऽकामयत । ताः प्रजाः सृजेय या मऽएषु लोकेषु स्युरिति ॥ ५ ॥

स मनसा वाचं मिथुनꣳ समभवत् । ( त्सो ) सोऽष्टौ द्रप्सान्गर्भ्यभव-त्तेऽष्टौ वसवोऽसृज्यन्त तानस्यामुपादधात् ॥ ६ ॥

( त्स ) स मनसैव । वाचं मिथुनꣳ समभवत्सऽ एकादश द्रप्सान्गर्भ्य-भवत्तऽएकादश रुद्राऽअसृज्यन्त तानन्तरिक्षऽउपादधात् ॥ ७ ॥

( त्स ) स मनसैव । वाचं मिथुनꣳ समभवत्स द्वादश द्रप्सान्गर्भ्यभवत्ते द्वादशादित्याऽअसृज्यन्त तान्दिव्युपादधात् ॥ ८ ॥

( त्स ) स मनसैव । वाचं मिथुनꣳ समभवत्स गर्भ्यभवत्स विश्वा-न्देवानसृजत तान्दिक्षूपादधात् ॥ ९ ॥

---

मासीत्—तानि नक्षत्राण्यभवन् । अथ यः कपाले रसो लिप्त आसीत् । ता अवान्तरदिशोऽभवन् । अथ यत्कपालमासीत्—ता दिशोऽभवन् ॥ ४ ॥

स इमाँल्लोकान्त्सृष्ट्वाऽकामयत—ताः प्रजाः सृजेय या मऽएषु लोकेषु स्युरिति ॥ ५ ॥

स मनसा वाचं मिथुनं समभवत् । सोऽष्टौ द्रप्सान्गर्भ्यभवत् । तेऽष्टौ वसवोऽसृज्यन्त । तान-स्यामुपादधात् ॥ ६ ॥

स मनसैव वाचं मिथुनं समभवत् । स एकादश द्रप्सान्गर्भ्यभवत् । तऽएकादश रुद्रा असृज्यन्त । तानन्तरिक्षऽउपादधात् ॥ ७ ॥

स मनसैव वाचं मिथुनं समभवत् । स द्वादश द्रप्सान्गर्भ्यभवत् । ते द्वादशादित्या असृज्यन्त । तान्दिव्युपादधात् ॥ ८ ॥

स मनसैव वाचं मिथुनं समभवत् । स गर्भ्यभवत् । स विश्वान्देवानसृजत । तान्दि-क्षूपादधात् ॥ ९ ॥

---

रेतोरूपत्वेन धारयेति गर्भमवसृष्टवान् । ततोऽण्डात् यत् इमाः सृष्टाः, अत एव तस्य रेतस्त्वम्, सुधास्रवणात् । अत्रापि पूर्ववद् गर्भोदककपाललिप्तरसतत्कपालानि नक्षत्रावान्तरदिङ्महादिगात्मकानि सम्पन्नानि ॥ ४ ॥

स इमाँल्लोकान्त्सृष्ट्वेत्यादि । पुनश्च प्रजापतिः एषु लोकेषु प्रजाः सृजेयमिति विचार्य स्वकीयवाङ्मनसयो-र्मिथुनीभवनेन स्वयमष्टद्रप्सरूपगर्भवानभवत्, ततोऽष्टम्यो द्रप्सेभ्यः अष्टौ वसवः सञ्जाताः । ' तान् ' वसून् ' अस्यां ' भूमौ ' उपादधात् ' निहितवान् । पुनश्च वाङ्मनसयोः युग्मेन एकादश रुद्रान् सृष्ट्वा, तान् अन्त-रिक्षे स्थापितवान् । द्वादशादित्यांश्च सृष्ट्वा तान् द्युलोके उपदधातिस्म, विश्वान् देवान् दिक्षु निहितवान् ॥ ५—९ ॥

( ढु ) अथोऽआहुः । ( १ ) अग्निमेव सृष्टं वसवोऽन्वसृज्यन्त तानस्यामुपादधाद्वायुँ रुद्रास्तानन्तरिक्षऽआदित्यमादित्यास्तान्दिवि विश्वे देवाश्चन्द्रमसं तान्दिक्षूपादधादिति ॥ १० ॥

( त्यु ) अथोऽआहुः । प्रजापतिरेवेमाँल्लोकान्त्सृष्ट्वा पृथिव्यां प्रत्यतिष्ठत्तस्माऽइमाऽ ओषधयोऽन्नमपच्यन्त तदाश्नात्स गर्भ्यभवत्स ऊर्ध्वेभ्यऽएव प्राणेभ्यो देवानसृजत येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजाऽ इत्यतो यतमथाऽसृजत तथाऽसृजत प्रजापतिस्त्वेवेदँ सर्वमसृजत यदिदं किंच ॥

स प्रजाःसृष्ट्वा । सर्वमाजिमित्वा व्यस्रँसत तस्मादु हैतद्यः सर्वमाजिमेति व्येव स्रँसते तस्माद्विस्रस्तात्प्राणो मध्यतऽ उदक्रामत्तस्मिन्नेनमुत्क्रान्ते देवा ऽअजहुः ॥ १२ ॥

---

अथोऽआहुः—अग्निमेव सृष्टं वसवोऽन्वसृज्यन्त । तानस्यामुपादधात् (१) । वायुं रुद्राः । तानन्तरिक्षे ( २ )। आदित्यमादित्याः। तान्दिवि (३)। विश्वेदेवाश्चन्द्रमसम् । तान्दिक्षूपादधात् इति ॥१०॥

अथोऽआहुः—प्रजापतिरेवेमाँल्लोकान्त्सृष्ट्वा पृथिव्यां प्रत्यतिष्ठत् । तस्माऽइमा ओषधयोऽन्नमपच्यन्त । तदाश्नात् । स गर्भ्यभवत् । स ऊर्ध्वेभ्य एव प्राणेभ्यो देवानसृजत । येऽवाञ्चः प्राणाः—तेभ्यो मर्त्याः प्रजा इति । अतो यतमथाऽसृजत—तथाऽसृजत । प्रजापतिस्त्वेवेदं सर्वमसृजत—यदिदं किंच ॥ ११ ॥

स प्रजाः सृष्ट्वा सर्वमाजिमित्वा व्यस्रंसत । तस्मादु हतद्—यः सर्वमाजिमेति—व्येव स्रंसते । तस्माद्विस्रस्तात्प्राणो मध्यत उदक्रामत् । तस्मिन्नेनमुत्क्रान्ते देवा अजहुः ॥ १२ ॥

---

अत्र केचिद् वसुरुद्रादित्यविश्वेदेवानामुत्पत्तिमग्निपूर्वां दर्शयन्ति—अथो आहुरग्निमेव सृष्टं वसवोऽन्वसृज्यन्तेति । 'इति '—शब्द एकीयपक्षसमाप्त्यर्थः ॥ १० ॥

अथो आहुः प्रजापतिरेवेत्यादेरयमर्थः । 'अथो ' अपरे ब्रह्मवादिनः एवम् ' आहुः । ' ' प्रजापतिरेव ' लोकत्रयं ' सृष्ट्वा, ' ' पृथिव्यां ' प्रतिष्ठितः सन् पक्वाः अन्नरूपा ओषधीः प्र श्य ' गर्भी ' भूत्वा ' सः ' ऊर्ध्वेभ्यः ' प्राणेभ्यः ' 'देवान्' सृष्टवान् । अवाचीनेभ्यः प्राणेभ्यः 'मर्त्याः प्रजा इति' । सृष्टौ यद्यपि प्रकारविशेषोऽस्ति, तथापि स्थावरजङ्गमात्मकस्य जगतः प्रजापतिसृष्टत्वं निश्चितमिति श्रुतिः स्वमतं निरूपयति—अतो यतमथेति । ' यतमथा ' येन प्रकारेण सृष्टवान्, तेनैव प्रकारेण सृष्टिरस्तु, सर्वात्मना प्रजापतिरेवेदं सर्वमसृजदिति सत्यमित्यर्थः ॥ ११ ॥

अथैवं सर्वोत्पादकस्य प्रजापतेश्चित्याग्निरूपेतामाख्यायिकामुखेन दर्शयति—स प्रजाः सृष्ट्वा सर्वमाजिमि-

---

१—सप्तमाष्टमकाण्डयोः प्रतिपादितोऽग्निचयनविस्तार इह समालोचनीयः ।

सो॒ऽग्निम॑ब्रवीत् । ( त्वं ) त्वं मा॒ सं॒धे॑हीति॒ किं मे॒ ततो॑ भविष्य॒तीति॑ त्वया॑ मा॒ऽऽच॑क्षान्तै॒ यो वै पु॒त्राणा॑ᳫ॑ राध्य॑ते ते॒न पि॒तरं॑ पिताम॒हं पु॒त्रं पौत्र॑मा॒चक्षते त्वया॑ मा॒ऽऽचक्षा॒न्ताऽअथ॒ मा सं॒धेहीति॒ तथे॒ति॒ तम॒ग्निः सम॑दधा॒त्त॑स्मादे॒तं प्र॒जाप॑तिᳫ॑ सन्तम॒ग्निरि॒त्याचक्षत॒ऽआ ह॒ वा॒ऽएने॑न पि॒तरं॑ पिताम॒हं पु॒त्रं पौत्रं॑ चक्षते॒ य॒ऽए॒वं वेद॑ ॥ १३ ॥

तम॑ब्रवीत् । ( त्क ) क॒स्मिं॒स्त्वोप॑धास्या॒मीति॑ हि॒तऽए॒वेत्य॑ब्रवीत्प्रा॒णो वै हि॒तं प्रा॒णो हि सर्वे॑भ्यो भू॒तेभ्यो॑ हि॒तस्त॒द्यदे॑नᳫ॑ हि॒तऽउ॑पा॒दधा॒त्त॑स्मा दा॒हो॒पधास्या॑म्युप॒दधा॑म्युपा॒धामि॒ति ॥ १४ ॥

---

सोऽग्निमब्रवीत्—त्वं मा सन्धेहीति । किं मे ततो भविष्यतीति । त्वया माऽऽचक्षान्तै । यो वै पुत्राणां राध्यते—तेन पितरं पितामहं पुत्रं पौत्रमाचक्षते । त्वया माऽऽचक्षान्तै । अथ मा सन्धेहीति । तथेति । तमग्निः समदधात् । तस्मादेतं प्रजापतिं सन्तमग्निरित्याचक्षते । आ ह वाऽएतेन पितरं पितामहं पुत्रं पौत्रं चक्षते—य एवं वेद ॥ १३ ॥

तमब्रवीत्—कस्मिंस्त्वोपधास्यामीति । हितऽएवेत्यब्रवीत् । प्राणो वै हितम् । प्राणो हि सर्वेभ्यो भूतेभ्यो हितः । तद्यदेनं हितऽउपादधात्—तस्मादाह—उपधास्यामि, उपदधामि, उपाधामिति ॥ १४॥

---

त्वेति । ' स प्रजाः सृष्ट्वा, ' ' सर्वम् ' ' आजिम् ' लक्ष्यम् प्रति एत्य, ' व्यस्रंसत ' विस्रस्तः । सृष्टिकरणमेवात्र लक्ष्योऽवधिः, तत्र च विस्रस्त इत्यर्थः । तस्माल्लोकेऽपि आजिधावनेन श्राम्यति जनः । तस्मात् श्रान्तात् पुरुषान्मध्यप्रदेशात् प्राणा उत्क्रान्ताः, ' तस्मिन् ' अपगते ' देवाः ' इन्द्रियाणि ' अजहुः ' त्यक्तवन्तः । " ओ हाक् त्यागे " ( धा. पा. जु. प. ८ ) ॥ १२ ॥

सोऽग्निमब्रवीदिति । ' सः ' प्रजापतिः ' अग्निम् ' अवोचत् । हे अग्ने ! ' त्वं ' ' मा ' मां ' सन्धेहि ' उत्क्रान्तेन प्राणेन पुनः संहितं कुरु ' इति ' । एवं प्रजापतिना उक्ते सति, अग्निः अब्रवीत्,—' ततः ' त्वत्प्राणसन्धानाद्धेतोः ' मे ' मम किं भविष्यति ? ' इति ' । हे अग्ने ! ' त्वया ' त्वन्नाम्ना ' मा ' माम् ' आचक्षान्तै ' आचक्षीरन् । चष्टेः पञ्चमलकारे रूपम् । यथा लोके ' पुत्राणां ' मध्ये ' यो ' ' राध्यते ' विद्यया बलेन वा प्रसिद्धो भवति, ' तेन ' एव पुत्रेण पितृपितामहा व्यवहरन्ति, तस्यायं पिता पितामह इति, तस्यायं पुत्रः पौत्र इति । तस्मात् पुत्रस्य तव नाम्ना ममापि व्यपदेशो भवतु । अतः सन्धेहीत्युक्तम् । ' अग्निः ' ' तथा इति ' अङ्गीकृत्य तं ' समदधात् ' । अतोऽग्निना संहितत्वात् ' एतं ' सर्वोत्पादकं ' प्रजापतिम् ' एव सञ्चित्य ' अग्निरित्याचक्षते ' वेदवादिनः । वेदितुः फलमाह—आ ह वा एतेनेति । ' आङ् '—इत्युपसर्गः ' चक्षते '—इत्यनेन सम्बध्यते । ' ह वा '—इति निपातद्वयमेकार्थवाचि ॥ १३ ॥

सन्धानप्रकारं प्रश्नोत्तरेणाह—तमब्रवीत् कस्मिंस्त्वोपधास्यामीतीति । हे प्रजापते ! ' कस्मिन् ' स्थाने ' त्वा ' त्वाम् ' उपधास्यामि ' ' इति ' अग्नेः प्रश्नः । ' हित एव ' मा सन्धेहि । ' इति ' उत्तरम् । हितशब्दार्थमाह—प्राणो वै हितमिति । प्राणस्य सर्वेभ्य इन्द्रियेभ्योऽतिशयितत्वात् हितत्वम् । तस्मिन् हितरूपे

तदाहुः । किᳫँ हितं किमुपहितमिति प्राणऽएव हितं व्वागुपहितं प्राणे हीयं व्वागुपेव हिता प्राणस्त्वेव हितमङ्गान्युपहितं प्राणे हीमान्यङ्गान्युपेव हितानि ॥ १५ ॥

सोऽस्यैष चित्यऽआसीत् । ( चे ) चेतव्यो ह्यस्यासीत्तस्माच्चित्यश्चित्यऽउऽएवायं यजमानस्य भवति चेतव्यो ह्यस्य भवति तस्माद्वेव चित्यः ॥ १६ ॥

( स्तु ) तदेता वाऽअस्य ताः । पञ्च तन्वो व्यस्रᳫँसन्त लोम त्वङ्माᳫँसमस्थि मज्जा ताऽएवैताः पञ्च चितयस्तद्यत्पञ्च चितीश्चिनोत्येताभिरेवैनं तत्तनूभिश्चिनोति यच्चिनोति तस्माच्चितयः ॥ १७ ॥

---

तदाहुः-किं हितम्, किमुपहितमिति । प्राण एव हितम्, वागुपहितम् । प्राणे हीयं वागुपेव हिता । प्राणस्त्वेव हितम्, अङ्गान्युपहितम् । प्राणे हीमान्यङ्गान्युपेव हितानि ॥ १५ ॥

सोऽस्यैष चित्य आसीत् । चेतव्यो ह्यस्यासीत्–तस्माच्चित्यः । चित्य उ एवायं यजमानस्य भवति । चेतव्यो ह्यस्य भवति । तस्माद्वेव चित्यः ॥ १६ ॥

तदेता वाऽअस्य ताः पञ्च तन्वो व्यस्रंसन्त–लोम, त्वक्, मांसम्, अस्थि, मज्जा । ता एवैताः पञ्च चितयः । तद्यत्पञ्च चितीश्चिनोति–एताभिरेवैनं तत्तनूभिश्चिनोति । यच्चिनोति–तस्माच्चितयः ॥ १७ ॥

---

प्राणे 'अग्निः' प्रजापतिं समाहितवान् । पूर्वं मध्यतः प्राण उच्चक्राम, तमेव सन्धेहीति प्रजापतिनैवोक्तत्वात् । 'तस्मात्' इदानीन्तना अनुष्ठातारोऽपि चित्युपधानसमये उपदधति भूतभविष्यद्वर्तमानप्रयोगं कुर्वन्तीत्यर्थः । 'उपधास्यामि'–इति भविष्यतः प्रयोगः, 'उपदधामि'–इति वर्त्तमानस्य, 'उपाधाम्'–इति भूतस्य ॥ १४ ॥

प्रसङ्गात् उपहितशब्दार्थं वक्तुं हितोपहितयोः स्वरूपं पृच्छति–तदाहुः किं हितमिति । उपादधादिति उपधानस्थानमुपधेयं चोक्तम्, तत्र प्राणस्य हितत्वं दर्शितम्, 'उपहितमिति' वाच उच्यते, प्राणे वाचमुपहितवानित्यर्थ । उपहितपदस्यार्थान्तरमाह–अङ्गानीति । प्राणवति पुरुषे 'अङ्गानि' 'उपहितानि' सन्निहितानि भवन्ति । एवं प्रजापतेरग्निनामव्यपदेश्यत्वमुक्तम् ॥ १५ ॥

चित्यत्वमपि दर्शयति–सोऽस्यैष इति । 'सः' प्रजापतिः 'अस्य' अग्नेः 'चित्यः' 'चेतव्यः' सन्धेयः, 'तस्मात्' स 'चित्यः' इत्यर्थः । इष्टकाचितिसम्बन्धादपि प्रजापतेश्चित्यत्वमाह–चित्य उ एवायमिति । 'यजमानस्य' अपि 'अयम्' एव 'चेतव्यः' इष्टकाभिरुपधेयः । 'अस्य' यजमानस्य । "कृत्यानां कर्तरि वा"–( पा. सू. २ । ३ । ७१ ) इति षष्ठी ॥ १६ ॥

प्रजापतिर्व्यस्रंसतेति यदुक्तम्, तदिदानीं चितिसङ्ख्याप्रदर्शनेन विशदयति–तदेता वा अस्येति । विस्रंसन-

स यः स प्रजापतिर्व्यस्रꣳसत । संवत्सरः सोऽथ या अस्यैताः पञ्च तन्वो व्यस्रꣳसन्तऽर्त्तवस्ते पञ्च वाऽऋतवः पञ्चैताश्चितयस्तद्यत्पञ्च चितीश्चिनोत्यृतुभिरेवैनं तच्चिनोति यच्चिनोति तस्माच्चितयः ॥१८॥

स यः स संवत्सरः प्रजापतिर्व्यस्रꣳसत । (ता) अयमेव स वायुर्योऽयं पवतेऽथ याऽ अस्य ताऽ ऋतवः पञ्च तन्वो व्यस्रꣳसन्त दिशस्ताः पञ्च वै दिशः पञ्चैताश्चितयस्तद्यत्पञ्च चितीश्चिनोति दिग्भिरेवैनं तच्चिनोति यच्चिनोति तस्माच्चितयः ॥ १९ ॥

(योऽथ) अथ यश्चितेऽग्निर्निधीयते । (तेऽसौ) असौ स ऽआदित्यः स ऽएष ऽएवैषोऽग्निश्चित ऽएतावन्नु तद्यदेनमग्निः समदधात् ॥ २० ॥
[ शतम् ३४०० ]

---

स यः स प्रजापतिर्व्यस्रंसत–सम्वत्सरः सः । अथ या अस्यैताः पञ्च तन्वो व्यस्रंसन्त–ऋतवस्ते । पञ्च वाऽऋतवः । पञ्चैताश्चितयः । तद्यत्पञ्च चितीश्चिनोति–ऋतुभिरेवैनं तच्चिनोति । यच्चिनोति-तस्माच्चितयः ॥ १८ ॥

स यः स सम्वत्सरः प्रजापतिर्व्यस्रंसत–अयमेव स वायुः । योऽयं पवते । अथ या अस्य ता ऋतवः पञ्च तन्वो व्यस्रंसन्त-दिशस्ताः । पञ्च वै दिशः । पञ्चैताश्चितयः । तद्यत्पञ्च चितीश्चिनोति–दिग्भिरेवैनं तच्चिनोति । यच्चिनोति–तस्माच्चितयः ॥ १९ ॥

अथ यश्चितेऽग्निर्निधीयते–असौ स आदित्यः । स एष एवैषोऽग्निश्चितः । एतावन्नु तद्-यदेनमग्निः समदधात् ॥ २० ॥

---

समये 'अस्य' तस्य लोमत्वङ्मांसास्थिमज्जाख्याः 'पञ्च' चितयः उत्तरोत्तरक्रमेण पञ्चकक्ष्यात्मना चेतव्याः । यस्मादग्नौ पञ्च चितीः 'चिनोति,' 'तस्मात्' पञ्चभिर्लोमादिभिरेव प्रजापतिं संहितवान् भवति । "चिञ् चयने"–(धा. पा. स्वा. उ. ९) इत्यस्माच्चितिशब्दनिष्पत्तिः ॥ १७ ॥

स यः प्रजापतिरित्यादेरयमर्थः–प्रजापतेः संवत्सरात्मनो विस्रंसनसमये पञ्चर्तव एव विस्रस्ताः । "हेमन्त-शिशिरयोः समासेन"–(ऐ. ब्रा. १ । १ । १ ।) इति पञ्चसङ्ख्या । तथा सति पञ्चचितिचयनेन 'एनं' संवत्सर-रूपं प्रजापतिं पञ्चभिर्ऋतुभिः संयोजितवान् भवति ॥ १८ ॥

प्रकारान्तरेण प्रशंसति–स यः स संवत्सरः प्रजापतिरिति । 'यः' संवत्सररूपः 'प्रजापतिः' विस्रस्तः 'सः' 'अयमेव' पवमानो 'वायुः' तस्य 'दिशः' एव 'पञ्च' तन्वः । ऊर्ध्वदिक्सहिताः पञ्च महा-दिशः । ता एव विस्रस्ताः पञ्चचितिचयनेन 'एनं' वायुरूपं प्रजापतिं पञ्चभिर्दिग्भिरेव चितवान् ॥ १९ ॥

एवं प्रजापतेश्चित्याग्निरूपतामभिधाय तस्योपरि निधीयमानस्याहवनीयस्याग्नेरादित्यरूपतामाह–अथ यश्चित इति । 'चिते' अग्नौ 'यः अग्निः' आहवनीयः 'निधीयते' 'सः' असौ आदित्यः । स एष एवेति, पुनः

( ड ) अ॒थो॑ऽ आहुः । प्र॒जाप॑तिरेव वि॒स्र॒स्तो दे॒वान॑ब्रवीत्सं मा॑ धत्ते॒ति ते॒ दे॒वा॑ऽ अ॒ग्निम॑ब्रुवँस्त्व॒यी॒मं पि॒तरं॑ प्र॒जाप॑तिं भिषज्या॒मे॒ति स वा॑ऽअ॒ह॒मे॒तस्मि॑न्त्स॒र्व॒स्मि॑न्ने॒व वि॑शा॒नी॒ति त॒थे॒ति त॒स्मा॑दे॒तं प्र॒जाप॑तिꣳ स॒न्त॒म॒ग्निरि॒त्या॒चक्षते ॥ २१ ॥

तं दे॒वा॑ऽअ॒ग्नावा॒हु॒ति॒भि॒र॒भि॒ष॒ज्य॒न् । ( ज्यंस्ते ) ते यां या॑मा॒हु॒ति॒म॒जु॒ह॒वुः॒ सा सै॑नं प॒क्वे॒ष्टका भू॒त्वा॑ऽप्य॒पद्यत॒ तद्य॑दि॒ष्टा॒त्सम॑भवँस्त॒स्मा॒दि॒ष्ट॒का॒स्त॒स्मा॒द॒ग्निने॒ष्ट॒काः॑ प॒च॒न्त्या॒हु॒ती॑रे॒वैना॑स्त॒त्कु॒र्व॒न्ति॒ ॥ २२ ॥

सो॑ऽब्रवीत् । ( य्या ) या॒व॒द्या॒वद्वै॒ जु॒हु॒थ ता॒व॒त्ता॒व॒न्मे कं भ॒व॒ती॒ति॒ त॒द्य॒द॒स्मा॑ऽइ॒ष्टे क॒म॒भ॒व॒त्त॒स्मा॒द्वे॒वे॒ष्टकाः ॥ २३ ॥

---

अथो आहुः—प्रजापतिरेव विस्रस्तो देवानब्रवीत्—सं मा धत्तेति । ते देवा अग्निमब्रुवन्—त्वयीमं पितरं प्रजापतिं भिषज्यामेति । स वाऽअहमेतास्मिन्त्सर्वस्मिन्नेव विशानीति । तथेति । तस्मादेतं प्रजापतिं सन्तमग्निरित्याचक्षते ॥ २१ ॥

तं देवा अग्नावाहुतिभिरभिषज्यन् । ते यां—यामाहुतिमजुहवुः—सा—सैनं पक्वेष्टका भूत्वाऽप्यपद्यत । तद्यदिष्टात्समभवन् । तस्मादिष्टकाः । तस्मादग्निनेष्टकाः पचन्ति । आहुतीरेवैनास्तत्कुर्वन्ति ॥ २२ ॥

सोऽब्रवीत्—यावद् यावद्वै जुहुथ—तावत्तावन्मे कं भवतीति । तद् यदस्माऽइष्टे कमभवत्—तस्माद्वेवेष्टकाः ॥ २३ ॥

---

प्रदर्शनवचनम् । अत्र 'चिते' इति सप्तम्यन्तं पदम् । प्रजापतेरग्निना सन्धानप्रकारं निगमयति—एतावन्नु तादिति । 'यत्' उक्तप्रकारेण 'अग्निः' 'एनं' प्रजापतिं 'समदधात्' इति ॥ २० ॥

प्रजापतेर्देवैः संधानप्रकारमाह—अथो आहुः प्रजापतिरेवेति । पूर्वं प्रजायमानः प्रजाः सृष्ट्वा सर्वाजिघात्रनेन 'विस्रस्तः' सन् 'देवान् अब्रवीत्' । हे देवाः ! 'मा सन्धत्त' 'इति' । 'ते' एव 'देवाः' 'अग्निम् अब्रुवन्' । हे अग्ने ! 'त्वयि' सर्वेषां 'पितरं प्रजापतिं' 'भिषज्याम' सन्धानं करवाम 'इति' । अथ 'सः' अग्निरपि देवान् अब्रवीत् । हे देवाः ! 'सः' 'अहम्' 'एतस्मिन् सर्वस्मिन्' जगति 'एव' अन्तर्—'विशानि' सर्वस्यान्तः प्रविष्टो भवानीत्युक्तम् । 'तथा इति' देवा अङ्गीचक्रुः । यतो देवा अग्नौ प्रजापतिमभिषज्यन्त । 'तस्मात्' एतस्य प्रजापतेरग्निनाम्ना व्यपदेशः ॥ २१ ॥

भैषज्यकरणप्रकारं दर्शयति—तं देवा अग्नावाहुतिभिरिति । 'तं' प्रजापतिम् आहुतिकरणेन समाहितवन्तः । अत्र या आहुतय इष्टाः तास्ताश्चित्याग्निरूपप्रजापतिकेष्टका भूत्वा प्रतिपद्य प्रीयमाणाः स्युरित्यर्थः । इष्टकाशब्दस्य निर्वचनं दर्शयति—तद्यदिष्टादिति । इष्टात् होमात् जाता इतीष्टकाः, 'तस्मात्' इदानीन्तना अपि अनुष्ठातारः 'अग्निना इष्टकाः पचन्ति' तथा सति 'एनाः' इष्टकाः 'आहुतीरेव' कृतवन्तो भवन्तीत्यर्थः ॥ २२ ॥

इष्टकापदे 'इष्ट'—इति 'क'—इति च शब्दद्वयस्वरूपं दृश्यते, तत्र इष्ट—शब्दस्वरूपस्य निर्वाहं प्रदर्श्य 'क'—शब्दस्वरूपस्य प्रवृत्तिनिमित्तं दर्शयति—सोऽब्रवीदिति । 'सः' प्रजापतिः देवान् 'अब्रवीत्' हे देवाः ।

(स्तु) तद्ध स्माहाक्ताक्ष्यः । (क्ष्यो) य एव यजुष्मतीर्भूयसीरिष्टका विद्यात्सोऽग्निं चिनुयाद्भूय ऽएव तत्पितरं प्रजापतिं भिषज्यतीति ॥ २४ ॥

( त्यु ) अथ ह स्माह ताण्ड्यः । क्षत्रं वै यजुष्मत्य ऽइष्टका विशो लोकम्पृणा ऽअत्ता वै क्षत्रियोऽन्नं विड्यत्र वाऽअत्तुरन्नं भूयो भवति तद्राष्ट्रँ समृद्धं भवति तदेधते तस्माल्लोकम्पृणा ऽएव भूयसीरुपदध्यादित्येतदु ह तयोर्वचोऽन्या त्वेवात स्थितिः ॥ २५ ॥

---

तद्ध स्माहाक्ताक्ष्यः—य एव यजुष्मतीर्भूयसीरिष्टका विद्यात्—सोऽग्निं चिनुयात् । भूय एव तत्—पितरं प्रजापतिं भिषज्यतीति ॥ २४ ॥

अथ ह स्माह ताण्ड्यः—क्षत्रं वै यजुष्मत्य इष्टकाः, विशो लोकम्पृणाः । अत्ता वै क्षत्रियः, अन्नं विद् । यत्र वाऽअत्तुरन्नं भूयो भवति—तद्राष्ट्रं समृद्धं भवति, तदेधते । तस्माल्लोकम्पृणा एव भूयसीरुपदध्यादिति । एतदु ह तयोर्वचः—अन्या त्वेवातः स्थितिः ॥ २५ ॥

---

युष्माभिरग्नौ 'यावद्यावद्' हुतम्, 'तावत्तावत्' 'मे' मम 'कं' सुखं 'भवति' 'इति' । तस्मात् 'इष्टे' होमे 'कं' सुखम् अभूत् ब्रह्मणः इति इष्टकानामनिरुक्तिः ॥ २३ ॥

अथेष्टकाचयनयज्ञमन्त्रैरुपधेया इष्टका यजुष्मत्यः, ताश्चेतव्याः; अवशिष्टेऽवकाशे लोकम्पृणेष्टकाः । "लोकम्पृण च्छिद्रं पृण"—( वा. सं. १९ । ५९ ) इत्यादिना मन्त्रेण उपधेया इष्टकाः लोकम्पृणाः । तत्र यजुष्मतीनां भूयस्त्वम्, लोकम्पृणानामल्पत्वम् 'अक्ताक्ष्यः' आचार्यो मन्यते, लोकम्पृणानां भूयस्त्वम् 'तांड्यः' मन्यते । तत्र चोभयत्र द्वावप्युपपत्ती वर्णयित्वा तयोर्व्यपदेशेन तन्मतं प्रदर्शयन्ती श्रुतिः पक्षान्तरं दर्शयति—तद्ध स्माहाक्ताक्ष्य इति । 'यः' पुरुषो 'यजुष्मतीः इष्टकाः भूयसीः' जानीयात्, 'सः' एव 'अग्निं चिनुयात्' 'तत्' तथा सति 'पितरं प्रजापतिं' 'भूयः' अधिकं संहितवान् भवति, इत्यक्ताक्ष्यमतम् ॥

अथ हेति । क्षत्रं वै यजुष्मत्य इत्यादि । यजुष्मतीनां क्षत्रत्वम्, क्षत्रियस्य यजुर्वेदोत्पन्नत्वात्; लोकम्पृणानान्तु विट्त्वम् कामपूरकत्वात् । यथा लोके 'अत्तुः' क्षत्रियस्य अन्नरूपविशो बाहुल्ये राष्ट्रसमृद्धिर्भवति, तथा लोकम्पृणानां बाहुल्ये यजमानस्यानुष्ठानमेव समृद्धं भवतीति ताण्ड्यमतम् ॥

तदेतद् दूषयति—एतदु हेति । 'एतत्' उक्तं तयोः 'वचः' वचनमात्रम्, "अन्या त्वेव अतः स्थितिः"—इति श्रुतेः स्वमतप्रदर्शनम् । अनुष्ठानप्रकारार्थोऽत्र 'तु' शब्दः, 'एव शब्दः' वैलक्षण्यार्थः । अनुष्ठानप्रकारस्तु उत्तरत्र वक्ष्यते ॥ २४ ॥ २५ ॥

स ऽएष पिता पुत्रः । ( त्रो ) यदेषोऽग्निमसृजत तेनैषोऽग्नेः पिता यदेतमग्निः समदधात्तेनैतस्याग्निः पिता यदेष देवानसृजत तेनैष देवानां पिता यदेतं देवाः समदधुस्तेनैतस्य देवाः पितरः ॥ २६ ॥

( ० ) उभयꣳ हैतद्भवति । पिता च पुत्रश्च प्रजापतिश्चाग्निश्चाग्निश्च प्रजापतिश्च प्रजापतिश्च देवाश्च देवाश्च प्रजापतिश्च स ऽएवं वेद ॥ २७ ॥

सऽ उपदधाति । तया देवतयेति वाग्वै सा देवताऽङ्गिरस्वदिति प्राणो वाऽअङ्गिरा ध्रुवा सीदेति स्थिरा सीदेत्येतदथो प्रतिष्ठिता सीदेति वाचा चैवैनमेतत्प्राणेन च चिनोति वाग्वाऽअग्निः प्राणऽ इन्द्रऽ ऐन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतच्चिनोतीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतच्चिनोति ॥ २८ ॥

---

स एष पिता पुत्रः यदेषोऽग्निमसृजत—तेनैषोऽग्नेः पिता । यदेतमग्निः समदधात्—तेनैतस्याग्निः पिता । यदेष देवानसृजत—तेनैष देवानां पिता । यदेतं देवाः समदधुः—तेनैतस्य देवाः पितरः ॥२६॥

उभयं हैतद्भवति—पिता च पुत्रश्च । प्रजापतिश्चाग्निश्च, अग्निश्च प्रजापतिश्च । प्रजापतिश्च देवाश्च । देवाश्च प्रजापतिश्च—य एवं वेद ॥ २७ ॥

स उपदधाति—"तया देवतया"—इति । वाग्वै सा देवता । "अङ्गिरस्वद्"—इति । प्राणो वाऽअङ्गिराः । "ध्रुवा सीद"—इति । स्थिरा सीदेत्येतद्, अथो प्रतिष्ठिता सीदेति । वाचा चैवैनमेतत् प्राणेन च चिनोति । वाग्वाऽअग्निः, प्राण इन्द्रः । ऐन्द्राग्नोऽग्निः । यावानग्निः । यावत्यस्य मात्रा—तावतैवैनमेतच्चिनोति । इन्द्राग्नी वै सर्वे देवाः । सर्वदेवत्योऽग्निः । यावानग्निः, यावत्यस्य मात्रा—तावतैवैनमेतच्चिनोति ॥ २८ ॥

---

प्रजापतेरग्निना देवैश्च सन्धाने कृते योऽर्थः सम्पद्यते तं दर्शयति—स एष पितेति । अग्नेः पितृत्वं पुत्रत्वं च भवति, देवानामपि तथैवोभयम् । प्रजापतिसृष्टत्वात् अग्नेर्देवानाञ्च पुत्रत्वम्; तैर्भैषज्यकरणात् तेषां प्रजापतिपितृत्वम् ॥ २६ ॥

वेदितुः फलमाह—उभयं हैतद् भवतीति । 'यः' 'एवम्' अर्थं 'वेद,' सः 'एतत्' 'उभयं भवति,' पितापुत्रात्मको भवतीत्यर्थः । पितृत्वं पुत्रत्वं च उभयत्र अग्निदेवपक्षे समानम् । तत्राग्निपक्षेऽयं विशेषः,—पिता प्रजापतिर्भवति, पुत्रोऽग्निर्भवति; अग्निः पिता भवति, सन्धायकत्वात्; प्रजापतिः पुत्रो भवति संहितत्वात् । देवपक्षेऽप्येवं विशेषं दर्शयितुं "प्रजापतिश्च देवाश्च" इत्युपन्यासः । य एवं वेदेति । पितृरूपप्रजापतित्वम् पुत्ररूपाग्नित्वम्; पुत्रभूतप्रजापतित्वम् पितृभूताग्नित्वं चेत्यादिक्रमेण सम्पद्यत इत्यर्थः ॥ २७ ॥

पूर्वं प्रजापतेरग्निना सन्धानसमये वाचं प्राणे निहितवानित्युक्तम् "प्राण एव हितं वागुपहितम्"—( अस्मिन्नेव ब्राह्मणे पञ्चदश्यां कण्डिकायाम् ) इत्यादिना, तमिममर्थमिष्टकोपधानमन्त्रेऽपि दर्शयति—स उपदधाति तया

तदाहुः । कस्मादस्याऽअग्निश्चीयतऽइति यत्र वै सा देवता व्यस्रꣳसत तदिमामेव रसेनानु व्यक्षरत्तं यत्र देवाः समस्कुर्वंस्तदेनमस्याऽएवाधि समभरन्त्सैषैकैवेष्टकेयमेवेयꣳ ह्यग्निरस्यै हि सर्वोऽग्निश्चीयते सेयं चतुःस्रक्तिर्दिशो ह्यस्यै स्रक्तयस्तस्माच्चतुःस्रक्तयऽइष्टका भवन्तीमाꣳ ह्यनु सर्वाऽइष्टकाः ॥ २९ ॥

---

तदाहुः—कस्मादस्याऽअग्निश्चीयतऽइति । यत्र वै सा देवता व्यस्रंसत—तामिमामेव रसेनानु व्यक्षरत् । तं यत्र देवाः समस्कुर्वन्—तदेनमस्याऽएवाधि समभरन् । सैषैकैवेष्टका—इयमेव । इयं ह्यग्निः । अस्यै हि सर्वोऽग्निश्चीयते । सेयं चतुःस्रक्तिः । दिशो ह्यस्यै स्रक्तयः । तस्माच्चतुःस्रक्तय इष्टका भवन्ति । इमां ह्यनु सर्वा इष्टकाः ॥ २९ ॥

---

देवतयेति । "तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद"—( वा. सं. १४ । १४ ) इत्ययं मन्त्र इष्टकोपधाने समाम्नायते तत्र तच्छब्देन सर्वत्र प्रसिद्धा ऋगादिभिरुच्यमाना वाक् उच्यते, अङ्गिरःपदेन संज्ञानप्राणः । ( श. प. १४ । ४ । १ । २१ ) हे इष्टके 'तया' वाचा 'देवतया' 'अङ्गिरस्वत्' इति क्रियाविशेषणम् । प्राणयुक्तं यथा भवति तथा । "तसौ मत्वर्थे"—( पा. सू. १ । ४ । १९ ) इति भसंज्ञायां पदसंज्ञानिबन्धन-रुत्वाभावः । ध्रुवा सीदेति । 'ध्रुवा' 'स्थिरा' सती 'सीद' । अतो यदनेनोपदध्यात् तद् यजमानं वाक्-प्राणाभ्यां चितवान् भवतीत्यर्थः ( श. प. ८ । ३ । २ । ३ ) । प्रकारान्तरेण वाक्प्राणौ प्रशंसति—वाग्वा अग्निरिति । "अग्निर्वाग् भूत्वा मुखं प्राविशद्" ( ऐ. आ. २ । ४ । २–४ ) इति श्रुतेः । अत्र वाचो ऽग्नित्वम् प्राणस्येन्द्रत्वं प्रागुक्तम् । इन्द्राग्निदेवत्योऽग्निश्चित्यनामक इत्यर्थः । 'यावान्' यत्परिमाणः 'अग्निः' 'यावती' यत्परिमाणा 'अस्य' अग्नेः 'मात्रा' शरीरम्, 'तावता' शरीरेण 'एनं' चित्याग्निं 'चिनोति' चितवान् भवति । "तया देवतया"—इति मन्त्रेणोपधानेन वाक्प्राणाभ्याम् अग्नीन्द्ररूपाभ्याम् इन्द्राग्निदेवत्यमग्निं चितवानित्यर्थः । कथं नानादेवत्याग्नेरैन्द्राग्नत्वमित्याशङ्क्य इन्द्राग्नी सर्वदेवतात्मना प्रशंसति—इन्द्राग्नी वै सर्वे देवा इति । अग्निर्वै देवानामवम इन्द्रः परमस्तावन्तरेण अन्या देवताः, ता इन्द्राग्निभ्यां गृह्यन्ते—इति तयोः सर्वात्मकत्वात् तद्देवत्योऽग्निश्चित्यनामापि सर्वदेवत्यः । अतः अग्निः 'यावान्' 'अस्य' अग्नेः 'यावती मात्रा,' तस्य तावन्तं सर्वदेवत्यमग्निं "तया देवतया"—इति मन्त्रेण उपधानेन कृतवान् भवतीति ॥ २८ ॥

अथ भूमावेवेष्टकाचयनं कर्त्तव्यमित्यत्र कश्चित् प्रश्नमुपपादयति—तदाहुः—कस्मादिति । 'कस्मात्' हेतोः 'अस्यै' अस्याः भूमेरुपरि 'अग्निः चीयते' 'इति' प्रश्नः । उत्तरम्;—'यत्र' यदा 'सा देवता' प्रजापतिः विश्वं 'व्यस्रंसत' विस्रस्तवान्, 'तत्' तत्र 'इमाम्' भूमिम् 'एव' 'रसेन' 'अनुव्यक्षरत्' सिक्तवान् । 'तम्' प्रजापतिं विस्रस्तं 'यत्र' 'देवाः' 'समस्कुर्वन्' 'तत्' तत्र अस्यामेव 'एनम्' अग्निं सम्भृतवन्तः । तस्माद् भूमावेव चयनं कर्त्तव्यमित्यर्थः । तस्या इष्टकाया गुणं दर्शयति—सैषैकैवेष्टकेति । भूमेर्दिग्रूपचतुःस्रक्तियुक्तत्वादिदानीन्तनैरनुष्ठातृभिरपि इष्टकाः चतुःस्रक्तयः कार्या इत्यर्थः ॥ २९ ॥

( स्तु ) तुदाहुः । (र्यु) युदेवमेकेष्टकोऽथ कथं पुञ्चेष्टकऽइतीयं न्वेव प्रथमा मृन्मयीष्टका तद्यत्किं चात्र मृन्मयमुपदधात्येकैव सेष्टकाऽथ युत्पशुशीर्षाण्युपदधाति सा पश्विष्टकाऽथ युद्रुक्मपुरुषाऽउपदधाति युद्धिरण्यशकलैः प्रोक्षति सा हिरण्येष्टकाऽथ यत्स्रुचाऽउपदधाति युदुलूखलमुसले याः समिध ऽआदधाति सा वानस्पत्येष्टकाऽथ युत्पुष्करपर्णमुपदधाति युत्कूर्मं यद्दधि मधु घृतं यत्किंचात्रान्नमुपदधाति सैवान्नं पञ्चमीष्टकैवमु पुञ्चेष्टकः ॥ ३० ॥

(स्तु) तुदाहुः । कतरत ऽ इष्टकायाः शिर ऽ इति यत ऽ उपस्पृश्य यजुर्वदतीत्यु हैक ऽ आहुः स स्वयमातृण्णाया ऽ एवार्धादुपस्पृश्य यजुर्वदेत्तथो हास्यैताः सर्वाः स्वयमातृण्णामभ्यावृत्ता भवन्तीति न तथा कुर्यादङ्गानि

---

तदाहुः—यदेवमेकेष्टकः—अथ कथं पञ्चेष्टक इति । इयं न्वेव प्रथमा मृन्मयीष्टका । तद् यत्किंचात्र मृन्मयमुपदधाति—एकैव सेष्टका । अथ यत् पशुशीर्षाण्युपदधाति—सा पश्विष्टका । अथ यद्रुक्म-पुरुषाऽउपदधाति, यद्धिरण्यशकलैः प्रोक्षति—सा हिरण्येष्टका । अथ यत्—स्रुचाऽउपदधाति, यदुलूखलमुसले । याः समिध आदधाति—सा वानस्पत्येष्टका । अथ यत् पुष्करपर्णमुपदधाति, यत्कूर्मम्, यद्दधि, मधु घृतम् । यत्किंचात्रान्नमुपदधाति—सैवान्नं पञ्चमीष्टका । एवमु पञ्चेष्टकः ॥ ३० ॥

तदाहुः—कतरत इष्टकायाः शिर इति । यत उपस्पृश्य यजुर्वदतीत्यु हैकऽआहुः । स स्वयमातृण्णाया एवार्धादुपस्पृश्य—यजुर्वदेत् । तथो हास्यैताः सर्वाः स्वयमातृण्णामभ्यावृत्ता भवन्तीति ।

---

पञ्चचितिकोऽग्निरिति चयने पञ्चेष्टकाश्चेतव्या इति प्रसिद्धिरस्ति, अत्र भूमिरूपैकैवेष्टकाऽभिहिता, कथं पञ्चेष्टका भवन्तीति, तमिमं प्रश्नोत्तराभ्यां दर्शयति—तदाहुर्यदेवमिति । पञ्चेष्टका अपि सम्पादयति—इयं न्वेव प्रथमेति । तत्र यत् किञ्चिन्मृन्मयपात्रादिकमुपदध्यात् सा मृन्मयीष्टका, पुरुषाश्वादिपञ्चपशुशीर्षोपधानेन पश्विष्टका । रुक्मं हिरण्यम्, तत्र पुरुषं स्वर्णनिर्म्मितं चोपदधाति; उपहिता इष्टका 'हिरण्यशकलैः प्रोक्षति;' अतोऽत्र हिरण्यसंस्पर्शादेषा हिरण्येष्टकेत्युच्यते । स्रुगाद्युपधानेन वानस्पत्येष्टका; वनस्पतिविकारत्वात् स्रुगादीनाम् । पुष्करपर्णाद्युपधानमन्नेष्टका; तत्र दधिघृतादीनामन्नत्वात् । इति 'पञ्चेष्टकाः' चेतव्याः । तत्र मार्त्तिक्य इष्टका एका एव पश्वादिसम्बन्धात्पञ्च भवन्तीति तात्पर्यम् ॥ ३० ॥

चितानामिष्टकानामाहवनीयाग्निरेव शिर इति सिद्धान्तयितुं पूर्वपक्षं सोपपत्तिकमाह—तदाहुः कतरत इति । 'इष्टकायाः' 'कतरतः' कस्मिन् प्रदेशे 'शिरः' तिष्ठतीति प्रश्नः । उत्तरम्;—'यतः' यस्मिन् प्रदेशे

---

१—अष्टमकाण्डे पञ्चमेऽध्याये इति बोध्यम् ।

वाऽअस्यैतानि परूᳩषि यदिष्टका यथा वाऽअङ्गेऽङ्गे पर्व्वन्पर्व्वञ्छिरः कुर्य्यात्तादृक्तद्यो वाव चितेऽग्निर्निधीयते तदेवैतासाᳪ सर्व्वासाᳪ शिरः ३१

( स्त ) तदाहुः। कति पशवोऽग्नाऽउपधीयन्तऽइति पञ्चेति न्वेव ब्रूयात्पञ्च ह्येतान्पशूनुपदधाति ॥ ३२ ॥

( त्य ) अथोऽएकऽइति ब्रूयात् । ( द ) अविरितीयं वाऽअविरियᳪ हीमाः सर्व्वाः प्रजाऽअवतीयमु वाऽअग्निरस्यै हि सर्व्वोऽग्निश्चीयते तस्मादेकऽइति ब्रूयात् ॥ ३३ ॥

---

न तथा कुर्यात् । अङ्गानि वाऽअस्यैतानि परूंषि—यदिष्टकाः । यथा वाऽअङ्गेऽङ्गे पर्वन्पर्वञ्छिरः कुर्यात्—तादृक्तत् । यो वाव चितेऽग्निर्निधीयते—तदेवैतासां सर्वासां शिरः ॥ ३१ ॥

तदाहुः—कति पशवोऽग्नाऽउपधीयन्तऽ इति । पञ्चेति न्वेव ब्रूयात् । पञ्च ह्येतान्पशूनुपदधाति ३२

अथोऽएक इति ब्रूयात्—अविरिति । इयं वाऽअविः । इयं हीमाः सर्वाः प्रजा अवति । इयमु वाऽअग्निः । अस्यै हि सर्वोऽग्निश्चीयते । तस्मादेक इति ब्रूयात् ॥ ३३ ॥

---

इष्टकाः ' उपस्पृश्य ' ' यजुः ' वदेत्, तदेव शिरः इति केषाञ्चिन्मतम् । उपस्पर्शनप्रदेशं च स स्वयमेवाह—स स्वयमिति । ' स्वयमातृण्णायाः ' अक्षिमच्छिद्रयुक्तायाः शिलायाः ' अर्द्धात् ' समीपात् प्रदेशे ' उपस्पृश्य ' ' यजुः ' मन्त्रं ' वदेत् ' । तथो हास्येति । तथा सति शिर इष्टकाः ' स्वयमातृण्णाम् ' ' अभि '—लक्ष्य ' आवृत्ता भवन्ति ' ' इति ' । तद्दूषयति—न तथा कुर्यादिति । इष्टका इति यत् एतानि ' अस्य ' अग्नेः ' अङ्गानि ' ' परूंषि ' पर्वाणि; तथा सति प्रतीष्टकं यजुरुपस्पर्शनेन शिरःकरणे प्रतिपर्व शिरः कृतवान् भवति, तच्चानिष्टम् अतः स्वाभिमतं शिरो दर्शयति—यो वावेति । बिलप्रदेशे ' अग्निः ' आहवनीयो निहितो भवति, ' तदेव ' ' एतासाम् ' इष्टकानां ' शिरः ' इति उच्यते ॥ ३१ ॥

चयने पशुशीर्षोपधानात् पञ्चिष्टकेत्युक्तम्, तत्र पशूनां सङ्ख्याप्रतिवचनव्याजेन इष्टकानां लोकद्वयात्मकताम्, अग्नेः सर्वलोकात्मकतां चाह—तदाहुः कति पशवोऽग्ना उपधीयन्त इतीति । कति पशवोऽग्नावुपधेयाः ? इति पृष्टे ' पञ्च ' ' इति ' प्रतिवदेत् । पुरुषोऽश्वो गौरविरज इति पञ्च पशवः । मृदादिभिश्चित्यन्ते तासामुपधीयमानोऽग्निः सर्वलोकात्मकः प्रजापतिरिति ॥ ३२ ॥

प्रागुत्पवनात्पूर्वं पञ्चिष्टकापात्रं पशुमिति मत्वा पञ्चेति प्रतिवचनं दत्तम्, इदानीन्तु मृत्तिकोदकसम्पादनीयानामिष्टकानां पशुरूपत्वं प्रश्नोत्तराभ्यां दर्शयति—अथो एक इति । पूर्वं पञ्च पशव इत्युक्तम्, इदानीमविनामक एको वा पशुर्भवतीति प्रतिब्रूयात् । अविशब्दार्थमाह—इयमिति । भूमिरेव सर्वप्रजापोषकत्वादविरित्युच्यते । अवतेरविशब्दनिष्पत्तिः । भूमिरेवेष्टकारूपा अग्निश्चित्यनामा; ' हि ' यतः ' अस्यै ' अस्यां भूमौ ' सर्वोऽग्निश्चीयते, ' ' तस्माद् ' भूमेरेकत्वाद् ' एकः ' अविनामा पशुरेवेत्यर्थः ॥ ३३ ॥

(द्) अथो द्वाविति ब्रूयात् । ( दु ) अवीऽइतीयं चासौ चेमे हीमाः सर्वाः प्रजाऽ अवतो यन्मृदियं तद्यदापोऽसौ तन्मृच्चापश्चेष्टका भवन्ति तस्माद् द्वाविति ब्रूयात् ॥ ३४ ॥

( डु ) अथो गौरिति ब्रूयात् । ( दि ) इमे वै लोका गौर्यद्धि किं च गच्छतीमांस्तल्लोकान्गच्छतीमऽ उ लोकाऽ एषोऽग्निश्चितस्तस्माद्गौरिति ब्रूयात् ॥ ३५ ॥

( तु ) तदाहुः । कस्मै कामायाग्निश्चीयतऽइति सुपर्णो मा भूत्वा दिवं वहादित्यु हैकऽआहुर्न तथा विद्यादेतद्वै रूपं कृत्वा प्राणाः प्रजापतिरभवन्नेतद्रूपं कृत्वा प्रजापतिर्देवानसृजतैतद्रूपं कृत्वा देवाऽ अमृताऽ अभवंस्तद्यद्वैतेन प्राणाऽ अभवन्यत्प्रजापतिर्यद्देवास्तद्वैतेन भवति ॥ ३६ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ६-१-२ ॥ ( १. २. ) ॥

---

अथो द्वाविति ब्रूयात्—अवीऽइति—इयं चासौ च । इमे हीमाः सर्वाः प्रजा अवतः । यन्मृद्—इयं तत् । यदापः—असौ तत् । मृच्चापश्चेष्टका भवन्ति । तस्माद्द्वाविति ब्रूयात् ॥ ३४ ॥

अथो गौरिति ब्रूयात् । इमे वै लोका गौः । यद्धि किंच गच्छति—इमांस्तल्लोकान्गच्छति । इमऽउ लोकाः—एषोऽग्निः । तस्माद्गौरिति ब्रूयात् ॥ ३५ ॥

तदाहुः-कस्मै कामायाग्निश्चीयतऽइति । सुपर्णो मा भूत्वा दिवं वहादित्यु हैकऽआहुः । न तथा विद्यात् । एतद्वै रूपं कृत्वा प्राणाः प्रजापतिरभवन् । एतद्रूपं कृत्वा प्रजापतिर्देवानसृजत, एतद्रूपं कृत्वा देवा अमृता अभवन् । तद्यद्वैतेन प्राणा अभवन्, यत् प्रजापतिः, यद्देवाः—तद्वैतेन भवति॥३६॥

---

यथा मृत्तिका इष्टकासाधनम्, एवमापोऽपि; तासां पशुत्वमाह—अथो द्वाविति ब्रूयादिति । अथवा 'द्वौ' अविनामानौ पशू ' इति ' ' ब्रूयात् ' । अविशब्दार्थं निरूपयति—इयञ्चासौ चेति । ' इयं ' भूमिरेकोऽविः ' असौ ' द्युलोकोऽपरोऽविः; सस्यवृष्टिभ्यां भूमिद्युलोकयोः सर्वपोषकत्वात् अवित्वम् । मृत्तिका इयं भूमिः, आपोऽसौ द्युलोकः; ततो भवनात् मृज्जलसम्पाद्या इष्टकाः अतो द्वाववी इति प्रतिवदेत् । अत्र मृज्जलयोरविशब्दवाच्यत्वात् तयोर्लोकद्वयात्मकत्वं सिद्धमित्यर्थः ॥ ३४ ॥

पशुद्वित्वप्रतिवचनेन लोकद्वयात्मकेष्टकचितस्याग्नेः सर्वलोकात्मकत्वमाह—अथो गौरिति प्रतिब्रूयादिति । इमे वै लोका गौरिति । ' यद्धि किञ्च '—इत्यादिना गोत्वोपपादनम् । सर्वैर्गम्यमात्वेन इमे लोका गौः । कर्मार्थे गमेर्डोः प्रत्ययः ( पा. उ. सू. २२९ ) । यतः चीयमानोऽग्निः सर्वलोकात्मकः, स चैकः तस्माद् गौरेकः पशुरिति प्रतिवदेत् ॥ ३५ ॥

अग्निचयनस्य प्रजापतिभवनमेव न प्रयोजनमिति विवक्षुः पूर्वं प्रयोजनं पृच्छति—तदाहुरिति । ' कस्मै ' ' कामाय ' प्रयोजनाय ' अग्निः ' ' चीयते ' इति फलप्रश्नः । तत्र फलान्तरं पूर्वपक्षयति—सुपर्ण इति ।

प्रजापतिर्वाऽइदमग्रऽआसीत् । ( दे ) एक एव सोऽकामयत स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानादापोऽसृज्यन्त तस्मात्पुरुषात्तप्तादापो जायन्ते ॥ १ ॥

( न्तऽ ) आपोऽब्रुवन् । ( न्क ) क्व वयं भवामेति तप्यध्वमित्यब्रवीत्ता ऽअतप्यन्त ताः फेनमसृजन्त तस्मादपां तप्तानां फेनो जायते ॥ २ ॥

फेनोऽब्रवीत् । ( त्का ) क्वाहं भवानीति तप्यस्वेत्यब्रवीत्सोऽतप्यत स मृदमसृजतैतद्वै फेनस्तप्यते यदप्स्वावेष्टमानः प्लवते स यदोपहन्यते मृदेव भवति ॥ ३ ॥

---

प्रजापतिर्वाऽइदमग्रऽआसीत्—एक एव सोऽकामयत—स्यां प्रजायेयेति । सोऽश्राम्यत् । स तपोऽतप्यत । तस्माच्छ्रान्तात्तेपानादापोऽसृज्यन्त । तस्मात्पुरुषात्तप्तादापो जायन्ते ॥ १ ॥

आपोऽब्रुवन्—क्व वयं भवामेति । तप्यध्वमित्यब्रवीत् । ता अतप्यन्त । ताः फेनमसृजन्त । तस्मादपां तप्तानां फेनो जायते ॥ २ ॥

फेनोऽब्रवीत्—क्वाहं भवानीति । तप्यस्वेत्यब्रवीत् । सोऽतप्यत । स मृदमसृजत । एतद्वै फेनस्तप्यते—यदप्स्वावेष्टमानः प्लवते । स यदोपहन्यते—मृदेव भवति ॥ ३ ॥

---

चीयमानोऽग्निः 'सुपर्णः' पक्षी भूत्वा । अग्नेः पक्षिरूपत्वं द्वितीयब्राह्मणे समाम्नातम् ( श. प. ।६।१।२।१ ) । 'मा' मां चितवन्तं यजमानं 'दिवं' स्वर्गं 'वहात्' प्रापयेत् 'इति' केषाञ्चिन्मतं तन्निराकरोति—न तथेति । 'एतद्रूपं' पक्षिरूपं 'कृत्वा' सप्त 'प्राणाः' प्रजापत्यात्मना सम्पन्नाः । 'प्रजापतिः' अपि तद्रूपधारी 'देवान्' सृष्टवान् । तेऽपि तदात्मना अमृतत्वं प्राप्नुवन् तस्मात् प्राणसम्पादितप्रजापतिभवनमेव चयनस्य फलमित्यर्थः ॥ ३६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ६—१—२ ) ॥

तृतीयब्राह्मणे अन्नादीन्यष्टौ रूपाणि चयनोपयुक्तानि उच्यन्ते । ततः कुमारोत्पत्तिः । तस्याष्टौ नामानि, अष्टौ रूपाणि च "प्रजापतिरग्निरूपाण्यभ्यध्यायत्"—इति अग्रिमब्राह्मणे प्रथमकण्डिकायां वक्ष्यमाणपशुविधानोपयोगीनीति मन्तव्यम् । अथवा पुरुषादिपञ्चपशूनुपालभ्य संवत्सरपर्यन्तमुख्याग्निं धारयित्वा चयनाय दीक्षत इति वक्ष्यते । तदर्थमितिहासाख्यानमिति । प्रजापतिर्वा इदमिति । पुरुषात् उदकसृष्टिं लोकप्रसिद्ध्याऽऽह—'तस्मात् पुरुषात् तप्तादापो जायन्ते' इति ॥ १ ॥

आपोऽब्रुवन्निति । प्रजापतिना सृष्टाः 'आपः' 'क्व' प्रदेशे 'वयं' 'भवामः' तिष्ठाम 'इति' प्रजापतिम् 'अब्रुवन्' । ततस्तेन तपनं कुरुतेत्युक्ताः 'अतप्यन्त' । ततः ताः 'फेनं' सृष्टवत्यः ॥ २ ॥

फेनोऽब्रवीदिति । तस्मात् फेनात् मृदुत्पत्तिं समुपपादयति—एतद्वै फेन इति । उदकमध्ये वायुवशेन परिभ्रमणं प्लवनमेव फेनस्य तपःकरणम् । 'स यदा उपहन्यते' फेनः संहतो भवति, तदा मृत्तिकैव भवति ॥ ३ ॥

---

१—परस्मिन्ब्राह्मणे इति बोध्यम् ।

मृदब्रवीत् । ( त्का ) क्काहं भवानीति तुप्यस्वेत्यब्रवीत्साऽतप्यत सा सिकता ऽअसृजतैतद्वै मृत्तप्यते यदेनां विकृषन्ति तस्माद्यद्यपि सुमार्त्स्नं विकृषन्ति सैकतमिवैव भवत्येतावन्नु तद्यत्क्काहं भवानि क्काहं भवानीति ॥ ४

सिकताभ्यः शर्कराऽमसृजत । तस्मात्सिकताः शर्करैवान्ततो भवति शर्कराया ऽअश्मानं तस्माच्छर्कराश्मैवान्ततो भवत्यश्मनोऽयस्तस्मादश्मनोऽयो धमन्त्ययसो हिरण्यं तस्मादयो बहुध्मातं᳭ हिरण्यसंकाशमिवैव भवति ॥ ५ ॥

तद्यदसृज्यताक्षरत् । ( त्त ) तद्यदक्षरत्तस्मादक्षरं यदष्टौ कृत्वोऽक्षरत्सैवाष्टाक्षरा गायत्र्यभवत् ॥ ६ ॥

---

मृदब्रवीत्—क्काहं भवानीति । तप्यस्वेत्यब्रवीत् । साऽतप्यत । सा सिकता असृजत । एतद्वै मृत्तप्यते—यदेनां विकृषन्ति । तस्माद्यद्यपि सुमार्त्स्नं विकृषन्ति—सैकतमिवैव भवति । एतावन्नु तद्—यत् क्काहं भवानि, क्काहं भवानीति ॥ ४ ॥

सिकताभ्यः शर्करामसृजत । तस्मात् सिकताः शर्करैवान्ततो भवति । शर्कराया अश्मानम् । तस्माच्छर्कराऽश्मैवान्ततो भवति । अश्मनोऽयः । तस्मादश्मनोऽयो धमन्ति । अयसो हिरण्यम् । तस्मादयो बहुध्मातं हिरण्यसङ्काशमिवैव भवति ॥ ५ ॥

तद् यदसृज्यत—अक्षरत् तत् । यदक्षरत्—तस्मादक्षरम् । यदष्टौ कृत्वोऽक्षरत्—सैवाष्टाक्षरा गायत्र्यभवत् ॥ ६ ॥

---

मृदब्रवीदिति । मृत्तिकायाः सिकताः 'विकृषन्ति' भूमिकर्षणमेव मृदस्तपः इत्यर्थः । 'यद्यपि सुमार्त्स्नं विकृषन्ति' यथा मृत्तिका चूर्णीकृता भवति, तथा विकर्षणेन सा मृत् सिकता भवति ॥ ४ ॥

एतावत्पर्यन्तं "क्काहं भवानि"—इति प्रजापतिं प्रति उदकफेनमृद्भिर्वचनम्, इत उत्तरं नास्ति; अत एव पूर्वत्र त्रये "ताः फेनमसृजन्त"—"स मृदमसृजत"—"सा सिकता असृजत"- इति अबादीनां स्रष्टृत्वमुक्तम् इत उत्तरं तदभावात् "सिकताभ्यः शर्करामसृजत' इत्यादौ प्रजापतेः स्रष्टृत्वमुच्यते ॥

तस्मात् सिकता इति । 'अन्ततः' गमने 'सिकताः शर्करा भवन्ति' । 'अश्मा' पाषाणोऽपि अन्ततः शर्करा भवति । 'तस्मात्' अश्मनः पाषाणात् 'अयः' उत्पादितवान् । अश्मनः पाषाणात् 'अयः' उत्पादितवान् । अश्मनोऽयःकारणत्वमुपपादयति—अश्मनोऽयो धमन्तीति । अयसो हिरण्यत्वं प्रतिपादयति—बहुध्मातं हिरण्यसङ्काशमिति ॥ ५ ॥

भूमेर्गायत्रीत्वमुपपादयितुमाह—तद्यदसृज्यताक्षरदिति । एवमबादिकमुत्तरोत्तरक्रमेण सृष्ट्वा 'अक्षरत्' । तस्मात् क्षरणात् 'अक्षरम्' । 'अक्षरत्'—इति लङ्यडागमे रूपम् । अत्राडागमसाहित्येन अक्षरं सम्पन्नम् । यस्मात् प्रजापतिः 'अष्टौ कृत्वोऽक्षरत्', सैव सङ्ख्यासाम्यादष्टाक्षरा गायत्री सम्पन्ना ॥ ६ ॥

( ड ) अभूद्वाऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संव्वत्सरायादीक्षन्त भूतानां पतिर्गृहपतिरासीदुषाः पत्नी ॥ ७ ॥

तद्यानि तानि भूतानि । ( न्यृ ) ऋतवस्तेऽथ यः स भूतानां पतिः संव्वत्सरः सोऽथ या सोषाः पत्न्यौषसी सा तानीमानि भूतानि च भूतानां च पतिः संव्वत्सरऽउषसि रेतोऽसिञ्चन्त्स संव्वत्सरे कुमारोऽजायत सोऽरोदीत् ॥ ८ ॥

( त्तुं ) तं प्रजापतिरब्रवीत् । ( त्कु ) कुमार किँ रोदिषि यच्छ्रमात्तपसोऽधि जातोऽसीति सोऽब्रवीदनपहतपाप्मा वाऽअस्म्यहितनामा नाम मे धेहीति तस्मात्पुत्रस्य जातस्य नाम कुर्यात्पाप्मानमेवास्य तदपहन्त्यपि द्वितीयमपि तृतीयमभिपूर्व्वमेवास्य तत्पाप्मानमपहन्ति ॥ ९ ॥

---

अभूद्वाऽइयं प्रतिष्ठेति—तद्भूमिरभवत्—तामप्रथयत्—सा पृथिव्यभवत् । तस्यामस्यां—प्रतिष्ठायां—भूतानि च, भूतानां च पतिः—सम्वत्सरायादीक्षन्त । भूतानां पतिर्गृहपतिरासीत्, उषाः पत्नी॥७॥

तद् यानि तानि भूतानि—ऋतवस्ते । अथ यः स भूतानां पतिः—सम्वत्सरः सः । अथ या सोषाः पत्नी—औषसी सा । तानीमानि भूतानि च, भूतानां च पतिः सम्वत्सरऽउषसि रेतोऽसिञ्चन् । स संवत्सरे कुमारोऽजायत । सोऽरोदीत् ॥ ८ ॥

तं प्रजापतिरब्रवीत्—कुमार ! किं रोदिषि । यच्छ्रमात्तपसोऽधिजातोऽसीति । सोऽब्रवीत्—अनपहतपाप्मा वाऽअस्मि—अहितनामा । नाम मे धेहीति । तस्मात्पुत्रस्य जातस्य नाम कुर्यात् । पाप्मानमेवास्य तदपहन्ति । अपि द्वितीयम्, अपि तृतीयम् । अभिपूर्वमेवास्य तत् पाप्मानमपहन्ति ॥ ९ ॥

---

अभूद्वा इयं प्रतिष्ठेतीति । 'इयम्' एव आद्यसृष्टिः सर्वेषां 'प्रतिष्ठा' 'अभूत्' 'इति' भूम्यात्मना सम्पन्ना, तस्या बहुधा प्रथनात् पृथिवीत्वम् । अथ कुमारोत्पत्तिं दर्शयितुमाह—तस्यामस्यां प्रतिष्ठायामिति । 'तस्यां' पृथिव्यां 'भूतानि भूतानां पतिः च' 'संवत्सराय' संवत्सरसाध्याय कर्मणे 'अदीक्षन्त' दीक्षां कृतवन्तः । दीक्षाकरणं यजमानपत्न्योः विहितमिति तौ दर्शयति—भूतानाम्पतिर्गृहपतिरिति । तत्र भूतपतिः 'गृहपतिः' यजमानः 'आसीत्' । 'उषाः' उषोदेवता 'पत्नी' ॥ ७ ॥

भूतादि शब्दानामर्थमाह-तद् यानि तानि भूतान्यृतव इति । यानि भूतानि स्तूयन्ते, तानि ऋतुवीर्याणि, ऋतुपतिः संवत्सरः । "सोषाः पत्नी"—इत्युक्तम् । 'सा' संवत्सरस्य यजमानरूपत्वात् 'औषसी' उषसो भर्त्री देव एव खलु भूयोऽवयवैः सहितः उषोनामपत्नीयुक्तः संवत्सरो यजमानः स्वपत्न्यामुषसि रेतः सिक्तवान्,

तमब्रवीद्रुद्रोऽसीति तद्यदस्य तन्नामाकरोदग्निस्तद्रूपमभवदग्निर्वै रुद्रो यदरोदीत्तस्माद्रुद्रः सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति॥ १०॥ तमब्रवीच्छर्वोऽसीति । तद्यदस्य तन्नामाकरोदापस्तद्रूपमभवन्नापो वै सर्वोऽद्भ्यो हीदꣳ सर्वं जायते सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति ॥ ११ ॥

---

तमब्रवीत्–रुद्रोऽसीति । तद् यदस्य तन्नामाकरोत्–अग्निस्तद्रूपमभवत् । अग्निर्वै रुद्रः । यदरोदीत्–तस्माद्रुद्रः । सोऽब्रवीत्–ज्यायान्वाऽअतोऽस्मि, धेह्येव मे नामेति ॥ १० ॥

तमब्रवीत्-शर्वोऽसीति । तद् यदस्य तन्नामाकरोत्–आपस्तद्रूपमभवन् । आपो वै सर्वः । अद्भ्यो हीदं सर्वं जायते । सोऽब्रवीत्–ज्यायान्वाऽअतोऽस्मि, धेह्येव मे नामेति ॥ ११ ॥

---

तत् सिक्तं रेतः संवत्सरान्ते कुमारात्मना जातम् । यद्वा संवत्सर इति सप्तम्यन्तं पदम् । संवत्सरपर्यन्तं रेतः सिक्तवान्, रेतस्सेकः सोऽसौ वत्सरः, कुमारोत्पत्तिरेकः, इति वर्षद्वयं जातम्। एतदेवाभिप्रेत्य " द्वयोरित्यु हैक आहुः। संवत्सरे वैतद् रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत "–( २०कं. ) इति वक्ष्यते । उत्पन्नस्य कुमारस्य अष्टौ रूपाणि दर्शयितुमाह–सोऽरोदीत्, तं प्रजापतिरब्रवीदित्यादिना । हे कुमार ! 'श्रमात् जातः' त्वं किमर्थं रोदिषि ?–' इति ' प्रजापतिनोक्ते, स आह–' अहितनामा ' अकृतनामधेयः अत एव ' अनपहतपाप्मा ' ' अस्मि ', अतः पापविमोक्षाय ' मे ' मम नामधेयं कुरु इति । प्रसङ्गात् किञ्चिद् धर्मं दर्शयति–तस्मात् पुत्रस्येति । ' जातस्य पुत्रस्य ' नक्षत्रनाम आश्वयुजः स्वातिः हस्तः इत्यादि ' नाम ' नामकरणं ' कुर्यात् ' तेन तस्य ' पाप्मानमेव ' ' अपहन्ति ' अपहतवान् भवति । पुनः ' द्वितीयं ' व्यावहारिकं माता पुत्रादिनाम करोति । ' तृतीयम् ' आहिताग्निरिति । एवं नामकरणेन ' अस्य ' पुत्रस्य ' पाप्मानम् ' अपहतं कृतवान् भवति ॥ ८ ॥ ९ ॥

एव नामधेयाय प्रार्थितवतः कुमारस्य रुद्र-शर्वादीन्यष्टौ नामानि प्रदर्शयिष्यन्ते । अग्नेः रुद्रात्मकत्वात् तदुचिता अष्टौ मूर्तयो वक्तव्याः । रुद्रस्य हि पृथिव्यप्तेजोवाय्वाकाशसूर्यचन्द्रयजमानाख्या अष्टौ मूर्तयः सन्ति, भवादिनामानि च ता एव अग्नेः एष्वपि निरूपयिष्यन्ते ॥

तत्र प्रथमं नाम निर्दिशति–तमब्रवीद्रुद्रोऽसि–( अथ. सं. १९ । ९।१०।११ तै. ब्रा. ३।१ । २ । १ ) इति। अग्निरेव रुद्रनामभागभवदित्यर्थः । यद्वा ' अग्निस्तद्रूपमभवत् ' रुद्रस्वरूपोऽभवत्–रुद्रनामव्यपदेश्योऽग्निरित्यर्थः । अग्ने रुद्रत्वमुपपादयति–यदरोदीदिति। अनेन तेजोमूर्त्तिरुक्तेति मन्तव्यम् । ' रुद्रः ' रुद्रनामा ' सः ' कुमारः प्रजापतिम् ' अब्रवीत् '–' अतः ' रुद्रनाम्नः ज्यायान् प्रवृद्धोऽस्मि, तन्ममैतन्नाम नालमित्यर्थः; अतो ' मे नाम ' अन्यद् ' धेहि ' कुर्वेवेति ॥ १० ॥

तमब्रवीत् शर्वोऽसि ( अथ. सं. १९ । ९ । ९ । ४ ) इति। तस्य शर्व इति द्वितीयं नाम, तस्य असौ

---

१–" अग्निं हृदयाग्रेणाशनिं हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना ॥ शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं देवं वनिष्ठुना " वा. सं.. ३९ । ८ इत्यत्रेति बोध्यम् ।

तुमब्रवीत्पशुपतिरसीति । तद्युदस्य तन्नामाकरोदोषधयस्तद्रूपमभवन्नो षधयो वै पशुपतिस्तस्माद्यदा पशवऽ ओषधीर्लभन्तेऽथ पतीयन्ति सो ऽब्रवीज्ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति ॥ १२ ॥

तुमब्रवीदुग्रोऽसीति । तद्युदस्य तन्नामाकरोद्वायुस्तद्रूपमभवद्वायुर्वा ऽउग्रस्तस्माद्यदा बुलवद्वात्युग्रो वातीत्याहुः सोऽब्रवीज्ज्यायान्वाऽअतो ऽस्मि धेह्येव मे नामेति ॥ १३ ॥

तुमब्रवीदशनिरसीति । तद्युदस्य तन्नामाकरोद्विद्युत्तद्रूपमभवद्विद्युद्वाऽ- अशनिस्तस्माद्यं विद्युद्धन्त्यशनिरबधीदित्याहुः सोऽब्रवीज्ज्यायान्वा- ऽअतोऽस्मि धेह्येव मे नामेति ॥ १४ ॥

---

तमब्रवीत्–पशुपतिरसीति । तद्यदस्य तन्नामाकरोत्–ओषधयस्तद्रूपमभवन् । ओषधयो वै पशु, पतिः । तस्माद्यदा पशव ओषधीर्लभन्ते–अथ पतीयन्ति । सोऽब्रवीत्–ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति ॥ १२ ॥

तमब्रवीत्–उग्रोऽसि । तद्यदस्य तन्नामाकरोद् । वायुस्तद्रूपमभवद् । वायुर्वाऽउग्रः । तस्माद्यदा बलवद्वाति–उग्रो वातीत्याहुः । सोऽब्रवीत्–ज्यायान्वाऽअतोऽस्मि, धेह्येव मे नामेति ॥ १३ ॥

तमब्रवीत्–अशनिरसीति । तद्यदस्य तन्नामाकरोद्–विद्युत्तद्रूपमभवत् । विद्युद्वाऽअशनिः । तस्मायं विद्युद्धन्ति–अशनिरवधीदित्याहुः। सोऽब्रवीत्–ज्यायान्वाऽअतोऽस्मि, धेह्येव मे नामेति॥ १४॥

---

रूपम् । अपां सर्वत्वमुपपादयति–आपो वै सर्वं इति । 'वै'–शब्दद्योतितां युक्तिमाह–अद्भ्यो हीदमिति । अद्भ्यः सर्वं जगदुत्पद्यते । "आपो वा इदं सर्वं विश्वा भूतानि"–"आपो वा इदमग्रे सलिलमासीत्"–( तै. सं. ५ । ६ । ४ ) इति । अतो जलात्मत्वं च "सलिलं सर्वमा इदम्"–( ऋ. सं. १० । १२९ । ३ )– इत्यत्र श्रुतम् । ज्यायान् वा अतोऽस्मि धेह्येव मे नामेतीति । तस्य प्रतिनामकरणमाम्नातम् एकस्य पुरुषस्य एकपदमनेकनामायुक्तमिति । पूर्वंपूर्वं नाम परिज्ञाय ततोऽप्यधिकं स्वसमवेतं गुणविशेषमाविष्कर्तुमन्यन्नामधेयं कर्त्तव्यमित्येव दर्शयितुमिति मन्तव्यम् ॥ ११ ॥

तमब्रवीत् पशुपतिरसीतीति ( अ. सं. १५ । ५ । ७ । ६ ) । तद्यदस्येत्यादि । पशुपतिनामवाच्याः 'ओषधयः' 'अभवन्' ओषधीनां पशुपोषकत्वात् पशुपतित्वं युक्तम् । प्रकारान्तरेण पशुपतित्वमोषधीनां दर्शयति–तस्माद् यदा पशव इति । यदा 'पशवः' 'ओषधीः' 'लभन्ते' अदन्ति, अथ जग्धतृणा पुष्टाः सन्तः पतीयन्ति' कामुकाः पतीनात्मनः कामयन्ते । 'तस्मात्' पशूनां पतीच्छासाधनत्वात् ओषधीनां पशुपतित्वमित्यर्थः । अनेनाग्नेर्भूरूपत्वमुक्तमित्यनुसन्धेयम् ॥ १२ ॥

तमब्रवीदुग्रोऽसीतीति ( अथ० सं. १५ । ५ । ९ । ८ ) उग्रशब्दवाच्यो वायुरित्यर्थः । वायोरुग्रत्वं लोकप्रसिद्ध्योपपादयति–यदा बलवद्वातीति । "वा गतिगन्धनयोः" ( धा० पा० अ. प. ४० ) ॥ १३ ॥

तमब्रवीदशनिरसीतीति । विद्युदशन्योः पर्यायत्वमाह–तस्मायं विद्युदिति । आकाशे विद्युत्पतनाद् विद्युच्छब्देनाकाशरूपमिति मन्तव्यम् ॥ १४ ॥

तमब्रवीद्भवोऽसीति । तद्यदस्य तन्नामाकरोत्पर्जन्यस्तद्रूपमभवत्पर्जन्यो वै भवः पर्जन्याद्धीदꣳ सर्वं भवति सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति ॥ १५ ॥

तमब्रवीन्महान्देवोऽसीति । तद्यदस्य तन्नामाकरोच्चन्द्रमास्तद्रूपमभवत्प्रजापतिर्वै चन्द्रमाः प्रजापतिर्वै महान्देवः सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति ॥ १६ ॥

तमब्रवीदीशानोऽसीति । तद्यदस्य तन्नामाकरोदादित्यस्तद्रूपमभवदादित्यो वाऽईशानऽआदित्यो ह्यस्य सर्वस्येष्टे सोऽब्रवीदेतावान्वाऽअस्मि मामेतः परो नाम धा इति ॥ १७ ॥

---

तमब्रवीद्–भवोऽसीति । तद्यदस्य तन्नामाकरोत्–पर्जन्यस्तद्रूपमभवत् । पर्जन्यो वै भवः । पर्जन्याद्धीदं सर्वं भवति । सोऽब्रवीत्–ज्यायान्वाऽअतोऽस्मि; धेह्येव मे नामेति ॥ १५ ॥

तमब्रवीत्–महान्देवोऽसीति । तद् यदस्य तन्नामाकरोत्–चन्द्रमास्तद्रूपमभवत् । प्रजापतिर्वै चन्द्रमाः । प्रजापतिर्वै महान्देवः । सोऽब्रवीत्–ज्यायान्वा अतोऽस्मि, धेह्येव मे नामेति ॥ १६ ॥

तमब्रवीद्–ईशानोऽसीति । तद् यदस्य तन्नामाकरोद्–आदित्यस्तद्रूपमभवत् । आदित्यो वा ऽईशानः । आदित्यो ह्यस्य सर्वस्येष्टे । सोऽब्रवीत्–एतावान्वाऽअस्मि, मामेतः परो नाम धा इति ॥ १७ ॥

---

तमब्रवीद् भवोऽसीतीति ( अथ सं. १५ । ५ । २ । १ ) । पर्जन्यस्तद्रूपमिति । भवशब्दवाच्यः पर्जन्यः । तस्य भवत्वमाह–पर्जन्याद्धीदमिति । अनेन यजमानरूपत्वमुक्तम् । तस्य हि सर्वकामभावकत्वाद् भवत्वम् ॥ १५ ॥

तमब्रवीत् महान् देवोऽसीतीति ( अथ. सं. १५ । ५ । १३ । १२ ) । प्रजापतिर्वै चन्द्रमा इति । चन्द्रमा मनसो जातः, मनसः प्रजापतिदेवत्वम्, ततः कार्यकारणयोरभेदोपचारादेवमुक्तम् । प्रजापतेर्महादेववाच्यत्वं सर्वलोकस्रष्टृत्वात् ॥ १६ ॥

तमब्रवीदीशानोऽसीतीति ( अथ. सं. १५ । ५ । १५ । १४ ) । आदित्यस्य ईशानशब्दवाच्यत्वमाह–आदित्यो ह्यस्य सर्वस्येति । ईष्ट इतीशानः । "पूर्वमग्निना धेह्येव मे नाम"–इति प्रार्थित एव प्रजापतिरस्याष्टौ नामानि व्यदधात्, अतः परमग्निः स्वयमेव एतैर्नामभिः स्वकीयगुणस्य कार्त्स्न्येन प्रतिपादितत्वाभिप्रायेण नामान्तरकरणं निषेधति–सोऽब्रवीदेतावान्वा अस्मीति । मा मेतः परो नाम धा इति । 'इतः' एभ्योऽष्टभ्यो नामभ्यः 'परः' परस्तात् 'नाम' 'मा मा धाः' मा कुरु 'इति' ॥ १७ ॥

तान्येतान्यष्टावग्निरूपाणि । कुमारो नवमः सैवाग्नेस्त्रिवृत्ता ॥ १८ ॥
यद्वेवाष्टावग्निरूपाणि । ( ण्य ) अष्टाक्षरा गायत्री तस्मादाहुर्गायत्रोऽग्नि-रिति सोऽयं कुमारो रूपाण्यनुप्राविशन्न वाऽग्निं कुमारमिव पश्यन्त्येतान्ये-वास्य रूपाणि पश्यन्त्येतानि हि रूपाण्यनुप्राविशत ॥ १९ ॥

( तु ) तमेतꣳ संवत्सरऽएव चिनुयात् । ( त्सं ) संवत्सरेऽनुब्रूयाद्द्वयोरित्यु हैकऽआहुः संवत्सरं वै तद्रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत तस्मा-द्द्वयोरेव चिनुयाद्द्वयोरनुब्रूयादिति संवत्सरे त्वेव चिनुयात्संवत्सरेऽनु-ब्रूयाद्यद्वाव रेतः सिक्तं तदेव जायते तत्ततो विक्रियमाणमेव वर्धमानꣳ शेते तस्मात्संवत्सरऽएव चिनुयात्संवत्सरेऽनुब्रूयात्तस्य चितस्य नाम

---

तान्येतान्यष्टावग्निरूपाणि, कुमारो नवमः—सैवाग्नेस्त्रिवृत्ता ॥ १८ ॥
यद्वेवाष्टावग्निरूपाणि—अष्टाक्षरा गायत्री—तस्मादाहुः—गायत्रोऽग्निरिति । सोऽयं कुमारो रूपाण्य-नुप्राविशत् । न वा अग्निं कुमारमिव पश्यन्ति—एतान्येवास्य रूपाणि पश्यन्ति । एतानि हि रूपा-ण्यनु प्राविशत् ॥ १९ ॥

तमेतं सम्वत्सरऽएव चिनुयात्, सम्वत्सरेऽनुब्रूयात् । द्वयोरित्यु हैकऽआहुः । सम्वत्सरे वै तद्रेतोऽसिञ्चन्, स सम्वत्सरे कुमारोऽजायत । तस्माद्द्वयोरेव चिनुयात्, द्वयोरनुब्रूयादिति । सम्व-त्सरे त्वेव चिनुयात्, सम्वत्सरेऽनुब्रूयाद् । यद्वाव रेतः सिक्तम्—तदेव जायते । तत् ततो विक्रिय-माणमेव वर्धमानं शेते । तस्मात्सम्वत्सरऽएव चिनुयात्, सम्वत्सरेऽनुब्रूयात् । तस्य चितस्य नाम

---

तान्येतान्यष्टावग्निरूपाणीति । कुमारो नवम इति । रुद्रादीन्यष्टौ नामानि, रेतोनामवाच्यः 'कुमारो नवमः' नवसङ्ख्यापूरक इत्यर्थः । उक्तां नवसङ्ख्यां त्रिवृदात्मना प्रशंसति—सैवाग्नेस्त्रिवृत्तेति । 'सा' पूर्वमुक्ता नवमसङ्ख्यैव 'अग्नेः' 'त्रिवृत्ता' त्रिवृत्त्वं नाम । उक्तरीत्या अग्नेर्नवधा विभेदः । उत्तरत्र "त्रिवृदग्निः"— इति व्यवहरिष्यते, तत्र सर्वत्र उक्तनवसङ्ख्यावत्त्वेन त्रिवृत्त्वं सम्पन्नमिति मन्तव्यम् ॥ १८ ॥
नामगतामष्टसङ्ख्यां गायत्र्यात्मना प्रशंसति—यद्वेवाष्टावग्निरूपाणीति । अतोऽष्टनामवाच्यरूपाष्टकोपेतत्वाद-ग्नेरपि गायत्रत्वं सम्पन्नमित्यर्थः । सोऽयं कुमारो रूपाणीति । 'कुमारः' अग्निः स्वनामभिः रुद्रशर्वादिभिर-ष्टभिः प्रतिपाद्यानि, अग्न्युदकौषध्यादीनि अष्टौ रूपाणि अनुप्रविष्टवान् । स कुमारोऽग्निः तत्तद्रूपेभ्यः पृथग्भूतो न दृश्यत इति तात्पर्यम् ॥ १९ ॥

अथ संवत्सरपर्यन्तमुखाग्निधारणं कर्त्तव्यमिति दर्शयितुमाह—तमेतꣳ संवत्सर एव चिनुयादित्यादि । 'संवत्सर एव' संवत्सरपर्यन्तं स्थित्वेत्यर्थः । प्रसङ्गात् कञ्चिद्धर्मं दर्शयति—संवत्सरेऽनुब्रूयादिति । वर्षपर्यन्तं गुरुसन्निधौ स्थित्वा अधीयत इति । "संवत्सरवासिने प्रब्रूयात्"—( ऐ. ब्रा. ९ । ३ । ३ । ब्रा. ४ ) इत्यै-तरेयकम् । तत्र पक्षान्तरं दर्शयति—द्वयोरित्यु हैक आहुरिति । केचित् संवत्सरपर्यन्तमुख्यमग्निं धारयित्वा, ततः संवत्सरे चयनं कर्त्तव्यमित्याहुः । अनुवचनञ्च तथा करणीयमिति वदन्ति । तत्रोपपत्तिं दर्शयति—संवत्सरे

करोति पाप्मानुमेवास्य तदुपहन्ति चित्रनामानं करोति चित्रोऽसीति सुर्व्वाणि हि चित्राण्यग्निः ॥ २० ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ ६-१-३ ॥ ( १.३. )

इति प्रथमोऽध्यायः समाप्तः ॥ ६-१ ॥

---

करोति-पाप्मानमेवास्य तदपहन्ति । चित्रनामानं करोति-चित्रोऽसि-इति । सर्वाणि हि चित्राण्यग्निः ॥ २० ॥

---

वै तद्वेत इति । पूर्वं-'संवत्सरे' उषसि । रेतो सिञ्चन् 'स संवत्सरे कुमारोऽजायत' इति रेतस्सेकस्यैको वत्सरः, कुमारोत्पत्तावेक इति वर्षद्वयस्य समाम्नातत्वादिति । प्रथमं पक्षं सहेतुकं सिद्धान्तयति-संवत्सरे त्वेव चिनुयादिति । 'तु'-शब्दो वर्षद्वयपक्षनिवृत्त्यर्थः । रेतस्सेकानन्तरमेव कललबुद्बुदपिण्डादिक्रमेण वर्षात् प्रागेव कुमारोत्पत्तेरित्यर्थः ॥

तस्य चितस्य नामेति । चयनसम्बन्धाच्चित्रनाम सम्पन्नमिति तात्पर्यम् । चित्रत्वमग्नेरुपपादयति-सर्वाणि हि चित्राण्यग्निरिति । अग्न्युदकौषध्यादीनां रूपाणामग्न्यात्मकत्वात् तस्य चित्रत्वमिति । किञ्च यद्यत् चित्रवर्णं तत्तत् सर्वमग्निरेव; शुक्लभास्वररूपत्वात् तस्येति ॥ २० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ६-१-३ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये षष्ठे काण्डे प्रथमोऽध्यायः समाप्तः ॥ ६-१ ॥

---

१-"शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च तत् कथमिदं शरीरं परं संयम्यते ? सौम्यो भवति, एकरात्रोषितं कललं भवति, पञ्चरात्राद् बुद्बुदाः, सप्तरात्रात् पेशी, द्विसप्तरात्रादर्बुदः, पञ्चविंशतिरात्रः स्वस्थितो घनो भवति, मासमात्रात् कठिनो भवति, द्विमासाभ्यन्तरे शिरः सम्पद्यते मासत्रयेण ग्रीवाव्यादेशो, मासचतुष्केण त्वग्व्यदेशः, पञ्चमे मासे नखरोमव्यादेशः, षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति, सप्तमे चलनसमर्थो भवति, अष्टमे बुद्ध्याऽध्यवस्यति, नवमे सर्वाङ्गसम्पूर्णो भवति, दशमे मासे प्रजायते"-इत्यादि । निरु० १४-६ ।

# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।
# प्रथम प्रपाठके च चतुर्थं ब्राह्मणम् ।

प्र॒जाप॑तिर॒ग्निरू॒पाण्य॒भ्य॑ध्यायत् । (त्सु) स॒ यो॑ऽयं कु॑मा॒रो रू॒पाण्य॑नुप्र॒वि॑ष्ट आ॒सी॑त्तम॒न्वै॑च्छ॒त्सो॑ऽग्नि॒र॑वे॒द॒नु वै मा॑ पि॒ता प्र॒जाप॑तिरि॒च्छाति॒ हन्त॑ त॒द्रू॒पम॒सा॑नि॒ य॒न्म॑ऽए॒ष न॒ वे॒दे॒ति ॥ १ ॥

स॒ ए॒तान्प॒ञ्च प॒शू॒नप॑श्यत् । (त्पु) पु॒रु॑षम॒श्वं गाम॒विम॒जं य॒द॒प॑श्य॒त्त॒स्मा॑दे॒ते प॒श॒वः ॥ २ ॥

---

प्रजापतिरग्निरूपाण्यभ्यध्यायत् । स योऽयं कुमारो रूपाण्यनुप्रविष्ट आसीत्–तमन्वैच्छत् । सोऽग्निरवेद्–अनु वै मा पिता प्रजापतिरिच्छति, हन्त तद्रूपमसानि–यन्मऽएष न वेदेति ॥ १ ॥

स एतान्पञ्च पशूनपश्यत्–पुरुषम्, अश्वम्, गाम्, अविम्, अजम् । यदपश्यत्–तस्मादेते पशवः ॥ २ ॥

---

यस्य निः श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥ निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ द्वितीयाध्याये प्रथममग्निभ्यः कामाय पुरुषाश्वगोऽव्यजात्मकपञ्चपश्वालम्भपक्षः । तत्र चतुर्विंशतिः सामिधेन्यः, वैश्वानरः पशुपुरोडाशः, कामपदयुक्ता याज्यानुवाक्याः प्रदर्श्यन्ते । अथ वायव्यैकपश्वालम्भपक्षः । तत्र सप्तदशसामिधेन्यः, अत्रापि प्राजापत्यः पशुपुरोडाशः, शुक्रपदयुक्ता याज्यानुवाक्याश्च विधास्यन्ते । पक्षद्वयसाधारणमन्यदाप्रीप्रभृतिकं वक्ष्यते । एतत् सर्वं कात्यायनेन सूत्रितम् ;–" चिकीर्षमाणः उत्तरस्यां फाल्गुन्यां पौर्णमासेनेष्ट्वा पञ्च पशूनालभतेऽदक्षिणान् "–( का. श्रौ. सू. १६ । ९ ) इत्युपक्रम्य । " अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजान् "–( का. श्रौ. सू. १६ । ८ ) इति । " समिध्यमानसमिद्धवत्यन्तरे समास्त्वाग्न इति ( वा. सं. २७ । १ ) नव दधाति, आप्रियो द्वादशोदूर्ध्वा अस्येति "–( का. श्रौ. सू. १६।११।१२ ) इति । " एकादशान्ते शासप्रैषादि करोति, परिवृते पुरुषसञ्ज्ञपनम् "–( का. श्रौ. सू. १६ । १३, १४ ) इति, " वैश्वानरः पशुपुरोडाश उपांशु पशुदेवता च, आग्नेय्यो याज्यानुवाक्याः कामवत्यः "–( का. श्रौ. सू. १६ । २९-२७ ) इति । " अनालम्भ्यैतान, श्यामतूपरो वा प्राजापत्यः, षड् दध्यात्, ( का. श्रौ.– सू. १६ । ३२–३४ ) वायवे वा नियुत्वते श्वेतलप्सुदी द्वे दध्यात्, प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः, कद्वत्योः, याज्यानुवाक्याः प्राजापत्यस्य, शुक्रवत्यो वायव्यस्य, वपाया वा, तुल्यमन्यत् सर्वेषु "– ( का. श्रौ. सू. १६ । ३८--४३ ) इति । तत्र प्रथमं पञ्चपश्वालम्भपक्षं विधातुं प्रजापतिवृत्तान्तं प्रस्तौति–प्रजापतिरग्निरूपाण्यभ्यध्यायदित्यादिना । पूर्वं प्रजापतिरग्नेरुक्तान्यष्टौ रूपाण्यभिध्यातवान्, कुमाररूपात्मना परिणतम् अन्विवेष । स कुमारोऽग्निः मां पिता प्रजापतिरन्विच्छतीति ज्ञातवान् । ' हन्त ' इति प्रश्ने । ' मे ' मम ' यद् ' रूपम् 'एष प्रजापति.' ' न वेद ' न जानीयात्, ' तद् रूपम् ' ' असानि ' भवानीति ॥ १ ॥

एवं ज्ञात्वा,–स एतान् पञ्च पशूनपश्यदिति । तदात्मना परिणमितुमितिशेषः । पश्यतियोगात् ' पशु '–

स एतान्पञ्च पशून्प्राविशत् । (त्सु) स एते पञ्च पशवोऽभवन्तमु वै प्रजापतिरन्वैच्छत् ॥ ३ ॥

( त्सु ) स एतान्पञ्च पशूनपश्यत् । ( द्य ) यदपश्यत्तस्मादेते पशवस्तेष्वेतमपश्यत्तस्माद्वेवैते पशवः ॥ ४ ॥

स ऐक्षत । (ते) इमे वाऽअग्निरिमानेवात्मानमभिसंस्करवै यथा वाऽअग्निः समिद्धो दीप्यतऽएवमेषां चक्षुर्दीप्यते यथाऽग्नेर्धूम उदयतऽएवमेषामूष्मोदयते यथाग्निरभ्याहितं दहत्येवं बप्सति यथाग्नेर्भस्म सीदत्येवमेषां पुरीषꣳ सीदतीमे वाऽअग्निरिमानेवात्मानमभिसंस्करवाऽइति तान्नाना देवताभ्य आलिप्सत वैश्वकर्मणं पुरुषं वारुणमश्वमैन्द्रमृषभं त्वाष्ट्रमविमाग्नेयमजम् ॥ ५ ॥

---

स एतान्पञ्च पशून् प्राविशत् । स एते पञ्च पशवोऽभवन् । तमु वै प्रजापतिरन्वैच्छत् ॥ ३ ॥

स एतान्पञ्च पशूनपश्यत् । यदपश्यत्–तस्मादेते पशवः । तेष्वेतमपश्यत्–तस्माद्वेवैते पशवः ॥ ४ ॥

स ऐक्षत–इमे वाऽअग्निः, इमानेवात्मानमभिसंस्करवै । यथा वाऽअग्निः समिद्धो दीप्यते–एवमेषां चक्षुर्दीप्यते । यथाग्नेर्धूम उदयते–एवमेषामूष्मोदयते । यथाग्निरभ्याहितं दहतिऽएवं बप्सति । यथाऽग्नेर्भस्म सीदति–एवमेषां पुरीषं सीदति । इमे वाऽअग्निः । इमानेवात्मानमभिसंस्करवाऽइति । तान्नाना देवताभ्य आलिप्सत–वैश्वकर्मणं पुरुषम्, वारुणमश्वम्, ऐन्द्रमृषभम्–त्वाष्ट्रमविम्, आग्नेयमजम् ॥ ५ ॥

---

शब्दः सम्पन्न इति दर्शयति–यदपश्यत् तस्मादेते पशव इति । पश्यतिः प्रकृत्यन्तरमस्तीति कृत्वा पशुशब्दो निरुक्तः ॥ २ ॥ ३ ॥

**स एतानिति** । 'तेषु' पशुषु तादात्म्येन प्रविष्टम् 'एतम्' अग्निं प्रजापतिरप्यद्राक्षीत् । पश्यन्त्येष्वग्निमित्येतस्य देवनिमित्तादधिकरणसाधनः पशुशब्द इत्याह–**तस्माद्वेवैते पशव इति** ॥ ४ ॥

**स ऐक्षतेति** । 'सः' प्रजापतिः 'ऐक्षत' स्वमतं विचारितवान् । तदेव दर्शयति–**इमे वा अग्निरिति** । 'अग्निः' 'इमे वै' पुरुषादिपञ्चपशव एव, ततः पृथक् दृश्यन्त इत्यर्थः । 'इमानेव' अग्न्यात्मकानेतान् पशूनेव आत्मानमभिलक्ष्य 'संस्करवै' पशुभिः स्वरूपैः स्वमात्मानं संस्करिष्य इति पर्यालोचितवान् । पशूनामग्न्यात्मकत्वं विशदयति–**यथा वा अग्निरिति** । अग्नेर्यथा दीपनधूमाभ्याहितदाहनभस्मसञ्छादनादयो धर्माः, ते पशुष्वपि दृश्यन्ते इत्यतस्तेषां तदात्मकत्वम् । 'चक्षुर्दीप्यते' प्रकाशयुक्तं रोचते, 'ऊष्मः' श्वासो धूमः, 'अभ्याहितं' पुरः स्थितं वस्तु 'दहति, 'एवं' 'बप्सति' भक्षयन्ति पशवः । "भस् 'भर्त्सनदीप्त्योः" ( धा. पा. जु. प. १८ ) लटि प्रथमपुरुषबहुवचने श्लौ द्विर्वचने कृते "घसिभसोर्हलि च–( पा. सू. ६ । ४ । १०० ) इति । उपधालोपे रूपमिदम् । 'सीदति' अवसन्नं भवति । अग्निभ्यः कामाय पशवः इति ।

(५ँ) स ऐक्षत । नाना वाऽइदं देवताभ्य आलिप्सेऽग्नेर्वहं ५ँ रूपाणि कामये हन्तैनानग्निभ्यः कामायालभाऽइति तानग्निभ्यः कामायालभत तद्यदग्निभ्य इति बहूनि ह्यग्निरूपाण्यभ्युध्यायदथ यत्कामायेति कामेन ह्यालभत तानाप्रीतान्पर्यग्निकृतानुदीचो नीत्वा समज्ञपयत् ॥ ६ ॥

(त्सु) स ऐक्षत । या वै श्रीरभ्युध्यासिषमिमास्ताः शीर्षसु हन्त शीर्षाण्येवोपदधा इति स शीर्षाण्येवोत्कृत्योपाधत्ताथेतराणि कुसिन्धान्यप्सु प्राप्लावयदजेन यज्ञ५ँ समस्थापयन्नेन्मे यज्ञो विकृष्टोऽसदित्यात्मा वै यज्ञो नेन्मेऽयमात्मा विकृष्टोऽसदित्येतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याग्नेरन्तं न पर्यैत् ॥ ७ ॥

---

स ऐक्षत–नाना वाऽइदं देवताभ्य आलिप्से। अग्नेर्वहं रूपाणि कामये–हन्तैनानग्निभ्यः कामायालभाऽइति। तानग्निभ्यः कामायालभत। तद् यदग्निभ्य इति–बहूनि ह्यग्निरूपाण्यभ्यध्यायत्। अथ यत्कामायेति–कामेन ह्यालभत, तानाप्रीतान् पर्यग्निकृतानुदीचो नीत्वा समज्ञपयत् ॥ ६ ॥

स ऐक्षत या वै श्रीरभ्यध्यासिषम्–इमास्ताः शीर्षसु हन्त शीर्षाण्येवोपदधा इति। स शीर्षाण्येवोत्कृत्योपाधत्त। अथेतराणि कुसिन्धान्यप्सु प्राप्लावयत्। अजेन यज्ञं समस्थापयत्। नेन्मे यज्ञो विकृष्टोऽसदिति। आत्मा वै यज्ञः। नेन्मेऽयमात्मा विकृष्टोऽसदिति। एतेन पशुनेष्ट्वा तत् प्रजापतिरपश्यत्–यथैतस्याग्नेरन्तं न पर्य्यैत् ॥ ७ ॥

---

सिद्धान्तयितुं बहुदेवतार्थमालम्भनं पूर्वपक्षयति–तान् नानादेवताभ्य इति। अनूक्तान् पुरुषादीन् पञ्च पशून् 'नानादेवताभ्यः' बहुदेवताभ्य 'आलिप्सत' आलब्धुमैच्छन्। "वैश्वकर्मणं पुरुषम्"–( का. श्रौ.–सू. १६।८। कर्क भाष्ये ) इत्यादिना पञ्चानां पशूनां पृथक्–पृथग्देवतासम्बन्ध उक्तः ॥ ५ ॥

स ऐक्षत नानेति। 'सः' प्रजापतिः एवं विचारितवान्,–किमर्थं? 'नाना' बह्वीभ्यः 'देवताभ्यः' पञ्चभ्यः आलब्धुमिच्छामि? ( 'अग्नेः उ अहम्' इति पदच्छेदः ) अहमु अग्नेरेव 'रूपाणि' कामये 'हन्त' इति साध्यसाधनयोर्वैयधिकरण्यजनिते आश्चर्ये। 'एनान्' पशून् 'कामाय' कामगुणयुक्ताय 'अग्निभ्यः' अग्नये 'आलभे'–'इति' ऐक्षतेत्यन्वयः। कामायाग्निभ्य इति सामानाधिकरण्ये कथमग्निभ्य इति बहुवचनम्? तत्राह–तद् यदग्निभ्य इति। अग्निरूपापेक्षायां बहुवचनम्। 'तान्' अष्टाविति प्रागुक्तम्। आप्रीतानिति। प्रयाजयाज्यादिभिराप्रीभिः पर्यग्निकरणेन च संस्कृतान्, तदनन्तरमेव 'उदीचो नीत्वा' शामित्रप्रदेशं प्रापय्येत्यर्थः। 'संज्ञपनं' नाम मारणम्। मारणार्थं नयेदित्यर्थः ॥ ६ ॥

पशुशीर्षोपधानं विधास्यते, तदर्थं प्रजापतिकर्तृकं तदुपधानं दर्शयति–स ऐक्षत या वै श्रीरिति। द्वितीया

---

१–परिवृते पुरुषसंज्ञपनं। अजस्य शुंधति प्रचरणयोगात्। सर्व्वेषां वाऽविशेषात्। वैश्यः पुरुषो राजन्यो वा। का. श्रौ. सू. १६।१४–१७।

**( त्सु ) सु ऐक्षत । युमिमुमात्मानमप्सु प्रापिप्लवं तमुन्विच्छानीति तमुन्वैच्छत्तद्युदेषामप्सु प्रविद्धानां प्रत्युतिष्ठत्ता अपः सुमभरदुथ युदस्यां तां मृदं तुदुभयँ सम्भृत्य मृदं चापश्चेष्टकामकरोत्तस्मादेतदुभयमिष्टका भवति मृच्चापश्च ॥ ८॥**

**सु ऐक्षत । युदि वाऽइदमित्थमेव सुदात्मानमभिसंस्करिष्ये मुर्त्यः कुण-**

---

स ऐक्षत—यमिममात्मानमप्सु प्रापिप्लवम्—तमन्विच्छानीति । तमन्वैच्छत् । तद् यदेषामप्सु प्रविद्धानां प्रत्यतिष्ठत्—ता अपः समभरत् । अथ यदस्यां—तां मृदम् तदुभयं सम्भृत्य मृदं चापश्च—इष्टकामकरोत् । तस्मादेतदुभयमिष्टका भवति—मृच्चापश्च ॥ ८ ॥

स ऐक्षत—यदि वा—इदमित्थमेव सदात्मानमभि संस्करिष्ये—मर्त्यः कुणपोऽनपहतपाप्मा भवि-

---

बहुवचनान्तम् । अत्र श्रीशब्देन अग्निरूपाणि विवक्षितानि । तानि ' अभ्यध्यासिषम् ' ध्यातवानस्मि । ' ताः ' इमाः श्रियः ' शीर्षसु ' चक्षुराद्याश्रयेषु वर्त्तन्ते । ' हन्त '—इति । हर्षे । अतः शीर्षाण्येवेत्यादि निगदसिद्धम् ।

पशुशरीराणामिष्टकोपकारित्वं वक्ष्यन्नाह—इतराणीति । अजशरीरस्य यज्ञे उपकरिष्यमाणत्वात् ' इतराणि ' पुरुषादीनां चतुर्णां पशूनां ' कुसिन्धानि ' मूर्द्धरहितानि शरीराणि । ' अप्सु ' ' प्राप्लावयत् ' प्रक्षिप्तवान् । "चतुर्णामप्सु कायप्रासनम्"—इति कात्यायनेन च सूत्रितम् । ( का. श्रौ. सू. १६।१९ ) 'अजेन' अजशरीरेण यज्ञं समापितवन्तः । एतेन यज्ञसमाप्तौ कारणमाह—नेन्मे यज्ञ इति । ' मे ' मम ' यज्ञः ' मध्ये 'विकृष्टः' विच्छिन्नः ' नेत् ' नैव ' असत् ' माभूत् ' इति ' । यज्ञविच्छेदे प्रजापतेः किमायातमिति तत्राह—आत्मा वै यज्ञ इति । एतेन पशुना यज्ञसमापने उपपत्तिं दर्शयति—एतेन पशुनेष्ट्वा तत् प्रजापतिरिति । ' यथा ' येन प्रकारेण ' अग्नेः । ' अन्तं न पर्यैत् ' कात्स्न्येन न परिगतो भवेत्, ' तत् ' कर्म ' प्रजापतिः ' 'अपश्यत्' दृष्टवानित्यर्थः । यदि सर्वैः पशुभिर्यजेत, तदानीमेव यज्ञसमाप्तेः सिद्धत्वात् अग्नेरेवान्तं परिप्राप्तवान्, अग्निरूपाणि कात्स्न्येन प्राप्तवान् भवति, तदयुक्तम्; उत्तरत्र कर्त्तव्यस्य सद्भावादिति तात्पर्यम् । उत्तरत्र सर्वैः पशुभिर्यागः पूर्वपक्षयिष्यते—" तद्वैकआहुरत्रैवैतैः सर्वैः पशुभिर्यजेत " इत्यादिना । ( अस्मिन्नेव ब्राह्मणे त्रयोदशायां कण्डिकायाम् । ) यज्ञसमाप्त्यनन्तरं । शिष्टस्य अजपशुशरीरस्य च जले प्रासनं सूत्रितम्—" अजेन चरति, संस्थिते तस्य शेषप्रासनम् का. श्रौ. सू. १६।२१।२२ ) इति ॥ ७ ॥

यदर्थमप्सु पशुचतुष्टयकायप्रासनम्, तदिदानीमाह—स ऐक्षत यमिममात्मानमप्सु प्रापिप्लवमिति । ' आत्मानम् ' पशुदेहानित्यर्थः । ' प्रविद्धानां ' प्रक्षिप्तानाम् ' एषां ' पशूनां ' यत् शरीरगतं रसादिकम् ' अप्सु ' प्रत्यतिष्ठत् ' प्रतिष्ठितम्, ' ता ' ' अपः ' ' समभरत् ' सम्भृतवान्; ' यत् ' च अस्थिमांसादिकम्, ' अस्यां ' पृथिव्यां प्रतिष्ठितम्, ' तां ' ' मृदं ' मृत्तिकां सम्भृतवान्; ' तदुभयम् ' ' अपो मृदञ्च ' 'सम्भृत्य संगृह्य ' इष्टकामकरोत् ॥ ८ ॥

पक्वा इष्टकाश्चेतव्या इति वक्तुमाह—स ऐक्षत यदि वा इदमित्थमेव सदात्मानमभिसंस्करिष्य इति ।

---

१–कंठेषु तृणमंतर्द्धाय शिराःऽस्यादत्ते । का० श्रौ० सू० । १६ । १८ । २–" श्रोणी यदूरू क उ तज्जजान ताभ्यां कुसिन्धं सुदृढं बभूव " इति । अथ० सं० १०-२-३ । ३–ततो मृदिष्टकार्थाऽऽपश्च । का. श्रौ. सू. १६ । २० ।

पोऽनपहतपाप्मा भविष्यामि हन्तैतदग्निना पचानीति तदग्निनाऽपचत्तदेनदमृतमकरोदेतद्धै हविरमृतं भवति यदग्निना पचन्ति तस्मादग्निनेष्टकाः पचन्त्यमृता एवैनास्तत्कुर्वन्ति ॥ ९ ॥

तद्यदिष्ट्वा पशुनाऽपश्यत् । (त्त) तस्मादिष्टकास्तस्मादिष्ट्वैव पशुनेष्टकाः कुर्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्वन्त्यथो ह तदन्यदेव ॥ १० ॥

तद्यास्ताः श्रियः । (ऽ) एतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितयस्तद्यत्पशुशीर्षाण्युपधाय चितीश्चिनोत्यैतैरेव तच्छीर्षभिरेतानि कुसिन्धानि संदधाति ॥ ११ ॥

तऽएते सर्वे पशवो यदग्निः । (स्तु) तस्मादग्नौ पशवो रमन्ते पशु-

---

ष्यामि–हन्तैतदग्निना पचानीति । तदग्निनाऽपचत् । तदेनदमृतमकरोत् । एतद्धै हविरमृतं भवति–यदग्निना पचन्ति । तस्मादग्निनेष्टकाः पचन्ति अमृता एवैनास्तत्कुर्वन्ति ॥ ९ ॥

तद्यदिष्ट्वा पशुनाऽपश्यत्–तस्मादिष्टकाः । तस्मादिष्ट्वैव पशुनेष्टकाः कुर्यात् । अनिष्टका ह ता भवन्ति–याः पुरा पशोः कुर्वन्ति । अथो ह तदन्यदेव ॥ १० ॥

तद्यास्ताः श्रियः–एतानि तानि पशुशीर्षाणि । अथ यानि तानि कुसिन्धानि–एतास्ताः पञ्च चितयः । तद्यत्पशुशीर्षाण्युपधाय चितीश्चिनोति–एतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥ ११ ॥

तऽएते सर्वे पशवो–यदग्निः । तस्मादग्नौ पशवो रमन्ते । पशुभिरेव तत्पशवो रमन्ते । तस्माद्यस्य पशवो भवन्ति–तस्मिन्नग्निराधीयते । अग्निर्ह्येष–यत्पशवः । ततो वै प्रजापतिरग्निरभवत् ॥ १२ ॥

---

'यदिदं' जलमृदात्मकमिष्टकारूपम् 'इत्थम्' अपाकेन 'एव' 'आत्मानम्' 'अभि' लक्ष्य 'संस्करिष्ये', तर्हि 'मर्त्यः' मरणधर्मा 'कुणपः' जीवसहितो देहः कुणप इत्युच्यते । अत एव 'अनपहतपाप्मा भविष्यामि' इति विचार्य, ता, इष्टका अग्निना पक्का अकरोत्; अग्निना पक्कमेव 'हविः' 'अमृतम्' अमरणधर्मकम् 'भवति' इति । अग्निनेष्टकापाकः कर्त्तव्य इति दर्शयति–तस्मादग्निनेष्टका इति॥९॥

इष्टकाकरणकालं दर्शयति–तद्यदिष्ट्वा पशुनाऽपश्यदिति । 'पशुना' अजेन 'इष्ट्वा' इष्टवान् 'इष्टकाः' अतः इष्टादनन्तरं कृत्वा इतीष्टकाशब्दो निरुक्तः । पशुयागात् पूर्वमिष्टकाकरणं निन्दति–अनिष्टका ह ता भवन्तीति । 'अथो' 'पशोः' पशुयागात् 'पुरा' इष्टकाकरणम् 'अन्यदेव' अशास्त्रीयमित्यर्थः ॥ १० ॥

पशुशीर्षोपधानानन्तरमिष्टकोपधानं पशुशिरःकबन्धसन्धानरूपेण प्रशंसति–तद्यास्ताः श्रिय एतानि तानि पशुशीर्षाणीति ॥ ११ ॥

यदुक्तं पशूनामग्न्यात्मकत्वम्, तत्प्रशंसति–त एते सर्वे पशवो यदग्निरिति । यतः पशूनामग्नेश्चैत्थं

भिरेव तत्पशवो रमन्ते तस्माद्यस्य पशवो भवन्ति तस्मिन्नग्निराधीयते-ऽग्निर्ह्येष यत्पशवस्ततो वै प्रजापतिरग्निरभवत् ॥ १२ ॥

( त ) तद्धैकऽआहुः । ( र ) अत्रैवैतैः सर्वैः पशुभिर्यजेत यद्वाऽएतै-रत्र सर्वैः प्रजापतिरयक्ष्यत तदेवाग्नेरन्तं पर्यैष्यत्तद्यदेतैरत्र सर्वैर्यजेत तदेवाग्निरन्तं परीयादिति न तथा कुर्याद्देवानां तदितादियादथो पथस्त-दियादथो किं ततः सम्भरेदेतानि वाऽएतत्कुसिन्धान्येताश्चितीः सम्भ-रति तस्मात्तथा न कुर्यात् ॥ १३ ॥

---

तद्धैकऽआहुः—अत्रैवैतैः सर्वैः पशुभिर्यजेत । यद्वाऽएतैरत्र सर्वैः प्रजापतिरयक्ष्यत । तदेवाग्नेरन्तं पर्यैष्यत् । तद्—यदेतैरत्र सर्वैर्यजेत—तदेवाग्निरन्तं परीयादिति । न तथा कुर्यात्—देवानां तदितादि-यात् । अथो पथस्तदियात् । अथो किं ततः सम्भरेत्—एतानि वाऽएतत्कुसिन्धानि, एताश्चितीः सम्भरति । तस्मात् तथा न कुर्यात् ॥ १३ ॥

---

तादात्म्यम्, अतः परस्परमभिसम्बन्धो दृश्यत इत्याह—तस्मादग्नाविति । अग्निरूपाणि कामयमानस्य प्रजापतेः पशुयागेन तच्छरीरात्मकेष्टकोपधानेन किमायातमिति, तद् दर्शयति—ततो वै प्रजापतिरग्निरभवदिति । ततः पशुयागेन तदात्मकोऽग्निरेव सम्पन्न इत्यर्थः । चयनस्य अग्निरूपत्वावाप्तिः फलमिति तात्पर्यम् ॥ १२ ॥

पूर्वं पञ्चपश्वालम्भः, तत्रैकेन पशुना याग उक्तः, इदानीं तमेव पक्षं द्रढयितुं सर्वपशुयागं पूर्वपक्षयति—तद्धैक आहुरिति । ' अत्र ' अग्नौ ' सर्वैः ' पञ्चभिः पशुभिः ' यजेत ' । ' यत् ' यदि ' प्रजापतिः ' ' सर्वैः ' पशुभिः ' अयक्ष्यत ' यागमकरिष्यत् , ' तत् एव अग्नेः अन्तं ' ' पर्यैष्यत् ' अगमिष्यत्, न तथा कृतवान् । क्रियातिपत्तौ यजतेरेतेश्च लृङ्प्रयोगः । ( पा. सू. ३ । ३ । १३९ ) तस्मात् सर्वैर्यागकरणमेवाग्न्यन्तगमन-मित्यर्थः । तद्दूषयति—न तथा कुर्यादिति । ' तत् ' तर्हि ' देवानाम् ' ' इतात् ' गमनात् ' इयात् ' अपगतो भवतीत्यर्थः । तदेव विवृणोति—' अथो पथः तदियात् ' प्रजापतिकृताद् यज्ञमार्गात् प्रच्यवेतेत्यर्थः ॥ सर्वयागपक्षे बाधां दर्शयति—अथो किं ततः सम्भरेदिति । एवं सति सम्भरणार्थता विरुध्यते । ' सम्भर-णार्थं हि कुसिन्धानाम् अप्सु प्रासनम् ' ( का. श्रौ. सू. १६ । २३ क. भा. ) तत इष्टका मृद्भिरद्भिश्च कार्याः । अतः सर्वप्रचारे सम्भरणानुपपत्तिरित्यर्थः । कात्यायनस्तच्छारवान्तरवाक्यानुसारेणैकस्मिन्नपि सम्भरणानु-पपत्तेः सर्वप्रचारमेकप्रचारं समविकल्पं कृतवान् । तथाहि—" चतुर्णामप्सु कायप्रासनम्, ततो मृदिष्टकार्था-पश्च, अजेन प्रचरति, स९ स्थिते तस्य शेषप्रासनम्, सर्वैरेके, एकस्यापि किं ततः सम्भरेदिति श्रुतेः "—इति । ( का. श्रौ. सू. १६ । १९–२४ ) । एकस्यापि पशोरालम्भे किं ततः सम्भरेत् ? तत् तुल्यमेव । तस्माद् विकल्पः सर्वैर्वाऽजेन वेति ॥ १३ ॥

---

१–सर्वैरेके । का. श्रौ. सू. । १६ । २३ । २–एकस्यापि किं ततः संभरेदिति श्रुतेः । का० श्रौ० सू० १६ । २४ ।

( थ ) यद्वेवैतान्पशूनालभते । ( त ) आयतनमेवैतदग्नये करोति न ह्यनायतने कश्चन रमतेऽन्नं वाऽआयतनं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपावर्तते ॥ १४ ॥

पुरुषोऽश्वो गौरविरजो भवन्ति । एतावन्तो वै सर्वे पशवोऽन्नं पशवस्त- द्यावदन्नं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपावर्तते ॥ १५ ॥

पञ्च भवन्ति । पञ्च ह्येतेऽग्नयो यदेताश्चितयस्तेभ्यऽ एतत्पञ्चायतनानि निदधाति तदेनं पश्यन्नग्निरुपावर्तते ॥ १६ ॥

तद्यदग्निभ्यऽ इति । बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्कामायेति यथा तं काममाप्नुयाद्यजमानो यत्काम ऽएतत्कर्म कुरुते ॥ १७ ॥

---

यद्वेवैतान्पशूनालभते—आयतनमेवैतदग्नये करोति । न ह्यनायतने कश्चन रमते । अन्नं वाऽआय- तनम् । तदेतत्—पुरस्तान्निदधाति । तदेनं पश्यन्नग्निरुपावर्तते ॥ १४ ॥

पुरुषः अश्वः गौः अविः अजो भवन्ति । एतावन्तो वै सर्वे पशवः । अन्नं पशवः । तद् यावदन्नं— तदेतत्पुरस्तान्निदधाति । तदेनं पश्यन्नग्निरुपावर्तते ॥ १५ ॥

पञ्च भवन्ति पञ्च ह्येतेऽग्नयो—यदेताश्चितयः। तेभ्य एतत्पञ्चायतनानि निदधाति । तदेनं पश्यन्न- ग्निरुपावर्तते ॥ १६ ॥

तद् यदग्निभ्य इति—बहवो ह्येतेऽग्नयो—यदेताश्चितयः । अथ यत्कामायेति—यथा तं काममाप्नु- यात्—यजमानो यत्काम एतत्कर्म कुरुते ॥ १७ ॥

---

पश्वालम्भनमायतनकरणात्मना प्रशंसति—यद्वेवैतान् पशूनालभत इति । आयतनशब्दार्थमाह—अन्नं वा इति । कार्यकारणयोरभेदात् । ‘ तदेतत् ’ पशुरूपमन्नं ‘ पुरस्तात् ’ ‘ निदधाति ’, ‘ तत् ’ ‘ एनम् ’ ‘ पश्यन् ’ ‘ अग्निः ’ ‘ उपावर्त्तते ’ समीपे गतो भवति । यथा लोकेऽन्नार्थी पश्यन्नेवान्नं तत्समीपं गच्छति, तद्वदित्यर्थः ॥ १४ ॥

पशूननुक्रामति—पुरुषोऽश्व इति । एतावन्त इति । यतः ‘ सर्वे पशवाः ’ एतेषु पुरुषगवाश्वादिपशुषु अन्तर्भूताः अत उपजीव्यानां सर्वेषामन्नरूपाणां पशूनामवरोध इति नानाजातिनिबन्धना स्तुतिः ॥ १५ ॥

पशुगतपञ्चसङ्ख्यां प्रशंसति—पञ्च भवन्ति । पञ्च ह्येतेऽग्नय इति । चितिसङ्ख्याऽपेक्षया अग्नीनां पञ्चसङ्ख्या- वत्त्वम् । पञ्चायतनानीति । पशुरूपाणि पञ्च स्थानानि कल्पयतीत्यर्थः ॥ १६ ॥

तद्यदग्निभ्य इतीति । एतद्वाक्यं पूर्ववद् व्याख्येयम् । अग्निभ्यः कामायेति यद्यग्निबहुत्वं तद्रू- पापेक्षयेति ॥ १७ ॥

पुरुषं प्रथममालभते । पुरुषो हि प्रथमः पशूनामथाश्वं पुरुषᳪं ह्यन्वश्वोऽथ गामश्वᳪं ह्यनु गौरथाविं गाᳪं ह्यन्वविरथाजमविᳪं ह्यन्वजस्तदेनान्यथापूर्व्वं यथाश्रेष्ठमालभते ॥ १८ ॥

तेषां विषमा रशनाः स्युः । पुरुषस्य वर्षिष्ठाऽथ ह्रसीयस्यथ ह्रसीयसी तद्यथारूपं पशूनाᳪं रशनाः करोत्यपापवस्यसाय सर्व्वास्त्वेव समाः स्युः सर्व्वाः सदृश्यः सर्व्वे ह्येते समाः सर्व्वे सदृशाऽअग्नयो ह्युच्यन्तेऽन्नᳪं ह्युच्यन्ते तेन समास्तेन सदृशाः ॥ १९ ॥

---

पुरुषं प्रथममालभते । पुरुषो हि प्रथमः पशूनाम् । अथाश्वम् । पुरुषं ह्यन्वश्वः । अथ गाम् । अश्वं ह्यनु गौः । अथाविम् । गां ह्यन्वविः । अथाजम् । अविं ह्यन्वजः । तदेनान् यथापूर्वं यथाश्रेष्ठमालभते ॥ १८ ॥

तेषां विषमा रशनाः स्युः–पुरुषस्य वर्षिष्ठा–अथ ह्रसीयसी अथ ह्रसीयसी । तद् यथारूपं पशूनां रशनाः करोति–अपापवस्यसाय । सर्वास्त्वेव समाः स्युः, सर्वाः सदृश्यः । सर्वे ह्येते समाः, सर्वे सदृशाः । अग्नयो ह्युच्यन्ते, अन्नं ह्युच्यन्ते तेन समाः, तेन सदृशाः ॥ १९ ॥

---

पशूनामालम्भनक्रमं विधत्ते–पुरुषं प्रथममालभत इति । पुरुषम् ह्यन्वश्व इति । 'पुरुषम्' 'अनु'–लक्ष्य; पुरुषानुगामी यतोऽश्व इत्यर्थः । एवमुत्तरत्र । यथापूर्वमिति । पूर्वानालम्यानतिक्रम्य, यथाक्रममित्यर्थः । 'यथाश्रेष्ठम्' तत्र ये ये श्रेष्ठाः, तानप्यनतिक्रम्येत्यर्थः ॥ १८ ॥

तेषां बन्धनार्थं रशनां विधत्ते–तेषां विषमा रशनाः स्युरिति । 'विषमाः' स्थौल्यह्रासवत्त्वेन अग्नयो भवन्ति । वैषम्यं च दर्शयति–पुरुषस्य वर्षिष्ठाऽथ ह्रसीयसीत्यादि । पुरुषपशोः रशना 'वर्षिष्ठा' अतिशयेन वृद्धा भवेत् । अत्र वर्षिष्ठेति स्थौल्यायामापेक्षया । "प्रियस्थिर"–( पा. सू. ६ । ४ । १५७ ) इत्यादिना वृद्धशब्दस्य वर्षादेशः । 'अथ' अश्वपशोः 'ह्रसीयसी' आयामस्थौल्याभ्यां ह्रस्वा । तदपेक्षया गोपशोः ह्रस्वा । ततो द्वयोः । 'अथ ह्रसीयसी'–इति वीप्सया पूर्वपूर्वरशनापेक्षयोत्तरोत्तरह्रासो विवक्षितः । यथारूपमिति । पुरुषादिपशूनामाकृतिबलादिकमनतिक्रम्येत्यर्थः । सर्वास्त्वेवेति । 'तु'-शब्दः पक्षान्तरद्योतनार्थः । सर्वा अपि रशनाः 'समाः' सदृशायामस्थौल्या इत्यर्थः । "सर्वास्त्वेव समाः"–इति वाक्यस्य विवरणम्–सर्वाः सदृश्य इति । यद्वा, आयामस्थौल्यादिना साम्यं वक्तुं पृथगुपन्यासः । रशनासाम्य इत्युच्यते । अन्नमिति चोच्यन्ते । पशूनां परस्परसाम्यादित्याह–सर्वे ह्येते समा इति । साम्यमेव दर्शयति । अग्नयो ह्युच्यन्त इति । यस्मात् एते पशवोऽग्नयः इत्युच्यन्ते । तदन्नमिति चोच्यन्ते । पशूनामग्नित्वमन्नात्मकत्वं च पूर्वमेव दर्शितम्–"स ऐक्षतेमे वा अग्निः"–इति । "यद्वैवैतान् पशूनालभत, आयतनमेवैतदग्नये करोति, न ह्यनायतने कश्चन रमते, अन्नं वा आयतनम्"–इति च । 'तेन' अग्नित्वेन सर्वे पशवः 'समाः सदृशाः' इति रशना अपि समाः कार्या इत्यर्थः ॥ १९ ॥

---

१–वर्षिष्ठरशनः पुरुषोऽनुपूर्व्या इतरे । का. श्रौ. सू. १६ । ९ । २–सर्व्वेषां वा तुल्या । का. श्रौ. सू. १६ । १० ।

( स्तु ) तदाहुः । कथमस्यैषोऽग्निः पञ्चेष्टकः सर्व्वः पशुष्वारब्धो भवतीति पुरोडाशकपालेषु न्वेवाऽऽप्यतऽ इयं प्रथमा मृन्मयीष्टकाऽथ यत्पशुमालभते तेन पश्विष्टकाऽऽप्यतेऽथ यद्वपामभितो हिरण्यशकलौ भवतस्तेन हिरण्येष्टकाऽऽप्यतेऽथ यदिध्मो यूपः परिधयस्तेन वानस्पत्येष्टकाऽऽप्यतेऽथ यदाज्यं प्रोक्षण्यः पुरोडाशस्तेनान्नं पञ्चमीष्टकाऽऽप्यतऽएवमु हास्यैषोऽग्निः पञ्चेष्टकः सर्व्वः पशुष्वारब्धो भवति ॥ २० ॥

---

तदाहुः—कथमस्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवतीति । पुरोडाशकपालेषु न्वेवाऽऽप्यते । इयं प्रथमा मृन्मयीष्टका ( १ ) । अथ यत्पशुमालभते—तेन पश्विष्टकाऽऽप्यते ( २ ) । अथ यद्वपामभितो हिरण्यशकलौ भवतः—तेन हिरण्येष्टकाऽऽप्यते ( ३ ) । अथ यदिध्मो यूपः परिधयः—तेन वानस्पत्येष्टकाऽऽप्यते ( ४ ) । अथ यदाज्यम्, प्रोक्षण्यः पुरोडाशः—तेनान्नं पञ्चमीष्टकाऽऽप्यते ( ५ ) । एवमु हास्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवति ॥ २० ॥

---

तदाहुरिति । अग्निचयने पञ्चसङ्ख्याका इष्टका उपधेया इति वक्ष्यते । तत्र पशुपरिग्रहेणैव पञ्चेष्टका अपि परिगृहीता इति वक्तुं तत् कथं पश्वालम्भमात्रेण तादृशस्याग्नेः स्वीकारः कृत इति पृच्छति—तदाहुः कथमस्यैषोऽग्निरिति । 'अस्य' चिकीर्षमाणस्य यजमानस्य 'पञ्चेष्टकः' 'एषः' प्रक्रम्यमाणः 'अग्निः' 'कथं' 'पशुषु' परिग्रहे 'आरब्धः' प्रक्रान्तो भवतीति । उत्तरत्र करिष्यमाणस्याग्नेः प्रथमं स्वीकारः कर्त्तव्य इत्यभिप्रायः ।

पशुष्वेव पञ्चेष्टकाः सम्पादयति—पुरोडाशकपालेषु न्वेवाऽऽप्यत इत्यादिना । चयने वैश्वानरादीनां पशुपुरोडाशादीनां सम्भरणात् तत्कपालेषु मृन्मयीष्टका आप्यते, कपालानां मृन्मयत्वात् तादृशेष्टकाप्रारम्भः, पश्वालम्भेन पश्विष्टकाप्रारम्भः । वपावदानसमये हिरण्यशकलद्वयं निधातव्यम् । तदाहापस्तम्बः—"जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात् कृत्वाऽभिघारयति"—( आ. श्रौ. सू. १६ । १७ । ) इति । तथा चैतरेयकम्—'यद्यपि चतुरवत्ती यजमानः स्यादथ पञ्चावत्तैव वपाऽऽज्यस्योपस्तृणाति हिरण्यशल्को वपा हिरण्यशल्क आज्यस्योपरिष्टादभिघारयति"—( ऐ. ब्रा. २ । २ । ४ ) इति । 'अथ' 'यत्' तस्माद् 'वपामभितः' पूर्वमुपरिष्टाच्च हिरण्यशकलौ भवतः 'तेन हिरण्येष्टका' आप्ता भवति । इध्मयूपपरिधिस्वीकाराद् वानस्पत्येष्टकाधानेन उलूखलमुसलस्रुगाद्युपधानमुपलक्षितम् । आज्यप्रोक्षणीपुरोडाशकरणेनान्नरूपेष्टका भवति । 'अतः' सर्वासामिष्टकानां पशुबन्धात् सङ्ग्रहेण ता अपि प्रारब्धा भवन्तीत्यर्थः ॥ यद्यपि मार्त्तिकी एका एव, अथापि मृन्मयकपालपश्वादिसम्बन्धात् पञ्चेष्टकासम्पादनं प्रागुक्तम्—"तदाहुः कथमस्यैषोऽग्निः पञ्चेष्टकः ?"—इत्यादिना ॥ २० ॥

तेषां चतुर्विꣳशतिः सामिधेन्यः । ( श्रु ) चतुर्विꣳशत्यर्धमासो वै संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे २१

यद्वेव चतुर्विꣳशतिः । ( श्रु ) चतुर्विꣳशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥ २२ ॥

---

तेषां चतुर्विंशतिः सामिधेन्यः । चतुर्विंशत्यर्धमासो वै सम्वत्सरः । सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतत्समिन्द्धे ॥ २१ ॥

यद्वेव चतुर्विंशतिः । चतुर्विंशत्यक्षरा वै गायत्री गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥ २२ ॥

---

अत्र कात्यायनः "समिध्यमानसमिद्धवत्यन्तरे समास्त्वाऽग्न इति नव दधाति"—( का. श्रौ. सू. १६।११ ) इति । पूर्वं दर्शपूर्णमासयोः पञ्चदश सामिधेन्यः; अत्र "समिध्यमानो अध्वरे"—( तै. ब्रा. ३।५।२।९) इत्यृक्, "समिद्धो अग्न आहुतः"—( तै. ब्रा. ३।५।३।१० ) इत्यृक्; अनयोः प्रकृतिगतयोः सामिधेनीमध्यपठितयोर्ऋचोर्मध्ये "समास्त्वाऽग्न ऋतवो वर्द्धयन्तु"—( वा. सं. २७।१–९ ) इत्याद्या नव। ऋचो दध्यात् । पूर्वं "प्र वो वाजा अभिद्यवः"—( तै. ब्रा. ३।५।२।१–११ ) इत्याद्याः पञ्चदश, इदानीं मध्ये निहिता नव, उभयस्य चतुर्विंशतिर्भवतीति तदेतद् दर्शयति—**तेषां चतुर्विंशतिः सामिधेन्य** इति । अग्निसमिन्धनसाधनभूता ऋचः सामिधेन्य इत्युच्यन्ते । "समिधामाधाने षेण्यण्"—( पा. सू. ४।३।१२० वा ३ ) इति षेण्यण् प्रत्ययः । सामिधेनीगतां चतुर्विंशतिसङ्ख्यां प्रशंसति—**चतुर्विंशत्यर्द्धमासो वै संवत्सर** इति । संवत्सरस्य द्वादश मासाः, मासस्य द्वावर्द्धमासौ, इति संवत्सरस्य चतुर्विंशतिरर्द्धमासाः तादृशः संवत्सर एवाग्निः; "संवत्सरे कुमारोऽजायत"—( श. प. ६।१।३।८ ) इति प्रागाम्नानात् । अग्नेः संवत्सरात्मकत्वेन प्रकृते किमायातमिति, तत्राह—**यावानग्निरिति** । 'अग्निः' 'यावान्' यत्परिमाणः, 'अस्य' अग्नेः 'यावती' यत्परिमाणा 'मात्रा' अवयवा यावन्तः, 'तावता' तत्परिमाणैः तैरंशैरेव 'एनम्' अग्निं 'समिन्धे' सन्दीपितवान् भवति । अयमर्थः—अग्नेः संवत्सरात्मकत्वे संवत्सरस्य यावन्तो यावन्तोऽवयवा मासार्द्धमासाद्यात्मानः; तावद्भिरवयवैः 'एनं' चित्याग्निं 'समिन्धे' । अथवा "यावानग्निरिति," अवयव्यग्निपरिमाणवचनम्; "यावत्यस्य मात्रेति" अवयवपरिमाणवचनम्; 'तावता' तत्परिमाणेनाग्निसंवत्सरात्मना 'एनम्' अग्निम् आहवनीयं 'समिन्धे' इति । अनेनाग्निः स्वयमग्निना समिद्धो भवतीत्युक्तं भवति । तथा च श्रूयते—"अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा"—( ऋ. सं. १।१२।६। ) इति ॥ २१ ॥

प्रकारान्तरेण चतुर्विंशतिसङ्ख्यां प्रशंसति—**यद्वेव चतुर्विंशतिरिति** । गायत्र्यात्मकत्वमग्नेः प्रागुक्तम्—"यद्वेवाष्टावग्निरूपाणि अष्टाक्षरा गायत्री, तस्मादाहुः गायत्रोऽग्निरिति"—( श. प. ६।१।३। ) इति । तावतैवेति । गायत्र्यक्षरसङ्ख्याकैरवयवैः 'एनम्' अग्निम् समिद्धवान् भवतीति ॥ २२ ॥

यद्वेव चतुर्विंᳪशतिः । (श्च) चतुर्विंᳪशो वै पुरुषो दश हस्त्या-ऽअङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि पुरुषः प्रजापतिः प्रजापतिरग्निर्या-वानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥ २३ ॥

( न्द्धऽ ) उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । प्राणो गायत्र्यात्मा त्रिष्टुप्प्रा-णमेवास्य गायत्रीभिः समिन्द्धऽआत्मानं त्रिष्टुभ्भिर्मध्ये त्रिष्टुभो भवन्त्य-भितो गायत्र्यो मध्ये ह्ययमात्माऽभितः प्राणा भूयसीः पुरस्ताद्गायत्री-रन्वाह कनीयसीरुपरिष्टाद्भूयाᳪसो हीमे पुरस्तात्प्राणाः कनीयाᳪस ऽउपरिष्टात् ॥ २४ ॥

---

यद्वेव चतुर्विंशतिः । चतुर्विंशो वै पुरुषो–दश हस्त्या अङ्गुलयो, दश पाद्याः, चत्वार्यङ्गानि । पुरुषः प्रजापतिः । प्रजापतिरग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतत्समिन्द्धे ॥ २३ ॥

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह–प्राणो गायत्री, आत्मा त्रिष्टुप् । प्राणमेवास्य गायत्रीभिः समिन्द्धे, आत्मानं त्रिष्टुब्भिः । मध्ये त्रिष्टुभो भवन्ति, अभितो गायत्र्यः । मध्ये ह्ययमात्मा–अभितः प्राणाः । भूयसीः पुरस्ताद्गायत्रीरन्वाह, कनीयसीरुपरिष्टात् । भूयांसो हीमे पुरस्तात्प्राणाः, कनीयांस उपरिष्टात् ॥ २४ ॥

---

यद्वेवेति । चतुर्विंशो वै पुरुष इति । चतुर्विंशतिसङ्ख्याकावयवयुक्तः ' चतुर्विंशः ' । तानेवावयवान् दर्श-यति–दश हस्त्या इति । हस्तयोर्भवा अङ्गुलयो दश, पादयोर्भवा दश ' चत्वार्यङ्गानि ' पादद्वन्मुखमस्तका-ख्यानि । एवं चतुर्विंशतिरङ्गानि; ' पुरुषः ' उक्तावयवयुक्तः ' प्रजापतिः ' प्रजापतिरूपः " स एव पुरुषः प्रजापतिरभवत् "–( श. प. ६ । १ । १ । ५ ) इत्यादिना पुरुषस्य प्रजापतित्वमुक्तम् । प्रजापतेरग्नित्वञ्च " स पुरुषः प्रजापतिरभवदयमेव स योऽयमग्निश्चीयते " ( श. प. ६ । १ । १ । ५ )–इति; तथाऽत्रैवा-ध्याये ' प्रजापतिरग्निरूपाण्यभ्यध्यायत् "–इत्युपक्रम्य, " ततो वै प्रजापतिरग्निरभवत् " ( श. प. ६ । २ । १ । १–१२ )–इत्यन्तेन । तावतैवैनामिति । तावत्परिमाणेन चतुर्विंशत्यङ्गात्मनाऽग्निना ' एनम् ' अग्निं दीपितवान् भवतीति ॥ २३ ॥

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाहेति । सामिधेनीषु "प्र वो वाजाः" ( तै. ब्रा. ३ । ५ । २ । १–११ ) इत्याद्या गायत्र्यः, " समास्त्वाऽग्न ऋतवो वर्द्धयन्तु "–(वा. सं. २७ । १–९) ( तै. सं. ४ । १ । ७ ) इत्याद्याः त्रिष्टुप्छन्दस्काः, ता ' उभयीः ' अनुब्रूयात्, होतेति शेषः । सामिधेनीगतगायत्रीत्रिष्टुप्छन्दांसि प्राणात्मसमिन्धनरूपेण प्रशंसति–प्राणो गायत्रीति । गायत्र्यास्त्रिपात्त्वम्, प्राणस्य च प्राणापानव्यानात्मना त्रित्वसङ्ख्यावत्त्वम् । त्रिष्टुभो वीर्यरूपत्वात् उरसः सकाशादुत्पत्तेः आत्मरूपता । मध्ये त्रिष्टुभो भवन्तीति । प्रथमं " प्र वो वाजाः "–इत्याद्याः " आनो अध्वरे " इत्यन्ता गायत्र्यः, अन्ते च " समिद्धो अग्निराहुतः " इत्याद्या गायत्र्यः, समिध्यमानसमिद्धवत्योर्निधीयमानाः " समास्त्वाऽग्न ऋतवः "–इत्याद्यास्त्रिष्टुभ इत्यर्थः ।

( त्सो ) सोऽन्वाह । समास्त्वा ग्नऽऋतुवो व्वर्द्धयंत्त्विति प्रजापतिं व्विस्स्रस्तं यत्राग्निः समदधात्तमब्रवीद्या मत्सम्मिताः सामिधेन्यस्ताभिर्मा समिन्त्स्वेति ॥ २९ ॥

सऽएताऽअपश्यत् । ( त्स ) समास्त्वाऽग्नऽऋतुवो व्वर्द्धयंत्त्विति समाश्च त्वाऽग्नऽऋतुवश्च व्वर्द्धयंत्त्वित्येतत्संवत्सरा ऽऋषयो यानि सत्येति संवत्सराश्च त्वऽर्षयश्च सत्यानि च व्वर्द्धयन्त्त्वित्येतत्सं दिव्येन दीदिहि रोचनेनेत्यसौ वाऽआदित्यो दिव्यᳫँ रोचनं तेन संदीदिहीत्येतद्विश्वा ऽआभाहि प्रदिशश्चतस्र ऽइति सर्वा ऽआभाहि प्रदिशश्चतस्रऽ इत्येतत् ॥ २६ ॥

---

सोऽन्वाह–" समास्त्वाऽग्नऽऋतवो वर्द्धयंतु "–इति । प्रजापतिं विस्रस्तं यत्राग्निः समदधात् तमब्रवीत्–या मत्साम्मिताः सामिधेन्यः ताभिर्मा समिन्त्स्वेति ॥ २९ ॥

स एता अपश्यत्–"समास्त्वाऽग्न ऋतवो वर्द्धयंत्विति"–समाश्च त्वाऽग्न ऋतवश्च वर्द्धयंतु–इत्येतत् । " संवत्सरा ऋषयो यानि सत्या "–इति । संवत्सराश्च त्वर्षयश्च सत्यानि च वर्द्धयंतु–इत्येतत् । " सं दिव्येन दीदिहि रोचनेन "–इति । असौ वा आदित्यो दिव्यं रोचनं, तेन संदीदिहीत्येतत् । " विश्वाआभाहि प्रदिशश्चतस्रः "–( वा० सं० २७ । १ ) इति । सर्वा आभाहि प्रदिशश्चतस्र–इत्येतत् ॥ २६ ॥

---

मध्ये ह्ययमात्मेति । गायत्रीत्रिष्टुभोः प्राणापानरूपत्वोक्तेः प्राणापानयोरात्मपूर्वपरभागवर्तित्वं प्रसिद्धम्, मध्ये त्रिष्टुभां निधानस्योक्तत्वात् ॥

प्राप्तं गायत्रीसमविभागं वारयन्नाह–भूयसीः पुरस्ताद् गायत्रीरन्वाहेति । " प्र वो वाजा अभिद्यवः "–इत्याद्या एकादश गायत्र्यः प्रथममनुवक्तव्याः, अन्ते च " समिद्धो अग्निराहुतः "–इत्याद्याश्चतस्र इत्यर्थः । प्राणा अपि पुरस्तात् नासापुटयोरधिकं निस्सरन्ति, ब्रह्मरन्ध्रात्स्वल्पमित्यभिप्रायः ॥ २४ ॥

इदानीं मध्ये निधीयमाना ऋचस्तदनुवाचनं विधत्ते सोऽन्वाह–समास्त्वाऽग्न ऋतवो वर्द्धयंत्विति । मंत्राणामर्थं विवक्षुस्तेषां प्रजापतिसमिंधनार्थतां दर्शयति–प्रजापतिं विस्रस्तामिति । यदा विस्रस्तं विश्लिष्टांगं प्रजापतिं अग्निः समदधात् संयोजितवान् तमब्रवीत् प्रजापतिरिति शेषः । मत्संमिताः मम पर्याप्ताः याः सामिधेन्यः ताभिः 'मा' मां प्रजापतिं समित्न्स्व संदीपयेति । इंधेर्लोटि मध्यमे रूपम् ॥ २९ ॥

एवमुक्तोऽग्निः प्रजापतिसमिंधनार्थं सामिधेनीमंत्रान् दृष्टवानित्याह–स एता अपश्यत्–समास्त्वाऽग्न ऋतवो वर्द्धयंत्वितीति । इतिशब्दः प्रकारे । एवंप्रकारा नव ऋचोऽपश्यदित्यर्थः । मंत्रं प्रतिपादमनूद्य व्याचष्टे–समाश्च त्वाऽग्न ऋतवश्च वर्द्धयंत्वित्येतदिति ॥ २६ ॥

---

१–' समिध्यमानसमिद्धवत्यन्तरे समास्त्वाऽग्न इति नाव दधाति ' का. श्रौ. सू. १६ । ११ ।

( त्ता ) ता ऽएता ऽएकव्याख्यानाः । ( ऽ ) एतमेवाभि यथैतमेव संस्कुर्यादेतᳪं संदध्यादेतं जनयेत्ता ऽआग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिᳪं समैन्द्ध तेन प्राजापत्याः ॥ २७ ॥

(०) द्वादशाप्रियः । ( यो ) द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति ॥ २८ ॥

---

ता एता एकव्याख्यानाः । एतमेवाभि यथैतमेव संस्कुर्यात् । एतं संदध्यात् । एतं जनयेत् । ता आग्नेय्यः प्राजापत्याः । यदग्निरपश्यत् । तेनाग्नेय्यः। यत्प्रजापतिं समैन्द्ध । तेन प्राजापत्याः॥२७॥

द्वादशाप्रियः । द्वादश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निः । यावत्यस्य मात्रा । तावतैवैनमेतदाप्रीणाति ॥ २८ ॥

---

मंत्रस्यायमर्थः । अत्राग्निपदेन प्रजापतिरुच्यते—"ततो वै प्रजापतिरग्निरभवत्" इति प्रागाम्नानात् । उत्तरत्र तासां नवानामग्निरेव द्रष्टा प्रजापतिर्देवतेति वक्ष्यति । अतोऽपि अग्निपदेन प्रजापतिरेव संबोध्यः । हे अग्ने संवत्सरात्मक प्रजापते ! त्वा त्वां विस्रस्तम् ऋतवः वसंताद्याः प्रजापतेः संवत्सरात्मकत्वात् तदवयवा ऋतवः समाः संवत्सराः च वर्द्धयंतु । ऋषयः ऋषिपदेन प्राणा उच्यंते—"के त ऋषयः प्राणा वा ऋषयः" ( श. प. ६।१।१।१ ) इति श्रुतेः । यानि सत्या सत्कर्माणि । तानि च त्वा वर्द्धयंतु । अतः अवयववृद्धेः दिव्येन द्युलोकभवेन आदित्येन संदीदिहि संदीप्तो भव । दीदीयतिर्दीप्तिकर्मा इति यास्कः । ( निघं. १ । १६ । ९ । निरु. १० । १ । ६ ) दीव्यतेर्वा यङ्लुकि लोटि सेहौ "लोपो व्योर्वलि" ( पा. सू. ६ । १।६ ) इति लोपे अभ्यासदीर्घे कृते रूपम् । विश्वाः सर्वाश्चतस्रः प्रदिशश्च अभिलक्ष्य आभाहि । " भा दीप्तौ " ( धा. पा. अ. प. ४१ ) । भाहि अत्रांतर्णीतण्यर्थे । दीपयेति ॥

नवानामपि ऋचामेकाभिधेयतां दर्शयति—ता एता एकव्याख्याना इति । ताः सामिधेनीमध्ये निधीयमानत्वेनोक्ता ' एताः ' इदानीं प्रदर्शिता ऋचः ' एकव्याख्यानाः ' एकार्था इत्यर्थः । तमेवार्थं दर्शयति—एतमेवाभीति । ' यथा ' येन प्रकारेण अग्निः ' एतमेव ' प्रजापतिं ' संस्कुर्यात्, ' ' एतं ' विस्रस्तं ' सन्दध्यात् ' संयोजयेत्, तथा ' एतं ' ' जनयेत् ' उत्पादयेत् । एवमर्थवत्त्वेन व्याख्यासाम्यमिति तात्पर्यम् । तासामग्न्यार्षेयत्वं प्रजापतिदेवत्यत्वं च दर्शयति—यदग्निरपश्यदिति । ' समैन्द्ध '—इति लङि " आडजादीनाम् "— ( पा. सू. ६ । ४ । ७२ ) इत्याडागमः ॥ २७ ॥

कात्यायनः—" आप्रियो द्वादशोदूर्ध्वा अस्येति "—( का. श्रौ. सू. १६ । १२ । ) तद् द्वादशसङ्ख्याः प्रयाजयाज्या विधत्ते—द्वादशाप्रिय इति । तनूनपान्नराशंसयोरुभयोः साहित्ये द्वादशत्वम् । आप्रीगतां सङ्ख्यां संवत्सरात्मना प्रशंसति—द्वादश मासाः संवत्सर इति । संवत्सरे जातत्वादग्नेस्तदात्मकत्वम् । यावानग्निरिति । अवयविपरिमाणवचनम् । यावत्यस्य मात्रेति । अवयवपरिमाणवचनम् । ' तावता ' तत्परिमाणैरवयवैर्मासात्मभिः ' एनम् ' अग्निम् आप्रीतवान् भवति । संवत्सरस्य मासा अवयवाः; तदात्मकस्याग्नेरपि प्रयाजयाज्या अवयवाः; अनेन स्वैरेवावयवैरग्निराप्रीतवान् भवतीत्यर्थः ॥ २८ ॥

यद्वेव द्वादश । द्वादशाक्षरा वै जगतीयं वै जगत्यस्याꣳ ह्रीदꣳ सर्वं जगदियमु वाऽअग्निरस्यै हि सर्वोऽग्निश्चीयते यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति ॥ २९ ॥

यद्वेव द्वादश । द्वादशाक्षरा वै जगती जगती सर्वाणि छन्दाꣳसि सर्वाणि छन्दाꣳसि प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति ॥ ३० ॥

ता ऽएताऽ ऊर्द्ध्वा ऽअस्य समिधो भवन्तीति प्रजापतिं विस्रस्तं यत्राग्निः समदधात्तमब्रवीद्या मत्संमिताऽआप्रियस्ताभिर्माऽऽ प्रीणीहीति ॥ ३१

स ऽएता ऽअपश्यत् । ( दू ) ऊर्ध्वा ऽअस्य समिधो भवन्तीत्यूर्ध्वा ह्येतस्य समिद्धस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेरित्यूर्द्ध्वानि

---

यद्वेव द्वादश । द्वादशाक्षरा वै जगती । इयं वै जगती । अस्यां हीदं सर्वं जगत् । इयमु वा अग्निः । अस्यै हि सर्वोऽग्निश्चीयते । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतदाप्रीणाति ॥ २९ ॥

यद्वेव द्वादश । द्वादशाक्षरा वै जगती । जगती सर्वाणि छन्दांसि । सर्वाणि छन्दांसि प्रजापतिः । प्रजापतिरग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतदाप्रीणाति ॥ ३० ॥

ता एता ऊर्ध्वा अस्य समिधो भवन्तीति । प्रजापतिं विस्रस्तं यत्राग्निः समदधात्—तमब्रवीत्—या मत्सम्मिता आप्रियः—ताभिर्माऽऽप्रीणीहीति ॥ ३१ ॥

स एता अपश्यत्—"ऊर्ध्वा अस्य समिधो भवन्ति"—इति । ऊर्ध्वा ह्येतस्य समिद्धस्य समिधो भवन्ति । "ऊर्ध्वा शुक्रा शोचींष्यग्नेः"—इति । ऊर्ध्वानि ह्येतस्य शुक्राणि शोचीं-

---

द्वादशसङ्ख्यामेव द्वादशाक्षरजगत्यात्मना स्तौति—यद्वेव द्वादशेति । 'इयं वै जगती' पार्थिवान्नपूरित-प्रजापतिमध्यशरीराद्युत्पत्तेर्जगत्या भूमिरूपत्वम् । 'अस्यां' भूमौ 'सर्वं' जगत् स्थावरजङ्गमात्मकं तिष्ठति । इयमु वा अग्निरिति । भूमावधिकरणे सर्वेषामग्नीनां चयनादाधाराधेययोरभेदेन अग्नेर्भूमिरूपत्वम् । तावतैवेति । तावत्सङ्ख्याकैर्जगत्यक्षरात्मकैरवयवैराप्रीतवान् भवतीति ॥ २९ ॥

यद्वेव द्वादशेति । तामेव सङ्ख्यां सर्वच्छन्दोरूपजगत्यात्मना प्रशंसति—जगती सर्वाणि छन्दांसीति । जगत्यां सर्वेषां गायत्र्यादीनां छन्दसामन्तर्भावात् अधिकाक्षरत्वात् । तावतैवेति । तावत्संख्याकैश्छन्दोरूपैर्जगत्यक्षरैरेव अग्निं प्रीणितवानिति ॥ ३० ॥

तानाप्रीमन्त्रान् दर्शयति—ता एता ऊद्र्ध्वा अस्य समिधो भवन्तीति । एतासामृचामर्थं विवक्षुः प्रजापत्याप्रीणनार्थतां दर्शयति—प्रजापतिं विस्रस्तमिति ॥ ३१ ॥

प्रजापतिना स्वप्रीणनार्थमभ्यर्थितोऽग्निराप्रीमन्त्रान् दृष्टवानित्याह—स एता अपश्यदूर्ध्वा अस्य समिधो

ह्येतुस्य शुक्राणि शोचीᳫँष्यूर्ध्वाᳫँषि भवन्ति द्युमत्तमेति व्वीर्यवत्तमे॒त्येतत्सुप्रतीकस्येति सर्व्वतो वाऽअग्निः सुप्रतीकः सूनोरिति यदेनं जनयति तेनास्यैष सूनुः ॥ ३२ ॥

( स्ता ) ता ऽएता ऽएकव्याख्यानाः । ( ऽ ) एतमेवाभि यथैतमेव संस्कुर्यादेतᳫँ संदध्यादेतं जनयेत्ता ऽआग्नेय्यः प्राजापत्या यदग्निरपश्यत्ते॒नाग्नेय्यो यत्प्रजापतिमाप्रीणात्तेन प्राजापत्याः ॥ ३३ ॥

( स्ता ) ता व्विषमा व्विषमपदाः । ( ० ) व्विषमाक्षरा व्विषमाणि हि च्छन्दाᳫँस्यथो यान्यस्याध्यात्ममङ्गानि व्विषमाणि तान्यस्यैताभिरा॒प्रीणाति ॥ ३४ ॥

---

ध्यर्चींषि भवन्ति । "द्युमत्तमा"–इति । वीर्यवत्तमेत्येतत् "सुप्रतीकस्य"–इति । सर्वतो वाऽअग्निः सुप्रतीकः । "सूनोः"–( वा० सं २७ । ११ )–इति । यदेनं जनयति–तेनास्यैष सूनुः ॥ ३२ ॥

ता एता एकव्याख्यानाः एतमेवाभि । यथैतमेव संस्कुर्यात्, एतं सन्दध्यात्, एतं जनयेत् । ता आग्नेय्यः, प्राजापत्याः । यद् अग्निरपश्यत् । तेनाग्नेय्यः । यत्प्रजापतिमाप्रीणात्–तेन प्राजापत्याः ॥ ३३ ॥

ता विषमा विषमपदा विषमाक्षराः । विषमाणि हि छन्दांसि । अथो यान्यस्याध्यात्ममङ्गानि–विषमाणि तान्यस्यैताभिराप्रीणाति ॥ ३४ ॥

---

भवन्तीतीति । 'इति'–शब्दः प्रभृतौ; एतदाद्या द्वादश ऋचो दृष्टवान् । प्रथममन्त्रस्यायमर्थः,–अत्रापि अग्निरूपः प्रजापतिरेव सम्बोध्यः; पूर्वं "तामिमांऽऽप्रीणीहि"–इति प्रजापतिप्रार्थनस्योक्तत्वात् । 'अस्य' समिद्धस्य अग्नेः 'शुक्रा' शोचमानानि 'शोचींषि' तेजांसि, 'ऊर्ध्वा' ऊर्ध्वानि भवन्ति, 'द्युमत्तमा' नैर्लेपः, वीर्यवत्तमानि । अग्निं विशिनष्टि–'सुप्रतीकस्य' शोभनावयवस्य प्रजापतेः 'सूनोः' अग्निपुत्रस्य । अग्निना प्रजापतेर्विस्रस्तसन्धानोक्तेस्तत्पुत्रत्वम् । प्रतिपादमनूद्य व्याचष्टे–ऊर्ध्वा ह्येतस्य समिद्धस्येति ॥ ३२ ॥

एतेषामाप्रीमन्त्राणामेकाभिधेयतां दर्शयति–ता एता एकव्याख्याना एतमेवाभीति । "समास्त्वाऽग्न ऋतवः" इत्यत्रोक्तब्राह्मणवाक्यवद् व्याख्येयम् । एतेषामपि पूर्ववदेवाग्निप्रजापतिसम्बन्धं दर्शयति–ता आग्नेय्य इति ॥ ३३ ॥

ता विषमा विषमपदा इति । 'ताः' प्रयाजयाज्याः 'विषमाः' । वैषम्यमेव दर्शयति–'विषमपदाः' पादैर्विषमाः, काश्चन त्रिपदाः काश्चन चतुष्पदाः, अत एव 'विषमाक्षराः' अक्षरैरपि विषमाः, न्यूनाधिकाक्षरै-

---

१–अस्मिन्नेव ब्राह्मणे षड्विंशतितमकण्डिकायाम् ।

वैश्वानरः पशुपुरोडाशः । ( शो ) वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषामग्नीनामुपाप्त्यै ॥ ३५ ॥

यद्वेव वैश्वानरः । ( ऽ ) ऋतवो हैते यदेताश्चितयोऽग्नयो वाऽऋतवऽऋतवः संव्वत्सरः संव्वत्सरो वैश्वानरो यदग्नय ऽइति स्यादति तद्रेचयेद् द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरो वैश्वानर ऽआग्नेय्यो याज्याऽनुवाक्या ऽअग्निरूपाणामुपाप्त्यै कामवत्यः कामानामुपाप्त्यै॥३६॥

तद्धैके । ( कऽ ) इत्येवैतानि पशुशीर्षाणि चित्त्वोपदधत्युभयेनैते पशव ऽइति त्ते ह ते मर्त्याः कुणपाः सम्भवन्त्यनाप्रीतानि हि तानि तद्ध तथाऽऽषाढेः सौश्रोमतेयस्योपदधुः स ह क्षिप्रऽएव ततो ममार ॥ ३७ ॥

---

वैश्वानरः पशुपुरोडाशः । वैश्वानरो वै सर्वेऽग्नयः । सर्वेषामग्नीनामुपाप्त्यै ॥ ३५ ॥

यद्वेव वैश्वानरः ऋतवो हैते— यदेताश्चितयः । अग्नयो वाऽऋतवः । ऋतवः सम्वत्सरः । सम्वत्सरो वैश्वानरः । यदग्नय इति स्यात्–अति तद्रेचयेत् । द्वादशकपालः । द्वादश मासाः सम्वत्सरः । सम्वत्सरो वैश्वानरः । आग्नेय्यो याज्यानुवाक्याः । अग्निरूपाणामुपाप्त्यै । कामवत्यः । कामानामुपाप्त्यै ॥ ३६ ॥

तद्धैके–इत्येवैतानि पशुशीर्षाणि चित्त्वोपदधाति । उभयेनैते पशव इति । ते ह ते मर्त्याः कुणपाः

---

युक्ताः; अत एव 'छन्दांसि विषमाणि' काश्चन त्रिष्टुभः, काश्चन गायत्र्यः, काश्चन उष्णिहः । अथो यान्यस्याध्यात्ममिति । 'अस्य' अग्नेः 'अङ्गानि' अपि 'विषमाणि' न्यूनाधिकपरिमाणानि अत एव विषमाभिराप्रीभिः प्रजापतेर्विषमाणि अङ्गानि प्रीणितवान् भवतीत्यर्थः ॥ ३४ ॥

अथ प्रागुक्तान् पुरुषादीन् पञ्च पशूननुलक्ष्य निर्वापणीयं पशुपुरोडाशं सदेवताकं विधत्ते-वैश्वानरः पशुपुरोडाश इति । विश्वानरहितत्वात् सर्वाग्निरूपता तस्य ॥ ३५ ॥

यद्वेव वैश्वानर इति । सर्वचितीनाममृतात्मकत्वोक्तेरग्नीनामृतुत्वमुक्तमित्याह–अग्नयो वा ऋतव इति । वैश्वानरः पशुपुरोडाश इत्यत्र साक्षादग्निसम्बन्धो न प्रतीयत इति मत्वा केचित् अग्नये वैश्वानराय पशुपुरोडाश इत्यग्निसम्बन्धद्योतनार्थमिदं प्रक्षिपन्ति तदतिरेकेण दूषयति–यदग्नय इति स्यादति तद्रेचयेदिति । तस्य पुरोडाशस्य द्वादशकपालसंस्कृतत्वं विधत्ते–द्वादशकपाल इति । अथात्र वपापुरोडाशहविषामग्निदेवत्याः कामपदयुक्ता याज्यानुवाक्या विधत्ते–आग्नेय्यो याज्यानुवाक्या इति ॥ ३६ ॥

अत्र कात्यायनः–" त्वङ्मस्तिष्कोद्धृतानि घृताक्तानि शिरांसि निदधाति, सकलानि वा, अन्यानि वा हिरण्मयानि वा मृन्मयानि वाऽनालभ्यैतान् "-( का. श्रौ. सू. १६।२०–२२ ) इति । त्वगेव त्वक्, मस्तिष्क-

---

१–प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः । का० श्रौ० सू० १६ । २१ ॥

हिरण्मुयान्यु हैके कुर्व्वन्ति । ( न्त्य ) अमृतेष्टकाऽ इति व्वदन्तस्ता ह ता ऽअमृतेष्टका न हि तानि पशुशीर्षाणि ॥ ३८ ॥

मृन्मुयान्यु हैके कुर्व्वन्ति । ( न्त्यु ) उुत्सन्ना वुाऽएते पशवो यद्दै किंचो-त्सन्नमियं तस्य सुर्व्वस्य प्रतिष्ठा तद्यत्रैते पशुवो गतास्तुतऽ एनानुधि सुम्भरामऽ इति न तुथा कुर्याद्यो वुाऽएतेषामावृतं च ब्राह्मणं च नु व्विद्या-त्तुस्यैतऽउुत्सन्नाः स्युः सुऽ एतानेव पुञ्च पशूनालभेत यावदस्य व्वुशः

---

सम्भवन्ति । अनाप्रीतानि हिं तानि । तद्ध तथाऽऽषाढेः सौश्रोमतेयस्योपदधुः । स ह क्षिप्रऽएव ततो ममार ॥ ३७ ॥

हिरण्मयान्यु हैके कुर्वन्ति—अमृतेष्टका इति वदन्तः । ता ह ता अमृतेष्टकाः । न हि तानि पशुशीर्षाणि ॥ ३८ ॥

मृन्मयान्यु हैके कुर्वन्ति । उत्सन्ना वाऽएते पशवः । यद्वै किंचोत्सन्नम्—इयं तस्य सर्वस्य प्रतिष्ठा । तद् यत्रैते पशवो गताः—तत एनानधि सम्भराम इति । न तथा कुर्यात् । यो वाऽएतेषा-

---

शब्देन शिरःकपालगता मज्जाऽभिधीयते, ते उद्धृत्य घृतसिक्तानि उक्तपुरुषादिपञ्चपशुशिरांसि; निदधाति 'सकलानि' त्वङ्मस्तिष्कसहितानि 'वा' दध्यात्; अथवा उक्तानुक्तान् पुरुषादिपशूननालभ्य सञ्ज्ञपनमक्त्वेत्यर्थः; 'अन्यानि' सञ्ज्ञपनहतानि पञ्च पशुशीर्षाणि दध्यात्; अथ वा तत्प्रतिनिधित्वेन 'हिरण्मयानि' सुवर्णनिर्मितानि, 'मृन्मयानि' वा गृह्णीयात् इति विकल्पत्रयमिति सूत्रार्थः ।

तत्र आलम्भपक्ष एव मुख्य इति सिद्धान्तयितुं तान् पक्षान् सदोषान् कृत्वोपन्यस्यति—तद्धैक इत्येवैतानि पशुशीर्षाणि चित्वोपदधतीत्यादिना । 'इत्येव' वक्ष्यमाणप्रकारेण 'वित्त्वा' विदेर्लाभार्थस्य क्त्वाप्रत्यये रूपम, लब्ध्वा, सम्पाद्येत्यर्थः । 'उभयेन' लाभालम्भाभ्याम् 'एते' 'पशवो' भवन्ति 'इति' वदन्तः 'एके' इति समन्वयः । प्रयाजैरसंस्कृतत्वात् 'तानि' शिरांशि 'अनाप्रीतानि' जातानीत्यर्थः ॥

एतैरेवोपधाने इष्टानिष्टे दर्शयति—तद्ध तथाऽऽषाढेरिति । 'सौश्रोमतेयस्य' सुश्रोमती नाम काचन मुनिपत्नी, तस्या अपत्यमाषाढिर्नाम ऋषिः, तस्य । तथा सञ्ज्ञपनहतानि शिरांसि 'उपदधुः,' 'ततः' तदनन्तरं 'सः' आषाढिः 'क्षिप्र एव' काले मृतवान् ॥ ३७ ॥

कुणपमर्त्यत्वदोषपरिहाराय हिरण्मयशीर्षोपधानं केचिद्वदन्तीत्याह—हिरण्मयान्यु हैके कुर्वन्तीति । यद्यपि 'अमृतेष्टकाः,' तथापि 'न पशुशीर्षाणि' इति न तैरुपधानं युक्तमित्यर्थः ॥ ३८ ॥

मृन्मयान्यु हैक इति । 'एते' पुरुषादयः 'पशवः' 'उत्सन्नाः' आलब्धव्यत्वात्, अतः किं मृन्मय करणमिति; तत्राह—यद्वै किञ्चेति । 'यत् किञ्च उत्सन्नं' वस्तु भवति, 'तस्य सर्वस्य' 'इयं' पृथिवी-'प्रतिष्ठा'; नष्टं पृथिवीमन्वेतीति तस्याः प्रतिष्ठात्वम् । 'तत्' तस्मात् 'यत्र' यस्मिन् प्रदेशे नष्टाः 'पशवः' 'गताः', 'ततः' तस्मात् प्रदेशात् 'एनान्' पशून् 'सम्भरामः' आनेष्यामः 'इति' मृन्मय-करणे युक्तिः । न तथा कुर्यादिति, तन्निषेधः ॥

स्याचान्हैतान्प्रजापतिः प्रथम ऽआलेभे श्यापर्णः सायकायनोऽन्तमोऽथ ह स्मैतानेवान्तरेणालभन्तेऽथैतर्हीमौ द्वावेवालभ्येते प्राजापत्यश्च वायव्यश्च तयोरतो ब्राह्मणमुद्यते ॥ ३९ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ६-१-४॥ (२.१.) ॥
इति प्रथमप्रपाठकः समाप्तः ॥ कण्डिकासंख्या ११० ॥

---

मावृतं च ब्राह्मणं च न विद्यात्-तस्यैतऽउत्सन्नाः स्युः । स एतानेव पञ्च पशूनालभेत-यावदस्य वशः स्यात् । तान्हैतान्प्रजापतिः प्रथम आलेभे । श्यापर्णः सायकायनोऽन्तमः । अथ ह स्मैतानेवान्तरेणालभन्ते । अथैतर्हीमौ द्वावेवालभ्येते-प्राजापत्यश्च, वायव्यश्च । तयोरतो ब्राह्मणमुद्यते॥ ३९॥

---

इदानीं पञ्चपश्वालम्भपक्षं सिद्धान्तयति-**यो वा एतेषामिति** । ' आवृतं ' प्रयाणक्रमम्, तद्विधायकं ' ब्राह्मणम् ' ' च ' अविदुष एव ' एते ' पशवः ' उत्सन्नाः ' । **स एतानिति** । ' सः ' विद्वान् । **यावदस्य वशः स्यादिति** । ' अस्य ' चिन्वतः पुरुषस्य ' यावत् ' कर्मप्रयोगः ' वशः ' ' स्यात् ' स्वाधीनो भवेत्, ' स पशूनालभेत ' इत्यन्वयः ॥

अस्मिन्नर्थे अनुष्ठातृसम्प्रदायं प्रमाणयति-**तान् हैतान् प्रजापतिः प्रथम इति** । सायकस्यापत्यं ' सायकायनः ' ' श्यापर्णः ' नाम ' अन्तमः ' चरमः ' आलेभे ' । ' अन्तरेण ' प्रजापतिश्यापर्णयोरन्तरालकाले ये अनुष्ठातारः, ते ' एतानेव ' पञ्च पशून् ' आलभन्ते ' आलेभिरे ॥

एतावत्पर्यन्तं पञ्चपश्वालम्भपक्ष उक्तः, इतः परं प्राजापत्यवायव्यपक्षौ वर्ण्येते । त्रयः पक्षा अपि समविकल्पाः । तत्रेदानीमपि अनुष्ठातृभिः पञ्चपश्वालम्भः कार्य इति मन्यते, तान् प्रत्याह-**अथैतर्हीमौ द्वावेवालभ्येते इति** । ' अथ ' इति पक्षान्तरप्रारम्भे । ' एतर्हि ' अधुना । एतच्छब्दात् कालार्थे र्हिल् प्रत्ययः । ( पा. सू. ५ । ३ । १६ ) ' प्राजापत्यः वायव्यश्च ' इति द्वौ पशू ' आलभ्येते ' । तावपि समविकल्पाविति प्रागुक्तम् । ' अतः ' ' तयोः ' एतयोः पश्वोः विधायकं ' ब्राह्मणम् ' ' उद्यते ' भण्यते । " वद व्यक्तायां वाचि " ( धा. पा. भ्वा. प. १०३४ ) लिटि " वचिस्वपियजादीनां किति "-( पा. सू. ६ । १ । १५ ) इति सम्प्रसारणम् ॥ ३९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ६-२-१ ) ॥

---

१-पूर्वो वा देवतासामान्यात् । उत्तरे तु सामान्योपदेशाभ्याम् । वायवे वा नियुत्वते श्वेतलप्सुदी द्वे दद्यात् । प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः । का० श्रौ० सू० १६ । ३६-३९ ।

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।

## द्वितीयाध्याये च द्वितीयं ब्राह्मणम् ।

प्राजापत्यं चरकाऽ आलभन्ते । प्रजापतिरग्निं चित्वाऽग्निरभवत्तद्यदेतमालभते तदेवाग्नेरन्तं पर्येतीति ॥ १ ॥

श्यामो भवति । द्वयानि वै श्यामस्य लोमानि शुक्लानि च कृष्णानि च द्वन्द्वं मिथुनं प्रजननं तदस्य प्राजापत्यꣳ रूपं तूपरो भवति तूपरो हि प्रजापतिः ॥ २ ॥

तस्यैकविꣳशतिः सामिधेन्यः । (न्यो) द्वादश मासाः पञ्चऽर्तवस्त्रयऽइमे लोकाऽअसावादित्यऽएकविꣳशऽ एष प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥ ३ ॥

यद्वेवैकविꣳशतिः । (रे) एकविꣳशो वै पुरुषो दश हस्त्याऽअङ्गु-

---

प्राजापत्यं चरका आलभन्ते । प्रजापतिरग्निं चित्वाऽग्निरभवत् । तद्यदेतमालभते—तदेवाग्नेरन्तं पर्येति ॥ १ ॥

श्यामो भवति । द्वयानि वै श्यामस्य लोमानि—शुक्लानि च कृष्णानि च । द्वन्द्वं मिथुनं प्रजननम् । तदस्य प्राजापत्यं रूपम् । तूपरो भवति । तूपरो हि प्रजापतिः ॥ २ ॥

तस्यैकविंशतिः सामिधेन्यः । द्वादश मासाः, पञ्चर्तवः, त्रय इमे लोकाः, असावादित्य एकविंशः । एष प्रजापतिः—प्रजापतिरग्निः । यावानग्निः । यावत्यस्य मात्रा—तावतैवैनमेतत्समिन्धे ॥ ३ ॥

यद्वेवैकविंशतिः । एकविंशो वै पुरुषो दश हस्त्या अङ्गुलयः, दश पाद्याः, आत्मैकविंशः । पुरुषः प्रजापतिः । प्रजापतिरग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतत्समिन्धे ॥ ४ ॥

---

प्रजापतिदेवत्यपश्वनुष्ठाने सम्प्रदायं दर्शयति—प्राजापत्यं चरका आलभन्त इति । चरका नाम चरकप्रोक्तशाखाध्यायिनो महर्षयः । तत्र फलमाह—प्रजापतिरग्निं चित्वेति ॥ १ ॥

तस्य पशोर्वर्णं विधत्ते—श्यामो भवतीति । 'श्यामः' शुक्लकृष्णवर्णद्वययुक्तः पशुः कार्य इत्यर्थः । तद्वर्णद्वयं प्रजापतिः स इत्युपपादयति—द्वयानि वै श्यामस्य लोमानीति । प्रजापतेर्लोकप्रजननसद्भावात् उक्तविधरूपद्वयसमुदायस्य प्राजापत्यत्वम् । गुणान्तरं विधत्ते—तूपरो भवतीति । विषाणरहितस्य प्रजापतेरपि श्रृङ्गरूपस्योत्तमवस्तुनो राहित्यादिति तत्साम्यम् । अत्र कात्यायनः—"श्यामतूपरो वा प्राजापत्य उपदध्यात्"—(का. श्रौ. सू. १६ । ३३ ।) इति ॥ २ ॥

प्रजापतिदेवत्यपशुपक्षे सामिधेनीषु समिध्यमानसमिद्धवत्योर्ऋचोर्मध्ये "समास्त्वाऽग्न ऋतवः"—(वा. सं. १७ । १ ।) इत्याद्याः षट्सङ्ख्या ऋचो निदध्यादिति । तदिदं विधत्ते—तस्यैकविंशतिः सामिधेन्य इति ।

ल्यो दश प्राद्याऽ आत्मैकविᳬंशः पुरुषः प्रजापतिः प्रजापतिरग्निर्यावान-
ग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥ ४ ॥

(न्द्धेऽ) उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । तासामुक्तो बन्धु रुक्तम्वेवान्वृ-
चꣳ हिरण्यगर्भवत्याऽऽघारमाघारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापति-
रग्निर्द्वादशाप्रियस्तासामुक्तो बन्धुरुक्तम्वेवान्वृचं प्राजापत्यः पशुपुरोडाशो
यऽ एव पशोर्बन्धुः स पुरोडाशस्य द्वादशकपालो द्वादश मासाः संव्वत्सरः
संव्वत्सरः प्रजापतिः कद्वत्यो याज्यानुवाक्याः को हि प्रजापतिः ॥ ५ ॥

---

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । तासामुक्तो बन्धुः । उक्तम्वेवान्वृचम् । हिरण्यगर्भवत्याऽऽघार-माघारयति । प्रजापतिर्वै हिरण्यगर्भः । प्रजापतिरग्निः । द्वादशाप्रियः, तासामुक्तो बन्धुः । उक्तम्वेवा-न्वृचम् । प्राजापत्यः पशुपुरोडाशः । य एव पशोर्बन्धुः—स पुरोडाशस्य । द्वादशकपालः । द्वादश मासाः सम्वत्सरः, सम्वत्सरः प्रजापतिः । कद्वत्यो याज्यानुवाक्याः । को हि प्रजापतिः ॥ ५ ॥

---

प्रकृतिगताः पञ्चदश, इदानीं धाय्याः षट्[1], उभयथ एकविंशतिरित्यर्थः । सामिधेनीगतामेकविंशतिसङ्ख्यां प्रकारद्वयेन प्रशंसति—द्वादश मासा इति । कण्डिकाद्वयं पूर्ववद् व्याख्येयम् ॥ ३ ॥ ४ ॥

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाहेति । सामिधेनीषु पूर्वं गायत्रीच्छन्दस्का भूयस्यः, मध्ये त्रिष्टुभः, अन्ते च गायत्र्यः, ताश्च प्रजापतिसन्धानार्थाः ॥

एतस्य सर्वस्य विधायकं ब्राह्मणमतिदिशति—तासामुक्तो बन्धुरुक्तम्वेवान्वृचमिति । 'बन्धुः' स्तावकं ब्राह्मणम् 'उक्तम्', पञ्चपशुविधिप्रकरणे; सामिधेनीषु आसाम् 'अन्वृचं' प्रत्यृचम् उक्तमेव, व्याख्यातं चेत्यर्थः, "प्राणो गायत्र्यात्मा त्रिष्टुप्" (श. प. २ । १ । २) इत्यादिना, "ता एता एकव्याख्यानाः एतमेवाभि यथैतमेव संस्कुर्यादेतं जनयेत्"—(श. प. ६ । २ । १ । २७) इति च । अस्मिन् प्राजापत्य-पक्षे उत्तराघारे मन्त्रविशेषं—हिरण्यगर्भवत्याऽऽघारमाघारयतीति वचनात् हिरण्यगर्भपदवत्या ऋचा आघारः स्रुचि, उत्तरस्यामिति सामर्थ्याल्लभ्यते । "हिरण्यगर्भः समवर्त्तताग्रे"—(वा. सं. १३ । ४) इति मन्त्रेणे-त्यर्थः । अत्र किमयमविशेषेणोक्तो मन्त्रः पूर्वस्मिन् स्रुवाघारे ? इति । किं तावत् प्राप्तम् ? पूर्वाघारो हिरण्य-गर्भवत्या कर्त्तव्यः, कुतः ? देवतासामान्यात् । पूर्वाघारः तूष्णीं हूयमानत्वात् प्रजापतिदेवत्यः; हिरण्यगर्भमन्त्रस्यापि प्रजापतिर्देवता; "कस्मै देवाय हविषा विधेम"—(वा. सं. १३ । ४) इति मन्त्रलिङ्गात् । 'क'-शब्देन प्रजापतिरभिधीयते; "को हि प्रजापतिः"—(श. ब्रा. ४ । ५ । ६ । ४ ॥ ६ । २ । २ । ५ । १२) । (तै. सं. १ । ७ । ६ । ६) इति श्रुतेः । अतो मन्त्रो देवताभिधानसमर्थः पूर्वस्मिन् स्रुवाघारे एव विनियुज्यते इति प्राप्ते, ब्रूमः—पूर्वाघारे नायं मन्त्रः; किन्तर्हि ? उत्तराघारे, मन्त्रवत्त्वसामान्यात् । यस्याघारस्य प्रकृतौ मन्त्रो

---

१-षड्दध्यात् । धाय्या इति यावत् । २-इदं तु कर्कभाष्यस्थं वचनम् । एतद्भाष्यमूलभूतं सूत्रं तु 'हिरण्यगर्भ' इत्यृच स्रुवाघारः । का. श्रौ. सू. १६ । ३५ ।

( ३ ) अथैतं वायवे नियुत्वते । शुक्लं तूपरमालभते प्रजापतिः प्रजाः सृष्ट्वाऽनुव्यैक्षत तस्यात्यानन्देन रेतः परापतत्सोऽजः शुक्लस्तूपरो लप्सुद्यभवद्रसो वै रेतो यावान्वै रसस्तावानात्मा तद्यदेतमालभते तदेवाग्नेरन्तं पर्येति शुक्लो भवति शुक्लꣳ हि रेतस्तूपरो भवति तूपरꣳ हि रेतो वायवे भवति प्राणो वै वायुर्नियुत्वते भवत्युदानो वै नियुतः प्राणोदानावेवास्मिन्नेतद्दधाति ॥ ६ ॥

यद्वेवैतं वायवे नियुत्वते । शुक्लं तूपरमालभते प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन्त्स योऽस्मात्प्राणो मध्यत उदक्रामत्तमस्मिन्नेतेन पशुना-

---

अथैतं वायवे नियुत्वते शुक्लं तूपरमालभते । प्रजापतिः प्रजाः सृष्ट्वाऽनुव्यैक्षत । तस्यात्यानन्देन रेतः । परापतत् सोऽजः शुक्लस्तूपरो लप्सुद्यभवत् । रसो वै रेतः । यावान्वै रसस्तावानात्मा । तद्यदेतमालभते–तदेवाग्नेरन्तं पर्येति । शुक्लो भवति । शुक्लं हि रेतः । तूपरो भवति । तूपरं हि रेतः । वायवे भवति । प्राणो वै वायुः । नियुत्वते भवति । उदानो वै नियुतः । प्राणोदानावेवास्मिन्नेतद्दधाति ॥ ६ ॥

यद्वेवैतं वायवे नियुत्वते शुक्लं तूपरमालभते । प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन् । स योऽस्मात्प्राणो मध्यत उदक्रामत्–तस्मिन्नेतेन पशुनाऽदधुः । तथैवास्मिन्नयमेतद्दधाति । वायवे भवति ।

---

दृष्टः, तत्रैव मन्त्रान्तरविधानं युक्ततरम्; इतरत्र पूर्वाघारे तु पूर्वं प्रकृतौ मन्त्राराहित्यादमन्त्रवत्ता विधेया, तद्विशेषे च गौरवं स्यात् । तर्हि उत्तराघारे ऐन्द्रमन्त्रस्य विनियुक्तत्वात् कथमत्र तद्विशेषविधिरिति चेत् ? , सत्यम् । 'इन्द्र'–पदस्य प्रजापतिपरतया व्याख्यातुं योग्यत्वात्, मन्त्रवत्त्वसामान्याच्च मन्त्रान्तरस्य निवर्त्तको भवति । तस्मात् उत्तराघारे एवायं मन्त्र इति सिद्धान्तः ॥

कात्यायनेनापि पूर्वोत्तरपक्षौ दर्शितौ–"हिरण्यगर्भ इत्यृचा स्रुवाघारः, पूर्वो देवतासामान्यात्, उत्तरे तु सामान्योपदेशाभ्याम्"–( का. श्रौ. सू. १६ । ३९–३७ ) इति । पूर्व एव नापूर्वाघारः; प्रकृतिलिङ्गसामान्यात् । न तु पूर्वः प्रथम आघारः; उत्तरत्र वर्ण्यमानपूर्वोत्तरपक्षविरोधात् । तौ चाधिकरणे पूर्वोत्तरपक्षवद् योज्यौ "तुल्यमन्यत् सर्वेषु"–( का. श्रौ. सू. १६ । ४३ ) इति यत् कात्यायनेन दर्शितम्, तदिदमाह–द्वादशाप्रिय इति । एतासामाप्रीणामपि संख्यास्तावकं ब्राह्मणं प्रजापतिसंस्कारसन्धानजननलक्षणैकार्थव्याख्यानं चातिदिशति–तासामुक्तो बन्धुरिति । 'बन्धुः' ब्राह्मणम् । प्राजापत्यपशुपुरोडाशस्य तत्पशुब्राह्मणमतिदिशति–य एव पशोर्बन्धुः स पुरोडाशस्येति । एवं ह्येतत्–"प्राजापत्यं चरका आलभन्ते प्रजापतिरग्निं चित्वाऽग्निरभवत् तद्यदेतमालभते तदेवाग्नेरन्तं पर्येति"–इति । 'क' पदयुक्तानां प्रजापतिदेवत्यत्वं दर्शयति–को हि प्रजापतिरिति ॥ ५ ॥

वायव्य पशुपक्षं विधत्ते–अथैतं वायव इति । 'नियुत्वते' नियुत्वद्गुणकाय वायवे 'शुक्लः' वर्णतः,

---

१–अस्मिन्नेव ब्राह्मणे प्रथमकण्डिकायाम् ।

ऽदधुस्तथैवास्मिन्नयमेतद्दधाति व्वायवे भवति प्राणो वै व्वायुर्नियुत्वते भवत्युदानो वै नियुतः प्राणोदानावेवास्मिन्नेतद्दधाति शुक्लो भवति शुक्लो हि व्वायुस्तूपरो भवति तूपरो हि व्वायुः ॥ ७ ॥

( स्तु ) तस्य सप्तदश सामिधेन्यः । सप्तदशो वै संव्वत्सरो द्वादश मासाः पञ्चऽर्तवः संव्वत्सरः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन-मेतत्समिन्द्धे ॥ ८ ॥

यद्वेव सप्तदश । सप्तदशो वै पुरुषो दश प्राणाश्चत्वार्यङ्गान्यात्मा पञ्चदशो ग्रीवाः षोडश्यः शिरः सप्तदशं पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्या-वत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥ ९ ॥

---

प्राणो वै वायुः । नियुत्वते भवति । उदानो वै नियुतः । प्राणोदानावेवास्मिन्नेतद्दधाति । शुक्लो भवति । शुक्लो हि वायुः । तूपरो भवति । तूपरो हि वायुः ॥ ७ ॥

तस्य सप्तदश सामिधेन्यः । सप्तदशो वै संवत्सरः । द्वादश मासाः, पञ्चऽर्तवः । सम्वत्सरः प्रजापतिः । प्रजापतिरग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतत्समिन्द्धे ॥ ८ ॥

यद्वेव सप्तदश । सप्तदशो वै पुरुषो—दश प्राणाः, चत्वार्यङ्गानि, आत्मा पञ्चदशः, ग्रीवाः षोडश्यः, शिरः सप्तदशम् । पुरुषः प्रजापतिः । प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा—तावतैवैन-मेतत् समिन्द्धे ॥ ९ ॥

---

'तूपरः' विषाणरहितः, आलब्धव्यः । "प्रजापतिः प्रजाः सृष्ट्वाऽनुव्यैक्षत" इत्यादिकं "तूपरो हि वायुः" इत्यन्तं ब्राह्मणं पशोः शुक्लत्वतूपरत्वयोर्नित्यत्वाद् वायुदेवत्यस्यैव स्तावकम् । तूपरो लप्सुदीति । 'लप्सुदी' ललाटे शुक्लवर्ण इत्यर्थः ॥ ६ ॥ ७ ॥

अस्य पशोः सप्तदशसामिधेनीराह—तस्य सप्तदशेति । कात्यायनोऽपि—"वायवे वा नियुत्वते श्वेत-लप्सुदी द्वे दध्यात्" ( का. श्रौ. सू. १६।३८ ) इति । सप्तदशसङ्ख्यां मासर्तुरूपसंवत्सरात्मना स्तौति—सप्तदशो वै संवत्सरं इति ॥ ८ ॥

प्रकारान्तरेण तामेव संख्यां प्रशंसति—यद्वेव सप्तदश सप्तदशो वै पुरुष इति । सप्तदशत्वमेव विभज्य दर्शयति—प्राणा इति । चत्वार्यङ्गानीति । बाहुद्वयं पादद्वयमित्यर्थः । आत्मा मध्यदेहः । 'ग्रीवाः' इति बहुवचनं कण्ठगतधमनिबहुत्वापेक्षम् ॥ ९ ॥

---

१—वायवे वा नियुत्वते श्वेतलप्सुदी । का० श्रौ० सू० १६ । ३८ । 'लप्सुदी कूर्चलः' इति कर्कः ।

( न्द्ध९ ) उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । तासामुक्तो बन्धुरुक्तम्वेवान्वृचं द्वादशाप्रियस्तासामुक्तो बन्धुरुक्तम्वेवान्वृचं प्राजापत्यः पशुपुरोडाशोऽत्रो स कामऽउपाप्तऽइति ह स्माह माहित्थिर्यं चरकाः प्राजापत्ये पशावाहुरिति ॥ १० ॥

यद्देव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशोऽर्धꣳ ह प्रजापतेर्वायुरर्धं प्रजापतिस्तद्यदुभौ वायव्यौ स्यातामुभौ वा प्राजापत्यावर्धꣳ हैवास्य कृतꣳ स्यान्नार्धमथ यद्वायव्यः पशुर्भवति प्राजापत्यः पशुपुरोडाशस्तेन हैवैतꣳ सर्वं कृत्स्नं प्रजापतिꣳ संस्करोति ॥ ११ ॥

यद्देव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशः प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन्त्स योऽस्मात्प्राणो मध्यत ऽउदक्रामत्तम-

---

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । तासामुक्तो बन्धुः । उक्तम्वेवान्वृचम् । द्वादशाप्रियः । तासामुक्तो बन्धुः । उक्तम्वेवान्वृचम् । प्राजापत्यः पशुपुरोडाशः । अत्रो स काम उपाप्त इति ह स्माह माहित्थिः—यं चरकाः प्राजापत्ये पशावाहुरिति ॥ १० ॥

यद्देव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशः । अर्धं ह प्रजापतेर्वायुः । अर्धं प्रजापतिः । तद्यदुभौ वायव्यौ स्याताम्, उभौ वा प्राजापत्यौ—अर्धं हैवास्य कृतं स्यात्, नार्धम् । अथ यद्वायव्यः पशुर्भवति, प्राजापत्यः पशुपुरोडाशः—तेन हैवैतं सर्वं कृत्स्नं प्रजापतिं संस्करोति ॥ ११ ॥

यद्देव वायव्यः पशुर्भवति, प्राजापत्यः पशुपुरोडाशः । प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन् ।

---

उभयीर्गायत्रीरिति । सामिधेन्याः प्रास्ताविकं ब्राह्मणं पूर्ववत् । अत्र वायव्यपशौ प्राजापत्यपशुकरणं प्रशंसति—अत्रो स काम उपाप्त इति ह स्माहेति । यं कामं प्राजापत्ये पशौ आहुर्वेदवादिनः, 'सः' तादृशः 'कामः' 'अत्रो' अत्रैव प्राजापत्ये पुरोडाशे 'उपाप्तः' 'इति' 'माहित्थिः' नाम ऋषिः उवाच ॥ १० ॥

यद्देव वायव्यः पशुर्भवतीति । 'वायुः' हि 'प्रजापतेः' 'अर्द्धम्' अर्द्धभागः; सूत्रात्मरूपत्वात् । 'प्रजापतिः' स्वयमेव 'अर्द्धम्' अर्द्धभागः; तत्र यदि पशुपुरोडाशौ 'उभौ' अपि 'वायव्यौ' वायुदेवत्यौ स्याताम्, 'उभौ वा प्राजापत्यौ' तर्हि 'अस्य' प्रजापतेः 'अर्द्धम्' एव तत् 'कृतम्' संस्कृतं 'स्यात्' न तु कृत्स्नः प्रजापतिः; उभयात्मकत्वात् तस्येति एकदेवत्यपशुपुरोडाशकरणे अर्द्धं तत् कृतं भवेदिति भावः, उभयोर्मिन्नमिन्नदेवत्ययोः करणे सर्वं प्रजापतिं संस्कृतवान् भवति । निगदसिद्धमन्यत् ॥ ११ ॥

एतस्य प्राजापत्यपुरोडाशस्य कत्पदयुक्ते याज्यानुवाक्ये विधत्ते—कद्वत्याविति । 'क' शब्दस्य प्रजापतिवाचकत्वमाह—को हीति ॥ १२ ॥

---

१—"प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः"—का० श्रौ० सू० १६ । ३९ । २—"प्राजापत्यस्य कद्वत्यो याज्यानुवाक्याः" का० श्रौ० सू० १६ । ४० ।

स्मिन्नेतेन पशुनाऽदधुरथास्यैतेन पुरोडाशेनात्मानꣳ समस्कुर्वन्त्स यत्प्राजापत्यो भवति प्रजापतिर्ह्यात्मा द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरः प्रजापतिः कद्वत्यौ याज्यानुवाक्ये को हि प्रजापतिः ॥ १२ ॥

(स्त) तद्यद्वपां पुरस्ताज्जुहोति । य ऽएवायं पुरस्तात्प्राणस्तमस्मिन्नेतद्दधात्यथ यदेतेन मध्यतश्चरन्ति मध्यतो ह्ययमात्माऽथ यद्धविषोपरिष्टाच्चरन्ति यऽ एवायमुपरिष्टात्प्राणस्तमस्मिन्नेतद्दधाति शुक्लवत्यो याज्यानुवाक्याः स्युः शुक्ररूपाणामुपाप्त्यै नियुत्वत्यो यदेव नियुत्वद्रूपं तस्योपाप्त्यै ॥ १३ ॥

तदु वाऽआहुः । (व्वं) व्वपायाऽ एव शुक्लवत्यौ स्यातामेतावद्वै पशौ शुक्रं यद्वपा शुक्रवत्यौ नियुत्वत्यौ हविषो यदेव नियुत्वद्रूपं तस्योपाप्त्याऽइति ॥ १४ ॥

---

स योऽस्मात्प्राणो मध्यत उदक्रामत्—तमस्मिन्नेतेन पशुनाऽदधुः । अथास्यैतेन पुरोडाशेनात्मानं समस्कुर्वन् । स यत्प्राजापत्यो भवति—प्रजापतिर्ह्यात्मा । द्वादशकपालः । द्वादश मासाः सम्वत्सरः । संवत्सरः प्रजापतिः । कद्वत्यौ याज्यानुवाक्ये । को हि प्रजापतिः ॥ १२ ॥

तद् यद्वपां पुरस्ताज्जुहोति । य एवायं पुरस्तात्प्राणः—तमस्मिन्नेतद्दधाति । अथ यदेतेन मध्यतश्चरन्ति—मध्यतो ह्ययमात्मा । अथ यद्धविषोपरिष्टाच्चरन्ति—य एवायमुपरिष्टात्प्राणः—तमस्मिन्नेतद्दधाति । शुक्रवत्यो याज्यानुवाक्याः स्युः—शुक्ररूपाणामुपाप्त्यै । नियुत्वत्यो—यदेव नियुत्वद्रूपं तस्योपाप्त्यै ॥ १३ ॥

तदु वाऽआहुः—वपाया एव शुक्रवत्यौ स्याताम् । एतावद्वै पशौ शुक्रं—यद्वपा । शुक्रवत्यौ नियुत्वत्यौ हविषः । यदेव नियुत्वद्रूपम्—तस्योपाप्त्याऽइति ॥ १४ ॥

---

तद्यद्वपां पुरस्ताज्जुहोति—इत्यादेरयमर्थः,—पूर्वं वायव्यपशोर्वपायागेन, मध्यतः प्राजापत्यपुरोडाशाचरणेन अन्त्ये पश्वङ्गयागेन, उभयतः प्राणान्, मध्ये आत्मानं च निहितवान् भवतीति ॥

वपाहविषोर्नियुत्वत्पदयुक्तां याज्यानुवाक्यां विधत्ते—शुक्रवत्य इति ॥ १३ ॥

अथ शाखान्तरानुसारेण वपाया एव 'शुक्र'—पदयुक्ते याज्यानुवाक्ये, पशुहविषस्तु 'शुक्रवत्' 'नियुत्वत्' पदयुक्ते याज्यानुवाक्ये इति दर्शयति—तदु वा आहुरिति । पूर्वं प्राजापत्यपुरोडाशस्य कत्पदयुक्ते याज्यानुवाक्ये उक्ते इति त्रयाणां वपापुरोडाशहविषां भिन्ना याज्यानुवाक्या इत्यर्थः । तदुक्तं कात्यायनेन—"प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः, कद्वत्यो याज्यानुवाक्याः प्राजापत्यस्य शुक्रवत्यो वायव्यस्य, वपाया वा"—(का. श्रौ. सू. १६ । ३९–४१) इति ॥ १४ ॥

यद्वेवैतं पशुमालभते । ( त॰ ) एतस्मिन्ह पशौ सर्वेषां पशूनाᳬं रूपं यत्तूपरो लप्सुदी तत्पुरुषस्य रूपं तूपरो हि लप्सुदी पुरुषो यत्तूपरः केसरवांस्तदश्वस्य रूपं तूपरो हि केसरवानश्वो यदष्टाशफस्तद्गो रूपमष्टाशफो हि गौरथ यदस्यावेरिव शफास्तदवे रूपं यदजस्तदजस्य तद्यदेतमालभते तेन हैवास्यैते सर्वे पशवऽआलब्धा भवन्त्यतो यतमदस्य कर्मोपकल्पेतैते वा पञ्च पशव ऽएष वा प्राजापत्य ऽएष वा नियुत्वतीयः १५

( स्तं ) तं पौर्णमास्यामालभेत । ( ता ) अमावास्यायामालभेतेत्यु हैकऽआहुरसौ वै चन्द्रः प्रजापतिः स एताᳬं रात्रिमिह वसति तद्यथोपतिष्ठन्तमालभेतैवं तदिति ॥ १६ ॥

---

यद्वेवैतं पशुमालभते । एतस्मिन् ह पशौ सर्वेषां पशूनां रूपम् । यत्तूपरो लप्सुदी–तत् पुरुषस्य रूपम् । तूपरो हि लप्सुदी पुरुषः । यत्तूपरः केसरवान्–तदश्वस्य रूपम् । तूपरो हि केसरवानश्वः । यदष्टाशफः–तद्गो रूपम् । अष्टाशफो हि गौः । अथ यदस्यावेरिव शफाः–तदवे रूपम् । यदजः–तदजस्य । तद्यदेतमालभते–तेन हैवास्यैते सर्वे पशव आलब्धा भवन्ति । अतो यतमदस्य कर्मोपकल्पेत–एते वा पञ्च पशवः, एष वा प्राजापत्यः, एष वा नियुत्वतीयः ॥ १५ ॥

तं पौर्णमास्यामालभेत । अमावास्यायामालभेत इत्युहैकऽआहुः । असौ वै चन्द्रः प्रजापतिः । स एतां रात्रिमिह वसति । तद्यथोपतिष्ठन्तमालभेत एवं तदिति ॥ १६ ॥

---

पूर्वं पुरुषादयः पञ्च पशव उक्ताः, अत्र त्वेक एव वायव्यः, तत् कथमेकेन पशुना सर्वयागसाध्यं फलं लभेत ? अतः पञ्चपशुपक्षस्वीकार एव युक्त इति शङ्कां व्युदस्यन् एकस्यापि वायव्यस्य पञ्चपशुरूपतां दर्शयति–यद्वेवैतं पशुमालभते एतस्मिन् ह पशौ सर्वेषां पशूनां रूपमिति । प्रागुक्तः पञ्चपश्वादिपक्षाणामन्यतमः पक्ष इच्छया कर्त्तव्य इत्याह–अतो यतमदस्य कर्मोपकल्पेतेति ।

तान्येव रूपाणि योजयति–यत्तूपरो लप्सुदीति । 'केसराः' स्कन्धरोमाणि ॥ १५ ॥

पश्वालम्भकालं विधत्ते–तं पौर्णमास्यामालभेतेति । तच्छब्दः पूर्वपरामर्शार्थः । वायव्यं पौर्णमास्यामालभेत । एतदुपलक्षणम्, सर्वानपि पञ्च पशून् प्राजापत्यं वायव्यं वा पौर्णमास्यामालभेतेत्यर्थः । अत एव कात्यायनेन सर्वशेषतया पञ्चपशुपक्षादौ सूत्रितम्–"उत्तरस्यां फाल्गुन्यां पौर्णमासेनेष्ट्वा पञ्च पशूनालभेते[1]"–इति ॥

अत्र केषाञ्चित् पक्षं सोपपत्तिकमनुवदति–अमावास्यायामालभेतेत्यु हैक आहुरिति[2] । चन्द्रस्य प्रजापतिताद्रूप्यं प्रागुक्तम्; चन्द्रमा मनसो जातः, मनश्च प्रजापतिदेवत्यम् । तदेतयोः कार्यकारणयोरभेदोपचारेणेति । सः 'चन्द्रः' 'एतां रात्रिम्' अमावास्यारात्रौ 'इह' च लोके ओषध्यात्मना 'वसति', तस्मात् 'यथा'

---

१–'दक्षिणान्' इति सूत्रशेषः । २–"अमावास्यायामेके" का० श्रौ० सू० १६। ७। 'सा च माघामावास्या सन्निधानाद् गृह्यते'–इति तत्र कर्कः ।

तद्वै पौर्णमास्युामेव । ( वा ) असौ वै चन्द्रः पशुस्तं देवाः पौर्णमास्या-मालभन्ते यत्रैनं देवाऽआलभन्ते तदेनमालभाऽइति तस्मात्पौर्णमास्यां यद्वेव पौर्णमास्यां पौर्णमासी ह वाव प्रथमा व्युवास तस्माद्वेव पौर्णमास्याम् ॥ १७ ॥

तद्वै फाल्गुन्यामेव । ( वै ) एषा ह संव्वत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वा मुखत ऽएव तत्संव्वत्सरमालभते ॥ १८ ॥

स वाऽइष्ट्वैव पौर्णमासेन । ( ना ) अथ पशुमालभेत पौर्णमासेन वाऽइन्द्रो वृत्रं पाप्मानꣳ हत्वाऽपहतपाप्मैतत्कर्मारभत तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मानꣳ हत्वाऽपहतपाप्मैतत्कर्मारभते ॥ १९ ॥

---

तद्वै पौर्णमास्यामेव । असौ वै चन्द्रः पशुः । तं देवाः पौर्णमास्यामालभन्ते । यत्रैनं देवा आलभन्ते—तदेनमालभाऽइति । तस्मात् पौर्णमास्याम् । यद्वेव पौर्णमास्यात् पौर्णमासी ह वाव प्रथमा व्युवास । तस्माद्वेव पौर्णमास्याम् ॥ १७ ॥

तद्वै फाल्गुन्यामेव । एषा ह सम्वत्सरस्य प्रथमा रात्रिः—यत्फाल्गुनी पौर्णमासी—योत्तरा । एषोत्तमा—या पूर्वा । मुखत एव तत् संवत्सरमालभते ॥ १८ ॥

स वाऽइष्ट्वैव पौर्णमासेन—अथ पशुमालभते । पौर्णमासेन वाऽइन्द्रो वृत्रं पाप्मानं हत्वाऽपहतपाप्मैतत्कर्मारभत । तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मानं हत्वाऽपहतपाप्मैतत्कर्मारभते ॥ १९ ॥

---

येन प्रकारेण 'उपतिष्ठन्तं' चन्द्रम् 'आलभेत', 'एवं' 'तत्' पश्वालम्भनम् । अमावास्यायां पश्वालम्भ श्चन्द्रालंभसमान इति प्रशस्त इत्यर्थः ॥ १६ ॥

पौर्णमास्यामेवालभेतेति सिद्धान्तयितुं पुनरनुवदति—तद्वै पौर्णमास्यामेवेति । असौ वै चन्द्रः पशुरित्यादेरयमर्थः—वस्वादयो 'देवाः' पशुरूपं चन्द्रं पौर्णमास्यामालभ्य, प्रतिपदादितिथिषु एकैकां कलां प्राश्नन्तीति प्रसिद्धम्; अत एवामावास्यायामेककलावशेषत्वात् पुनस्तं वर्द्धयन्ति । अत्र तैत्तिरीयकम्—"घ्नन्ति वा एतं पूर्णमास आऽमावास्यायां प्याययन्ति"—( तै. सं २ । ५ । २ । ४, ५ ) इति । 'तस्मात्' मयाऽपीदानीमनुष्ठात्रा 'यत्र' यस्मिन् काले 'देवाः' पशुमालब्धवन्तः, तस्मिन्नेव काले पशुरालब्धव्य इति । ( प्रथमा व्युवासेति ) ॥ १७ ॥

तद्वै फाल्गुन्यामेवेति । 'एषा' 'संवत्सरस्य' सर्वासां रात्रीणां 'प्रथमा' आदिभूता 'रात्रिः' या उत्तरफल्गुनीनक्षत्रयुक्ता 'पौर्णमासी' 'या पूर्वा' 'एषा' संवत्सरस्य 'उत्तमा' अन्त्या रात्रिः । तैत्तिरीया आमनन्ति—"एषा वै जघन्या रात्रिः संवत्सरस्य, यत् पूर्वे फाल्गुनी ०—० एषा वै प्रथमा रात्रिः संवत्सरस्य, यदुत्तरे फाल्गुनी"—( तै. ब्रा. १ । १ । २ । ८ ) इति । अतोऽस्यामुत्तरस्यां फाल्गुन्यां पौर्णमास्यां पश्वालम्भेन संवत्सरादौ उपक्रान्तवान् भवतीत्यर्थः ॥ १८ ॥

पश्वालम्भः पूर्णमासे कर्त्तव्य इत्युक्तम्, तत्र नित्यपौर्णमासेष्टिकरणानन्तरं कर्त्तव्य इत्याह—स वा इष्ट्वैव पौर्णमासेनाथ पशुमालभेतेति ॥

---

१—इतः परं—'पूर्वा'—उत्तरफल्गुनीनक्षत्रयुक्ता, 'एषा' 'संवत्सरस्य' 'उत्तमा' इति अयोध्यापुस्तके पाठभेद उपलभ्यते ।

तद्वाऽउपाᳩंशु भवति । (त्ये) एतद्धैतैः प्रजापतिः पशुभिः कर्मेयेष तद्धात्रानद्धेवैवासानिरुक्तमिव तस्मादुपाᳩंशु ॥ २० ॥

यद्वेवोपाᳩंशु । प्राजापत्यं वाऽएतत्कर्म प्रजापतिᳩं ह्येतेन कर्मणाऽऽरभतेऽनिरुक्तो वै प्रजापतिः ॥ २१ ॥

(यं) यद्वेवोपाᳩंशु । रेतो वाऽअत्र यज्ञऽ उपाᳩंशु वै रेतः सिच्यते वपा पशुपुरोडाशो हविरेतावान्हि पशुः ॥ २२ ॥

(र) अष्टकायामुखाᳩं सम्भरति । प्राजापत्यमेतदहर्यदष्टका प्राजापत्यमेतत्कर्म यदुखा प्राजापत्यऽएव तदहन्प्राजापत्यं कर्म करोति ॥ २३ ॥

---

तद्वाऽउपांशु भवति । एतद्धैतैः प्रजापतिः पशुभिः कर्मेयेष । तद्धात्रानद्धेवैवास—अनिरुक्तमिव । तस्मादुपांशु ॥ २० ॥

यद्वेवोपांशु । प्राजापत्यं वाऽएतत्कर्म । प्रजापतिं ह्येतेन कर्मणाऽऽरभते । अनिरुक्तो वै प्रजापतिः ॥ २१ ॥

यद्वेवोपांशु । रेतो वाऽअत्र यज्ञः । उपांशु वै रेतः सिच्यते । वपा, पशुपुरोडाशो, हविः—एतावान् हि पशुः ॥ २२ ॥

अष्टकायामुखां सम्भरति । प्रजापत्यमेतदहः—यदष्टका । प्राजापत्यमेतत्कर्म—यदुखा । प्राजापत्यऽएव तदहन् प्राजापत्यं कर्म करोति ॥ २३ ॥

---

पौर्णमासयागानन्तर्यं पशुयागस्य सदृष्टान्तं प्रतिपादयति—पौर्णमासेन वा इन्द्रो वृत्रं पाप्मानमिति । अत्र कात्यायनः—"वैश्वानरः पशुपुरोडाश उपांशु, पशुदेवता च"—(का. श्रौ. सू. १६ । २५ । २६) इति । 'उपांशु'—करणवदशब्दं मनःप्रयोगमित्युक्तलक्षणम् ॥ १९ ॥

तदिदं विधत्ते—तद्वा उपांशु भवतीति । तच्छब्देन पश्वनुष्ठानं परामृश्यते । उपांशुत्वं प्रतिपादयति—एतद्धैतैः प्रजापतिः पशुभिरिति । पूर्वं 'प्रजापतिः' चयनाख्यं 'कर्म' 'पशुभिः' 'इयेष' इच्छति स्म । करिष्यमाणं कर्म 'अत्र' अस्मिन् पश्वनुष्ठानकाले 'अनद्धा' अप्रत्यक्षम् 'इव' 'आस' । साकल्येनानुष्ठितत्वाद् बीजरूपत्वाच्चाप्रत्यक्षत्वम् । तदेवाह—अनिरुक्तमिति । इदं कर्म इयदितिकर्त्तव्यतायुक्तमिति निर्वक्तुमयोग्यम् ॥ २० ॥

उपांशुत्वं प्रशंसितुमनुवदति—यद्वेवोपांशु प्राजापत्यं वा एतदिति । 'एतत्' पशुकर्म 'प्राजापत्यं' प्रजापतिसम्बन्धि । एतावताप्यस्य कर्मणोऽनिरुक्तत्वं कथमित्याह—अनिरुक्तो वा इति । प्रजापतेरपि सर्ववस्तुरूपत्वात् अयमेतावानिति कर्मणस्ताद्रूप्यम् ॥ २१ ॥

प्रकारान्तरेणोपांशुत्वं प्रशंसति—यद्वेवोपांशु रेतो वेति । 'अत्र' पशौ यज्ञे 'रेतो' भूतः बीजरूपत्वात् । यज्ञे पशुव्यतिरिक्तान्यन्यान्यङ्गानि सन्ति, तत् कथं पशौ यज्ञो बीजभूतस्तिष्ठतीति तत् समर्थयते—वपा पश्विति । 'वपा,' पशुपुरोडाशहवीरूपः 'पशुः,' 'एतावान्' एव यज्ञ इति 'पशुः' यज्ञबीजात्मना तिष्ठतीत्यर्थः ॥ २२ ॥

अग्निधारणार्थमुखासम्भरणं विधत्ते—अष्टकायामुखां सम्भरतीति । अष्टका नामाष्टमी, तस्यामुखां विदध्यात् ।

युद्देवाष्टकायाम् । (म्पु) पुर्व्वैतत्संव्वत्सरस्य यदष्टका पुर्व्वैतदग्नेर्युदुखा पुर्व्वण्येव तत्पुर्व्व करोति ॥ २४ ॥

युद्देवाष्टकायाम् । ( मु ) अष्टका वाऽउखा निधिर्द्वाऽउद्धी तिरश्ची रास्ना तच्चतुश्चतस्रऽऊर्ध्वास्तदष्टावष्टकायामेव तदष्टकां करोति ॥ २५ ॥
[ शतम् ३५०० ]

---

यद्देवाष्टकायाम् । पर्वैतत्सम्वत्सरस्य–यदष्टका । पर्वैतदग्नेः–यदुखा । पर्वण्येव तत् पर्व करोति ॥ २४ ॥

यद्देवाष्टकायाम् । अष्टका वाऽउखा । निधिः, द्वाऽउद्धी, तिरश्ची रास्ना, तच्चतुः चतस्र ऊर्ध्वाः । तदष्टौ । अष्टकायामेव तदष्टकां करोति ॥ २५ ॥

---

पूर्वं फाल्गुनपौर्णमास्यां पश्वालम्भ उक्तः, तस्यां बहुलाष्टम्यामुखार्थं मृत्तिकाद्दढवल्मीकवपादिद्रव्यसम्भरणमित्यर्थः । कात्यायनोऽपि–" उखासम्भरणमष्टम्याम् "–( का. श्रौ. सू. १६ । ४४ ) इति । उखा चोपलक्षणम्, अषाढाद्यपि अनया क्रियया संश्रियत एव । अष्टम्यामुखासम्भरणं प्रशंसति–प्राजापत्यमेतदिति । अष्टमीदिवसस्य अधिदेवता प्रजापतिरिति तदाह–प्राजापत्यमिति । ' उखा ' इति ' यत् ' अस्ति, ' तत् ' ' प्राजापत्यं कर्म; ' प्रजापत्यात्मकोऽग्निः, तद्धारणार्थकत्वात् । प्राजापत्योऽग्निः, तत्सम्बन्धिनि ' अहन् ' अन्हीत्यर्थः । " सुपां सुलुक् "–( पा. सू. ७ । १ । ३९ ) इति सप्तम्या लुक् ॥ २३ ॥

पुनः प्रशंसितुमनुवदति–यद्देवाष्टकायामिति । ' एतत् ' अहः अष्टम्याख्यम्, ' संवत्सरस्य ' ' पर्व ' सन्धिस्थानीयम्; यथाऽङ्गुलेः पर्व सन्धिस्थानीयमेवम् । तत् पक्षस्य अन्तात् अष्टमी मध्येति पर्वरूपा भवति, तद्द्वारा संवत्सरस्यापीति; ' अग्नेः ' अप्येषा ' उखा ' 'पर्व;' सन्धिस्थानत्वात्, अत्र ह्यग्निः सन्धीयते ॥ २४ ॥

अथाष्टम्यामुखासम्पादनमष्टकानामसाम्याद्युक्तमिति तत् पुनः प्रशंसति–यद्देवाष्टकायामष्टका वा उखेति । अष्टकानामाष्टसङ्ख्या भवतीति तदष्टसङ्ख्यावत्त्वमुखायां दर्शयति–निधिर्द्वा उद्धी इति । 'निधिः' नाम उखायाः प्रथमं मृत्पिण्डस्य प्रथनेन अग्निधारणार्थोऽधस्तात्प्रदेशः । 'द्वा उद्धी' उद्धिः नाम प्रथितमृत्पिण्डस्योपरिप्रक्षिप्तः अन्यो मृत्पिण्डः, तौ द्वौ 'रास्ना' नाम उखाकण्ठलग्ना 'तिरश्ची' तिरःस्थाना वृत्ताकारा एवं निध्यादिचतुष्टयम् 'ऊर्ध्वाः' प्रतिदिशमेकैकं कण्ठवार्त्तिपर्यन्ताः 'चतस्रः' आश्रयभूताः, ताश्चतस्रः । एवम् 'अष्टौ' उखायां सम्पन्नाः । अतोऽष्टम्यामष्टकाकरणं युक्तमित्यर्थः । उत्तरत्र पञ्चमाध्याये " मृत्पिण्डमुपादत्ते " ( श. प. ६।५।२।१ ) इति प्रक्रम्य, " तं प्रथयति वसवस्त्वेति " ( श. प. ६ । ५ । २ । ३ । ) " अयं हैष लोके निधिः "–( श. प. ६ । ५ । ३ ) इति प्रथमस्य पृथिवीरूपतोक्ता । " अथ पूर्वमुद्धिमादधाति ०—० अथोत्तरमुद्धिमादधाति " ( श. प. ६ । ५ । २ । ४, ५ ) इति । " अथ तिरश्चीं१ रास्नां पर्यस्यति । " ( श. प. ६ । ५ । २ । ११ ) ०—० "अथ चतस्र उद्धीः करोति " ( श. प. ६ । ५ । २ । १४ ) इति । अत्र कात्यायनः–" ऊर्ध्वास्तूर्ष्णीं प्रतिदिशं चतस्रोऽपरा वर्तिं प्राप्ताः " ( का. श्रौ. सू. १६ । १०० ) इति ॥ २५ ॥

---

१–वितृतीय उत्तरे वर्तिं१ सर्व्वतः करोत्यदित्यै रास्नेति । का. श्रौ. सू. १६ । ९९ ।

( त्य ) अमावास्यायां दीक्षते । ( तेऽमा ) अमावास्यायै वाऽअधि यज्ञस्तायते यतो यज्ञस्तायते ततो यज्ञं जनयानीति ॥ २६ ॥

यद्वेवामावास्यायाᳪं रेतो वा ऽएतद्भूतमात्मानᳪं सिञ्चत्युखायां योनौ यद्दीक्षते तस्माऽएतं पुरस्ताल्लोकं करोति यद्दीक्षितो भवति तं कृतं लोकमभि जायते तस्मादाहुः कृतं लोकं पुरुषोऽभि जायतऽइति ॥ २७ ॥

स यत्कनीयः संवत्सराद्दीक्षितः स्यात् । (द) अलोकाऽ इष्टकाऽ उपदध्यादिष्टका लोकानतिरिच्येरन्नथ यद्भूयसो लोकान्कृत्वेष्टका नानूपदध्याल्लोका

---

अमावास्यायां दीक्षते । अमावास्यायै वाऽ अधि यज्ञस्तायते । यतो यज्ञस्तायते—ततो यज्ञं जनयानीति ॥ २६ ॥

यद्वेवामावास्यायाम् । रेतो वाऽएतद्भूतमात्मानं सिञ्चति उखायां योनौ यद्दीक्षते । तस्माऽएतं पुरस्ताल्लोकं करोति—यद्दीक्षितो भवति । तं कृतं लोकमभिजायते । तस्मादाहुः कृतं लोकं पुरुषोऽभि जायतऽइति ॥ २७ ॥

स यत्कनीयः संवत्सराद्दीक्षितः स्यात्—अलोका इष्टका उपदध्यात् । इष्टका लोकानतिरिच्येरन् । अथ यद्भूयसो लोकान्कृत्वेष्टका नानूपदध्यात्—लोका इष्टका अतिरिच्येरन् । अथ यदमावास्यायां

---

चयनसहितस्य सोमयागस्य दीक्षाकालं विधत्ते—अमावास्यायां दीक्षत इति । फाल्गुनामावास्यायां दीक्षां कुर्यात् । सूत्रितञ्च—"दीक्षाऽमावास्यायामामावास्येनेष्ट्वा" ( का. श्रौ. सू. १६।१।२७ ) इति । अमावास्यासम्बन्धीष्टिकरणादनन्तरमेव दीक्षा कर्तव्या; पौर्णमास्योपक्रमाद् दर्शयागेन तत्परिसमाप्तेरवकाशत्वादित्यभिप्रायः । अमावास्यायै वा अधीति । अधिः पञ्चम्यर्थानुवादी । ' यज्ञः ' चन्द्रमाः, ' तायते ' विस्तार्यते; पौर्णमास्यां देवैरालब्धस्य चन्द्रस्य अमावास्यायामाप्यायनस्योक्तेः । ' यतः ' यस्मात्; दिनाद् यज्ञो विस्तारितः, तस्मात् अहमपि ' यज्ञम् ' उत्पादयेयमिति । यद्वा, यज्ञपदेन दर्शेष्टिः; दर्शपूर्णमासौ हि सर्वस्या इष्टेः प्रकृतिभूताविति । तस्मादस्या उपरि 'यज्ञस्तायते' । " तनोतेर्यकि "—( पा. सू. ६ । ४ । ४४ ) इति नलोपे " अकृत्सार्वधातुकयोः " ( पा. सू. ७।४।२५ ) इति दीर्घे कृते ' तायते '—इति रूपम् ॥ २६ ॥

प्रकारान्तरेण दीक्षाकरणं प्रशंसति—यद्वेवामावास्यायां रेतो वा एतदिति । ' दीक्षते ' यजमान इति ' यत् ', ' एतत् उखारूपायां 'योनौ रेतोभूतमात्मानं' सिक्तवान् । दीक्षाकरणमग्न्युत्पादनात् प्रागवस्थेति रेतस्सेकात्मकत्वमित्यर्थः । ' यत् ' यदा ' दीक्षितः ' प्राप्तदीक्षो ' भवति ' तदा तस्मै रेतोरूपत्वेनोत्पत्स्यमानायाग्नये ' पुरस्तात् ' पूर्वं ' लोकं ' स्थानं करोति, स्थाने निष्पन्ने पश्चात् अग्निर्जायते । अयमर्थः, दीक्षाप्रारम्भोऽग्नेरुत्पत्तिप्रागवस्था, तत्समाप्तिरेव जनिष्यमाणस्याग्नेः स्थानकरणमिति स्थानसम्पादनानन्तरमुत्पत्तिं लोकप्रसिद्ध्या द्रढयति—तस्मादाहुः कृतं लोकमिति ॥ २७ ॥

साग्निके क्रतौ " संवत्सरभृतमेव चिन्वीत " ( श. प. १० । २ । ६ । ९ ) इत्याम्नानात् न्यूनातिरेकाभावेन संवत्सरपर्यन्तं दीक्षा कर्तव्येति सिद्धान्तयितुं न्यूनातिरेकपक्षयोर्दोषमुपन्यस्यति—स यत्

ऽइष्टका ऽअतिरिच्येरन्नथ यदमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथास्यापूर्यमाणपक्षे सर्वोऽग्निश्चीयते ॥ २८ ॥

तदाहुः । (र्ष) यद्यावत्यऽ एतस्याग्नेरिष्टकास्तावन्ति क्रयेऽहोरात्राणि सम्पद्यन्तेऽथ यान्यूर्द्ध्वानि क्रयादहानि कथमस्य ते लोकाऽअनूपहिता भवन्तीति यद्वाऽअमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथ यान्यूर्ध्वानि क्रयादहानि तस्मिन्नवकाशेऽध्वर्युरग्निं चिनोति को हि चिनुयान्न च सोऽवकाशः स्याद्यावन्ति वै संवत्सरस्याहोरात्राणि तावत्य ऽएतस्याग्नेरिष्टका ऽउप च

---

दीक्षित्वाऽमावास्यायां क्रीणाति—तद्यावन्तमेव लोकं करोति—तावतीरिष्टका उपदधाति । अथास्यापूर्यमाणपक्षे सर्वोऽग्निश्चीयते ॥ २८ ॥

तदाहुः—यद्यावत्य एतस्याग्नेरिष्टकाः—तावन्ति क्रयेऽहोरात्राणि सम्पद्यन्ते । अथ यान्यूर्द्ध्वानि क्रयादहानि—कथमस्य ते लोका अनूपहिता भवन्तीति । यद्वाऽअमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति, तद् यावन्तमेव लोकं करोति—तावतीरिष्टका उपदधाति । अथ यान्यूर्ध्वानि क्रयादहानि—तस्मिन्नवकाशेऽध्वर्युरग्निं चिनोति । को हि चिनुयात्—न च सोऽवकाशः स्यात् । यावन्ति वै

---

कनीयः संवत्सरादिति । अग्निस्तावत् संवत्सरात्मकः, तादृशस्याग्नेरवयवा यजुष्मत्य इष्टकाः षष्ट्युत्तरत्रिशतसंख्याका इति दशमे काण्डे वक्ष्यते ( श. प. १० । ९ । ४ । ९ ) । तत्र दीक्षाणां संवत्सरादर्वाक्त्वे कतिपयानामिष्टकानामाधारभूतकालराहित्यादधिका भवन्तीति प्रदेशरहिता इष्टका एवोपहितवान् भवतीति । एवं तर्हि एतद्दोषपरिहाराय दीक्षाणां वर्षाधिक्ये इष्टका न्यूना इति लोका अतिरिक्ता भवन्तीति सोऽपि नेष्टव्यः । इष्टकाकालमनुवदति—अथ यदमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणातीति । प्रथमायां फाल्गुनामावास्यायां 'दीक्षित्वा', ततः कतिदिवसं दीक्षितधर्मानाचरन् पुनः फाल्गुनामावास्यायां राजानं सोमं 'क्रीणाति' अतो न्यूनाधिकभावौ न स्तः । तद्यावन्तमिति । इष्टकातिरेको लोकातिरेको वा नास्तीत्यस्मिन् पक्षे गुणान्तरं दर्शयति—अथास्यापूर्यमाणपक्ष इति । दीक्षानन्तरं राजक्रये उपसद्यागः, तत्र हि अनूपसदमग्निं चिनोतीति उपसत्स्वग्निचयनं स्यात्, तच्चयनं शुक्लपक्षे सम्पद्यत इति गुणः ॥ २८ ॥

एवं दीक्षाणां संवत्सरकालीनत्वेनेष्टेः कालसाम्ये सिद्धान्तितेऽपि वेदवादिनां कालविषयामधिकामाशङ्कां दर्शयति——तदाहुर्यद्यावत्य एतस्येति । यद्यपि प्रथमफाल्गुनामावास्यायां दीक्षित्वा, आगामिफाल्गुनामावास्यायां सोमक्रयावधिरूपवत्सरस्वीकारे अग्न्यवयवभूतेष्टकानां कालरूपाधारराहित्यमाधिक्यं वा नास्ति, तथापि क्रयादनन्तराण्यहानि उपसदर्थानि विद्यन्ते; तत्र कथमिष्टकाभिर्यजमानस्य लोका उपहिता भवन्तीति प्रश्नः ॥

त्रयोदशो मासस्त्रयोदशो वाऽएष मासो यान्यूर्ध्वानि क्रयादहानि तद्या ऽअमूस्त्रयोदशस्य मास ऽइष्टकास्ताभिरस्य ते लोका ऽअनूपहिता भवन्ति तत्समा लोकाश्चेष्टकाश्च भवन्ति ॥ २९ ॥

( न्त्ये ) एतद्वै सैव प्रथमा पौर्णमासी । तस्यां पशुमालभते या प्रथमाऽष्टका तस्यामुखाᳪं सम्भरति या प्रथमाऽमावास्या तस्यां दीक्षतऽएतद्वै यान्येव संव्वत्सरस्य प्रथमान्यहानि तान्यस्य तदारभते तानि च तदाप्नोत्यथातः सम्पदेव ॥ ३० ॥

तदाहुः । कथमस्यैतत्कर्म संव्वत्सरमग्निमाप्नोति कथᳫं संव्वत्सरेणाऽग्निना सम्पद्यतऽइत्येतेषां वै पञ्चानां पशूनां चतुर्विᳪंशतिः सामिधेन्यो द्वादशाप्रियस्तत्षट्त्रिᳪंशदेकादशानुयाजाऽ एकादशोपयजस्तदष्टापञ्चाशत् ॥ ३१ ॥

---

सम्वत्सरस्याहोरात्राणि—तावत्य एतस्याग्नेरिष्टकाः । उप च त्रयोदशो मासः । त्रयोदशो वाऽएष मासो—यान्यूर्ध्वानि क्रयादहानि । तद् या अमूस्त्रयोदशस्य मास इष्टकाः—ताभिरस्य ते लोका अनूपहिता भवन्ति । तत्समा लोकाश्च, इष्टकाश्च भवन्ति ॥ २९ ॥

एतद्वै यैव प्रथमा पौर्णमासी—तस्यां पशुमालभते । या प्रथमाऽष्टका—तस्यामुखां सम्भराति । या प्रथमाऽमावास्या—तस्यां दीक्षते । एतद्वै यान्येव सम्वत्सरस्य प्रथमान्यहानि—तान्यस्य तदारभते । तानि च तदाप्नोति । अथातः सम्पदेव ॥ ३० ॥

तदाहुः—कथमस्यैतत्कर्म सम्वत्सरमाग्निमाप्नोति, कथं सम्वत्सरेणाग्निना सम्पद्यत इति ? । ( १ )

---

यद्वा अमावास्यायां दीक्षित्वेत्यादिपरिहारवाक्यस्यायमर्थः—दीक्षादिक्रयकालपर्यन्तो यावान् कालरूपो लोकः, तावत्य इष्टका अभूवन्निति तावदविवादम् । यदि तस्मादूर्ध्वानि यान्यहानि सोऽवकाशोऽध्वर्योरग्निचयनस्य । यदि तान्यहानि चयनकालो न भवेत्, तर्हि 'को हि ' कुत्रावकाशे ' चिनुयात् ' ? अवकाशस्याभावात् । अन्येष्व-हःसु इष्टकोपधानं नास्तीति न मन्तव्यमिति, " यावन्ति वै संवत्सरस्याहोरात्राणि "—इत्यादिना क्रयोत्तरकालेऽपीष्टकोपधानमस्तीत्याह । संवत्सरसाधारणात् तद्रूपोऽग्निरित्युक्तम्, तत्र इष्टका अग्न्यवयवा इति च, अतः संवत्सरस्य यावन्ति दिनानि, तावत्य इष्टका उपहिता इत्युक्ते संवत्सरे त्रयोदशमासस्यापि सम्भवात् तत्संख्यया इष्टकोपधानम् । अतस्त्रयोदशमासरूपाणि क्रियोत्तराण्यहानि तत्संख्याकाभिरिष्टकाभिर्यजमानलोका उपहिता भवन्तीत्यनेन यावन्तो लोकास्तावत्य इष्टका उपहिता इत्यर्थः ॥ २९ ॥

पश्वालम्भोखासम्भरणदीक्षाकाला ये उक्तास्तेषां प्राथम्यमुपजीव्य प्रशंसति—एतद्वै यैव प्रथमा पौर्णमासीति । अथ पशुकर्मणः संवत्सररूपाग्नेश्च संख्यासम्पत्तिं दर्शयितुं प्रतिजानीते—अथातः सम्पदेवेति । ' सम्पत् ' सम्पत्तिः, संख्यासाम्यम्, तत् पशुकर्माग्न्योर्दर्शयिष्यत इत्यर्थः ॥ ३० ॥

तदाहुः कथमस्यैतत्कर्मेति । अग्निः संवत्सरात्मकः, तम् ' कथमेतत् कर्माप्नोति ' अत्रानुपपत्तिं स्वयमेव

( च ) तुतो याऽष्टाचत्वारिᳬंशुत् । ( त्सा ) साऽष्टाचत्वारिᳬंशदक्षरा जुगतीयं वै जुगत्यस्याᳬᳬं हीदᳬं सुर्वं जुगदियमु वाऽअग्निरस्यै हि सुर्वोऽग्निश्चीयुते यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ३२ ॥

यद्वेवाष्टाचत्वारिᳬंशत् । ( द ) अष्टाचत्वारिᳬंशदक्षरा वै जुगती जुगती सुर्वाणि च्छुन्दाᳬंसि सुर्वाणि च्छुन्दाᳬंसि प्रजापतिः प्रजापतिरग्नि- र्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ३३ ॥

---

तेषां वै पञ्चानां पशूनां चतुर्विंशतिः सामिधेन्यो, द्वादशाप्रियः–तत्षट्त्रिंशत् । एकादशानुयाजाः, एकादशोपयजः–तदष्टापञ्चाशत् ॥ ३१ ॥

ततो याऽष्टाचत्वारिंशत्–साऽष्टाचत्वारिंशदक्षरा जगती । इयं वै जगती । अस्यां हीदं सर्वं जगत् । इयमु वाऽअग्निः । अस्यै हि सर्वोऽग्निश्चीयते । यावानग्निर्यावत्यस्य मात्रा–तावत्तद्भवति ॥ ३२ ॥

यद्वेवाष्टाचत्वारिंशत् । अष्टाचत्वारिंशदक्षरा वै जगती । जगती सर्वाणि च्छन्दांसि । सर्वाणि च्छन्दांसि प्रजापतिः । प्रजापतिरग्निः । यावानग्निर्यावत्यस्य मात्रा–तावत्तद्भवति ॥ ३३ ॥

---

दर्शयति–कथं संवत्सरेणेति । संवत्सररूपेण 'अग्निना' सह 'कथं सम्पद्यते ' संख्यातः कथं सम्पन्नं भवेदिति प्रश्नार्थः ॥

पञ्चपशुप्राजापत्यवायव्यरूपपक्षत्रयेऽपि सम्पत्तिं दिदर्शयिषुः पञ्चपशुपक्षे प्रथमं दर्शयति–एतेषां वै पञ्चानां पशूनामिति । तस्मिन् यज्ञे 'सामिधेन्यः चतुर्विंशतिः' । उक्ताः प्रकृतिगताः पञ्चदश, " समास्त्वाऽग्न ऋतवः "–( श. प. ६ । २ । १ । २९ ) इत्याद्या मध्ये विहिता नवेति चतुर्विंशतिः । ' द्वादश आप्रियः ' " ऊर्ध्वा अस्य समिधो भवन्ति "- ( श. प. ६ । २ । १ । ३१ ) इत्याद्याः आप्रीसञ्ज्ञकाः प्रयाज-याज्या द्वादशोक्ताः । एकादश अनुयाजाः, एकादश उपयजः, उपयजो नाम पशुगुदहोमाः । तदाहापस्तम्बः– " एकादशधा तिर्यक् छित्त्वा सम्भिन्दन्नपर्यावर्तयन्ननूयाजानां वषट्कृते वषट्कृत एकैकं गुदकाण्डं प्रतिप्रस्थाता हस्तेन जुहोति "–( आ. श्रौ. सू. ७ । २७ । ११ ) इति । एताः सर्वा मिलित्वा ' अष्टापञ्चाशत् ' संख्या सम्पन्ना ॥ ३१ ॥

अस्तु, प्रस्तुते किमायातमित्याह–ततो याऽष्टाचत्वारिंशदिति । उक्तायामष्टापञ्चाशत्सङ्ख्यायां मध्ये दशसङ्ख्यां हित्वा अवशिष्टा अष्टाचत्वारिंशत्सङ्ख्या; तावत्संख्याक्षरजगतीच्छन्दोरूपा, जगत्यपि हि द्वादशाक्षरपादेति पाद-चतुष्टये उक्तसंख्या भवति । अस्यां भूमौ सर्वं जगत् प्रतिष्ठितमिति भूमिरपि जगतीशब्दवाच्या, सैव हि सर्वाग्निचयनाधिकरणमिति आधाराधेययोरभेदोपचारेण भूमिरेव अग्निशब्दवाच्या । अग्निर्यावत्परिमाणवचनः ' अस्य ' अग्नेः ' मात्रा ' अवयवो ' यावती ' यत्परिमाणः, तत्कर्मसंख्यानं तावदग्नितदवयवसंख्याकं भवति ॥ ३२ ॥

प्रोक्ताया एव संख्यायाः प्राजापत्यात्मना सम्पत्तिं प्रशंसति–यद्वेवाष्टाचत्वारिंशदिति । पूर्ववद् व्याख्येयम् ॥ ३३ ॥

---

१–" समुद्रं गच्छ स्वाहेत्येतैर्मन्त्रैः " इत्यापस्तम्बसूत्रशेषः ॥

( त्यु ) अथ यानि दश । सा दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणाऽ अग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्त-द्भवति ॥ ३४ ॥

व्वपा पशुपुरोडाशः । ( स्तु ) तत्षष्टिः षष्टिर्मासस्याहोरात्राणि तन्मास-माप्नोति मासऽआप्त ऽऋतुमाप्नोत्यृतुः संवत्सरं तत्संवत्सरमग्निमाप्नोति ये च संव्वत्सरे कामा ऽअथ यदतोऽन्यद्यदेव संवत्सरेऽन्नं तत्तत् ॥ ३५ ॥

( दु ) अथैतस्य प्रजापत्यस्य । ( स्यै ) एकविंशतिः सामिधेन्यो द्वादशाप्रियस्तत्त्रयस्त्रिंशदेकादशानुयाजा ऽएकादशोपयजस्तत्पुञ्च-

---

अथ यानि दश—सा दशाक्षरा विराट् । विराडग्निः । दश दिशः । दिशोऽग्निः । दश प्राणाः । प्राणा अग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तद्भवति ॥ ३४ ॥

वपा, पशुपुरोडाशः—तत् षष्टिः । षष्टिर्मासस्याहोरात्राणि । तन्मासमाप्नोति । मास आप्त ऋतुमा-प्नोति । ऋतुः सम्वत्सरम् । तत्सम्वत्सरमग्निमाप्नोति । ये च सम्वत्सरे कामाः । अथ यदतोऽन्यद्-यदेव सम्वत्सरेऽन्नं—तत्तत् ॥ ३५ ॥

( २ ) अथैतस्य प्राजापत्यस्य एकविंशतिः सामिधेन्यो, द्वादशाप्रियः—तत्त्रयस्त्रिंशत् । एकादशा-

---

अवशिष्टां दशसङ्ख्यां प्रशंसति—अथ यानि दश सा दशाक्षरेति । ' विराट् अग्निः ' अन्नात्मकत्वात् । " अग्निर्वैराट् अन्नम् " ( तै. ब्रा. १ । ६।३–३–१-८-२-२ । ) इति श्रुतेः विराजोऽन्नत्वम् । अग्नेर्दिगा-त्मकत्वं प्रागादिदिक्षु विभज्योपधीयमानत्वात् । प्राणापानादयः पञ्च, नागकूर्मकृकलदेवदत्तधनञ्जयाख्याः पञ्चेति ' दश प्राणाः ' । यद्वा, प्राणा दश इन्द्रियाणि । अग्नेः प्राणात्मकत्वम्, हिरण्यगर्भात्मकत्वात् । यावानग्नि-रित्यादि । पूर्ववत् ॥ ३४ ॥

एवं पञ्चपशुपक्षेऽष्टापञ्चाशतं सङ्ख्यामग्न्यात्मना स्तुत्वा संवत्सराग्निना सम्पत्तिं वक्तुं सङ्ख्यान्तरं दर्शयति—वपा पशुपुरोडाश इति । ' वपा ' वैश्वानरः, ' पशुपुरोडाशः ' इति द्वौ । एताभ्यां सह षष्टिसङ्ख्या जाता । ' मासस्य ' संवत्सरावयवभूतस्य षष्टिसङ्ख्यानि अहोरात्राणि विद्यन्ते, तत् षष्टिसङ्ख्याकं मासं तावत्सङ्ख्याक-महोरात्रमाप्नोति । 'आप्तः' सम्पन्नः ' मासः ' स्वावयविनम् ' ऋतुम् ' ' आप्नोति '; ऋतुर्हि मासद्वयात्मकः । ' ऋतुः ' अपि ' संवत्सरम् ' आप्नोति; ऋतुषट्कात्मको हि संवत्सरः । संवत्सररूपोऽग्निरिति प्रागुक्तम् । अतः सामिधेन्यादि-वपापशुपुरोडाशान्तगता षष्टिसङ्ख्या संवत्सररूपात्मना सम्पन्नेति सर्वान् संवत्सरमध्य-वर्तिनः कामानाप्नोति । नन्वस्मिन् कर्मणि अन्यानि बहूनि सङ्ख्येयानि विद्यन्ते, तत् कथं षष्टिसङ्ख्ये-त्युक्तमत आह—अथेत्यादि । अथेति प्रश्ने । ' अतः ' उक्तसङ्ख्यातः ' अन्यत् ' ' यत् ' अस्ति, ' तत् ' ' संवत्सरे ' विद्यमानम् ' अन्नम् ' एव ' तत् ' ॥ ३५ ॥

एवं पञ्चपशुपक्षे सम्पत्तिं दर्शयित्वा प्राजापत्यपशुपक्षे दर्शयति—अथैतस्य प्राजापत्यस्येति । अग्नेः 'एक-

पञ्चाशद्वपा पशुपुरोडाशो हविस्तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामो-ऽत्रैव तमाप्नोति द्वावाघारौ तत्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्यथ यदतोऽन्यद्यदेव संव्वत्सरेऽन्नं तत्तत् ॥ ३६ ॥

(३) अथैतस्य नियुत्वतीयस्य। सप्तदश सामिधेन्यो द्वादशाप्रियस्तदेकान्न त्रिँशदेकादशानुयाजा ऽएकादशोपयजस्तदेकपञ्चाशद्वपा पशुपुरोडाशो हविस्तच्चतुष्पञ्चाशद्द्वावाघारौ द्वौ स्विष्टकृतौ तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति व्वनस्पतिश्च व्वसाहोमश्च तत्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्यथ यदतोऽन्यद्यदेव संव्वत्सरेऽन्नं तत्तदेवमु हास्यैतत्कर्म संव्वत्सरमग्निमाप्नोत्येवँ संव्वत्सरेणाग्निना सम्पद्यते ॥ ३७ ॥

---

नुयाजाः, एकादशोपयजः—तत् पञ्चपञ्चाशत् । वपा, पशुपुरोडाशः, हविः—तदष्टापञ्चाशत् । स योऽष्टापञ्चाशति कामः—अत्रैव तमाप्नोति। द्वावाघारौ—तत् षष्टिः । स यः षष्ट्यां कामः—अत्रैव तमाप्नोति । अथ यदतोऽन्यद्—यदेव सम्वत्सरेऽन्नम्—तत्तत् ॥ ३६ ॥

(३) अथैतस्य नियुत्वतीयस्य सप्तदश सामिधेन्यः। द्वादशाप्रियः—तद् एकान्न त्रिंशत्। एकादशानुयाजाः, एकादशोपयजः, तदेकपञ्चाशत्। वपा, पशुपुरोडाशो, हविः तत् चतुष्पञ्चाशत्। द्वावाघारौ, द्वौ स्विष्टकृतौ। तदष्टापञ्चाशत्। स योऽष्टापञ्चाशति कामः—अत्रैव तमाप्नोति। वनस्पतिश्च, वसाहोमश्च—तत् षष्टिः । स यः षष्ट्यां कामः—अत्रैव तमाप्नोति । अथ यदतोऽन्यद्—यदेव संवत्सरेऽन्नम्—तत्तत् । एवमु हास्यैतत्कर्म संवत्सरमग्निमाप्नोति, एवं संवत्सरेणाग्निना सम्पद्यते ॥ ३७ ॥

---

विंशतिः सामिधेन्यः ' ' हविः ' पशुहृदयादिरूपमित्यर्थः । एवमष्टापञ्चाशत् सम्पन्ना । तत्र पूर्वोक्तं फलमतिदिशति—स योऽष्टापञ्चाशति काम इति। अत्रापि संवत्सराग्निना सम्पत्तिं वक्तुं सङ्ख्येयान्तरं समुचिनोति—द्वावाघाराविति ।स्रुवाघारः स्रुच्याघारश्चेत्यर्थः। एवं षष्टिसङ्ख्यायां सम्पन्नायां पूर्वोक्तषष्टिफलमतिदिशति—स यः षष्ट्यां कामोऽत्रैव तमिति ॥ ३६ ॥

वायव्यपशुपक्षे सम्पन्ने सम्पत्तिं दर्शयति—अथैतस्य नियुत्वतीयस्येति। द्वौ स्विष्टकृताविति। पशुपुरोडाशः स्विष्टकृत्, पश्वङ्गस्विष्टकृच्चेति द्वयमित्यर्थः । वनस्पतिश्च वसाहोमश्चेति । पृषदाज्यद्रव्यको वनस्पतियागः स्विष्टकृतः प्रागनुष्ठेयः, हविषो याज्याया अर्द्धर्चे प्रतिप्रस्थात्रा कर्त्तव्यो वसाहोमः । अत्रापि फलद्वयवाक्यं पूर्ववद् योज्यम् ॥ ३७ ॥

तदाहुः । ( नैं ) नैतस्य पशोः समिष्टयजूꣳषि जुहुयान्न हृदयशूलेनावभृथमभ्यवेयादारम्भो वाऽएषोऽग्नेः पशुर्व्यवसर्गो देवतानाꣳ समिष्टयजूꣳषि सꣳस्थाऽवभृथो नेदारम्भे देवता व्यवसृजानि नेद्यज्ञꣳ सꣳस्थापयानीति स वै समेव स्थापयेदेतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याग्नेरन्तं न पर्यैत्तस्मात्सꣳस्थापयेद्यद्वेव सꣳस्थापयति प्राण ऽएष पशुस्तस्य यदन्तरियात्प्राणस्य तदन्तरियाद्यद्वै प्राणस्यान्तरियात्तत ऽएवं म्रियेत तस्मात्समेव स्थापयेदथातो व्रतानामेव ॥ ३८ ॥

---

तदाहुः—नैतस्य पशोः समिष्टयजूंषि जुहुयात् । न हृदयशूलेनावभृथमभ्यवेयाद् । आरम्भो वाऽएषोऽग्नेः पशुः। व्यवसर्गो देवतानां समिष्टयजूंषि । संस्थाऽवभृथः। नेदारम्भे देवता व्यवसृजानि, नेद्यज्ञं संस्थापयानीति । स वै समेव स्थापयेत् । एतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यत्—यथैतस्याग्नेरन्तं न पर्यैत् । तस्मात्संस्थापयेत् । यद्वेव संस्थापयति । प्राण एष पशुः । तस्य यदन्तरियात्—प्राणस्य तदन्तरियात् । यद्वु वै प्राणस्यान्तरियात्—तत एवं म्रियेत । तस्मात्समेव स्थापयेत् । अथातो व्रतानामेव ॥ ३८ ॥

---

पश्वनुष्ठानस्य चयनकर्मादित्वात् तदवसानः कर्त्तव्यः; देवताविसर्गरूपसमिष्टयजुर्होमः समाप्तिरूपावभृथश्च न कर्त्तव्याविति केषाञ्चित्पक्षं सोपपत्तिकमुपन्यस्यति—तदाहुर्नैतस्य पशोरिति । पञ्चपशुपक्षेऽपि "अजेन चरति"–( का. श्रौ. सू. १६ । २१ ) इत्युक्तेः अजस्य वा प्राजापत्यस्य वा वायव्यस्य वा पशोरित्यर्थः । 'अग्नेः' अग्निचयनकर्मणः 'एषः' उक्तः 'पशुः' पशुयागः 'आरम्भः' कर्मोपक्रमः; आदावनुष्ठीयमानत्वात् । 'समिष्टयजूंषि' इति यत्, तत् 'देवतानां' पशुदेवतानां 'व्यवसर्गः' विसर्जनम् । 'अवभृथः' इति यत्, तत् 'संस्था' कर्मसमाप्तिः । अतः कर्मोपक्रमे एव देवताविसर्जनं कर्मसमापनं च कर्तुं न युक्तमित्यर्थः ।

तन्मतं निरस्यति—स वै समेव स्थापयेदिति । पूर्वं 'प्रजापतिरेतेन पशुना इष्ट्वा' अपश्यद् विचारितवान्,—'यथा' येन प्रकारेण 'एतस्य' 'अग्नेः' 'अन्तं' 'न पर्यैत्' पर्यगच्छत्, चिकीर्षमाणः स स्वयमेव तदपश्यत् इत्यन्वयः । यद्येकेनैव पशुनेष्ट्वाऽग्नेरन्तं परिगच्छेत्, तर्हि समिष्टयजुरादिकं न कर्तव्यं स्यात्; न तथा; एकेन पशुना यागेऽपि इतरेषां पशुशरीराणामप्सु प्रासनात् तत्परिमाणमृन्मयीष्टकोपधानादिकं विना अग्न्यन्तगमनाभावसिद्धेः पशुकर्म संस्थापयितव्यमित्यभिप्रायः । संस्थापनाकरणे अनिष्टं दर्शयितुमनुवदति—यद्वेव संस्थापयति प्राण एव पशुरिति । पशोः प्राणत्वं पुरस्तादुक्तम् । 'तस्य' पशोः सम्बन्धि 'यत्' कर्म 'अन्तरियात्' व्यवहितं कुर्यात्, 'प्राणस्य' सम्बन्धिनमेकदेशमेव व्यवहितं कृतवान् भवति । 'ततः' च सदा प्राणादन्तरितः सः अनन्तरमेव 'म्रियेत' मृतो भवति; 'तस्मात्' पशुकर्म 'संस्थापयेदेव' इत्यर्थः ॥ अथ पशुयागानन्तरं चयनकर्मणि यजमानकर्त्तव्यानां नियमानां मीमांसा वक्ष्यत इति प्रतिजानीते—अथातो व्रतानामेवेति ॥ ३८ ॥

तुदाहुः । ( नैं ) नैतेन पशुनेष्ट्वोपरि शयीत नु माथ्ँसमश्नीयान्न मिथुनमुपेयात्पूर्व्वदीक्षा वाऽएषु पशुरनवक्लृप्तं वै तद्यद्दीक्षितुऽउपरि शयीत यन्माथ्ँसमश्नीयाद्यन्मिथुनमुपेयादिति नेत्त्वेवैषा दीक्षा नेव हि मेखलाऽस्ति नु कृष्णाजिनमिष्टकां वाऽएतां कुरुते तस्माद् काममेवोपरि शयीतैतद् सर्व्वमन्नं यदेते पशवस्तदस्यात्राप्तमारब्धं भवति तद्यानि कानि चाऽऽमधुनोऽशनानि तेषामस्य सर्व्वेषां कामाशनं यदि लभेत मिथुनं तु नोपेयात्पुरा मैत्रावरुण्यै पयस्यायै तस्योपरि बन्धुः ॥ ३९ ॥

---

तदाहुः—नैतेन पशुनेष्ट्वोपरि शयीत, न मांसमश्नीयात्, न मिथुनमुपेयात् । पूर्वदीक्षा वाऽएष पशुः । अनवक्लृप्तं वै तद्—यद्दीक्षित उपरि शयीत, यन्मांसमश्नीयात्, यन्मिथुनमुपेयादिति । नेत्त्वेवैषा दीक्षा । नेव हि मेखलाऽस्ति, न कृष्णाजिनम् । इष्टकां वाऽएतां कुरुते । तस्माद् काममेवोपरि शयीत । एतद्ध सर्वमन्नम्—यदेते पशवः । तदस्यात्राप्तमारब्धं भवति । तद्यानि कानि चाऽऽमधुनोऽशनानि—तेषामस्य सर्वेषां कामाशनं—यदि लभेत । मिथुनं तु नोपेयात्—पुरा मैत्रावरुण्यै पयस्यायै तस्योपरि बन्धुः ॥ ३९ ॥

---

कर्त्तव्याकर्त्तव्यविचारं पूर्वोत्तरपक्षाभ्यां निरूपयति—तदाहुर्नैतेनेति । ' पशुः ' नाम ' पूर्वा ' प्रथमभाविनी ' दीक्षा ', दीक्षाकर्मोपक्रमार्थमिति मत्वा पूर्वपक्षोद्भवा । ' अतः ' पशुकर्मणो दीक्षात्वाद् यजमानस्योपरि शयनादिकम् ' अनवक्लृप्तम् ' अयुक्तमित्यर्थः । दूषयति—नेत्त्वेवैषा दीक्षेति । अत्र दीक्षाशब्दस्य मुख्यार्थस्वीकारः । मुख्यदीक्षायां " मेखलया दीक्षयति "—" कृष्णाजिनेन दीक्षयति "—( तै. सं. ६ । १ । ३ । ४ ) इति, मेखलाजिनयोरत्राभावात् इयं दीक्षा न भवतीत्यर्थः । किं तत् पश्वनुष्ठानमिति, तत्राह—इष्टकां वा एतां कुरुत इति । पशुयागो नामेष्टकाकरणमेव । ' तस्मात् ' मांसोपर्यासने ' कामं ' कुर्यात् । एतद्ध सर्वमन्नमिति । पुरुषादिपशूनां सर्वान्नत्वात् ' तद् ' ' यदा ' ' आप्तम् ' ' आरब्धं ' प्रक्रान्तं भवति, तस्मात् ' आ मधुनः ' मर्यादायामाङ्, मधुपर्यन्तम् ' यानि ' ' अशनानि ' अन्नानि, ' तेषां ' मध्ये 'अस्य' यष्टुः ' कामाशनम् ' इच्छया भोजनम् । किं सर्वदा ? नेत्याह—यदि न लभेतेति । ' यदि ' विहितम् अन्नं ' न ' ' लभेत ' लब्धं भवेत्, तर्हीत्यर्थः । एकं नियममाह—मिथुनं तु नोपेयादिति । मिथुनवर्जनं सर्वथा कार्यमित्येतत् प्राप्तम्, तस्यावधिं दर्शयति—पुरा मैत्रावरुण्यै पयस्याया इति । पञ्चम्यर्थे चतुर्थी । आमिक्षायागपर्यन्तम् । अत्र कात्यायनः—"मैथुनं वर्जयेदा पयस्यायाः । मांसोपर्यासने चेच्छन्"—( का. श्रौ. सू. १६।२८-२९ ) इति ॥

तस्य नियमस्य विधायकं ब्राह्मणमतिदिशति—तस्योपरि बन्धुरिति । ' उपरि ' उत्तरत्र नवमकाण्डे " अथ मैत्रावरुण्या पयस्यया यजते "—( श. प. ९ । ५ । १ । ५४ ) इति मैत्रावरुणीं पयस्यां विधाय आम्नातम्—"स यदेतयाऽनिष्ट्वा मानुष्यां चरेत् प्रत्यवरोहः स यथा देवः सन् मानुषः स्यात् तादृक् तत् "—( श. प. ९ । ५ । १ । ५४ ) इति ॥ ३९ ॥

---

१—अहनि मा०सँमैथुने व्वर्जयेत् । का. श्रौ. सू. २ । ८ । २—अग्नये व्व्रतपतये व्व्रत्येऽहनि मैथुनमा०सभोजनं चेत् । का. श्रौ. सू. २५ । ८३ ॥

( स्तु ) तदाहुः । (र्द) दद्यादेतस्मिन्यज्ञे दक्षिणां नेन्मेऽयं यज्ञोऽदक्षिणोऽसद्ब्रह्मणऽआदिष्टदक्षिणां दद्याद्ब्रह्मा वै सर्व्वो यज्ञस्तदस्य सर्व्वो यज्ञो भिषज्यितो भवतीति न तथा कुर्यादिष्टकां वाऽएतां कुरुते तद्यथेष्टकायामिष्टकायां दद्यात्तादृक्तदमूर्ह्यैव दद्याद्यदस्योपकल्पेत ॥ ४० ॥

इति द्वितीय प्रपाठके प्रथमं ब्राह्मणम् ॥ ६-२-१ ॥ ( २. २. ) ॥

एतद्वै देवाऽ अब्रुवन् । ( वंश्वे ) चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तेषां चेतयमानानां प्रजापतिरिमां प्रथमाꣳ स्वयमातृण्णां चितिमपश्यत्तस्मात्तां प्रजापतिनोपदधाति ॥ १ ॥

---

तदाहुः—दद्यादेतस्मिन्यज्ञे दक्षिणाम् । नेन्मेऽयं यज्ञोऽदक्षिणोऽसत् । ब्रह्मणऽआदिष्टदक्षिणां दद्यात् । ब्रह्मा वै सर्वो यज्ञः । तदस्य सर्वो यज्ञो भिषज्यितो भवतीति । न तथा कुर्यात् । इष्टकां वाऽएतां कुरुते । तद् यथेष्टकायामिष्टकायां दद्यात्—तादृक् तत् । अमूर्ह्येव दद्याद्—यदस्योपकल्पेत ॥ ४० ॥

चित्यार्षेय ब्राह्मणम् ।

एतद्वै देवा अब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । तेषां चेतयमानानां प्रजापतिरिमां प्रथमां स्वयमातृण्णां चितिमपश्यत् । तस्मात्तां प्रजापतिनोपदधाति ॥ १ ॥

---

अस्मिन् यज्ञे ब्रह्मसम्प्रदानकं दक्षिणादानं पूर्वोत्तरपक्षाभ्यां निषेधति—तदाहुर्दद्यादेतस्मिन् यज्ञे दक्षिणामिति । 'ब्रह्मणे' 'आदिष्टदक्षिणाम्' प्रतिनियतदक्षिणाम् । 'भिषज्यितः' चिकित्सितः । भिषज्—शब्दात् "कण्ड्वादिभ्यो यक्"—( पा. सू. ३ । १ । २७ ) तदन्तात् कर्मणि क्तः इडागमश्च । इष्टकां वा एतामिति । पशुयागो नामेष्टकाकरणम्, तस्मात् प्रतीष्टकं दक्षिणादानसमानम्, पशुयागे दक्षिणादानमित्यर्थः । पशौ देयाया दक्षिणायाः कालं दर्शयति—अमूर्ह्येव दद्यादिति । 'अमूर्हि' अदःशब्दो विप्रकृष्टवचनः । चयनकर्मणो दक्षिणादानकाले 'अस्य' ब्रह्मणो 'यद्' देयम् 'उपकल्पेत' अवक्लृप्तं स्यात्, तदा तद् देयमित्यर्थः ॥ ४० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे द्वितीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ६-२-२ ) ॥

उत्तरत्रोपधास्यमानानां चितीनामृषिदेवतासम्बन्धेनोत्पत्तिप्रकारः, तत्सङ्ख्याविशेषः, स्वयमातृण्णेष्टकानां स्थानविशेषप्रदर्शनञ्च तृतीये ब्राह्मणे प्रतिपाद्यते । स्वयमातृण्णेष्टकास्तिस्रो भूम्यन्तरिक्षद्युलोकात्मिकाः । अत एव प्रथममध्यमोत्तमासु चितिषूपधेयाः । तत्र प्रथमायाश्चितेरुत्पत्तिं दर्शयति—एतद्वै देवा अब्रुवन्निति । 'एतद्' वक्ष्यमाणमर्थजातम् अवोचन् । तदाह—चेतयध्वमितीति । स्वयमेवैतस्य पदस्यार्थमाह—चितिमिच्छतेतीति । 'चेतयध्वमिति' एतेन 'चितिमिच्छतेति वाव तदब्रुवन्' इति । तेषां 'चेतयमानानां' चितिमिच्छतां देवानां मध्ये प्रजापतिः 'इमां' भूमिरूपां प्रथमां 'स्वयमातृण्णां' स्वयमेव मध्ये छिन्नां शिलारूपामिष्टकां

तमग्निरब्रवीत् ( उ ) उपाहमायानीति केनेति पशुभिरिति तथेति पश्चिष्टकया ह तदुवाचैषा वाव पश्चिष्टका यद्दूर्वेष्टका तस्मात्प्रथमायै स्वयमातृण्णायाऽअनन्तर्हिता दूर्वेष्टकोपधीयते तस्मादस्याऽअनन्तर्हिताऽ ओषधयोऽनन्तर्हिताः पशवोऽनन्तर्हितोऽग्निरनन्तर्हितो ह्येषुऽ एतयोपैत् ॥ २ ॥

( ते ) तेऽब्रुवन् । ( वंश्वे ) चेतयध्वमेवेति चितिमिच्छतेति वाव तदब्रुवन्नित ऽऊर्ध्वमिच्छतेति तेषां चेतयमानानामिन्द्राग्नी च विश्वकर्मा चा-

---

तमग्निरब्रवीत्—उपाहमायानीति । केनेति पशुभिरिति । तथेति । पश्चिष्टकया ह तदुवाच । एषा वाव पश्चिष्टका यद्दूर्वेष्टका । तस्मात्प्रथमायै स्वयमातृण्णायाऽअनन्तर्हिता दूर्वेष्टकोपधीयते । तस्मादस्याऽअनन्तर्हिता ओषधयः, अनन्तर्हिताः पशवः, अनन्तर्हितोऽग्निः । अनन्तर्हितो—ह्येष एतयोपैत् ॥ २ ॥

तेऽब्रुवन्—चेतयध्वमेवेति चितिमिच्छतेति वाव तदब्रुवन् । इत ऊर्ध्वमिच्छतेति । तेषां चेतयमानानामिन्द्राग्नी च विश्वकर्मा चान्तरिक्षं द्वितीयां स्वयमातृण्णां चितिमपश्यन् । तस्मात्तामिन्द्राग्निभ्यां च विश्वकर्मणा चोपदधाति ॥ ३ ॥

---

'चितिम्' 'अपश्यत्' । यस्मात् प्रजापतिरपश्यत्, 'तस्मात्' इष्टकां 'प्रजापतिना' "प्रजापतिष्ट्वा सादयतु"—( वा. सं. १३ । १७ ) इत्यादिना प्राजापत्यमन्त्रेण 'उपदधाति' ॥ १ ॥

तस्मिन् मन्त्रे "अग्निष्ट्वाभिपातु"—इत्यग्निसम्बन्धः श्रूयते, तमपि दर्शयति—तमग्निरब्रवीदिति । 'तम्' इष्टकाकारं प्रजापतिम् । 'अग्निः' 'अहं' स्वयम् 'उपायानि' आगच्छानि 'इति' 'अब्रवीत्' । 'केन'—इत्यादिनी प्रश्नोत्तरे प्रजापत्यग्न्योः; 'तथा'—इति प्रजापतेरङ्गीकारोक्तिः । 'पशुभिः'—इति यदग्निनोक्तम्, तद् विवृणोति—पश्चिष्टकया ह तदुवाचेति । पश्चिष्टकास्वरूपमाह—यद् दूर्वेष्टकेति । दूर्वेष्टकया सहाग्निरहमायानीत्यर्थः सिद्धो भवति । यस्मादेतया अग्निरनन्तर्हितं उपागच्छत्, 'तस्मात्' प्रथमं स्वयमातृण्णेष्टकोपधानानन्तरमेव 'दूर्वेष्टकोपधीयते' । तदिदं प्रशंसति—तस्मादस्या अनन्तर्हिता ओषधय इति । 'अस्याः' भूमेः 'ओषधयः' अनन्तरमेवोत्पन्नाः, दूर्वाणामोषधित्वात् । पशूनां दूर्वात्वात् दूर्वेष्टकया 'पशवः' अपि 'अनन्तर्हिताः' उपहिता भवन्तीति । अत एव स्वयमातृण्णोपधानानन्तरं दूर्वेष्टकोपधानम् ॥

तदुपधानमन्त्रद्वयं च सप्तमे काण्डे समाम्नास्यते—"स्वयमातृण्णामुपदधाति"—( श. प. ७।४।२।१ ) इत्युपक्रम्य, "तां वै प्रजापतिनोपदधाति"—( श प. ७।४।२।९। ) "अथ दूर्वेष्टकामुपदधाति" ( श. प. ७।४।२।१० ) "काण्डात्काण्डात् प्ररोहन्ती"—( श. प. ७।४।२।१४ ) इति । प्रथमं स्वयमातृण्णोपधानमन्त्रे प्रजापत्यग्निसम्बन्धः, तस्या भूमिरूपत्वं चोक्तम्—"प्रजापतिस्त्वा सादयत्वपाम्पृष्ठे"—( श.प.७।४।२।६ ) इत्युपक्रम्य "भूरसि भूमिरस्यदितिरसि"—( वा. सं. १३ । १८ ) इति । मध्ये, "अग्निष्ट्वाऽभिपातु मह्या स्वस्त्या"—( वा. सं. १३ । १९ ) इति चान्त इति ॥ २ ॥

अथ द्वितीयस्वयमातृण्णेष्टकाप्रधानायाः तृतीयचितेरुत्पत्तिं दर्शयति—तेऽब्रुवन्निति । पूर्ववद् व्याख्येयम् ।

---

१-मूलाग्रवर्ती दूर्वा तस्यां पुरस्तात् भूमिप्राप्तां कांडात्कांडादिति । का. श्रौ. सू. १७।१०।

न्तरिक्षं द्वितीयाᳬ स्वयमातृण्णां चितिमपश्यंस्तस्मात्तामिन्द्राग्निभ्यां च विश्वकर्मणा चोपदधाति ॥ ३ ॥

तान्वायुरब्रवीत् । ( इ ) उपाहमायानीति केनेति दिग्भिरिति तथेति दिश्याभिर्ह तदुवाच तस्माद्द्वितीयायै स्वयमातृण्णायाऽअनन्तर्हिता दिश्या ऽउपधीयन्ते तस्मादन्तरिक्षादनन्तर्हिता दिशोऽनन्तर्हितो वायुरनन्तर्हितो ह्येषुऽएताभिरुपैत् ॥ ४ ॥

( ते ) तेऽब्रुवन् । ( वंश्चे ) चेतयध्वमेवेति चितिमिच्छतेति वाव तदब्रुवन्नित ऊर्ध्वमिच्छतेति तेषां चेतयमानानां परमेष्ठी दिवं तृतीयाᳬ स्वयमातृण्णां चितिमपश्यत्तस्मात्तां परमेष्ठिनोपदधाति ॥ ५ ॥

---

तान्वायुरब्रवीत्–उपाहमायानीति । केनेति । दिग्भिरिति । तथेति । दिश्याभिर्ह तदुवाच । तस्माद्द्वितीयायै स्वयमातृण्णायाऽअनन्तर्हिता दिश्या उपधीयन्ते । तस्मादन्तरिक्षादनन्तर्हिता दिशः । अनन्तर्हितो वायुः । अनन्तर्हितो ह्येष एताभिरुपैत् ॥ ४ ॥

तेऽब्रुवन्–चेतयध्वमेवेति । चितिमिच्छतेति वाव तदब्रुवन् । इत ऊर्ध्वमिच्छतेति । तेषां

---

चितिमिच्छतेति यदुक्तम्, तत्तात्पर्यं दर्शयति–इत ऊर्ध्वमिच्छतेति । 'इतः' पश्वनुष्ठानाद् 'ऊर्ध्वं' 'चितिम् इच्छत' इत्यर्थः । 'इन्द्राग्नी च विश्वकर्मा च' अन्तरिक्षरूपां 'द्वितीयां' स्वयमातृण्णेष्टकाम् 'अपश्यन्' । 'तस्मात्' 'ताम्' इष्टकाम् इन्द्राग्निदेवत्यमन्त्रेण ( वा. सं. १४ । ११ ), विश्वकर्मदेवत्यमन्त्रेण ( वा. सं. १४ । १२ । ) चोपदध्यात् ॥ ३ ॥

तन्मन्त्रे च "वायुष्ट्वाऽभिपातु"–( वा. सं. १४ । १२ ) इति वायुसम्बन्धः श्रूयते, तमाह–तान् वायुरब्रवीदुपाहमिति । 'तान्' इन्द्राग्नी विश्वकर्माणञ्च । 'केन'–इत्यादिनी प्रश्नोत्तरे पूर्ववत् । दिग्भिरिति । यदिन्द्राग्निभ्यां विश्वकर्मणा चोक्तम्, तद् विवृणोति–दिश्याभिर्ह तदुवाचेति । दिशि भवा दिश्याः इष्टकाः, ताभिः आगच्छानीत्युक्तवान् । "दिगादिभ्यो यत्" ( पा. सू. ४ । ३ । ९४ ) इति–दिक्शब्दात् यत् प्रत्ययः । 'तस्मात्' द्वितीयस्वयमातृण्णोपधानानन्तरम्, दिश्येष्टकोपधानम् । तदुपधानमन्त्रद्वयञ्चाष्टमे काण्डे प्रदर्शयिष्यते ( श. प. ८ । ३ । १ । १२ । १३ । १४ । ) तन्मन्त्रे प्रथममिन्द्राग्निविश्वकर्मसम्बन्धः, मध्ये अस्या अन्तरिक्षरूपत्वम्, अन्ते वायुसम्बन्धः, (वा. सं १४।१३,१४ ) इति॥४॥

अथ तृतीयस्वयमातृण्णाप्रधानायाः पञ्चमचितेरुत्पत्तिं दर्शयति–तेऽब्रुवन्नित्यादि पूर्ववत् । 'परमेष्ठी' 'दिवं' द्युलोकात्मिकां 'तृतीयां' 'स्वयमातृण्णाम्' इष्टकाम् 'अपश्यत्' । 'तस्मात्' 'ताम्' इष्टकाम् 'परमेष्ठिना' "परमेष्ठी त्वा सादयतु" ( वा. सं १५ । ६४ ) इति मन्त्रेण उपदध्यात् ॥ ५ ॥

---

१–अनूकेषु पञ्च दिश्या वैश्वदेवीवत् राज्ञ्यसीति प्रतिमन्त्रम् । विश्वकर्म्मेति विश्वज्योतिषमुपरि पूर्व्वस्याः । का० श्रौ० सू० १७ । १९२–१९३ । २–प्रच्छाद्य पुरीषेण विकर्णीय स्वयमातृण्णे शर्करे सᳬस्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां विकर्णीमायोष्ट्वेति स्वयमातृण्णाम् । का० श्रौ० सू० १७ । २६१ ।

तमसावादित्योऽब्रवीत् । (ड) उपाहमायानीति केनेति लोकम्पृणयेति तथेत्येष वाव लोकम्पृणाऽऽत्मना हैव तदुवाच तस्मात्तृतीया स्वयमातृण्णाऽनन्तर्हिता लोकम्पृणायाऽउपधीयते तस्मादसावादित्योऽनन्तर्हितो दिवोऽनन्तर्हितो ह्येषऽएतयोपैत् ॥ ६ ॥

(च) तदेता वाव षड् देवताः । (ऽ) इदꣳ सर्वमभवन्युदिदं किं च ते देवाश्चऽर्षयश्चाब्रुवन्निमा वाव षड् देवताऽइदꣳ सर्वमभूवन्नुप तज्जानीत यथा वयमिहाप्यसामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथा वयमिहाप्यसामेति तेषां चेतयमानानां देवा द्वितीयां चितिमपश्यन्नृषयश्चतुर्थीम् ॥ ७ ॥

---

चेतयमानानां परमेष्ठी दिवं तृतीयां स्वयमातृण्णां चितिमपश्यत् । तस्मात्तां परमेष्ठिनोपदधाति ॥ ५ ॥

तमसावादित्योऽब्रवीत्—उपाह मायानीति । केनेति । लोकम्पृणयेति । तथेति । एष वाव लोकम्पृणा । आत्मना हैव तदुवाच । तस्माचृतीया स्वयमातृण्णाऽनन्तार्हिता लोकम्पृणायाऽउपधीयते । तस्मादसावादित्योऽनन्तर्हितो, दिवः । अनन्तर्हितो ह्येष एतयोपैत् ॥ ६ ॥

तदेता वाव षड् देवता इदं सर्वमभूवन्—यदिदं किंच । ते देवाश्चऽर्षयश्चाब्रुवन्—इमा वाव षड्देवता इदं सर्वमभूवन् । उप तज्जानीत—यथा वयमिहाप्यसामेति । तेऽब्रुवन् । चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । तदिच्छत—यथा वयमिहाप्यसामेति । तेषां चेतयमानानां देवा द्वितीयां चितिमपश्यन्, ऋषयश्चतुर्थीम् ॥ ७ ॥

---

तस्मिन् मन्त्रे " सूर्यस्त्वाऽभिपातु " इति सूर्यसम्बन्धः श्रूयते । तं दर्शयति—तमसावादित्योऽब्रवीदिति । लोकम्पृणयेतीति । एतन्नामधेयेष्टकया । लोकम्पृणयेति यदादित्येनोक्तम्, तद् विवृणोति—आत्मना हैव तदुवाचेति । तस्याः तृतीयायाः स्वयमातृण्णेष्टकाया लोकम्पृणायाश्च पौर्वापर्येण उपधानमुत्तरत्र वक्ष्यते । तन्मन्त्रे ( वा. सं. १२।५४–५६—वा. सं. १५।५९-६१ ) पूर्ववदादिमध्यान्तेषु परमेष्ठिसम्बन्धः, द्युलोकरूपत्वम्, सूर्यसम्बन्धश्च विद्यते ॥ ६ ॥

इत्थं प्रथममध्यमोत्तमास्तिस्रश्चितय ऋषिदेवतासम्बन्धित्वेन दर्शिताः, इतः परं द्वितीयचतुर्थ्योश्चित्योरुत्पत्तिप्रकारं वक्तुमुक्तचितित्रये ऋषिदेवताः परिगणयति—तदेता वाव षड् देवता इति । प्रजापतीन्द्राग्निविश्वकर्मपरमेष्ठिनस्त्रय ऋषयः, अग्निवायुसूर्यास्तिस्रो देवताः, इति षड् देवताः, इत्युक्तम् । इन्द्राग्न्योर्विश्वकर्मणश्च सहैव चितिद्रष्टृत्वेनैका देवतेति परिगणनया षड् देवता भवन्तीत्यर्थः । लोकानां भूम्यादीनां त्रित्वात्, तदभि-

---

१–विश्वज्योतिषं परमेष्ठी त्वेति । का० श्रौ० सू० १७ । २५९ । २–तिसृषु लोकंपृणासु मंत्रो दशसु च द्वयोर्वा दशस्वेकस्यां च । चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति । का. श्रौ. सू. १७ । १७ । १८ ।

तेऽब्रुवन् । (त्रु) उप व्वयमायामेति केनेति यदेषु लोकेषूपेति तथेति तद्यदूर्ध्वं पृथिव्या ऽअर्वाचीनमन्तरिक्षात्तेन देवा ऽउपायंस्तदेषा द्वितीया चितिरथ यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तेनऽर्षयऽउपायंस्तदेषा चतुर्थी चितिः ॥ ८ ॥

(स्ते) ते यदब्रुवन् । (वंश्चे) चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्यच्चेतयमाना ऽअपश्यंस्तस्माच्चितयः ॥ ९ ॥

प्रजापतिः प्रथमां चितिमपश्यत् । (त्प्र) प्रजापतिरेव तस्या आर्षेयं देवा द्वितीयां चितिमपश्यन्देवा ऽएव तस्याऽ आर्षेयमिन्द्राग्नी च विश्व-

---

तेऽब्रुवन्–उप वयमायामेति । केनेति । यदेषु लोकेषूपेति । तथेति । तद्यदूर्ध्वं पृथिव्याः, अर्वाचीनमन्तरिक्षात्–तेन देवा उपायन् । तदेषा द्वितीया चितिः । अथ यदूर्ध्वमन्तरिक्षात्, अर्वाचीनं दिवः–तेनऽर्षय उपायन् । तदेषा चतुर्थी चितिः ॥ ८ ॥

ते यदब्रुवन्–चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । यच्चेतयमाना अपश्यन्–तस्माच्चितयः ॥ ९ ॥

प्रजापतिः प्रथमां चितिमपश्यत् । प्रजापतिरेव तस्या आर्षेयम् । देवा द्वितीयां चितिमपश्यन् ।

---

मानिनामग्न्यादीनां च त्रित्वात्, एतेषु सर्वसंग्रहाभिप्रायेण "इदं सर्वमभवन् यदिदं किञ्च"–इत्युक्तम् । ते देवा ऋषय इति । उक्तव्यतिरिक्ताः 'ऋषयो देवाश्च' परस्परम् 'अब्रुवन्' उक्तिप्रकारं दर्शयति–इमा वाव षड् देवता इति । प्रजापत्यादय एव षड् देवताः 'सर्वम्' 'अभूवन्' 'वयम् अपि' देवा ऋषयश्च 'इह' अस्मिन् चयनकर्मणि 'यथा' येन प्रकारेण 'असाम' भवेम । अस्तेर्लोटि रूपम् । 'तत्' चयनमध्ये भवनम् 'उपजानीत' अन्योन्यं विचारयतेति अन्ये देवर्षयोऽवोचन् ॥

तेऽब्रुवन्नित्यादिना द्वितीयचतुर्थ्योश्चित्योरुत्पत्तिरुक्ता । प्रथमस्वयमातृण्णाचितेरनन्तरं देवदृष्टाद्वितीया चितिः, द्वितीयस्वयमातृण्णानन्तरमृषिदृष्टा चतुर्थी चितिः, एवं पञ्च चितयः सम्पन्ना इत्यर्थः ॥ ७ ॥

तेऽब्रुवन्नुपेति । तद्यदूर्ध्वं पृथिव्या इति । 'पृथिव्याः' भूलोकाद् 'ऊर्ध्वम्' 'अन्तरिक्षादर्वाचीनं' 'यत्' पदार्थजातमस्ति, 'तेन' सह 'देवाः' द्वितीयां चितिम् उपागच्छन् । 'अन्तरिक्षात्' 'ऊर्ध्वम्' 'दिवः' द्युलोकात् 'अर्वाचीनम्' 'यद्' वस्तुजातमस्ति, 'तेन' सह 'ऋषयः' चतुर्थीं चितिमपश्यन्नित्यर्थः ॥ ८ ॥

चितिशब्दं निर्वक्ति–ते यदब्रुवन्निति । यस्मात् तेषु चोक्ताः प्रजापत्यादयः सर्वेऽपि 'चेतयध्वमिति' उक्त्वा चितिं दृष्टवन्तः, 'तस्मात्' चितिसंसर्गात् चितिशब्दो निरुक्तः । "चिती सञ्ज्ञाने" (धा. पा. भ्वा. प. ३९) क्तिनि धातुतकारलोपे कृते रूपमिति मन्तव्यम् । यद्वा "चिञ् चयने"–(धा. पा. स्वा. उ. ५) इत्यस्य क्तिनि रूपम् ॥ ९ ॥

उक्तानां स्वयमातृण्णादीनां पञ्चानां चितीनां (तै. सं. ५ । ६ । १०) प्रजापत्यादयोऽग्न्यादयश्च ऋषयो देवाश्चोक्ताः, तत्र ऋत्रीनेव सुखप्रतिपत्तये दर्शयति–प्रजापतिः प्रथमां चितिमपश्यदिति । प्रजापतिरेव

कर्मा च तृतीयां चितिमपश्यंस्तऽएव तस्याऽ आर्षेयमृषयश्चतुर्थीं चितिमपश्यन्नृषयऽ एव तस्या ऽआर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत्परमेष्ठ्येव तस्या ऽआर्षेयᳪं स यो हैतदेवं चितीनामार्षेयं व्वेदार्षेयवत्यो हास्ये बन्धुमत्यश्चितयो भवन्ति ॥ १० ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ६–२–२ ॥ ( २. ३. ) ॥
इति द्वितीयोऽध्यायः समाप्तः ॥ ६–२ ॥

---

देवा एव तस्या आर्षेयम् । इन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यन् । तऽएव तस्या आर्षेयम् । ऋषयश्चतुर्थीं चितिमपश्यन् । ऋषय एव तस्या आर्षेयम् । परमेष्ठी पञ्चमीं चितिमपश्यत् । परमेष्ठ्येव तस्या आर्षेयम् । स यो हैतदेवं चितीनामार्षेयं वेद–आर्षेयवत्यो हास्य बन्धुमत्यश्चितयो भवन्ति ॥ १० ॥

---

तस्या आर्षेयमिति । एवकारोऽन्यनिवृत्त्यर्थः । 'तस्याः' प्रथमायाश्चितेः 'आर्षेयम्' । ऋषिरेवार्षेयम्, स्वार्थिको ढक्–प्रत्ययः । चितीनामृषीन् विदुषः फलमाह स यो हैतदेवमिति । 'अस्य' वेदितुः 'चितयः' 'आर्षेयवत्यः' ऋषिसम्बद्धाः, 'बन्धुमत्यः' विधायकब्राह्मणानूदिताः । वेदनमात्रेण ऋषिदृष्टा ब्राह्मणविहिताश्चितयोऽनुष्ठिता 'भवन्ति' इत्यर्थः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
षष्ठकाण्डे द्वितीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ६-२-३ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमचलमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये षष्ठे काण्डे द्वितीयोऽध्यायः समाप्तः ॥ ६–२ ॥

# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च तृतीयं ब्राह्मणम् ।

एतद्वै देवाऽ अब्रुवन् । ( वंश्वे ) चेतयध्वमिति चितिमिच्छतेति वाव तद्ब्रुवंस्तेषां चेतयमानानाᳺ सवितैतानि सावित्राण्यपश्यद्यत्सविताऽपश्यत्तस्मात्सावित्राणि सऽ एतामष्टागृहीतामाहुतिमजुहोत्ताᳺ हुत्वेमामष्टधा विहितामषाढामपश्यत्पुरैव सृष्टाᳺ सतीम् ॥ १ ॥

---

एतद्वै देवा अब्रुवन्—चेतयध्वमिति। चितिमिच्छतेति वाव तदब्रुवन् । तेषां चेतयमानानां सवितैतानि सावित्राण्यपश्यत् । यत् सविताऽपश्यत्—तस्मात्सावित्राणि । स एतामष्टागृहीतामाहुतिमजुहोत् । तां हुत्वेमामष्टधा विहितामषाढामपश्यत्—पुरैव सृष्टां सतीम् ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥ निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

एवमध्यायद्वयेन चीयमानाग्नेरुत्पत्तिप्रकारः, चयनोपयुक्तपशूदककर्म, मृत्तिकासिकताद्युत्पत्तिः पुरुषादिपञ्चपशुप्राजापत्यवायव्येष्वन्यतमेन प्रकारेणानुष्ठानप्रकारः, पञ्चचित्युत्पत्तिश्च दर्शिताः; इतस्तृतीयादिभिरध्यायैः "युञ्जानः प्रथमं मनः"(वा.सं.११।१) इत्यादीनां चयनमन्त्राणां विनियोगोऽभिधास्यते । तत्र प्रथमं "युञ्जानः प्रथमम्" इत्यादिभिरष्टभिः सावित्रहोमः कार्यः । तदाह कात्यायनः—"अष्टगृहीतं जुहोति सन्ततमुद्गृह्णन् युञ्जान इति"—(का. श्रौ.सू. १६।१०) इति । अष्टवारं स्रुवेण स्रुचि गृहीतमाज्यद्रव्यं ' सन्ततम् ' अविच्छेदेन ' उद्गृह्णन् ' ऊर्ध्वं गृह्णन् " युञ्जानः प्रथमं मनः "—( वा. सं. ११ । १—८ ) इत्यादिभिरष्टभिः सवितृदेवत्यैर्मन्त्रैर्जुहुयात् । " अष्टागृहीतामष्टाभिर्यजुर्भिर्जुहोति "—इति (अग्रे तृतीयकण्डिकायाम्) वक्ष्यति । एतेषां यजुष्ट्वं यजुर्वेदे पाठात्; अन्यथा पादबद्धानां यजुष्ट्वानुपपत्तेः । अथवा यजुस्संहितापठिता मन्त्राः छत्रिन्यायेन यजुःशब्देनोक्ताः; अत्राष्टमो मन्त्रो यजुः । तथा चापस्तम्बः-" यजुरष्टमाभिर्ऋग्भिरेकामाहुतिं जुहोति "—( आप. श्रौ. सू. १६ । १ । ४ ) इति ॥ तमिमं सावित्रहोमं विधास्यन् सवितृसम्बन्धमादौ दर्शयति—एतद्वै देवा अब्रुवन्निति । ' चेतयमानानां ' चितिमिच्छतां देवानां मध्ये ' सविता ' देवः ' एतानि ' वक्ष्यमाणानि सावित्राणि कर्माणि ' अपश्यत् ' । यस्मात् सविता एतानि दृष्टवान् अतः सावित्राणीत्युच्यन्ते । सवितुरिमानीत्यर्थे " तस्येदम् "—(पा. सू. ४ । ३ । १२० ) इति अण्—प्रत्ययः । सम्बन्धसामान्ये प्रत्ययविधानात् आत्मनोऽभ्यन्तरेऽपि देव इति कृत्वा द्रष्टृद्रष्टव्यसम्बन्धे कर्मणामपि सवितृदेवत्वेन " साऽस्य देवता "—(पा. सू. ४।२।२४) इत्यर्थविशेषे च विशेषप्रत्ययो भवतीत्यर्थः । आज्यस्याष्टग्रहणं विधातुमाह—स एतामष्टागृहीतामिति । तां हुत्वेमामिति । यतः ' अष्टागृहीतामाहुतिं सविता अजुहोत् ', अतः ' अष्टधा विहिताम् ' अष्टप्रकारेण विहिताम् ' अषाढां ' नामेष्टकाम् ' अपश्यत् ' ॥ १ ॥

ते यदब्रुवन् । ( वंश्रे ) चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्यच्चेतयमाना ऽअपश्यंस्तस्माच्चितिराहुतिर्वै यज्ञो यदिष्ट्वाऽपश्यत्तस्मादिष्टका ॥ २ ॥

तां वाऽएताम् । ( मु ) एकाथ्ँ सतीमष्टागृहीतामष्टाभिर्यजुर्भिर्जुहोति तस्मादियमेका सत्यष्टधा विहिता ॥ ३ ॥

तामूर्ध्वामुद्गृह्णञ्जुहोति । ( ती ) इमां तदूर्ध्वाथ्ँ रूपैरुद्गृह्णाति तस्मादियमूर्ध्वा रूपैः ॥ ४ ॥

( स्ताथ्ँ ) ताथ्ँ संततां जुहोति । ( त्ये ) एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइह रक्षाथ्ँसि नाष्ट्रा नान्ववेयुरिति तऽएतथ्ँ संततहोममपश्यन्रक्षसां नाष्ट्राणामनन्ववायनाय तस्मात्संततां जुहोति ॥ ५ ॥

---

ते यदब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । यच्चेतयमाना अपश्यन्—तस्माच्चितिः । आहुतिर्वै यज्ञः, यदिष्ट्वाऽपश्यत्—तस्मादिष्टका ॥ २ ॥
तां वाऽएतामेकां सतीमष्टागृहीतामष्टाभिर्यजुर्भिर्जुहोति । तस्मादियमेका सत्यष्टधा विहिता ॥३॥
तामूर्ध्वामुद्गृह्णञ्जुहोति । इमां तदूर्ध्वां रूपैरुद्गृह्णाति । तस्मादियमूर्ध्वा रूपैः ॥ ४ ॥
तां सन्ततां जुहोति । एतद्वै देवा अबिभयुः । यद्वै न इह रक्षांसि नाष्ट्रा नान्ववेयुरिति । तऽएतं सन्ततहोममपश्यन्—रक्षसां नाष्ट्राणामनन्ववायनाय । तस्मात्सन्ततां जुहोति ॥ ५ ॥

---

ते यदब्रुवन्निति । अषाढाया इष्टकात्वमुपपादयति—आहुतिर्वै यज्ञो यदिष्ट्वाऽपश्यदिति । 'यत्' यस्मात् एतां सावित्राहुतिम् 'इष्ट्वा' 'अपश्यत्', 'तस्मादिष्टका' अषाढेति, आहुतिसदृशीष्टकेति ॥ २ ॥
तत् प्रशंसति—तां वा एतामेकां सतीमष्टागृहीतामिति । यस्मादेकाहुतिमष्टाभिर्मन्त्रैरष्टगृहीतेनाज्यद्रव्येण हुतवान्, तस्मात् अषाढा वस्तुत एकाऽपि अष्टधा विधीयत इति तत्समानत्वं तस्योपचरितमित्याशयः ॥ ३ ॥
तस्या आहुतेरूर्ध्वं ग्रहणं विधत्ते—तामूर्ध्वामिति । 'उद्गृह्णन्' उदुपसर्गस्यार्थः ऊर्ध्वामित्यनेनोक्तः । इमां तदूर्ध्वामिति । 'इमां' भूमिम् ॥ ४ ॥
तस्याः सान्तत्येन हवनं विधत्ते—तां सन्ततां जुहोतीति । 'सन्तताम्' अविच्छिन्नधारामित्यर्थः । सन्ततत्वं सोपपत्तिकं प्रशंसति—एतद्वै देवा अबिभयुरिति । "ञिभी भये" ( धा. पा. जु. प. २ ) लङि "सिजभ्यस्तविदिभ्यश्च"—( पा. सू. ३ । ४ । १०९ ) इति झेर्जुस् । राक्षसेभ्यः सकाशाद् देवा भीतवन्तः । 'यत्' यथा 'इह' यज्ञे 'नाष्ट्रा' नाशकानि 'रक्षांसि' कर्तृपदम्, 'नः' अस्मान् देवान् 'नान्ववेयुः' न सङ्गता भवेयुः । "इण् गतौ" ( धा. पा. अ. प. ३९ ) लिङि रूपम्, 'इति' हेतौ, अस्मात् कारणात् 'एतं' सावित्रं 'होमं' 'सन्ततम्' अनवच्छिन्नम् 'अपश्यन्' अवकाशान्वेषिणां राक्षसानामसङ्गमनाय; अवकाशे हि यज्ञविघातकाः प्रविशन्ति ॥ ५ ॥

यद्वेवैतामाहुतिं जुहोति । सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्तात्प्रीणाति तमिष्ट्वा प्रीत्वाऽथैनꣳ सम्भरति तद्यदेतया सवितारं प्रीणाति तस्मात्सावित्राणि तस्माद्वाऽएतामाहुतिं जुहोति ॥ ६ ॥

यद्वेवैतामाहुतिं जुहोति । सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्ताद्रेतोभूतꣳसिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतया सवितारꣳ रेतोभूतꣳ सिञ्चति तस्मात्सावित्राणि तस्माद्वा ऽएतामाहुतिं जुहोति ॥ ७ ॥

स्रुवश्चात्र स्रुक् च प्रयुज्येते । वाग्वै स्रुक्प्राणः स्रुवो वाचा च वै प्राणेन चैतदग्रे देवाः कर्मान्वैच्छंस्तस्मात्स्रुवश्च स्रुक्च ॥ ८ ॥

यद्वेव स्रुवश्च स्रुक्च । यो वै स प्रजापतिरासीदेष स स्रुवः प्राणो वै स्रुवः प्राणः प्रजापतिरथ या सा वागासीदेषा सा स्रुग्योषा वै वाग्योषा स्रुगथ यास्ता ऽआप ऽआयन्वाचो लोकादेतास्ता यामेतामाहुतिं जुहोति ॥ ९ ॥

---

यद्वेवैतामाहुतिं जुहोति । सवितैषोऽग्निः—तमेतयाऽऽहुत्या पुरस्तात्प्रीणाति । तमिष्ट्वा प्रीत्वाऽथैनं सम्भरति । तद्यदेतया सवितारं प्रीणाति—तस्मात्सावित्राणि । तस्माद्वाऽएतामाहुतिं जुहोति ॥ ६ ॥

यद्वेवैतामाहुतिं जुहोति । सवितैषोऽग्निः । तमेतयाऽऽहुत्या पुरस्ताद्रेतोभूतं सिञ्चति । यादृग्वै योनौ रेतः सिच्यते । तादृग्जायते । तद्यदेतया सवितारं रेतोभूतं सिञ्चति । तस्मात्सावित्राणि । तस्माद्वाऽएतामाहुतिं जुहोति ॥ ७ ॥

स्रुवश्चात्र स्रुक् च प्रयुज्येते । वाग् वै स्रुक्, प्राणः स्रुवः । वाचा च वै प्राणेन चैतदग्रे देवाः कर्मान्वैच्छन् । तस्मात्—स्रुवश्च स्रुक् च ॥ ८ ॥

यद्वेव स्रुवश्च स्रुक् च । यो वै स प्रजापतिरासीत्—एष स स्रुवः । प्राणो वै स्रुवः । प्राणः

---

अस्या आहुतेः सवितृदेवत्यत्वमिदानीमाह—यद्वेवैतामाहुतिमिति । आग्नेये कर्मणि कुतः सवितुः प्रसङ्ग इत्यत आह—सवितैषोऽग्निरिति । "षू प्रेरणे"—( धा. पा. तु. प. १२७ ) इति अस्मात् तृचि पदं सवितेति । तदर्थस्तु 'एषः' 'अग्निः' इति । सवितारं प्रीणाति, तस्मात् सावित्राणीति—अनेनाहुतेः सवितृप्रीणनसाधनत्वात् तद्देवत्यत्वमिति, प्रत्ययस्तु पूर्वमेवोक्तः ॥ ६ ॥

प्रकारान्तरेणाहुतिकरणं प्रशंसति—यद्वेवैतामाहुतिमिति । रेतोभूतं सिञ्चतीति । चयनकर्मणः प्रारम्भादित्यर्थः ॥ ७ ॥

आज्यहोमत्वादत्र केवलस्रुवेण होमकरणं व्युदसितुमाह—स्रुवश्चात्र स्रुक् च प्रयुज्येते इति । स्त्रीलिङ्गत्वात् स्रुचो वाक्त्वम्, पुंलिङ्गत्वात् स्रुवस्य प्राणत्वम् । ताभ्यां वाक्प्राणाभ्याम् 'अग्रे' पूर्वं 'देवाः' इदं 'कर्म' अनुष्ठितवन्तः । अतोऽस्मिन् स्रुक्स्रुवौ प्रयुज्येते ॥ ८ ॥

प्रकारान्तरेणैतयोः प्रयोगं प्रशंसितुमनुवदति—यद्वेव स्रुवश्च स्रुक्चेति । स्रुक्स्रुवयोर्वाक्प्रजापतिरूपत्वं

ताᳪं॑ संत॑तां जुहोति । संत॑ता हि ता ऽआप॒ ऽआय॒न्नथ॒ यः स प्र॒जाप॑तिस्त्र॒य्या वि॒द्यया॑ स॒हापः॒ प्रावि॑श॒देष॒ स यैरे॒तद्यजु॑र्भि॒र्जुहो॑ति ॥ १० ॥

तद्यानि त्रीणि प्रथमानि । (नी) इमे ते लोका ऽअथ यच्चतुर्थं यजुस्त्रयी सा विद्या जगती सा भवति जगती सर्वाणि च्छन्दाᳪंसि सर्वाणि च्छन्दाᳪंसि त्रयी विद्याऽथ यानि चत्वार्युत्तमानि दिशस्तानीमे च वै लोका दिशश्च प्रजापतिरथैषा त्रयी विद्या ॥ ११ ॥

---

प्रजापतिः । अथ या सा वागासीत्—एषा सा स्रुक् । योषा वै वाक् । योषा स्रुक् । अथ यास्ता आप आयन् वाचो लोकाद्—एतास्ताः—यामेतामाहुतिं जुहोति ॥ ९ ॥

तां सन्ततां जुहोति । सन्तता हि ता आप आयन् । अथ यः स प्रजापतिस्त्रय्या विद्यया सहापः प्राविशत्—एष सः—यैरेतद्यजुर्भिर्जुहोति ॥ १० ॥

तद्यानि त्रीणि प्रथमानि—इमे ते लोकाः । अथ यच्चतुर्थं यजुः—त्रयी सा विद्या । जगती सा भवति । जगती सर्वाणि च्छन्दांसि । सर्वाणि च्छन्दांसि त्रयी विद्या । अथ यानि चत्वार्युत्तमानि—दिशस्तानि । इमे च वै लोकाः, दिशश्च प्रजापतिः । अथैषा त्रयी विद्या ॥ ११ ॥

---

यदर्थमुक्तम्, तद् दर्शयति—अथ यास्ता आप इति । 'याः आपः' यानि उदकानि प्रजापतिसृष्टानि 'वाचो लोकात्' वाग्रूपाल्लोकात् सकाशात् 'आयन्' आगतानि, 'ताः' आप एवेदानीं हूयमानाऽऽहुतिरित्यर्थः । पूर्वं प्रजापतिर्वाचः सकाशात् अपः सृष्टवान् इत्याम्नातम्, तथा प्रथमाध्याये—"सोऽपोऽसृजत वाच एव लोकात्"—( श. प. ६ । १ । १ । ९ ) इति ॥ ९ ॥

तां सन्ततामिति । आहुतिसाधनान् मन्त्रान् प्रशंसति—अथ यः स प्रजापतिस्त्रय्या विद्ययेति । पूर्वं प्रजापतिरपः सृष्ट्वा पुनरपि बहुलामुत्पत्तिं सृष्ट्वा त्रयीमय्या विद्यया सह ता अपः प्रविष्टवान्, अत इदानीमपि आहुतिरूपतोक्तेर्मन्त्राणां च त्रयीरूपत्वात् तैर्होमकरणं प्रजापतेर्बहुधोत्पत्तये विद्यया सहोदकप्रवेशसमानमित्यर्थः । एतदपि पूर्वमाम्नातम्—"सोऽकामयताभ्योऽद्भ्योऽधि प्रजायेयेति, सोऽनया त्रय्या विद्यया सहापः प्राविशत्" ( श. प. ६ । १ । १ । १० ) इति ॥ १० ॥

मन्त्रानष्टौ पविभज्य स्तौति—तद् यानि त्रीणि प्रथमानीति । 'तत्' तत्र तेषु मन्त्रेषु 'यानि प्रथमानि त्रीणि' यजूंषि । यजुर्वेदपठितत्वात् यजूंषीत्युच्यन्ते; अन्यथा पादबद्धानां यजुष्ट्वानुपपत्तेः, यजुरन्तिमा वा मन्त्राः छत्रिन्यायेन यजुःशब्देनोक्ताः । तन्मन्त्रत्रयं पृथिव्यन्तरिक्षद्युलोकात्मकम्, चतुर्थो मन्त्रस्त्रयीविद्यात्मकः त्रयीत्वं छन्दोद्वारा प्रतिपादयति—जगती सा भवतीति । "युञ्जते मन उत युञ्जते धियः"—( वा.सं. ११।४ ) इति चतुर्थो मन्त्रो जगतीच्छन्दस्कः; जगत्याः सर्वच्छन्दोमयत्वात् त्रय्याश्च तत्सम्भवात्, चतुर्थस्यास्य त्रयीरूपत्वम् । इमानि चत्वारि यजूंषि प्रागादिमहादिशः; संख्यासाम्यात् । "इमे वै लोकाः"—इत्यादिना सप्तानां मन्त्राणां प्रजापतिरूपत्वम्, एकस्यास्त्रयीविद्यारूपत्वञ्च प्रदर्शितमिति मन्तव्यम् ॥ ११ ॥

स जुहोति । युञ्जानः प्रथमं मनऽ इति प्रजापतिर्वै युञ्जानः स मन ऽएतस्मै कर्मणेऽयुङ्क्त तद्यन्मन ऽएतस्मै कर्मणेऽयुङ्क्त तस्मात्प्रजापतिर्युञ्जानः ॥ १२ ॥

(स्त) तत्त्वाय सविता धियऽ इति । मनो वै सविता प्राणा धियोऽग्नेर्ज्योतिर्निचाय्येत्यग्नेर्ज्योतिर्दृष्ट्वेत्येतत्पृथिव्याऽअध्याभरदिति पृथिव्यै ह्येनदध्याभरति ॥ १३ ॥

युक्तेन मनसा वयमिति । मनऽ एवैतदेतस्मै कर्मणे युङ्क्ते न ह्ययुक्तेन मनसा किं चन सम्प्रति शक्नोति कर्तुं देवस्य सवितुः सवऽइति देवेन सवित्रा

---

स जुहोति–" युञ्जानः प्रथमं मनः "–इति । प्रजापतिर्वै युञ्जानः, स मन एतस्मै कर्मणेऽयुङ्क्त । तद्यन्मन एतस्मै कर्मणेऽयुङ्क्त–तस्मात्प्रजापतिर्युञ्जानः ॥ १२ ॥

" तत्त्वाय सविता धियः "–इति । मनो वै सविता, प्राणा धियः । " अग्नेर्ज्योतिर्निचाय्य "–इति । दृष्ट्वेत्येतत् । " पृथिव्याऽअध्याभरत् "–( वा. सं. ११ । १ ) इति । पृथिव्यै ह्येनदध्याभरति ॥ १३ ॥

" युक्तेन मनसा वयम् "–इति । मन एवैतदेतस्मै कर्मणे युङ्क्ते । न ह्ययुक्तेन मनसा किंचन सम्प्रति शक्नोति कर्तुम् । " देवस्य सवितुः सवे "–इति । देवेन सवित्रा प्रसूता इत्येतत् ।

---

अथ होममनूद्य प्रथमामृचं विधत्ते–स जुहोति युञ्जान इति । प्रथमा ऋक्, अनुष्टुप् । अयमर्थः– ' सविता ' सर्वस्य स्वस्वकार्ये प्रेरकः सूर्यः ' प्रथमम् ' आदौ अग्निचयनविषये ' मनः ' ज्ञानसाधनभूतं चित्तं ' युञ्जानः ' कर्मविषयं ज्ञानमुत्पादयितुमात्मना संयुक्तं कुर्वन् अनन्तरं ' धियः ' बुद्धीः प्राणान् वा ' तत्वाय ' " तनु विस्तारे " ( धा. पा. त. उ. १ ) क्त्वाप्रत्यये " उदितो वा "–( पा. सू. ७ । २ । ५६ ) इति इडभावपक्षे " अनिदिताम्० "–( पा. सू. ६ । ४ । २४ ) इति न–लोपे, " क्त्वो यक् "–( पा. सू. ७ । १ । ४७ ) इति यक्प्रत्यये च कृते रूपम् । तनित्वा विस्तार्य, मनसा बुद्धिं प्राणं वा पर्यालोच्य च यत्र मनस्तत्र प्राणः इति हि व्याप्तिः । यद्वा, एकं वाक्यम्; प्रथमं मनो ज्ञानसाधनं धियं तत्कार्यं ज्ञानञ्च ' तत्त्वाय ' तत्त्व–शब्दाच्चतुर्थी, तत्त्वं नामाग्नित्वम् । तच्छब्देन प्रकृतत्वादग्निः परामृश्यते, तस्य भावस्तत्त्वम्, अग्निरूपावाप्तये । मनो ज्ञानञ्च नियुञ्जानः अग्नेः सम्बन्धि ज्योतिः पञ्चसु पशुषु प्रविष्टं तेजः ' निचाय्य ' दृष्ट्वा " चायृ पूजानिशामनयोः "–( धा. पा. भ्वा. प. ९०९ ) । निशामनं दर्शनम् । 'पृथिव्याः' चितायाः 'अधि' उपरि विशिष्टप्रदेशं प्रति ' आभरत् ' । ततः पशुभ्यः सकाशात् अग्नितेज आहृतवान् । " हृग्रहोर्भश्छन्दसि " ( पा. सू. ८ । २ । ३२ वा. १ ) इति हकारस्य भकारः । मन्त्रं प्रतिपादमनूद्य व्याचष्टे–प्रजापतिर्वै युञ्जान इति । अत्र सवितृपदेन धात्वर्थमात्रमाश्रित्य प्रजापतिरुच्यत इति विशेषः । अत्र " तत्त्वाय अग्निरूपप्राप्तये अग्नेः ज्योतिः पशुषु दृष्ट्वा "–इत्यादिकं सर्वं युज्यते ॥ १२ ॥ १३ ॥

द्वितीयं मन्त्रं विधत्ते–युक्तेन मनसा वयमितीति ( का. श्रौ. सू. १६ । ९० ) । इयं गायत्री ।

प्रसूता ऽइत्येतुत्स्वुर्ग्याय शक्त्येति यथैतेन कर्मणा स्वर्गं लोकमियादेवमेतदाह शक्त्येति शक्त्या हि स्वर्गं लोकमेति ॥ १४ ॥

युक्त्वाय सविता देवानिति । मनो वै सविता प्राणा देवाः स्वर्यतो धिया दिवमिति स्वर्गँ हैनां लोकं यतो धियैतस्मै कर्मणे युयुजे बृहज्ज्योतिः करिष्यत ऽ इत्यसौ वाऽआदित्यो बृहज्ज्योतिरेष उऽएषोऽग्निरेतम्वेते संस्करिष्यन्तो भवन्ति सविता प्रसुवाति तानिति सवितृप्रसूता ऽएतत्कर्म करवन्नित्येतत् ॥ १५ ॥

---

" स्वर्ग्याय शक्त्या "-( वा. सं. ११ । २ ) इति । यथैतेन कर्मणा स्वर्गं लोकमियाद्—एवमेतदाह । शक्त्येति । शक्त्या हि स्वर्गं लोकमेति ॥ १४ ॥

" युक्त्वाय सविता देवान् "-इति । मनो वै सविता, प्राणा देवाः । " स्वर्यतो धिया दिवम् "-इति । स्वर्गं हैनां लोकं यतो धियैतस्मै कर्मणे युयुजे । " बृहज्ज्योतिः करिष्यतः "-इति । असौ वाऽआदित्यो बृहज्ज्योतिः। एष उ एषोऽग्निः। एतम्वेते संस्करिष्यन्तो भवन्ति । " सविता प्रसुवाति तान् "-( वा. सं ११ । ३ ) इति । सवितृप्रसूता एतत्कर्म करवन्नित्येतत् ॥ १५ ॥

---

अयमर्थः—' युक्तेन ' कर्मविषये एकाग्रेण मनसा । अन्यत्र व्यापके मनसि कर्म कर्तुं न शक्यते, अतः कर्मणि युक्तेनेत्युक्तम् । तादृशेन ' मनसा ' सहिताः ' सवितुः देवस्य ' ' सवे ' अभ्यनुज्ञाने वर्तमानाः ' वयम् ' अनुष्ठातारः ' स्वर्ग्याय ' हितार्थे यत्-प्रत्ययः ( पा. सू. ५ । १ । ५ ) । स्वर्गहिताय स्वर्गसाधनाय कर्मणे, तदर्थम्, " क्रियार्थोपपदस्य० "—( पा. सू. २ । ३ । १४ ) इति चतुर्थी । ' शक्त्या ' कर्मकरणसामर्थ्येन, तदर्थद्रव्यसामर्थ्येन च प्रयत्नः कार्यः इति वाक्यशेषः । नित्ये तावत्, यथा शक्नुयात् तथा कुर्यादिति प्रकारवाचिना यथाशब्देन शक्तेर्यथासम्भवतोक्तिः; काम्ये यदा शक्नुयात् तदा कुर्यादिति पूर्वोक्तेः सम्पूर्णता चोक्ता ॥

मन्त्रं प्रतिपादमनूद्य व्याचष्टे—मन एवैतदिति । मनसो युक्तत्वं व्यतिरेकमुखेन प्रतिपादयति—न ह्ययुक्तेनेति ॥ १४ ॥

तृतीयं मन्त्रं विधत्ते—युक्त्वाय सविता देवानिति ( का. श्रौ. सू. १६ । ५० )। तादृशान् ' युक्त्वाय ' पूर्ववत् क्त्वो यक् । मनसा युक्त्वा स्थित इति विशेषः । यद्वा, ' देवान् ' प्राणान् ' युक्त्वाय ' इत्यन्तमेकं वाक्यमिति प्रदर्शितम् । ' युयुजे ' इति लिट् प्रयुक्तः । ' बृहत् ' महत् ' ज्योतिः ' अग्न्यात्मकं सूर्यात्मकञ्च ' करिष्यतः ' संस्करिष्यतः आत्मत्वेन भावयतः ' तान् ' देवान् ' सविता ' ' प्रसुवाति ' अभ्यनुजानातु । सुवतेः पञ्चमे लकारे " लेटोऽडाटौ "—( पा. सू. ३ । ४ । ९४ ) इत्याडागमः । अतः एव ' करवन् '—इति पञ्चमो ल उदाहृतः ॥ १५ ॥

( १६ ) युञ्जते मन ऽउत युञ्जते धियऽ इति । मनश्चैवैतत्प्राणांश्चैतस्मै कर्मणे युङ्क्ते व्विप्रा व्विप्रस्येति प्रजापतिर्व्वै व्विप्रो देवा व्विप्रा बृहतो व्विपश्चित इति प्रजापतिर्व्वै बृहन्विपश्चिद्धि होत्रा दधऽइति यद्वाऽएष चीयते तदेष होत्रा व्विधत्ते चिते ह्येतस्मिन्होत्राऽअधि व्विधीयन्ते व्वयुनाविदित्येष हीदं व्वयुनमविन्ददेक ऽइदित्येको ह्येषऽ इदꣳ सर्व्वं व्वयुनमविन्दन्मही देवस्य सवितुः परिष्टुतिरिति महती देवस्य सवितुः परिष्टुतिरित्येतत् १६॥

( १७ ) युजे वां ब्रह्म पूर्व्व्यं नमोभिरिति । प्राणो वै ब्रह्म पूर्व्व्यमन्नं नमस्तत्तदेषैवाहुतिरन्नमेतयैव तदाहुत्यैतेनान्नेन प्राणानेतस्मै कर्मणे युङ्क्ते व्विश्लोकऽएतु पथ्येव सूरेरिति यथोभयेषु देवमनुष्येषु कीर्तिं श्लोको युज-

---

" युञ्जते मन उत युञ्जते धियः "–इति । मनश्चैवैतत्–प्राणांश्चैतस्मै कर्मणे युङ्क्ते । "विप्रा विप्रस्य "–इति । प्रजापतिर्वै विप्रो देवा विप्राः । " बृहतो विपश्चितः "–इति । प्रजापतिर्वै बृहन्विपश्चित् । " विहोत्रा दधे "–इति । यद्वाऽएष चीयते–तदेष होत्रा विधत्ते । चिते ह्येतस्मिन् होत्रा अधि विधीयन्ते । "वयुनाविद्"–इति । एष हीदं वयुनमविन्दत् । "एक इत्"–इति । एको ह्येष इदं सर्वं वयुनमविन्दत् । " मही देवस्य सवितुः परिष्टुतिः "–(वा. सं, ११ । ४ ) इति महती देवस्य सवितुः परिष्टुतिरित्येतत् ॥ १६ ॥

" युजे वां ब्रह्म पूर्व्यं नमोभिः "–इति । प्राणो वै ब्रह्म पूर्व्यम्, अन्नं नमः । तत् तदेषैवाहुतिरन्नम् । एतयैव तदाहुत्यैतेनान्नेन प्राणानेतस्मै कर्मणे युंक्ते । " वि श्लोक एतु पथ्येव

---

चतुर्थीं विधत्ते–युञ्जते मन इति ( का. श्रौ. सू. १६ । ९० ) । इयं जगती । ' विप्राः ' मेधाविनो देवाः । ' बृहतो विपश्चितः ' । " विप् "–( निघं. १ । ११ । ४१ ) इति वाङ्नाम । सकलशाखागतान्मन्त्रानेकत्र कर्मणि सञ्चिन्वन्तीति विपश्चितः । ' विप्रस्य ' मेधाविनः प्रजापतेः अग्न्यात्मकस्य विस्रस्तं पुनः सन्धानार्थं ' मनो युञ्जते ' कर्मार्थमेकाग्रं कुर्वन्ति । ' उत ' अपि च ' धियः ' बुद्धीः प्राणान् वा ' युञ्जते ' । ' वयुनाविद् ' " वयुना "–( निघं. ३ । ११ । १० ) इति प्रज्ञानाम, इह ज्ञातव्ये वर्त्तते । ज्ञानवान् जानन् ' एकः ' ' इत् ' एव चीयमानः अग्निः, ' होत्राः ' सप्तहोत्रकाणां प्रस्थितयाज्याः ' विदधे ' चकार । तदिदं ' सवितुः देवस्य ' ' मही ' महती ' परिष्टुतिः ' । स यत् प्रजापतिः समिधाना य देवान् कर्मणे मनः प्राणांश्च युङ्क्ते, अतोऽग्निहोत्रं विदधे इति ॥

मन्त्रं व्याचष्टे–युञ्जते मन इत्यादि । स्पष्टोऽर्थः । यद्वा एष चीयत इति । यश्चीयते स एष ह्येतत्कर्माणि करोतीत्यर्थं द्रढयितुमाह–चिते ह्येतस्मिन्निति । ' चिते ' अग्नौ होतृमैत्रावरुणादिक्रियाणां विधानात् तस्यैव कर्तृत्वमित्युपचरितम् ॥ १६ ॥

पञ्चमीमृचं विधत्ते–युजे वां ब्रह्म पूर्व्यम् ( का. श्रौ. सू. १६ । ९० ) इति । त्रिष्टुप् । ' वाम् '–इति

१४८६.

मानस्य स्यादेवमेतदाह शृण्वन्तु विश्वेऽअमृतस्य पुत्रा ऽइति प्रजापति-र्व्वाऽअमृतस्तस्य विश्वे देवाः पुत्राऽ आ ये धामानि दिव्यानि तस्थुरितीमे वै लोका दिव्यानि धामानि तद्यऽएषु लोकेषु देवास्तानेतदाह ॥ १७॥

यस्य प्रयाणमन्वन्यऽइद्ययुरिति । प्रजापतिर्वाऽएतदग्रे कर्माकरोत्तत्ततो देवाऽअकुर्व्वन्देवा देवस्य महिमानमोजसेति यज्ञो वै महिमा देवा देवस्य यज्ञं व्वीर्य्यमोजसेत्येतद्यः पार्थिवानि विममे सऽ एतशऽ इति यद्वै किं चास्यां तत्पार्थिवं तदेष सर्व्वं विमिमीते रश्मिभिर्ह्येनदभ्यवतनोति रजाᳬं सि देवः सविता महित्वनेतीमे वै लोका रजाᳬं स्यसावादित्यो देवः सविता तानेष महिम्ना विमिमीते ॥ १८॥

---

सूरेः "-इति । यथोभयेषु देवमनुष्येषु कीर्तिं श्लोको यजमानस्य स्याद्-एवमेतदाह । "शृण्वन्तु विश्वेऽअमृतस्य पुत्राः "-इति । प्रजापतिर्वा अमृतः । तस्य विश्वे देवाः पुत्राः । "आ ये धामानि दिव्यानि तस्थुः"-( वा. सं. ११ । ५ ) इति । इमे वै लोकाः दिव्यानि । धामानि । तद्यऽएषु लोकेषु देवाः तानेतदाह ॥ १७ ॥

"यस्य प्रयाणमन्वन्यऽइद्ययुः "-इति । प्रजापतिर्वाऽएतदग्रे कर्माकरोत्-तत् ततो देवा अकुर्वन् । " देवा देवस्य महिमानमोजसा "-इति । यज्ञो वै महिमा, देवा देवस्य यज्ञं वीर्यमोजसेत्येतद् । " यः पार्थिवानि विममे स एतशः "-इति । यद्वै किं चास्यां-तत्

---

पत्नीयजमानावुच्येते ' युवाभ्यामर्थाय, ' नमोभिः ' अन्नैः सहितं, ' पूर्व्यं ' पुरातनं संहितं ' ब्रह्म ' ब्रह्मणि ' युजे ' युक्तवान् सवितेति । अत्रान्नवाचिना ' नमः ' पदेनाहुतिरभिधीयते, तयाऽऽहुत्या पत्नीयजमानयोः बुद्धीः प्राणान् एकस्मै कर्मणे युंक्ते इत्यर्थः । यद्वा, ' युजे ' इति लडुत्तमैकवचने रूपम्, अध्वर्युरहमिति । किमर्थम् ? तदाह-' सूरेः ' कर्मविदुषो यजमानस्य ' श्लोकः ' कीर्तिः ' व्येतु ' विविधं गच्छतु, उभयत्र देव-मनुष्येषु प्रसृता भवत्विति । ' पथ्येव ' पथिशब्दात् ' धर्मपथ्यर्थन्यायात् " ( पा. सू. ४ । ४ । ९२ ) इति यत् । पथो यज्ञमार्गात् अनपेता आहुतिः यथा उभयत्र प्रसारिणी भवति, एवं श्लोक इत्यर्थः । 'अमृतस्य' मरणधर्मरहितस्य प्रजापतेः ' पुत्राः ' ' विश्वे ' देवाः ' शृण्वन्तु ', यजमानश्लोकमित्यनुषङ्गः । ' ये ' देवाः दिव्यानि धामानि सर्वलोकस्थानानि ' तस्थुः ' अधिष्ठितवन्तः ते शृण्वन्त्विति ॥

मन्त्रं प्रतिपादमनूद्य व्याचष्टे-युजे वां ब्रह्म पूर्व्यं नमोभिरित्यादि । निगदसिद्धमेतत् ॥ १७ ॥

षष्ठीमृचमाह-यस्य प्रयाणमिति ( का. श्रौ. सू. १६ । ९० ) । इयं जगती । अयमर्थः । अन्ये देवाः ' यस्य देवस्य ' द्योतनशीलस्य प्रजापतेः ' प्रयाणं ' प्रथमगमनं कर्मानुष्ठानमनुलक्ष्य ' ओजसा ' वीर्येण ' महिमानं ' चयनात्मकं यज्ञं ' ययुः ' अन्वगच्छन् । प्रजापत्यनुष्ठानानन्तरं सर्वे देवा अनुष्ठितवन्तः ' यः ' ' सविता ' ' पार्थिवानि ' पृथिव्यामवस्थितं वस्तुजातं ' विममे ' " माङ् माने " ( धा. पा. जु. आ. ६ )

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति। (त्य) असौ वा ऽआदित्यो देवः सविता यज्ञो भगस्तमेतदाह प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति दिव्यो गन्धर्वः केतपूः केतं नः पुनात्वित्यसौ वाऽआदित्यो दिव्यो गन्धर्वोऽन्नं केतोऽन्नपूरन्नं नः पुनात्वित्येतद्वाचस्पतिर्वाचं नः स्वदत्विति वाग्वाऽइदं कर्म प्राणो वाचस्पतिः प्राणो न ऽइदं कर्म स्वदत्वित्येतत् ॥ १९ ॥

(दि) इमं नो देव सवितर्यज्ञं प्रणयेति। (त्य) असौ वाऽआदित्यो देवः सविता यदु वाऽएष यज्ञियं कर्म प्रणयति तदनार्तᳪ स्वस्त्युदृचमश्नुते देवाव्यमिति यो देवानवदित्येतत्सखिविदᳪ सत्राजितं धनजितᳪ स्वर्जितमिति यऽएतत्सर्वं विन्दादित्येतदृचेत्यृचा स्तोमᳪ समर्धय गायत्रेण रथन्तरं बृह-

---

पार्थिवम्। तदेष सर्वं विमिमीते। रश्मिभिर्ह्येनदभ्यवतनोति। "रजांसि देवः सविता महित्वना"—(वा. सं. ११।६) इति। इमे वै लोका रजांसि। असावादित्यो देवः सविता। तानेष महिम्ना विमिमीते ॥ १८ ॥

"देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय"—इति। असौ वाऽआदित्यो देवः सविता। यज्ञो भगः। तमेतदाह—प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति। "दिव्यो गन्धर्वः केतपूः केतं नः पुनातु"—इति। असौ वाऽआदित्यो दिव्यो गन्धर्वः। अन्नं केतः। अन्नपूरन्नं नः पुनात्वित्येतत्। "वाचस्पतिर्वाचं नः स्वदतु"—(वा. सं. ११।७)—इति। वाग्वा इदं कर्म, प्राणो वाचस्पतिः। प्राणो न इदं कर्म स्वदत्वित्येतत् ॥ १९ ॥

"इमं नो देव सवितर्यज्ञं प्रणय"—इति। असौ वाऽआदित्यो देवः सविता। यदु वाऽएष यज्ञियं कर्म प्रणयति। तदनार्तं स्वस्त्युदृचमश्नुते। "देवाव्यम्"—इति। यो देवानवदित्येतत्।

---

स्वीयैस्तेजोभिः सर्वं वस्तु व्यनक्ति। 'एतशः' सर्वत्र चरणशीलः। यद्वा, 'एतशः' (निघं. १। १४। १०) इत्यश्वनाम। मत्वर्थीयलोपः। अश्ववान्। 'सविता' आदित्यो 'देवः' 'रजांसि' पृथिव्यन्तरिक्षद्युलोकान् 'महित्वना' स्वमहिम्ना 'विममे' विमिमीते ॥

प्रजापतिर्वा एतदग्रे कर्मेत्यादि, मन्त्रव्याख्यानम् ॥ १८ ॥

सप्तमं मन्त्रं विधत्ते—देव सवितः प्रसुव यज्ञमिति (का. श्रौ. सू. १६।५०)। वाजपेये व्याख्यातोऽयं मन्त्रः (श. प. ५। १।१।१४।५। मा.) ॥ १९ ॥

अष्टमं यजुर्विधत्ते—इमं नो देव सवितर्यज्ञमिति (का. श्रौ. सू. १६। ५०)। प्रणयेति पदस्यार्थमाह—'यज्ञियं कर्म' 'प्रणयति' प्रकर्षेण नयति। तदेवाह—'तत्' सवित्रा प्रणीतं कर्म 'अनार्त्तम्' अनुपहतम्,

द्गायत्रवर्तनीति सामानि स्वाहेति यजूꣳषि सैषा त्रयी विद्या प्रथमं जायते यथैवादोऽमुत्राजायतैवमथ यः सोऽग्निरसृज्यतैष स योऽत ऊर्ध्वमग्निश्चीयते ॥ २० ॥

तान्येतान्यष्टौ सावित्राणि । ( ण्य ) अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतꣳ सिञ्चति तानि नव भवन्ति स्वाहाकारो नवमो नव दिशो दिशोऽग्निर्नव प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतꣳ सिञ्चति तानि दश भवन्त्याहुतिर्दशमी दशाक्षरा विराड् विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २१ ॥

---

" सखिविदं सत्राजितं धनजितं स्वर्जितम् "–इति । य एतत्सर्वं विन्दादित्येतत् । " ऋचा स्तोमं समर्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्तनि "–इति । सामानि । "स्वाहा"–( वा. सं. ११ । ८ ) इति । यजूंषि । सैषा त्रयी विद्या प्रथमं जायते । यथैवादोऽमुत्राजायत–एवम् । अथ यः सोऽग्निरसृज्यत–एष स–योऽत ऊर्ध्वमग्निश्चीयते ॥ २० ॥

तान्येतान्यष्टौ सावित्राणि । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतद्रेतो भूतं सिञ्चति । तानि नव भवन्ति । स्वाहाकारो नवमः । नवदिशः । दिशोऽग्निः । नव प्राणाः । प्राणा अग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतद्रेतोभूतं सिञ्चति । तानि दश भवन्ति । आहुतिर्दशमी । दशाक्षरा विराट् । विराडग्निः । दश दिशः । दिशोऽग्निः । दश प्राणाः । प्राणा अग्निः । यावानग्निर्यावत्यस्य मात्रा–तावत्तद्भवति ॥ २१ ॥

---

'स्वस्ति' क्षेमेण 'उदर्चं' समाप्तिम् 'अश्नुते' । देवाव्यमिति पदं व्याचष्टे–यो देवानवदिति । देवानवति तर्पयतीति देवावीः । " अवितृस्तृतन्त्रिभ्य ईः "–( पा. सू. उ. १९८ ) इति । ई–प्रत्ययः । अस्य यजुषः त्रयीविद्यात्वमुपपादयितुमाह–ऋचेति । अस्मिन् यजुषि तावत् 'ऋचा स्तोमं समर्द्धय' । " गायत्रेण रथन्तरं बृहद् गायत्रवर्त्तनि स्वाहा "–इति पठ्यते । तत्र ऋचेतिपदेन ऋग्वेदोऽभिधीयते, स्तोमगायत्ररथन्तरबृहदादिभिः सामान्युच्यन्ते, स्वाहेतिपदेन यजुर्वेदः । अत एवैष मन्त्रो वेदत्रयात्मकत्वात् 'त्रयी विद्या' । अत्र त्रय्याः कः प्रसङ्ग–इत्यत आह–यथैवादोऽमुत्रेति । 'अदः' स्थितिक्रियाविशेषणम्, 'अमुत्र'–इति विप्रकृष्टवचनः । यथा प्रागध्यायादौ सर्वसृष्टेः पुरा त्रयी विद्या उत्पन्ना, एवमेतद्यजुरपि–" स श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याम् "–( श. प. ६ । १ । १ । ८ ) इति । पूर्वं योऽग्निः सृष्टः, अथ यो गर्भेऽन्तरासीत्, 'सोऽग्निरसृजत' इति । 'सः' सृष्टोऽग्निरेव, इदानीं चीयमानोऽग्निरित्यर्थः ॥ २० ॥

उक्तानष्टौ मन्त्रान् सम्भूय प्रशंसितुमनुवदति–तान्येतान्यष्टौ सावित्राणीति । गायत्र्या अष्टौ अक्षराणि, अग्नेरपि अष्टनामत्वात् अग्नेर्गायत्रत्वं प्रागुक्तम् । ( श. प. ६ । १ । ३ । १९ ) अतोऽग्नेर्यावन्तोऽवयवाः, तैः तावन्तमेवाग्निम् एतया आहुत्या सिक्तवान् भवतीत्यर्थः ॥

(त्ये) एतस्यामाहुत्यांꣳ हुतायाम् । (म) अग्निर्देवेभ्य ऽउदक्रामत्ते देवाऽ अब्रुवन्पशुर्वाऽअग्निः पशुभिरिममन्विच्छाम स स्वाय रूपायाविर्भविष्यतीति तं पशुभिरन्वैच्छन्त्स स्वाय रूपायाविरभवत्तस्माद्ध हैतत्पशुः स्वाय रूपायाविर्भवति गौर्वा गवेऽश्वो वाऽश्वाय पुरुषो वा पुरुषाय ॥२२॥

तेऽब्रुवन् । (न्य) यद्यह सर्वैरन्वेषिष्यामो यातयामाऽअनुपजीवनीया भविष्यन्ति यद्युऽअसर्वैरसर्वमनुवेत्स्यामऽ इति तऽएतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यन्रासभं गोश्चावेश्च तद्यदेतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यंस्तस्मादेष ऽएकः सन्द्विरेताः ॥ २३ ॥

---

एतस्यामाहुत्यां हुतायामग्निर्देवेभ्य उदक्रामत् । ते देवा अब्रुवन्—पशुर्वाऽअग्निः, पशुभिरिममन्विच्छाम, स स्वाय रूपायाविर्भविष्यतीति । तं पशुभिरन्वैच्छन् स स्वाय रूपायाविरभवत् । तस्माद्ध हैतत्पशुः स्वाय रूपायाविर्भवति । गौर्वा गवेऽश्वो वाऽश्वाय । पुरुषो वा पुरुषाय ॥ २२ ॥

तेऽब्रुवन्—यद्यह सर्वैरन्वेषिष्यामो—यातयामा अनुपजीवनीया भविष्यन्ति । यद्युअसर्वैरसर्वमनुवेत्स्याम इति । तऽएतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यन्—रासभं—गोश्चावेश्च । तद्यदेतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यन्—तस्मादेष एकः सन्द्विरेताः ॥ २३ ॥

---

अष्टममन्त्रान्ते यः स्वाहा—शब्दः पठितः, तेन नवमेन सह सङ्ख्यां दिक्प्राणात्मना प्रशंसति—तानि नव भवन्ति, स्वाहाकारो नवम इति ॥

स्वाहा-शब्दप्रयोगानन्तरमग्नावाज्याहुतिर्हूयते, तया सह पूर्वसङ्ख्यां विराट्प्राणात्मकाग्न्यात्मना स्तौति—तानि दश भवन्ति आहुतिर्दशमीति । अष्टौ मन्त्राः, स्वाहाकारो नवमः, स्वाहाकारान्ते हूयमाना 'आहुतिः' 'दशमी' दशसंङ्ख्यापूरणीति ॥ २१ ॥

अत्र पूर्वं यत्र पुरुषादीनां "चतुर्णां पशूनां कायप्रासनम्, तस्मात् प्रदेशात् उखाषाढेष्टकाकरणार्थं मृत् आनेतव्या; "चतुर्णामप्सु कायप्रासनम्, ततो मृदिष्टकार्थापश्च"—( का. श्रौ. सू. १६ । १९–२० ) इति ह्याम्नातम् । तत्र नेतव्यान् पशून् विधातुमाख्यायिकामाह—एतस्यामाहुत्यां हुतायामिति । पूर्वमग्निर्देवसकाशादुत्क्रान्तः, 'ते देवाः' परस्परम् 'अब्रुवन्,' 'पशुः अग्निः' अतः 'पशुभिः' 'इमं' पशुरूपमग्निम् 'अन्विच्छाम' अन्विष्यामः । 'सः' अग्निः पशुः 'स्वाय' स्वजातीयपशुरूपाय, तं दृष्ट्वा 'आविः' प्रत्यक्षो भविष्यतीति विचार्य, पशुभिरन्विष्टवन्तः । सोऽप्यग्निः प्रत्यक्षोऽभवत् । तस्माल्लोके पशुः सजातीयरूपं दृष्ट्वा प्रत्यक्षो भवतीत्यर्थं लोकप्रसिद्ध्योपपादयति—गौर्वा गवे, अश्वो वाऽश्वाय, पुरुषो वा पुरुषायेति ॥ २२

तेऽब्रुवन् यद्यह सर्वैरन्वेषिष्याम इति । 'यदि' 'सर्वैः' पुरुषादिपञ्चपशुभिः पशुरूपमग्निमन्वेष्टुमिच्छामः; तर्हि ते पशवः 'यातयामाः' गतसाराः, अतः 'अनुपजीवनीयाः' च भवन्ति; 'यदि' 'असर्वैः' पशुभिः;

(ऽ) अनद्धापुरुषं पुरुषात् । (दे) एषु ह वाऽअनद्धापुरुषो यो नु देवानुवति नु पितॄन्नु मनुष्याँस्तत्सर्वैरह पशुभिरन्वैच्छन्नो यातयामाऽ अनुपजीवनीया ऽअभवन् ॥ २४ ॥

(वंत्रि) त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्विच्छति ते पुञ्च सम्पदा भवन्ति पुञ्चचितिकोऽग्निः पुञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २५ ॥

---

अनद्धापुरुषं पुरुषात् । एष ह वाऽअनद्धा पुरुषो—यो न देवानवति, न पितॄन्, न मनुष्यान् । तत् सर्वैरह पशुभिरन्वैच्छन् । नो यातयामा अनुपजीवनीया अभवन् ॥ २४ ॥

त्रिभिरन्विच्छति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतदन्विच्छति । ते पञ्च सम्पदा भवन्ति । पञ्चचितिकोऽग्निः । पञ्चऽर्तवः सम्वत्सरः । सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २५ ॥

---

तर्हि 'असर्वम्' असम्पूर्णमग्निमेव 'अनुवेत्स्यामः' लाभार्थस्य विदे रूपम् (धा. पा. तु. उ. १९१) । 'इति' देवाः विचार्य 'द्वाभ्यां' प्रतिनिध्यर्थे कर्मप्रवचनीयः, "प्रतिः प्रतिनिधिप्रतिदानयोः" (पा. सू. १।४।९२) । 'तस्मात्' इति, 'पशुभ्याम्'—इति च पञ्चमी । गवाविपशुद्वयप्रतिनिधित्वेन एकं रासभं' प्रत्यपश्यन्, अतः 'एषः' द्वयोः प्रतिनिधिः, 'तस्मात् रासभः स्वरूपेण 'एकः' अपि 'द्विरेताः' विलक्षणपशुद्वयजनकः । रासमादश्वतरस्य गर्दभस्य चोत्पत्तिर्दृश्यते । अतः अश्वाजौ, गवाविप्रतिनिधित्वेन रासभ इति त्रयः पशव इत्युक्तं भवति ॥ २३ ॥

उत्तरत्र अनद्धापुरुषमीक्षतेऽग्निम्पुरीष्यमिति वक्ष्यति; (श. प. ६।३।३।४) अत्रानद्धापुरुषस्य कः प्रसङ्ग इति, तं दर्शयति—अनद्धापुरुषं पुरुषादिति । पुरुषपशोः प्रतिनिधिमनद्धापुरुषमपश्यत् । अनद्धापुरुषस्य लक्षणमाह—एष ह वा अनद्धापुरुषो यो न देवानवति न पितॄन् न मनुष्यानिति' । अवति ' प्रीणयति, देवपितृमनुष्याणामनर्थक इत्यर्थः । अतः पुरुषपशोः प्रतिनिधिरनद्धापुरुषः, गवाविप्रतिनिधित्वेन रासभः, पूर्वावेवाश्वाजौ । एवं 'सर्वैः पशुभिः' पशुरूपमग्निमन्विष्टवन्त इति । सर्वैरन्वेषणे असर्वाग्निलाभदोषो नास्तीत्याह—नो यातयामा इति । अपूर्वैरेव सर्वैरन्वेषणे यातयामत्वादिदोषो नास्तीत्यर्थः ॥२४॥

उत्तरत्रानद्धापुरुषस्य तत्कर्मकेक्षणे विनियोगस्य वक्ष्यमाणत्वात् तदितरैरश्वगर्दभाजैस्त्रिभिरग्नेरन्वेषणं दर्शयति—त्रिभिरन्विच्छतीति । पशुगतत्रित्वसङ्ख्यां प्रशंसति—त्रिवृदग्निरिति । अग्नेस्त्रिवृत्त्वं प्रागुक्तम्— "अष्टौ (रुद्रादीनि) अग्निरूपाणि, कुमारो नवम इति; सैवाग्नेस्त्रिवृत्ता" (श. प. ६।१।३।१८) इति । अत्र पशुत्रित्वसङ्ख्याया विद्यमानत्वात् तावन्तं तावत्परिमाणमग्निम्, तावत्सङ्ख्याकैरश्वावयवैरेवान्विष्टवान् भवतीत्युक्तं अत्रानद्धापुरुषाश्वरासभाजा एव चत्वारः पशवः कथं तैरन्वेषणे सर्वैरन्वेषणं कृतमित्याशङ्क्य, तेषां

---

१-अनद्धापुरुषमीक्षते देवपितृमनुष्यानर्थकमग्निं पुरीष्यमिति । का० श्रौ० सू० १६ । ५६ ।

ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति । (न्त्य) अग्निर्देवेभ्य ऽउदक्रामत्स मुञ्जं प्राविशत्तस्मात्स सुषिरस्तस्माद्वेवान्तरतो धूमरक्तऽ इव सैषा योनिरग्नेर्यन्मुञ्जोऽग्निरिमे पशवो न वै योनिर्गर्भꣳ हिनस्त्यहिꣳसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाताऽइति ॥ २६ ॥

त्रिवृतो भवन्ति । त्रिवृद्ध्यग्निरश्वाभिधानीकृता भवन्ति सर्वतो वाऽअश्वाभिधानी मुखं परिशेते सर्वतो योनिर्गर्भं परिशेते योनिरूपमेतत्क्रियते ॥ २७ ॥

---

ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति । अग्निर्देवेभ्य उदक्रामत् । स मुञ्जं प्राविशत् । तस्मात्स सुषिरः । तस्माद्वेवान्तरतो धूमरक्त इव । सैषा योनिरग्नेः—यन्मुञ्जः । अग्निरिमे पशवः । न वै योनिर्गर्भं हिनस्ति—अहिंसायै । योनेर्वै जायमानो जायते । योनेर्जायमानो जायाताऽइति॥२६॥

त्रिवृतो भवन्ति । त्रिवृद्ध्यग्निः । अश्वाभिधानीकृता भवन्ति । सर्वतो वाऽअश्वाभिधानी मुखं परिशेते । सर्वतो योनिर्गर्भं परिशेते । योनिरूपमेतत्—क्रियते ॥ २७ ॥

---

चतुर्णा मेव पञ्चसम्पत्तिमाह—ते पञ्चसम्पदा भवन्तीति रासभाः खलु गवाविप्रतिनिधिरिति । तौ गवावी द्वौ, पुरुषादयस्त्रय इति पञ्चसम्पत्त्या पञ्च भवन्तीत्यर्थः । तामेव पञ्चसंख्यामग्न्यात्मना स्तौति—पञ्चचितिकोऽग्निरिति ॥ २९ ॥

तेषां त्रयाणां पशूनां मौञ्जीबन्धनं विधत्ते—ते मौञ्जीभिरभिधानीभिरिति । मुञ्जो नाम ससुषिरस्तृणविशेषः, तेन निर्मिताभिरभिधानीभी रशनाभिरभिहिता बद्धा भवन्ति । अभिपूर्वो दधातिर्बन्धने वर्त्तते । अभिधीयन्ते बध्यन्ते आभिरिति अभिधान्यो रशनाः । करणे ल्युट् प्रत्ययः । ( पा. सू. ३ । ३ । ११७ ) मुञ्जेनैव रशनाकरणमाख्यायिकामुखेनाह—अग्निर्देवेभ्य इति । 'तस्मात्' अन्तरग्निप्रवेशात् 'सः' मुञ्जः 'सुषिरः' अन्तश्छिद्रवान् । लक्षणान्तरमाह—तस्माद्वेवेति । 'उ,' 'एव' इति पदद्वयम् । 'तस्मात्' अग्निप्रवेशादेव कारणात् स मुञ्जः 'अन्तरतः' मध्ये 'धूमरक्तः' धूमेन युक्तो रक्तवर्ण इव दृश्यते । अत एव 'मुञ्जः अग्नेः योनिः,' अग्निरिमे पशवः' पशवश्चाग्निरिति प्रागुक्तम् । तस्मात् पशुरूपस्य गर्भभूतस्याग्नेरहिंसायै अन्तरग्निरूपमुञ्जवेष्टनं युक्तम् । यथा लोके 'योनिर्गर्भं न हिनस्ति,' 'योनेः' खलु सर्वः 'जायमानः' जनः 'जायते', एवमग्निश्च 'योनेः' 'जायातै इति' पशूनां मुञ्जरशनाभिधानम् । 'जायातै'—इति, "जनी प्रादुर्भावे" ( धा. पा. दि. आ. ४३ ) । पञ्चमे लकारे, "लेटोऽडाटौ"—( पा. सू. ३ ।४।९४ ) इति । तिप् प्रत्ययस्याडागमः; "वैतोऽन्यत्र"—( पा. सू. ३ । ४ । ९६ ) इति प्रत्ययस्यैकारस्य ऐकारादेशश्च ॥ २६ ॥

रशनात्रिवृत्त्वं विधत्ते—त्रिवृतो भवन्तीति । त्रिगुणिता इत्यर्थः । अश्वाभिधानीकृता इति । अश्वाभिधानीवत् कृताः यथाश्वाभिधानी कच्छिकामुखं सर्वतो वेष्टयति, एवमेतास्तिस्रः कार्या इत्यर्थः । अत्र कात्या-

ते प्राञ्चस्तिष्ठन्ति । ( न्त्यु ) अश्वः प्रथमोऽथ रासभोऽथाजऽ एवुँ ह्येतेऽनुपूर्व्वं यद्वै तदश्रु संक्षरितमासीदेष सोऽश्वोऽथ यत्तदरसदिवैष रासभोऽथ यः स कपाले रसो लिप्तऽ आसीदेष सोऽजोऽथ यत्तत्कपालमासीदेषा सा मृद्यामेतदाहरिष्यन्तो भवन्त्येतेभ्यो वाऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्यऽ एवैनमेतज्जनयति ॥ २८ ॥

ते दक्षिणतस्तिष्ठन्ति । ( न्त्ये ) एतद्वै देवा ऽअबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षाᳬंसि नाष्ट्रा न हन्युरिति तऽएतं वज्रमपश्यन्नमुमेवादित्यमसौ वाऽआदित्यऽ एषोऽश्वस्तऽएतेन वज्रेण दक्षिणतो रक्षाᳬंसि

---

ते प्राञ्चस्तिष्ठन्ति । अश्वः प्रथमः। अथ रासभः। अज एवं ह्येतेऽनुपूर्वम् । यद्वै तदश्रु संक्षरितमासीद्–एष सोऽश्वः । अथ यत्तदरसदिव–एष रासभः । अथ यः स कपाले रसो लिप्त आसीद्–एष सोऽजः । अथ यत् तत्कपालमासीद्–एषा सा मृत्–यामेतदाहरिष्यन्तो भवन्ति । एतेभ्यो वाऽएष रूपेभ्योऽग्रेऽसृज्यत । तेभ्य एवैनमेतज्जनयति ॥ २८ ॥

ते दक्षिणतस्तिष्ठन्ति । एतद्वै देवा अबिभयुः–यद्वै नो यज्ञं दक्षिणतो रक्षांसि नाष्ट्रा न हन्यु-

---

यनः–" आहवनीयं दक्षिणेन त्रिवृन्मुञ्जपश्वाङ्गीबद्धास्तिष्ठन्ति प्राञ्चोऽश्वगर्दभाजाः पूर्वापरा रासभो मध्येऽश्वपूर्वाः "–( का. श्रौ. सू. १६ । ४७ ) इति । अस्यार्थः–दक्षिणाशब्दाद् " एनबन्यतरस्यामदूरेऽपञ्चम्याः "–( पा. सू. ५ । ३ । ३५ ) इति एनप्–प्रत्ययः । " एनपा द्वितीया "–( पा. सू. २ । ३ । ३१ ) इति ' दक्षिणेन ' शब्दप्रयोगे आहवनीयस्य द्वितीया विभक्तिः । आहवनीयस्य दक्षिणप्रदेशे त्रिवृन्मुञ्जरशनाबद्धाः अश्वगर्दभाजाः पशवः अश्वपूर्वाः पद्भ्यां पूर्वापराः सन्तः प्राञ्चः प्राङ्मुखाः तिष्ठन्तीति ॥ २७ ॥

तदिदं विधत्ते–ते प्राञ्चस्तिष्ठन्तीत्यादिना । अश्वादीनां यदानुपूर्व्यम्, ' अश्वः प्रथमः ' मध्ये ' रासभः, ' अन्ते ' अजः ' इति । पूर्वोक्तं सृष्टिक्रमं प्रमाणयति–यद्वै तदश्रु संक्षरितमासीदित्यादिना । एवं हि तत्र प्रथमाध्याये समाम्नातम्–" अथ यदश्रु संक्षरितमासीत्, सोऽश्रुरभवत्; अश्रुर्ह वै तमश्व इत्याचक्षते परोऽक्षम्, परोऽक्षकामा हि देवाः । अथ यदरसदिव, स रासभोऽभवत् । अथ यः कपाले रसो लिप्त आसीत्, सोऽजोऽभवत् । अथ यत् कपालमासीत्, सा पृथिव्यभवत्–( श.प. ६ । १ । १ । ११ ) इति । तत्र यत् कपालमासीत्, सा पृथिवी मृच्छब्देनोक्ता ' एतत् ' इदानीम् ' यां ' मृत्तिकाम् ' आहरिष्यन्तो भवन्ति ' इति । अध्वर्यवो मृत्तिकाहरणेन किं करिष्यन्तीति, तत्राह–एतेभ्यो वा एष रूपेभ्य इति । ' रूपेभ्यः ' अश्वगर्दभाजेभ्यः ' अग्रे ' पुरा ' एषः ' अग्निः ' असृज्यत, ' ' एतत् ' इदानीमपि ' तेभ्यः ' पुरा ' एनम् ' अग्निं ' जनयति ' मृत्तिकाहरणेन तमग्रे सृष्टमेवाग्निं जनितवन्तो भवन्तीत्यृत्विज इत्यर्थः । अश्वादिभ्यः पूर्वमग्निसृष्टिरेवमाम्नायते–" अथ यो गर्भोऽन्तरासीत्, सोऽग्निरसृज्यत । स यदस्य सर्वस्याग्रमसृज्यत, तस्मादग्रिर्ह वै तमग्निरित्याचक्षते परोऽक्षम् "–( श. प. ६ । १ । १ । ११ ) इति ॥ २८ ॥

तेषां पशूनामाहवनीयस्य दक्षिणतोऽवस्थानं विधत्ते–ते दक्षिणतस्तिष्ठन्तीति । दक्षिणदेशेऽवस्थानं प्रशं-

नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञमातन्वत तथैवैतद्यजमानऽएतेनऽ व्वज्रेण दक्षिणतो रक्षाᳬसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञं तनुते ॥ २९ ॥

दक्षिणत ऽआहवनीयो भवति । ( त्यु ) उत्तरत ऽएषाऽभ्रिरुपशेते वृषा वाऽआहवनीयो योषाऽभ्रिर्दक्षिणतो वै वृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि वृषा योषामुपशेते ॥ ३० ॥

---

रीति । तऽएतं वज्रमपश्यन्–अमुमेवादित्यम् । असौ वाऽआदित्य एषोऽश्वः । तऽएतेन वज्रेण दाक्षिणतो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रऽएतं यज्ञमतन्वत । तथैवैतद्यजमान एतेन वज्रेण दक्षिणतो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रऽएतं यज्ञं तनुते ॥ २९ ॥

दक्षिणत आहवनीयो भवति । उत्तरत एषाऽभ्रिरुपशेते । वृषा वाऽआहवनीयो योषाऽभ्रिः। दक्षिणतो वै वृषा योषामुपशेतेऽरत्निमात्रे । अरत्निमात्राद्धि वृषा योषामुपशेते ॥ ३० ॥

---

सितुमाह–एतद्वै देवा अबिभयुरिति । ' एतद् ' सप्तम्या लुक् ( पा. सू. ७ । १ । ३९ । ) एतस्मिन्नवकाशे ' देवाः ' भीतवन्तः । ' यत् ' यस्मात् ' नः ' अस्मदीयं ' दक्षिणतः ' प्रदेशे ' नाष्ट्रा ' नाशकानि ' रक्षांसि ' न–हन्युः ' न बाधेरन् ' इति ' । अथवा ' यत् ' यथा ' न हन्युरिति ' हननाभावोपायं देवाः चिन्तितवन्त इत्यर्थः । ' ते एते ' देवाः 'यज्ञ' वज्ररूपम् ' अमुमादित्यम् अपश्यन् । अत्रादित्यस्य कः प्रसङ्ग इत्यत आह–असौ वा आदित्य एषोऽश्व इति । योऽयमश्वोऽत्र त्रिवृन्मुञ्जरशनाबद्धः, स हि आदित्यः । तथा च तैत्तिरीयकम्–" अमुमादित्यमश्वं श्वेतं भूतं दक्षिणामनयन् " इति । ततस्तेन वज्ररूपादित्यात्मना अश्वेन सर्वाणि यज्ञविघातीनि रक्षांसि अपहत्य भयरहिते नाशकरहिते स्थाने ' एतम् ' अग्न्याख्यं यज्ञ कृतवन्तः पूर्वं देवाः । तथैव ' एतत् ' इदानीं यजमानः ' दक्षिणतः ' स्थितेन अश्वेन ' यज्ञं ' निर्बाधमनुतिष्ठतीति । अत्र कात्यायनः–" उत्तरतः आहवनीयस्यारत्निमात्र उभयतस्तीक्ष्णा वैणवी सुषिराऽभ्रिः कल्माष्यभावेऽकल्माषी प्रादेशमात्र्यरत्निमात्री वा "–( का. श्रौ. सू. १६ । ४८ ) इति पूर्वोक्ताहवनीयस्य अरत्निमात्रे उत्तरतः प्रादेशमात्री अरत्निमात्री वा उभयतः पार्श्वयोस्तीक्ष्णाग्रा कल्माषलक्षणवेणुनिर्मिता अन्तःसुषिरा अभ्रिः खननसाधनस्थानीयकल्माषलक्षितत्वासम्भवे ' अकल्माषी ' कल्माषलक्षणरहिता सुषिरा कार्येति तस्यार्थः ॥ २९ ॥

तदिदं सार्थवादं विधत्ते–दक्षिणत आहवनीयो भवतीत्यादिना " तामादत्ते–" इत्यतः प्राक्तनेन वाक्यसन्दर्भेण–' एषा ' वक्ष्यमाणाऽभ्रिः ( अस्मिन्नेव ब्राह्मणेऽग्रे ३८ कण्डिकायाम् ) ' अभ्रिः ' 'उपशेते' तिष्ठते । आहवनीयाभ्र्योः पुंस्त्रीलिङ्गसाम्यात् स्त्रीपुंसात्मना प्रशंसति–वृषा वा आहवनीय इति । ' वृषा ' पुरुषः, ' योषां ' स्त्रियम्, ' दक्षिणतः ' स्त्रियाः दक्षिणप्रदेशे ' उपशेते ' आहवनीयाभ्र्योर्मध्यप्रदेशस्य व्यवधानस्वरूपतामाह–अरत्निमात्र इति । एतदपि स्त्रीपुंसयोर्योजयति–अरत्निमात्रादिति । स्त्रीपुंसयोर्मध्ये श्वासादिसञ्चाराय, सम्बाधपरिहाराय च अरत्निमात्रोऽवकाशो युक्त इत्यर्थः ॥ ३० ॥

सा वैणवी स्यात् । ( द ) अग्निर्देवेभ्यऽउदक्रामत्स वेणुं प्राविशत्त-स्मात्स सुषिरः स ऽएतानि वर्माण्यभितोऽकुरुत पर्वाण्यननुप्रज्ञानाय यत्र यत्र निर्ददाह तानि कल्माषाण्यभवन् ॥ ३१ ॥

( न्त्सा ) सा कल्माषी स्यात् । ( त्सा ) सा ह्याग्नेयी यदि कल्माषीं न विन्देदप्यकल्माषी स्यात्सुषिरा तु स्यात्सैवाग्नेयी सैषा योनिरग्नेर्यद्वेणुरग्नि-रियं मृन्न वै योनिर्गर्भꣳ हिनस्त्यहिꣳसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाताऽइति ॥ ३२ ॥

प्रादेशमात्री स्यात् । ( त्प्रा ) प्रादेशमात्रꣳ हीदमभि वाग्वदत्यरत्नि-मात्री त्वेव भवति बाहुर्वाऽअरत्निर्बाहुना वै वीर्यं क्रियते वीर्य-संमितैव तद्भवति ॥ ३३ ॥

---

सा वैणवी स्यात् । अग्निर्देवेभ्य उदक्रामत् । स वेणुं प्राविशत् । तस्मात्स सुषिरः । स एतानि वर्माण्यभितोऽकुरुत–पर्वाणि–अननुप्रज्ञानाय । यत्र–यत्र निर्ददाह–तानि कल्माषाण्यभवन् ॥३१॥

सा कल्माषी स्यात् । सा ह्याग्नेयी । यदि कल्माषीं न विन्देद्–अप्यकल्माषी स्यात् । सुषिरा तु स्यात् । सैवाग्नेयी । सैषा योनिरग्नेः–यद्वेणुः । अग्निरियं मृत् । न वै योनिर्गर्भं हिनस्ति–अहिंसायै । योनेर्वै जायमानो जायते । योनेर्जायमानो जायाताऽइति ॥ ३२ ॥

प्रादेशमात्री स्यात् । प्रादेशमात्रं हीदमभि वाग्वदति । अरत्निमात्री त्वेव भवति । बाहुर्वाऽअ-रत्निः । बाहुना वै वीर्यं क्रियते वीर्यसम्मितैव तद्भवति ॥ ३३ ॥

---

सा वैणवीति । वेणुनैव कार्येति । अत्रेतिहासमाह–अग्निर्देवेभ्य इति । यतो वेणुं प्रविष्टवान् अतः 'सुषिरः' अन्तःसुषिरः प्रविष्टः 'सः' अग्निः 'अननुप्रज्ञानाय' यथाऽन्ये मां न जानीयुः, तथा स्वाच्छाद-नाय यानि 'वर्माणि' पार्श्वयोरकरोत्, तानि 'पर्वाणि' सन्धयः वेणोः प्रवेशकाले 'यत्र-यत्र' प्रदेशे अग्निः 'ददाह' 'तानि' कल्माषाणि' कृष्णबिन्दुचिह्नानि 'अभवन्' ॥ ३१ ॥

सा कल्माषीत्यादि । अतः 'सा' अग्निः कल्माषी' कल्माषकलितवेणुमयी कर्त्तव्या । अतः कल्माषो वेणुराग्नेयः । यदि कल्माषीति । कल्माषासम्भवे अन्यरूपो वेणुः कार्य इत्यर्थत उक्तः । तत्र कल्माषाकल्मा-षयोः सुषिरत्वं तु सर्वथा सम्पाद्यमित्याह–सुषिरा तु स्यादिति । यस्मात् सुषिरो वेणुरग्नेर्योनिः "सैषा योनिरग्नेर्यद् वेणुः"–इति वेणोरग्निरूपत्वं प्रागुक्तम्, अतोऽग्निरूपमृत्तिकाखनने अग्नियोनिरूपाभ्रिकरणम् स्याद् 'योनेः' सकाशादेव अग्निः 'जायातै इति' एवमर्थमित्यर्थः ॥ ३२ ॥

अग्नेः प्रादेशप्रमाणत्वमरत्निप्रमाणत्वं च कल्पितम्, तत्रारत्निमात्रत्वमभिमतमिति दर्शयितुं प्रादेशमात्रपक्ष-मनुवदति–प्रादेशमात्रीति । 'हि' यस्मात् इदानीं वागिन्द्रियं प्रादेशप्रमाणमभिलक्ष्यते; प्रथमं ताल्वोष्ठपुट-

( त्य ) अन्यतः क्ष्णुत्स्यात् । ( द ) अन्यतरतो हीदं व्वाचः क्ष्णुतमुभयतः क्ष्णुत्त्वेवु भवत्युभयतो हीदं व्वाचः क्ष्णुतं युदेनया दैवं च व्वदति मानुषं चाथो युत्सत्यं चानृतं च तुस्मादुभयतः क्ष्णुत् ॥ ३४ ॥

( द्यु ) युद्वेवोभयतः क्ष्णुत् । ( द्व ) अतो वाऽअग्नेर्व्वीर्यं युतोऽस्यै क्ष्णुतमुभयत ऽएवास्यामेतद्वीर्यं दधाति ॥ ३५ ॥

युद्वेवोभयतः क्ष्णुत् । ( दे ) एतद्वाऽएनं देवा ऽअनुविद्यैभ्यो लोकेभ्योऽखनंस्तुथैवैनमयमेतदनुविद्यैभ्यो लोकेभ्यः खनति ॥ ३६ ॥

---

अन्यतः क्ष्णुत्त्वेव भवति । अन्यतरतो हीदं वाचः क्ष्णुतम्—उभयतः क्ष्णुत्त्वेव भवति । उभयतो हीदं वाचः क्ष्णुतम्—यदेनया दैवं च वदति, मानुषं च । अथो यत् सत्यश्चानृतं च—तस्मादुभयतः क्ष्णुत् ॥ ३४ ॥

यद्वेवोभयतः क्ष्णुत् । अतो वाऽअग्नेर्वीर्यम् । यतोऽस्यै क्ष्णुतम्—उभयत एवास्यामेतद्वीर्यं दधाति ॥ ३५ ॥

यद्वेवोभयतः क्ष्णुत् । एतद्वाऽएनं देवा अनुविद्यैभ्यो लोकेभ्योऽखनन् । तथैवैनमयमेतदनुविद्यैभ्यो लोकेभ्यः खनति ॥ ३६ ॥

---

व्यापारेण प्रादेशपर्यन्तं वाचमुच्चार्य ततो देशसंयोगविभागाभ्यां परश्रोत्रं गृह्णाति । अथवा, वाक्पदेन जिह्वोच्यते; सा हि प्रादेशमात्री सती वाग् वदति । यद्वा, वाक्पदेन प्राणवायुर्लक्ष्यते; स हि नासापुटान्निस्सरन् प्रादेशपर्यन्तं गच्छतीत्यागमसिद्धम् । स्वाभिमतं पक्षमाह—अरत्निमात्री त्वेवेति । 'तु'—शब्दः पूर्वपक्षव्यावृत्त्यर्थः । बाह्वेकदेशत्वादरत्नेः समुदायभूतो बाहुरेकदेशेनापि व्यवह्रियते, तत्प्रमाणकरणे अभ्रिरपि बाहुकृतवीर्यसम्मितैव भवति । अन्यत्र अभ्रेरेकतस्तीक्ष्णत्वमुभयतस्तीक्ष्णत्वञ्चोक्तम् । यदाहापस्तम्बः—" उभयतः क्ष्णूमन्यतरतः क्ष्णूं वा "—( आ. श्रौ. सू. १६ । १ । ७ ) इति ॥ ३३ ॥

तत्र अग्रमूलयोरुभयत्र तीक्ष्णत्वं सिद्धान्तयितुं पूर्वपक्षमनुवदति—अन्यतः क्ष्णुत् स्यादिति । " क्ष्णु, तेजने " ( धा.पा.अ.प.२७ ) । तेजनं नाम निशितत्वम् । अन्यतरतो हीदं वाच इति । वाचो निशितत्वमन्यतरतो वचनापेक्षया । वाक्पदेन जिह्वोच्यते, तस्यास्तु एकत एव तैक्ष्ण्यम्; अग्राद्धि वचनव्यापार इति । उभयतः क्ष्णुत्त्वेवेति । 'तु' शब्दः पूर्वपक्षनिवृत्त्यर्थः । निशितपार्श्वद्वया कार्येत्यर्थः । 'यद्' यस्मात् 'एनया' वाचा जिह्वया 'दैवं' देवसम्बन्धि वाक्यं संस्कृतम् 'मानुषं च' मनुष्यसम्बन्धिभाषामयञ्च वाक्यं 'वदति, अथवा एकयैव वाचा 'सत्यम्' 'अनृतं' मिथ्या च वदति, अत उभयतः क्ष्णुत्त्वम् ॥ ३४ ॥

उभयतः क्ष्णुत्त्वं प्रकारान्तरेण स्तोतुमनुवदति—यद्वेवोभयतः क्ष्णुदिति । 'अस्यै' षष्ठ्यर्थे चतुर्थी । ( पा. सू. २ । ३ । ६२ वा. ) 'यतः' यस्मिन् प्रदेशे 'क्ष्णुत्त्वं' निशितत्वम्, तस्मादेव प्रदेशात् 'अग्नेः वीर्यम्', 'अतः' उभयतस्तैक्ष्ण्यकरणेन वीर्यमेव निहितवान् भवति ॥ ३५ ॥

यद्वेवोभयत इति । 'एतद्' एतया अभ्र्या निशिताग्रया 'एनम्' मृद्रूपमग्निम् 'अनुविद्य' ज्ञात्वा

स यदिति खनति । तदेनमस्माल्लोकात्खनत्यथ यदूर्ध्वोञ्चरति तदमुष्माल्लोकादथ यदन्तरेण संचरति तदन्तरिक्षलोकात्सर्वेभ्य ऽएवैनमेतदेभ्यो लोकेभ्यः खनति ॥ ३७ ॥

तामादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे गायत्रेण च्छन्दसाऽङ्गिरस्वदिति सवितृप्रसूत ऽएवैनामेतदेताभिर्देवताभिरादत्ते गायत्रेण च्छन्दसाऽथोऽअस्यां गायत्रं छन्दो दधाति पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरेति पशवो वै पुरीषं पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभरेत्येतत्त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वदिति तदेनां त्रैष्टुभेन च्छन्दसाऽऽदत्तेऽथोऽअस्यां त्रैष्टुभं छन्दो दधाति ॥ ३८ ॥

---

स यदिति खनति–तदेनमस्माल्लोकात्खनति । अथ यदूर्ध्वोञ्चरति । तदमुष्माल्लोकात् । अथ यदन्तरेण सञ्चरति । तदन्तरिक्षलोकात् । सर्वेभ्य एवैनमेतदेभ्यो लोकेभ्यः खनति ॥ ३७ ॥

तामादत्ते–" देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । गायत्रेण च्छन्दसाऽङ्गिरस्वत् "–इति । सवितृप्रसूत एवैनामेतदेताभिर्दैवताभिरादत्ते । गायत्रेण च्छन्दसा । अथोऽअस्यां गायत्रं छन्दो दधाति । " पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर " इति । पशवो वै पुरीषम् । पृथिव्या उपस्थादग्निं पशव्यमग्निवदाभरेत्येतत् । " त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वत् "–( वा. सं. ११ । ९ ) इति । तदेनां त्रैष्टुभेन छन्दसाऽऽदत्ते । अथोऽअस्यां त्रैष्टुभं छन्दो दधाति ॥ ३८ ॥

---

' एभ्यो लोकेभ्यः ' सकाशात् ' अखनन् ' अवदारितवन्तः । ' तथैव ' 'अयं' यष्टा ' एतया ' अभ्र्या लोकत्रयसकाशात् ' खनति ' मृदात्मकमग्निमित्यर्थः ॥ ३६ ॥

कथं यजमानेनैकया अभ्र्या लोकत्रयादग्नेः खननमित्याशङ्क्य तदुपपादयति–स यदिति खनतीति । 'इति' शब्दोऽभिनेयप्रदर्शने, मृदः खननव्यापारमभिनयेन दर्शयतीत्यर्थः । अग्नेः खननव्यापारे तावत् प्रथममवक्षेपणमुत्क्षेपणम् मध्ये संचारक्रिया चेति व्यापारत्रयमस्ति, तस्मादग्नेर्व्यापारत्रयेण पृथिव्यादिलोकत्रयादग्नेः खननमिति तात्पर्यार्थः ॥ ३७ ॥

अग्नेरादानं विधत्ते–तामादत्त इति । उत्तरत्र " त्रिभिरादत्ते "–इति आदाने त्रित्वसङ्ख्याविशिष्टानां मन्त्राणां विधानम्, अग्निं त्रिभिर्मन्त्रैराददीतेत्यर्थः । तत्र प्रथममन्त्रं विधत्ते–देवस्य त्वा सवितुरिति[1] । मन्त्रस्यायमर्थः–देवेन सवित्रा अनुज्ञात एवाहमध्वर्युः ' अश्विनोः बाहुभ्यां ', ' पूष्णो हस्ताभ्याम् ', ' अङ्गिरस्वत् ' अङ्गिराः अग्निः स इव; अङ्गिरःपदात् उत्तरस्य वतुपः भसञ्ज्ञाविधानात् पदसञ्ज्ञानिबन्धनं रुत्वं न भवति, अग्नि-

---

१–देवस्य त्वेत्यभ्रिमादाय । का० श्रौ० सू० १६ । ५१ ।

१४९७

( त्यु ) अभ्रिरसीति । ( त्यु ) अभ्रिर्ह्येषा तदेनꣳ सत्येनादत्ते नार्यसीति वज्रो वाऽअभ्रिर्योषा नारी न वै योषा कंचन हिनस्ति शमयत्येवैनामेत-दहिꣳसायै त्वया वयमग्निꣳ शकेम खनितुꣳ सधस्थऽइतीदं वै सधस्थं त्वया वयमग्निꣳ शकेम खनितुमस्मिन्त्सधस्थऽइत्येतज्जागतेन च्छन्द-साऽङ्गिरस्वदिति तदेनां जागतेन च्छन्दसाऽऽदत्तेऽथोऽअस्यां जागतं च्छन्दो दधाति ॥ ३९ ॥

त्रिभिरादत्ते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतदादत्ते त्रिभिरादायाथैनां चतुर्थेनाभिमन्त्रयतऽएतद्वाऽएनां देवास्त्रिभिरादाया-

---

" अभ्रिरसि "–इति । अभ्रिर्ह्येषा । तदेनं सत्येनादत्ते । " नार्यसि "–इति । वज्रो वा-अभ्रिः । योषा नारी, न वै योषा कंचन हिनस्ति । शमयत्येवैनामेतदहिंसायै । " त्वया वय-मग्निं शकेम खनितुं सधस्थऽआ "–इति । इदं वै सधस्थम् । त्वया वयमग्निं शकेम खनितु-मस्मिन्सधस्थऽइत्येतत् । "जागतेन च्छन्दसाऽङ्गिरस्वत्"–( वा. सं. ११।१० ) इति । तदेनां जागतेन च्छन्दसाऽऽदत्ते । अथोऽअस्यां जागतं छन्दो दधाति ॥ ३९ ॥

त्रिभिरादत्ते । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनामेतदादत्ते । त्रिभिरादायाथैनां

---

वत् । ' गायत्रेण छन्दसा ' अग्निं 'त्वाम् आददे' । मन्त्रस्य तात्पर्यार्थमाह–सवितृप्रसूत एवैनामित्यादि । द्वितीयं विधत्ते–पृथिव्या इति । अग्निः त्वम् ' पृथिव्याः ' ' सधस्थात् ' उपस्थात् सहस्थानात् । पुरीष्य-मिति, पुरीषपदेन पशवोऽभिधीयन्ते; पशुहितम् । " तस्मै हितम् " ( पा. सू. ५ । १ । ५ ) इति यत् प्रत्ययः । अग्निम् ' अङ्गिरस्वत् आभर ' । " हृग्रहोर्भः " ( पा. सू. ८ । २ । ३२ । वा. ) इति हका-रस्य ' भकारः ' । किञ्च, ' त्रैष्टुभेन च्छन्दसा ' अग्निवदाभरेति ॥

मन्त्रं व्याचष्टे–पशवो वै पुरीषमिति ॥ ३८ ॥

तृतीयं विधत्ते–अभ्रिरसीति । ' अभ्रिः ' वज्रः ' असि ' हननसाधनत्वादुभयोः, अभ्रिनामाऽसि । 'नारी' स्त्री च ' असि ' ; स्त्रीत्वारोपस्तस्यात्तत्कर्तृकहिंसोपशमनार्थः । किञ्च, 'त्वया' अभ्र्या ' वयम् ' ' सधस्थे ' पृथिव्याम्, अस्मिन् सहस्थाने ' अग्निम् ' मृद्रूपं ' खनितुं ' ' शकेम ' शक्ता भूयास्म ' जागतेन च्छन्दसा अङ्गिरस्वत् ' अग्निवत् शक्ता भूयास्मेति " शक्लृ शक्तौ " ( धा. पा. स्वा. प. १६ ) आशीर्लिङि रूपम् ॥

मन्त्रं व्याचष्टे–अभ्रिर्ह्येषेति । अभ्रिरसीत्यनेन 'सत्येन' सह खनकः ' एनां ' गृहीतवान् भवति । नार्य-सीति । अस्य तात्पर्यमाह–वज्रो वा अभ्रिरिति । यथा योषा स्त्री न कञ्चन पुरुषं हिनस्ति, एवमभ्रेः स्त्रीत्वेन सा न कस्यापि हन्त्रीत्यर्थः सिद्धो भवति । सधस्थपदस्य विवरणम्–इदं वै सधस्थमिति ॥ ३९ ॥

अभ्र्यादाने विनियुक्तानां मन्त्राणां त्रित्वसङ्ख्यां प्रशंसितुमनुवदति–त्रिभिरादत्ते त्रिवृदग्निरिति । त्रिभिरा-

थास्यां चतुर्थेन व्वीर्यमदधुस्तथैवैनामयमेतत्त्रिभिरादायाथास्यां चतुर्थेन व्वीर्यं दधाति ॥ ४० ॥

हस्तऽआधाय सवितेति । हस्ते ह्यस्याहिता भवति बिभ्रदभ्रिमिति बिभर्ति ह्येनाᳬं हिरण्ययीमिति हिरण्ययी ह्येषा या च्छन्दोमय्यग्नेर्ज्योतिर्निचाय्येत्यग्नेर्ज्योतिर्दृष्ट्वेत्येतत्पृथिव्याऽअध्याभरदिति पृथिव्यै ह्येनदध्याभरत्यानुष्टुभेन च्छन्दसाऽङ्गिरस्वदिति तदेनामानुष्टुभेन च्छन्दसाऽऽदत्तेऽथोऽअस्यामानुष्टुभं च्छन्दो दधाति तान्येतान्येव च्छन्दाᳬंस्येषाऽभ्रिरारम्भायैवेयं व्वैणवी क्रियते ॥ ४१ ॥

---

चतुर्थेनाभिमन्त्रयते । एतद्वाऽएनां देवास्त्रिभिरादायाथास्यां चतुर्थेन वीर्यमदधुः । तथैवैनामयमेतत्त्रिभिरादायाथास्यां चतुर्थेन वीर्यं दधाति ॥ ४० ॥

" हस्तऽआधाय सविता "–इति । हस्ते ह्यस्याहिता भवति । " बिभ्रदभ्रिम् "–इति । बिभर्ति ह्येनाम् । " हिरण्ययीम् "–इति । हिरण्ययी ह्येषा या च्छन्दोमयी । " अग्नेर्ज्योतिर्निचाय्य "–इति । अग्नेर्ज्योतिर्दृष्ट्वेत्येतत् । " पृथिव्याऽअध्याभरद् "–इति । पृथिव्यै ह्येनदध्याभरति । " आनुष्टुभेन च्छन्दसाऽङ्गिरस्वत् "–( वा॰ सं. ११ । ११ ) इति । तदेनामानुष्टुभेन च्छन्दसाऽऽदत्ते । अथोऽअस्यामानुष्टुभं छन्दो दधाति । तान्येतान्येव च्छन्दांसि–एषाऽभ्रिः । आरम्भायैवेयं वैणवी क्रियते ॥ ४१ ॥

---

दत्ताया अग्नेश्चतुर्थेन मन्त्रेणाभिमन्त्रणं विधत्ते–त्रिभिरादायाथैनां चतुर्थेनाभिमन्त्रयत इति[1] । ' अथ '–शब्दो व्यवधानाभावं सूचयति । इदमेवोत्तरत्र तावत् " चतुर्भिरादत्ते "–इत्यस्य वाक्यस्य बीजम् । आदानसमये एवाभिमन्त्रणाच्चत्वारोऽप्यादाने विनियुक्ता इति पक्षस्य बीजमस्ति; खननादिवत् स्पष्टव्यापाराभावात्, अश्वाद्यभिमन्त्रणवत् पृथगवस्थिताया अग्नेरभिमन्त्रणत्वाच्च । अत एव त्रिभिरादाय चतुर्थेनैतत्पूर्वमन्त्रसङ्ख्यानुवादपुरस्सरं चतुर्थत्वोक्तिरभिमन्त्रणमन्त्रस्येति तात्पर्यम् । अभिमन्त्रणं नाम वीर्याधानमिति प्रशंसति–अथास्यां चतुर्थेन वीर्यमदधुरिति ॥ ४० ॥

मन्त्रं विधत्ते–हस्त आधाय सवितेति । ' सविता ' देवः ' हस्ते ' ' आधाय ' अवस्थाप्य ' हिरण्ययीं ' हितरमणीयाम्; अथवा हिरण्यपदेन अमृतं छन्दश्चोच्यते, अमृतमयीम्; प्रागुक्तगायत्रत्रैष्टुभजागतानुष्टुभच्छन्दोरूपां वा ' एनाम् ' अभ्रिं ' बिभ्रत् ' सर्वदा धारयन्, ' अग्नेर्ज्योतिः ' ' निचाय्य ' दृष्ट्वा ' पृथिव्या अधि ' ततः सकाशात् ' आभरत् ' आहृतवान् । ' आनुष्टुभेन च्छन्दसा ' अङ्गिरवदाहृतवानिति । मन्त्रं व्याचष्टे–हस्ते ह्यस्याहितेति । ' हिरण्ययी '–पदव्याख्याने हिरण्ययी ह्येषा या छन्दोमयीत्युक्तम् । तदुपपादयति–तान्येतान्येवेति । ' आरम्भाय ' आलम्भनाय ॥ ४१ ॥

---

1–हस्त आधायेत्येनामभिमंत्रयते । का. श्रौ. सू. १६ । ५१ ।

ताᳬं᳖ हैके हिरण्ययीं कुर्वन्ति । हिरण्ययीति वाऽअभ्युक्तेति न तथा कुर्याद्यद्वाऽएषा च्छन्दाᳬं᳖सि तेनैषा हिरण्यममृतᳬं᳖ हिरण्यममृतानि च्छन्दाᳬं᳖सि ॥ ४२ ॥

तां चतुर्भिरादत्ते । चतुरक्षरा वै सर्व्वा व्वाग्वागित्येकमक्षरमक्षरमिति त्र्यक्षरं तद्यत्तद्वागित्येकमक्षरं यैवैषाऽनुष्टुबुत्तमा सा साऽथ यदक्षरमिति त्र्यक्षरमेतानि तानि पूर्व्वाणि यजूᳬं᳖षि सर्व्वयैवैतद्वाचाऽग्निं खनति सर्व्वया व्वाचा सम्भरति तस्माच्चतुर्भिः ॥ ४३ ॥

( यं ) यद्वेव चतुर्भिः । ( श्रु ) चतस्रो वै दिशश्चतसृषु तद्दिक्षु व्वाचं

---

तां हैके हिरण्ययीं कुर्वन्ति । हिरण्ययीति वाऽअभ्युक्तेति । न तथा कुर्यात् । यद्वाऽएषा छन्दांसि—तेनैषा हिरण्यम् । अमृतं हिरण्यम् । अमृतानि च्छन्दांसि ॥ ४२ ॥

तां चतुर्भिरादत्ते । चतुरक्षरा वै सर्वा वाक् । वागित्येकमक्षरम् । त्र्यक्षरमिति अक्षरम् । तद्यत्तद्वा-गित्येकमक्षरम्—यैवैषाऽनुष्टुबुत्तमा—सा सा अथ यदक्षरमिति त्र्यक्षरम्—एतानि तानि पूर्वाणि यजूंषि । सर्वयैवैतद्वाचाऽग्निं खनति । सर्वया वाचा सम्भरति । तस्माच्चतुर्भिः ॥ ४३ ॥

यद्वेव चतुर्भिः चतस्रो वै दिशः । चतसृषु तद्दिक्षु वाचं दधाति । तस्माच्चतसृषु दिक्षु वाग्वदति ।

---

अत्र केचिन्मन्त्रगतहिरण्ययीपदबलेन अभ्रिमपि हिरण्यनिर्मितामिच्छन्तीति तत्पक्षमनुवदति—तां हैके हिरण्ययीं कुर्वन्तीति । अत एव कात्यायनः—"हिरण्ययीमेके"—( का. श्रौ. सू. १६ । ४९ ) इति पक्षान्तरं सूत्रितवान् । अभ्युक्तेति । "हस्त आधाय सविता बिभ्रदभ्रिं हिरण्ययीम्"—इति मन्त्रे समाप्ते इत्यर्थः ॥ तद् दूषयति—न तथा कुर्यादिति । अत्र पूर्वोक्तमेव च्छन्दोमयत्वमिहोपदिशति—यद्वा एषा छन्दांसीति॥४२॥

आदानाभिमन्त्रणविनियुक्तानां मन्त्राणां सङ्ख्यां प्रशंसितुमाह—तां चतुर्भिरादत्त इति । 'चतुर्भिः' अभि-मन्त्रणमन्त्रसहितैः पूर्वैस्त्रिभिर्मन्त्रैः 'ताम्' अभ्रिम् 'आदत्ते' । आदाने मन्त्रचतुष्कप्रकार उपपादितः । अत एव मीमांसायां द्वादशाहयागे इदमेव विषयवाक्यमुदाहृतम् । तदर्थः स गृहीतस्तत्त्वविद्भिराचार्यैः—" चतु-र्भिरभ्रिमित्यत्र विकल्पो वा समुच्चयः । विकल्पः पूर्ववन्मैवं समूहे करणत्वतः ॥—( मी. जै. न्या. १२ । ३ । सू. ३० । १४ अ. ) इति ॥

यतश्चतुर्भिरादत्ते, 'सर्वा वाक्' 'चतुरक्षरा' अक्षरचतुष्टयवती । कथं वाचश्चतुरक्षरत्वम् ? तदाह—वागित्येकमिति । अत्र एकाक्षरवाग्रूपत्वेन त्र्यक्षरात्मकेन च स्तूयमानान् मन्त्रान् विभज्य दर्शयति—यैवैषाऽनुष्टु-बुत्तमेति । प्रथमेन 'सा' इति पदेन वागुच्यते; द्वितीयेन अभिमन्त्रणे विनियुक्ता चतुर्थी ऋक् । अनुष्टुप् 'त्र्यक्षरं' पदम् 'अक्षरमिति' यदुक्तम्, तानि 'आदाने विनियुक्तानि "देवस्य त्वा"—इत्यादीनि 'यजूंषि' । 'तस्मात्' चतुर्भिः अभ्र्यादानं नाम, 'सर्वया वाचा' खननमेवेत्यर्थः ॥ ४३ ॥

मन्त्रगतचतुष्ट्वसंख्यां चतुर्दिगात्मना च स्तौति—यद्वेव चतुर्भिश्चतस्रो वै दिश इति । अत्र मन्त्रगत—

दधाति तस्माच्चतसृषु दिक्षु व्वाग्वदति च्छन्दोभिश्च यजुर्भिश्चादत्ते तदष्टौ चतस्रो दिशश्चतस्रोऽवान्तरदिशः सर्व्वासु तद्दिक्षु व्वाचं दधाति तस्मात्सर्व्वासु दिक्षु व्वाग्वदति ॥ ४४ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ६-२-३ ॥ ( ३. १. )

हस्त ऽएषाऽग्निर्भवत्यथ पशूनभिमन्त्रयते । ( त८ ) एतद्वाऽएषु देवा ऽअन्वेषिष्यन्तः पुरस्ताद्वीर्यमदधुस्तथैवैष्वयमेतदन्वेषिष्यन्पुरस्ताद्वीर्यं दधाति ॥ १ ॥

सोऽश्वमभिमन्त्रयते । प्रतूर्तं व्वाजिन्नाद्रवेति यद्वै क्षिप्रं तत्तूर्तमथ यत्क्षिप्रात्क्षेपीयस्तत्प्रतूर्तं वरिष्ठामनु संव्वतमितीयं वै व्वरिष्ठा संव्वदिमामनु संव्वतमित्येतद्दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरिदिति तदेनमेता देवताः करोत्यग्निं व्वायुमादित्यं तदश्वे व्वीर्यं दधाति ॥ २ ॥

---

छन्दोभिश्च यजुर्भिश्चादत्ते । तदष्टौ । चतस्रो दिशः, चतस्रोऽवान्तरदिशः । सर्वासु तद्दिक्षु वाचं दधाति । तस्मात्सर्वासु दिक्षु वाग्वदति ॥ ४४ ॥

हस्तऽएषाऽग्निर्भवति—अथ पशूनभिमन्त्रयते । एतद्वाऽएषु देवा अन्वेषिष्यन्तः पुरस्ताद्वीर्यमदधुः । तथैवैष्वयमेतदन्वेषिष्यन्पुरस्ताद्वीर्यं दधाति ॥ १ ॥

सोऽश्वमभिमन्त्रयते—" प्रतूर्तं वाजिन्ना द्रव "—इति । यद्वै क्षिप्रं तत्तूर्तम् । अथ यत् क्षिप्रात्

---

गायत्र–त्रैष्टुभ–जागतानुष्टुभैश्छन्दोभिः सह पूर्वां चतुःसंख्यां महादिगवान्तरदिगात्मना स्तौति—छन्दोभिश्च यजुर्भिश्चादत्ते तदष्टाविति ॥ ४४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ६–३–१ ) ॥

पूर्वमाहवनीयस्य दक्षिणाप्रदेशे त्रिवृन्मुञ्जरशनाबद्धाः प्राङ्मुखा येऽश्वगर्दभाजास्तिष्ठन्ति, तेषामिदानीं यथाक्रममभिमन्त्रणं समन्त्रकं विधित्सुरादावभिमन्त्रणं वीर्यात्मना प्रशंसति—हस्त एषाऽग्निर्भवतीति । अनेन अग्निं हस्ते गृहीत्वैव पशूनभिमन्त्रयते ॥ १ ॥

प्रथममश्वाभिमन्त्रणं समन्त्रं विधत्ते—सोऽश्वमिति । मन्त्रस्यायमर्थः—हे 'वाजिन्' अश्व ! 'वरिष्ठाम्' अतिशये-

---

१–हस्त आधायैत्येनामभिमंत्रयते । का० श्रौ० सू० १६ । ५१। २–अश्वप्रभृतींश्च प्रतूर्तं युंजाथां योगेयोग इति । का. श्रौ.सू. १६ । ५२ ।

( त्यु ) अथ रासभम् । युञ्जाथाᳬं रासभं युवमित्यध्वर्युं चैतद्यजमानं चाहास्मिन्यामे व्वृषण्वसूऽइत्यस्मिन्कर्मणि व्वृषण्वसूऽइत्येतदग्निं भरन्तमस्मयुमित्यग्निं भरन्तमस्मत्प्रेषितमित्येतत्तद्रासभे व्वीर्यं दधाति ॥ ३ ॥

( त्यु ) अथाजम् । योगे योगे तवस्तरं व्वाजे वाजे हवामहऽइत्यन्नं वै

---

क्षेपीयः—तत्प्रतूर्तम् । " वरिष्ठामनु सम्वतम् "—इति । इयं वै वरिष्ठा सम्वत् । इमामनु सम्वतमित्येतत् । "दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित्"—( वा० सं० ११ । १२ ) इति । तदेनमेता देवताः करोति—अग्निम्, वायुम्, आदित्यम् । तदश्वे वीर्यं दधाति ॥ २ ॥

अथ रासभम्—" युञ्जाथां रासभं युवम् "—इति । अध्वर्युं चैतद्यजमानं चाह । " अस्मिन्यामे वृषण्वसू "—इति। अस्मिन्कर्मणि वृषण्वसू इत्येतत् । " अग्निऽभरन्तमस्मयुम् "—इति । अग्निं भरन्तमस्मत्प्रेषितमित्येतत् । तद्रासभे वीर्यं दधाति ॥ ३ ॥

अथाजम्—" योगे–योगे तवस्तरं वाजे–वाजे हवामहे "—इति । अन्नं वै वाजः । कर्मणि

---

नोर्वीम्, अनुसंवतं ' सम्पूर्वात् वनतेः क्विपि " अनुदात्तोपदेशवनति " ( पा. सू. ६ । ४ । ३७ )—इति । न-लोपे, " ह्रस्वस्य पिति "—( पा. सू. ६ । १ । ७१ ) इति तुक् । अस्माभिः क्रियमाणं सम्भजनम् ' अनु ' लक्ष्य भूमिं, ' प्रतूर्तं ' त्वरतेः " ज्वरत्वर "—( पा. सू. ६ । ४ । २० ) इत्यूठि कृते " नसत्त-निषत्तानुत्त–प्रतूर्त–सूर्त–गूर्तानि च्छन्दसि "—( पा. सू. ८ । २ । ६१ ) इति निष्ठा-तस्य नत्वाभावेन निपातनम् । अतिक्षिप्रम् ' आद्रव ' आगच्छ । हे अश्व ! ' ते ' तव ' परमं जन्म ' ' दिवि ' आदित्यरूपेण, ' अन्तरिक्षं ' तव ' नाभिः ' वायुरूपेण, ' पृथिव्यां ' तव ' योनिः ' उत्पत्तिस्थानम् अग्न्यात्मकत्वेनेति, अश्वस्य लोकत्रयाभिमानिदेवतात्वेन स्तुतिः कृतेति तात्पर्यम् ॥

अत्र प्रतूर्तपदं व्याचष्टे—यद्वै क्षिप्रं तत् तूर्तमिति । ' क्षिप्रं–तूर्तम् ' ' अथ ' ' यत् क्षिप्रात् ' अपि ' क्षेपीयः ' क्षिप्रतरम्, ' तत् प्रतूर्तम् ' इत्युच्यते । क्षिप्रशब्दादीयसुनि " स्थूलदूरयुवह्रस्वक्षिप्र "—( पा. सू. ६ । ४ । १५६ ) इति यणादिपरस्य लोपः । पूर्वस्येकारस्य गुणः । उत्तरार्द्धस्य तात्पर्यमाह—तदेनमेता देवता इति । अभिमन्त्रणेनाश्वस्य किमायातम् ? तदाह—तदश्वे वीर्यं दधातीति ॥ २ ॥

रासभाभिमन्त्रणं समन्त्रं विधत्ते—अथ रासभं युञ्जाथामिति । अभिमन्त्रयत इत्यनुषङ्गः । ' युवम् ' इति द्विवचनेन अध्वर्युयजमानावुच्येते । ' वृषण्वसू ' वृषा सेक्ता गर्दभः, स ययोर्वसु धनम्, तौ । ' युवं ' युवाम् । ' अस्मिन् ' ' यामे ' यायते गम्यते प्राप्यते देवैरिति, यान्ति सङ्गच्छन्ते यत्र परस्परं देवा इति वा, यामं कर्म, तस्मिन् रासभं ' युञ्जाथाम् ' । तं विशिनष्टि- अग्निं भरन्तामिति । " हृग्रहोर्भः " ( पा. सू. ८ । २ । ३२ । वा. ) । ' अस्मयुम् ' अस्मभ्यं फलं कामयमानम्; यद्वा, यातेः रूपम्, अस्मत्प्रेषितमिति । मन्त्रं व्याचष्टे—अध्वर्युं चैतदिति ॥ ३ ॥

अजाभिमन्त्रणं विधत्ते—अथाजं योगे योग इति । अभिमन्त्रयत इति शेषः । अस्यार्थः—हे ' सखायः '

त्र्वाजः कर्मणि कर्मणि तवस्तरमन्नेऽन्ने हवामहऽइत्येतत्सखाय ऽइन्द्रमूतयऽइतीन्द्रियवन्तमूतयऽइत्येतत्तदजे व्वीर्यं दधाति ॥ ४ ॥

त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्यं दधाति ॥ ५ ॥

( त्यु ) अथैनान्प्राच ऽउत्क्रमयति । तदेनमेतैः पशुभिरन्विच्छति नोपस्पृशत्यग्निरेष यत्पशवो नेन्माऽयमग्निर्हिनसदिति ॥ ६ ॥

सोऽश्वमुत्क्रमयति । प्रतूर्वन्नेह्यवक्रामन्नशस्तीरिति पाप्मा वाऽअशस्तिस्त्वरमाण ऽएह्यवक्रामन्पाप्मानमित्येतद्रुद्रस्य गाणपत्यं मयोभूरेहीति रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्येतत्तदेनमश्वेनान्विच्छति ॥ ७ ॥

---

कर्मणि तवस्तरमन्नेऽन्ने हवामहऽइत्येतत् । " सखाय इन्द्रमूतये "-( वा० सं० ११ । १४ ) इति । इन्द्रियवन्तमूतयऽइत्येतत् । तदजे वीर्यं दधाति ॥ ४ ॥

त्रिभिरभिमन्त्रयते । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैष्वेतद्वीर्यं दधाति ॥ ५ ॥

अथैनान् प्राच उत्क्रमयति । तदेनमेतैः पशुभिरन्विच्छति । नोपस्पृशति । अग्निरेष यत्पशवः । नेन्माऽयमग्निर्हिनसादिति ॥ ६ ॥

सोऽश्वमुत्क्रमयति–"प्रतूर्वन्नेह्यवक्रामन्नशस्तीः"–इति । पाप्मा वाऽअशस्तिः । त्वरमाण

---

समानख्याना ऋत्विजः । ' तवस्तरं ' " तवः " इति बलनाम ( निघं. २ । ९ । ९ ), बलिनम् ' इन्द्रम् ' इरां भूमिं दृणन्तम् । " इन्द्र इन्द्रं दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत् इति वा "–इति । यास्काचार्यः ( निरु १० । १ । ८ ) । इन्द्रियवन्तं बलवन्तं वा तम्, अजम् । ' योगे ' युञ्जन्ति देवा अत्रेति योगः कर्म, वीप्सायां, कर्मणि कर्त्तव्ये । ' वाजे वाजे ' मनुष्याणाम् अन्ने-अन्ने दातव्ये स्थिते सति ' ऊतये ' तर्पणाय ' हवामहे ' वयमध्वर्यव इति ॥ मन्त्रगतयोगवाजेन्द्रपदानि व्याचष्टे–अन्नं वै वाजः कर्मणि-कर्मणीति ॥ ४ ॥

अभिमन्त्रणमन्त्रत्रित्वसंख्यां त्रिवृदग्न्यात्मना स्तौति–त्रिभिरिति । अत्र सूत्रम्–" अनुपस्पृशन्नुत्क्रमयत्येनान् प्राचः प्रतिमन्त्रं प्रतूर्वन्नुर्वन्तरिक्षं पृथिव्याः सधस्थादिति " ( का. श्रौ. सू. १६ । ९३ ) इति ॥५॥

तदिदं विधत्ते–अथैनान् प्राच इति । ' एनान् ' पशून् प्राङ्मुखानुद्गमयेत् । उद्गमितैः पशुभिः ' एनम् ' मृद्रूपमग्निम् अन्विष्टवान् भवति । नोपस्पृशतीति । ' यत् ' यतः ' पशवोऽग्निः ' यतोऽग्निस्पर्शनेन हिंसा स्यात्, सा मा भूदिति । ' हिनसत् '–इति हिंसेः पञ्चमलकारे रूपम् ॥ ६ ॥

उत्क्रमणमनूद्य मन्त्रं विधत्ते–सोऽश्वमुत्क्रमयतीति । प्रतूर्वन्नेहीति । अस्यायमर्थः,–' अशस्तीः ' पाप्मनः ' अवक्रामन् ' अभिगमयन् ' प्रतूर्वन् ' प्रकर्षेण त्वरमाणः ' एहि ' आगच्छ । ' मयोभूः ' सुखस्य भाव-

(त्यु) अथ रासभम् । (सु) उर्व्वन्तरिक्षं व्वीहि स्वस्ति गव्यूतिरभयानि कृण्वन्निति यथैव यजुस्तथा बन्धुः पूष्णा सयुजा सहेतीयं वै पूषाऽनया सयुजा सहेत्येतत्तदेनꣳ रासभेनान्विच्छति ॥ ८ ॥

( त्यु ) अथाजम् । ( स्पृ ) पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरेति पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभरेत्येतत्तदेनमजेनान्विच्छति ॥ ९ ॥

त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्विच्छति त्रिभिः पुरस्तादभिमन्त्रयते तत्षड्भृतवः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १० ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ६-२-४ ॥ (३-२)

द्वितीयः प्रपाठकः समाप्तः ॥ कण्डिकासंख्या ॥ १०४ ॥

---

एहि, अवक्रामन् पाप्मानमित्येतत् । " रुद्रस्य गाणपत्यं मयोभूरेहि "-इति । रौद्रा वै पशवः । या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्येतत् । तदेनमश्वेनान्विच्छति ॥ ७ ॥

अथ रासभम्-" उर्वन्तरिक्षं वीहि स्वस्ति गव्यूतिरभयानि कृण्वन् "-इति । यथैव यजुस्तथा बन्धुः । " पूष्णा सयुजा सह "-( वा. सं. ११ । १९ ) इति । इयं वै पूषा । अनया सयुजा सहेत्येतत् । तदेनं रासभेनान्विच्छति ॥ ८ ॥

अथाजम्-" पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर "-इति । पृथिव्या उपस्थादग्निं पशव्यमग्निवदाभरेत्येतत् । तदेनमजेनान्विच्छति ॥ ९ ॥

त्रिभिरन्विच्छति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्विच्छति । त्रिभिः

---

पिता ' रुद्रस्य ' पशुपतेः ' गाणपत्यं ' गणपतित्वम् । ' एहि ' गच्छ अशस्तिपदं व्याचष्टे-पाप्मा वा अशस्तिरिति । अश्वस्य रुद्रगणपतित्वं प्रतिपादयति-रौद्रा वै पशव इति । पशुरूपस्याश्वस्य देवता रुद्रः, तस्य गणपतित्वमेहीत्यर्थः । अश्वोत्क्रमणेन नः किं जातमिति, तद् दर्शयति-तदेनमश्वेनान्विच्छतीति ॥ ७ ॥

रासभोत्क्रमणं विधत्ते-अथ रासभमुर्वन्तरिक्षमिति । ' उरु ' विस्तीर्णम् अन्तरिक्षं ' वीहि ' प्राप्नुहि किं कुर्वन् ? ' गव्यूतिः ' गोसञ्चारभूमिं ' स्वस्ति ' क्षेमेण कुर्वन्, ' अभयानि ' अध्वनः । कृण्वन् ' पूष्णा ' पृथिव्या यागभूम्या ' सयुजा ' सहायेन सह वीहीति । मन्त्रस्य पूर्वार्द्धं निगदव्याख्यातमित्याह-यथैव यजुस्तथा बन्धुरिति । न व्याख्यातुमर्हतीत्यर्थः । उत्तरार्द्धगतपूषपदं विवृणोति-इयं वै पूषेति ॥ ८ ॥

अजोत्क्रमणं विधत्ते-अथाजं पृथिव्या इति । व्याख्यातोऽयं मन्त्रः ( पूर्वस्मिन्ब्राह्मणे ३८ कण्डिकायाम् ) ॥ ९ ॥

उत्क्रमणमन्त्रगतत्रित्वसङ्ख्यामन्यात्मना स्तौति-त्रिभिरन्विच्छति त्रिवृदग्निरिति । पूर्वमेतेषामश्वरासभाजाना-

# अथ तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।

# तृतीयाध्याये च तृतीयं ब्राह्मणम् ।

प्रदीप्ताऽ एतेऽग्नयो भवन्ति । (न्त्यु) अथ मृदमच्छयन्तीमे वै लोका ऽएतेऽग्नयस्ते यदा प्रदीप्ताऽ अथैतऽइमे लोकाः पुरो वाऽएतदेभ्यो लोकेभ्योऽग्रे देवाः कर्मान्वैच्छंस्तद्यदेतानग्नीनतीत्य मृदमाहरति तदेनं पुरेभ्यो लोकेभ्योऽन्विच्छति ॥ १ ॥

प्राञ्चो यन्ति । प्राची हि दिगग्नेः स्वायामेवैनमेतद्दिश्यन्विच्छति स्वायां दिशि विन्दति ॥ २ ॥

---

पुरस्तादभिमन्त्रयते । तत् षट् । षडृतवः सम्वत्सरः । सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तद्भवति ॥ १० ॥

प्रदीप्ता एतेऽग्नयो भवन्ति—अथ मृदमच्छयन्ति । इमे वै लोका एतेऽग्नयः । ते यदा प्रदीप्ताः—अथैतऽइमे लोकाः । पुरो वाऽएतदेभ्यो लोकेभ्योऽग्रे देवाः कर्मान्वैच्छन् । तद्यदेतानग्नीनतीत्य मृदमाहरति—तदेनं पुरेभ्यो लोकेभ्योऽन्विच्छति ॥ १ ॥

प्राञ्चो यन्ति । प्राची हि दिगग्नेः । स्वायामेवैनमेतद्दिश्यन्विच्छति । स्वायां दिशि विन्दति ॥ २ ॥

---

मभिमन्त्रणे त्रयो मन्त्रा विनियुक्ताः, इदानीमुत्क्रमणे त्रय इति तां सङ्ख्यां सम्भूय ऋतुसंवत्सराग्निरूपत्वेन प्रशंसितुमुक्तमनुस्मारयति—त्रिभिः पुरस्तादभिमन्त्रयते तत् षडिति । स्पष्टोऽर्थः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
षष्ठकाण्डे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ (६–३–२) ॥

कात्यायनः—"अग्निषु ज्वलत्सु पिण्डं गच्छन्त्यग्निम्पुरीष्यमिति"—(का. श्रौ. सू. १६ । ९४) इति । गार्हपत्यादिषु त्रिष्वग्निषु दीप्यमानेषु "अग्निम्पुरीष्यमिति" । मन्त्रेण मृत्पिण्डमभिलक्ष्य गच्छेयुरित्यर्थः । तद्विधत्ते—प्रदीप्ता एतेऽग्नय इति । अच्छयन्तीति । अभिगच्छन्तीत्यर्थः । ब्रह्माध्वर्युयजमानाः । 'अच्छ'—शब्दस्य "अच्छ गत्यर्थवदेषु"—(पा. सू. १ । ४ । ६९) इति गतिसञ्ज्ञा । अग्निसान्निध्यं प्रशंसति—इमे वै लोका इति । 'अग्रे' पूर्वं 'देवाः' 'एभ्यो लोकेभ्यः' 'पुरः' पूर्वस्मिन् प्रदेशे, लोकानां पुरः प्रदेशे कर्मचयनमन्विष्टवन्तः । 'तत्' तस्मात् 'एतान्' लोकत्रयात्मकान् 'अग्नीन्' 'अतीत्य' आदीप्य प्रज्वाल्य 'मृदम्' आहरेयुः अग्निषु ज्वलत्सु मृदानयनलोकानां पुरोदेशे मृद्रूपमग्निं कृतवन्तो भवन्ति ॥ १ ॥

तत्र गच्छतामध्वर्युप्रभृतीनां प्राङ्मुखत्वं विधत्ते—प्राञ्चो यन्तीति ॥ २ ॥

ते प्रयन्ति । ( न्त्य ) अ॒ग्निं पु॑री॒ष्य॑मङ्गिर॒स्वद॑च्छेम॒ऽ इत्य॒ग्निं प॑श॒व्य॑म॒ग्निव॑दच्छेम॒ऽ इत्ये॒तत् ॥ ३ ॥

(द)अथानड्वापुरुषमीक्षते । ( ते॒ऽग्निं ) अ॒ग्निं पु॑री॒ष्य॑मङ्गिर॒स्वद्भ॑रिष्याम॒ऽ इत्य॒ग्निं प॑श॒व्य॑म॒ग्निव॑द्भरिष्याम॒ऽ इत्ये॒तत्तदे॑नमनड्वापुरु॒षेणा॒न्विच्छति ॥४॥

( त्यु ) अथ वल्मीकवपा सुषिरा व्यध्वे निहिता भवति । तामन्वीक्षत॒ऽ इयं वै वल्मीकवपेयमु वाऽइमे लोकाऽ एतद्वाऽएनं देवाऽ एषु लोकेषु विग्राहमैच्छंस्तथैवैनमयमेतदेषु लोकेषु विग्राहमिच्छति ॥ ५ ॥

---

ते प्रयन्ति–“ अग्निं पुरीष्यमङ्गिरस्वदच्छेमः ”–( वा. सं. ११ । १६ ) इति । अग्निं पशव्यमग्निवदच्छेम–इत्येतत् ॥ ३ ॥

अथानड्वापुरुषमीक्षते–“ अग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः ”–(वा.सं. ११।१६) इत्येतत् । तदेनमनड्वा पुरुषेणान्विच्छति ॥ ४ ॥

अथ वल्मीकवपा सुषिरा व्यध्वे निहिता भवति । तामन्वीक्षते । इयं वै वल्मीकवपा । इयमु वाऽइमे लोकाः । एतद्वाऽएनं देवा एषु लोकेषु विग्राहमैच्छन् । तथैवैनमयमेतदेषु लोकेषु विग्राहमिच्छति ॥ ५ ॥

---

अभिगमनमनूद्य मन्त्रं विधत्ते–ते प्रयन्त्यग्निम्पुरीष्यमङ्गिरस्वदच्छेम इतीति । ‘ पुरीष्यं ’ पशुहितं मृद्रूपम् ‘ अङ्गिरस्वत् ’ अग्निवत् ‘ अच्छेम ’ अभिगच्छामः ॥ ३ ॥

पूर्वं पुरुषपशोः प्रतिनिधित्वेन अनड्वापुरुष उक्तः ( श. प. ६ । ३ । १ । २४ ) । तस्येदानीं । विनियोगमाह–अथानड्वापुरुषमीक्षत इति । ( का. श्रौ. सू. १६ । ९६ ) । “ देवपितृमनुष्यानर्थकः स इति ” ( श. प. ६ । ३ । १ । २४ । भाष्ये. ) प्रागुक्तः । ‘ भरिष्यामः ’ आहरिष्याम इत्यर्थः । अनड्वापुरुषनिरीक्षणं तेनाग्नेरन्वेषणमित्येतत् ॥ ४ ॥

अत्र सूत्रम्–“ पिण्डमपरेण व्यध्वे वल्मीकवपां छिद्रां निदधाति ”–( का. श्रौ. सू. १६ । ४६ ) इति । अश्वादिपशूनां त्रिवृन्मुञ्जाभिधानीबन्धनात् पूर्वं मृत्पिण्डस्य पश्चिमदेशे ‘ व्यध्वे ’ पिण्डाहवनीययोरर्द्धपथे सच्छिद्रा वल्मीकवपा निधेयेत्युक्तम्; इदानीं “ वल्मीकवपामादाय च्छिद्रेण पिण्डमीक्षतेऽन्वग्निरिति ”–( का. श्रौ. सू. १६।९७ ) इति; तदिदं विधिद्वयं दर्शयति–अथ वल्मीकेति । पूर्वमेव व्यध्वे सुषिराया वल्मीकवपायाः स्थापनं सूचयितुं ‘ निहिता ’–इति भूतकालवाचि क्तान्तं पदम्, ‘ तामनु ’ निहितां वपामनुलक्ष्य ‘ईक्षते,’ मृदं वपाच्छिद्रेण पिण्डं पश्येदित्यर्थः । “इयं वै वल्मीकवपा” इत्यादेरयमर्थः,–वल्मीकवपा नाम ‘ इयं ’ भूमिः; तत्कार्यत्वात् । भूमिर्हि सर्वे लोकाः तत्प्रमुखत्वात् इतरेषां कर्मभूमित्वेन विशिष्टत्वाच्च । पूर्वं ‘ देवाः ’ ‘ एनम् ’ अग्निम् ‘ एषु ’ सर्वलोकेषु ‘ विग्राहम् ’ ‘ ऐच्छन्, ’ विगृह्यात्रास्तीति सर्वत्रान्विष्टवन्तः, इदानीं तच्छिद्रेण पिण्डनिरीक्षणं सर्वलोकेषु मृद्रूपस्याग्नेर्विगृह्यान्वेषणमिति ॥ ५ ॥

( त्यु ) अन्वग्निरुषसामग्रमख्यदिति । तदेनमुषःस्वैच्छन्नन्वहानि प्रथमो जातवेदाऽइति तदेनमहःस्वैच्छन्ननु सूर्यस्य पुरुत्रा च रश्मीनिति तदेनꣳ सूर्यस्य रश्मिष्वैच्छन्ननु द्यावापृथिवीऽआततन्थेति तदेनं द्यावापृथिव्योरैच्छंस्तमविन्दंस्तथैवैनमयमेतद्विन्दति तं यदा परापश्यत्यथ तामवास्यत्यागच्छन्ति मृदम् ॥ ६ ॥

( म ) अथाश्वमभिमन्त्रयते । ( तऽ ) एतद्वै देवा ऽअब्रुवन्पाप्मानमस्यापहनामेति श्रमो वै पाप्मा श्रममस्य पाप्मानमपहनामेति तस्य श्रमं पाप्मानमपाघ्नंस्तथैवास्यायमेतच्छ्रमं पाप्मानमपहन्ति ॥ ७ ॥

( न्त्या ) आगत्य व्वाज्यध्वानमिति । ( त्या ) आगतो ह्यस्याध्वा भवति सर्वा मृधो व्विधूनुतऽइति पाप्मा वै मृधः सर्वान्पाप्मनो व्विधूनुतऽइत्ये-

" अन्वग्निरुषसामग्रमख्यत् "–इति । तदेनमुषःस्वैच्छन् । "अन्वहानि प्रथमो जातवेदाः "–इति । तदेनमहःस्वैच्छन् । "अनुसूर्यस्य पुरुत्रा च रश्मीन्"–इति । तदेनं सूर्यस्य रश्मिष्वैच्छन् " अनु द्यावापृथिवीऽआततन्थ "–( वा. सं. ११।१७ ) इति । तदेनं द्यावापृथिव्योरैच्छन्, तमविन्दन् । तथैवैनमयमेतद्विन्दति । तं यदा परापश्यति–अथ तामवास्यति, आगच्छन्ति मृदम् ॥ ६ ॥

अथाश्वमभिमन्त्रयते । एतद्वै देवा अब्रुवन्–पाप्मानमस्यापहनामेति । श्रमो वै पाप्मा । श्रममस्य पाप्मानमपहनामेति । तस्य श्रमं पाप्मानमपाघ्नन् । तथैवास्यायमेतच्छ्रमं पाप्मानमपहन्ति ॥ ७ ॥

" आगत्य वाज्यध्वानम् "–इति । आगतो ह्यस्याध्वा भवति । "सर्वा मृधो विधूनुते"–

निरीक्षणे मन्त्रं विधत्ते–अन्वग्निरिति । प्रजापतिरूपेणाऽग्निः स्तूयते–अन्वग्निरिति । ' उषसाम् अग्रम् ' आदित्यम् ' अनु '–लक्ष्य अग्निः ' अन्वख्यत् ' अनुदीप्यते । ' प्रथमः ' आद्यः ' जातवेदाः ' जातप्रज्ञः । जातानि भूतानि वेत्तीति वा, जाते जाते विद्यते जायत इति वा जातवेदाः ( निरु. ७ । ९ । १ ) । अहानि ' अनु '–लक्ष्य दीप्यते । ' पुरुत्रा ' बहुषु देशेषु ' सूर्यस्य रश्मीन् ' ' अनु '–लक्ष्य दीप्यते । एवं पारोक्ष्येणोक्त्वा चतुर्थपादेनाग्निं सम्बोध्याह–स त्वमग्ने ! ' द्यावापृथिवी ' ' अनु '–लक्ष्य ' आततन्थ ' स्वतेज आतेनिथ । " बभूथाततन्थजगृम्भववर्थ "–( पा. सू. ७ । २ । ६४ ) इति निगम इडभावेन निपातितः । मन्त्रस्य तात्पर्यमाह–तदेनमुषःस्वैच्छन्नित्यादिना । यदा परापश्यतीति । यदा पिण्डं छिद्रेण पश्येत्, तदा ' मृदम् ' ' अवस्यति ' चिनोति, जानाति ' अथ ' ' ताम् ' मृदमभिलक्ष्य गच्छेदिति ॥ ६ ॥

तत्राश्वाभिमन्त्रणं विधत्ते–अथाश्वमिति । एतद्वै देवा इति । पूर्वं ' देवाः ' पथि श्रान्तस्य अश्वस्य श्रमलक्षणं पाप्मानमपहतवन्तः, एवमभिमन्त्रणेन पथि श्रान्तस्य श्रमापनयनं भवति ॥ ७ ॥

मन्त्रं विधत्ते–आगत्य वाजीति । ' वाजी ' वेजनवान् बलवान् अश्वः ' अध्वानं ' मार्गम् ' आगत्य '

१. आगत्येत्यभिमंत्रयतेऽश्वम् । का० श्रौ० सू० १६ । ५९ ।

तत्तस्माद्ध हैतदश्वः स्यत्त्वा विधूनुतेऽग्निꣳ सधस्थे महति चक्षुषा निचिकीषतऽइतीदं वै महत्सधस्थमग्निमस्मिन्महति सधस्थे चक्षुषा दिदृक्षतऽइत्येतत् ॥ ८ ॥

(द) अथैनमाक्रमयति । (त्ये) एतद्वाऽएषऽ एतं देवेभ्योऽनुविद्य प्राब्रवीद्यथाऽयमिहेवेत्येवम् ॥ ९ ॥

यद्वेवाक्रमयति । (त्ये) एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्माऽएतं व्वज्रमुपरिष्टादभिगोप्तारमकुर्व्वन्नमुमेवादित्यमसौ वाऽआदित्यऽएषोऽश्वस्तथैवास्माऽअयमेतं व्वज्रमुपरिष्टादभिगोप्तारं करोति ॥ १० ॥

---

इति । पाप्मा वै मृधः । सर्वान्पाप्मनो विधूनुतऽइत्येतत् । तस्माद्ध हैतदश्वः स्यत्त्वा विधूनुते । "अग्निं सधस्थे महति चक्षुषा निचिकीषते"–( वा. सं. ११ । १८ ) इति । इदं वै महत् सधस्थम् । अग्निमस्मिन्महति सधस्थे चक्षुषा दिदृक्षतऽइत्येतत् ॥ ८ ॥

अथैनमाक्रमयति । एतद्वाऽएष एतं देवेभ्योऽनुविद्य प्राब्रवीत्–यथाऽयमिहेवेत्येवम् ॥ ९ ॥

यद्वेवाक्रमयति । एतद्वै देवा अबिभयुः । यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तस्माऽएतं वज्रमुपरिष्टादभिगोप्तारमकुर्वन् । असुमेवादित्यम् । असौ वाऽआदित्य एषोऽश्वः । तथैवास्माऽअयमेतं वज्रमुपरिष्टादभिगोप्तारं करोति ॥ १० ॥

---

'सर्वाः' 'मृधः' सङ्ग्रामान् 'विधूनुते' कम्पयति । 'महति सधस्थे' पृथिव्यां वर्त्तमानम् 'अग्निम्' 'चक्षुषा' 'निचिकीषते' द्रष्टुमिच्छति ॥

द्वितीयं पादं व्याचष्टे–पाप्मा वै मृधः इति । कथमश्वविधूननमिति, तदुपपादयति–तस्माद्ध हैतदिति । 'अश्वः' 'स्यत्त्वा' स्यन्दतेः क्त्वा–प्रत्यये इडभावे नलोपे च कृते रूपम् । अध्वानं गत्वा स्वशरीरं 'विधूनुते' कम्पयति ॥ ८ ॥

तत्र सूत्रम्–"आक्रम्येत्येनेन पिण्डमधिष्ठापयति"–( का. श्रौ सू. १६ । ६० ) इति । एनेनेत्यश्वोऽभिधीयते । "आक्रम्य वाजिन्"–इति मन्त्रेण पिण्डमेनेनाश्वेनाधिष्ठापयति आक्रमयतीत्यर्थः । तद् विधत्ते–अथैनमाक्रमयतीति । 'एनं' मृत्पिण्डमश्वेनाक्रमयेदित्यर्थः । एतद्वा इति । पूर्वं 'यथा' 'एतम्' अश्वम् अग्निस्थानम् 'अनुविद्य' लब्ध्वा 'देवेभ्यः' 'अयम्' अग्निः 'इह' देशे तिष्ठतीति पादाक्रमेण 'प्राब्रवीत्' 'एवम्' अश्वेन पिण्डाधिष्ठापनं नाम, तस्मादग्नेर्वेदनमित्यर्थः ॥ ९ ॥

आक्रमणं प्रकारान्तरेण स्तोतुमनुवदति–यद्वेवेति । 'देवाः' रक्षोभ्यो भीतवन्तः 'एतं' 'वज्रम्' वज्ररूपमश्वम् आदित्यम् 'उपरिष्टात्' उपरिभागे 'अभिगोप्तारं' रक्षकम् 'अकुर्वन्' । आदित्यस्याश्व-

(त्या) आक्रम्य वाजिन् । (न्पृ) पृथिवीमग्निमिच्छ रुचा त्वमिति चक्षुर्वै रुगाक्रम्य त्वं वाजिन्पृथिवीमग्निमिच्छ चक्षुषेत्येतद्भूम्या वृत्वाय नो ब्रूहि यतः खनेम तं वयमिति भूमेस्तत्स्पाशयित्वाय नो ब्रूहि यतऽएनं खनेमेत्येतत् ॥ ११ ॥

(इु) अथैनमुन्मृशति । (त्ये) एतद्वाऽएनं देवाः प्रोचिवाꣳसं वीर्येण समार्धयंस्तथैवैनमयमेतत्प्रोचिवाꣳसं वीर्येण समर्धयति द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रो योनिरितीत्थमसीत्थमसीत्येवैतदाह विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतऽइति विख्याय चक्षुषा त्वमभितिष्ठ सर्वान्पाप्मनऽ इत्येतन्नोपस्पृशति वज्रो वाऽअश्वो नेन्माऽयं वज्रो हिनसदिति ॥ १२ ॥

---

"आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम्"–इति । चक्षुर्वै रुक् । आक्रम्य त्वं वाजिन् ! पृथिवीमग्निमिच्छ चक्षुषेत्येतत् । "भूम्या वृत्वाय नो ब्रूहि यतः खनेम तं वयम्"–(वा. सं. ११।२०) इति । भूमेस्तत् स्पाशयित्वाय नो ब्रूहि–यत एनं खनेमेत्येतत् ॥ ११ ॥

अथैनमुन्मृशति । एतद्वाऽएनं देवाः प्रोचिवांसं वीर्येण समार्धयन् । तथैवैनमयमेतत्प्रोचिवांसं वीर्येण समर्धयति । "द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षं समुद्रो योनिः"–इति । इत्थमसि, इत्थमसि, इत्येवैतदाह । "विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः"–

---

रूपता प्रागुक्ता ( श. प. २ । ६ । ३ । ९ । श. प. ३ । ९ । १ । १९ । २० ) 'तथैव' तेन प्रकारेण 'अस्मै' पिण्डपायाग्नये 'अयम्' अनुष्ठाता अश्वाक्रमणेन 'एतं' वज्ररूपमश्वम् आदित्यम 'उपरिष्टात्' उपरिभागे 'अभिगोप्तारं' रक्षकं 'करोति' कृतवान् भवतीति ॥ १० ॥

मन्त्रं विधत्ते–आक्रम्य वाजिन्निति । हे 'वाजिन्' अश्व ! 'त्वं' 'पृथिवीम्' 'आक्रम्य,' 'रुचा' "रुच दीप्तौ" ( धा. पा. भ्वा. प. ७४६ ) क्विबन्तात् तृतीयैकवचनम्, अनेन 'चक्षुषा' 'अग्निम्' 'इच्छ,' कुत्र तिष्ठतीत्यन्वेषणं कुरु । 'वृत्वाय' वृणोतेर्वर्त्तमाने क्त्वा, वृत्वायेति क्त्वो यक् । अत्र वृ-धातुः स्पर्शनार्थे; धातूनामनेकार्थत्वात् । 'भूम्याः' इति कर्मणि षष्ठी । भूमिम्, 'वृत्वाय' स्पृष्ट्वा, भूप्रदेशं स्पर्शयित्वा 'नः ब्रूहि' 'यतः' यस्मात् प्रदेशात् 'तम्' मृद्रूपमग्निं 'खनेम्' इति ॥ अत्र मन्त्रे 'रुचा'–इति, 'वृत्वाय'–इति पदं व्याचष्टे–चक्षुर्वै रुगिति, भूमेस्तत् स्पाशयित्वायेति । "स्पश बाधनस्पर्शनयोः" ( धा. पा. भ्वा. प. ९९२ ) इत्यस्य रूपम्, स्पाशयित्वायेति पूर्ववत् क्त्वो यक् ॥ ११ ॥

अश्वाभिमन्त्रणं विधत्ते–अथैनमुन्मृशतीति । 'प्रोचिवांसम्' अत्राग्निस्तिष्ठतीति चोक्तवन्तम् ।

---

१–द्यौस्त इति पृष्ठस्योपरि पाणिं धारयन् । का. श्रौ. सू. १६ । ६१ ।

(त्यु) अथैनमुत्क्रमयति । (त्ये) एतद्वै देवाऽअब्रुवन्किमिममभ्युत्क्रमिष्यामऽइति महत्सौभगमिति तं महत्सौभगमभ्युदक्रमयंस्तथैवैनमयमेतन्महत्सौभगमभ्युत्क्रमयत्युत्क्राम महते सौभगायेत्युत्क्राम महते सौभगमित्येतत्तस्माद्ध हैतदश्वः पशूनां भगितमोऽस्मादास्थानादिति यत्रैतत्तिष्ठसीत्येतद्द्रविणोदाऽ इति द्रविणᳫँह्येभ्यो ददाति व्वाजिन्निति व्वाजी ह्येषु व्वयᳫँ स्याम सुमतौ पृथिव्या ऽअग्निं खनन्त ऽउपस्थे ऽअस्याऽइति व्वयमस्यै पृथिव्यै सुमतौ स्यामाग्निमस्याऽ उपस्थे खनन्त ऽइत्येतत् ॥ १३ ॥

---

( वा. सं. ११।२० ) विख्याय चक्षुषा त्वमभितिष्ठ सर्वान्पाप्मन इत्येतत् । नोपस्पृशति । वज्रो वाऽअश्वः । नेन्माऽयं वज्रो हिनसदिति ॥ १२ ॥

अथैनमुत्क्रमयति । एतद्वै देवा अब्रुवन्—किमिममभ्युत्क्रमिष्याम इति । महत्सौभगमिति । तं महत्सौभगमभ्युदक्रमयन् । तथैवैनमयमेतन्महत्सौभगमभ्युत्क्रमयति । "उत्क्राम महते सौभगाय"—इति । उत्क्राम महते सौभगमित्येतत् । तस्माद्ध हैतदश्वः पशूनां भगि-

---

उन्मर्शनं नाम अश्वपृष्ठस्योपरि पाणिधारणम् । मन्त्रं विधत्ते—द्यौस्त इति । हे अश्व । 'ते' तव 'द्यौः' द्युलोकः 'पृष्ठम्' उपरिभागः, 'पृथिवी' 'सधस्थम्' सहस्थानम्, पादावित्यर्थः; 'आत्मा' शरीरम् 'अन्तरिक्षम्,' 'समुद्रः' उदकं 'योनिः' उत्पत्तिस्थानम् । तादृशः 'त्वम्' 'चक्षुषा' 'विख्याय' निरीक्ष्य, 'पृतन्यतः' सङ्ग्रामेच्छून् पुरुषान् 'पाप्मनः इति' 'एतत्' 'अभितिष्ठ' सहस्व । 'पृतना'—शब्दात् क्यचि "कव्यध्वरपृतनस्यर्चि लोपः"—(पा. सू. ७ । ४ । ३९) इति अवर्णस्य लोपः । पूर्वार्द्धस्य तात्पर्यमाह-इत्थमसीत्थमसीति । 'द्युलोकात्माऽसि,' 'पृथिव्यात्माऽसि'—इत्याद्यर्थो वीप्साकृतः । उत्तरार्द्धगतं पृतन्यत्पदं व्याचष्टे—सर्वान् पाप्मन इत्येददिति । अत्र सूत्रम्—"अनुपस्पृशन्नुत्क्रामेत्युत्क्रमयति"—(का. श्रौ. सू. १६ । ६१ ) इति । अश्वमस्पृशन्नेवोत्क्रामेति मन्त्रेणाश्वस्योत्क्रामणं कारयेदित्यर्थः । तद् विधत्ते—नोपस्पृशतीत्यादि ॥ १२ ॥

अथैनमुत्क्रमयतीति । अत्रोत्क्रमणस्य प्रयोजनं वक्तुं देवानां प्रश्नमाह—किमिममभ्युत्क्रमिष्याम इतीति । किम्प्रयोजनमुद्दिश्येति तस्यार्थः । प्रयोजनमाह—महत्सौभगमितीति । मन्त्रं विधत्ते—उत्क्रामेति । हे 'वाजिन्!' हे 'द्रविणोदाः!' धनस्य दातः! त्वम् 'अस्मात्' स्थानात् पूर्वमवस्थिताद् देशात् 'उत्क्राम' उद्गच्छ 'महते' 'सौभगाय' ऐश्वर्यायेति तदर्थः । 'अस्याः' पृथिव्याः 'उपस्थे' उपस्थाने 'अग्निम्' उद्दिश्य मृत्पिण्डं 'खनन्तः' वयम् 'अस्याः' पृथिव्याः 'सुमतौ' शोभनदानादियुक्तमतौ 'स्याम' भवेमेति ॥

अश्वस्य सौभाग्यमाह—तस्माद्ध हैतदश्वः पशूनामिति । ये पशवः व्यापनशीलाः शीघ्रगामिनः तेषां मध्ये असावश्वो 'भगितमः' अतिशयेन भाग्यवान्, राजवाहनत्वात् । 'अस्मादास्थानात्' इति पदं व्याचष्टे—यत्रैतत् तिष्ठसीतीति ॥ १३ ॥

( ठ ) अथैनमुत्क्रान्तमभिमन्त्रयते । (त॰) एतद्वाऽएनं देवाः प्रोचिवाᳬ᳚ꣳसं यथा ददिवाᳬ᳚ꣳसं व्वन्देतैवमुपास्तुवन्नुपामहयंस्तथैवैनमयमेतदुपस्तौत्युपमहयत्युदक्रमीदित्युद्ध्यक्रमीद्द्रविणोदाऽ इति द्रविणᳬ᳚ꣳ ह्येभ्यो ददाति व्वाज्यर्व्वेति व्वाजी च ह्येषोऽर्व्वा चाकः सुलोकᳬ᳚ꣳ सुकृतं पृथिव्यामित्यकरः सुलोकᳬ᳚ꣳ सुकृतं पृथिव्यामित्येतत्ततः खनेम सुप्रतीकमग्निमिति तत ऽएनं खनेमेत्येतत्सुप्रतीकमिति सर्व्वतो वाऽअग्निः सुप्रतीकः स्वो रुहाणाऽ अधि नाकमुत्तममिति स्वर्गो वै लोको नाकः स्वर्गं लोकᳬ᳚ꣳ रोहन्तोऽधि नाकमुत्तममित्येतत्तं दक्षिणोपसंक्रमयति यत्रेतरौ पशू भवतस्ते दक्षिणतः प्राञ्चस्तिष्ठन्ति स य ऽएवामुत्र दक्षिणत स्थानस्य बन्धुः सोऽत्र ॥ १४ ॥

---

त्मः । " अस्मादास्थानाद् "–इति । यत्रैतत्तिष्ठसीत्येतत् । " द्रविणोदाः "–इति । द्रविणं ह्येभ्यो ददाति । " वाजिन् "–इति । वाजी ह्येषः । " वयं स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थेऽअस्याः "–( वा. सं. ११ । २१ ) इति । वयमस्यै पृथिव्यै सुमतौ स्याम, अग्निमस्या उपस्थे खनन्त इत्येतत् ॥ १३ ॥

अथैनमुत्क्रान्तमभिमन्त्रयते । एतद्वाऽएनं देवाः प्रोचिवांसं यथा ददिवांसं वन्देत–एवमुपास्तुवन् । उपामहयन् । तथैवैनमयमेतदुपस्तौति, उपमहयति । " उदक्रमीद् " इति । उद्ध्यक्रमीद् । "द्रविणोदाः"–इति । द्रविणं ह्येभ्यो ददाति । " वाज्यर्वा "–इति । वाजी च ह्येषोऽर्वा च । " अकः सुलोकं सुकृतं पृथिव्याम् "–इति । अकरः सुलोकं सुकृतं पृथिव्यामित्येतत् । "ततः खनेम सुप्रतीकमग्निम्"–इति । तत एनं खनेमेत्येतत् । सुप्रतीकमिति । सर्वतो वा अग्निः सुप्रतीकः । "स्वो रुहाणा अधि नाकमुत्तमम्"–( वा० सं० ११।२२ ) इति । स्वर्गो वै लोको नाकः । स्वर्गं लोकं रोहन्तोऽधि नाकमुत्तममित्येतत् । तं दक्षिणोपसङ्क्रमयति–यत्रेतरौ पशू भवतः । ते दक्षिणतः प्राञ्चस्तिष्ठन्ति । स य एवामुत्र दक्षिणतः स्थानस्य बन्धुः सोऽत्र ॥ १४ ॥

---

पुनरप्यश्वस्याभिमन्त्रणं विधत्ते–अथैनमुत्क्रान्तमभिमन्त्रयते इति । पूर्वं ' देवाः ' यथा ' एनम् ' अग्निम् ' प्रोचिवांसम् ' उक्तवन्तं ' ददिवांसं ' धनं दत्तवन्तं लोको ' वन्देत ' स्तुवीत, ' एवं ' वयमर्पाति अश्वम् ' अस्तुवन्, ' अमहयन् ' अपूजयंश्च, ' तथा ' अनुष्ठाताऽपि अभिमन्त्रणेन स्तुतवान् पूजितवान् भवति ॥

मन्त्रं विधत्ते–उदक्रमीदितीति । ' द्रविणोदाः ' धनस्य दाता, ' अर्वा ' अरणशीलो ' वाजी ' वेजनवान् अश्वः ' उदक्रमीत् ' ऊर्ध्वं पादविक्षेपम्, पृथिव्यां ' सुकृतं ' सुष्ठु निष्पादितम् ' सुलोकं ' शोभनं लोकम् ' अकः ' कृतवान् । स्वकार्यकारणयोरपि साधुत्वं द्योतयितुमुभयत्र सुशब्दप्रयोगः । ' अकरिति '

---

१–उदक्रमीदित्यभिमंत्रयते । अश्वमेव । का. श्रौ. सू. १६ । ६२ ।

( ब्रा२ ) अथोपविश्य मृदमभिजुहोति । ( त्ये ) एतद्वै देवा अब्रुवंश्चेतय-ध्वमिति चितिमिच्छतेति व्वाव तदब्रुवंस्ते चेतयमाना एतामाहुतिमपश्यं-स्तामजुहवुस्ताꣳ हुत्वेमाँल्लोकानुखामपश्यन् ॥ १९ ॥

( श्युंस्ते ) तेऽब्रुवन् । ( वंश्चे ) चेतयध्वमेवेति चितिमिच्छतेति वाव तद-ब्रुवंस्ते चेतयमाना एतां द्वितीयामाहुतिमपश्यंस्तामजुहवुस्ताꣳ हुत्वा व्विश्वज्योतिषोऽपश्यन्नेता देवता अग्निं व्वायुमादित्यमेता ह्येव देवता

---

अथोपविश्य मृदमभिजुहोति । एतद्वै देवा अब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तद-ब्रुवन् । ते चेतयमाना एतामाहुतिमपश्यन् । तामजुहवुः । तां हुत्वेमाँल्लोकानुखामपश्यन् ॥ १९ ॥

तेऽब्रुवन्—चेतयध्वमेवेति । चितिमिच्छतेति वाव तदब्रुवन् । ते चेतयमाना एतां द्वितीयामाहुति-मपश्यन् । तामजुहवुः । तां हुत्वा विश्वज्योतिषोऽपश्यन्—एता देवताः—अग्निं वायुमादित्यम् ।

---

करोतेर्लुङि " मन्त्रे घसह्वरणश "—( पा. सू. २ । ४ । ८० ) इतिच्लेर्लुकि, गुणे, सिलोपे रूपम् । यद्यपि प्रथमपुरुषैकवचने तिलोपे च रूपं समानम्, तथापि 'अकरः सुलोकम्—इति ब्राह्मणव्याख्यानानुसारेण मध्यमः, तद् व्याख्यातमकरिति । तद्धि करोतेर्लुङि च्लेः " कृमृदृरुहिभ्यश्छन्दसि "—( पा. सू. ३ । १ । ५९ ) इत्यङादेशे, गुणे, मध्यमसकारस्य रुत्वविसर्गयोः कृतयोः रूपम् । ' ततः तस्मात् प्रदेशात् ' सुप्रतीकं ' शोभनावयवम् ' अग्निम् ' मृद्रूपम् । ' खनेम ' किं कुर्वन्तः ? ' नाकं ' कमिति सुखनाम, न कम् अकम् असुखम् दुःखम्, तद् यत्र गतानां नास्ति, सर्वदा सुखमयम्, अत एव ' उत्तमम् ' उत्कृष्टं ' स्वः ' स्वर्ग लोकम् ' अधिरुह्याणाः ' आरोहन्तः; स्वर्गारोहणाय अग्निं खनेमेति । ' अकः सुलोकम् '—इत्येतद् व्याचष्टे—अकरः सुलोकमिति । व्युत्पत्तिर्दर्शिता । अन्तिमपादं व्याचष्टे—स्वर्गो वै लोको नाक इति । अभिमन्त्रितस्याश्वस्य रासभाभ्यां सहावस्थापनं विधत्ते—तं दक्षिणोपसङ्क्रमयतीति । दक्षिणशब्दादाचि प्रत्यये कृते रूपं दक्षि-णेति । स य एवामुत्र दक्षिणत इति । पूर्वमश्वरासभाजपशुविधानं प्रस्तुत्य त्रिवृन्मुञ्जेन बद्धाः " ते प्राञ्च-स्तिष्ठन्ति "—इत्युपक्रम्य, " ते दक्षिणतस्तिष्ठन्त्येतद्वै देवा अबिभयुः " ( श.प. ६ । ३ । १ । २८ । २९ ) इति यद् ब्राह्मणमुक्तम्—' सोऽत्र ' ' बन्धुः ' ब्राह्मणमिति ब्राह्मणातिदेशः ॥ १४ ॥

अत्र कात्यायनः—" उपविश्य मृदमभिजुहोत्या त्वा जिघर्मीति व्यतिषक्ताभ्यामृग्भ्यामाहुती स्रुवेणाश्वपदे "—( का. श्रौ. सू. १६ । ६४ ) इति । ' व्यतिषक्ताभ्याम् ' व्यतिषङ्गश्च एकस्याः पूर्वार्द्धः इतरस्या उत्तरार्द्ध इत्येका ऋक्; एवमितरावप्यर्द्धर्चौ संयोजनीयौ । तथा ऋक् द्वितीया । एवं व्यतिषक्ताभ्याम् " आ त्वा जिघर्मि "—इति द्वाभ्यामृग्भ्यामश्वस्य पदे द्वे आहुती जुहुयात् । तदिदं सार्थवादं विधत्ते—अथोपविश्य मृदमभिजुहोतीत्यादि , अश्वस्य पदे जुहोतीत्यन्तेन । ' उपविश्य '—इति मृत्संस्कारत्वादुपवेशः । तां हुत्वेति । प्रथमाहुतिं हुत्वा लोकत्रयात्मिकाम् ' उखाम् ' ' अपश्यन् ' ॥ १९ ॥

तेऽब्रुवन्निति । द्वितीयाहुतिं हुत्वा विश्वज्योतिर्नामेष्टकां दृष्टवन्तः । विश्वज्योतिस्सञ्ज्ञकानां तिसृणामिष्टकानां

---

१-आहवनीय वत्स्थापयति पिंडस्य । का. श्रौ. सू. १६ । ६३ ।

विश्वं ज्योतिस्तथैवैतद्यजमानऽएतेऽआहुती हुत्वेमांश्च लोकानुखां पश्य-त्येताश्च देवता विश्वज्योतिषो व्यतिषक्ताभ्यां जुहोतीमांश्च तल्लोकानेताश्च देवता व्यतिषजति ॥ १६ ॥

यद्वेवैतेऽआहुती जुहोति । मृदं च तदपश्च प्रीणाति तेऽइष्ट्वा प्रीत्वाऽथैने सम्भरति व्यतिषक्ताभ्यां जुहोति मृदं च तदपश्च व्यतिषजति ॥ १७ ॥

आज्येन जुहोति । वज्रो वाऽआज्यं वज्रमेवास्माऽएतदभिगोप्तारं करो-त्यथो रेतो वाऽआज्यꣳ रेतऽएवैतत्सिञ्चति स्रुवेण वृषा वै स्रुवो वृषा वै रेतः सिञ्चति स्वाहाकारेण वृषा वै स्वाहाकारो वृषा वै रेतः सिञ्चति ॥ १८ ॥

( त्वा ) आ त्वा जिघर्म्मि मनसा घृतेनेति । ( त्वा ) आ त्वा जुहोमि मनसा च घृतेन चेत्येतत्प्रतिक्षियन्तं भुवनानि विश्वेति प्रत्यङ् ह्येषु

---

एता ह्येव देवता विश्वं ज्योतिः । तथैवैतद्यजमानऽएते आहुती हुत्वेमांश्च लोकानुखां पश्यति–एताश्च देवता विश्वज्योतिषः । व्यतिषक्ताभ्यां जुहोति । इमांश्च तल्लोकानेताश्च देवता व्यतिषजाति ॥ १६ ॥

यद्वेवैतेऽआहुती जुहोति । मृदश्च तदपश्च प्रीणाति । ते इष्ट्वा प्रीत्वा, अथैने सम्भरति । व्यतिष-क्ताभ्यां जुहोति । मृदं च तदपश्च व्यतिषजति ॥ १७ ॥

आज्येन जुहोति । वज्रो वाऽआज्यम् । वज्रमेवास्माऽएतदभिगोप्तारं करोति । अथो रेतो वा-ऽआज्यम् । रेत एवैतत् सिञ्चति । स्रुवेण । वृषा वै स्रुवः । वृषा वै रेतः सिञ्चति । स्वाहाकारेण । वृषा वै स्वाहाकारः । वृषा वै रेतः सिञ्चति ॥ १८ ॥

"आ त्वा जिघर्म्मि मनसा घृतेन"–इति । आ त्वा जुहोमि मनसा च घृतेन चेत्येतत् ।

---

देवतासम्बन्धमाह–अग्निं वायुमादित्यमिति । व्यतिषक्ताभ्यां जुहोतीति । व्यतिषङ्गप्रकारः पूर्वमुक्तः, तादृग्भ्यामृग्भ्यां हवनेन त्रीनिमाँल्लोकान् 'एताः' अग्निवाय्वादित्यस्वरूपा देवताश्च व्यतिषक्तवान् भवति; पृथिवीलोकस्याग्निम्, अन्तरिक्षलोकस्य वायुम्, द्युलोकस्यादित्यमिति ॥ १६ ॥

प्रकारान्तरेणाहुतिद्वयं स्तोतुमनुवदति–यद्वेवैते आहुती इति । आहुतिद्वयेन मृदमपश्च प्रीणितवान् भवति । यतो व्यतिषक्ताभ्यामृग्भ्यां होमः, अतो मृदमपश्चोखार्थं संयोजयति ॥ १७ ॥

होम्यं द्रव्यं विधत्ते–आज्येन जुहोतीति । आज्यस्य वज्रत्वं प्रागुक्तम् ( श. प. १ । ९ । ४ । ४ ) । होमकरणं विधत्ते–स्रुवेणेति । मन्त्रान्ते 'स्वाहा' शब्दः प्रयोक्तव्य इत्याह–स्वाहाकारेणेति । जुहोती-त्यनुषङ्गः ॥ १८ ॥

मन्त्रं विधत्ते–आ त्वा जिघर्मीति । मन्त्रस्यायमर्थः, 'मनसा' 'घृतेन' आज्येन च त्वाम् 'आजि-

सर्व्वाणि भुवनानि क्षियति पृथुं तिरश्चा व्वयसा बृहन्तमिति पृथुर्व्वाऽएष तिर्यङ्व्वयसो बृहन्धूमेन व्यचिष्ठमन्नै रभसं दृशानमित्यवकाशवन्तमन्नैरन्नादं दीप्यमानमित्येतत् ॥ १९ ॥

( द्वा ) आ व्विश्वतः प्रत्यञ्चं जिघर्म्मीति । ( त्वा ) आ सर्व्वतः प्रत्यञ्चं जुहोमीत्येतदरक्षसा मनसा तज्जुषेतेत्यहीडमानेन मनसा तज्जोषयेतेत्येतन्मर्यश्रीः स्पृहयद्वर्णोऽअग्निरिति मर्यश्रीर्ह्येष स्पृहयद्वर्णोऽग्निर्नाभिमृशे तन्वा जर्भुराणऽ इति न ह्येषोऽभिमृशे तन्वा दीप्यमानो भवति ॥ २० ॥

---

" प्रति क्षियन्तं भुवनानि विश्वा "–इति । प्रत्यङ् ह्येष सर्वाणि भुवनानि क्षियति । " पृथुं तिरश्चा वयसा बृहन्तम् "–इति । पृथुर्वाऽएष तिर्यङ् वयसो बृहन्धूमेन । " व्यचिष्ठमन्नै-रभसं दृशानम् "–( वा० सं० ११ । २३ ) इति । अवकाशवन्तमन्नैरन्नादं दीप्यमान-मित्येतत् ॥ १९ ॥

" आ विश्वतः प्रत्यञ्चं जिघर्म्मि "–इति । आ सर्वतः प्रत्यञ्चं जुहोमीत्येतत् । " अरक्षसा मनसा तज्जुषेत "–इति । अहीडमानेन मनसा तज्जोषयेतेत्येतत् । " मर्यश्रीः स्पृहयद्वर्णोऽअग्निः "–इति । मर्यश्रीर्ह्येष स्पृहयद्वर्णोऽग्निः । "नाभिमृशे तन्वा जर्भुराणः"–इति । न ह्येषोऽभिमृशे तन्वा दीप्यमानो भवति ॥ २० ॥

---

घर्मि ' । " घृ क्षरणदीप्त्योः " ( धा. पा. जु. प. १४ ) । आजुहोमि, आसिञ्चामि, आज्यं सिञ्चामीत्यर्थः । अग्निं विशिनष्टि पादत्रयेण–' विश्वा ' ' सर्वाणि भुवनानि प्रतिक्षियन्तम् ' सर्वत्र भूतजातेषु निवसन्तमित्यर्थः । ' तिरश्चा ' इति भावपरो निर्देशः, ' पृथुं ' विस्तृतम् । यद्वा, ' तिरश्चा ' इति धूमविशेषणम्; ' वयसा ' धूमेन ' बृहन्तम् ' । अत एव ' व्यचिष्ठं ' व्यापनवन्तम्, अवकाशवन्तम् । ' अन्नैः ' स्वस्मिन् हुतैर्घृतादिभिः, ' रभसम् ' उत्साहवन्तम् । अत एव ' दृशानं ' दर्शनीयं, दीप्यमानम् । अग्निं त्वामाजिघर्मीति सम्बन्धः ॥

मन्त्रं प्रतिपादमनूद्य व्याचष्टे–आ त्वा जुहोमीति । व्यचिष्ठ-रभस-पदयोर्व्याख्यानम्–अवकाशवन्तमन्नादमिति ॥ १९ ॥

द्वितीयं मन्त्रं विधत्ते–आ विश्वत इति । अयमर्थः–' विश्वतः ' सर्वतः ' प्रत्यञ्चं ' प्रत्यङ्ङात्मतया प्रतीयमानमग्निम्, ' अरक्षसा ' रक्षोदोषरहितेन ' मनसा ' युक्तः अहम् ' आजिघर्मि ' आसिञ्चामि । ' तत् ' घृतं ' जुषेत ' सेवेत इति परोऽक्षनिर्देशः, युष्मच्छन्दसमानार्थो भवच्छब्दाध्याहारो वा । ' मर्यश्रीः ' श्रयतेः कर्मणि क्विप्, मर्यैर्मनुष्यैराश्रयणीयः । ' स्पृहयद्वर्णः ' स्पृहयन् परेषां रुचिमुत्पादयन् वर्णो यस्य, शुक्लभास्वररूपत्वात् । ' तन्वा ' शरीरेण ' जर्भुराणः ' दीप्यमानः ' अग्निः ' ' नाभिमृशे ' तुमर्थे केन् प्रत्ययः ( पा. सू. ३ । ४ । ९ ) । अभिमर्शनीयो न भवति ॥

मन्त्रं व्याचष्टे–आ सर्वत इति । ' अरक्षसा '–इति पदं व्याख्यातम्–अहीडमानेनेति ॥ २० ॥

द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतᳶ सिञ्चत्याग्नेयीभ्यामग्निमेवैतद्रेतोभूतᳶ सिञ्चति ते यदाग्नेय्यौ तेनाग्निरथ यत्त्रिष्टुभौ तेनेन्द्र ऽऐन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतᳶ सिञ्चतीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतᳶ सिञ्चति ॥ २१ ॥ ( शतम् ३६०० )

( त्यु ) अश्वस्य पदे जुहोति । ( त्य ) अग्निरेष यदश्वस्तथो हास्यैतेऽअग्निमत्येवाहुती हुते भवतः ॥ २२ ॥

---

द्वाभ्यामभिजुहोति । द्विपाद् यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतद्रेतोभूतं सिञ्चति । आग्नेयीभ्याम् । अग्निमेवैतद्रेतोभूतं सिञ्चति । ते यदाग्नेय्यौ । तेनाग्निः । अथ यत् त्रिष्टुभौ–तेनेन्द्रः । ऐन्द्राग्नोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतद्रेतोभूतं सिञ्चति । इन्द्राग्नी वै सर्वे देवाः । सर्वदेवत्योऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतद्रेतोभूतं सिञ्चति ॥ २१ ॥

अश्वस्य पदे जुहोति । अग्निरेष–यदश्वः । तथो हास्यैतेऽअग्निमत्येवाहुती हुते भवतः ॥ २२ ॥

---

मन्त्रगतसंख्यां प्रशंसति–द्वाभ्यामभिजुहोति द्विपादिति । 'यजमानोऽग्निः'–इति विराड्रूपस्याग्नेर्यजमानभाविशरीरात्मकतया च तद्रूपत्वम् । मन्त्रदेवतां प्रशंसति–आग्नेयीभ्यामिति । "अग्नेर्ढक्" ( पा. सू. ४ । २ । ३३ ) । अनयोर्मन्त्रयोरग्निसम्बन्धं त्रिष्टुप्छन्दश्च मिलित्वा प्रशंसति–यदाग्नेय्याविति । अग्निदेवत्येनाग्निरुच्यते; मन्त्रगतत्रिष्टुप्छन्दसा इन्द्रः त्रिष्टुबिन्द्रयोः सहोत्पत्तेः; "तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप् छन्दः"–( तै. सं. ७ । १ । १ । ४ । )–इति । अग्निरप्यैन्द्राग्नस्तदुपपादयति–इन्द्राग्नी इति । "इन्द्रः सर्वेषां देवानां परमः, अग्निर्देवानामवमः, उभयोर्मध्यवर्तिन्यः सर्वा देवताः" ( ऐ. ब्रा. १ । १ । १ ) । इति इन्द्राग्नी सर्वदेवतात्मकौ अग्निरपि सर्वदेवत्यः; तस्मिन्नेवाग्नौ सर्वदेवतोद्देशेन हविःप्रक्षेपात्, "अग्निर्वै सर्वा देवताः"–( श. प. १ । ६ । २ । ८ ) इति श्रुतेश्च । अतः 'अग्निः' यत्परिमाणः, 'तावता' तत्परिमाणेन इन्द्राग्निरूपेण प्रकारान्तरेण 'एनम्' तत्संख्याकाभ्यामिन्द्राग्निरूपाभ्यां प्रीणितवान् भवति ॥ २१ ॥

आहुतिद्वयस्याधिकरणं विधत्ते–अश्वस्य पदे जुहोतीति । यद्यश्वपदे हवनम्, तर्हि कथमग्निदेवत्यमन्त्रप्रयोगः ? तत्राह–अग्निरेष यदश्व इति । अश्वस्याग्निरूपत्वं प्रागुक्तम्–"स एतान् पञ्च पशून् प्राविशत्, स एते"–( श. प. ६।२।१।३ ) इत्यादिना ॥ २२ ॥

---

१–आहुती स्रुवेणाश्वपदे । का॰ श्रौ. सू. १६ । ६४ ॥

( तोऽथै ) अथैनं परिलिखति । मात्रामेवास्माऽएतत्करोति यथैतावानसीत्येवम् ॥ २३ ॥

यद्वेवैनं परिलिखति । ( त्ये ) एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाᳬसि नाष्ट्रा न हन्युरिति तस्मा ऽएतां पुरं पर्यश्रयंस्तथैवास्माऽअयमेतां पुरं परिश्रयत्यभ्र्या वज्रो वा ऽअभ्रिर्वज्रमेवास्माऽएतदभिगोप्तारं करोति सर्वतः परिलिखति सर्वत ऽएवास्माऽएतं वज्रमभिगोप्तारं करोति त्रिष्कृत्वः परिलिखति त्रिवृतमेवास्माऽएतं वज्रमभिगोप्तारं करोति ॥ २४ ॥

परीवाजपतिः कविः परि त्वाऽग्ने पुरं वयं त्वमग्ने द्युभिरित्यग्निमेवास्माऽएतदुपस्तुत्य वर्म करोति परिवतीभिः पुरीव हि पुरऽ आग्नेयीभिरग्निपुरामेवास्माऽएतत्करोति सा हैषाऽग्निपुरा दीप्यमाना तिष्ठति तिसृभि-

---

अथैनं परिलिखति । मात्रामेवास्माऽएतत् करोति—यथैतावानसीत्येवम् ॥ २३ ॥

यद्वेवैनं परिलिखति । एतद्वै देवा अबिभयुः—यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तस्माऽएतां पुरं पर्यश्रयन् । तथैवास्माऽअयमेतां पुरं परिश्रयति—अभ्र्या । वज्रो वाऽअभ्रिः । वज्रमेवास्माऽएतदभिगोप्तारं करोति । सर्वतः परिलिखति । सर्वत एवास्माऽएतं वज्रमभिगोप्तारं करोति । त्रिष्कृत्वः परिलिखति । त्रिवृतमेवास्माऽएतं वज्रमभिगोप्तारं करोति ॥ २४ ॥

" परि वाजपतिः कविः "—( वा० सं० ११।२५ ) " परि त्वाऽग्ने पुरं वयम् "—( वा० सं० ११ । २६ ) " त्वमग्ने द्युभिः "—( वा० सं० ११ । २७ ) इति । अग्निमेवास्माऽएत-

---

अत्र सूत्रम्—" अभ्र्या पिण्डं त्रिः परिलिखति परि वाजपतिरिति, बहिर्बहिरुत्तरयोत्तरयेति "—( का. श्रौ. सू. १६ । ६९ ) । एतं मृत्पिण्डं " परि वाजपतिः "—इत्यादिभिस्त्रिभिः उत्तरोत्तराधिकच्छन्दस्काभिः त्रिवारं परिलिखेदिति । तदिदं विधत्ते—अथैनं परिलिखतीत्यादि । परिलेखनेन ' अस्मै ' मृद्रूपायाग्नये ' मात्रां ' परिच्छेदम्, इयत्ताम् ' करोति ' कृतवान् भवति । तदेव विवृणोति—यथैतावानिति ॥ २३ ॥

यद्वेवैनं परिलिखतीति । परिलेखनं प्रशंसितुं देववृत्तान्तमाह—एतद्वै देवा इति । ' एतां पुरं ' रेखारूपां पुरं परिश्रितवन्तः । परिलेखने साधनं विधत्ते—अभ्र्येति । सर्वतः परिलिखतीति । चतुर्दिशं वृत्तमित्यर्थः । परिलेखनस्य त्रित्वं विधत्ते—त्रिष्कृत्व इति । त्रिवारपरिलेखनेन ' त्रिवृतं ' ' वज्रम् ' ' अस्मै ' मृत्पिण्डा- ' अभिगोप्तारं ' रक्षकं कृतवान् भवति ॥ २४ ॥

मन्त्रं विधत्ते—परिवाजपतिरिति । आद्या गायत्री, " परि त्वाऽग्ने पुरं वयम् "—इति द्वितीया अनुष्टुप् ।

---

१—अभ्र्या पिंडं त्रिः परिलिखति पारि वाजपतिरिति बहिर्बहिरुत्तरयोत्तरया । का० श्रौ० सू० १६ । ६५ ॥

त्रिपुरमेवास्माऽएतत्करोति तस्मादु हैतत्पुरां परमꣳ रूपं यत्त्रिपुरꣳ स वै व्वर्षीयसा वर्षीयसा च्छन्दसा पुरां परां लेखां व्वरीयसीं करोति तस्मात्पुरां पुरा परा व्वरीयसी लेखा भवन्ति लेखा हि पुरः ॥ २५ ॥

( ग्रो३थै ) अथैनमस्यां खनति । ( त्ये ) एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा नु हन्युरिति तस्मा ऽइमामेवात्मानमकुर्व्वन्गुप्त्या ऽआत्माऽऽत्मानं गोप्स्यतीति सा समम्बिला स्यात्तदस्येयमात्मा भवति यद्वेव समम्बिला योनिर्व्वा ऽइयꣳ रेतऽ इदं यद्वै रेतसो योनिमतिरिच्यतेऽमुया तद्भवत्यथ यन्न्यूनं व्यृद्धं तदेतद्वै रेतसः समृद्धं यत्समम्बिलं चतुःस्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्व्वाभ्यऽ एवैनमेतद्दिग्भ्यः खनति ॥ २६ ॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ६–३–१ ॥ ( ३. ३. ) ॥
इति तृतीयोऽध्यायः ॥ ६–३ ॥

---

दुपस्तुत्य वर्म करोति । परिवतीभिः । परीव हि पुरः। आग्नेयीभिः । अग्निपुरामेवास्माऽएतत्करोति । सा हैषाऽग्निपुरा दीप्यमाना तिष्ठति । तिसृभिः । त्रिपुरमेवास्माऽएतत्करोति । तस्मादु हैतत् पुरां परमं रूपं यत्त्रिपुरम् । स वै वर्षीयसा–वर्षीयसा छन्दसा परां परां लेखां वरीयसीं करोति । तस्मात् पुरां परा–परा वरीयसी । लेखा भवन्ति । लेखा हि पुरः ॥ २५ ॥

अथैनमस्यां खनति । एतद्वै देवा अबिभयुः–यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तस्माऽइमामेवात्मानमकुर्वन्–गुप्त्यै । आत्मानं गोप्स्यतीति । सा समम्बिला स्यात् । तदस्येयमात्मा

---

" त्वमग्ने द्युभिः "–इति तृतीया त्रिष्टुप्; तिस्रोऽप्याग्नेय्यः । यतोऽग्निदेवत्याः, अत एताभिः परिलेखनेन अग्निमेव ' वर्म ' कवचं पिण्डाय कृतवान् भवति ॥

मन्त्रत्रयगतं परिशब्दं स्तौति–परिवतीभिरिति । यतो रेखाः पुरात्मिकाः, अतस्तासां परिशब्दयुक्ताभिः ऋग्भिः करणेन प्राकारपरिवृतपुरात्मकत्वमुक्तम् । मंत्रगतं त्रित्वं प्रशंसति–तिसृभिस्त्रिपुरमेवेति । प्राकारत्रयपरिवृतत्वं पुरामुत्कृष्टतमत्वम् । स वै वर्षीयसेत्यादि । अस्यायमर्थः,–' सः ' अध्वर्युः ' वर्षीयसा ' वृद्धेन ततोऽपि ' वर्षीयसा ' वृद्धतरेण ' छन्दसा ', उत्तरोत्तराधिकच्छन्दस्काभिः ऋग्भिरित्यर्थः । छन्दांसि इदानीं प्रदर्शितानि, ताभिरृग्भिः रेखामपि उत्तरोत्तरवरीयसीं महत्तरां करोति । तस्मादुत्तरोत्तराधिकरेखात्रयकरणेन तादृग्भूतप्रकारेण पुरेण मृत्पिण्डं रक्षितवान् भवतीति ॥ २९ ॥

अथ पिण्डखननं विधत्ते–अथैनमस्यां खनतीति । ' अस्यां ' भूमौ ' एनम् ' पिण्डं खनेदिति आधेयाधि-

---

१–अभ्र्या पिंडं खनति देवस्य त्वेति । का० श्रौ० सू० १६ । ६५ ।

भवति । यद्वेव समम्बिला । योनिर्वाऽइयम् । रेत इदम् । यद्वै रेतसो योनिमतिरिच्यते—अमुया तद्भवति । अथ यन्न्यूनं—व्यृद्धं तद् । एतद्वै रेतसः समृद्धम्—यत् समम्बिलम् । चतुःस्रक्तिरेष कूपो भवति । चतस्रो वै दिशः । सर्वाभ्य एवैनमेतद्दिग्भ्यः खनति ॥ २६ ॥

---

करणभावेन भूमिमृत्पिण्डयोः प्रतीयमानं पार्थक्यमपाकरोति—एतद्वै देवा इति । पूर्वं देवा रक्षोभीत्या 'तस्मै' पिण्डाय 'इमां' भूमिमेव 'आत्मानं' स्वरूपम् 'अकुर्वन्' स्वरूपं स्वरूपरक्षकं भविष्यतीत्यतो हेतोः रक्षणाय 'सा' खन्यमाना भूमिः 'समम्बिला' चतुर्दिशं समानविवरा कर्त्तव्या । अयमर्थः,—यावत्य उखाषाढादय इष्टकाः कर्त्तव्याः तावत्परिमाणमेवेदं खनेत् । समम्बिलत्वं स्तौति—यद्वेव समम्बिलेति । 'इयं' भूमिः 'योनिः' अग्न्युत्पत्तिस्थानम् । इदं रेतः उखाषाढाद्यर्थं खन्यमानं मृत्स्वरूपं रेतः; अतः 'रेतसः' सम्बन्धी बिन्दुः, यावत् 'योनिम् अतिरिच्यते' तावत् उखादिपर्याप्तौ मृत् खनितुं युक्तेत्यर्थः । चतुःस्रक्तिरेष कूप इति । मृदर्थं खन्यमानः कूपः चतुरस्रः कर्त्तव्यः । स्रक्तीश्चतुर्दिगात्मना स्तौति—चतस्रो वै दिश इति ॥ २६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ६-३-३ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमचलमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये षष्ठे काण्डे तृतीयोऽध्यायः समाप्तः ॥ ६-३ ॥

# अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ।
# तृतीयप्रपाठके च द्वितीयं ब्राह्मणम् ।

अथैनमतः खनत्येव । ( वै ) एतद्वाऽएनं देवा ऽअनुविद्याखनंस्तथैवैनमयमेतदनुविद्य खनति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामीति सवितृप्रसूतऽ एवैनमेतद्देताभिर्देवताभिः पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवत्खनति॥१॥

ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमिति । ज्योतिष्मान्वाऽअयमग्निः सुप्रतीकोऽजस्रेण भानुना दीद्यतमित्यजस्रेणार्चिषा दीप्यमानमित्येतच्छिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामऽ इति शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्याऽ उपस्थादग्निं पशव्यमग्निवत्खनामऽ इत्येतत्॥

---

अथैनमतः खनत्येव । एतद्वाऽएनं देवा अनुविद्याखनन् । तथैवैनमयमेतदनुविद्य खनति । " देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामि "–(वा. सं. ११।२८) इति । सवितृप्रसूत एवैनमेतदेताभिर्देवताभिः पृथिव्या उपस्थादग्निं पशव्यमग्निवत् खनति ॥ १ ॥

"ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकम्"–इति । ज्योतिष्मान्वाऽअयमग्निः सुप्रतीकः । "अजस्रेण भानुना दीद्यतम्"–इति । अजस्रेणार्चिषा दीप्यमानमित्येतत् । " शिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सदस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामः"–( वा. सं. ११।२८ ) इति । शिवं प्रजाभ्योऽहिंसन्तं पृथिव्या उपस्थादग्निं पशव्यमग्निवत् खनाम इत्येतत् ॥ २ ॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ खननविधिं स्तुवन् मन्त्रं विधत्ते–अथैनमतः खनति ( का. श्रौ. सू. १६।१९ ) इति । 'अतः' चतुःस्रक्तेः कूपात् ' अनुविद्य ' लब्ध्वा । देवस्य त्वेति मन्त्रस्य तात्पर्यमाह–सवितृप्रसूत इति ॥ १ ॥

खनने द्वितीयं मन्त्रं विधत्ते–ज्योतिष्मन्तं त्वाऽग्न इति । अयमर्थः–हे ' अग्ने ' 'ज्योतिष्मन्तं' ज्योतिर्युक्तं सुप्रतीकं सुमुखावयवम्, अजस्रेण अनवच्छिन्नेन भानुना तेजसा ' दीद्यतं ' व्यत्ययेन शतृप्रत्ययः, दीप्यमानम्; ' शिवं ' शान्तम्, ' प्रजाभ्यः ' प्रजार्थं शिवमिति सम्बन्धः; ' अहिंसन्तं ' प्राणिनां हिंसामकुर्वाणम्, पृथिव्यादि व्याख्यातम् । तादृशमग्निं भूप्रदेशादग्निवत् खनामः अध्वर्यव इति ॥ २ ॥

( द्वा ) द्वाभ्यां खनति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्खनत्यथो द्वयᳪं ह्येवैतद्रूपं मृच्चापश्च ॥ ३ ॥

स वै खनामि खनामऽ इति खनति । खनामीति वाऽएतं प्रजापतिरखनत्खनामऽ इति देवास्तस्मात्खनामि खनामऽ इति ॥ ४ ॥

स वाऽअभ्र्या खनन् । ( न्वा ) न्वाचा खनामि खनामऽइत्याह न्वाग्वाऽ अभ्रिरारम्भायैवेयं न्वैणवी क्रियते न्वाचा वा ऽएतमभ्र्या देवाऽ अखनं-स्तथैवैनमयमेतद्वाचैवाभ्र्या खनति ॥ ५ ॥

( त्थ ) अथैनं कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञऽएवैनमेतत्सम्भरति लोमतश्छन्दाᳪंसि वै लोमानि च्छन्दःस्वेवैनमेतत्सम्भरति तत्तूष्णीमुपस्तृणाति यज्ञो वै कृष्णाजिनं प्रजापतिर्वै यज्ञोऽनिरुक्तो वै प्रजापतिरुत्तरतस्तस्योपरि बन्धुः प्राचीनग्रीवे तद्धि देवत्रा ॥ ६ ॥

---

द्वाभ्यां खनति । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतत्खनति । अथो द्वयं ह्येवैतद्रूपम्–मृच्चापश्च ॥ ३ ॥

स वै खनामि खनाम–इति खनति । खनाम इति वाऽएतं प्रजापतिरखनत्, खनाम इति देवाः । तस्मात् खनामि खनाम इति ॥ ४ ॥

स वाऽअभ्र्या खनन्वाचा–' खनामि खनाम ' इत्याह । वाग्वाऽअभ्रिः । आरम्भायैवेयं वैणवी क्रियते । वाचा वाऽएतमभ्र्या देवा अखनन् । तथैवैनमयमेतद्वाचैवाभ्र्या खनति ॥ ५ ॥

अथैनं कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनम् । यज्ञऽएवैनमेतत् सम्भरति । लोमतः ।

---

खननमन्त्रगतां द्वित्वसङ्ख्यां यजमानरूपाग्न्यात्मना प्रशंसति–द्वाभ्यां खनति द्विपादिति । प्रकारान्तरेण स्तौति–अथो द्वयमिति । मृत्तिका, उदकानि चेति द्वयमित्यर्थः ॥ ३ ॥

यद्यु " देवस्य त्वा "–इति पूर्वमन्त्रः, तत्र खनामीत्येकवचनम्, ज्योतिष्मन्तमिति द्वितीयमन्त्रे खनाम इति बहुवचनम् । तस्योभयस्य निर्वाहमाह–स वै खनामीति । प्रजापतिविवक्षया एकवचनम्, देवविवक्षया बहुवचनम् । ते च अग्निकर्मान्वतिष्ठन् ॥ ४ ॥

प्रागुक्तं खननसाधनं विदधत् तस्य वाग्रूपतामाह–स वा अभ्र्या खनन्निति । यदि वाग्भिस्तर्हि वाचैव खननं युक्तम्, किमभ्रिकरणेनेति, तत्राह–आरम्भायेति । ' आरम्भाय ' आलम्भनायैव इयं वेणुमयी अभ्रिः । क्रियते ( श. प. १ । ३ । १ । ३२ । भा. ) ॥ ५ ॥

अत्र कात्यायनः–" कृष्णाजिनमास्तीर्योत्तरतस्तस्मिन् पुष्करपर्णमपाम्पृष्ठमिति, विमार्ष्ट्येनद् दिव इति, आलभत उभे शर्म च स्थ इति "–( का. श्रौ. सू. १६ । १६–१८ ) अयमर्थः । उत्तरतो देशे कृष्णाजिनं

(ब्रा.५थै) अ॒थै॒नं पु॒ष्क॒रप॒र्णे सम्भ॑रति । योनि॒र्वै पु॒ष्क॒रप॒र्णं यो॒नौ त॒द्रेतः॑ सिञ्चति य॒द्वै यो॒नौ रेतः॑ सि॒च्यते॑ त॒त्प्रज॑निष्णु भवति त॒न्मन्त्रे॑णोपस्तृ॒णाति॒ वाग्वै मन्त्रो॒ वाक्पु॑ष्करप॒र्णम् ॥ ७ ॥

( म ) अ॒पां पृ॒ष्ठम॑सि॒ योनि॑र॒ग्नेरि॒ति । ( त्य ) अ॒पाᳬं ह्ये॒तत्पृ॒ष्ठं योनि॒र्ह्यै॒तद॒ग्नेः स॑मु॒द्रम॒भितः॒ पिन्व॑मान॒मिति॑ समु॒द्रो ह्ये॒तद॒भितः॒ पिन्व॑ते॒ वर्द्ध॑मानो म॒हाँ॥आ च॒ पुष्क॑र॒ऽइति॒ वर्द्ध॑मानो॒ मही॑यस्व॒ पुष्क॑र॒ऽइत्ये-

---

छन्दांसि वै लोमानि । छन्दःस्वेवैनमेतत् सम्भरति । तत् तूष्णीमुपस्तृणाति । यज्ञो वै कृष्णाजिनम् । प्रजापतिर्वै यज्ञः । अनिरुक्तो वै प्रजापतिः । उत्तरतः । तस्योपरि बन्धुः । प्राचीनग्रीवे । तद्धि देवत्रा ६॥

अथैनं पुष्करपर्णे सम्भरति । योनिर्वै पुष्करपर्णम् । योनौ तद्रेतः सिञ्चति । यद्वै योनौ रेतः सिच्यते—तत् प्रजनिष्णु भवति । तन्मन्त्रेणोपस्तृणाति । वाग्वै मन्त्रः, वाक् पुष्करपर्णम् ॥ ७ ॥

" अपां पृष्ठमसि योनिरग्नेः "—इति । अपां ह्येतत् पृष्ठम् । योनिर्ह्येतदग्नेः । " समुद्रमभितः पिन्वमानम् "—इति । समुद्रो ह्येतदभितः पिन्वते । " वर्द्धमानो महान्—आ च पुष्करे "—इति । वर्द्धमानो महीयस्व पुष्कर इत्येतत् । " दिवो मात्रया वरिम्णा प्रथस्व "—

---

प्राग्ग्रीवमुत्तरलोम तूष्णीमास्तीर्य, तस्मिन् कृष्णाजिने अपाम्पृष्ठमिति मन्त्रेण । पुष्करपर्णमास्तृणाति । एनत् पुष्करपर्णं दिवो मात्रयेति चतुर्थपादेन विमार्ष्टि । ततः कृष्णाजिनपुष्करपर्णे—" शर्म च स्थो वर्म च स्थः "—इति मन्त्राभ्यामालभेतेति । तदिदं ब्राह्मणशेषेण विधीयते—अथैनं कृष्णाजिन इति । ' एनम् ' मृत्पिण्डम् । यद्यपि कृष्णाजिनस्योपरि पुष्करपर्णे मृत्पिण्डसम्भरणम्, तथापि कृष्णाजिनसम्बन्धोऽप्यस्तीति मत्वा तस्मिन् सम्भरणोक्तिः । लोमत इति । लोमवत्प्रदेशे । कृष्णाजिनास्तरणममन्त्रकमित्याह—तत् तूष्णीमिति । तूष्णीमुपस्तरणमुपपादयति—यज्ञ इति । यज्ञस्य कृष्णाजिनत्वम्; " कृष्णो रूपं कृत्वोदक्रामत् "—( श. प. १ । १ । ४ । १ । भा. ) इत्याम्नानात् । यज्ञस्य प्रजापतित्वम्, प्रजापतिदेवत्यत्वात् । प्रजापतिर्हि सकलस्थूलसूक्ष्मप्रपञ्चात्मत्वेनायमीदृगिति निर्वक्तुमनर्हत्वात् अनिरुक्तः । तस्मात् तद्रूपस्य कृष्णाजिनस्यापि आस्तरणम् ' अनिरुक्तम्, ' अमन्त्रकमित्यर्थः । तदास्तरणस्य प्रदेशं विधत्ते—उत्तरत इति । आस्तरणस्तावकं ब्राह्मणमुत्तरत्र वक्ष्यत इत्याह—तस्योपरि बन्धुरिति । प्राचीनग्रीवेति । ग्रीवाप्रदेशः प्राचीनो यथा भवति तथा आस्तरणीयम् । ' देवत्रा ' देवेषु भवति । "देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्"—( पा. सू. ५ । ४ । ५६ ) इति देवशब्दात् ' त्रा '—प्रत्ययः ॥ ६ ॥

कृष्णाजिनस्योपरि विधातव्ये पुष्करपर्णे मृत्पिण्डसम्भरणं दर्शयति—अथैनमिति । योनिरिति । यतोऽग्निः पुष्करपर्णाज्जातः; तस्मात् तद्योनिरूपम्, अग्निश्च रेतोरूपः; इदानीमुत्पद्यमानत्वात् ' प्रजनिष्णु ' प्रजननशीलम् । वाक् पुष्करपर्णमिति । अग्निवाचोरन्यत्र तादात्म्यश्रवणात्—" अग्निर्वाग्भूत्वा मुखं प्राविशत् "—( ऐ. आ. २ । ४ । २ ) इति । पुष्करपर्णादग्नेर्जननात् कार्यकारणयोरभेदोपचारेण वागेव पुष्करपर्णमित्युक्तम् ॥ ७ ॥

तदास्तरणे मन्त्रं विधत्ते—अपाम्पृष्ठमिति । हे पुष्करपर्ण ! ' अपाम्पृष्ठम् ' उपरिस्थानम् ' असि, ' ' अग्नेः

तद्दिवो मात्रया वरिम्णा प्रथस्वेत्यनुविमाष्ट्यसौ वा ऽआदित्य ऽएषोऽग्निर्नो हैतमन्यो दिवो वरिमा यन्तुमर्हति द्यौर्भूत्वैनं यच्छेत्येवैतदाह ॥८॥

तदुत्तरं कृष्णाजिनादुपस्तृणाति । यज्ञो वै कृष्णाजिनमियं वै कृष्णाजिनमियमु वै यज्ञोऽस्याᳫँ हि यज्ञस्तायते द्यौः पुष्करपर्णमापो वै द्यौरापः पुष्करपर्णमुत्तरो वाऽअसावस्यै ॥ ९ ॥

( स्याऽअ ) अथैनेऽअभिमृशति । सञ्ज्ञामेवाभ्यामेतत्करोति शर्म च स्थो वर्म च स्थऽइति शर्म च ह्यस्यैते वर्म चाच्छिद्रे बहुलेऽउभेऽइत्यच्छिद्रे ह्येते बहुलेऽउभे व्यचस्वती संवसाथामित्यवकाशवती संवसाथामित्येतद्भृतमग्निं पुरीष्यमिति बिभृतमग्निं पशव्यमित्येतत् ॥ १० ॥

---

( वा. सं. ११।२९ ) इति । अनुविमार्ष्टि । असौ वा आदित्य एषोऽग्निः। नो हैतमन्यो दिवो वरिमा यन्तुमर्हति । द्यौर्भूत्वैनं यच्छ इत्येवैतदाह ॥ ८ ॥

तदुत्तरं कृष्णाजिनादुपस्तृणाति । यज्ञो वै कृष्णाजिनम् । इयं वै कृष्णाजिनम् । इयमु वै यज्ञः । अस्यां हि यज्ञस्तायते । द्यौः पुष्करपर्णम्, आपो वै द्यौः। आपः पुष्करपर्णम् । उत्तरो वा असावस्यै॰

अथैनेऽअभिमृशति । सञ्ज्ञामेवाभ्यामेतत्करोति । "शर्म च स्थो वर्म च स्थः"—इति । शर्म च ह्यस्यैते वर्म च । "अच्छिद्रे बहुलेऽउभे"—इति । अच्छिद्रे ह्येते बहुलेऽउभे । "व्यचस्वती सम्वसाथाम्"—इति । अवकाशवती सम्वसाथामित्येतत् । "भृतमग्निं पुरीष्यम्"—( वा. सं. ११ । ३० ) इति । बिभृतमग्निं पशव्यमित्येतत् ॥ १० ॥

---

योनिः' च 'असि,' 'समुद्रम्' समुन्दनशीलमुदकम् अभितः 'पिन्वमानं' वर्द्धमानं भवसि, किञ्च 'पुष्करे' 'वर्द्धमानः' जात एव 'आ' सर्वतः 'महान्' आस्तरणात् महत्त्वम्, अत एव 'आ महान्'—इति पदद्वयस्य 'महीयस्व'—इति व्याख्यानम् ॥

अन्तिमपादेन विसर्जनं विधत्ते—दिव इति । 'दिवः' द्युलोकस्य 'मात्रया' परिमाणेन 'वरिम्णा' अतिशयेनोरुणा त्वं 'प्रथस्व' विस्तीर्णो भव । पादं व्याचष्टे—असौ वा आदित्य इति । यतः 'एषः अग्निः' 'आदित्यः' अतो लोकत्रयमस्य 'वरिमा' उरुत्वम् 'एतम्' आदित्यात्मकं 'यन्तुं' परिच्छेत्तुं नार्हतीति । अतो 'द्यौः' द्युलोकात्मकं भूत्वा 'एनं' मृत्पिण्डं यच्छ परिच्छिन्नं कुर्विति पुष्करपर्णप्रार्थना ॥ ८ ॥

तदास्तरणस्य प्रदेशमाह—तदुत्तरं कृष्णाजिनादिति । 'तत्' पुष्करपर्णं 'कृष्णाजिनात्' 'उत्तरं' तस्योपरि 'आस्तृणाति' । एकस्योपरि अन्यस्यास्तरणं भूलोकद्युलोकात्मना प्रशंसति—यज्ञो वा इति । कृष्णाजिनपुष्करपर्णयोः भूलोकद्युलोकात्मत्वेन तयोर्यथा उत्तराधरभावः, एवं लोकयोरुत्तराधरभावो दृश्यत इत्याह—उत्तरो वा असावस्या इति । 'असौ' द्यौः । 'अस्यै' भूम्याः ॥ ९ ॥

अथैतयोः कृष्णाजिनपुष्करपर्णयोः युगपदभिमर्शनं विधत्ते—अथैने अभिमृशतीति । शक्यत्वादुभयोर्युगपदा-

(त्सुं) सुंव्वसाथाᳬ स्वर्व्विदा समीची ऽउरसाऽऽत्मनेति सुंव्वसाथामेनᳬ स्वर्व्विदा समीचीऽउरसा चात्मना चेत्येतदग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमिदित्यसौ वाऽआदित्य एषोऽग्निः सऽएष ज्योतिष्मानजस्रस्तमेतेऽअन्तरा बिभृतस्तस्मादाह ज्योतिष्मन्तमजस्रमिदिति ॥ ११ ॥

द्वाभ्यामभिमृशति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवाभ्यामेतत्सञ्ज्ञां करोत्यथो द्वयᳬ ह्येवैतद्रूपं कृष्णाजिनं च पुष्करपर्णं च ॥ १२ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ६-३-२ ॥ ( ४. १. ) ॥

---

"सम्वसाथां स्वर्विदा समीचीऽउरसाऽऽत्मना"–इति। सम्वसाथामेनं स्वर्विदा समीचीऽउरसा चात्मना चेत्येतत् । "अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित्"–( वा. सं. ११।३१) इति । असौ वाऽआदित्य एषोऽग्निः । स एष ज्योतिष्मानजस्रः तमेतेऽअन्तरा बिभृतः । तस्मादाह–ज्योतिष्मन्तमजस्रमिदिति ॥ ११ ॥

द्वाभ्यामभिमृशति । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा-तावतैवाभ्यामेतत् सञ्ज्ञां करोति । अथो द्वयं ह्येवैतद्रूपम् । कृष्णाजिनं च पुष्करपर्णं च ॥ १२ ॥

---

लम्भनम् । सञ्ज्ञामिति । समानसञ्ज्ञम् 'एतत्' एतेन अभिमर्शनेन 'करोति' कृतवान् भवति । तत्र मन्त्रद्वयं विधत्ते–शर्म च स्थ इति । कृष्णाजिनपुष्करपर्णे सम्बोध्ये 'शर्म' शरणं 'च' 'स्थः' युवयोरुपरि निधीयमानस्य मृत्पिण्डस्य 'शरणं' भवथः 'वर्म' कवचं 'च' अस्य 'स्थः' भवथः । 'अच्छिद्रे' छिद्ररहिते 'बहुले' महाप्राणे 'उभे' युवां 'व्यचस्वती' अवकाशवत्यौ भूत्वा 'संवसाथाम्' आच्छादयतं मृदम् । वसेराच्छादनार्थस्य रूपम् ( धा. पा. अ. आ. १३ ) । 'पुरीष्यं' पशव्यम् अग्निम् 'भृतम्' । भृञो लोटि बहुलवचनाद् द्विर्वचनाभावः । एतयोः शरणत्वं कवचत्वं मृत्पिण्डमुद्दिश्य व्याचष्टे—शर्म च ह्यस्यैते वर्म चेति ॥ १० ॥

संवसाथामिति । 'समीची' समञ्चने, युवां कृष्णाजिनपुष्करपर्णे 'उरसा' हृदयेन विज्ञानेन, 'आत्मना' अवयवसंस्थानेन च 'संवसाथाम्' सञ्छादयतम् 'एनं' मृद्रूपमग्निम् । किमर्थम्? 'स्वर्विदा' स्वर्गलाभाद्धेतोः; 'अजस्रम्' अनुपक्षीणम् 'इत्' एव 'ज्योतिष्मन्तम्' तेजस्विनम् 'अग्निम्', 'अन्तरा' युवयोर्मध्यप्रदेशे 'भरिष्यन्ती' धारयमाणे भवेतमिति शेषः । द्वितीयमन्त्रस्योत्तरार्द्धं व्याचष्टे—असौ वा आदित्य इति ॥ ११ ॥

अभिमर्शनमन्त्रगतां द्वित्वसङ्ख्यां यजमानाग्निरूपेण प्रशंसति–द्वाभ्यामिति, व्याख्यातम् ( श. प. ६ । ३ । ३ । २१४ ) ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ६-४-१ ) ॥

अ॒थ मृ॒त्पि॒ण्डम॒भि॒मृ॒शति । पु॒री॒ष्यो॑ऽसी॒ति प॒श॒व्यो॑ऽसी॒त्ये॒त॒द्वि॒श्वम्भ॒रा ऽइ॒त्ये॒ष हीद॒ꣳ स॒र्व्वं बि॒भ॒र्त्य॒थ॒र्व्वा त्वा प्रथ॒मो नि॒रम॒न्थद॒ग्ने॒ऽइ॒ति प्रा॒णो वा॒ऽअथ॒र्व्वा प्रा॒णो वा॒ऽए॒त॒म॒ग्रे नि॒रम॒न्थ॒त्त॒द्यो॒ऽसा॒व॒ग्रे॒ऽग्नि॒र॒सृ॒ज्य॒त सो॒ऽसी॒ति त॒दा॒ह त॒मे॒वै॒न॒मे॒त॒त्क॒रो॒ति ॥ १ ॥

( त्यु ) अ॒थै॒नं प॒रि॒गृ॒ह्णा॒ति॑ । ( त्यु ) अ॒भ्र्या च॑ द॒क्षि॒ण॒तो ह॒स्ते॑न च॒ ह॒स्ते॑-नै॒वो॒त्त॒र॒त॒स्त्वा॒म॒ग्ने पु॒ष्क॒रा॒द॒ध्य॒थ॒र्व्वा नि॒रम॒न्थ॒ते॒त्या॒पो॒ वै पु॒ष्क॒रं प्रा॒णो-ऽथ॒र्व्वा प्रा॒णो वा॒ऽए॒त॒म॒ग्रे॒ऽद्भ्यो नि॒रम॒न्थ॒न्मू॒र्ध्नो वि॒श्व॒स्य वा॒घ॒त॒ऽ इ॒त्य॒स्य स॒र्व्व॒स्य मू॒र्द्ध॒ऽ इ॒त्ये॒त॒त् ॥ २ ॥

---

अथ मृत्पिण्डमभिमृशति । " पुरीष्योऽसि "-इति । पशव्योऽसीत्येतत् । " विश्वंभराः "-इति । एष हीदं सर्वं बिभर्त्ति । " अथर्वा त्वा प्रथमो निरमन्थदग्ने "-( वा० सं० ११। ३२ ) इति । प्राणो वाऽअथर्वा, प्राणो वाऽएतमग्रे निरमन्थत् । तद् योऽसावग्रेऽग्निरसृज्यत-सोऽसीति । तदाह । तमेवैनमेतत्करोति ॥ १ ॥

अथैनं परिगृह्णाति-अभ्र्या च, दक्षिणतो हस्तेन च । हस्तेनैवोत्तरतः । " त्वामग्ने पुष्करा-दध्यथर्वा निरमन्थत "-इति । आपो वै पुष्करम्, प्राणोऽथर्वा । प्राणो वाऽएतमग्रेऽद्भ्यो निरमन्थत् । " मूर्ध्नो विश्वस्य वाघतः "-( वा. सं ११ । ३२ ) इति । अस्य सर्वस्य मूर्ध्न इत्येतत् ॥ २ ॥

---

कात्यायनः-" पिण्डं पुरीष्योऽसीति, पाणिभ्यां परिगृह्णात्येनं दक्षिणोत्तराभ्यां, दक्षिणः साभ्रिस्त्वामग्न इति षड्भिः सर्वं सकृद् धृत्वा, पुष्करपर्णे निदधाति "-( का. श्रौ. सू. १६ । ६९ । ७० ) " त्वामग्ने "-इत्या-दिभिः षड्भिः ऋग्भिः यावदपेक्षितां मृदं ' सर्वं ' ' सकृत् ' एकवारमेव गृहीत्वा ' पुष्करपर्णे ' निदध्यादिति । तदिदं द्वितीयम् । प्रथमतो ' मृत्पिण्डं ' " पुरीष्योऽसि " इति मन्त्रेण आलभते । अथ दक्षिणोत्तराभ्यां ' पाणिभ्याम् ' ' एनं ' ' परिगृह्णाति ' । तत्र ' दक्षिणः ' हस्तः ' साभ्रिः ' अभ्रिसहितः, वामस्तु केवलः । अथ तद् ब्राह्मणेन विधीयते-अथ मृत्पिण्डमिति ॥

मृत्पिण्डाभिमर्शनयजुषोऽयमर्थः-हे ' अग्ने ! ' त्वम् ' पुरीष्यः ' पशुहितः ' असि, ' ' विश्वम्भराः ' भूलो-कस्य सर्वस्य धारकश्च; चीयमानाग्नेर्विराड्रूपत्वात् । 'अथर्वा' अरणवान्, प्राणः 'प्रथमः' पूर्वः 'त्वा' त्वां 'निरम-न्थत्' निर्मथितवान् । पुरीष्योऽसीति सिद्धवत्कथनेन यदुक्तम्, तदुपपादयति-पशव्योऽसीति । " प्राणो वा अथर्वा "-इत्यर्थवादादस्य सिद्धवदर्थकथनम्-तद् योऽसावग्रेऽग्निरसृज्यत सोऽसीतीति । पूर्वं योऽग्निः सृष्टः, तमेतं पुरीष्योऽसीत्यनेनोक्तवान् भवतीत्यर्थः ॥ १ ॥

अथैनामिति । ' परिगृह्णाति ' मृत्पिण्डं धारयन् प्राङ्मुखस्याध्वर्योः ' दक्षिणतः ' प्रदेशे वर्तमानः, दक्षिणो हस्तः साभ्रिः, उत्तरतः केवलः, ताभ्यां पाणिभ्यां धारयेत । ग्रहणमन्त्रान् विधत्ते-त्वामग्ने पुष्करादधि-इत्या-रभ्य, ताः षट् सम्पद्यन्ते-इत्यतः प्राक्तनेन । तत्राद्यास्तिस्रो गायत्र्यः, त्रिष्टुभौ द्वे, षष्ठी बृहती । "त्वामग्ने"

(तु) तमु त्वा दध्यङ्ङृषिः । पुत्र ईधेऽअथर्वणऽइति वाग्वै दध्यङ्ङाथर्वणः सऽ एनं ततऽ ऐन्द्ध वृत्रहणं पुरन्दरमिति पाप्मा वै वृत्रः पाप्महनं पुरन्दरमित्येतत् ॥ ३ ॥

(तु)तमु त्वा पाथ्यो वृषा । समीधे दस्युहन्तममिति मनो वै पाथ्यो वृषा सऽ एनं ततऽ ऐन्द्ध धनञ्जयꣳ रणेरणऽइति यथैव यजुस्तथा बन्धुः ॥ ४ ॥

(गा) गायत्रीभिः । प्राणो गायत्री प्राणमेवास्मिन्नेतद्दधाति तिसृभिस्त्रयो वै प्राणाः प्राणऽउदानो व्यानस्तानेवास्मिन्नेतद्दधाति तासां नव पदानि नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति ॥ ५ ॥

---

"तमु त्वा दध्यङ्ङृषिः पुत्र ईधेऽअथर्वणः"–इति । वाग्वै दध्यङ्ङाथर्वणः । स एनं तत ऐन्द्ध । "वृत्रहणं पुरन्दरम्"–( वा. सं. ११ । ३३ ) इति । पाप्मा वै वृत्रः । पाप्महनं पुरन्दरमित्येतत् ॥ ३ ॥

"तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्"–इति । मनो वै पाथ्यो वृषा, स एनं तत ऐन्द्ध । "धनञ्जयं रणे रणे"–( वा. सं. ११।३४ ) इति । यथैव यजुस्तथा बन्धुः ॥ ४ ॥

गायत्रीभिः । प्राणो गायत्री । प्राणमेवास्मिन्नेतद्दधाति । तिसृभिः । त्रयो वै प्राणाः–प्राण उदानो व्यानः । तानेवास्मिन्नेतद्दधाति । तासां नव पदानि । नव वै प्राणाः–सप्त शीर्षन्, अवाञ्चौ द्वौ । तानेवास्मिन्नेतद्दधाति ॥ ५ ॥

---

इत्यस्यायमर्थः–हे 'अग्ने' 'त्वाम्' 'अथर्वा' अरणशीलः प्राणः, 'पुष्करात्' उदकात्, 'अधि'–शब्दः पञ्चम्यर्थानुवादी, 'निरमन्थत' । अग्निं विशिनष्टि–विश्वस्य वाघत इति । 'मूर्ध्नः' मूर्द्धानम् । कर्मणि षष्ठी । पुष्करार्थर्वपदयोरर्थमाह–आपो वै पुष्करं प्राणोऽथर्वेति ॥ २ ॥

द्वितीयामृचं विधत्ते–तमु त्वा दध्यङ्ङिति । 'अथर्वणः पुत्रः' 'दध्यङ्' नाम ऋषिः 'वृत्रहणं' वृत्रस्य पाप्मनः हन्तारम्, 'पुरन्दरं' असुरपुराणां दारयितारं 'त्वाम्' एव 'ईधे' दीपयति । "ञिइन्धी दीप्तौ" ( धा. पा. रु. आ. ११ )। लिटि "इन्धिभवतिभ्याञ्च"–( पा.सू.१।२।६ ) इति कित्त्वान्नलोपः । दध्यङ्ङाथर्वण इति मधुप्रवचनात् वाक्त्वेन श्रुतिः ॥ ३ ॥

तृतीयामृचं विधत्ते–तमु त्वा पाथ्य इति । पाथोऽन्नम्, तत्कार्यत्वात् तत्र भवः 'पाथ्यः' । "पाथोनदीभ्यां ड्यण्" ( पा. सू. ४ । ४ । १११ ) बलम् । सर्वेन्द्रियानुग्राहकः । 'पाथ्यो वृषा'–इति मन उच्यते; "मनो वै पाथ्यो वृषा"–इति श्रुतौ व्याख्यानात् । 'दस्युहन्तमम्' शत्रूणामतिशयेन हन्तारम्, 'रणे' संग्रामे 'धनञ्जयं' धनस्य जेतारं 'त्वा' त्वां 'समीधे' । तृतीयपादो विस्पष्टार्थत्वाद् व्याख्यातुं नार्हतीत्याह–यथैव यजुः, तथा बन्धुरिति ॥ ४ ॥

उक्तानां तिसृणामृचां गायत्रीच्छन्दस्त्वमनूद्य प्रशंसति–गायत्रीभिः प्राण इति । गायत्र्याः प्राणरूपत्व-

( त्यु ) अथैते त्रिष्टुभाऽउत्तरे भवतः । ( ऽ ) आत्मा वै त्रिष्टुबात्मान-मेवास्यैताभ्याꣳ संस्करोति सीद होतः स्वऽउ लोके चिकित्वानित्यग्निर्वै होता तस्यैष स्वो लोको यत्कृष्णाजिनं चिकित्वानिति विद्वानित्येतत्-त्सादया यज्ञꣳ सुकृतस्य योनाविति कृष्णाजिनं वै सुकृतस्य योनिर्देवा-वीर्देवान्हविषा यजासीति देवः सन्देवानवन्हविषा यजासीत्येतदग्ने बृह-द्यजमाने वयो धाऽ इति यजमानायाशिषमाशास्ते ॥ ६ ॥

नि होता होतृषदने विदानऽ इति । ( त्य ) अग्निर्वै होता कृष्णा-जिनꣳ होतृषदनं विदानऽइति विद्वानित्येतत्त्वेषो दीदिवाꣳ॥ऽअसद-त्सुदक्षऽ इति त्वेषो दीप्यमानोऽसदत्सुदक्षऽ इत्येतददन्धव्व्रतप्रमति-

---

अथैते त्रिष्टुभाऽउत्तरे भवतः । आत्मा वै त्रिष्टुप् । आत्मानमेवास्यैताभ्यां संस्करोति । " सीद होतः स्वऽउ लोके चिकित्वान् "–इति । अग्निर्वै होता । तस्यैष स्वो लोको–यत् कृष्णा-जिनम् चिकित्वान्–इति । विद्वानित्येतत् । " सादया यज्ञं सुकृतस्य योनौ "–इति । कृष्णाजिनं वै सुकृतस्य योनिः । " देवावीर्देवान् हविषा यजासि "–इति । देवः सन् देवा-नवन् हविषा यजासीत्येतत् । " अग्ने बृहद् यजमाने वयो धाः "–( वा० सं० ११ । ३५ ) इति । यजमानायाशिषमाशास्ते ॥ ६ ॥

"नि होता होतृषदने विदानः"–इति । अग्निर्वै होता । कृष्णाजिनं होतृषदनम् । विदान इति–विद्वानित्येतत् । " त्वेषो दीदिवान् असदत् सुदक्षः "– इति । त्वेषो दीप्यमानोऽसदत्सु-

---

मुक्तम् । मन्त्रगतत्रित्वसंख्यां प्राणोदानव्यानात्मना प्रशंसति–तिसृभिस्त्रयो वै प्राणा इति । एकैकस्या गायत्र्या ऋचः त्रयस्त्रयः पादाः । तासां नव पादान् सम्भूय नवप्राणात्मना प्रशंसति–तासां नव पदानि, नव वै प्राणा इति । एतेन मन्त्रत्रयेण मृत्पिण्डस्य परिग्रहे तस्यां मृदि प्राणानेव संहितवान् भवतीत्यर्थः ॥ ५॥

धारणमन्त्रेषु त्रिष्टुभावित्युक्तम्, तौ विधातुं तद्गतं छन्दः प्रशंसति–अथैतत्रिष्टुभा ऽउत्तरे भवत इति । त्रिष्टुभ आत्मरूपत्वं प्रागुक्तम्, ताभ्यां मन्त्राभ्यां धारणेन मृत्पिण्डस्यात्मानं स्वरूपमेव संस्कृतवान् भवति ॥

त्रिष्टुभौ विधत्ते–सीद होतरिति । हे 'होतः !' देवानामाह्वातः ! मृद्रूपाग्ने ! 'स्वे' स्वकीये कृष्णाजिने 'सीद' निषीद । 'चिकित्वान्' विद्वान्, अस्मदीयं कर्म जानन्, तथा 'सुकृतस्य' सुष्ठु क्रियमाणस्य कर्मणो 'योनौ' स्थाने 'यज्ञं' 'सादय' । कृष्णाजिने विस्तीर्यमाणे व्रीह्यवघातः पेषणं सोमनिधानादिकं च भवतीति 'देवावीः' । "अवितृस्तृतन्त्रिभ्य ईः" ( उ. ३ पा. १९८ सू. ) । देवान् त्वं सपर्यन् 'हविषा' 'अवन्' 'यजासि' यजतेः पञ्चमे लकारे रूपम् । हे 'अग्ने' ! 'यजमाने' 'बृहत्' प्रभूतं 'वयः' धनं 'धाः' धेहि ॥ ६ ॥

नि होतेति । मन्त्रं प्रतिपादमनूद्य व्याचष्टे–अग्निर्वै होतेति । 'नि'–इत्युपसर्गः 'असदद्'–इति

वसिष्ठऽइत्यदब्धव्रतप्रमतिर्ह्येष वसिष्ठः सहस्रम्भरः शुचिजिह्वोऽअग्निरिति सर्वं वै सहस्रꣳ सर्वम्भरः शुचिजिह्वोऽग्निरित्येतद्द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्यां तस्योक्तो बन्धुः ॥ ७ ॥

( ३ ) अथैषा बृहत्युत्तमा भवति । बृहतीं वाऽएष सञ्चितोऽभिसम्पद्यते यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतामत्र बृहतीं करोति तस्मादेष सञ्चितो बृहतीमभिसम्पद्यते ॥ ८ ॥

---

दक्षः–इत्येतत् । " अदब्धव्रतप्रमतिर्वसिष्ठः "–इति । अदब्धव्रतप्रमतिर्ह्येष वसिष्ठः । " सहस्रम्भरः शुचिजिह्वोऽअग्निः "–( वा. सं. ११ । ३६ ) इति । सर्वं वै सहस्रम् । सर्वम्भरः शुचिजिह्वोऽग्निरित्येतत् । द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्याम् । तस्योक्तो बन्धुः ॥ ७ ॥

अथैषा बृहत्युत्तमा भवति । बृहतीं वाऽएष सञ्चितोऽभिसम्पद्यते । यादृग्वै योनौ रेतः सिच्यते–तादृग् जायते । तद्यदेतामत्र बृहतीं करोति–तस्मादेष सञ्चितो बृहतीमभिसम्पद्यते ॥ ८ ॥

---

क्रियया सम्बध्यते, निषीदति । ' होता ' आह्वाता योऽग्निः, ' होतृषदने ' अग्नेः सदने कृष्णाजिने ' विद्वान् '-कर्म जानन् , ' त्वेषः ' " त्विष दीप्तौ "–( धा. पा. भ्वा. उ. १००९ ) दीप्यमानः, ' दीदिवान् , ' ' सुदक्षः ' सुबलः, साधु क्षिप्रकारी वा ' अदब्धव्रतप्रमतिः ' अनुपहतकर्मविषयप्रकृष्टमतिः ' वसिष्ठः ' वसुमत्तरः, ' सहस्रम्भरः ' सर्वस्य भर्त्ता, यद्वा " ह्रग्रहोर्भः "–( पा. सू. ८ । २ । ३२ वा. ) सहस्रधा विह्रियमाणः । तथा चैतरेयकब्राह्मणम्–" एष ह वा अस्य सहस्रंभरता यदेनमेकं सन्तं बहुधा विहरन्ति " इति । अनयोर्ऋचोर्द्वित्वसङ्ख्याऽऽग्नेयत्रिष्टुप्स्तावकं ब्राह्मणमतिदिशति–तस्योक्तो बन्धुरिति । " आ त्वा जिघर्मि " इत्येताभ्यां व्यतिषक्ताभ्यामाहुतिद्वयं कार्यमित्यत्र प्रकरणे " द्वाभ्यामभिजुहोति–द्विपाद् यजमानः " ( श. प. ६ । २ । १ । २१ ) इत्यादिना ॥ ७ ॥

षष्ठीमृचं विधातुं तद्गतं बृहतीच्छन्दः प्रशंसति–अथैषा बृहतीति । एषा वक्ष्यमाणा । बृहतीं वा एष इति । 'सञ्चितः' अग्निः 'बृहतीम्' ' अभिसम्पद्यते ' सम्पत्त्यक्षरसङ्ख्याको भवति; अथाप्युत्तरत्र बृहतीसम्पत्तिराम्नास्यते । सामान्येनायं सम्पत्तिप्रकारः,–संवत्सररूपोऽग्निरिति प्रागुक्तम् । तत्र संवत्सरे द्वादश पौर्णमास्यः, द्वादश कृष्णाष्टम्यः, द्वादशामावास्याः, ताः षट्त्रिंशत् संवत्सरे धार्यमाणेऽग्नौ सम्पद्यन्ते, बृहत्यपि षट्त्रिंशदक्षरेति तत्साम्यम् ।

एवं तर्हि अग्निचयनकर्मान्ते सम्पत्तिर्वक्तव्येति चेत्, तत्राह–यादृग्वै योनाविति । ' योनौ यादृग् रेतः सिच्यते, ' ' तादृग् ' एवोत्तरं ' जायते ' । अत इदानीं बीजभूतमृद्रूपाग्नेः बृहत्या धारणे बृहत्यात्मकत्वमेव तस्य सम्पादितवान् भवति ॥ ८ ॥

सꣳसीदस्व महाँ२॥ऽअसीति । (ती) इदमेवैतद्रेतः सिक्तꣳ सꣳसादयति तस्माद्योनौ रेतः सिक्तꣳ सꣳसीदति शोचस्व देववीतम ऽइति दीप्यस्व देववीतमऽइत्येतद्वि धूममग्नेऽअरुषं मियेध्य सृज प्रशस्त दर्शतमिति यदा वाऽएष समिध्यतेऽथैष धूममरुषं विसृजते दर्शतमिति ददृशऽइव ह्येषः ॥ ९ ॥

(ष ताः) ताः षट् सम्पद्यन्ते । षडृतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति यद्वेव संवत्सरमभिसम्पद्यते तद्बृहतीमभिसम्पद्यते बृहती हि संवत्सरो द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्यास्तत्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा बृहती तं दक्षिणत ऽउदञ्चमाहरति दक्षिणतो वा ऽउदग्योनौ रेतः सिच्यतऽएषो ऽअस्यैतर्हि योनिरविच्छेदमाहरति रेतसोऽविच्छेदाय ॥ १० ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ६।३।३ ॥ ( ४–२ )

---

" संसीदस्व महान् असि "–इति । इदमेवैतद् रेतः सिक्तं संसादयति । तस्माद्योनौ रेतः सिक्तं संसीदति । " शोचस्व देववीतमः "–इति । दीप्यस्व देववीतमः–इत्येतत् । " वि धूममग्नेऽअरुषम्मियेध्य सृज प्रशस्त दर्शतम् "–( वा. सं. ११ । ३७ ) इति । यदा वाऽएष समिध्यते–अथैष धूममरुषं विसृजते । दर्शतमिति । ददृश ऽइव ह्येषः ॥ ९ ॥

ताः षट् सम्पद्यन्ते । षडृतवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावत्तद् भवति । यद्वेव संवत्सरमभिसम्पद्यते–तद्बृहतीमभिसम्पद्यते । बृहती हि संवत्सरः । द्वादश पौर्णमास्यो, द्वादशाष्टकाः, द्वादशामावास्याः । तत् षट्त्रिंशत् । षट्त्रिंशदक्षरा बृहती । तं दक्षिणत उदञ्चमाहरति । दक्षिणतो वा उदग्योनौ रेतः सिच्यते । एषोऽस्यैतर्हि योनिरविच्छेदमाहरति–रेतसोऽविच्छेदाय ॥ १० ॥

---

तामृचं विधत्ते–संसीदस्व महानिति । हे 'अग्ने' ! मृद्रूप ! 'संसीदस्व' सम्यग् बीजात्मनाऽवतिष्ठस्व, यतो 'महान्' त्वम् 'असि' 'देववीतमः' अतिशयेन हविषा देवानां तर्पयितृतमः, त्वं 'शोचस्व' दीप्यस्व । हे 'मियेध्य' मेधो यज्ञस्तदर्हतीति हे 'प्रशस्त' प्रकर्षेण स्तुत ! अग्ने ! दर्शतम्' दर्शनीयम्, 'अरुषम्' अरोचमानं धूमं 'विसृज' ॥

मन्त्रं व्याचष्टे–इदमेवैतादिति । उत्पत्स्यमानाग्ने रेतोरूपत्वात् मृत्पिण्डस्य बाहुभ्यां धारणं नाम योनौ सिक्तस्य रेतसः संसादनमित्यर्थः । 'धूमं विसृज'–इति यदुक्तम्, तदुपपादयति–यदा वा एष समिध्यत इति ॥ ९ ॥

परिग्रहणे विनियुक्तानां मन्त्राणां संख्यां सम्भूय संवत्सराग्न्यात्मना प्रशंसति–ताः षट् सम्पद्यन्त इति ।

अथ तत्राप उपनिनयति । यद्वाऽअस्यै क्षतं यद्विलिष्टमद्भिर्वै तत्सन्धीयतेऽद्भिरेवास्याऽएतत्क्षतं विलिष्टꣳ सन्तनोति सन्दधाति ॥ १ ॥

( त्य ) अपो देवीरुपसृज । मधुमतीरयक्ष्माय प्रजाभ्यऽ इति रसो वै मधु रसवतीरयक्ष्मत्वाय प्रजाभ्यऽ इत्येतत्तासामास्थानादुज्जिहतामोषधयः सुपिप्पला ऽइत्यपां वाऽआस्थानादुज्जिहतऽओषधयः सुपिप्पलाः ॥ २ ॥

---

अथ तत्राप उपनिनयति । यद्वाऽअस्यै क्षतम्, यद्विलिष्टम्–अद्भिर्वै तत् सन्धीयते । अद्भिरेवास्याऽएतत् क्षतं विलिष्टं सन्तनोति, सन्दधाति ॥ १ ॥

" अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः "–इति । रसो वै मधु । रसवतीरयक्ष्मत्वाय प्रजाभ्य इत्येतत् । " तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः "–( वा. सं. ११ । ३८ ) इति । अपां वाऽआस्थानादुज्जिहतऽओषधयः सुपिप्पलाः ॥ २ ॥

---

प्रकारान्तरेण स्तोतुमनुवदति–यद्वेव संवत्सरमिति । संवत्सरे तावद्द्वादश पौर्णमास्यः, द्वादशाष्टकाः, द्वादशामावास्याः; एवं षट्त्रिंशत्संख्या सम्पद्यते, बृहत्या अपि षट्त्रिंशदक्षरत्वात् संवत्सरसञ्चितोऽग्निः बृहत्यात्मना सम्पद्यत इत्यर्थः ॥

विधत्ते–तं दक्षिणत उदञ्चमिति । ' तं ' मृत्पिण्डं ' दक्षिणतः ' प्रदेशात् ' उदञ्चम् ' उदङ्मुखम् आहरेत् । तत् प्रशंसति–दक्षिणतो वा इति । यतो लोके दक्षिणतः स्थितेन पुरुषेण, वामभागे स्थितायाः स्त्रियाः ' योनौ रेतः सिच्यते ' ' एतर्हि ' इदानीं मध्ये धार्यमाणस्याग्नेः एषः मृत्पिण्डो ' योनिः ' ' अविच्छेदं ' विच्छेदराहित्येन मृत्पिण्डाहरणं कर्त्तव्यम्; ' रेतसः ' रेतोभूतस्याग्नेः ' अविच्छेदाय ' इति ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये षष्ठकाण्डे चतुर्थेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ६–४–२ ) ॥

कात्यायनः–"अपः श्वभ्रेऽवनयत्यपो देवीरिति" ( का. श्रौ. सू. १६ । ७१ ) इति । उदकं निनयेत् । तद्विधत्ते–अथ तत्राप उपनिनयतीति । अनन्तरं ' तत्र ' ' अपः ' ' निनयेत् ' आसिञ्चेत् । तत् प्रशंसति–यद्वा अस्यै क्षतमिति । ' अस्यै ' षष्ठ्यर्थः । पृथिव्याः यत् ' क्षतं ' खण्डितम, ' यत् ' च ' विलिष्टम्, ' " लिश अल्पीभावे "–( धा. पा. दि. आ. ७२ ) अल्पं स्थलम्, 'तत्' सर्वं स्थलम् ' अद्भिः ' ' सन्धीयते ' जलसन्धाने हि विषमं स्थलं समं भवति । तस्मादापः कुण्डे निधेयाः ॥ १ ॥

मन्त्रं विधत्ते–अपो देवीरिति । अत्राग्निः सम्बोध्यते । ' प्रजाभ्यः ' प्रजानाम् ' अयक्ष्माय ' यक्ष्मा व्याधिः तदभावाय, ' मधुमतीः ' रसवतीः ' देवीः ' द्योतमानाः ' अपः ' . ' उपसृज ' आसिञ्च । आसां भूमिगतानामपाम् ' आस्थानात् ' उदकसंसृष्टभूदेशात् ' सुपिप्पलाः ' पिप्पलं पक्वं फलम्, सुफलाः, ' ओषधयः ' फलपाकान्ताः शाल्यादयः ' उज्जिहताम् ' उद्गच्छन्तु, रोहन्तु । " ओहाङ् गतौ " (धा. पा. जु. आ. ७ ) । ' अयक्ष्माय ' इति पदं भावत्वेन व्याचष्टे–अयक्ष्मत्वायेति ॥ २ ॥

(ऽ) अथैनां व्वायुना सुन्दधाति । यद्वाऽअस्यै क्षतं यद्विलिष्टं व्वायुना वै तत्सुन्धीयते व्वायुनैवास्याऽ एतुत्क्षतं व्विलिष्टᳪं सुन्तनोति सुन्दधाति ॥३॥

सुन्ते व्वायुर्मातरिश्वा दधात्विति । (त्य) अयं वै व्वायुर्मातरिश्वा योऽयं पुवतऽउत्तानाया हृदयं यद्विकस्तमित्युत्तानाया ह्यस्याऽ एतद्धृदयं व्विकस्तं यो देवानां चरसि प्राणथेनेत्येष हि सर्व्वेषां देवानां चरति प्राणथेन कस्मै देव व्वषडस्तु तुभ्यमिति प्रजापतिर्व्वै कस्तुस्माऽएवै-तुदिमां व्वषट्करोति नो हैतावत्यन्याऽऽहुतिरस्ति यथैषा ॥ ४ ॥

---

अथैनां वायुना सन्दधाति । यद्वाऽअस्यै क्षतम्, यद्विलिष्टम्–वायुना वै तत् सन्धीयते । वायुनै-वास्या एतत् क्षतं विलिष्टं सन्तनोति सन्दधाति ॥ ३ ॥

"सन्ते वायुर्मातरिश्वा दधातु"–इति । अयं वै वायुर्मातरिश्वा–योऽयं पवते । "उत्ता-नाया हृदयं यद्विकस्तम्"–इति । उत्तानाया ह्यस्या एतद्धृदयं विकस्तम् । "यो देवानां चरसि प्राणथेन"–इति । एष हि सर्वेषां देवानां चरति प्राणथेन । "कस्मै देव वषडस्तु तुभ्यम्"–( वा० सं० ११ । ३९ ) इति । प्रजापतिर्वै कः । तस्मा एवैतदिमां वषट् करोति । नो हैतावत्यन्याऽऽहुतिरस्ति–यथैषा ॥ ४ ॥

---

अत्र सूत्रम्–"सन्त इति वातमपक्षिपति"–( का. श्रौ. सू. १६।७२ ) इति । "सन्ते वायुर्मातरिश्वा"–इति मन्त्रेण वायुमवक्षिपेत्, मन्त्रपाठेनावटे वायुं पूरयेत् । तदिदं विधत्ते–अथैनां वायुना सन्दधातीति । 'एनां' खननभूमिम् । सन्धानवाक्यस्यार्थ इदानीमुक्तः । वायुना संधानं प्रशंसति–यद्वा अस्यै क्षतमिति । यथा लोके क्षतं श्वभ्रं निम्नस्थलं वायुना सन्धीयते । वायुसञ्चालितैः पर्णकण्टकादिकैः पूर्यते, एवमत्रा-पीति मन्तव्यम् ॥ ३ ॥

मन्त्रं विधत्ते–सन्ते वायुरिति । पूर्वोऽर्द्धर्चः, पृथिवीदेवत्यः, उत्तरो वायव्यः । 'उत्तानायाः' उन्मुखतया विस्तृतायाः 'ते' तव पृथिव्याः 'यत्' 'हृदयं' 'विकस्तम्' अवटकरणेन खातम् तत् 'मातरिश्वा' मातरि अन्तरिक्षे श्वसिति पवते इति 'मातरिश्वा' वायुः, 'सन्दधातु' सम्पूरयतु । उत्तरार्द्धे वायुं सम्बोध्योच्यते । 'यः' त्वं 'देवानाम्' अग्न्यादीनां वागादिदेवानां वा 'प्राणथेन' प्राणत्वेन 'चरसि' । वायौ सति वागादीन्द्रियाणि चेष्टन्ते । हे 'देव' द्योतमान वायो ! 'कस्मै' कः प्रजापतिः तद्रूपाय 'तुभ्यं' 'वषट् अस्तु' । इयं पृथिवी वषड्भूता भवतु । 'क'–पदस्यार्थमाह–प्रजापतिर्वै कः–इति । वषट्करणे-नाहुतिः कार्येति कृत्वा प्रशंसति–नो हैतावत्यन्याऽऽहुतिरिति । 'यथा' 'एषा' आहुतिः सन्धानकरी, एव-मन्या नास्तीत्यर्थः ॥ ४ ॥

( षु॒ऽथै ) अ॒थै॑नां दि॒ग्भिः सु॒न्दधाति । यद्वाऽअस्यै क्ष॒तं यद्वि॑लि॒ष्टं दि॒ग्भि॒र्वै तत्सु॒न्धीयते दि॒ग्भि॒रे॒वास्याऽएतत्क्ष॒तं वि॒लि॒ष्टꣳ सु॒न्तनोति सु॒न्दधाति सु॒ऽइ॒मां चे॒मां च दि॒शौ सु॒न्दधाति तु॒स्मादे॒ते दि॒शौ सु॒ꣳहिते॒ऽअ॒थे॒मां चे॒मां च तु॒स्माद्वे॒वै॒ते सु॒ꣳहिते॒ऽइत्य॒ग्रे॒ऽथे॒ति ॥ अथ॒त्यथे॒ति तु॒द्दक्षि॒णावृत्त॒द्धि दे॒वु॒त्राऽनु॒याऽनु॒या वै भे॒षजं क्रियते॒ऽनु॒यै॒वै॒नामे॒तद्भि॒षज्यति ॥५॥

(त्यु) अ॒थ कृ॒ष्णाजि॒नं च पु॒ष्करपर्णं च स॒मुद्गृह्णाति । यो॒नि॒र्वै पु॒ष्करपर्णं यो॒न्या तद्रे॒तः सि॒क्तꣳ स॒मुद्गृह्णाति तु॒स्माद्यो॒न्या रे॒तः सि॒क्तꣳ स॒मुद्गृह्यते सु॒जातो ज्यो॒तिषा सह शर्म वु॒रू॒थमा॒सदत्स्व॒रि॒ति सु॒जातो ह्ये॒ष ज्यो॒तिषा सह शर्म चै॒तद्व॒रूथं चु स्व॒श्चा॒सी॒दति ॥ ६ ॥

---

अथैनां दिग्भिः सन्दधाति । यद्वाऽअस्यै क्षतम्, यद्विलिष्टम्–दिग्भिर्वै तत् सन्धीयते । दिग्भिरेवास्या एतत् क्षतं विलिष्टं सन्तनोति सन्दधाति । स इमां चेमां च दिशौ सन्दधाति । तस्मादेते दिशौ संहिते । अथेमां चेमां च । तस्माद्वेवैते संहिते इत्यग्रे, अथेति, अथेति, अथेति–तद्दक्षिणाऽऽवृत् । तद्धि देवत्रा । अनया । अनया वै भेषजं क्रियते । अनयैवैनामेतद् भिषज्यति ॥ ५ ॥

अथ कृष्णाजिनं च पुष्करपर्णं च समुद्गृह्णाति । योनिर्वै पुष्करपर्णम् । योन्या तद् रेतः सिक्तं समुद्गृह्णाति । तस्माद्योन्या रेतः सिक्तं समुद्गृह्यते । "सुजातो ज्योतिषा सह शर्म वरूथमासदत् स्वः"–इति । सुजातो ह्येष ज्योतिषा सह शर्म चैतद्वरूथं च स्वश्चासीदाति ॥ ६ ॥

---

कात्यायनः–"अनामिकया संवपति पुरस्तात् पश्चाद् दक्षिणत उत्तरतश्च"–( का. श्रौ. सू. १६ । ७३ ) अनामिकाङ्गुल्या अवटस्य पुरस्तात् प्राच्या दिशः सकाशात् 'पांसुम्' अवटे संवपेत् । एवं प्रत्यगादिदिग्भ्यः सकाशात् । तत् विधत्ते–अथैनां दिग्भिः सन्दधातीति । तत्र क्रमं विधत्ते–स इमां चेमां च दिशौ सन्दधातीति । 'इमामिमाम्' इत्यभिनयेन प्राक्प्रतीच्यौ दिशौ विवक्ष्येते । एतयोर्विवक्षायां कारणमाह–'एते दिशौ' 'संहिते' । इमामिति लोकप्रसिद्धे प्राक्प्रतीच्याविति युज्यते, पुनः 'इमाञ्च'–इत्यनेन दक्षिणोदीच्यौ दिशौ विवक्ष्येते । अत्रापि संहितत्वमेव कारणम् । अथ चतुर्दिशं सन्धानप्रकारमभिनयेन दर्शयति–इत्यग्रेऽथेति । 'इति' एवम् 'अग्रे' प्रथमं प्राचीं दिशमित्यर्थः । इतरदिक्क्रियापेक्षया 'अथेति'–पदत्रयम् । उत्तरतः समापनं प्रशंसति–तद् दक्षिणाऽऽवृदिति । 'तत्' कर्म दक्षिणमावृदावर्त्तनं समापनं यस्य तद् भवति । 'तद्' दक्षिणावर्त्तनं कर्म 'देवत्रा' देवेषु तदर्हं भवतीत्यर्थः । तां चात्र करणभूतामङ्गुलिमभिनयेन दर्शयति–अनयेति । 'अनया' अनामिकाङ्गुल्या; भैषज्यक्रियासाधनत्वमस्या अङ्गुलेः प्रसिद्धमिति शब्दार्थः ॥ ५ ॥

अथास्तीर्णयोः कृष्णाजिनपुष्करपर्णयोः अन्तोद्ग्रहणं विधत्ते–अथ कृष्णाजिनं चेति । 'उद्ग्रहणम्' ऊर्द्ध्वकरणम् । पुष्करपर्णस्य योनित्वं प्रागुक्तम् । तद् विधत्ते–सुजात इति । 'ज्योतिषा' 'सह' संयुक्तः

---

१–आस्तीर्णयोरंताबुद्गृह्णाति सुजात इति । का. श्रौ. सू. १६ । ७४ ।

( त्यु ) अथैनमुपनह्यति । योनौ तद्रेतो युनक्ति तस्माद्योनौ रेतो युक्तं न निष्पद्यते योक्त्रेण योक्त्रेण हि योग्यं युञ्जन्ति मौञ्जेन त्रिवृता तस्योक्तो बन्धुः ॥ ७ ॥

( स्त ) तत्पर्यस्यति । वासो ऽअग्ने विश्वरूपꣳ संव्ययस्व विभावस-विति वरुण्या वै यज्ञे रज्जुरवरुण्यमेवैनदेतत्कृत्वा यथा वासः परिधा-पयेदेवं परिधापयति ॥ ८ ॥

---

अथैनमुपनह्यति । योनौ तद्रेतो युनक्ति । तस्माद्योनौ रेतो युक्तं न निष्पद्यते । योक्त्रेण । योक्त्रेण हि योग्यं युञ्जन्ति । मौञ्जेन त्रिवृता । तस्योक्तो बन्धुः ॥ ७ ॥

तत्पर्यस्यति । "वासोऽअग्ने विश्वरूपं संव्ययस्व विभावसो"–( वा० सं० ११ । ४० ) इति । वरुण्या वै यज्ञे रज्जुः । अवरुण्यमेवैनदेतत् कृत्वा यथा वासः परिधापयेद्–एवं परि-धापयति ॥ ८ ॥

---

सुजातोऽयमग्निः 'वरूथं' वरणीयं, 'स्वः' स्वर्गाख्यं, 'शर्म' शरणं गृहम् 'आसदत्' आसीददिति । सदे-र्लुङि च्लेरङि रूपम् ॥ ६ ॥

अथ कृष्णाजिनपुष्करपर्णयोरुद्गृहीतत्वात् त्रिवृता मुञ्जयोक्त्रेण बध्नीयादिति विधत्ते–अथैनमुपनह्यतीति । "णह बन्धने"–( धा. पा. दि. प. ६० ) । न निष्पद्यत इति । निष्पततीत्यर्थः । 'योक्त्रेण' दाम्ना 'योग्यं' योजनीयम्, अश्वाननादिबन्धनं च मौञ्जेन करणीयम् । तत्र "त्रिवृत्"–इत्यत्र पूर्वमुक्त ( श. प. १।३।१।२७ ) ब्राह्मणमतिदिशति–तस्योक्तो बन्धुरिति ॥ ७ ॥

पूर्वमश्वरासभाजान् पशून् प्रस्तुत्य, ते मौञ्जीभिरभिधानीभिरभिहिता भवन्तीत्यादिना त्रिवृतो भवन्तीत्यनेन च रशनाविधानमुक्तम् ( श. प. १ । ३ । १ । २६ । २७ ) अथ योक्त्रस्य समन्त्रं वेष्टनं विधत्ते–तत् पर्य-स्यति वास इति ( का. श्रौ. सू. १६ । ७६ ) । 'तत्' योक्त्रं 'पर्यस्यति' परिवेष्टयति । हे 'विभावसो' दीप्तिभिर्वासयितः, दीप्तिधन ! वा हे 'अग्ने' 'विश्वरूपं' विचित्ररूपं 'वासः' 'संव्ययस्व' । "व्येञ् संवरणे" (धा. पा. भ्वा. उ. १०३२) । परिधत्स्व । योक्त्रबन्धने वासः संव्ययस्वेति वस्त्रपरिधापनोक्तेस्तात्पर्य-माह–वरुण्या वै यज्ञ इति । 'यज्ञे' हि 'रज्जुः' 'वरुण्या' वरुणदेवत्या भवति ( श. प. १ । ३ । १ । १२ । १३ भाष्ये ) । यथा–योक्त्रपरित्यागे-"प्र त्वा मुञ्चामि वरुणस्य पाशात्"–इति मन्त्रः, नैवम्; इह तु एतद् योक्त्रम् 'अवरुण्यं कृत्वा'. 'यथा वासः परिधापयेत्' 'एवं तत्' इत्यभिप्रायेण "वासः०-०संव्ययस्व" इत्युक्तम् । पाशस्यैव हि वरुणो देवता, न वाससः इत्यर्थः ॥ ८ ॥

---

१–त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासोऽग्न इति । का. श्रौ. सू० १६ । ७५ ॥

( त्यु ) अथैनमादायोत्तिष्ठति । ( त्य ) असौ वाऽआदित्य एषोऽग्निरमुं तदादित्यमुत्थापयत्युदु तिष्ठ स्वध्वरेत्यध्वरो वै यज्ञऽउदु तिष्ठ सुयज्ञियेत्येतदवा नो देव्या धियेति या ते दैवी धीस्तया नोऽवेत्येतद्दृशे च भासा बृहता सुशुक्वनिरिति दर्शनाय च भासा बृहता सुशुक्वनिरित्येतदाऽग्ने याहि सुशस्तिभिरिति ये वोढारस्ते सुशस्तयऽआऽग्ने याहि वोढृभिरित्येतत् ॥ ९ ॥

( द्व ) अथैनमित ऽऊर्ध्वं प्राञ्चं प्रगृह्णाति । ( त्य ) असौ वाऽआदित्यएषोऽग्निरमुं तदादित्यमितऽ ऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्यऽइतऽऊर्ध्वः प्राङ् धीयतऽऊर्ध्वऽऊ षु णऽऊतये तिष्ठा देवो न सवितेति यथैव यजुस्तथा बन्धुरूर्ध्वो वाजस्य सनितेत्यूर्ध्वो वा ऽएष तिष्ठन्वाजमुन्नर्ठ०

अथैनमादायोत्तिष्ठति । असौ वाऽआदित्यः । एषोऽग्निः । अमुं तदादित्यमुत्थापयति । " उदु तिष्ठ स्वध्वर "–इति । अध्वरो वै यज्ञः । उदु तिष्ठ सुयज्ञियेत्येतत् । "अवा नो देव्या धिया "–इति । या ते दैवी धीः–तया नोऽवेत्येतत् । " दृशे च भासा बृहता सुशुक्वनिः "–इति । दर्शनाय च भासा बृहता सुशुक्वनिरित्येतत् । " आऽग्ने याहि सुशस्तिभिः "–( वा. सं. ११ । ४१ ) इति । ये वोढारस्ते सुशस्तयः । आऽग्ने याहि वोढृभिरित्येतत् ॥ ९ ॥

अथैनमित ऊर्ध्वं प्राञ्चं प्रगृह्णाति । असौ वाऽआदित्यः । एषोऽग्निः । अमुं तदादित्यमित ऊद्‍र्ध्वं प्राञ्चं दधाति । तस्मादसावादित्य इत ऊद्‍र्ध्वः प्राङ् धीयते । " ऊद्‍र्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता "–इति । यथैव यजुस्तथा बन्धुः । " ऊद्‍र्ध्वो वाजस्य सनिता "–इति ।

विधत्ते–अथैनमादायोत्तिष्ठतीति[१] । ' एनं ' मृत्पिण्डमादाय ऊद्‍र्ध्वस्तिष्ठेत् । तत् प्रशंसति–असौ वा आदित्य इति । "त्रेधाऽऽत्मानं विकरोति,–अग्निं तृतीयं, वायुं तृतीयम् , आदित्यं तृतीयम्"–( तै. ब्रा. १ । ७।१।२) इति श्रुतेः । मृत्पिण्डोऽग्निरिति चोक्तम् । मृदमादायोत्थानेन अमुमादित्यमेवोत्थापितवान् भवतीति ॥

मन्त्रं विधत्ते–उदु तिष्ठ स्वध्वरेतीति । हे ' स्वध्वर ' सुयज्ञ ! ' उत्तिष्ठ ' ' उ '–शब्दोऽप्यर्थः । अपि च ' देव्या ' देवसम्बन्धिन्या ' धिया ' बुद्ध्या ' नः ' अस्मान् ' अव ' पालय । ' दृशे ' दर्शनाय ' बृहता भासा ' प्रौढेन तेजसा ' सुशुक्वनिः ' अत्यन्तं दीप्यमानः ' सुशस्तिभिः ' शोभनशिक्षितैः ' वोढृभिः ' अश्वैः ' आयाहि ' आगच्छ ' अग्ने ! ' मृद्रूप इति । सुशस्तिभिरितिपदस्यार्थमाह–ये वोढारस्ते सुशस्तय इति ॥ ९ ॥

अत्र सूत्रम्,–" ऊद्‍र्ध्वबाहुः प्राञ्चं प्रगृह्णात्यूद्‍र्ध्व ऊ षु ण इति । अवहृत्योपरिनाभि धारयन् " ( का. श्रौ. सू. १६ । ७७ । ७८ ) इति । तदूद्‍र्ध्वधारणं विधत्ते–अथैनमित ऊद्‍र्ध्वमिति । ' इतः ' भूमेः

१–उत्तिष्ठति पिण्डमादायोदु तिष्ठेति । का. श्रौ. सू. १६ । ७६ ।

सनोति यदञ्जिभिर्वाघद्भिर्विह्वयामहऽइति रश्मयो वाऽएतस्याञ्जयो व्वाघतस्तानेतदाह परोबाहु प्रगृह्णाति परोबाहु ह्येष ऽइतोऽथैनमुपावहरति तमुपावहृत्योपरि नाभि धारयति तस्योपरि बन्धुः ॥ १० ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ६-३-४ ॥ ( ४. ३. ) ॥

हस्तऽएष भवत्यथ पशूनभिमन्त्रयते । (तऽ) एतद्वाऽएषु देवाः सम्भरिष्यन्तः पुरस्ताद्वीर्यमदधुस्तथैवैष्वयमेतत्सम्भरिष्यन्पुरस्ताद्वीर्यं दधाति १

---

ऊर्ध्वो वाऽएष तिष्ठन् वाजमन्नं सनोति । "यदञ्जिभिर्वाघद्भिर्विह्वयामहे"-(वा०सं० ११।४२) इति । रश्मयो वाऽएतस्याञ्जयो वाघतः । तानेतदाह । परोबाहु प्रगृह्णाति । परोबाहु ह्येष इतः । अथैनमुपावहरति । तमुपावहृत्योपरि नाभि धारयति । तस्योपरि बन्धुः ॥ १० ॥

हस्तऽएष भवति-अथ पशूनभिमन्त्रयते । एतद्वा ऽएषु देवाः सम्भरिष्यन्तः पुरस्ताद्वीर्यमदधुः । तथैवैष्वयमेतत्सम्भरिष्यन् पुरस्ताद्वीर्यं दधाति ॥ १ ॥

---

सकाशात् 'ऊर्ध्वम्' प्राङ्मुखं प्रगृह्णीयात् । असौ वा आदित्य इत्यादि पूर्ववद् व्याख्येयम् । मन्त्रं विधत्ते-इत ऊर्ध्वः माङ् धीयत ऊर्ध्व इति । 'नः' अस्माकम् 'ऊतये' तर्पणाय सुष्ठु 'ऊर्ध्वः' 'तिष्ठ' । तत्रोपमामाह-देव इति । 'न' शब्द उपमार्थः । यथा सविता देवः 'वाजस्य' अन्नस्य 'सनिता' संभक्ता 'ऊर्ध्वः' तिष्ठति 'यद्' यस्मात् 'अञ्जिभिः' अभिव्यञ्जकैः 'वाघद्भिः' रश्मिभिः उपलक्षितं त्वां 'विह्वयामहे' बहुविधमाह्वयामः । अत्र मन्त्रे पूर्वार्द्धं निगदव्याख्यातमिति दर्शयति-**यथैव यजुः, तथा बन्धुरिति** । उत्तरार्द्धे 'वाजस्य'-इत्यादेरर्थमाह-**ऊर्ध्वो वा एष तिष्ठन्नित्यादिना** । पूर्वमित ऊर्ध्वमिति सामान्येनोक्तम्, तद् विशिनष्टि-**परोबाहु प्रगृह्णातीति** । बाह्वोः परस्तात् अनूर्ध्वो बाहुः, प्राञ्चमित्युद्गृह्णीते । मृत्पिण्डस्याधोनयनं विधत्ते-**अथैनमुपावहरतीति** । उपावहरणस्य अवधिं दर्शयति-**तमुपावहृत्येति** । उपरिनाभि धारणस्य स्तावकं ब्राह्मणमित्यतिदिशति-**तस्योपरि बन्धुरिति** । रुक्मधारणप्रस्तावे "यद्वेवोपरिनाभि अवाग् वै नाभे रेतः प्रजातिरिति ०—० एतद्वै पशोर्मेध्यतरं यदुपरिनाभि" ( श. प. ६ । ७ । १ । ९ । १० कं. ) इति च ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे चतुर्थेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ६-४-३ ) ॥

अथ मृत्पिण्डसाहित्येन पश्वभिमन्त्रणं विधत्ते-**हस्त एष भवतीति** । 'एषः' मृत्पिण्डः । **एतद्वा इत्यादे**-रयमर्थः-'एतद्' इदानीं पिण्डसम्भरणकाले पश्वभिमन्त्रणेन एषु 'वीर्यं' 'देवाः' इव 'अयं' यजमानोऽपि 'दधाति' निहितवान् भवतीति ॥ १ ॥

सोऽश्वमभिमन्त्रयते । स जातो गर्भोऽअसि रोदस्योरितीमे वै द्यावापृथिवी रोदसी तयोरेष जातो गर्भोऽग्ने चारुर्विभृतऽ ओषधीष्विति सर्वासु ह्येष चारुर्विभृतऽ ओषधिषु चित्रः शिशुः परि तमाᳪँस्यक्तूनिति चित्रो वाऽएष शिशुः परेण तमाᳪँस्यक्तूनति रोचते प्र मातृभ्योऽअधि कनिक्रदद्गाऽ इत्योषधयो वाऽ एतस्य मातरस्ताभ्यऽ एष कनिक्रदत्प्रैति तदश्वे वीर्यं दधाति ॥ २ ॥

(त्थु) अथ रासभम् । (१ँ) स्थिरो भव वीड्वङ्गऽ आशुर्भव वाज्यर्वन्निति स्थिरश्च भव वीड्वङ्गश्चाशुश्च भव वाजी चार्वन्नित्येतत्पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणऽ इति पृथुर्भव सुशीमस्त्वमग्नेः पशव्यवाहन इत्येतत्तद्रासभे वीर्यं दधाति ॥ ३ ॥

---

सोऽश्वमभिमन्त्रयते–"स जातो गर्भोऽअसि रोदस्योः"–इति । इमे वै द्यावापृथिवी रोदसी । तयोरेष जातो गर्भः । "अग्ने चारुर्विभृत ओषधीषु"–इति । सर्वासु ह्येष चारुर्विभृत ओषधिषु । "चित्रः शिशुः परि तमाँस्यक्तून्"–इति । चित्रो वा ऽएष शिशुः परेण तमांस्यक्तूनतिरोचते । "प्र मातृभ्यो अधि कनिक्रदद्गाः"–(वा. सं. ११ । ४३) इति । ओषधयो वाऽएतस्य मातरः । ताभ्य एष कनिक्रदत्प्रैति । तदश्वे वीर्यं दधाति ॥ २ ॥

अथ रासभम्–"स्थिरो भव वीड्वङ्गः । आशुर्भव । वाज्यर्वन्"–इति । स्थिरश्च भव, वीड्वङ्गश्च, आशुश्च भव, वाजी च, अर्वन् ! इत्येतत् । "पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः"–(वा.सं. ११।४४) इति । पृथुर्भव सुशीमः, त्वमग्नेः पशव्यवाहन इत्येतत् । तद्रासभे वीर्यं दधाति ॥ ३ ॥

---

पूर्वमश्वाभिमन्त्रणं विधत्ते–सोऽश्वमिति । अश्वोऽग्न्यात्मना स्तूयते–'स' त्वं 'रोदस्योः' द्यावापृथिव्योः 'गर्भः' इति 'जातः असि,' तथा 'ओषधीषु' ओषधिवनस्पत्यादिषु विषयेषु 'चारुः' 'विभृतः' विशेषेण सम्भृतोऽसि, 'चित्रः' चित्रवर्णः, 'शिशुः,' 'अक्तून्' अक्तुशब्दो रात्रिवचनः; तत्रत्यानि 'तमांसि' 'परि' योग्यक्रियाध्याहारः, परीत्य, अतिरोचत इति । 'मातृभ्यः'–इति चतुर्थी । शरीरस्योत्पादकत्वात् ओषधयोऽत्र मातृशब्दवाच्याः तदर्थम्, तद्भक्षणार्थं 'कनिक्रदत्' अत्यर्थं हेषितशब्दं कुर्वन् 'प्रगाः' प्रगच्छसि "इणो गा लुङि"–(पा. सू. २ । ४ । ४९) इति गादेशः । मन्त्रं प्रतिपादमनूद्य व्याचष्टे–इमे वै द्यावापृथिवी रोदसी इति ॥ २ ॥

रासभाभिमन्त्रणे मन्त्रं विधत्ते–अथ रासभं स्थिरो भवेति । हे 'अर्वन्' अरणवन् ! रासभ ! 'स्थिरः' निश्चलः 'भव' । 'वीड्वङ्गः' दृढाङ्गः, 'आशुः' शीघ्रगतिः, 'वाजी' वेगवाँश्च 'भव' इति । 'पृथुः' स्थूलः भव । 'सुषदः' शोभनसदनवान् भव । 'अग्नेः पुरीषवाहणः' गोमयस्य सैकतस्य वा वाहकत्वात् रासभस्य पुरीषवोढृत्वं प्रसिद्धम् ॥ ३ ॥

---

१–अश्वप्रभृतीनभिमन्त्रयते स जात स्थिरो भव शिवो भवेति । का. श्रौ. सू. १६ । ७८

(त्यु) अुथाजुम् । (ॐ) शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरऽइत्यु- ङ्गिरा वाऽअग्निराग्नेयोऽजः शमयत्येवैनमेतदहिंसायै मा द्यावापृथिवीऽ- अभिशोचीर्माऽन्तरिक्षं मा व्वनस्पतीनित्येतत्सर्व्वं मा हिंसीरित्येतत्तदजे व्वीर्यं दधाति ॥ ४ ॥

त्रिभिरभिमन्त्रयते । त्रिव्वृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैष्वेत- द्वीर्यं दधाति ॥ ५ ॥

(त्यु) अुथैनमेतेषां पशूनामुपरिष्टात्प्रगृह्णाति । तदेनमेतैः पशुभिः सम्भ- रति नोपस्पृशति व्वज्रो वै पशवो रेतऽइदं नेदिदᳪ रेतो व्वज्रेण हिन- सानीत्युथो ऽअग्निरयं पशवऽइमे नेदयमग्निरिमान्पशून्हिनसदिति ॥ ६ ॥

---

अथाजम्-" शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः "-( वा. सं. ११ । ४५ ) इति । आङ्गिरा वाऽअग्निः । आग्नेयोऽजः । शमयत्येवैनमेतदहिंसायै । " मा द्यावापृथिवी- ऽअभिशोचीः, माऽन्तरिक्षम्, मा वनस्पतीन् "-( वा. सं. ११ । ४५ ) इति । एतत् सर्वं मा हिंसीरित्येतत् । तदजे वीर्यं दधाति ॥ ४ ॥

त्रिभिरभिमन्त्रयते । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्यं दधाति ॥ ५ ॥

अथैनमेतेषां पशूनामुपरिष्टात्प्रगृह्णाति । तदेनमेतैः पशुभिः सम्भरति । नोपस्पृशति । वज्रो वै पशवः । रेत इदम् । नेदिदं रेतो वज्रेण हिनसानीति । अथोऽअग्निरयम्, पशव इमे । नेदयमग्निरिमान् पशून् हिनसदिति ॥ ६ ॥

---

अजाभिमन्त्रणं विधत्ते—अथाजं शिवो भवेति । अङ्गिरःपदेन अग्निरुच्यते; तद्देवत्यत्वात् । हे ' अङ्गिरः ' अग्निरूप ! अज ! त्वं ' मानुषीभ्यः प्रजाभ्यः ' ' शिवो भव ' । ' द्यावापृथिवी ' ' मा अभिशोचीः ' मा हिंसीः । तथा ' अन्तरिक्षं, ' ' वनस्पतीन् ' । सर्वत्र ' मा अभिशोचीः '—इति क्रियापदं सम्बद्धुम् मेति पदं प्रयुक्तम् । मन्त्रस्यार्द्धयोस्तात्पर्यमाह—अङ्गिरा वा अग्निरित्यादिना ॥ ४ ॥

अश्वादिपशुत्रयाभिमन्त्रणगतसङ्ख्यां प्रशंसति—त्रिभिरभिमन्त्रयत इति । अग्नेस्त्रिवृत्त्वं पुरस्तादुक्तम् ॥ ५ ॥

अत्र सूत्रम्-" धारयत्येषामुपरि पिण्डमनुपस्पृशन् "-( का. श्रौ. सू. १६ । ७९ ) इति । एषां त्रयाणां पशूनामुपरितनान् पशून् अनुपस्पृशन् पिण्डं धारयेदित्यर्थः । तदिदं विधत्ते—अथैनमेतेषां पशूनामिति । उपस्पर्शनाभावं प्रशंसति—वज्रो वै पशव इति । यतो वज्ररूपाः पशवः, मृत्पिण्डश्च रेतोरूपः, अतो वज्रेण रेतः विच्छिन्नं न करोमीति बुद्ध्या न स्पृशेत् पशून् । अथवा ' अयं ' मृत्पिण्डो हि ' अग्निः, ' अग्निः पशून् मा हिंसीदिति बुद्ध्या न स्पृशेत् । ' हिनसानि '—इति लोटि रूपम्, ' हिनसत् '—इति पञ्चमलकारे रूपम् ॥ ६ ॥

तमुश्वस्योपरिष्टात्प्रगृह्णाति । प्रैतु व्वाजी कनिक्रदद्दिति प्रैतु व्वाजी कनिक्रद्यमानऽ इत्येतन्नानदद्रासभः पत्वेति तदुश्वस्य युजुषि रासभं निराह तद्रासभे शुचं दधाति भुरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरेति भरन्नग्निं पशव्यं मो ऽअस्मात्कुर्मणः पुरा पादीत्येतत्तुदेनमुश्वेन सुम्भरति ॥ ७ ॥

( त्यु ) अुथ रासभस्य । व्वृषाऽग्निं वृषणं भुरन्निति व्वृषा वाऽअग्निर्व्वृषा रासभः स व्वृषा व्वृषाणं भरत्यपां गुर्भर्ठ्ँ समुद्रियमित्यपार्ठ्ँ ह्येष गुर्भः समुद्रियस्तुदेनर्ठ्ँ रासभेन सुम्भरति ॥ ८ ॥

---

तमश्वस्योपरिष्टात्प्रगृह्णाति । " प्रैतु वाजी कनिक्रदत् "–इति । प्रैतु वाजी कनिक्रद्यमान इत्येतत् । " नानदद्रासभः पत्वा "–इति । तदश्वस्य यजुषि रासभं निराह । तद्रासभे शुचं दधाति । " भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा "–इति । भरन्नग्निं पशव्यं मोऽअस्मात्कर्मणः पुरा पादीत्येतत् । तदेनमश्वेन सम्भरति ॥ ७ ॥

अथ रासभस्य–" वृषाऽग्निं वृषणं भरन् "–इति । वृषा वाऽअग्निः । वृषा रासभः । स वृषा वृषाणं भरति । " अपाङ्गर्भं समुद्रियम् "–इति । अपां ह्येष गर्भः समुद्रियः । तदेनं रासभेन सम्भरति ॥ ८ ॥

---

अथाश्वस्योपरि धारणं समन्त्रं विधत्ते–तमश्वस्योपरिष्टादिति[1] । ' वाजी ' अन्नवान् अश्वः ' प्रैतु ' आगच्छतु । तं विशिनष्टि–' कनिक्रदत् ' अत्यर्थशब्दं कुर्वन्, ' नानदत् ' सर्वा दिशो नादयन् ' रासभः ' उपमाशब्दलोपः, गर्दभः इव ' पत्वा ' पतनशीलः । पतेः क्वनिपि रूपम् । ' पुरीष्यं ' पशुहितम् ' अग्निम् ' ' भरन् ' धारयन्, ' आयुषः ' कर्मणोऽस्मात् ' पुरा ' ' मा पादि ' मा विनश्यतु । पदेश्चिणि रूपम् ॥

अश्वस्योपरि धारणमन्त्रे रासभः पत्वेति गर्दभवचनस्य प्रयोजनमाह–तदश्वस्य यजुषि रासभं निराहेति । अश्वमन्त्रे रासभवचने तस्माद्रासभादश्वस्यातिशयितत्वोक्तेः तस्मिन् गर्दभे शोकबलराहित्यमेव निहितं भवतीति । ' आयुषः '–इतिपदस्यार्थमाह–कर्मणः इति ॥ ७ ॥

अथोत्तरा ऋक्, संहितायामेवमाम्नायते–" वृषाऽग्निं वृषणं भरन्नपाङ्गर्भं समुद्रियम्–अग्न आयाहि वीतये । ऋतं सत्यमृतं सत्यमग्निम्पुरीष्यमङ्गिरस्वद् भरामः "–इति । महाबृहतीयम्; " चत्वारोऽष्टकाः पादा जागतश्च महाबृहती "–इति । तस्य विभज्य विनियोगो विधीयते । तत्र तस्याः पूर्वार्द्धे तु रासभस्योपरि धारणम्, तृतीयपादेनाजस्योपरि धारणाय रासभ–मृत्पिण्डहरणम्, चतुर्थेनाजस्योपरि धारणम्, पञ्चमेनानद्धापुरुषेक्षणम् । तदाह सूत्रकृत् " प्रैतु वाजी वृषाऽग्निमित्यश्वखरयोः, अग्न आयाहीत्याहृत्य खराच्छागस्यर्तं सत्यमित्यानिधानात्, आयन्त्यावर्त्य पशूनजः पुरस्ताद्रासभो मध्ये "[2] स्वेस्थानस्थितानामेवावृत्तिः " अनद्धापुरुषमीक्षते पूर्ववदग्निं

---

१–धारयत्येषामुपरि पिंडमनुपस्पृशन्प्रैतु व्वाजी व्वृषाऽग्निमित्यश्वखरयोः । का० श्रौ० सू० १६ । ७९ ।

२–इदं तु न सूत्रम् । किन्तु का० श्रौ० सू० १६ । ८१ इत्यत्रत्यं कर्कभाष्यमिति ध्येयम् ।

(त्यु) अथापादत्ते । (त्तेऽग्न) अग्नऽआयाहि व्वीतय ऽइत्यवितव ऽइत्ये-तत्तदेनं ब्रह्मणा यजुषैतस्माच्छौद्राद्वर्णादपादत्ते ॥ ९ ॥

(त्तेऽथा) अथाजस्य । (ऽ) ऋतꣳ सत्यमृतꣳ सत्यमित्ययं वा ऽअग्निर्ऋतमसावादित्यः सत्यं यदि वाऽसावृतमयꣳ सत्यमुभयम्वेतदय-मग्निस्तस्मादाहऽर्तꣳ सत्यमृतꣳ सत्यमिति तदेनमजेन सम्भरति ॥ १० ॥

---

अथापादत्ते—" अग्नऽआयाहि वीतये "—( वा. सं. ११ । ४६ ) इति । अवितवऽइत्येतत् । तदेनं ब्रह्मणा यजुषैतस्माच्छौद्राद्वर्णादपादत्ते ॥ ९ ॥

अथाजस्य । "ऋतं सत्यमृतं सत्यम्"—इति । अयं वाऽअग्निर्ऋतम्, असावादित्यः सत्यम् । यदि वाऽसावृतमयं सत्यम् । उभयम्वेतदयमग्निः । तस्मादाह—ऋतं सत्यमृतं सत्यमिति । तदे-नमजेन सम्भरति ॥ १० ॥

---

पुरीष्यमिति "—( का. श्रौ. सू. १६ । ८२ । ) इति । तदिदं सर्वं विधत्ते—अथ रासभस्य वृषाऽग्निं वृषणमित्यादिना ॥

मन्त्रस्यायमर्थः—' वृषणं ' वर्षकं मृद्रूपम् ' अग्निं ' भरन् ' ' अपाङ्गर्भं ' गर्भभूतं, समुद्रे अन्तरिक्षे भवं ' समुद्रियं ' ' भरन् ' ' अग्निं ' मृद्रूपं ' वृष ' सिञ्च । वृषतेर्लोटि रूपम् । अत्रार्द्धे रासभः सम्बोध्यः ॥

ब्राह्मणे, वृषेति कन्प्रत्ययान्तं पदमिति व्याख्यातं—वृषा वा अग्निरिति । तत्रायमर्थः—' वृषा ' रेतसः सेक्ता ' रासभः ' ' वृषणम् ' अग्निं ' भरन्, ' तिष्ठतीति क्रियाध्याहारः । तृतीयपादे अग्निः सम्बोध्यः । हे ' अग्ने ' मृद्रूप ! ' वीतये ' तर्पणाय ' आयाहि ' रासभादागच्छ । ' ऋतम् ' अग्निः, ' सत्यम् ' आदित्यः; यद्वा, ' ऋतम् ' आदित्यः, ' सत्यम् ' अग्निः, उभयरूपमग्निम्, आहरिष्यामीति शेषः । ' पुरीष्यं ' पशुहित-मग्निम्, ' अङ्गिरस्वद् ' अग्निवत् ' भरामः ' सम्भराम इति ॥

मन्त्रगतानि पदानि व्याचष्टे—वृषा वा अग्निरिति । तदेनं रासभेनेति । मन्त्रस्य पूर्वार्द्धेन रासभस्योपरि मृत्पिण्डधारणेन तस्मिन् मृदं सम्भृतवान् भवति ॥ ८ ॥

खरात् सकाशात् मृदाहरणं समन्त्रं विधत्ते—अथापादत्त इति । " अग्न आयाहीति " तृतीयः पादः । ' वीतये '—इत्यस्यार्थमाह—अवितव इतीति । तर्पणार्थाद् वेतेः ( धा. पा. अ.प. ३७६ ) "मन्त्रे वृषेष"—( पा. सू. ३ । ३ । ९६ ) इति क्तिन्, चोदात्तः । अपादानं प्रशंसति—तदेनं ब्रह्मणेति । ' एनं ' मृत्पिण्डं ' ब्रह्मणा ' ब्रह्मरूपेण ' यजुषा ' " अग्न आयाहि "—इति पादेन ' एतस्मात् ' ' शौद्रात् ' वर्णात् अपादत्त-वान् भवति । रासभस्य वैश्यशूद्रजातिसम्बन्धो वक्ष्यते—" वैश्यं च शूद्रं चानु रासभः "( १२कं ) इति ॥९॥

अजस्योपरि धारणमन्त्रं विधत्ते—अथाजस्यर्त्तमिति । ऋतं सत्यमिति द्विवारं पठ्यते, तत्र प्रथमर्त्तसत्यपद-योरर्थमाह—अयं वा अग्निर्ऋतमिति । यदि वेति द्वितीयर्त्तसत्यपदयोरर्थवचनम् । ' असौ ' विप्रकृष्टः ' आदित्यः ' ' ऋतम्, ' ' अयमग्निः सत्यम्; ' उभयरूपोऽयमग्निर्मृद्रूपः ॥ १० ॥

१५३८

त्रिभिः सुम्भरति । त्रिव्वृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्सुम्भरति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् तुस्योक्तो बन्धुः ॥ ११ ॥

( रु ) अथैतान्पशूनावर्तयन्ति । तेषामजः प्रथमऽएत्यथ रासभोऽथाश्वोऽथैतो यतामश्वः प्रथमऽएत्यथ रासभोऽथाजः क्षत्रं वा ऽअन्वश्वो व्वैश्यं च शूद्रं चानु रासभो ब्राह्मणमजः ॥ १२ ॥

( स्त ) तद्यदितो यताम् । (मु) अश्वः प्रथम ऽएति तस्मात्क्षत्रियं प्रथमं यन्तमितरे त्रयो व्वर्णाः पश्चादनुयन्त्यथ यदमुतऽआयतामजः प्रथम ऽएति तस्माद्ब्राह्मणं प्रथमं यन्तमितरे त्रयो व्वर्णाः पश्चादनुयन्त्यथ यन्नैवेतो यतां नामुतो रासभः प्रथमऽएति तस्मान्न कदाचन ब्राह्मणश्च क्षत्रियश्च व्वैश्यं च शूद्रं च पश्चादन्वितस्तस्मादेवं यन्त्युपापवस्यसायाथो ब्रह्मणा चैवैतत्क्षत्रेण चैतौ व्वर्णावभितः परिगृहीतेऽनपक्रमिणौ कुरुते ॥ १३ ॥

---

त्रिभिः सम्भरति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतत्सम्भरति । त्रिभिः पुरस्तादभिमन्त्रयते । तत्–षट् । तस्योक्तो बन्धुः ॥ ११ ॥

अथैतान् पशूनावर्तयन्ति । तेषामजः प्रथम एति, अथ रासभः,अथाश्वः । अथेतो यतामश्वः प्रथम एति, अथ रासभः, अथाजः । क्षत्रं वा अन्वश्वो, वैश्यं च शूद्रश्चानु रासभो, ब्राह्मणमजः ॥ १२ ॥

तद्यदितो यतामश्वः प्रथम एति । तस्मात् क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति । अथ यदमुत आयतामजः प्रथम एति—तस्माद् ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति ।

---

अग्निम्पुरीष्यमिति मन्त्रशेषस्य विनियोग उत्तरत्र वक्ष्यते । इदानीमश्वादीनामुपरिधारणे विनियुक्तमन्त्रगतसङ्ख्यां त्रिवृदग्न्यात्मना स्तौति—त्रिभिरिति । " प्रैतु वाजी "—इति एको मन्त्रः, "वृषाऽग्निम्"—इति महाबृहत्यामपरः; रासमाजयोरुपरि धारणे विनियुक्तौ द्वौ मन्त्रौ । मन्त्रस्य लक्षणं याज्ञिकसमाख्यानमिति प्रागुक्तम् । अत एकस्यामप्यृचि विभज्य विनियोगान्मन्त्रा बहवः सम्पद्यन्त इत्यविरोधः ॥

पूर्वमश्वाद्यभिमन्त्रणे विनियुक्तमन्त्रसंख्यां मिलित्वा प्रशंसति—त्रिभिः पुरस्तादिति । अभिमन्त्रणमन्त्रास्त्रयः, धारणमन्त्रास्त्रयः; ते षट् सम्पद्यन्ते; तस्य स्तावकं ब्राह्मणमतिदिशति—तस्योक्तो बन्धुरिति । पिण्डपरिग्रहमन्त्रसंख्याप्रस्तावे—" ताः षट् सम्पद्यन्ते, षड्वा ऋतवः "—( श. प. ६ । ४ । २ । १० ) इत्यादिना ॥ ११ ॥

अथैतेषां पशूनामावर्त्तनं विधत्ते—अथैतान् पशूनिति । स्वस्थानावस्थितानामेवावर्त्तनम् । तत्रागन्तॄणां पशूनां क्रमं विधत्ते—तेषामजः प्रथम इति । पूर्वम् ' इतः ' मृदाहरणार्थं ' यतां ' गन्तॄणां ' पशूनां ' मध्ये

---

१–आयन्त्यावर्त्य पशूनजः पुरस्ताद्रासभो मध्ये । का. श्रौ. सू. १६ । ८१ ।

( तेऽथ ) अथानद्धापुरुषमीक्षते । ( तेऽग्निं ) अग्निं पुरीष्यमङ्गिरस्वदच्छेराम ऽइत्यग्निं पशव्यमग्निवद्भराम ऽ इत्येतत्तदेनमनद्धापुरुषेण सम्भरति १४

तमजस्योपरिष्टात्प्रगृह्णन्नेति । ( त्या ) आग्नेयो वा ऽअजः स्वेनैवैनमेतदात्मना स्वया देवतया सम्भरत्यथो ब्रह्म वाऽअजो ब्रह्मणैवैनमेतत्सम्भरति ॥ १५ ॥

---

अथ यन्नैवैतो यतां नामुतो—रासभः प्रथम एति—तस्मान्न कदाचन ब्राह्मणश्च क्षत्रियश्च वैश्यं च शूद्रं च पश्चादन्वितः । तस्मादेवं यन्ति—अपापवस्यसाय । अथो ब्रह्मणा चैवैतत् क्षत्रेण चैतौ वर्णावभितः परिगृह्णीते, अनपक्रामिणौ कुरुते ॥ १३ ॥

अथानद्धापुरुषमीक्षते । " अग्निं पुरीष्यमङ्गिरस्वद्भरामः "—इति । अग्निं पशव्यमग्निवद्भराम इत्येतत् । तदेनमनद्धापुरुषेण सम्भरति ॥ १४ ॥

तमजस्योपरिष्टात्प्रगृह्णन्नेति । आग्नेयो वाऽअजः । स्वेनैवैनमेतदात्मना स्वया देवतया सम्भरति । अथो ब्रह्म वाऽअजः । ब्रह्मणैवैनमेतत्सम्भरति ॥ १५ ॥

---

' अश्वः ' प्रथमो गतः, ' रासभः ' मध्ये, पश्चात् ' अजः ' अधुना ' अजः ' प्रथमः, ' रासभः ' मध्ये, पश्चात् ' अश्वः ' । गमनागमनयोरुभयोरपि रासभस्य मध्येऽवस्थानम्, अश्वाजयोरेव पौर्वापर्यम् । क्षत्रं वा अन्वश्वः—इत्यादेरयमर्थः—अश्वादिपशुत्रयस्य क्षत्रियजातिसम्बन्धः, क्षत्रियस्य राज्ञ इतरेभ्यस्त्रिभ्यो वैश्यशूद्रब्राह्मणेभ्यः पुरस्ताद् गमनं लोके दृष्टमिति । तत्र यथा पूर्वं गमनसमये अश्वस्य प्राथम्यम्, तथा ब्राह्मणस्यानूचानस्य स्वव्यतिरिक्तवर्णत्रयात् प्रथमगमनं च दृश्यत इति अधुना अजस्य प्राथम्यम्, वैश्यशूद्रयोः क्षत्रियाद् ब्राह्मणाद्वा पुरस्ताद्गमनं नास्तीति मृदाहरणसमये पुनरागमनसमये च रासभस्य न प्राथम्यम् । तस्मात् कारणादेवम्—यान्ति अश्वपूर्वाः प्रथमे अधुनाऽजपूर्वा आगच्छन्ति ' अपापवस्यसाय ' पापपरिहाराय । ब्राह्मणेन क्षत्रियेण च ' एतौ ' वैश्यशूद्रौ ' अभितः ' मध्ये ' परिगृह्णीते, ' अनपक्रामिणौ ' अनपक्रान्तौ कुरुते ॥ १२ ॥ १३ ॥

विधत्ते—अथानद्धापुरुषमिति । तत्र पुरुषमिति पञ्चमम् । अग्निं पुरीष्यमिति । तदीक्षणेन तेनापि ' अनद्धापुरुषेण ' पुरुषपशुप्रतिनिधिना मृदं सम्भृतवान् भवति ॥ १४ ॥

विधत्ते—तमजस्योपरिष्टादिति । अजस्योपरि मृत्पिण्डं धारयन्नेव ' ऐति ' आगच्छेदध्वर्युः । तथाविधं गमनमुभयथा प्रशंसति—आग्नेयो वा अज इति । ' अजः ' अग्निदेवत्यः, मृदप्यग्निः; अतोऽजस्योपरि धारणात् स्वेन रूपेण स्वदेवत्यं च सम्भृतवान् भवति । अपि अजो ब्राह्मणजातीयः; ततो ब्राह्मणेनाप्येनं मृत्पिण्डं सम्भृतवान् भवति ॥ १५ ॥

---

१—अनद्धापुरुषमीक्षते पूर्ववदग्निं पुरीष्यमिति । का० श्रौ० सू० १६ । ८२ ।

( त्यु ) अथैनमुपावहरति । ( त्यो ) ओषधयः प्रतिमोदध्वमग्निमेतꣳ शिवमायन्तमभ्युत्र युष्मा ऽइत्येतद्वैतस्मादायत ऽओषधयो बिभ्यति यद्वै नोऽयं न हिꣳस्यादिति ताभ्य ऽएवैनमेतच्छमयति प्रत्येनं मोदध्वꣳ शिवो वोऽभ्यैति न वो हिꣳसिष्यतीति व्युस्यन्विश्वाऽअनिरा ऽअमीवा निषीदन्नो ऽअप दुर्म्मतिं जहीति व्युस्यन्विश्वा अनिराश्चामीवाश्च निषीदन्नोऽप सर्व्वं पाप्मानं जहीत्येतत् ॥ १६ ॥

( त्रो ) ओषधयः प्रतिगृभ्णीत । पुष्पवतीः सुपिप्पला ऽइत्येतद्वैतासाꣳ समृद्धꣳ रूपं यत्पुष्पवत्यः सुपिप्पलाः समृद्धा ऽएनं प्रतिगृभ्णीतेत्येतदयं वो गर्भ ऽऋत्वियः प्रत्नꣳ सधस्थमासददित्ययं वो गर्भऽऋतव्यः सनातनꣳ सधस्थमासददित्येतत् ॥ १७ ॥

---

अथैनमुपावहरति। "ओषधयः प्रतिमोदध्वमग्निमेतं शिवमायन्तमभ्यत्र युष्माः"–इति। एतद्वैतस्मादायत ओषधयो बिभ्यति। यद्वै नोऽयं न हिंस्यादिति। ताभ्य एवैनमेतच्छमयति। प्रत्येनं मोदध्वम्, शिवो वोऽभ्यैति, न वो हिंसिष्यतीति। "व्यस्यन्विश्वा अनिरा अमीवा निषीदन्, नो अप दुर्मतिं जहि "–(वा० सं० ११।४७) इति । व्यस्यन्विश्वा अनिराश्चामीवाश्च निषीदन्; नोऽप सर्वं पाप्मानं जहीत्येतत् ॥ १६ ॥

" ओषधयः प्रतिगृभ्णीत पुष्पवतीः सुपिप्पलाः "–इति। एतद्वैतासां समृद्धं रूपम्–

---

अथाजसकाशान्मृत्पिण्डस्यावरोहणं समन्त्रं विधत्ते–अथैनमुपावहरतीति । हे 'ओषधयः' 'युष्माः' अत्र शसः सकारस्य " तस्माच्छसो नः "–( पा. सू. ६।१।१०३ ) इति नत्वं रुत्वं विसर्जनीयः, युष्मानभिलक्ष्य 'आयन्तम्' आगच्छन्तं 'शिवम्' 'एतं' पुरोवर्तिनम् 'अग्निं' 'प्रतिमोदध्वम्' प्रतिमोदस्य भयराहित्यमर्थः । उत्तरार्द्धे मृद्रूपोऽग्निः सम्बोध्यः । 'विश्वाः' 'अनिराः' 'इरा' इत्यन्ननाम ( निघ: २।७।१३। ) अन्नप्रतिबन्धहेतून् अनावृष्ट्यादीन्, 'अमीवाः' रोगांश्च 'व्यस्यन्' विक्षिपन्, हेतौ शतृप्रत्ययः। रोगादिविक्षेपाद्धेतोः 'निषीदन्' उपविशन्, 'नः' अस्माकं 'दुर्मतिं' दुष्टुतिमयीं मतिम् 'अपजहि' अपनयेति ॥

प्रतिमोदध्वमिति यदोषधीः प्रत्युक्तम्, तस्याभिप्रायमाह–एतद्वैतस्मादायत ओषधय इति । 'आयतः' अग्नेः सकाशात् 'ओषधयो बिभ्यति' स्वस्यात्मानं भक्षयिष्यति किलेति । तत्परिहाराय प्रतिमोदध्वमिति । यतोऽग्निः शान्तः, ओषधयो यूयमेनं प्रतिमोदध्वम्, 'शिवः' सुखकर एव सन् 'वः' युष्मान् 'अभ्यैति' अभिगच्छति; न वो हिंसिष्यतीति तात्पर्यार्थः । उत्तरार्द्धगतं दुर्मतिपदं व्याचष्टे–सर्वं पाप्मानं जहीति ॥ १६ ॥

द्वितीयं मन्त्रं विधत्ते–ओषधयः प्रतिगृभ्णीतेति । हे 'ओषधयः' । 'एनम्' अग्निम् 'प्रतिगृभ्णीत'।

( इष्टा ) द्वाभ्यामुपावहरति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपावहरति तं दक्षिणत उदञ्चमुपावहरति तस्योक्तो बन्धुरुद्धतमवोक्षितं भवति यत्रैनमुपावहरत्युद्धते वाऽअवोक्षितेऽग्निमादधति सिकताऽउपकीर्णा भवन्ति तासामुपरि बन्धुः ॥ १८ ॥

परिश्रितं भवति । ( त्ये ) एतद्वै देवाऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्माऽएतां पुरं पर्यश्रयंस्तथैवास्मा ऽअयमेतां

---

यत् पुष्पवत्यः सुपिप्पलाः । समृद्धा एनं प्रतिगृभ्णीतेत्येतत् । " अयं वो गर्भ ऋत्वियः प्रत्नं सधस्थमासदत् "–( वा. सं. ११ । ४८ ) इति । अयं वो गर्भ ऋतव्यः सनातनं सधस्थमासददित्येतत् ॥ १७ ॥

द्वाभ्यामुपावहरति । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतदुपावहरति । तं दक्षिणत उदञ्चमुपावहरति । तस्योक्तो बन्धुः । उद्धतमवोक्षितं भवति । यत्रैनमुपावहरति । उद्धते वाऽअवोक्षितेऽग्निमादधति । सिकता उपकीर्णा भवन्ति । तासामुपरि बन्धुः ॥ १८ ॥

परिश्रितं भवति । एतद्वै देवा अबिभयुः—यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तस्माऽ-

---

ता विशिनष्टि–' पुष्पवतीः ' पुष्पवत्यः, पुष्पसम्पन्नाः, ' सुपिप्पलाः ' शोभनफलवत्यः ' अयम् ' अग्निर्वै युष्माकमोषधीनां ' गर्भः ' ' ऋत्वियः ' ऋतुषु भवः प्राप्तकालः ' प्रत्नं ' पुरातनम्, ' सधस्थं ' सहस्थानम् ' आसदत् ' आगमत् । सदेर्लुङि च्लेरङि रूपम् ॥

मन्त्रं व्याचष्टे—एतद्धैतासां समृद्धमिति । पुष्पफलवत्त्वमेव समृद्धं रूपमित्यर्थः ॥ १७ ॥

उपावहरणमन्त्रगतसंख्यां प्रशंसति—द्वाभ्यामुपावहरति द्विपाद् यजमान इति । उक्तोऽर्थः ( श. प. ६ । ३ । ३ । ३१ मा. ) । पिण्डनिधानप्रदेशं कात्यायनः सूत्रयामास–" उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिवृते प्राग्द्वारे पिण्डं निदधात्योषधय इति " ( का. श्रौ. सू. १६ । ८३ ) इति । तदिदं विधत्ते—तं दक्षिणत उदञ्चमित्यादिना; तिर इवैव चिचरिषति इत्यन्तेन । तं पिण्डं 'दक्षिणतः' प्रदेशात् ' उदञ्चम् ' उदङ्मुखम् ' उपावहरेत् ' निदध्यात् । दक्षिणत उदगागमनस्य स्तावकं ब्राह्मणमतिदिशति—तस्योक्तो बन्धुरिति । पिण्डहरणसमये " तं दक्षिणत उदञ्चमाहरति दक्षिणतो वा उदग् योनौ रेतः सिच्यते" ( श. प. ६ । ४ । २ । १० ) इति ॥

' यत्र ' स्थाने ' एनं ' पिण्डं निदध्यात्, तत् स्थानम् ' उद्धतम् ' उद्धननसंस्कृतम्, ' अवोक्षितम् ' उदकसिक्तं भवेत् । पिण्डस्याग्नित्वात् तत्समानप्रदेशकरणं युक्तमित्याह—उद्धते वा अवोक्षितेऽग्निमिति । गार्हपत्यादिधिष्ण्यम् इत्यर्थः । तस्मिन् प्रदेशे सिकताश्च विकीर्णा भवन्ति । तत्स्तावकं ब्राह्मणमुत्तरत्र सप्तमकाण्डादौ गार्हपत्यचयनप्रस्तावे वक्ष्यते ( श. प. ७।१।१।१।१० ) इत्याह—तासामुपरि बन्धुरिति ॥ १८ ॥

परिश्रितं भवतीति । तासां विकीर्णानां परिश्रितमिव परिवृतं भवेत् । परिश्रितकरणं नाम रक्षोभीत्या

पुरं पुरिश्रयत्यथो योनिर्व्वाऽ इयᳪ रेत इदं तिर इव वै योनौ रेतः सिच्यते योनिरूपमेतत्क्रियते तस्मादपि स्वया जायया तिर इवैव चिचरिषति॥१९॥

( त्थ ) अथैनं विष्यति । तद्यदेवास्यात्रोपनद्धस्य सᳪशुच्यति तामेवास्मादेतच्छुचं बहिर्धा दधात्यथोऽएतस्याऽएवैनमेतद्योनेः प्रजनयति॥२०॥
वि पाजसा पृथुना शोशुचानऽ इति । वि पाजसा पृथुना दीप्यमान ऽइत्येतद्बाधस्व द्विषो रक्षसोऽअमीवाऽइति बाधस्व सर्व्वान्पाप्मन ऽइत्येतत्सुशर्म्मणो बृहतः शर्मणि स्यामग्नेरहᳪ सुहवस्य प्रणीताविित्याशिषमाशास्ते ॥ २१ ॥

---

एतां पुरं पर्यश्रयन् । तथैवास्माऽअयमेतां पुरं परिश्रयति । अथो योनिर्वाऽइयम्, रेत इदम्, तिर इव वै योनौ रेतः सिच्यते । योनिरूपमेतत्क्रियते । तस्मादपि स्वया जायया तिर इवैव चिचरिषति ॥ १९ ॥

अथैनं विष्यति । तद्यदेवास्यात्रोपनद्धस्य संशुच्यति—तामेवास्मादेतच्छुचं बहिर्धा दधाति । अथोऽएतस्या एवैनमेतद्योनेः प्रजनयति ॥ २० ॥

"वि पाजसा पृथुना शोशुचानः"—इति । वि पाजसा पृथुना दीप्यमान इत्येतत् । "बाधस्व द्विषो रक्षसोऽअमीवाः"—इति । बाधस्व सर्वान् पाप्मन इत्येतत् । "सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ"—(वा. सं. ११।४९) इत्याशिषमाशास्ते ॥ २१ ॥

---

पुरस्य करणमित्यर्थः । प्रकारान्तरेण स्तौति—अथो योनिर्वा इयमिति । इदं परिश्रितं स्थानं योनिरूपम्, 'इदं' पिण्डरूपं 'रेतः' यतश्च योनौ 'तिरः' तिरोहितम् अप्रकाशं 'सिच्यते' । उक्तमर्थं लोकप्रसिद्ध्या द्रढयति—तस्मादिति । 'तस्मात्' खलु लोके सर्वो जनः 'स्वया जायया अपि' परिवृतस्थाने 'तिर इवैव' 'चिचरिषति' चरितुमिच्छति ॥ १९ ॥

अथैनं विष्यतीति[1]। 'विष्यति' प्रमुञ्चेत् । पूर्वं कृष्णाजिनपुष्करपर्णयोर्मध्ये पिण्डं निधाय, अन्तान् उद्गृह्य, योक्त्रेण बन्धनं कृतम्; तद्योक्त्रमन्तोद्ग्रहणञ्च मुञ्चेदित्यर्थः । विमोकं स्तौति—तद्यदेवास्येति । पूर्वमन्तोपनद्धस्य बद्धस्य पिण्डस्य शोको जातः, 'तां' बन्धनजातां 'शुचं' तद्विमोकेन 'बहिर्द्धा' निहितवान् भवति । किञ्च पुष्करपर्णं च योनिरूपमित्युक्तम् ( श. प. ६ । ४ । १ । ७ ) अतो बन्धनरूपयोक्त्रविमोकात् 'योनेरेव' पिण्डं मुखाद्यात्मना जायतामित्यभिप्रायेण तद्विमोक इत्यर्थः ॥ २० ॥

मन्त्रं विधत्ते—वि पाजसा पृथुनेति । "पाज इति बलनाम" (निघ. २ । ९ । १ ) 'पृथुना' बलेन 'शोशुचानः' दीप्यमानोऽग्निस्त्वं 'द्विषः' द्वेष्यान् 'रक्षसः' राक्षसांश्च 'अमीवाः' रोगांश्च 'विबाधस्व' ।

---

१—व्विपाजसेति प्रमुच्यैनम् का. श्रौ. सू. १६ । ८४ ।

( स्तु॒ऽथा ) अथाजलोमान्याच्छिद्य । ( द्यो ) उदीचः प्राचः पशून्प्रसृजत्येषा ह्योभयेषां देवमनुष्याणां दिग्यदुदीची प्राच्येतस्यां तद्दिशि पशून्दधाति तस्मादुभये देवमनुष्याः पशूनुपजीवन्ति ॥ २२ ॥

## इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ६-३-५ ॥ ( ४. ४. )

## इति चतुर्थोऽध्यायः ॥ ६-४ ॥

---

अथाजलोमान्याच्छिद्य, उदीचः प्राचः पशून् प्रसृजति । एषा ह्योभयेषां देवमनुष्याणां दिक्-यदुदीची प्राची । एतस्यां तद्दिशि पशून्दधाति । तस्मादुभये देवमनुष्याः पशूनुपजीवन्ति ॥ २२ ॥

---

एवं प्रत्यक्षतो याचित्वा, इदानीमग्निं परोक्षीकृत्य स्वयमाशिष्यमाणः ते ' सुशर्मणः ' साधुशरणस्य, ' बृहतः, ' ' सुहवस्य ' शोभनाह्वानस्य ' अग्नेः ' ' प्रणीतौ ' प्रकृष्टनीतौ ' शर्मणि ' शरणे अहं ' स्याम् ' भवेयमित्यर्थः । मन्त्रस्यार्द्धयोस्तात्पर्यमाह—बाधस्व सर्वान् पाप्मन इति । आशिषमाशास्ते इति च ॥ २१ ॥

अत्र सूत्रम्—" अजलोमान्यादाय प्रागुदीचः पशूनुत्सृजति "—( का. श्रौ. सू. १६ । ८४ । ) इति । तद् विधत्ते—अथाजलोमानीति । ' उदीचः प्राचः ' ईशानदिगभिमुखान् ' प्रसृजति ' विसृजेत् । तां दिशं प्रशंसति—एषा ह्योभयेषामिति । गतमन्यत् ॥ २२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ६-४-४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये षष्ठे काण्डे चतुर्थोऽध्यायः समाप्तः ॥ ६-४ ॥

# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् । तृतीयप्रपाठके च षष्ठं ब्राह्मणम् ।

पर्णकषायनिष्पक्वा ऽएता ऽआपो भवन्ति । स्थेम्ने न्वेव यद्वेव पर्णकषायेण सोमो वै पर्णश्चन्द्रमा ऽउ वै सोम ऽएतदु वाऽएकमग्निरूपमेतस्यैवाग्निरूपस्योपाप्त्यै ॥ १ ॥

ता ऽउपसृजति । ( त्या ) आपो हि ष्ठा मयोभुवऽ इति यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सऽर्क्सो देवता तद्यजुस्ता हैताऽ आप ऽएवैष त्रिचस्तद्याऽ अमूराप ऽएकᳬं रूपᳬं समदृश्यन्त ताऽ एतास्तदेवैतद्रूपं करोति ॥ २ ॥

---

पर्णकषायनिष्पक्वा एता आपो भवन्ति । स्थेम्ने न्वेव। यद्वेव पर्णकषायेण । सोमो वै पर्णः । चन्द्रमा उ वै सोमः । एतद्वु वाऽएकमग्निरूपम् । एतस्यैवाग्निरूपस्योपाप्त्यै ॥ १ ॥

ता उपसृजति । "आपो हि ष्ठा मयोभुवः"–( वा०सं०११।५०–५२ ) इति। यां वै देवता ऋगभ्यनूक्ता, यां यजुः, सैव देवता सऽर्क् सो देवता तद्यजुः, ता हैता आप एवैष त्रिचः । तद् या अमूराप एकं रूपं समदृश्यन्त–ता एताः । तदेवैतद्रूपं करोति ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अत्र कात्यायनः–" आपो हि ष्ठेति पर्णकषायपक्वमुदकमासिञ्चति पिण्डे "–( का. श्रौ. सू. १६ । ८९ ) इति । पलाशपर्णक्वथितमुदकं मृत्पिण्डे सिञ्चेत् । तत्र जलानां पर्णक्वथितत्वं विधत्ते–पर्णकषायनिष्पक्वा एता इति । 'एताः' मृत्पिण्डे सिच्यमाना आपः 'पर्णकषायनिष्पक्वाः' पलाशपर्णक्वथिता भवेयुः । 'स्थेम्ने' स्थिरत्वायैव; केवलमृदोखादिकरणे विशरणं स्यात् । पर्णकषायेण पाकं प्रशंसति–यद्वेव पर्णेति । सोमस्य पर्णत्वम्, सर्वौषध्यनुप्रवेशात् । सोमो नाम चन्द्रमाः । स हि 'एकम् अग्निरूपम्' । पूर्वं कुमारस्याग्नेरष्टौ रुद्रादिनामान्युक्तानि ( श. प. ६ । १ । ३ । ११ । १२ ) तेषाञ्चाग्न्युदकौषध्यादीनि रूपाण्यप्युक्तानि । तत्र महादेवेति सप्तमनाम्नः चन्द्रमा रूपम्; "चन्द्रमास्तद्रूपमभवत्" ( श. प. ६।१।३।१६ क. ) इत्युक्तम् । तादृशस्याग्निरूपस्योपाप्त्यै पर्णकषायपक्वाः कुर्यादित्यर्थः ॥ १ ॥

उदकसेचनं समन्त्रं विधत्ते–ता उपसृजत्यापो हि ष्ठेति । अब्देवत्यं तृचं गायत्रम् । तृचस्यायमर्थः– हे 'आपः !' आप्यते सर्वं कार्यं प्राणिनां याभिरित्यापः । आप्नोतेः करणे कर्त्तरि वा क्विप्, तत्सम्बोधनम् । 'मयोभुवः' "मय इति सुखनाम," सुखस्य भावयित्र्यः 'स्थ' । 'हि' यस्मात् ता एवम्भूता यूयं 'नः'

( त्यु ) अथ फेनं जनयित्वाऽन्ववदधाति यदेव तत्फेनो द्वितीयᳫं रूपमसृज्यत तदेवैतद्रूपं करोत्यथ यामेव तत्र मृदᳫं संयौति सैव मृद्यत्तत्तृतीयᳫं रूपमसृज्यतैतेभ्यो वाऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्य एवैनमेतज्जनयति ॥ ३ ॥

---

अथ फेनं जनयित्वाऽन्ववदधाति । यदेव तत् फेनो द्वितीयं रूपमसृज्यत–तदेवैतद्रूपं करोति । अथ यामेव तत्र मृदं संयौति–सैव मृत् । यत्तत् तृतीयं रूपमसृज्यत–एतेभ्यो वाऽएष रूपेभ्योऽग्रेऽसृज्यत । तेभ्य एवैनमेतज्जनयति ॥ ३ ॥

---

अस्मान् 'ऊर्जे' अन्नाद्याय 'दधातन' स्थापयत । "तप्तनप्तनथनाश्च"–( पा. सू. ७ । १ । ४५ ) इति तस्य तनबादेशः । 'महे' महते 'रणाय' रमणीयाय 'चक्षसे' दर्शनाय, ज्ञानाय धत्तेति ॥

यो व इति । 'वः' युष्माकं 'यः' 'शिवतमः' अतिशयेन सुखकरः 'रसः', 'तस्य' रसस्य 'नः' अस्मान् 'इह' लोके 'भाजयत' भागिनः कुरुत । 'उशतीः' कामयमानाः 'मातरः इव' यथा मातरः पुत्रस्य हितं कामयन्ते, एवं यूयमिति ॥

तस्मा अरमिति । 'वः' युष्मत्सम्बन्धिने 'तस्मै' रसाय 'अरं' शीघ्रम्, 'अलं' पर्याप्तं वा 'गमाम' गच्छेम । "क्रियार्थोपपदस्य"–( पा. सू. २ । ३ । १४ ) इति चतुर्थी । 'यस्य' रसस्य 'क्षयाय' अस्मासु निवासार्थं हि स्वयं 'जिन्वथ' प्रीणयथ । "जिविः प्रीणनकर्मा" ( धा. पा. भ्वा.प. ५९४ ) । येन रसेन अस्मान् तर्पयथ, तं गच्छेम । हे 'आपः!' 'नः' अस्मान् 'जनयथ' युष्मदीयभोक्तृत्वेनोत्पादयतेति तृचस्य सङ्गृहीतोऽर्थः ॥

तिस्र ऋचः, तत्प्रतिपाद्यां देवतां च प्रशंसति–यां वै देवतामिति । आपो हि ष्ठेत्यादिका 'ऋक्' 'यां देवताम्' 'अभ्यनूक्ता' अनुवदति, कर्त्तरि क्तप्रत्ययः । 'यां' देवतां 'यजुः' मन्त्रोऽपि । यया ऋचा, येन यजुषा च, या देवता अन्यगुणाभिधानपुरस्सरं प्रतिपाद्यते, सैव प्रतिपाद्या देवता, सा च प्रतिपादिका ऋक्; यजुर्मन्त्रपदैरप्रतीयमाना देवता नोक्तमेत्यर्थः । अतः प्रतिपाद्यप्रतिपादकयोरभेदोपचारेण 'एताः' आपः 'एव' देवताः, 'एषः' "आपो हि ष्ठा"–इति 'त्रिचः' 'तत्' तस्माद् 'या' 'अमूः' अदःशब्दो विप्रकृष्टप्रदेशवचनः । पूर्वं काण्डादौ अग्निसृष्टेरनन्तरम् अश्वादि पृथिव्यन्तं सृष्टिमुक्त्वा ( श. प. ६ । १ । १ । ११ ), "सोऽकामयताभ्योऽद्भ्योऽधीमां प्रजनयेयम्" इत्युपक्रम्य ( श. प. ६ । १ । १ । १२ क. ) "तदिदमेकमेव रूपं" ( श. प. ६ । १ । १ । १२ ) कृतवान् भवति । एवमनुसन्धानार्थमुदकफेनमृत्सिकताशर्करादिसृष्टिरुक्तेति चयनादौ प्रतिपादितम् ॥ २ ॥

पिण्डे फेनासेचनं विधत्ते–अथ फेनं जनयित्वेति । कषायोदकेषु हस्तचालनेन फेनमुत्पाद्य पिण्डे तूष्णीमासिञ्चेत । यदेव तत्फेन इत्यादेरयमर्थः । पूर्वं "सोऽकामयताभ्योऽद्भ्योऽधीमां प्रजनयेयम्"–इत्युपक्रम्य,

---

१–फेनं च तूष्णीं ततः कृत्वा । का० श्रौ० सू० १६ । ८६ ॥

(त्यु) अथाजलोमैः सुᳪसृजति । स्थेम्ने न्वेव यद्वेवाजलोमैरेतद्वाऽएनं देवाः पशुभ्योऽधि समभरंस्तथैवैनमयमेतत्पशुभ्योऽधि सम्भरति तद्यदजलोमैरेवाजे हि सर्वेषां पशूनाᳪ रूपमथ यल्लोम लोम हि रूपम् ॥४॥
(म्मि) मित्रः सᳪसृज्य । पृथिवीं भूमिञ्च ज्योतिषा सहेति प्राणो वै मित्रः प्राणो वाऽएतदग्रे कर्माकरोत्सुजातं जातवेदसमयक्ष्माय त्वा सᳪसृजामि प्रजाभ्यऽ इति यथैव यजुस्तथा बन्धुः ॥ ५ ॥

---

अथाजलोमैः संसृजति । स्थेम्ने न्वेव । यद्वेवाजलोमैः । एतद्वाऽएनं देवाः पशुभ्योऽधि समभरन् । तथैवैनमयमेतत्पशुभ्योऽधि सम्भरति । तद्यदजलोमैरेव । अजे हि सर्वेषां पशूनां रूपम् । अथ यल्लोम । लोम हि रूपम् ॥ ४ ॥

"मित्रः संसृज्य पृथिवीं भूमिञ्च ज्योतिषा सह"–इति । प्राणो वै मित्रः । प्राणो वाऽएतदग्रे कर्माकरोत् । "सुजातं जातवेदसमयक्ष्माय त्वा संसृजामि प्रजाभ्यः"–( वा० सं० ११ । ५३ ) इति । यथैव यजुस्तथा बन्धुः ॥ ५ ॥

---

"तदिदमेकमेव रूपं समदृश्यताप एव"–( श. प. ६ । १ । १ । १२ क. ) इति उदकलक्षणं रूपमुक्त्वा "सोऽकामयत भूय एव स्यादिति ०–० तेपानः फेनमसृजत"–( श. प. ६।१।२।१३ क. ) इति द्वितीयं फेनात्मकं रूपं सृष्टयात्मकम् । अत्र फेनस्य पिण्डे आसेचनेन पूर्वसृष्टफेनात्मकं द्वितीयं रूपमेव मृद्रूपेऽग्नौ निहितवान् भवति ॥

अथ सिक्तेऽग्नौ उदकेन मृदः सम्मिश्रणं विधत्ते–अथ यामेव तत्र मृदमिति । तत्र 'यां मृदं' 'संयौति' जलेन सम्मिश्रयति 'सा मृत्' । एतदनन्तरं सृष्टं मृदात्मकं तृतीयं रूपम् । तत्र ह्येवमाम्नातम्–" अथ यो गर्भोऽन्तरासीत् सोऽग्निरसृज्यतेति" ( श. प. ६ । १ । ११ ) । "स श्रान्तस्तेपानो मृदं शुष्कापमिति" ( श. प. ६ । १ । १ । १३ ) । तेभ्यो वा एष इति । 'एषः' अग्निः 'तेभ्यः' उदकफेनमृदादिभ्यः पूर्वं सृष्टः । अतो जलफेनमृदां सम्मिश्रणेन अबादिरूपेभ्यः पूर्वं सृष्टाग्निमेव उत्पादितवान् भवति ॥३॥

अथ तत्राजलोममिश्रणं विधत्ते–अथाजलोमैः संसृजतीति[1] । 'स्थेम्ने' स्थिरत्वाय । अजलोमं प्रशंसति–यद्वेवाजलोमैरिति । यथा पूर्वं 'देवाः' 'एनम्' अष्टरूपात्मना गूढमग्निं पुरुषादिपञ्चपशुभ्यः सकाशात् सम्भृतवन्तः, तथा 'अयं' यष्टा पिण्डेऽजलोमसंसर्गेण पशुभ्य एव सम्भृतवान् भवति । यद्येवं तर्हि केवलाजलोमसंसर्गेण सर्वेभ्यः पुरुषादिभ्यः अग्नेः सम्पादनमित्याशङ्क्य अजपशौ सर्वं पशुरूपमुपपादयति–अजे हि सर्वेषामिति । तथा पुरस्तात् वायव्यैकपशुप्रस्तावे समाम्नातम्–" यद्वेवैतं पशुमालभत एतस्मिन् ह पशौ सर्वेषां पशूनां रूपम्, यत् तूपरो लम्सुदी तत् पुरुषस्य रूपम् "–( श. प. ६ । २ । २ । १९ कं. ) इत्यादिना । प्रकारान्तरेण अजे सर्वपशुरूपमाह–अथ यल्लोमेति । लोमानि सर्वेषु पशुषु सन्ति; लोमलक्षणं रूपं सर्वसाधारणमित्यर्थः ॥ ४ ॥

लोमसम्मिश्रणं विधत्ते–मित्रः संसृज्येति । 'मित्रः' प्राणः आदित्यो वा 'पृथिवीं भूमिं च' लोकत्रय-

---

1–अजलोमभिः सᳪसृजति मित्रः सᳪसृज्येति का. श्रौ. सू. १६ । ८७ ।

(उ) अ॒थै॒तत्त्र॒यं पि॒ष्टं भ॑वति । शर्क॑राऽअश्मा॒ऽयोर॒सस्तेन॑ स॒ᳬ᳖सृ॑जति स्थेम्ने॒ न्वे॒व य॒द्वेव॒ तेनै॒ताव॑ती॒ वा॒ऽइ॒यम॒ग्रे॑ऽसृज्यत त॒द्याव॑तीय॒मग्रे॑ऽसृज्यत ताव॑तीमे॒वैना॑मे॒तत्क॑रोति ॥ ६ ॥

रु॒द्राः स॒ᳬ᳖सृ॒ज्य । पृ॒थि॒वीं बृ॒हज्ज्यो॑तिः समी॑धिर॒ऽइ॒त्य॑सौ॒ वा॒ऽआ॒दि॒त्य॒ ऽए॒षो॒ऽग्नि॒रे॒तद्वै॑ तद्रु॒द्राः स॒ᳬ᳖सृ॒ज्य पृ॒थि॒वीं बृ॒हज्ज्यो॑तिः समी॑धिरे॒ ते॒षां भा॒नु॒रज॑स्र॒ऽइ॒च्छु॒क्रो दे॒वेषु॒ रो॑चत॒ऽइ॒त्ये॒ष वा॒ऽए॒षां भा॒नुरज॑स्रः शु॒क्रो दे॒वेषु॒ रो॑चते ७

द्वा॒भ्या॒ᳬ᳖ स॒ᳬ᳖सृ॑जति । द्वि॒पाद्य॒जमा॑नो॒ य॒जमा॑नो॒ऽग्नि॒र्याव॑ान॒ग्नि॒र्याव॑त्यस्य॒ मा॒त्रा ता॒व॒तै॒वैन॑मे॒तत्स॒ᳬ᳖सृ॑जति ॥ ८॥

---

अथैतत्त्रयं पिष्टं भवति—शर्कराऽश्माऽयोरसः । तेन संसृजति । स्थेम्ने न्वेव । यद्वेव तेन । एतावती वाऽइयमग्रेऽसृज्यत । तद्यावतीयमग्रेऽसृज्यत—तावतीमेवैनामेतत् करोति ॥ ६ ॥

"रुद्राः संसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे"—इति । असौ वाऽआदित्यः, एषोऽग्निः । एतद्वै तद्रुद्राः संसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे । "तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते"—( वा. सं. ११ । ५४ ) इति । एष वाऽएषां भानुरजस्रः शुक्रो देवेषु रोचते ॥ ७ ॥

द्वाभ्यां संसृजति । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतत्संसृजति ॥ ८ ॥

---

स्यापि पृथिवीशब्दवाच्यत्वम् भूमिशब्दवाच्यत्वं च दृश्यते—"तिस्रो भूमीर्धारयन् त्रीरुत द्यून्"—( ऋ. सं. २ । २७ । ८ ) इति । 'तिस्रः भूमीः' तिस्रः पृथिवीः अत्रैतयोरुभयोर्दर्शनात् चकारशब्देनापि त्रीन् लोकानित्यर्थः सिद्धः । 'ज्योतिषा' तेजसा । अत्र ज्योतिःशब्दोऽजलोमवचनः । अजस्याग्नेयत्वादजलोमभिः 'सह' 'सुजातं जातवेदसम्' सद्रूपमग्निं 'त्वा' त्वाम् 'प्रजाभ्यः' 'अयक्ष्माय' रोगरूपपापापनुत्तये 'संसृजामि' सम्मिश्रं करोमि, अहमध्वर्युरिति ॥ ५ ॥

अथ शर्कराश्मायोरसचूर्णैः संसर्गं विधत्ते—अथैतत् त्रयं पिष्टमिति । 'एतद्' वक्ष्यमाणं शर्करादित्रयं चूर्णितं भवेत् । "पिष्लृ सञ्चूर्णने"—( धा. पा. रु. प. १९ ) इत्यस्य निष्ठा । पूर्वं शर्करादीनि त्रीणि रूपाणि सृष्टानि "शर्करामश्मानमयो हिरण्यमोषधिवनस्पत्यसृजत"—इति हि प्रागाम्नातम् (श. प. ६।१।१।१३) । अधुना तेन त्रयेण संसर्गे तैरेव त्रिभी रूपैर्मृदं रूपवतीं कृतवान् भवति ॥ ६ ॥

मन्त्रं विधत्ते—रुद्राः संसृज्येति । 'रुद्राः' 'पृथिवीं' पार्थिवं 'बृहज्ज्योतिः' अग्निलक्षणं पार्थिवं पिण्डं शर्कराश्मायोरसैः 'संसृज्य' 'समीधिरे' उखायां दीपितवन्तः । रुद्राः उखायामग्निं संवत्सरं धारितवन्तः । तेषां फलमाह—तेषामिति । 'तेषां' रुद्राणाम् 'भानुः' दीप्तिः 'अजस्र इत्' अनुपक्षीणैव 'देवेषु' मध्ये 'शुक्रः' शुक्लवर्णो 'रोचते' दीप्यते ॥ ७ ॥

द्वाभ्यां सᳬ᳖सृजतीति । पूर्वमजलोमैः संसर्गे एको मन्त्रः, शर्करादिसंसर्गे द्वितीयः, तावुभौ मिलित्वा प्रशंसति—द्विपाद्यजमान इति ॥ ८ ॥

---

१—शर्करायोरसाश्मचूर्णैश्च रुद्राः सᳬ᳖सृज्येति । का. श्रौ. सू. १६ । ८८ ।

( त्यु ) अथ प्रयौति । स॒ᳪसृ॒ष्टां वसु॑भी रु॒द्रैरिति स॒ᳪसृ॒ष्टा ह्येषा वसुभिश्च रुद्रैश्च भवति यन्मित्रेण तद्वसुभिर्यद्रुद्रैस्तत्तद्रुद्रैर्धीरैः कर्मण्यां मृदमिति धीरा हि ते कर्मण्योऽइयं मृद्धस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु तामिति वाग्वै सिनीवाली सैनाᳪ हस्ताभ्यां मृद्वीं कृत्वा करोत्वित्येतत् ॥ ९ ॥

( त्सि ) सिनीवाली सुकपर्दा सुकुरीरा स्वौपशेति । योषा वै सिनीवाल्येतद्वै योषायै समृद्धᳪ रूपं यत्सुकपर्दा सुकुरीरा स्वौपशा समर्द्धयत्येवैनामेतत्सा तुभ्यमदिते मह्योखां दधातु हस्तयोरितीयं वाऽअदितिर्मह्यस्यै तदाह ॥ १० ॥

---

अथ प्रयौति—"संसृष्टां वसुभी रुद्रैः"—इति । संसृष्टा ह्येषा वसुभिश्च रुद्रैश्च भवति । यन्मित्रेण—तद्वसुभिः । यद्रुद्रैः—तत्तद्रुद्रैः । "धीरैः कर्मण्यां मृदम्"—इति । धीरा हि ते । कर्मण्या—उ इयं मृत् । "हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम्"—( वा. सं. ११।५५ ) इति । वाग्वै सिनीवाली । सैनां हस्ताभ्यां मृद्वीं कृत्वा करोत्वित्येतत् ॥ ९ ॥

"सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा"—इति । योषा वै सिनीवाली । एतद्वै योषायै समृद्धं रूपम्—यत्सुकपर्दा सुकुरीरा स्वौपशा । समर्द्धयत्येवैनामेतत् । "सा तुभ्यमदिते मह्योखां दधातु हस्तयोः"—(वा.सं. ११।५६) इति । इयं वाऽअदितिर्मही । अस्यै तदाह ॥ १० ॥

---

अथ मृदः सम्मिश्रणं समन्त्रं विधत्ते—अथ प्रयौतीति[1] । तिसृभिर्ऋग्भिः । मृदं प्रकर्षेण 'यौति' पिण्डे सम्मिश्रयेत् । 'धीरैः' धारयद्भिः, 'वसुभिः' देवैः 'रुद्रैः' च 'संसृष्टाम्' । वसुपदेनात्राजलोमसंसर्गमन्त्रो "मित्रः संसृज्य"—इति विवक्षितः । रुद्रपदेन शर्करादिसंसर्गमन्त्रो "रुद्राः संसृज्य"—इति विवक्षितः । तन्मन्त्रद्वयप्रतिपाद्यैः वसुभिः रुद्रैश्च संयोजितां कर्मण्यां कर्मणे सम्पादितां 'मृदं' मृत्तिकां 'सिनीवाली' दृष्टेन्दुः, तदभिमानिदेवता 'हस्ताभ्यां' 'मृद्वीं' मृदुरूपां 'कृत्वा,' 'तां' कर्मार्हां 'कृणोतु' करोतु ॥ वसुरुद्रपदाभ्यां "मित्रः संसृज्य," "रुद्राः संसृज्य"—इति मन्त्रौ विवक्षितावित्याह—यन्मित्रेण तद्वसुभिर्यद्रुद्रैरिति ॥ ९ ॥

सिनीवालीति । एष द्वितीयो मन्त्रः । तस्यायमर्थः—सिनीवाल्या योषात्वात् तदुचिता धर्मा उच्यन्ते—सुकपर्देत्यादि । 'सुकपर्दा' कपर्दः केशसंयमनवेणिः साधुवेणियुक्ता । 'सुकुरीरा' कुरीरो मुकुटः, तद्वती । "स्वौपशा" औपशो नाम जघनभागः, सुजघना । यद्वा, उपशेते शयनं करोति यैरवयवविशेषैः ते सर्वेऽप्युपशाः, तेषां समूहः औपशः, शोभनः शयनविदग्धो विलासचतुरः औपशोऽवयवसमूहः यस्याः सा स्वौपशा । या एवंविधा सिनीवाली सा । हे 'अदिते !' हे 'महि !' महीरूपे ! 'तुभ्यं' 'हस्तयोः' 'उखां' 'दधातु' स्थापयतु । "योषा वै सिनीवाली"—इत्यादिना योषात्वसमर्थनम् ॥ १० ॥

---

१—सᳪसृष्टामिति संयौति । का० श्रौ० सू० १६ । ८९ ।

( द्वो ) उखां कृणोतु । शुक्त्या बाहुभ्यामदितिर्धियेति शुक्त्या च हि करोति बाहुभ्यां च धिया च माता पुत्रं यथोपस्थे साऽग्निं बिभर्तु गर्भ ऽएति यथा माता पुत्रमुपस्थे बिभृयादेवमग्निं गर्भे बिभर्त्वित्येतत् ॥ ११ ॥

( त्रि ) त्रिभिः प्रयौति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रयौति द्वाभ्याᳫँ सᳫँसृजति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति त्रिभिरपऽउपसृजति तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवत्यथोऽअष्टाक्षरा वाऽइयमग्रेऽसृज्यत तद्यावतीयमग्रेऽसृज्यत तावतीमेवैनामेतत्करोति ॥ १२ ॥

इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ६-३-६ ॥ ( ९. १. ) ॥

---

" उखां कृणोतु शक्त्या बाहुभ्यामदितिर्धिया "-इति । शक्त्या च हि करोति बाहुभ्यां च धिया च । "माता पुत्रं यथोपस्थे साऽग्निं बिभर्तु गर्भ आ"-( वा. सं. ११।५७) इति । यथा माता पुत्रमुपस्थे बिभृयाद्-एवमग्निं गर्भे बिभर्त्वित्येतत् ॥ ११ ॥

त्रिभिः प्रयौति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा-तावतैवैनमेतत्प्रयौति । द्वाभ्यां संसृजति । तत् पञ्च । पञ्चचितिकोऽग्निः । पञ्चऽर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा-तावत्तद्भवति । त्रिभिरप उपसृजति । तदष्टौ । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा-तावत्तद्भवति । अथोऽअष्टाक्षरा वाऽइयमग्रेऽसृज्यत । तद्यावतीयमग्रेऽसृज्यत । तावतीमेवैनामेतत्करोति ॥ १२ ॥

---

उखां कृणोत्विति । अयं तृतीयो मन्त्रः । तस्यायमर्थः,-' अदितिः ' अखण्डनीया, एतन्नामधेयदेवता ' बाहुभ्यां ' ' शक्त्या ' सामर्थ्येन ' धिया ' बुद्धया च ' उखां ' ' कृणोतु ' करोतु । ' यथा माता पुत्रम् ' ' उपस्थे ' स्वोत्सङ्गे ' बिभर्त्ति, ' एवं सा अदितिः ' गर्भे ' उखाभ्यन्तरे ' अग्निम् ' ' आबिभर्त्तु ' सर्वतो धारयतु ' इति ' ॥ ११ ॥

सम्मिश्रणमन्त्रगतत्रित्वसङ्ख्यां त्रिवृदग्न्यात्मना स्तौति-त्रिभिः प्रयौति त्रिवृदिति । पूर्वमजलोमशर्करादिसंसर्गे मन्त्रौ द्वौ, ताभ्यां सहोक्तसङ्ख्यां प्रशंसति-द्वाभ्यां संसृजति, तत् पञ्च पञ्चचितिकोऽग्निरिति । पञ्चर्तव इति । " हेमन्तशिशिरयोः समासेन "-( ऐ. ब्रा. १ । १ । १ ) इत्युक्तम् । अग्नेः संवत्सरात्मकत्वात्, अग्नेश्च पञ्चसङ्ख्यया तद्रूपं मृदं सम्पादितवान् भवति, अथोदकसेचने " आपो हि ष्ठा " इत्याद्यास्तिस्रः, ताभिः सहैतां पञ्चसङ्ख्यां प्रशंसति-त्रिभिरप उपसृजति तदष्टाविति । अग्नेर्गायत्रत्वं सङ्ख्यासामान्यात् । तथा चान्यत्राम्नातम्-" यद्वेवाष्टावग्निरूपाणि, अष्टाक्षरा गायत्री, तस्माद।हुर्गायत्रोऽग्निरिति " ( श, प. ६ ।

अथ मृत्पिण्डमपादत्ते। यावन्तं निधयेऽलं मन्यते मखस्य शिरोऽसीति यज्ञो वै मखस्तस्यैतच्छिरऽआहवनीयो वै यज्ञस्य शिर ऽआहवनीयमु वा ऽएतं चेष्यन्भवति तस्मादाह मखस्य शिरोऽसीति ॥ १ ॥

यद्वेवाह मखस्य शिरोऽसीति। जायतऽएष ऽएतद्यच्चीयते शीर्षतो वै मुखतो जायमानो जायते शीर्षतो मुखतो जायमानो जायाताऽइति ॥ २ ॥

---

अथ मृत्पिण्डमपादत्ते। यावन्तं निधयेऽलं मन्यते—"मखस्य शिरोऽसि"—( वा. सं. ११। ५७ ) इति। यज्ञो वै मखः। तस्यैतच्छिरः। आहवनीयो वै यज्ञस्य शिरः। आहवनीयमु वाऽएतं चेष्यन् भवति। तस्मादाह—मखस्य शिरोऽसीति ॥ १ ॥

यद्वेवाह—मखस्य शिरोऽसीति। जायतऽएष एतद्—यच्चीयते। शीर्षतो वै मुखतो जायमानो जायते। शीर्षतो मुखतो जायमानो जायाताऽ इति ॥ २ ॥

---

१।३।१९ ) इति। प्रकारान्तरेणाष्टसङ्ख्यां प्रशंसति—अथो अष्टाक्षरेति। पूर्वं प्रथमाध्याये तृतीयब्राह्मणे प्रजापतिरेक एव सन् अस्यां पृथिव्यां बहुधा प्रजायेयेति विचार्य उदकफेनमृत्सिकताशर्कराश्मायोहिरण्यान्यष्टौ सृष्ट्वाऽक्षरत्—"तद् यदसृज्यताक्षरत्, तद्यदक्षरत्, तस्मादक्षरम्, अष्टौ कृत्वोऽक्षरत् सैवाष्टाक्षरा गायत्र्यभवत्"—( श. प. ६। १। ३। ६। ) इति। यथा 'यावती' अष्टाक्षरा 'अग्रे' पूर्वम् 'असृज्यत,' तथा अग्निः "आपो हि ष्ठा"—इत्यादिभिर्मन्त्रैर्मृत्पिण्डे उदकसेचनाजलोमशर्करादित्रयसंसर्गमिश्रणैः 'तावतीम्' तावत्सङ्ख्याम् 'एनां' मृदं कृतवान् भवतीति ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ॥ ६। ५। १ ॥

अथोखाया अधस्तलपर्याप्तमृत्पिण्डादानं विधत्ते—अथ मृत्पिण्डमिति। 'निधिः' नाम उखाया अधस्तलम्, तस्मै; 'यावन्तं' पर्याप्तं 'मन्यते' यजमानः, तावन्तम् आददीत। उखाकरणे यजमानः कर्ता। तथा च कात्यायनः—"यजमान उखां करोति मृदमादाय मखस्य शिर इति"—( का. श्रौ. सू. १६। ९२ ) इति। आदाने मन्त्रं विधत्ते—मखस्य शिरोऽसीतीति। हे मृत्पिण्ड! त्वं 'मखस्य शिरोऽसि'। एतद् यजुर्व्याचष्टे—यज्ञो वै मख इति। यथा आहवनीयो यज्ञस्य शिरः, अग्न्याधारत्वात्; एवं मृत्पिण्डोऽपि वह्न्याधारत्वादाहवनीयस्य चीयमानत्वाच्च लक्षणया यज्ञशिर इत्युच्यते ॥ १ ॥

प्रकारान्तरेण स्तोतुमनुवदति—यद्वेवाह मखस्येति। इष्टकाभिश्चीयते, इति यत्, तत् एषोऽग्निर्जायते। चयनं नाम जन्मेत्यर्थः। लोके ह्युत्पद्यमानः पुरुषः प्रथमं 'शीर्षतः' शिरःप्रभृतिक एव 'चीयते' जायते। एवमग्निः शीर्षतो जायतामित्यभिप्रायेण "यज्ञस्य शिरोऽसि"—इत्युक्तम्। 'जायातै'—इति जनेः पञ्चमलकारे रूपम् ॥ २ ॥

तं प्रथयति । व्वसवस्त्वा कृण्वन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वदित्ययᳬ हैषु लोको निधिस्तमेतद्वसवो गायत्रेण च्छन्दसाऽकुर्व्वंस्तथैवैनमयमेतद्गा यत्रेण च्छन्दसा करोत्यङ्गिरस्वदिति प्राणो वाऽअङ्गिरा ध्रुवाऽसीति स्थिरा-ऽसीत्येतदथो प्रतिष्ठिताऽसीति पृथिव्यसीति पृथिवी ह्येषु निधिर्धारया मयि प्रजाᳬ रायस्पोषं गौपत्यᳬ सुवीर्यᳬ सजातान्यजमानायेत्येतद्वै व्वसव ऽइमं लोकं कृत्वा तस्मिन्नेतामाशिषमाशासत तथैवैतद्यजमान ऽइमं लोकं कृत्वा तस्मिन्नेतामाशिषमाशास्ते तां प्रादेशमात्रीं कृत्वाऽथास्यै सर्व्वु-तस्तीरमुन्नयति ॥ ३ ॥

---

तं प्रथयति । " वसवस्त्वा कृण्वन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वद् "–इति । अयं हैष लोको निधिः । तमेतद्वसवो गायत्रेण च्छन्दसाऽकुर्वन् । तथैवैनमयमेतद् गायत्रेण च्छन्दसा करोति। अङ्गिरस्वादिति । प्राणो वाऽअङ्गिराः । " ध्रुवाऽसि "–इति स्थिराऽसीत्येतत् । अथो प्रतिष्ठिता-ऽसीति । " पृथिव्यसि "–इति । पृथिवी ह्येष निधिः । " धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यजमानाय"–इति । एतद्वै वसव इमं लोकं कृत्वा तस्मिन्नेतामाशिष-माशासत । तथैवैतद्यजमान इमं लोकं कृत्वा तस्मिन्नेतामाशिषमाशास्ते । तां प्रादेशमात्रीं कृत्वा । अथास्यै सर्वतस्तीरमुन्नयति ॥ ३ ॥

---

तत्र प्रथनं समन्त्रं विधत्ते–तं प्रथयतीति[१] । ' प्रथयति ' विस्तारयति । उखा नाम लोकत्रयात्मिकेति स्तुता, तत्र " निधिः ' भूलोकः; उत्तरत्र " द्यौर्ह्येष उद्धिर्धारय" इति श्रवणात् ' उत्तरोत्तरमृत्पिण्डप्रक्षेपौ अन्त-रिक्षद्युलोकात्मकौ; अतो मन्त्रत्रयेऽपि लोकत्रयवाचकानि पदानि विद्यन्ते । यथा, निधिप्रथनमन्त्र एवमाम्नायते– " वसवस्त्वा कृण्वन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वद् ध्रुवाऽसि पृथिव्यसि धारया मयि प्रजाᳬ रायस्पोषं गौपत्यᳬ सुवीर्यᳬ सजातान् यजमानाय"–(वा.सं. ११।५८) इति । अयमर्थः,–'वसवः' नाम भूलोकरक्षका देवाः 'त्वा' त्वाम् उखां भूलोकात्मिकां 'कृण्वन्तु' कुर्वन्तु ' गायत्रेण च्छन्दसा ' सह 'अङ्गिरस्वत्' प्राणवत्, हे उखे ! ' ध्रुवा असि ' स्थिरा असि, ' पृथिवी ' च 'असि' भूलोकात्मिका च भवसि । "धारया मयि"–इति यजुःशेषेण यज-माने आशिषमाशास्ते; यजमानाय मयीति सप्तमीनिर्देशात् ' यजमानाय '–इति सप्तम्यर्थे चतुर्थी । ' प्रजां ' ' धारय ' स्थापय । ' रायस्पोषं ' धनपुष्टिम्, ' गौपत्यं ' गवां पतित्वम् ' सुवीर्यं ' सुवीराणां कर्म, अथ ' सजातान् ' समानोदरे जातान् भ्रातॄनपि धारयेति सर्वत्र सम्बन्धः । मन्त्रं व्याचष्टे–अयं हैष लोको निधिरिति । ' एषः ' भूलोकः ' निधिः ' उखाया अधस्तलम् । तदेतद् यथा ' वसवोऽकुर्वन्, ' एवं यष्टापि वसव इति पाठेन भूलोकमेव कृतवान् भवति । ध्रुवाऽसीत्यस्य व्याख्यानं स्थिराऽसीति, तस्य व्याख्यानं–प्रतिष्ठि-ताऽसीति । पृथिव्यसीत्यस्य व्याख्यानं–पृथिवी ह्येष निधिरिति । निधिर्नामोखाया अधस्तलमिति प्रागुक्तम् । धारया मयीत्यादिना यजमानस्य स्वाशीराशासनम् ॥

---

१–व्वसवस्त्वेति प्रथयति । का. श्रौ. सू. १६ । ९५ ।

( त्यु ) अ॒थ पूर्व॑मु॒द्धिमा॒दधाति। रु॒द्रास्त्वा कृण्वन्तु॒ त्रैष्टु॑भेन॒ च्छन्द॑साऽङ्गिर॒स्वदि॑त्य॒न्तरि॑क्षꣳ॒ ह्येषु उ॒द्धिस्तमे॒तद्रु॒द्रास्त्रैष्टु॑भेन॒ च्छन्द॑साऽकुर्व॒ꣳस्तथै॒वैन॑म॒यमे॒तत्त्रैष्टु॑भेन॒ च्छन्द॑सा करोत्यङ्गिर॒स्वदि॑ति प्रा॒णो वाऽअ॒ङ्गिरा ध्रु॒वाऽसी॒ति स्थि॒राऽसी॒त्येतदथो॑ प्रति॑ष्ठि॒ताऽसी॒त्य॒न्तरि॑क्षमसी॒त्य॒न्तरि॑क्षꣳ॒ ह्येषु ऽउ॒द्धिर्धा॒रया॒ मयि॑ प्र॒जाꣳ रा॒यस्पोषं॒ गौप॑त्यꣳ सु॒वीर्य॑ꣳ सजा॒ता॒न्यज॑मानायेत्ये॒तद्वै रु॒द्राऽ अ॒न्तरि॑क्षं कृ॒त्वा त॒स्मिन्ने॒तामा॒शिष॑मा॒शास॑त त॒थै॒वैत॒द्यज॑मानोऽ॒न्तरि॑क्षं कृ॒त्वा त॒स्मिन्ने॒तामा॒शिष॑मा॒शास्ते॒ ताꣳ संलि॒प्य सꣳश्लक्ष्ण्य ॥ ४ ॥

---

अथ पूर्वमुद्धिमादधाति। "रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वद्"–इति। अन्तरिक्षं ह्येष उद्धिः तमेतद् रुद्रास्त्रैष्टुभेन च्छन्दसाऽकुर्वन्। तथैवैनमयमेतत् त्रैष्टुभेन च्छन्दसा करोति। आङ्गिरस्वादिति। प्राणो वाऽअङ्गिराः। "ध्रुवाऽसि"–इति। स्थिराऽसीत्येतद्। अथो प्रतिष्ठिताऽसीति। "अन्तरिक्षमसि"–इति। अन्तरिक्षं ह्येष उद्धिः। "धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यजमानाय"–इति। एतद्वै रुद्रा अन्तरिक्षं कृत्वा तस्मिन्नेतामाशिषमाशासत। तथैवैतद्यजमानोऽन्तरिक्षं कृत्वा तस्मिन्नेतामाशिषमाशास्ते। तां संलिप्य संश्लक्ष्ण्य ॥ ४ ॥

---

उत्तरत्रोखाया ऊर्ध्वपरिमाणं वक्ष्यते। अत्र निधेस्तिर्यग्विस्तारस्य परिमाणं विधत्ते–तां प्रादेशमात्रीमिति। 'तां' निधिपर्याप्तां मृदं तिर्यक् 'प्रादेशमात्रीं कृत्वा' 'अथ' अनन्तरम् 'अस्यै' अस्याः विस्तारिताया निधेर्मृदः 'सर्वतः' 'तीरम्' अन्तम् 'उन्नयति' ऊर्ध्वं कुर्यात्। तथा च सूत्रम्–"वसवस्त्वेति प्रथयत्यन्तानुन्नीय सर्वतः"–( का. श्रौ. सू. १६। ९५ ) इति ॥ ३ ॥

अथ तिर्यक् प्रादेशमात्रं विस्तारिताया निधिमृदः उपरि मृत्पिण्डप्रक्षेपं समन्त्रं विधत्ते–अथ पूर्वमुद्धिमादधातीति। 'पूर्वं' प्रथमम्। 'उद्धि'–शब्दो मृत्पिण्डप्रदेशवाची। अत एव कात्यायनः–"प्रथमं धातुमादधाति"–( का. श्रौ. सू. १६। ९६ ) इत्युक्तवान्। धातुशब्द उत्तरोत्तरक्रमेणावस्थानमाह; "त्रिधात्वलाबुपात्रम्"–इत्यादिप्रयोगदर्शनात्। अथ द्वितीयमन्त्र एवमाम्नायते–"रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वद् ध्रुवाऽस्यन्तरिक्षमसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय"–इति। मन्त्रस्यायमर्थः–हे उखे! त्वां 'रुद्राः' अन्तरिक्षाभिमानिनः 'कृण्वन्तु'। अत्र मन्त्रे 'त्रैष्टुभेन छन्दसा'–इति, 'अन्तरिक्षमसि'–इति च विशेषः। शेषं पूर्ववत्। निधेर्भूलोकात्मकत्वादुपरिनिहितमृत्पिण्डस्यान्तरिक्षलोकात्मकत्वम्। मन्त्रव्याख्यापकं ब्राह्मणमपि पूर्ववत्। तां संलिप्येति। तां निधेरुपरि निहितां मृदं 'संलिप्य' सम्मार्ज्य 'संश्लक्ष्ण्य' श्लक्ष्णां स्निग्धां कुर्यादित्यर्थः ॥ ४ ॥

---

१–संलिप्य श्लक्ष्णां कृत्वोत्तरमादित्यास्त्वेति। का० श्रौ० सू० १६। ९७॥

१५५३

(क्ण्या) अथोत्तरमुद्धिमादधाति । (त्या) आदित्यास्त्वा कृण्वन्तु जागतेन च्छन्दसाऽङ्गिरस्वदिति द्यौर्हैषुऽ उद्धिस्तमेतदादित्या जागतेन च्छन्दसाऽकुर्व्वंस्तथैवैनमयमेतज्जागतेन च्छन्दसा करोत्यङ्गिरस्वदिति प्राणो वाऽअङ्गिरा ध्रुवाऽसीति स्थिराऽसीत्येतदथो प्रतिष्ठिताऽसीति द्यौरसीति द्यौर्ह्येषऽउद्धिर्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायेत्येतद्वा ऽआदित्या दिवं कृत्वा तस्यामेतामाशिषमाशासत तथैवैतद्यजमानो दिवं कृत्वा तस्यामेतामाशिषमाशास्ते ॥ ९ ॥

( स्तेऽथै ) अथैतेन चतुर्थेन यजुषा करोति । विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन च्छन्दसाऽङ्गिरस्वदिति दिशो हैतद्यजुरेतद्वै विश्वे देवा वैश्वानराऽएषु लोकेषूखायामेतेन चतुर्थेन यजुषा दिशोऽदधुस्तथैवैतद्यजमानऽएषु लोकेषूखायामेतेन चतुर्थेन यजुषा दिशो दधात्यङ्गि-

---

अथोत्तरमुद्धिमादधाति । "आदित्यास्त्वा कृण्वन्तु जागतेन च्छन्दसाऽङ्गिरस्वद्"-इति । द्यौर्हैष उद्धिः । तमेतदादित्या जागतेन च्छन्दसाऽकुर्वन् । तथैवैनमयमेतज्जागतेन च्छन्दसा करोति । अङ्गिरस्वदिति । प्राणो वा अङ्गिराः । "ध्रुवाऽसि"-इति । स्थिराऽसीत्येतत्, अथो प्रतिष्ठिताऽसीति । "द्यौरसि"-इति । द्यौर्ह्येष उद्धिः । "धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यजमानाय"-इति । एतद्वाऽआदित्या दिवं कृत्वा तस्यामेतामाशिषमाशासत । तथैवैतद् यजमानो दिवं कृत्वा तस्यामेतामाशिषमाशास्ते ॥ ५ ॥

अथैतेन चतुर्थेन यजुषा करोति -" विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन च्छन्दसाऽङ्गिरस्वद्"-इति । दिशो हैतद्यजुः । एतद्वै विश्वे देवाः । वैश्वानरा एषु लोकेषूखायामेतेन

---

अथ प्रथमोद्धेरुपरि अन्यमृत्पिण्डप्रक्षेपं समन्त्रं विधत्ते—अथोत्तरमुद्धिमादधातीति । अथ तृतीयमन्त्र एवमाम्नायते—" आदित्यास्त्वा कृण्वन्तु जागतेन च्छन्दसाऽङ्गिरस्वद् ध्रुवाऽसि द्यौरसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय "—इति ॥

अत्र आदित्या द्युलोकाभिमानिन्यो देवताः त्वामुखां कुर्वन्तु । अत्र मन्त्रे 'जागतेन छन्दसा'—इति, 'द्यौरसि'—इति च विशेषः । शेषं पूर्ववत् । प्रथमोद्धेरन्तरिक्षात्मकत्वात् तस्योपरि निहितमृत्पिण्डस्य द्युलोकात्मकत्वम् ॥ ९ ॥

अथ निधेरुद्धिद्वयस्य च समीकरणं समन्त्रं विधत्ते—अथैतेन चतुर्थेनेति । उक्तमन्त्रत्रयापेक्षया एतस्य यजुषश्चतुर्थत्वम् । वैश्वानराः विश्वनरसम्बन्धिनो 'विश्वे देवाः त्वाम् आनुष्टुभेन च्छन्दसा' कुर्वन्त्विति । दिशो

---

१–विश्वे त्वेति समीकरोति । का. श्रौ. सू. । १६ । ९८ ।

रस्वदिति प्राणो वाऽअङ्गिरा ध्रुवाऽसीति स्थिराऽसीत्येतदथो प्रतिष्ठिताऽसीति दिशोऽसीति दिशो ह्येतद्यजुर्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायेत्येतद्वै विश्वे देवा वैश्वानरा दिशः कृत्वा तास्वेतामाशिषमाशासत तथैवैतद्यजमानो दिशः कृत्वा तास्वेतामाशिषमाशास्ते ॥ ६ ॥

तेनैतेनान्तरतश्च बाह्यतश्च करोति । तस्मादेषां लोकानामन्तरतश्च बाह्यतश्च दिशोऽपरिमितमेतेन करोत्यपरिमिता हि दिशः ॥ ७ ॥

( स्त्वां ) तां प्रादेशमात्रीमेवोर्ध्वां करोति । प्रादेशमात्रीं तिरश्चीं प्रादेशमात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोति ॥ ८ ॥

---

चतुर्थेन यजुषा दिशोऽदधुः । तथैवैतद्यजमान एषु लोकेषूखायामेतेन चतुर्थेन यजुषा दिशो दधाति । अङ्गिरस्वदिति । प्राणो वाऽअङ्गिराः । " ध्रुवाऽसि "—इति । स्थिराऽसीत्येतद् । अथो प्रतिष्ठिताऽसीति । " दिशोऽसि "—इति । दिशो ह्येतद्यजुः । "धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यजमानाय"—( वा०सं० ११।५८ ) इति । एतद्वै विश्वे देवाः । वैश्वानरा दिशः कृत्वा तास्वेतामाशिषमाशासत । तथैवैतद्यजमानो दिशः कृत्वा तास्वेतामाशिषमाशास्ते ॥ ६ ॥

तेनैतेनान्तरतश्च बाह्यतश्च करोति । तस्मादेषां लोकानामन्तरतश्च बाह्यतश्च दिशोऽपरिमितमेतेन करोति । अपरिमिता हि दिशः ॥ ७ ॥

तां प्रादेशमात्रीमेवोर्ध्वां करोति । प्रादेशमात्रीं तिरश्चीम् । प्रादेशमात्रो वै गर्भो विष्णुः । योनिरेषा । गर्भसम्मितां तद्योनिं करोति ॥ ८ ॥

---

ह्येतद्यजुरित्यादेरयमर्थः,—उखाया लोकत्रयात्मकत्वात् ' एतेन ' ' यजुषा ' समीकरणेन तस्यां दिश एव निहितवन्तो भवन्ति ॥

सोऽयं चतुर्थो मन्त्रः—" विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन च्छन्दसाऽङ्गिरस्वद् ध्रुवाऽसि दिशोऽसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय "—इति । अत्र मन्त्रे ' आनुष्टुभेन च्छन्दसा '—इति, ' दिशोऽसि '—इति च विशेषः ॥ ६ ॥

पूर्वम् " अथैतेन चतुर्थेन यजुषा करोति " इति क्रियासामान्यमुक्तम्, तद् विशिनष्टि—तेनैतेनान्तरतश्च बाह्यतश्चेति । ' अन्तरतः ' उखाद्वयस्य मध्यप्रदेशे अपरिमितं छिद्रं कुर्यात्, ' बाह्यतः ' अपि निम्नोन्नतत्वपरिहारेण सर्वतः समं कुर्यात् । एतस्य यजुषो दिगात्मकत्वात्, उखायाश्च लोकत्रयात्मकत्वात् ' एतेन ' अनेन अन्तरतो बाह्यतश्च समीकरणेन लोकत्रयस्य मध्ये बहिश्च ' अपरिमिता दिशः ' निहितवान् भवति ॥७॥

उखाया ऊर्ध्वपरिमाणं विधत्ते—तां प्रादेशमात्रीमिति । एवकारेण परिमाणान्तरनिवृत्तिः । ऊर्ध्वा यथा

सा यदि व्वर्षीयसी प्रादेशात्स्यात् । ( दे ) एतेन यजुषा ह्रसीयसीं कुर्याद्यदि ह्रसीयस्येतेन व्वर्षीयसीम् ॥ ९ ॥

( र्ठ्ठं ) स यद्येकः पशुः स्यात् । ( डे ) एकप्रादेशां कुर्यादथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्यादिषुमात्रीं वा व्वीर्यं वाऽइषुर्व्वीर्यसम्मितैव तद्भवति पञ्चप्रादेशा ह स्म त्वेव पुरेषुर्भवति ॥ १० ॥

( त्यु ) अथ तिरश्चीर्ठ्ठं रास्नां पर्यस्यति । दिशो हैव सैतद्वै देवाऽइमाँल्लोकानुखां कृत्वा दिग्भिरदृर्ठ्ठंहन्दिग्भिः पर्यतन्वंस्तथैवैतद्यजमानऽ इमाँल्लोकानुखां कृत्वा दिग्भिर्दृर्ठ्ठंहति दिग्भिः परितनोति ॥ ११ ॥

---

सा यदि वर्षीयसी प्रादेशात् स्यात्—एतेन यजुषा ह्रसीयसीं कुर्यात् । यदि ह्रसीयसी—एतेन वर्षीयसीम् ॥ ९ ॥

स यद्येकः पशुः स्यात्—एकप्रादेशां कुर्यात् । अथ यदि पञ्च पशवः स्युः । पञ्चप्रादेशां कुर्यात् । इषुमात्रीं वा । वीर्यं वाऽइषुः । वीर्यसम्मितैव तद्भवति । पञ्चप्रादेशा ह स्म त्वेव पुरेषुर्भवति ॥ १० ॥

अथ तिरश्चीं रास्नां पर्यस्यति । दिशो हैव सा । एतद्वै देवा इमाँल्लोकानुखां कृत्वा दिग्भि-

---

प्रादेशमात्री, तिरश्चीनाऽपि प्रादेशमात्री । तिर्यक्प्रादेशमात्रीति निधिप्रथनसमये प्रागुक्तम् । ऊर्ध्वा तिर्यक् च समा कार्येत्यर्थः ॥

तत्परिमाणं प्रशंसति—प्रादेशेति । ' योनिं ' गर्भसदृशीं कृतवान् भवति । उखाया योनित्वम् अग्न्याधारत्वात्, अग्नेश्च गर्भत्वम् तन्मध्ये संवत्सरमवस्थानात् ॥ ८ ॥

सर्वथोखा प्रादेशमात्री कर्त्तव्येत्याह—सा यदीति । ' यदि ' ' सा ' उखा ' प्रादेशाद् ' ' वर्षीयसी ' अधिकपरिमाणा ' स्यात्, ' तर्हि ' एतेन ' " विश्वे त्वा देवाः "—इति ' यजुषा ' ' ह्रसीयसीम् ' अधिकांशं परिहृत्य प्रादेशमात्रीमेव कुर्यात् । ' यदि ' उखा ' ह्रसीयसी ' स्यात्, ' एतेन ' यजुषा तिर्यक् प्रादेशसम्मितामेव कुर्यात् ॥ ९ ॥

उखायाः परिमाणं पश्वनुष्ठानापेक्षया विकल्पितमिति दर्शयति—स यद्येकः पशुः स्यादिति । एकपशुपक्षे एव प्रादेशमात्री उखा कर्त्तव्या; पञ्चपशुपक्षे पञ्चप्रादेशपरिमाणा, इषुमात्री वा कर्त्तव्या । एतत् परिमाणद्वयं तिर्यगपेक्षया; ऊर्ध्वपरिमाणं त्वत्रापि एकप्रादेशमात्रीति । तथा च कात्यायनेन सूत्रितम्—" प्रादेशमात्रीं तिर्यगूर्ध्वाञ्च, पञ्चप्रादेशामिषुमात्रीं वा तिर्यक् पञ्चपशौ "—( का. श्रौ. सू. १६ । ९३ । ९४ ) इति । तिर्यगेव पञ्चपशुपक्षे परिमाणद्वयम्, ऊर्ध्वन्तु एकप्रादेशैवेत्यर्थः ॥ १० ॥

अथोखाया उत्तरभागे वर्तिकरणं विधत्ते—अथ तिरश्चीमिति ( का. श्रौ. सू. १६।८९ ) । ' पर्यस्यति '

---

१—प्रादेशमात्रीं तिर्यगूर्ध्वां च । का. श्रौ. सू. १६ । ९३ । चशब्दादूर्ध्वामपि प्रादेशमात्रीमेव ।

तामुत्तरे वितृतीये पर्य्यस्यति । (त्यु) अत्र हैषां लोकानामन्ताः समायन्ति तदेवैनांस्तद्दृꣳहति ॥ १२ ॥

(त्यु) अदित्यै रास्नाऽसीति । वरुण्या वै यज्ञे रज्जुरवरुण्यामेवैनामेतद्रास्नां कृत्वा पर्य्यस्यति ॥ १३ ॥

(त्यु) अथ चतस्र ऊर्द्ध्वाः करोति । तूष्णीमेव दिशो हैव ता एतद्वै देवा इमाँल्लोकानुखां कृत्वा दिग्भिः सर्व्वतोऽदृꣳहंस्तथैवैतद्यजमान इमाँ-ल्लोकानुखां कृत्वा दिग्भिः सर्व्वतो दृꣳहति ॥ १४ ॥

---

रदृंहन्, दिग्भिः पर्यतन्वन् । तथैवैतद्यजमान इमाँल्लोकानुखां कृत्वा दिग्भिर्दृंहति, दिग्भिः परितनोति ॥ ११ ॥

तामुत्तरे वितृतीये पर्यस्यति । अत्र हैषां लोकानामन्ताः समायन्ति—तदेवैनांस्तद्दृंहति ॥ १२ ॥

"अदित्यै रास्नाऽसि"—इति । वरुण्या वै यज्ञे रज्जुः । अवरुण्यामेवैनामेतद्रास्नां कृत्वा पर्य्यस्यति ॥ १३ ॥

अथ चतस्र ऊद्र्ध्वाः करोति—तूष्णीमेव । दिशो हैव ताः । एतद्वै देवा इमाँल्लोकानुखां कृत्वा दिग्भिः सर्वतोऽदृंहन् । तथैवैतद्यजमान इमाँल्लोकानुखां कृत्वा दिग्भिः सर्वतो दृंहति ॥ १४ ॥

---

परितः सर्वतः कुर्यात् । तां रास्नां दिगात्मना स्तौति—एतद्वै देवा इत्यादिना । पूर्वं 'देवाः' यथा 'उखां कृत्वा' 'दिग्भिः' दृढामकुर्वन्, एवं यष्टा वर्त्तिकरणेन दिग्भिरेव विततां दृढाञ्च कृतवान् भवति ॥ ११ ॥

रास्नाकरणस्य स्थानं विधत्ते—तामुत्तरे वितृतीय इति । उखां त्रिधा विभज्य 'उत्तरे' अर्द्धे 'वितृतीये' तृतीयभागादप्यदूरे प्रदेशे उखाकण्ठप्रदेशे वर्त्तिं सर्वतः तिरश्चीनां कुर्यादित्यर्थः ॥ १२ ॥

मन्त्रं विधत्ते—अदित्यै रास्नाऽसीति । हे वर्त्ते ! 'अदित्यै' अदीनाया देवमातुः 'रास्ना' रसना 'असि' 'इति' । रास्नापदस्याभिप्रायमाह—वरुण्या वै यज्ञ इति । पाशस्य वरुणो देवतेति प्रागुक्तम्, रास्ना 'अवरुण्या' अपाशत्वात् ॥ १३ ॥

अन्याश्चतस्रो वर्त्तीर्विधत्ते—अथ चतस्र ऊद्र्ध्वा इति । 'तूष्णीम्' इति मन्त्रप्रतिषेधः । एताः वर्त्तयः उखायाश्चतुर्दिशं कार्याः । तथा च सूत्रम्—"ऊद्र्ध्वास्तूष्णीं प्रतिदिशं चतस्रोऽपरा वर्त्तीः प्राप्ताः"—( का. श्रौ. सू. १६ । १०० ) इति । कण्ठगतवर्त्तिपर्यन्तं प्रतिदिशं चतस्रः तूष्णीं कार्या इत्यर्थः । रास्नाचतुष्टयं दिगात्मना स्तूयते—दिशो हैव ता इत्यादिना । 'सर्वतः' ऊद्र्ध्वानां चतसृणां तृतीयोत्तरकृतरास्नापर्यन्तम् ॥ १४ ॥

---

१—वितृतीय उत्तरे वर्त्तिं सर्वतः करोत्यदित्यै रास्नेति । का. श्रौ. सू. १६ । ९९ ॥

ताऽएताऽऐतस्यै भवन्ति । ( न्त्ये ) एतद्वाऽएता ऽएतामस्तभ्नुवंस्तथै-वैनामेतत्स्तभ्नुवन्ति तद्यदत ऊर्ध्वं तदेतया तिरश्च्या दृढमथ यदतोऽर्वाक्-तदेताभिः ॥ १९ ॥

( स्त ) तासामग्रेषु स्तनानुन्नयन्ति । ( न्त्ये ) एतद्वै देवाऽइमाँल्लोकानुखां कृत्वैतै स्तनैः सर्वान्कामानदुहत तथैवैतद्यजमानऽइमाँल्लोकानुखां कृत्वैतै स्तनैः सर्वान् कामान् दुहे ॥ १६ ॥

सैषा गौरेव । ( वे ) इमे वै लोकाऽ उखेमे लोका गौस्तस्याऽएतदूधो यैषा तिरश्ची रास्ना सा वितृतीये भवति वितृतीये हि गोरूधः ॥ १७ ॥

( स्त ) तस्यै स्तनानुन्नयति । ( त्यू ) ऊधसस्तत्स्तनानुन्नयति सा चतु-स्तना भवति चतुस्तना हि गौः ॥ १८ ॥

---

ता एता ऐतस्यै भवन्ति । एतद्वाऽएता एतामस्तभ्नुवन् । तथैवैनामेतत् स्तभ्नुवन्ति । तद्यदत ऊर्ध्वम्—तदेतया तिरश्च्या दृढम् । अथ यदतोऽर्वाक्—तदेताभिः ॥ १९ ॥

तासामग्रेषु स्तनानुन्नयन्ति । एतद्वै देवा इमाँल्लोकानुखां कृत्वैतै स्तनैः सर्वान् कामानदुहत । तथैवैतद्यजमान इमाँल्लोकानुखां कृत्वैतै स्तनैः सर्वान् कामान् दुहे ॥ १६ ॥

सैषा गौरेव । इमे वै लोका उखा । इमे लोका गौः । तस्याऽएतदूधो—यैषा तिरश्ची रास्ना । सा वितृतीये भवति । वितृतीये हि गोरूधः ॥ १७ ॥

तस्यै स्तनानुन्नयति । ऊधसस्तत् स्तनानुन्नयति । चतुःस्तना भवति । चतुःस्तना हि गौः ॥ १८ ॥

---

तां विधत्ते—ता एता ऐतस्यै भवन्तीति । तद्यदत ऊर्ध्वमिति । उत्तरवार्तिकरणेन अतो लोकात् ऊर्ध्वस्थितं सर्वं दृढं भवति । उखाया लोकत्रयात्मकत्वाद् दार्ढ्यार्थं वर्त्तयः कर्त्तव्या इति तात्पर्यम् ॥ १९ ॥

अथोर्ध्ववर्त्तीनामन्ते स्तनोन्नयनं विधत्ते—तासामग्रेषु स्तनानिति । स्तना इव 'स्तनाः', तदाकाराः कुर्यादित्यर्थः । एतद्वै देवा इत्यादेः कण्डिकात्रयस्यायमर्थः—पूर्वं देवा लोकत्रयात्मिकां गोरूपामुखां कृत्वा तस्याः ऊधःस्थानीयायाः वितृतीयभागे कृतायास्तिरश्चीनाया रास्नायाः समीपे वर्त्तिरास्नाग्रेषु चतुरः स्तनान् कृत्वा, तेभ्यः सर्वान् कामान् दुग्धवन्तः, तथाऽयं यष्टाऽपि स्वाभिलषितान् कामान् दोग्धुं चतुरः स्तनान् कुर्यादिति । गोरूधोऽपि वितृतीये भागे भवति, साऽपि गौश्चतुस्तनीति तत्साम्यम् ॥ १६–१८ ॥

---

१–स्तनानिवाग्रेषून्नयति । का. श्रौ. सू. १६ । १०१ ।

( स्ता ) ताᳬँ हैके द्विस्तनां कुर्वन्ति । ( न्त्यु ) अथो ऽष्टस्तनां न तथा कुर्याद्ये वै गोः कनीयस्तनाः पशवो ये भूयस्तना ऽअनुपजीवनीयतरा वाऽअस्यैते ऽनुपजीवनीयतराᳬँ हैनां ते कुर्वतेऽथो ह ते न गां कुर्वते शुनीं वाऽविं वा वडवां वा तस्मात्तथा न कुर्यात् ॥ १९ ॥

( तु ) अथास्यै बिलमभिपद्यते । ( तेऽदि ) अदितिष्टे बिलं गृभ्णात्विति वाग्वा ऽअदितिरेतद्वाऽएनां देवाः कृत्वा वाचाऽदित्या निरष्ठापयंस्तथै-वैनामयमेतत्कृत्वा वाचाऽदित्या निष्ठापयति ॥ २० ॥

तां परिगृह्य निदधाति । कृत्वाय सा महीमुखामिति कृत्वाय सा महती-मुखामित्येतन्मृन्मयीं योनिमग्नयऽइति मृन्मयी ह्येषा योनिरग्नेः पुत्रेभ्यः

तां हैके द्विस्तनां कुर्वन्ति, अथोऽष्टस्तनाम् । न तथा कुर्यात् । ये वै गोः कनीयस्तनाः पशवः, ये भूयस्तनाः–अनुपजीवनीयतरा वाऽअस्यैते । अनुपजीवनीयतरां हैनां ते कुर्वते । अथो ह ते न गां कुर्वते–शुनीं वा, अविं वा, वडवां वा । तस्मात्तथा न कुर्यात् ॥ १९ ॥

अथास्यै बिलमभिपद्यते । "अदितिष्टे बिलं गृभ्णातु"–इति । वाग्वाऽअदितिः । एतद्वाऽएनां देवाः कृत्वा वाचाऽदित्या निरष्ठापयन् । तथैवैनामयमेतत्कृत्वा वाचाऽदित्या निष्ठापयति ॥२०॥

तां परिगृह्य निदधाति–" कृत्वाय सा महीमुखाम् "–इति । कृत्वाय सा महतीमुखामित्ये·

चतुस्तनपक्षं सिद्धान्तयितुं शाखान्तरानुसारेण पक्षान्तरमनुवदति–तां हैक इति[1] । तथा च तैत्तिरीयाः— "द्विस्तनां करोति द्यावापृथिव्योर्दोहाय, चतुःस्तनां करोति पशूनां दोहाय, अष्टास्तनां करोति च्छन्दसां दोहाय "–( तै. सं. ५ । १ । ६ । ४ ) इति । द्विस्तनपक्षे एकस्मिन्नेव वर्त्यग्रे क्रियते स्तनद्वयम्, अष्ट-स्तनपक्षे एकैकस्मिन् वर्त्यग्रे द्वौ द्वाविति । तत्पक्षद्वयं दूषयति–न तथा कुर्यादिति । 'ये' पशवो 'गोः' पशो-रपेक्षया ' कनीयस्तनाः ' अल्पस्तनाः, ' ये ' च ' भूयस्तनाः;' अल्पभूयस्त्वे गवापेक्षयेति वक्तुं गोरित्युक्तम् । सा हि चतुस्तना । स्तनचतुष्टयादर्वाक्स्तना भूयस्तना वा ये पशवः, ते ' अनुपजीवनीयाः ' अभोग्या भवन्ति । यदि ' एनाम् ' उखां द्विस्तनामष्टस्तनां वा कुर्यात्, तर्हि अनुपजीवनीयां भोगानर्हामेव कुर्युः न तु गां भोग्याम् । अभोग्यामेव दर्शयति–शुनीमिति । अष्टस्तनकरणे ' शुनीं ' शुनः स्त्रियम्, द्विस्तनकरणे ' अविं वडवां वा ' कृतवन्तो भवन्ति । ता यथा भोग्या न भवन्ति, एवं द्विस्तना अष्टस्तना वा उखा न भोगार्हेति तथाकरण-मयुक्तमित्यर्थः ॥ १९ ॥

विधत्ते–अथास्यै बिलमिति[2] । ' बिलं ' कण्ठविवरम्, ' अभिपद्यते ' गृह्णाति । मन्त्रं विधत्ते–अदितिष्ट इति । हे उखे ! ' ते ' ' बिलम् ' अदितिः गृभ्णातु । " हृग्रहोर्भः " ( पा. सू. ८ । २ । ३२ वा. ) । अदितिर्वाग्रूपत्वेन स्तूयते–वाग्वा अदितिरिति । निष्ठापयतीति । निष्ठितां परिसमाप्तां करोति ॥ २० ॥

उखानिधानं समन्त्रं विधत्ते–तां परिगृह्येति[3] । ' परिगृह्य ' दृढां गृहीत्वा निदध्यात् ' ताम् ' उखाम् ॥

१–द्विस्तनामष्टस्तनामेके । का. श्रौ. सू. १६ । १०२ । २–बिलं गृह्णात्यदितिष्ट इति । का० श्रौ० सू० १६ । १०३ ।
३–कृत्वायेति निदधाति । का. श्रौ. सू. १६ । १०४ ।

प्रायच्छददितिः श्रपयानित्येतद्वाऽएनामदितिः कृत्वा देवेभ्यः पुत्रेभ्यः श्रपणाय प्रायच्छत्तथैवैनामयमेतत्कृत्वा देवेभ्यः श्रपणाय प्रयच्छति ॥२१॥

ता हैके तिस्रः कुर्वन्ति । त्रयो वाऽइमे लोकाऽइमे लोकाऽ उखाऽइति वदन्तोऽथोऽअन्योऽन्यस्यै प्रायश्चित्त्यै यदीतरा भेत्स्यतेऽथेतरस्यां भरिष्यामो यदीतराऽथेतरस्यामिति न तथा कुर्याद्यो वाऽएष निधिः प्रथमोऽयᳬं स लोको यः पूर्वऽ उद्धिरन्तरिक्षं तद्यऽ उत्तरो द्यौः साऽथ यदेतच्चतुर्थं यजुर्दिशो हैव तदेतावद्वाऽइदᳬं सर्वं यावदिमे च लोका दिशश्च स यदत्रोपाहरेदति तद्रेचयेद्यदु वै यज्ञेऽतिरिक्तं क्रियते यजमानस्य तद्द्विषन्तं भ्रातृव्यमभ्यतिरिच्यते यदु भिन्नायै प्रायश्चित्तिरुत्तरस्मिंस्तदन्वाख्याने ॥ २२ ॥

इति तृतीयप्रपाठके सप्तमं ब्राह्मणम् ॥ ६ । ३ । ७ ॥ (५–२)

इति तृतीयः प्रपाठकः समाप्तः ॥ ६–३ ॥

---

तत् । "मृन्मयीं योनिमग्नये"–इति । मृन्मयी ह्येषा योनिरग्नेः । "पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति"–(वा. सं. ११ । ५९) । एतद्वाऽएनामदितिः कृत्वा देवेभ्यः पुत्रेभ्यः श्रपणाय प्रायच्छत् । तथैवैनामयमेतत्कृत्वा देवेभ्यः श्रपणाय प्रयच्छति ॥ २१ ॥

ता हैके तिस्रः कुर्वन्ति । त्रयो वाऽइमे लोकाः, इमे लोका उखा–इति वदन्तः । अथो अन्योऽन्यस्यै प्रायश्चित्त्यै । यदीतरा भेत्स्यते–अथेतरस्यां भरिष्यामो–यदीतरा–अथेतरस्यामिति । न तथा कुर्यात् । यो वाऽएष निधिः प्रथमः–अयं स लोकः । यः पूर्व उद्धिः–अन्तरिक्षं तद् । य उत्तरो–द्यौः सा । अथ यदेतच्चतुर्थं यजुः–दिशो हैव तत् । एतावद्वाऽइदं सर्वं–यावदिमे च लोकाः, दिशश्च । स यदत्रोपाहरेद्–अति तद्रेचयेत् । यदु वै यज्ञेऽतिरिक्तं क्रियते–यजमानस्य तद् द्विषन्तं भ्रातृव्यमभ्यतिरिच्यते । यदु भिन्नायै प्रायश्चित्तिः–उत्तरस्मिंस्तदन्वाख्याने ॥ २२ ॥

---

मन्त्रस्यायमर्थः,–'सा' अदितिः 'महीं' भूरूपां महतीं वा 'मृन्मयीं' मृद्विकारभूताम् 'अग्नये' अग्न्यर्थं 'योनिं' स्थानम् उखां 'कृत्वाय' "क्त्वो यक्"–(पा. सू. ७ । १ । ४७ ।) कृत्वा 'पुत्रेभ्यः' 'श्रपयान्' श्रपयन्तु, पक्वां कुर्वन्तु इति । अतो हेतोः 'अदितिः' स्वपुत्रेभ्यो देवेभ्यः प्रायच्छदिति सम्बन्धः । श्रपयतेः पञ्चमलकारे रूपम् । मन्त्रं प्रतिपादमनूद्य व्याचष्टे–कृत्वाय सा महीमुखामिति ॥ २१ ॥

उखा एकैव करणीयेति सिद्धान्तयितुं केषाञ्चित् पक्षं सोपपत्तिकमनुवदति–ता हैके तिस्रः कुर्वन्तीति । 'ताः' उखाः, 'एके' आचार्याः 'तिस्रः' कुर्वन्ति । तत्र युक्तिः–त्रयो वा इमे लोका इति । उखाः

---

१–तिस्र एके । का० श्रौ० सू० १६ । १०५ ।

# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।
# पञ्चमेऽध्याये च तृतीयं ब्राह्मणम् ।

तुस्याऽ एतुस्या ऽअुषाढां पूर्व्वां करोति । ( ती ) इयं वाऽअुषाढेयमु वा ऽएषुां लोकुानां प्रथमाऽसृज्यत तामेतुस्याऽ एवु मृदः करोत्येषाᳫँ ह्येवु लोकुानामियं मुहिषी करोति मुहिषी हीयं तुद्यैवु प्रथमा व्वित्ता सा मुहिषी ॥ १ ॥

तस्या एतस्या अषाढां पूर्वां करोति । इयं वाऽअषाढा । इयमु वाऽएषां लोकानां प्रथमाऽसृज्यत । तामेतस्या एव मृदः करोति । एषां ह्येव लोकानामियम् । महिषी करोति । महिषी हीयम् । तद्यैव प्रथमा वित्ता—सा महिषी ॥ १ ॥

खलु लोकात्मिकाः, 'लोकाः' च 'त्रयः;' अतो लोकसङ्ख्यया उखाः कर्त्तव्याः 'इति' 'वदन्तः' एके तिस्रः कुर्वन्तीति सम्बन्धः । युक्त्यन्तरमाह—अथो अन्योऽन्यस्या इति । यदि एका भिद्येत, तर्हि अन्यस्यामग्निं भरिष्यामः । यदीतराऽथेतरस्यामिति । अतोऽन्योऽन्यस्यै प्रायश्चित्त्यर्थं तिस्र उखाः कर्त्तव्या इत्यर्थः ॥

तं पक्षं दूषयति—यो वा एष निधिरित्यादिना । निधिरेकः, उद्धिद्वयञ्च, भूलोकादित्रयम्; यदेतत्समीकरणार्थं यजुः तद्विगात्मकम्; एतावदेव लोकत्रयम् । दिशश्च सर्वं जगत्; न ततोऽतिरिक्तमस्ति । अतो लोकत्रयात्मिकायामेकस्यामुखायां कृतायाम, ( श. प. ६ । ७ । १ । ११ ) 'यद्' यदि अन्यदुखाद्वयम् 'उपाहरेत्' सम्पादयेत्, तर्हि 'तत्' लोकादिकम् अति—'रेचयेत्'; 'यद् यज्ञेऽतिरक्तं क्रियते,' 'तत्' अतिरिक्तं कर्म 'यजमानस्य' द्विषन्तम् एवातिरेचितवत् भवति । यतो न्यूनमतिरिक्तंच कर्म दोषावहमेव; अतो न्यूनाधिकदोषौ परिहार्यौ । तस्माल्लोकत्रयाद् दिग्भिश्चातिरिक्तस्य वस्तुनः करणं न युक्तमिति तात्पर्यम् ॥

यद्युखैका स्यात्, सा यदि भिद्येत, तर्हि किमन्यकरणं तूष्णीं वाऽवस्थानम्, अकरणे च कथमुख्याग्निधारणम्, असत्यग्निधारणे कथं चयनाख्यं कर्म सेत्स्यतीत्याशङ्क्य, तस्य सर्वस्योत्तरं ब्राह्मणे वक्ष्यत इत्याह—यदु भिन्नायै प्रायश्चित्तिः, उत्तरस्मिन् तदन्वाख्यान इति । 'अन्वाख्याने' ब्राह्मणे तत्र, वक्ष्यत इति । तत्र ह्येवम्—"यद्येषोखा भिद्येत, याऽभिन्ना नवा स्थाल्युरुबिली स्यात्, तस्यामेनं पर्यावपेत्"–( श. प. ६ । ६ । ४ । ८ ) इत्यादि ॥ २२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे पञ्चमाऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ६–५–२ ) ॥

अथ संस्कृताया मृदः सकाशादुखानिर्माणात् पूर्वमेषाढाख्येष्टकाया निर्माणमाह—तस्या एतस्या अषाढां पूर्वां करोतीति । 'अषाढाम्' अषाढलिङ्गकमन्त्रोपधेयामिष्टकाम् । "तद्वानासामुपधानो मंत्र इतीष्टकासु

१–अषाढां करोति महिषी प्रथमवित्ता तदाख्या । का० श्रौ० सू० १६ । ९० ।

पादमात्री भवति । प्रतिष्ठा वै पाद ऽइयमु वै प्रतिष्ठा त्र्यालिखिता भवति त्रिवृद्धीयम् ॥ २ ॥

( मु ) अथोखां करोति । ( ती ) इमांस्तल्लोकान्करोत्यथ विश्वज्योतिषः करोत्येता देवताऽअग्निं व्वायुमादित्यमेता ह्येव देवता विश्वं ज्योतिस्ता ऽएतस्याऽएव मृदः करोत्येभ्यस्तल्लोकेभ्यऽएतान्देवान्निर्म्मिमीते यजमानः करोति त्र्यालिखिता भवन्ति त्रिवृतो ह्येते देवाऽइत्यधिदेवतम् ॥ ३ ॥

---

पादमात्री भवति । प्रतिष्ठा वै पादः । इयमु वै प्रतिष्ठा । त्र्यालिखिता भवति । त्रिवृद्धीयम् ॥२॥

अथोखां करोति । इमाँस्तल्लोकान् करोति । अथ विश्वज्योतिषः करोति—एता देवताः—अग्निम्, वायुम्, आदित्यम् । एता ह्येव देवता विश्वं ज्योतिः । ता एतस्या एव मृदः करोति । एभ्यस्तल्लोकेभ्य

---

लुक् च मतोः "—( पा. सू. ४ । ४ । १२५ ) इति मतोर्लुक् । 'पूर्वाम्' उखातः पूर्वभाविनीं कुर्यात् । पूर्वभावित्वमर्थवादमुखेन दर्शयति—इयं वा अषाढेति । 'अषाढा'—इति या अस्ति, सा 'इयम् वै' पृथिवी खलु तद्विकारत्वात् । अस्त्वेवम्, प्राथम्ये किमायातमित्यत आह—इयमु वा एषां लोकानां प्रथमाऽसृज्यतेति । पृथिव्या इतरलोकापेक्षया प्राथम्यं प्रसिद्धम् । अस्या मृदन्तरप्रकृतित्वप्रसक्तिं वारयति—तामेतस्या एवेति । 'एतस्याः' उक्तसंस्कारोपेताया मृदः सकाशादित्यर्थः । तत्रोपपत्तिमाह—एषां ह्येव लोकानामियमिति । यतः 'इयम्' 'एषां' प्रसिद्धानां लोकानां सम्बन्धिनी, अत इत्यर्थः । अयमभिप्रायः—उखाया लोकत्रयात्मकत्वेन प्रतिपादनात् तस्या या प्रकृतिभूता मृत्, तदीयाया एवाषाढाया अपि निर्माणे सत्येव तदीयत्वं भवतीति । अस्या उखावद् यजमानकर्तृत्वं प्राप्तमित्याह—महिषी करोतीति । प्रथमोढा स्त्री महिषी, 'इयम्' इष्टकाऽपि 'हि' यस्मात् 'महिषी;' प्रथमतो निर्माणात्, अतोऽस्यां महिषीकर्त्तव्यता युक्ता । भवत्वेवं यद्येषा महिषी स्यात्, सैव कुत इत्यत आह—तद्ध्यैव प्रथमा वित्ता, सा महिषीति । 'वित्ता' लब्धा ॥ १ ॥

तस्या इयत्तामाह—पादमात्री भवतीति । अत्र महिषीशब्दस्य कर्तृत्वेन सम्बन्धात् तत्पादमात्रीति न मन्तव्यम्; सूत्रकारेण यजमानपादमात्रीति विशेषितत्वात् ( का. श्रौ. सू. १६।९१ ) । उक्तं प्रमाणं प्रशंसति—प्रतिष्ठा वै पाद इयमु वै प्रतिष्ठेति । पादाभावे पतनदर्शनात् पादस्य प्रतिष्ठात्वम् । इयं पृथिवी सर्वाधारत्वात् प्रतिष्ठा, अतस्तद्विकारभूताया अपीष्टकायाः प्रतिष्ठात्मकपादप्रमाणत्वं युक्तमित्यर्थः । अस्याश्चिह्नत्वेन लेखात्रयं कर्त्तव्यमिति विधत्ते—त्र्यालिखिता भवति त्रिवृद्धीयमिति । अर्द्धचन्द्राकाराभिः तिसृभिः रेखाभिर्युक्ता भवेत् । 'हि' शब्देन—" त्रयो वा इमे त्रिवृतो लोकाः " ( ऐ. ब्रा. ४ । २ । ३ ) इत्यादिश्रुत्यन्तरप्रसिद्धिर्द्योतिता । अस्यास्त्रिवृत्त्वं पृथिव्यप्तेजोभिस्त्रिवृत्करणाद्वा, सिकतामृत्तिकापाषाणैस्त्रिभिः संहतरूपत्वाद्वा द्रष्टव्यम् । अत्र सूत्रम्—" अषाढां करोति महिषी प्रथमवित्ता तदाख्या, यजमानपादमात्रीं त्र्यालिखिताम् " ( का. श्रौ. सू. १६।९०।९१ ) इति ॥ २ ॥

उखाया अषाढानन्तरकर्त्तव्यतामाह—अथोखामिति । 'अथ' अषाढानन्तरम् 'उखां' प्रागुक्तलक्षणां

( मू ) अथाध्यात्मम् । ( मा ) आत्मैवोखा व्वागषाढा तां पूर्वां करोति पुरस्ताद्धीयमात्मनो व्वाक्तामेतस्या ऽएव मृदः करोत्यात्मनो ह्येवेयं व्वाङ्महिषी करोति महिषी हि व्वाक्त्र्यालिखिता भवति त्रेधाविहिता हि वागृचो यजूꣳषि सामान्यथो यदिदं त्रयं व्वाचो रूपमुपाꣳश्वन्तरामुच्चैः ॥ ४ ॥

---

एतान् देवान्निर्मिमीते । यजमानः करोति । त्र्यालिखिता भवन्ति । त्रिवृतो ह्येते देवाः । इत्यधिदेवतम् ॥ ३ ॥

अथाध्यात्मम् । आत्मैवोखा । वागषाढा । तां पूर्वां करोति । पुरस्ताद्धीयमात्मनो वाक् । तामेतस्या एव मृदः करोति । आत्मनो ह्येवेयं वाक् । महिषी करोति । महिषी हि वाक् । त्र्यालिखिता भवति । त्रेधाविहिता हि वाक्—ऋचो, यजूंषि, सामानि । अथो यदिदं त्रयं वाचो रूपम् उपांशु व्यन्तरामुच्चैः ॥ ४ ॥

---

स्थालीं पश्चात् कुर्यात् । तत्रोखाकरणेनेमांस्त्रींल्लोकान् कृतवान् भवति " अथ यजमान उखां करोति मृदमादाय " इत्यादि ( का. श्रौ. सू. १६।९२ ) सूत्रम् ॥

अथ विश्वज्योतिर्नामधेयानां तिसृणामिष्टकानामुखानन्तरकर्त्तव्यतां विधत्ते—अथ विश्वज्योतिषः करोतीति । पूर्ववदेतल्लिङ्गकैर्मन्त्रैरुपधेयत्वात् विश्वज्योतिर्नाम आसां द्रष्टव्यम् । एतासां निर्माणमेवाग्निवाय्वादित्यानां निर्माणमित्याह—एता देवता अग्निं वायुमादित्यमेता ह्येव देवता विश्वं ज्योतिरिति । एता देवताः इत्यस्य व्याख्यानम्—' अग्निम् ', ' वायुम् ', ' आदित्यम् '—इति । विश्वद्योतकत्वमग्न्यादीनां प्रसिद्धमिति ' हि ' शब्दो द्योतयति । पूर्ववदासामप्युखार्थं संस्कृतमृत्तिकैव करणमित्याह—ता एतस्या एव मृदः करोतीति । एतत् प्रशंसति—एभ्यस्तल्लोकेभ्य एतान् देवान् निर्मिमीत इति । उखाया लोकत्रयात्मकत्वस्योक्तत्वात् तदनन्तरं तदीयमृदा आसां निर्माणमेव तदधिष्ठातृदेवतानिर्मितिरित्यर्थः । यजमानः करोतीति त्र्यालिखिता भवन्तीति वाक्यद्वयं स्पष्टम् ॥

देवानां त्रिवृत्त्वं द्युभूम्यन्तरिक्षस्थानभेदेन, " इष्टकास्तु तिस्रो विश्वज्योतिषः पृथग्लक्षणास्त्र्यालिखिताः " ( का. श्रौ. सू. १६।१०६ ) इति सूत्रम् । पृथग्लक्षणाभिधानम् द्वितीयतृतीयानां क्रमपरिज्ञानार्थम्; तेन क्रमेणोपधानं यथा स्यादिति । इत्यधिदेवतमिति । ' इति ' शब्दः प्रतिपादितप्रकारवचनः । ' अधिदेवतम् ' देवता अधिकृत्य प्रवृत्तम्, उक्तमित्यर्थः ॥ ३ ॥

' अथ ' वक्ष्यमाणम् ' अध्यात्मम् ' आत्मानमधिकृत्य प्रवर्त्यमानम् । ' वक्ष्यते ' इति शेषः । प्रतिज्ञातमर्थं दर्शयति—आत्मैवोखा वागषाढेति । उखायाः प्राधान्यादात्मत्वम् आह्वानादिषु आत्मनोऽपि पूर्वं वाचः स्वरूपमस्ति; ' पुरस्तात् ' प्रवृत्तेः प्रसिद्धिमाह ' हि ' शब्दः । न केवलं वैदिक्या एव वाचस्त्रैविध्यम्, अपि च ' यदिदं ', सर्वैरुच्चार्यमाणं ' वाचः ' ' रूपं ' स्वरूपमस्ति, तत् ' त्रयं ' त्रिविधम् । उपांशु व्यन्तरामुच्चैरिति । व्यन्तरामिति, उपांशूच्चैःस्वरमध्यवर्तिनीं वाचं वदन्ति प्राणिनः, तदेकं रूपमित्यर्थः । सुगममन्यत् ॥ ४ ॥

(र) अथोखां करोति। (त्या) आत्मानं तत्करोत्यथ विश्वज्योतिषः करोति प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजननमेवैतत्करोति ता ऽएतस्याऽएव मृदः करोत्यात्मनस्तत्प्रजां निर्मिमीते यजमानः करोति यजमानस्तदात्मनः प्रजां करोत्यनन्तर्हिताः करोत्यनन्तर्हितां तदात्मनः प्रजां करोत्युत्तराः करोत्युत्तरां तदात्मनः प्रजां करोति त्र्यालिखिता भवन्ति त्रिवृद्धि प्रजातिः पिता माता पुत्रोऽथो गर्भऽउल्बं जरायु ॥ ५ ॥

ता ऽएता यजुष्कृतायै करोति । ( त्यु ) अयजुष्कृतायाऽइतरा निरुक्ता ऽएता भवन्त्यनिरुक्ता ऽइतराः परिमिताऽएता भवन्त्यपरिमिताऽइतराः॥६॥

प्रजापतिरेषोऽग्निः । ( रु ) उभयम्वेतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्या यजुष्कृतायै करोति यदेवास्य निरुक्तं परि-

---

अथोखां करोति । आत्मानं तत् करोति । अथ विश्वज्योतिषः करोति । प्रजा वै विश्वज्योतिः । प्रजा ह्येव विश्वं ज्योतिः । प्रजननमेवैतत्करोति । ता एतस्या एव मृदः करोति । आत्मनस्तत्प्रजां निर्मिमीते । यजमानः करोति । यजमानस्तदात्मनः प्रजां करोति । उत्तराः करोति । उत्तरां तदात्मनः प्रजां करोति । त्र्यालिखिता भवन्ति । त्रिवृद्धि प्रजातिः–पिता, माता, पुत्रः । अथो गर्भः, उल्बम्, जरायु ॥ ५ ॥

ता एता यजुष्कृतायै करोति, अयजुष्कृतायाऽइतराः। निरुक्ता एता भवन्ति, अनिरुक्ता इतराः । परिमिता एता भवन्ति, अपरिमिता इतराः ॥ ६ ॥

प्रजापतिरेषोऽग्निः । उभयम्वेतत् प्रजापतिः–निरुक्तश्चानिरुक्तश्च, परिमितश्चापरिमितश्च ।

---

अथोखां करोतीत्यादिकम्, अधिदैवतवद् व्याख्येयम् । उखाया आत्मरूपत्वात् तदनन्तरं तस्या एव मृदो विश्वज्योतिषामुत्पादने प्रजोत्पादनमित्यर्थः । 'प्रजननं' प्रकृष्टं जननं जन्म यस्मात् प्रजननम्, प्रजामित्यर्थः । 'अनन्तर्हिताः' व्यापारान्तरेणाव्यवहिताः कुर्यात् । उखाया विश्वज्योतिषाञ्च मध्ये व्यवधानं न कुर्यादिति भावः । तत्रानन्तर्हितत्वमुखातः प्राङ् निष्पादनेऽपि सम्भवतीत्यत आह–उत्तराः करोतीति । 'उत्तराः' उखाया उत्तरभाविनीः कुर्यात् । 'अथो गर्भ उल्बं' गर्भस्यान्तरवेष्टनम्, 'जरायु' वहिर्वेष्टनम् ॥ ५ ॥

यदेतासां मन्त्राहृतमृदोत्पन्नत्वम्, यच्चाषाढादिनामवत्त्वम्, यदपि पादमात्रादिपरिमाणवत्त्वम्, तदेतत् सर्वमितरेष्टकानां वैलक्षण्येनानूद्य स्तौति–ता एता यजुष्कृतायै करोतीत्यादिना । 'यजुः' मन्त्रः तेन कृता निष्पादिता 'यजुष्कृता' षष्ठ्यर्थे चतुर्थी, तस्या इत्यर्थः । 'अयजुष्कृतायै' अतथाभूता या मृदः 'इतराः' अषाढादिव्यतिरिक्ताः, कुर्यात्, 'एताः अनिरुक्ताः' अषाढाः विश्वज्योतिषो निर्वचनम् प्राप्ताः ( तै. सं. ४ । ४ । १ सा. भा. ) ॥ ६ ॥

प्रजापतिरेषोऽग्निरिति । 'एषः' चयनलक्षणः 'अग्निः' 'प्रजापतिः' सर्वभूतात्मको विराट् । 'निरुक्तं'

मितꣳ रूपं तदस्य तेन संस्करोत्यथ याऽ अयजुष्कृतायै यदेवास्यानिरुक्तमपरिमितꣳ रूपं तदस्य तेन संस्करोति स ह वाऽएतꣳ सर्वं कृत्स्नं प्रजापतिꣳ संस्करोति यऽ एवं विद्वानेतदेवं करोत्यथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः ॥ ७ ॥ ( शतम् ३७०० ) ॥

( भ्योऽथै ) अथैनां धूपयति । स्थेम्ने न्वेवाथो कर्मणः प्रकृततायै यद्वेव धूपयति शिर ऽएतद्यज्ञस्य यदुखा प्राणो धूमः शीर्षंस्तत्प्राणं दधाति ॥८॥

( त्य ) अश्वशकैर्धूपयति । प्राजापत्यो वाऽअश्वः प्रजापतिरग्निर्नो वाऽआत्माऽऽत्मानꣳ हिनस्त्यहिꣳसायै तद्वै शकैव तद्धि जग्धं यातयाम तथो ह नैवाश्वꣳ हिनस्ति नेतरान्पशून् ॥ ९ ॥

---

तद् या यजुष्कृतायै करोति—यदेवास्य निरुक्तं परिमितं रूपम्, तदस्य तेन संस्करोति। अथ या अयजुष्कृतायै—यदेवास्यानिरुक्तम् अपरिमितं रूपम्—तदस्य तेन संस्करोति। स ह वाऽएतं सर्वं कृत्स्नं प्रजापतिं संस्करोति—य एवं विद्वानेतदेवं करोति। अथोपशयायै पिण्डं परिशिनष्टि—प्रायश्चित्तिभ्यः ॥ ७ ॥

अथैनां धूपयति—स्थेम्ने न्वेव। अथो कर्मणः प्रकृततायै। यद्वेव धूपयति। शिर एतद्यज्ञस्य—यदुखा। प्राणो धूमः। शीर्षंस्तत् प्राणं दधाति ॥ ८ ॥

अश्वशकैर्धूपयति। प्राजापत्यो वाऽअश्वः। प्रजापतिरग्निः। नो वाऽआत्माऽऽत्मानं हिनस्ति—अहिंसायै। तद्वै शकनैव। तद्धि जग्धं यातयाम। तथो ह नैवाश्वं हिनस्ति, नेतरान्पशून् ॥ ९ ॥

---

कार्यात्मना स्थितम्, 'अनिरुक्तं' कारणात्मना वर्तमानमिति विवेकः। यन्निरुक्तानिरुक्ताद्यात्मकत्वम् 'उभयम्' अस्ति, तद् द्वयं प्रजापतिरेव। 'तत्' तथा सति यजुष्कृतोत्पन्नानि प्रजापतेः 'यत्' निरुक्तं रूपम्' तत् कार्यात्मकं 'परिमितम्,' तत् संस्कृतवान् भवति। अतथाभूताभिरिष्टकाभिरतथाभूतं प्रजापतेः रूपं संस्करोति। 'एवं विद्वान्' निरुक्तानिरुक्तमुभयं जानन् संस्कर्ता भवति। अवशिष्टाया मृदो विनियोगमाह—अथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्य इति। उखां कृत्वा यजमान इति शेषः। उपशेते इति 'उपशया' मृदुच्यते। तस्याः प्रयोजनमुच्यते—'प्रायश्चित्तिभ्यः' प्रायश्चित्तयः उखाभेदपरिहारोपायाः, तदर्थमित्यर्थः ॥ ७ ॥

यदुक्तं सूत्रकृता—"सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति प्रतिमन्त्रम्" ( का. श्रौ. सू. १६।१०८ ) इति, तदिदं विधाय प्रशंसति—अथैनां धूपयति स्थेम्ने न्वेवेत्यादिना। 'स्थेम्ने न्वेव' स्थिरत्वायैव, न केवलं दृष्टार्थम्। 'अथो' अपि च 'कर्मणः' उख्यधारणलक्षणस्य चयनस्य वा 'प्रकृततायै' संस्कृतत्वसिद्धये। यद्वेवेत्यादिः धूपनार्थवादः, उखायाः प्राधान्यात् शिरस्त्वाभिधानम्। नासारन्ध्रेण प्राणस्य सञ्चारावसरे धूमस्य तत्सञ्चारदर्शनात् प्राणत्वोपचारः ॥ ८ ॥

अश्वशकैर्धूपयतीति। धूपनकर्म चाश्वशकृद्भिरेव भवितव्यमिति नियमे कारणमाह—प्राजापत्यो वा अश्व

---

१—मृदमुपशयां निदधाति। का. श्रौ. सू. । १६ । १०७ ।

( न्वु ) व्वुसवस्त्वा धूपयन्तु । गायत्रेण च्छुन्दसाऽङ्गिरस्वुद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छुन्दसाऽङ्गिरस्वुदादित्यास्त्वा धूपयन्तु जागतेन च्छुन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा व्वैश्वानरा धूपयन्त्वानुष्टुभेन च्छुन्दसाऽङ्गिरस्वदिन्द्रस्त्वा धूपयतु व्वुरुणस्त्वा धूपयतु व्विष्णुस्त्वा धूपयत्वित्येताभिरेवैनामेतुद्देवुताभिर्धूपयति ॥ १० ॥

---

" वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वत् ( १ ) रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वत् ( २ ) आदित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाऽङ्गिरस्वत् ( ३ ) विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन च्छन्दसाऽङ्गिरस्वत् ( ४ ) इन्द्रस्त्वा धूपयतु ( ५ ) वरुणस्त्वा धूपयतु ( ६ ) विष्णुस्त्वा धूपयतु ( ७ ) "–( वा. सं. ११ । ६० ) इति । एताभिरेवैनामेतद्देवताभिर्धूपयति ॥ १० ॥

---

इत्यादिना । " प्रजापतेरक्ष्यश्वयत्तत् परापतत् तदश्वोऽभवत्, यदश्वयत् तदश्वस्याश्वत्वम् "–( तै. सं. ५ । ३ । १२ । १ )–इति श्रुतेः प्रजापतेरवयवत्वेन सम्बन्धादश्वस्य प्राजापत्यत्वम् । चीयमानस्याग्नेः विराडात्मकत्वं प्राक् प्रतिपादनात्,–" संवत्सरः प्रजापतिरिति " इति श्रुतेः संवत्सरमुख्याग्नेर्द्धार्यमाणत्वाद्वा अग्निः प्रजापतिः । अश्वशकृद्द्वारा धूपनं प्रशंसति–तद्वै शक्नैवेत्यादिना । 'शक्ना' इति पदे " पद्दन्नः "–( पा. सू. ६ । १ । ६३ ) इत्यादिना शकन्नादेशः । 'जग्धम्' भक्षितम् अदेर्जग्ध्यादेशः ( पा. सू. २ । ४ । ३६ वा. ) । 'यातयाम' कालान्तरगमनम्, गतसारमित्यर्थः । यत एवम्भूतम् अतः स्वसम्बन्धिनम् 'अश्वम्' अपि न 'हिनस्ति' अश्वसम्बन्धित्वेन एतेषां पशूनां सम्बन्धाभावादेव हिंसाप्रसङ्गः । अतोऽश्वशकैर्धूपनं प्रशस्तम् ॥ ९ ॥

अथ प्रथमशक्ना धूपने मन्त्रमाह–वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वदिति । हे उखे ! त्वां 'वसवः' अष्टसङ्ख्याकाः 'धूपयन्तु' अश्वशकधूपनेन संस्कुर्वन्तु । कीदृशा वसवः गायत्र्याख्येन छन्दसा सहिताः 'अङ्गिरस्वत्' अङ्गिरसो यथा स्वकीये चयने 'अधूपयन्' एवमित्यर्थः । वसूनां गायत्रच्छन्दसश्च सम्बन्धे अष्टसङ्ख्यासादृश्यं निमित्तम्; अष्टौ हि वसवः, अष्टाक्षरा च गायत्री ॥

एवं " रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन "– ( वा. सं. ११ । ६० ) इत्यादयोऽप्यक्षरसंख्याद्वारेण व्याख्येयाः । " विश्वे त्वा देवा वैश्वानरा " इति चतुर्थमन्त्रे विश्वेषां देवानां सर्वदेवात्मकत्वादनुष्टुभश्च सर्वच्छन्दोरूपत्वात् परस्परसम्बन्धः । विश्वे च ते नराश्च 'विश्वेनराः', तेषां हितकारित्वेन सम्बन्धिनो 'वैश्वानराः' इन्द्रवरुणविष्णूनां प्रतिनियतच्छन्दस्सम्बन्धाभावात् केवला एवाम्नाताः । एताभिरेवैनामेतद्देवताभिर्धूपयतीति । 'एतत्' एतेन, वस्वादिमन्त्रधूपनेन 'एताभिः' सप्तदेवताभिः एव धूपनं कारितवान् भवति ॥ १० ॥

सुप्ताश्वशकानि भवन्ति । सप्त युजूꣳषि सप्तुतय्य॒ऽ एता देवताः सप्त शीर्षन्प्राणा युद्दु वाऽअपि बहुकृत्वः सप्तसप्त सुप्तैव तुच्छीर्षण्येव तत्सप्त प्राणान्दधाति ॥ ११ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ६-४-१ ॥ (५. ३.)

अथैनमस्यां खनति । ( त्ये ) एतद्वै देवा ऽअबिभयुर्यद्वै नऽ इममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तुस्माऽइमामेवात्मानमकुर्वन्गुप्त्याऽआत्माऽऽत्मानं गोप्स्यतीति ॥ १ ॥

तां वाऽअदित्या खनति । ( ती ) इयं वाऽअदितिर्नो वाऽआत्माऽऽत्मानꣳ हिनस्त्यहिꣳसायै यदन्यया देवतया खनेद्धिꣳस्याद्धैनम् ॥२॥

---

सप्ताश्वशकानि भवन्ति, सप्त यजूंषि, सप्ततय्य एता देवताः । सप्त शीर्षन् प्राणाः । यद्दु वाऽअपि बहुकृत्वः सप्तसप्त सप्तैव तत् । शीर्षण्येव तत् सप्त प्राणान् दधाति ॥ ११ ॥

अथैनमस्यां खनति । एतद्वै देवा अबिभयुः—यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तस्माऽइमामेवात्मानमकुर्वन्—गुप्त्यै । आत्माऽऽत्मानं गोप्स्यतीति ॥ १ ॥

तां वाऽअदित्या खनति । इयं वाऽअदितिः । नो वाऽआत्माऽऽत्मानं हिनस्त्यहिंसायै । यदन्यया देवतया खनेद्—हिंस्याद्धैनम् ॥ २ ॥

---

शकृन्मन्त्रदेवतानां यत् सप्तसङ्ख्यासाम्यम्, तत् प्रशंसति—सप्ताश्वशकानि भवन्तीत्यादिना । सङ्ख्यागतसप्तत्वस्य त्रित्वं प्रशंसति—यद्दु वा अपि बहुकृत्वः सप्त-सप्तेति । 'उ' अपि च, यदपि तत्र शकृद्गतमेकं सप्तकम्, मन्त्रगतश्चापरम्, देवतागतं चान्यत् । एवं 'बहुकृत्वः' सप्तसंख्यायामावृत्तायामपि सप्तसंख्यानतिरेकात् त्रिभिः सप्तभिः 'शीर्षण्येव' उखाख्ये यज्ञशिरस्येव 'सप्त प्राणान्' 'दधाति' स्थापयति ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे पञ्चमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ६-५-३ ) ॥

अथावटखननं विधत्ते—अथैनमस्यां खनतीति । 'एनम्' अवटम् 'अस्यां' पृथिव्याम् उखास्थापनार्थं खनेत् । अवटखननं पुरावृत्तान्ताभिधानमुखेन प्रशंसति—एतद्वै देवा अबिभयुरिति । 'एतत्' एतेन वक्ष्यमाणेन खलु 'देवाः' भीताः आसन्, 'नः' अस्माकं सम्बन्धिनम् 'इमम्' उखेष्टकारूपं पदार्थं 'नाष्ट्रा' नाशकारीणि रक्षांसि 'न हन्युः' हननं न कुर्युरिति । यदेतदस्ति, 'एतत्' एतेनेति पूर्वत्रान्वयः । 'तस्मै' अवयवभूताय उखादिपदार्थाय 'इमां' पृथिवीम् 'एव' 'आत्मानम्' अवयविनम् 'अकुर्वन्' । एवं कुर्वतामभिप्रायमाह—आत्मानं गोप्स्यतीति । यश्चात्मभूतमङ्गं स्वयं रक्षति, तथा रक्षिष्यतीति तेषामाशयः ॥ १ ॥

खननमनूद्य मन्त्रं विधत्ते—तां वा अदित्या खनतीति । 'अदित्या' अदितिदेवतात्मकेन मन्त्रेणेत्यर्थः ।

( मु ) अदितिष्ट्वा देवी विश्वदेव्यावती । पृथिव्याः सधस्थेऽअङ्गिरस्वत्खनत्ववटेत्यवटो हैष देवत्राऽत्र सा वैणव्यभ्रिरुत्सीदति चतुःस्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्वाभ्यऽ एवैनमेतद्दिग्भ्यः खनत्यथ पचनमवधायाषाढामुवदधाति तूष्णीमेव ताँ हि पूर्वां करोति ॥ ३ ॥

( त्यु ) अथोखामुवदधाति । देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वद्दधतूख ऽइति देवानाँ हैताम्ग्रे पत्नीर्देवी-

---

" अदितिष्ट्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽअङ्गिरस्वत् खनत्ववट "–इति । अवटो हैष देवत्रा । अत्र सा वैणव्यभ्रिरुत्सीदति । चतुःस्रक्तिरेष कूपो भवति । चतस्रो वै दिशः । सर्वाभ्य एवैनमेतद्दिग्भ्यः खनति । अथ पचनमवधायाषाढामवदधाति–तूष्णीमेव । तां हि पूर्वां करोति ॥ ३ ॥

अथोखामवदधाति । " देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽ-

---

अन्वयव्यतिरेकाभ्यामदितिः खनने प्रशस्तेति दर्शयति । इयं वा अदितिरित्यादिना । येयम् ' अदितिः ' देवता, सा ' इयं वै ' पृथिवी खलु । आदत्ते सर्वमित्यदितिरिति व्युत्पत्तेः । स्पष्टमन्यत् । यथा पादतललग्नकण्टकाद्युद्धरणादिषु स्वयं चेन्न हिनस्ति, अन्यश्चेत् हिंस्यात्; एवमिति भावः ॥ २ ॥

मन्त्रं दर्शयति–अदितिष्ट्वा देवीति । अयमर्थः–हे अवट ! ' त्वा ' ' अदितिः ' अदीना देवमाता । ' देवी ' खनतु । कीदृशी ? ' विश्वदेव्यावती ' विश्वेषां देवानां हितं कर्म विश्वदेव्यम्, तदस्या अस्तीति–( पा. सू. ६।४।१३१ ) विश्वदेव्यावती । " मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ "–( पा. सू. ६ । ३ । ९४ ) इति दीर्घः । किंवत् ? ' अङ्गिरस्वत् ' अङ्गिरसो यथा तथा । कुत्र ? ' पृथिव्याः ' ' सधस्थे ' सहस्थाने उपरीत्यर्थः । ' इति '–शब्दो मन्त्रसमाप्त्यर्थ इति ॥

अवटो हैष देवत्रेति । 'एषः अवटः' 'देवत्रा' देवम् अग्निं प्रति साधुः, इष्टकोखारक्षकत्वात् । अवटखननसाधनम्, उखार्थमृत्खननार्थं प्रागाहृता वैणव्यभ्रिरेवेत्याह–अथ सा वैणव्यभ्रिरुत्सीदतीति । ' अत्र ' अवटखनने सा यैव पूर्वमुपयुक्ता ' वैणवी ' वेणुविकारभूता ' अभ्रिः ' ' सा ' ' उत्सीदति ' विनश्यति, कृतप्रयोजना भवतीत्यर्थः । अत्र खननार्थमाहृतायाः प्रतिपत्तिर्भवतीत्यर्थः । अवटस्य प्रकारविशेषमाह–चतुःस्रक्तिरेष कूपो भवतीति । स्रक्तयोऽश्रयः प्रक्षेप्तव्यबहुत्वादवटबहुत्वप्रसक्तावुच्यते–एष कूप इति । ' चतस्रो वै दिशः ' इत्यर्थवादः स्पष्टः " अभ्र्या श्वभ्रं चतुरश्रं खनत्यदितिष्ट्वेति "–( का. श्रौ. सू. १६ । १०८ ) इति कात्यायनः ॥

अथ यदुक्तं सूत्रकृता–" श्रपणमास्तीर्य यथाकृतमवदधाति, देवानां त्वेत्युखां न्युब्जाम् "–( का. श्रौ. सू. १६ । ११० । १११ ) इति, तदिदं विधत्ते–अथ पचनमिति । पच्यतेऽनेनेति पचनं तृणादिकम्, तत् ' अवधाय ' अवटे आस्तीर्य, तूष्णीमेवादौ निष्पादितत्वात् प्रथमम् ' अषाढाम् एव ' तूष्णीं स्थापयेत् ॥ ३ ॥

अथोखामवदधातीति । पश्चादुखां " देवानां त्वा पत्नीः "–इति मन्त्रेण अवाङ्मुखामवदध्यात् ।

र्व्विश्वदे॑व्यावतीः पृथिव्याः सधस्थे॑ऽङ्गिरस्वद्द॑धुस्ताभिरे॒वैनामे॒तद्द॑धाति ता ह॒ ताऽ ओष॑धयऽ एवौष॑धयो वै दे॒वानां॒ पत्न्य॑ऽ ओष॑धिभिर्हीदꣳ सर्व्वꣳ हि॒तमोष॑धिभिरे॒वैनामे॒तद्द॑धात्यथ॒ विश्वज्योतिषो॒ऽवद॑धाति तूष्णी॑मे॒वाथ॑ पच॒नम॒वधा॒याभीन्द्धे ॥ ४ ॥

धिष॒णास्त्वा दे॒वीः । ( र्व्वि ) विश्व॑दे॒व्यावतीः पृथि॒व्याः सध॒स्थेऽअङ्गि॑रस्व॒दभीन्धता॒मुख॒ऽइति धिष॒णा हैता॒मग्रे॑ दे॒वीर्व्विश्व॑दे॒व्याव॑तीः पृथि॒व्याः सध॒स्थेऽङ्गि॑रस्व॒दभीधिरे ता॒भिरे॒वैना॑मे॒तद॒भीन्द्धे सा ह॒ सा वा॒गेव॒ वाग्वै धिष॒णा वा॒चा हीदꣳ सर्व्व॑मि॒द्धं वा॒चै॒वैना॑मे॒तद॒भीन्द्धेऽथै॒तानि॒ त्रीणि॒ यजू॑ꣳषीक्षमाणऽ ए॒व ज॑पति ॥ ५ ॥

---

अङ्गिरस्वदधतूखे "–इति । देवानां हैतामग्रे पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधुः–ताभिरेवैनामेतद्दधाति । ता ह ता ओषधय एव । ओषधयो वै देवानां पत्न्यः । ओषधिभिर्हीदं सर्वं हितम् । ओषधिभिरेवैनामेतद्दधाति । अथ विश्वज्योतिषोऽवदधाति–तूष्णीमेव । अथ पचनमवधायाभीन्द्धे ॥ ४ ॥

" धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वदभीन्धतामुखे "– इति । धिषणा हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीधिरे–ताभिरेवैनामेतदभीन्द्धे । सा ह सा वागेव । वाग्वै धिषणा । वाचा हीदं सर्वमिद्धम् । वाचैवैनामेतदभीन्द्धे । अथैतानि त्रीणि यजूंषीक्षमाण एव जपति ॥ ५ ॥

---

' देवीः '–' विश्वदेव्यावतीः '–इत्युभयत्र " सुपां सुलुक् "–( पा. सू. ७ । १ । ३९ ) इति पूर्णसवर्णदीर्घः ॥ मन्त्रं व्याचष्टे–देवानां हैतामग्र इति । या देवपत्न्यः–इन्द्राणी, अग्नायी, आश्विनी, राट् इत्याद्याः ( निरु. १२ । ४ । १२ ) पुरा उखामवटे स्थापितवत्यः । अतः अनेन मन्त्रेण तामिरवस्थापितवान् भवतीत्यर्थः । ' देवपत्नी '–शब्दस्य ओषधयोऽर्थ इति सोपपत्तिकं वदन् तेन मन्त्रेणोपधानं प्रशंसति–ता ह ता ओषधय एवेति । ' ता ह ' ताः खलु देवपत्न्यः, ' ताः ' ' ओषधय एव; ' न त्वन्या इति मन्तव्यमित्योषध्यात्मना देवपत्नीस्तुतिः । तद्वोषधीनां निधानशक्तिः कुत इत्यत आह–ओषधीभिर्हीदं सर्वं हितमिति । व्रीहियवादिरूपाणामोषधीनाम् अस्य कृत्स्नस्य जगतो धारकत्वं प्रसिद्धम् । निर्माणक्रमप्राप्तानां विश्वज्योतिषामवधानं विधत्ते–अथ पचनमित्यादिना । दीपनं दक्षिणाग्निनैव । " दक्षिणाग्न्यग्निना दीपयति धिषणास्त्वेति "–( का. श्रौ. सू. १६ । ११२ ) इति सूत्रम् ॥ ४ ॥

धिषणास्त्वेति । मन्त्रस्तु पूर्ववद्व्याख्येयः । धिषणा हैतामित्यादि–ब्राह्मणमपि पूर्ववत् । ' अभीधिरे ' अभितोऽदीपयन् । धिषणाशब्दस्य विवक्षितमर्थं ब्रुवन् तस्याः प्रकृतकर्मयोग्यतासमर्थनाय समिन्धनप्रसिद्धिमाह–सा ह सा वागेवेति । या सा खलु धिषणा, ' सा ' प्रसिद्धा ' वागेव ' नान्या; वाचा व्यवहाराभावे

व्वरूत्रीष्ट्वा देवीः । ( व्विं ) व्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअ-ङ्गिरस्वच्छ्रपयन्तूखऽइति व्वरूत्रीर्हैतामग्रे देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयाञ्चक्रुस्ताभिरेवैनामेतच्छ्रपयति तानि ह तान्य-होरात्राण्येवाहोरात्राणि वै व्वरूत्रयोऽहोरात्रैर्हीदᳫं सर्व्वं वृतमहोरात्रैरेवैना-मेतच्छ्रपयति ॥ ६ ॥

ग्नास्त्वा देवीः । ( व्विं ) व्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्व-त्पचन्तूखऽइति ग्ना हैतामग्रे देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गि-रस्वत्पेचुस्ताभिरेवैनामेतत्पचति तानि ह तानि च्छन्दाᳫंस्येव च्छन्दाᳫंसि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति च्छन्दोभिरेवैनामेतत्पचति ॥ ७ ॥

---

"वरूत्रीष्ट्वा देवीर्विंश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वच्छ्रपयन्तूखे"—इति। वरूत्रीर्हैतामग्रे देवीर्विंश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयाञ्चक्रुः—ताभिरेवैनामेतच्छ्रपयति। तानि ह तान्यहोरात्राण्येव। अहोरात्राणि वै वरूत्रयः। अहोरात्रैर्हीदं सर्वं वृतम्। अहोरात्रैरेवै-नामेतच्छ्रपयति ॥ ६ ॥

"ग्नास्त्वा देवीर्विंश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पचन्तूखे"—इति। ग्ना हैतामग्रे देवीर्विंश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत् पेचुः—ताभिरेवैनामेतत् पचति। तानि ह तानि च्छन्दांस्येव। छन्दांसि वै ग्नाः। छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति। छन्दोभिरेवैनामेतत् पचति ॥ ७ ॥

---

कस्यापि वस्तुनोऽभिव्यक्तेरभावात् वाचा हीदं सर्वमिद्धमित्युक्तम्। 'इद्धम्' दीपितं प्रकाशितमित्यर्थः ॥ यदुक्तं सूत्रकृता—"वरूत्रीष्ट्वेतीक्षमाणो जपति"—( का. श्रौ. सू. १६। ११४ ) इति, तदिदं विधत्ते—अथैतानि त्रीणि यजूंषीक्षमाण एव जपतीति। "वरूत्रीष्ट्वा," "ग्नास्त्वा," "जनयस्त्वा"—इति त्रीणि। 'वरूत्रीः' वरूत्रयः ( पा. सू. ७। २। ३४ )। अर्थवादे बहुवचनान्तत्वेन निर्देशात् एकेन श्रपणं द्वाभ्यां पचनं यद्यपि वर्ण्यते, तथापि पाकश्रपणयोरग्निकर्त्तव्यत्वेन स्वस्यानुकूलप्रयत्नमन्तरेण स्वकर्त्तव्याभावात् ईक्षणपूर्वको जप एव कर्त्तव्य इत्येवकारस्याभिप्रायः ॥ ५ ॥

प्रथमं यजुरभिधाय व्याचष्टे—वरूत्रीष्ट्वा देवीरिति। वरूत्रिशब्दस्याभिप्रेतमर्थमाह—तानि हेति। 'तानि' एतानि 'अहोरात्राणि'। प्रतिनिर्देश्यमानाहोरात्रापेक्षया तानीति। वरूत्रीणामहोरात्रनिर्देशात् नपुंसकता, अथवा सामान्यविवक्षया नपुंसकत्वं द्रष्टव्यम्; तानि वरूत्र्याख्यानि कृत्स्नं जगत् श्रपयन्त्विति। वरूत्रय इति योऽयं वरूत्रिशब्दस्यावयवार्थः, तस्येतरस्याहोरात्रेषु सद्भावं दर्शयत्युक्तार्थसमर्थनाय—अहोरात्रैर्हीदं सर्वं वृत-मिति। 'अहोरात्रैरेव' 'एनाम्' उखां श्रपयति, यः 'एतत्' एतेन अहोरात्रवाचकवरूत्रिशब्दयुक्तेन यजुषा श्रपयति ॥ ६ ॥

अथ द्वितीयं यजुरनूद्य व्याचष्टे—ग्नास्त्वा देवीरित्यादिना। यदुक्तं "छन्दांसि वै ग्नाः" इति, तदुपपा-

१५७०

जुनयस्त्वाऽच्छिन्नपत्रा देवीः । ( र्विं ) विश्वदेव्यावतीः पृथिव्याः सधुस्थेऽअङ्गिरस्वत्पचन्तूखऽइति जुनयो हैतामग्रेऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधुस्थेऽङ्गिरस्वुत्पेचुस्ताभिरेवैनामेतुत्पचति तानि ह तानि नुक्षत्राण्येव नुक्षत्राणि वै जुनयो ये हि जुनाः पुण्यकृतः स्वर्गं लोकं युन्ति तेषामेतानि ज्योतीꣳषि नुक्षत्रैरेवैनामेतुत्पचति ॥ ८ ॥

स वै खुनत्येकेन । ( ना ) अुवदधात्येकेनाभीन्द्धऽ एकेन श्रपयत्येकेन द्वाभ्यां पचति तुस्माद्द्विः संव्वत्सरस्यान्नं पच्यते तानि षट् सुम्पद्यन्ते षुडृतवः संव्वत्सुरः संव्वत्सुरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ९ ॥

---

" जनयस्त्वाऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत् पचन्तूखे "-( वा. सं. ११ । ६१ ) इति । जनयो हैतामग्रेऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत् पेचुः-ताभिरेवैनामेतत् पचति । तानि ह तानि नक्षत्राण्येव । नक्षत्राणि वै जनयः । ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति-तेषामेतानि ज्योतींषि । नक्षत्रैरेवैनामेतत् पचति ॥ ८ ॥

स वै खनत्येकेन, अवदधात्येकेन, अभीन्द्ध एकेन, श्रपयत्येकेन, द्वाभ्यां पचति । तस्माद् द्विः सम्वत्सरस्यान्नं पच्यते । तानि षट् सम्पद्यन्ते । षडृतवः सम्वत्सरः । संवत्सरोऽग्निः । यावानग्नियावत्यस्य मात्रा-तावत्तद्भवति ॥ ९ ॥

---

दयति-छन्दोभिर्हि स्वर्गं लोकं गच्छन्तीति । गच्छन्त्याभिर्यजमानाः स्वर्गमिति व्युत्पत्तेः छन्दःस्वपि सम्भवादित्यर्थः । " ग्नाः गच्छन्त्येनाः " इति निरुक्तम् ( निरु. ३ । ४ । ४ ) ॥ ७ ॥

तृतीयं यजुरनूद्य व्याचष्टे-जनयस्त्वाऽच्छिन्नपत्रा इति । जायन्ते जनाः पुण्यकृतो नक्षत्ररूपेणेति 'जनयः' नक्षत्राणि, तानि च 'अच्छिन्नपत्राः' अच्छिन्नपतनसाधनपक्षयुक्तानीत्यर्थः; न हि तानि सुकृतक्षयादर्वाक् पतन्ति । जनिशब्दार्थमाह-तानि ह तानि नक्षत्राण्येवेति । नक्ष्यन्ते प्राप्यन्ते सुकृतिभिरिति नक्षत्राणि । उक्तं निर्देशिनां नपुंसकत्वम् । " नक्षत्राणि नक्षतेर्गतिकर्मणः "-( निरु. ३।४।२ ) इति नैरुक्तम् । नक्षत्राणां जनित्वप्रसिद्धिं दर्शयति-ये हि जनाः पुण्यकृत इति । 'तेषां' स्वर्गं यतां यानि 'एतानि ज्योतींषि', तानि नक्षत्राणि । 'श्रपयन्तूखे', 'पचन्तूखे', इत्यनयोः श्रपणं पाकक्रियासामान्यम्, पचनं पाकनिर्वृत्तिरिति विवेकः ॥ ८ ॥

खननादिमन्त्रगतां सङ्ख्यामनूद्य प्रशंसति-स वै खनत्येकेनेत्यादिना । खननादिक्रिया त्वेकैकेनैव मन्त्रेण, पाकस्य तु मन्त्रद्वयसाध्यत्वं विहितम्, तस्यार्थवादः-तस्माद् द्विः संवत्सरस्यान्नमिति । शाल्यादिपरि-

---

१-अभ्र्या श्वभ्रं चतुरस्रं खनत्यदितिष्ट्वेति । का, श्रौ, सू. १६ । १०९ ।

( त्यु ) अथ मित्रस्य चर्षणीधृतऽइति । मैत्रेण यजुषोपन्याचरति यावत्किंयच्चोपन्याचरति न वै मित्रं कश्चन हिनस्ति न मित्रं कश्चन हिनस्ति तथो हैषऽएतां न हिनस्ति नोऽएतमेषा तां दिवैवोपवपेद्दिवोद्वपेदहर्ह्याग्नेयम् ॥ १० ॥

ताᳫं सावित्रेण यजुषोद्वपति । सविता वै प्रसविता सवितृप्रसूतऽएवैनामेतदुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वंगुरिः सुबाहुरुत शक्त्येति सर्व्वम् ह्येतत्सविता ॥ ११ ॥

---

अथ " मित्रस्य चर्षणीधृतः "–(वा. सं. ११।६२) इति मैत्रेण यजुषोपन्याचरति । यावत् कियच्चोपन्याचरति । न वै मित्रं कश्चन हिनस्ति, न मित्रं कश्चन हिनस्ति । तथो हैष एतां न हिनस्ति । नोऽएतमेषा । तां दिवैवोपवपेत्, दिवोद्वपेद् । अहर्ह्याग्नेयम् ॥ १० ॥

तां सावित्रेण यजुषोद्वपति । सविता वै प्रसविता । सवितृप्रसूत एवैनामेतदुद्वपति । " देवस्त्वा सवितोद्वपतु, सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या "–इति । सर्वमु ह्येतत् सविता ॥ ११ ॥

---

प्राक् संवत्सरस्य द्विर्भवतीति प्रसिद्धम् । षड्ऋतवो मिलित्वा संवत्सरो भवति, स संवत्सरोऽग्निः । प्रजापतिना संवत्सरो ध्रियमाणो भवति । अस्तु संवत्सरोऽग्निः प्रजापतिना धृतः, तथा च किमायातमित्यत आह–यावानग्निर्यावत्यस्य मात्रेति । यावानिति स्वरूपस्येयत्ता, यावतीत्यवयवस्य । तावत्तद् भवतीति । नैमित्तिकचित्या सह चितीनामप्यवयवानां षट्त्वात् सा मन्त्रगता सङ्ख्या ऋतुसङ्ख्याद्वारेणाग्नेर्मात्रया समा भवति । चित्यात्मकस्याग्नेः स्वरूपस्यैकत्वात् ऋतुषट्सङ्ख्यावतोऽवयविनः संवत्सरस्याप्येकत्वाच्च सा मन्त्रगता सङ्ख्या संवत्सरद्वारेण अग्निर्यावान् तावती भवतीत्यर्थः ॥ ९ ॥

उखायाः समन्त्रकमुपावहरणं विधाय प्रशंसति–अथ मित्रस्य चर्षणीधृत इति मैत्रेण यजुषोपन्याचरतीति । लोके ' मित्रं ' मित्रभूतः पुमान् ' न ' ' कश्चन ' ' हिनस्ति ' मित्रत्वादेव; ' मित्रम् ' अपि ' न ' ' कश्चन ' मित्रत्वादेव । ' तथो ' तथा च सति मैत्रेण मन्त्रेण नितरामुपचरणीयस्य पुनस्तृणप्रक्षेपाद्युपचारे सति ' एषः ' यजमानः ' एताम् ' उखां मित्रत्वादेव ' न हिनस्ति ' । ' नो ' नैव ' एतम् ' उपचरन्तं यजमानम् ' एषा ' उखा, मामयं दहतीति क्रुद्धा सती न हिनस्ति । तस्याः प्रक्षेपोत्क्षेपणयोः कालनियममाह–तां दिवैवोपवपेद्, दिवोद्वपेदिति । उपवापोऽवटे प्रक्षेपः, उद्वापस्ततः ऊर्ध्वं नयनम् । अहर्ह्याग्नेयमिति अग्नेः सूर्यस्य तेजस एकत्वाभिमावकत्वाभिप्रायेण ॥ १० ॥

उद्वापे मन्त्रं विधास्यन् सावित्रमाह–तां सावित्रेण यजुषोद्वपतीति । यजुषोऽयमर्थः–हे उखे ! ' त्वा ' त्वां ' सविता ' सर्वस्य प्रेरको देवः उद्वपतु । कीदृशः ? ' सुपाणिः ' ' पाणिः ' पानादिसाधनप्रदेशः,

---

१–आचरति मित्रस्येति का. श्रौ. सू. १६। ११५। २–उद्वपति श्रपणम् । देवस्त्वेत्युखाम् । का. श्रौ. सू. १६।११८।११९ ।

( तुाऽथै ) अथैनां पर्यावर्त्तयति । ( त्यु ) अव्यथमाना पृथिव्यामाशा दिशऽ आपृणेत्यव्यथमाना त्वं पृथिव्यामाशा दिशो रसेनापूरयेत्येतत् ॥ १२

( द्रु ) अथैनामुद्यच्छति । ( त्यु ) उत्थाय बृहती भवेत्युत्थाय हीमे लोका बृहन्तऽ उदु तिष्ठ ध्रुवा त्वमित्युदु तिष्ठ स्थिरा त्वं प्रतिष्ठितेत्येतत् १३

( त्रां ) तां परिगृह्य निदधाति । मित्रैतां तऽउखां परिददाम्यभित्त्याऽएषा मा भेदीत्ययं वै वायुर्मित्रो योऽयं पवते तस्मा ऽएवैनामेतत्परिददाति गुप्त्यै ते हेमे लोका मित्रगुप्तास्तस्मादेषां लोकानां न किञ्चन मीयते ॥ १४ ॥

---

अथैनां पर्यावर्तयति । " अव्यथमाना पृथिव्यामाशा दिश आपृण "–( वा० सं० ११ । ६३ ) इति । अव्यथमाना त्वं पृथिव्यामाशा दिशो रसेनापूरयेतत् ॥ १२ ॥

अथैनामुद्यच्छति–" उत्थाय बृहती भव "–इति । उत्थाय हीमे लोका बृहन्तः । " उदु तिष्ठ ध्रुवा त्वम् "–इति । उदु तिष्ठ स्थिरा त्वं प्रतिष्ठितेत्येतत् ॥ १३ ॥

तां परिगृह्य निदधाति–" मित्रैतां तऽउखां परिददाम्यभित्त्याऽएषा मा भेदि "–( वा० सं० ११ । ६४ ) इति । अयं वै वायुर्मित्रो–योऽयं पवते । तस्माऽएवैनामेतत् परिददाति–गुप्त्यै । ते हेमे लोका मित्रगुप्ताः । तस्मादेषां लोकानां न किञ्चन मीयते ॥ १४ ॥

---

शोभनेन तेन युक्तः । ' स्वङ्गुरिः ' शोभनाङ्गुलिकः । " बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यत इति वक्तव्यम् "–( पा. सू. ८ । २ । १८ वा. २ ) इति विकल्पेन रत्वम् । बाहुर्भुजदण्डः । ' उत ' अपि च शक्त्या महत्या युक्त इति शेषः । सर्वमु ह्येतत् सवितेति । एतत् ' सर्वं ' सुपाण्यादिकं ' सविता ' एव, न देवतान्तरमित्यर्थः । उक्त उद्वपनार्थः ॥ ११ ॥

यदुक्तं सूत्रकृता–"उखामुत्तानां करोति अव्यथमानेति"–( का. श्रौ. सू. १६ । ११९ । १२० ) इति, तदिदं समन्त्रकं पर्यावर्त्तनं विधत्ते–अथैनां पर्यावर्त्तयत्यव्यथमानेति । पर्यावर्त्तनमूर्ध्वाभिमुखीकरणम् । हे उखे ! ' अव्यथमाना ' व्यथामप्राप्नुवन्ती, ' पृथिव्याम् ' अवस्थिता त्वम्, इमाः परिव्याप्ताः ' आशाः ' प्राच्यादयः, ' दिशः ' आग्नेय्यादिविदिशश्च ' आ ' सर्वतः ' पृण ' पूरय । आपृणेत्यस्यार्थमाह–आपूरयेति । ' एतत् ' एव आपृण, इत्यस्य यद् वाच्यमस्ति, तदेतदेव, न त्वितोऽधिकमित्यर्थः ॥ १२ ॥

तस्या गर्त्तादुद्धरणं समन्त्रकं विधत्ते–अथैनामुद्यच्छत्युत्थाय बृहती भवेतीति[1] । उद्यमनमूर्द्ध्वधारणम् । हे उखे ! उद्धृत्य प्रथिता उत्थिता भव; न ह्यनुत्थितायाः प्रथनमुपपद्यते । एतन्मन्त्रभागं व्याचष्टे–उत्थाय हीमे लोका बृहन्त इति । उखाया लोकत्रयात्मकत्वेन प्रागुक्तत्वात् ' उत्थाय ' ऊर्द्ध्वमवस्थिताय, बहिरिमे त्रयो लोका ' बृहन्तः ' अधिकपरिमाणा दृश्यन्त इत्यभिप्रायः । उदु तिष्ठेति द्वितीयभागे ध्रुवशब्दस्य स्थैर्यं प्रतिष्ठितत्वम् अर्थ इति व्याचष्टे–उदु तिष्ठ स्थिरा त्वं प्रतिष्ठितेतीति । ' एतत् ' उपरि स्थापितायाः ॥ १३ ॥

क्षीरासेचनार्थं पात्रे स्थापनं विधत्ते–तां परिगृह्येति । ' निदधाति ' स्थापयेत्, ' पात्रे '–इति शेषः ।

---

१–उद्यच्छत्युत्थायेति । का० श्रौ० सू० १६ । १२१ ॥

( तु॒ऽथै ) अथै॒नामाच्छृ॑णत्ति । स्थेम्ने॒ न्वे॒वाथो॒ कर्म॑णः प्रकृ॒ततायै॒ यद्धे॒वाच्छृ॒णत्ति॒ शिर॑ऽएतद्य॒ज्ञस्य॒ यदु॒खा प्रा॒णः पयः॒ शीर्ष॒स्तत्प्रा॒णं द॑धात्य॒थो योषा॒ वाऽउ॒खा योषा॑यां॒ तत्पयो॑ दधाति॒ तस्मा॒द्योषा॑यां॒ पयः॑ ॥ १९ ॥

( यो॒ऽजा ) अ॒जायै॒ पय॑सा॒ऽऽच्छृ॑णत्ति । प्र॒जाप॑तेर्वै॒ शोका॑द॒जाः सम॑भव॒न्प्र॒जाप॑तिर॒ग्निर्नो॒ वाऽआ॒त्माऽऽत्मान॑ᳪं हिनस्त्य॒हि॑ᳪंसायै॒ यद्धे॒वाजा॒याऽअ॒जा ह॒ सर्वा॒ऽओष॑धीरत्ति॒ सर्वा॑सामे॒वैना॑मे॒तदोष॑धीना॒ᳪं रसे॑ना॒च्छृ॒णत्ति १६॥

व॒सव॑स्त्वा॒ऽऽच्छृ॑न्दन्तु गाय॒त्रेण॒ च्छन्द॑साऽङ्गिर॒स्वद्रु॒द्रास्त्वा॒ऽऽच्छृ॑न्दन्तु॒ त्रैष्टु॑भेन॒ च्छन्द॑साऽङ्गिर॒स्वदा॑दि॒त्यास्त्वा॒ऽऽच्छृ॑न्दन्तु॒ जाग॑तेन॒ च्छन्द॑सा-

---

अथैनामाच्छृणत्ति–स्थेम्ने न्वेव । अथो कर्मणः प्रकृततायै । यद्धेवाच्छृणत्ति–शिर एतद्यज्ञस्य–यदुखा, प्राणः पयः । शीर्षस्तत् प्राणं दधाति । अथो योषा वाऽउखा । योषायां तत् पयो दधाति । तस्माद्योषायां पयः ॥ १९ ॥

अजायै पयसाऽऽच्छृणत्ति । प्रजापतेर्वै शोकादजाः समभवन् । प्रजापतिरग्निः । नो वाऽआत्माऽऽत्मानं हिनस्ति–अहिंसायै । यद्धेवाजायाः । अजा ह सर्वा ओषधीरत्ति । सर्वासामेवैनामेतदोषधीनां रसेनाऽऽच्छृणत्ति ॥ १६ ॥

" वसवस्त्वाऽऽच्छृन्दन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वत्(१) रुद्रास्त्वाऽऽच्छृन्दन्तु त्रैष्टु-

---

तथा च कात्यायनः–" परिगृह्य पात्रे करोति मित्रैतां त इति "-( का. श्रौ. सू. १६ । १२२ ) इति ॥ हे ' मित्र ! ' देव ! वायो ! ' एताम् ' उखां ' ते ' तुभ्यम् ' परिददामि ' । परिदानं रक्षणार्थं दानम् । ' अभित्त्यै ' अभेदनाय ' एषा ' उखा 'मा भेदि' भिन्ना मा भूत् इति । मित्रशब्दस्यात्र समीहितमर्थमाह–अयं वै वायुर्मित्र इति । ' योऽयं पवते ' सततं वाति । " पवतिर्गतिकर्मा "–( निघ. २ । १४ । ९ ) । ते हेमे लोका मित्रगुप्ता इति । लोकत्रयात्मकोखापरिदानेनेदानीमपि त्रयो लोका वायुना गुप्ता धृता अविचलिता वर्त्तन्ते । ' तस्मात् ' ' एषां लोकानां ' मध्ये ' न किञ्चन ' ' मीयते ' हिंस्यते ॥ १४ ॥

अथ तस्यामुखायां पयआसेचनं विधाय स्तौति–अथैनामाच्छृणत्ति स्थेम्ने त्वा इत्यादिना । एनाम् उखाम् ' आच्छृणत्ति ' आसिञ्चति । गतमन्यत् । प्रकारान्तरेण प्रशंसति–यद्धेवाच्छृणत्ति, शिर एतद् यज्ञस्य यदुखेति । प्राधान्याद् उखायाः शिरस्त्वव्यवहारः । पयसो बलकरत्वात् प्राणत्वव्यपदेशः । पयोयोग्यत्वमिदानीन्तनप्रसिद्धया समर्थयते–अथो योषा वा उखेति । स्त्रीलिङ्गत्वादुखाया योषात्वम् । पयसः रेतोवर्द्धकत्वाद्रेतस्त्वं प्रसिद्धम् ॥ १९ ॥

पयस आजत्वं विधाय स्तौति–अजायै पयसाऽऽच्छृणत्तीति । प्रजापतेः शोकादजासम्भूतिराख्यानान्तराच्च द्रष्टव्या; चीयमानस्याग्नेः प्रजापत्यात्मकत्वं प्रागुक्तम् । प्रजापतिरग्निः । प्रकारान्तरेण स्तौति–यद्धेवाजाया इति । ' यत् ' ' उ ' अपि च ' अजायाः ', पयो भवतीति शेषः । स्पष्टमन्यत् ॥ १६ ॥

तत्र मन्त्रानाह–वसवस्त्वाऽऽच्छृन्दन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वदित्यादिना । हे उखे ! त्वां 'वसवः'

ऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानराऽ आच्छृन्दन्त्वानुष्टुभेन च्छन्दसाऽङ्गिरस्वदित्येताभिरेवैनामेतद्देवताभिराच्छृणत्ति स वै याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति यो व्वाव कर्म करोति सऽ एव तस्योपचारं व्वेद तस्माद्याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति ॥१७

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ६–४–२ ॥ ( ५. ४. ) ॥
इति पञ्चमोऽध्यायः समाप्तः ॥ ६–५ ॥

---

भेन च्छन्दसाऽङ्गिरस्वत् ( २ ) आदित्यास्त्वाऽऽच्छृन्दन्तु जागतेन च्छन्दसाऽङ्गिरस्वत ( ३ ) । विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन च्छन्दसाऽङ्गिरस्वत"–( वा. सं.– ११ । ६५ ) इति । एताभिरेवैनामेतद्देवताभिराच्छृणत्ति । स वै याभिरेव देवताभिः करोति–ताभिर्धूपयति–ताभिराच्छृणत्ति । यो वाव कर्म करोति–स एव तस्योपचारं वेद । तस्माद्याभिरेव देवताभिः करोति–ताभिर्धूपयति । ताभिराच्छृणत्ति ॥ १७ ॥

---

देवा अष्टसङ्ख्याकाः, 'अङ्गिरस्वद्' अङ्गिरस इव 'आच्छृन्दन्तु' आसिञ्चन्तु । कीदृशाः ? 'गायत्रेण च्छन्दसा' सहिताः; अष्टसङ्ख्या वसूनां गायत्रच्छन्दस्सम्बन्धे द्वारः । एवमुत्तरत्र मन्त्रा अपि व्याख्येयाः । विश्वेषां नराणां हिता 'वैश्वानराः' ते सर्वे देवाः । "अजापयसाऽवसिञ्चति वसवस्त्वेति प्रतिमन्त्रम्"–( का. श्रौ. सू.– १६ । १२३ ) इति हि सूत्रम् । अत्रासेचनमन्त्रेषु वस्वादयः प्रतिपाद्याः, निर्माणमन्त्रेषु, धूपनमन्त्रेषु च । अतो यद् देवतैक्यं तत् प्रशंसति–स वै याभिरेव देवताभिः करोति, ताभिर्धूपयति, ताभिराच्छृणत्तीति । यो वाव कर्म करोति, स एव तस्योपचारं वेदेति । यथा लोके तक्षादिः प्रासादनिर्माणादि 'कर्म करोति,' 'स एव' तदाढर्यार्थम् 'उपचारं' शङ्कुं प्रति दार्वादिस्थापनलक्षणमुपचारजातं जानाति; अतो युक्तम्, यैरेव कृतम्, तैरेव धूपनासेचनोपचरणमित्यर्थः ॥ १७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे पञ्चमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ६–५–४ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥
ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं, सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो, व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः, कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा, रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये षष्ठे काण्डे पञ्चमोऽध्यायः समाप्तः ॥ ६–५ ॥

---

१–यावद्धाचरेत् । का० श्रौ० सू० १६ । ११६ ।

# अथ षष्ठकाण्डे षष्ठाऽध्याये प्रथमं ब्राह्मणम् । चतुर्थप्रपाठके च तृतीयं ब्राह्मणम् ।

भूयाꣳसि हवीꣳषि भवन्ति । (न्त्य) अग्निचित्यायां यदु चानग्निचित्यायामतीनि ह कर्माणि सन्ति यान्यन्यत्कर्मातिं तान्यतीनि तेषामग्निचित्या राजसूयो व्वाजपेयोऽश्वमेधस्तद्यत्तान्यन्यानि कर्माण्यति तस्मात्तान्यतीनि ॥ १ ॥

(न्या) आग्नावैष्णव ऽएकादशकपालः । (स्तु) तदध्वरस्य दीक्षणीयं व्वैश्वानरो द्वादशकपालऽ आदित्यश्च चरुस्तेऽअग्नेः ॥ २ ॥

---

भूयांसि हवींषि भवन्त्यग्निचित्यायाम्—यदु चानग्निचित्यायाम् । अतीनि ह कर्माणि सन्ति । यान्यन्यत् कर्म—अति—तान्यतीनि । तेषामग्निचित्या राजसूयो वाजपेयोऽश्वमेधः । तद्यत्तान्यन्यानि कर्माण्यति—तस्मात्तान्यतीनि ॥ १ ॥

आग्नावैष्णव एकादशकपालः । तदध्वरस्य दीक्षणीयम् । वैश्वानरो द्वादशकपालः । आदित्यश्च चरुः । तेऽग्नेः ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वस्मिन्नध्याये उखासम्भरणमषाढाविश्वज्योतिषां चेष्टकानां तिर्यङ्मानमुक्तम्, अथ षष्ठे दीक्षणीयाद्युखाभेदनप्रायश्चित्तान्तः प्रयोग उच्यते । तत्र प्राकृतीमाग्नावैष्णवीष्टिं, वैकृतीं वैश्वानरद्वादशकपालेष्टिमादितो विधातुमुपोद्घातयति—भूयांसि हवींषि भवन्त्यग्निचित्यायामित्यादिना । भूयसां हविषां सद्भावयोग्यत्वाभिधानाय अस्यातिकर्मत्वं प्रवक्तुं प्रतिजानीते—अतीनि ह कर्माणि सन्तीति । तेषां स्वरूपदर्शनविलम्बमसहमानोऽतिकर्मशब्दं तावन्निर्वक्ति—यान्यन्यत् कर्माति तान्यतीनीति । 'यानि' 'अन्यत् कर्म' ज्योतिष्टोमादिकं कर्मातिक्रमविशेषेण हविष्मन्ति सन्ति 'तान्यतीनि' तेषु मध्येऽग्निचित्याप्येकमिति प्रदर्शयितुं कानिचित्परिगणयति—तेषामग्निचित्या राजसूयो वाजपेयोऽश्वमेध इति । तेषामतिकर्मणां मध्ये एषूक्तलक्षणसद्भावमाह—तद्यत्तान्यन्यानि कर्माण्यति तस्मात्तान्यतीनीति ॥ १ ॥

इदानीमाग्नावैष्णवादिहवींषि विधत्ते—अथाग्नावैष्णव एकादशकपाल इत्यादिना । 'तत्' 'अध्वरस्य' सोमयागस्य 'दीक्षणीयं' दीक्षासंस्कारकं हविः । 'वैश्वानरो द्वादशकपालः,' 'आदित्यश्चरुः' च 'ते' एते हविषी 'अग्नेः' एव प्रातिस्विके ॥ २ ॥

स यदाग्नावैष्णवमेव निर्व्वपेत् । ( न्ने ) नेतरे हविषीऽअध्वरस्यैव दीक्षणीयं कृतꣳ स्यान्नाग्नेरथ यदितरेऽएव हविषी निर्व्वपेन्नाग्नावैष्णवमग्नेरेव दीक्षणीयं कृतꣳ स्यान्नाध्वरस्य ॥ ३ ॥

( स्यो ) उभयानि निर्व्वपति । ( त्य ) अध्वरस्य चाग्नेश्चोभयꣳ ह्येतत्कर्माध्वरकर्म चाग्निकर्म चाध्वरस्य पूर्व्वमथाग्नेरुपायि ह्येतत्कर्म यदग्निकर्म ॥ ४ ॥

स यऽ एषऽआग्नावैष्णवः । ( स्तु ) तस्य तदेव ब्राह्मणं यत्पुरश्चरणे व्वैश्वानरो द्वादशकपालो व्वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषामग्नीनामुपाप्त्यै द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरो व्वैश्वानरः ॥ ५ ॥

---

स यदाग्नावैष्णवमेव निर्वपेत्, नेतरे हविषी—अध्वरस्यैव दीक्षणीयं कृतं स्यात्—नाग्नेः । अथ यदितरेऽएव हविषी निर्वपेत्—नाग्नावैष्णवम्—अग्नेरेव दीक्षणीयं कृतं स्यात्—नाध्वरस्य ॥ ३ ॥
उभयानि निर्वपति—अध्वरस्य च । अग्नेश्च । उभयं ह्येतत्कर्म—अध्वरकर्म चाग्निकर्म च । अध्वरस्य पूर्वम्—अथाग्नेः । उपायि ह्येतत्कर्म—यदग्निकर्म ॥ ४ ॥
स य एष आग्नावैष्णवः—तस्य तदेव ब्राह्मणम्—यत् पुरश्चरणे । वैश्वानरो द्वादशकपालः । वैश्वानरो वै सर्वेऽग्नयः । सर्वेषामग्नीनामुपाप्त्यै । द्वादशकपालः । द्वादश मासाः संवत्सरः । संवत्सरो वैश्वानरः ॥ ५ ॥

---

इत्थमध्वरचित्याग्न्योर्हविर्व्यवस्थामुक्त्वा उभयविधान्यपि हवींषि कर्त्तव्यानीत्याह—स यदाग्नावैष्णवमेव निर्वपेदित्यादिना । अध्वरस्य चितेश्चेत्युभयोर्दीक्षणीयत्वसिद्धये उभयानि हवींषि अनुष्ठेयानि, अन्यतरहविषोऽकरणे तन्न स्यादित्यर्थः ॥ ३ ॥

उभयानि निर्वपतीति । उभयं ह्येतत् कर्मेति । ' एतत् ' साग्निचयनसौमिकं ' कर्म, ' ' उभयम् ' उभयात्मकं खलु । किं तदुभयमिति, तत्राह—अध्वरकर्म चाग्निकर्म चेति । तत्र पौर्वापर्यस्यानियमप्राप्तौ आह—अध्वरस्य पूर्वमथाग्नेरिति । अग्नेः कर्मणः प्राथम्यं किं न स्यात् इत्यत आह—उपायि ह्येतत् कर्म, यदग्निकर्मेति । ' उप ' प्रकृतकर्मणः समीपे, तदुपजीव्य ' एति ' आयातीति ' उपायि ' ॥ ४ ॥

प्राकृतस्याग्नावैष्णवस्य प्रयोगः किं न व्याख्यायत इत्याशङ्क्य आग्निष्टोमिकं ब्राह्मणमतिदिशति—स य एष आग्नावैष्णवस्तस्येति । यत् पुरश्चरण इति । ' पुरः ' पूर्वं ' चरणम् ' अनुष्ठानं यस्मिन्, तत् ' पुरश्चरणम्, ' प्राकृतमग्निष्टोमकर्मेत्यर्थः । तस्मिन् यद् ' ब्राह्मणम् ' उक्तम्, ' तदेव ' ' तस्य ' अग्निचयनस्य; यद्वा ' तस्य ' तत्क्रतोराग्नावैष्णवस्य ( श. प. ३ । १ । ३ । १ ) ॥ अथाग्नेर्दीक्षणीयं हविरनूद्य प्रशंसति—वैश्वानरो द्वादशकपालो वैश्वानरो वै सर्वेऽग्नय इति । यो ' वैश्वानरः ' चित्यां स्थाप्यमानः, सः ' सर्वे-

( रो ) यद्वेवैतं वैश्वानरं निर्वपति । वैश्वानरं वाऽएतमग्निं जनयिष्यन्भवति तमेतत्पुरस्ताद्दीक्षणीयायाᳬं रेतोभूतᳬं सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतमत्र वैश्वानरᳬं रेतोभूतᳬं सिञ्चति तस्मादेषोऽमुत्र वैश्वानरो जायते ॥ ६ ॥

यद्वेवैते हविषी निर्वपति । क्षत्रं वै वैश्वानरो विडेषऽआदित्यश्चरुः क्षत्रं च तद्विशं च करोति वैश्वानरं पूर्वं निर्वपति क्षत्रं तत्कृत्वा विशं करोति ॥ ७ ॥

---

यद्वेवैतं वैश्वानरं निर्वपति । वैश्वानरं वाऽएतमग्निं जनयिष्यन्भवति । तमेतत् पुरस्ताद्दीक्षणीयायां रेतोभूतं सिञ्चति । यादृग्वै योनौ रेतः सिच्यते-तादृग् जायते । तद्यदेतमत्र वैश्वानरं रेतोभूतं सिञ्चति-तस्मादेषोऽमुत्र वैश्वानरो जायते ॥ ६ ॥

यद्वेवैते हविषी निर्वपति । क्षत्रं वै वैश्वानरः, विडेष आदित्यश्चरुः । क्षत्रं च तद् विशं च करोति । वैश्वानरं पूर्वं निर्वपति । क्षत्रं तत्कृत्वा विशं करोति ॥ ७ ॥

---

ऽग्नयः ' चितिरूपाः षडग्नयः अधिष्ठानारोप्ययोरभेदात् । अथवा विश्वेषां नराणां हितत्वेन सम्बन्धी 'वैश्वानरः' श्रुतिलोकसाधारणोऽग्निः स एव ' सर्वेऽग्नयः ' और्वजाठरवैद्युताहवनीयाद्यग्नयः; तेषां सर्वेषामिह प्राप्तौ वैश्वानराग्निदेवत्यः । कपालगतसङ्ख्यां प्रशंसति-द्वादशकपालो द्वादश मासाः संवत्सर इति ॥ ९ ॥

प्रकारान्तरेण पुरोडाशदेवतां प्रशंसति-यद्वेवैतं वैश्वानरमिति । ' एतं ' ' वैश्वानरं ' सप्तचित्यात्मकं ' जनयिष्यन् ' इष्टकाभिरुत्पादयिष्यन् भवति, अतः ' तम् ' ' एतत् ' इदानीं ' पुरस्तात् ' उत्पादनात् प्रागेव, ' दीक्षणीयायाम् ' एव वैश्वानरहविःकरणेन ' रेतोभूतं ' बीजरूपापन्नं ' सिञ्चति ' । अत उभयोर्निषेक्तव्यजनयितव्ययोर्विलक्षणत्वपरिहाराय आदावपि पुरोडाशो वैश्वानर एव कर्त्तव्यः । उक्तोऽर्थो लोकसिद्ध इति दर्शयति-यादृग्वै योनौ रेत इति । प्रतिपादितं सादृश्यं प्रकृते दर्शयन् पुनर्निगमयति-तद्यदेतमत्र वैश्वानरमिति । ' तद्यत् '-इत्यत्र तच्छब्दोऽनुवादी यच्छब्देन प्रयुज्यते, ' अत्र ' दीक्षाकाले, ' अमुत्र ' चयननिष्पत्तिकाले । अथवा, ' अत्र ' प्राचीनवंशे रेतोभूतं सिञ्चति वैश्वानरम्; ' अमुत्र ' सौमिके चितिप्रदेशे जनयति ॥ ६ ॥

अथ वैकृते उभे हविषी समुच्चित्य प्रशंसति-यद्वेवैते हविषी इति । ' एते हविषी ' वैश्वानरद्वादशकपालादित्यचर्वाख्ये । क्षत्रं वै वैश्वानर इति । ' वैश्वानरः ' अग्निः, ' क्षत्रं ' क्षत्रियजातिः । तथा च बृहदारण्यकम्-" यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति "-( बृह. उ. १ । ४ । ब्रा. २२ कं. ) इति । आदित्यानां तु " अग्निर्वसुभिः, सोमो रुद्रैः, वरुण आदित्यैः "-इत्यादिश्रुतिषु ( बृ. उ. १ । ४ । २३ ) तृतीयान्तानामुपसर्जनप्रतीतेस्तेषां प्रजारूपत्वम् । यद्यपि " विडेष आदित्यश्चरुः "-इति चरोः प्राधान्यं प्रतिभाति, तथापि चरोः वैश्यजातित्वयोगात् तद्धितान्तावयवभूता देवतैवात्र विवक्ष्यते । एवं वैश्वानरवाक्येऽपि । यद्वा, देवताद्वारा द्रव्ययोरप्युक्तजातित्वम्; ' एते हविषी ' भवत इति हविषः

( त्ये ) एक ऽएषु भवति । ( त्ये ) एकदेवत्यऽ एकस्थं तत्क्षत्रमेकस्थाᳪ श्रियं करोति चरुरितरो बहुदेवत्यो भूमा वाऽएष तण्डुलानां यच्चरुर्भूमो ऽएषु देवानां यदादित्या विशि तद्भूमानं दधातीत्यधिदेवतम् ॥ ८ ॥

(स) अथाध्यात्मम् । (ᳪ) शिरऽ एव वैश्वानरऽआत्मैष ऽआदित्यश्चरुः शिरश्च तदात्मानं च करोति वैश्वानरं पूर्वं निर्वपति शिरस्तत्कृत्वाऽऽत्मानं करोति ॥ ९ ॥

( त्ये ) एकऽ एषु भवति । ( त्ये ) एकमिव हि शिरश्चरुरितरो बहुदेवत्यो भूमा वाऽएषु तण्डुलानां यच्चरुर्भूमोऽएषोऽङ्गानां यदात्माऽऽत्मंस्तदङ्गानां भूमानं दधाति ॥ १० ॥

---

एक एष भवत्येकदेवत्यः । एकस्थं तत् क्षत्रमेकस्थां श्रियं करोति । चरुरितरो बहुदेवत्यः । भूमा वाऽएष तण्डुलानां–यच्चरुः । भूमोऽएष देवानाम्–यदादित्याः । विशि तद् भूमानं दधाति । इत्यधिदेवतम् ॥ ८ ॥

अथाध्यात्मम् । शिर एव वैश्वानरः । आत्मैष आदित्यश्चरुः । शिरश्च तदात्मानं च करोति । वैश्वानरं पूर्वं निर्वपति । शिरस्तत्कृत्वाऽऽत्मानं करोति ॥ ९ ॥

एक एष भवति । एकमेव हि शिरः। चरुरितरो बहुदेवत्यः । भूमा वा एष तंडुलानां यच्चरुः । भूमो एषोऽङ्गानां यदात्मा । आत्मंस्तदंगानां भूमानं दधाति ॥ १० ॥

---

प्राधान्यात् पुरोडाशस्यैकपिण्डत्वेन प्राधान्याच्चर्वेवयवानां तण्डुलानां बहुत्वाद्वा पुरोडाशचर्वोः क्षत्रविड्जातित्वं द्रष्टव्यम् । उभयोरप्यवश्यमनुष्ठेयत्वादनियमप्रसक्तावाह–वैश्वानरं पूर्वमिति ॥ ७ ॥

पूर्वस्मिन् हविषि द्रव्यस्य देवतायाश्चैकत्वम्, उत्तरस्मिन् तद्बहुत्वं च प्रशंसति–एक एष भवतीत्यादिना । 'एषः' पुरोडाशः 'एको भवति,' स च 'एकदेवत्यः' एका एव देवता यस्य स तथोक्तः । 'तत्' तेन, तथात्वसम्पादनेन 'एकस्थं' 'क्षत्रं क्षत्रियम्, एकमेव सर्वस्यापि महामण्डलस्य कृतवान् भवति । बहुराजस्य दुष्टत्वात् । फलितमर्थमाह–एकस्थां श्रियं करोतीति । श्रियो राजाश्रयत्वनियमात् राज्ञ एकत्वसम्पादनादेव तस्य श्रियमप्येकस्थां करोति । इत्थं वैश्वानरस्य पुरोडाशस्य च परस्परयोग्यतामभिधाय आदित्यानां चरोश्च सङ्गतत्वमाह–चरुरितरो बहुदेवत्य इति । यतः 'एषः' 'तण्डुलानां' 'भूमा वै' बहुत्वं खलु । भूमेति पुँल्लिङ्ग–प्रतिनिर्देशमपेक्ष्य एष इति पुँल्लिङ्गता । "भूमो एष देवानाम्"–इत्यत्र 'भूमा उ' इति निपातानिपातसमुदायः । शिष्टं स्पष्टम् । प्रकारान्तरेण पुनः स्तोतुमुक्तमर्थं व्यवस्थापयति–इत्यधिदेवतमिति । "यद्वेवैते हविषी"–इत्युपक्रम्य, "विशि तद् भूमानं दधाति"–इत्यन्तेन ग्रन्थसन्दर्भेण प्रतिपादितम् 'अधिदेवतम्' देवतामधिकृत्य प्रवृत्तमुक्तम्॥ ८ ॥

अथाध्यात्मं वक्ष्यते–शिर एष वैश्वानरः, आत्मैष आदित्यश्चरुरित्यादिना । प्रथममनुष्ठेयत्वेन

घृतऽएष भवति । घृतभाजना ह्यादित्याः स्वेनैवैनानेतद्भागेन स्वेन रसेन प्रीणात्युपाᳪं᳭श्वेतानि हवीᳪं᳭षि भवन्ति रेतो वा ऽअत्र यज्ञऽउपाᳪं᳭शु वै रेतः सिच्यते ॥ ११ ॥

( तेऽथौ ) अथौद्ग्रभणानि जुहोति । (त्यौ) औद्ग्रभणैर्वै देवाऽआत्मानमस्माल्लोकात्स्वर्गं लोकमभ्युदगृह्णत यदुदगृह्णत तस्मादौद्ग्रभणानि तथैवैतद्यजमानऽ औद्ग्रभणैरेवात्मानमस्माल्लोकात्स्वर्गं लोकमभ्युद्गृह्णीते ॥ १२ ॥

---

घृत एष भवति । घृतभाजना ह्यादित्याः । स्वेनैवैनानेतद् भागेन स्वेन रसेन प्रीणाति । उपांश्वेतानि हवींषि भवंति । रेतो वा अत्र यज्ञः । उपांशु वै रेतः सिच्यते ॥ ११ ॥

अथौद्ग्रभणानि जुहोति । औद्ग्रभणैर्वै देवा आत्मानमस्माल्लोकात्स्वर्गं लोकमभ्युदगृह्णत । यदुदगृह्णत–तस्मादौद्ग्रभणानि । तथैवैतद्यजमान औद्ग्रभणैरेवात्मानमस्माल्लोकात्स्वर्गं लोकमभ्युद्गृह्णीते ॥ १२ ॥

---

प्राधान्यात् एकत्वाच्च साम्यात् ' आदित्यश्चरुः ' ' आत्मा ' अङ्गप्रत्यङ्गसहितं कृत्स्नं शरीरम् । शिष्टम् अधिदेवतवाक्यवद्व्याख्येयम् ॥ ९ ॥ १० ॥

चरोराश्रयं द्रव्यमाह–घृत एष भवतीति । ' घृतभाजना ह्यादित्याः '–इति । घृतभागा इत्यर्थः । " तेजो वै घृतम् " ( ऐ. ब्रा. ८ । ४ । ६ ) ( तै. सं. २–५ । २ । ७ ) इति श्रुतेः घृतस्य तेजोद्रव्यत्वादादित्यानामपि तथात्वात् " आदित्यं घृतेन चरुम् "–( श. प. ३ । २ । ३ । १ ) इत्यादौ घृतसम्बन्धाद्वा तेषां तद्भागभाक्त्वम् । ' स्वेनैव भागेन ', ' स्वेन रसेन ' इति व्याख्यानव्याख्येयभावः । अत्र कात्यायनः उखानिष्पादनानन्तरप्रयोगमुक्त्वाऽऽह–" दीक्षाऽमावास्यायामामावास्येनेष्ट्वा, आग्नावैष्णववैश्वानरौ, घृते चर्वादित्येभ्यः "–( का. श्रौ. सू. १६ । १२७–१२९ ) इति । एषां त्रयाणां हविषामुपांशुधर्मकत्वं विधत्ते–उपांश्वेतानि हवींषि भवन्तीति । " करणवदशब्दमुपांशु "–इति तल्लक्षणम् । रेतो वा अत्र यज्ञ इति । ' अत्र ' अस्मिन् दीक्षासमये क्रियमाणो ' यज्ञः ' ' रेतो वै ' रेतोरूपः खलु । अस्य रेतस्त्वमुक्तं प्राक् ॥ ११ ॥

अथौद्ग्रभणानि हवींषि विधाय तन्निर्वचनद्वारेण प्रशंसति–अथौद्ग्रभणानि जुहोतीति[1] । औद्ग्रभणैर्वै देवा आत्मानमिति । ' आत्मानं ' लिङ्गशरीरोपाधिकं जीवात्मानं ' देवाः ' ' अस्माद् ' भूलोकात् ' स्वर्गं ' ' लोकम् ' ' अभि '–लक्ष्य ' उदगृह्णत ' ऊर्ध्वमुखमाकर्षणं कृतवन्तः । उद्ग्रहणसाधनत्वात् ' औद्ग्रभणानि ' इति नाम सम्पन्नम् । " ह्रग्रहोर्भः "–( पा. सू. ८ । २ । ३२ वा० ) । तथैवैतदिति । दृष्टान्तवद् व्याख्येयम् ॥ १२ ॥

---

१–प्राकृतान्यौद्ग्रभणानि हुत्वा सप्तामिकानि । का. श्रौ. सू. १६ । १३० ।

तानि वै भूयाꣳसि भवन्ति । ( न्त्य ) अग्निचित्यायां यदु चानग्निचित्यायां तस्योक्तो बन्धुरुभयानि भवन्ति तस्योक्तोऽध्वरस्य पूर्वाण्यथाग्नेस्तस्योऽएवोक्तः ॥ १३ ॥

पञ्चाध्वरस्य जुहोति । पाङ्क्तो यज्ञो यावान्यज्ञो यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतꣳ सिञ्चति सप्ताग्नेः सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतꣳ सिञ्चति तान्युभयानि द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १४ ॥

---

तानि वै भूयांसि भवन्त्यग्निचित्यायाम्, यदु चानग्निचित्यायाम् । तस्योक्तो बन्धुः । उभयानि भवन्ति । तस्योक्तः । अध्वरस्य पूर्वाणि–अथाग्नेः । तस्योऽएवोक्तः ॥ १३ ॥

पञ्चाध्वरस्य जुहोति । पाङ्क्तो यज्ञः । यावान्यज्ञो, यावत्यस्य मात्रा–तावतैवैनमेतद्रेतोभूतं सिञ्चति । सप्ताग्नेः । सप्तचितिकोऽग्निः । सप्तऽर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निः–यावत्यस्य मात्रा–तावतैवैनमेतद्रेतोभूतं सिञ्चति । तान्युभयानि द्वादश सम्पद्यन्ते । द्वादश मासाः संवत्सरः । सम्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १४ ॥

---

तेषां भूयस्त्वमाह–तानि वै भूयांसीति । 'अनग्निचित्यायाम्' अग्निचयनव्यतिरिक्तायां केवलज्योतिष्टोमादिक्रियायां 'यदु' यान्येव हवींषि, ततोऽपि 'भूयांसि' 'अग्निचित्यायां' क्रियायां 'भवन्ति' । चयनस्य हविर्भूयस्त्वं स्वयमेव वक्ष्यति । हविर्भूयस्त्वार्थवादब्राह्मणं किमिति नोक्तमित्याशङ्कायामाह–तस्योक्तो बन्धुरिति । 'तस्य' हविर्भूयस्त्वस्य 'बन्धुः' अर्थनिबन्धकोऽर्थवादः 'उक्तः' अध्यायादौ "भूयांसि हवींषि भवन्त्यग्निचित्यायाम्"–( श. प. ६ । ६ । १ । १ ) इत्यादिना । आग्निकैः सौमिकबाधप्रसक्तत्वमाह–उभयानि भवन्ति तस्योक्त इति । आग्निकानि सौमिकानि च 'उभयानि' भवेयुः, तस्योभयत्वस्य अर्थवाद उक्तो दीक्षणीयहविःप्रस्तावे–" उभयानि निर्वपति अध्वरस्य चाग्नेश्च "–इत्यदिना ( अस्मिन्नेव ब्राह्मणे चतुर्थकण्डिकायाम् )। आध्वरिकाणां पूर्वभावित्वम्, आग्निकानां पश्चाद्भावित्वं च विधाय तदर्थवादं चातिदिशति–अध्वरस्य पूर्वाणि, अथाग्नेः, तस्यो एवोक्त इति । " उपायि ह्येतत् कर्म, यदग्निकर्म "–इत्येवमुक्त इत्यर्थः ॥ १३ ॥

आध्वरिकाणां पञ्चसङ्ख्यामनूद्य प्रशंसति–पञ्चाध्वरस्य जुहोति पाङ्क्तो यज्ञ इति । प्रातरादिसवनानि त्रीणि, प्रायणीयोदयनीयौ द्वौ, इति पञ्चसङ्ख्यायोगाद् 'यज्ञः' 'पाङ्क्तः' । यद्वा, " धानाः करम्भः परिवापः पुरोडाशः पयस्या " इत्येवं तैत्तिरीयोक्तहविःपञ्चकसंख्यायोगात् ( तै. सं. ६ । ५ । ११ ) ( ऐ. ब्रा. २ । ३ । ६ ) ( श. प. ३ । २ । १२ सा. भा. ) पाङ्क्तत्वम् । हविष्पञ्चकत्वनिष्पादने सति 'यज्ञः' सोमयागः 'यावान्' यत्परिमाणः, 'अस्य' 'मात्रा' अवयवा 'यावती' यत्परिमाणा, 'तावता' तेन कृत्स्नेनापि 'एनम्' उत्पाद्यमानं चयनलक्षणमग्निं 'रेतोभूतं' बीजरूपेणावस्थितम्, 'एतत्'–इति क्रियाविशेषणम्, क्रियमाणप्रकारेण 'सिञ्चति' निषेकं कृतवान् भवति ॥

स जुहोति । ( त्या ) आकूतिमग्निं प्रयुजꣳ स्वाहेत्याकूताद्वाऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १५ ॥

मनो मेधामग्निं प्रयुजꣳ स्वाहेति । मनसो वाऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १६ ॥

चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहेति । चित्ताद्वाऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १७ ॥

---

स जुहोति–" आकूतिमग्निं प्रयुजं स्वाहा "–इति । आकूताद्वाऽएतदग्रे कर्म समभवत् । तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १५ ॥

" मनो मेधामग्निं प्रयुजं स्वाहा "–इति । मनसो वाऽएतदग्रे कर्म समभवत् । तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १६ ॥

" चित्तं विज्ञातमग्निं प्रयुजं स्वाहा "–इति । चित्ताद्वाऽएतदग्रे कर्म समभवत् । तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १७ ॥

---

अग्निचयनीयानामौद्ग्रभणानां सप्तसंख्यारूपं यद्द्विर्भूयस्त्वं तद् विधाय प्रशंसति–सप्ताग्नेः सप्तचितिकोऽग्निरित्यादिना । अग्नेः सप्त चितय इत्थं द्रष्टव्याः । षट् चितय इष्टकामय्यः, सप्तमी श्रूयते–"विकर्णीं च स्वयमातृण्णाञ्चोपदधाति ०–० सा सप्तमी चितिः " ( श. प. ८ । १ । ४ । ९ ) इति । शिष्टं पूर्ववत् । मिलितानां संख्यामनूद्य प्रशंसति–तान्युभयानीति । द्वादशमासलक्षण एक इति, व्यावृत्तधर्मकाः षट् ; अनुगतकाललक्षण एक इति वा सप्तर्तुत्वम् ॥ १४ ॥

सप्तौद्ग्रभणहविषां मन्त्राननूद्य व्याचष्टे–स जुहोति आकूतिमग्निं प्रयुजं स्वाहेत्यादि । 'आकूतिः' आत्मधर्मो मनसः प्रेरणहेतुः । यद्वा, 'आकूतिः' सङ्कल्पः, तदवस्थापन्नम् 'प्रयुजं' प्रकर्षेण युनक्ति तादृशीं वृत्तिमिति प्रयुक्, तादृशम् 'अग्निं' चयनात्मकविराड्रूपम् । 'स्वाहा' तमभिलक्ष्य सुहुतमस्तु । आकूताद्वा एतदग्रे कर्म समभवत् तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते–इति । एतत्पूर्वं सम्भूतप्रकारेण 'कर्म' चयनाख्यम् 'अग्रे' पुरा 'आकूतात्' प्रकारात् 'समभवत्' सम्पन्नमासीत्, 'तदेव' 'एतत्' इदानीं क्रियमाणप्रकारविशेषम् 'एतस्मै' चयनाख्याय 'कर्मणे' 'प्रयुङ्क्ते' प्रयुक्तवान् भवति । एवमुत्तरवाक्यान्यपि व्याख्येयानि ॥ १५ ॥

मनो मेधामिति । उपर्युपरि व्यापारशीला मनसो वृत्तिर्मेधा, तद्रूपं यत् 'मनः' अस्ति । विमर्शलक्षणं तदात्मकतामापन्नं अग्निम् । गतमन्यत् । " मनसो वा एतदग्रे "–इत्यर्थवादोऽपि व्याख्यातप्रायः ॥ १६ ॥

चित्तं विज्ञातमग्निमिति । अनुसन्धानरूपं 'चित्तम्', "अनुसन्धानतश्चित्तं विमर्शान्मन उच्यते"–इति स्मरणात् । गतमन्यत् ॥ १७ ॥

---

१–आकूतिमिति प्रतिमंत्रम् । का० श्रौ० सू० १६ । १३० ॥

व्वाचो व्विधृतिमग्निं प्रयुजᳬं स्वाहेति । व्वाचो वाऽएतदग्रे कर्म सम-
भवत्तामेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १८ ॥

प्रजापतये मनवे स्वाहेति । प्रजापतिर्व्वै मनुः स हीदᳬं सर्व्वममनुत
प्रजापतिर्व्वाऽएतदग्रे कर्माकरोत्तमेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १९ ॥

( ङ्केऽग्र ) अग्नये व्वैश्वानराय स्वाहेति । संव्वत्सरो वा ऽअग्निर्व्वैश्वानरः
संव्वत्सरो वाऽएतदग्रे कर्माकरोत्तमेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ २० ॥

( ङ्क्तेथ ) अथ सावित्रीं जुहोति । सविता वाऽएतदग्रे कर्माकरोत्तमेवै-
तदेतस्मै कर्मणे प्रयुङ्क्ते व्विश्वो देवस्य नेतुर्मर्त्तो व्वुरीत सख्यम् । व्विश्वो
राय इषुध्यति द्युम्नं व्वृणीत पुष्यसे स्वाहेति यो देवस्य सवितुः सख्यं
व्वृणीते स द्युम्नं च पुष्टिं च व्वृणीतऽएष वाऽअस्य सख्यं व्वृणीते य
ऽएतत्कर्म करोति ॥ २१ ॥

---

"वाचो विधृतिमग्निं प्रयुजं स्वाहा"–इति । वाचो वाऽएतदग्रे कर्म समभवत् । तामेवैतदे-
तस्मै कर्मणे प्रयुङ्क्ते ॥ १८ ॥

" प्रजापतये मनवे स्वाहा "–इति । प्रजापतिर्वै मनुः । स हीदं सर्वममनुत । प्रजापतिर्वा-
ऽएतदग्रे कर्माकरोत् । तमेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १९ ॥

" अग्नये वैश्वानराय स्वाहा "–( वा. सं. ११ । ६६ ) इति । संवत्सरो वाऽअग्निर्वैश्वानरः ।
संवत्सरो वाऽएतदग्रे कर्माकरोत् । तमेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ २० ॥

अथ सावित्रीं जुहोति । सविता वाऽएतदग्रे कर्माकरोत् । तमेवैतदेतस्मै कर्मणे प्रयुङ्क्ते । " विश्वो
देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा"–

---

इत्थं मानसव्यापाररूपमापन्नस्य अग्नेः प्रतिपादकं होमसाधनं मन्त्रमभिधायाथ वागात्मतामापन्नस्य अग्ने-
र्वाचकं होमसाधनं मन्त्रत्रयमनूद्य व्याचष्टे–वाचो विधृतिमग्निमिति । 'वाचो विधृतिः' वचसो विधर्त्ता
वाचा नियम्यम्, वाग्रूपमापन्नमित्यर्थः । वाचो वा इत्यादि, गतम् ॥ १८ ॥

प्रजापतये मनवे स्वाहेति–पञ्चमो मन्त्रः । तत्र प्रजापतेर्मनोश्च वैयधिकरण्यशङ्कां व्युदस्यति–प्रजापतिर्वै
मनुरिति । कथं तस्य मनुत्वमिति तत्राह–स हीदं सर्वममनुतेति । 'इदं' 'सर्वं' जगत् 'अमनुत'
अहमित्यवागच्छत्; तस्य विराड्रूपत्वात् । " प्रजापतिर्वा एतदग्रे कर्माकरोत्, तमेवैतत् "–इत्यादि स्पष्टम् ।
'कर्म' चयनाख्यम् ॥ १९ ॥

अग्नये वैश्वानराय स्वाहेति–अस्मिन् षष्ठमन्त्रे वैश्वानरशब्दं संवत्सरपरतया व्याचष्टे–संवत्सरो वा अग्नि-
र्वैश्वानर इति । सवितृप्रदेशे स्थाप्यमानोऽग्निः वैश्वानरः, स च संवत्सरं कृत्वा संवत्सरः । गतमन्यत् ( श. प.
१ । ९ । १ । १६ ) ॥ २० ॥

अथ सप्तमं मन्त्रमनूद्य व्याचष्टे–अथ सावित्रीं जुहोति, सविता वा एतदित्यादिना । सविता देवता यस्या

तान्यु हैके । ( क॰ ) उखायामेवैतान्यौद्ग्रभणानि जुह्वति कामेभ्यो वा ऽएतानि हूयन्तऽआत्मोऽएष यजमानस्य यदुखाऽऽत्मन्युजमानस्य सर्वा-न्कामान्प्रतिष्ठापयाम इति न तथा कुर्यादेतस्य वै यज्ञस्य सꣳस्थितस्यै-तासामाहुतीनां यो रसस्तदेतदर्चिर्यद्दीप्यते तद्यत्सꣳस्थिते यज्ञे हुतेष्वौ-द्ग्रभणेषूखां प्रवृणक्ति तदेनामेष यज्ञऽआरोहति तं यज्ञं बिभर्त्ति तस्मा-त्सꣳस्थितऽएव यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृञ्ज्यात् ॥ २२ ॥

[ अर्धप्रपाठकः ॥ ]

---

( वा. सं. ११ । ६७ ) इति । यो देवस्य सवितुः सख्यं वृणीते, स द्युम्नं च पुष्टिं च वृणीते । एष वाऽअस्य सख्यं वृणीते—य एतत् कर्म करोति ॥ २१ ॥

तान्यु हैके उखायामेवैतान्यौद्ग्रभणानि जुह्वति । कामेभ्यो वाऽएतानि हूयन्ते । आत्मोऽएष यजमानस्य—यदुखा । आत्मन्यजमानस्य सर्वान् कामान् प्रतिष्ठापयाम इति । न तथा कुर्यात् । एतस्य वै यज्ञस्य संस्थितस्य, एतासामाहुतीनां यो रसः—तदेतदर्चिर्यद्दीप्यते । तद्यत् संस्थिते यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृणक्ति । तदेनामेष यज्ञ आरोहति । तं यज्ञं बिभर्त्ति । तस्मात्संस्थितऽएव यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृञ्ज्यात् ॥ २२ ॥

---

ऋचः सा ' सावित्री; ' " देवस्य नेतुः "—इति लिङ्गात् । तन्मन्त्रसाध्या आहुतिरपि सावित्री । सविता वा एतदित्यादि—व्याख्यातम् ॥

साकल्येन मन्त्रं पठति—विश्वो देवस्य नेतुरिति । व्याख्यातोऽयं तृतीयकाण्डे ( श. प. ३।१।४।१८ ) । सवितुः सख्यं लब्धवतो हिरण्यादिबहुधनं शरीरपुष्टिश्च सुलभेत्ययमर्थः उत्तरार्द्धस्य तात्पर्यमित्याह—यो देवस्य सवितुः सख्यं वृणीते, स द्युम्नं च पुष्टिं च वृणीते इति । यद्यपि तत्र द्युम्नवत् पुष्टिशब्दो द्वितीयान्ततया न निर्दिष्टः, तथापि ' पुष्यसे '—इत्यत्र पोषलक्षणं प्रकृत्यर्थं विवक्षित्वा एवं व्याख्यातमिति मन्तव्यम् । अस्तु सख्यं कृतवत एतत्फलद्वयं तुच्छस्यामर्त्तस्य भगवता सवित्रा सह सख्यं कथमुपपद्यत इत्यत आह—एष वा अस्य सख्यं वृणीते, य एतत् कर्म करोतीति । ' यः ' पुरुषः ' एतत् ' सवितृदेवताकं ' कर्म ' ' करोति, ' ' एष ' खलु ' सख्यं वृणीते ' तदीयकर्मसम्पादनमेतत्सख्यलाभहेतुरित्यर्थः । अत्र कात्यायनः— " प्राकृतान्यौद्ग्रभणानि हुत्वा सप्ताग्निकान्याकूतिमिति प्रतिमन्त्रम् "—( का. श्रौ. सू. १६।१३० ) इति ॥ २१ ॥

अथैतेषामौद्ग्रभणानां होमविषये केषाञ्चित्पक्षमनूद्य, तेषामुपपादनं निराचष्टे—तान्यु हैके उखाया-मेवेत्यादिना । ' तानि ' एतानि औद्ग्रभणानीति सम्बन्धः । ' एके ' महर्षयः ' उखायां ' तप्तायां ' जुह्वति, ' तेषामभिप्रायमाह—कामेभ्यो वा एतानीति । काम्यन्त इति कामाः स्वर्गादयः । स्वर्गं प्रत्युद्ग्रहणसाधनत्वात् स्वर्गाख्यः कामस्तावदुक्त एव, एवमन्येऽपि ततोऽर्वाचीनाः कामा एतेषां सिद्धाः । ' उखा '—इति ' यत् '

---

१—दंडोच्छ्रयणांतं कृत्वाऽध्वर्युयजमानयोरन्यतरऽउखामाहवनीयेऽधिश्रयति । मुञ्जकुलायावस्तीर्णामेतरेशणां मा सु भित्था इति तिष्ठन्नुदङ्माङ् ॥ का० श्रौ०सू० १६ । १३१ ।

( न्मु ) मुञ्जकुलायेनावस्तीर्णा भवति । ( त्या ) आदीप्यादिति न्वेव यद्वेव मुञ्जकुलायेन योनिरेषाऽग्नेर्यन्मुञ्जो न वै योनिर्गर्भꣳ हिनस्त्यहिꣳसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाताऽइति ॥ २३ ॥

शणकुलायमन्तरं भवति । (त्या) आदीप्यादिति न्वेव यद्वेव शणकुलायं प्रजापतिर्यस्यै योनेरसृज्यत तस्याऽउमाऽ उल्बमासञ्छणा जरायु तस्मात्ते पूतयो जरायु हि तेन वै जरायु गर्भꣳ हिनस्त्यहिꣳसायै जरायुणो वै जायमानो जायते जरायुणो जायमानो जायाताऽइति ॥ २४ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ६–४–३ ॥ ( ६. १. ) ॥

---

मुञ्जकुलायेनावस्तीर्णा भवति–आदीप्यादिति न्वेव । यद्वेव मुञ्जकुलायेन । योनिरेषाऽग्नेः–यन्मुञ्जः । न वै योनिर्गर्भं हिनस्ति–अहिंसायै । योनेर्वै जायमानो जायते । योनेर्जायमानो जायाताऽइति ॥ २३ ॥

शणकुलायमन्तरं भवति–आदीप्यादिति न्वेव । यद्वेव शणकुलायम् । प्रजापतिर्यस्यै योने-

---

अस्ति, ' एषः ' ' यजमानस्य ' ' आत्मा उ ' शरीरमेव; शरीरस्योखात्वेन तज्जन्यस्याग्नेर्यजमानभोक्त्रात्मत्वेन च संस्कारात् । यद्वा, यजमानशरीरं यथा यज्ञनिवर्त्तनसाधनम्, एवमुखाऽपीति, तद्धि न्यायेन यजमानशरीरत्वमुखायाः । ' आत्मन् ' आत्मनि ' यजमानस्य सर्वान् कामान् प्रतिष्ठापयामः '–इति स्पष्टम् ॥

अथ तं पक्षं निषिध्य स्वं पक्षं सोपपत्तिकमाह–न तथा कुर्यादेतस्य वै यज्ञस्येत्यादिना । 'एतस्य वै यज्ञस्य' प्रकृतस्य दीक्षणीयाख्यस्य ' संस्थितस्य ' सम्पूर्णस्य 'एतासां दीक्षाहुतीनां यो रसः,' 'तदेतत्' 'अर्चिः' ज्वालारूपः आहवनीयात्मना ' दीप्यते ' । तप्तायामुखायाम् औद्ग्रभणहोमपक्षं निराकृत्य हुतेष्वौद्ग्रभणेषु तेषां यो रसोऽस्ति, तेन प्रज्वलिताग्नौ उखाप्रवृञ्जनं कर्त्तव्यमिति सिद्धान्तयतोऽयमभिप्रायः । सर्वकामावाप्तिस्तु दीक्षणीयाख्ये यज्ञे सम्पूर्णे, हुतेषु औद्ग्रभणेषु तेषां यो रसः स्थितः, तेन प्रज्वलिताग्नौ उखासन्तपनेनापि सम्भविष्यति । तस्माद्दीक्षणीयाख्ये संस्थिते यज्ञे औद्ग्रभणेषु दीक्षासम्बन्धिषु हुतेष्वेव उखाप्रवृञ्जनं कर्त्तव्यमिति ॥ २२ ॥

उखायामस्यां मुञ्जतृणावस्तरणं विधाय प्रशंसति–मुञ्जकुलायेनावस्तीर्णा भवतीति । अनेन मुञ्जकुलायावस्तरणस्य दृष्टार्थत्वमेव,न त्वशब्दार्थत्वमित्युक्तं भवति । आदीप्तिस्तु तृणान्तरेणापि भवति, किं मुञ्जनियमेनेति तत्राह–यद्वेव मुञ्जकुलायेन योनिरेषाऽग्नेर्यन्मुञ्ज इत्यादिना । एवकारो भिन्नक्रमः; मुञ्जकुलायेनेति यदस्ति, अत्रोपपत्तिरभिधीयत इति शेषः । मुञ्जस्य क्षुद्रतृणत्वेन शीघ्रमग्निजननसाधनत्वादग्नियोनित्वम् । योनेर्गर्भहिंसकत्वाभावप्रसिद्धिर्वैशब्देनोच्यते । जायमानोऽग्निः स्वयोनेरेव सकाशाज्जायत इत्यभिप्रायेण मुञ्जकुलायेनैव भवितव्यमित्यर्थः ॥ २३ ॥

अथ मुञ्जकुलायादप्यन्तरं शणकुलायावस्तरणं कर्त्तव्यमित्याह–शणकुलायमन्तरं भवतीति । आदी-

तां तिष्ठ॑न्प्रवृ॑णक्ति । ( क्ती ) इमे वै लो॒का ऽउ॒खा तिष्ठ॑न्तीव वा॒ऽइ॒मे लो॒काऽ॒अथो॒ तिष्ठ॑न्वै व्वी॒र्य॑वत्तरः ॥ १ ॥

( ऽ ) उ॒दङ्प्राङ्ति॒ष्ठन् । ( न्नु ) उ॒दङ्वै प्राङ्ति॒ष्ठन्प्र॒जाप॑तिः प्र॒जाऽ-असृजत ॥ २ ॥

य॒द्वे॒वो॒दङ्प्राङ्ति॒ष्ठन् । ( न्ने ) एषा॒ ह्यो॒भये॑षां देवमनु॒ष्या॒णां दि॒ग्य-दु॒दीची॒ प्राची ॥ ३ ॥

---

रसृज्यत–तस्याऽउमा उल्बमासन् । शणा जरायु । तस्मात्ते पूतयः । जरायु हि । तेन वै जरायु गर्भं हिनस्ति–अहिंसायै । जरायुणो वै जायमानो जायते । जरायुणो जायमानो जायाता इति ॥ २४ ॥

तां तिष्ठन् प्रवृणक्ति । इमे वै लोका उखा । तिष्ठन्तीव वाऽइमे लोकाः । अथो तिष्ठन्वै वीर्यवत्तरः ॥ १ ॥

उदङ् प्राङ् तिष्ठन् । उदङ् वै प्राङ्तिष्ठन्–प्रजापतिः प्रजा असृजत ॥ २ ॥

यद्वेवोदङ् प्राङ् तिष्ठन् । एषा ह्युभयेषां देवमनुष्याणां दिग्, यदुदीची, प्राची ॥ ३ ॥

---

प्यादिति न्वेवेत्यर्थवादः, पूर्ववत् । यद्वेव शणकुलायमित्यादि । अन्तः अवस्तीर्यमाणं वस्तु शणकुलायमेव भवेदिति यदस्ति तत्र कारणमभिधीयत इति शेषः । पूर्वं 'प्रजापतिः' चित्याग्निरूपः 'यस्यै योनेः' यस्याः योनेः सकाशात् उत्पन्नस्तस्या योनेः ' उमाः ' ( अ. का. २ । ९ । ३० पा. सू. ९।२।४ ) क्षौमवस्त्रोपादानभूता-स्तृणविशेषा उमाः । ताः उल्बस्थानीया अभवन्, शणाख्यतृणविशेषा जरायुस्थानीयाः । शिष्टं सुगमम् । ' पूतयः ' दुर्गन्धाः ॥ २४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ६–६–१ ) ॥

यदुक्तं सूत्रकृता–" दण्डोच्छ्रयणान्तं कृत्वाऽध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मुञ्ज-कुलायावस्तीर्णामन्तरेशणां मा सु भित्था इति तिष्ठन्नुदङ्प्राङ् " ( का. श्रौ. सू. १६ । १३१ ) इति । तद्विधत्ते–तां तिष्ठन् प्रवृणक्तीमे वै लोका उखेति । अध्वर्युर्यजमानो वा ' तिष्ठन् ' ' प्रवृणक्ति ' आहवनीये प्रतितपेत् । इमे वै लोका उखेति । उखाया लोकत्रयात्मकत्वमुक्तं प्राक् तृतीयप्रपाठकान्ते ( श. प. ६ । ३ । ७ । १७ ) । लोकस्थानां प्राणिनामूर्ध्वमवस्थानादुत्तरभावाद्वा–तिष्ठन्तीव वा इत्युक्तम् । शयानात् आसीनाच्च तिष्ठत्सु पुरुषेषु युद्धादिव्यापारे वीर्यदर्शनात्–तिष्ठन् वै वीर्यवत्तर इत्युक्तम् ॥ १ ॥

उदङ्प्राङ् तिष्ठन्निति । ईशानाभिमुखस्तिष्ठन्नित्यर्थः । पूर्वं प्रजापतिना प्रजासृष्टिकाले प्रागुदङ्मुखेन सृष्टत्वादिदानीमपि तन्मुखेनैव कर्त्तव्यमिति । प्रकारान्तरेण तन्मुखत्वं प्रशंसति–यद्वेवोदङ्ङिति । उत्तरस्यां दिशि प्रायेण मनुष्याणां प्राचुर्यात् सा मनुष्यसम्बन्धिनी, दैविकानां कर्मणां प्राङ्मुखानुष्ठानात्, देवान् प्रति नियतमागत्वाच्च प्राची दिग्देवानामिति व्यवस्था । अत उभयसम्बन्धात् ' प्रागुदीची ' ईशानाशा ॥ २ ॥

प्रकारान्तरेण तां दिशं प्रशंसति–यद्वेवोदङ्प्राङ्तिष्ठन्निति । यस्मात् स्वर्गद्वारम्, तस्मात् ' उदङ्प्राङ्

युद्देवोदङ्प्राङ्तिष्ठन् । ( न्ने ) एतस्याᳪं ह दिशि स्वर्गस्य लोकस्य द्वारं तस्मादुदङ्प्राङ्तिष्ठन्नाहुतीर्जुहोत्युदङ्प्राङ्तिष्ठन्दक्षिणा नयति द्वारैव तत्स्वर्गस्य लोकस्य वित्तं प्रपादयति ॥ ४ ॥

मा सु भित्था मा सु रिष ऽइति । यथैव यजुस्तथा बन्धुरम्ब धृष्णु व्वीरयस्व स्वेति योषा वाऽउखाऽम्बेति वै योषायाऽआमन्त्रणᳪं स्विव व्वीरयस्वाग्निश्चेदं करिष्यथऽ इत्याग्निश्च ह्येतत्करिष्यन्तौ भवतः ॥ ५ ॥

(तो) दृᳪंहस्व देवि पृथिवि स्वस्तयऽइति । यथैव यजुस्तथा बन्धुरासुरी माया स्वधया कृताऽसीति प्राणो वाऽअसुस्तस्यैषा माया स्वधया कृता जुष्टं देवेभ्य ऽइदमस्तु हव्यमिति याऽ एवैतस्मिन्नग्नावाहुतीर्होष्यन्भवति ता

---

यद्देवोदङ्प्राङ्तिष्ठन् । एतस्यां ह दिशि स्वर्गस्य लोकस्य द्वारम् । तस्मादुदङ्प्राङ् तिष्ठन्नाहुतीर्जुहोति । उदङ्-प्राङ्-तिष्ठन् दक्षिणा नयति । द्वारैव तत् स्वर्गस्य लोकस्य वित्तं प्रपादयति ॥ ४ ॥

"मा सु भित्था मा सु रिषः"–इति । यथैव यजुस्तथा बन्धुः । "अम्ब धृष्णु वीरयस्व सु "–इति । योषा वाऽउखा । अम्बेति वै योषायाऽआमन्त्रणम् । स्विव वीरयस्व । " अग्निश्चेदं करिष्यथः "–( वा० सं० ११।६८ ) इति । अग्निश्च ह्येतत् करिष्यन्तौ भवतः ॥ ५ ॥

" दृंहस्व देवि पृथिवि स्वस्तये "–इति । यथैव यजुस्तथा बन्धुः । " आसुरी माया स्वधया कृताऽसि "–इति । प्राणो वाऽअसुः । तस्यैषा माया स्वधया कृता । " जुष्टं देवेभ्य

---

तिष्ठन् ' सर्वाः ' आहुतीर्जुहोति ', तस्मादेव कारणात् तादृङ्मुख एव सन् ' दक्षिणाः ' ' नयति ' प्रयच्छति । ' तत् ' तेन तादृङ्मुखः सन् आहुतिप्रदानेन दक्षिणानयनेन च स्वर्गद्वारेणैव ' वित्तम् ' आहुतिरूपम्, दक्षिणारूपं धनञ्च ' प्रपादयति ' दत्तवान् भवति । अनेनेशानाभिमुखमाहुतयो होतव्याः, दक्षिणा च दातव्येति विधिरुन्नीयते, अपूर्वार्थत्वात् ॥ ३ ॥ ४ ॥

उखाप्रवृञ्जनस्य द्वौ मन्त्रौ, तत्र प्रथमं मन्त्रं विभज्य व्याचष्टे–मा सु भित्था मा सु रिष इतीति । यथैव यजुस्तथा बन्धुरिति । ' यजुः यथा ' ' बन्धुः ' अर्थवादोऽपि ' तथा '; पाठ एव व्याख्यानमित्यर्थः । अर्थस्तु–हे उखे ! त्वम् ' मा सु भित्थाः ' सुष्ठु भिन्ना मा भूः दृढा भवेत्यर्थः । तथा सुष्ठु ' मा रिषः ' हिंसिता मा भूः । द्वितीयभागं व्याचष्टे–अम्ब धृष्णु वीरयस्व स्वितीति । हे ' अम्ब ' मातः उखे ! त्वं ' धृष्णु ' प्रगल्भं यथा भवति तथा सुष्ठु एव 'वीरयस्व' अग्निधारणलक्षणाम्बाकर्म कुरुष्व । योषा वा इत्यादि स्पष्टम् । तृतीयभागं व्याचष्टे–अग्निश्चेदं करिष्यथ इतीति । अग्निश्च ह्येतत् करिष्यन्तौ भवत इति । अग्निश्चेति चशब्दाद् हे उखे ! त्वञ्च इदं कर्म करिष्यथः समाप्तिं प्रापयिष्यन्तौ भवथः ॥ ५ ॥

द्वितीयमन्त्रस्य प्रथमभागं निगदव्याख्यातमिति व्याचष्टे–दृंहस्व देवि पृथिवि स्वस्तय इतीति । यथैव

ऽएतुदाहाथोऽएषैव हृव्यमुरिष्टा त्वमुदिहि यज्ञेऽअस्मिन्निति यथैवारिष्टा-ऽनार्तैतुस्मिन्यज्ञऽउदियादेवुमेतुदाह ॥ ६ ॥

द्वाभ्यां प्रवृणक्ति । द्विपाद्युजमानो युजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्ति गायत्र्या च त्रिष्टुभा च प्राणो गायत्र्यात्मा त्रिष्टुबेतावान्वै पशुर्यावान्प्राणश्चात्मा च तद्यावान्पशुस्तावतैवैनामेतत्प्र-वृणक्त्युथोऽअग्निर्वै गायत्रीन्द्रस्त्रिष्टुबैन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्तीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्निर्यावानग्निर्या-वत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्ति तयोः सप्त पदानि सप्तचितिकोऽग्निः सप्तऽर्त्तवः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा ताव-तद्भवति ॥ ७ ॥

---

इदमस्तु हव्यम् "-इति । या एवैतस्मिन्नग्नावाहुतीर्होष्यन् भवति । ता एतदाह । अथोऽएषैव हव्यम् । " अरिष्टा त्वमुदिहि यज्ञेऽअस्मिन् "-( वा. सं. ११।६९) इति । यथैवारिष्टाऽनार्तै-तस्मिन्यज्ञऽउदियादेवमेतदाह ॥ ६ ॥

द्वाभ्यां प्रवृणक्ति । द्विपाद्यजमानः । यजमानोऽग्निः, यावानग्निर्यावत्यस्य मात्रा—तावतैवैना-मेतत् प्रवृणक्ति । गायत्र्या च, त्रिष्टुभा च । प्राणो गायत्री, आत्मा त्रिष्टुप् । एतावान्वै पशुः—यावान्प्राणश्चात्मा च । तद् यावान्पशुः—तावतैवैनामेतत् प्रवृणक्ति । अथोऽअग्निर्वै गायत्री, इन्द्रस्त्रि-

---

यजुस्तथैव बन्धुरिति । अक्षरार्थस्त्वयम्—हे ' पृथिवि देवि ! ' विकारे प्रकृतिशब्दः, हे—उखे ! इत्यर्थः । सा त्वं ' स्वस्तये ' अविनाशनामैतत्, क्षेमाय ' दृंहस्व ' दृढा भव । द्वितीयभागं व्याचष्टे—आसुरी माया स्वधया कृताऽसीतीति । प्राणो वा असुस्तस्यैषा माया स्वधया कृतेति । असोः प्राणस्य सम्बन्धिनी माया प्रज्ञा, तया निर्मितत्वात् उखाऽपि मायेत्युच्यते; सा च स्वधया कृता । " स्वधा "—( निघं. २।७।१७ ) इत्यन्ननाम, तद्धेतुत्वात् पृथिव्यपि स्वधा । " ता अग्निमसृजन्त "—इत्यत्र यथाऽग्निशब्देन पृथिवी विवक्षिता, तद्वत्; तादृशी—'असि ' भवसि । तृतीयभागे ' हव्य '—शब्देन किमभिप्रेतमिति तद् दर्शयति—जुष्टं देवेभ्य इदमस्तु हव्यमितीति । या एवैतस्मिन् अग्नौ आहुतीः होष्यन् भवति, ता एतदाहेति । ' एतस्मिन् ' उखया निष्पाद्ये ' अग्नौ ' अन्नाहुतीः सोमपश्वाज्यादिरूपाः, ' एतत् ' एतेन हव्यशब्देन ' आह ' ' इति ' । नन्विदं व्यवहितं कथमिदमस्तु हव्यमितीदन्तया व्यपदिश्यत इत्यत्र ब्रूमः—प्रकृतत्वेन बुद्धौ सन्निधानादुपपद्यत इति । चतुर्थभाग आशासनरूप इति व्याचष्टे—अरिष्टा त्वमुदिहि यज्ञेऽअस्मिन्निति । यथैवारिष्टाऽनार्तै-तस्मिन् यज्ञ उदियादेवमेतदाहेति । उखे ! त्वम् 'अरिष्टा' अहिंसिता सती, 'अस्मिन् यज्ञे' 'उदिहि' उद्गता भव । अरिष्टेत्यस्य व्याख्यानमनार्त्तेति ॥ ६ ॥

मन्त्रगतं द्वित्वं प्रशंसति—द्वाभ्यां प्रवृणक्ति, द्विपाद्यजमानो यजमानोऽग्निरित्यादिना । यजमानस्य चीयमानवैश्वानरात्मना संस्काराद् 'यजमानोऽग्निः' । अथवा " यजमानः प्रस्तरः "—( तै. सं. १ । ७ । ४ । ४ )

तां य॒दाऽग्निः सन्तुपति । ( त्यु ) अ॒थैनामर्चिरारोहति यो॒षा वाऽउखा व्वृ॒षाऽग्नि॒स्तस्माद्य॒दा व्वृ॒षा यो॒षाᳪ सन्तुपत्य॒थास्याᳪ रेतो दधाति ॥८॥

---

ष्टुप् । ऐन्द्राग्नोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतत् प्रवृणक्ति । इन्द्राग्नी वै सर्वे देवाः । सर्वदेवत्योऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनामेतत् प्रवृणक्ति । तयोः सप्त पदानि । सप्तचितिकोऽग्निः । सप्तऽर्त्तवः संवत्सरः । सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत् तद्भवति ॥ ७ ॥

तां यदाऽग्निः सन्तपति—अथैनामर्चिरारोहति । योषा वाऽउखा, वृषाऽग्निः । तस्माद्यदा वृषा योषां सन्तपति—अथास्यां रेतो दधाति ॥ ८ ॥

---

इतिवत् अग्नेरपि यागनिर्वर्त्तकत्वात् यजमानत्वम्; अतो यजमाननिष्ठपादद्वित्वसङ्ख्या तदुल्याग्नौ युक्ता । यावानग्निरिति । यावत्यस्याग्नेर्मात्रा यजमानद्वारकद्वित्वसङ्ख्यारूपा, तावता सर्वेणापि 'एनाम्' उखाम् । 'एतत्' एतेन प्रकारेण 'प्रवृणक्ति' ॥

मन्त्रगतं छन्दोविशेषं प्रशंसति—गायत्र्या च त्रिष्टुभा च प्राणो गायत्र्यात्मा त्रिष्टुबित्यादिना । "प्राण उदानो व्यानः" इति प्राणस्य वृत्तिभेदेन त्रित्वात्, गायत्र्याश्च पादत्रयात्मकत्वात् प्राण एव गायत्री; आत्मा तु शरीरम्, प्राणस्य आयतनं हि शरीरम्; अतः पादत्रयात्मिकाया गायत्र्याः पादचतुष्टयात्मिकायां त्रिष्टुभि अन्तर्भावेन त्रिष्टुभः प्राणरूपगायत्रीशरीरत्वात् आत्मा त्रिष्टुबित्युक्तम् । लोके द्विपाद्रूपश्चतुष्पाद्रूपश्च यः 'पशुः' अस्ति, 'सः' 'एतावान् वै,' 'यावान्' 'प्राणः' प्राणशरीरसङ्घातात्मकः खलु; तयोरेव प्रत्यक्षतः प्रतीतेः । स्पष्टमन्यत् ॥

इत्थं मन्त्रगतं छन्दः प्राणात्मरूपत्वेन प्रशस्य तदभिमानिदेवताद्वारेणापि प्रशंसति—अथो अग्निर्वै गायत्रीन्द्रस्त्रिष्टुबिति । "तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दः ०—० तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप् छन्दः"—( तै. सं. ७।१।१।४ ) इति श्रुतत्वात् प्रजापतिसहोत्पन्नत्वेनाग्नेर्गायत्रीत्वम्, इन्द्रस्य च त्रिष्टुप्त्वम् । अत एव अग्निनेन्द्रेण च सम्बद्धेन मन्त्रेणोखाप्रवृञ्जनात् 'ऐन्द्राग्नोऽग्निः' । यावानग्निरित्यादि पूर्ववत् ॥

तद्गतसर्वदेवतात्मकत्वद्वारेणाभ्यां प्रवृञ्जनं प्रशंसति—इन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निरित्यादिना । "ते देवा बिभ्यतोऽग्निं प्राविशन्"—( तै. सं ६ । २ । २ । ६ ) इति श्रुतेः अग्नेः सर्वदेवत्यत्वम्, इन्द्रस्य च सर्वदेवाधिपतित्वम्; अतस्तद्द्वारा अग्निरुख्योऽपि सर्वदेवतात्मकः । गतमन्यत् ॥

मन्त्रद्वयगतपादसङ्ख्याद्वारेणापि मन्त्रद्वयेन प्रवृञ्जनं प्रशंसति—सप्त पदानि, सप्तचितिकोऽग्निरित्यादिना । अग्नेः सप्त चितयः; षट् चितय इष्टकामय्यः, अथ सप्तमी तु "विकर्णीञ्च स्वयमातृण्णाञ्चोपदधाति, हिरण्यशकलैः प्रोक्षति, अग्निमभ्यादधाति, सा सप्तमी चितिः"—इति सप्त चितयः । गतमन्यत् । तावत्तद्भवतीति । तदुखाप्रवृञ्जनरूपं कर्म 'तावत्' अग्निमात्रया समं 'भवति' ॥ ७ ॥

सन्तपने सति उखाया या दीप्तिः, तां रेतआत्मना, सन्तापकमग्निं पुरुषात्मना, उखां च योषिदात्मना, सन्तापञ्च सम्भोगात्मना प्रशंसति—तां यदाऽग्निः सन्तपत्यथैनामिति ॥ ८ ॥

तद्धैके । यदि चिरमर्चिरारोहत्यङ्गारानेवावपन्त्युभयेनैषोऽग्निरिति न तथा कुर्यादस्थन्वान्वाव पशुर्जायतेऽथ तं नाग्र ऽएवास्थन्वन्तमिव न्यूषन्ति रेतऽइवैव दधति रेत उऽएतदनस्थिकं यदर्चिस्तस्मादेनामर्चिरेवारोहेत् ॥ ९ ॥

( त्वां ) तां यदाऽर्चिरारोहति । ( त्यु ) अथास्मिन्त्समिधमादधाति रेतो वाऽएनामेतदापद्यतऽएषोऽग्निस्तस्मिन्नेताᳩं रेतसि सम्भूतिं दधाति ॥ १० ॥

सा कार्मुकी स्यात् । ( द्वे ) देवाश्चासुराश्चोभये प्राजापत्या ऽअस्पर्द्धन्त

---

तद्धैके—यदि चिरमर्चिरारोहति—अङ्गारानेवावपन्ति । उभयेनैषोऽग्निरिति । न तथा कुर्यात् । अस्थन्वान्वाव पशुर्जायते । अथ तं नाग्रऽएवास्थन्वन्तमिव न्यूषन्ति । रेत इवैव दधति । रेत उऽएतदनस्थिकम्—यदर्चिः । तस्मादेनामर्चिरेवारोहेत् ॥ ९ ॥

तां यदाऽर्चिरारोहति—अथास्मिन्त्समिधमादधाति । रेतो वाऽएनामेतदापद्यते, एषोऽग्निः । तस्मिन्नेतां रेतसि सम्भूतिं दधाति ॥ १० ॥

सा कार्मुकी स्यात् । देवाश्चासुराश्चोभये प्राजापत्या अस्पर्द्धन्त । ते देवा अग्निमनीकं कृत्वा-

---

उखायां चिरारोहणविषये केषाञ्चित् पक्षमुपन्यस्य निराचष्टे—तद्धैके यदि चिरमर्चिरारोहतीत्यादिना । 'अर्चिः' सामग्रीप्रौज्ज्वल्याभावेन 'चिरं' कालविलम्बेनारोहेत्, ततः प्रागेव 'अङ्गारानावपन्ति' उखायां प्रक्षिपेयुः । तेषामाशयः,—'उभयेन' अङ्गारेण अर्चिषा च 'एषः अग्निः' जायत इति । तत्पक्षं निराकरोति—न तथा कुर्यादिति । तत्पक्षानाश्रयणे कारणमाह—अस्थन्वान्वाव पशुर्जायत इति । 'पशुः' जननकाले 'अस्थन्वान् वाव' अस्थन्वानेव सास्थिक एव 'जायते,' 'अथ' तस्मात् कारणात् 'अग्रे एव' जननात् प्राक्काल एव 'अस्थन्वन्तम् इव' 'न न्यूषन्ति' न स्थापयन्ति लोके । तर्हि किं कुर्वन्तीत्यत आह—रेत इवैव दधतीति । रेत एव दधति गर्भे । इत्थं लोकवृत्तान्तं प्रदर्श्य प्रकृते योजयति—रेत उ एतदिति । 'अर्चिः' इति यत् अस्ति, तत् 'एतत्' 'रेतः' 'उ' खलु । अतो गर्भाधानकाले एव रेतसा सहास्थ्नोऽयोगात् 'एनं' केवलम् 'अर्चिरेवारोहेत्' । अत्र सूत्रम्—"अनारोहत्यङ्गारानोप्यैके"—( का. श्रौ. सू. १६ । १३४ ) इति ॥ ९ ॥

यदुक्तं सूत्रकृता—"अग्नावारूढे त्रयोदशास्यां प्रादेशमात्रीः समिध आदधाति, अनारोहत्यङ्गारानोप्यैके, घृतोन्नां कार्मुकीं द्रूवन्न इति, वैकङ्कतीं परस्या इति, औदुम्बरीं परमस्या इति, अपरशुवृक्णां यदग्न इति, अधःशयां यदत्तीति, पालाशीः प्रत्यृचमहरहरिति"—( का. श्रौ. सू. १६ । १३३–१४० ) इति । तदिदं क्रमेण विवक्षुः आदौ कार्मुक्याः समिध आधानं विधाय प्रशंसति—तां यदाऽर्चिरित्यादिना । अर्चीरूपस्य केवलरेतस आधाने सति अग्नेः सम्भूत्या आकारविशेषरूपाया अभावात् तथाभावाय समिदाधानं कर्त्तव्यमित्यर्थः ॥ १० ॥

आधातव्यायाः समिधो वृक्षविशेषसम्बन्धमाह—सा कार्मुकी स्यादिति । धनुरुपादानभूतो वृक्षविशेषः क्रमुकः ।

ते देवाऽअग्निमनीकं कृत्वाऽसुरानभ्यायंस्तस्यार्चिषः प्रगृहीतस्यासुराऽग्रं प्रावृश्चंस्तदस्यां प्रत्यतिष्ठत्स क्रमुकोऽभवत्तस्मात्स स्वादू रसो हि तस्माद्‌ लोहितोऽर्चिर्हि स एषोऽग्निरेव यत्क्रमुकोऽग्निमेवास्मिन्नेतत्सम्भूतिं दधाति ॥ ११ ॥

प्रादेशमात्री भवति। प्रादेशमात्रो वै गर्भो विष्णुरात्मसम्मितामेवास्मिन्नेतत्सम्भूतिं दधाति ॥ १२ ॥

घृते न्युत्ता भवति। (त्य) अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्बमासीत्तस्मात्तत्प्रत्युद्दीप्यत ऽआत्मा ह्यस्यैष तस्मात्तस्य न भस्म भवत्यात्मैव तदात्मानमप्येति न वाऽउल्बं गर्भꣳ हिनस्त्यहिꣳसायाऽउल्बाद्वै जायमानो जायतऽउल्बाज्जायमानो जायाताऽइति ॥ १३ ॥

---

ऽसुरानभ्यायन्। तस्यार्चिषः प्रगृहीतस्यासुरा अग्रं प्रावृश्चन्। तदस्यां प्रत्यतिष्ठत्। स क्रमुकोऽभवत्। तस्मात्स स्वादुः। रसो हि। तस्माद्‌ लोहितः। अर्चिर्हि। स एषोऽग्निरेव—यत् क्रमुकः। अग्निमेवास्मिन्नेतत् संभूतिं दधाति ॥ ११ ॥

प्रादेशमात्री भवति। प्रादेशमात्रो वै गर्भो विष्णुः। आत्मसम्मितामेवास्मिन्नेतत् सम्भूतिं दधाति ॥ १२ ॥

घृते न्युत्ता भवति। अग्निर्यस्यै योनेरसृज्यत—तस्यै घृतमुल्बमासीत्। तस्मात्तत् प्रत्युद्दीप्यते। आत्मा ह्यस्यैषः। तस्मात्तस्य न भस्म भवति। आत्मैव तदात्मानमप्येति। न वाऽउल्बं गर्भं हिनस्ति—अहिंसायै। उल्बाद्वै जायमानो जायते। उल्बाज्जायमानो जायाताऽइति ॥ १३ ॥

---

तद्विकारत्वं समर्थयितुमाख्यायिकामाह—देवाश्चासुराश्चेत्यादिना। स्पर्द्धमानानां मध्ये ते देवाः 'अग्निम्' 'अनीकं' मुखं कृत्वा असुरानभिगताः, तस्मिन् समये असुराः प्रत्यावृत्य अग्नेरर्चिः प्रगृह्य, यावन्मात्रं गृहीतमासीत्, तावन्मात्रमर्चिषोऽग्रं 'प्रावृश्चन्' छिन्नवन्तः। छिन्नं तदग्रम् अस्यां पृथिव्यां प्रतिष्ठितमभूत्। स च तत्र क्रमुकाख्यो वृक्षः सम्पन्नः। 'क्रमुकः' नाम धनुष उपादानभूतः सारवान् वृक्षविशेषः। उक्तमर्थं प्रत्यक्षबलेन द्रढयति—तस्मात् स स्वादुरिति। तस्मादित्युक्तम् कस्मादित्याह—रसो हीति। यस्मादग्नेः सारांशः, तस्मादित्यर्थः। तस्मिन्नेवार्थे प्रत्यक्षान्तरं दर्शयति—तस्माद्‌ लोहितोऽर्चिर्हीति। आर्चिषो लोहितवर्णत्वात् तदात्मको वृक्षोऽपि लोहितः। यत एवं 'क्रमुकः' यः अस्ति, 'स एषः अग्निरेव' वृक्षरूपेण परिणामात्। 'एतत्' एतेन क्रमुकसमिदाधानेन 'अग्निमेव' 'सम्भूतिं दधाति' स्थापितवान् भवति॥ ११॥

समिध इयत्तां विधाय प्रशंसति—प्रादेशमात्री भवतीति। प्रादेशमात्रो वै गर्भ इति। 'गर्भः विष्णुः,' यज्ञरूपः प्रादेशमात्रः। गर्भस्य प्रादेशपरिमाणत्वं लोकसिद्धम्। विष्णुरेव वामनावतारः गर्भरूपः प्रादेशमात्रः॥ १२॥

आधेयायाः समिधः प्रव्रजनं विधाय प्रशंसति—घृते न्युत्ता भवत्यग्निर्यस्यै योनेरसृज्यतेति। 'अग्निः'

तामादधाति । द्रवन्नः सर्पिरासुतिरिति दार्वन्नः सर्पिरशनऽ इत्येतत्प्रत्नो होता वरेण्यऽइति सनातनो होता वरेण्यऽइत्येतत्सहसस्पुत्रोऽअद्भुतऽइति बलं वै सहो बलस्य पुत्रोऽद्भुतऽइत्येतत्तिष्ठन्नादधाति स्वाहाकारेण तस्यो-परि बन्धुः ॥ १४ ॥

( स्त ) तद्वाऽआत्मैवोखा । योनिर्मुञ्जाः शणा जरायूल्वं घृतं गर्भः समित् ॥ १५ ॥

( द्वा ) बाह्योखा भवति । (त्यु) अन्तरे मुञ्जा बाह्यो ह्यात्माऽन्तरा योनि-र्बाह्ये मुञ्जा भवन्त्यन्तरे शणा बाह्या हि योनिरन्तरं जरायु बाह्ये शणा

---

तामादधाति । " द्रवन्नः सर्पिरासुतिः "–इति । दार्वन्नः सर्पिरशन इत्येतत् । " प्रत्नो होता वरेण्यः "–इति । सनातनो होता वरेण्य इत्येतत् । "सहसस्पुत्रोऽअद्भुतः"–(वा.सं. ११।७०) इति । बलं वै सहः । बलस्य पुत्रोऽद्भुत इत्येतत् । तिष्ठन्नादधाति स्वाहाकारेण । तस्योपरि बन्धुः ॥ १४ ॥

तद्वाऽआत्मैवोखा, योनिर्मुञ्जाः, शणा जरायु, उल्बं घृतम्, गर्भः समित् ॥ १५ ॥

बाह्योखा भवति–अन्तरे मुञ्जाः । बाह्यो ह्यात्मा । अन्तरा योनिः । बाह्ये मुञ्जा भवन्ति–अन्तरे

---

उल्बलक्षणः पूर्वं 'यस्यै' यस्याः 'योनेः' 'असृज्यत,' 'तस्यै' तस्याः 'घृतम्' एव 'उल्बमासीत्,' 'तस्मात्' 'तत्प्रति' घृतं प्रति 'उद्दीप्यते' । 'तस्मात्' अग्न्यवयवत्वादेव 'तस्य' घृतस्य हुतस्य 'न भस्म भवति' इतरकाष्ठादिवत् । भस्माभावे कारणमाह–आत्मैव तदात्मानमप्येतीति । गतमन्यत् ॥ १३ ॥

समिदाधाने मन्त्रं विधाय विभज्य व्याचष्टे–तामादधाति द्रवन्नः सर्पिरासुतिरित्यादिना । द्रवणात् ऊर्द्ध्वगमनात् 'द्रुः' वनस्पतिः, स एव अन्नं यस्य सः, सरणात् 'सर्पिः' घृतम्, तदेव 'आसुतिः' आसवस्थानीयं यस्य स तथोक्तः ॥

प्रथमपादं व्याचष्टे–दार्वन्नः सर्पिरशन इत्येतादिति । द्रवन्न इति पादेन यदुक्तम् 'तदेतत्' एतदेव 'दार्वन्नः' इत्याद्युक्तमेवेत्यर्थः । अशनशब्देनान्नसामान्यवाचिना पानलक्षणान्नविशेष उपलक्ष्यते । द्वितीयपादे प्रत्नशब्दं व्याचष्टे–प्रत्नो होता वरेण्य इति । सनातनो होता वरेण्य इत्येतदिति । स्पष्टम् । तृतीयं पादं व्याचष्टे–सहसस्पुत्रो अद्भुत इतीति । बलं वै सह इति । सहते अभिभवति शत्रुमिति सहो बलम्, मथनकाले बलेनोत्पाद्यमानत्वाद् 'बलस्य पुत्रः' इत्युक्तम् । 'अद्भुतः' पूर्वमभूत इव, सर्वदा नूतन इत्यर्थः । मन्त्रान्ते स्वाहाकारेण समिदाधानं कर्त्तव्यम्, तच्च तिष्ठतैवेति विधत्ते–तिष्ठन्नादधाति स्वाहाकारेणेति । तस्योपरि बन्धुरिति । 'तस्य' स्वाहाकारेणाधानस्य 'बन्धुः' अर्थवादरूपो वाक्यशेषः 'उपरि' "स्वाहाकारेण रेतो वा इदं सिक्तमयमग्निः"–( श. प. ६।६।३।१७ कं. ) इत्यादिना प्रदर्श्यत इत्यर्थः ॥ १४ ॥

गर्भरूपायाः समिधः सर्वान्तरत्वं प्रशंसति–तद्वा आत्मैवोखेत्यादिना । 'उखा' 'आत्मैव' स्त्रीशरीरमेव; इतरस्यामवस्तीर्णानि मुञ्जतृणान्येव योनिः, ततोऽप्यन्तरत्वात् । एवं शणादयोऽप्युन्नेयाः ॥ १५ ॥

उखादीनामात्मत्वादिकल्पनायामुपपत्तिं स्वयमेव दर्शयति–बाह्योखा भवत्यन्तरे मुञ्जा इत्यादिना ।

भुवन्त्युन्तरं घृतं बाह्यथ्ँ हि जरायुन्तरमुल्बं बाह्यं घृतं भवत्युन्तरा समिद्बाह्यथ्ँ ह्युल्बमुन्तरो गर्भऽ एतेभ्यो वै जायमानो जायते तेभ्य ऽएवैनमेतज्जनयति ॥ १६ ॥

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ ६-४-४ ॥ ( ६. २. )

अथ [1]वैकङ्कतीमादधाति । प्रजापतिर्यां प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्यमृष्ट ततो विकङ्कतः समभवत्सैषा प्रथमाऽऽहुतिर्यद्विकङ्कतस्तामस्मिन्नेतज्जुहोति तयैनमेतत्प्रीणाति परस्याऽ अधि संवतोऽवराँ२॥ऽअभ्यातर ॥ यत्राहमस्मि ता २ँ॥ऽअवेति यथैव यजुस्तथा बन्धुः ॥ १ ॥

---

शणाः । बाह्या हि योनिः । अन्तरं जरायु । बाह्ये शणा भवन्ति—अन्तरं घृतम् । बाह्यं हि जरायु । अन्तरमुल्बम् । बाह्यं घृतं भवति—अन्तरा समित् । बाह्यं ह्युल्बम्—अन्तरो गर्भः । एतेभ्यो वै जायमानो जायते । तेभ्य एवैनमेतज्जनयति ॥ १६ ॥

अथ वैकङ्कतीमादधाति । प्रजापतिर्यां प्रथमामाहुतिमजुहोत्—स हुत्वा यत्र न्यमृष्ट । ततो विकङ्कतः समभवत् । सैषा प्रथमाऽऽहुतिः—यद्विकङ्कतः । तामस्मिन्नेतज्जुहोति । तयैनमेतत् प्रीणाति । " परस्या अधि सम्वतोऽवरा ँ२॥ अभ्यातर । यत्राहमस्मि ता ँ२॥ अव "—( वा.सं. ११। ७१ ) इति । यथैव यजुस्तथा बन्धुः ॥ १ ॥

---

आत्मत्वादिकल्पनायाः प्रयोजनमाह—एतेभ्यो वै जायमानो जायत इति । 'जायमानो' गर्भः 'एतेभ्यः' शरीरादिभ्यः सकाशात् 'जायते' खलु । जातस्य उत्पद्यमानस्य अग्नेरपि एतेषामपेक्षणात् 'एतत्' एतेन उखामुञ्जादीनामुक्तक्रमेण सम्पादनेन 'तेभ्य एव' आत्मादिभ्य एव 'एनम्' अग्निं गर्भरूपं 'जनयति'। अतः उक्तक्रमेणैवैतेषामनुष्ठानं प्रशस्तमिति विधेयस्तुतिः ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे षष्ठेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ६-६-२ ) ॥

अथ द्वितीयायाः समिधो वैकङ्कतत्वं विधाय प्रशंसति—अथ वैकङ्कतीमादधाति प्रजापतिर्यां प्रथमामाहुतिमजुहोदिति । पुरा 'प्रजापतिः' प्रजाः सृष्ट्वा, 'यां प्रथमामाहुतिमजुहोत्,' 'तां' प्रथमभूतां 'हुत्वा' 'यत्र' देशे 'न्यमृष्ट' हुतशेषनिमार्जनं कृतवान्, 'ततः' तस्मात् देशात् 'विकङ्कतः' 'समभवत्' यत एवम्, अतो विकङ्कतसाध्या आहुतिः प्रथमाऽऽहुतिः । प्रथमाहुतेरंशत्वात् अस्या अपि प्रथमाहुतित्वं युक्तम्, अतः 'तां' प्रथमाहुतिमेव 'अस्मिन्' उखाग्नौ हुतवान् भवति । 'तया' चाहुत्या 'एनम्' अग्निं 'प्रीणाति' ॥

---

१—[1]वैकंकतीम्परस्या इति । का० श्रौ० सू० १६ । १३६ ।

( २ ) अथौदुम्बरीमादधाति । देवाश्चासुराश्चोभये प्राजापत्या ऽअस्पर्द्धन्त ते ह सर्व्वऽएव व्वनस्पतयोऽसुरानभ्युपेयुरुदुम्बरो हैव देवान्न जहौ ते देवाऽअसुराञ्जित्वा तेषां व्वनस्पतीनवृञ्जत ॥ २ ॥

ते होचुः । ( हुं ) हन्त येषु व्वनस्पतिषूर्ग्यो रस ऽउदुम्बरे तं दधाम ते यद्यपक्रामेयुर्यातयामा ऽअपक्रामेयुर्यथा धेनुर्दुग्धा यथाऽनड्वानूहिवानिति तद्येषु व्वनस्पतिषूर्ग्यो रसऽआसीदुदुम्बरे तमदधुस्तयैतदूर्जा सर्व्वान्वनस्पतीन्प्रति पच्यते तस्मात्स सर्व्वदाऽऽर्द्रः सर्व्वदा क्षीरी तदेतत्सर्व्वमन्नं यदुदुम्बरः सर्व्वे व्वनस्पतयः सर्व्वैरेवैनमेतदन्नेन प्रीणाति सर्व्वैर्व्वनस्पतिभिः समिन्द्धे ॥ ३ ॥

---

अथौदुम्बरीमादधाति । देवाश्चासुराश्चोभये प्राजापत्या अस्पर्द्धन्त । ते ह सर्वऽएव वनस्पतयोऽसुरानभ्युपेयुः । उदुम्बरो हैव देवान्न जहौ । ते देवा असुरान् जित्वा तेषां वनस्पतीनवृञ्जत ॥२॥

ते होचुः—हन्त येषु वनस्पतिषूर्क्, यो रसः, उदुम्बरे तं दधाम । ते यद्यपक्रामेयुः—यातयामा अपक्रामेयुः—यथा धेनुर्दुग्धा, यथाऽनड्वानूहिवानिति । तद्येषु वनस्पतिषूर्ग्यो रस आसीद्—उदुम्बरे तमदधुः । तयैतदूर्जा सर्वान् वनस्पतीन्प्रति पच्यते । तस्मात्स सर्वदाऽऽर्द्रः, सर्वदा क्षीरी । तदेतत् सर्वमन्नं यदुदुम्बरः । सर्वे वनस्पतयः । सर्वैरेवैनमेतदन्नेन प्रीणाति । सर्वैर्वनस्पतिभिः समिन्द्धे ॥ ३ ॥

---

तत्र मन्त्रं साकल्येन पठित्वा तस्य निगदव्याख्यानतामाह—परस्या अधीत्यादिना । मन्त्रस्यायमर्थः,—अग्ने ! 'परस्याः' "संवतः" ( निघं. २ । १७ । ४६ ) सङ्ग्रामनामैतत् । सङ्ग्रामस्य 'अधि' उपरि 'अवरान्' अस्मदीयान् 'अभ्यातर' अभ्यागमय । समनन्तरं 'यत्र' सङ्ग्रामे जनपदे वा 'अहम् अस्मि,' 'तान् अव' तान् सङ्ग्रामान् जनपदान् वा रक्ष ॥ १ ॥

तृतीयसमिधो वृक्षविशेषं विधाय प्रशंसति—अथौदुम्बरीमादधाति देवाश्चासुराश्चेत्यादिना । देवासुरेषु परस्परं स्पर्धमानेषु सर्वेऽपि 'वनस्पतयः' 'असुरान्' एव 'अभ्युपेयुः' अभ्यगमन्, 'उदुम्बरः' एकः 'एव' 'देवान् न जहौ' । पश्चात् 'देवाः असुरान् जित्वा,' 'तेषां' तेभ्यः सकाशात् 'वनस्पतीन्' 'अवृञ्जत' वर्जितानकुर्वन् ॥ २ ॥

ते होचुरिति । पश्चात् 'ते' देवाः तेषु वनस्पतिषु विश्वासमकृत्वा 'वनस्पतिषु' 'यः ऊर्ग् रसः' सारोंऽशः, 'तम्' 'उदुम्बरे स्थापयाम' इति परस्परमुक्त्वा उदुम्बरे एव स्थापितवन्तः । एवं कुर्वतामभिप्रायमाह—'ते यद्यपक्रामेयुः' तदा दुग्धधेनुवत् ऊढबलीवर्दवच्च गतसारा एवापक्रामेयुः 'इति' । 'तया' स्थापितयोर्जा 'सर्वान्' 'वनस्पतीन्' 'प्रति' सर्वेषां प्रतिनिधित्वेन 'पच्यते' परिपक्वबहुफलो भवती-

---

१–औदुंबरीं परमस्या इति । का० श्रौ० सू० १६ । १२७ ।

परमुस्याः परावुतऽ इति । या परमा परावद्वित्येतुद्रोहिदश्वऽ इहागहीति रोहितो ह्यग्नेरश्वः पुरीष्यः पुरुप्रिय ऽइति पशुव्यो बहुप्रिय ऽइत्येतदुग्ने त्वं तरा मृूध ऽइत्युग्ने त्वं तर सुर्व्वान्पाप्मुनऽ इत्येतत् ॥ ४ ॥

( ५ ) अथापरशुवृक्णमादधाति । जायतऽएषु ऽएतद्युच्चीयते सुऽ एष सुर्व्वस्माऽअन्नाय जायत ऽएतद्धैकमन्नं यदपरशुवृक्णं तेनैनमेतत्प्रीणाति यदग्ने कानिकानि चिदा ते दारूणि दध्मसि ॥ सर्व्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्येति यथैव युजुस्तुथा बन्धुस्तद्यत्किञ्चापरशुवृक्णं तुदस्मा ऽएतत्स्वदयति तुदस्माऽअन्नं कृत्वाऽपिदधाति ॥ ५ ॥

---

" परमस्याः परावतः "–इति । या परमा परावदित्येतत् । " रोहिदश्व इहागहि "–इति । रोहितो ह्यग्नेरश्वः । " पुरीष्यः पुरुप्रियः "–इति । पशव्यो बहुप्रिय इत्येतत् । " अग्ने त्वं तरा मृधः "–( वा. सं. ११ । ७२ ) इति । अग्ने त्वं तर सर्वान् पाप्मन इत्येतत् ॥ ४ ॥

अथापरशुवृक्णमादधाति । जायतऽएष एतद्–यच्चीयते । स एष सर्वस्माऽअन्नाय जायते । एतद्धैकमन्नं यदपरशुवृक्णम् । तेनैनमेतत्प्रीणाति । " यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । सर्वं तदस्तु ते घृतम्, तज्जुषस्व यविष्ठ्य "–( वा. सं. ११ । ७३ ) इति । यथैव यजुस्तथा बन्धुः । तद् यत् किञ्चापरशुवृक्णम् । तदस्माऽएतत्स्वदयति । तदस्माऽअन्नं कृत्वाऽपिदधाति ॥ ५ ॥

---

त्यर्थः । प्रतेः कर्मप्रवचनीयत्वात् तद्योगात् ' वनस्पतीन् ' इति द्वितीया । उक्तमर्थं प्रत्यक्षेण दढीकरोति–तस्मात्स सर्वदाऽऽर्द्रः सर्वदा क्षीरीति । स्पष्टम् । सर्ववनस्पतिप्रतिनिधित्वात् सर्वान्नाद्यात्मकः ॥ ३ ॥

तस्याः समिध आधाने मन्त्रं विधाय व्याचष्टे–परमस्याः परावत इति । या परमा परावदित्येतदिति । हे अग्ने ! ' या ' ' परमा ' उत्कृष्टा, " परावत् " ( निघं. ३ । २६ । ९ ) दूरनामैतत् । अत्यंतं दूरमस्ति; तादृशात् देशात् आगच्छ ' इति, ' ' एतत् ' एतेन मन्त्रभागेनोक्तमित्यर्थः । द्वितीयभागे ' रोहिदश्व '–शब्दाभिधेयत्वमग्नेः कुत इति, तद् दर्शयति–रोहितो ह्यग्नेरश्व इति । " रोहितोऽग्नेः "–( निरु. १।१५।२) इति निरुक्तम् । तृतीयभागं व्याचष्टे–पुरीष्यः पुरुप्रिय इतीति । पशव्यो बहुप्रिय इत्येतदिति । पुरीष-शब्देन बहुपुरीषाः पशव उच्यन्ते । बहुभ्यः पशुभ्य आहितः पुरीष्यः । " पुरुभूरि "–इति बहुनामसु पाठात् ( निघं. ३ । १ । ३ ) । बहुभ्यो यजमानेभ्यो देवताभ्योऽपि प्रियः । गतमन्यत् । चतुर्थभागे " मृधः "–इत्येतस्य ( निघं. २ । १७ । २० ) सङ्ग्रामनामकस्यात्र पापमर्थ इति व्याचष्टे–अग्ने त्वं तरा मृध इतीति । अग्ने त्वं तर सर्वान् पाप्मन इत्येतदिति । तरतिरत्र निरासार्थः ॥ ४ ॥

अथ चतुर्थसमिदाधानं विधाय प्रशंसति–अथापरशुवृक्णमादधाति जायत एष एतदित्यादिना । 'अथ'

---

१–अपरशुवृक्णं यदग्न इति । का. श्रौ. सू. १६ । १३८ ।

( त्यु ) अथाधःशयमादधाति । जायत ऽएष ऽएतद्यच्चीयते स ऽएष सर्व्वस्मा ऽअन्नाय जायतऽएतद्धेकमन्नं यदधःशयं तेनैनमेतत्प्रीणाति यदत्त्युपजिह्विका यद्वम्रोऽअतिसर्पतीत्युपजिह्विका वा हि तदत्ति वम्रो व्वाऽतिसर्पति सर्व्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्येति यथैव यजुस्तथा बन्धुस्तद्यत्किञ्चाधःशयं तदस्माऽएतत्स्वदयति तदस्माऽअन्नं कृत्वाऽपिदधाति ॥ ६ ॥

---

अथाधःशयमादधाति । जायतऽएष एतद्–यच्चीयते । सर्वस्माऽअन्नाय जायते । एतद्धेकमन्नम्–यदधःशयम् । तेनैनमेतत्प्रीणाति । " यदत्त्युपजिह्विका यद्वम्रोऽअतिसर्पति "–इति । उपजिह्विका वा हि तदत्ति, वम्रो वाऽतिसर्पति । " सर्वं तदस्तु ते घृतम्, तज्जुषस्व यविष्ठ्य "– ( वा० सं० ११ । ७४ ) इति । यथैव यजुस्तथा बन्धुः । तद् यत् किञ्चाधःशयम्–तदस्माऽएतत् स्वदयति । तदस्माऽअन्नं कृत्वाऽपिदधाति ॥ ६ ॥

---

' अपरशुवृक्णस्य ' परशुना अच्छिन्नस्य वाय्वादिना भग्नस्य तस्याधाने प्रयोजनमाह–स एष सर्वस्मा इति । कथमस्यान्नत्वमित्यत आह–एतद्धेकमन्नमिति । अपरशुवृक्णमपि अन्नेषु मध्ये ' एकमन्नम् ' । तत्र मन्त्रं विधाय तस्य व्याख्यानानपेक्षत्वमाह–यदग्ने कानि कानि चिदित्यादिना ॥

मन्त्रस्यायमर्थः,–हे ' अग्ने ! ' यत् ' ' कानि कानिचिद् ' रूपाणि ' दारूणि ' ' ते ' त्वयि ' आदध्मसि ' आदध्मः, ' तत् सर्वं ' ' घृतमस्तु ' घृतवत् प्रियमस्तु । ' तद् ' घृतत्वेन कल्पितं यत् किञ्चित् काष्ठं 'जुषस्व' सेवस्व । हे 'यविष्ठ्य !' युवतम अग्ने ! ॥ मन्त्रस्यावयवार्थस्पष्टत्वम् "यथैव यजुस्तथा बन्धुः"–इत्यनेनोक्तम्, इदानीं तात्पर्यार्थमाह–तद् यत् किञ्च अपरशुवृक्णम्, तदस्मा एतत् स्वदयति, तदस्मा अन्नं कृत्वाऽपिदधातीति । ' अस्मै ' शिशुरूपाय अग्नये यथा लौकिकशिशोर्नवनीतादिकमन्नं कृत्वा आस्येऽपिदधाति, तथा कृतवान् भवतीति ॥ ९ ॥

अथ पञ्चम्याः समिध आधानं विधाय प्रशंसति–अथाधःशयमादधाति जायत एष इत्यादिना । पूर्ववद् व्याख्येयम् । ' अधः ' भूमेरुपरि स्वयमेव परितः सन् यः शेते, सः ' अधःशयः ' । पूर्ववत् । तत्र मन्त्रं विधाय, पूर्वार्द्धं व्याख्याय, उत्तरार्द्धस्य स्पष्टार्थतामाह–यदत्त्युपजिह्विकेत्यादिना । हे ' अग्ने ! ' ' यत् ' काष्ठम् ' उपजिह्विका ' उपदीका ' अत्ति ' भक्षयति, ' वम्रः ' वल्मीको ' वा ' ' यत् ' काष्ठम् ' अतिसर्पति ' आरोहति, ' सर्वम् ' इत्यादि पूर्ववत् । मन्त्रस्य तात्पर्यमाह–तद्यत् किञ्चाधःशयमित्यादिना । अपरशुवृक्णाधःशययोर्वृक्षविशेषाविधानात् प्रकृतमुदुम्बरत्वमेव तयोरित्यवगन्तव्यम् ॥ ६ ॥

---

१–अधःशयं यदत्तीति । का. श्रौ. सू० १६ । १३९ ।

( त्यु ) अथैता॑ उत्त॑राः पाला॑श्यो भवन्ति । ब्रह्म॒ वै प॑लाशो ब्र॒ह्मणै॒वैन॑मेतत्स॒मिन्द्धे य॒द्वेव पाला॑श्यः सो॒मो वै प॑लाश॒ऽ एषो ह॒ परमा॒ऽऽहुति॒र्यु॒त्सोमाहुति॒स्तामस्मिन्नेत॒ज्जुहोति त॒यैनमेतत्प्रीणा॑ति ॥ ७ ॥

( त्यु ) अ॒हर॒हर॒प्रयावं भ॑रन्त॒ऽ इति । ( त्यु ) अ॒हर॒ह॒रप्रमत्ता ऽआह॒रन्त इत्येत॒द॒श्वायेव ति॒ष्ठते घास॒मस्मा॒ऽइति य॒था॒ऽश्वाय ति॒ष्ठते घासमि॒त्येत॒द्रा॒यस्पोषे॑ण स॒मिषा मदन्त॒ऽ इति र॒य्या च पोषे॑ण च स॒मिषा म॒दन्त॒ऽ इत्ये॒त॒द॒ग्ने मा ते प्र॒तिवेशा रिषा॒मेति य॒थैवास्य प्र॒तिवेशो न रि॒ष्येदे॒व॒मेत॒दाह ॥ ८ ॥

---

अथैता उत्तराः पालाश्यो भवन्ति । ब्रह्म वै पलाशः । ब्रह्मणैवैनमेतत् समिन्द्धे । यद्वेव पालाश्यः । सोमो वै पलाशः। एषो ह परमाऽऽहुतिः—यत् सोमाहुतिः । तामस्मिन्नेतज्जुहोति, तयैनमेतत्प्रीणाति ॥ ७ ॥

" अहरहरप्रयावं भरन्तः "—इति । अहरहरप्रमत्ता आहरन्त इत्येतत् । " अश्वायेव तिष्ठते घासमस्मै "—इति । यथाऽश्वाय तिष्ठते घासमित्येतत् । " रायस्पोषेण समिषा मदन्तः "—इति । रय्या च पोषेण च समिषा मदन्त इत्येतत् । " अग्ने मा ते प्रतिवेशा रिषाम "—( वा० सं० ११ । ७५ ) इति । यथैवास्य प्रतिवेशो न रिष्येत् । एवमेतदाह ॥ ८ ॥

---

इत्थं पञ्चसमिधां विलक्षणतां विधाय उत्तरासामष्टानां समिधां पलाशैकद्रव्यत्वमाह—अथैता उत्तराः पालाश्यो भवन्तीति । पलाशत्वं ब्रह्मत्वेन सोमत्वेन च प्रशंसति—ब्रह्म वै पलाश इति । " यद्वेव पालाश्यः, सोमो वै पलाशः "—इति च वाक्यद्वयेन " देवा वै ब्रह्मन्नवदन्त तत् पर्ण उपाशृणोत् "—( तै. सं. ३ । ५ । ७ । २ ) इति श्रुतेर्ब्रह्मत्वं पलाशस्य ( श. प. १ । ३ । ३ । १९ ) । " तृतीयस्यामितो दिवि सोम आसीत्, तं गायत्र्याऽऽहरत् तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत् "—( तै. ब्रा. १ । १ । ३ । १० ) इति श्रुतेः पलाशस्य सोमावयवत्वात् " सोमो वै पलाशः "—इत्युक्तम् ॥ ७ ॥

अथ समिदाधानस्य षष्ठमन्त्रं चतुर्द्धा विभज्य व्याचष्टे—अहरहरप्रयावं भरन्त इत्यहरहरप्रमत्ता आहरन्त इत्यादिना । मन्त्रस्य तु ब्राह्मणेनैव विस्पष्टं व्याख्यानान्न पृथगुक्त्यपेक्षाऽस्ति । मिश्रणनिषेधवाचिना ' अप्रयाव '—शब्देन तद्विनाभूतोऽप्रमादलक्षणोऽर्थो विवक्षित इति ब्राह्मणेन व्याख्यातम् । ' भरन्तः '—इति शब्दस्य च समिदाहरणमर्थ इत्युक्तम् ॥

द्वितीयभागेनोक्ताग्न्यर्थाहरणस्य दृष्टान्तोऽभिधीयत इति व्याचष्टे—यथाऽश्वाय तिष्ठते घासमित्येतदिति । ' एतत् ' एतेन मन्त्रभागेनोक्तमित्यर्थः ।' यथाऽश्वाय तिष्ठते ' गृह एव निवसते जात्यश्वाय 'घासं' बालतृणादिकं हरन्ति, तथा ' अस्मै ' अग्नये इत्यर्थः ॥

---

१—पालाशीः प्रत्यृचमहरहरिति । का० श्रौ० सू० १६ । १४० ॥

नाभा पृथिव्याः समिधानेऽअग्नाविति । ( त्ये ) एषा ह नाभिः पृथिव्यै यत्रैषऽएतत्समिध्यते रायस्पोषाय बृहते हवामहऽइति रय्यै च पोषाय च बृहते हवामहऽइत्येतदिरम्मदमितीरया ह्येषु मत्तो बृहदुक्थमिति बृहदुक्थो ह्येष यजत्रमिति यज्ञियमित्येतज्जेतारमग्निं पृतनासु सासहिमिति जेता ह्यग्निः पृतनाऽउ सासहिः ॥ ९ ॥

---

" नाभा पृथिव्याः समिधानेऽअग्नौ "–इति । एषा ह नाभिः पृथिव्यै यत्रैष एतत् समिध्यते । " रायस्पोषाय बृहते हवामहे "–इति । रय्यै च पोषाय च बृहते हवामह इत्येतत् । " इरम्मदम् "–इति । इरया ह्येष मत्तः । " बृहदुक्थम् "–इति । बृहदुक्थो ह्येषः । " यजत्रम् "–इति । यज्ञियमित्येतत् । " जेतारमग्निं पृतनासु सासहिम् "–( वा० सं० ११।७६ ) इति । जेता ह्यग्निः पृतना उ सासहिः ॥ ९ ॥

---

तृतीयभागे ' रायस्पोषेण '–इत्यत्र ' धनस्य पुष्ट्या ' इत्येवंरूपोऽर्थः प्रतिभाति, तथापि राय इति निर्देशबलादेव अपुष्टस्य धनसिद्धेः शरीरादिपोषरूपोऽर्थः पृथगेव विवक्षित इत्यभिप्रेत्य ' रय्या च पोषेण च ' इति पृथक्तया ब्राह्मणे व्याख्यातम् । न केवलं रय्या पोषेण च, किन्तु इष्टान्नेन च । " सम्मदन्तो वयं मा रिषाम " इत्युत्तरत्र सम्बन्धः ॥

चतुर्थभागस्य तात्पर्यमाह–अग्ने मा ते प्रतिवेशा रिषामेति । यथैवास्य प्रतिवेशो न रिष्येत्, एवमेतदाहेति । प्रतिवेशो नाम स्वगृहे अलभ्यमानस्य पदार्थस्यानयनायोचितं स्वगृहनिकटवर्ति मित्रादिगृहम् । अत्र तद्वान् विवक्षितः । अथास्याग्नेरभिमतहविःप्रदाता प्रतिवेशो यजमानः, उक्तलक्षणं तद्गृहं वा ' न रिष्येत् ' न हिंस्यात्, एवमनुगृहाणेत्येवंरूपमर्थमयं मन्त्रभाग आहेत्यर्थः ॥ ८ ॥

अथ तेषु सप्तमसमिदाधानमन्त्रं विभज्य व्याचष्टे–नाभा पृथिव्याः समिधाने अग्नावित्येषा ह नाभिः पृथिव्यै–इति । मन्त्रस्यायमर्थः–' पृथिव्याः ' ' नाभौ आहवनीयाख्ये ' समिदाधाने ' अग्नौ समिध्यमाने सति ' रायः ' धनस्य ' बृहते ' महते ' पोषाय ' ' हवामहे ' आह्वयामः । ' इरम्मदम् ' इरया मादयितव्यम्, ' बृहदुक्थं ' महच्छस्त्रम्, ' यजत्रम् ' यष्टव्यम्, ' जेतारं ' जयशीलम्, ' पृतनासु ' संग्रामेषु ' सासहिम् ' सोढारम् ' अग्निं ' ' हवामहे ' आह्वयामः ॥

प्रथमभागं व्याचष्टे–एषा ह नाभिः पृथिव्यै, यत्रैष एतत् समिध्यत इति । ' यत्र ' यस्मिन् देशे ' एषः ' अग्निः ' एतत् ' एतेन प्रकारेण ' समिध्यते ', ' एषः ' प्रदेशः ' पृथिव्यै ' पृथिव्याः ' नाभिः ' उच्यते । द्वितीयभागे रायस्पोषब्राह्मणं प्रागते मन्त्रे व्याख्यातम् । तृतीयभागं व्याचष्टे–इरम्मदमितीरया ह्येष मत्त इत्यादिना । ' इरया ' घृतादिनाऽन्नेन ' मत्तः ' तर्पितः । ' हि '-शब्देन प्रसिद्धिर्द्योत्यते । अग्नेर्बृहदुक्थत्वं प्रसिद्धमिति दर्शयति–बृहदुक्थो ह्येष इति । यजत्रशब्दं व्याचष्टे–यजत्रमिति यज्ञियमित्येतदिति । चतुर्थभागस्यार्थः प्रसिद्ध इत्याह–जेता ह्यग्निः पृतना उ सासहिरिति ॥ ९ ॥

**याः सेनाऽअभीत्वरीः । ( ई ) दंष्ट्राभ्यां मलिम्लून्ये जनेषु मलिम्लवो योऽअस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ॥ निन्दाद्योऽअस्मान्धिप्साच्च सर्वं तं मस्मसा कुर्विति ॥ १० ॥**

---

" याः सेना अभीत्वरीः "–( वा. सं. ११।७७ ) " दंष्ट्राभ्यां मलिम्लून् "–( वा. सं. ११ । ७८ )–" ये जनेषु मलिम्लवः "–( वा. सं. ११।७९ ) " यो अस्मभ्यमरातीयाद् यश्च नो द्वेषते जनः । निन्दाद्योऽअस्मान् धिप्साच्च सर्वं तं मस्मसा कुरु "–( वा. सं.– ११ । ८० ) इति ॥ १० ॥

---

अथाष्टमसमिदाधानमन्त्रस्य प्रतीकमुपादत्ते–याः सेना अभीत्वरीरिति । तस्यायमर्थः,–' याः सेनाः ' अभीत्वरीः ' अभीत्वर्यः, अभियायिन्यः । करप्–प्रत्ययान्तस्य " इण् गतौ "–( धा. पा. अ. प. ३९ ) इत्यस्य रूपम् । याः च ' आव्याधिनीः ' आविध्यन्तीत्याव्याधिन्यः, आविध्यन्त्यः । ' उत ' शब्दोऽप्यर्थे । ' उगणाः ' उद्गूर्णो गणो यासां ताः तथोक्ताः । पृषोदरादित्वात् ( पा. सू. ६ । ३ । १०९ ) अभिमत-रूपस्वरसिद्धिः । ये च ' स्तेनाः ' ये च चौराः, ये च ' तस्कराः ' पापकारिणः । " तस्करः, तत् करोति यत् पापकमिति नैरुक्ताः । "–( निरु ३ । ३ । २ ) इति । तान् सर्वान् हे अग्ने ! ते 'आस्ये' भक्षणाय ' अपिदधामि ' प्रक्षिपामि ॥

अथ नवम्याः समिध आधानमन्त्रप्रतीकमुपादत्ते–दंष्ट्राभ्यां मलिम्लूनिति । तस्यायमर्थः–' दंष्ट्राभ्यां ' ' मलिम्लून् ' मलिम्लुचः ' उत ' अपि च ' तस्करान् ' परद्रव्यापहरणलक्षणपापकारिणः ' जम्भ्यैः ' जम्भनार्हैः उपर्यधोवर्तिभिः पुरोदन्तैरित्यर्थः । तैः 'खाद' । 'भगवः' हे भगवन् ! षड्गुणैश्वर्ययुक्त ! अग्ने ! हनुभ्यां स्तेनान् खादितानेनान् यथा ईषदपि न परिशिष्यते, तथा सुष्ठु खादितान् कृत्वा खादेति ॥

अथ दशम्याः समिध आधानमन्त्रप्रतीकमुपादत्ते–ये जनेषु मलिम्लव इति । अस्यायमर्थः,–' ये ' ' जनेषु ' ' मलिम्लवः ' मलिम्लुचः, ' स्तेनासः ' स्तेनाः, ये च ' वने ' वनाश्रिताः ' तस्कराः ' तथा 'कक्षेषु नदीपर्वतकुहरेषु ' अघायवः ' पापं परस्मै इच्छन्तः, तान् तव जम्भयोः ' दधामि ' स्थापयामि ॥

अथैकादश्याः समिधो मन्त्रं पठति–यो अस्मभ्यमिति । ' यः ' जनः ' अस्मभ्यम् ' ' अरातीयात् ' अरातिवदाचरेत्, ' यः ' च जनोऽरातिः ' नः ' अस्मान् ' द्वेषते ' द्वेष्टि, ' यः ' च जनः अस्मान् ' निन्दात् ' निन्देत्, निन्दति, तथा 'धिप्सात्' दम्नातेः सन्, अभ्यासलोपः, दम्भितुं हिंसितुमिच्छेत्, 'तं सर्वम्' ' मस्मसा ' ' कुरु ' । अनुकरणशब्दोऽयम्; यथा भक्षणसमये ' मस्मसा '–शब्दं कुर्वन्ति, तथा कुर्वित्यर्थः ॥ १० ॥

---

१–" आव्याधिनीरुगणा उत । ये स्तेना ये च तस्करास्ताँस्ते अग्नेऽपिदधाम्यास्ये " । २ " जम्भ्यैस्तस्कराँ२ ॥ उत । हनुभ्या१ स्तेनान् भगवस्ताँस्त्वं खाद सुखादितान् " । ३–" स्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्तांस्ते दधामि जम्भयोः " इत्येवं त्रिषु मन्त्रेषु अवशिष्टभागाः ।

( त्ये ) एतद्ध देवाः । ( ० ) यश्चैनानद्वेड्यश्चाद्विषुस्तमस्मा ऽअन्नं कृत्वाऽप्यदधुस्तेनैनमप्रीणन्नन्नमुहैतस्याभवददहद्ध देवानां पाप्मानं तथैवै- तद्यजमानो यश्चैनं द्वेष्टि यं च द्वेष्टि तमस्माऽअन्नं कृत्वाऽपिदधाति तेनैनं प्रीणात्यन्नमुहैतस्य भवति दहत्यु यजमानस्य पाप्मानम् ॥ ११ ॥

( न्ता ) ता ऽएता ऽएकादशादधाति । ( त्य ) अक्षत्रियस्य वाऽपुरोहि- तस्य वाऽसर्व्वं वै तद्यदेकादशासर्व्वं तद्यदक्षत्रियो वाऽपुरोहितो वा ॥ १२ ॥

द्वादश क्षत्रियस्य वा पुरोहितस्य वा । सर्व्वं वै तद्यद्द्वादश सर्व्वं तद्यत्क्षत्रियो वा पुरोहितो वा ॥ १३ ॥

---

एतद्ध देवाः—यश्चैनानद्वेड्, यश्चाद्विषुः—तमस्माऽअन्नं कृत्वा—अप्यदधुः। तेनैनमप्रीणन् । अन्नमहै- तस्याभवत् । अदहद्ध देवानां पाप्मानम् । तथैवैतद्यजमानो—यश्चैनं द्वेष्टि, यं च द्वेष्टि—तमस्माऽअन्नं कृत्वा—अपिदधाति । तेनैनं प्रीणाति । अन्नमहैतस्य भवति । दहत्यु यजमानस्य पाप्मानम् ॥ ११ ॥

ता एता एकादशादधाति । अक्षत्रियस्य वाऽपुरोहितस्य वा । असर्वं वै तद् यदेकादश । असर्वं तद् यदक्षत्रियो वाऽपुरोहिता वा ॥ १२ ॥

द्वादश क्षत्रियस्य वा पुरोहितस्य वा । सर्वं वै तद्—यद्द्वादश । सर्वं तद्—यत् क्षत्रियो वा पुरोहितो वा ॥ १३ ॥

---

एतन्मन्त्रं प्रशंसितुं पुरावृत्तमाह—एतद्ध देवा यश्चैनानित्यादिना । 'एतत्' अनेन प्रकारेण पुरा खलु देवाः 'अप्यदधुः'-इत्याख्यातेन सम्बन्धः । 'एतान्' यजमानान् 'यश्च जनः' 'अद्वेट्' द्वेषमकार्षीत् 'यञ्च' जनं यजमानाः 'अद्विषुः' द्वेषमकुर्वन् । 'तम्' उभयविधं जनम् 'अस्मै' उत्पन्नाय शिशुरूपाय अग्नये 'अन्नं कृत्वा' 'अप्यदधुः' मुखे स्थापितवन्तः । 'तेन' अन्नेन 'एनम्' अग्निम् 'अप्रीणन्' । कथं तदन्नं भवतीत्यत आह—अन्नमहैतस्याभवदिति । "अह इति विनिग्रहार्थीयः" ( या. निरु. १० । २ । ४ ) । अन्नमेतस्याग्नयेऽभवदेव । 'उ' अपि च पश्चात् सोऽग्निः 'देवानां' 'पाप्मानं' द्वेष्यम् 'अदहत्' भस्माकरोत् । तथैवैतद् यजमान इत्याद्यौपोद्घातिकं वाक्यमुपोद्घातवद् व्याख्येयम् ॥ ११ ॥

या एता एकादश समिध उक्ताः, तासां क्षत्रियपुरोहितव्यतिरिक्तविषयतामाह—ता एता एकादशा- दधात्यक्षत्रियस्य वाऽपुरोहितस्य वेति । क्षत्रियादन्यस्त्रैवर्णिकः अक्षत्रियः, तत्रापि 'अपुरोहितस्य' पुरोहितव्यतिरिक्तस्य, पुरोहितक्षत्रियव्यतिरिक्तो यो यागाधिकारी, तस्य 'एकादश आदध्यात्' । अन्यैकादश- संख्यायोग्यतामुपपादयति—असर्वं वै तद्यदेकादशासर्वं तद्यदक्षत्रियो वाऽपुरोहितो वेति । क्षत्रियपुरोहि- तयोः सर्वरक्षाक्षमवीर्यातिशयदर्शनेन सर्वत्वं प्रसिद्धम् । अत एव तदितरस्य चासर्वत्वम्, एकादशसङ्ख्यायाश्च विषमसंख्यारूपत्वादसर्वत्वम्, अतस्तस्य तदुचितम् ॥ १२ ॥

तर्हि क्षत्रियपुरोहितयोः कियत्य इत्यत आह—द्वादश क्षत्रियस्य वा पुरोहितस्य वा सर्वं वै तद् यद् द्वादश—इत्येतत् । पूर्वेणैव व्याख्यातप्रायम् ॥ १३ ॥

---

१—उपोत्तमां क्षत्रियस्येच्छन् । उत्तमां पुरोहितस्य । का० श्रौ० सू० १६ । १४१ । १४२ ।

स पु॒रोहि॑तस्या॒दधाति । सᳪँशि॑तम्मे ब्रह्म॒ सᳪँशि॑तं वी॒र्यं॒ बल॑म् ॥ सᳪँशि॑तं क्ष॒त्रं जि॒ष्णु य॒स्याह॒मस्मि॑ पु॒रोहि॑त॒ऽ इति॒ तद॑स्य ब्रह्म॒ च क्ष॒त्रं च॒ सᳪँश्यति ॥ १४ ॥

( त्यु ) अथ॒ क्षत्रि॒यस्य । ( स्यो ) उदे॒षां बा॒हूऽअति॑र॒मुद्वर्चो॒ऽअथो॒ बल॑म् ॥ क्षि॒णोमि॒ ब्रह्म॑णा॒ऽमित्रा॒नुन्न॑यामि॒ स्वाँ२ँ॥ऽअ॒हमिति॒ य॒थैव॒ क्षि॒णु-या॒दमि॒त्रानु॒न्नये॒त्स्वाने॒वमे॒तदाहो॒भे त्वे॒वैते॒ऽआ॒दध्या॒दयं वा॒ऽअ॒ग्निर्ब्र॒ह्म च॒ क्ष॒त्रं चे॒सम॒मेवै॒तद॒ग्निमे॒ताभ्या॑मु॒भाभ्याᳪँ सु॒मिन्द्धे ब्र॒ह्मणा॑ क्ष॒त्रेण॑ च ॥ १५ ॥

---

स पुरोहितस्यादधाति । " संशितं मे ब्रह्म, संशितं वीर्यं बलम् । संशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः "–( वा. सं. ११ । ८१ ) इति। तदस्य ब्रह्म च क्षत्रं च संश्यति १४॥

अथ क्षत्रियस्य–" उदेषां बाहूऽअतिरमुद्वर्चोऽअथो बलम् । क्षिणोमि ब्रह्मणाऽमित्रा-नुन्नयामि स्वा २ँ॥ अहम् "–( वा. सं. ११ । ८२ ) इतिं । यथैव क्षिणुयादमित्रान्, उन्न-येत् स्वान् । एवमेतदाह। उभे त्वेवैतेऽआदध्यात्। अयं वाऽअग्निः–ब्रह्म च क्षत्रं च । इममेवैतदग्नि-मेताभ्यामुभाभ्यां समिन्द्धे–ब्रह्मणा क्षत्रेण च ॥ १५ ॥

---

तर्हि पुरोहितस्य द्वादशः । को मन्त्रः क्षत्रियस्य वा क इत्यपेक्षायां तावत्पुरोहितस्याह–स पुरोहितस्याद-धाति संशितं मे ब्रह्मेति । मन्त्रस्य स्पष्टार्थत्वेन विभज्य व्याख्यानानपेक्षणात् साकल्येन पठित्वा तात्पर्यं दर्शयति–तदस्य ब्रह्म च क्षत्रं च संश्यतीति । मन्त्रे ब्रह्मक्षत्रयोः संशितत्वप्रदर्शनात् ' अस्य ' पुरोहित-यजमानस्य ' ब्रह्म च क्षत्रं च ' उभे जाती ' संश्यति ' सम्यक् तीक्ष्णीकरोति ॥

मन्त्रस्य त्वक्षरार्थोऽयम्–' मे ' मम स्वभूतं ' ब्रह्म ' ब्राह्मणजातिः ' संशितं ' भवतु । एतदेव विवृणोति–' मे ' ब्रह्मणः ' वीर्यं ' श्रुताध्ययनादिजनितम्, ' बलं ' शारीरम्; तदुभयं संशितं भवतु । तथा ' जिष्णु ' जयशीलं ' क्षत्रं ' क्षत्रियजातिः; ' संशितं ' 'यस्य' क्षत्रस्याहं पुरोहितोऽस्मि, तत् संशितं भवत्विति ॥ १४ ॥

क्षत्रियपक्षे द्वादश्याः समिधो मन्त्रमाह–अथ क्षत्रियस्योदेषामिति । अयमर्थः–' एषां ' विरोधिनां 'बाहू' भुजौ ' उदतिरम् ' उद्धृतवानस्मि । तथा तेषां ' वर्चः ' तेजः, ' अथो ' ' बलं ' शारीरम्, तत् सर्वम् उदतिरम् । किञ्च ' ब्रह्मणा ' नियमाधीतेन मन्त्रेण ' अमित्रान् ' विरोधिनः ' क्षिणोमि ' हिंसितान् करोमि । ' स्वान् ' अस्मदीयानि मित्राणि ' अहम् ' 'उन्नयामि' । उत्तरार्द्धस्य तात्पर्यमाह–यथैव क्षिणुयादमित्रानुन्न-येत् स्वानेवमेतदाहेति । स्पष्टम् ॥

पुरोहितक्षत्रियव्यतिरिक्तस्य एकादश, तयोस्तु द्वादशैव । तत्रापि उपोत्तमा पुरोहितस्य, उत्तमा क्षत्रियस्येति व्यवस्थापितम् ( का. श्रौ. सू. १६ । १४१ । १४२ ) । इदानीमुपोत्तमोत्तमे उभे अपि सर्वेषामाधातव्ये इति सार्थवादमाह–उभे त्वेवैते इति । तु-शब्दः पूर्वोक्तव्यवस्थापक्षं वारयति, एवशब्दो भिन्नक्रमः । ये ' उभे '

---

१–अन्यस्योभे । का० श्रौ० सू० १६ । १४३ ।

तास्त्रयोदश सम्पद्यन्ते । त्रयोदश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्या-वानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ १६ ॥

प्रादेशमात्र्यो भवन्ति । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसम्मि-तेनैवैनमेतदन्नेन प्रीणाति यद्दु वाऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति तिष्ठन्नादधाति तस्योपरि बन्धुः स्वाहाकारेण रेतो वाऽइदꣳ सिक्तमयमग्निस्तस्मिन्यत्काष्ठान्य-स्वाहाकृतान्यभ्यादध्याद्धिꣳस्याद्धैनं ता यत्समिधस्तेन नाहुतयो यद्दु स्वाहाकारेण तेनान्नमन्नꣳ हि स्वाहाकारस्तथो हैनं न हिनस्ति ॥ १७ ॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ ६-४-५ ॥ ( ६. ३. )

---

तास्त्रयोदश सम्पद्यन्ते । त्रयोदश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ १६ ॥

प्रादेशमात्र्यो भवन्ति । प्रादेशमात्रो वै गर्भो विष्णुः । अन्नमेतत् । आत्मसम्मितेनैवैनमेतदन्नेन प्रीणाति । यद्दु वाऽआत्मसम्मितमन्नम्–तदवति । तन्न हिनस्ति । यद्भूयो–हिनस्ति तत् । यत्क-नीयो–न तदवति । तिष्ठन्नादधाति । तस्योपरि बन्धुः । स्वाहाकारेण । रेतो वाऽइदं सिक्तम्–अयमग्निः । तस्मिन्यत् काष्ठान्यस्वाहाकृतान्यभ्यादध्याद्–हिंस्याद्धैनम् । ता यत् समिधः–तेन नाहुतयः । यद्दु स्वाहाकारेण–तेनान्नम् । अन्नं हि स्वाहाकारः । तथो हैनं न हिनस्ति ॥ १७ ॥

---

पुरोहितक्षत्रियविषयत्वेनोक्ते, ते उभे सर्वत्रादध्यादेव, न परित्यजेत् । तत्रोपपत्तिमाह–अयं वा अग्निर्ब्रह्म च क्षत्रं चेति । 'अयम् अग्निः' एव ब्रह्मक्षत्रे; यद् ब्राह्मं क्षात्रं च तेजः, तस्याग्नेयत्वादित्यभिप्रायः । अतः 'एतत्' एतेन ब्रह्मक्षत्रमन्त्राभ्याम् अग्नौ समिदाधानेन 'इममेव' उख्यमग्निम् 'उभाभ्यां' 'समिन्धे' सम्यग् दीपितवान् भवति । तस्मादुभे अप्यवश्यं सर्वविषयतयाऽनुष्ठेये इत्यर्थः ॥

एतदुक्तं भवति । पुरोहितक्षत्रियव्यतिरिक्तानामेकादश वा त्रयोदश वा, तयोस्तु द्वादश वा त्रयोदश वेति । अत्र सूत्रम्–"उपोत्तमां क्षत्रियस्येच्छन्नुत्तमां पुरोहितस्यान्यस्योभे"–( का. श्रौ. सू. १६ । १४१–१४३ ) इति । 'अन्यस्य' पुरोहितक्षत्रियाभ्यामन्यस्य, तत्रापि पुरोहितव्यतिरिक्तस्य क्षत्रियस्य अन्यस्य, क्षत्रियव्यति-रिक्तस्य पुरोहितस्यान्यस्येत्यर्थः । एवं कर्कोपाध्यायैरपि व्याख्यातम् ॥ १५ ॥

अर्थसिद्धां त्रयोदशसङ्ख्यामनूद्य प्रशंसति–तास्त्रयोदश सम्पद्यन्ते त्रयोदश मासाः संवत्सर इत्यादिना । 'ताः' समिधः । गतमन्यत् ॥ १६ ॥

समिधां प्रादेशमात्रत्वं विधाय प्रशंसति–प्रादेशमात्र्यो भवन्ति प्रादेशमात्रो वै गर्भो विष्णुरित्यादिना । गर्भभूतस्य यज्ञात्मकस्य विष्णोः प्रादेशमात्रत्वं गर्भाधारस्योदरस्य प्रादेशमात्रत्वमपेक्ष्येत्येतद्बोद्धव्यम् । समिदाख्यं वस्तु 'अन्नम्'; अतः 'एनं' गर्भम् 'आत्मसम्मितेन' आत्मसमप्रमाणेनैवान्नेन प्रीणाति । आत्मसम्मितत्वं

अथ विष्णुक्रमान्क्रान्त्वा । वात्सप्रेणोपस्थायास्तमितऽआदित्ये भस्मैव प्रथममुद्वपत्येतद्वाऽएनमेतेनान्नेन प्रीणात्येताभिः समिद्भिस्तस्यान्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यावर्त्तयति तस्मिन्नपहतपाप्मन्वाचं विसृजते वाचं विसृज्य समिधमादधाति रात्र्याऽएवैनमेतदन्नेन प्रीणाति रात्रीᳬं रात्रीमप्रयावं भरन्तऽइति तस्योक्तो बन्धू रात्र्याऽएवैतामरिष्टिᳬं स्वस्तिमाशास्ते तद्यत्किञ्चातो रात्र्योपसमादधात्याहुतिकृतᳬं हैवास्मै तदुपसमादधाति ॥ १ ॥

---

अथ विष्णुक्रमान्क्रान्त्वा, वात्सप्रेणोपस्थाय, अस्तमितऽआदित्ये भस्मैव प्रथमसुद्वपति । एतद्वाऽएनमेतेनान्नेन प्रीणाति–एताभिः समिद्भिः । तस्यान्नस्य जग्धस्यैष पाप्मा सीदति–भस्म । तेनैनमेतद् व्यावर्त्तयति । तस्मिन्नपहतपाप्मन् वाचं विसृजते । वाचं विसृज्य, समिधमादधाति । रात्र्याऽएवैनमेतदन्नेन प्रीणाति । रात्रीं रात्रीमप्रयावं भरन्त इति । तस्योक्तो बन्धुः । रात्र्याऽएवैतामरिष्टिं स्वस्तिमाशास्ते । तद्यत् किञ्चातो रात्र्योपसमादधाति; आहुतिकृतं हैवास्मै तदुपसमादधाति॥ १॥

---

न्यूनाधिकभावे बाधदर्शनेन स्तौति–यद्वु वा आत्मसम्मितमन्नम्, तदवतीति । 'अवति'. तर्पयति । 'कनीयः' चेत् 'न अवति' न तर्पयति, 'भूयः' चेत् अन्तरोष्माद्युत्पादनेन 'हिनस्ति', अत आत्मसम्मितं प्रशस्तम् । तिष्ठतैवोक्तसमिधामाधानं कर्त्तव्यमिति विधाय, तदर्थवादं वक्ष्यमाणमतिदिशति–तिष्ठन्नादधाति तस्योपरि बन्धुरिति । 'उपरि' नवमे काण्डे ( श. प. ९ । २ । ३ । ४१ ) " तिष्ठन् समिध आदधाति, अस्थीनि वै समिधः "–इत्यत्र रुक्मधारणप्रस्तावे " तिष्ठन् वै वीर्यवत्तरः "–इति बन्धुरुक्त इत्यर्थः ॥

यत् समिधामाधानमुक्तम्, तस्य स्वाहाकारान्ततां विधाय प्रशंसति–स्वाहाकारेण, रेतो वा इत्यादिना । उख्याग्नेरुत्तरत्रोत्पद्यमानवैश्वानरार्थसिक्तरेतोरूपत्वात् तत्र प्रक्षेप्तव्यानि 'काष्ठानि' 'अस्वाहाकृतानि' चेत् 'अभ्यादध्यात्' 'एनं' रेतोरूपमग्निं हन्युः; सस्वाहाकाराणि चेत् हननं न कुर्युः । ननु केवलकाष्ठानां हिंसकत्वं प्रयुक्तम्, तच्च काष्ठानामाहुतित्वेन प्रक्षेपादाहुतेश्चान्नत्वात् कथं हिंसकत्वमिति तत्राह–ता यत् समिधस्तेन नाहुतय इति । समिधां केवलमग्निसमिन्धनसाधनत्वेनानाहुतिरूपत्वात् नाहुतित्वं नान्नत्वञ्च अतो हिंसकाः स्युरित्यर्थः । तर्हि स्वाहाकारसहितास्ता इति चेत् कथमन्नभावेनाहिंसकत्वमिति, तत्राह–यद्वु स्वाहाकारेण तेनान्नमन्नं हि स्वाहाकारस्तथो हैनं न हिनस्तीति । " स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नं प्रदीयते " इति श्रुतेरन्नप्रदानहेतुत्वादन्नत्वम् । स्पष्टमन्यत् । " स्वाहाकारः सर्वासूखायाम् "–( का. श्रौ. सू. १६ । १४४ ) इति सूत्रम् ॥ १७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे षष्ठेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ६ । ६ । ३ ) ॥

अथ समिदाधानानतरं भस्मोद्वपनस्य कालमाह–अथ विष्णुक्रमान् क्रान्त्वा वात्सप्रेणोपस्थायास्त-

( त्यु ) अथ प्रातरुदितऽआदित्ये । भस्मैव प्रथममुद्वपत्येतद्वाऽएनमेतेनान्नेन प्रीणात्येतया समिधा यच्च रात्र्योपसमादधाति तस्यान्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यावर्त्तयति तस्मिन्नपहतपाप्मन्वाचं विसृजते वाचं विसृज्य समिधमादधात्यह्नऽएवैनमेतदन्नेन प्रीणात्यहरहरप्रयावं भरन्तऽ इति तस्योक्तो बन्धुरह्नऽएवैतामरिष्टिᳫ स्वस्तिमाशास्ते तद्यत्किञ्चातोऽह्नोपसमादधात्याहुतिकृतᳫ हैवास्मै तदुपसमादधाति ॥ २ ॥

---

अथ प्रातरुदितऽआदित्ये भस्मैव प्रथममुद्वपति । एतद्वाऽएनमेतेनान्नेन प्रीणाति—एतया समिधा, यच्च रात्र्योपसमादधाति । तस्यान्नस्य जग्धस्यैष पाप्मा सीदति—भस्म । तेनैनमेतद्व्यावर्त्तयति । तस्मिन्नपहतपाप्मन्वाचं विसृजति । वाचं विसृज्य समिधमादधाति । अह्न एवैनमेतदन्नेन प्रीणाति—अहरहरप्रयावं भरन्त इति । तस्योक्तो बन्धुः । अह्नऽएवैतामरिष्टिं स्वस्तिमाशास्ते । तद्यत्किञ्चातोऽह्नोपसमादधाति—आहुतिकृतं हैवास्मै तदुपसमादधाति ॥ २ ॥

---

मित आदित्ये भस्मैव प्रथममुद्वपतीति[1] । विष्णुक्रमवात्सप्रयोः स्वरूपमुपरिष्टाद् वक्ष्यते । 'प्रथमं' रात्रौ कर्त्तव्याया एकस्याः समिधः आधानात् पूर्वं 'भस्म' 'उद्वपति' अपगमयति । उद्वपनं प्रशंसति—एतद्वा एनमिति । समिदाधानमेव अग्नेः अन्नेन प्रीणनम्, अतो 'जग्धस्य' भक्षितस्य 'अन्नस्य' पापरूपं 'भस्म' 'सीदति' अवशिष्यते । 'एतत्' एतेन पापशमनेनैव 'एनम्' 'अग्निम्' 'तेन' भस्मना 'व्यावर्त्तयति' यद्वा, 'एतत्' एतेन पापशमनप्रकारेण 'एनं' 'व्यावर्त्तयति' पश्चात् 'तस्मिन्' अग्नौ 'अपहतपाप्मन्' भस्माख्यपापरहिते सति पश्चात् अस्तमयात् प्राक् गृहीतां 'वाचम्', तदा 'विसृज्य' 'समिधम्' आदध्यात् । तत्समिदाधानम् अग्नेः रात्रिभोजनान्नस्थानीयम् ॥ तत्र मन्त्रं विधाय, तद्व्याख्यानं प्रागुक्तमित्यतिदिशति—रात्रीᳫ रात्रीमप्रयावं भरन्त इतीति[2] । तस्योक्तो बन्धुरिति । समिदाधानप्रस्तावे "अहरहरप्रयावं भरन्तः" ( श. प. १ । १ । ३ । ८ ) इत्यत्र । तात्पर्यं दर्शयति—रात्र्या एवैतामरिष्टिं स्वस्तिमाशास्ते इति । रात्रीमिति मन्त्रपाठेन कृत्स्नायाः रात्र्याः सम्बन्धिनीमरिष्टिं सारहितां स्वस्तिम् अस्तिरभिपूजितः स च सुष्ठु अस्तीति स्वस्तिः तामग्नेराशास्ते । आशासनस्यापि प्रयोजनमाह—तद्यत्किञ्चेति । अतः कारणात् तत्राग्नौ यत् किञ्चित् काष्ठादिकमादधाति, 'तत्' सर्वम् 'अस्मै' अग्नये 'आहुतिकृतमेव' 'उपसमादधाति' ॥ १ ॥

रात्रौ यत् कर्त्तव्यं भस्मोद्वपनादि उक्तम्, तत् सर्वं प्रातरपि विधत्ते—अथ प्रातरुदित आदित्य इत्यादिना आहुतिकृतं हैवास्मै तदुपसमादधातीत्यन्तेन । एतत् पूर्ववद् व्याख्येयम् । "अहरहरप्रयावम्"—इति मन्त्रपाठे विशेषः ॥ २ ॥

---

१—विष्णुक्रमान् क्रमते विष्णोरिति प्रतिमंत्रमग्न्युद्ग्रभणं च तस्मिन् । वात्सप्रेण दिवस्परीत्येकादशभिः । उखाया भस्मोद्वपनमस्तमिते पात्रे का० श्रौ० सू० १६ । १६६–१७० ॥ २—इहैव सप्तमाध्याये चतुर्थब्राह्मणे द्रष्टव्यम् श. प. ६ । ७ । ४ । ३—वाचं विसृज्य समिदाधानᳫ रात्रीᳫ रात्रीमप्रयावमिति का. श्रौ. सू. १६ । १७१ ।

( त्य ) अहोरात्रे वा ऽअभिवर्तमाने संवत्सरमाप्नुतः संवत्सरऽइदꣳ सर्वमाह्णायैवैतामरिष्टिꣳ स्वस्तिमाशास्ते ॥ ३ ॥

( स्तु ऽथ ) अथ यदाऽस्मै व्रतं प्रयच्छन्ति । (न्त्यु) अथ व्रते न्युज्य समिधमादधाति न व्रते न्यञ्ज्यादित्यु हैकऽआहुराहुतिं तज्जुहुयादनवक्लृप्तं वै तद्यद्दीक्षितऽआहुतिं जुहुयादिति ॥ ४ ॥

स वै न्यञ्ज्यादेव । दैवो वा ऽअस्यैषऽ आत्मा मानुषोऽयꣳ स यन्न न्यञ्ज्यान्न हैतं दैवमात्मानं प्रीणीयादथ यन्न्यनक्ति तथो हैतं दैवमात्मानं प्रीणाति सा यत्समित्तेन नाहुतिर्यदु व्रते न्यक्ता तेनान्नमन्नꣳ हि व्रतम् ॥ ५ ॥

---

अहोरात्रे वाऽअभिवर्तमाने संवत्सरमाप्नुतः । संवत्सर इदं सर्वम् । आह्नायैवैतामरिष्टिं स्वस्तिमाशास्ते ॥ ३ ॥

अथ यदाऽस्मै व्रतं प्रयच्छन्ति–अथ व्रते न्यज्य समिधमादधाति । न व्रते न्यञ्ज्यादित्यु हैकऽ आहुः । आहुतिं तज्जुहुयात् । अनवक्लृप्तं वै तद्–यद्दीक्षित आहुतिं जुहुयादिति ॥ ४ ॥

स वै न्यञ्ज्यादेव । दैवो वाऽअस्यैष आत्मा, मानुषोऽयम् । स यन्न न्यञ्ज्यात्–न हैतं दैवमात्मानं प्रीणीयात् । अथ यन्न्यनक्ति–तथो हैतं दैवमात्मानं प्रीणाति । सा यत् समित्–तेन नाहुतिः । यदु व्रते न्यक्ता–तेनान्नम् । अन्नं हि व्रतम् ॥ ५ ॥

---

रात्रावहनि च क्रियमाणे समिदाधानभस्मोद्वपने समुच्चित्य प्रशंसति–अहोरात्रे वा अभिवर्त्तमाने संवत्सरमाप्नुत इति । एतस्य सर्वस्य जगतः संवत्सरोपलक्षितकालाधारत्वात् अहोरात्रस्य सर्वजगदात्मकत्वम् । ‘ आह्णाय ’ संवत्सराय । अत्र कात्यायनः–“ उखाया भस्मोद्वपनमस्तमिते पात्रे, वाचं विसृज्य समिदाधानं रात्रीꣳ रात्रीमप्रयावमिति, एवमुदिते भस्मोद्वपनादि, अहरहरित्याधानम् ”–( का. श्रौ. सू. १६।१७०-१७३ ) इति ॥ ३ ॥

व्रतप्रदानकाले व्रतपयसि समिधं न्यज्याधातव्यमिति विधत्ते–अथ यदाऽस्मै व्रतमिति । ‘व्रतं’ तत्साधनं पयः । अत्र केषाञ्चित् पक्षमुदाहृत्य तं निराकृत्य स्वपक्षमुपसंहरति–न व्रते न्यञ्ज्यादित्यु हैक आहुरिति । न्यञ्जनपक्षे दोषमाह–आहुतिं तज्जुहुयादिति । अस्त्वाहुतिः तत् को बाध इत्यत आह–अनवक्लृप्तं वै तदिति । ‘ अनवक्लृप्तम् ’ असमर्थम्, अनधिकृतमित्यर्थः; “ दीक्षितो न जुहोति न ददाति न पचति ” इति निषेधात् ॥ ४ ॥

स्वपक्षे युक्तिमाह–स वै न्यञ्ज्यादेव दैवो वा इत्यादिना । ‘ अस्य ’ यजमानस्य ‘ दैवः ’ देवसम्बन्धी ‘ आत्मा ’ शरीरम् । क इत्याकाङ्क्षायामाह–एष इति । ‘ एषः ’ अग्निरित्यर्थः । उत्तरत्र वैश्वानररूपेण यज-

---

१–न्यज्य समिधं व्रते प्रत्ते प्रत्तेऽग्नपत इत्याधानम् । का० श्रौ० सू० १६ । १७७ ॥

( ७ ) स वै समिधमाधायाथ व्व्रतयति । दैवो वाऽअस्यैषऽ आत्मा मानुषोऽयं देवाऽ उ वाऽअग्रेऽथ मनुष्यास्तस्मात्समिधमाधायाथ व्व्रतयति ६

(त्य)अन्नपतेऽन्नस्य नो देहीति । (त्य)अशनपतेऽशनस्य नो देहीत्येतदन-मीवस्य शुष्मिणऽ इत्यनशनायस्य शुष्मिणऽ इत्येतत्प्रप्र दातारं तारिषऽ इति यजमानो वै दाता प्र यजमानं तारिषऽ इत्येतदूर्जं नो धेहि द्विपदे चतुष्पदऽइत्याशिषमाशास्ते यदु भिन्नायै प्रायश्चित्तिमाहोत्तरस्मिं-स्तदन्वाख्यान ऽइति ॥ ७ ॥

---

स वै समिधमाधायाथ व्रतयति । दैवो वाऽअस्यैष आत्मा, मानुषोऽयम् । देवा उ वाऽअग्रे, अथ मनुष्याः । तस्मात् समिधमाधायाथ व्रतयति ॥ ६ ॥

"अन्नपतेऽन्नस्य नो देहि"—इति । अशनपतेऽशनस्य नो देहीत्येतत् । "अनमीवस्य शुष्मिणः"—इति । अनशनायस्य शुष्मिण इत्येतत् । "प्रप्र दातारं तारिषः"—इति । यज-मानो वै दाता । प्र यजमानं तारिष इत्येतत् । "ऊर्जं नो धेहि द्विपदे चतुष्पदे"—( वा॰ सं॰ ११ । ८३ ) इति । आशिषमाशास्ते । यदु भिन्नायै प्रायश्चित्तिमाह—उत्तरस्मिंस्तदन्वा-ख्यान इति ॥ ७ ॥

---

मानस्योत्पत्तेः 'अयं' पाञ्चभौतिकः आत्मा 'मानुषः,' अतो व्यञ्जने अकृते सति देवतासम्बन्धिनं स्वात्मानं न प्रीणीयात्; व्यञ्जने तु प्रीणात्येव । ननु अनवक्लृप्तिदोष उक्तः, तस्य कः परिहार इति, तत्राह—सा यत् समित् तेन नाहुतिरिति । दैवस्यात्मनः कथं व्रताख्यान्नलाभ इति तत्राह—यदु व्रते व्यक्ता, तेनान्नमिति । ननु पय एव कथमन्नमित्यत आह—अन्नं हि व्रतमिति ॥ ५ ॥

व्रतपरिग्रहस्य समिदाधानानन्तर्यं प्रशंसति—स वै समिधमाधायाथ व्रतयति दैवो वा इति ॥ ६ ॥

तत्र मन्त्रं विधाय विभज्य तात्पर्यमाह—अन्नपतेऽन्नस्य नो देहीत्यशनपतेऽशनस्य नो देहीत्यादिना । 'अमीव'—शब्दो व्याधिवचनः, अत्र बुभुक्षाख्यव्याधिपर इति व्याचष्टे—अनशनायस्य शुष्मिण इत्येत-दिति । चरमपाद आशीःपर इत्याह—आशिषमाशास्त इति । हे 'अन्नपते!' अग्ने! 'अन्नस्य' अन्नं 'देहि' प्रयच्छ 'नः' अस्मभ्यं देहीत्यर्थः । अन्नं विशिनष्टि—अनमीवस्य शुष्मिण इति । पुनरशनेच्छा-रूपो रोगो यस्य नास्ति, तादृशस्य 'शुष्मिणः' बलवतः । उक्तलक्षणमन्नम्, तस्य 'दातारम्' प्रयच्छन्तं 'प्रतारिषः' प्रवर्द्धय । 'नः' अस्माकं 'द्विपदे चतुष्पदे' उभयविधाय प्राणिने 'ऊर्जम्' अन्नं बलं वा 'धेहि' ॥

भिन्नाया उखायाः प्रायश्चित्तं कर्त्तव्यम्, "तदुत्तरस्मिन् अन्वाख्याने"—आख्यानमनु आख्यायत इति 'अन्वाख्यानम्' ब्राह्मणम्, तदेतत् तत्र प्रदर्श्यत इति यत् प्रतिज्ञातम्, ( श॰ प॰ ६ । ५ । २ । २३ ) तदिदानीं प्रदर्श्यत इत्यर्थः ॥ ७ ॥

यद्येषोखा भिद्येत। याऽभिन्ना नवा स्थाल्युरुबिली स्यात्तस्यामेनं पर्य्यावपेदार्च्छति वाऽएषोखा या भिद्यतेऽनार्त्तो वाऽइयं देवताऽनार्त्तायामिममनार्त्तं बिभराणीति तत्रोखायै कपालं पुरस्तात्प्रास्यति तथो हैषऽ एतस्यै स्वायै योनेर्न च्यवते ॥ ८ ॥

( तेऽथ ) अथ मृदमाहृत्य। ( त्यो ) उखां चोपशयां च पिष्ट्वा सꣳसृज्योखां करोत्येतयैवावृताऽनुपहरन्यजुस्तूष्णीमेव पक्त्वा पर्य्यावपति कर्मणिरेव तत्र प्रायश्चित्तिः पुनस्तत्कपालमुखायामुपसमस्योखां चोपशयां च पिष्ट्वा सꣳसृज्य निदधाति प्रायश्चित्तिभ्यः ॥ ९ ॥

---

यद्येषोखा भिद्येत—याऽभिन्ना नवा स्थाल्युरुबिली स्यात्। तस्यामेनं पर्यावपेत्। आर्च्छति वाऽएषोखा या भिद्यते। अनार्तोऽइयं देवता। अनार्तायामिममनार्तं बिभराणीति। तत्रोखायै कपालं पुरस्तात् प्रास्यति। तथो हैष एतस्यै स्वायै योनेर्न च्यवते ॥ ८ ॥

अथ मृदमाहृत्य, उखां चोपशयां च पिष्ट्वा, संसृज्योखां करोति—एतयैवावृता—अनुपहरन् यजुः—तूष्णीमेव पक्त्वा पर्यावपति। कर्मणिरेव तत्र प्रायश्चित्तिः। पुनस्तत्कपालमुखायामुपसमस्य उखां चोपशयां च पिष्ट्वा संसृज्य निदधाति, प्रायश्चित्तिभ्यः ॥ ९ ॥

---

प्रतिज्ञातमर्थं दर्शयति—यद्येषोखा भिद्येतेत्यादिना। 'यदि' प्रमादात् 'एषा उखा' 'भिद्येत' भिन्ना भवेत्, तर्हि अभिन्नायां प्रभूतबिलायां नवस्थाल्याम् 'एनम्' अग्निम् उखागतं 'पर्यावपेत्,' 'एषा' भिन्ना 'उखा' 'आर्च्छति वै' आर्तिम् नाशलक्षणां प्राप्नोति खलु। किं तत इत्यत आह—अनार्त्तो वेति। 'इयम्' अग्न्याख्या देवता 'अनार्ता' आर्त्तिरहितैव खलु। आर्त्तोखाया अनर्हत्वात् अनार्त्तायां स्थाल्याम् 'अनार्त्तम्' अग्निं 'बिभराणि' इत्यभिप्रायेण प्रभूत-बिल—नव—स्थाल्यां पर्यावपनं प्रशस्तम्। अग्नेरनार्तत्वमवान्तरदीक्षाप्रस्तावे प्रागुक्तम् ( श. प. ३। ४। ३।३। क. )। तत्रोखाया इति। भिन्नोखायाः 'कपालं' 'पुरस्तात्' स्थाल्याः पुरोदेशे 'प्रास्यति' प्रक्षिपेत्। 'तथा' सति अयमग्निः स्वस्य या 'योनिः' उत्पत्तिस्थानम्, ततो 'न च्यवते' प्रच्युतो न स्यात् ॥ ८ ॥

किमेतावता प्रायश्चित्तिः स्यात् नेत्याह—अथ मृदमित्यादिना। 'उखां' भिन्नाम्, 'उपशयाम्' उखानिर्माणकाले प्रायश्चित्तार्थमुखासमीपे स्थापितां 'च' 'मृदं' पुनः 'पिष्ट्वा'। 'आवृत्' प्रकारः, एतेन पूर्वोक्तेनैव प्रकारेण। मन्त्रस्यापि प्रसक्तावाह—अनुपहरन् यजुरिति। यजुर्मन्त्रमनुपहरन् पाकोऽपि 'तूष्णीमेव' कर्त्तव्यः। 'पर्यावपति' स्थालीमेतामग्नौ प्रक्षिपेत्। 'कर्मणिरेव' पुनः करणरूपं कर्मैव 'तत्र' उखाभेदे प्रायश्चित्तिः। 'पुनः' 'तत्' उखाकपालं स्थाल्यां स्थापितम् 'उखायामुपसमस्य' तामुखाञ्चोपशयाञ्च शिष्टां 'पिष्ट्वा संसृज्य निदधाति' पुनः प्रायश्चित्तार्थम् ॥ ९ ॥

---

१–उखाभेदने नवस्थाल्यां महामुख्यामुखाकपालं व्यवधायावपति। का० श्रौ० सू० १६। २०७। २–उखोपशये पिष्ट्वा मृदा सहोखां करोत्यावृता। का. श्रौ. सू. १६। २०८। ३–पक्वायामावपति कपालं च। का. श्रौ. सू. १६। २०९॥ ४–उखोपशये पिष्ट्वा संसृज्य निदधाति। का० श्रौ० सू०। १६। २१०।

( भ्युऽथ ) अथ यद्येषऽउख्योऽग्निरनुगच्छेत् । (द्गा) गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि स आहृतो भवति गार्हपत्यादेवैनं प्राञ्चमुद्धृत्योपसमाधायोखां प्रवृञ्ज्यादेतयैवावृताऽनुपहरन्यजुस्तूष्णीमेव तां यदाऽग्निरारोहति ॥ १० ॥

(त्यु) अथ प्रायश्चित्ती करोति । सर्व्वेभ्यो वाऽएषऽएतं कामेभ्यऽआधत्ते तद्यदेवास्यात्र कामानां व्यवच्छिद्यतेऽग्नावनुगते तदेवैतत्सन्तनोति सन्दधात्युभे प्रायश्चित्ती करोत्यध्वरप्रायश्चित्तिं चाग्निप्रायश्चित्तिं चाध्वरस्य पूर्व्वामथाग्नेस्तस्योक्तो बन्धुः ॥ ११ ॥

---

अथ यद्येष उख्योऽग्निरनुगच्छेत्—गार्हपत्यं वाव स गच्छति । गार्हपत्याद्धि स आहृतो भवति । गार्हपत्यादेवैनं प्राञ्चमुद्धृत्योपसमाधायोखां प्रवृञ्ज्यात्—एतयैवावृता—अनुपहरन् यजुः—तूष्णीमेव । तां यदाऽग्निरारोहति ॥ १० ॥

अथ प्रायश्चित्ती करोति । सर्वेभ्यो वाऽएष एतं कामेभ्य आधत्ते । तद्यदेवास्यात्र कामानां व्यवच्छिद्यते—अग्नावनुगते तदेवैतत् सन्तनोति, सन्दधाति । उभे प्रायश्चित्ती करोति—अध्वरप्रायश्चित्तिं च, अग्निप्रायश्चित्तिं च । अध्वरस्य पूर्वाम्—अथाऽग्नेः । तस्योक्तो बन्धुः ॥ ११ ॥

---

उख्याग्न्यनुगमने प्रायश्चित्तमाह—अथ यद्येष उख्योऽग्निरिति । गार्हपत्यमेव सोऽनुगत उख्योऽग्निः गच्छति; गार्हपत्यादाहृतस्य आहवनीयस्य ज्वालारूपेणोख्याग्नित्वेनोत्पन्नत्वात् । एतदेवाह—गार्हपत्याद्धीति । यत एवम्, अतो 'गार्हपत्यादेव' 'एनम्' अग्निम् 'प्राञ्चम्' 'उद्धृत्य,' 'उपसमाधाय' पुनः 'उखां' 'प्रवृञ्ज्यात्'। 'एतया एव आवृता' पूर्वोक्तोखाप्रवृञ्जनप्रकारेण अत्रापि 'अनुपहरन् यजुः'। तर्हि कथम्? 'तूष्णीमेव' 'ताम्' उखाम् प्रवृञ्ज्यादिति शेषः। प्रायश्चित्ताहुतेः उखाप्रवृञ्जनानन्तरत्वमाह—यदाऽग्निरारोहतीति ॥ १० ॥

अथ प्रायश्चित्ती करोतीति । "उभे प्रायश्चित्ती करोति" इति वक्ष्यमाणेन प्रायश्चित्तेन प्रायश्चित्तद्वयं कुर्यादित्यर्थः । उख्याग्नेः सौमिकाग्निकोभयसाधारणत्वाद् विहितं प्रायश्चित्तं सर्वकामसन्तानरूपत्वेन स्तौति—सर्वेभ्यो वा एष एतमिति । सर्वकामाभिवृद्ध्यर्थमग्नेराहितत्वात् तदनुगमे सति यदेवाङ्ग कामानां सम्बन्धि व्यवच्छिद्यते, 'तत्' एतेन प्रकारेण सन्ततं व्यवच्छिन्नं करोति । कोऽर्थः ? 'सन्दधाति' इत्यर्थः ॥ उभयविधं प्रायश्चित्तं कर्त्तव्यमित्याह—उभे प्रायश्चित्ती करोतीति । प्रकारविशेषञ्च दर्शयति—अध्वरस्य पूर्वामथाग्नेरिति । 'तस्य' अर्थवादात्मको 'बन्धुरुक्तः'—"उपायि ह्येतत् कर्म, यदग्निकर्म" इत्यनेनोक्त इत्यर्थः । (श. प. ६।६।१।४) ॥ ११ ॥

---

१—प्रवृञ्ज्यादावृतोख्ये । का. श्रौ. सू. १६ । २०५ । २—अध्वरप्रायश्चित्तिं च सर्व्वेषु यथाकालं पूर्वां पूर्वाम् । का. श्रौ. सू. १६ । २०६ ।

स समिधाऽऽज्यस्योपहत्य । (त्या)आसीनऽ आहुतिं जुहोति विश्वकर्मणे स्वाहेत्यथोपोत्थाय समिधमादधाति पुनस्त्वाऽऽदित्या रुद्रा व्वसवः समिन्धतां पुनर्ब्रह्माणो व्वसुनीथ यज्ञैरित्येतास्त्वा देवताः पुनः समिन्धतामित्येतद्घृतेन त्वं तन्वं व्वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाऽ इति घृतेनाह त्वं तन्वं व्वर्द्धयस्व येभ्यऽ उ त्वां कामेभ्यो यजमानऽ आधत्त तेऽस्य सर्वे सत्याः सन्त्वित्येतत् ॥ १२ ॥

( ड ) अथ यदि गार्हपत्योऽनुगच्छेत् । ( द ) अरणी व्वाव स गच्छत्यरणिभ्याᳬ हि सऽ आहृतो भवत्यरणिभ्यामेवैनं मथित्वोपसमाधाय प्रायश्चित्ती करोति ॥ १३ ॥

---

स समिधाऽऽज्यस्योपहत्य, आसीन आहुतिं जुहोति—"विश्वकर्मणे स्वाहा"—इति । अथोपोत्थाय समिधमादधाति—"पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धताम् । पुनर्ब्रह्माणो वसुनीथ यज्ञैः"—इति । एतास्त्वा देवताः पुनः समिन्धतामित्येतत् । "घृतेन त्वं तन्वं वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः"—( वा०सं० १२।४४ ) इति । घृतेनाह त्वं तन्वं वर्द्धयस्व—येभ्य उ त्वां कामेभ्यो यजमान आधत्त—तेऽस्य सर्वे सत्याः सन्त्वित्येतत् ॥ १२ ॥

अथ यदि गार्हपत्योऽनुगच्छेत् । अरणी वाव स गच्छति । अरणिभ्यां हि स आहृतो भवति । अरणिभ्यामेवैनं मथित्वोपसमाधाय प्रायश्चित्ती करोति ॥ १३ ॥

---

तत्र ह्याग्निकप्रायश्चित्तस्य प्रकारविशेषं मन्त्रविशेषं च दर्शयति—स समिधाऽऽज्यस्योपहत्येत्यादिना । पूर्वत्र समिदाधाने तिष्ठन्नित्युक्तत्वात् ( श. प. ६।६।३।१७ कं. ) अत्रापि तथात्वप्रसक्तावाह—आसीन इति । आज्यं समिधा आदाय जुहुयादित्यर्थः । तत्र मन्त्रं दर्शयति—विश्वकर्मणे स्वाहेतीति । आज्याहुत्यनन्तरं तत् समिदाधानं समन्त्रकमाह—अथोपोत्थाय समिधामिति । आज्यहोमस्यासीनत्वाभिधानादुपोत्थायेत्युक्तम् ॥

मन्त्रस्यायमर्थः,—हे अग्ने ! 'त्वा' त्वाम् आदित्यादयः 'पुनः' 'समिन्धताम्' दीपयन्तु तथा 'ब्रह्माणः' ब्राह्मणाः ऋत्विगादयः 'समिन्धताम्' । हे 'वसुनीथ' नीथेति वाङ्नाम वस्वर्थस्तुत ! यद्वा वस्वर्थं गमयन् । 'यज्ञैः' निमित्तभूतैः 'समिन्धताम्' । 'त्वं' च 'घृतेन' 'तन्वं' तनुं 'वर्द्धयस्व' । 'यजमानस्य कामाः' 'सत्याः' अवितथाः 'सन्तु' । एतास्त्वा देवता इति । पूर्वार्द्धतात्पर्यप्रदर्शनब्राह्मणं स्पष्टम् । उत्तरार्द्धमनूद्य व्याचष्टे—येभ्य उ त्वामिति । 'येभ्यः' 'कामेभ्यः' निमित्तभूतेभ्यः 'यजमान आधत्त', 'ते सर्वे' अपि कामाः, 'सत्याः सन्तु' इति । आधानस्य सर्वकामनिमित्तत्वात् तस्य कृतत्वात् कामैरपि सत्यैर्भवितव्यमित्येतत् उत्तरार्द्धेनोक्तमित्यर्थः ॥ १२ ॥

उख्यस्यानुगमप्रसङ्गात् तदाश्रयभूतगार्हपत्यस्याप्यनुगमे प्रायश्चित्तमाह- अथ यदि गार्हपत्य इति । अरणीभ्यामग्निमुत्पाद्य गार्हपत्ये उपसमाधाय आध्वरिकाग्निकोभयप्रायश्चित्ते कुर्यात् ॥ १३ ॥

---

१–प्रायश्चित्ति[२]समिधोपहत्याज्यं विश्वकर्मणे इति जुहोति । का० श्रौ० सू० १६ । २०० । २–उत्थायादधाति समिधं पुनस्त्वेति । का. श्रौ. सू. १६ । २०१ । ३–गार्हपत्ये गते निर्मथ्य । का. श्रौ. सू. १६ । २०२ ।

( त्यु ) अथ यदि प्रसुतऽआहवनीयोऽनुगच्छेत् । ( द्गा ) गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि सऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चᳬं साङ्काशिनेन हृत्वोपसमाधाय प्रायश्चित्ती करोति यस्तस्मिन्कालेऽध्वरः स्यात्तामध्वरप्रायश्चित्तिं कुर्यात्समान्यग्निप्रायश्चित्तिः ॥ १४ ॥

( रु ) अथ यद्याग्नीध्रीयोऽनुगच्छेत् । ( द्गा ) गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि सऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चमुत्तरेण सदो हृत्वोपसमाधाय प्रायश्चित्ती करोत्यथ यदि गार्हपत्योऽनुगच्छेत्तस्योक्तो बन्धुः ॥ १५ ॥

इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ ६–४–६ ॥ ( ६. ४. ) ॥

इति चतुर्थः प्रपाठकः समाप्तः ॥ ( कण्डिकासङ्ख्या १०० )

इति षष्ठोऽध्यायश्च समाप्तः ॥ ६–६ ॥

---

अथ यदि प्रसुत आहवनीयोऽनुगच्छेत्–गार्हपत्यं वाव स गच्छति । गार्हपत्याद्धि स आहृतो भवति । गार्हपत्यादेवैनं प्राञ्चं साङ्काशिनेन हृत्वोपसमाधाय प्रायश्चित्ती करोति–यस्तस्मिन्कालेऽध्वरः स्यात्–तामध्वरप्रायश्चित्तिं कुर्यात्, समान्यग्निप्रायश्चित्तिः ॥ १४ ॥

अथ यद्याग्नीध्रीयोऽनुगच्छेत्–गार्हपत्यं वाव स गच्छति । गार्हपत्याद्धि स आहृतो भवति । गार्हपत्यादेवैनं प्राञ्चमुत्तरेण सदो हृत्वोपसमाधाय प्रायश्चित्ती करोति । अथ यदि गार्हपत्योऽनुगच्छेत्–तस्योक्तो बन्धुः ॥ १५ ॥

---

सुत्यादिने आहवनीयानुगतौ प्रायश्चित्तमाह–अथ यदि प्रसुत आहवनीय इति । साङ्काशिनेन हृत्वेति। साङ्काशिनं नाम शालामुखीयमारभ्य सदोहविर्धानमध्यगतपूर्व्यरज्जुमवलम्ब्योत्तरदिक्पर्यन्तः प्रागायतरज्जुमार्गः । स्पष्टमन्यत् ॥

प्रायश्चित्ती करोतीति । सर्वत्र प्रायश्चित्तद्वयमभिहितम्, तयोर्व्यवस्थामाह–यस्तस्मिन् कालेऽध्वरः स्यादिति । तत्कालानुरूपां प्रायश्चित्तिमध्वरप्रायश्चित्तिम्, सौमिकीमित्यर्थः ।

समान्यग्निप्रायश्चित्तिरिति । 'समानी' एकरूपैव आग्निकी प्रायश्चित्तिः। स समिधाऽऽज्यस्योपहत्येत्याद्युक्ता च । अयमर्थः,–सर्वत्रानुगमे अध्वरप्रयोगवेलायां तत्तत्कालचोदितां प्रायश्चित्तिं कुर्यात्, अग्निप्रयोगवेलायामुक्तामेकरूपामेव आग्निकीं कुर्यादिति ॥ १४ ॥

अथ यद्याग्नीध्रीय इत्यादि । अग्नीध्रमण्डपे भवः 'आग्नीध्रीयः' । तस्यापि गार्हपत्यादेव प्रततत्वात् अनुगतोऽग्निः तत्रैव प्रविष्टो भवति, अतः ' गार्हपत्यात् एव ' ' एनम् ' अग्निम् ' प्राञ्चम् ' ' उत्तरेण ' सदः सदस

---

१–सुत्याहवनीये सांकाशिनेन हृत्वा । का. श्रौ. सू. १६ । २०३ ।

उत्तरदेशतो ' हृत्वा ' आग्नीध्रे ' उपसमाधाय ' तत्कर्मोचितां प्रायश्चित्तिं कुर्यात् । सुत्यादिने गार्हपत्यानुगम-प्रायश्चित्तमाह—अथ यदि गार्हपत्योऽनुगच्छेत् तस्योक्तो बन्धुरिति । " अरणी वाव स गच्छति " ( श. प. ६ । ६ । ४ । १३ ) इत्यादिनोक्त इत्यर्थः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे षष्ठेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ६-६-४ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,  
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।  
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,  
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥  
धान्याद्रिं धन्यजन्मा तिलभवममतुलः स्वर्णजं वर्णमुख्यः,  
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।  
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,  
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये षष्ठकाण्डे षष्ठाध्यायः समाप्तः ॥ ६-६ ॥

---

१—आग्नीध्रीयमुत्तरेण सदः । का. श्रौ सू. १६ । २०४ । २—अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वां पूर्वाम् । का. श्रौ. सू. १६ । २०६ ।

# अथ सप्तमाऽध्याये प्रथमं ब्राह्मणम् ।

## पञ्चमप्रपाठके च प्रथमं ब्राह्मणम् ।

**रुक्मं प्रतिमुच्य बिभर्त्ति । सत्यꣳ हैतद्यद्रुक्मः सत्यं वा ऽएतं यन्तुमर्हति सत्येनैतं देवाऽ अबिभरुः सत्येनैवैनमेतद्विभर्त्ति ॥ १ ॥**

**तद्यत्तत्सत्यम् । ( म ) असौ सऽ आदित्यः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरेषोऽमृतꣳ हिरण्यममृतमेष परिमण्डलो भवति परिमण्डलो ह्येषऽ एकविꣳशतिनिर्बाध एकविꣳशो ह्येष बहिष्टान्निर्बाधं बिभर्त्ति रश्मयो वाऽएतस्य निर्बाधा बाह्यतऽ उ वाऽएतस्य रश्मयः ॥ २ ॥**

---

रुक्मं प्रतिमुच्य बिभर्त्ति । सत्यं हैतद्-यद्रुक्मः । सत्यं वाऽएतं यन्तुमर्हति । सत्येनैतं देवा अबिभरुः । सत्येनैवैनमेतद्बिभर्त्ति ॥ १ ॥

तद्यत्तत्सत्यम्-असौ स आदित्यः । स हिरण्मयो भवति । ज्योतिर्वै हिरण्यम्-ज्योतिरेषः । अमृतं हिरण्यम्-अमृतमेषः । परिमण्डलो भवति-परिमण्डलो ह्येषः । एकविंशतिनिर्बाधः-एकविंशो ह्येषः । बहिष्टान्निर्बाधं बिभर्त्ति-रश्मयो वाऽएतस्य निर्बाधाः । बाह्यत उ वाऽएतस्य रश्मयः ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

यदुक्तं कात्यायनेन—" यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्योतमुपरिनाभि बहिष्पिण्डं दशानो रुक्म इति "–( का. श्रौ सू. १६।१४६ ) इति । तदिदं वक्तुमादौ रुक्मप्रतिमोकं विधत्ते—रुक्मं प्रतिमुच्य बिभर्तीति । यजमानो रुक्मं सुवर्णमयमाभरणं कण्ठे बध्वा उखां धारयेत् । विहितं रुक्मप्रतिमोचनपूर्वकं धारणं प्रशंसति—सत्यं हैतद् यद् रुक्म इति । अत्यन्ताग्निसंयोगेऽपि नाशादर्शनात् रुक्मस्य सत्यत्वम् । ' एतम् ' अग्निं ' यन्तुं ' नियन्तुं ' सत्यम् ' एव ' अर्हति ' । 'देवाः' ' सत्येन ' सत्यमाश्रयं कृत्वा ' अबिभरुः ' भरणमकुर्वन् ॥ १ ॥

एतत् रुक्माख्यं सत्यम् आदित्यात्मना प्रशंसति—तद्यत्तत्सत्यमसौ स आदित्य इति । रुक्मस्य सुवर्णमयतां विधाय प्रशंसति—स हिरण्मयो भवतीति । हिरण्यस्य भास्वररूपत्वात् ज्योतीरूपत्वम्, तदेव ' अमृतम् ' अविनाशि, ' एषः ' रुक्मः परिमण्डलः ' वर्तुलः भवति । तत्रोपपत्तिः—परिमण्डलो ह्येष इति । 'एषः' आदित्यः । एकविंशतिनिर्बाधः इति । 'बाधाः' बिलसहिताः पुलकाः । धारणसमये निर्बाधाः यथा बाह्या भवन्ति, तथा धारयेत् । निर्बाधस्य बहिर्भावं प्रशंसति—रश्मयो वा एतस्य निर्बाधा इति । ' एतस्य ' आदित्यात्मकस्य रुक्मस्य ॥ २ ॥

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । ( तयं ) असौ वाऽआदित्य ऽएष रुक्मो नो हैतमग्निं मनुष्यो मनुष्यरूपेण यन्तुमर्हत्येतेनैव रूपेणैतद्रूपं बिभर्त्ति॥३॥

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । रेतो वाऽइदꣳ सिक्तमयमग्निस्तेजो व्वीर्यꣳ रुक्मोऽस्मिंस्तद्रेतसि तेजो व्वीर्यं दधाति ॥ ४ ॥

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । ( तयं ) एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्माऽएतमन्तिकाद्गोप्तारमकुर्वन्न-मुमेवादित्यमसौ वाऽआदित्यऽएष रुक्मस्तथैवास्मा ऽअयमेतमन्तिकाद्गो-प्तारं करोति ॥ ५ ॥

कृष्णाजिने निष्यूतो भवति । यज्ञो वै कृष्णाजिनं यज्ञो वाऽएतं यन्तु-मर्हति यज्ञेनैतं देवाऽअबिभरुर्यज्ञेनैवैतमेतद्बिभर्ति लोमतश्छन्दाꣳसि वै

---

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । असौ वा ऽआदित्य एष रुक्मः । नो हैतमग्निं मनुष्यो मनुष्य-रूपेण यन्तुमर्हति । एतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥ ३ ॥

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । रेतो वाऽइदं सिक्तम् । अयमग्निः । तेजो वीर्यं रुक्मः । अस्मिंस्त-द्रेतसि तेजो वीर्यं दधाति ॥ ४ ॥

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । एतद्वै देवा अबिभयुः—यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्यु-रिति । तस्मा एतमन्तिकाद्गोप्तारमकुर्वन्—अमुमेवादित्यम् । असौ वाऽआदित्य एष रुक्मः । तथै-वास्मा अयमेतमन्तिकाद्गोप्तारं करोति ॥ ५ ॥

कृष्णाजिने निष्यूतो भवति । यज्ञो वै कृष्णाजिनम् । यज्ञो वाऽएतं यन्तुमर्हति । यज्ञेनैतं देवा

---

रुक्मधारणं प्रशंसति—यद्वेव रुक्मं प्रतिमुच्येति । मानुषेण रूपेण अग्नेर्धारणस्यानुचितत्वात् ' एतेन ' रुक्माख्येन आदित्येन ' रूपेण ' ' एतत् ' अग्न्यात्मकं ' रूपं ' ' बिभर्त्ति ॥ ३ ॥

पुनः प्रकारान्तरेण प्रशंसति—यद्वेव रुक्मं प्रतिमुच्येति । अस्याग्नेः रेतःसेकस्थानीयत्वमुक्तं प्राक्, रुक्मश्च तेजोरूपं वीर्यम् । तथा सति अग्ने रुक्मसंयोजनेन रेतस्यग्न्याख्ये ' तेजः ' वीर्यमेव स्थापितवान् भवति ॥ ४ ॥

पुनरप्यग्ने रुक्मसंयोगमग्नेर्गोप्तृत्वरूपेण प्रशंसति—यद्वेव रुक्मं प्रतिमुच्य बिभर्तीति । पुरा ' देवाः ' ' इमम् ' अग्निम् ' नाष्ट्रा ' नाशकानि ' रक्षांसि ' ' यद्वै ' येनैव प्रकारेण ' न हन्युः ' ' एतत् ' एतेन विषयभूतेन ' अबिभयुः ' । भीतिपरिहारोपायं दर्शयति—तस्मा एतमन्तिकादिति । ' तस्मै ' अग्नये ' एतम् ' आदित्यम् । एतच्छब्दार्थमाह—अमुमेवादित्यमिति । तर्हि मानुषैः कथं गोप्तारं कर्तुं शक्यत इति, तत्राह—असौ वा आदित्य एष रुक्म इति ॥ ५ ॥

कृष्णाजिने निष्यूतो भवतीति । नितरां स्यूतः सम्बद्धः भवति । यथा कृष्णाजिनस्योपरि वर्त्तेत, तथा

लोमानि च्छन्दाꣳसि वाऽएतं यन्तुमर्हन्ति च्छन्दोभिरेतं देवाऽ अबिभरु-श्छन्दोभिरेवैनमेतद्बिभर्त्ति ॥ ६ ॥

(त्य) अभि शुक्लानि च कृष्णानि च लोमानि निष्ठ्यूतो भवति । (त्स्म) ऋक्सामयोर्हैते रूपेऽऋक्सामे वाऽएतं यन्तुमर्हत ऽऋक्सामाभ्यामेतं देवा ऽअबिभरुर्ऋक्सामाभ्यामेवैनमेतद्बिभर्त्ति शाणो रुक्मपाशस्त्रिवृत्तस्योक्तो बन्धुः ॥ ७ ॥ ( शतम् ३८०० ॥ )

( स्तु ) तमुपरिनाभि बिभर्त्ति । ( त्यं ) असौ वाऽआदित्य ऽएष रुक्म ऽउपरिनाभ्यु वाऽएषः ॥ ८ ॥

---

अबिभरुः । यज्ञेनैवैतमेतद्बिभर्ति । लोमतः । छन्दांसि वै लोमानि । छन्दांसि वाऽएतं यन्तुमर्हन्ति । छन्दोभिरेतं देवा अबिभरुः । छन्दोभिरेवैनमेतद्बिभर्ति ॥ ६ ॥

अभि शुक्लानि च कृष्णानि च लोमानि निष्ठ्यूतो भवति । ऋक्सामयोर्हैते रूपे । ऋक्सामे वाऽएतं यन्तुमर्हतः। ऋक्सामाभ्यामेतं देवा अबिभरुः । ऋक्सामाभ्यामेवैनमेतद्बिभर्ति । शाणो रुक्मपाशस्त्रिवृत् । तस्योक्तो बन्धुः॥ ७॥

तमुपरिनाभि बिभर्ति । असौ वाऽआदित्य एष रुक्मः । उपरिनाभ्यु वा ऽएषः ॥ ८ ॥

---

कुर्यादित्यर्थः । यज्ञो वै कृष्णाजिनमिति । यज्ञसाधनहविराधारत्वाद् यज्ञ इत्युच्यते । शिष्टं गतप्रायम् । निष्ठीवनमपि 'लोमतः' लोमप्रदेशे कर्त्तव्यम् । कृष्णाजिनस्य यज्ञत्वविधानात् तल्लोम्नां यज्ञावयवच्छन्दोरूपत्वं युक्तम् । गतमन्यत् ॥ ६ ॥

तत्रापि शुक्लकृष्णलोमरेखयोरुपरि निष्ठ्यूतेन भवितव्यमिति दर्शयति—अभि शुक्लानि च कृष्णानि च लोमानि निष्ठ्यूतो भवतीति । उभयविधानां लोम्नाम् 'अभि' उपरि । ऋक्सामयोर्हैते रूपे इति । 'ह'—शब्दः "ऋक्सामयोः शिल्पे"—इत्यादि ( वा. सं. ४ । ९ ) मन्त्रप्रसिद्धिद्योतनार्थः । गतमन्यत् । शाणो रुक्मपाशस्त्रिवृदिति । रुक्मसम्बन्धनरज्जुः 'शाणः' शणतृणनिर्मितः, 'त्रिवृत्' त्रिगुणितः । तस्योक्तो बन्धुरिति । शणार्थवादः—"शणकुलायमन्तरं भवति" ( श. प. ६।६।१।२४ ) इत्यत्रोक्तः । त्रिवृदर्थवादस्तु "त्रिवृदग्निः" इत्यादिनोक्तः ( श. प. ६ । १ । १ । १४ । ) ॥ ७ ॥

रुक्मधारणप्रदेशं विधाय प्रशंसति—तमुपरिनाभि बिभर्त्त्यसौ वा आदित्य इति । उपरिनाभ्यु वा एष इति । 'एष' आदित्यः 'उपरिनाभि' नाभेरुपरि प्रदेशे; तत्र मध्ये ध्येयत्वात्, रक्तवर्णनाभेरुपरि वर्त्त-मानत्वाद् वा, जाठरवह्न्यात्मकस्य तस्य नाभेरुपरि वर्त्तमानत्वाद् वा ॥ ८ ॥

( ष शु ) यद्धेवोपरिनाभि । ( भ्यु ) अवाग्वै नाभे रेतःप्रजातिस्तेजो व्वीर्यꣳ रुक्मो नेन्मे रेतःप्रजातिं तेजो व्वीर्यꣳ रुक्मः प्रदहादिति ॥ ९ ॥

यद्धेवोपरिनाभि । ( भ्ये ) एतद्धै पशोर्मेध्यतरं यदुपरिनाभि पुरीषसꣳहिततरं यदवाङ्नाभेस्तद्यदेव पशोर्मेध्यतरं तेनैनमेतद्बिभर्त्ति ॥ १० ॥

यद्धेवोपरिनाभि । यद्धै प्राणस्यामृतमूर्द्ध्वं तन्नाभेरूर्ध्वैः प्राणैरुच्चरत्यथ यन्मर्त्यं पराक्तन्नाभिमत्येति तद्यदेव प्राणस्यामृतं तदेनमेतदभि सम्पादयति तेनैनमेतद्बिभर्त्ति ॥ ११ ॥

( र्त्यु ) अथैनमासन्द्या बिभर्त्ति । ( र्त्तीं ) इयं वा ऽआसन्द्यस्याꣳ हीदꣳ

---

यद्धेवोपरिनाभि । अवाग्वै नाभेः रेतःप्रजातिः तेजो वीर्यं रुक्मः । नेन्मे रेतःप्रजातिं तेजो वीर्यं रुक्मः प्रदहादिति ॥ ९ ॥

यद्धेवोपरिनाभि । एतद्धै पशोर्मेध्यतरम्—यदुपरिनाभि । पुरीषसंहिततरम्—यदवाङ्नाभेः । तद् यदेव पशोर्मेध्यतरं तेनैनमेतद्बिभर्ति ॥ १० ॥

यद्धेवोपरिनाभि । यद्धै प्राणस्यामृतम् । ऊर्ध्वं तत् नाभेरूर्ध्वैः प्राणैरुच्चरति । अथ यन्मर्त्यम् । पराक्तन्नाभिमत्येति । तद् यदेव प्राणस्यामृतम्—तदेनमेतदभि सम्पादयति । तैनेनमेतद्बिभर्त्ति ॥ ११ ॥

अथैनमासन्द्या बिभर्ति । इयं वाऽआसन्दी । अस्यां हीदं सर्वमासन्नम् । इयं वाऽएतं यन्तुमर्हति । अनयैतं देवा अबिभरुः । अनयैवैनमेतद्बिभर्ति ॥ १२ ॥

---

उक्तमुपरिनाभित्वं बहुधा प्रशंसति—यद्धेवोपरिनाभ्यवाग् वै नाभेरित्यादिना । रेतसः 'प्रजातिः' उत्पत्तिः नाभेरवाक् प्रदेशे खलु, अतः 'तेजोवीर्यरूपः रुक्मः' तां 'प्रजातिं' प्रदहेत्, ततः 'नेत्' नैवेष्टम् । "नेत्येष इदित्यनेन सम्प्रयुज्यते परिभये" इति ( या. नि. १।३।९ ) निरुक्तम् ॥ ९ ॥

प्रकारान्तरेण प्रशंसति—यद्धेवोपरिनाभीति । 'एतद्धै पशोर्मेध्यतरं' यन्नाभेरुपरिष्टाद् वर्त्तमानं हृदयादिकम् 'नाभेः' 'अवाग्' अर्वाग्देशे 'यत्' 'अङ्गम्', 'तत्' 'पुरीषसंहिततरम्' अत्यन्तं पुरीषेण सहितम् । तद्यदेवेत्यादि, स्पष्टम् ॥ १० ॥

उपरिधारणममृतस्योपरिधारणतया प्रशंसन् गतिभेदेन मृतामृतविभागमाह—यद्धेवोपरिनाभि यद्धै प्राणस्येति । प्राणस्य द्वावंशौ, अमृतांशो मृतांशश्च, तत्रामृताख्यो योंऽशोऽस्ति नाभेरूर्ध्वप्रदेशे, सः 'ऊर्ध्वैः प्राणैः' 'उच्चरति' उद्गच्छति; यः मर्त्योंऽशः स नाभेः 'पराक्' अर्वाङ्मुखः सन् 'नाभिम्' 'अत्येति' अतिगच्छति । विभागप्रदर्शनप्रयोजनमाह—तद् यदेवेति । 'तत्' 'प्राणस्य' 'अमृतम्' अंशम् 'एनम् अभि' आयुष्याग्नेरुपरि 'सम्पादयति' । 'एतत्' एतेन, नाभेरुपरि सम्पादनेन 'एनम्' अग्निम् 'तेन' अमृतेन 'बिभर्ति' ॥ ११ ॥

उखाग्ने रुक्मस्योपरि धारणं विधाय तत्राप्यासन्द्यां धारणं कर्त्तव्यमित्याह—अथैनमासन्द्यामिति[1] । आसन्दी-

---

१—इन्द्रवंशिक्यासंदीषु मुंजरज्जवस्त्रिव्यूतो मृद्दिग्धाः । का. श्रौ. सू. १६ । १४७ ।

सर्वमासन्नमियं वाऽएतं यन्तुमर्हत्यनयैतं देवा ऽअबिभरुरनयैवैनमेतद्बिभर्त्ति ॥ १२ ॥

(त्र्यौं) औदुम्बरी भवति। (त्यू) ऊर्ग्वै रसऽ उदुम्बर ऽऊर्जैवैनमेतद्रसेन बिभर्त्त्यथो सर्व्वऽएते व्वनस्पतयो यदुदुम्बरः सर्व्वे वाऽएतं व्वनस्पतयो यन्तुमर्हन्ति सर्व्वैरेतं व्वनस्पतिभिर्देवाऽ अबिभरुः सर्वैरेवैनमेतद्वनस्पतिभिर्बिभर्त्ति ॥ १३ ॥

प्रादेशमात्र्यूर्ध्वा भवति। प्रादेशमात्रो वै गर्भो व्विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोत्यरत्निमात्री तिरश्ची बाहुर्वाऽअरत्निर्बाहुना वै व्वीर्यं क्रियते व्वीर्यसम्मितैव तद्भवति व्वीर्यं वा ऽएतं यन्तुमर्हति व्वीर्येणैतं देवाऽअबिभरुर्व्वीर्येणैवैनमेतद्बिभर्त्ति ॥ १४ ॥

चतुःस्रक्तयः पादा भवन्ति। चतुःस्रक्तीन्यनूच्यानि चतस्रो वै दिशो

---

औदुम्बरी भवति। ऊर्ग्वै रस उदुम्बरः। ऊर्जैवैनमेतद्रसेन बिभर्ति। अथो सर्वऽएते वनस्पतयः—यदुदुम्बरः। सर्वे वाऽएतं वनस्पतयो यन्तुमर्हन्ति। सर्वैरेतं वनस्पतिभिर्देवा अबिभरुः। सर्वैरेवैनमेतद्वनस्पतिभिर्बिभर्ति ॥ १३ ॥

प्रादेशमात्र्यूर्ध्वा भवति। प्रादेशमात्रो वै गर्भो विष्णुः योनिरेषा। गर्भसम्मितां तद् योनिं करोति। अरत्निमात्री तिरश्ची। बाहुर्वाऽअरत्निः। बाहुना वै वीर्यं क्रियते। वीर्यसम्मितैव तद्भवति। वीर्यं वाऽएतं यन्तुमर्हति। वीर्येणैतं देवा अबिभरुः। वीर्येणैवैनमेतद् बिभर्त्ति ॥ १४ ॥

चतुःस्रक्तयः पादा भवन्ति। चतुःस्रक्तीन्यनूच्यानि। चतस्रो वै दिशः। दिशो वाऽएतं यन्तु

---

प्रवृत्तिनिमित्तं पृथिव्यां सम्पादयन् तदात्मकत्वसम्पादनद्वारेण प्रशंसति—इयं वा आसन्दीति। आसीदत्यत्राग्निरित्यासन्दी, इयं पृथिव्यपि सर्वस्यापि पदार्थस्यासदनयोग्यत्वात् आसन्दी; तथा च सति अस्यामेव भृतवान् भवतीत्यर्थः। इयं वा एतं यन्तुमित्यादि पूर्ववत् ॥ १२ ॥

आसन्द्या औदुम्बरत्वं विधाय प्रशंसति—औदुम्बरी भवति, ऊर्ग्वै रस इति। ऊर्ग्रूपत्वं सर्ववनस्पत्यात्मकत्वं च उख्यसमिदाधानप्रस्तावे प्रागुक्तम् (श. प. ६।६।३।२)। सर्वे वा इत्यादि, पूर्ववत् ॥ १३ ॥

ऊर्ध्वप्रमाणं विधाय स्तौति—प्रादेशमात्रीति। गर्भरूपिणो यज्ञस्य विष्णोरेषा आसन्दी अपि तदाधारभूता, अतः प्रादेशप्रमाणां 'योनिं' 'गर्भसंमितां' गर्भसमपरिमाणां 'करोति'। तिर्यक्प्रमाणमाह—अरत्निमात्रीति। तिरश्चीति। द्विप्रादेशोऽरत्निः, द्वयोररत्न्योर्बाहुः। किं ततः इत्याह—बाहुना वै वीर्यं क्रियत इति। 'बाहुना उ' बाहुनैव। 'तत्' तस्मात् 'वीर्यसम्मिता' 'भवति' प्रहारसमये तथा दर्शनात् ॥ १४ ॥

चतुःस्रक्त्य इति। 'पादाः' चत्वारोऽपि 'चतुःस्रक्तयः' स्रक्तिचतुष्टयोपेताः स्युः, 'अनूच्यानि'

दिशो वाऽएतं भुर्तुमर्हन्ति दिग्भिरेतं देवाऽअबिभरुर्दिग्भिरेवैनमेतद्विभर्त्ति मौञ्जीभी रज्जुभिर्व्युता भवति त्रिवृद्भिस्तस्योक्तो बन्धुर्मृदा दिग्धा तस्यो ऽएवोक्तोऽथोऽअनतिदाहाय ॥ १९ ॥

( थ्रा ) अथैनॅ शिक्येन बिभर्त्ति । ( र्त्ती ) इमे वै लोकाऽ एषोऽग्निर्दिशः शिक्यं दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातुं यच्छक्नुवन्ति तस्माच्छिक्यं दिग्भिरेवैनमेतद्विभर्त्ति षडुद्यामं भवति षड्ढि दिशो मौञ्जं त्रिवृत्तस्योक्तो बन्धुर्मृदा दिग्धं तस्योऽएवोक्तोऽथो ऽअनतिदाहाय ॥ १६ ॥

---

मर्हन्ति । दिग्भिरेतं देवा अबिभरुः । दिग्भिरेवैनमेतद्विभर्ति । मौञ्जीभी रज्जुभिर्व्युता भवति त्रिवृद्भिः। तस्योक्तो बन्धुः । मृदा दिग्धा । तस्योऽएवोक्तः । अथोऽअनतिदाहाय ॥ १९ ॥

अथैनं शिक्येन बिभर्ति । इमे वै लोका एषोऽग्निः, दिशः शिक्यम् । दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातुम् । यच्छक्नुवन्ति—तस्माच्छिक्यम् । दिग्भिरेवैनमेतद्विभर्ति । षडुद्यामं भवति । षड्ढि दिशः । मौञ्जं त्रिवृत् । तस्योक्तो बन्धुः । मृदा दिग्धम् । तस्योऽएवोक्तः । अथोऽअनतिदाहाय १६

---

अपि चतुर्द्वाराणि स्युः । पादाङ्गेषु आयततिर्यक्काष्ठानि अनूच्यानीत्युच्यन्ते । स्पष्टमन्यत् । 'त्रिवृद्भिः' त्रिगुणाभिः मुञ्जतृणनिष्पादिताभिः 'रज्जुभिः' 'व्युता' विविधं सन्तता । "व्येञ् तन्तुसन्ताने" ( धा. पा. भ्वा. उ. १३३१ ) । तस्योक्तो बन्धुरिति । मौञ्ज्यर्थवादः मृदाहरणस्यादौ तदाहरणार्थं पशुत्रयबन्धनरज्जुप्रस्तावे "ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति, अग्निर्देवेभ्य उदक्रामत् स मुञ्जं प्राविशत्" ( श. प. ६।३।१ । २६) इत्यादिनोक्तः; त्रिवृत्त्वं तु "त्रिवृदग्निः" इत्यत्र—"सैवाग्नेस्तिवृत्ता" ( श. प. ६।१।३।१८ ) इत्युक्तम् । आसन्दी 'मृदा दिग्धा' आलिप्ता स्यात्, 'तस्यो' तस्या अपि 'बन्धुः' मृत्स्तावकोऽर्थवाद उक्तः । ( श. प. ६।३।३।१ ) । इष्टप्रयोजनं च दर्शयति—अथो अनतिदाहायेति ॥ १९ ॥

अथैनमिति । 'एनम्' उख्याग्निम् । 'शिक्येन बिभर्ति' शिक्यवत्यामासन्द्याम् उखां बिभर्त्तीत्यर्थः । उक्तमर्थमधिदेवताध्यात्मभेदेन प्रशंसति-इमे वै लोका एषोऽग्निरित्यादिना । उख्याग्नेर्लोकत्रयात्मकत्वमुखाद्वारा ( श. प.६ कां९अ.२ब्रा. २२कं० ) उखायाश्च लोकत्रयात्मकता "यो वा एष निधिः प्रथमोऽयं स लोकः"-( श.प. ६ कां. ९अ. २ ब्रा. २२कं. ) इत्यादिना प्रागुक्तः । तस्या दिशः शिक्यम् । किं तत इत्यत आह—दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातुमिति । तस्माच्छिक्येन भरणं युक्तम् । प्रसङ्गाच्छिक्यशब्दनिर्वचनं दर्शयति—यच्छक्नुवन्ति तस्माच्छिक्यमिति । स्वाधिष्ठितवस्तुधारणसमर्थत्वात् । शिक्यरूपकल्पनायाः प्रयोजनं दर्शयति—दिग्भिरेवैनमिति । षडुद्यामं भवतीति । ऊर्ध्वाधोविवक्षया दिशां षट्त्वम् । उद्धृतानि यामानि उद्यामानि, तेषां षट्त्वेनोपेतं कर्त्तव्यम्; सूत्रे षडुद्याममिति पठितत्वात् । यद्वा, उद्यमनसाधनत्वात् उद्यामशब्देन शिक्यदामान्युच्यन्ते ( श. प. ६ । ३ । १ । १८ कं. ) ॥

---

१–इण्ड्वशिक्यासंदीषु मुंजरज्जवस्त्रिव्यूतो मृद्दिग्धाः का० श्रौ० सू० १६ । १४७ ।
२–शिक्यपाशं प्रतिमुंचते षडुद्यामं त्रिबिम्बा रूपाणीति का० श्रौ० सू० १६ । १५१ ।

१६१७

तस्यापऽएव प्रतिष्ठा । ( ष्ठाऽप्सु ) अप्सु हीमे लोकाः प्रतिष्ठिताऽआदित्य ऽआसञ्जनमादित्ये हीमे लोका दिग्भिरासक्ताः स यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥ १७ ॥

यद्द्वेवैनएँ शिक्येन बिभर्त्ति । संवत्सरऽएषोऽग्निर्ऋतवः शिक्यमृतुभिर्हि संव्वत्सरः शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यमृतुभिरेवैनमेतद्बि-भर्त्ति षड्व्यामं भवति षड्ढ्यृतवः ॥ १८ ॥

( स्तु ) तस्याहोरात्रेऽएव प्रतिष्ठा । ( ष्ठाऽहो ) अहोरात्रयोर्ह्ययएँ संव्व-त्सरः प्रतिष्ठितश्चन्द्रमाऽआसञ्जनं चन्द्रमसि ह्ययएँ संव्वत्सरऽऋतुभि-रासक्तः स यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति तस्य ह वाऽएष संव्वत्सरभृतो भवति यऽएवं व्वेद संव्वत्सरोपासितो हैव तस्य भवति य ऽएवं न व्वेदेत्यधिदेवतम् ॥१९॥ ( शतपथस्यार्धम् ॥ कण्डिकाः ३८१२ )

---

तस्याप एव प्रतिष्ठा । अप्सु हीमे लोकाः प्रतिष्ठिताः । आदित्य आसञ्जनम् । आदित्ये हीमे लोका दिग्भिरासक्ताः । स यो हैतदेवं वेद—एतेनैव रूपेणैतद्रूपं बिभर्ति ॥ १७ ॥

यद्द्वेवैनं शिक्येन बिभर्ति । संवत्सर एषोऽग्निः । ऋतवः शिक्यम् । ऋतुभिर्हि संवत्सरः शक्नोति स्थातुम् । यच्छक्नोति—तस्माच्छिक्यम् । ऋतुभिरेवैनमेतद्बिभर्त्ति । षड्व्यामं भवति । षड्ढ्यृतवः ॥ १८ ॥

तस्याहोरात्रेऽएव प्रतिष्ठा । अहोरात्रयोर्ह्ययं संवत्सरः प्रतिष्ठितः । चन्द्रमा आसञ्जनम् । चन्द्रमसि ह्ययं सम्वत्सर ऋतुभिरासक्तः । स यो हैतदेवं वेद । एतेनैव रूपेणैतद्रूपं बिभर्ति । तस्य ह वाऽएष संवत्सरभृतो भवति—य एवं वेद । संवत्सरोपासितो हैव तस्य भवति—य एवं न वेद । इत्यधिदेवतम् ॥ १९ ॥

---

पाशानां मौञ्जत्रिवृत्तार्थवादः प्रागुक्तः ( श. प. ६।१। ३ । २६ कं० ) उद्यमनानां मृद्दिग्धत्वार्थवादोऽपि प्रागुक्तः ( श. प. ६।७।१।१९कं० ) इत्यतिदिशति—तस्यो एवेति । ' तस्य ' मृदालेपनस्यापीति ॥ १६ ॥

तस्याप एव प्रतिष्ठेति । 'तस्य' शिक्यस्य'आपः' उदकान्येव'प्रतिष्ठा' आस्पदम् ; लोकसृष्टेः प्राक् उदकस्य सृष्टत्वात् । शिक्यस्याधस्ताद्वर्ती उद्यामाधारः पाशरचितोऽवयवविशेषः, स एवात्र 'प्रतिष्ठा'शब्देनोक्तः । आदि-त्य आसञ्जनमिति । आसज्यते बध्यते शिक्यमत्रेति ' आसञ्जनम्' शिक्याधारः काष्ठविशेषः । यद्वा, आसज्यत इत्यासञ्जनम्,शिक्यस्योर्ध्वावयवः आदित्योऽत्र तत्स्थानीयः । उक्तार्थज्ञं प्रशंसति—स यो हैतदेवं वेदेति ॥१७॥

प्रकारान्तरेण प्रशंसति—यद्द्वेवैनं शिक्येन बिभर्त्तीति । एतत् पूर्वकण्डिकावद् व्याख्येयम् । अग्नेः संव-त्सररूपत्वं संवत्सरभरणात्, शिक्यस्य स्वाश्रिताधारकत्वनियमात् संवत्सरस्याग्निरूपत्वेन ऋतूनां संवत्सराधार-त्वात् तेषां शिक्यत्वं युक्तम् ॥ १८ ॥

तस्याहोरात्रे एव प्रतिष्ठेति । चन्द्रमा आसञ्जनमिति । चन्द्रह्रासवृद्ध्युपध्यायत्तत्वात् संवत्सरस्य चन्द्रा-सञ्जनरूपत्वम् । संवत्सरात्मकत्वप्रयुक्तमर्थवादमाह—तस्य ह वा एष संवत्सरभृत इति । 'यः' 'एवम्' अग्नेः

(मु) अथाध्यात्मम्। (मा) आत्मैवाग्निः प्राणाः शिक्यं प्राणैर्ह्ययमात्मा शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यं प्राणैरेवैनमेतद्बिभर्ति षड्यामं भवति षड्ढि प्राणाः ॥ २० ॥

(स्तु) तस्य मन एव प्रतिष्ठा। मनसि ह्ययमात्मा प्रतिष्ठितोऽन्नमासञ्जनमन्ने ह्ययमात्मा प्राणैरासक्तः स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं बिभर्ति ॥ २१ ॥

(र्यु) अथैनमुखया बिभर्ति। (र्त्ती) इमे वै लोकाऽउखेमे वाऽएतं लोका यन्तुमर्हन्त्येभिरेतं लोकैर्देवाऽअबिभरुरेभिरेवैनमेतल्लोकैर्बिभर्त्ति ॥ २२ ॥

---

अथाध्यात्मम्। आत्मैवाग्निः, प्राणाः शिक्मम्। प्राणैर्ह्ययमात्मा शक्नोति स्थातुम्। यच्छक्नोति, तस्माच्छिक्यम्। प्राणैरेवैनमेतद्बिभर्ति। षड्यामं भवति। षड्ढि प्राणाः ॥ २० ॥

तस्य मन एव प्रतिष्ठा। मनसि ह्ययमात्मा प्रतिष्ठितः। अन्नमासञ्जनम्। अन्ने ह्ययमात्मा प्राणैरासक्तः। स यो हैतदेवं वेद एतेनैव-रूपेणैतद्रूपं बिभर्ति ॥ २१ ॥

अथैनमुखया बिभर्ति। इमे वै लोका उखा। इमे वाऽएतं लोका यन्तुमर्हन्ति। एभिरेतं लोकैर्देवा अबिभरुः। एभिरेवैनमेतल्लोकैर्बिभर्ति ॥ २२ ॥

---

संवत्सरात्मकत्वम्, शिक्यस्य ऋत्वात्मकतां च 'वेद' जानीयात्, 'तस्य' 'एषः' उख्योऽग्निः 'संवत्सरभृतः' संवत्सरादर्वाचीनकाले धारणेऽपि कृत्स्नं संवत्सरं भृतवान् भवति। उक्तविज्ञानप्रशंसार्थमविज्ञातुरुक्तफलाभावं दर्शयति—संवत्सरोपासितो हैवेति। संवत्सरमुपासित एव भवति, परं न तूक्तरूपेण भृतः। उक्तवक्ष्यमाणयोः साङ्कर्यपरिहाराय उक्तस्याधिदेवतपरतां व्यवस्थापयति—इत्यधिदेवतमिति ॥ १९ ॥

अथाध्यात्ममिति। प्रदर्श्यत इति शेषः। आत्मैवाग्निरिति। आत्माऽत्र देहव्यतिरिक्तो मनउपाधिकः। 'प्राणाः' शीर्षण्याः 'शिक्यम्'। ननु निरवयवमात्मानं प्रति धारकत्वेन कथं प्राणानां शिक्यत्वयोग्यतेति? तत्राह—प्राणैर्ह्ययमात्मा शक्नोति स्थातुमिति। "प्राणाधिपः सञ्चरति स्वकर्मभिः"—(श्वेत. उप. ५।७।) इत्यादिश्रुतेः प्राणोपाधिकत्वेन देहाख्यगृहेऽवस्थानसम्भवात्। अतः शक्नोत्यनेन अवस्थातुमिति वर्णव्यात्यां शिक्यशब्दो निष्पन्नः। 'प्राणानां' चक्षुःश्रोत्रनासारन्ध्रवर्त्तिनां षट्सङ्ख्यायोगात् "षड्ढि प्राणाः"—इत्युक्तम् ॥ २० ॥

शिक्यस्याधस्ताद्वर्तिनमवयवं दर्शयति—तस्य मन एव प्रतिष्ठेति। एतत् समर्थयते—मनसि ह्ययमात्मा प्रतिष्ठित इति। मनसा परिच्छेद्यत्वात् मनसि प्रतिष्ठितत्वम्। शिक्यस्योपर्यवयवं दर्शयति—अन्नमासंञ्जनमन्ने ह्ययमात्मा प्राणैरासक्त इति। अन्नाभावे सोपाधिकस्यात्मनो भोगाभावात् प्राणद्वारेणान्नासक्तो भवति। आत्मरूपोऽग्निर्मनस्सम्बद्धैः प्राणाख्यैरिन्द्रियैरन्नं भुञ्जानो वर्त्तत इत्यभिप्रायः। स यो हैतदिति। 'एतत्' अग्निशक्त्यात्मकं वस्तु 'एवम्' उक्तप्रकारेण अग्नेरात्मत्वम् प्राणानां शिक्यत्वाद्यात्मकतां च 'वेद' सः, एतेनेत्यादि, व्याख्यातम् ॥ २१ ॥

उखयैव धारणं प्रशंसति—अथैनमुखयेति। 'एनम्' अग्निम् 'इमे लोकाः' 'यन्तुं' धारयितुम् 'अर्हन्ति' ॥ २२ ॥

सा युदुखा नाम । (मै) एतद्वै देवा ऽएतेन कर्मणैतयाऽऽवृतेमाँल्लोका-नुदखनन्युदुदखनंस्तस्मादुत्खोत्खा ह वै तामुखेत्याचक्षते परोऽक्षं परो-ऽक्षकामा हि देवाः ॥ २३ ॥

(स्त) तद्वाऽउखेति द्वे ऽअक्षरे । द्विपाद्युजमानो युजमानोऽग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावतैवैनमेतद्विभर्त्ति सो ऽएव कुम्भी सा स्थाली तत्षद् षड्तुवः संवत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति २४

(त्यु) अथैनमिण्ड्वाभ्यां परिगृह्णाति । (त्य) असौ वाऽआदित्यऽ एषो-ऽग्निरहोरात्रेऽइण्ड्वेऽअमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति तस्मादेषो-ऽहोरात्राभ्यां परिगृहीतः ॥ २५ ॥

---

सा यदुखा नाम । एतद्वै देवा एतेन कर्मणैतयाऽऽवृतेमांल्लोकानुदखनन् । यदुदखनन्—तस्मा-दुत्खा । उत्खा ह वै तामुखेत्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः ॥ २३ ॥

तद्वाऽउखेति द्वेऽअक्षरे । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवै-नमेतद् बिभर्ति । सोऽएव कुम्भी, सा स्थाली । तत् षद् । षड्तवः संवत्सरः । सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तद् भवति ॥ २४ ॥

अथैनमिण्ड्वाभ्यां परिगृह्णाति । असौ वाऽआदित्य एषोऽग्निः । अहोरात्रेऽइण्ड्वे । अमुं तदा-दित्यमहोरात्राभ्यां परिगृह्णाति । तस्मादेषोऽहोरात्राभ्यां परिगृहीतः ॥ २५ ॥

---

उखां स्वशब्दप्रवृत्तिनिमित्तप्रदर्शनद्वारा प्रशंसति—सा यदुखा नामेत्यादिना । 'सा' स्थाली 'यद्' यस्मात् उखानाम धृतवती, तदभिधीयत इति शेषः । एतद्वै देवाः उदखनन्—इति सम्बन्धः । तत्प्रकारमभि-नीय दर्शयति—एतेन कर्मणेति । 'एतेन' परिदृश्यमानप्रकारेण । तद् विशिनष्टि—एतयैवावृतेति । 'आवृत्' प्रकारविशेषः । उद्भिमत्या उखाया लोकत्रयात्मकत्वस्योक्तत्वात् (श. प. ६ का. ९ अ. २ ब्रा. ४ क.) उखोत्खननमेव लोकत्रयोत्खननमित्यर्थः । खननमत्र निर्माणमभिप्रेतम् । उत्खन्यमानत्वात् 'उखा' । स्पष्टमन्यत् ॥ २३ ॥

भरणीयामुखां तद्गताक्षरसंख्यया प्रशंसति—तद्वा उखेति द्वे अक्षरे इत्यादिना । यजमानस्य चीयमानाग्न्या-त्मना संस्कर्त्तव्यत्वात् 'यजमानोऽग्निः' इत्युच्यते । यावानग्निरिति । द्वित्वपरिमाणवान् । 'अस्य' यज-मानाभिन्नस्याग्नेः 'यावती मात्रा' अवयवः पादगतसंख्यया, 'तावता' कृत्स्नेनापि 'एनम्' 'एतेन' प्रकारेण 'बिभर्त्ति' धृतवान् भवति यजमानः । एवमन्यत्रापि यावानग्निरित्येतद् व्याख्येयम् ॥

पर्यायान्तरं समुच्चित्य तद्गतसंख्याद्वारेणोखाभरणं स्तौति—सो एव कुम्भी सा स्थाली तत् षडित्या-दिना । 'सो एवं' उखा, सैव, 'उ' शब्दोऽनर्थकः । 'कुम्भी' कुम्भीत्यपि व्यवह्रियते, 'सा' एव 'स्थाली' अत्र 'तत्' सर्वाणि मिलित्वा 'षद्' गतमन्यत् ॥ २४ ॥

उख्याग्नेरिण्ड्वाभ्यां परिग्रहं प्रशंसति—अथैनमिण्ड्वाभ्यामिति (का. श्रौ. सू. १६।१४८), 'इण्ड्वे'

(तो) यद्वेवैनमिण्ड्वाभ्यां परिगृह्णाति । (त्य) असौ वा ऽआदित्यऽ एषोऽग्निरिमा ऽउ लोकाविण्ड्वे ऽअमुं तदादित्यमाभ्यां लोकाभ्यां परिगृह्णाति तस्मादेषऽ आभ्यां लोकाभ्यां परिगृहीतः परिमण्डले भवतः परिमण्डलौ हीमौ लोकौ मौञ्जे त्रिवृती तस्योक्तो बन्धुर्मृदा दिग्धे तस्योऽएवोक्तोऽथोऽअनतिदाहाय ॥ २६ ॥

( था ) अथातः सम्पदेव । ( दा ) आसन्दी चोखा च शिक्यश्च रुक्मपाशश्चाग्निश्च रुक्मश्च तत्षट् षडृतवः संव्वत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवतीण्ड्वे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २७ ॥

---

यद्वेवैनमिण्ड्वाभ्यां परिगृह्णाति । असौ वाऽआदित्य एषोऽग्निः । इमाऽउ लोकाविण्ड्वे । अमुं तदादित्यमाभ्यां लोकाभ्यां परिगृह्णाति । तस्मादेष आभ्यां लोकाभ्यां परिगृहीतः । परिमण्डले भवतः । परिमण्डलौ हीमौ लोकौ । मौञ्जे त्रिवृती । तस्योक्तो बन्धुः । मृदा दिग्धे । तस्योऽएवोक्तः । अथोऽअनतिदाहाय ॥ २६ ॥

अथातः सम्पदेव । आसन्दी च, उखा च, शिक्यश्च, रुक्मपाशश्च, अग्निश्च, रुक्मश्च—तत् षट् । षड्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तद्भवति । इण्ड्वे, तदष्टौ । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तद्भवति ॥ २७ ॥

---

इति तस्योखाधारणसाधनभूतौ परिमण्डलौ पदार्थविशेषौ; ताभ्याम् ‘ एनम् ’ उखाग्निं परिगृह्णाति । एकस्यैव तेजसः क्षित्यादिष्वग्न्याद्यात्मनाऽवस्थानात् “ त्रेधाऽऽत्मानं व्यकुरुत ”—इत्यादिश्रुतेः ( श. प. १०।६।५।३ ) । एषोऽग्निरेव असौ आदित्यः । परिभ्रमतः आदित्यस्य पुरस्तात् पश्चाच्चावस्थिते ‘ अहोरात्रे ’ एव इण्ड्वस्थानीये, अत इण्ड्वाभ्यामग्निपरिग्रहेणैव अहोरात्राभ्याम् अमुम् आदित्यं परिगृहीतवान् भवति । उक्तमर्थं लोकप्रसिद्ध्या द्रढयति—तस्मादेष इति ॥ २५ ॥

इत्थमिण्ड्वे अहोरात्रात्मना प्रशस्य द्युपृथिव्याख्यलोकद्वयात्मनाऽपि प्रशंसति—यद्वेवैनमिति । तयोर्वर्तुलत्वं प्रशंसति—परिमण्डले भवतः परिमण्डलौ हीमौ लोकाविति । इण्ड्वयोर्मुञ्जविघृतित्वं त्रिवृत्त्वं च विधाय तदर्थवादमुक्तमतिदिशति—मौञ्जे त्रिवृती तस्योक्तो बन्धुरिति । “त्रिवृदग्निः” इत्यादिनेत्यर्थः ( श. प. ६।३।१।२७ कं. ) । तयोर्वह्निदाहपरिहाराय मृद्दिग्धत्वं विधाय तद्वाक्यशेषमप्यतिदिशति—मृदा दिग्धे तस्यो एवोक्त इति ( श. प. ६ । ७ । १ । १९ ) । अत्र सूत्रम्—“ इण्ड्वशिक्यासन्दीषु मुञ्जरज्जवस्त्रिवृतो मृद्दिग्धाः, परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति ” ( का. श्रौ. सू. १६।१४७।१४८ ) इति ॥ २६ ॥

धर्त्तव्यस्याग्नेर्यावन्तः साधनपदार्थाः प्रागुक्ताः, तेषां या सङ्ख्याऽस्ति, तां सङ्ख्यां प्रशंसति—अथातः सम्पदेवासन्दी चोखा चेत्यादिना । इतः ‘ परं सम्पत् ’ सम्पत्तिरेवोच्यते, न तु नूतनः कश्चित् पदार्थोऽभिधीयत

( त्यु ) अथ सर्वसम्पत् । ( च ) चत्वारः पादाश्चत्वार्यनूच्यानि शिक्यं च रुक्मपाशश्च यद्दु किञ्च रज्जव्यं शिक्यं तदनूखाऽग्नी रुक्मस्त-त्रयोदश त्रयोदश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २८ ॥

इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥ ६।७।१ ॥ ( ७-१ )

तं तिष्ठन्प्रतिमुञ्चते । ( तेऽसौ ) असौ वा आदित्य ऽएष रुक्मस्ति-ष्ठतीव वा ऽअसावादित्योऽथो तिष्ठन्वै वीर्यवत्तरऽउदङ्प्राङ्तिष्ठंस्त-स्योक्तो बन्धुः ॥ १ ॥

---

अथ सर्वसम्पत् । चत्वारः पादाः, चत्वार्यनूच्यानि, शिक्यं च, रुक्मपाशश्च, यद्दु किञ्च-रज्जव्यं-शिक्यम् । तदनूखाऽग्नी रुक्मः । तत् त्रयोदश । त्रयोदश मासाः संवत्सरः । सम्वत्सरो-ऽग्निः, यावानग्निर्यावत्यस्य मात्रा; तावत्तद् भवति ॥ २८ ॥

तं तिष्ठन् प्रतिमुञ्चते । असौ वाऽआदित्य एष रुक्मः । तिष्ठतीव वाऽअसावादित्यः । अथो तिष्ठन्वै वीर्यवत्तरः । उदङ् प्राङ् तिष्ठन् । तस्योक्तो बन्धुः ॥ १ ॥

---

इत्यर्थः । शिक्यादयः षट्, ऋतवोऽपि षट्, तदात्मकः संवत्सरोऽग्निः, 'अतः' उक्तार्थसम्पादनेनैक एवाग्निः संवत्सरसम्मितो भवतीति 'सम्पत्' । उक्तपदार्थसङ्ख्यया इण्ड्वसङ्ख्यामपि समुचित्य सम्पत्त्यन्तरं दर्शयति—इण्ड्वे सदृष्टाविति । अग्नेर्गायत्र्याश्च प्रजापतिमुखात् सहोत्पन्नत्वोगाधिनैकत्वम् ( तै. सं. ७।१।१।४ ) ॥ २७ ॥

इत्थं प्रधानपदार्थगतसंख्यासम्पत्तिमुक्त्वाऽथ सर्वविषयां सम्पदं दर्शयति—अथ सर्वसम्पदिति । उच्यत इति शेषः । 'चत्वारः पादाः' आसन्द्यां सन्ति, तस्याश्चतुर्दिक्ष्ववस्थितानि 'चत्वारि अनूच्यानि', तन्मि-लित्वाऽष्टौ । शिक्यं रुक्मपाशो द्वौ । ननु शिक्यावयवा बहवः सन्ति, कथं न गण्यन्त इत्यत आह—यद्दु किञ्च रज्जव्यं शिक्यमिति । 'तदनु' शिक्यमनु 'उखा' भवति, सैका अग्निरुक्माभ्यां सह 'त्रयोदश' । त्रयोदश मासाः संवत्सर इत्यादि, स्पष्टम् ॥ २८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे सप्तमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ६-७-१ ) ॥

अथ यदुक्तं सूत्रकृता—"तिष्ठन्नुदङ्प्राङ्रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रेषु च"—( का. श्रौ. सू. १६ । १३१।१३२ ) इति । तदिदं विधाय प्रशंसति—तं तिष्ठन् प्रतिमुञ्चतेऽसौ वा आदित्य एष रुक्म इति । रुक्मस्यादित्यत्वं रुक्मस्य सत्यत्वमभिधाय "तद् यत् तत् सत्यमसौ स आदित्यः" ( श. प. ६।७।१।१ ) इत्यादिनोक्तम् । उपर्युपर्यारोहणात् आदित्यः तिष्ठतीव वर्त्तते । उदङ् प्राङ् तिष्ठन् तस्योक्तो बन्धुरिति । "एषा होभयेषां देवमनुष्याणां दिक्"—इत्यादिनेत्यर्थः ( श. प. ब्रा. ६ । ४ । २ । ३ ) ॥ १ ॥

( ई ) दृशानो रुक्मऽउर्व्या व्यद्यौदिति । दृश्यमानो ह्येष रुक्मऽउर्व्या विद्योतते दुर्मर्षमायुः श्रिये रुचानऽ इति दुर्मरं वाऽएतस्यायुः श्रियोऽएष रोचतेऽग्निरमृतोऽअभवद्वयोभिरिति सर्वैर्वाऽएष वयोभिरमृतोऽभवद्यदेनं द्यौरजनयदिति द्यौर्वाऽएतमजनयत्सुरेताऽ इति सुरेता ह्येषा यस्याऽ एष रेतः ॥ २ ॥

( तोऽथै ) अथैनमिण्ड्वाभ्यां परिगृह्णाति । नक्तोषासा समनसा विरूपेऽ इत्यहोरात्रे वै नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ऽइति यद्वै किञ्चाहोरात्रयोस्तेनैतमेव समीची धापयेते द्यावाक्षामा रुक्मो ऽअन्तर्विभातीति हरन्नेतद्यजुर्जपतीमे वै द्यावापृथिवी द्यावाक्षामा

---

"दृशानो रुक्म उर्व्या व्यद्यौद्"–इति । दृश्यमानो ह्येष रुक्म उर्व्या विद्योतते । "दुर्मर्षमायुः श्रिये रुचानः"–इति । दुर्मरं वाऽएतस्यायुः । श्रियोऽएष रोचते । "अग्निरमृतोऽअभवद्वयोभिः"–इति । सर्वैर्वाऽएष वयोभिरमृतोऽभवद् । "यदेनं द्यौरजनयद्"–इति । द्यौर्वाऽएतमजनयत् । "सुरेताः"–( वा.सं. १२।१ ) इति । सुरेता ह्येषा–यस्या एष रेतः ॥ २ ॥

अथैनमिण्ड्वाभ्यां परिगृह्णाति । "नक्तोषासा समनसा विरूपे"–इति । अहोरात्रे वै नक्तोषासा समनसा विरूपे । "धापयेते शिशुमेकं समीची"–इति । यद्वै किञ्चाहोरात्रयोः-

---

तत्र मन्त्रं विधाय व्याचष्टे–दृशानो रुक्म उर्व्या व्यद्यौदिति दृश्यमानो ह्येष रुक्म इत्यादिना । आदित्यात्मकः 'एष रुक्मो' 'दृशानः' दृश्यमानः 'उर्व्या' महद्दीप्त्या 'व्यद्यौत्' विद्योतते । यस्य रुक्मस्य 'आयुः' जीवनोपलक्षितः कालः 'दुर्मर्षम्' दुर्मरम्, अविनाश्यमित्यर्थः । यः 'श्रिये' जगतः श्रीनिमित्तं 'रुचानः' रोचमानः भवति । आदित्ये रोचमाने सति जगत् शोभते इति प्रसिद्धम् । किञ्च 'अग्निः' 'वयोभिः' अन्नैः सर्वैः अपि 'अमृतः' अमरणधर्मा 'अभवत्' । 'यद्' यस्माद् 'द्यौः' 'एनम्' अग्निम् 'अजनयत्' उदपादयत् । कीदृशी द्यौः ? 'सुरेताः' शोभनाग्न्याख्यरेतोयुक्ता । प्रथमपादब्राह्मणं स्पष्टम् । दुर्मर्षमित्येतद् व्याचष्टे–दुर्मरमिति । वयोभिरिति बहुवचनं सार्थकमित्याह-सर्वैर्वा एष वयोभिरमृतोऽभवदिति । अग्नेः सर्वभक्षत्वात् सर्वमप्यस्यान्नम् । अस्य दिवः सकाशात् उत्पत्तिः प्रसिद्धेति दर्शयति–द्यौर्वा एतमजनयदिति । 'सुरेताः'–इति द्यु-विशेषणम् । कथं तस्य तथात्वमिति, तत्राह–सुरेता ह्येषा यस्या एष रेत इति ॥ २ ॥

अस्याग्नेरिण्ड्वाभ्यां परिग्रहणं विधत्ते–अथैनमिण्ड्वाभ्यां परिगृह्णाति नक्तोषासा समनसा विरूपे इति । अहोरात्रे वै नक्तोषासेति । कृत्स्नाया ऋचोऽयमर्थः–'नक्तोषासा' उषःशब्देन कृत्स्नमहर्विवक्ष्यते, रात्र्यहनी । 'समनसा' समानमनसौ, 'विरूपे' विविधरूपे, शुक्लकृष्णभेदेन वैविध्यम्, 'समीची' सम्य-

---

१–परिमंडलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति नक्तोषासेति । का. श्रौ. सू. । १६ । १४८ ।

तेऽएष युन्नन्तरा व्विभाति तुस्मादेतद्धरन्युजुर्ज्जपति देवाऽअग्निं धारयन्द्रविणोदाऽइति परिगृह्य निदधाति प्राणा वै देवा द्रविणोदास्तुऽएतमग्रऽएवमधारयंस्तैरेवैनमेतद्धारयति ॥ ३ ॥

( त्यु ) अथ शिक्यपाशं प्रतिमुञ्चते । व्विश्वा रूपाणि प्रतिमुञ्चते कविरित्यसौ वाऽआदित्युः कविर्व्विश्वा रूपा शिक्यं प्रासावीद्भद्रं द्विपदे चतुष्पद ऽइत्युद्यन्वाऽएष द्विपदे च चतुष्पदे च भद्रं प्रसौति वि नाकमख्य-

---

तेनैतमेव समीची धापयेते । " द्यावाक्षामा रुक्मोऽअन्तर्विभाति "–इति हरन्नेतद्यजुर्जपति । इमे वै द्यावापृथिवी द्यावाक्षामा । तेऽएष यन्नन्तरा विभाति । तस्मादेतद्धरन् यजुर्जपति । " देवा अग्निं धारयन् द्रविणोदाः "–( वा. सं. १२ । २ ) इति परिगृह्य निदधाति । प्राणा वै देवा द्रविणोदाः । तऽएतमग्रऽएवमधारयन् । तैरेवैनमेतद्धारयति ॥ ३ ॥

अथ शिक्यपाशं प्रतिमुञ्चते । " विश्वा रूपाणि प्रतिमुञ्चते कविः "–इति । असौ वाऽआदित्यः कविः । विश्वा रूपा शिक्यम् । "प्रासावीद्भद्रं द्विपदे चतुष्पदे"–इति । उद्यन्वाऽएष

---

गच्छने, यथा लोके ' एकं शिशुं धापयेते ' हिताचरणेनानुगच्छतः, एवमेकमग्न्याख्यं शिशुं धापयेते, स्वावस्थितैः प्राणिभिः अग्निहोत्रादिकर्मद्वारेणानुगतं शिशुमग्निं परिगृह्णामीति शेषः । किञ्च यौ ' द्यावाक्षामा ' द्यावापृथिव्यौ ' अन्तः ' तयोर्मध्ये ' रुक्मः ' रोचमानः अग्निः ' विभाति ' दीप्यते, तमाहरामीति शेषः । यम् ' अग्निं ' ' द्रविणोदाः ' धनस्य दातारो देवाः ' धारयन् ' अधारयन् । तं धारयामीति शेषः ॥ अत्र प्रथमभागेनाहोरात्रौ विवक्षिताविति दर्शयति–अहोरात्रे वै नक्तोषासेति । द्वितीयभागेनाहोरात्रकर्तृकं धापनं स्वनिष्ठकृत्स्नप्राणिद्वारेति दर्शयति–यद्वै किञ्चाहोरात्रयोस्तेनैतमेव समीची धापयेते इति । स्पष्टमेतत् । तृतीयभागस्य विनियोगमाह–द्यावाक्षामा रुक्मो अन्तर्विभातीति[१] । एनं मन्त्रं व्याचष्टे–इमे वै द्यावापृथिवी इति । " क्षामा–इति पृथिवीनाम " । ' अन्तरा '–शब्दप्रयोगात् ' ते '–इति द्वितीया ( पा. सू. २ । ३ । ४ ) । ' तस्मात् ' उक्तविनियोगानुकूलार्थत्वात् तद्यजुर्हरणकाले जपेत् । ऋचश्चतुर्थांशस्य विनियोगं दर्शयति–देवा अग्निं धारयन् द्रविणोदा इति परिगृह्य दधातीति[२] । आहवनीयस्य पुरस्तात् शिक्यवत्यामासन्द्यां स्थापयेत् । ' द्रविणोदाः ' द्रविणोदगुणविशेषिता देवा अत्र ' प्राणाः ' विवक्षिताः । ' ते ' ' एतम् ' अग्निम् ' अग्रे ' ' एवम् ' ' अधारयन् ' । एतन्मन्त्रेण धृते सति ' तैरेव ' ' एनम् ' अग्निम् ' धारयति ' यजमानः ॥ ३ ॥

यदुक्तं सूत्रे " शिक्यपाशं प्रतिमुञ्चते षड्ढ्यामं विश्वा रूपाणीति " ( का. श्रौ. सू. १३।१५१ ) तदेतद् दर्शयति–अथ शिक्यपाशमिति । तत्र विश्वा रूपाणीति मन्त्रः । तस्यायमर्थः–' कविः ' क्रान्तप्रज्ञः,

---

१–हरति द्यावाक्षामेति । का० श्रौ० सू० १६ । १४९ । २–आहवनीयस्य पुरस्तादुद्गात्राऽऽसंदीवदासंद्यां चतुरस्रांग्याः शिक्यवत्यां निदधाति देवा अग्निमिति । का० श्रौ० सू० १६ । १५० ।

त्सविता व्वरेण्यऽ इति स्वर्गो वै लोको नाकस्तमेषऽ उद्यन्नेवानुविपश्यत्यनु प्रयाणमुषसो विराजतीत्युषा वाऽअग्रे व्युच्छति तस्याऽएष व्युष्टिं विराजन्ननूदेति ॥ ४ ॥

( त्यु ) अथैनमतो व्विकृत्या व्विकरोति । ( ती ) इदमेवैतद्रेतः सिक्तं व्विकरोति तस्माद्योनौ रेतः सिक्तं व्विक्रियते ॥ ५ ॥

सुपर्णोऽसि गरुत्मानिति । व्वीर्यं वै सुपर्णो गरुत्मान्वीर्यमेवैनमेतदभिसंस्करोति त्रिव्वृत्ते शिरऽइति त्रिव्वृतमस्य स्तोमᳬँ शिरः करोति गायत्रं

---

द्विपदे चतुष्पदे च भद्रं प्रसौति । " वि नाकमख्यत् सविता वरेण्यः "–इति । स्वर्गो वै लोको नाकः । तमेष उद्यन्नेवानुविपश्यति । "अनु प्रयाणमुषसो विराजति"–( वा. सं. १२ । ३ ) इति । उषा वा अग्रे व्युच्छति । तस्या ऽएष व्युष्टिं विराजन्ननूदेति ॥ ४ ॥

अथैनमतो विकृत्या विकरोति । इदमेवैतद्रेतः सिक्तं विकरोति । तस्माद्योनौ रेतः सिक्तं विक्रियते ॥ ५ ॥

" सुपर्णोऽसि गरुत्मान् "–इति । वीर्यं वै सुपर्णो गरुत्मान् वीर्यमेवैनमेतदभिसंस्करोति । " त्रिवृत्ते शिरः "–इति । त्रिवृतमस्य स्तोमं शिरः करोति । " गायत्रं चक्षुः "–

---

उख्याग्निः ' विश्वा ' विश्वानि रूपाणि प्रतिमुञ्चते । शिक्याख्यस्य रूपस्य बहुदामोपेतत्वाद् बहुवचनम् । स च ' द्विपदे ' मनुष्यादिकाय, ' चतुष्पदे ' गवादिकाय च ' भद्रं ' कल्याणं ' प्रासावीत् ' प्रायच्छत्, 'सविता' सर्वस्य प्रेरयिता 'वरेण्यः' सर्वैर्वरणीयः, सः ' नाकं ' नास्मिन् अकं दुःखमस्तीति नाकं स्वर्गम् ' व्यख्यत् ' प्रकाशयति, अन्तरिक्षे धृतत्वात् । तादृशोऽग्निः 'उषसः' 'प्रयाणम्' 'अनु विराजति' प्रत्यहं दीप्यत इत्यर्थः ॥

अयमर्थो ब्राह्मणेन अग्नेः सवितुश्च अभेदं विवक्षित्वा स्पष्टं व्याख्यातः–असौ वा आदित्यः कविर्विश्वा रूपेति । ऊर्ध्वाधोदिग्भिरुपेताश्चतस्रो दिशः ' शिक्यम् ' इत्यभिप्रायः । कृत्स्नस्य प्राणिनो भद्रप्रसवः उषोदयेन भवतीति प्रसिद्धमिति दर्शयति–उषा वा अग्रे व्युच्छति, तस्या एष व्युष्टिं विराजन्ननूदेतीति । ' विराजन्नेष व्युष्टिमनूदेति ' इति सम्बन्धः ॥ ४ ॥

अथैनमतो विकृत्या विकरोतीति । " सुपर्णोऽसीत्ययं " मन्त्रो विकृतिरुच्यते, अग्नेः पक्षपुच्छादिमत्सुपर्णरूपेण तत्र विकारप्रतिपादनात् । ' एनम् ' अग्निम् ' अतः ' अस्मात् पूर्वावस्थितात् सन्निवेशात् । विकारप्रतिपादकमन्त्रेणाभिमन्त्रणमेवात्र विकरणम् । तेनेदमेवोखायां सिक्तमग्न्याख्यं रेतो विकारयुक्तं कृतवान् भवति । उक्तमर्थमिदानीन्तनरेतोविकारप्रसिद्ध्या द्रढयति–तस्माद् योनाविति ॥ ५ ॥

विकारमन्त्रमुक्त्वा विभज्य व्याचष्टे–सुपर्णोऽसि गरुत्मानिति वीर्यं वै सुपर्णो गरुत्मानित्यादिना । मन्त्रस्यायमर्थः–हे अग्ने ! त्वं गरुत्मान् प्रबलपक्षोपेतः सुपर्णाख्यः पक्षी असि । यज्ञ एव पक्ष्यात्मनोच्यते ।

---

१–सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति पिण्डवत् । का. श्रौ. सू. । १६ । १५२ ।

चुक्षुरिति गायत्रं चुक्षुः करोति बृहद्रथन्तरे पक्षाविति बृहद्रथन्तरे पक्षौ कुरोति स्तोम ऽआत्मेति स्तोममात्मानं करोति पञ्चविॐशं छन्दाॐस्युङ्गानीति च्छन्दाॐसि वाऽएतस्याङ्गानि युजूॐषि नामेति युदेनमग्निरित्याचक्षते तुदस्य युजूॐषि नाम साम ते तनूर्व्वामदेव्यमित्यात्मा वै तनूरात्मा ते तनूर्व्वामदेव्यमित्येतद्यज्ञायज्ञियं पुच्छमिति यज्ञायज्ञियं पुच्छं करोति धिष्ण्याः शफा ऽइति धिष्ण्यैर्व्वाऽएषोऽस्मिँल्लोके प्रतिष्ठितः सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पतेति तुदेनॐ सुपर्णं गरुत्मन्तं कृत्वाऽऽह देवान्गच्छ स्वर्गं लोकं पतेति ॥ ६ ॥

---

इति । गायत्रं चक्षुः करोति । " बृहद्रथन्तरे पक्षौ "–इति । बृहद्रथन्तरे पक्षौ करोति । ' स्तोम आत्मा "–इति । स्तोममात्मानं करोति पञ्चविंशम् । " छन्दांस्यङ्गानि "–इति । छन्दांसि वाऽएतस्याङ्गानि । " यजूंषि नाम "–इति । यदेनमग्निरित्याचक्षते तदस्य यजूंषि नाम । " साम ते तनूर्वामदेव्यम् "–इति । आत्मा वै तनूः । आत्मा ते तनूर्वामदेव्यमित्येतत् । " यज्ञायज्ञियं पुच्छम् "–इति । यज्ञायज्ञियं पुच्छं करोति । " धिष्ण्याः शफाः "–इति । धिष्ण्यैर्वाऽएषोऽस्मिंल्लोके प्रतिष्ठितः । " सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत "–( वा. सं. १२ । ४ ) इति । तदेनं सुपर्णं गरुत्मन्तं कृत्वाऽऽह–देवान् गच्छ, स्वर्गं लोकं पतेति ॥ ६ ॥

---

तथाभूतस्य ' ते ' ' त्रिवृत् ' स्तोमः ' शिरः ' मस्तकम्; आदौ स्तूयमानत्वेन मुख्यत्वात् । गायत्र्या शंसितं ' ते ' ' चक्षुः ' । ' बृहद्रथन्तरे ' बृहद्रथन्तराख्ये ( सा. छ. ३ । १ । ९ । १ ऋ. आ. २ १ । २१ सा. र. ) सामनी ' ते ' ' पक्षौ ' सकलयागनिर्वाहकत्वात् तयोः । महाव्रतस्तोत्रवदस्यापि पञ्चविंशः ' स्तोमः ' ( तै. ब्रा. १ । ३ । ६ सा. भा. ) ' आत्मा ' । ' छन्दांसि ' गायत्र्यादीनि ' ते ' ' अङ्गानि ' । ' यजूंषि ' शुक्लकृष्णाख्यानि, प्रश्लिष्टवाक्यानि, तत्रत्यः अग्निशब्दः ' ते ' ' नाम ' आख्या । ' वामदेव्यम् ' " कया नश्चित्र आ भुवत् " इत्यस्यामुत्पन्नं ' साम ' ( सा. छ. २ । २ । ३ । ९ ऋ. सं. ९ । १ । २९ । साम. वा. सं. २७ । ३९–४१ ) ' तनूः ' शरीरम् । ' यज्ञायज्ञियम् ' " यज्ञायज्ञा वो अग्नये "–इत्यस्यामुत्पन्नं ' साम ' ( सा. छ. १ । १ । ४ । १ । ऋ. गे. १ । २ । २९ साम. वा. सं. २७ । ४२–४४ ) ' ते ' ' पुच्छम् ' अन्त्यत्वसाम्यात् । ' धिष्ण्याः ' तत्तदायतनस्था अग्नयः ' शफाः ' प्रतिष्ठासाधनावयवाः । एवंविधः सुपर्णः सुपतनः गरुत्मान् असि । अतस्त्वं ' दिवं गच्छ ' द्युलोकं गच्छ । तदेव विशिनष्टि–' स्वः पत ' इति ॥

सुपर्णोऽसीति मन्त्रभागपाठस्य प्रयोजनमाह–वीर्यमेवैनमिति । सुपर्णात्मना भावनया तस्य वीर्यमेवाभिसंस्कृतवान् भवति । त्रिवृदादयः शब्दा मन्त्रव्याख्यानावसरे एव व्याख्याताः । सुगममन्यत् ॥

यजुषां कथमग्नेर्नामधेयत्वमित्याशङ्क्य तद् व्याचष्टे–यजूंषि नामेति । यदेनमग्निरित्याचक्षत इति । यः सर्वैरुच्यमानोऽग्निरिति शब्दोऽस्ति, तस्यापि यजुरन्तःपातित्वाद् यजुष्ट्वम् । ' तत् ' तत एव ।

तं व्वा ऽएतम् । (मु) अत्र पक्षपुच्छवन्तं व्विकरोति यादृग्वै योनौ रेतो व्विक्रियते तादृग्जायते तद्यदेतमत्र पक्षपुच्छवन्तं व्विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवाञ्जायते ॥ ७ ॥

तथ्ँ हैके । (क॰) एतया व्विकृत्याऽभिमन्त्र्यान्यां चितिं चिन्वन्ति द्रोणचितं वा रथचक्रचितं वा कङ्कचितं वा प्रउगचितं वोभयतःप्रउगं वा समुह्यपुरीषं वा न तथा कुर्याद्यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत्तादृक्तत्तस्मादेनथ्ँ सुपर्णचितमेव चिनुयात् ॥ ८ ॥

---

तं वाऽएतमत्र पक्षपुच्छवन्तं विकरोति । यादृग् वै योनौ रेतो विक्रियते—तादृग् जायते । तद् यदेतमत्र पक्षपुच्छवन्तं विकरोति—तस्मादेषोऽमुत्र पक्षपुच्छवान् जायते ॥ ७ ॥

तं हैके एतया विकृत्याऽभिमन्त्र्यान्यां चितिं चिन्वन्ति—द्रोणचितं वा, रथचक्रचितं वा, कङ्कचितं वा, प्रउगचितं वा, उभयतःप्रउगं वा, समुह्यपुरीषं वा । न तथा कुर्यात् । यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत्—तादृक्तत् । तस्मादेनं सुपर्णचितमेव चिनुयात् ॥ ८ ॥

---

नाम्न एकस्यापि बहुषु प्रदेशेषु आम्नानाद् यजूंषीति बहुवचनम् । दिवमित्यनेन तत्रस्था देवा विवक्षिता इति व्याचष्टे—देवान् गच्छेति । तद् एनं सुपर्णं गरुत्मन्तं कृत्वा आहेति मन्त्रशेषः । किमाह ? देवान् गच्छेत्यापर्थमाहेति । अथवा मन्त्रोच्चारयिता सुपर्णोऽसीत्यादिना 'एनम्' अग्निं 'सुपर्णं गरुत्मन्तं कृत्वा' 'आह' ब्रूते । किमिति ? 'देवान् गच्छ' इति ॥ ६ ॥

उक्तं विकारं पक्षपुच्छाद्यात्मकं भाविनोऽग्निजननस्य उपयोगितया प्रशंसितुमनुवदति—तं वा एतमिति । वक्ष्यमाणोपयोगिनं लोकन्यायं दर्शयति—यादृग् वै योनाविति । यादृग्विधं सिच्यते, तादृग् जायते इति लोकमर्यादा । 'यद्' यस्मात् 'पक्षपुच्छवन्तं' विकरोति 'अत्र' उखाधारणसमये । 'तस्मात्' 'एषः' अग्निः 'अमुत्र' आहवनीयदेशे चयनानन्तरं तादृगेव 'जायते' चयनेन सुपर्णाकार एव जायत इत्यर्थः । अनेनाभिमन्त्रणचयनयोर्वैसादृश्याभाव उक्तः ॥ ७ ॥

प्रसङ्गात् केषाञ्चित् पक्षमुदाहृत्य निराचष्टे—तं हैक एतया विकृत्याऽभिमन्त्र्यान्यां चितिमित्यादिना । 'एतया' सुपर्णोऽसीत्याद्युक्तरूपया । 'अन्याम्' इत्यस्य विवरणम्—"द्रोणचितम्" इत्यादिकम् । द्रोणादयोऽग्नेरेवाकाराः । समुह्यपुरीषं वेति । प्रतिदिशं पुरीषमाहृत्याहृत्य, तेनैव चयनं 'समुह्यपुरीषाख्या' चितिः । इतराः स्पष्टाः । निषेधोपयोगसिद्धये निषेध्यस्य प्रतिकूलतामाह—यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत्, तादृक् तदिति । स्वपक्षमुपसंहरति—तस्मादेनं सुपर्णचितमेवेति ॥ ८ ॥

---

१—एतया व्विकृत्याऽभिमंत्र्यैकेऽन्यचितिं चिन्वंति द्रोणचिद्रथचक्रचित्कंकचित्प्रउगचिदुभयतःप्रउगः समुह्यपुरीष्य इति । का. श्रौ. सू. । १६ । १५४ ।

(च) तमेतया विकृत्या । (त्ये) इत ऽऊर्ध्वं प्राञ्चं प्रगृह्णात्यसौ वाऽआदित्यऽ एषोऽग्निरमुं तदादित्यमित ऽऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्यऽ इतऽ ऊर्ध्वः प्राङ् धीयते परोबाहु प्रगृह्णाति परोबाहु ह्येषऽ इतोऽथैनमुपावहरति तमुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ९ ॥

(र) अथ विष्णुक्रमान्क्रमते । (तऽ) एतद्वै देवा विष्णुर्भूत्वेमाँल्लोकानक्रमन्त यद्विष्णुर्भूत्वाऽक्रमन्त तस्माद्विष्णुक्रमास्तथैवैतद्यजमानो विष्णुर्भूत्वेमाँल्लोकान्क्रमते ॥ १० ॥

---

तमेतया विकृत्या, इत ऊर्ध्वं प्राञ्चं प्रगृह्णाति । असौ वाऽआदित्य एषोऽग्निः । अमुं तदादित्यमित ऊर्ध्वं प्राञ्चं दधाति । तस्मादसावादित्य इत ऊर्ध्वः प्राङ् धीयते । परोबाहु प्रगृह्णाति । परोबाहु ह्येष इतः । अथैनमुपावहरति । तमुपावहृत्योपरिनाभि धारयति । तस्योक्तो बन्धुः ॥ ९ ॥

अथ विष्णुक्रमान् क्रमते । एतद्वै देवा विष्णुर्भूत्वेमाँल्लोकानक्रमन्त । यद्विष्णुर्भूत्वाऽक्रमन्त—तस्माद् विष्णुक्रमाः । तथैवैतद्यजमानो विष्णुर्भूत्वेमांल्लोकान् क्रमते ॥ १० ॥

---

यदुक्तं सूत्रकृता—"सशिक्यं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति पिण्डवद् धारणं चेति"—(का. श्रौ. सू. १६ । १९२ । १९३ ) इति । च-शब्दोऽवधारणमिति पिण्डवदेव; उखार्थं मृत्पिण्डधारणं यद्वत्, तद्वदित्यर्थः । तदिदं विधत्ते—तमेतया विकृत्येत ऊर्ध्वं प्राञ्चं प्रगृह्णातीति । 'इतः' अस्मात् धृतप्रदेशात् 'प्राञ्चं' प्राङ्मुखं सूर्यस्याग्नेश्च यथा मध्ये व्यवधानं न भवति, तथेत्यर्थः । एतत् प्रशंसति—असौ वा आदित्य एषोऽग्निरिति । अग्नेरादित्यात्मकत्वं प्रागुक्तम् । आदित्यस्य प्रागूर्ध्वगतिप्रसिद्ध्या उक्तार्थमुपोद्बलयति—तस्मादसावादित्य इति । प्रग्रहणे प्रकारविशेषमाह—परोबाहु प्रगृह्णातीति । बाह्वोः 'परः' ऊर्ध्ववर्त्ती यथा भवति तथेत्यर्थः । 'एषः' आदित्यः 'इतः' अस्मात् भूस्थानात् 'परोबाहु'; सर्वेषां बाह्वोरूर्ध्वप्रदेशवर्त्तित्वात् तदभिन्नस्याप्यस्य तथा ग्रहणं युक्तमित्यर्थः। बाह्वोरुपरिधृतस्याग्नेः प्रत्यवरोहणम्, तदनन्तरम् नाभेरुपरि प्रदेशे धारणं च विधत्ते—अथैनमुपावहरतीति । तस्योक्तो बन्धुरिति । उपरिनाभिधारणार्थवाद उक्तो रुक्मधारणप्रस्तावे ( श. प. ६।७।१ कं. ११ ) इत्यर्थः ॥ ९ ॥

अथ विष्णुक्रमक्रमणं विधाय, तन्निर्वचनद्वारेण प्रशंसति—अथ विष्णुक्रमानिति । विष्णुभूतैर्देवैः क्रान्तत्वाद् विष्णुक्रम इति नाम सम्पन्नम् । यथा देवैस्तथैव 'एतत्' एतेन समन्त्रकपादाक्रमणेन 'इमान् लोकान्' विष्णुर्भूत्वा क्रान्तवान् भवति यजमानः ॥ १० ॥

---

१—विष्णुक्रमान् क्रमते विष्णोरिति प्रतिमंत्रमग्न्युक्रमणं च तस्मिन् । का. श्रौ. सू. १६ । १५६ ।

स यः स विष्णुर्यज्ञः सः । स यः स यज्ञोऽयमेव स योऽयमग्निरुखाया-मेतमेव तद्देवा आत्मानं कृत्वेमाँल्लोकानक्रमन्त तथैवैतद्यजमान एतमेवा-त्मानं कृत्वेमाँल्लोकान्क्रमते ॥ ११ ॥

( त ) उदङ् प्राङ् तिष्ठन् । ( न्न ) एतद्वै तत्प्रजापतिर्विष्णुक्रमैरुदङ् प्राङ् तिष्ठन्प्रजा असृजत तथैवैतद्यजमानो विष्णुक्रमैरुदङ्प्राङ्तिष्ठन् प्रजाः सृजते ॥ १२ ॥

विष्णोः क्रमोऽसीति । विष्णुर्हि भूत्वा क्रमते सपत्नहेति सपत्नान्हात्र हन्ति गायत्रं छन्दऽआरोहेति गायत्रं छन्द आरोहति पृथिवीमनु विक्र-मस्वेति पृथिवीमनु विक्रमते प्रहरति पादं क्रमतऽऊर्ध्वमग्निमुद्गृह्णा-त्यूर्ध्वो हि रोहति ॥ १३ ॥

---

स यः स विष्णुः यज्ञः सः । स यः स यज्ञः—अयमेव सः—योऽयमग्निरुखायाम् । एतमेव तद् देवा आत्मानं कृत्वेमांल्लोकानक्रमन्त । तथैवैतद्यजमान एतमेवात्मानं कृत्वेमांल्लोकान्क्रमते ॥ ११ ॥

उदङ् प्राङ् तिष्ठन् । एतद्वै तत् प्रजापतिर्विष्णुक्रमैरुदङ् प्राङ्तिष्ठन् प्रजा असृजत । तथैवैतद्य-जमानो विष्णुक्रमैरुदङ्प्राङ् तिष्ठन् प्रजाः सृजते ॥ १२ ॥

" विष्णोः क्रमोऽसि "—इति । विष्णुर्हि भूत्वा क्रमते । " सपत्नहा "—इति । सपत्नान् हात्र हन्ति । "गायत्रं छन्द आरोह"—इति । गायत्रं छन्द आरोहति । " पृथिवीमनु विक्र-मस्व "—इति । पृथिवीमनु विक्रमते । प्रहरति पादं क्रमते, ऊर्ध्वम् अग्निमुद्गृह्णाति । ऊर्ध्वो हि रोहति ॥ १३ ॥

---

ननु मनुष्यस्य यजमानस्य कथं विष्णुभावेन आक्रमणं सङ्गच्छत इत्याशङ्क्याह—स य इति । ' सः ' ' यः ' प्रसिद्धः ' विष्णुः ' अस्ति, सः यज्ञः । पुनश्च ' सः ' ' यः ' प्रसिद्धो ' यज्ञः ' अस्ति, ' अयम् अग्निरेव ' । अयमिति कः ? यः ' उखायां ' वर्त्तते, सोऽग्निरेव विष्णुरित्यर्थः । प्रतिपादितस्य विष्णोः स्वरूपप्राप्तिं देवानां दर्शयति—एतमेव तद्देवा इति । तथैवैतद्यजमान इत्यादिकं स्पष्टम् । उखाग्निं धृत्वा क्रमणमेव विष्णुक्रमणमित्युक्तं भवति ॥ ११ ॥

क्रमणप्रकारं विधाय प्रशंसति—उदङ्प्राङित्यादिना[1] । अत्र लोकत्रयप्रतिनिधित्वेन त्रिवाराक्रमणम्, तस्य त्रयो मन्त्राः, दिशो विक्रमोर्थे[2] पादाक्रमणाभावेऽपि एको मन्त्रः[3] ॥ १२ ॥

तदेवं मन्त्रचतुष्टयं क्रमेण विधाय व्याचष्टे—विष्णोः क्रमोऽसीति विष्णुर्हि भूत्वा क्रमत इत्यादिना । प्रथममन्त्रस्यायमर्थः—हे आक्रम्यमाण ! पादनिधानस्थान ! त्वं 'विष्णोः क्रमोऽसि' मनुष्यस्य मम कीदृशस्त्वं 'सपत्नहा'

---

१—पिंडवत्प्राग्उदंचं प्रगृह्णात्यकंददमिरिति । का. श्रौ. सू. १६।१५९ । २—दिशो व्वीक्षते दिशोऽनु विक्रमस्वेति । का० श्रौ० सू० १६ । १५८ । ३—अक्रमश्चतुर्थे । का० श्रौ० सू. १६ । १५७ ।

विष्णोः क्रमोऽसीति । विष्णुर्हि भूत्वा क्रमतेऽभिमातिहेत्यभिमाती-र्ह्यत्र हन्ति त्रैष्टुभं छन्दऽआरोहेति त्रैष्टुभं छन्दऽआरोहत्यन्तरिक्षमनु विक्र-मस्वेत्यन्तरिक्षमनु विक्रमते प्रहरति पादं क्रमत ऽऊर्ध्वमग्निमुद्गृह्णा-त्यूर्ध्वो हि रोहति ॥ १४ ॥

विष्णोः क्रमोऽसीति । विष्णुर्हि भूत्वा क्रमतेऽरातीयतो हन्तेत्यराती-यतो ह्यत्र हन्ति जागतं छन्दऽआरोहेति जागतं छन्दऽ आरोहति दिवमनु विक्रमस्वेति दिवमनु विक्रमते प्रहरति पादं क्रमत ऽऊर्ध्वमग्निमुद्गृ-ह्णात्यूर्ध्वो हि रोहति ॥ १५ ॥

---

"विष्णोः क्रमोऽसि"—इति । विष्णुर्हि भूत्वा क्रमते । "अभिमातिहा"—इति । अभिमातीर्ह्यत्र हन्ति । "त्रैष्टुभं छन्द आरोह"—इति । त्रैष्टुभं छन्द आरोहति । "अन्तरि-क्षमनु विक्रमस्व"—इति । अन्तरिक्षमनु विक्रमते । प्रहरति पादं क्रमते, ऊद्र्ध्वम् अग्निमुद्-गृह्णाति । ऊद्र्ध्वो हि रोहति ॥ १४ ॥

"विष्णोः क्रमोऽसि"—इति । विष्णुर्हि भूत्वा क्रमते । "अरातीयतो हन्ता"—इति । अरातीयतो ह्यत्र हन्ति । "जागतं छन्द आरोह"—इति । जागतं छन्द आरोहति । "दिव-मनु विक्रमस्व"—इति । दिवमनु विक्रमते । प्रहरति पादं क्रमते, ऊद्र्ध्वम् अग्निमुद्गृह्णाति । ऊद्र्ध्वो हि रोहति ॥ १५ ॥

---

सपत्नानां हन्ता तथाविधस्त्वं गायत्रं छन्द आरोह आरूढः सन् 'पृथिवीं' भूलोकं सकलं 'विक्रमस्व' आक्रमणं कुरु । "विष्णोः क्रमोऽसि" 'इति' एतत् प्रसिद्धमेवेति तद् दर्शयति—विष्णुर्हि भूत्वेति । 'अत्र' आक्रमणकाले 'सपत्नान्' शत्रून् 'हन्ति' हिनस्ति खलु; अतः 'सपत्नहा' इति विशेषणं युक्तम् । 'गायत्रं छन्दः'—'पृथिवीमनु'—इत्येतयोर्ब्राह्मणं स्पष्टम् । क्रमणप्रकारमाह—प्रहरति पादमिति । पादं पुरोदेशं प्रति नयेत्, नीत्वा च 'क्रमते' पादं प्रक्षिपेत् । तदनन्तरम् 'अग्निम्' 'ऊद्र्ध्वं' नाभेरुपरिदेशं प्रति उद्गृह्णीयात्, ऊर्ध्वमुखं गृह्णीयात् । 'हि' यस्मात् 'ऊद्र्ध्वः' भूलोकादुपरि देशं प्रति 'रोहति' विष्णुक्रमणेन, अतोऽग्नेरप्यूद्र्ध्वदेशप्रापणं युक्तमित्यर्थः ॥ १३ ॥

एवमुपरितनं मन्त्रब्राह्मणमपि व्याख्येयम् । 'सपत्नहा'— इत्यस्य स्थाने क्रमेण 'अभिमातिहा'—'अरातीयतो हन्ता'—'शत्रूयतो हन्ता' इति विशेषः । तथा गायत्रमित्यस्य स्थाने क्रमेण 'त्रैष्टुभम्,' 'जागतम्,' 'आनुष्टुभम्' इति विशेषः । एवम् 'अन्तरिक्षं,' 'दिवं' 'दिशः'—इति च । इतरत् समानम् ॥ १४ ॥ १५ ॥

विष्णोः क्रमोऽसीति । विष्णुर्हि भूत्वा क्रमते शत्रूयतो हन्तेति शत्रूयतो ह्यत्र हन्त्यानुष्टुभं छन्द ऽआरोहेत्यानुष्टुभं छन्द ऽआरोहति दिशोऽनु विक्रमस्वेति सर्वा दिशोऽनु वीक्षते न प्रहरति पादं नेदिमाँल्लोकानतिप्रणश्यानीत्यूर्ध्वमेवाग्निमुद्गृह्णाति सꣳ ह्यारोहति ॥ १६ ॥

इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ६–५–२ ॥ ( ७. २. )

अथैनमिति प्रगृह्णाति । ( त्ये ) एतद्वै देवा ऽअकामयन्त पर्जन्यो रूपꣳ स्यामेति त ऽएतेनात्मना पर्जन्यो रूपमभवंस्तथैवैतद्यजमान ऽएतेनात्मना पर्जन्यो रूपं भवति ॥ १ ॥

---

" विष्णोः क्रमोऽसि "–इति । विष्णुर्हि भूत्वा क्रमते । " शत्रूयतो हन्ता "–इति । शत्रूयतो ह्यत्र हन्ति । " आनुष्टुभं छन्द आरोह "–इति । आनुष्टुभं छन्द आरोहति । " दिशोऽनु विक्रमस्व "–(वा. सं. १२ । ५) इति । सर्वा दिशोऽनुवीक्षते । न प्रहरति पादम् । नेदिमांल्लोकानतिप्रणश्यानीति । ऊर्ध्वमेवाग्निमुद्गृह्णाति । सं ह्यारोहति ॥ १६ ॥

अथैनमिति प्रगृह्णाति । एतद्वै देवा अकामयन्त–पर्जन्यो रूपं स्यामेति । तऽएतेनाऽऽत्मना पर्जन्यो रूपमभवन् । तथैवैतद्यजमान एतेनात्मना पर्जन्यो रूपं भवति ॥ १ ॥

---

दिग्विक्रमणे विशेषमाह–दिशोऽनु विक्रमस्वेति । सर्वा दिशोऽनुवीक्ष्य पादं न प्रहरेत् । पादप्रक्षेपाकरणस्य प्रयोजनमाह–नेदिमानिति । ' नेत् '–इति परिभये; एतेषां त्रयाणां लोकानामतिक्रमः परिभयम्; अतस्त्व-कर्त्तव्यमिति तस्याभिप्रायः । पादप्रहारवत् अग्नेरुद्ग्रहणस्यापि निवृत्तिप्रसक्तावाह–ऊर्ध्वमेवाग्निमिति । ' एव ' शब्दो भिन्नक्रमः; उद्गृह्णात्येव । तत्र प्रयोजनं दर्शयति–सं ह्यारोहतीति । समारोहणसम्भवात् तत्प्रयोज्य-मप्युद्ग्रहणं कर्त्तव्यमेवेत्यर्थः ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे सप्तमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ६–७–२ ) ॥

अथ यदुक्तं विष्णुक्रमेणाग्नेरूर्ध्वोद्भ्रमणं तस्य तथैवोर्ध्वबाहुना धारणप्रकारं हस्तेनाभिनीय विधत्ते–अथैनामिति प्रगृह्णातीति । ' इति '–शब्दविवक्षितोऽर्थः सूत्रे व्याख्याय दर्शितः–" धारणञ्च पिण्डवत् "–( का. श्रौ. सू. १६ । १९२ । १९३ ) इति । उखाया उपादानभूतस्य मृत्पिण्डस्य धारणं यथा प्रागुक्तम् ( श. प. ६ । ४ । ४ । ६ ) ऊर्ध्वबाहुत्वविशिष्टम्, एतादृगत्रापीत्यर्थः । एतत् प्रशंसति–एतद्वै देवा इति । एतदिति कामनाविषयस्य सङ्ग्रहेण प्रदर्शनम् । एतच्छब्दार्थमाह–पर्जन्यो रूपं स्यामेतीति । यः ' पर्जन्यः ' मेघोऽस्ति, तद्रूपं ' स्याम इति, ' मेघरूपा भवेमेत्यर्थः ॥ १ ॥

( त्यु ) अ॒क्रन्द॑द॒ग्नि स्त॒नय॑न्निव॒ द्यौरि॑ति । क्रन्द॑तीव॒ हि प॒र्जन्य॑ स्त॒नय॑न्क्षामा॒ रेरि॑ह॒द्वीरु॑धः सम॒ञ्जन्नि॑ति क्षा॒मा वै प॒र्जन्यो॒ रेरि॑ह्यमाणो॒ व्वीरु॑धः सुम॒नक्ति॑ स॒द्यो ज॑ज्ञा॒नो व्वि हीमि॒द्धो ऽअख्य॒दिति॑ स॒द्यो वा॒ऽएष जज्ञा॒न ऽइद॑ᳪ सर्व्वं॒ व्विख्या॑पयत्या॒ रोद॑सी भा॒नुना॑ भात्य॒न्तरिती॒मे वै द्यावा॑पृथि॒वी रोद॑सी ते॒ऽएष भा॒नुनाऽऽभा॑ति प॒रोबा॑हु॒ प्रगृ॑ह्णाति प॒रोबा॑हु॒ हि प॒र्जन्यः॑ ॥ २ ॥

( न्योऽथै ) अथै॑नमु॒पाव॑हरति । ( त्ये ) एतद्वै यो॒ऽस्मिँल्लो॒के र॒सो यदु॑प॒जीव॑नं तेनै॒तत्स॒होर्ध्व॒ऽ इ॒माँल्लो॒कान्रो॑हत्य॒ग्निर्वा॒ऽअ॒स्मिँल्लो॒के र॒सो॑ऽग्निरु॑प॒जीव॑नं तद्यत्ताव॑देव॒ स्यान्न हा॒स्मिँल्लो॒के र॒सो नोप॑जीवन॑ᳪ स्याद॒थ यत्प्र॒त्यव॒रोह॑त्य॒स्मिन्नेवै॒तल्लो॒के र॒समु॑प॒जीव॑नं दधाति ॥ ३ ॥

---

"अक्रन्ददग्नि स्तनयन्निव द्यौः"–इति । क्रन्दतीव हि पर्जन्यः स्तनयन् । " क्षामा रेरिहद्वीरुधः समञ्जन् "–इति । क्षामा वै पर्जन्यः, रेरिह्यमाणो वीरुधः समनक्ति । "सद्यो जज्ञानो वि हीमिद्धोऽअख्यत् "–इति । सद्यो वाऽएष जज्ञान इदं सर्वं विख्यापयति । " आ रोदसी भानुना भात्यन्तः "–( वा० सं० १२ । ६ ) इति । इमे वै द्यावापृथिवी रोदसी । तेऽएष भानुनाऽऽभाति । परोबाहु प्रगृह्णाति । परोबाहु हि पर्जन्यः ॥ २ ॥

अथैनमुपावहरति । एतद्वै योऽस्मिंल्लोके रसो,यदुपजीवनम्–तेनैतत् सहोर्ध्व इमांल्लोकान् रोहति । अग्निर्वाऽअस्मिंल्लोके रसः, अग्निरुपजीवनम् । तद्यत् तावदेव स्यात्–न हास्मिंल्लोके रसो, नोपजीवनं स्यात् । अथ यत् प्रत्यवरोहति–अस्मिन्नेवैतल्लोके रसमुपजीवनं दधाति ॥ ३ ॥

---

अक्रन्ददग्निः स्तनयन्निवेति । उपमानोपमेयभाव औपचारिकः । ' क्षामा ' अवर्षणेन सर्वक्षयकारी पर्जन्यात्मा अग्निः ' रेरिहत् ' भृशं लेहन् ' वीरुधः ' लतागुल्मादीन् ' समञ्जन् ' सम्यगार्द्रीकुर्वन् ' अक्रन्दद् ' इति पूर्वेणान्वयः । अथवा ब्राह्मणानुसारेण ' वीरुधः समनक्ति ' इति व्याख्येयम् । पर्जन्यात्मा अग्निः ' सद्यः ' तदानीमेव ' जज्ञानः ' जायमानः ' इद्धः ' समिद्धः सन् ' इदं सर्वं ' ' विख्यापयति ' ' रोदसी ' द्यावापृथिव्यौ ' अन्तः ' तयोर्मध्ये ' भानुना ' प्रकाशेन ' आभाति ' सर्वतः प्रकाशते ॥

प्रथमपादं व्याचष्टे–' पर्जन्यः ' अग्न्याख्यः स्तनयन्, वृष्टिलिङ्गशब्दं कुर्वन् ' क्रन्दतीव ' आक्रोशतीव वर्त्तते । क्षामशब्देनात्र पर्जन्यो विवक्षित इति व्याचष्टे–जज्ञान इदᳪ सर्वं विख्यापयतीति । " इमे वै द्यावापृथिवी " इत्यादि चतुर्थपादब्राह्मणं स्पष्टम् । परोबाहु प्रगृह्णातीति । एष सार्थवादः उख्याग्निधारणप्रस्तावे ( श. प. ६ । ७ । ३ । ९ इत्यत्र ) व्याख्यातः ॥ २ ॥

ऊर्ध्वं धृतस्याग्नेरवरोहणं सार्थवादं दर्शयति–अथैनमुपावहरत्येतद्वा इति[1] । ' यः अस्मिन् लोके '

---

१–अवहरत्यमेऽभ्यावर्तिन्निति । का. श्रौ. सू. १६ । १६० ।

स॒द्धेवु प्रत्य॑वरो॒हति । ( त्ये ) ए॒तद्वा॒ऽए॒तदि॒माँल्लो॒काँनि॒तु॒ऽ ऊ॒र्ध्वो॑ रोहति स॒ स॒ पु॒राङि॑व रो॒हऽ इ॒यमु॒ वै प्र॑ति॒ष्ठा त॒द्यत्ता॒वदे॒व स्या॒त्प्र॒ हा॒स्माल्लो॒काद्य॒ज॒मा॑नश्च्यवेता॒थ य॒त्प्रत्य॑वरो॒हती॒मामे॒वैत॒त्प्र॑ति॒ष्ठाम॒भिप्रत्यै॒त्यस्या॑मे॒वैत॒त्प्र॑ति॒ष्ठायां॒ प्रति॑तिष्ठति ॥ ४ ॥

स॒द्धेवु प्रत्य॑वरो॒हति । ( त्ये ) ए॒तद्वा॒ऽए॒तदि॒माँल्लो॒काँनि॒तु॒ऽ ऊ॒र्ध्वो॑ जयति स॒ स॒ पु॒राङि॑व ज॒यो यो वै पु॒राङे॑व ज॒यत्य॒न्ये वै त॒स्य जि॒तम॒न्ववस्य॒न्त्यथ॒ य॒ऽ उ॒भ॒यथा॑ ज॒यति त॒स्य त॒त्र का॑मच॒रणं॑ भवति त॒द्यत्प्रत्य॑वरो॒हती॒माने॒वै॒तल्लो॒कानि॒तश्चो॒र्ध्वान॒मुत॑श्चा॒र्वाचो॑ जयति ॥ ५ ॥

---

यद्धेव प्रत्यवरोहति । एतद्वाऽएतदिमांल्लोकानित ऊर्द्ध्वो रोहति । स स पराङिव रोहः । इयमु वै प्रतिष्ठा । तद्यत्तावदेव स्यात्–प्र हास्माल्लोकाद्यजमानश्च्यवेत । अथ यत् प्रत्यवरोहति–इमामेवैतत् प्रतिष्ठामभिप्रत्यैति । अस्यामेवैतत् प्रतिष्ठायां प्रतितिष्ठति ॥ ४ ॥

यद्धेव प्रत्यवरोहति । एतद्वाऽएतदिमांल्लोकानित ऊर्द्ध्वो जयति । स स पराङिव जयः । यो वै पराङेव जयति–अन्ये वै तस्य जितमन्ववस्यन्ति । अथ य उभयथा जयति–तस्य तत्र कामचरणं भवति । तद्यत् प्रत्यवरोहति–इमानेवैतल्लोकानितश्चोर्द्ध्वान्, अमुतश्चार्वाचो जयति ॥ ५ ॥

---

'रसः' सारभूतोंऽशः, 'यत्' यच्च सर्वप्राणिनामुपजीवनम्, 'तत्' सर्वम् 'एतद् वै' अग्निः खलु । यद्वा, 'एतत्' इति वक्ष्यमाणार्थस्य सामान्यतः सङ्गृह्याभिधानम् । 'तेन' स्वभूतेनोपजीवनेन च 'सह' यजमानः 'एतत्' एतेन अग्नेरूर्द्ध्वप्रापणप्रकारेण 'ऊर्द्ध्वम्' 'इमाँल्लोकान्' 'आरोहति' । यो रसो यदुपजीवनं चोक्तम्, तद् विशिनष्टि–अग्निर्वा इति । अग्ने रसत्वमुपजीवनत्वञ्च दाहपाकाद्युपकारितया सर्वप्रसिद्धम् । 'तत्' पूर्वोक्तं 'यद्' यदि 'तावदेव' ऊर्द्ध्वं धृतमेव 'स्यात्,' तर्हि 'अस्मिन् लोके' रसोपजीवने न स्तः । 'अथ' आरोहणानन्तरं 'यद्' यदि 'प्रत्यवरोहति' अग्निं पृथिव्याम्, तदुभयं भूलोके पुनः स्थापयति ॥ ३ ॥

प्रकारान्तरेण प्रत्यवरोहणं प्रशंसति–यद्धेव प्रत्यवरोहत्येतद्वा इति । पूर्ववत् । इमाँल्लोकानिति । 'ऊर्द्ध्वो रोहति' विष्णुक्रमव्याजेन । 'सः' 'पराङ्' प्रतिनिवृत्तः 'रोहः' आरोहणम् । एवं लोकानां बहुत्वमपेक्ष्य 'सः सः' इति वीप्सा प्रतिरूपे । भूलोकं प्रति प्रत्यारोहणाभावेन प्रच्युतिः स्यात् । 'ह' प्रसिद्धौ । अथ यत् प्रत्यवरोहतीत्यादि गतम् ॥ ४ ॥

पुनस्तदेव प्रकारान्तरेण प्रशंसति–यद्धेव प्रत्यवरोहतीत्यादिना । 'रोहति' इत्यस्य स्थाने 'जयति' इत्येतद् विशेषः । शिष्टं पूर्ववत् । अस्तु पराजयः तस्य को बाध इत्यत आह–अन्ये वै तस्य जितमन्ववस्यन्तीति । 'अन्ये' शत्रवः 'तस्य' 'जितं' स्थानम् 'अन्ववस्यन्ति' अनुक्रमेण क्रमन्ते । अथोक्तवैपरीत्येन यदि 'उभयथा जयति,' पराजितं पुनः प्रत्यङ् गमयतीत्यर्थः, 'तस्य' उभयथा जयवतः 'तत्र' जितप्रदेशे 'कामचरणं भवति;' अन्यैरप्रतिबद्धत्वात् । उभयथा जयप्रकारमाह–तद्यत्प्रत्यवरोहतीति ।

( त्यु ) अग्नेऽभ्यावर्त्तिन् । ( न्न ) अभि मा निवर्तस्वाग्नेऽअङ्गिरः पुनरूर्जा सह रय्येत्येतेन मा सर्व्वेणाभिनिवर्त्तस्वेत्येतच्चतुष्कृत्वः प्रत्यवरोहति चतुर्हि कृत्वऽऊर्ध्वो रोहति तद्यावत्कृत्वऽऊर्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति तमुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ६ ॥

( रु ) अथैनमभिमन्त्रयते । (तऽ) आयुर्व्वाऽअग्निरायुरेवैतदात्मन्धत्तऽआ त्वाऽहार्षमित्या ह्येनᳪं हरन्त्यन्तरभूरित्यायुरेवैतदन्तरात्मन्धत्ते ध्रुवस्तिष्ठाविचाचलिरित्यायुरेवैतद्ध्रुवमन्तरात्मन्धत्ते विशस्त्वा सर्व्वा वाञ्छन्त्वित्यन्नं वै विशोऽन्नं त्वा सर्व्वं वाञ्छत्वित्येतन्मा त्वद्राष्ट्रमधिभ्रशदिति श्रीर्वै राष्ट्रं मा त्वच्छ्रीरधिभ्रशदित्येतत् ॥ ७ ॥

---

" अग्नेऽभ्यावर्तिन्नभि मा निवर्तस्व "–( वा. सं. १२ । ७ ) " अग्नेऽअङ्गिरः "–( वा. सं. १२ । ८ ) " पुनरूर्जा "–( वा. सं. १२ । ९ ) " सह रय्या "–( वा. सं. १२ । १० ) इति । एतेन मा सर्वेणाभिनिवर्त्तस्वेत्येतत् । चतुष्कृत्वः प्रत्यवरोहति । चतुर्हि कृत्व ऊर्ध्वो रोहति । तद्यावत्कृत्व ऊर्ध्वो रोहति–तावत्कृत्वः प्रत्यवरोहति । तमुपावहृत्योपरिनाभि धारयति । तस्योक्तो बन्धुः ॥ ६ ॥

अथैनमभिमन्त्रयते–आयुर्वाऽअग्निः, आयुरेवैतदात्मन्धत्ते । " आ त्वाऽहार्षम् "–( वा. सं. १२।११ ) इति । आ ह्येनं हरन्ति । "अन्तरभूः"–इति। आयुरेवैतदन्तरात्मन्धत्ते । "ध्रुवस्तिः

---

' इतश्च ऊर्ध्वान् ' अस्माद्भूलोकादुपर्युपर्यवस्थितान् पराङ् प्रापणेन जयति, ' अमुतश्च अर्वाचः ' अमुष्माद् द्युलोकात् अधोवर्तिनो लोकान् प्रत्यक्चरणेन ' जयति ' ॥ ९ ॥

आरोहणस्य यथा आरोहस्थानभेदेन मन्त्रचतुष्टयं " विष्णोः क्रमोऽसि "–इत्यादिकमुक्तम्, एवमवरोहणीयानामपि दिक्सहितानां लोकानां चतुष्ट्वादेवावरोहणस्यापि मन्त्रचतुष्टयस्य प्रतीकमुपादाय सङ्गृह्य तात्पर्यमाह–अग्नेऽभ्यावर्त्तिन्नित्यादिना । " अग्ने अङ्गिरः शतं ते सन्त्वावृतः "–इति द्वितीयः । " पुनरूर्जा निवर्त्तस्व "–इति तृतीयः । " सह रय्या निवर्त्तस्व "–इति चतुर्थः । ' एतेन ' सर्वेण मन्त्रेण यावन्तः आयुर्वर्चःप्रभृतय उक्ताः, तेन ' सर्वेण ' अपि सहितो ' निवर्त्तस्व ' ' इति ' ' एतत् ' सर्वमन्त्रेषु प्रतिपादितम्; न ततोऽधिकमित्यर्थः ॥

स्थानभेदेनैव यत् सिद्धं चतुष्कृत्वः प्रत्यवरोहणम्, तदनूद्य प्रशंसति–चतुष्कृत्वः प्रत्यवरोहतीति । तत्रोपपत्तिमाह–चतुर्हि कृत्व इति । फलितमर्थं दर्शयति–तद् यावत्कृत्व ऊर्द्ध्वं इति । ' तमुपावहृत्य ' पूर्वं यस्मिन् नाभिप्रदेशे धृतम् , तत्रैव धारयेत् । उक्तमुपरिनाभिधारणार्थवादमतिदिशति–तस्योक्तो बन्धुरिति । रुक्मधारणप्रस्तावे ( श. प. ६ । ७ । १ । ६–११ ) उक्त इत्यर्थः ॥ ६ ॥

यदुक्तं सूत्रकृता–" उपरिनाभि धारयन्ना त्वाऽहार्षमित्यभिमन्त्रयते "–( का . श्रौ . सू . १६। ३६१ ) इति । तदेतद् विधत्ते–अथैनमभिमन्त्रयत इति । ' अथ ' नाभ्युपरिधारणानन्तरम् । आयुर्वा अग्नि-

(८) अथ शिक्यपाशं च रुक्मपाशं चोन्मुञ्चते । वारुणो वै पाशो वरुणपाशादेव तत्प्रमुच्यते वारुण्यऽर्चा स्वेनैव तदात्मना स्वया देवतया वरुणपाशात्प्रमुच्यतऽउदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमॅं श्रथायेति यथैव यजुस्तथा बन्धुरथा वयमादित्य व्रते तवानागसो ऽअदितये स्यामेतीयं वाऽअदितिरनागसस्तुभ्यं चास्यै च स्यामेत्येतत् ॥८॥

---

ष्टाविचाचलिः "–इति । आयुरेवैतद्ध्रुवमन्तरात्मन् धत्ते । "विशस्त्वा सर्वा वाञ्छन्तु"–इति । अन्नं वै विशः । अन्नं त्वा सर्वं वाञ्छत्वित्येतत् । "मा त्वद्राष्ट्रमधिभ्रशत्"–(वा० सं० १२ । ११) इति । श्रीर्वै राष्ट्रम् । मा त्वच्छ्रीरधिभ्रशदित्येतत् ॥ ७ ॥

अथ शिक्यपाशं च रुक्मपाशं चोन्मुञ्चते । वारुणो वै पाशः, वरुणपाशादेव तत् प्रमुच्यते । वारुण्यर्चा । स्वेनैव तदात्मना स्वया देवतया वरुणपाशात्प्रमुच्यते । "उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय"–इति । यथैव यजुस्तथा बन्धुः । "अथा वयमादित्य व्रते तवानागसो ऽअदितये स्याम"–(वा०सं०१२।१२) इति । इयं वा ऽअदितिः । अनागसस्तुभ्यं चास्यै च स्यामेत्येतत् ॥ ८ ॥

---

रिति । यावन्तं कालं जठराग्निर्जठरेऽस्ति, तावत्पर्यन्तमायुषोऽवस्थानात् आयुषोऽग्निनिमित्तत्वात् "आयुर्वा अग्निः"–इत्युच्यते ॥

तत्र मन्त्रं विधाय व्याचष्टे–आ त्वाऽहार्षमिति । अयमर्थः,–हे अग्ने ! 'त्वा' त्वाम् 'आहार्षम्' आहृतवानस्मि मध्यदेशं प्रति, त्वं च देहस्य 'अन्तः' मध्ये नाभिदेशे 'अभूः' अस्थाः । तदनन्तरम् अन्यैरचालितः 'अविचाचलिः' 'ध्रुवः तिष्ठ' त्वां 'सर्वा विशः' प्रजाः 'वाञ्छन्तु' इच्छन्तु, अन्नकारणत्वात्; अन्नं सर्वदा अस्मासु तिष्ठतु इति हि वाञ्छन्ति । 'त्वत्' त्वत्तः सकाशात् 'राष्ट्रं' राज्यम् 'मा अधिभ्रशत्' अधिकं अंशं मा प्राप्नुयात् । आ ह्येनं हरन्तीति आ त्वाऽहार्षमित्यस्य मन्त्रभागस्याभिप्रायः । "अन्तरभूः"–इत्येतस्य तात्पर्यकथनम्–आयुरेवैतदन्तरात्मन् धत्त इति । द्वितीयपादेन तस्यायुषो ध्रुवत्वप्रार्थनम् । अन्नदातृत्वात् अन्नोपजीवित्वाद्वा विशः अन्नमिति "अन्नं वै विशः"–इत्युक्तम् । अतो विशामन्नरूपत्वात् 'सर्वा विशः' इत्यस्य 'अन्नं सर्वं वाञ्छतु'–इत्येतदेव व्याख्यानम् । राष्ट्रवृद्धिभावाभावस्य श्रियोऽन्वयव्यतिरेकायत्तत्वात् 'श्रीर्वै राष्ट्रम्'–इत्युपचारेणाह ॥ ७ ॥

अथ शिक्यपाशमित्यादि[1] । 'अथ' उपस्थानानन्तरम्, शिक्यरुक्मयोः कण्ठसम्बद्धं पाशम् 'उन्मुञ्चते' ऊर्द्ध्वं विस्रंसयेत् । कृत्स्नस्यापि बन्धनसाधनस्य पाशस्य वरुणदेवताकत्वप्रसिद्धिः "वारुणो वै पाशः"–इत्यत्र 'वै'–शब्देन द्योत्यते । पाशोन्मोके वरुणदेवताकामृचं विधाय प्रशंसति–वारुण्यर्चेति । 'तत्' तेन वारुण्यर्चा पाशविमोकेन 'स्वेनैव आत्मना' पाशस्य वास्तवेन रूपेण 'स्वया' स्वकीयया पाशाभिमानिन्या 'देवतया' 'वरुणपाशात् प्रमुच्यते' यजमानः ॥

---

१–पाशा उन्मुच्योदुत्तममिति । का. श्रौ. सू. १६ । १६२ ।

१६३५

( दु ) अथैनमिति प्रगृह्णाति । ( त्ये ) एतद्वाऽएनमदो विकृत्येतुऽऊर्ध्वं प्राञ्चं प्रगृह्णाति तं तुतऽइति प्रगृह्णाति तद्यत्तावदेवाभविष्यदुत्र हैवैषु व्यरॐस्यतुाथ यदेनमिति प्रगृह्णाति तुस्मादेषऽइतीत्वाऽथेति पुनरैति ॥ ९ ॥

( त्यु ) अग्ने बृहन्नुषसामूर्ध्वो ऽअस्थादिति । ( त्यु ) अग्ने ह्येषु बृहन्नुषसामूर्ध्वस्तिष्ठति निर्ज्जगन्वान्तमसो ज्योतिषाऽऽगादिति निर्ज्जगन्वान्वाऽएष रात्र्यै तमसोऽह्ना ज्योतिषैत्यग्निर्भानुना रुशता स्वङ्गऽइत्यग्निर्वाऽएष भानुना रुशता स्वङ्गऽआ जातो विश्वा सद्मान्यप्रा ऽइतीमे वै लोका

---

अथैनमिति प्रगृह्णाति । एतद्वाऽएनमदो विकृत्येत ऊर्ध्वं प्राञ्चं प्रगृह्णाति । तं तत इति प्रगृह्णाति । तत् यत्तावदेवाभविष्यद्-अत्र हैवैष व्यरंस्यत । अथ यदेनमिति प्रगृह्णाति-तस्मादेष इतीत्वा, अथेति पुनरैति ॥ ९ ॥

" अग्ने बृहन्नुषसामूर्ध्वोऽअस्थात्"-इति । अग्ने ह्येष बृहन् उषसामूर्ध्वस्तिष्ठति । "निर्ज्जगन्वान्तमसो ज्योतिषाऽऽगात्"-इति । निर्जगन्वान् वाऽएष रात्र्यै तमसोऽह्ना ज्योतिषैति ।

---

तामृचं दर्शयति-उदुत्तममिति । पूर्वार्द्धस्य स्पष्टार्थतामाह-यथैव यजुस्तथा बन्धुरिति । यजुःशब्देन मन्त्रो विवक्षितः । मन्त्रो यादृशमर्थं प्रकाशयति, ' बन्धुः ' तद्ब्राह्मणमपि तादृगर्थप्रकाशकमेव; नात्र व्याख्यातव्यो गूढोऽर्थोऽस्तीत्यर्थः । मन्त्रभागे उत्तमादिमेदभिन्नस्य त्रिविधस्य पाशविश्रथनस्य स्पष्टं प्रतिपादनादित्यभिप्रायः ॥

उत्तरार्द्धस्य तात्पर्यमाह-अथा वयमादित्य व्रत इत्यादिना । खातायाः पृथिव्याः अचिरादेव पूर्त्तिदर्शनात् अखण्डनरूपस्य स्वार्थस्य पृथिव्यां विद्यमानत्वात् " इयं वा अदितिः "-इत्याह । अनागसः तुभ्यञ्च अस्यै च स्यामेत्येतदिति । ' तुभ्यम् ' आदित्याय, ' अस्यै च ' अदितये ' अनागसः ' अपापाः ' स्याम ' ' इत्येतत्, ' मन्त्रेणोक्तमिति शेषः । मन्त्रार्थः स्पष्ट एव ॥ ८ ॥

यदुक्तं सूत्रकृता-" पिण्डवत् प्राग्दक्षिणा प्रगृह्णात्यग्ने बृहन्निति "-( का. श्रौ. सू. १६ । १६२ ) इति, तदेतद् विधाय प्रशंसति-अथैनमिति प्रगृह्णात्येतद्वा एनमित्यादिना । इतीति अग्नेरवरूढस्य ग्रहणप्रकारं हस्तेनाभिनीय दर्शयति; स च प्रकारः सूत्रे दर्शितः-पिण्डवत् प्रागित्यादिना । ' इतः ' अस्मात् स्थानात् ' अदः ' पक्षिरूपेण ' विकृत्या ' पूर्वम् ' ऊर्ध्वम् ' प्रगृहीतवान् । अतः कारणात् ' तं ' तथागृहीतम् अग्निम् ' ततः ' देशात् अवरुह्य ' इति ' उक्तप्रकारेण प्रगृह्णीयात् । कोऽयं नियम इत्यत्राह-तद् यद् तावदेवाभविष्यदिति । ' तावदेव ' ऊर्ध्वप्रग्रहणमेव स्यात्, ' अत्र ह एव ' ऊर्ध्वलोके एव ' एषः ' ' व्यरंस्यत ' विरमेत् । ' अथ ' उक्तवैलक्षण्येन ' यत् ' यस्मात् ' एनम् इति ' प्रगृह्णीयात्, ' तस्मात् ' ' एषः ' अग्निः ' इति ' ' इत्वा ' ऊर्ध्वं गत्वा, ' अथ इति ' एवम् अवरोहणेन ' पुनः ' ' ऐति ' स्वस्थानम् ॥ ९ ॥

तत्र मन्त्रं विधाय व्याचष्टे-अग्ने बृहन्नित्यादिना । अयम् अग्निः ' उषसाम् ' ' अग्ने ' ' बृहन् ' भूत्वा

विश्वा सद्मानि तानेष जातऽआपूरयति परोबाहु प्रगृह्णाति परोबाहु ह्येषऽ इतोऽथैनमुपावहरतीमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति जगत्या जगती हेमाँल्लोकानमुतोऽर्वाचो व्यश्नुते ॥ १० ॥

हꣳसः शुचिषदिति । ( त्य ) असौ वाऽआदित्यो हꣳसः शुचिषद्वसुरन्तरिक्षसदिति वायुर्वै वसुरन्तरिक्षसद्धोता वेदिषदित्यग्निर्वै होता वेदिषदतिथिरिति सर्वेषां वाऽएष भूतानामतिथिर्दुरोणसदिति विषमसदित्येतन्नृषदिति प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमेतदाह वरसदिति सर्वेषु ह्येष वरेषु सन्नऽ ऋतसदिति सत्यसदित्येतद्व्योमसदिति सर्वेषु ह्येषु व्योमसु सन्नोऽब्जा गोजाऽ इत्यब्जाश्च ह्येष गोजाश्चर्तजाऽ इति सत्यजा ऽइत्येतदद्रिजा ऽइत्यद्रिजा ह्येषऽ ऋतमिति सत्यमित्येतद्बृहदिति निदधाति बृहद्ध्येष तद्यदेष तदेनमेतत्कृत्वा निदधाति ॥ ११ ॥

---

"अग्निर्भानुना रुशता स्वङ्गः"—इति । अग्निर्वाऽएष भानुना रुशता स्वङ्गः । " आ जातो विश्वा सद्मान्यप्राः"—( वा. सं. १२।१३ ) इति । इमे वै लोका विश्वा सद्मानि । तानेष जात आपूरयति । परोबाहु प्रगृह्णाति । परोबाहु ह्येष इतः । अथैनमुपावहरति । इमामेवैतत्प्रतिष्ठामभिप्रत्यैति । अस्यामेवैतत् प्रतिष्ठायां प्रतितिष्ठति । जगत्या । जगती हेमाँल्लोकानमुतोऽर्वाचो व्यश्नुते ॥ १० ॥

"हंसः शुचिषत्"—इति । असौ वाऽआदित्यो हंसः शुचिषत् । "वसुरन्तरिक्षसद्"—इति । वायुर्वै वसुरन्तरिक्षसत् । "होता वेदिषद्"—इति । अग्निर्वै होता वेदिषत् । "अतिथिः"—इति । सर्वेषां वाऽएष भूतानामतिथिः । "दुरोणसद्"—इति । विषमसद्—इत्येतत् । "नृषद्"—इति । प्राणो वै नृषत् । मनुष्या नरः । तद्योऽयं मनुष्येषु प्राणोऽग्निः—तमेतदाह । "वरसद्"—इति । सर्वेषु ह्येष वरेषु सन्नः । "ऋतसद्"—इति । सत्यसदित्येतत् । " व्योमसद् "—इति । सर्वेषु ह्येष व्योमसु सन्नः । "अब्जा गोजाः"—इति । अब्जाश्च ह्येष गोजाश्च । " ऋतजाः "—इति । सत्यजा इत्येतत् । "अद्रिजाः"—इति । अद्रिजा ह्येषः । "ऋतम्"—इति । सत्यमित्येतत् । " बृहत् " ( वा. सं. १२।१४ ) इति निदधाति । बृहद्ध्येषः । तद्यदेषः—तदेनमेतत् कृत्वा निदधाति ॥ ११ ॥

---

'ऊर्ध्वः' सन् निर्गतः सन् ' अस्थात् ' तिष्ठति । ' तमसः ' नैशात् सकाशात् ' निर्जगन्वान् ' निर्गतः सन् 'ज्योतिषा' सह 'आगात्' आगच्छति । अग्न्यादित्ययोरूर्ध्वगमनप्रत्यागमनसाम्यात् आदित्यरूपत्वाय इदमभिधानम् । किञ्च ' अग्निः ' ' रुशता ' प्रकाशमानेन ' भानुना ' दीप्तिविशेषेण ' स्वङ्गः ' शोभनाङ्गो भवति । हे अग्ने ! 'जातः' जातमात्रः सन् ' विश्वा सद्मानि ' सर्वान् लोकान् आहवनीयादिस्थानानि वा ' आप्राः ' सर्वतः पूरितवानसि ॥

द्वाभ्यामक्षुराभ्याम् । द्विपाद्युजमानो युजमानोऽग्निर्युावानग्निर्युावत्यस्य मात्रा तावतैवैनमेतन्निदधाति ॥ १२ ॥

( त्यु ) अथैनमुपतिष्ठते । ( तऽ ) एतद्वाऽएनमेतल्लघूयतीव युदेनेन सहेति चेति चेमाँल्लोकान्क्रमते तुस्माऽएवैतन्निह्नुतेऽहिᳫँसायै ॥ १३ ॥

युद्वेवोपतिष्ठते । (तऽ ) एतद्वै देवाऽअबिभयुर्यद्वै नोऽयमिमाँल्लोकानन्तिकान्न हिᳫँस्यादिति तदेभ्युऽएवैनमेतल्लोकेभ्योऽशमयंस्तथैवैनमयुमेतदेभ्यो लोकेभ्यः शमयति ॥ १४ ॥

सीद त्वं मातुः । ( र ) अस्याऽउपस्थेऽन्तरग्ने रुचा त्वᳫँ शिवो भूत्वा मह्यमग्नेऽअथो सीद शिवस्त्वमिति शिवः-शिवऽ इति शमयत्येवैनमेतदहिᳫँसायै तथो हैषऽइमाँल्लोकाञ्छान्तो न हिनस्ति ॥ १५ ॥

त्रिभिरुपतिष्ठते। त्रयऽइमे लोकाऽअथो त्रिवृदग्निर्युावानग्निर्युावत्यस्य मात्रा तावतैवास्माऽएतन्निह्नुतेऽथो तावतैवैनमेतदेभ्यो लोकेभ्यः शमयति॥ १६॥

इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ ६-५-३ ॥ ( ७. ३. ) ॥

---

द्वाभ्यामक्षराभ्याम् । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतन्निदधाति ॥ १२ ॥

अथैनमुपतिष्ठते । एतद्वाऽएनमेतल्लघूयंतीव—यदेनेन सह—इति चेति चेमांल्लोकान्क्रमते । तस्माऽएवैतन्निह्नुतेऽहिंसायै ॥ १३ ॥

यद्वेवोपतिष्ठते । एतद्वै देवा अबिभयुः—यद्वै नोऽयमिमांल्लोकानन्तिकान्न हिंस्यादिति । तदेभ्य एवैनमेतल्लोकेभ्योऽशमयन् । तथैवैनमयमेतदेभ्यो लोकेभ्यः शमयति ॥ १४ ॥

"सीद त्वं मातुरस्या उपस्थे"—( वा. सं. १२।१५ ) "अन्तरग्ने रुचा त्वम्"—( वा. सं. १२।१६) "शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम्"—(वा. सं. १२।१७) इति । शिवः शिव इति । शमयत्येवैनमेतद्—अहिंसायै । तथो हैष इमांल्लोकाञ्छान्तो न हिनस्ति ॥ १५ ॥

त्रिभिरुपतिष्ठते त्रय इमे लोकाः । अथो त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्माऽएतन्निह्नुते । अथो तावतैवैनमेतदेभ्यो लोकेभ्यः शमयति ॥ १६ ॥

---

पूर्वार्द्धस्य ब्राह्मणं मन्त्रव्याख्यानेनैव व्याख्यातम् । क्षित्यादिषु स्थानेष्वप्यग्नेरवस्थितिसम्भवात् त्रयो लोका अग्नेः स्थानानीत्यभिप्रेत्योक्तम्—इमे वै लोका विश्वा सद्मानीति। अवतीर्णस्य प्रग्रहणमुक्तम् । तस्य प्रकारमाह—परोबाहु प्रगृह्णातीति । बाह्वोः परस्तादुपरीत्यर्थः । व्याख्यातमिदं प्रत्यवरोहार्थवादे । जगत्येति । उपावहरतीति शेषः । सत्स्वपीतरेषु जगत्येति कोऽयं नियम इत्यत आह—जगती हेति । " इमान् लोकान्

अथ व्वात्सप्रेणोपतिष्ठते । (त८) एतद्वै प्रजापतिर्व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो व्वात्सप्रेणायुष्यमकरोत्तथैवैतद्यजमानो व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो व्वात्सप्रेणायुष्यं करोति ॥ १ ॥

स हैष दाक्षायणहस्तः । (स्तो) यद्वात्सप्रं तस्माद्यं जातं कामयेत सर्व्वमायुरियादिति व्वात्सप्रेणैनमभिमृशेत्तदस्मै जातायायुष्यं करोति तथो ह स सर्व्वमायुरेत्यथ यं कामयेत व्वीर्यवान्त्स्यादिति व्विकृत्यैनं पुरस्तादभिमन्त्रयेत तथो ह स व्वीर्यवान्भवति ॥ २ ॥

---

अथ वात्सप्रेणोपतिष्ठते । एतद्वै प्रजापतिर्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणायुष्यमकरोत् । तथैवैतद्यजमानो विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणायुष्यं करोति ॥ १ ॥

स हैष दाक्षायणहस्तः । यद्वात्सप्रम् । तस्माद् यं जातं कामयेत सर्वमायुरियादिति—वात्सप्रेणैनमभिमृशेत् । तदस्मै जातायायुष्यं करोति । तथो ह स सर्वमायुरेति । अथ यं कामयेत—वीर्यवान्त्स्यात् इति । विकृत्यैनं पुरस्तादभिमन्त्रयेत । तथो ह स वीर्यवान् भवति ॥ २ ॥

---

अमुतः अर्वाचः व्यश्नुते"—इति । गायत्रीत्रिष्टुब्जगतीनां क्षित्यादिलोकत्रयाक्रमणस्य विष्णुक्रममन्त्रेषु उक्तत्वात् जगती द्युलोकव्यापिनी, अधिकाक्षरायां तस्यां न्यूनाक्षरयोश्छन्दसोरप्यन्तर्भावात् ॥ १०—१६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे सप्तमाऽध्याये तृतीयं ब्राह्मणम् ॥ ( ६—७—३ ) ॥

अथ वात्सप्रेणोपतिष्ठत इत्यादि । 'ताभ्यः' पृथिव्यन्तरिक्षलोकद्वयव्यापिनीभ्यः सृष्टाभ्यः प्रजाभ्यः 'वात्सप्रेण आयुष्यम्' अकरोत्; तस्मिन् सूक्तेऽग्नेर्लोकत्रयव्याप्तिलक्षणविभूत्याविष्करणस्य विद्यमानत्वात् । आयुषोऽग्न्यायत्तत्वात् तन्मन्त्रपाठेन तत्रत्यानां प्रजानामायुःस्थापनमित्यभिप्रायः ॥ १ ॥

प्रसङ्गात् कञ्चिदयज्ञसंयुक्तं प्रयोगं दर्शयति—स हैष दाक्षायणहस्त इति । 'दक्षः' प्राणः, तत्सम्बन्धि आयुष्यं 'दाक्षम्', तस्य 'अयनम्' प्रापकम्, तादृग्हस्तस्वरूपमिदं 'वात्सप्रम्' । तस्मात् उत्पन्नं शिशुम् आयुर्वृद्ध्यर्थं 'वात्सप्रेण अभिमृशेत्' ॥

वात्सप्रप्रसङ्गात् प्रागभिहितायाः "सुपर्णोऽसि" इत्येतस्या विकृत्या यज्ञाद् बहिः प्रयोगं दर्शयति—अथ यं कामयेत वीर्यवान्त्स्यादिति विकृत्यैनं पुरस्तादभिमन्त्रयेतेति । 'पुरस्तात्' वात्सप्रेण अभिमर्शनात् पूर्वम् ॥ २ ॥

---

१—व्वात्सप्रेण च दिवस्परीत्येकादशभिः । का. श्रौ. सू. १६ । १६६ ।

दिवस्पुरि प्रथमं जज्ञेऽअग्निरिति । प्राणो वै दिवः प्राणाद्ध वाऽएष प्रथममजायतास्मद्द्वितीयं परि जातवेदाऽ इति यदेनमदो द्वितीयं पुरुषविधोऽजनयत्तृतीयमप्स्विति यदेनमदस्तृतीयमद्भ्योऽजनयन्नृमणाऽ अजस्रमिति प्रजापतिर्वै नृमणाऽ अग्निरजस्रऽ इन्धान ऽएनं जरते स्वाधीरिति यो वाऽएनमिन्द्धे सऽ एनं जनयते स्वाधीः ॥ ३ ॥

---

" दिवस्परि प्रथमं जज्ञे ऽअग्निः "-इति । प्राणो वै दिवः। प्राणाद्ध वाऽएष प्रथममजायत । " अस्मद्द्वितीयं परि जातवेदाः "-इति । यदेनमदो द्वितीयं पुरुषविधोऽजनयत् । " तृतीयमप्सु "-इति । यदेनमदस्तृतीयमद्भ्योऽजनयत् । " नृमणा अजस्रम् "-इति । प्रजापतिर्वै नृमणाः, अग्निरजस्रः । " इन्धान एनं जरते स्वाधीः "-( वा० सं० १२।१८ ) इति । यो वाऽएनमिन्द्धे-स एनं जनयते स्वाधीः ॥ ३ ॥

---

उपस्थाने मन्त्रं विधाय व्याचष्टे-दिवस्परीत्यादिना । दिव्शब्दस्य विवक्षितमर्थमाह-प्राणो वै दिव इति । ' दिवः ' दिव्प्रतिपाद्य इत्यर्थः । अथवा दिव इति पञ्चम्यन्तपदेन प्रातिपदिकमात्रं विवक्षित्वोक्तम्; दिव्प्रातिपदिकात् प्राणो विवक्षित इति । तत् कथमिति तत् समर्थयते-प्राणाद्ध वा एष प्रथममजायतेति । प्राणात् उत्पत्तिः प्राक् काण्डादौ-" प्राणा वा ऋषयः "-इत्युपक्रम्य, " सप्त पुरुषानेकं पुरुषं करवामेति त एतान् सप्त पुरुषानेकं पुरुषमकुर्वन् "-( श. प. ६ । १ । १ । ३ ) इति प्रतिपादिता। सा चात्र ' वै '-शब्देन प्रसिद्धीक्रियते ॥

" अस्मद् द्वितीयमिति "-अमुं द्वितीयं पादं व्याचष्टे-यदेनमदो द्वितीयं पुरुषविधोऽजनयदिति । ' यद् ' यस्मात् ' एनम् ' अग्निम् ' अदः ' विप्रकृष्टे काले ' पुरुषविधः ' यथा पुरुषः तदवयवी सम्पद्यते, तथा इष्टकाभिरजनयदित्यर्थः । अयमर्थोऽपि तत्रैव प्राक् प्रतिपादितः-" स एव पुरुषः प्रजापतिरभवत् । स यः स पुरुषः प्रजापतिरभवत्, अयमेव स योऽयमग्निश्चीयते "-( श. प. ६।१।१।५ ) इति । तथाविधचयनसाध्याकारोत्पादनस्य अध्वर्युकर्तृकत्वात् ऋषिराह-अस्मद् द्वितीयमिति ॥

" तृतीयमप्सु "-इत्येतद् व्याचष्टे-यदेनमदस्तृतीयमद्भ्योऽजनयदिति । ' एनम् ' आहुत्याधाररूपमित्यर्थः । अयमर्थोऽपि तत्रैवोक्तः-" सोऽपोऽसृजत "-इत्युक्त्वा, " सोऽकामयताभ्योऽद्भ्योऽधि प्रजायेयेति, सोऽनया त्रय्या विद्यया सहापः प्राविशत् तत आण्डं समवर्त्तत "-इति, " अथ यो गर्भोऽन्तरासीत् सोऽग्निरसृज्यतेति च "-( श. प. ६।१।१।९-११ कं० ) ॥

क उत्पादितवानिति, तदाह-नृमणा इति । नृमणः-शब्दस्य विवक्षितमर्थं दर्शयति-प्रजापतिर्वै नृमणा इति । नृविषयमनोयुक्तः इति तस्यार्थः । अजस्रशब्दं व्याचष्टे-अग्निरजस्र इति । 'अजस्रम्' अहिंसितम् अग्निमित्यर्थः । चतुर्थपादस्य तात्पर्यमाह-यो वा एनमिन्धे स एनं जनयत इति । पुनः पुनः समिन्धनमेवाग्नेरुत्पादनम् । अतो यः ' स्वाधीः ' स्वाधानः इन्धे ' सः ' ' जनयते ' जनयति । अर्थात् स्तुत्यर्थं जरत इत्यस्य जनयत इत्यर्थ इति व्याख्यातं भवति । मन्त्रार्थस्तु व्याख्यातप्रायः ॥ ३ ॥

(ᳪवि) व्विद्मा तेऽअग्ने त्रेधा त्रयाणीति । (त्य) अग्निर्व्वायुरादित्य ऽएतानि हास्य तानि त्रेधा त्रयाणि व्विद्मा ते धाम व्विभृता पुरुत्रेति यदिदं बहुधा व्विह्रियते व्विद्मा ते नाम परमं गुहा यदिति यविष्ठऽइति वाऽअस्य तन्नाम परमं गुहा व्विद्मा तमुत्सं यतऽ आजगन्थेत्यापो वाऽउत्सोऽद्भ्यो वाऽएष प्रथममाजगाम ॥ ४ ॥

समुद्रे त्वा नृमणाऽअप्स्वन्तरिति । प्रजापतिर्वै नृमणाऽअप्सु त्वा प्रजापतिरित्येतन्नृचक्षाऽईधे दिवोऽअग्नऽऊधन्निति प्रजापतिर्व्वै नृचक्षाऽआपो दिवऽऊधस्तृतीये त्वा रजसि तस्थिवाᳫँसमिति द्यौर्व्वै तृतीयᳫँ रजोऽपामुपस्थे महिषाऽअवर्द्धन्निति प्राणा वै महिषा दिवि त्वा प्राणा ऽअवर्द्धन्नित्येतत् ॥ ५ ॥

---

" विद्मा तेऽअग्ने त्रेधा त्रयाणि "–इति । अग्निर्वायुरादित्यः–एतानि हास्य तानि त्रेधा त्रयाणि । " विद्मा ते धाम विभृता पुरुत्रा "–इति । यदिदं बहुधा विह्रियते । " विद्मा ते नाम परमं गुहा यद् "–इति । यविष्ठ इति वाऽअस्य तन्नाम परमं गुहा । "विद्मा तमुत्सं यत आजगन्थ "–( वा. सं. १२ । १९ ) इति । आपो वाऽउत्सः । अद्भ्यो वाऽएष प्रथममाजगाम ॥ ४ ॥

" समुद्रे त्वा नृमणा अप्स्वन्तः "–इति । प्रजापतिर्वै नृमणाः । अप्सु त्वा प्रजापतिरित्ये-

---

अथ द्वितीयमन्त्रः । विद्मा ते अग्न इति । ( का. श्रौ. सू. १६ । १६६ ) अत्र " त्रेधा त्रयाणि "–इत्येतद् व्याचष्टे–अग्निर्वायुरादित्य एतानि हास्य तानि त्रेधा त्रयाणीति । एकस्यैव त्रेधाभावेन सिद्धानि त्रयाणि रूपाणि ' विद्म ' जानीमः । द्वितीयपादं व्याचष्टे–विद्मा ते धाम विभृता पुरुत्रेति, यदिदं बहुधा विह्रियत इति । ' बहुधा ' बहुप्रकारमाहवनीयायतनेषु विह्रियत इति यदिदमस्ति एतदेतेन प्रतिपाद्यत इत्यर्थः । ' पुरुत्रा ' पुरुषु बहुषु प्रदेशेषु ' विभृता ' विभृतानि ' धाम ' धामानि अमुमर्थं ' विद्म ' जानीमः । तृतीयं पादं व्याचष्टे–विद्मा ते नाम परमं गुहा यदितीति । किं तत् गुह्यं नामेति तद् दर्शयति–यविष्ठ इति वा अस्य तन्नाम परमं गुहेति । चतुर्थपादं व्याचष्टे–विद्मा तमुत्सं यत आजगन्थेतीति । हे अग्ने ! त्वं ' यतः ' ' आजगन्थ ' आगतोऽसि, ' तम् ' ' उत्सम् ' उत्स्यन्दतेऽस्मादित्युत्सः तम्, ' विद्म ' । कोऽसौ उत्सशब्देन विवक्षित इति तं दर्शयति–आपो वा उत्सोऽद्भ्यो वा एष प्रथममाजगामेति । अद्भ्य उत्पत्तिः पूर्वमन्त्रे, " तृतीयमद्भ्योऽजनयत् " इत्यत्रोक्ता । ननु तत्राद्भ्यो जन्म तृतीयमित्युक्तम्, कथमत्र " प्रथममाजगाम "–इति ? उच्यते–नैष दोषः; तत्राग्नेः प्रजापत्यात्मकं चित्यात्मकं च रूपमपेक्ष्य तृतीयत्वमुक्तम्, इह तु मथनाद्यपेक्षया प्राथम्यस्य विवक्षितत्वात् ॥ ४ ॥

समुद्रे त्वेति । ( का. श्रौ. सू. १६ । १६६ ) तृतीयो मन्त्रः । हे ' अग्ने ! ' 'त्वा' त्वां ' समुद्रे ' तत्रापि

( ता ) ता ऽएता ऽएकव्याख्यानाः । ( ऽ ) एतमेवाभि ता ऽआग्नेय्य-स्त्रिष्टुभस्ता यदाग्नेय्यस्तेनाग्निरथ यत्त्रिष्टुभो यदेकादश तेनेन्द्र ऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठत ऽइन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठते॥६॥

---

तत् । " नृचक्षा ईधे दिवोऽअग्नऽऊधन् "–इति । प्रजापतिर्वै नृचक्षाः, आपो दिव ऊधः । " तृतीये त्वा रजसि तस्थिवांसम् "–इति । द्यौर्वै तृतीयं रजः । " अपामुपस्थे महिषा अवर्द्धन् "–(वा. सं. १२। २०) इति । प्राणा वै महिषाः । दिवि त्वा प्राणा अवर्द्धन्नित्येतत् ॥९॥

ता एता एकव्याख्याना एतमेवाभि । ता आग्नेय्यः त्रिष्टुभः । ता यदाग्नेय्यः–तेनाग्निः । अथ यत्त्रिष्टुभः । यदेकादश–तेनेन्द्रः । ऐन्द्राग्नोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतदुपतिष्ठते । इन्द्राग्नी वै सर्वे देवाः । सर्वदेवत्योऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठते ॥ ६ ॥

---

' अप्स्वन्तः ' ' नृमणाः ' मनुष्येषु अनुग्रहयुक्तमनाः ' प्रजापतिः ' ' ईधे ' अदीपयत् । तथा ' नृचक्षाः ' सर्व-साक्षित्वेन मनुष्याणां द्रष्टा प्रजापतिः ' दिवः ' ' ऊधन् ' ऊधसीत्यर्थः । " लोका रजांस्युच्यन्ते "–( निरु. ४ । ३ । ३ ) इति निरुक्तम् । ' तृतीयं रजः ' द्युलोकः, तत्र ' तस्थिवांसं ' स्थितवन्तं त्वाम् ' अपाम् ' ' उपस्थे ' उत्सङ्गे, दिवि ' महिषाः ' महान्तः प्राणाः, वायुप्राणयोरभेदाद् वायवः ' अवर्द्धन् ' यद्वा, अप्शब्देन तज्जं पुष्करपर्णमुच्यते, तदेव द्योतमानत्वात् पृथिव्यसंस्पर्शाद् दिवीति व्याख्यातं ब्राह्मणे । तत्र ' महिषाः ' प्राणाः ऋत्विक्सम्बन्धिनः ' अवर्द्धन् ' । उक्तो नृमणशब्दार्थः, द्वितीयपादस्थेन ' नृचक्षः '–शब्देन प्रजापतिर्विवक्षितः, ' दिव ऊधन् '–इत्यनेन आपो विवक्षिता इति व्याचष्टे–प्रजापतिर्वै नृचक्षा आपो दिव ऊध इति । " तृतीयं रज " इति द्यौर्विवक्षिता, " अपामुपस्थे " इत्यनेन च द्यौर्विवक्षिता । " महिषाः " इति च प्राणा विवक्षिता इति दर्शयति–द्यौर्वै तृतीयं रजः, प्राणा वै महिषाः, दिवि त्वा प्राणा अवर्द्धन्नित्येतदिति ॥ ९ ॥

एवं प्रदर्शनार्थं सूक्तस्यादिमं तृचं व्याख्याय, तद्व्याख्यानमुत्तरास्वृक्षु समानमित्यतिदिशति–ता एता एकव्याख्याना इत्यादिना । एकमेवाग्निं व्याचक्षत इति ' एकव्याख्यानाः । ' एतम् एव ' ' अभि ' प्रवृत्ता इति शेषः । ' ताः ' सर्वाः ' आग्न्येय्यः ' अग्निदेवत्याः, तथा ताः ' त्रिष्टुभः ' । त्रिष्टुभ इति यत् ' तत् ' एव कथमित्यत आह–यदेकादशेति । तत्पादे अक्षरगतैकादशसङ्ख्याऽस्ति, तस्मात् त्रिष्टुभ इत्यर्थः । किं तत इत्याह–तेनेन्द्र इति । त्रिष्टुभो हि इन्द्रदेवताकत्वम् । प्रतिपादितप्रकारेण ' अग्निः ऐन्द्राग्नः ' ॥

यावानग्निर्यावत्यस्य मात्रेति । ऐन्द्राग्नात्मनोऽस्याग्नेर्यावती देवताद्वयस्वरूपा मात्राऽस्ति । इन्द्राग्नी वै सर्वे देवा इति । इन्द्रस्य सर्वदेवताधिपतित्वात्, अग्नेश्च सर्वदेवताऽनुप्रवेशाच्च सर्वदेवतारूपत्वम् । सर्वदेवत्योऽग्निरिति । स्वात्मना इन्द्रात्मना चेत्यर्थः । अत्रापि यावत्यस्य मात्रेति सर्वदेवतारूपा मात्रेत्यर्थः ॥ ६ ॥

यद्वेव व्विष्णुक्रमवात्सप्रे भवतः । (तो) व्विष्णुक्रमैर्व्वै प्रजापतिरिमं लोकमसृजत व्वात्सप्रेणाग्निं व्विष्णुक्रमैर्व्वै प्रजापतिरन्तरिक्षमसृजत व्वात्सप्रेण व्वायुं व्विष्णुक्रमैर्व्वै प्रजापतिर्दिवमसृजत व्वात्सप्रेणादित्यं व्विष्णुक्रमैर्व्वै प्रजापतिर्दिशोऽसृजत व्वात्सप्रेण चन्द्रमसं व्विष्णुक्रमैर्व्वै प्रजापतिर्भूतमसृजत व्वात्सप्रेण भविष्यद्विष्णुक्रमैर्व्वै प्रजापतिर्व्वित्तमसृजत व्वात्सप्रेणाशां व्विष्णुक्रमैर्व्वै प्रजापतिरहरसृजत व्वात्सप्रेण रात्रिं व्विष्णुक्रमैर्व्वै प्रजापतिः पूर्व्वपक्षानसृजत व्वात्सप्रेणापरपक्षान्विष्णुक्रमैर्व्वै प्रजापतिरर्द्धमासानसृजत व्वात्सप्रेण मासान्विष्णुक्रमैर्व्वै प्रजापतिर्ऋतूनसृजत व्वात्सप्रेण संव्वत्सरं तद्यद्विष्णुक्रमवात्सप्रे भवतऽएतदेव तेन सर्व्वँ सृजते ॥ ७ ॥

यद्वेव व्विष्णुक्रमवात्सप्रे भवतः । (तो) व्विष्णुक्रमैर्व्वै प्रजापतिः स्वर्गं लोकमभिप्रायात्सऽएतदवसानमपश्यद्वात्सप्रं तेनावास्यदप्रदाहाय यद्धि

---

यद्वेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्वै प्रजापतिरिमं लोकमसृजत । वात्सप्रेणाग्निम् (१) । विष्णुक्रमैर्वै प्रजापतिरन्तरिक्षमसृजत । वात्सप्रेण वायुम् (२)। विष्णुक्रमैर्वै प्रजापतिर्दिवमसृजत । वात्सप्रेणादित्यम् (३)। विष्णुक्रमैर्वै प्रजापतिर्दिशोऽसृजत । वात्सप्रेण चन्द्रमसम् (४) । विष्णुक्रमैर्वै प्रजापतिर्भूतमसृजत । वात्सप्रेण भविष्यत् (५) । विष्णुक्रमैर्वै प्रजापतिर्वित्तमसृजत । वात्सप्रेणाशाम् (६) । विष्णुक्रमैर्वै प्रजापतिरहरसृजत । वात्सप्रेण रात्रिम् (७) । विष्णुक्रमैर्वै प्रजापतिः पूर्वपक्षानसृजत । वात्सप्रेणापरपक्षान् (८)। विष्णुक्रमैर्वै प्रजापतिरर्द्धमासानसृजत । वात्सप्रेण मासान् (९)। विष्णुक्रमैर्वै प्रजापतिर्ऋतूनसृजत । वात्सप्रेण संवत्सरम् (१०) । तद् यद् विष्णुक्रमवात्सप्रे भवतः—एतदेव तेन सर्वं सृजते ॥ ७ ॥

यद्वेव विष्णुक्रमवात्सप्रे भवतः। विष्णुक्रमैर्वै प्रजापतिः स्वर्गं लोकमभिप्रायात् । स एतदव-

---

अथ पुनर्विष्णुक्रमवात्सप्रे समुच्चित्य[1] (श. प. ६।७।१।१॥६।७।३।१६ कं.) लोकतदधिष्ठातृदेवतादिसकलजगदुत्पादकतया स्तौति—विष्णुक्रमवात्सप्रे भवतो विष्णुक्रमैर्वै प्रजापतिरिमं लोकमसृजत वात्सप्रेणाग्निमित्यादिना । 'वित्तं' धनम् । 'आशां' दिशम् । सर्वं निगदसिद्धम् । उक्तमर्थमुपसंहरति—तद्यद् विष्णुक्रमवात्सप्रे भवत इति । उक्तार्थानुसन्धानेनोभयमवश्यमनुतिष्ठन् यजमानः सर्वं जगत् सृष्टवान् भवति ॥ ७॥

अथ पुनर्विष्णुक्रमं स्वर्गप्राप्तिसाधनात्मना वात्सप्रं तदवसानात्मना च प्रशंसति—यद्वेव विष्णुक्रमवात्सप्रे इति । 'विष्णुक्रमैः' साधनैः स्वर्गं लोकमभिलक्ष्य प्राप्तवान् प्रजापतिः, तस्य गमनस्य अवसानस्थानीयं वात्सप्रमपश्यत् ।

---

१-रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमाः । का० श्रौ० सू० १६ । १७५ ।

युक्तं नु विमुच्यते प्र तद्दह्यते तथैवैतद्यजमानो विष्णुक्रमैरेव स्वर्गं लोक-
मभिप्रयाति वात्सप्रेणावस्यति ॥ ८ ॥

स वै विष्णुक्रमान्क्रान्त्वा । ( न्त्वाऽथ ) अथ तदानीमेव वात्सप्रेणोप-
तिष्ठते यथा प्रयायाथ तदानीमेव विमुञ्चेत्तादृक्तद्देवानां वै विधामनु
मनुष्यास्तस्माद्ध हेदमुत मानुषो ग्रामः प्रयायाथ तदानीमेवावस्यति ॥ ९ ॥

तद्वाऽअहोरात्रेऽएव विष्णुक्रमा भवन्ति । ( न्त्य ) अहोरात्रे वात्सप्र-
महोरात्रेऽएव तद्यात्यहोरात्रे क्षेम्यो भवति तस्माद्ध हेदमुत मानुषो ग्रामो-
ऽहोरात्रे यात्वाऽहोरात्रे क्षेम्यो भवति ॥ १० ॥

---

सानमपश्यद्-वात्सप्रम् । तेनावास्यद्-अप्रदाहाय । यद्धि युक्तं न विमुच्यते-प्र तद्दह्यते । तथै-
वैतद्यजमानो विष्णुक्रमैरेव स्वर्गं लोकमभिप्रयाति । वात्सप्रेणावस्यति ॥ ८ ॥

स वै विष्णुक्रमान् क्रान्त्वा-अथ तदानीमेव वात्सप्रेणोपतिष्ठते । यथा प्रयाय-अथ तदानीमेव
विमुञ्चेत् । तादृक् तद् । देवानां वै विधामनु मनुष्याः । तस्माद्ध हेदमुत मानुषो ग्रामः प्रयाय-
अथ तदानीमेवावस्यति ॥ ९ ॥

तद्वाऽअहोरात्रेऽएव विष्णुक्रमा भवन्ति । अहोरात्रे वात्सप्रम् । अहोरात्रेऽएव तद्याति । अहो-
रात्रे क्षेम्यो भवति । तस्माद्ध हेदमुत मानुषो ग्रामोऽहोरात्रे यात्वा, अहोरात्रे क्षेम्यो भवति ॥ १० ॥

---

अत्रावसानं विमोचनम् । "स्यतिरुपसृष्टो विमोचने"-(निरु. १।६।१) इति हि यास्कः । यजमानस्य तु अग्निना सह तन्मन्त्रेण आक्रमणमेव स्वर्गप्राप्तिः । वात्सप्रमन्त्रेणोपस्थानस्यानन्तरभावित्वात् तेनोपस्थानमेव स्वर्गगत्यवसा-नम् ! यदि केवलं विष्णुक्रमानेव कृत्वा वात्सप्रं न कुर्यात् तदाऽग्नेः उपरि त्यागात् प्रदहेत् । यद्धि युक्तमिति । लोकमर्यादाप्रदर्शनम् । यथा रथे युक्तमश्वादिकं कदाचिदपि विमोकाभावे रथभारश्रमेण दह्यते, तथैवैतदि-त्यादि पूर्ववत् ॥ ८ ॥

दीक्षाप्रथमदिवसे विष्णुक्रमवात्सप्रयोः समसनं विधत्ते-स वै विष्णुक्रमानिति । प्रजापतिना यथा कृतम्, तथैव यजमानेनापि कर्त्तव्यमिति को नियम इति, तत्राह-देवानां वै विधामनु मनुष्या इति । 'तस्माद्ध ह' तस्मादेव खलु कारणात् 'इदं' वक्ष्यमाणं 'मानुषो ग्रामः' मनुष्यसमूहोऽपि 'प्रयाय' गन्त-व्यम् प्राप्य, तदानीमेव 'अवस्यति' अश्वादि गमनसाधनं विमुञ्चति । अनेन तस्य भूतार्थवादता सम-र्थिता भवति ॥ ९ ॥

विहिते विष्णुक्रमवात्सप्रे, एकस्मिन् दिने विष्णुक्रमाः, अपरस्मिंस्तु वात्सप्रमित्येव क्रमेण कर्त्तव्यमिति सार्थ-वादं दर्शयति-तद्वा अहोरात्रे एव विष्णुक्रमा भवन्ति, अहोरात्रे वात्सप्रमिति । 'अहोरात्रे' एकस्मिन् दिवसे इत्यर्थः । तथा च कात्यायनः-" विष्णुक्रमवात्सप्रे चाहर्व्यत्यासम् "-( का. श्रौ. सू. १६ । १७४ ) इति । 'तत्' तेन गमनरूपं विष्णुक्रमम् एकस्मिन् दिवसे करोति, अपरस्मिंश्च तदवसानरूपं वात्सप्रं कृत-वान् भवति । 'तस्मात्' 'मानुषो ग्रामः' अपि इदानीमपि एकस्मिन् दिवसे अध्वानं गत्वा, अन्यस्मिन् दिवसे 'क्षेम्यः' क्षेमार्हो भवति, सुखमास्त इत्यर्थः ॥ १० ॥

स वा ऽअर्द्धमेव संव्वत्सरस्य व्विष्णुक्रमान्क्रमते । ( तेऽर्द्धं ) अर्द्धं व्वात्सप्रेणोपतिष्ठते मध्ये ह संव्वत्सरस्य स्वर्गो लोकः स यत्कनीयोऽर्द्धात्क्रमेत न हैतꣳ स्वर्गं लोकमभिप्राप्नुयादथ यद्भूयोऽर्द्धात्पराङ्हैतꣳ स्वर्गं लोकमतिप्रणश्येदथ यदर्द्धं क्रमतेऽर्द्धमुपतिष्ठते तत्सम्प्रति स्वर्गं लोकमाप्त्वा व्विमुञ्चते ॥ ११ ॥

ताभ्यां वै व्विपर्य्यासमेति । यथा महान्तमध्वानं व्विमोकꣳ समश्नुवीत ताहक्तस्य वै पुरस्ताच्चोपरिष्टाच्चोभे व्विष्णुक्रमवात्सप्रे समस्यत्यहर्व्वै व्विष्णुक्रमा रात्रिर्व्वात्सप्रमेतद्वाऽइदꣳ सर्व्वं प्रजापतिः प्रजनयिष्युंश्च प्रजनयित्वा चाहोरात्राभ्यामुभयतः पर्यगृह्णात्तथैवैतद्यजमान ऽइदꣳ सर्व्वं प्रजनयिष्युंश्च प्रजनयित्वा चाहोरात्राभ्यामुभयतः परिगृह्णाति ॥ १२ ॥

---

स वाऽअर्द्धमेव संवत्सरस्य विष्णुक्रमान् क्रमते—अर्द्धं वात्सप्रेणोपतिष्ठते । मध्ये ह संवत्सरस्य स्वर्गो लोकः । स यत् कनीयोऽर्द्धात् क्रमेत—न हैतं स्वर्गं लोकमभिप्राप्नुयात् । अथ यद्भूयोऽर्द्धात्—पराङ् हैतं स्वर्गं लोकमतिप्रणश्येत् । अथ यदर्द्धं क्रमते—अर्द्धमुपतिष्ठते—तत् सम्प्रति स्वर्गं लोकमाप्त्वा विमुञ्चते ॥ ११ ॥

ताभ्यां वै विपर्यासमेति । यथा महान्तमध्वानं विमोकं समश्नुवीत—ताहक् । तस्य वै पुरस्ताच्चोपरिष्टाच्चोभे विष्णुक्रमवात्सप्रे समस्यति । अहर्वै विष्णुक्रमाः, रात्रिर्वात्सप्रम् । एतद्वाऽइदं सर्वं प्रजापतिः प्रजनयिष्यंश्च प्रजनयित्वा च, अहोरात्राभ्यामुभयतः पर्यगृह्णात् । तथैवैतद्यजमान इदं सर्वं प्रजनयिष्यंश्च प्रजनयित्वा चाहोरात्राभ्यामुभयतः परिगृह्णाति ॥ १२ ॥

---

उक्तप्रकारेण संवत्सरपर्यन्तमनुष्ठितवतः फलितं दर्शयति—स वा अर्द्धमेव संवत्सरस्येति । एवं सति संवत्सरार्द्धं विष्णुक्रमाः कृता भवन्ति, अतश्च संवत्सरमध्यदिवसात्मकः स्वर्गलोकः प्राप्तो भवति । उक्तवैपरीत्ये अर्द्धसंवत्सरादर्वागेकस्मिन्नप्यहनि अहर्व्यत्यासनियमभङ्गेन विष्णुक्रममकृत्वा वात्सप्रं कुर्यात्, तदानीं संवत्सरमध्यात्मकं स्वर्गं न प्राप्नुयात् । अथार्द्धसंवत्सरादुपर्यपि अहर्व्यत्यासभङ्गेन यदि विष्णुक्रममेव कुर्यात्, तदानीं संवत्सरमध्यलक्षणं स्वर्गमतिक्रामेत्; अतो न्यूनाधिकमकृत्वोपक्रमेणाहर्व्यत्यासेनार्द्धसंवत्सरं विष्णुक्रमं कृत्वा अर्द्धसंवत्सरं वात्सप्रोपस्थाने सति अप्राप्त्यतिक्रमणलक्षणदोषद्वयाभावेनैव 'स्वर्गं लोकम् आप्त्वा विमुञ्चते' प्राप्तिसाधनमग्निम् ॥ ११ ॥

**ताभ्यां वै विपर्यासमेतीति** । संवत्सरमनुष्ठेयत्वात् महाध्वगमनस्थानीयं चयनकर्म, तत्राहर्विपर्यासमनुष्ठानश्रमपरिहाराय एकैकस्मिन् दिने यात्राविच्छेदं महाध्वगमनप्राप्तिस्थानीयं कृतवान् भवति । आद्यन्तयोरह्नोरुभयो-

---

१—संवत्सरꣳ सोष्यतः । संवत्सराहिताग्नेः । जातस्य च । षण्मास्यमंत्यम् । का. श्रौ. सू. १६ । १७९–१८२ ।

तदाहुः । (र्य) यदहर्व्विष्णुक्रमा रात्रिर्व्वात्सप्रमथोभेऽएवाहन्भवतो न रात्र्यां कथमस्यापि रात्र्यां कृते भवत ऽइत्येतद्वाऽएनेऽअदो दीक्षमाणः पुरस्तादपराह्णऽउभे समस्यति रात्रिर्हैतद्यदपराह्णोऽथैनेऽएतत्सन्निवपस्यु-न्नुपरिष्टात्पूर्वाह्णऽउभे समस्यत्यहर्हैतद्यत्पूर्वाह्ण ऽएवमु हास्योभेऽएवाहन् कृते भवतऽ उभे रात्र्याम् ॥ १३ ॥

(ऌँ)स यदहः सन्निवपस्यन्त्स्यात्।(त्त)तदहः प्रातरुदितऽआदित्ये भस्मैव प्रथममुद्वपति भस्मोदुप्य व्वाचं व्विसृजते व्वाचं व्विसृज्य समिधमा-

---

तदाहुः—यदहर्विष्णुक्रमाः, रात्रिर्वात्सप्रम्—अथोभे ऽएवाहन्भवतो, न रात्र्याम् । कथमस्यापि रात्र्यां कृते भवत इति । एतद्वाऽएनेऽअदो दीक्षमाणः पुरस्तादपराह्ण ऽउभे समस्यति । रात्रि-र्हैतद्—यदपराह्णः । अथैनेऽएतत् सन्निवपस्यन्नुपरिष्टात् पूर्वाह्णऽउभे समस्यति । अहर्हैतद्—यत् पूर्वाह्णः । एवमु हास्योभेऽएवाहन् कृते भवतः—उभे रात्र्याम् ॥ १३ ॥

स यदहः सन्निवपस्यन्त्स्यात्—तदहः प्रातरुदित ऽआदित्ये भस्मैव प्रथममुद्वपति । भस्मोदुप्य वाचं

---

र्विष्णुक्रमवात्सप्रस्थानीयत्वम्, तयोः समुच्चित्यानुष्ठानं विधाय स्तौति—तस्य वै पुरस्ताच्चोपरिष्टाच्चेत्यादिना । अहश्च रात्रिश्च क्रमेण विष्णुक्रमवात्सप्रस्थानीयम् । तथा सति 'एतद्वै' । किमेतदिति स्पष्टयति—इदं सर्वं प्रजापतिः प्रजनयिष्यंश्चेति । एतस्य सर्वस्य सृष्ट्यादौ तदन्ते वा अहोरात्राभ्यां सृष्टं सर्वं पर्यगृह्णात्, स्वाधीनं कृतवान् । तथैवैतदिति । पूर्ववत् । यजमानस्य सर्वजगत्सृष्टिर्नाम संवत्सरपर्यन्तमहर्व्यत्यासानुष्ठानम्, सृष्टस्याहोरात्राभ्यामुभयतः परिग्रह उभयत्रोभयोः समुच्चित्यानुष्ठानम् ॥ १२ ॥

"अहर्वै विष्णुक्रमो रात्रिर्वात्सप्रम्" इत्यत्र काचिच्छङ्का समुन्मिषति, तामनूद्य समाधत्ते—तदाहुर्यदहरिति । 'उभे एव' 'अहन्' अहनि निर्वर्त्ये 'भवतः,' 'न रात्र्याम्;' 'कथम्' 'अस्य' यजमानस्य 'रात्र्याम्' अपि 'कृते भवतः' । अस्योत्तरम्—एतद्वा इति । 'एने' उभे विष्णुक्रमवात्सप्रे 'अदः' विप्रकृष्टे दीक्षावसरे 'दीक्षमाणः' 'पुरस्तात्' संवत्सरस्य 'अपराह्णे' 'समस्यति' अव्यवधानेनानुतिष्ठति । अस्तु, रात्रेः कथं प्राप्तिरिति, तत्राह—रात्रिर्हैतद् यदपराह्ण इति । इत्थमादौ समासकारणमुक्त्वा अन्तेऽपि दर्शयति—अथैने एतत् सन्निवपस्यन्निति । 'उपरिष्टात्' संवत्सरावसाने । शिष्टं पूर्ववत् । 'एवम्' आद्यन्तयोः समस्यानुष्ठा-नेन 'उभे' अपि सर्वस्मिन्नहनि समस्य कृते भवतः । तथा सर्वस्यामपि 'रात्र्याम्' 'उभे' अपि समस्य 'कृते भवतः' ॥ १३ ॥

चरमदिवसकर्त्तव्यमाह—स यदहरिति । 'यदहः' यस्मिन्नहनि । सन्निवापो नाम चितेऽग्नौ उख्याग्नेर्निर्वापः,

दधाति समिधमाधाय भस्मापोऽभ्यवहरति यथैव तस्याभ्यवहरणं तथा-ऽपादाय भस्मनः प्रत्येत्योखायामोप्योपतिष्ठतेऽथ प्रायश्चित्ती करोति ॥ १४ ॥

स यदि विष्णुक्रमीयमहः स्यात् । (द्वि) विष्णुक्रमान्क्रान्त्वा वात्स-प्रेणोपतिष्ठेताथ यदि वात्सप्रीयं वात्सप्रेणोपस्थाय विष्णुक्रमान्क्रान्त्वा वात्सप्रमन्ततः कुर्यान्न विष्णुक्रमानन्ततः कुर्याद्यथा प्रयाय न विमुञ्चे-त्तादृक्तदथ यद्वात्सप्रमन्ततः करोति प्रतिष्ठा वै वात्सप्रं यथा प्रतिष्ठापयेद-वसाययेत्तादृक्तत्तस्माद्उ वात्सप्रमेवान्ततः कुर्यात् ॥ १५ ॥

इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ६-५-४ ॥ (७. ४.) ॥
इति सप्तमोऽध्यायः समाप्तः ॥ ६-७ ॥

---

विसृजते । वाचं विसृज्य समिधमादधाति । समिधमाधाय भस्मापोऽभ्यवहरति । यथैव तस्याभ्य-वहरणं–तथाऽपादाय भस्मनः प्रत्येत्योखायामोप्योपतिष्ठते । अथ प्रायश्चित्ती करोति ॥ १४ ॥

स यदि विष्णुक्रमीयमहःस्याद्–विष्णुक्रमान्क्रान्त्वा वात्सप्रेणोपतिष्ठेत । अथ यदि वात्सप्रीयम्–वात्सप्रेणोपस्थाय विष्णुक्रमान्क्रान्त्वा वात्सप्रमन्ततः कुर्यात् । न विष्णुक्रमानन्ततः कुर्यात् । यथा प्रयाय न विमुञ्चेत्–तादृक्तत् । अथ यद्वात्सप्रमन्ततः करोति–प्रतिष्ठा वै वात्सप्रम्–यथा प्रतिष्ठापयेत्; अवसाययेत्–तादृक् तत् । तस्माद्उ वात्सप्रमेवान्ततः कुर्यात् ॥ १५ ॥

---

तं करिष्यन् ‘ स्यात्, ’ ‘ तदहः प्रातः उदिते आदित्ये ’–इत्यादिना प्रयोगः प्रदर्श्यते । भस्मैव प्रथम-मिति[1] । नेतरत् कर्म प्रथमं कुर्यात् । यथैव तस्याभ्यवहरणमिति । ‘ तस्य ’ भस्मनः उदके प्रक्षेपो ‘ यथा, ’ तथा ‘ एव ’ । क्षिप्तस्य ‘ भस्मनः ’ सकाशात् अपादाय पुनस्तद्देशात् ‘ प्रति ’ निवृत्तः सन् ‘ उखायाम् ओप्य उपतिष्ठते ’ । भस्माभ्यवहरणादेरनुष्ठानप्रकारः समन्त्रक उपरिष्टात् “ अथातो भस्मन एव ” इत्यादिना ( श. प. ६ । ८ । २ । १ ) प्रतिपादयिष्यते, अत्र तु अनुष्ठेयपदार्थोद्देशमात्रमेव । अथ प्रायश्चित्ती करोतीति । एतदुखाप्रकरणे व्याख्यातम् ( श. प. ६ । ६ । ४ । ११–१५ ) ॥ १४ ॥

दीक्षान्त्यदिवसस्य पक्षे विष्णुक्रमीयत्वम्, पक्षे वात्सप्रीयत्वं च भवति, तदा कथमनुष्ठानप्रकार इति, तद् विभज्य दर्शयति–स यदि विष्णुक्रमीयमहः स्यादिति । विष्णुक्रमानन्तरं वात्सप्रोपस्थानमिति यथाक्रममेव । यदि वात्सप्रसम्बन्धि स्यात् चरममहः, तदा वात्सप्रोपस्थानानन्तरं ‘ विष्णुक्रमान् क्रान्त्वा ’ पुनर्वात्सप्रोपस्थानं कर्त्तव्यम् । पुनर्वात्सप्रोपस्थानमकृत्वा, केवलेन विष्णुक्रमेणैव यदि समाप्येत, तदा गमनसाधनाश्वादिस्था-नीयस्याग्नेर्न विमोक्षः स्यात् । इत्थं विष्णुक्रमेणैवानुष्ठानावसाने दोषमुक्त्वा, पुनः वात्सप्रेणाहस्समाप्तौ गुणं दर्श-

---

१–उखाया भस्मोद्वपनमस्तमिते पात्रे । का. श्रौ. सू. १६ । १७० ।

यति—अथ यद् वात्सप्रमन्ततः करोति, प्रतिष्ठा वै वात्सप्रमिति । वात्सप्रस्य स्वर्गगमनावसानरूपत्वमुक्तं प्राक्; ( अस्मिन्नेव ब्राह्मणे ११ कण्डिकायाम् ) तस्मात् प्रतिष्ठात्मकत्वम् । स्पष्टमन्यत् ( का. श्रौ. सू. १६ । १७९ ) ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
षष्ठे काण्डे सप्तमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ६—७—४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये षष्ठकाण्डे सप्तमोऽध्यायः समाप्तः ॥ ६—७ ॥

# अथ अष्टमाऽध्याये प्रथमं ब्राह्मणम् ।
# पञ्चमप्रपाठके च पञ्चमं ब्राह्मणम् ।

व्वनीवाह्येताग्निं बिभ्रदित्याहुः । ( दें ) देवाश्चासुराश्चोभये प्राजापत्या ऽअस्पर्द्धन्त ते देवाश्चक्रमचरञ्छालमसुराऽ आसंस्ते देवाश्चक्रेण चरन्तऽ एतत्कर्मापश्यंश्चक्रेण हि वै देवाश्चरन्तऽ एतत्कर्मापश्यंस्तस्मादनसऽ एव पौरोडाशेषु यजूᳬंष्यनसोऽग्नौ ॥ १ ॥

स यो व्वनीवाह्यते । देवान्कर्मणैति दैवᳬं हास्य कर्म कृतं भवत्यथ यो न व्वनीवाह्यतेऽसुरान् कर्मणैत्यसुर्यᳬं हास्य कर्म कृतं भवति ॥ २ ॥

---

वनीवाह्येताग्निं बिभ्रदित्याहुः । देवाश्चासुराश्चोभये प्राजापत्या अस्पर्द्धन्त । ते देवाश्चक्रमचरन्—शालमसुरा आसन् । ते देवाश्चक्रेण चरन्त एतत् कर्मापश्यन् । चक्रेण हि वै देवाश्चरन्त एतत् कर्मापश्यन् । तस्माद्—अनस एव पौरोडाशेषु यजूंषि, अनसोऽग्नौ ॥ १ ॥

स यो वनीवाह्यते—देवान् कर्मणैति, दैवं हास्य कर्म कृतं भवति । अथ यो न वनीवाह्यते—असुरान् कर्मणैति । असुर्यं हास्य कर्म कृतं भवति ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
रुक्मशिक्यपाशासन्दीसशिक्योखाग्निधारणम् । विष्णुक्रमश्च वात्सप्रोपस्थानं सप्तमे गतम् ॥ २ ॥
अथाष्टमेऽत्र ह्युख्याग्नेर्गार्हपत्यचयार्थकम् । देवयजनदेशस्य प्रापणादिकमुच्यते ॥ ३ ॥

तत्रोख्याग्नेर्गार्हपत्यं प्रति अनसा प्रापणं विधास्यंस्तदुपोद्घातमाह—वनीवाह्येताग्निं बिभ्रदित्यादिना । अग्निचयनप्रदेशप्रापणीयाग्निं 'बिभ्रद्' यजमानो 'वनीवाह्येत' अनसा तमुख्याग्निं भृशं वाहयेत् ' इत्याहुः ' पूर्वमहर्षयः । वहतेर्यङन्तस्याभ्यासस्य नीगागमश्छान्दसः ॥

केनाभिप्रायेणेति, तमभिप्रायं पूर्ववृत्तान्तमुखेन दर्शयति—देवाश्चेति । ' ते देवाः ' 'चक्रम् अचरन्' चक्रेणाचरन्नित्यर्थः । 'असुराः' तु 'शालम्' चक्रव्यतिरिक्तं साधनम् शालम्, तत् ' आसन् ' तत्साधना अभवन्नित्यर्थः । ते देवाश्चक्रेण चरन्त एतत् कर्मापश्यन्निति । ' एतत् ' उख्याग्निप्रणयनलक्षणमित्यर्थः । यस्माद् 'अपश्यन्' 'तस्मात्' 'पौरोडाशेषु' पुरोडाशसम्बन्धिषु कर्मसु ' अनसः एव ' शकटस्यैव 'यजूंषि' मन्त्राः सन्ति, तथा ' अग्नौ ' अग्निचयनेऽपि ' अनसः' एव ' यजूंषि '॥ १ ॥

इत्थमुपोद्घातमुक्त्वा औपोद्घातिकं दर्शयति—स यो वनीवाह्यत इति । भृशमनसा वाहयेत् तद् वनीवाहनलक्षणेन 'कर्मणा' ' देवान् एति ' देवानामाचरणमनुकरोतीत्यर्थः । तदेव व्याचष्टे—दैवं हास्येति । व्यतिरेकं

---

१—वनीवाहनमेतद्दीक्षासु यदीच्छेत् । का० श्रौ० सू० १६ । १६१ ॥

तद्धैक ऽआहुः । स्वयं वाऽएष वनीवाहितो विष्णुक्रमैर्वाऽएष प्रयाति वात्सप्रेणावस्यतीति न तथा विद्याद्दैवं वाऽअस्य तत्प्रयाणं यद्विष्णुक्रमा दैवमवसानं यद्वात्सप्रमथास्येदं मानुषं प्रयाणं यदिदं प्रयाति मानुषमवसानं यदवस्यति ॥ ३ ॥

प्रजापतिरेषोऽग्निः । ( रु ) उभयम्वेतत्प्रजापतिर्यच्च देवा यच्च मनुष्यास्तद्यद्विष्णुक्रमवात्सप्रे भवतो यद्देवास्य दैवꣳ रूपं तदस्य तेन संस्करोत्यथ यद्वनीवाह्यते यदेवास्य मानुषꣳ रूपं तदस्य तेन संस्करोति स ह वाऽएतꣳ सर्वं कृत्स्नं प्रजापतिꣳ संस्करोति यऽएवं विद्वान्वनीवाह्यते तस्मादु वनीवाह्येतैव ॥ ४ ॥

---

तद्धैक ऽआहुः—स्वयं वाऽएष वनीवाहितः । विष्णुक्रमैर्वाऽएष प्रयाति, वात्सप्रेणावस्यतीति । न तथा विद्याद् । दैवं वा ऽअस्य तत् प्रयाणं—यद् विष्णुक्रमाः । दैवमवसानम्—यद् वात्सप्रम् । अथास्येदं मानुषं प्रयाणं—यदिदं प्रयाति । मानुषमवसानं—यदवस्याति ॥ ३ ॥

प्रजापतिरेषोऽग्निः । उभयम्वेतत् प्रजापतिः—यच्च देवाः, यच्च मनुष्याः । तद् यद् विष्णुक्रमवात्सप्रे भवतः—यद्देवास्य दैवं रूपम्—तदस्य तेन संस्करोति । अथ यद्वनीवाह्यते—यदेवास्य मानुषं रूपम् । तदस्य तेन संस्करोति । स ह वाऽएतं सर्वं कृत्स्नं प्रजापतिं संस्करोति—य एवं विद्वान् वनीवाह्यते । तस्मादु वनीवाह्येतैव ॥ ४ ॥

---

दर्शयति—अथ यो न वनीवाह्यत इति । वनीवाहनमकृत्वा शालायामेवाग्निं निष्पादयेत्, तदा 'असुर्यम्' तत् कर्म असुरेभ्यो हितं भवतीत्यर्थः ॥ २ ॥

इत्थं वनीवाहनं कर्त्तव्यमिति विधाय, तस्य प्रकारान्तरेण प्राप्तिमाशङ्कते—तद्धैक आहुः स्वयं वा एष इति । अग्नेर्भृशं वहनमेवापेक्षितम् । तत् विष्णुक्रमणेनैव सवात्सप्रेण कृतमित्यभिप्रायः । दैवं वा अस्य तत् प्रयाणमिति । विष्णुक्रमरूपं प्रयाणं देवविष्णुभावेनाक्रान्तत्वात्, अवसानस्य तादृक्त्वमपि तस्मादेव; वनीवाहनरूपं तु मानुषमेव ॥ ३ ॥

अस्त्वेवं विषयभेदेन प्रयाणभेदः, तथापि द्विविधमपि कर्त्तव्यमित्यत्र किङ्कारणमिति तद् दर्शयति—प्रजापतिरेषोऽग्निरुभयम्वेतदित्यादिना । स्रष्टृस्रष्टव्ययोरभेदोपचारेण 'एतत् उभयम्' अपि 'प्रजापतिः' एव । तथा सत्युभयेन सवात्सप्रेण विष्णुक्रमेण वनीवाहनेन चेत्युभयेन दैवमानुषभेदेनोभयविधमपि 'रूपं संस्करोति' । अत उभयमप्यवश्यमनुष्ठेयमित्यर्थः । उक्तार्थज्ञानपूर्वकमनुतिष्ठतः फलमाह—स ह वा एतमिति । तस्माद्विति । निगमनम् ॥ ४ ॥

स यदहः प्रयास्यन्त्स्यात् । (त्त) तदहरुत्तरतोऽग्नेः प्रागन ऽउपस्थाप्या-थास्मिन्त्समिधमादधात्येतद्वाऽएनं देवाऽ एष्यन्तं पुरस्तादन्नेनाप्रीणन्नेतया समिधा तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्येतया समिधा ॥ ५ ॥

समिधाऽग्निं दुवस्यतेति । समिधाऽग्निं नमस्यतेत्येतद्घृतैर्बोधयतातिथिमाऽस्मिन्हव्या जुहोतनेति घृतैरह बोधयतातिथिमो ऽअस्मिन्हव्यानि जुहुतेत्येतद्बुद्धवत्येत्यायै ह्येनमेतद्बोधयति ॥ ६ ॥

( त्यु ) अथैनमुद्यच्छति । ( त्यु ) उदु त्वा विश्वे देवाऽ अग्ने भरन्तु चित्तिभिरिति विश्वे वाऽएतमग्ने देवाश्चित्तिभिरुदभरन्नेतद्ध्येषां तदा चित्तमासीत्तथैवैनमयमेतच्चित्तिभिरुद्धरत्येतद्ध्यस्य तदा चित्तं भवति

---

स यदहः प्रयास्यन्त्स्यात्—तदहरुत्तरतोऽग्नेः प्रागन उपस्थाप्य—अथास्मिन् समिधमादधाति । एतद्वाऽएनं देवा एष्यन्तं पुरस्तादन्नेनाप्रीणन्—एतया समिधा । तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणाति—एतया समिधा ॥ ५ ॥

"समिधाऽग्निं दुवस्यत"—इति । समिधाऽग्निं नमस्यतेत्येतद् । "घृतैर्बोधयतातिथिम् । आऽस्मिन् हव्या जुहोतन"—( वा. सं. १२ । ३० ) इति । घृतैरह बोधयतातिथिम् । ओऽअस्मिन् हव्यानि जुहुतेत्येतद् । बुद्धवत्या । इत्यायै ह्येनमेतद् बोधयति ॥ ६ ॥

अथैनमुद्यच्छति । "उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः"—इति । विश्वे वाऽएतमग्ने देवाश्चित्तिभिरुदभरन् । एतद्ध्येषां तदा चित्तमासीत् । तथैवैनमयमेतच्चित्तिभिरुद्धरति । एत-

---

अग्नेर्गार्हपत्यचयनदेशं प्रति प्रणयनप्रयोगमाह—स यदहरिति । यस्मिन्नहनि दीक्षां समाप्य, चितिप्रदेशं प्रति 'प्रयास्यन् स्यात्,' तदोख्याग्नेः 'उत्तरतः' प्राक् अनः उपस्थाप्य, 'अस्मिन्' उख्याग्नौ 'समिधम्' आदध्यात् । तथा च कात्यायनः—" प्रागनः कृत्वोख्यस्योत्तरतः समिदाधानं समिधाऽग्निमिति "—( का. श्रौ. सू. १६ । १८४ ) इति । एतत् प्रशंसति—एतद्वा एनमिति । यथा लोके प्रयास्यन्तं भोजयित्वा प्रस्थापयति, तत्स्थानीयमिदं समिदाधानमिति स्तुतिः ॥ ५ ॥

तत्र समिधाऽग्निमिति मन्त्रः । हे ऋत्विग्यजमानाः ! 'समिधा अग्निं' 'दुवस्यत' प्रचरत, 'घृतैः' अतिथिभूतमग्निं 'बोधयत' प्रबुद्धं कुरुत । अथ चितिप्रदेशे गार्हपत्यभूते 'अस्मिन्' 'हव्या' हवींषि 'आजुहोतन' सर्वतो जुहुत । तत्र दुवस्यतेत्येतद् व्याचष्टे—समिधाऽग्निं नमस्यतेत्येतदिति । स्पष्टमन्यत् । बोधयतेति यद् बोद्धृलिङ्गमस्ति, तस्य तात्पर्यमाह—इत्यायै ह्येनमेतद् बोधयतीति । 'इत्यायै' गमनाय ॥ ६ ॥

अथैनमुद्यच्छत्युदु त्वेति । अनस उपरि उख्याग्निं स्थापयितुमूर्ध्वं धारयेत् । तच्च धारणमासन्दी-

स नो भव शिवस्त्वꣳ सुप्रतीको विभावसुरिति यथैव यजुस्तथा बन्धुस्तं दक्षिणतऽउदञ्चमादधाति तस्योक्तो बन्धुः स्थाल्यां गार्हपत्यꣳ समुप्यापरमादधाति स यदि कामयेतोपाधिरोहेत्पार्श्वतो वा व्रजेत् ॥ ७ ॥

( ८ ) अथानड्वाहौ युनक्ति । दक्षिणमग्रेऽथ सव्यमेवं देवत्रेतरथा मानुषे स यां काञ्च दिशं यास्यन्त्स्यात्प्राङेवाग्रे प्रयायात्प्राची हि दिगग्नेः स्वामेव तद्दिशमनु प्रयाति ॥ ८ ॥

---

ह्यचस्य तदा चित्तं भवति । "स नो भव शिवस्त्वं सुप्रतीको विभावसुः"—( वा. सं. १२।३१ ) इति । यथैव यजुस्तथा बन्धुः। तं दक्षिणत उदञ्चमादधाति । तस्योक्तो बन्धुः। स्थाल्यां गार्हपत्यं समुप्य, अपरमादधाति । स यदि कामयेत—उपाधिरोहेत्, पार्श्वतो वा व्रजेत् ॥ ७ ॥

अथानड्वाहौ युनक्ति—दक्षिणमग्रे, अथ सव्यम् । एवं देवत्रा । इतरथा मानुषे । स यां काञ्च दिशं यास्यन्त्स्यात्—प्राङेवाग्रे प्रयायात् । प्राची हि दिगग्नेः । स्वामेव तद्दिशमनु प्रयाति ॥ ८ ॥

---

सहितम् "सासन्दीकमुद्यम्य"—( का. श्रौ. सू. १६ । १८९ ) इति सूत्रात् । पूर्वार्द्धे चित्तिभिरित्येतद् व्याचष्टे—एतद्ध्येषामिति । 'एषां' देवानां 'चित्तिभिः' ज्ञानैरुद्धरणं कुर्वताम् 'तदा' उद्धरणकाले 'एतत्' उद्धरणमेव 'चित्तं' चेत्तव्यम् 'आसीत्' । 'तथैव' देववदेव यजमानोऽपि 'चित्तिभिः' उद्भृतवान् भवति । अस्यापि यजमानस्य 'एतदेव' उद्धरणमेव चित्तं भवति । उत्तरार्द्धस्य स्पष्टार्थतामाह—यथैव यजुस्तथा बन्धुरिति । मन्त्रस्यायमर्थः—हे 'अग्ने !' 'त्वा' त्वाम् 'विश्वे देवाः' 'चित्तिभिः' ज्ञानैः 'उद्धरन्तु' । 'सः' तथाविधस्त्वं 'नः' अस्माकं 'शिवो भव' तथा 'सुप्रतीकः' शोभनाङ्गः 'विभावसुः' प्रभैकधनश्चभव ॥

उद्भृतस्याग्नेरनसि स्थापने विशेषमाह—तं दक्षिणत उदञ्चमादधातीति । 'दक्षिणतः' सकाशात् 'उदञ्चम्' उदङ्मुखम् । "उदु त्वेति दक्षिणतोऽनसि करोति"—( का. श्रौ. सू. १६ । १८९ ) इति सूत्रम् । पूर्वोक्तमर्थवादमुक्तेऽर्थेऽतिदिशति—तस्योक्तो बन्धुरिति । "दक्षिणतो वा उदग् योनौ रेतः सिच्यते"—( श. प. ६ । ४ । २ । १० कं. ) इत्येवमुक्त इत्यर्थः । अन्यस्यां 'स्थाल्याम्' 'अपरं' 'गार्हपत्यम्' अग्निं स्थापयित्वा 'आदधाति' अग्नेः पश्चाद्देशे स्थापयेत् । "स्थाल्यां गार्हपत्यं पश्चात्"—( का. श्रौ. सू. १६ । १८६ ) इति हि सूत्रम् । यजमानस्याप्यारोहणं पाक्षिकमिति दर्शयति—स यदि कामयेतेति ॥ ७ ॥

अनस्यनडुहोर्योजनं तत्क्रमं चाह—अथानड्वाहाविति । 'एवम्' उक्तक्रमेण चेत् 'देवत्रा' देवेषूचितं भवति । 'इतरथा' सव्यं प्रथमं युनक्ति चेत् 'मानुषे' मनुष्ये, तद्योग्यमित्यर्थः । यजनदेशस्य यत्र कुत्र-

---

१—अनड्वाहौ युक्त्वा प्रेदग्ने इति प्राङ् यात्वा यथार्थम् । का० श्रौ० सू० १६ । १८७ ॥

प्रेदग्ने ज्योतिष्मान्याहि । शिवेभिरर्चिभिष्ट्वमिति प्रेदग्ने त्वं ज्योतिष्मान्याहि शिवेभिरर्चिभिर्दीप्यमानैरित्येतद्बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तन्वा प्रजाऽइति बृहद्भिरर्चिभिर्दीप्यमानैर्मा हिꣳसीरात्मना प्रजाऽइत्येतत् ॥ ९ ॥

(त्सु) स यदाऽक्षऽउत्सर्जेत् । ( द्व ) अथैतद्यजुर्जपेदसुर्या वाऽएषा वाग्याऽक्षस्य तामेतच्छमयति तामेतद्देवत्रा करोति ॥ १० ॥

यद्वेवैतद्यजुर्जपति । यस्मिन्वै कस्मिंश्चाहितेऽक्षऽ उत्सर्जति तस्यैव सा व्वाग्भवति तद्यदग्नावाहितेऽक्षऽउत्सर्जत्यग्नेरेव सा व्वाग्भवत्यग्निमेव तद्देवा

---

" प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिष्ट्वम् "–इति । प्रेदग्ने त्वं ज्योतिष्मान्याहि शिवेभिरर्चिभिर्दीप्यमानैरित्येतत् । " बृहद्भिर्भानुभिर्भासन् मा हिंसीस्तन्वा प्रजाः "–( वा. सं. १२ । ३२ ) इति । बृहद्भिरर्चिभिर्दीप्यमानैर्मा हिंसीरात्मना प्रजा इत्येतत् ॥ ९ ॥

स यदाऽक्ष उत्सर्जेत्–अथैतद्यजुर्जपेत् । असुर्या वाऽएषा वाक्–याऽक्षस्य । तामेतच्छमयति । तामेतद्देवत्रा करोति ॥ १० ॥

यद्वेवैतद्यजुर्जपति । यस्मिन्वै कस्मिंश्चाहितेऽक्ष उत्सर्जति–तस्यैव सा वाग् भवति । तद् यदग्नावाहितेऽक्ष उत्सर्जति–अग्नेरेव सा वाग् भवति । अग्निमेव तद्देवा उपास्तुवन् । उपामहयन् । तथै-

---

चित् अवस्थितत्वेऽपि आदौ प्राङ्मुखो यायादिति नियमं सार्थवादं विधत्ते–स यां काञ्चेति । देवानां दिग्व्यवस्थाकाले अग्निना प्राग्दिक्परिग्रहात्–प्राची हि दिगग्नेरित्युक्तम् ( श. प. ६ । ३।३।२ ) । " प्राची दिगग्निर्देवता "–( तै. सं. ४ । ३ । ३ ) इति तैत्तिरीयकप्रसिद्धिः " प्राची हि "–इति हिशब्देन द्योत्यते । तदनसः प्राक् प्रवर्त्तनम् ॥ ८ ॥

मन्त्रे पूर्वार्द्धस्य तात्पर्यं दर्शयन् अर्चिभिरित्येतस्यावयवार्थमाह–प्रेदग्न इत्यादिना । शिवेभिरर्चिभिर्दीप्यमानैरिति । " ऋच दीप्तौ "[1]–इत्यस्मात् अर्चिशब्द इति प्रतिपादितं भवति । तथैवोत्तरार्द्धस्य तात्पर्यं दर्शयन् भानु-शब्दस्यार्चिरर्थ इति व्याचष्टे–बृहद्भिर्भानुभिरिति । ' तन्वा '–इत्यस्य व्याख्यानमात्मनेति, शरीरेणेत्यर्थः । अयमर्थः–हे ' अग्ने ! ' त्वं ' ज्योतिष्मान् ' प्रभूतज्योतिष्कः, त्वं ' शिवेभिः ' मङ्गलैः ' अर्चिभिः ' उपलक्षितः सन् ' प्रयाहि ' प्रगच्छ, तथा ' बृहद्भिः भानुभिः ' प्रकाशैः ' भासन् ' भासमानः, ' तन्वा ' स्वकीयेन शरीरेण ' प्रजाः ' अस्मदीयाः ' मा हिंसीः ' हिंसां मा कुरु ॥ ९ ॥

अक्षध्वनौ प्रायश्चित्तमाह–स यदेति । ' उत्सर्जेत् ' ध्वनिं कुर्यात्, तदा ' एतद् ' वक्ष्यमाणम् " अक्रन्दत् "–इति ' यजुः ' ' जपेत्[2] ' । अक्षसम्बन्धिन्या वाचः असुर्यत्वं कर्णकठिनत्वाद् द्रष्टव्यम् । ' तां ' वाचम ' एतत् ' एतेन अक्रन्ददग्निरिति पाठेन असुर्यत्वमपहाय ' देवत्रा ' देवेषु करोति ॥ १० ॥

पुनः प्रशंसति–यद्वेवैतद्यजुरिति । ' यस्मिन् कस्मिंश्चित् ' शकटस्योपरि ' आहिते ' ' अक्षः ' उत्स-

---

१–'ऋच स्तुतौ' धा. तु. प. २२ इति । धातूनामनेकार्थत्वात् । २–अक्षे खर्जत्यक्रंददग्निरिति जपति । का.श्रौ. सू. १६।१८९।

ऽउपास्तुवन्नुपामहयंस्तथैवैनमयमेतदुपस्तौत्युपमहयत्यक्रन्ददग्नि स्तनयन्निव द्यौरिति तस्योक्तो बन्धुः ॥ ११ ॥

स यदि पुरा वसत्यै विमुञ्चेत । ( ता ) अनस्येवाग्निः स्यादथ यदा वसत्यै विमुञ्चेत प्रागनऽ उपस्थाप्योत्तरतऽ उद्धत्यावोक्षति यत्रैनमुपावहरति तं दक्षिणतऽ उदञ्चमुपावहरति तस्योक्तो बन्धुः ॥ १२ ॥

(र) अथास्मिन्त्समिधमादधाति । (त्ये) एतद्वाऽएनं देवा ऽईयिवाᳫँसमुपरिष्टादन्नेनाप्रीणन्नेतया समिधा तथैवैनमयमेतदीयिवाᳫँसमुपरिष्टादन्नेन प्रीणात्येतया समिधा ॥ १३ ॥

---

वैनमयमेतदुपस्तौति, उपमहयति । "अक्रन्ददग्नि स्तनयन्निव द्यौः"–( वा. सं. १२ । ३३ ) इति । तस्योक्तो बन्धुः ॥ ११ ॥

स यदि पुरा वसत्यै विमुञ्चेत–अनस्येवाग्निः स्यात् । अथ यदा वसत्यै विमुञ्चेत–प्रागन उपस्थाप्योत्तरत उद्धत्यावोक्षति–यत्रैनमुपावहरति । तं दक्षिणत उदञ्चमुपावहरति । तस्योक्तो बन्धुः ॥ १२ ॥

अथास्मिन्त्समिधमादधाति । एतद्वाऽएनं देवा ईयिवांसमुपरिष्टादन्नेनाप्रीणन्–एतया समिधा । तथैवैनमयमेतदीयिवांसमुपरिष्टादन्नेन प्रीणाति–एतया समिधा ॥ १३ ॥

---

जेत् ' तस्यैव ' आहितस्यैव सम्बन्धिनी भवति ' सा ' वाक् । अथ ' अग्नौ ' आहिते सति ' अग्नेरेव ' ' सा ' स्यात् । यस्मादेवं तस्मात् ' तत् ' तेन मन्त्रपाठेन अन्यदीयत्वपरिहाराय ' अग्निमेव ' ' देवाः ' ' उपास्तुवन्, ' ' उपामहयन् ' पूजितमकुर्वन्; तथैव ' एनम् ' अग्निम् ' एतत् ' एतेन ' उपस्तौति, ' 'उपमहयति' च । अत्र मन्त्रं विधाय तदपेक्षितं ब्राह्मणं पूर्वोक्तमेवेत्यतिदिशति–अक्रन्ददग्निरिति । तस्योक्तो बन्धुरिति । उखाप्रग्रहणप्रस्तावे ( श. प. ६ । ७ । ३ । २ ) " क्रन्दतीव हि पर्जन्यः "–इत्यादिनोक्त इत्यर्थः ॥ ११ ॥

स यदि पुरा वसत्यै विमुञ्चेतेति । 'वसत्यै' वसत्याः, अग्निचयनस्थानात् 'पुरा' अर्वाङ् मध्येमार्गं ' विमुञ्चेत ' शकटम्, तदा सोऽग्निः 'अनस्येव' अवस्थितः 'स्यात्' 'अथ' उक्तवैलक्षण्येन वसतिं प्राप्य ' विमुञ्चेत, ' तदा ' प्रागनः ' अनसः प्राग्देशे ' उपस्थाप्य, ' ' उत्तरतः ' तदुत्तरतः भूमिम् ' उद्धत्यावोक्षति ' । ' यत्र ' ' एनम् ' अग्निम् ' उपावहरति ' अधः स्थापयति, ' तं ' दक्षिणतः ' उदञ्चम् ' ' उपावहरति ' । तस्योक्तो बन्धुरिति । दक्षिणत उदगर्थवाद उखार्थे मृत्पिण्डपरिग्रहप्रकरणे " दक्षिणतो वा उदग् योनौ रेतः सिच्यते ", ( श. प. ६ । ४ । २ । १० ) इत्युक्त इत्यर्थः ॥ १२ ॥

यथा अग्निप्रणयनकाले तस्यान्नत्वेन समिदाधानमुक्तम् ( अस्मिन्नेव ब्राह्मणे ४ कण्डिकायाम् ) एवमेव आसन्नस्याप्यन्नत्वेन समिदाधानं कर्त्तव्यमित्याह–अथास्मिन् समिधमादधातीति । एतत् प्रशंसति–एतद्वा एनं

प्रप्रायमग्निर्भरतस्य शृण्व ऽइति । प्रजापतिर्वै भरतः स हीदᳬं सर्वं बिभर्ति वि यत्सूर्यो न रोचते बृहद्भाऽ इति वि यत्सूर्यऽ इव रोचते बृहद्भा ऽइत्येतदभि यः पूरुं पृतनासु तस्थाविति पूरुर्ह नामासुररक्षसमास तमग्निः पृतनास्वभितष्ठौ दीदाय दैव्यो ऽअतिथिः शिवो न ऽइति दीप्यमानो दैवो-ऽतिथिः शिवो नऽ इत्येतत्स्थितवत्या वसत्यै ह्येनं तत्स्थापयति ॥१४॥

( त्य ) अथातः सम्पदेव । समिधं प्रथमेनादधात्युद्यच्छत्येकेन प्रयात्ये-केनाक्षमेकेनानुमन्त्रयते समिधमेव पञ्चमेनादधाति तत्पञ्च पञ्चचितिको-

---

" प्रप्रायमग्निर्भरतस्य शृण्वे "–इति । प्रजापतिर्वै भरतः । स हीदं सर्वं बिभर्ति । " वि यत् सूर्यो न रोचते बृहद्भाः "–इति । वि यत् सूर्य इव रोचते बृहद्भा इत्येतत् । " अभि यः पूरुं पृतनासु तस्थौ "–इति । पूरुर्ह नामासुररक्षसमास । तमग्निः पृतनास्वभितष्ठौ । " दीदाय दैव्योऽअतिथिः शिवो नः "–( वा. सं. १२ । ३४ ) इति । दीप्यमानो दैवोऽतिथिः शिवो न इत्येतत् । स्थितवत्या । वसत्यै ह्येनं तत् स्थापयति ॥ १४ ॥

अथातः सम्पदेव । समिधं प्रथमेनादधाति, उद्यच्छत्येकेन, प्रयात्येकेन, अक्षमेकेनानुमन्त्रयते,

---

देवा ईयिवांसमिति । ' ईयिवांसं ' चयनप्रदेशं गतवन्तम्, गमनप्राक्कालमपेक्ष्य ' उपरिष्टात् ' इत्युक्तम् । ' अन्नेन '–इत्यस्य व्याख्यानम् ' एतया समिधा ' इति । तथैवैनमित्यादिकमुक्तप्रायम् । अस्य सर्वस्यापि सूत्रं चात्रोदाहरति–" वासेऽवहरति–उद्धतावोक्षित उत्तरतः समिदाधानं प्रप्रेति "–( का. श्रौ. सू. १६ । १८० ) इति ॥ १३ ॥

समिदाधानमन्त्रं विदधत् विभज्य व्याचष्टे–प्रप्रायमित्यादिना । अयमर्थः–' अयम् ' ' अग्निः ' ' भरतस्य ' प्रजापतेः वचनं ' प्रशृण्वे ' प्रकर्षेण शृणोति, ' सूर्यो न ' सूर्य इव, ' बृहत् ' महद् ' भाः ' भासमानः ' विरोचते ' दीप्यते च । यद्वा, ' भाः ' भासा ' बृहत् ' महान् ' यः ' अग्निः ' पूरुं ' ' पृतनासु ' सङ्ग्रामेषु ' अभितष्ठौ ' ' पराबभूव, ' स ' दैव्यः ' देवसम्बन्धी, ' अतिथिः ' अतिथिरूपः, 'नः' 'शिवः' सन् ' दीदाय ' दीप्यते । भरतशब्दं व्याचष्टे–प्रजापतिर्वै भरत इति । तदुपपादयति–स हीदमिति । ' सूर्यो न ' इत्यत्र ' न '–शब्द उपमार्थ इति व्याचष्टे–वि यत् सूर्य इव रोचते बृहद्भा इत्येतादिति । तृतीयपादं व्याचष्टे–पूरुर्ह नामासुररक्षसमासेति । सुरविरोधि रक्षोऽभूत् । " अनसन्तान्नपुंसकाच्छन्दसि "–( पा. सू. ५ । ४ । १०३ ) इति समासान्तः । स्पष्टमन्यत् । अस्मिन् मन्त्रे ' पृतनासु तस्थौ '–इत्यत्र स्थितिः श्रूयते, तन्मुखेन मन्त्रं प्रशंसति–स्थितवत्येति ॥ १४ ॥

अथातः सम्पदेवेति । ' अथ ' ' अतः ' उपरिष्टात् ' सम्पदेव ' उक्तानां मन्त्राणां सम्पत्तिरेव, न त्वनुष्ठेयं किञ्चिदुच्यत इत्यर्थः । तां सम्पत्तिं दर्शयति–प्रथमेनादधातीत्यादिना । प्रथमेन " समिधाऽग्निं दुव-

ऽग्निः पुञ्चऽर्तुवः संव्वत्सुरः संव्वत्सुरोऽग्निर्यावानग्निर्य्यावत्यस्य मुात्रा तुावत्तुद्भवति ॥ १९ ॥

इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ६-५-५ ॥ ( ८. १. )

अथुातो भुस्मनऽ एुवाभ्यवहुरणस्य । देवा वुाऽएतदुग्रे भस्मोुदवपुंस्तेऽब्रुवन्युदि वुाऽइदुमित्थुमेव सुदात्मुानमभिसंस्करिष्युामहे मुर्त्याः कुणपाऽअुनपहतपाप्मानो भविष्यामो युद्यु परावप्स्युामो यदुत्राग्नेयं बहिर्द्धा तुदग्नेः करिष्यामऽउुप तुज्जानीत युथेदं करवामेुति तेऽब्रुवंश्चेतुयध्वमिुति चितिमिच्छतेुति वाव तुदब्रुवंस्तुदिच्छत युथेदं करवामेुति ॥ १ ॥

---

समिधमेव पञ्चमेनादधाति । तत् पञ्च । पञ्चचितिकोऽग्निः । पञ्चऽर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तद्भवति ॥ १९ ॥

अथातो भस्मन एवाभ्यवहरणस्य । देवा वाऽएतदग्रे भस्मोदवपन् । तेऽब्रुवन्—यदि वाऽइदमित्थमेव सदात्मानमभिसंस्करिष्यामहे—मर्त्याः कुणपा अनपहतपाप्मानो भविष्यामः । यद्यु परावप्स्यामः—यदत्राग्नेयं बहिर्द्धा, तद् अग्नेः करिष्यामः । उप तज्जानीत—यथेदं करवामेति । तेऽब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । तदिच्छत यथेदं करवामेति ॥ १ ॥

---

स्यत "—( वा. सं. १२ । ३० ) इत्येतेन । उद्यच्छत्येकेनेति । " उदु त्वा विश्वे देवाः "—( वा. सं. १२ । ३१ ) इत्येतेन । प्रयात्येकेनेति । " प्रेदग्ने ज्योतिष्मान् "—( वा. सं. १२ । ३२ ) इत्येतेन । अक्षमेकेनेति । " अक्रन्ददग्निः " ( वा. सं. १२ । ३३ ) इत्येतेन । समिधमेव पञ्चमेनेति । " प्र प्रायमग्निः "—( वा. सं. १२ । ३४ ) इत्येतेन । " पञ्चचितिकोऽग्निः "—इत्यादि, गतम् ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डे अष्टमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ६-८-१ ) ॥

यदुक्तं प्राक् " स यदहः सन्निवप्स्यन् स्यात्, तदहः प्रातरुदित आदित्ये भस्मैव प्रथममुद्वपतीति " ( श. प. ६ । ७ । ४ । १४ ) तद्विधातुमाख्यायिकां वदन् प्रतिजानीते—अथातो भस्मन एवाभ्यवहरणस्येति । मीमांसा क्रियत इति शेषः । ' देवाः ' खलु ' अग्रे ' पूर्वम् ' भस्म ' अग्नेः सकाशात् ' उदवपन् ' ऊर्ध्वमपागमयन्, अनन्तरं ते परस्परमब्रुवन्—' यदि वा ' ' इदम् ' उद्धृतं भस्म ' इत्थमेव ' अन्यत्र प्रक्षेपमकृत्वा अनुद्धृतप्रकारेणैव स्थितम् ' आत्मानम् ' अग्नेः शरीरभूतं सन्तं, शरीरं कृत्वेत्यर्थः, ' अभिसंस्करिष्यामहे, ' तदा ' मर्त्याः ' मरणधर्माणः, ' कुणपाः ' भस्मनो निर्जीवत्वात् वयमपि ' कुणपाः ' शवसदृशाः, ' अनपहतपाप्मानः ' भस्मनः पापरूपत्वात् तत्संस्कारेणापि अनपहतपाप्मानः ' भविष्यामः ' । ' यद्यु ' यद्यपि ' परावप्स्यामः ' दूरे प्रक्षिपामः, तदा ' अत्र ' भस्मनि ' यत् आग्नेयम्, ' ' तत् ' ' अग्नेः '

ते चेतयमानाः ।(ऽ) एतदपश्यन्नपऽ एवैनदभ्यवहरामापो वाऽअस्य सर्वस्य प्रतिष्ठा तद्यत्रास्य सर्वस्य प्रतिष्ठा तदेनत्प्रतिष्ठाप्य यदत्राग्नेयं तदद्भ्योऽधिजनयिष्यामऽइति तदपोऽभ्यवाहरंस्तथैवैनदयमेतदपोऽभ्यवहरति ॥ २ ॥

( त्या ) आपो देवीः । प्रतिगृभ्णीत भस्मैतत्स्योने कृणुध्वꣳ सुरभाऽउ लोकऽइति जग्धं वाऽएतद्यातयाम भवति तदेतदाह स्वभिष्ठऽएनल्लोके कुरुध्वमिति तस्मै नमन्तां जनयऽ इत्यापो वै जनयोऽद्भ्यो हीदꣳ सर्वं जायते सुपत्नीरित्यग्निनाऽवा आपः सुपत्न्यो मातेव पुत्रं बिभृताप्स्वेनदिति यथा माता पुत्रमुपस्थे बिभृयादेवमेनद्बिभृतेत्येतत् ॥ ३ ॥

---

ते चेतयमाना एतदपश्यन्–अप एवैनदभ्यवहराम । आपो वाऽअस्य सर्वस्य प्रतिष्ठा । तद्यत्रास्य सर्वस्य प्रतिष्ठा–तदेनत् प्रतिष्ठाप्य–यदत्राग्नेयम्; तदद्भ्योऽधिजनयिष्याम इति । तदपोऽभ्यवाहरन् । तथैवैनदयमेतदपोऽभ्यवहरति ॥ २ ॥

"आपो देवीः प्रतिगृभ्णीत भस्मैतत् स्योने कृणुध्वं सुरभाऽउ लोके"–इति । जग्धं वाऽएतद् यातयाम भवति । तदेतदाह । स्वभिष्ठऽएनल्लोके कुरुध्वमिति । "तस्मै नमन्तां जनयः"–इति । आपो वै जनयः । अद्भ्यो हीदं सर्वं जायते । "सुपत्नीः"–इति । अग्निना वाऽआपः सुपत्न्यः । "मातेव पुत्रं बिभृताप्स्वेनत्"–( वा.सं. १२।३५ ) इति । यथा माता पुत्रमुपस्थे बिभृयाद्–एवमेनद्बिभृतेत्येतत् ॥ ३ ॥

---

सकाशाद् 'बहिर्द्धा' 'करिष्यामः' । एवं पक्षद्वयेऽपि दोषसम्भवात् अन्यतरपक्षमनाश्रयमाणाः 'यथेदं करवाम' 'तत्' प्रकारम् 'उपजानीत' 'इति ते अब्रुवन्' इति सम्बन्धः । एवमुक्त्वा ते पुनरेवमब्रुवन्, किमिति–चेतयध्वमितीति । तैः केनाभिप्रायेण चेतयध्वमित्युक्तमित्याकाङ्क्षायां श्रुतिः तटस्था सती ब्रूते–चितिमिच्छतेति वाव तदब्रुवन्निति । 'चितिः' ज्ञानम्, तत् 'इच्छत' 'इति' एवम् 'अब्रुवन्' देवाः । पूर्वोदितम् "उप तज्जानीत" इत्येतदुत्तरेण वाक्येनाभिगृणाति–तदिच्छत यथेदं करवामेतीति ॥१॥

ते चेतयमाना इति । कर्त्तव्यविषये बुद्धिं प्रक्षिपन्तः 'एतत्' 'अपश्यन्' । एतच्छब्दार्थमाह–अप एवैनदिति । अप्सु प्रक्षेपमेवापश्यन्नित्यर्थः; 'अस्य सर्वस्य' जगतः अद्भ्य उत्पन्नत्वात्, तदुपजीवनीयत्वाच्च आपः 'प्रतिष्ठा' । 'तत्' तस्मात् 'यत्र' अप्सु 'अस्य सर्वस्य' 'प्रतिष्ठा,' तत्र 'एनत्' भस्म 'प्रतिष्ठाप्य,' 'यत्' 'अत्र' जलस्थे भस्मनि 'आग्नेयम्' अस्ति, पुनः 'तत्' 'अद्भ्यः' सकाशात् उत्पादयिष्यामः 'इति' एवम् अपश्यन् । स्पष्टमन्यत् ॥ २ ॥

इदानीमप्सु भस्मप्रक्षेपमन्त्रं विधाय व्याचष्टे–आपो देवीः प्रतिगृभ्णीतेत्यादिना । हे 'आपः !' 'देवीः'

---

१–पलाशपुटेनापो देवीरित्येकया । का. श्रौ. सू. १६ । १९५ ॥

( ३ ) अप्स्वग्ने सधिष्टवेति । ( त्यु ) अप्स्वग्ने योनिष्टवेत्येतत्सौषधी-रनुरुध्यस ऽइत्योषधीर्ह्येषोऽनुरुध्यते गर्भे सञ्जायसे पुनरिति गर्भे ह्येष सञ्जायते पुनर्गर्भोऽअस्योषधीनां गर्भो व्वनस्पतीनाम् । गर्भो व्विश्वस्य भूतस्याग्ने गर्भो ऽअपामसीति तदेनमस्य सर्व्वस्य गर्भं करोति ॥ ४ ॥

त्रिभिरभ्यवहरति । त्रिव्वृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनदेत-दभ्यवहरत्येकेनाग्रेऽथ द्वाभ्यां द्वाभ्यां वाऽग्रेऽथैकेन द्विस्तु कृत्वोऽभ्यवह-रति तद्ये द्विपादाः पशवस्तैरेवैनदेतदभ्यवहरति ॥ ५ ॥

---

"अप्स्वग्ने सधिष्टव"—इति । अप्स्वग्ने योनिष्टवेत्येतत् । "सौषधीरनुरुध्यसे"—इति । ओषधीर्ह्येषोऽनुरुध्यते । "गर्भे सञ्जायसे पुनः"—( वा. सं. १२ । ३६ ) इति । गर्भे ह्येष सञ्जायते पुनः । "गर्भोऽअस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूत-स्याग्ने गर्भोऽअपामसि"—( वा. सं. १२ । ३७ ) इति । तदेनमस्य सर्वस्य गर्भं करोति ॥४॥

त्रिभिरभ्यवहरति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनदेतदभ्यवहरति । एकेनाग्रे—

---

द्योतमानाः यूयम् ' एतत् ' क्षिप्तं ' भस्म ' ' प्रतिगृभ्णीत ' स्वीकुरुत । स्वीकृत्य च ' स्योने ' सुखकरे, ' सुरभौ ' शोभनपरिमलयुक्ते ' लोके ' स्थाने ' कृणुध्वं ' कुरुत । ' तस्मै ' भस्मरूपायाग्नये ' सुपत्नीः ' शोभनपतिकाः 'जनयः' सर्वस्योत्पादयित्र्यः आपः 'नमन्ताम्' प्रह्वीभवन्तु । हे अब्देवताः ! ' माता पुत्रमिव ' ' अप्सु ' युष्मासु ' बिभृत ' धारयत । उत्तरार्द्धे "सुरभौ कृणुध्वम्"—इत्यभिधानस्य तात्पर्यमाह—जग्धं वा एतादिति । उदके निमग्नम् 'एतत्' भस्म जग्धं भवति, 'एतद्' ' यातयाम ' गतरसं ' भवति ' । तस्मात् एत-न्मन्त्रवाक्यमाह—'सुरभिष्ठे' अतिशयेन सुरभौ 'लोके' 'कृणुध्वम्' । तथा सति अयातयाम भवति । ' जनयः '—इति व्याचष्टे—आपो वै जनय इति । तदेव समर्थयते—अद्भ्यो हीदमिति । सुपत्नीरित्येतद् व्याचष्टे—अग्निना वा आपः सुपत्न्य इति । मातेवेति । अस्य ब्राह्मणं स्पष्टम् ॥ ३ ॥

भस्माभ्यवहरणे द्वितीयं मन्त्रं विधाय प्रशंसति—अप्स्वग्न इत्यादिना । हे ' अग्ने ! ' ' तव ' ' अप्सु ' ' सधिः ' सह धीयते अस्मिन्निति 'सधिः' सहस्थानम्, तव योनिरित्यर्थः, इदानीं भवति; पश्चात्तु ' ओषधीः ' त्वया परिपच्यमानाः ' अनु ' त्वमपि ताभिः ' रुध्यसे ' प्रतिबध्यसे, तत्र निरुद्धो भवसीत्यर्थः । पुनश्च अरण्योः 'गर्भे' वर्त्तमानः ' सन् ' पुनः ' जायसे ' । एवं सर्वत्र व्याप्त इति स्तुतिः । पूर्वपादे ' सधिः ' शब्देन योनि-र्विवक्षित इति व्याचष्टे—अप्स्वग्ने योनिष्टवेत्येतदिति । उपरितनपादद्वयस्य ब्राह्मणं स्पष्टम् । तृतीयमन्त्रं विधाय स्पष्टार्थत्वात् संगृह्य तात्पर्यं दर्शयति—गर्भो असीत्यादिना तदेनमस्य सर्वस्य गर्भं करोतीत्य-न्तेन । मन्त्रार्थस्तु स्पष्टः ॥ ४ ॥

भस्माभ्यवहरणमन्त्राणां यत् त्रित्वं तत् प्रशंसति—त्रिभिरभ्यवहरति त्रिवृदग्निरित्यादिना । अग्नेस्त्रिवृत्त्वं

---

१—ततो द्वाभ्याम् । का०श्रौ० सू० १६ । १९६ ।

( त्यु ) अथापादत्ते । तद्यदत्राग्नेयं तदेतदद्भ्योऽधि जनयत्यनयाऽनया वै भेषजं क्रियतेऽनयैवैनमेतत्सम्भरति प्रसद्य भस्मना योनिमपश्च पृथिवीमग्नऽइति प्रसन्नो ह्येष भस्मना योनिमपश्च पृथिवीं च भवति सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदऽइति संगत्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदऽइत्येतत्पुनरासद्य सदनं पुनरूर्जा सह रय्येत्येतेन मा सर्वेणाभिनिवर्तस्वेत्येतत् ॥ ६ ॥

---

अथ द्वाभ्याम् । द्वाभ्यां वाऽग्रे—अथैकेन । द्विस्तु कृत्वोऽभ्यवहरति । तद्ये द्विपादाः पशवः । तैरेवैनदेतदभ्यवहरति ॥ ५ ॥

अथापादत्ते । तद्यदत्राग्नेयं—तदेतदद्भ्योऽधि जनयति—अनया । अनया वै भेषजं क्रियते, अनयैवैनमेतत् सम्भरति । " प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने "—इति । प्रसन्नो ह्येष भस्मना योनिम् अपश्च, पृथिवीं च भवति । " संसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदः "—( वा. सं. १२ । ३८ ) इति । सङ्गत्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासद इत्येतत् । " पुनरासद्य सदनम् "—( वा. सं. १२।३९ ) " पुनरूर्जा "—( वा. सं १२ । ४० ) " सह रय्या "—( वा. सं. १२ । ४१ ) इति । एतेन मा सर्वेणाभिनिवर्तस्वेत्येतत् ॥ ६ ॥

---

रुद्रशर्वपशुपत्याद्यष्टमूर्तीरनुक्रम्य श्रूयते—" तान्येतान्यष्टावग्निरूपाणि कुमारो नवमः सैवाग्नेस्त्रिवृत्ता "—( श. प. ६ । १ । ३ । १८ ) इति । तथा " मृदं शुष्कापमूषसिकतम् " इत्यादिना नव द्रव्याण्युपक्रम्य, " ता वा एता नव सृष्टयः इयमसृज्यत तस्मादाहुस्त्रिवृदग्निरिति "—( श. प. ६।१।१।१४ कं. ) इति च प्राग्दर्शितम् ॥ मन्त्रत्रयेणापि सकृद् भस्मप्रक्षेपप्रसक्तावाह—एकेनाग्रेऽथ द्वाभ्यां, द्वाभ्यां वाऽग्रेऽथैकेनेति[1] । उक्तप्रकारान्तरशङ्कां निराचष्टे—द्विस्तु कृत्वोऽभ्यवहरतीति । ' तु '—शब्दः पक्षं व्यावर्त्तयति । सर्वथा द्विःकृत्वोऽप्स्वभ्यवहरेत्, न त्वेकैकेन मन्त्रेण त्रिःकृत्वः । तद् ये द्विपादा इत्याद्यर्थवादः स्पष्टः ॥ ५ ॥

अद्भ्यः पुनरीषद्भस्मादातव्यमिति विधाय प्रशंसति—अथापादत्ते तद्यदत्रेति[2] । ' अथ ' प्रक्षेपानन्तरम् ' अत्र ' प्रक्षिप्ते भस्मनि । ' अद्भ्योऽधि '—इति, अयं पञ्चम्यर्थानुवादी । ' आग्नेयम् ' अंशम् ' अद्भ्यः ' उत्पादितवान् भवति । ' अनया ' इति अपादानसाधना अनामिका निर्दिश्यते । अनयैवेति कोऽयं नियम इत्यत्राह—अनया वै भेषजं क्रियत इति । मन्त्रमाह—प्रसद्येति । हे भस्मरूप अग्ने ! त्वं ' भस्मना ' भस्मरूपेण आत्मना ' योनिम् ' तव योनिस्थानीयाः ' अपः पृथिवीञ्च ' ' प्रसद्य ' प्रसन्नो भूत्वा, तथा ' मातृभिः ' अद्भिः ' संसृज्य ' ' ज्योतिष्मान् ' प्रकृष्टज्योतिः सन् ' पुनरासदः ' पुनरागच्छ । पूर्वार्द्धे ' प्रसद्य '—पदस्य प्रसन्नतार्थतया योनिमप इति सामानाधिकरण्यं विवक्षितमिति व्याचष्टे—प्रसन्नो ह्येष भस्मनेत्यादिना । ' संसृज्य '—इत्यस्य सङ्गतिरर्थ इति व्याचष्टे—सङ्गत्य मातृभिरिति । उत्तरमन्त्रत्रयस्य व्याख्येयार्थत्वाभावात् प्रतीकमुपादाय सङ्गृह्य तात्पर्यमाह—पुनरासद्येति प्रथमः, पुनरूर्जेति द्वितीयः, सह रय्येति तृतीयः ( वा. सं. १२ । ३९–४१ ) ॥ ६ ॥

---

१—आद्याभ्यां वा पूर्वम् । का. श्रौ. सू. १६ । १९७ । २—अनामिकया प्रास्तादादत्ते प्रसद्येति का. श्रौ. सू. १६ । १९८ ।

**( च ) चतुर्भिरपादत्ते । तद्ये चतुष्पादाः पशवस्तैरेवैनमेतत्सम्भरत्यथो ऽअन्नं वै पशवोऽन्नेनैवैनमेतत्सम्भरति त्रिभिरभ्यवहरति तत्सप्त सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ७ ॥**

**( त्य ) अपादाय भस्मनः प्रत्येत्य । ( त्यो ) उखायामोप्योपतिष्ठतऽए-तद्वाऽएतदयथायथं करोति यदग्निमपोऽभ्यवहरति तस्माऽएवैतन्निह्नुते-ऽहिꣳसायाऽआग्नेयीभ्यामग्नयऽएवैतन्निह्नुते बुद्धवतीभ्यां यथैवास्यैतद-ग्निर्वचो निबोधेत् ॥ ८ ॥**

---

चतुर्भिरपादत्ते । तद् ये चतुष्पादाः पशवः । तैरेवैनमेतत्सम्भरति । अथोऽअन्नं वै पशवः । अन्नेनैवैनमेतत् सम्भरति । त्रिभिरभ्यवहरति । तत् सप्त । सप्तचितिकोऽग्निः । सप्तऽर्तवः सम्वत्सरः । सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ७ ॥

अपादाय भस्मनः प्रत्येत्य—उखायामोप्योपतिष्ठते । एतद्वाऽएतदयथायथं करोति—यदग्निमपोऽभ्यवहरति । तस्माऽएवैतन्निह्नुते-अहिंसायै । आग्नेयीभ्याम् । अग्नयऽएवैतन्निह्नुते । बुद्धवतीभ्याम् । यथैवास्यैतदग्निर्वचो निबोधेत् ॥ ८ ॥

---

उत्तरमन्त्रद्वयस्य पृथग्विनियोगशङ्कापनोदनायाह—चतुर्भिरपादत्त इति । " तद् ये चतुष्पादाः "—इत्यादि स्पष्टम् । भस्मापादानमन्त्रगतां सङ्ख्याम् अभ्यवहरणमन्त्रगतया सङ्ख्यया समुच्चित्य प्रशंसति—त्रिभिरभ्यवहरति, तत्सप्त, सप्तचितिकोऽग्निरित्यादिना । षट् चितय इष्टकामय्यः प्रसिद्धाः, सप्तमी तु " विकर्णीञ्च स्वयमातृण्णाञ्चोपदधाति, हिरण्यशकलैः प्रोक्षति, अग्निमभ्यादधाति, सा सप्तमी चितिः" ( श. प. ८।१।४।९ ) इति श्रुतत्वात् सप्त चितयः 'सप्तचितिकोऽग्निः' । यावत्यस्य मात्रेति । चितिगतसप्तसङ्ख्यारूपा मात्रेत्यर्थः । अप्सु प्रासनं पुनस्तत एवादानञ्च सूत्रकारः स्पष्टमाह—"पलाशपुटेनापो देवीरित्येकया, ततो द्वाभ्याम्, आद्याभ्यां वा पूर्वम्, अनामिकया प्रास्तादादत्ते प्रसद्येति"—( का. श्रौ. सू. १६।१९५–१९८ ) इति ॥ ७ ॥

अपादायेति । भस्मनः सकाशात् ' अपादाय ' पुनः ' उखायाम् ओप्य ' उपतिष्ठते[1] उपस्थानमग्नेः कोपशान्तये, तस्य कः प्रसङ्ग इति तं दर्शयति—एतद्वा एतदयथायथं करोतीति । तदेव स्पष्टयति—यदग्निमपोऽभ्यवहरतीति । निह्नवः कृतस्यापराधस्याच्छादनम् । तच्च उपस्थानकर्मणि सङ्गतमिति स्तौति—बुद्धवतीभ्यां यथैवास्यैतदग्निर्वचो निबोधेदिति । 'अस्य' उपस्थानकर्तुः ' वचः ' 'यथा अग्निः निबोधेत्' इत्येवमर्थं ' बुद्धवतीभ्याम्' उपस्थानं युक्तम् ॥ ८ ॥

---

१—भास्योखायामुपतिष्ठते बोधा म इति । का० श्रौ० सू० १६ । १९९ ।

(द्वे)बोधा मे ऽअस्य व्वचसो यविष्ठेति । बोध मेऽस्य व्वचसो यविष्ठेत्येत-न्मꣳहिष्ठस्य प्रभृतस्य स्वधावऽ इति भूयिष्ठस्य प्रभृतस्य स्वधावऽ इत्येत-त्पीयति त्वोऽअनु त्वो गृणातीति पीयत्येकोऽन्वेको गृणाति व्वन्दारुष्टे तन्वं व्वन्देऽअग्न ऽइति व्वन्दिता तेऽहं तन्वं व्वन्देऽग्नऽइत्येतत्स बोधि सूरिर्म-घवा व्वसुपते व्वसुदावन् ॥ युयोध्यस्मद्द्वेषाꣳसीति यथैवास्माद्द्वेषाꣳसि युयादेवमेतदाह द्वाभ्यामुपतिष्ठते गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ९॥

( स्ता ) तानि नव भवन्ति । नव दिशो दिशोऽग्निर्नव प्राणाः प्राणा ऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १० ॥

---

"बोधा मेऽअस्य वचसो यविष्ठ"–इति । बोध मेऽस्य वचसो यविष्ठेत्येतत् । "मंहिष्ठस्य प्रभृतस्य स्वधावः"–इति । भूयिष्ठस्य प्रभृतस्य स्वधाव इत्येतत् । "पीयति त्वोऽअनु त्वो गृणाति"–इति । पीयत्येकः, अन्वेको गृणाति । "वन्दारुष्टे तन्वं वन्दे अग्ने"–( वा. सं. १२।४२ ) इति । वन्दिता तेऽहं तन्वं वन्देऽग्नऽइत्येतत् । "स बोधि सूरिर्म्मघवा वसुपते वसुदावन् । युयोध्यस्मद्द्वेषांसि"–( वा. सं. १२।४३ ) इति यथैवास्माद्द्वेषांसि युयाद् । एवमेतदाह । द्वाभ्यामुपतिष्ठते; गायत्र्या च त्रिष्टुभा च । तस्योक्तो बन्धुः ॥ ९ ॥

तानि नव भवन्ति । नव दिशः । दिशोऽग्निः । नव प्राणाः । प्राणा अग्निः । यावानग्निर्यावत्यस्य मात्रा–तावत्तद्भवति ॥ १० ॥

---

तत्राद्यं मन्त्रं विधाय व्याचष्टे–बोधा मे अस्येत्यादिना । हे 'यविष्ठ' युवतम ! हे 'स्वधावः' "स्वधे-त्यन्ननाम" ( निघं. २।७।१७ ) । बह्वन्न ! 'अग्ने' ! अस्य वचसः एतदुपस्थानसाधनमन्त्ररूपं वचः 'बोध' बुध्यस्व । वचो विशिष्यते–'मंहिष्ठस्य' अत्यन्तमहनीयस्य, 'प्रभृतस्य' प्रकर्षेण सम्भृतस्य । कर्मणि षष्ठी । लोके 'त्वः' एकः 'पीयति' वधकर्मैतत् ( निरु. ४।४।४ ), हिनस्ति । तथा 'त्वः' एकः 'अनु-गृणाति' स्तौति । तत्राहं 'वन्दारुः' वन्दकः, अतो हे अग्ने ! 'ते तन्वम्' अहं 'वन्दे' स्तौमि । 'बोधा मे'–इति छान्दसो दीर्घः ( पा. सू. ६।३।१३६ ) इति व्याचष्टे–बोध मेऽस्येति । 'मंहिष्ठस्य' इत्यस्य व्याख्यानम्–भूयिष्ठस्येति । 'त्व' शब्द एकशब्दपर्याय इति व्याचष्टे–पीयत्येकोऽन्वेको गृणातीति । अनुगृणातीति सम्बन्धः । 'वन्दारु'–शब्दः ताच्छीलिक आरुप्रत्यये भवतीत्यभिप्रेत्य व्याचष्टे–वन्दितेति ॥

स बोधीति द्वितीयो मन्त्रः । तस्यार्थः–हे 'वसुपते' प्रभूतधनस्वामिन् ! न केवलं स्वामित्वमेव, किन्तु 'वसुदावन्' हे वसुनो धनस्य दातः ! 'सूरिः' विद्वान्, 'मघवा' अन्नवान् 'सः' 'बोधि' बुध्यस्व अस्मद्वचनम् । ततः 'अस्मत्' अस्मत्तः 'द्वेषांसि' द्वेष्यान् पाप्मनः 'युयोधि' पृथक् कुरु । संग्रहेण तात्पर्यमाह–यथैवास्माद् द्वेषांसि युयाद्, एवमेतदाहेति । स्पष्टोऽर्थः । मन्त्रयोर्यद्गायत्रत्वं त्रिष्टुप्त्वं च, तदुभयार्थवादं पूर्वोक्तमतिदिशति–तस्योक्तो बन्धुरिति । उखासन्तपनप्रस्तावे "प्राणो गायत्र्यात्मा त्रिष्टुप्" इत्युपक्रम्य, "अथो अग्निर्वै गायत्रीन्द्रस्त्रिष्टुबैन्द्राग्नोऽग्निर्यावानग्निः"–इत्यादिनोक्त इत्यर्थः ( श. प. ६।६।२।७ ) ॥ ९ ॥

एतां द्वित्वसङ्ख्यां पूर्वत्रोक्तभस्माभ्यवहरणतदुपादानमन्त्रसङ्ख्यया समुच्चित्य प्रशंसति–तानि नव भवन्ति,

(त्यु) अथ प्रायश्चित्ती करोति । सर्व्वेभ्यो वाऽएषऽएतं कामेभ्यऽआधत्ते तद्यदेवास्यात्र कामानां व्यवच्छिद्यतेऽग्नावपोऽभ्यवह्रियमाणे तदेवैतत्सन्तनोति सन्दधात्युभे प्रायश्चित्ती करोति येऽएवाग्नावनुगते तस्योक्तो बन्धुः ११

(स्तु) तानि दश भवन्ति । दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणाऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति १२

इति षष्ठकाण्डे पञ्चमप्रपाठके षष्ठं ब्राह्मणम् ॥६–५–६॥ ( ८. २. )॥

पञ्चमप्रपाठकः अष्टमोऽध्यायश्च समाप्तः ॥

अस्मिन् काण्डे कण्डिकासंख्या ॥ ५३० ॥

इति माध्यन्दिनीये शतपथब्राह्मणे उखासम्भरणं नाम
षष्ठं काण्डं समाप्तम् ॥ ६ ॥

---

अथ प्रायश्चित्ती करोति । सर्वेभ्यो वाऽएष एतं कामेभ्य आधत्ते । तद् यदेवास्यात्र कामानां व्यवच्छिद्यते–अग्नावपोऽभ्यवह्रियमाणे–तदेवैतत्सन्तनोति, सन्दधाति । उभे प्रायश्चित्ती करोति–येऽएवाग्नावनुगते । तस्योक्तो बन्धुः ॥ ११ ॥

तानि दश भवन्ति । दशाक्षरा विराट् । विराडग्निः । दश दिशः । दिशोऽग्निः । दश प्राणाः । प्राणा अग्निः । यावानग्निर्यावत्यस्य मात्रा–तावत्तद्भवति ॥ १२ ॥

---

नव दिशो, दिशोऽग्निर्नव प्राणाः–इत्यादिना । ऊर्द्ध्वाधोभावेनावस्थिता साधारणी दिक् एकेति दिशां नवत्वम्; द्वाववाञ्चौ प्राणौ सप्त शीर्षण्या इति नवत्वं प्राणानाम्; चित्यवस्थापन्नस्याग्नेः प्राणात्मकहिरण्यगर्भरूपत्वात् प्राणोऽग्निः ॥ १० ॥

उपस्थानानन्तरं द्विविधं प्रायश्चित्तं तन्निमित्तं च दर्शयति–अथ प्रायश्चित्ती करोतीत्यादिना । एतदुखासन्तपनानन्तरोक्तेन "अथ प्रायश्चित्ती करोति सर्वेभ्यो वा एषः" इत्यादिना व्याख्यातप्रायम् ( श. प. ६।६।४।११ ) "अग्नावनुगते"–इति तत्र, अत्र तु "अग्नावपोऽभ्यवह्रियमाणे"–इति विशेषः । प्रायश्चित्तमन्त्रः तत्प्रकारश्च "स समिधाऽऽज्यस्योपहत्यासीन आहुतिं जुहोति विश्वकर्मणे स्वाहा" (वा. सं. १२।४३ ) इत्यादिना तत्रोक्तत्वात् ( श. प. ६ । ६ । ४ । १२ ) नात्राभिधानमिति द्रष्टव्यम् । ये एवाग्नावनुगते तस्योक्तो बन्धुरिति । "अथ यदि गार्हपत्योऽनुगच्छेत् अरणी वाव स गच्छति" इत्यादिनोक्त इत्यर्थः ( श.प. ६।६।४।१३ ) ॥ ११ ॥

पूर्वोक्तमन्त्रगतनवसङ्ख्यया सह प्रायश्चित्तमन्त्रसंख्यां समुचित्य प्रशंसति–तानि दश भवन्ति दशाक्षरा

---

१–प्रायश्चित्तिः समिधोपहत्याज्यं विश्वकर्मण इति । का० श्रौ० सू० १६ । १४० ॥

विराडित्यादिना । मन्त्रगतदशसंख्याद्वारेणाग्निरपि विराट् चीयमानस्याग्नेर्विराजात्मकत्वाद्वा । ऊर्द्ध्वाधोदिगपेक्षया दिशो दशनामभिर्दशेति श्रुतेः तदपेक्षया 'प्राणाः' अपि 'दश'। गतमन्यत् ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये षष्ठकाण्डेऽष्टमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ६–८–२ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये षष्ठकाण्डे अष्टमोऽध्यायः समाप्तः ॥ ६–८ ॥

## इति श्रीसायणभाष्यसमेतम् उखासम्भरणनामकं षष्ठं काण्डं समाप्तम् ।

इति श्रीशतपथब्राह्मणे सायणभाष्यसमेतम्
उखासम्भरणं नाम षष्ठं काण्डं
समाप्तम् ।

श्रीः ।

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## सप्तमं काण्डम् ७ ।

गंगाविष्णु श्रीकृष्णदास,

मालिक-" लक्ष्मीवेङ्कटेश्वर " स्टीम्-प्रेस,

कल्याण बंबई.

संवत् १९९६, शके १८६१.

1939.

# अथ हस्तिषट्नामकसप्तमकाण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

गार्हपत्यं चेष्युन्पलाशशाखया व्युदूहति । (त्यु) अवस्यति हैतद्यद्गार्हपत्यं चिनोति युऽउ वै के चाग्निचितोऽस्यामेव तेऽवसितास्तद्यद्व्युदूहत्युवसितानेव तद् व्युदूहति नेदवसितानध्यवस्यानीति ॥ १ ॥

---

**गार्हपत्याग्निचयनम् ।**

गार्हपत्यं चेष्यन्पलाशशाखया व्युदूहति । अवस्यति हैतद्—यद्गार्हपत्यं चिनोति । य उ वै के चाग्निचितः—अस्यामेव तेऽवसिताः । तद् यद्व्युदूहति । अवसितानेव तद्व्युदूहति—नेदवसितानध्यवस्यानीति ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
उखासम्भरणाद्यं तु भस्मावहरणान्तकम् । चित्यस्याग्नेर्बाह्यमङ्गं प्रोक्तं षष्ठेऽथ सप्तमे ॥ २ ॥
इष्टकाचयनात्पूर्वमग्निस्थानस्य संस्क्रिया । कर्तव्या या समासेन सेह विस्पष्टमीर्यते ॥ ३ ॥

अग्निं चिनुते—इत्यनारभ्य विहितस्य अग्निचयनस्य ( तै. सं. ५ । ५ । २ । ३ अनुवाकौ ) "अथातोऽग्निमग्निष्टोमेनानुयजति"—इत्यादिवाक्येन ( मी. न्या २ । ३ । १० ) सोमयागशेषत्वावगतेः साग्निकस्य सम्बन्धिनां गार्हपत्यादिधिष्ण्यानां सर्वेषामेव चयनम्; संस्कार्यत्वात् । तत्र धिष्ण्येषु गार्हपत्याख्यस्य धिष्ण्यस्य प्राथम्यात् तत्र प्रथमं चयनं विधित्सुस्ततः प्राच्यान् भूसंस्कारान् विधास्यन् तत्स्थानस्य समन्त्रकं व्युदूहनं विधत्ते—गार्हपत्यं चेष्यन्निति । गृहपतिना संयुक्तोऽग्निर्गार्हपत्यः; "गृहपतिना संयुक्ते ञ्यः"—( पा. सू. ४।४।९० ) इति पाणिनिस्मृतेः । इह तु तस्याग्नेः आधारभूतो भूप्रदेशः आधाराधेययोरभेदोपचारेण आधेयवाचिना शब्देनोच्यते संस्कर्तव्यत्वप्रतिपत्तये । अयमर्थः । यस्मादेतत् स्थानं गार्हपत्यस्याग्नेः अधिकरणम्, अतश्च चयनेन संस्कर्तव्यमित्यर्थः । संस्कारश्चात्र प्राधान्यद्योतिन्या द्वितीयया "व्रीहीन् प्रोक्षति"—इत्यादाविव प्रतिपाद्यते । चेष्यन्निति हेतौ शतृप्रत्ययः । "लक्षणहेत्वोः क्रियायाः" ( पा. सू. ३ । २ । १२६ ) इति । यतोऽस्मिन् स्थाने चयनं कर्तव्यम्, अतो हेतोरेतत् स्थानं पलाशवृक्षस्य शाखया "अपेत"—इति वक्ष्यमाणेन मन्त्रेण 'व्युदूहति' लोष्टतृणादिकसम्मार्जनेनापसारयतीत्यर्थः ॥

व्युदूहनस्य प्रयोजनमाह—अवस्यति हैतदिति । गार्हपत्यस्याग्नेर्यत् स्थानं चयने संस्करोति मयाऽत्र सोमेन यष्टव्यमिति, 'एतत्' एतेन व्युदूहनेन 'अवस्यति ह' निश्चिनोत्येव । यद्वा, गार्हपत्यस्य यच्चयनं तदेव

---

१—पलाशशाखया गार्हपत्यं व्युदूहत्यपेत वीतेति पच्छः प्रतिदिशं पुरस्तात्प्रथमम् । का० श्रौ० सू० १७ । ३ ।

( त्यु ) अपेत वीत वि च सर्पतातऽइति । ( त्यु ) अप चैवेत वि चेतु व्यु च सर्पतातऽइत्येतद्युऽउदरसर्पिणस्तानेतदाह येऽत्र स्थ पुराणा ये च नूतनाऽइति येऽत्र स्थ सनातना ये चाधुनातनाऽइत्येतत् ॥ २ ॥

( दु ) अदाद्यमोऽवसानं पृथिव्याऽइति यमो ह वा ऽअस्या ऽअवसानस्येष्टे स ऽएवास्माऽअस्यामवसानं ददाति ॥ ३ ॥

---

"अपेत वीत वि च सर्पतातः"–इति । अप चैवेत, वि चेत, व्यु च सर्पतात इत्येतत् । य उदरसर्पिणस्तानेतदाह । "येऽत्र स्थ पुराणाः, ये च नूतनाः"–इति । येऽत्र स्थ सनातनाः । ये चाधुनातना इत्येतत् ॥ २ ॥

" अदाद्यमोऽवसानं पृथिव्याः "–इति । यमो ह वा अस्या अवसानस्येष्टे । स एवास्मा अस्यामवसानं ददाति ॥ ३ ॥

---

देवयजनाध्यवसानम् । तथा च ' ये केचित् ' ' अग्निचितः ' अग्निं चितवन्तो यजमानाः ' ते ' ' अस्यामेव ' पृथिव्यामेव ' अवसिताः ' अवसानं प्राप्तास्तत्रैव प्रवर्त्तन्ते, ' तत् ' तथा सति पलाशशाखया चयनस्थानं ' व्युदूहति '–इति यत् ' तत् ' तेन ' अवसितानेव ' तत्र स्थितान् प्राक्तनान् यजमानान् ' व्युदूहति ' विविधं निरस्यति ॥ व्युदूहनं कुर्वतो यजमानस्याभिप्रायमाह–नेदिति । अग्निचयनमनुष्ठाय तत्रैव 'अवसितान्' यजमानान् अत्रैव ' नेत् अध्यवस्यानि ' तेषामुपरि अध्यवसानमवस्थानं नैव करवाणि ' इति ' अनेनाभिप्रायेणेत्यर्थः ॥ १ ॥

तस्मिन् व्युदूहने प्रतीकग्रहणेन मन्त्रं विधत्ते–अपेतेति । अत्र चापेत वीतेति वाक्यद्वयस्यार्थमाह–अप चैवेत वि चेतेति । हे यज्ञविरोधिनो जनाः ! अस्मात् स्थानात् 'अपेत' अपगच्छत, अपगमनसमयेऽपि 'वीत' विविधं गच्छत । अनयोरपगमनविगमनयोः समुच्चयो विवक्षित इत्यमुमर्थं द्योतयितुं चकारयोः प्रयोगः । ' वि च सर्पतातः'–इत्येतदनूद्य व्याचष्टे–व्यु चेति । 'येतु' प्राणिनः उदरेणैव सर्पन्ति गच्छन्ति, तान् सर्पसरीसृपादीन् प्राणिनः प्रति अस्मात् स्थानात् अपगमनमनेन प्रार्थ्यते इत्यर्थः । तथा च मन्त्रभागस्यायमर्थः–हे उदरेणैव सर्पणशीलाः पन्नगादयः ! ' अतः ' अस्मादग्निचयनस्थानाद् ' विसर्पत ' विविधं गच्छतेति ।

द्वितीयपादमनूद्य व्याचष्टे–येऽत्र स्थेति । पुरा अतीतकाले भवाः ' पुराणाः ' । "सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यः"–( पा. सू. ४।३।२३ ) इति पुराशब्दादव्ययात् ट्युप्रत्ययः । " पुराणप्रोक्तेषु "–( पा. सू. ४।३।१०५ ) इति निपातनात् तुडभावः, तथा च सनातना इत्यर्थो भवति । नूतना इत्यस्यार्थमाह–अधुनातना इति । ' अधुना ' अस्मिन् वर्तमानकाले भवाः । तदयं मन्त्रभागस्यार्थः–अत्र स्थाने ये पुराणाः सन्तः स्थ, ये च नूतना अधुनातनाः स्थ, ते सर्वे यूयमपेतेति ॥ २ ॥

तृतीयपादमनूद्य व्याचष्टे–अदाद्यम इति । अवस्यति अस्मिन्निति ' अवसानं ' स्थानम्, ' पृथिव्याः ' सम्बन्धि यत्, तत् ' यमः ' असमभ्यम् दत्तवान् । यमो ह वा इत्यादि । ' अस्याः ' पृथिव्याः सम्बन्धिनः 'अवसानस्य' स्थानस्य 'यमः' खलु 'ईष्टे' अतः 'स एव' 'अस्मै' यजमानाय ' अस्याः ' पृथिव्याः ' अवसानं ' स्थानं ' ददाति ' ॥ ३ ॥

( त्यु ) अुक्रन्निमुं पितुरो लोकुमस्माऽइुति । क्षुत्रं वै यमो व्विशः पितुरो युस्माऽउ वै क्षुत्रियो व्विशा संव्विदानोऽस्यामवसानं दुदाति तत्सुदत्तं तुथो हास्मै क्षुत्रं यमो व्विशा पितृभिः संव्विदानोऽस्यामवसानं ददाति ॥ ४ ॥

पलाशशाखया व्युदूहति । ब्रुह्म वै पलाशो ब्रुह्मणैव तदुवसितान्व्युदूहति मुन्त्रेण ब्रुह्म वै मुन्त्रो ब्रुह्मणैव तदुवसितान्व्युदूहति तामुदीचीमुदस्यति ॥५॥ ( शतम् ३९०० ॥ )

---

" अक्रन्निमं पितरो लोकमस्मै "–( वा. सं. १२ । ४५ ) इति । क्षत्रं वै यमो, विशः पितरः । यस्मा उ वै क्षत्रियो विशा संविदानोऽस्यामवसानं ददाति । तत्सुदत्तम् । तथो हास्मै क्षत्रं यमो विशा पितृभिः संविदानोऽस्यामवसानं ददाति ॥ ४ ॥

पलाशशाखया व्युदूहति । ब्रह्म वै पलाशः, ब्रह्मणैव तदवसितान् व्युदूहति–मन्त्रेण । ब्रह्म वै मन्त्रः । ब्रह्मणैव तदवसितान् व्युदूहति । तामुदीचीमुदस्यति ॥ ५ ॥

---

चतुर्थपादमनूद्य व्याचष्टे–अक्रन्निति । ' पितरः ' पितृदेवताः ' अस्मै ' यजमानाय अग्निचयनार्थम् ' इमं लोकं ' स्थानम् ' अक्रन् ' अकुर्वत । क्षत्रं वा इत्यादि । क्षत्रियजातिर्हि यमः, पितरस्तु तस्य ' विशः ' प्रजाः । " यमः पितृणाꣳ राजा " इति हि श्रुतिः ( तै. सं. ४ । १ । ८ । ४; ऐ० ब्रा० ८ । २ ।३।१)। यस्मा उ वा इति । लोके हि ' क्षत्रियः ' राजा ' विशा ' स्वकीयया प्रजया ' संविदानः ' सञ्जानानः, ऐकमत्यं प्राप्तः सन् ' अस्यां ' पृथिव्यां ' यस्मै ' पुरुषाय ' अवसानं ' स्थानं ' ददाति, ' तस्य ' तत् ' ' सुदत्तं ' शोभनं दत्तं भवति । यथाऽयं दृष्टान्तः, तथैव खलु ' अस्मै ' यजमानाय ' क्षत्रं ' क्षत्रियः यमोऽपि पितृरूपया स्वकीयया ' विशा ' सञ्जाननः सन् ' अस्यां ' पृथिव्याम् ' अवसानं ' स्थानं ' ददाति ' ॥४॥

तस्मिन् व्युदूहने पलाशशाखायाः करणत्वं यद् विहितम् तदनूद्य स्तौति–पलाशशाखयेति । वृक्षेषु मध्ये पलाशवृक्षो ' ब्रह्म ' ब्राह्मणजातिः । यद्वा सोमाहरणसमये भूमौ पतितस्य पर्णस्य पलाशवृक्षरूपेणोत्पत्तेः ( श. प. १।७।१।१ ) गायत्रीसम्बन्धात् पलाशवृक्षो गायत्रीमन्त्रात्मकः । तथाच तेनैव ' ब्रह्मणा ' ' तत् ' तत्र ' अवसितान् ' अवसाय स्थितान् जनान् अस्मात् स्थानात् 'व्युदूहति' उच्चाटयति । मन्त्रकरणत्वमनूद्य स्तौति–मन्त्रेणेति । ब्रह्म वा इति । यद् ब्रह्म विवक्ति हि मन्त्रः, तथा च मन्त्रेण क्रियमाणं व्युदूहनं ब्रह्मणैव कृतं भवतीत्यर्थः ।

तस्याः पलाशशाखाया निरसनं विधत्ते–तामुदीचीमिति[1] । ' उदीचीम् ' उदगग्राम्, उदीचीं दिशं वा प्रति ' ताम् ' पलाशशाखाम् ' उदस्यति ' उत्क्षिपति, परित्यजतीत्यर्थः ॥ ५ ॥

---

१–उदीचीꣳ शाखामुदस्य । का. श्रौ. सू. १७ । ४ ।

( त्यु ) अथोषान्निवपति । ( त्य ) अयं वै लोको गार्हपत्यः पशवऽ ऊषा ऽअस्मिंस्तल्लोके पशून्दधाति तस्मादिमेऽस्मिंल्लोके पशवः ॥ ६ ॥

( वो ) यद्देवोषान्निवपति । प्रजापतिः प्रजा ऽअसृजत ता नानोल्बा ऽअसृजत ता न समजानत सोऽकामयत संजानीरन्निति ताः समानोल्बा ऽअकरोत्तासामूषानुल्बमकरोत्ताः समजानत तस्मादप्येतर्हि समानोल्बाः समेव जानते देवैः समानोल्बोऽसानीत्यु वै यजते यो यजते तद्यदूषान्निवपति देवैरेव तत्समानोल्बो भवति ॥ ७ ॥

---

अथोषान्निवपति । अयं वै लोको गार्हपत्यः, पशव ऊषाः । अस्मिंस्तल्लोके पशून्दधाति । तस्मादिमेऽस्मिंल्लोके पशवः ॥ ६ ॥

यद्देवोषान्निवपति । प्रजापतिः प्रजा असृजत । ता नानोल्बा असृजत । ता न समजानत । सोऽकामयत—संजानीरन्निति । ताः समानोल्बा अकरोत् । तासामूषानुल्बमकरोत् । ताः समजानत । तस्मादप्येतर्हि समानोल्बाः समेव जानते । देवैः समानोल्बोऽसानीत्यु वै यजते यो यजते । तद् यदूषान्निवपति—देवैरेव तत्समानोल्बो भवति ॥ ७ ॥

---

सम्मार्जनानन्तरमूषाणां निवपनं विधत्ते—अथोषानिति ( का. श्रौ. सू. १७ । ४ ) । क्षारमृत्तिका ऊषाः । पृथिव्याः पशुसमृद्धिहेतुत्वेनैतत् प्रशंसति—अयं वै लोक इति । ऊषरदेशस्य पशुभिरुपजीव्यत्वादूषाणां पशुत्वव्यपदेश इति । तस्मादिम इति । यस्मादूषाणां निवपनेन पशवोऽस्मिन् लोके स्थापिताः, तस्मादेव कारणात् इदानीमपि ' इमे ' ' पशवः ' गवाद्याः ' अस्मिन् लोके ' समृद्धा उपलभ्यन्ते ॥ ६ ॥

ऊषनिवपनं प्रकारान्तरेण स्तोतुमनुवदति—यद्देवेति । ऊषाणामुल्बरूपत्वमाख्यायिकया प्रतिपादयन् संज्ञानहेतुतामाह—प्रजापतिः प्रजा इति । ता नानोल्वा इति । नानाविधं परस्परं विभिन्नमुल्बं गर्भवेष्टनं यासां तास्तथोक्ताः, ततो भिन्नजातीयत्वात् ' ताः ' प्रजाः परस्परं ' न समजानत ' समानज्ञाना नाभवन् । ' स ' च प्रजापतिः ' अकामयत ' इमाः प्रजाः परस्परं ' सञ्जानीरन्निति ' एवं कामयित्वा भिन्नोल्बजनितत्वं दोषमालोच्य ' ताः ' प्रजाः ' समानोल्बाः ' समानमेकमेवोल्बं यासां तथाविधाः ' अकरोत् ' । किं तत् समानमुल्बमिति, तदाह—तासामूषानिति । उत्पद्यमानानां प्रजानामुल्बत्वेनोषान् कृतवानित्यर्थः । तथा चैकोल्बजनितत्वेन समानजातीयाः ' ताः ' सर्वाः प्रजाः ' समजानत ' ऐकमत्यं प्राप्ता आसन् । यस्मादेवं पुरावृत्तम्, ' तस्माद् ' इदानीमपि समानोल्बानामेकमातृकाणां प्रजानां सम्मतिर्दृश्यत इत्यर्थः । देवैरित्यादि । देवैः सह समानजन्मा भवानीत्यनेनाभिप्रायेण हि ' यः ' यजमानो ' यजते ' ' तत् ' तथा सति उल्बसंस्तुतानामूषाणां निवपनेन ' देवैः ' ' समानोल्बः ' समानजन्मा ' भवति ' इत्यर्थः ॥ ७ ॥

संज्ञानमसीति । समजानत ह्येतेन कामधरणमिति पशवो वाऽऊषाः पशवः कामधरणं मयि ते कामधरणं भूयादिति मयि ते पशवो भूयासुरित्येतत्तैः सर्व्वं गार्हपत्यं प्रच्छादयति योनिर्वै गार्हपत्या चितिरुल्बमूषाः सर्व्वां तद्योनिमुल्बेन प्रच्छादयति ॥ ८ ॥

( त्य ) अथ सिकता निवपति । ( त्य ) अग्नेरेतद्वैश्वानरस्य भस्म यत्सिकताऽअग्निमु वाऽएतं व्वैश्वानरं चेष्यन्भवति न वाऽअग्निः स्वं भस्मातिदहत्यनतिदाहाय ॥ ९ ॥

---

" संज्ञानमसि "–इति । समजानत ह्येतेन । " कामधरणम् "–इति । पशवो वा ऊषाः, पशवः कामधरणम् । " मयि ते कामधरणं भूयात् "–इति । मयि ते पशवो भूयासुरित्येतत् । तैः सर्वं गार्हपत्यं प्रच्छादयति । योनिर्वै गार्हपत्या चितिः, उल्बमूषाः । सर्वां तद् योनिमुल्बेन प्रच्छादयति ॥ ८ ॥

अथ सिकता निवपति । अग्नेरेतद्वैश्वानरस्य भस्म–यत् सिकताः । अग्निमु वा एतं वैश्वानरं चेष्यन् भवति । न वा अग्निः स्वं भस्मातिदहति । अनतिदाहाय ॥ ९ ॥

---

तस्मिन् निवपने मन्त्रं विधाय तदीयपदानि व्याचष्टे–संज्ञानमिति[1] । करणे ल्युडित्याह ( पा. सू. ३ । ३ । ११७ ) समजानतेति । ' हि ' यस्माद् विप्रतिपन्नाः प्रजाः ' एतेन ' ऊषरूपेणोल्बेन ' समजानत ' समानज्ञाना अभवन्, तस्मात् हे ऊष ! त्वम् "संज्ञानमसि" इति मन्त्रेण प्रतिपाद्य इत्यर्थः । पशवः कामधरणमिति । कामाः ध्रियन्ते धीयन्ते अनेन गोरूपत्वेन स्तुतेनोषेणेति व्युत्पत्त्या मन्त्रगतकामधरणशब्देन पशुविषयस्य कामस्य धरणं प्रतिपाद्यत इत्यर्थः । मयि त इत्यादि । हे ऊष ! यतः त्वं कामधरणमसि, अतः ' ते ' तव सम्बन्धि पशुरूपं ' कामधरणं ' कामप्रापणम् ' मयि भूयात् ' इति । मन्त्रवाक्यार्थस्य पर्यवसानमाह–मयि ते पशव इति । 'ते' तव सम्बन्धिनः पशवः 'मयि भूयासुः' इत्येतत् अत्र प्रतिपाद्यमित्यर्थः । न्युप्तैरूषैः प्रच्छादनं विधत्ते–तैरिति[2] । गार्हपत्याग्निस्थानम् । तत्प्रच्छादनं प्रशंसति–योनिर्वा इति । गार्हपत्याग्निसम्बन्धिनी या ' चितिः ', सा 'योनिर्वै' सर्वोत्पत्तिकारणम् । गार्हपत्याग्नेराहवनीयाग्न्युत्पत्तिहेतुत्वात् तदीयचयनस्याप्युत्पत्तिहेतुत्वाद् योनित्वेन स्तुतिः । उल्बमूषा इति । "तासामूषानुल्बमकरोत्"–इत्याम्नातम् ( ७।१।१।१७ कं)। 'तत्' तेन ऊषैः प्रच्छादनेन 'सर्वां' कृत्स्नामेव 'योनिम्' आहवनीयाद्युत्पत्तये 'उल्बेन' प्रच्छादितवान् भवतीत्यर्थः॥८॥

सिकतानां निवपनं विधत्ते–अथेति । ऊषवत् ' सिकताः' वालुकाः निक्षिपति[3] । पृथिव्याः दाहराहित्यहेतुत्वेनैतत् स्तौति–अग्नेरेतदिति । ' वैश्वानरस्य ' विश्वनरहितस्य ' अग्नेः ' ' एतद् ' भस्म ' यत् सिकताः । ' ' वैश्वानरं ' विश्वेषु नरेषु अवस्थितं हिरण्यगर्भात्मकम् ' अग्निं ' खल्वसौ यजमानः ' चेष्यन् भवति ' । यथा च चीयमानो वैश्वानरोऽग्निः पृथिवीं न दहेत्, तथा च सिकतानां निवपनं पृथिव्याः ' अनतिदाहाय ' अतिक्रम्य

---

१–ऊषान् निवपति संज्ञानमिति । का० श्रौ० सू. १७४। २–मंडलं छादयति । का० श्रौ० सू० १७५। ३–सिकताश्चाग्नेर्भस्मेत्यूषवत् । का. श्रौ. सू. १७६ ।

युद्धेव सिकता निवुपति । ( त्य ) अग्नेरेतुद्वैश्वानरुस्य रेतो यत्सिकता ऽअग्निमु वाऽएतं व्वैश्वानरं चेष्युन्भवति न वाऽअरेतुस्कात्किंचन व्विक्रियतेऽस्माद्रेतसोऽधि विक्रियाताऽइति ॥ १० ॥

( त्य ) अग्नेर्भस्मास्यग्नेः पुरीषमसीति । यातुयाम वाऽअग्नेर्भस्मायातयाम्न्यः सिकताऽ अयातयाममुवैनदेतुत्करोति ताभिः सुर्वं गार्हपत्यं प्रुच्छादयाति योनिर्वै गार्हपत्या चिती रेतः सिकताः सुर्वस्यां तद्योनौ रेतो दधाति ॥ ११ ॥

( त्यु ) अथैनं परिश्रिद्भिः परिश्रयति । योनिर्व्वै परिश्रितऽ इदुमुवैतद्रेतः सिक्तं योन्या परिगृह्णाति तुस्माद्योन्या रेतः सिक्तं परिगृह्यते ॥ १२ ॥

---

यद्वेव सिकता निवपति । अग्नेरेतद्वैश्वानरस्य रेतो–यत्सिकताः । अग्निमु वा एतं वैश्वानरं चेष्यन् भवति । न वा अरेतस्कात्किञ्चन विक्रियते । अस्माद्रेतसोऽधि विक्रियाता इति ॥ १० ॥

"अग्नेर्भस्मास्यग्नेः पुरीषमसि"–इति । यातयाम वा अग्नेर्भस्म । अयातयाम्न्यः सिकताः । अयातयाममेवैनदेतत्करोति । ताभिः सर्वं गार्हपत्यं प्रच्छादयति । योनिर्वै गार्हपत्या चितिः, रेतः सिकताः । सर्वस्यां तद्योनौ रेतो दधाति ॥ ११ ॥

अथैनं परिश्रिद्भिः परिश्रयति । योनिर्वै परिश्रितः । इदमेवैतद्रेतः सिक्तं योन्या परिगृह्णाति । तस्माद्योन्या रेतः सिक्तं परिगृह्यते ॥ १२ ॥

---

अतिशयितो वा दाहोऽतिदाहः–तद्राहित्याय भवति । न खल्वग्निः स्वकीयं भस्मातीत्य दहति, किन्तु तेनैव च्छन्नः सन् दाहसमर्थो भवतीत्यर्थः ॥ ९ ॥

एतदेवानूद्य प्रकारान्तरेण स्तौति–यद्वेवेति । सिकता इति यत् एतद् 'अग्नेः' वैश्वानरस्य 'रेतः' वर्णसादृश्यात् । न वा अरेतस्कादिति । 'न' खलु 'अरेतस्कात्' निर्वीर्यात् पुरुषात् किमपीषदपि 'विक्रियते' उत्पद्यते, अतश्चेष्यमाणोऽग्निः 'रेतसः' 'अधि' उपरि चितः सन् 'विक्रियाते' नानाविधफलसाधनयागहेतुत्वेन विकृतो भवेत् 'इति' अनेनाभिप्रायेण सिकतानिवपनं कर्तव्यमित्यर्थः ॥ १० ॥

तत्र मन्त्रं विदधाति–अग्नेर्भस्मेति । यातयाम वा इति । 'अग्नेर्भस्म' 'यातयाम' गतसारम्, रेतोरूपास्तु 'सिकताः' 'अयातयाम्न्यः' अगतसाराः; तथा चैतेन सिकतानिवपनेन, 'अयातयाम' अगतरसम्, सारवदेव 'एतत्' चयनं 'करोति' इत्यर्थः ॥

सिकताभिः प्रच्छादनं विधत्ते–ताभिरिति । यतो रेतःसंस्तुताः सिकताः, तस्मात् तासां गार्हपत्यायतने सर्वत्र प्रक्षेपेण सर्वस्यामेव योनौ प्रजोत्पत्तिहेतुभूतं 'रेत एव दधाति' सिक्तवान् भवति ॥ ११ ॥

शर्कराभिः परिश्रयणं विधत्ते–अथैनमिति । 'एनं' गार्हपत्यप्रदेशं परिश्रयन्त्येभिरिति 'परिश्रितः'

---

१–परिश्रिद्भिः परिश्रयति पूर्ववदेकविंशत्या चित स्थेति । का० श्रौ० सू० १७ । ७ ।

यद्वेवैनं परिश्रिद्भिः परिश्रयति । (त्य) अयं वै लोको गार्हपत्य ऽआपः परिश्रित ऽइमं तं लोकमद्भिः परितनोति समुद्रेण हैनं तत्परितनोति सर्व्वतस्तस्मादिमं लोकꣳ सर्व्वतः समुद्रः पर्य्येति दक्षिणावृत्तस्मादिमं लोकं दक्षिणावृत्समुद्रः पर्य्येति खातेन तस्मादिमं लोकं खातेन समुद्रः पर्य्येति ॥ १३ ॥

चित स्थेति । चिनोति ह्येनाः परिचित स्थेति परि ह्येनाश्चिनोत्यूर्ध्वचितः श्रयध्वमित्यूर्ध्वा ऽउपदधदाह तस्मादूर्ध्व ऽएव समुद्रो विजतेऽथ यत्तिरश्ची-

---

यद्वेवैनं परिश्रिद्भिः परिश्रयति । अयं वै लोको गार्हपत्यः । आपः परिश्रितः । इमं तं लोकमद्भिः परितनोति । समुद्रेण हैनं तत् परितनोति । सर्वतः । तस्मादिमं लोकं सर्वतः समुद्रः पर्येति । दक्षिणावृत् । तस्मादिमं लोकं दक्षिणावृत् समुद्रः पर्येति । खातेन । तस्मादिमं लोकं खातेन समुद्रः पर्येति ॥ १३ ॥

"चितः स्थ"–इति । चिनोति ह्येनाः । "परिचितः स्थ"–इति । परि ह्येनाश्चिनोति । "ऊर्द्ध्वचितः श्रयध्वम्"–( वा० सं० १३।४६ ) इत्यूर्द्ध्वा उपदधदाह । तस्मादूर्ध्व एव

---

शर्करापरपर्यायाः सूक्ष्मपाषाणाः, तैः 'परिश्रयति' परितो वेष्टयति । तत् परिश्रयणं प्रशंसति–योनिर्वा इति । योनिस्थानीयाः । 'इदमेव' सिकतारूपं 'सिक्तं रेतः' 'एतत्' एतया परिश्रिद्रूपया 'योन्या' 'परिगृह्णाति' परितो धारयति, यथा न विपद्यते । यस्मादेवं वैदिके कर्मणि, 'तस्मात्' एव कारणात् लोके योषित्सु गर्भाशये 'सिक्तं रेतः' 'योन्या परिगृह्यते' परितो धार्यते ॥

एतदुक्तं भवति,–गार्हपत्यचितिसकाशादेतदुत्पाद्यते आहवनीयचितिः; तदुत्पत्तावत्र न्युप्ता ऊषा उल्वं, सिकता रेतः, परिश्रितो योनिः; अतः परिश्रयणान्तैः संस्कारैराहवनीयचितिः गर्भावस्थां प्रतिपद्यत इति ॥ १२ ॥

एतदेव परिश्रयणमनूद्य प्रकारान्तरेण स्तौति–यद्वेवैनमिति । अयं वै लोक इति । 'अयं' भूलोकात्मकः खलु 'गार्हपत्यः' अग्निः; तद्वाचिन्या भूरिति व्याहृत्या आहितत्वात् । आपः परिश्रित इति । परिश्रयणार्थाः शर्कराः 'आपः' उदकात्मिकाः; शर्करायुक्ते हि भूप्रदेशे खननादाप उपलभ्यन्ते । तथा च गार्हपत्यस्य परिश्रिद्भिः परिश्रयणे सति 'इमम्' एव भूलोकम् 'अद्भिः' 'परितनोति' परितो वेष्टयति । केनोपायेनाद्भिः परिवेष्टनमिति तदाह–समुद्रेणेति । तस्मादिममिति । यस्मात् परिश्रिद्भिः गार्हपत्यस्य परिश्रयणं भूलोकस्य समुद्रेणावरणकारणम्, 'तस्मात्' 'इमं लोकं' 'सर्वतः' सर्वासु दिक्षु 'समुद्रः' 'पर्येति' परितो व्याप्नोति । परिश्रयणस्य प्रादक्षिण्यं विधाय स्तौति–दक्षिणावृदिति । 'दक्षिणा' प्रदक्षिणम् 'आवृत्' आवर्तनं यथा भवति तथा परिश्रयेदित्यर्थः । 'तस्मात्' करणभूते परिश्रयणे दक्षिणावृन्निदर्शनात् समुद्रोऽपि 'इमं लोकं' 'दक्षिणावृत्' प्रदक्षिणावर्त्तनेन 'पर्येति' परितो गच्छति । खाते देशे परिश्रयणं विधाय स्तौति–खातेनेति । गार्हपत्यायतनस्य परितः खातेन प्रदेशेन परिश्रिद्भिः परिश्रयेत् ॥ १३ ॥

तस्मिन् परिश्रयणे मन्त्रं विधाय व्याचष्टे–चितः स्थेति । 'हि' यस्मात् 'एनाः' शर्कराः 'चिनोति'

रुपदध्यात्सकृद्धैवेदꣳ सर्व्वꣳ समुद्रो निर्मृज्यान्न सादयत्यसन्ना ह्यापो न सूददोहसाऽधिवदति ॥ १४ ॥

( त्यु ) अस्थीनि वै परिश्रितः प्राणः सूददोहा न वाऽअस्थिषु प्राणोऽस्त्येकेन यजुषा बह्वीरिष्टकाऽ उपदधात्येकꣳ ह्येतद्रूपं यदापोऽथ यद्बह्व्यः परिश्रितो भवन्ति बह्व्यो ह्यापः ॥ १५ ॥

---

समुद्रो विजते । अथ यत्–तिरश्चीरुपदध्यात्–सकृद्धैवेदं सर्वं समुद्रो निर्मृज्यात् । न सादयति । असन्ना ह्यापः । न सूददोहसाऽधिवदति ॥ १४ ॥

अस्थीनि वै परिश्रितः, प्राणः सूददोहाः । न वा अस्थिषु प्राणोऽस्ति । एकेन यजुषा बह्वीरिष्टका उपदधाति । एकं ह्येतद्रूपम्–यदापः । अथ यद्बह्व्यः परिश्रितो भवन्ति–बह्व्यो ह्यापः ॥१५॥

---

स्थापयति, तस्मात् हे शर्कराः ! यूयं ‘ चितः स्थ ’ चीयमाना भवथेति समवेतार्थो मन्त्रभागः । परि ह्येना इति । यस्मादेनाः परिश्रितश्चिनोति, तस्मात् ‘ परिचितः स्थ ’ परितश्चीयमाना भवथेति ॥

ऊर्ध्वा उपदधदिति । परितः ऊर्ध्वमुखा अवस्थापयन् “ ऊर्ध्वचितः श्रयध्वम् ” इति मन्त्रभागं ब्रूयादित्यर्थः । तदेतत् सूत्रितं कात्यायनेन–“ परिश्रिद्भिः परिश्रयति पूर्ववदेकविंशत्या चितः स्थेति ” ( का. श्रौ. सू. १७ । ७ । ) इति ॥

समुद्रो विजत इति । अम्रूपाणां परिश्रितामूर्ध्वमुखत्वात् तत्समुदायरूपः समुद्रोऽपि ऊर्ध्व एव विजते । “ ओविजी भयचलनयोः ” ( धा. पा. तु. आ. ९ ) । कल्लोलैरूर्ध्वं चलति समुद्र इत्यर्थः, न तु तिर्यक् कृत्स्नां भूमिमावृणोति । विजतिर्व्याप्तिकर्मा । तिर्यगुपधाने दोषमाह–अथ यत् तिरश्चीरिति । ‘ तिरश्चीः ’ तिर्यगञ्चनाः । सकृद्धैवेदमिति । युगपदेव ‘ इदं सर्वं ’ जगत् ‘ समुद्रो निर्मृज्यात् ’ निःशेषेण प्रक्षालयेत्, सर्वं समुद्रे प्रविलीयेतेत्यर्थः । सादनं सूददोहसाऽधिवदनञ्च इष्टकाधर्मतया प्रसक्तम्, अत्र निषेधति–न सादयतीति । उपधानकाले मन्त्रेणोपधाय ततस्तया देवतयेत्युपहितस्य सादनम्; “ता अस्य सूददोहसः” इति मन्त्रः सूददोहाः, तेनाधिवदनमुपरिष्टाद् वदनम्, सर्वेष्टकासाधारणो धर्मः; तदुभयं परिश्रिदुपधाने न कर्तव्यम् । तत्र हेतुः–असन्ना ह्यापः इति । क्वचित् क्वचित् सीदन्ति; प्रवहणशीलत्वादित्यर्थः ॥ १४ ॥

सूददोहसो निषेधमुपपादयति–अस्थीनि वा इति । अस्थ्यात्मिका हि ‘ परिश्रितः ’ शर्कराः; तत्सादृश्यात् । “ ता अस्य सूददोहसः ”–इति सूददोहः–शब्दयुक्तो मन्त्रः ‘ सूददोहाः; ’ स च प्राणात्मकः खलु । सूदं शोभनमुदकम् दोग्धि, येन सिक्तं सत् रसं न शुष्यति; यस्मिन्नङ्गे प्राणः सञ्जातो नास्ति, तत् काष्ठवत् शुष्कमेव भवति; अतः प्राण एव सूददोहाः । तथा चास्थिसंस्तुतासु परिश्रित्सु नासौ कर्तव्यः; न खल्वस्थिषु प्राणोऽस्ति, नाडीष्वेव हि तस्य सञ्चार इत्यर्थः । चितः स्थेत्येकेनैव यजुषा बह्वीनां परिश्रितां स्थापनमुपपादयति–एकेनेति । ‘ उपदधाति ’–चोदितत्वात् परिश्रितामिष्टकात्वम् । अत एवाहापस्तम्बः–“ स्रुचौ सप्त स्वयमातृण्णाः शर्करा हिरण्येष्टकाः पञ्च घृतेष्टका दूर्वास्तम्बः कूर्म उलूखलं मुसलं शूर्पमश्मानः पशुशिरांसि सर्पशिरश्चामृन्मयीरिष्टकाः”–इति ( आप. श्रौ. सू. १६ । १३ । १० ) । एकं ह्येतदिति । आप इति यत्, तदेकमेव हि रूपम्, एकरूपा एव हि लक्ष्यन्ते, अतः ‘ एकेन यजुषा ’ परिश्रिद्रूपाणामपामुपधानं युक्तमिति ॥

( स्त ) तद्वै योनिः परिश्रितः । ( ऽ ) उल्बमूषा रेतः सिकता बाह्याः परिश्रितो भवन्त्यन्तरऽऊषा बाह्या हि योनिरन्तरमुल्बं बाह्यऽऊषा भवन्त्यन्तराः सिकता बाह्यᳩं ह्युल्बमन्तरᳩं रेत ऽएतेभ्यो वै जायमानो जायते तेभ्यऽएवैनमेतज्जनयति ॥ १६ ॥

( त्यु ) अथैनमतश्चिनोति । ( ती ) इदमेवैतद्रेतः सिक्तं विकरोति तस्माद्योनौ रेतः सिक्तं विक्रियते ॥ १७ ॥

स चतस्रः प्राचीरुपदधाति । द्वे पश्चात्तिरश्च्यौ द्वे पुरस्तात्तद्याश्चतस्रः प्राचीरुपदधाति सऽआत्मा तद्यत्ताश्चतस्रो भवन्ति चतुर्विधो ह्ययमात्माऽथ ये पश्चात्ते सक्थ्यौ ये पुरस्तात्तौ बाहू यत्र वाऽआत्मा तदेव शिरः १८

---

तद्वै योनिः परिश्रितः, उल्बमूषाः, रेतः सिकताः । बाह्याः परिश्रितो भवन्ति, अन्तर ऊषाः । बाह्या हि योनिः, अन्तरमुल्बम् । बाह्य ऊषा भवन्ति, अन्तराः सिकताः । बाह्यं ह्युल्बम्, अन्तरं रेतः । एतेभ्यो वै जायमानो जायते । तेभ्य एवैनमेतज्जनयति ॥ १६ ॥

अथैनमतश्चिनोति । इदमेवैतद्रेतः सिक्तं विकरोति । तस्माद्योनौ रेतः सिक्तं विक्रियते ॥ १७ ॥

स चतस्रः प्राचीरुपदधाति, द्वे पश्चात्तिरश्च्यौ, द्वे पुरस्तात् । तद्याश्चतस्रः प्राचीरुपदधाति–स आत्मा । तद्यत्ताश्चतस्रो भवन्ति । चतुर्विधो ह्ययमात्मा । अथ ये पश्चात्–ते सक्थ्यौ । ये पुरस्तात्–तौ बाहू । यत्र वा आत्मा तदेव शिरः ॥ १८ ॥

---

बह्वयो हीति । ' हि ' यस्मात् ' आपः ' ' बह्वयः ' बहुविधाः, तस्मात् तदात्मिकाः ' परिश्रितः ' अपि ' बह्वयो भवन्ति ' बहुशब्दाद् " वोतो गुणवचनात् "–" बह्वादिभ्यश्च "–( पा. सू. ४ । १ । ४४। ४५ ) इति ङीप् ॥ १५ ॥

परिश्रिदूषसिकतानां बाह्याभ्यन्तरभावं विधाय स्तौति–तद्वै योनिरित्यादिना । ' तद्वै ' तत्र ऊषसिकता-परिश्रित्सु मध्ये ' परिश्रितः ' शर्कराः ' योनिः ' गर्भनिर्गमनमार्गः । उल्ब–संस्तुता ऊषाः रेतः–संस्तुताः सिकताः, अतो योनि–संस्तुतानां परिश्रितामुल्बात्मकेभ्यो बाह्यत्वम्, ऊषाणाञ्च तत आन्तरत्वमुपपन्नमित्यर्थः । बाह्य ऊषा भवन्तीत्यादि । उल्बसंस्तुतत्वादूषाणां बाह्यदेशवर्तित्वम्, रेतःसंस्तुतत्वात् सिकतानामाभ्यन्तरत्वं युक्तमित्यर्थः । बाह्यं हीति । लोकप्रसिद्धयोपपादनम् । एतेभ्यो वा इति । योन्युल्बरेतोभ्यः खलु जायमानो जन्तुर्जायते लोके । तथा च ' एनम् ' अग्निं ' तेभ्य एव ' योन्यादिभ्यः इदानीं ' जनयति '॥ १६॥

इत्थं संस्कृतस्य गार्हपत्यायतनस्येष्टकाभिश्चयनं विधत्ते–अथैनमिति । ' अथ ' अनन्तरम्, सिकतात्मना सिक्तस्य रेतसः यस्मात् कार्यरूपेण परिणामोऽपेक्षितः, ' अतः ' कारणात् ' एनं ' व्युदूहनादिभिः संस्कृतं गार्हपत्यदेशमिष्टकाभिः ' चिनोति ' । ' इदमेव ' सिकतारूपेण ' सिक्तं रेतः ' ' एतत् ' एतेन चयनेन ' विकरोति ' विकृतमवयवयुक्तं करोति । तस्मादिति लौकिकोदाहरणम् ॥ १७ ॥

विहितस्य चयनस्य निष्पत्तये इष्टकानामुपधानप्रकारं विधत्ते–स चतस्र इति । गार्हपत्यायतनस्य मध्ये-

( स्तं ) तं वा ऽएतम् । ( मु ) अत्र पक्षपुच्छवन्तं विकरोति यादृग्वै योनौ रेतो विक्रियते तादृग्जायते तद्यदेतमत्र पक्षपुच्छवन्तं विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवाञ्जायते ॥ १९ ॥

तं वै पक्षपुच्छवन्तमेव सन्तम् । ( न्तं ) न पक्षपुच्छवन्तमिव पश्यन्ति तस्माद्योनौ गर्भं न यथारूपं पश्यन्त्यथैनमसुत्र पक्षपुच्छवन्तं पश्यन्ति तस्माज्जातं गर्भं यथारूपं पश्यन्ति ॥ २० ॥

---

तं वा एतमत्र पक्षपुच्छवन्तं विकरोति । यादृग्वै योनौ रेतो विक्रियते—तादृग् जायते । तद्यदेतमत्र पक्षपुच्छवन्तं विकरोति—तस्मादेषोऽमुत्र पक्षपुच्छवाञ्जायते ॥ १९ ॥

तं वै पक्षपुच्छवन्तमेव सन्तं—न पक्षपुच्छवन्तामिव पश्यन्ति । तस्माद्योनौ गर्भं न यथारूपं पश्यन्ति । अथैनमसुत्र पक्षपुच्छवन्तं पश्यन्ति । तस्माज्जातं गर्भं यथारूपं पश्यन्ति ॥ २० ॥

---

प्रथमं 'चतस्रः' 'प्राचीः' प्रागायताः इष्टकाः उपदध्यात् । ततः 'पश्चात्' पश्चाद्भागे 'तिरश्च्यौ' तिर्यगायते 'द्वे' इष्टके उपदध्यात् । तथा चतसृणां 'पुरस्तात्' अपि द्वे तिरश्च्यौ उपदध्यात् । एतासु त्रिविधास्विष्टकासु अवयवक्लृप्तिं करोति—तद्याश्चतस्र इत्यादिना । स आत्मेति । मध्यदेह इत्यर्थः । चतुर्विधो ह्ययमिति । त्वगसृङ्मांसास्थिमेदेन, मनोबुद्ध्यहङ्कारचित्तैर्वा, जाग्रदाद्यवस्थाचतुष्टयेन वा, आत्मनश्चातुर्विध्यम् । सक्थ्याविति । सक्थिः श्रोणिः, तेन च पादो लक्ष्यते; पश्चादुपहिते इष्टके पादावित्यर्थः । पादपाणियुक्तस्यास्य शरीरस्य किं तर्हि शिर इत्यत आह—यत्र वा इति । 'यत्र' खलु 'आत्मा' मध्यदेहो वर्तते, तत्रैव 'शिरः' अपि आत्मन्येवान्तर्भूतमिति अतो न पृथक् वक्तव्यमित्यर्थः ॥ १८ ॥

तं वा इत्यादि । 'अत्र' अस्मिन् गार्हपत्यस्थाने 'तम्' एव 'एतम्' अग्निं पक्षाभ्यां पुच्छेन च युक्तमेव 'विकरोति', मध्ये च चतस्रः, उभयपार्श्वयोः द्वे द्वे, इत्येवमुपधीयमानत्वात् । यादृग्वा इति । 'योनौ' गर्भाशये अवस्थितं 'रेतः' गर्भः, यादृगाकारं 'विक्रियते' विशिष्टावयवं क्रियते, जननसमयेऽपि तादृगाकारविशिष्टमेवापत्यं 'जायते' ॥

इत्थं लौकिकीं स्थितिमुक्त्वा प्रकृते योजयति—तद्यदिति । 'तत्' तत्र 'एतम्' अग्निम् 'अत्र' गार्हपत्यायतनयोनौ 'यद्' यस्मात् 'पक्षपुच्छवन्तं विकरोति' सूक्ष्मरूपेण निर्मिमीते, 'तस्मात्' 'एषः' अग्निः 'अमुत्र' आहवनीयस्थाने 'पक्षपुच्छवान्' 'जायते' जायमान उपलभ्यत इत्यर्थः ॥ १९ ॥

तं वा इति । न पक्षपुच्छवन्तमिव पश्यन्तीति । सतामपि पक्षपुच्छानामदर्शनं योन्यामनभिव्यक्तेर्वा भवति । एतल्लौकिकोदाहरणेनोपपादयति—तस्मादिति । यथारूपमिति । विद्यमानं शिरःपादादिकं कृत्स्नं रूपमित्यर्थः । अथैनमसुत्रेति । 'एनम्' अनभिव्यक्तरूपमग्निम् 'अमुत्र' आहवनीयस्थाने अभिव्यक्तं 'पक्षपुच्छवन्तं' यस्मात् 'पश्यन्ति' 'तस्मात्' एव कारणात् जननात् प्रागनभिव्यक्तावयवं 'गर्भं' 'जातं' जननात् ऊर्ध्वं 'यथारूपम्' यथावसितरूपम् अभिव्यक्तावयवं 'पश्यन्ति' इत्यर्थः ॥ २० ॥

स चुतस्रः पूर्व्वाऽ उुपदधाति । ( त्या ) आत्मा ह्येवाग्रे सम्भुवतः सम्भुवति दक्षिणतऽ उुदङ्ङासीनऽ उत्तरार्ध्यां प्रथमामुपदधाति तुथो हास्यैषोऽभ्यात्मुमेवाग्निश्चितो भवति ॥ २१ ॥

( त्य ) अयर्ठ॒ सोऽअग्निः । ( ग्नुं ) युस्मिन्त्सोममिन्द्रः सुतं दधऽइत्ययं वै लोको गार्हपत्यऽआपः सोमः सुतोऽस्मिंस्तुल्लोकेऽपऽइन्द्रोऽधत्त जठरे व्वावशानऽइति मुध्यं वै जठरर्ठ॒ सहस्रियं व्वाजमुत्यं न सप्तिमित्यापो वै सहस्रियो व्वाजः ससवान्त्सुन्त्स्तूयसे जातवेदऽइति चितः संश्रीयसे जातवेदऽइत्येतत् ॥ २२ ॥

---

स चतस्रः पूर्वा उपदधाति । आत्मा ह्येवाग्रे सम्भवतः सम्भवति । दक्षिणत उदङ्ङासीन उत्तरार्ध्यां प्रथमामुपदधाति । तथो हास्यैषोऽभ्यात्ममेवाग्निश्चितो भवति ॥ २१ ॥

"अयं सोऽअग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे"–इति । अयं वै लोको गार्हपत्यः । आपः सोमः सुतः । अस्मिंस्तल्लोकेऽप इन्द्रोऽधत्त । " जठरे वावशानः "–इति । मध्यं वै जठरम् । " सहस्रियं वाजमत्यं न सप्तिम् "–इति । आपो वै सहस्रियो वाजः । " ससवान्त्सन्त्स्तूयसे जातवेदः"–( वा. सं. १२ । ४७ ) इति । चितः संश्रीयसे जातवेद इत्येतत् ॥ २२ ॥

---

स चतस्र इति । आत्मा ह्येवाग्र इति । यस्मात् शिरसा युक्तो मध्यदेहः ' एव ' ' सम्भवतः ' उत्पद्यमानस्य प्राणिनः ' अग्रे ' प्रथमतः ' सम्भवति ' अभिव्यक्तो भवति, तस्मादात्मसंस्तुता इष्टकाः पूर्वमुपदध्यादिति युक्तम् । तस्मिन्नुपधाने धर्मविशेषमाह–दक्षिणत इति । गार्हपत्यायतनस्य दक्षिणदेशे उदङ्मुख आसीनः चतसृणां मध्ये ' प्रथमाम् ' इष्टकाम् ' उत्तरार्द्ध्याम् ' उत्तरार्द्धे भवाम्, उत्तरभागेऽवस्थितामुपदध्यात् । "दिक्पूर्वपदाट्ठञ् च " ( पा. सू. ४।३।६ ) इत्यत्र चकारात् उत्तरार्द्धात् यत्–प्रत्ययः । उत्तरार्द्ध्यायाः प्रथममुपधाने प्रयोजनमाह–तथो हेति । तथैव खलु ' अस्य ' दक्षिणतोऽवस्थितस्य अध्वर्योः ' एषः ' अग्निः ' अभ्यात्मम् ' आत्माभिमुखमेव ' चितो भवति ' ॥ २१ ॥

चतसृणामुपधाने " अयꣳ सोऽअग्निः " इत्याद्याश्चत्वारो मन्त्राः, इत्यभिप्रेत्य प्रतीकमुपादत्ते–अयꣳ स इति । तथा च कात्यायनः–" मध्येऽर्द्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदङ्ङयꣳ सोऽअग्निरिति प्रत्यृचम् "–( का. श्रौ. सू. १७ । ८ ) इति । तत्र प्रथमाया ऋचोऽयमर्थः, ' सः ' चीयमानो गार्हपत्यः 'अग्निः' 'अयं' भूलोक एव । 'यस्मिन्' शरीरभूतेऽस्मिन् भूलोके 'जठरे' मध्ये 'वावशानः' कामयमानः ' इन्द्रः ' ' सुतम् ' अभिषुतं ' सोमम् ' तत्कारणभूता वृष्टिलक्षणा अपः ' दधे ' अधत्त । ' सहस्रियं ' सहस्रोपकारजनकं ' वाजम् ' अब्लक्षणमन्नम्, ' सप्तिं ' सरणशीलम्, ' अत्यं ' सततगामिनम्, ' अत्यं न ' अश्वमिव । " नेत्युपमार्थे "–( निरु. १ । २ । १ ) ' ससवान् ' सम्भक्तवान् । " वन षण सम्भक्तौ "–( धा.पा.भ्वा. प. ४६४ ) इत्यस्मात् क्वसौ रूपम् । गार्हपत्यरूपेण प्रथमं चितः ' सन् ' हे ' जातवेदः ! ' जातानां वेदितः अग्ने ! ' स्तूयसे ' आहवनीयात्मना चीयमानः तद्वारणमन्त्रैः प्रतिपाद्यसे इत्यर्थः ॥

( दु ) अग्ने यत्ते दिवि वर्च्चऽ इति । ( त्या ) आदित्यो वाऽअस्य दिवि वर्चः पृथिव्यामित्ययमग्निः पृथिव्यां यदोषधीष्वप्स्वा यजत्रेति य एवौषधिषु चाप्सु चाग्निस्तमेतदाह येनान्तरिक्षमुर्वाततन्थेति वायुः स त्वेषः स भानुरर्णवो नृचक्षाऽ इति महान्त्स भानुरर्णवो नृचक्षाऽ इत्येतत् ॥ २३ ॥

( दु ) अग्ने दिवोऽअर्णमच्छा जिगासीति । (त्या) आपो वाऽअस्य दिवोऽर्णस्ताऽ एष धूमेनाच्छैत्यच्छा देवाँ२॥ऽऊचिषे धिष्ण्या यऽइति प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धियऽ इष्णन्ति या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्तऽआपऽ इति रोचनो ह नामैष लोको यत्रैषऽ एतत्तपति तद्याश्चैतं परेणापो याश्चावरेण ताऽ एतदाह ॥ २४ ॥

---

"अग्ने यत्ते दिवि वर्चः"–इति । आदित्यो वाऽअस्य दिवि वर्चः । "पृथिव्याम्"–इति । अयमग्निः पृथिव्याम् । "यदोषधीष्वप्स्वा यजत्र"–इति । य एवौषधिषु चाप्सु चाग्निस्तमेतदाह । "येनान्तरिक्षमुर्वाततन्थ"–इति । वायुः सः । "त्वेषः स भानुरर्णवो नृचक्षाः"–( वा. सं. १२।४८ ) इति । महान्स भानुरर्णवो नृचक्षा इत्येतत् ॥ २३ ॥

"अग्ने दिवोऽअर्णमच्छा जिगासि"–इति । आपो वाऽअस्य दिवोऽर्णः । ता एष धूमेनाच्छैति । "अच्छा देवाँ २॥ ऊचिषे धिष्ण्या ये"–इति । प्राणा वै देवा धिष्ण्याः । ते हि सर्वा धिय इष्णन्ति । "या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्तऽआपः"–

---

एतदर्थपरतां मन्त्रस्य प्रतिपादयति–अयं वै लोक इत्यादिना । मध्यं वै जठरमिति । देहमध्यवाचिना जठरशब्देन भूलोकस्य मध्यमत्र लक्ष्यते । आपो वै सहस्रिय इति । उपकाराणां सहस्रेण सम्मितः 'सहस्रियः' "सहस्रेण सम्मितौ घः" ( पा. सू. ४ । ४ । १३६ ) । तथाविधो वाजोऽन्नमब्लक्षणं विवक्षितम् ॥ २२ ॥

द्वितीयं मन्त्रं भागशोऽनूद्य व्याचष्टे–अग्ने यत्त इति । अस्य मन्त्रस्यायमर्थः–हे 'अग्ने!' 'यत्' 'ते' त्वदीयं 'वर्चः' आदित्यात्मकं ज्योतिः 'दिवि' वर्त्तते, तथा 'पृथिव्यां' भूलोके 'यद्' 'वर्चः' दाहपाकप्रकाशनसमर्थमग्न्यात्मकं ज्योतिरस्ति, 'ओषधीषु' तरुगुल्मादासु, 'अप्सु' आकारः समुच्चये, उदकेषु जाठरबाडवरूपेण, हे 'यजत्र' यजनीयाग्ने! त्वदीयं यत् तेजोऽस्ति, 'येन' वाय्वात्मना तदीयेन रूपेण 'उरु' विस्तीर्णम् 'अन्तरिक्षम्' 'आततन्थ' आतनोषि, हे अग्ने! 'त्वेषः' दीप्यमानो महानित्यर्थः । 'सः' अग्निः वाय्वादिरूपेण लोकत्रयं व्याप्य अवस्थितः, तदीयो 'भानुः' प्रकाशः 'अर्णवः' समुद्रोपमः सन्, 'नृचक्षाः' सर्वेषां नृणां द्रष्टा, प्रकाशको भवति ॥

अयमेवार्थः श्रुत्या प्रतिपाद्यते–आदित्यो वा अस्य दिवि वर्च इत्यादिना ॥ २३ ॥

तृतीयं मन्त्रं व्याचष्टे–अग्ने दिव इत्यादि । हे 'अग्ने!' अस्य 'दिवः' अन्तरिक्षस्य सम्बन्धि 'अर्णं' मेत्रस्थमुदकम् 'अच्छ' अभिलक्ष्य, धूमेन 'जिगासि' व्याप्नोषि । तथा अध्यात्मं 'ये' प्राणरूपाः

**पुरीष्यासोऽअग्नयऽ इति । पशव्यासोऽग्नयऽ इत्येतत्प्रावणेभिः सजोषस ऽइति प्रायणरूपं प्रायणᳬ ह्येतदग्नेर्यद्गार्हपत्यो जुषन्तां यज्ञमद्रुहोऽन- मीवाऽ इषो महीरिति जुषन्तां यज्ञमद्रुहोऽनशनायाऽ इषो महीरित्येतत् २५**

---

( वा. सं. १२ । ४९ ) इति । रोचनो ह नामैष लोकः–यत्रैष एतत्तपति । तद्याश्चैतं परेणापः, याश्चावरेण, ता एतदाह ॥ २४ ॥

" पुरीष्यासोऽअग्नयः "–इति । पशव्यासोऽग्नय इत्येतत् । " प्रावणेभिः सजोषसः "–इति । प्रायणरूपम् । प्रायणं ह्येतदग्नेः–यद्गार्हपत्यः । " जुषन्तां यज्ञमद्रुहोऽनमीवाऽइषो महीः "–( वा. सं. १२।५० ) इति । जुषन्तां यज्ञमद्रुहोऽनशनाया इषो महीरित्येतत् ॥ २५ ॥

---

' धिष्ण्याः ' धियः इष्णन्ति व्याप्नुवन्तो वर्त्तन्ते, तान् ' देवान् ' त्वं जाठराग्निरूपेण ' ऊचिषे ' समवैषि । "उच समवाये" ( धा. पा. दि. प. ११७ ) इति धातुः । तथा ' याः ' ' आपः ' ' रोचने ' रोचमाने सूर्य-लोके वर्तमानस्य ' सूर्यस्य ' ' परस्तात् ' उपरिभागे वर्त्तन्ते, ' याश्च ' ' अवस्तात् ' अधोभागे ' उपतिष्ठन्ते ' वर्तन्ते, आसामाश्रयित्वं प्राप्नोषीति शेषः ॥

उक्तार्थपरतां मन्त्रस्य दर्शयति–आपो वा अस्य दिवोऽर्ण इति । एष धूमेनेति । भूम्यां पार्थिवरूपेणावस्थितः ' एषः ' अग्निरित्यर्थः । प्राणा वै देवा इति । दीव्यन्ति विषयप्रकाशान् जनयन्तीति ' देवाः ' ' प्राणाः ' इन्द्रियाणि । ते हि सर्वा इति । ' हि ' यस्मात् ' ते ' प्राणाः ' सर्वाः धियः ' शब्दादिविषयाणि सर्वाणि ज्ञानानि ' इष्णन्ति ' आभीक्ष्ण्येन व्याप्नुवन्ति । " इष आभीक्ष्ण्ये "–( धा. पा. क्या. प. ९२ ) इति क्रैयादिको धातुः । तस्मादेते धिष्ण्यशब्देन मन्त्रे विवक्षिताः । याश्चैतं परेणेति । एतस्मात् सूर्याददूरेण परभागे इत्यर्थः । " एनबन्यतरस्याम् "–( पा. सू. ५ । ३ । ३५ ) इत्येनप् । " एनपा द्वितीया " –( पा. सू. २ । ३ । ३ ) इति द्वितीया ॥ २४ ॥

पुरीष्यासो अग्नय इति । चतुर्थो मन्त्रः । अस्यायमर्थः,–पूरयति पयःप्रभृतिभिर्लोकमिति ' पुरीषं ' पशवः; तेभ्यो हिताः ' पुरीष्याः ' " आज्जसेरसुक् " ( पा. सू. ७ । १ । ५० ) । तथा-विधाः ' अग्नयः ' ' प्रावणेभिः ' प्रवणसम्बन्धिभिः सम्भजनयुक्तैस्तैर्देवैः ' सजोषसः ' समानप्रीतयः सन्तः अस्मदीयं ' यज्ञं ' ' जुषन्ताम् ' सेवन्ताम् । तदनन्तरम् ' अद्रुहः ' द्रोहरहिताः, ' अनमीवाः ' अमीवा अशनाया, तद्रहिताः । ' महीः ' महतीः ' इषः ' अन्नानि, अस्मभ्यं प्रयच्छन्त्विति शेषः ॥

उक्तार्थपरतां मन्त्रस्य व्याचष्टे–पशव्यासोऽग्नय इत्येतदित्यादिना । प्रायणरूपमिति । ' प्रावणेभिः '– इति मन्त्र–गतः प्र–शब्दः ' प्रायणरूपम् ' प्रायणस्य प्रगमनस्य प्रारम्भस्य रूपम् । गार्हपत्यचितिश्च ' अग्नेः ' अग्निचयनस्य ' प्रायणम् ' प्रारम्भः; अतः प्रशब्दोपेतो मन्त्रोऽत्र योग्य इत्यर्थः । अनमीवा इत्यस्यार्थमाह–अनशनाया इति । अशनेच्छा अशनाया क्षुत्पीडा, न विद्यते सा यासां ताः ' अनशनायाः ' । " अशनायो-दन्यधनायाः "–( पा. सू. ७ । ४ । ३४ ) इति बुभुक्षायां क्यचीत्वाभावो निपात्यते ॥ २५ ॥

(त्रा) नानोपदधाति । ये नाना कामाऽआत्मंस्तांस्तद्दधाति सकृत्सादय-त्येकं तदात्मानं करोति सूददोहसाऽधिवदति प्राणो वै सूददोहाः प्राणेनैवै-नमेतत्संतनोति संदधाति ॥ २६ ॥

(त्यु) अथ जघनेन परीत्य । ( त्यो ) उत्तरतो दक्षिणाऽऽसीनोऽपरयोर्द-क्षिणामग्रऽउपदधातीडामग्ने पुरुदꣳसꣳ सनिं गोरिति पशवो वाऽइडा पशूनामेवास्माऽएतामाशिषमाशास्ते शश्वत्तमꣳ हवमानाय साधेति यज-मानो वै हवमानः स्यान्नः सूनुस्तनयो विजावेति प्रजा वै सूनुरग्ने सा ते सुमतिर्भूत्वस्मेऽइत्याशिषमाशास्ते ॥ २७ ॥

---

—नानोपदधाति । ये नाना कामा आत्मन्—तांस्तद्दधाति । सकृत्सादयति । एकं तदात्मानं करोति । सूददोहसाऽधिवदति । प्राणो वै सूददोहाः । प्राणेनैवैनमेतत्सन्तनोति, सन्दधाति ॥२६॥

अथ जघनेन परीत्य, उत्तरतो दक्षिणाऽऽसीनोऽपरयोर्दक्षिणामग्र उपदधाति । " इडामग्ने पुरुदंसं सनिं गोः "—इति । पशवो वाऽइडा । पशूनामेवास्माऽएतामाशिषमाशास्ते । "शश्वत्तमं हवमानाय साध "—इति । यजमानो वै हवमानः । " स्यान्नः सूनुस्तनयो विजावा "—इति । प्रजा वै सूनुः । " अग्ने सा ते सुमतिर्भूत्वस्मे "—( वा. सं. १२ । ५१ ) इति । आशिषमाशास्ते ॥ २७ ॥

---

एतासामिष्टकानां क्रमेण कृतमुपधानमनूद्य स्तौति—नानोपदधातीति । ' नाना ' पृथगेकैकेष्टकामुपदध्यात् । तेन ' ये ' ' आत्मन् ' आत्मनि स्थिताः नानाविधाः 'कामाः,' ' तान् ' सर्वान् असङ्कीर्णं पृथगेव ' दधाति ' स्थापयति । सादनसूददोहसोः सकृत्त्वं विधाय स्तौति—सकृत्सादयतीत्यादिना[1] । तया देवतयेति यत् सादनम्, तत् चतसृणामिष्टकानां सम्भूय सकृदेव कर्तव्यम् । ' तत् ' तेन सकृत्त्वेन ' आत्मानम् ' ' एकम् ' एकाकारं संहतं ' करोति ' । पृथक् सादनेन आत्मा विश्लिष्टः स्यात्, तथा " ता अस्य सूददोहसः " इति मन्त्रेण यदधिवदनम्, तदपि सादनस्य सकृत्त्वात् सकृदेव कर्तव्यमित्यर्थः । अत एव सर्वेष्टकोपधान-साधारणधर्मत्वेन सादनसूददोहसौ कात्यायनेनोक्तौ—" नित्ये सादनसूददोहसाऽउपधानादुत्तरे तया देवतया ता अस्येत्यविशेषोपदेशात् "—( का. श्रौ. सू. १६ । २१३ । २१४ ) इति । प्राणेनैवैनमिति । ' एनम् ' आत्मानम् ' एतत् ' एतेनाधिवदनेन ' सन्तनोति ' संयोजयति । तस्यैव विवरणम्—सन्दधातीति ॥ २६ ॥

पश्चिमार्ध्ययोरिष्टकयोरुपधानप्रकारमाह—अथ जघनेनेति[2] । मध्येष्टकोपधानानन्तर्यमथ-शब्दार्थः । ' जघनेन परीत्य ' गार्हपत्यस्थानस्य पश्चात् परिक्रम्य, ' उत्तरतः ' उत्तरस्यां दिशि दक्षिणामुखः ' आसीनः ' सन् ' अपरयोः ' पाश्चात्ययोरिष्टकयोः ' दक्षिणां ' दक्षिणभागस्थामिष्टकाम् ' अग्रे ' प्रथमम् ' उपदधाति ' " इडामग्ने "—इति मन्त्रेण ॥

---

१ सकृन्नित्ये । का. श्रौ. सू. १७ । ९ । २—अपरेण परिक्रम्य परिक्रम्य चयनमिडामग्न इति पश्चिमे प्रतिसंत्रमुत्तरतः । का. श्रौ. सू. १७ । ११ ।

**( स्तेऽथो ) अथोत्तराम् । ( म ) अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथाऽ इत्ययं ते योनिर्ऋतव्यः सनातनो यतो जातोऽदीप्यथाऽ इत्येतत्तं जानन्नग्नऽआरोहाथा नो वर्धया रयिमिति यथैव यजुस्तथा बन्धुः ॥२८॥**

---

अथोत्तराम् । " अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः "–इति । अयं ते योनिर्ऋतव्यः सनातनो–यतो जातोऽदीप्यथा इत्येतत् । " तं जानन्नग्नऽआरोहाथा नो वर्धया रयिम् "–( वा. सं. १२ । ५२ ) इति । यथैव यजुस्तथा बन्धुः ॥ २८ ॥

---

तस्यायमर्थः–' हे अग्ने ! ' ' हवमानाय ' हवनं कुर्वते यजमानाय ' इडां ' पशुम् । जातावेकवचनम् । ( पा. सू. १ । २ । ५८ ) गवाश्वादिपशून् ' साध ' साधय । पशुरेव विशेष्यते–पुरुदंसमिति । ' दंसस् ' इति कर्मनाम, ( निघं. २ । १ । ३ ) बहुकर्महेतुभूतम्, अन्त्यलोपश्छान्दसः । ' शश्वत्तमं ' शाश्वतिकतमञ्च पुत्रपौत्रादिरूपेणाविच्छेदेन सर्वदा वर्त्तमानम् । ' गोस्सनिं ' गवादिपशूनां दातारम् । अस्मै यजमानाय साधय सम्पादय । अपि च ' नः ' अस्माकं ' तनयः ' पुत्रः, ' सूनुः ' तत्पुत्रश्च, ' विजावा ' विविधानां जनयिता स्यात्, उत्पद्यतामित्यर्थः । जनेर्विपूर्वात्–" अन्येभ्योऽपि दृश्यन्ते "–( पा. सू. ३ । २ । ७५ ) इति वनिप्, विड्वनोरनुनासिकस्यात् "–( पा. सू. ६ । ४ । ४१ ) इत्यात्वम् । किं बहुना हे ' अग्ने ! ' ' ते ' त्वदीया सा ' सुमतिः ' सर्वश्रेयोनिदानभूता कल्याणी बुद्धिः ' अस्मे ' अस्मासु ' भूतु ' भवत्वित्यर्थः ॥

एतदर्थपरत्वेन मन्त्रं व्याचष्टे–पशवो वा इडेति । इडा खलु मनोर्दुहिता । तेनाप्सु हुतैर्घृतदधिमस्त्वामिक्षारूपैर्द्रव्यैरुत्पन्ना । एतच्च " तत्रापि पाकयज्ञेनेजे स घृतम् "–( श. प. १ । ८ । १ । ७ ) इत्यादिना प्रथमकाण्डे प्रतिपादितम् । तथा च पशुप्रभवद्रव्येभ्य उत्पन्नत्वादिडायास्तद्वाचिनेडाशब्देन कारणभूताः पशव एवोच्यन्ते । पुरुदंसादिविशेषणेषु लिङ्गव्यत्ययश्छान्दसः । पशूनामेवेति कर्मणि षष्ठी; पशुविषयाम् ' आशिषं ' प्रार्थनाम् ' अस्मै ' यजमानाय अध्वर्युः ' आशास्ते ' । यजमानो वै हवमान इति । देवानाह्वयति तेभ्यो जुहोतीति वा, हवमानशब्दो यजमानवाचीत्यर्थः । प्रजा वै सूनुरिति । तनय–शब्देन पुत्रस्य प्रतिपादितत्वात् तत्पुत्रादिरूपाः प्रजाः सूनु–शब्देन प्रतिपाद्यन्त इत्यर्थः ॥ २७ ॥

अथ पाश्चात्त्ययोरुत्तरस्या इष्टकाया उपधानं विधत्ते–अथोत्तरामिति । उपदधातीति शेषः । मन्त्रस्यायमर्थः,- हे ' अग्ने ! ' ' ऋत्वियः ' ऋतौ भवः सनातनः अयं भूप्रदेशस्तव ' योनिः ' उत्पत्तिकारणम् । ' यतः ' यस्माद्योनेः ' जातः ' सन् ' अरोचथाः, ' अदीप्यथाः, 'तं' योनिभूतम् देशं ' जानन् ' ' आरोह ' प्राप्नुहि । अथ अनन्तरम् ' नः ' अस्माकं ' रयिं ' धनं ' वर्धय ' ॥

मन्त्रस्यैतमर्थं प्रतिपादयति–अयं त इत्यादिना ( का. श्रौ. सू. १७ । ११ ) । " ऋत्वियः " इति मन्त्रपदस्यार्थमाह–ऋतव्य इति । ऋतौ भव इति विगृह्य " छन्दसि घस् "–( पा. सू. ५ । १ । १०६ ) इति घस्–प्रत्यये ऋत्विय इति रूपम्, तथा च ऋतव्य इति तस्यार्थो भवति । ' सनातनः '–इति ऋतव्यपदव्याख्यानम्; ऋत्वात्मकस्य कालस्य सर्वदा विद्यमानत्वात् तत्र भवः अग्निः ' सनातनः ' नित्य इत्यर्थः । तथा च ' जातः '–इति प्रादुर्भावमात्रं विवक्षितम्, नोत्पत्तिः । अदीप्यथा इत्येतदिति । " रुच दीप्तावभिप्रीतौ

सुक्थ्यावस्यैते । ते नानोपदधाति नाना सादयति नाना सूददोहसाऽधिवदति नाना हीमे सक्थ्यौ द्वे भवतो द्वे हीमे सक्थ्यौ पश्चादुपदधाति पश्चाद्धीमे सक्थ्यावग्राभ्याᳬं सᳬंस्पृष्टे भवतऽएवᳬं हीमे सक्थ्यावग्राभ्याᳬं सᳬंस्पृष्टे ॥ २९ ॥

( ष्टे२ऽऽ ) अथ तेनैव पुनः परीत्य । दक्षिणतऽउदङ्ङासीनः पूर्वयोरुत्तरामग्रऽउपदधाति चिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्यथ दक्षिणां परिचिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति ॥ ३० ॥

---

सक्थ्यावस्यैते । ते नानोपदधाति । नाना सादयति । नाना सूददोहसाऽधिवदति । नाना हीमे सक्थ्यौ । द्वे भवतो—द्वे हीमे सक्थ्यौ । पश्चादुपदधाति । पश्चाद्धीमे सक्थ्यौ । अग्राभ्यां संस्पृष्टे भवतः । एवं हीमे सक्थ्यावग्राभ्यां संस्पृष्टे ॥ २९ ॥

अथ तेनैव पुनः परीत्य—दक्षिणत उदङ्ङासीनः पूर्वयोरुत्तरामग्रऽउपदधाति । "चिदसि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद"—इति । अथ दक्षिणां—"परिचिदसि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद"—( वा. सं. १२ । ५३ ) इति ॥ ३० ॥

---

च "–( धा. पा. भ्वा. आ. १४६ ) इति रुचिधातोरनेकार्थत्वादत्र दीप्त्यर्थो विवक्षित इति भावः । यथैव यजुरिति । यजुर्मन्त्रो यथैव प्रतिपादयति, तथैव तस्य 'बन्धुः' बन्धनीयं व्याख्यानम्, स्पष्टार्थतया न पृथग्व्याख्यायत इत्यर्थः ॥ २८ ॥

एतयोः पाश्चात्त्ययोः इष्टकयोरुपधानसादनादीनां पृथक् कर्तव्यतामाह—सक्थ्यावित्यादिना । 'अस्य' अग्नेः 'सक्थ्यौ' श्रोण्यौ 'एते' इष्टके; अतः 'ते' 'नाना' पृथगुपदध्यात् । सादनसूददोहसाऽधिवदने अपि पृथक् कर्त्तव्ये । तत्र कारणमाह—नाना हीमे इति । 'इमे' मनुष्यसम्बन्धिन्यौ सक्थ्यौ 'हि' यस्मात् 'नाना' पृथगसंश्लिष्टे भवतः, तस्मात् तत्संस्तुतयोः इष्टकयोरप्यसंश्लेषो युक्त इत्यर्थः । द्वित्वमनूद्य स्तौति—द्वे भवत इति ॥ पश्चाद्भागोपधानमनूद्य स्तौति—पश्चादिति । पश्चाद्धीमे इति । 'हि' 'यस्मात्' 'इमे' दृश्यमाने पुरुषसम्बन्धिन्यौ सक्थ्यौ 'पश्चाद्'—भागे शरीरस्यापरभागे भवतः, तस्मादनयोः पश्चादुपधानं युक्तम् । अग्रप्रदेशेन तयोः परस्परसंसर्गं विधत्ते—अग्राभ्यामिति । आत्मसमीपे अग्रदेशः, तत्रैते 'संस्पृष्टे' भवत इत्यर्थः । एवं हीमे इति । लौकिकं निदर्शनम् ॥ २९ ॥

पूर्वार्द्धद्वयोरुपधानप्रकारमाह—अथ तेनैवेति[1] । येन मार्गेण पाश्चात्त्ययोरुपधाने परिक्रमणं कृतम्, तेनैव पुनः 'दक्षिणतः' 'परीत्य' परिक्रम्य, तत्रोदङ्मुखः 'आसीनः' 'पूर्वयोः' इष्टकयोः मध्ये 'अग्रे' प्रथमम् 'उत्तरामुपदधाति' । चिदसीति—तस्य मन्त्रः । अनन्तरम्, 'दक्षिणाम्' उपदधाति परिचिदसीति ॥ तन्मन्त्रयोरयमर्थः—भोगांश्चिनोति सम्पादयतीति चित् । हे इष्टके ! त्वं 'चित्' चेतयमाना वागसि

---

१–चिदसीति पूर्वे दक्षिणतः प्रतिमन्त्रम् । का. श्रौ. सू. १७ । १२ ।

बाहूऽअस्यैते । ते नानोपदधाति नाना सादयति नाना सूददोहसाऽधिवदति नाना हीमौ बाहू द्वे भवतो द्वौ हीमौ बाहू पूर्वार्धऽउपदधाति पुरस्ताद्धीमौ बाहूऽअग्राभ्याꣳ सꣳस्पृष्टे भवतऽ एवꣳ हीमौ बाहूऽअग्राभ्याꣳ सꣳस्पृष्टौ स वाऽइतीमाऽउपदधातीतीमेऽइतीमे तद्दक्षिणावृत्तद्धि देवत्रा ॥ ३१ ॥

(ब्राऽष्टा) अष्टाविष्टका ऽउपदधाति । (त्य) अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति पञ्चकृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यष्टाविष्टकाः पञ्चकृत्वः सादयति तत्त्रयोदश त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ३२ ॥

---

बाहूऽअस्यैते । ते नानोपदधाति । नाना सादयति । नाना सूददोहसाऽधिवदति । नाना. हीमौ बाहू । द्वे भवतः । द्वौ हीमौ बाहू । पूर्वार्द्धऽउपदधाति । पुरस्ताद्धीमौ बाहू । अग्राभ्यां संस्पृष्टे भवतः । एवं हीमौ बाहूऽअग्राभ्यां संस्पृष्टौ । स वाऽइतीमाऽउपदधाति, इतीमे, इतीमे । तद्दक्षिणावृत् । तद्धि देवत्रा ॥ ३१ ॥

अष्टाविष्टका उपदधाति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावन्तमेवैनमेतच्चिनोति । पञ्चकृत्वः सादयति । पञ्चचितिकोऽग्निः । पञ्चर्तवः संवत्सरः । सम्वत्स-

---

भोगांश्चिन्वानाऽसि । या देवता त्वामभिमन्यते 'तया' वाग्रूपया ' देवतया ' ' अङ्गिरस्वत् ' अङ्गिराः प्राणाः । " प्राणो हि वा अङ्गानां रसः "—इति तन्नामव्युत्पत्तेः ( श. प. ६ । १ । २ । २८ ) । सोऽस्यास्तीत्यङ्गिरस्वत् । क्रियाविशेषणमेतत् । " तसौ मत्वर्थे "—( पा. सू. १ । ४ । १९ ) इति भत्वाद्रुत्वाभावः । तेन युक्तं यथा भवति तथा वाग्देवतया युक्ता असीत्यर्थः । ' ध्रुवा ' स्थिरा सती ' सीद ' निषण्णा भव ॥

परिचिदसीति द्वितीयो मन्त्रः । परितो भोगांश्चिन्वाना सम्पादयमाना परिचीयमाना वागसीत्यर्थः ॥ ३० ॥

'सक्थ्यावस्यैते'—इतिवद् "बाहू अस्यैते"—इति व्याख्येयम् । एतासामिष्टकानामुपधानस्य प्रादक्षिण्यमुपनयेन दर्शयन्स्तौति—स वा इतीमा इति । ' इमाः ' मध्ये उपधीयमानाश्चतस्र इष्टकाः आत्मन उत्तरार्द्धमारभ्य दक्षिणा उपदधाति[1] । ' इमे ' पाश्चात्त्ये इष्टके ' इति ' प्रथमं दक्षिणार्द्ध्याम्, पश्चादुत्तरार्द्ध्यामित्यनेन क्रमेणोपदधाति । तथा ' इमे ' पौरस्त्ये इष्टके प्रथममुत्तरार्द्ध्याम्, पश्चाद्दक्षिणार्द्ध्यामित्यनेन क्रमेणोपदधाति । ' तत् ' तथा सति ' दक्षिणावृत् ' प्रादक्षिण्येन वर्तनं भवति । ' तत् ' खलु, ' देवत्रा ' देवेषु योग्यमित्यर्थः ॥ ३१ ॥

अथोपहितानामिष्टकानां सम्भूय संख्यां प्रशंसति—अष्टाविष्टका इति । गायत्रोऽग्निरिति । अष्टाक्षर-

---

१—निरये प्रतीष्टकं तिरश्चीषु । का. श्रौ. सू. १७।१३।

**(त्यु) अथ लोकम्पृणामुपदधाति । तस्याऽउपरि बन्धुस्तिस्रः पूर्वास्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति दशोत्तरास्तासामुपरि बन्धुर्द्वे वाऽग्रेऽथ दशाथैकामेवꣳ हि चितिं चिन्वन्ति तास्त्रयोदश सम्पद्यन्ते तस्योक्तो बन्धुः ॥ ३३ ॥**

---

रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावन्तमेवैनमेतच्चिनोति । अष्टाविष्टकाः; पञ्चकृत्वः सादयति । तत् त्रयोदश । त्रयोदश मासाः संवत्सरः । त्रयोदशाग्नेश्चितिपुरीषाणि । यावानग्निर्यावत्यस्य मात्रा—तावत्तद्भवति ॥ ३२ ॥

अथ लोकंपृणामुपदधाति । तस्या उपरि बन्धुः । तिस्रः पूर्वाः । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावन्तमेवैनमेतच्चिनोति । दशोत्तराः । तासामुपरि बन्धुः । द्वे वाऽग्रे, अथ दश, अथैकाम् । एवं हि चितिं चिन्वन्ति । तास्त्रयोदश सम्पद्यन्ते । तस्योक्तो बन्धुः ॥ ३३ ॥

---

पादेन गायत्रीच्छन्दसा सह प्रजापतिमुखादुत्पन्नत्वादग्नेर्गायत्रत्वम् ( तै. सं. ७ । १ । १ । ४ ) । सादनसंख्यामनूद्य स्तौति—पञ्चकृत्व इति । मध्ये उपधेयस्य इष्टकाचतुष्टयस्य एकं सादनम्, अन्यासां चत्वारीति तानि पञ्च भवन्ति । पञ्चचितिकोऽग्निरिति । पञ्च चितयः प्रस्ताराः यस्मिन् स तथोक्तः । पञ्चर्तव इति । हेमन्तशिशिरयोः समासाऽभिप्रायेण ( ऐ. ब्रा. १ । १ । १ ) । संवत्सरोऽग्निरिति । संवत्सरः प्रजापतिर्विराट्, तदात्मकश्चीयमानोऽग्निः प्रागुक्त इत्यर्थः । संख्याद्वयं सम्भूय प्रशंसति—अष्टाविष्टका इति । त्रयोदश मासा इति । संसर्पांहस्पतिसञ्ज्ञकोऽधिमासस्त्रयोदशः; " अस्ति त्रयोदशो मासः "—इति श्रुतेः ( श. प. ४ । ३ । १ । ९ ) । त्रयोदशाग्नेरिति । चित्यस्याग्नेश्चितिपुरीषाणि त्रयोदश भवन्ति । आदितश्चतस्रश्चितयः पुरीषनिवपनान्ताः, स्तोमभागान्ता पञ्चमी चितिः । तदनन्तरमाव्येकं पुरीषम्, नाकसत्प्रभृतिपुरीषनिवपनान्ता षष्ठी चितिरिति द्वे, ततो विकर्णस्वयमातृण्णयोरुपधानम्, हिरण्यशकलैः प्रोक्षणमग्न्यभ्याधानञ्चेति सप्तमी चितिः, सा त्रयोदशी, इत्यादिर्विभाग ऊह्यः । अत इष्टकाचितयः सप्त, पुरीषनिवपनानि षडिति मिलित्वा त्रयोदश । तथा चाष्टमकाण्डे समाम्नास्यते—" अथ यदत ऊर्ध्वमा पुरीषादा षष्ठीः " ( श. प. ८ । ५ । ४ । ८ ) इत्यादिना ॥ ३२ ॥

लोकम्पृणाख्याया इष्टकाया उपधानं विधत्ते—अथेति । एवमष्टाविष्टका उपधाय, अनन्तरमवशिष्टे गार्हपत्यचितिस्थाने लोकम्पृणाख्यामिष्टकामुपदधाति; लोकं शिष्टं स्थानं पृण पूरयेति तन्मन्त्रे ( वा. सं. १२।५४ ) प्रतिपादनात् । तस्या उपरि बन्धुरिति । ' तस्याः ' लोकम्पृणायाः ' उपरि ' उपरिष्टात्, अष्टमकाण्डावसाने " असौ वा आदित्यो लोकम्पृणा "—इत्यादिः स्तावको वाक्यशेषः ( श. प. ८ । ७ । २ । १ ) आम्नास्यत इत्यर्थः ॥

सकृदुच्चारितेन लोकम्पृणेति मन्त्रेण तिसृणां युगपदुपधानं विधत्ते—तिस्रः पूर्वा इति । तत् प्रशंसति—त्रिवृदग्निरिति । " स श्रान्तस्तेपानो मृदꣳ शुष्कापम् " इत्यादिना अग्नेस्त्रिवृत्त्वं प्रतिपादितम् ( श. प. ६ । १ । ३ । १३ ) । अतोऽग्नेस्त्रिवृत्त्वसंख्यायोगात् तिसृणामुपधानं युक्तमित्यर्थः ॥

( स्ता ) ताऽउभय्यऽएकविᳯँशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चऽर्तु-वस्त्रयऽइमे लोकाऽ असावादित्यऽ एकविᳯँशोऽमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति ॥ ३४ ॥

( त्ये ) एकविᳯँशतिर्वेव परिश्रितः । ( तो ) द्वादश मासाः पञ्चऽर्तवस्त्रयऽइमे लोकाऽअयमग्निरमुतोऽध्येकविᳯँशऽइमं तदग्निममुष्मिन्नादित्ये प्रति-ष्ठापयति तद्यदेताऽएवमुपदधात्येतावेवैतदन्योऽन्यस्मिन्प्रतिष्ठापयति तावेतावन्योऽन्यस्मिन्प्रतिष्ठितौ तौ वाऽएतावत्र द्वावेकविᳯँशौ सम्पा-दयत्यत्र ह्येवेमौ तदोभौ भवतऽआहवनीयश्च गार्हपत्यश्च ॥ ३५ ॥

---

ता उभय्य एकविंशतिः सम्पद्यन्ते—द्वादश मासाः, पञ्चर्तवः, त्रय इमे लोकाः, असावादित्य एकविंशः । अमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति ॥ ३४ ॥

एकविंशतिर्वेव परिश्रितः—द्वादश मासाः, पञ्चर्तवः, त्रय इमे लोकाः, अयमग्निरमुतोऽध्येकविंशः । इमं तदग्निममुष्मिन्नादित्ये प्रतिष्ठापयति । तद् यदेता एवमुपदधाति—एतावेवैतदन्योऽन्यस्मिन्प्रतिष्ठा-

---

अथ तेनैव सकृदुच्चरितेनैव मन्त्रेण दशानामिष्टकानामुपधानं विधत्ते—दशोत्तरा इति । उपदधातीति शेषः । 'उत्तराः' उपरिभाविनीरित्यर्थः । तासामुपरीति । 'तासां' दशानामिष्टकानाम्, यादृशी संख्या, तत्स्ता-वकोऽर्थवादो भविष्यतीत्यर्थः ॥

पूर्वं त्रयोदशलोकम्पृणानां द्वेधा विभागेनोपधानमभिधाय, त्रेधा विभागपक्षमप्याह—द्वे वाऽग्र इति । एतच्च पक्षद्वयं सूत्रकृताऽपि दर्शितम्—“ तिसृषु लोकम्पृणासु मन्त्रो दशसु च द्वयोर्वा दशस्वेकस्याञ्च ” ( का. श्रौ. सू. १७ । १७ ) इति । द्वितीयं पक्षं लौकिकेन निदर्शनेनोपपादयति-एवं हीति । यत्र हि काष्ठादिभिश्चिति-र्निर्मीयते, तत्र एवमेव हि 'चितिं चिन्वन्ति' । मूलाग्रभागयोर्द्वे काष्ठे प्रथमं तिर्यक् स्थापयन्ति, पश्चात्तयोरुपर्युपरि अन्यानि सर्वाणि प्रागग्राण्यवशिष्टानि स्थापयन्ति । उपरिष्टाच्चलनाभावायैकं पुनः स्थापयन्ति । तस्मात् तदनुसारेणायं पक्ष उक्त इत्यर्थः । तासां लोकम्पृणानां संख्यां सम्भूयानूद्य प्रागुक्तो वाक्यशेष इति दर्शयति—तास्त्रयोदशेति । “ त्रयोदश मासाः संवत्सरः ”—इत्यादिरुक्तो वाक्यशेषोऽत्रापि योजनीय इत्यर्थः ॥ ३३ ॥

पूर्वाभिरिष्टकाभिः सहैतासां संख्यां सम्भूय प्रशंसति—ता उभय्य इति । 'उभय्यः' उभयविधाः, “ अयᳮ सोऽअग्निः ”—इत्यादिभिर्मन्त्रैः प्रागुपहिता अष्टौ, लोकम्पृणास्त्रयोदशेति मिश्रिता एकविᳮशतिर्भवन्ति । “ एकविᳮश इति, ” एकविंशतिसंख्यापूरकः । “ तस्य पूरणे डट् ”—( पा. सू. ५ । २ । ४८ ) “ ति विं-शतेर्डिति ”—( पा. सू. ६ । ४ । १४२ ) इति 'ति'—शब्दलोपः । 'तत्' तेनैकविंशतिसंख्यासम्पा-दनेन 'अमुं' द्युलोकस्थमेव 'आदित्यम्' 'अस्मिन्' चिते 'अग्नौ' प्रतिष्ठापयति । एकविंशतिसंख्यायोगाच्ची-यमानोऽग्निस्तदात्मको भवतीत्यर्थः ॥ ३४ ॥

परिश्रितां संख्यामनूद्य स्तौति—एकविंशतिरिति । 'उ'—'एव'—इत्यनयोर्यणादेशे सति 'वेव'—इति भवति । तत्र 'उ'—शब्दोऽप्यर्थे । 'परिश्रितः' गार्हपत्यचितेः परितः चिताः शर्करा अप्येकविंशति-

( ब्रा ) अथ पुरीषं निवपति । तस्योपरि बन्धुस्तच्चात्वालवेलाया ऽआहरत्यग्निरेष यच्चात्वालस्तथो हास्यैतदाग्नेयमेव भवति सा समम्बिला स्यात्तस्योक्तो बन्धुः ॥ ३६ ॥

---

पयति । तावेतावन्योऽन्यस्मिन् प्रतिष्ठितौ । तौ वाऽएतावत्र द्वावेकविंशौ सम्पादयति । अत्र ह्येवेमौ तदोभौ भवतः—आहवनीयश्च गार्हपत्यश्च ॥ ३५ ॥

अथ पुरीषं निवपति । तस्योपरि बन्धुः । तच्चात्वालवेलाया आहरति । अग्निरेषः—यच्चात्वालः । तथो हास्यैतदाग्नेयमेव भवति । सा समम्बिला स्यात् । तस्योक्तो बन्धुः ॥ ३६ ॥

---

संख्याका एव भवन्ति; तत्रापि मासादिलोकान्ता विंशतिः पूर्ववत् । ' अयम् ' एव चीयमानः ' अग्निः ' ' अमुतः ' अमुत्र परिश्रिति ' एकविंशः ' एकविंशतिसंख्यापूरकः । 'अधिः' सप्तम्यर्थानुवादी । ' तत् ' तथा सति ' इमम् ' एकविंशम् ' अग्निम् ' अमुष्मिन् ' एकविंशे ' आदित्ये ' ' प्रतिष्ठापयति ' ॥

एतदेव विवृणोति—तद्यदिति । ' तत् ' तत्र ' यत् ' यस्मात् ' एताः ' परिश्रितः इष्टकाश्च 'एवं' प्रत्येकमेकविंशतिसंख्याकाः ' उपदधाति ' ' एतत् ' एतेन कारणेन 'एतावेव' अग्न्यादित्यौ 'अन्योऽन्यस्मिन्' 'प्रतिष्ठापयति '। अत एवेदानीं ' तौ ' 'एतौ' 'अन्योऽन्यस्मिन् प्रतिष्ठितौ' दृश्येते । आदित्यो रात्रावग्निं प्रविश्य प्रतितिष्ठति, अग्निश्चोद्यन्तमादित्यं प्रविश्य प्रतिष्ठितो भवति । एतच्चाग्निहोत्रब्राह्मणे प्रतिपादितम् ( श. प. २ । ३।१।३ ) । तयोरुभयोरप्यत्र सन्निधानमाह—तौ वा इति । परिश्रिदिष्टकासङ्ख्यया द्वयोरेकविंशयोरत्र सम्पादनात् ' इमौ ' अग्न्यादित्यौ ' उभौ ' अपि 'अत्र' चित्याग्नौ सन्निहितौ ' भवतः ' तत्राहवनीयचितिरूपेणादित्यो वर्तते, गार्हपत्यचितिरूपेणाग्निरिति तयोर्विभाग इत्यर्थः ॥ ३५ ॥

पुरीषनिवपनं विधत्ते—अथ पुरीषमिति[1] । इष्टकासन्धिषु छिद्रपूरणार्थाः पांसवः पुरीषम् । तस्मात् तासामुपरि प्रक्षिपतीत्यर्थः । तस्योपरि बन्धुरिति । ' तस्य ' पुरीषनिवपनस्य प्रयोजनप्रतिपादको वाक्यशेषः " इन्द्रं विश्वा अवीवृधन् " इति तन्मंत्रविधिश्च उपरिष्टादष्टमकाण्डावसाने ( श. प. ८ । ७ । ३ । ७ ) आम्नास्यत इत्यर्थः ॥

पुरीषाहरणस्थानं विधत्ते—तच्चात्वालेति । उत्तरवेद्यर्थानां पांसूनां निर्हरणस्थानं ' चात्वालः ' उत्तरवेद्यंसदेशः, तस्य या वेला समीपम्, ततः पुरीषमाहरेदित्यर्थः । तत् प्रशंसति—अग्निरेष इति । आहवनीयाग्न्याधारोत्तरवेदिहेतुत्वाच्चात्वालस्याग्न्यात्मकता । तथो हेति । तथैव खलु सति 'अस्य' चित्याग्नेः ' एतत् ' पुरीषमपि ' आग्नेयम् ' अग्निसम्बद्धम् ' एव भवति ' ॥

इत्थं पुरीषान्ता गार्हपत्यचितिरुक्ता, अथ तस्याः प्रान्तेषु साम्यमाह—सा समम्बिला स्यादिति । ' सा ' गार्हपत्यचितिः ' समम्बिला ' भवेत् । ' समं ' समानं बाह्याभ्यन्तरभावेन न्यूनाधिकाकाररहितं ' बिलं ' परितः प्रान्तदेशो यस्याः सा तथोक्ता । तस्योक्त इति । 'तस्य' बिलसाम्यस्य उखानिर्माणप्रस्तावे स्तावको वाक्यशेष आम्नात इत्यर्थः ( श. प. ६।५।२।२० ) ॥ ३६ ॥

---

1—चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति । का. श्रौ. सू. १७ । १८ ।

(व्यां) व्याममात्री भवति। व्याममात्रो वै पुरुषः पुरुषः प्रजापतिः प्रजापतिरग्निरात्मसम्मितां तद्योनिं करोति परिमण्डला भवति परिमण्डला हि योनिरथोऽअयं वै लोको गार्हपत्यः परिमण्डलऽ उ वाऽअयं लोकः ॥३७॥

(क्रोऽथै) अथैनौ संनिवपति । संज्ञामेवाभ्यामेतत्करोति समितᳪ संकल्पेथाᳪ सं वां मनाᳪसि संव्रताऽअग्ने त्वं पुरीष्यो भवतं नः समनसाविति शमयत्येवैनावेतदहिᳪसायै यथा नान्योऽन्यᳪ हिᳪस्याताम् ॥३८॥

---

व्याममात्री भवति । व्याममात्रो वै पुरुषः । पुरुषः प्रजापतिः । प्रजापतिरग्निः । आत्मसंमितां तद्योनिं करोति । परिमण्डला भवति । परिमण्डला हि योनिः । अथोऽअयं वै लोको गार्हपत्यः । परिमण्डल उ वाऽअयं लोकः ॥ ३७ ॥

अथैनौ सन्निवपति । संज्ञामेवाभ्यामेतत्करोति । "समितं सङ्कल्पेथाम् । सं वां मनांसि सम्व्रता । अग्ने त्वं पुरीष्यः । भवतं नः समनसौ"–(वा. सं. १२ । ५७-६० ) इति । शमयत्येवैनावेतदहिंसायै–यथा नान्योऽन्यं हिंस्याताम् ॥ ३८ ॥

---

गार्हपत्यचितेः परिमाणं विधत्ते–व्याममात्रीति । चतुररत्निर्व्यामः, स परिमाणमस्याः सा । "प्रमाणे द्वयसच्"–( पा. सू. ५ । २ । ३७ । ) इति मात्रच्–प्रत्ययः । तत् प्रशंसति–व्याममात्रो वा इति । तिर्यक् प्रसारितौ बाहू यावत्परिमाणौ भवतः, तस्य परिमाणविशेषस्य व्यायम्यतेऽस्मिन् बाहुद्वयमिति व्युत्पत्त्या व्यायाम इति संज्ञा; स एवात्र वर्णलोपेन व्याम इत्युच्यते । 'पुरुषो व्याममात्रः' चतुररत्निपरिमित इत्येतत् प्रसिद्धम् । विराडात्मकः 'प्रजापतिः' च तादृक्पुरुषात्मकः । "त एतान्सप्त पुरुषानेकं पुरुषमकुर्वन्"–( श. प. ६ । १ । १ । १ ) इति श्रुत्या प्रतिपादितत्वात्, तादृशो विराडात्मकः प्रजापतिरेवायं चीयमानः 'अग्निः' उभयोरपि संस्क्रियमाणरूपत्वसाम्यात् । आत्मसम्मितामिति । चेष्यमाणस्याग्नेरुक्तरीत्या पुरुषत्वात् आत्मना स्वेनाग्निरूपपुरुषेण 'सम्मितां' समानपरिमाणाम् 'तत्' तेन व्याममात्रकरणेन गार्हपत्यचितिरूपां 'योनिं' कृतवान् भवतीत्यर्थः । परितो मण्डलाकारां विधत्ते–परिमण्डलेति । पारिमाण्डल्यं द्वेधोपपादयति–परिमण्डला हीति ॥ ३७ ॥

गार्हपत्यचितिरूपस्याग्नेरुख्याग्नेश्च चतुर्भिर्मन्त्रैः संसर्जनं विधत्ते–अथैनाविति । 'अथ' गार्हपत्यचयनानन्तरम्, 'एनौ' चित्योख्यरूपावग्नी 'सन्निवपति' सङ्गमयति, इष्टकाभिः चिते गार्हपत्यधिष्ण्ये उख्यमग्निं स्थापयतीत्यर्थः । सन्निवपतीति संशब्दसूचितमर्थमाह–संज्ञामेवेति । 'आभ्याम्' अग्निभ्याम्, कर्त्तरि तृतीया । 'सञ्ज्ञाम्' अग्निद्वयकर्तृकं संज्ञानम्, परस्परैकमत्यम्, एतेन सन्निवपनेन करोतीत्यर्थः । तत्र करणभूतानां चतुर्णां मन्त्राणां प्रतीकग्रहणं करोति–तत्र, "समितमिति"–प्रथमस्य प्रतीकम्, "सं वामिति" द्वितीयस्य, "अग्ने त्वं पुरीष्यः" इति तृतीयस्य, "भवतं नः" इति चतुर्थस्य ॥

ते च मन्त्राः ( वा. सं. १२ । ५७-६० ) संहिताभाष्ये एव व्याख्याता इति प्रतीकमत्र व्याख्यायते ।

(अ) चतुर्भिः संनिवपति । तद्ये चतुष्पादाः पशवस्तैरे॒वाभ्यामेतत्संज्ञां करोत्यथोऽअन्नं वै पशवोऽन्नेनैवाभ्यामेतत्संज्ञां करोति ॥ ३९ ॥

तां न रिक्तामवेक्षेत । नेद्रिक्तामवेक्षाऽइति यद्रिक्तामवेक्षेत प्रसेत हैनम् ४०

(मु) अथास्याᳪं सिकताऽआवपति । (त्य) अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकताऽ अग्निमेवास्यामेतद्वैश्वानरᳪं रेतोभूतᳪं सिञ्चति सा समम्बिला स्यात्तस्योक्तो बन्धुः ॥ ४१ ॥

---

चतुर्भिः सन्निवपति । तद्ये चतुष्पादाः पशवः—तैरेवाभ्यामेतत्संज्ञां करोति । अथोऽअन्नं वै पशवः । अन्नेनैवाभ्यामेतत्संज्ञां करोति ॥ ३९ ॥

तां न रिक्तामवेक्षेत । नेद्रिक्तामवेक्षाऽइति । यद्रिक्तामवेक्षेत—प्रसेत हैनम् ॥ ४० ॥

अथास्यां सिकता आवपति । अग्नेरेतद्वैश्वानरस्य रेतो—यत्सिकताः । अग्निमेवास्यामेतद्वैश्वानरं रेतोभूतं सिञ्चति । सा समम्बिला स्यात् । तस्योक्तो बन्धुः ॥ ४१ ॥

---

चित्योख्यरूपावग्नी ! 'समितं' सङ्गतौ भवतम् । 'सङ्कल्पेथां' समानकल्पनौ समानसामर्थ्यौ एककार्यकरौ भवतम् (१) । हे 'अग्नी' ! 'वां' युवयोः 'मनांसि' 'समकरम्' समानविषयाणि कुर्वे । तथा 'व्रता' "शेश्छन्दसि बहुलम्"—(पा. सू. ६ । १ । ७०) इति शेर्लोपः, 'व्रतानि' युवयोः कर्माणि समानानि (२) । हे चीयमानाग्ने ! 'त्वं पुरीष्यः' पशव्यो भवसि (३) । हे अग्नी ! 'नः' अस्माकं युवां 'समनसौ' समानमनस्कौ 'भवतम्' (४) । इति चतुर्णां प्रतीकानामर्थः ॥

मन्त्राणां तात्पर्यमाह—शमयत्येवैनाविति । परस्परं विद्विषाणौ 'एनौ' अग्नी 'एतेन' मन्त्रकरणकेन निवपनेन 'शमयत्येव' शान्तावेव करोति । तच्च शमनम् 'अहिंसायै' हिंसापरिहाराय; 'यथा' तावग्नी 'अन्योऽन्यं' परस्परं 'न हिंस्यातां' हिंसां न कुर्यातामिति ॥ ३८ ॥

चतुर्मन्त्रकरणकम् उख्याग्नेर्गार्हपत्यचितिमध्ये निवपनं विधत्ते—चतुर्भिरिति[1] । 'सन्निवपति' नीचैःस्थापयति । तद्य इति । 'तत्' तेन चतुर्मन्त्रकरणकेन सन्निवपनेन 'ये' 'चतुष्पादाः पशवः' गवाश्वादयः, 'तैरेव' उपायनभूतैः 'आभ्याम्' उख्यचित्यात्मकाभ्यामग्निभ्यां 'सञ्ज्ञां' परस्परैकमत्यं 'करोति' । कारणान्तरमप्याह—अथो इति । 'अन्नं' खलु 'पशवः,' सम्भोजनीयत्वात्; 'अन्नेन' पशुरूपेण ॥ ३९ ॥

रिक्ताया उखाया अध्वर्युकर्तृकं यजमानकर्तृकं वा अवेक्षणं निषेधति—तां न रिक्तामिति[2] । "नेदिति परिभये"—(या. निरु. १।३।४) 'रिक्ताम्' उखां 'नेदवेक्षेत' पश्यतु नैव । विपक्षे बाधमाह—यद्रिक्तामिति । 'एनम्' अवेक्षितारं 'प्रसेत ह' भक्षयेदेव ॥ ४० ॥

तर्हि किं कुर्यादित्यपेक्षायां रिक्ताया उखायाः सिकताभिः समगर्त्तत्वकरणं विधत्ते—अथास्यामिति[3] । 'अस्यां' रिक्तायामुखायां सिकता आवपति, यावद्बिलं पूरयति । वैश्वानरस्याग्नेः 'एतद्रेतः' 'यत्' याः

---

१—समंबिलां कृत्वोख्यं निवपति समितामिति । का० श्रौ० सू० १७।१५। २—रिक्तां नावेक्षेतोखाम् । का० श्रौ० सू० १७।२०। ३—सिकताभिः समंबिलां कृत्वा मातेव पुत्रमिति । का० श्रौ० सू० १७।२१।

(रु) अथैनां विमुञ्चति । (त्यु) अप्रदाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यतऽएतद्वाऽएतद्युक्ता रेतोऽभार्षीदेतमग्निं तमत्राजीजनदथापरं धत्ते योषा वाऽउखा तस्माद्यदा योषा पूर्वꣳ रेतः प्रजनयत्यथापरं धत्ते ॥४२॥

मातेव पुत्रं पृथिवी पुरीष्यमिति । मातेव पुत्रं पृथिवी पशव्यमित्येतदग्निꣳ स्वे योनावभारुखेत्यग्निꣳ स्वे योनावभार्षीदुखेत्येतत्तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चत्वित्यृतवो वै विश्वे देवास्तदेनां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चति तामुत्तरतोऽग्नेर्निदधात्यरत्निमात्रे तस्योक्तो बन्धुः ॥ ४३ ॥

---

अथैनां विमुञ्चति—अप्रदाहाय । यद्धि युक्तं न विमुच्यते—प्र तद्दह्यते । एतद्वाऽएतद्युक्ता रेतोऽभार्षीत्—एतमग्निं, तमत्राजीजनत् । अथापरं धत्ते । योषा वाऽउखा । तस्माद्यदा योषा पूर्वं रेतः प्रजनयति—अथापरं धत्ते ॥ ४२ ॥

"मातेव पुत्रं पृथिवी पुरीष्यम्"—इति । मातेव पुत्रं पृथिवी पशव्यमित्येतत् । "अग्निं स्वे योनावभारुखा"—इति । अग्निं स्वे योनावभार्षीदुखेत्येतत् । "तां विश्वैर्देवैर्ऋतुभिः संवि-

---

'सिकताः' शौक्ल्यसाम्यात् । 'एतत्' एतेन सिकतानिवपनेन 'अस्याम्' उखायां 'रेतोभूतं' 'वैश्वानरम्' अग्निं 'सिञ्चति' स्थापयति । 'सा' उखा 'समंबिला' भवेत्; समं निम्नोन्नतत्वरहितम् बिलं मुखं यस्याः सा, तथा समबिलेति प्राप्ते पूर्वपदस्य मुगागमश्छान्दसः । समम्बिलत्वस्तावकोऽर्थवादः प्रागुक्त इत्याह—तस्येति । स च "योनिर्वा इयꣳ रेत इदम्" इत्यादिना षष्ठकाण्डे प्रतिपादितः (श. प. ६। ४।४।१९) ॥ ४१ ॥

उखायाः शिक्याद्विमोचनं विधत्ते—अथैनामिति । 'एनां' सिकतायुक्तामुखां शिक्याद् 'विमुञ्चति' पृथक् करोति । विमोकप्रयोजनमाह—अप्रदाहायेति । तत्रोपपत्तिमाह—यद्धीति । 'युक्तम्' अश्वादि यद्वाहनम् 'न विमुच्यते' 'तत् प्रदह्यते' खलु । उक्तमर्थं प्रकृते योजयति—एतद्वा इति । 'एतद्वै' एषा खलूखा, 'युक्ता' सती 'एतम्' 'अग्निम्' उख्यम् 'एतद्रेतः' रेतोऽवस्थापन्नम् 'अभार्षीत्' धृतवती । ततः कृतकार्यत्वाद्विमोकोपपत्तिः । धृतस्याग्नेः प्रजननमाह—तमत्रेति । 'अत्र' अवसरे 'तम्' उख्याग्निम् 'अजीजनत्' प्रासोष्ट; उखेति शेषः । प्रजननानन्तरं रेतोधारणद्वारोखायाः स्त्रीसाधर्म्यं प्रतिपादयति—अथापरमिति । 'अपरं' सिकतात्मकं रेतः 'धत्ते' धारयति । योषा वा उखेति । सिकतावापोपपत्तिः । तस्मादिति । लौकिकदृष्टान्तप्रदर्शनम् ॥ ४२ ॥

विहिते उखाविमोके मन्त्रमनूद्य व्याचष्टे—मातेव पुत्रमिति । पुरीष्यपदस्य पशव्यत्वं वाच्योऽर्थः । 'अभाः' इति भृञः प्रथमपुरुषैकवचने व्यत्ययेन लुङि रूपमित्याह—अभार्षीदिति । "अभारुखा"—इत्युखाशब्दसामानाधिकरण्यात् ॥

---

१–शिक्याद्विमुच्य । का० श्रौ० सू० १७ । २१ । २–अग्निवन्निधाय । का. श्रौ. सू. १७ । २१ ।

( रु ) अथास्यां पयऽआनयति । (त्ये) एतद्वाऽएतद्रेतो धत्तेऽथ पयो धत्ते योषा वाऽउखा तस्माद्यदा योषा रेतो धत्तेऽथ पयो धत्तेऽधराः सिकता भवन्त्युत्तरं पयोऽधरꣳ हि रेतऽउत्तरं पयस्तन्मध्यऽआनयति यथा तत्प्रति पुरुषशीर्षमुपदध्यात् ॥ ४४ ॥

## इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ १-१ ॥

---

दानः प्रजापतिर्विश्वकर्मा विमुञ्चतु "–( वा. सं. १२।६१ ) इति । ऋतवो वै विश्वे देवाः । तदेनां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चति । तामुत्तरतोऽग्नेर्निदधाति; अरत्निमात्रे । तस्योक्तो बन्धुः ॥ ४३ ॥

अथास्यां पय आनयति । एतद्वाऽएतद्रेतो धत्ते, अथ पयो धत्ते । योषा वाऽउखा । तस्माद् यदा योषा रेतो धत्ते, अथ पयो धत्ते । अधराः सिकता भवन्ति–उत्तरं पयः । अधरं हि रेतः–उत्तरं पयः । तन्मध्यऽआनयति–यथा तत्प्राति पुरुषशीर्षमुपदध्यात् ॥ ४४ ॥

---

मन्त्रस्यायमर्थः,–येयम् 'उखा' 'माता पुत्रमिव' 'पृथिवी' भूमिरूपा; मृन्मयीत्वात् । 'पुरीष्यम्' पशव्यम्, पशुभ्यो हितमिति यावत् । तादृशम् 'अग्निं' 'स्वे योनौ' स्वकीये गर्भस्थाने 'अभाः' अभार्षीत्, धारितवती । 'विश्वकर्मा' सर्वस्य कर्ता प्रजापतिः 'ऋतुभिः' यज्ञं प्रति गच्छद्भिः, विश्वैः सर्वैः देवैः 'संविदानः' अहो महत् कर्म कृतमित्येवं संवादं कुर्वन्, इदानीं कृतकृत्यां सतीं 'ताम्' उखां 'विमुञ्चतु' शिक्याद्विमुञ्चति, पृथक् कुरुत इत्यर्थः ॥

तस्या उखायाः ज्वलनरूपस्याग्नेरुत्तरपार्श्वे अरत्निमात्रे चितावेव निधानं कर्तव्यमित्याह–तामुत्तरत इति[1] । अरत्निमात्रप्रदेशे स्थापनस्य स्तावको वाक्यशेषः प्रागुक्त इत्याह–तस्योक्त इति । "अरत्निमात्राद्धि वृषा योषामुपशेते"–इति हि षष्ठकाण्डे प्रतिपादितम् ( श. प. ६।३।१।३० ) ॥ ४३ ॥

सिंकतापूर्णाया उखाया मध्ये तूष्णीं पयस आसेचनं विधत्ते–अथास्यामिति । 'अस्याम्' उखायां 'पयः' दुग्धम् 'आनयति' आसिञ्चति । पयआसेके कारणमुपपादयति–एतद्वा इति । 'एतत्' खलु कारणम्–'एतत्' सिकतालक्षणं 'रेतः' उखां 'धत्ते' धारयति । 'अथ' तदनन्तरमिदमानीतं पयो धत्ते । उक्तार्थसाधकं लौकिकदृष्टान्तं प्रतिपादयति–योषा वा इति । सिकतापयसोरधरोत्तरभावमनूद्य स्तौति–अधराः सिकता इति । अधरं हि रेत इति । गर्भाशये अधोभागे स्थितं पुरुषस्य रेतः, स्त्रीवीर्यं शोणितरूपम् 'पयः' 'उत्तरम्' उपर्यवस्थितं सत् तत् पुंवीर्यं वेष्टयति । अत एव षाट्कौशिकस्य शरीरस्य त्वङ्मांसासृगाख्या बाह्यास्त्रयो धातवो मातृतो भवन्तीति स्मर्यते । तस्मात् सिकतापयसोर्बाह्याभ्यन्तरभावो गर्भोत्पत्तये सम्पद्यत इत्यर्थः । आनयनस्थानं विधत्ते–तन्मध्य इति । 'तत्' पयः, उखायाः 'मध्ये' 'आनयति' आसिञ्चति, 'यथा तत्' पयः प्रत्युपधानसमये 'पुरुषशीर्षमुपदध्यात्' तथेत्यर्थः । अत एवोपधानसमये पुरुष-

---

१–उत्तरत आहवनीयस्यारत्निमात्रे । का. श्रौ. सू. १७ । ४८ । २–आसिंचति पयो मध्ये तूष्णीम् । का. श्रौ. सू. १७।२१।

प्रजापतिः प्रजा ऽअसृजत । स प्रजाः सृष्ट्वा सर्वमाजिमित्वा व्यस्रँ्सत तस्माद्विस्रस्तात्प्राणो मध्यत ऽउदक्रामदथास्माद्वीर्यमुदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत तस्मात्पन्नादन्नमस्रवद्यच्चक्षुरध्यशेत तस्मादस्यान्नमस्रवन्नो हेह तर्हि काचन प्रतिष्ठाऽऽस ॥ १ ॥

ते देवा ऽअब्रुवन् । (न्न) न वाऽइतोऽन्या प्रतिष्ठाऽस्तीममेव पितरं प्रजापतिँ् संस्करवाम सैव नः प्रतिष्ठा भविष्यतीति ॥ २ ॥

---

प्रजापतिः प्रजा असृजत । स प्रजाः सृष्ट्वा सर्वमाजिमित्वा व्यस्रंसत । तस्माद्विस्रस्तात्प्राणो मध्यत उदक्रामत् । अथास्माद्वीर्यमुदक्रामत् । तस्मिन्नुत्क्रान्तेऽपद्यत । तस्मात्पन्नादन्नमस्रवत् । यच्चक्षुरध्यशेत-तस्मादस्यान्नमस्रवत् । नो हेह तर्हि काचन प्रतिष्ठाऽऽस ॥ १ ॥

ते देवा अब्रुवन्-न वाऽइतोऽन्या प्रतिष्ठाऽस्ति, इममेव पितरं प्रजापतिं संस्करवाम, सैव नः प्रतिष्ठा भविष्यतीति ॥ २ ॥

---

शिरस उखायामुपधानं सूत्रितम्-"उखायां प्रत्यञ्चि, सहस्रदा इति पुरुषशिर उद्गृह्य मध्ये"- (का. श्रौ. सू. १७ । ११२. ११३) इति ॥ ४४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥ (७-१-१) ॥

उख्यरूपेण संस्कृतस्य गार्हपत्याग्नेर्विराड्रूपप्रजापत्यात्मकतां वक्ष्यन्नस्य प्रजापतेः संस्कृतिं वक्तुकामस्तच्छरीरविश्लेषं प्रतिपादयति-प्रजापतिः प्रजा असृजतेत्यादिना । प्रजाः सृष्ट्वेति । देवमनुष्यादिरूपा बह्वीः 'प्रजाः सृष्ट्वा' 'सर्वम्' 'आजिम्' गन्तव्यं स्थानम् 'इत्वा' व्याप्य, श्रान्तः सन् 'व्यस्रंसत' विस्रस्तावयवोऽभवत् । 'तस्माद्विस्रस्तात्' प्रजापतिशरीरात् 'मध्यतः' 'प्राणः' प्राणापानादिपञ्चवृत्त्यात्मकः 'उदक्रामत्' उत्क्रान्तोऽभवत् । 'अथ' अनन्तरमेव तस्य प्रजापतेः 'वीर्यं' शुक्रम् 'उदक्रामत्' । 'तस्मिन्' निर्गते सति स भूमौ 'अपद्यत' पतितोऽभवत् । 'तस्मात्' 'पन्नात्' पतितात् प्रजापतिशरीरात् अन्तरवस्थितम् 'अन्नम्' 'अस्रवत्' स्रुतमभवत् । 'यत्' 'चक्षुः' 'अध्यशेत' । "अधिशीङ्स्थासां कर्म"- (पा. सू. १ । ४ । ४६) इत्यधिकरणस्य कर्मसञ्ज्ञा । 'चक्षुरधि' चक्षुषो मध्ये चक्षुषो ज्योतिरवस्थितमभवदित्यर्थः । 'तस्मात्' ज्योतिषः 'अस्य' प्रजापतेः 'अन्नं' स्रुतमभवत् । 'तर्हि' तथा सति नैवं खलु काचित् 'प्रतिष्ठा' 'आस' । तस्य प्रजापतेः शरीरस्य विस्रस्तत्वात् किंचिदपि प्रतिष्ठास्पदं न बभूवेत्यर्थः ॥ १ ॥

अनन्तरं देवैः कृतमस्य संस्कारं वक्तुमाह-ते देवा इति । 'इतः' अस्मात् प्रजापतेः 'अन्या' नैव 'प्रतिष्ठा अस्ति' आश्रयो विद्यते । 'इममेव' अस्मदीयं 'पितरं प्रजापतिं' 'संस्करवाम', यथा यथा पूर्वमवतिष्ठेत, 'सः' च संस्कृतो 'नः' अस्माकं पुनः 'प्रतिष्ठा' आश्रयो 'भविष्यतीति' ॥ २ ॥

तेऽग्निमब्रुवन् । (न्न) न वाऽइतोऽन्या प्रतिष्ठाऽस्ति त्वयीमं पितरं प्रजापतिꣳ संस्करवाम सैव नः प्रतिष्ठा भविष्यतीति किं मे ततो भविष्यतीति ॥ ३ ॥

तेऽब्रुवन् । ( न्नु ) अन्नं वाऽअयं प्रजापतिस्त्वन्मुखाऽएतदन्नमदाम त्वन्मुखानां नऽएषोऽन्नमसदिति तथेति तस्माद्देवाऽअग्निमुखाऽअन्नमदन्ति यस्यै हि कस्यै च देवतायै जुह्वत्यग्नावेव जुह्वत्यग्निमुखा हि तद्देवाऽअन्नमकुर्वत ॥ ४ ॥

स योऽस्मात्प्राणो मध्यतऽउदक्रामत् । ( द ) अयमेव स वायुर्योऽयं पवतेऽथ यदस्माद्वीर्यमुदक्रामदसौ सऽआदित्योऽथ यदस्मादन्नमस्रवद्यदेव संवत्सरेऽन्नं तत्तत् ॥ ५ ॥

---

तेऽग्निमब्रुवन्—न वाऽइतोऽन्या प्रतिष्ठाऽस्ति । त्वयीमं पितरं प्रजापतिं संस्करवाम । सैव नः प्रतिष्ठा भविष्यतीति । किं मे ततो भविष्यतीति ॥ ३ ॥

तेऽब्रुवन्—अन्नं वाऽअयं प्रजापतिः । त्वन्मुखा एतदन्नमदाम । त्वन्मुखानां न एषोऽन्नमसदिति । तथेति । तस्माद्देवा अग्निमुखा अन्नमदन्ति । यस्यै हि कस्यै च देवतायै जुह्वति—अग्नावेव जुह्वति । अग्निमुखा हि तद् देवा अन्नमकुर्वत ॥ ४ ॥

स योऽस्मात्प्राणो मध्यत उदक्रामत्—अयमेव स वायुः—योऽयं पवते । अथ यदस्माद्वीर्यमुदक्रामत् । असौ स आदित्यः । अथ यदस्मादन्नमस्रवद्—यदेव संवत्सरेऽन्नम्—तत्तत् ॥ ५ ॥

---

इत्थं सम्प्रधारितमर्थमग्निं कर्तुं प्रार्थितवन्त इत्याह—तेऽग्निमिति । 'ते' देवाः 'अग्निमब्रुवन्' 'न' खलु 'इतः' अस्मात् प्रजापतेः 'अन्या' अस्माकम् 'प्रतिष्ठा अस्ति,' 'इमं पितरं' त्वयि 'संस्करवाम' स च संस्कृतः पुनरुत्थितः सन् अस्माकं 'प्रतिष्ठा भविष्यतीति' । सोऽग्निरेतद्वाक्यं श्रुत्वा प्रत्यवोचत्,—'ततः' तस्मात् संस्कारात् 'मे' मम किं प्रयोजनं 'भविष्यतीति' ॥ ३ ॥

तस्योत्तरं दर्शयति—तेऽब्रुवन्निति । अन्नरूपो हि 'अयं प्रजापतिः' । तस्य च त्वयि संस्कारे सति वयं सर्वे 'त्वन्मुखाः' त्वत्प्रमुखाः 'एतदन्नम्' 'अदाम' भुञ्जीमहि । 'त्वन्मुखानाम्' एवास्माकम् 'एषः' संस्कृतः प्रजापतिः 'अन्नं' भवत्विति । 'तथेति' सोऽग्निरङ्गीकृतवान् ॥

इदानीन्तनप्रसिद्ध्या देवानामग्निमुखत्वं द्रढयति—यस्या इति । इन्द्रादीनां मध्ये 'यस्यै कस्यै' चिद् 'देवतायै' यत् किञ्चिद्धविः प्रयच्छन्ति, तत् सर्वम् 'अग्नावेव जुह्वति' । तत्र कारणमाह—अग्निमुखा हीति । 'हि' यस्मात् ते 'देवाः' 'तत्' तदानीं प्रजापतिरूपम् 'अन्नम्' अग्निमुखा एव 'अकुर्वत' तस्मादग्नौ हूयमानं हविर्लक्षणमन्नं सर्वे देवा अश्नन्तीत्यर्थः ॥ ४ ॥

उत्क्रान्तानां प्राणादीनां परिणामविशेषमाह—स योऽस्मादिति । प्रजापतिशरीरादुत्क्रान्तः प्राणवायुरेव

( त्तुं ) तं देवा ऽअग्नौ प्रावृञ्जन् । (ञ्स्त) तद्य ऽएनं प्रवृक्तमग्निरारोहद्य ऽएवास्मात्स प्राणो मध्यत ऽउदक्रामत्स ऽएवैनꣳ स ऽआपद्यत तमस्मिन्नदधुरथ यदस्माद्वीर्यमुदक्रामत्तदस्मिन्नदधुरथ यदस्मादन्नमस्रवत्तदस्मिन्नदधुस्तꣳ सर्वं कृत्स्नꣳ संस्कृत्योर्ध्वमुदश्रयंस्तद्यं तमुदश्रयन्निमे स लोकाः ॥ ६ ॥

( स्त ) तस्यायमेव लोकः प्रतिष्ठा । (ष्टाऽथ) अथ योऽस्मिँल्लोकेऽग्निः सोऽस्यावाङ् प्राणोऽथास्यान्तरिक्षमात्माऽथ योऽन्तरिक्षे वायुर्य ऽएवायमात्मन्प्राणः सोऽस्य स द्यौरेवास्य शिरः सूर्याचन्द्रमसौ चक्षुषी यच्चक्षुरध्यशेत स चन्द्रमास्तस्मात्स मीलिततरोऽन्नꣳ हि तस्मादस्रवत् ॥ ७ ॥

---

तं देवा अग्नौ प्रावृञ्जन् । तद् य एनं प्रवृक्तमग्निरारोहद्—य एवास्मात्स प्राणो मध्यत उदक्रामत्—स एवैनं स आपद्यत । तमस्मिन्नदधुः । अथ यदस्माद्वीर्यमुदक्रामत्–तदस्मिन्नदधुः । अथ यदस्मादन्नमस्रवत्—तदस्मिन्नदधुः । तं सर्वं कृत्स्नं संस्कृत्योर्ध्वमुदश्रयन् । तद् यं तमुदश्रयन्—इमे स लोकाः ॥६

तस्यायमेव लोकः प्रतिष्ठा । अथ योऽस्मिंल्लोकेऽग्निः—सोऽस्यावाङ्प्राणः । अथास्यान्तरिक्षमात्मा । अथ योऽन्तरिक्षे वायुः—य एवायमात्मन् प्राणः, सोऽस्य सः । द्यौरेवास्य शिरः । सूर्याचन्द्रमसौ चक्षुषी । यच्चक्षुरध्यशेत । स चन्द्रमाः । तस्मात्स मीलिततरः । अन्नं हि तस्मादस्रवत्॥७॥

---

भूतात्मकबाह्यवायुरूपेणोत्पन्नः । यदुत्क्रान्तं वीर्यं तदेवासौ द्युलोकस्थ आदित्योऽभवत् । यदेव संवत्सरेऽन्नमिति । 'यत्' खलु संवत्सरस्य मध्ये व्रीहियवादिरूपम् 'अन्नं' पच्यते, 'तत् तत्' तदात्मना प्रजापतेर्विस्रस्तमन्नं परिणतमभवदित्यर्थः ॥ ५ ॥

प्रकृतमनुसरति—तं देवा इति । 'तं' प्रजापतिदेहं 'देवाः' 'अग्नौ' 'प्रावृञ्जन्' प्रतपनेन समस्कुर्वन् । 'तत्' तत्र प्रवृञ्जने सति 'एनं' प्रवृक्तं प्रजापतिं 'यः' 'अग्निः' 'आरोहत्' सङ्क्रामति स्म, तदात्मना प्राङ् निष्क्रान्तः 'प्राणः' 'एव' 'एनं' प्रजापतिं पुनः 'आपद्यत' प्राप्नोत् । तथा च 'तं' प्राणं वीर्यादिकम् 'अस्मिन्' प्रजापतौ प्रवृञ्जनेन स्थापितवन्त इत्यर्थः । तं सर्वमित्यादि । इत्थं प्रवृञ्जनेन 'तं' प्रजापतिं 'सर्वं' निरवशेषं कृत्स्नं पूर्णावयवं 'संस्कृत्य' पुनः 'ऊर्ध्वमुदश्रयन्' गमनागमनव्यवहारसमर्थमूर्ध्वाकारमुच्छ्रितमकुर्वन् । 'तत्' तत्र च 'यम्' प्रजापतिम् 'उदश्रयन्' देवाः, 'सः' एव 'इमे' त्रयो 'लोकाः' लोकत्रयात्मकोऽभवदित्यर्थः ॥ ६ ॥

तस्य कीदृक् किमङ्गमिति ? तदाह—तस्यायमेवेत्यादिना । 'अयं' भूलोकः 'एव' 'तस्य' विराडात्मकस्य प्रजापतेः 'प्रतिष्ठा' । प्रतितिष्ठत्यस्यामिति प्रतिष्ठाशब्देन पादावुच्येते । पार्थिवोऽग्निस्तस्य

---

१—अत्र हि "तकारो ले लम्" इत्यस्मादग्रिमेण "नश्चानुनासिकम्" इत्यनेन प्रातिशाख्यसूत्रेण नकारस्यानुनासिको लकारः एवं सर्वत्र बोध्यम् ।

(त्त) तदेषा वै सा प्रतिष्ठा । यां तद्देवाः समस्कुर्वन्त्सैवेयमद्यापि प्रतिष्ठा सोऽएवाप्यतोऽधि भविता ॥ ८ ॥

स यः स प्रजापतिर्व्यस्रँसत । (ता) अयमेव स योऽयमग्निश्चीयते तद्यदेषोखा रिक्ता शेते पुरा प्रवर्जनाद्यथैव तत्प्रजापतिरुत्क्रान्ते प्राणऽउत्क्रान्ते वीर्ये स्रुतेऽन्ने रिक्तोऽशयदेतदस्य तद्रूपम् ॥ ९ ॥

तामग्नौ प्रवृणक्ति । यथैवैनमदो देवाः प्रावृञ्जँस्तद्यऽएनां प्रवृक्तामग्निरारोहति य ऽएवास्मात्स प्राणो मध्यत ऽउदक्रामत्सऽ एवैनँ स ऽआप-

---

तदेषा वै सा प्रतिष्ठा—यां तद्देवाः समस्कुर्वन् । सैवेयमद्यापि प्रतिष्ठा । सोऽएवाप्यतोऽधि भविता ॥ ८ ॥

स यः स प्रजापतिर्व्यस्रंसत—अयमेव सः—योऽयमग्निश्चीयते । तद्यदेषोखा रिक्ता शेते—पुरा प्रवर्जनाद्—यथैव तत् प्रजापतिरुत्क्रान्ते प्राणे, उत्क्रान्ते वीर्ये, स्रुतेऽन्ने रिक्तोऽशयत् । एतदस्य तद्रूपम् ॥ ९ ॥

तामग्नौ प्रवृणक्ति—यथैवैनमदो देवाः प्रावृञ्जन्—तद्य एनां प्रवृक्तामग्निरारोहति—य एवास्मात्स

---

अवाचीनः प्राणः, येन मूत्रपुरीषादिकमुत्सृज्यते । 'अन्तरिक्षं' द्युलोकोऽस्य प्रजापतेः 'आत्मा' मध्यदेहः । तत्र सञ्चरन् 'वायुः' 'आत्मन्' आत्मनि मध्यदेहेऽवस्थितः प्राणः । सोऽस्य स इति । स वायुरेवास्य प्राण इत्यर्थः । द्यौरेवास्येति । द्युलोकोऽस्य प्रजापतेर्मूर्द्धा । तत्रत्यौ 'सूर्याचन्द्रमसौ चक्षुषी' तयोर्मध्ये 'यच्चक्षुरध्यशेत' यस्मिन् चक्षुषि ज्योतिश्चक्षुरवस्थितमभवत्, तच्चक्षुः 'चन्द्रमाः' । तदुपपादयति—तस्मादिति । 'हि' यस्मात्, 'तस्मात्' चक्षुषः अन्नमस्रवत्, तस्मात् कारणात् तच्चक्षूरूपः 'चन्द्रमाः' 'मीलिततरः' अतिशयेन मीलितः; सूर्यादल्पप्रकाशो दृश्यत इत्यर्थः ॥ ७ ॥

तदेषा वा इत्यादि । 'तत्' तथा सति देवादीनां प्रजानाम् 'एषा' प्रजापत्यात्मिका 'सा प्रतिष्ठा' अभवदिति शेषः । 'तत्' तदानीं 'यां' 'समस्कुर्वन्' उदीरितरीत्या संस्कृतवन्तः । न केवलमतीतकाल एव प्रजापतेः प्रतिष्ठारूपता, वर्त्तमानभविष्यत्कालयोरपीत्याह—सैवेयमिति । 'अद्य' इदानीं वर्त्तमानकालेऽपीत्यर्थः । अतोऽधि भवितेति । 'अतः' अस्माद्वर्त्तमानादूर्ध्वकालेऽपि सैव प्रतिष्ठा 'भविता' "अनद्यतने लुट्" (पा. सू. ३।३।१५) इति भविष्यत्यनद्यतने लुट् ॥ ८ ॥

प्रतिष्ठारूपस्य प्रजापतेः संस्कारमभिधाय चित्याग्नेरपि तादृक्संस्कारं वक्तुं तयोस्तादात्म्यमाह—स य इति । 'सः' इत्येकस्तच्छब्दः प्रसिद्धौ, अपरः प्रकृतपरामर्शकः । योऽयमग्निरिति । गार्हपत्यचितिरूपो योऽग्निरित्यर्थः । तयोस्तादात्म्योपपत्तये प्रजापतेरवस्थाविशेषमत्रापि दर्शयति—तद्यदेषेति । 'तत्' तत्र आहवनीये 'प्रवर्जनात्' पूर्वं 'रिक्ता उखा शेते' इति 'यत्' अस्य उत्क्रान्तप्राणादिकस्य प्रजापतेरेतद्रूपमित्यर्थः ॥९॥

संस्कारसाम्यमाह—तामग्नाविति । 'ताम्' उखाम् 'अग्नौ' आहवनीये 'प्रवृणक्ति' प्रतपति । यथै-

द्यते तुमस्मिन्दधात्युथ युद्रुक्मं प्रतिमुच्य बिभुर्ति युदेवास्माद्वीर्यमुदुक्रामत्तदस्मिन्दधात्युथ युाः समिधऽ आदधाति युदेवास्मादन्नमुस्रवत्तदस्मिन्दधाति ॥ १० ॥

ता वै सायंप्रातरादधाति । (त्यु) अह्नश्च हि तद्रात्रेश्चान्नमुस्रवत्तान्येतानि सुर्वस्मिन्नेवु संवत्सरे स्युः संवत्सरो हि स प्रजापतिर्युस्मात्तान्युदक्रामंस्तुदस्मिन्नेतत्सुर्वस्मिन्नेव सुर्वं दधाति युस्मिन्हास्यैतद्दतौ न कुर्यान्न हास्य तुस्मिन्नेतुद्दध्यान्नासंवत्सरभृतस्येक्षकेण चनु भवितुव्यमिति ह स्माह वामकक्षायणो नेदिमं पितुरं प्रजापतिं विच्छिद्यमानं पुश्यानीति तं संवत्सरे सुर्वं कृत्स्नुं संस्कृत्योर्ध्वमुच्छ्रयति युथैवैनमदो देवाऽउदश्रयन् ॥ ११ ॥

---

प्राणो मध्यत उदक्रामत्—स एवैनं स आपद्यते । तमस्मिन्दधाति । अथ यद्रुक्मं प्रतिमुच्य बिभर्ति—यदेवास्माद्वीर्यमुदक्रामत्—तदस्मिन्दधाति । अथ याः समिध आदधाति । यदेवास्मादन्नमस्रवत्—तदस्मिन्दधाति ॥ १० ॥

ता वै सायंप्रातरादधाति । अह्नश्च हि तद् रात्रेश्चान्नमस्रवत् । तान्येतानि सर्वस्मिन्नेव संवत्सरे स्युः । संवत्सरो हि स प्रजापतिः । यस्मात्तान्युदक्रामन् । तदस्मिन्नेतत्सर्वस्मिन्नेव सर्वं दधाति । यस्मिन्हास्यैतद्दतौ न कुर्यात्—न हास्य तस्मिन्नेतद्दध्यात् । नासंवत्सरभृतस्येक्षकेण चन भवितव्यमिति ह स्माह वामकक्षायणः । नेदिमं पितरं प्रजापतिं विच्छिद्यमानं पश्यानीति । तं संवत्सरे सर्वं कृत्स्नं संस्कृत्योर्ध्वमुच्छ्रयति । यथैवैनमदो देवा उदश्रयन् ॥ ११ ॥

---

वैनमिति । प्रजापतिसाम्यवर्णनम् । 'एनं' प्रजापतिम् 'अदः' अमुष्मिन् सृष्टिकाल इत्यर्थः । तच्च एनामिति । 'एनाम्' उखां 'प्रवृक्तां' प्रतप्ताम् 'अग्निः' 'आरोहति' आक्रमते, अन्तर्जायत इति 'यः,' अनेन पुरा प्रजापतिशरीरादुत्क्रान्तः 'सः' प्राणः एव 'सः' अग्निर्भूत्वा 'एनम्' उखात्मकं प्रजापतिम् 'आपद्यते' आगच्छति । तं प्राणम् 'अस्मिन्' 'दधाति' स्थापयति । अथ यद्रुक्ममित्यादि । यजमानः सौवर्णं 'रुक्मं' 'प्रतिमुच्य' कण्ठे सूत्रेण बद्ध्वा, तस्योपरि तमुख्यं बिभर्तीति 'यत्,' तेन प्रागुत्क्रान्तवीर्यमेवास्मिन् पुनः स्थापयतीत्यर्थः । अथ याः समिध इति । उखायामग्न्यारोहणानन्तरं तस्मिन् 'याः समिध आदधाति,' ताभिस्तत्प्रागस्मात् स्रुतमप्यन्नं पुनरस्मिन् स्थापयति । यदाह कात्यायनः—"अग्नावारूढे त्रयोदशास्यां प्रादेशमात्रीः समिध आदधाति"—( का. श्रौ. सू. १६ । १३२ ) इति ॥ १० ॥

तासामहरहरभ्याधानमनूद्य तत्र कारणमाह—ता वा इति । 'तत्' तदानीम् 'अह्नो रात्रेश्च' सकाशात् प्रजापतिशरीरात् 'अन्नमस्रवत्', अतस्तस्य पुनरवाप्तये समिधामाधानम् एतस्मिन् 'संवत्सरे' प्रत्यहं कालत्रयेऽपि कर्त्तव्यमित्यर्थः । अत एवोक्तं सूत्रकृता "पालाशीः प्रत्यृचमहरहरिति"—( का. श्रौ. सू. १६।१४० ) इति । रुक्मप्रतिमोचनोख्यभरणादीनां संवत्सरकालव्याप्तिमाह—तान्येतानीति । 'तानि' रुक्मप्रतिमोचनो-

**(यस्तु) तस्य गार्हपत्य ऽएवायं लोकः । (कोऽथ) अथ यो गार्हपत्येऽग्निर्य ऽएवायमस्मिँल्लोकेऽग्निः सोऽस्य सोऽथ यदन्तराऽऽहवनीयं च गार्हपत्यं च तदन्तरिक्षमथ य ऽआग्नीध्रीयेऽग्निर्य ऽएवायमन्तरिक्षे वायुः सोऽस्य स ऽआहवनीयऽएव द्यौरथ यऽआहवनीयेऽग्निस्तौ सूर्याचन्द्रमसौ सोऽस्यैष ऽआत्मैव ॥ १२ ॥**

तस्य गार्हपत्य एवायं लोकः । अथ यो गार्हपत्येऽग्निः, य एवायमस्मिँल्लोकेऽग्निः–सोऽस्य सः । अथ यदन्तराऽऽहवनीयं च गार्हपत्यं च–तदन्तरिक्षम् । अथ य आग्नीध्रीयेऽग्निः–य एवायमन्तरिक्षे वायुः–सोऽस्य सः । आहवनीय एव द्यौः । अथ य आहवनीयेऽग्निः–तौ सूर्याचन्द्रमसौ–सोऽस्यैष आत्मैव ॥ १२ ॥

---

ख्यभरणसमिदाधानविष्णुक्रमगादीनि पूर्वोक्तान्येतानि ( श. प. ६।७।१।४।९ का. श्रौ. सू. १६।१८६ ) प्राणवीर्यान्नरूपेणानुक्रान्तानीत्यर्थः । ' सर्वस्मिन् ' कृत्स्ने ' एव ' ' संवत्सरे ' भवेयुरिति विधिवाक्यमेतत् । तेषां संवत्सरकर्तव्यत्व उपपत्तिमाह–संवत्सरो हीति । यस्मात् प्रजापतेस्तानि प्राणवीर्यान्नानि उत्क्रान्तानि, स हि संवत्सरकालात्मकः खलु ' एतत् ' एतेन रुक्मप्रतिमोचनादीनां संवत्सरमनुष्ठानेन ' अस्मिन् ' प्रकृते सर्वात्मके प्रजापतौ सर्वं निरवशेषं विश्वं ' दधाति ' स्थापयति । व्यतिरेके बाधमाह–यस्मिन् हेति । ' अस्य ' संवत्सरात्मकस्य प्रजापतेः ' यस्मिन् ' ऋतौ वसन्तादिके कालावयवे ' एतत् ' पूर्वोक्तं ' न ' स्थापयेत् । इत्थं प्रतिपादितं संवत्सरावयवे सर्वानाधानलक्षणं दोषं[1] स्पष्टयितुं संवत्सरमभृतस्याग्नेः द्रष्टृत्वमपि निषेधयति–नासंवत्सरभृतस्येति । न संवत्सरपर्यन्तं भृतः उखायां धृतः, सोऽयम् ' असंवत्सरभृतः ' तस्य ' ईक्षकेण चन ' द्रष्टानि ' न ' मांव्यमं, किमुतर्त्विजा । ' इति ' एवं ' वामकक्षायणः ' वामकक्षो नाम ऋषिः तस्य युवाऽपत्यं वामकक्षायणः ' आह ' उक्तवान् । ' चन '–शब्दोऽप्यर्थे । एवं ब्रुवतो वामकक्षायणस्याभिप्रायमाह–नेदिममिति । " नेदिति परिभये "–( निरु. १।३।९ ) ' पितरं ' पालकं ' इमम् ' अधियज्ञात्मकं ' प्रजापतिं ' ' विच्छिद्यमानं ' विशेषेण भिद्यमानं ' नेत्पश्यानि ' नैव ईक्षे ' इति ' । ' इति '–शब्दस्तदभिप्रायपरिसमाप्तिद्योतकः । उक्तमर्थं निगमयति–तं संवत्सर इति । 'संवत्सरे' अतीते ' तं ' प्रजापतिं ' सर्वं ' निरवशेषं ' कृत्स्नं ' संपूर्णावयवं ' संस्कृत्य ' ' ऊर्ध्वमुच्छ्रयति ' गमनागमनव्यवहारसमर्थमूर्ध्वाकारमुच्छ्रितं करोति । ' यथैव ' येनैव प्रकारेण ' अदः ' पूर्वं ' देवाः ' ' एनं ' प्रजापतिम् ' उदश्रयन् ' उच्छ्रितं कृतवन्तः, तथेत्यर्थः ॥ ११ ॥

प्रकृतस्य चयनात्मकस्य प्रजापतेर्लोकत्रयात्मकतां तदधिष्ठात्रग्निवाय्वादित्यात्मकतां च प्रतिपादयति–तस्य गार्हपत्य इत्यादिना । " स यः स प्रजापतिर्व्यस्रंसत अयमेव स योऽयमग्निश्चीयते "–( ९ कं ) इत्युक्तम्, 'तस्य' चित्याग्न्यात्मनः प्रजापतेः ' गार्हपत्य एव ' चितिरूपस्थलविशेष एव ' अयं लोकः ' पृथिवी । ' अथ यो गार्हपत्ये ' अधिकरणे उख्यः ' अग्निः ' स्थापितः, यश्चायमस्मिन् लोके पृथिव्यामधिष्ठातृत्वेन स्थितोऽग्निः, स उख्योऽग्निः पृथिवीस्थानोऽग्निरपि अस्य प्रजापतेः सम्बन्धी; स जाठरोऽग्निर्बोद्धव्य इति शेषः । ' अथ ' ' आह-

---

1–"संवत्सरव्याप्त्यभावे दोषमाह" इति क. पा. ।

तस्य शिरऽएवाहवनीयः । (यो॒ऽथ) अथ यऽआहवनीयेऽग्निर्यऽएवायꣳ शीर्षन्प्राणः सोऽस्य स तद्यत्स पक्षपुच्छवान्भवति पक्षपुच्छवान्ह्ययꣳ शीर्षन्प्राणश्चक्षुः शिरो दक्षिणꣳ श्रोत्रं दक्षिणः पक्ष ऽउत्तरꣳ श्रोत्रमुत्तरः पक्षः प्राणो मध्यमात्मा वाक्पुच्छं प्रतिष्ठा तद्यत्प्राणा वाचाऽन्नं जग्ध्वा प्रतितिष्ठन्ति तस्मात्प्राणानां वाक्पुच्छं प्रतिष्ठा ॥ १३ ॥

---

तस्य शिर एवाहवनीयः । अथ य आहवनीयेऽग्निः—य एवायं शीर्षन्प्राणः—सोऽस्य सः । तद्यत्स पक्षपुच्छवान्भवति—पक्षपुच्छवान्ह्ययं शीर्षन्प्राणः । चक्षुः शिरः । दक्षिणं श्रोत्रं दक्षिणः पक्षः, उत्तरं श्रोत्रमुत्तरः पक्षः । प्राणो मध्यमात्मा । वाक्पुच्छं प्रतिष्ठा । तद् यत् प्राणा वाचाऽन्नं जग्ध्वा प्रतितिष्ठन्ति—तस्मात्प्राणानां वाक् पुच्छं प्रतिष्ठा ॥ १३ ॥

---

वनीयं गार्हपत्यं च ' ' अन्तरा ' मन्ये, चित्योरन्तराल इति यावत्, यत् स्थलं ' तदन्तरिक्षं ' मध्यलोक इत्यर्थः । ' अथ ' च ' यः ' अयम् ' आग्नीध्रीये ' धिष्ण्ये ' अग्निः ' स्थापितः, य एव चायमन्तरिक्षे अधिष्ठातृत्वेन स्थितो वायुः, स आग्नीध्रीयस्थोऽन्तरिक्षस्थो वायुश्चेत्युभयविधोऽप्यस्य प्रजापतेः ' सः ' पञ्चवृत्त्यात्मकः प्राण इत्यर्थः । ' आहवनीयः ' चित्यात्मकः ' एव द्यौः ' द्युलोकः । ' अथ ' ' आहवनीये ' अधिकरणे ' यः अग्निः ' अतिप्रणीतः स्थापितः, ' तौ सूर्याचन्द्रमसौ' द्युलोकेऽधिष्ठातृत्वेन स्थितौ । ' स एषः ' आहवनीयादिः चन्द्रान्तः ' अस्य ' ' आत्मैव ' मध्यदेह एवेत्यर्थः ॥ १२ ॥

तस्य प्रजापतेराधियाज्ञिकमाध्यात्मिकं च रूपं प्रतिपिपादयिषुराह—तस्य शिर इति । ' तस्य ' प्रजापतेः ' आहवनीयः ' चित्यात्मकः ' शिरः ' मूर्द्धा । ' अथ ' ' यः ' तत्र निधीयमानः ' अग्निः, ' ' योऽयम् ' ' शीर्षन् ' शीर्ष्णि ' प्राणः ' नासिकासञ्चारी, स उभयविधोऽपि ' अस्य ' प्रजापतेः ' स एव ' शीर्षण्यः प्राण एवेत्यर्थः ॥

चित्यात्मकस्याहवनीयस्य, तत्र निधीयमानस्याग्नेश्च क्रमेण शीर्षत्वं, शीर्षण्यप्राणत्वञ्च प्रतिपाद्य, तयोरेव पक्षपुच्छवत्त्वं प्रतिपादयति—तद्यत्स इति । ' तत् ' तत्र ' यत् ' यस्मात् ' सः ' चित्यात्मक आहवनीयः ' पक्षपुच्छवान् ' पक्षाभ्यां पुच्छेन च युक्तोऽस्ति, ' अयं ' ' शीर्षन् ' शीर्ष्णि वर्तमानः ' प्राणः ' नासिक्य इति यावत् । सोऽपि ' पक्षपुच्छवान् हि ' पक्षपुच्छैरन्वितः खलु । पक्षपुच्छवत्त्वमेवोपपादयति—चक्षुः शिर इत्यादिना । ' चक्षुः ' सव्यदक्षिणात्मकं चक्षुरिन्द्रियम् नासिक्यप्राणस्य 'शिरः' मूर्द्धभूतम्; तदुपरि वर्त्तमानत्वात् । दक्षिणकर्णो दक्षिणपक्षस्थानीयः; तस्य दक्षिणपार्श्ववर्तित्वात् । उत्तरकर्णश्चोत्तरपक्षस्थानीयः; उत्तरपार्श्ववर्तित्वादेव । 'प्राणः' स एव नासिक्यः ' मध्यम् ' अन्तर्वर्त्ति ' आत्मा ' शरीरम् । वागायतनत्वाद् वाङ् मुखम्, तदायतनं रसनमपि वाक्, तत् पुच्छम् पश्चाद्भावित्वात् । सैव ' प्रतिष्ठा ' आस्पदम् । प्रतिष्ठात्वमेवोपपादयति—तद्यदिति । ' यत् ' यस्मात् ' प्राणाः ' नासिक्यादयो ' वाचा ' मुखेन ' अन्नम् ' ' जग्ध्वा ' भक्षयित्वा शरीरे ' प्रतितिष्ठन्ति ' नोत्क्रामन्ति, ' तस्मात् ' हेतोः ' प्राणानां ' ' वाक् पुच्छं ' प्रतिष्ठेत्युपपन्नम् ॥ १३ ॥

( छ्ऽथ ) अथ युदन्तुराऽऽहवनीयं च गार्हपत्यं च । स ऽआत्मा॒ऽथ य ऽआग्नीध्रीयेऽग्निर्य ऽएवायमन्तुरात्मन्प्राणः सोऽस्य स प्रतिष्ठैवास्य गार्हपत्योऽथ यो गार्हपत्येऽग्निः सोऽस्यावाङ् प्राणः ॥ १४ ॥

( स्त ) तथ्ँ हैके त्रिचितं चिन्वन्ति । त्रयो वाऽइमेऽवाञ्चः प्राणा ऽइति न तथा कुर्यादति ते रेचयन्त्येकविꣳशसम्पदमथोऽ अनुष्टुप्संपदमथो बृहतीसम्पदं ये तथा कुर्वन्त्येकꣳ ह्येवैतद्रूपं योनिरेव प्रजातिरेव यदेतेऽवाञ्चः प्राणा यद्धि मूत्रं करोति यत्पुरीषं प्रैव तज्जायते ॥ १५ ॥

---

अथ यदन्तराऽऽहवनीयं च गार्हपत्यं च-स आत्मा । अथ य आग्नीध्रीयेऽग्निः-य एवायमन्तरात्मन् प्राणः-सोऽस्य सः । प्रतिष्ठैवास्य गार्हपत्यः । अथ यो गार्हपत्येऽग्निः-सोऽस्यावाङ् प्राणः ॥ १४ ॥

तं हैके त्रिचितं चिन्वन्ति । त्रयो वाऽइमेऽवाञ्चः प्राणा इति । न तथा कुर्यात् । अति ते रेचयन्ति-एकविंशसम्पदम्, अथोऽनुष्टुप्सम्पदम्, अथो बृहतीसम्पदम्-ये तथा कुर्वन्ति । एकं ह्येवैतद्रूपम्-योनिरेव, प्रजातिरेव । यदेतेऽवाञ्चः प्राणाः । यद्धि मूत्रं करोति, यत्पुरीषम्-प्रैव तज्जायते ॥ १५ ॥

---

प्रकारान्तरेणापि तस्याधियाज्ञिकाध्यात्मिकरूपतामेव प्रतिपादयति-अथ यदन्तरेति । आहवनीयगार्हपत्ययोः अन्तरालदेश इति 'यत्', 'स आत्मा' शरीरम् । 'आग्नीध्रीये' तदादौ धिष्ण्ये 'योऽग्निः' निहितः । प्रदर्शनार्थमाग्नीध्रीयग्रहणम; उत्तरत्र "अन्तरिक्षं धिष्ण्याः" (श. प. ७ । १ । २ । २३)-इति बहुवचनोपदेशात् । योऽयम् अन्तरात्मनि 'प्राणः' पञ्चवृत्त्यात्मकः, 'सः' सर्वधिष्ण्यस्थ एव 'अस्य' पञ्चवृत्तिकः प्राण इत्यर्थः । गार्हपत्योऽस्य 'प्रतिष्ठा' पादौ । यश्च तत्रत्यः 'अग्निः' 'सोऽस्य' अवाचीनः 'प्राणः'; पश्चाद्वर्तित्वात् ॥ १४ ॥

त्रिचितिको गार्हपत्यश्चेतव्य इत्येकीयमतमुपन्यस्यति-तꣳ हैक इति । 'एके' शाखिनः तं प्रकृतं गार्हपत्यं 'त्रिचितम्,' उपर्युपरि चितित्रयात्मकं 'चिन्वन्ति' । तिसृभिश्चितिभिश्चितस्त्रिचितस्तं तथाविधम् । एवं चिन्वतामभिप्रायमाह-त्रयो वा इम इति । प्रजननमूत्रपुरीषसर्गवृत्तिभेदेन त्रित्वम्, ततश्च तिसृभिश्चितिभिस्त्रीण्येव प्राणायतनानि कल्पितानि भविष्यन्तीत्याशयः । वक्ष्यमाणसम्पच्चित्रयातिरेकात्मकदोषाधानेन तमेतं पक्षं निराचष्टे-न तथेति । ये शाखिनः तथा त्रिचितचयनं कुर्वन्ति, 'ते' 'एकविंशसम्पदं' "ता उभय्य एकविंशतिः सम्पद्यन्ते"-(श. प. ६ । १ । १ । ३४) इत्यादिनोक्ताम् एकविंशतेरिष्टकानां सम्पदम् 'अतिरेचयन्ति' अतिरिक्तां कुर्वन्ति । त्रिचितिके हि बहुतरा इष्टकाः स्युः; तथा, आनुष्टुभेषु "अथातः सम्पदेवैकविंशतिरिष्टकाः"-(१६ कं०) इत्यादिना वक्ष्यमाणायास्त्रिविधाया अपि सम्पदम्, तथा "सैषा बृहत्येव"-( २२ कं० ) इत्यादिना वक्ष्यमाणाया बृहत्याः सम्पदमपि अतिरेचयन्तीत्यनुषङ्गः ॥

( ते॒ऽथा॒ )अथा॒तः स॒म्पदे॑व । ( वै ) एक॑विꣳ॒शति॒रिष्ट॑का॒ नव॒ यजूꣳ॑षि॒ तत्त्रिꣳ॒शत्सा॒दनं॒ च सू॒द॒दोहा॑श्च॒ तद्द्वा॒त्रिꣳ॒श॒द्द्वा॒त्रिꣳ॒श॒दक्ष॒रा॒ऽनु॒ष्टुप्सै॒षा॒ऽनु॒ष्टुप् ॥ १६ ॥

( बु ) एक॑विꣳ॒शति॒र्वे॒व परि॑श्रितः । ( तो ) य॒जु॒र्द्वा॒विꣳ॒शं व्यु॒दूह॑नस्य य॒जु॒रू॒षाश्च॒ य॒जु॒श्च॒ सि॒क॒ताश्च॒ य॒जु॒श्च॒ पुरी॑षं च य॒जु॒श्च॒ च॒तु॒र्भिः सं॒नि॒वप॑ति वि॒मु॒ञ्च॒ति॒ प॒ञ्च॒मेन॒ त॒त॒स्त्रि॒भि॒रि॒यं॒ द्वा॒त्रिꣳ॒श॒दक्ष॒रा॒ऽनु॒ष्टु॒प्सै॒षा॒ऽनु॒ष्टुप् ॥१७॥

---

अथातः सम्पदेव । एकविंशतिरिष्टकाः, नव यजूंषि–तत् त्रिंशत् । सादनं च, सूददोहाश्च–तद् द्वात्रिंशद् । द्वात्रिंशदक्षराऽनुष्टुप् । सैषाऽनुष्टुप् ॥ १६ ॥

एकविंशतिर्वेव परिश्रितः । यजुर्द्वाविंशम् । व्युदूहनस्य यजुः । ऊषाश्च, यजुश्च । सिकताश्च, यजुश्च । पुरीषं च, यजुश्च,–चतुर्भिः संनिवपति, विमुञ्चति पञ्चमेन । ततस्त्रिभिरियं द्वात्रिंशदक्षराऽनुष्टुप् । सैषाऽनुष्टुप् ॥ १७ ॥

---

" त्रयो वा इमेऽवाञ्चः प्राणाः "–इति यदुक्तम्, तदप्यङ्गीकृत्य निराकरोति–एकं ह्येवेत्यादिना । एतस्य प्राणस्य रूपम् ' एतद्रूपम् ' ' एकम् ' एव खलु, ' यदेतेऽवाञ्चः प्राणाः ' प्रजननमूत्रपुरीषसर्गवृत्तिभेदेन त्रयोऽपि । किं पुनस्तदित्याह–योनिरेवेति । ' योनिः ' स्थानं कारणम् । मूत्रपुरीषरेतसामेकमेवैतद्रूपं कारणमनादृत्यापि कर्मविवक्षया आह–प्रजातिरेवेति । मूत्रपुरीषसर्गात्मना प्रजातेरेकत्वमित्यर्थः । तदेवोपपादयति–यद्धीति । ' यन्मूत्रं करोति; ' यत् ' च ' पुरीषं ' करोति; ' तत् जायत एव ' इति प्रजातिरूपेण त्रयाणामप्येकत्वं सिद्धमेवेत्यर्थः ॥ १५ ॥

पूर्वमुपक्षिप्तामनुष्टुब्बृहत्योः सम्पदमाह–अथातः सम्पदेवेत्यादिना । ' वक्ष्यते '–इति शेषः । " अयꣳ सो अग्निः "–इत्यादिभिर्मन्त्रैरुपहिता अष्टौ यजुष्मत्यः, लोकम्पृणाश्चयोदशेति ' एकविंशतिरिष्टकाः ' । नव यजूꣳषीति । अष्टानामर्द्धबृहतीप्रभृतीनां यजुष्मतीनामष्टौ " अयं सोऽअग्निः " इत्यादीनि ( वा० सं० १२ । ४७–५३), लोकम्पृणानामेकं "लोकं पृण" इति (वा० सं० १२ । ५४), एवं नव । ' तत् ' तत्र ' त्रिंशत् ' संख्या संपद्यते । ' सादनञ्च ' यजुः " तया देवतया " इति ( वा० सं० १२ । ५३ ), सूददोहाश्च " ता अस्य " इति ( वा० सं० १२ । ५५ ) । ' तत् ' तेन ' द्वात्रिंशत् , ' ' अनुष्टुप् द्वात्रिंशदक्षरा ' ' सैषा ' प्रसिद्धा ' अनुष्टुप् ' गार्हपत्यचितौ सम्पन्ना द्रष्टव्या ॥ १६ ॥

एवमेकामनुष्टुभं सम्पाद्य अपरे द्वे अनुष्टुभावेव सम्पादयितुमाह–एकविंशतिर्वेवेति । ' उ,–एव '–इति पदच्छेदः । ' परिश्रितः ' एकविंशतिसङ्ख्या एव । यदुक्तं सूत्रकृता–" परिश्रिद्भिः परिश्रयति पूर्ववदेकविंशत्या चितः स्थेति "–( का. श्रौ. सू. १७ । ७ ) इति । यजुर्द्वाविंशमिति । परिश्रितामेवोपधाने विहितम् "चितः स्थ" इति ' व्युदूहनस्य यजुः ' । "अपेत वीत" इति (वा. सं. १२ । ४५) त्रयोविंशम् । ' ऊषाः ' तन्निवापे विहितं यजुः "संज्ञानम्" इति (वा. सं. १२ । ४६) च द्वे चतुर्विंशपञ्चविंशे । ' सिकताश्च ' तन्निवापयजुः " अग्नेर्भस्म " इति ( वा. सं. १२ । ४६ ) च द्वे षड्विंशसप्तविंशे । ' पुरीषञ्च ' तन्निवापयजुश्च



१३७

( बु ) अथैते द्वे यजुषी । सोऽअनुष्टुबेव व्वाग्वाऽअनुष्टुप्तद्यदिदं द्वयं व्वाचो रूपं दैवं च मानुषं चोच्चैश्च शनैश्च तदेते द्वे ॥ १८ ॥

ता वाऽएतास्तिस्रोऽनुष्टुभः । ( श्चि ) चित ऽ एष गार्हपत्यस्तद्यदेताऽअत्र तिस्रोऽनुष्टुभः सम्पादयन्त्यत्र ह्येवेमे तदा सर्वे लोका भवन्ति ततोऽन्यतरां द्वात्रिँ॒शदक्षरामनुष्टुभमाहवनीयँ॒ हरन्ति स ऽ आहवनीयः सा द्यौस्तच्छिरोऽथेहान्यतरा परिशिष्यते स गार्हपत्यः सा प्रतिष्ठा स ऽउऽअयं लोकः ॥ १९ ॥

---

अथैते द्वे यजुषी—सोऽअनुष्टुबेव । वाग्वाऽअनुष्टुप् । तद्यदिदं द्वयं वाचो रूपम्—दैवं च, मानुषं च, उच्चैश्च शनैश्च—तदेते द्वे ॥ १८ ॥

ता वाऽएतास्तिस्रोऽनुष्टुभः । चित एष गार्हपत्यः । तद्यदेता अत्र तिस्रोऽनुष्टुभः सम्पादयन्ति—अत्र ह्येवेमे तदा सर्वे लोका भवन्ति । ततोऽन्यतरां द्वात्रिंशदक्षरामनुष्टुभमाहवनीयं हरन्ति । स आहवनीयः । सा द्यौः । तच्छिरः । अथेहान्यतरा परिशिष्यते—स गार्हपत्यः । सा प्रतिष्ठा । स उऽअयं लोकः ॥ १९ ॥

---

"इन्द्रं विश्वाः"—( वा. सं. १२।५६ ) इति द्वे अष्टाविंशैकोनत्रिंशे । 'चतुर्भिः' यजुर्भिः "समितम्" इत्यादिभिः ( वा. सं. १२ । ५७–६० ) उख्यमग्निं 'सन्निवपति', तत्सन्निवापस्त्रिंशः । विमुञ्चति पञ्चमेनेति । "मातेव पुत्रम्"—इति ( वा. सं. १२।६१ ) यजुषा विहितः शिक्यादुखाविमोक एकत्रिंशः । अग्निसन्निवापोखाविमोकयोरुपयुक्तसङ्ख्यान्तःपातात् तत्सम्बद्धानि पञ्च यजूंष्यवशिष्टानीत्यभिप्रेत्य तेषां पञ्चानामुपयोगमाह—ततस्त्रिभिरिति । 'ततः' तेभ्यः पञ्चभ्यो यजुर्भ्यः 'त्रिभिः' यजुर्भिः एकदेशभूतैरेका द्वात्रिंशत्तमी सङ्ख्या । एवं 'इयम्' इदानीं प्रतिपादिता 'द्वात्रिंशदक्षराऽनुष्टुप्,' संपद्यत इति शेषः । 'सैषा' प्रसिद्धा द्वितीया 'अनुष्टुप्' ॥ १७ ॥

अथ वाग्रूपां तृतीयामनुष्टुभमाह—अथैते द्वे इति । पञ्चसु मध्यमानुष्टुभि त्रीण्युपयुक्तानि, 'अथैते' ये अन्तिमे 'द्वे' 'यजुषी' अवशिष्येते, 'सा' 'तु' पुनर्यजुर्द्वयात्मिका 'अनुष्टुबेव' । ननु यजुर्द्वयात्मिकाया अस्याः कथमनुष्टुप्त्वमित्यत आह—वाग्वा इति । 'वाक्' खलु 'अनुष्टुप्'; "वागनुष्टुब्" इत्यग्निरहस्ये श्रुतत्वात् ( श. प. १० । १ । ३ । १० ) । यजुर्द्वयात्मिकानुष्टुबैकात्म्यप्रतिपादनाय वाचो द्विरूपतामाह—तद्यदिदं द्वयमिति । द्वयमेव द्वयात्मकमित्यर्थः । तदेव द्वेधा विवृणोति—दैवं चेत्यादिना । 'दैवं' देवसम्बन्धि वाक्यम् संस्कृतम् । 'मानुषं' मनुष्यसम्बन्धि वाक्यञ्च;—'उच्चैः' तारस्वरं वाक्यम्, 'शनैः' मन्द्रस्वरं चेति । 'तदेते द्वे' इत्युपक्षिप्तनिगमनम् । एवं तृतीयाऽनुष्टुप् सम्पन्ना ॥ १८ ॥

प्रतिपादितानां तिसृणामनुष्टुभामुपयोगं विधत्ते—ता वा एता इति । 'एषः' 'चितः' चित्या सम्पादितः 'गार्हपत्यः,' 'ताः' प्रसिद्धाः 'एतास्तिस्रोऽनुष्टुभः' खलु, सम्पादितानुष्टुप्त्रयात्मक इत्यर्थः ।

(का०ऽथ) अथ येऽएते द्वे यजुषी । एतत्तद्यदन्तराऽऽहवनीयं च गार्हपत्यं च तदन्तरिक्षꣳ स ऽआत्मा तद्यत्ते द्वे भवतस्तस्मादेतत्तनीयो यदन्तराऽऽहवनीयं च गार्हपत्यं च तस्मादेषां लोकानामन्तरिक्षलोकस्तनिष्ठः ॥२०॥

सैषा त्रेधा विहिता वागनुष्टुप् । (प्रा) तामेषोऽग्निः प्राणो भूत्वाऽनुसंचरति यऽआहवनीयेऽग्निः स प्राणः सोऽसावादित्योऽथ यऽआग्नीध्रीयेऽग्निः स व्यानः स उऽअयं वायुर्योऽयं पवतेऽथ यो गार्हपत्येऽग्निः स ऽउदानः

---

अथ येऽएते द्वे यजुषी—एतत्तत् । यदन्तराऽऽहवनीयं च गार्हपत्यं च । तदन्तरिक्षम् । स आत्मा । तद्यत्ते द्वे भवतः—तस्मादेतत्तनीयो—यदन्तराऽऽहवनीयं च गार्हपत्यं च । तस्मादेषां लोकानामन्तरिक्षलोकस्तनिष्ठः ॥ २० ॥

सैषा त्रेधा विहिता वागनुष्टुप् । तामेषोऽग्निः प्राणो भूत्वाऽनुसञ्चरति । य आहवनीयेऽग्निः—स प्राणः, सोऽसावादित्यः । अथ य आग्नीध्रीयेऽग्निः—स व्यानः; स उऽअयं वायुः—योऽयं पवते । अथ

---

अनुष्टुप्त्रयसम्पादनस्य गार्हपत्यचितौ लोकत्रयसम्पादनहेतुतामाह—तद्यदेता इति । 'अत्र' गार्हपत्यचितौ 'यत्' 'एतास्तिस्रः अनुष्टुभः' 'सम्पादयन्ति,' वेदवादिन इति शेषः । 'तदा' आहवनीयचयनात् प्रागेवात्रैव गार्हपत्ये 'इमे सर्वे लोकाः' त्रयोऽपि 'भवन्ति' । कारणे कार्यस्यान्तर्गतत्वादुत्तरेऽग्नयोऽपि गार्हपत्ये एवान्तर्गताः, पृथिवीलोके चेतरौ लोकावन्तर्गतौ । "सोऽग्निना पृथिवीं मिथुनꣳ समभवत् तत आण्डꣳ समवर्त्तत"—इति तत एवोत्पत्तिश्रुतेः ( श. प. ६ । १ । २ । १ ) । तासामेव अनुष्टुभामुपयोगान्तरमपि विधत्ते—ततोऽन्यतरामिति । तयोर्द्वात्रिंशदक्षरयोः अनुष्टुभोर्मध्ये 'अन्यतराम्' एकाम् 'द्वात्रिंशदक्षरामनुष्टुभं' बुद्ध्या विविच्य आहवनीयस्थानं 'हरन्ति' अनुसन्धाय हरेयुरित्यर्थः । 'सा' चाहृता अनुष्टुप् आहवनीयचितिः, सैव द्युलोकः, तदेव चित्याग्निरूपस्य प्रजापतेः 'शिरः' भवति । 'इह' अस्मिन् गार्हपत्यस्थाने 'अन्यतरा' एका द्वात्रिंशदक्षरा अनुष्टुप् 'परिशिष्यते,' 'सः' एव 'गार्हपत्यः' अग्निरिति चित्याग्निरूपस्य प्रजापतेः 'सा' एव 'प्रतिष्ठा' पादौ । 'सः' एव 'अयं लोकः' भूलोकोऽपीत्यर्थः ॥१९॥

द्विसंख्यायोगाद् गौणी या तृतीया अनुष्टुप्, तस्या अन्तरिक्षादिरूपतामाह—अथ ये एते इति । आहवनीयगार्हपत्यचित्योर्मध्ये यदस्ति स्थानमाग्नीध्रीयाख्यम्, एतदेव सा यजुर्द्वयात्मिका अनुष्टुप्, 'तदेवान्तरिक्षम्' तृतीयानुष्टुबात्मकोऽयमन्तरिक्षलोक इत्यर्थः । सैव आनुष्टुभस्य चित्याग्निरूपस्य प्रजापतेः 'आत्मा' मध्यदेहः । द्वात्रिंशदक्षराभ्यां पूर्वाभ्यामनुष्टुब्भ्यां द्विसंख्यायोगिन्यास्तृतीयस्या अनुष्टुभोऽल्पीयस्त्वात् तदात्मकतयोक्तानामल्पपरिमाणत्वमाह—तद्यत् ते द्वे भवत इत्यादिना । यस्मात् तृतीया अनुष्टुप् द्विसंख्यायोगिनी, तस्मात् तदात्मकं गार्हपत्याहवनीययोरन्तरालं 'तनीयः' तनुतरम्, अल्पपरिमाणमेव भवति । 'तस्मात्' एव कारणात् 'एषां लोकानाम्' मध्ये 'अन्तरिक्षलोकः' 'तनिष्ठः' सूक्ष्मतमो भवति ॥ २० ॥

सैषा त्रेधा विहितेत्यादि । त्रिप्रकारेण विहिता 'सैषा अनुष्टुप्' 'वाक्' एव । 'ताम्' 'एषः' उख्यः 'अग्निः' 'प्राणो भूत्वा अनुसञ्चरति' आहवनीयगार्हपत्याग्नीध्रीयाख्येषु स्थानेषु क्रमेण व्याप्नोति । तत्तत्स्थान-

स ऽउऽअयं योऽयमस्मिँल्लोकेऽग्निरेवंविद्ध वाव सर्व्वां वाचꣳ सर्वं प्राणꣳ सर्वमात्मानꣳ संस्कुरुते ॥ २१ ॥

सैषा बृहत्येव । ये वै द्वे द्वात्रिꣳशतौ द्वात्रिꣳशदेव तदथैते द्वे यजुषी तच्चतुस्त्रिꣳशदग्निरेव पञ्चत्रिꣳशो नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्याꣳ स ऽउ द्व्यक्षरस्तत्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा बृहती बृहतीं वाऽएष संचितोऽभिसम्पद्यते यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतामत्र बृहतीं करोति तस्मादेष संचितो बृहतीमभिसम्पद्यते ॥ २२ ॥

---

यो गार्हपत्येऽग्निः—स उदानः । स उऽअयं—योऽयमस्मिंल्लोकेऽग्निः । एवंविद्ध वाव सर्वां वाचं, सर्वं प्राणं, सर्वमात्मानं संस्कुरुते ॥ २१ ॥

सैषा बृहत्येव । ये वै द्वे द्वात्रिंशतौ—द्वात्रिंशदेव तत् । अथैते द्वे यजुषी—तच्चतुस्त्रिंशत् । अग्निरेव पञ्चत्रिंशः । नाक्षराच्छन्दो व्येति—एकस्मात्, न द्वाभ्याम् । स उ द्व्यक्षरः । तत् षट्त्रिंशत् । षट्त्रिंशदक्षरा बृहती । बृहतीं वाऽएष संचितोऽभिसम्पद्यते । यादृग्वै योनौ रेतः सिच्यते—तादृग्जायते । तद्यदेतामत्र बृहतीं करोति—तस्मादेष सञ्चितो बृहतीमभिसम्पद्यते ॥ २२ ॥

---

गतेऽग्नौ प्राणोदानव्यानवृत्त्यात्मना सूर्यादिभेदेन तस्य व्याप्तिमाचष्टे—य आहवनीयेऽग्निरिति । 'आहवनीये' आहवनीयस्थाने निहितो 'यः अग्निः,' 'सः' 'प्राणः' प्राणात्मकः, 'सोऽसावादित्यः' आदित्यात्मकश्च । 'आग्नीध्रीये' निहितस्तु व्यानात्मकः, वाय्वात्मकश्च । 'गार्हपत्ये' निहितस्तु उदानात्मकः, पार्थिवाग्निरूपश्च । आहवनीयादीनां द्युलोकादिरूपत्वस्य प्रतिपादितत्वात् ऊर्ध्वमध्याधोदेशसम्बन्धेन प्राणादीनां तत्तदग्न्यात्मकता अवगन्तव्या ॥

प्रतिपादितमर्थं विदुषः फलमाह—एवंविदिति । अग्न्याद्यधिष्ठितलोकत्रयाणां प्रजापत्यात्मकत्वम्, गार्हपत्यचितौ सम्पादितास्वनुष्टुप्सु उदीरितरीत्या जानन् कृत्स्नां 'वाचम्' कृत्स्नं 'प्राणम्' एतैरेव सर्वैः सम्पूर्णम् 'आत्मानम्' अग्निशरीरम् 'संस्कुरुते' उत्पादयति ॥ २१ ॥

"अथो बृहतीसम्पदम्" इति ( श. प. ७।१।२।१९ ) प्राक् सूचितां सम्पत्तिमाह—सैषेति । 'सैषा' गार्हपत्यचितिः 'बृहत्येव,' सम्पद्यत इति शेषः । तामेव सम्पत्तिं दर्शयति—ये वा इति । 'ये' खलु पूर्वमुक्ते द्वात्रिंशदक्षरे अनुष्टुभौ, तदुभयं मिलित्वा द्वात्रिंशदेवात्र सम्पद्यते । अवशिष्टे 'द्वे यजुषी,' 'अग्निरेव' 'पञ्चत्रिंशः' पञ्चत्रिंशत्सङ्ख्यापूरकः ॥

ननु "षट्त्रिंशदक्षरा बृहती" इति श्रुतेः इतः परमप्येकेन भवितव्यमित्यत आह—नाक्षरादिति । न चैकस्मादक्षरादविद्यमानात् 'छन्दः' 'व्येति' विगच्छति, अन्यथा भवति । 'न' च 'द्वाभ्याम्' अक्षराभ्याम् । एकेन द्वाभ्यां वा न्यूनं छन्दो न वैकल्यं प्राप्नोतीत्यर्थः । तथा चैषा पञ्चत्रिंशत्सङ्ख्याऽपि बृहत्येवेति तत्सम्पत्तिरविरुद्धा । सङ्ख्यापूर्त्तिमपि दर्शयति—स उ द्व्यक्षर इति । यः पञ्चत्रिंशोऽग्निः स खल्वक्षरद्वयवाच्यः । ततस्ताभ्यामग्निरित्यक्षराभ्यां सह षट्त्रिंशत् सङ्ख्या सम्पद्यते; तथा च षट्त्रिंशदक्षरा बृहती सम्पन्ना । अपि च 'एषः' आहवनीयस्थाने 'सञ्चितः' अग्निरपि 'बृहतीमभिसम्पद्यते' । तत्र गार्हपत्यचितेर्बृहती-

तदाहुः । ( र्षु ) यदयं लोको गार्हपत्योऽन्तरिक्षं धिष्ण्या द्यौराहवनीयोऽन्तरिक्षलोक उ ऽअस्माल्लोकादनन्तर्हितोऽथ कस्माद्गार्हपत्यं चित्वाऽऽहवनीयं चिनोत्यथ धिष्ण्यानिति सह हैवेमावग्रे लोकावासतुस्तयोर्वियतोर्योऽन्तरेणाकाशऽआसीत्तदन्तरिक्षमभवदीक्षᳯं हैतन्नाम ततः पुराऽन्तरा वाऽइदमीक्षमभूदिति तस्मादन्तरिक्षं तद्यद्गार्हपत्यं चित्वाऽऽहवनीयं चिनोत्येतौ ह्यग्रे लोकावसृज्येतामथ प्रत्येत्य धिष्ण्यान्निवपति कर्मण ऽएवानन्तरायायाथोऽअन्तयोर्वाव संस्क्रियमाणयोर्मध्यᳯं संस्क्रियते ॥ २३ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ७।१।२ ॥

इति प्रथमोऽध्यायः समाप्तः ॥ ७–१ ॥

---

तदाहुः–यदयं लोको गार्हपत्यः, अन्तरिक्षं धिष्ण्याः, द्यौराहवनीयः । अन्तरिक्षलोक उ अस्माल्लोकादनन्तर्हितः । अथ कस्माद्गार्हपत्यं चित्वाऽऽहवनीयं चिनोति, अथ धिष्ण्यानिति । सह हैवेमावग्रे लोकावासतुः । तयोर्वियतोर्योऽन्तरेणाकाश आसीत्–तदन्तरिक्षमभवत् । ईक्षं हैतन्नाम ततः पुरा । अन्तरा वाऽइदमीक्षमभूदिति–तस्मादन्तरिक्षम् । तद् यद्गार्हपत्यं चित्वाऽऽहवनीयं चिनोति । एतौ ह्यग्रे लोकावसृज्येताम् । अथ प्रत्येत्य धिष्ण्यान्निवपति–कर्मण एवानन्तरायाय । अथोऽअन्तयोर्वाव संस्क्रियमाणयोर्मध्यं संस्क्रियते ॥ २३ ॥

---

सम्पत्तिरेव कारणमित्याह–यादृग्वा इति । 'योनौ' गर्भाशये यादृगाकारविशिष्टं 'रेतः' 'सिच्यते' तादृग्रूप एवोत्पत्तिसमये 'जायते' यथैव लोके, 'तत्' तथैवात्रापि योनिरूपायां गार्हपत्यचितौ 'यद्' यस्मात् 'एतां बृहतीं करोति;' 'तस्मात्' इत उत्पद्यमानः 'एषः सञ्चितः' अयमाहवनीयोऽग्निरपि 'बृहतीमभिसम्पद्यते' । तां सम्पत्तिं यजुष्मतीनां षष्ट्युत्तरत्रिशतसंख्यया दश बृहत्यः सम्पद्यन्त इति दशमकाण्डे दर्शयिष्यामः ॥ २२ ॥

गार्हपत्याग्नीध्रीयाहवनीयानां क्रमेण पृथिव्यन्तरिक्षद्युलोकात्मकत्वात् क्रमेणैव तेषां संस्कारो युक्त इत्याशंक्य व्युत्क्रमानुष्ठानमुपपादयति–तदाहुरित्यादिना । अन्तरिक्षं धिष्ण्या इति । गार्हपत्याहवनीययोरन्तरालवर्तिन आग्नीध्रीयादयो धिष्ण्याः, ते अन्तरिक्षलोकात्मका इत्यर्थः । तत्र गार्हपत्यचयनानन्तर्यम् आहवनीयचितेराक्षिपति–अन्तरिक्षलोक इति । 'अस्माद् लोकात्' भूलोकात् । 'अन्तरिक्षलोकः' 'अनन्तर्हितः' प्रत्यासन्नः । तथा च गार्हपत्यचयनानन्तरं धिष्ण्यनिवपनमकृत्वा 'अथ' कस्मात्, हेतोराहवनीयचयनमेव क्रियते । 'अथ' अनन्तरमेव 'धिष्ण्यान्' चिनोतीत्यनुषज्यते । इत्थमनुष्ठाने कारणं वक्तुमाह–सह हैवेमाविति । 'अग्रे' पुरा इमौ भूस्वर्गाख्यौ 'लोकौ' 'सहासतुः' । 'तयोः' 'वियतोः' विविधं गच्छतोः वियुज्यमानयोः 'यः' मध्ये 'आकाशः' अवकाशः 'आसीत्' 'तदन्तरिक्षमभवत्' । 'ततः पुरा' द्यावापृथिव्योर्विगमनात् पूर्वम् 'ईक्षम्' इति आकाशस्य 'नाम' द्यावापृथिव्योर्विश्लेषे सति 'अन्तरा' तयोर्मध्ये खलु 'इदमीक्षमभूत्' 'इति' हेतौ; यस्मादेवं तस्मादिदमाकाशमन्तरिक्षनामकं संपन्नमित्यर्थः ॥

तद् यद्गार्हपत्यमित्यादि । एवमन्तरिक्षनिष्पत्तेर्लोकद्वयानन्तरभावित्वाद् गार्हपत्यचयनानन्तरमन्तरिक्षसंस्तुतान् धिष्ण्यानतिक्रम्य 'आहवनीयं' 'चिनोति' चयनेन संस्करोति । 'यत्' यस्मात् तौ भूस्वर्लोकौ 'अग्रे' खलु सह 'असृज्येतां' सृष्टावभवताम्, 'अथ' आहवनीयचयनानन्तरं 'प्रत्येत्य' प्रतिनिवृत्य सदसि 'धिष्ण्यान्' 'निवपति' निर्मिमीते । अत्र प्रयोजनमाह—कर्मण एवेति । तत्र धिष्ण्यानां निवपनं कर्मणः क्रियाकलापस्य 'अनन्तरायाय' अविच्छेदायैव भवति । न त्वनेन किञ्चित् संस्कर्त्तव्यमस्तीत्याह—अथो इति । अपि च उभयोः 'अन्तयोः' आहवनीयगार्हपत्ययोश्चयनेन 'संस्क्रियमाणयोः' 'मध्यम्' अपि स्थलं 'संस्क्रियते' तेनैव संस्कारेण संस्कृतमेव भवति; तस्माद् गार्हपत्यचयनानन्तरमाहवनीयस्यैव चयनम्, पश्चाद्धिष्ण्यानां निवपनमिति क्रमः सिद्ध इति भावः ॥ २३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
सप्तमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ७–१–२ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये सप्तमकाण्डे प्रथमोऽध्यायः समाप्तः ॥ ७–१ ॥

# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।
# प्रथमप्रपाठके च तृतीयं ब्राह्मणम् ।

अथा॒तो नैर्ऋ॑ती॒र्ह॑रन्ति । (न्त्ये) ए॒तद्वै॒ दे॒वा गार्ह॑पत्यं चि॒त्वा स॒मारो॑ह-न्न॒यं वै॒ लो॒को गार्ह॑पत्य ऽइ॒मम॒व त॒ल्लो॒कँ सँस्कृ॒त्य स॒मारो॑हँ॒स्ते त॒म ऽए॒वाना॑ति॒दृश्य॑मपश्यन् ॥ १ ॥

(इयुंस्ते) तेऽब्रुवन् । (ब्रु) उप त॒ज्जा॒नी॒त य॒थेदं तमः॑ पा॒प्मा॒नम॑पह॒नामहा॒ऽइति॒ तेऽब्रुवँश्चे॑तयध्व॒मिति॒ चिति॑मिच्छ॒तेति॒ वाव त॒द॒ब्रु॒वँ॒स्तदि॒च्छत य॒थेदं त॒मः पा॒प्मा॒नम॒प॒ह॒नाम॒हा॒ऽइति ॥ २ ॥

---

## अथ नैर्ऋतीष्टकाचयनम् ।

अथातो नैर्ऋतीर्हरन्ति । एतद्वै देवा गार्हपत्यं चित्वा समारोहन् । अयं वै लोको गार्हपत्यः । इममेव तल्लोकं संस्कृत्य समारोहन् । ते तम एवानतिदृश्यमपश्यन् ॥ १ ॥

तेऽब्रुवन्—उप तज्जानीत—यथेदं तमः पाप्मानमपहनामहाऽइति । तेऽब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । तदिच्छत—यथेदं तमः पाप्मानमपहनामहाऽइति ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथाख्यायिकया प्रयोजनप्रतिपादनपुरस्सरं नैर्ऋतीनामिष्टकानामुपधानं विधित्सुस्तासां हरणं संग्रहेण प्रतिजानीते—अथात इति । 'अथ,' गार्हपत्यचयनानन्तरम् 'अतः' अस्मात् स्थानात् निर्ऋतिदेवताकाः इष्टकाः 'हरन्ति,' नैर्ऋत्यां दिशि निरस्येयुरित्यर्थः । तासामुपधानस्य प्रयोजनमाख्यायिकयाऽऽचष्टे—एतद्वा इति । 'एतद्' एतस्मिन् खलु गार्हपत्यचयनानन्तरकाले 'देवाः' 'समारोहन्' सम्प्राप्नुवन् । एतदेव विवृणोति—अयं वा इति । ते तम एवेति । चयनेन संस्कृतं भूलोकमारूढाः 'ते' 'अनतिदृश्यम्' दृश्यमतिक्रम्य द्रष्टुमशक्यं सर्ववस्त्वाच्छादकं पापरूपम् 'तम एव' सर्वत्र अपश्यन्नित्यर्थः ॥ १ ॥

तेऽब्रुवन्निति । उप तज्जानीतेति । उपेत्य 'तत्' तमोऽपहन्तुमुपायं विचारयतेत्यर्थः । तमः पाप्मानमिति । तमोरूपं पाप्मानम् । चेतयध्वमितीच्छार्थे णिजिति व्याचष्टे—( पा. सू. ३ । १ । ८ ) चितिमिच्छतेतीति । 'चितिं' पापहननसाधनमिष्टकानां चयनमिच्छतेत्यर्थः । तदिच्छतेति । हे देवाः ! 'तत्' चयनम् 'इच्छत,' 'यथा' येन चयनेन 'इदं' तमोरूपं पापं नाशयेमेत्यर्थः ॥ २ ॥

ते चेतयमानाः । ( ऽ ) एता ऽइष्टका ऽअपश्यन्नैर्ऋतीस्ता ऽउपादधत ताभिस्तत्तमः पाप्मानमुपाघ्नत पाप्मा वै निर्ऋतिस्तद्यदेताभिः पाप्मानं निर्ऋतिमपाघ्नत तस्मादेता नैर्ऋत्यः ॥ ३ ॥

( स्त ) तद्वाऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदं नु तत्तमः स पाप्मा देवैरेवापहतो यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्यथो य ऽएव पाप्मा या निर्ऋतिस्तमेताभिरपहते तद्यदेताभिः पाप्मानं निर्ऋतिमपहते तस्मादेता नैर्ऋत्यः ॥ ४ ॥

( त्यो ) यद्वेवैता नैर्ऋतीर्हरन्ति । प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वंस्तमुखायां योनौ रेतोभूतमसिञ्चन्योनिर्वाऽउखा तस्माऽएताँ संवत्सरे प्रतिष्ठाँ समस्कुर्वन्निममेव लोकमयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्राजनयंस्तस्य यः पाप्मा यः श्लेष्मा यदुल्बं यज्जरायु तदस्यैताभिरपाघ्नंस्तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपाघ्नंस्तस्मादेता नैर्ऋत्यः ॥ ५ ॥

---

ते चेतयमानाः एता इष्टका अपश्यन्—नैर्ऋतीः । ता उपादधत, ताभिस्तत्तमः पाप्मानमपाघ्नत । पाप्मा वै निर्ऋतिः । तद्यदेताभिः पाप्मानं निर्ऋतिमपाघ्नत—तस्मादेता नैर्ऋत्यः ॥ ३ ॥

तद्वाऽएतत्क्रियते—यद्देवा अकुर्वन् । इदं नु तत्तमः, स पाप्मा देवैरेवापहतः । यत्त्वेतत्करोति—यद्देवा अकुर्वन्—तत्करवाणीति । अथो य एव पाप्मा, या निर्ऋतिः—तमेताभिरपहते । तद्यदेताभिः पाप्मानं निर्ऋतिमपहते । तस्मादेता नैर्ऋत्यः ॥ ४ ॥

यद्वेवैता नैर्ऋतीर्हरन्ति—प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन्—तमुखायां योनौ रेतोभूतमसिञ्चन् । योनिर्वाऽउखा । तस्माऽएतां संवत्सरे प्रतिष्ठां समस्कुर्वन्—इममेव लोकम् । अयं वै

---

ते चेतयमाना इति । चितिमिच्छन्त इत्यर्थः । पाप्मा वै निर्ऋतिरिति । दक्षिणापरदिगधिदेवता सा 'पाप्मा वै' पापरूपैव । एतत्तादात्म्यमुपजीव्य पापापहतिहेतुभूतानामिष्टकानां 'नैर्ऋत्यः'—इति नाम निर्वृत्तम् । तद्यदेताभिरिति । 'अपाघ्नत' अनाशयन् ॥ ३ ॥

इत्थमाख्यायिकया नैर्ऋतीनामुपधानस्य पापरूपतमोनिवृत्त्यर्थतां प्रतिपाद्य, इदानीन्तनानुष्ठानस्यापि तदर्थतामाह—तद्वा एतत् क्रियत इति । 'तत्' खलु 'एतत्' इदानीं यजमानेन 'क्रियते,' 'यद्देवाः' पुरा 'अकुर्वन्' । यथा 'देवैः' 'अपहतः' नाशितः तमोरूपः 'स पाप्मा,' इदानीमप्यनुष्ठानेन निवर्तते । यत्त्वेतदिति । 'यत्' खलु 'एतद्' यजमानः अनुतिष्ठति, देवैर्यत् कृतम्, 'तत्' अहमपि 'करवाणि,' 'इति' अनेनाभिप्रायेण तदनुष्ठीयत इत्यर्थः । न केवलमनुकरणमात्रं तथाविधफलसाधनमपीत्याह—अथो इति । उक्तमर्थमनूद्य नैर्ऋतीनामिष्टकानां तमोपहन्तृत्वद्वारा नाम निर्ब्रूते—तद्यदेताभिरिति ॥ ४ ॥

प्रयोजनान्तरं वक्तुं नैर्ऋतीनां हरणमनुवदति—यद्वेवैता इति । 'यत् उ एव' यस्मादेव प्रयोजनान्तरात्

( स्तु ) तथैवैतद्यजमानः । (ऽ) आत्मानमुखायां योनौ रेतोभूतꣳ सिञ्चति योनिर्व्वाऽउखा तस्माऽएताꣳ संवत्सरे प्रतिष्ठाꣳ संस्करोतीममेव लोक मयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्रजनयति तस्य यः पाप्मा यः श्लेष्मा यदुल्बं यज्जरायु तदस्यैताभिरपहन्ति तद्यदस्यैताभिः पाप्मानं निर्ऋति-मपहन्ति तस्मादेता नैर्ऋत्यः ॥ ६ ॥

पादमात्र्यो भवन्ति । ( न्त्य ) अधस्पदमेव तत्पाप्मानं निर्ऋतिं कुरुते-ऽलक्षणा भवन्ति यद्वै नास्ति तदलक्षणमसन्तमेव तत्पाप्मानं निर्ऋतिं

---

लोको गार्हपत्यः । तस्मिन्नेनं प्राजनयन् । तस्य यः पाप्मा, यः श्लेष्मा, यदुल्बम्, यज्जरायु-तदस्यैताभिरपाघ्नन् । तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपाघ्नन्–तस्मादेता नैर्ऋत्यः ॥ ५ ॥

तथैवैतद्यजमान आत्मानमुखायां योनौ रेतोभूतं सिञ्चति । योनिर्वाऽउखा । तस्माऽएतां संवत्सरे प्रतिष्ठां संस्करोति–इममेव लोकम् । अयं वै लोको गार्हपत्यः । तस्मिन्नेनं प्रजनयति । तस्य यः पाप्मा, यः श्लेष्मा, यदुल्बम्, यज्जरायु–तदस्यैताभिरपहन्ति । तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपहन्ति–तस्मादेता नैर्ऋत्यः ॥ ६ ॥

पादमात्र्यो भवन्ति । अधस्पदमेव तत्पाप्मानं निर्ऋतिं कुरुते । अलक्षणा भवन्ति । यद्वै नास्ति–

---

' एता नैर्ऋतीः ' इष्टकाः ' हरन्ति, ' तदुच्यत इति शेषः । आख्यायिकया तत् प्रतिपादयति–प्रजापतिं विस्रस्तमिति । यदा खलु ' देवाः ' ' विस्रस्तं ' विश्लिष्टावयवं ' प्रजापतिम् ' ' समस्कुर्वन् ' पुनरजयन्, तदा ' तम् ' प्रजापतिम्, उखालक्षणायां ' योनौ ' उख्याग्निरूपेण ' रेतोभूतम् ' ' असिञ्चन् ' । योनिर्वा उखेति । उख्याग्नेस्तत उत्पत्तेः । तस्मा एतामिति । ' तस्मै ' प्रजापतये ' संवत्सरे ' उख्याग्निभरणेन नीते सति ' एतां प्रतिष्ठां ' प्रतितिष्ठत्यनेनेति पादद्वयं प्रतिष्ठा; भूलोकात्मकं पादद्वयमजनयन्नित्यर्थः । ननु संवत्सरे अतिक्रान्ते गार्हपत्य एव चीयते, न भूलोकस्योत्पत्तिरित्याशङ्क्य तयोस्तादात्म्यमाह–अयं वै लोक इति । तस्मिन्नेनमिति । ' तस्मिन् ' भूलोकात्मके गार्हपत्ये ' एनं ' प्रतिष्ठारूपं प्रजापत्यवयवं ' प्राजनयन् ' उदपादयन् । ' तस्य ' प्रजायमानस्य ' यः पाप्मा ' शरीरे लिप्तः, ' यः श्लेष्मा, ' ' यत् ' च ' उल्बं ' गर्भवेष्टनम्, ' यत् ' च जराय्वाख्यं गर्भस्य बाह्यवेष्टनम्, ' तत् ' सर्वं पापरूपम् ' अस्य ' प्रजापतेः ' एताभिः ' इष्टकाभिः ' अपाघ्नन् ' अपहतवन्तः । अत्रापि पूर्ववन्नामनिर्वचनं करोति–तद्यदस्येति ॥ ५ ॥

इतिहाससिद्धमर्थं दृष्टान्तीकृत्य दार्ष्टान्तिके योजयति–तथैवैतादिति । यथा प्रजापतिमुदीरितरीत्या देवाः समस्कुर्वन्, तथैवेदानीं यजमानोऽपि प्रजापतिरूपमात्मानम् उखायामित्यादि पूर्ववद्योज्यम् ॥ ६ ॥

इत्थं पापरूपस्य तमसः, गर्भसम्बन्धिश्लेष्मोल्बादिरूपस्य च पाप्मनो निर्हरणहेतुत्वेन नैर्ऋतीरिष्टकाः प्रशस्य, तासां लक्षणमाह–पादमात्र्य इति । विंशत्यधिकशतांगुलिपरिमितः पुरुषः; तस्य दशमोंऽशः पादः, स प्रमाणं

कुरुते तुषपक्का भवन्ति नैर्ऋता वै तुषा नैर्ऋतैरेव तन्नैर्ऋतं कर्म करोति कृष्णा भवन्ति कृष्णँ हि तत्तम ऽआसीदथो कृष्णा वै निर्ऋतिः ॥ ७ ॥

( स्त्वा ) ताभिरेतां दिशं यन्ति । ( न्त्ये ) एषा वै नैर्ऋती दिङ् नैर्ऋत्यामेव तद्दिशि निर्ऋतिं दधाति स यत्र स्वकृतं वेरिणँ श्वभ्रप्रदरो वा स्यात्तदेना ऽउपदध्याद्यत्र वाऽअस्याऽअवदीर्यते यत्र वाऽस्याऽओषधयो न जायन्ते निर्ऋतिर्हास्यै तद्गृह्णाति नैर्ऋतऽएव तद्भूमेर्निर्ऋतिं दधाति ताः पराचीर्लोकभाजः कृत्वोपदधाति ॥ ८ ॥

---

तदलक्षणम् । असन्तमेव तत् पाप्मानं निर्ऋतिं कुरुते । तुषपक्का भवन्ति । नैर्ऋता वै तुषाः । नैर्ऋतैरेव तन्नैर्ऋतं कर्म करोति । कृष्णा भवन्ति । कृष्णं हि तत्तम आसीत् । अथो कृष्णा वै निर्ऋतिः ॥७॥

ताभिरेतां दिशं यन्ति । एषा वै नैर्ऋती दिक् । नैर्ऋत्यामेव तद्दिशि निर्ऋतिं दधाति । स यत्र स्वकृतं वेरिणम्, श्वभ्रप्रदरो वा स्यात्–तदेना उपदध्यात् । यत्र वाऽअस्याऽअवदीर्यते, यत्र वाऽस्याऽओषधयो न जायन्ते–निर्ऋतिर्हास्यै तद् गृह्णाति । नैर्ऋतऽएव तद्भूमेर्निर्ऋतिं दधाति । ताः पराचीर्लोकभाजः कृत्वोपदधाति ॥ ८ ॥

---

यासां ताः 'पादमात्र्यः' तदुक्तं कात्यायनेन–"पञ्चारत्निर्दशवितस्तिर्विंशतिशतांगुलः पुरुषः, द्वादशाङ्गुलं पदम्" (का.शु.सू ८२) इति[1] । तत् परिमाणं प्रशंसति–अधस्पदमेवेति । 'एतत्' एतेन नैर्ऋतीनां पादमात्रपरिमाणकरणेन 'अधस्पदं' पादस्याधस्तादेव निर्ऋतिरूपम् 'पाप्मानं' कृतवान् भवतीत्यर्थः । एतेन पादमात्र्य इत्यत्र पादशब्दोऽङ्घ्रिपर्यायः, न तु चतुर्थांशवाचक इति व्याख्यातं भवति । धर्मविशेषं विधत्ते–अलक्षणा भवन्तीति । त्र्यालिखितादिकं लक्षणम्, तद्रहिता भवेयुरित्यर्थः । एतदुपपादयति–यद्वै नास्तीति । 'यत्' खल्वभावप्रतियोगि, 'तत्' निःस्वरूपत्वात् 'अलक्षणं' व्यावर्त्तकचिह्नरहितम्, अतोऽत्रालक्षणकरणेन 'निर्ऋतिं' पाप्मानम् 'असन्तम्' अभावप्रतियोगिनमेव करोति । ननु पाके सतीष्टकान्तरलक्षणवत्त्वमासामवर्जनीयमित्याशङ्क्य, तासां पाकप्रकारमाह–तुषपक्का भवन्तीति । तुषैः पक्काः 'तुषपक्काः' । पचेः कर्मणि क्तः, "पचो वः"–( पा. सू. ८।२।१२ ) इति निष्ठातकारस्य वत्वम् । तत् प्रशंसति–नैर्ऋता वा इति । दर्शपूर्णमासप्रकरणे "अथ तुषान् प्रहन्त्यपहतꣳ रक्ष इति"–( श. प. १।१।४।२१ ) इति रक्षःसम्बन्धस्य समाम्नातत्वात् तुषाणां नैर्ऋतत्वम् । तासां कार्ष्ण्यं विधत्ते–कृष्णा भवन्तीति । ताः तिस्र इष्टकाः कृष्णवर्णाः । तत्र कारणमाह–कृष्णं हीति । अपहन्तव्यस्य तमसः कृष्णवर्णत्वात् तदभिमानिन्या निर्ऋतिदेवतायाश्च तादृग्वर्णत्वादित्यर्थः ॥ ७ ॥

तासामुपधानार्थं दिग्विशेषमभिनयेन दर्शयति–ताभिरेतामिति । 'एतां' दक्षिणापरां दिशं 'ताभिः' इष्टकाभिः सह 'यन्ति' गच्छेयुः । 'एषा' खलु 'नैर्ऋती' निर्ऋतिदेवताधिष्ठिता 'दिक्' । तथा सति

---

१–नैर्ऋतीः कृष्णास्तुषपक्कास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यासन्नहोमवद्देशे दक्षिणोत्तराः कृत्वा दक्षिणामुखोऽनुपस्पृशन् । का. श्रौ. सू. १७ । २३ ।

(त्यु) असुन्वन्तमयजमानमिच्छेति। यो वै नु सुनोति न युजते तं निर्ऋतिर्ऋच्छति स्तेनुस्येत्यामन्विहि तुस्करस्येति स्तेनुस्य चेत्यामन्विहि तुस्करस्य चेत्येतदथो यथा स्तेनस्तुस्करः प्रलायमेत्येवं प्रलायमिहीत्य-न्युमस्मदिच्छ सा तऽइत्येत्युनित्थंविद्वाꣳसमिच्छेत्येतन्नमो देवि निर्ऋते तुभ्यमस्त्विति नमस्कारेणैवैनामपहते ॥ ९ ॥

"असुन्वन्तमयजमानमिच्छ"—इति। यो वै न सुनोति, न यजते—तं निर्ऋतिर्ऋच्छति। "स्तेनस्येत्यामन्विहि तस्करस्य"—इति। स्तेनस्य चेत्यामन्विहि तस्करस्य चेत्येतत्। अथो यथा स्तेनस्तस्करः प्रलायमेति—एवं प्रलायमिहीति। "अन्यमस्मदिच्छ सा तऽइत्या"—इति। अनित्थंविद्वांसमिच्छेत्येतत्। "नमो देवि निर्ऋते तुभ्यमस्तु"—(वा० सं० १२। ६२) इति। नमस्कारेणैवैनामपहते ॥ ९ ॥

स्वकीयदिश्येवैतां 'निर्ऋतिं' 'दधाति' स्थापयति। तत्रापि देशविशेषमाह—स यत्रेति। 'सः' अध्वर्युः नैर्ऋत्यां दिशि 'यत्र' यस्मिन् स्थाने 'स्वकृतं' स्वयमेव सञ्जातम् 'इरिणं' निस्तृणं, ऊषरस्थानं वा भवति, 'श्वभ्रप्रदरो वा' श्वभ्राकारेण प्रदीर्णः प्रदेशो भवेत्, 'तत्' तस्मिन् स्थाने 'एनाः' नैर्ऋतीः 'उपदध्यात्'। तादृक्स्थानस्य निर्ऋतिदेवताधिष्ठितत्वमाह—यत्र वा इति। 'यत्र' खलु 'अस्याः' पृथिव्याः सम्बन्धिनि स्थाने आत्मा 'अवदीर्यते' भिद्यते, 'यत्र वा' ऊषरस्थाने 'ओषधयो न जायन्ते' 'तदेतत्' स्थानद्वयं निर्ऋतिगृहीतम्; तथा च निर्ऋतिसम्बद्धे स्थाने एव नैर्ऋतीनामुपधानेन निर्ऋतिं स्थापितवान् भवति। धर्मविशेषं विधत्ते—ताः पराचीरिति। पराञ्चनाः स्वस्वानभिमुखा यथा भवन्ति तथा 'लोकभाजः' स्थान-भाजः 'कृत्वा' 'ताः' इष्टका उपदध्यात्। एतच्च परावत्त्वमग्रे प्रतिपादयिष्यते ॥ ८ ॥

तत्र तिसृणामिष्टकानां त्रयो मन्त्राः, तान् क्रमेण प्रदर्शयन् व्याचष्टे—असुन्वन्तमयजमानमित्यादिना। यो वै न सुनोतीति। 'यः' पुरुषः सोमाभिषवं न करोति, यश्च दर्शपूर्णमासादिभिर्हविर्यज्ञैः 'न यजते' 'तं' 'निर्ऋतिः' पापदेवता 'ऋच्छति' प्राप्नोति। तस्मान्निर्ऋतिं सम्बोध्य "असुन्वन्तमयजमानमिच्छ"—इति मन्त्रपाठो युक्त इत्यर्थः ॥

स्तेनस्य चेत्यामिति। प्रच्छन्नचोरः स्तेनः, प्रत्यक्षं परेषां धनमपहरति यः स तस्करः; अनयोः परस्पर-विलक्षणत्वात् अविद्यमानमपि 'च'—शब्दमध्याहृत्य योजयति। 'स्तेनस्य तस्करस्य च' या 'इत्या' गतिः, "सञ्ज्ञायां समजनिषद" इत्यादिना (पा. सू. ३। ३। ९९) "इण् गतौ"—(धा. पा. अ. प. ३९) इत्यस्माद् भावे क्यप्। तां गतिं हे निर्ऋते! त्वम् 'अन्विहि' अनुगच्छ। एतदेव विवृणोति—अथो इति। अपि च यथा स्तेनः तस्करश्च 'प्रलायं' प्रलीयप्रलीय अदृश्यो भूत्वा 'एति' गच्छति। 'प्रलायम्' इति णमुलन्तः (पा. सू. ३। ४। २२)। 'एवं' निर्ऋते! त्वमपि 'प्रलानम्' अदर्शनम् 'इहि' गच्छेति मन्त्र-भागस्याभिप्रायः। अनित्थंविद्वांसमिति। 'इत्थम्' अनेन प्रकारेणोक्तमर्थं यो न वेत्ति सोऽनित्थंविद्वान्

१—असुन्वंतमिति प्रत्यृचं पराचीः। का. श्रौ. सू. १७। २४।

नमः सु ते निर्ऋते तिग्मतेज ऽइति । तिग्मतेजा वै निर्ऋतिस्तस्या ऽएतन्नमस्करोत्ययस्मयं विचृता बन्धमेतमित्ययस्मयेन ह वै तं बन्धेन निर्ऋतिर्बध्नाति यं बध्नाति यमेन त्वं यम्या संविदानेत्यग्निर्वै यम ऽइयं यम्याभ्यां हीदꣳ सर्वं यतमाभ्यां त्वꣳ संविदानेत्येतदुत्तमे नाके ऽअधिरोहयैनमिति स्वर्गो वै लोको नाकः स्वर्गे लोके यजमानमधिरोहयेत्येतत् ॥ १० ॥

(य) यस्यास्ते घोर ऽआसञ्जुहोमीति । घोरा वै निर्ऋतिस्तस्या ऽएतदासञ्जुहोति यत्तद्देवत्यं कर्म करोत्येषां बन्धानामवसर्जनायेति

---

"नमः सु ते निर्ऋते तिग्मतेजः"—इति । तिग्मतेजा वै निर्ऋतिः, तस्याऽएतन्नमस्करोति । "अयस्मयं विचृता बन्धमेतम्"—इति । अयस्मयेन ह वै तं बन्धेन निर्ऋतिर्बध्नाति—यं बध्नाति । "यमेन त्वं यम्या संविदाना"—इति । अग्निर्वै यमः, इयं यमी । आभ्यां हीदं सर्वं यतम् । आभ्यां त्वं संविदानेत्येतत् । "उत्तमे नाकेऽअधिरोहयैनम्"—( वा. सं. १२ । ६३ ) इति । स्वर्गो वै लोको नाकः । स्वर्गे लोके यजमानमधिरोहयेत्येतत् ॥ १० ॥

"यस्यास्ते घोरऽआसन् जुहोमि"—इति । घोरा वै निर्ऋतिः । तस्या एतदासन् जुहोति—यत्तद्देवत्यं कर्म करोति । "एषां बन्धानामवसर्जनाय"—इति । यैर्बन्धैर्बद्धो भवति । "यां

---

अत्रान्यशब्देन विवक्षित इत्यर्थः । हे निर्ऋते ! अस्मत्तः अन्यं त्वत्स्वरूपानभिज्ञम् 'इच्छ' । 'सा' तादृशी अविद्वद्विषयैव खलु 'ते' तव 'इत्या' गतिरिति मन्त्रभागस्यार्थः । नमस्कारेणैवेति । "नमो देवि निर्ऋते"—इत्यन्तिमपादे नमस्कारप्रतिपादनात् तेनैव नमस्कारेण 'एनां' निर्ऋतिम् 'अपहते' अपबाधते अपसारयतीत्यर्थः ॥ ९ ॥

नमः सु ते इति । द्वितीयो मन्त्रः । तत्र तिग्मतेज इति विशेषणस्य प्रसिद्धिमाह—तिग्मतेजा वा इति । तिग्मं तीक्ष्णं तेजो यस्याः सा तिग्मतेजाः, हे तिग्मतेजो निर्ऋते ! 'ते' तुभ्यं नमोऽस्त्विति तस्यार्थः । द्वितीयपादमनूद्य व्याचष्टे—अयस्मयमिति । अयसा लोहेन निर्मितो बन्धोऽयस्मयः । विकारार्थे मयट् ( पा. सू. ४ । ३ । १४३ ) तादृशेन खलु बन्धेन 'निर्ऋतिस्तं बध्नाति' 'यं' बन्धनीयं मन्यते । हे निर्ऋते ! 'अयस्मयमेतं बन्धं विचृत' विमुञ्चेति प्रार्थना युक्ता । यम-यमीशब्दयोर्विवक्षितमर्थमाह—अग्निर्वै यम इति । अन्तःप्रविष्टः सन् कृत्स्नजगन्नियमनाद् 'अग्निर्यमः;' तदधिष्ठितत्वात् 'इयं' पृथिव्येव 'यमी;' इयमपि हि आश्रितं सर्वं जगन्नियच्छति । तथा 'आभ्यां' यमेनाग्निना, यम्या पृथिव्या च संविदाना सञ्जानाना 'त्वम्' इति तृतीयभागस्यार्थः । चतुर्थं पादमनूद्य व्याचष्टे—उत्तमे नाक इति । कं सुखम्, न कम् अकं दुःखम्, तदस्मिन् नास्तीति 'नाकः' स्वर्गाख्यो लोकः । उक्तं हि—"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥"—इति । सिद्धमन्यत् ॥ १० ॥

यस्यास्त इति । तृतीयो मन्त्रः । तत्र प्रथमपादस्य तात्पर्यमाह—घोरा वा इति । 'निर्ऋतिः' पापदेवतात्वात् पापस्य च दुःखहेतुत्वात् 'घोरा' तीव्रा दुःसहा । तथा च 'तद्देवत्यमेतत् कर्म करोति' इति यत्,

यैर्बन्धैर्बद्धो भवति यां त्वा जनो भूमिरिति प्रमन्दतऽइतीयं वै भूमिरस्यां वै स भवति यो भवति निर्ऋतिं त्वाऽहं परिवेद विश्वत ऽइति निर्ऋतिरिति त्वाऽहं परिवेद सर्वतऽ इत्येतदियं वै निर्ऋतिरियं वै तं निरर्पयति यो निर्ऋच्छति तद्यथा वै ब्रूयादसावामुष्यायणोऽसि वेद त्वा मा मा हिंसीरित्येवमेतदाह नतराꣳ हि विदित ऽआमन्त्रितो हिनस्ति ॥ ११ ॥

---

त्वा जनो भूमिरिति प्रमन्दते"–इति। इयं वै भूमिः। अस्यां वै स भवति–यो भवति। "निर्ऋतिं त्वाऽहं परिवेद विश्वतः "–( वा. सं. १२।६४ )–इति । निर्ऋतिरिति त्वाऽहं परिवेद सर्वत इत्येतद्। इयं वै निर्ऋतिः। इयं वै तं निरर्पयति–यो निर्ऋच्छति। तद्यथा वै ब्रूयाद्–असावामुष्यायणोऽसि, वेद त्वा, मा मा हिंसीः–इति–एवमेतदाह । नतरां हि विदित आमन्त्रितो हिनस्ति ॥ ११ ॥

---

'एतत्' एतेन 'तस्याः' निर्ऋतेः 'आसन्' आस्ये 'जुहोति' प्रक्षिपति । एवञ्च प्रथमपादस्यायमर्थः–हे घोरे निर्ऋते! यस्याः तव आस्ये जुहोमि, तां त्वामित्युपरि सम्बन्धः ॥

द्वितीयपादमनूद्य एषामिति इदंशब्दनिर्देश्यमाह–यैर्बन्धैरिति । शिक्यपाशरुक्मसूत्रादिभिर्यैः 'बन्धैः' दुःखहेतुभिः 'बद्धो भवति' यजमानः, 'एषां बन्धानां' निर्ऋतिबन्धहेतुभूतानां पापानाम् 'अवसर्जनाय' विश्लेषणाय जुहोमीति सम्बन्धः ॥

तृतीयपादमनूद्य, तत्र भूमिरिति विशेषणस्य तात्पर्यमाह–यां त्वेति । हे निर्ऋते ! 'जनः' लोकः 'यां त्वा' 'भूमिः' भवनहेतुः समृद्धिहेतुर्वा 'इति' प्रमन्दते स्तौतीति तस्य पादस्यार्थः । इयं वा इत्यादि । 'इयं' खलु पृथिवी निर्ऋतिरूपा 'भूः' भवनहेतुः । कुत एतदित्याह–अस्यां वा इति । 'यो भवति' उत्पद्यते, समृध्यते वा, 'सः' 'अस्यां' पृथिव्यामाधारभूतायां खलु 'भवति' । तस्माद् भवनाधिकरणत्वात् भूमिरिति नाम्ना त्वं स्तूयस इत्यर्थः ॥

जनवादमुपन्यस्य, स्वस्य विशेषज्ञतां चतुर्थपादेनाह–निर्ऋतिं त्वेति । अत्र विश्वशब्दः सर्वशब्दपर्याय एव, न तु जगद्वाचीत्यभिप्रेत्य व्याचष्टे–निर्ऋतिरितीति । अयमर्थः–तृतीयपादे भूमिशब्दादुत्तरत्वेन पठितः 'इति'–शब्दोऽत्रानुषज्यते । 'अहं' पुनः त्वा 'त्वां' 'निर्ऋतिः' सर्वतो निरर्पणहेतुः आर्तिकारणम् ( अम. को. १।९।२ ), 'इति' 'परिवेद' परितो जानामि । एवं निर्ऋतिं त्वेति द्वितीयान्तं निर्ऋतिपदमिति-शब्दानुषङ्गेन व्याख्यायैतदुपपादयति–इयं वा इति । यो निःशेषेण 'ऋच्छति' आर्तिं प्राप्नोति, 'तं' पुरुषम् 'इयम्' एव देवता 'निरर्पयति' निर्ऋतं प्रयुङ्क्ते । निरुपपदात् ऋच्छतेः प्रयोजकव्यापारे णिचि (पा. सू. १।४।५५।३।१।२६) "अर्तिह्री"–( पा. सू. ७।३।३६ ) इत्यादिना पुक्। अतो निरर्पणादियमेव पृथिवी निर्ऋतिरित्युच्यते । अतो भवत्याः स्वरूपं सम्यगहं जानामीत्यर्थः ॥

एतज्ज्ञानस्य सदृष्टान्तं प्रयोजनमाह–तद्यथेति । 'तत्' तत्र अरण्यादौ चोरादिष्वागतेषु, असौ त्वमेतन्नामाऽसि, अमुष्य यज्ञदत्तस्य पुत्रोऽसि, अतस्त्वामहं जानामि, 'मा' मां 'मा हिंसीः' मा वधिष्ठाः 'इति' आगतं प्रति यथोच्यते, एवमेव खल्वेतत् "निर्ऋतिं त्वाऽहम्" इत्यादिना निर्ऋतेः स्वरूपप्रतिपादनम्। नामग्रहणस्य फल-

नोपस्पृशति । पाप्मा वै निर्ऋतिर्नेत्पाप्मना सꣳस्पृशाऽइति नु सादयति प्रतिष्ठा वै सादनं नेत्पाप्मानं प्रतिष्ठापयानीति न सूददोहसाऽधिवदति प्राणो वै सूददोहा नेत्पाप्मानं प्राणेन संतनवानि संदधानीति ॥ १२ ॥

ता हैके पुरस्तादर्वाचीरुपदधति । पाप्मा वै निर्ऋतिर्नेत्पाप्मानं निर्ऋतिमन्ववायामेति न तथा कुर्यात्पराचीरेवोपदध्यात्पराञ्चमेव तत्पाप्मानं निर्ऋतिमपहते ॥ १३ ॥

तिस्रऽइष्टकाऽउपदधाति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्पाप्मानं निर्ऋतिमपहते ॥ १४ ॥

---

नोपस्पृशति । पाप्मा वै निर्ऋतिः । नेत् पाप्मना संस्पृशाऽइति । न सादयति । प्रतिष्ठा वै सादनम् । नेत्पाप्मानं प्रतिष्ठापयानीति । न सूददोहसाऽधिवदति । प्राणो वै सूददोहाः । नेत्पाप्मानं प्राणेन सन्तनवानि, सन्दधानीति ॥ १२ ॥

ता हैके परस्तादर्वाचीरुपदधाति । पाप्मा वै निर्ऋतिः । नेत्पाप्मानं निर्ऋतिमन्ववायामेति । न तथा कुर्यात् । पराचीरेवोपदध्यात् । पराञ्चमेव तत् पाप्मानं निर्ऋतिमपहते ॥ १३ ॥

तिस्र इष्टका उपदधाति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैव तत्पाप्मानं निर्ऋतिमपहते ॥ १४ ॥

---

माह—नतरामिति । 'विदितः' ज्ञातो नामगोत्रादिना, 'आमन्त्रितः' आहूतः, चोरादिः आत्मीयत्वेनाह्वातारं पुरुषं 'नतराम्' अतिशयेन नैव 'हिनस्ति' बाधते; एवमेव निर्ऋतिनामग्रहणादेनं यजमानं निर्ऋतिर्न बाधत इत्यर्थः ॥ ११ ॥

उपस्पर्शनसादनसूददोहसामिष्टकान्तरवदासु प्रसक्तानां निषेधं करोति—नोपस्पृशतीत्यादिना । उपहिताया इष्टकायाः प्रथममुपस्पर्शनं कर्त्तव्यम्, पश्चात् "तया देवतया" (वा. सं. १२।५३) इति सादनम्, ततः "ता अस्य" इति मन्त्रेण सूददोहसाऽधिवदनम् ( वा. सं. १२।५५ ) तदेतत् त्रितयमत्र न कर्त्तव्यम् । पापसंसर्गो मा भूदित्यभिप्रायः । सन्तनवानीत्यस्य विवरणं 'सन्दधानि' इति । अन्यन्निगदसिद्धम् ॥ १२ ॥

तासामुपधाने प्रकारद्वयमाह—ता हैके इत्यादिना । एके शाखिनः 'ताः' नैर्ऋतीरिष्टकाः 'परस्ताद्' विप्रकृष्टदेशादारभ्य 'अर्वाचीः' आत्माभिमुखमुत्तरोत्तरमात्माभिमुखीः 'उपदधति' । तेषामभिप्रायमाह—पाप्मा वा इति । समीपदेशादारभ्योत्तरोत्तरं विप्रकर्षेणोपधाने हि पूर्वोपहितामिष्टकामतिक्रम्य गमनात् पापसंसर्गः स्यात्, तादृग्रूपां 'निर्ऋतिम्' 'नेत् अन्ववायाम' नैव प्राप्नवाम' इति' अनेनाभिप्रायेणेत्यर्थः ॥

द्वितीयं पक्षं विधातुमेतन्निषेधति—न तथेति । तं पक्षमाह—पराचीरेवेति ( का. श्रौ. सू. १७।२४ ) । ताः 'प्राचीः' उत्तरोत्तरं विप्रकृष्टा एवोपदध्यात् । तथा च निर्ऋतिरूपं 'पाप्मानं' 'पराञ्चम्' आत्मानभिमुखं विप्रकृष्टम् 'एव' प्रेरयित्वा 'अपहते' हिनस्ति ॥ १३ ॥

तासां नैर्ऋतीनां सङ्ख्यामनूद्य स्तौति—तिस्र इति ( का. श्रौ. सू. १७।२३ ) । त्रिवृदग्निरिति । असकृदुक्तार्थम् ॥ १४ ॥

---

१—अभ्यासमेके—नित्याभावः । का० श्रौ० सू० १७।२५-२६ ॥

(तेऽस्था) अथासन्दीᳪ शिक्यम् । (१५॑) रुक्मपाशमिण्ड्वे तत्प- रार्धे न्यस्यति नैर्ऋतो वै पाशो निर्ऋतिपाशादेव तत्प्रमुच्यते यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यमित्यनेवंविदुषा ह्यविचृत्यस्तं ते विष्याम्यायुषो न मध्यादित्यग्निर्वाऽआयुस्तस्यैतन्मध्यं यच्चितो गार्ह- पत्यो भवत्यचित ऽआहवनीयस्तस्माद्यदि युवाऽग्निं चिनुते यदि स्थविर ऽआयुषो न मध्यादित्येवाहाथैतं पितुमद्धि प्रसूत ऽइत्यन्नं वै पितुरथैतदन्न- मद्धि प्रमुक्तऽ इत्येतत्त्रिष्टुब्भिर्वज्रो वै त्रिष्टुब्वज्रेणैव तत्पाप्मानं निर्ऋतिम- पहते ॥ १९ ॥

---

अथासन्दीम्, शिक्यम्, रुक्मपाशम्, इण्ड्वे—तत्परार्धे न्यस्यति । नैर्ऋतो वै पाशः । निर्ऋति- पाशादेव तत् प्रमुच्यते । "यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम्"—इति । अनेवंविदुषा ह्यविचृत्यः । "तं ते विष्याम्यायुषो न मध्यात्"—इति । अग्निर्वाऽआयुः । तस्यैतन्मध्यं—यच्चितो गार्हपत्यो भवति—अचित आहवनीयः । तस्माद् यदि युवाऽग्निं चिनुते, यदि स्थविरः—आयुषो न मध्यादित्येवाह । "अथैतं पितुमद्धि प्रसूतः"—इति । अन्नं वै पितुः, अथैतदन्नमद्धि प्रमुक्त इत्येतत् । त्रिष्टुब्भिः । वज्रो वै त्रिष्टुप् । वज्रेणैव तत् पाप्मानं निर्ऋति- मपहते ॥ १९ ॥

---

आसन्द्यादीनां तत्र प्रासनं विधत्ते—अथेति । 'अथ' समिदाधानानन्तरम्, या उख्याग्निधारणार्था 'आसन्दी,' यच्च भरणसमये उख्यधारणार्थं 'शिक्यम्,' यश्च सौवर्णस्य रुक्मस्य प्रतिमोचनार्थं 'पाशः' सूत्रम्, ये च 'इण्ड्वे' अग्निसहिताया उखाया उभयतो धारणाय तृणमयौ पिण्डौ । 'तत्' सर्वं नैर्ऋतीनां 'परार्द्धे' पश्चाद्भागे 'न्यस्यति' क्षिपेत् । "यन्ते देवी" इति तस्य मन्त्रः । तथा च कात्यायनः—"नैर्ऋतीः कृष्णास्तुषपक्कास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यासन्नहोमवदेशे दक्षिणोत्तराः कृत्वा दक्षिणामुखोऽनुपस्पृशन्न- सुन्वन्तमिति प्रत्यृचं पराचीरस्यात्ममेके, नित्याभावः, शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यन्त इति"— ( का. श्रौ. सू. ( १७ । २३-२७ ) इति । आसन्द्यादीनामुख्याग्निना तप्तत्वात् प्रासनीयत्वं स्पष्टमित्यभि- प्रेत्य रुक्मपाशस्य प्रासनीयत्वमुपपादयति—नैर्ऋतो वा इति । निगदसिद्धोऽर्थः ॥

मन्त्रस्य पूर्वार्द्धे 'अविचृत्यम्' इति पदस्याभिप्रायमाह—अनेवंविदुषा हेति । उक्तार्थज्ञानरहितः 'अनेवं विद्वान्'; तेन 'अविचृत्यः' । "चृती हिंसाग्रन्थनयोः" (धा. पा. तु. प. ४४ ।) चर्तितुं विश्लेषयितुं शक्यो न । अयमर्थः—हे यजमान ! 'ते' तव 'ग्रीवासु' 'अविचृत्यं' विमोक्तुमशक्यं 'यं' 'पाशं' 'निर्ऋतिः' देवता 'आबबन्ध' आबद्धवती 'तं ते विष्यामि' इत्युत्तरत्र सम्बन्धः । तत्रत्यस्यायुःशब्दस्य विवक्षितमर्थ- माह—अग्निर्वा आयुरिति । आयुषो दातृत्वादग्निरेवात्रायुःशब्देनोच्यते । तस्यैतन्मध्यमित्यादि । 'तस्य' चीयमानस्यायुःशब्दाभिधेयस्याग्नेः 'एतत्' 'मध्यं' मध्यशरीरं 'यद्' गार्हपत्यचयनादूर्ध्वमाहवनीयचय-

तिस्रऽइष्टका भवन्ति । ( न्त्या ) आसन्दी शिक्यᳪ रुक्मपाशऽइण्ड्वे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्पाप्मानं निर्ऋतिमपहते ॥ १६ ॥

( तेऽथा ) अथान्तरेणोदचमसं निनयति । वज्रो वाऽआपो वज्रेणैव तत्पाप्मानं निर्ऋतिमन्तर्धत्ते नमो भूत्यै येदं चकारेत्युपोत्तिष्ठन्ति भूत्यै वाऽएतदग्रे देवाः कर्माकुर्वत तस्याऽएतन्नमोऽकुर्वन्भूत्याऽउऽएवायमेतत्कर्म कुरुते तस्याऽएतन्नमस्करोत्यप्रतीक्षमायन्त्यप्रतीक्षमेव तत्पाप्मानं निर्ऋतिं जहति ॥ १७ ॥

---

तिस्र इष्टका भवन्ति । आसन्दी, शिक्यम्, रुक्मपाशः, इण्ड्वे—तदष्टौ । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैव तत् पाप्मानं निर्ऋतिमपहते ॥ १६ ॥

अथान्तरेणोदचमसं निनयति । वज्रो वाऽआपः । वज्रेणैव तत् पाप्मानं निर्ऋतिमन्तर्धत्ते । “ नमो भूत्यै येदं चकार ”–( वा. सं. १२ । ६५ ) इत्युपोत्तिष्ठन्ति । भूत्यै वाऽएतदग्रे देवाः कर्माकुर्वत । तस्याऽएतन्नमोऽकुर्वन् । भूत्याऽउ एवायमेतत्कर्म कुरुते । तस्याऽएतन्नमस्करोति । अप्रतीक्षमायन्ति । अप्रतीक्षमेव तत् पाप्मानं निर्ऋतिं जहति ॥ १७ ॥

---

नात् प्राचीनं कर्म; तदत्र मन्त्रगतेन मध्यशब्देनोच्यत इत्यर्थः । फलितमाह—तस्मादिति । ‘ तस्मात् ’ आयुः-शब्दस्य चीयमानाग्निपरत्वात् यूनः स्थविरस्य च यजमानस्य प्रयोगे “ आयुषो मध्यात् ”—इति मन्त्रभागस्य पाठो न विरुध्यते; यदि ह्यायुःशब्देन यजमानस्य जीवनकालो विवक्षितः स्यात्, तदा यूनः प्रयोगे आयुष आदेरिति विपरिणमयितव्यम् ; स्थविरस्य प्रयोगे तु आयुषोऽन्तादिति । ‘ मध्यादित्येवाह ’ इत्येवकारेणेदृग्विध-परिणामो व्यावर्त्यते । तथा च तृतीयपादस्यायमर्थः—हे यजमान ! ‘ ते ’ तव ग्रीवास्वाबद्धं तं शिक्यपाशं रुक्मपाशं च ‘ विष्यामि ’ । “ स्यतिरुपसृष्टो विमोचने ”–( नि० १ । ६ । १ । ) इति यास्कः । तथा च विमुञ्चामीत्यर्थः । ‘ आयुषः ’ चीयमानस्याग्नेः मध्यात् गार्हपत्यचयनादूर्ध्वभाविनः कर्मकलापात् न विमुञ्चा-मीति । चतुर्थपादमनूद्य व्याचष्टे—अथैतमिति । पितुशब्दोऽन्नवाची । ‘ अथ ’ पाशविमोचनानन्तरम्, ‘ एतं पितुम् ’ अग्निचयनफलभूतमन्नं ‘ प्रसूतः ’ निर्ऋतिदेवतयाऽनुज्ञातः सन् हे यजमान ! त्वम् ‘ अद्धि ’ अशाने-त्यर्थः । प्रमुक्त इत्येतादिति । ‘ प्रसूत ’ इति मन्त्रपदेन प्रमोचनं विवक्षितमिति भावः ॥

मन्त्रगतं छन्दः प्रशंसति—त्रिष्टुब्भिरिति । वज्रो वै त्रिष्टुबिति । त्रिष्टुम इन्द्रेण सहोत्पन्नत्वाद् ( तै. सं. ७ । १ । १ । ४ ) वज्रस्य च तदायुधत्वात् त्रिष्टुभस्तत्तादात्म्यम् ॥ १५ ॥

इष्टकादीन् सम्भूय, अनूद्य, संख्याद्वारेण प्रशंसति—तिस्र इति ॥ १६ ॥

उदकस्य निनयनं विधत्ते—अथान्तरेणेति । ‘ अथ ’ आसन्द्यादीनां प्रासनानन्तरम्, ‘ अन्तरेण ’ स्वात्मन इष्टकानाञ्च मध्ये उदकपूर्णं चमसं ‘ निनयति ’ निषिञ्चति ( का. श्रौ. सू. १७ । २८ ) । तदेतत् प्रशंसति—

प्रत्युेत्याग्निमुपतिष्ठते । ( त॒ऽ ) एतद्वाऽएतदयथायुथं करोति युदग्नौ सामिचितऽएतां दिशमेति तुस्माऽएवैतन्निह्नुतेऽहिँसायै ॥ १८ ॥

युद्वेवोपतिष्ठते । ( तेऽयं ) अयं वै लोको गार्हपत्यः प्रतिष्ठा वै गार्हपत्य ऽइयमु वै प्रतिष्ठाऽथैतदुपथमिवैति युदेतां दिशमेति तद्युदुपतिष्ठतऽइमामेवै-तत्प्रतिष्ठामभिप्रत्येैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ १९ ॥

---

प्रत्येत्याग्निमुपतिष्ठते । एतद्वाऽएतदयथायथं करोति—यदग्नौ सामिचितऽएतां दिशमेति । तस्मा-ऽएवैतन्निह्नुते—अहिंसायै ॥ १८ ॥

यद्वेवोपतिष्ठते । अयं वै लोको गार्हपत्यः । प्रतिष्ठा वै गार्हपत्यः । इयमु वै प्रतिष्ठा । अथैतद-पथमिवैति । यदेतां दिशमेति । तद्यदुपतिष्ठते—इमामेवैतत्प्रतिष्ठामभिप्रत्यैति । अस्यामेवैतत्प्रति-ष्ठायां प्रतितिष्ठति ॥ १९ ॥

---

वज्रो वा इति । नैर्ऋत्यो हि ता इष्टकाः, तासामात्मनश्च मध्ये वज्रसंस्तुतानामपां निनयनेन पापरूपां ' निर्ऋतिम् ' ' अन्तर्द्धत्ते ' व्यवदधाति, तत्संसर्गपरिहारायेत्यर्थः ॥

निषेचनानन्तरमुपोत्थानं समन्त्रकं विधत्ते—नमो भूत्या इति । 'या' भूतिलक्षणा देवता 'इदं' नैर्ऋतेष्टकोप-धानरूपं कर्म ' चकार ' कृतवती । तस्यै ' भूत्यै ' श्रियै नमोऽस्त्विति मन्त्रार्थः । तत्रोदकनिनयनपूर्वकमुपो-त्थानं कात्यायनः सूत्रितवान्—" उदपात्रं निषिच्यान्तरात्मेष्टकमुत्तिष्ठन्ति नमो भूत्या इति "—( का. श्रौ. सू. १७ । २८ ) इति ॥

पुरावृत्तन्यायेन भूत्यर्थतां कर्मणः प्रदर्शयन् तन्नमस्कारपरतां मन्त्रस्य व्याचष्टे—भूत्यै वा इति । ' भूत्यै ' भवनाय ऐश्वर्याय खलु ' एतत् कर्म ' ' देवाः ' ' अग्रे ' प्राक् ' अकुर्वत ' कृतवन्तः । ' तस्यै ' एव भूत्यै ' एतन्नमः ' ' अकुर्वन्, ' तद्वदेव ' अयं ' यजमानोऽपि भूत्यर्थमेव ' एतत् ' कर्म कुरुते, ' तस्यै एतन्नम-स्करोति ' इति ॥

उपोत्थानानन्तरं शालां प्रत्यागमनं धर्मविशिष्टं विधाय स्तौति—अप्रतीक्षमायन्तीति । प्रतिनिवृत्य नैर्ऋतस्थानस्येक्षणमकृत्वा ' आयन्ति ' शालामागच्छन्ति, ' तत् ' तेनाप्रतीक्षणेन निर्ऋतिरूपं ' पाप्मानम् ' ' अप्रतीक्षमेव ' प्रतीक्षणमकृत्वैव ' जहति ' त्यजन्ति । " ओहाक् त्यागे "—इति (धा. पा. जु. प. ८)॥१७॥

गार्हपत्योपस्थानं विधत्ते—प्रत्येत्येति । ' प्रत्येत्य ' नैर्ऋतस्थानात् प्रतिनिवृत्य, गार्हपत्यम् ' अग्निमुपति-ष्ठते ' । तदुक्तं सूत्रकृता—" अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेशन इति "—( का. श्रौ. सू. १७ । २९ ) इति । उपस्थानस्य प्रयोजनमाह—एतद्वा इति । ' एतत् वा ' एतस्मिन् समये खलु ' एतदयथायथम् ' अयथा-स्वमन्याय्यं करोति । किं पुनरेतदिति, तदाह—यदग्नाविति । ' अग्नौ ' गार्हपत्यचितिरूपे शालाद्वार्ये, ' सामि-चिते ' अर्द्धचिते ' एतां दिशं ' नैर्ऋतीम् ' एति ' गच्छति । ' अहिंसायै ' हिंसापरिहाराय ' तस्मै ' गार्हपत्य-चितिरूपायाग्नये ' एतत् ' निह्नुते एव अयथायथकरणजनितमपराधं शमयत्येव ॥ १८ ॥

प्रकारान्तरेणाप्युपस्थानस्य कर्त्तव्यतामाह—यद्वेवेति । अयं वा इति । ' गार्हपत्यः ' पृथिवीलोकात्मकः

निवेशनः संगमनो व्वसूनामिति । निवेशनो ह्ययं लोकः संगमनो व्वसूनां व्विश्वा रूपाऽभिचष्टे शचीभिरिति सर्व्वाणि रूपाण्यभिचष्टे शचीभिरित्येतद्देवऽइव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनामिति यथैव यजुस्तथा बन्धुः ॥ २० ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ ७।१।३ ॥ ( २–१ ) ॥

अथ प्रायणीयं निर्वपति । तस्य हविष्कृता व्वाचं व्विसृजते व्वाचं व्विसृज्य स्तम्बयजुर्हरति स्तम्बयजुर्हृत्वा पूर्वेण परिग्रहेण परिगृह्य लिखित्वाऽऽह हर त्रिरिति हरति त्रिराग्नीध्रः ॥ १ ॥

---

" निवेशनः सङ्गमनो वसूनाम् "–इति । निवेशनो ह्ययं लोकः सङ्गमनो वसूनाम् । " विश्वा रूपाऽभिचष्टे शचीभिः "–इति । सर्वाणि रूपाण्यभिचष्टे शचीभिरित्येतद् । " देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् "–( वा. सं. १२ ।६६ ) इति । यथैव यजुस्तथा बन्धुः ॥ २० ॥

अथ प्रायणीयं निर्वपति । तस्य हविष्कृता वाचं विसृजते । वाचं विसृज्य स्तम्बयजुर्हरति । स्तम्बयजुर्हृत्वा पूर्वेण परिग्रहेण परिगृह्य लिखित्वाऽऽह–'हर त्रिः' इति । हरति त्रिराग्नीध्रः ॥१॥

---

खलु प्रतिष्ठात्मकश्च सः । 'इयम् उ वै' पृथिव्यपि खलु 'प्रतिष्ठा' आस्पदम् । 'अथैतत्' इदानीम् 'अपथमिवैति' अमार्गेणैव प्रतिपद्यते, 'यदेतां' नैर्ऋतीं 'दिशम्' 'एति' गच्छति । उपस्थानस्य प्रतिष्ठितिहेतुतां प्रतिपादयति–तद्यदिति । 'एतत्' एतेनोपस्थानेन 'इमां' प्रतिष्ठारूपां पृथिवीमेव 'अभिप्रत्यैति' साम्मुख्येन प्रतिपन्नो भवति 'प्रतिष्ठायाम्' अस्यां 'प्रतितिष्ठति' च चिरं स्थितिं लभत इत्यर्थः ॥ १९ ॥

विहिते शालाद्वार्योपस्थाने मन्त्रमनूद्य व्याचष्टे–निवेशन इति । निविशन्ते वसूनि अस्मिन्निति 'निवेशनः' । सङ्गच्छन्ते धनान्यस्मिन्निति 'सङ्गमनः' । आधाराधेययोरभेदोपचारेणाग्नेः पृथिवीलोकत्वमित्यभिप्रेत्याह–निवेशनो ह्ययं लोक इति । विश्वशब्दस्य सर्वशब्दाभिधायकत्वं व्याचष्टे–सर्वाणीति । उत्तरार्द्धं तु निगदव्याख्यातमित्याह–यथैव यजुरिति ॥

मन्त्रार्थस्तु–योऽयमग्निः 'वसूनां' धनानां 'निवेशनः' एकाश्रयः 'सङ्गमनः' सङ्गत्याधारश्च, 'विश्वा रूपा' सर्वाणि रूपाणि आहवनीयदक्षिणाग्न्यतिप्रणीताग्नीद्ध्रधिष्ण्यप्रभृतीनि 'शचीभिः' कर्मभिः 'अभिचष्टे' अभिपश्यति । कथं पश्यतीत्यपेक्षायामाह–'सत्यधर्मा' अवितथधर्मकारी 'सविता' 'देव इव' स यथा सर्वमभिपश्यति, तथेत्यर्थः । यः 'इन्द्रो न' इन्द्र इव 'पथीनां समरे' परिपन्थिभिः सह सङ्ग्रामे 'तस्थौ' स्थितवान् । नकारोऽत्रोपमार्थीयः; " उपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते " ( नि. १।२।१ ) इति हि यास्कः ॥ २० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ७–२–१ ) ॥

अथ शालाद्वार्योपस्थानमभिधाय प्रायणीयेष्टिं विधत्ते–अथ प्रायणीयमिति । शालाद्वार्योपस्थानानन्तर्यम्

**प्रत्येत्य प्रायणीयेन प्रचरति । प्रायणीयेन प्रचर्य सीरं युनक्त्येतद्वाऽएनं देवाः संस्करिष्युन्तः पुरस्ताद्वन्नेन समार्धयंस्तुथैवैनमयमेतुत्संस्करिष्यु-न्पुरस्ताद्वन्नेन समर्धयति सीरं भवति सेरथ्ँ हैतद्यत्सीरमिरामेवास्मिन्ने-तुद्दधाति ॥ २ ॥**

---

प्रत्येत्य प्रायणीयेन प्रचरति । प्रायणीयेन प्रचर्य सीरं युनक्ति । एतद्वाऽएनं देवाः संस्करि-ष्यन्तः पुरस्तादन्नेन समार्धयन् । तथैवैनमयमेतत्संस्करिष्यन् पुरस्तादन्नेन समर्धयति । सीरं भवति । सेरं हैतद्-यत् सीरम् । इरामेवास्मिन्नेतद्दधाति ॥ २ ॥

---

' अथ ' शब्दार्थः । 'प्रायणीयम्' प्राकृतं ज्योतिष्टोमिकम् अदित्यै चरुं 'निर्वपति' (का. श्रौ. सू. ७।१४० ) । ( ऐ. ब्रा. १ प. २ अ. १ ख. ) ( आ. श्रौ. सू. ४।२।१८;३।१ ) । अग्रे सीरयोजनं विधातुं प्रायणीयेष्टेः कांश्चित् पदार्थाननुवदति—तस्य हविष्कृतेत्यादिना । ' तस्य ' प्रायणीयस्य ' हविष्कृता ' हविष्कृच्छब्देन सह हविष्कृदाह्वानकाले वाग्विसर्गं कुर्यात् । हविरावापानन्तरं वा हविष्कृदाह्वानकाले वाग्विसर्गो विकल्पितः, तत्र नियमार्थोऽयमनुवादः । ' स्तम्बयजुः '—इति पुरीषहरणकर्मणो नामधेयम् । यद्वा, स्तम्बस्य यजुषा " पृथिवि देवयजनि " इत्यादिना पुरीषं लक्ष्यते, तत् पुरीषं ' हरति ' तदनु ' पूर्वेण परिग्रहेण ' वेदिं ' परिगृह्य ' ततो लिखित्वा स्फ्येन प्राचीस्तिस्रो लेखाः कृत्वा आग्नीध्रं प्रत्यध्वर्युः 'आह' ब्रूते । किमित्यपेक्षायामाह—हर त्रिरिति । ह आग्नीध्र ! त्वं कृता लेखाः त्रिवारं ' हर ' इति प्रैषार्थः । प्रेषितेनाग्नीध्रेण कर्तव्यमाह—हरति त्रिरिति॥ १॥

विहितस्य प्रायणीयहविषः प्रचारं विधत्ते—प्रत्येत्येति[१] । ' प्रत्येत्य ' महावेदेः प्रत्यागत्य ' प्रायणीयेन ' हविषा प्रचरेत् । प्रत्येत्येति वचनादेव पूर्वमुक्तं स्तम्बयजुर्हरणादिकं महावेद्यामेव कर्त्तव्यम्, न तु प्रायणीयवेद्यामिति प्रतीयते । प्रायणीयान्ते शंय्वन्ते प्राक्सोमनिवपनात् सीरयोजनं विधत्ते—प्रायणीयेन प्रचर्य सीरं युनक्तीति[२] । ' प्रायणीयेन ' प्रायणीयशेषेण प्रचारं कृत्वा, ' सीरं ' हलं ' युनक्ति ' युञ्ज्यात् । विहिते सीरयोजने प्रजापतेः सीरलक्षणेनान्नेन समर्द्धनद्वारा देवकर्तृकं संस्कारं प्रतिपादयति—एतद्वा एनमिति । ' एतत् ' एतर्हि एतस्मिन्नवसरे खलु ' एनं ' पितरं प्रजापतिं विस्रस्तावयवं चयनेन संस्करिष्यन्तो ' देवाः ' 'पुरस्तात्' ततः प्रागेव सीरलक्षणेनान्नेन समृद्धमकुर्वन् । एवमेव 'अयं' यजमानोऽपि ' एनं ' प्रजापतिं चित्याग्निरूपेण 'संस्करिष्यन्' ततः प्रागेव सीरलक्षणेनान्नेन 'समर्द्धयति' । नामनिर्वचनेन तस्यान्नरूपतामाविष्करोति—सीरं भवतीत्यादिना । इरया अन्नेन सह वर्त्तत इति सेरम्, एतदेव पारोक्ष्येण सीरमित्युच्यते । अतः कर्षणसाधनत्वेन सीरस्य विधानात् ' इराम् ' अन्नम् एव ' अस्मिन् ' संस्क्रियमाणे चित्याग्निरूपे प्रजापतौ ' एतत् ' एतर्हि ' दधाति ' स्थापयति ॥ २ ॥

---

१—प्रायणीयहविष्कृदंते महावेदेः स्फ्याग्रा सम्मर्शनात् करोति । का. श्रौ. सू. १७ । ३० । २—प्रायणीयांते सीरं युनक्ति । का. श्रौ. सू. १७ । ३१ ।

( त्यौ ) औदुम्बरं भवति। (त्यू) ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जैवैनमेतद्रसेन समर्धयति मौञ्जं परिसीर्यं त्रिवृत्तस्योक्तो बन्धुः ॥ ३ ॥

सोऽग्नेर्दक्षिणाᳫँ श्रोणिम् । ( त्र ) जघनेन तिष्ठन्नुत्तरस्याᳫँसस्य पुरस्ताद्युज्यमानमभिमन्त्रयते सीरा युञ्जन्ति कवयो युगा ऽवितन्वते पृथगिति ये ऽविद्वाᳫँसस्ते कवयस्ते सीरं च युञ्जन्ति युगानि च ऽवितन्वते पृथग्धीरा देवेषु सुम्नयेति यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वाना ऽइत्येतत् ॥ ४ ॥

---

औदुम्बरं भवति। ऊर्ग्वै रस उदुम्बरः। ऊर्जैवैनमेतद्रसेन समर्धयति। मौञ्जं परिसीर्यम्—त्रिवृत्। तस्योक्तो बन्धुः ॥ ३ ॥

सोऽग्नेर्दक्षिणां श्रोणिं जघनेन तिष्ठन्नुत्तरस्यांसस्य पुरस्ताद्युज्यमानमभिमन्त्रयते—"सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक्"—इति। ये विद्वांसस्ते कवयः। ते सीरं च युञ्जन्ति,

---

सीरोपादानभूतं वृक्षविशेषं विधाय स्तौति—औदुम्बरं भवतीति। उदुम्बरस्य विकारः औदुम्बरः। ऊर्ग्वै रस उदुम्बर इति। 'ऊर्क्' बलकरमन्नम्; तदात्मको रस एव उदुम्बरवृक्षात्मना परिणतः। अत एव श्रूयते—"देवा वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठत्" (श० प० ३। २। १। ३३) इति। ऊर्जैवैनमित्यादि। ऊर्ग्रूपेण रसेनेत्यर्थः। सीरयोजनार्थानां रज्जूनां प्रकृतिद्रव्यं विधत्ते—मौञ्जमिति। 'परिसीर्यं' परितः सीरस्य योजनायोपयुज्यमानं दाम 'मौञ्जम्' मुञ्जतृणैर्निर्मितं 'त्रिवृत्' त्रिगुणञ्च कर्त्तव्यम्। तस्योक्तो बन्धुरिति। 'तस्य' मौञ्जत्वस्य त्रिवृत्त्वस्य च स्तावकं "सैषा योनिरग्नेर्यन्मुञ्जः"—इत्यादिकम् (श. प. ब्रा. ६। ३। १। २६) "त्रिवृदग्निर्यावानग्निः"—(श. प. ब्रा. ६। ३। १। २६) इत्यादि च वाक्यं प्रागाम्नातम्, अत्रानुसन्धेयमित्यर्थः ॥ ३ ॥

युज्यमानस्य सीरस्य स्थानविशेषविशिष्टमभिमन्त्रणं विधत्ते—सोऽग्नेरिति। चेष्यमाणस्याग्नेर्यावान् भूभागः शौल्वेन मानेन चतुरस्रीकृतः, तस्य 'दक्षिणां श्रोणिं जघनेन' दक्षिणापरेण तस्य पश्चात् 'तिष्ठन्' 'उत्तरांसस्य' अग्निक्षेत्रसम्बन्धिन उत्तरपूर्वकोणस्य 'पुरस्तात्' 'युज्यमानं' सीरं युगबलीवर्दादिभिः सह रज्ज्वा बध्यमानं "सीरा युञ्जन्ति"—इति मन्त्रद्वयेन 'अभिमन्त्रयते'। अभिमन्त्रणं नाम मन्त्रेण स्मर्यमाणस्यार्थस्येक्षणपूर्वकमनुसन्धानम्। उक्तं हि—"मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्। सेक्षणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्।

---

१—औदुम्बरम्। का० श्रौ० सू० १७। ३१। २—मौञ्जं त्रिवृद्रज्जव्यम्। का० श्रौ० सू० १७। ३२।

३—पूर्वेणोत्तरां ऽसं दक्षिणामग्निश्रोणिमपरेण तिष्ठन् युज्यमानमभिमंत्रयते सीरा युंजंतीति। का. श्रौ. सू. १७। ३४।

४—नेदमनुमंत्रणम्। किंतु अभिमंत्रणम्। अभीत्याभिमुख्य इति यास्कः। आभिमुख्येन मंत्रणं—उपांशुस्वरादपि गुप्तपरिभाषणम्। अभिमंत्रणम्। मत्रि गुप्तपरिभाषणे धातुः। इति देवोव इति पात्र्यामोप्याभिमंत्रयते इति सूत्रे स्वकृतदर्शपौर्णमासपद्धतिटीकायां वैद्यनाथमिश्राः। अनुमंत्रणलक्षणं तु निगमे कात्यायनः। अंगुल्यग्रेणानुमंत्रणमिति। ततश्च वाजसनेयिनां अनुमंत्रणं अभिमंत्रणं च पृथक्पृथग् लक्षणम् इति कृत्वा सायणाचार्योक्तमस्मदनुपयुक्तमेवेति बोध्यम्।

( यु ) युनक्त सीरा वि युगा तनुध्वमिति । युञ्जन्ति हि सीरं वि युगानि तन्वन्ति कृते योनौ वपतेह बीजमिति बीजाय वाऽएषा योनिष्क्रियते यत्सीता यथा ह वाऽअयोनौ रेतः सिञ्चेदेवं तद्यदकृष्टे वपति गिरा च श्रुष्टिः सभराऽअसन्नऽइति वाग्वै गीरन्नᳬ श्रुष्टिर्नेदीयऽइत्सृण्यः पक्वमेयादिति यदा वाऽअन्नं पच्यतेऽथ तत्सृण्योपचरन्ति द्वाभ्यां युनक्ति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ५ ॥

---

युगानि च वितन्वते पृथग् । " धीरा देवेषु सुम्नया "-( वा० सं० १२ । ६७ )-इति । यज्ञो वै सुम्नम् । धीरा देवेषु यज्ञं तन्वाना इत्येतत् ॥ ४ ॥

" युनक्त सीरा वि युगा तनुध्वम् "-इति । युञ्जन्ति हि सीरं, वि युगानि तन्वन्ति । " कृते योनौ वपतेह बीजम् "-इति । बीजाय वाऽएषा योनिष्क्रियते-यत् सीता । यथा ह

---

एतदेवाभिमन्त्रणलक्षणञ्चेक्षणावधि " इति । अत्र च सीरयोजनस्य तदभिमन्त्रणस्य च भिन्नदेशकर्मकर्त्तव्यतया यौगपद्याय कर्तृभेदोऽवसीयते । तत्राभिमन्त्रणस्य संस्कार्यतया प्रधानत्वात् सीरयोजनमध्वर्युः कुर्यात्, तत्संस्कारात्मकमभिमन्त्रणं तु द्वितीयः प्रतिप्रस्थाता कुर्यात् । उक्तं हि सूत्रभाष्यकृता कर्कोपाध्यायेन-"प्रतिप्रस्थाताऽभिमन्त्रयते-सीरा युञ्जन्तीत्यनेन मन्त्रेण, योजने तु प्रधानत्वादध्वर्युः " ( का. श्रौ. सू. १७।३४। क. भा. ) इति ॥

तत्र " सीरा युञ्जन्ति " इति गायत्री प्रथमो मन्त्रः, तस्याः पूर्वार्द्धमनूद्य व्याचष्टे-सीरा युञ्जन्तीति । ये विद्वांसस्ते कवय इति । मन्त्रगतेन ' कवि '-शब्देन सीरयोजनप्रकारं सम्यग्जानानास्तदभिज्ञा विवक्षिता इत्यर्थः । सीरञ्चेति । "सुपां सुलुक्"-( पा. सू. ७।१।३९ ) इत्यनेन मन्त्रे सीरशब्दात् परस्य अमः आकारः । युगानि चेति । ' शेश्छन्दसि बहुलम् "-(पा. सू. ६।१।७० ) इति युगशब्दात् परस्य शेर्मन्त्रे लोप इत्यर्थः । उत्तरार्द्धमनूद्य व्याचष्टे-धीरा देवेष्विति । सुम्नशब्दात् परस्य द्वितीयैकवचनस्य या आदेशः (पा.सू.७।१।३९) । सुखहेतुत्वात् यज्ञः खलु सुम्नशब्दाभिधेयः । वितन्वत इति प्रकृतस्य कर्मणोऽनुषङ्गमाह-तन्वाना इत्येतदिति ॥

तदयं मन्त्रार्थः-' कवयः ' तदभिज्ञाः ' सीरं ' च ' युञ्जन्ति ' कर्मणो योग्यं बध्नन्ति षड्द्वादशादिसंख्यानामनडुहां योजनाय ' पृथक् ' भेदेन ' युगानि च ' ' वितन्वते ' विस्तारयन्ति । किं कुर्वन्तः ? ' देवेषु ' ' सुम्नम् ' अग्निचयनलक्षणं यज्ञं ' तन्वानाः ' विस्तारयन्त इति । अत एव ' धीराः ' तदुपायभूतया धिया युक्ताः ' इति ' ॥ ४ ॥

युनक्तेति त्रिष्टुप् । तद्द्वितीयोऽभिमन्त्रणमन्त्रः । पुरा परोक्षवदुक्तोऽत एवास्य पादेन प्रत्यक्षवदुच्यते । हे यजमानपुरुषाः ! ' सीरा ' पूर्ववदाकारः ( पा. सू. ७।१।३९ । ) सीरं ' युनक्त ' बध्नीत । युजेः ( धा. पा. रु. उ. ७ ) लोटि मध्यमपुरुषे बहुवचनस्य "तप्तनप्तनथनाश्च"-( पा. सू. ७।१।४५ ) इति तबादेशः ।

स दक्षिणमेवाग्रे युनक्ति । ( त्त्यु ) अथ सव्यमेवं देवत्रेतरथा मानुषे षड्गवं भवति द्वादशगवं वा चतुर्विंशतिगवं वा संवत्सरमेवाभिसम्पदम् ॥ ६ ॥

---

वाऽअयोनौ रेतः सिञ्चेद्-एवं तद्-यदकृष्टे वपति । " गिरा च श्रुष्टिः सभरा असन्नः "- इति । वाग्वै गीः, अन्नं श्रुष्टिः । " नेदीय इत्सृण्यः पक्वमेयात् "-( वा. सं. १२।६८ ) इति । यदा वाऽअन्नं पच्यते-अथ तत् सृण्योपचरन्ति । द्वाभ्यां युनक्ति-गायत्र्या च त्रिष्टुभा च । तस्योक्तो बन्धुः ॥ ५ ॥

स दक्षिणमेवाग्रे युनक्ति । अथ सव्यम् । एवं देवत्रा । इतरथा मानुषे । षड्गवं भवति, द्वादशगवं वा, चतुर्विंशतिगवं वा-संवत्सरमेवाभिसम्पदम् ॥ ६ ॥

---

अत एव श्नमोऽल्लोपाभावः । ' युगा ' पूर्ववच्छेर्लोपः ( पा. सू. ७।१।३९ ) युगानि च ' वितनुध्वं ' विस्तारयतेति । प्रत्यक्षवदुक्तार्थं श्रुतिः स्वयं परोक्षवद् व्याचष्टे-युञ्जन्ति हीति । ' सीरं युञ्जन्ति' 'युगानि' च 'वितन्वन्ति,' कवय इति शेषः ॥

द्वितीयपादमनूद्य व्याचष्टे-बीजाय वा इति । बीजवपनाय सीतारूपा योनिर्विधीयते । विपक्षे दोषमुद्भावयति-यथा ह वा इति । ' अकृष्टे ' अलिखिते ' यत् ' यदि ' वपति, ' तर्हि ' अयोनौ ' गर्भाशयादन्यत्र यथा रेतःसेकस्तथा व्यर्थं भवेदित्यर्थः ॥

तृतीयपादमनूद्य तत्रत्ययोर्गीःश्रुष्टिशब्दयोः क्रमेण वागन्नार्थतामाह-वाग्वै गीरन्नं श्रुष्टिरिति । चतुर्थपादमनूद्य तत्तात्पर्यमाह-यदा वा इति । ' यदा ' खलु समये ' अन्नं ' व्रीहियवादि स्वयं पक्वं भवति । ' अथ ' तदानीं ' सृण्या ' दात्रेण ' उपचरन्ति ' लुनन्तीत्यर्थः ॥

मन्त्रार्थस्तु,-हे यजमानपुरुषाः ' सीरा ' सीरं हलं ' युनक्त ' योजयत, ' युगा, ' युगानि ' वितनुध्वं ' विशेषेण योक्त्रप्रभृतिभिर्विस्तारयत । ' इह ' क्षेत्रे ' योनौ ' स्थाने ' कृते ' संस्कृते सति ' बीजं ' व्रीह्यादि ' वपत ' निक्षिपतेत्यर्थः । केन साधनेनेत्यपेक्षायामाह-गिरा चेति । 'गिरा' वाचा "या ओषधीः" इत्यादिवक्ष्यमाणमन्त्ररूपया च-शब्दाच्चमसेनापि, वपतेति सम्बन्धः । ' श्रुष्टिः ' व्रीह्यादिकान्नजातिः, ' सभराः ' फलकृतेन भरसा भरणेन सह वर्तत इति सभराः, अमितफलेति यावत् । तादृशी ' नः ' अस्माकं यथा ' असत् ' भवेत् । ' इत् ' शब्दोऽनर्थकः ( निरु. १ । ३ । ४ । ) ' सृण्यः ' अङ्कुशाकारस्य लवनसाधनस्य दात्रस्य ' नेदीयः ' अन्तिकतमं ' पक्वं ' व्रीह्याद्यन्नं यथा ' आ-इयात् ' आगच्छेत्, तथा वपतेति सम्बन्धः । " सृणिरङ्कुशो भवति, सरणात् "-( निरु. ९ । ४ । ९ । ) इति हि यास्कः ॥

तच्च युज्यमानाभिमन्त्रणं द्वाभ्यां गायत्रीत्रिष्टुब्भ्यां कुर्यादित्याह-द्वाभ्यामिति । तस्य द्विसंख्यायोगस्यार्थवादो " द्वाभ्यां प्रवृणक्ति द्विपाद्यजमानः "-( श. प. ६ । ६ । २ । ७ ) इत्यादिना षष्ठकाण्डे प्रागाम्नात इत्याह-तस्योक्त इति ॥ ५ ॥

विहिते सीरयोजने दक्षिणसव्ययोर्धुर्ययोः पौर्वापर्यं विधत्ते-स दक्षिणमेवाग्र इति । ' सः ' अध्वर्युः

---

१-याऽओषधीरिति त्रिचेनैर्वपत्युदपात्रवत् । का. श्रौ. सू. १७ । ५२ ।

(मु) अथैनं विकृषति । (त्यु) अन्नं वै कृषिरेतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादन्नमदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादन्नं दधाति ॥ ७ ॥

स वाऽआत्मानमेव विकृषति । न पक्षपुच्छान्यात्मंस्तदन्नं दधाति यदु वाऽआत्मन्नन्नं धीयते तदात्मानमवति तत्पक्षपुच्छान्यथ यत्पक्षपुच्छेषु नैव तदात्मानमवति न पक्षपुच्छानि ॥ ८ ॥

---

अथैनं विकृषति—अन्नं वै कृषिः । एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादन्नमदधुः । तथैवास्मिन्नयमेतत् संस्करिष्यन्पुरस्तादन्नं दधाति ॥ ७ ॥

स वाऽआत्मानमेव विकृषति—न पक्षपुच्छानि । आत्मंस्तदन्नं दधाति । यदु वाऽआत्मन्नन्नं धीयते—तदात्मानमवति, तत्पक्षपुच्छानि । अथ यत्पक्षपुच्छेषु—नैव तदात्मानमवति, न पक्षपुच्छानि ॥ ८ ॥

---

दक्षिणमेव ' धुर्यं प्रथमं युञ्ज्यात्, तदनु ' सव्यं ' वामं धुर्यमित्यर्थः । ' एवम् ' उक्तकरणम् ' देवत्रा ' देवेषु कृतं स्यात्; मनुष्यव्यवहारे तु ' इतरथा ' सव्यः पूर्वो, दक्षिणः पश्चादिति भेदः ॥

सीरयोजने अनडुहां वैकल्पिकं सङ्ख्यात्रितयं विधत्ते—षड्गवमित्यादिना । षड्गावः समाहृताः षड्गवम् । " तद्धितार्थोत्तरपदसमाहारे च "—( पा. सू. २ । १ । ५१ । ) इति समाहारे तत्पुरुषैकदेशो द्विगुः । ततो " गोरतद्धितलुकि "—( पा. सू. ५ । ४ । ९२ ) इति टच् समासान्तः । तथा ' द्वादशगवम्, ' ' चतुर्विंशतिगवं ' चेति पक्षौ । तत्रापि पक्षद्वये तथैव समासः, समासान्तश्च । " षड् द्वादश चतुर्विंशतिं वा युनक्ति पूर्वेणोत्तरांसम् "—( का. श्रौ. सू. १७ । ३३ । ३४ ) इति हि सूत्रम् । सङ्ख्यात्रितयेऽप्युपपत्तिमाह—संवत्सरमेवेति । सम्पद्यत इति सम्पत् । षडृतु—द्वादशमास—चतुर्विंशत्यर्द्धमाससम्पत्त्यात्मको यस्तं तादृशं संवत्सरमभिलक्ष्य त्रयोऽप्येते पक्षा उपपन्ना इत्यर्थः ॥ ६ ॥

अथ चित्याग्निक्षेत्रमध्ये विकर्षणं विधत्ते—अथैनमिति । ' एनम् ' आत्मानम् । तदेव कर्षणमन्नात्मना स्तौति—अन्नं वा इति । ' अन्नं ' खलु ' कृषिः '; तद्धेतुत्वात् । कृष्टे एव हि सम्यगन्नं पच्यते । कर्षणमेव तद्देवकर्तृकान्नाधानतया स्तौति—एतद्वा इति । ' पुरस्तात् ' चयनात् प्रागेव ' देवाः ' संस्कारं करिष्यन्तः ' अस्मिन् ' आत्मनि ' एतत् ' एतेन कर्षणेन 'अन्नम्' एव स्थापितवन्तः, तथैवायं यजमानोऽपि इति ॥७॥

अथ पक्षपुच्छानि विहायात्मन्येव कर्षणं विधत्ते—स वा आत्मानमिति[1] । आत्मंस्तदिति । ' तत् ' तेन विकर्षणेन ' आत्मन् ' आत्मनि ' अन्नम् ' एव स्थापितवान् भवति । अथात्मन्यन्नाधानं स्तौति—यदु वा इति । ' आत्मन् ' आत्मनि यदेव ' अन्नम् ' ' धीयते ' स्थाप्यते, ' तत् ' एवान्नं पक्षपुच्छसहितम् ' आत्मानं ' रक्षति । पक्षपुच्छेष्वन्नाधानं त्वकिञ्चित्करमित्याह—अथ यदित्यादिना ॥ ८ ॥

---

१—आत्मनि कृषत्यनुपरिश्रिच्छुन२ सुफाला इति प्रत्यृचम् । का. श्रौ. सू. १७ । ३५ ।

सु दक्षिणार्धेनाग्नेः । ( उ ) अन्तरेण परिश्रितः प्राचीं प्रथमाᳪं सीतां कृषति शुनᳪं सुफाला विकृषन्तु भूमिᳪं शुनं कीनाशा ऽअभियन्तु वाहैरिति शुनᳪं शुनमिति यद्वै समृद्धं तच्छुनᳪं समर्धयत्येवैनामेतत् ॥ ९ ॥

( उ ) अथ जघनार्धेनोदीचीम् । ( ऋघृ ) घृतेन सीता मधुना समज्यतामिति यथैव यजुस्तथा बन्धुर्विश्वैर्देवैरनुमता मरुद्भिरिति विश्वे च

---

स दक्षिणार्द्धेनाग्नेरन्तरेण परिश्रितः प्राचीं प्रथमां सीतां कृषति । "शुनं सुफाला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः"–(वा० सं० १२ । ६९) इति । शुनं शुनमिति । यद्वै समृद्धम्–तच्छुनम् । समर्धयत्येवैनामेतत् ॥ ९ ॥

अथ जघनार्धेनोदीचीम् । "घृतेन सीता मधुना समज्यताम्"–इति । यथैव यजुस्तथा बन्धुः । "विश्वैर्देवैरनुमता मरुद्भिः"–इति । विश्वे च वै देवा मरुतश्च वर्षस्येशते । "ऊर्जस्वती पयसा पिन्वमना"–इति । रसो वै पयः । ऊर्जस्वती रसेनान्नेन पिन्वमाना–इत्येतत् ।

---

अथ परिश्रितां समीपे आत्मनो दक्षिणभागेऽन्तरतः प्रागायतां सीतां विधत्ते–स दक्षिणार्द्धेनेति[1] । 'परिश्रितोऽन्तरेण' तत्संलग्नमेव चित्याग्नेः आत्मनो 'दक्षिणार्द्धेन' दक्षिणपार्श्वे प्रागपवर्गां 'प्रथमां' 'सीतां' लाङ्गलपद्धतिं कृषेत् । "अन्तराऽन्तरेणयुक्ते"–इति (पा. सू. २ । ३ । ४ ।) परिश्रिच्छब्दे द्वितीया । तत्र पूर्वार्द्धोपादानेन मन्त्रं विधाय तत्रत्यशुनशब्दस्य समृद्धार्थवाचकतया प्रथमसीतायाः समर्द्धनमाह–शुनं सुफाला इत्यादिना ॥

मन्त्रस्यायमर्थः–"शुनम् इति सुखनाम" (निघं. ३ ।६। १) तच्च क्रियाविशेषणम् । 'सु' शोभनाः 'फालाः' लाङ्गलाग्रस्थिताः कुशीभेदाः 'शुनं' सुखम् यथा स्यात् तथा 'भूमिं' 'विकृषन्तु' विलिखन्तु, 'फाला'–इति "ञिफला विशरणे"–(धा. पा. भ्वा. प. ९१७) इति । फालयन्ति भूमिं विदारयन्ति ते फालाः । 'कीनाशाः' कर्षकाः । 'वाहैः' अनडुद्भिः सहिताः 'शुनं' सुखम् 'अभियन्तु' अभिगच्छन्तु । "कीनाशस्तु कदर्ये स्याद्राक्षसे कर्षुके यमे"–इत्यनेकार्थतिलकः । 'शुनासीरा' द्विवचनस्य "सुपां सुलुक्"–(पा. सू. ७।१ । ३९) इति डादेशः । वाय्वादित्यावित्यर्थः । तौ 'हविषा' उदकेन 'तोशमाना' भूमिं निघ्नन्तौ । "तोशतिर्वधकर्मा"–(निघं. २ । १९ । २९) 'अस्मे' अस्मभ्यम् 'ओषधीः' व्रीह्यादिकान्यन्नानि 'सुपिप्पलाः' शोभनफलोपेताः 'कर्त्तन' कुरुतम् । "शुनो वायुः, शुएत्यन्तरिक्षे; सीर आदित्यः, सरणात्"–(निरु. ८ । ४ । ६) इति हि यास्कः । 'हविः'–शब्दः उदकनामसु "कम्, अन्नं, हविः"–(निघ. १ । १२ । ६९) इति पठितः । 'कर्त्तन' इति,–"तप्तनप्तनथनाश्च"–(पा. सू. ७ । १ । ४५) इति तनप् । द्वित्वे बहुवचनं छान्दसम् ॥ ९ ॥

ततो दक्षिणश्रोणेरारभ्योदगपवर्गां पश्चिमपार्श्वे द्वितीयां सीतां विधत्ते–अथ जघनार्द्धेनेति[2] । तत्र मन्त्रं विधत्ते–घृतेनेति । तत्र तु प्रथमपादो निगदव्याख्यात इत्याह–यथैव यजुरिति । द्वितीयपादेऽनुमतेति

---

१–दक्षिणतः प्राचीम् । का० श्रौ० सू० १७ । ३६ । २–प्रदक्षिणमितराः । का. श्रौ. सू. १७ । ३७ ।

वै देवा मरुतश्च व्वर्षस्येशतऽऊर्जस्वती पयसा पिन्वमानेति रसो वै पय ऽऊर्जस्वती रसेनान्नेन पिन्वमानेत्येतदस्मान्त्सीते पयसाऽभ्याववृत्स्वे-त्यस्मान्त्सीते रसेनाभ्याववृत्स्वेत्येतत् ॥ १० ॥

( ३ ) अथोत्तरार्धेन प्राचीम् । ( चीलां ) लाङ्गलं पवीरवदिति लाङ्गलᳫँ रयिमदित्येतत्सुशेवᳫँ सोमपित्सर्वित्यन्नं वै सोमस्तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणमित्येतद्धि सर्वᳫँ सीतोद्वपति ॥ ११ ॥

---

" अस्मान्त्सीते पयसाऽभ्याववृत्स्व "–( वा० सं० १२ । ७० ) इति । अस्मान्त्सीते रसेना-भ्याववृत्स्वेत्येतत् ॥ १० ॥

अथोत्तरार्धेन प्राचीम् । " लाङ्गलं पवीरवत् "–इति । लाङ्गलं रयिमदित्येतत् । " सुशेवं सोमपित्सरु "–इतिं । अन्नं वै सोमः । " तदुद्वपति गामविं प्रफर्व्यं च पीवरीम् । प्रस्थावद्रथवाहणम् "–(वा. सं. १२ । ७१) इति । एतद्धि सर्वं सीतोद्वपति ॥११॥

---

शब्दस्य विश्वदेवानां मरुतांश्च वृष्टेरीशितृत्वं प्रयोजकमिति व्याचष्टे–विश्वे च वै देवा इति । ' वर्षस्य ' वृष्टेः ' ईशते ' प्रयोजका भवन्ति । " अधीगर्थ "–( पा. सू. २ । ३ । ५२ । ) इति कर्मणि षष्ठी । तृतीयपादे पयःशब्दस्य रसोऽर्थः इति व्याचष्टे–रसो वै पय इति । तत्रैव ' पिन्वमाना '–इति पदमध्याहृत्यान्नपदे-नान्वेतीति व्याचष्टे–अन्नेन पिन्वमानेत्येतादिति । चतुर्थेऽपि पयःशब्दो रसवचन एव ॥

मन्त्रस्यायमर्थः–'सीता' पश्चिमत उदीची क्रियमाणा लाङ्गलपद्धतिः ' मधुना घृतेन ' मधुरेणोदकेन ' सम-ज्यतां ' संसिच्यताम् । " घृतमित्युदकनाम, जिघर्त्तेः सिञ्चतिकर्मणः "–( निरु. ७ । ७ । १ ) इति हि यास्कः । ' विश्वैर्देवैः ' वृष्टेरीशानैः ' मरुद्भिश्च ' गणदेवैः ' अनुमता ' अभ्यनुज्ञाता, तथा ' पयसा ' रसेन ' ऊर्जस्वती ' बलकररसोपेता, तथा ' पिन्वमाना ' सेचनं कुर्वती, अन्नेनेति शेषः । तथा श्रुतिरेव व्याचष्टे–अन्नेन पिन्वमानेत्येतदिति । एवं स्तुते हे ' सीते ! ' त्वम् ' अस्मान् ' 'अभ्याववृत्स्व' अतिशयेनाभिमुख-मावृत्ता भवेत्यर्थः ॥ १० ॥

अथोत्तरपार्श्वे प्रागपवर्गां तृतीयां सीतां विधत्ते–अथोत्तरार्द्धेनेति[१] । " प्रकृत्या साधुः "–इतिवत्–" तृतीया सप्तम्यर्थे "–( पा. सू. २ । ३ । १८ सू. वा. ) । तत्र मन्त्रं विधत्ते–लाङ्गलमिति । तत्र प्रथमपादे भूमेः खननेन श्रीरूपान्ननिष्पादनद्वारा फालस्य साधनत्वात् लक्षणया पवीरवद्रयिमदिति व्याचष्टे–लाङ्गलं रयिमदिति । द्वितीये पादे ' सोमपित्सरु '–इति पदैकदेशभूतस्य सोमशब्दस्यान्नमर्थ इत्याह–अन्नं वै सोम इति । उत्तरार्द्धपरिष्ठितस्य पदार्थजातस्य सीतैवोद्गमयित्रीत्याह–एतद्धि सर्वं सीतोद्वपतीति । ' उद्वपति ' उद्गमयतीत्यर्थः ॥

---

१–तूष्णीं तिस्रस्तिसः प्रदक्षिणम् । का. श्रौ. सू. १७ । ३८ ।

१७२१

( त्यु ) अथ पूर्वार्धेन दक्षिणाम् । कामं कामदुघे धुक्ष्व मित्राय व्वरुणाय च ॥ इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्यऽओषधीभ्यऽइति सर्वदेवत्या वै कृषि-रेताभ्यो देवताभ्यः सर्वान्कामान्धुक्ष्वेत्येतदित्यग्रे कृषत्यथेति । अथेत्य-थेति तद्दक्षिणावृत्तद्धि देवत्रा ॥ १२ ॥

---

अथ पूर्वार्धेन दक्षिणाम् । " कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः "–( वा. सं. १२ । ७२ ) इति । सर्वदेवत्या वै कृषिः । एताभ्यो देवताभ्यः सर्वान्कामान्धुक्ष्वेत्येतत् । इत्यग्रे कृषति, अथेति, अथेति, अथेति–तद्दक्षिणावृत् । तद्धि देवत्रा ॥ १२ ॥

---

मन्त्रार्थस्तु–' लाङ्गलं ' हलं ' पवीरवत् ' पविः धारा, सा अस्यास्तीति पवीरं फालः । रो मत्वर्थे, दैर्घ्यं तु च्छान्दसम्;–तत् पवीरमस्य लाङ्गलस्यास्तीति पवीरवत्, फालसंयुक्तमित्यर्थः । ' शेवमिति '–सुख-नाम ( निघं. ३ । ६ । १७ ) । सुष्ठु शोभनं शेवयति सुखयति तत् 'सुशेवम्' । सोमं पिबतीति ' सोमपाः ' यजमानः, तस्मिन् ' सोमपि ' यजमाने ' त्सरति ' पापादिकं नाशयतीति ' सोमपित्सरु ' । यद्वा, सोममन्नं पाति रक्षति स सोमपाः, तस्मिन् वर्त्तमानम् अशनायादुःखं त्सरति नाशयति इति तथा; श्रुतेरभिमतमेतद् व्याख्यानम् । सोमपीत्यत्र सप्तम्याः अलुक् छान्दसः ( पा. सू. ६। ३ । ९ ) । यदित्थम्भूतं लाङ्गलम्, ' तत् ' कर्तृ गवादिरथवाहनान्तम् ' उद्वपति ' उद्गमयति । 'गां' गोजातिम् । 'अविं' मेषजातिम् । ' प्रफर्व्यं ' प्रथमयुवतिं तरुणीमित्यर्थः । फर्वतिर्गतिकर्मा । प्रकर्षेण फर्व्या गम्या, ताम्; छान्दसो ह्रस्वः । कीदृशीं ताम् ? 'पीवरीम्' उन्नतस्तनकपोलाम्, 'प्रस्था' प्रस्थानम् तद्वत् उत्कृष्टजवोपेतम्, ' रथवाहणम् ' अश्वं रथं वहतीति यानम् ॥ ११ ॥

अथ पूर्वपार्श्वे दक्षिणापवर्गां चतुर्थीं सीतां विधत्ते–अथ पूर्वार्द्धेनेति[1] । तत्र मन्त्रः–" कामं कामदुघे " इति–( वा. सं. १२ । ७२ )। मन्त्रस्यायमर्थः–हे ' कामदुघे ' कामानां प्रपूरणे ! हे सीते ! ' मित्राय वरु-णाय च, ' तथा ' इन्द्राय ', ' अश्विभ्यां ' युग्मदेवाभ्यां ' पूष्णे प्रजाभ्य ओषधीभ्यः ' च ' कामं ' काम्यमानं फलं ' धुक्ष्व ' प्रपूरय । ' इति '–शब्दो मन्त्रसमाप्तिद्योतकः । कृषेः सर्वदेवतासम्बन्धद्वारा मन्त्रोक्तदेवताभ्यः कामप्रपूरणमाशास्यमिति मन्त्रतात्पर्यमाह–सर्वदेवत्या वै कृषिरिति । इत्थं दक्षिणादिचतसृषु दिक्षु प्रादक्षि-ण्येन कृतं कर्षणमभिनयेन निर्दिश्य स्तौति–इत्यग्रे इति । ' अग्रे ' प्रथमम, ' इति ' अनेन प्रकारेण " स दक्षिणार्द्धेन " इत्युक्तलक्षणेन दक्षिणतः प्राचीं सीतां कृषति । ' अथ ' अनन्तरम्, 'इति' अनेन प्रका-रेण " अथ जघनार्द्धेन "–इत्युक्तलक्षणेन पश्चिमतः उदीचीं कृषति । 'अथ' अनन्तरम्, 'इति' अनेन प्रकारेण " अथोत्तरार्द्धेन "–इत्युक्तलक्षणेन उत्तरतः प्राचीं कृषति । ' अथ ' अनन्तरम्, ' इति ' अनेन प्रकारेण "अथ पूर्वार्द्धेन "–इत्युक्तलक्षेन पूर्वस्यां दिश्युदग्दक्षिणायतां सीतां कृषति । 'तत्' एवं सति 'दक्षिणा-वृत् ' प्रादक्षिण्येनावृत्तिर्भवति । ' तत् ' खलु ' देवत्रा ' देवसम्बन्धिनि कर्मणि योग्यम् । तदुक्तमापस्तम्बेन–" यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोति "–इति ( आपस्तं. श्रौ. सू. २४ । २ । १९ ) ॥ १२ ॥

---

१–तिर्यगनूके । का. श्रौ. सू. १७ । ३९ ।

चुतस्रः सीता युजुषा कृषति । तद्यच्चतसृषु दिक्ष्वन्नं तुदस्मिन्नेतद्दधाति तद्वै युजुषाऽद्धा वै तद्यद्युजुरद्धो तद्यदिमा दिशः ॥ १३ ॥

( शो॒ऽथा ) अथात्मानं विकृषति । तद्यदेव संवत्सरेऽन्नं तुदस्मिन्नेतद्दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीᳪं सुर्वं वाऽअनिरुक्तᳪं सुर्वेणैवास्मिन्नेतदन्नं दधातीत्यग्रे कृषत्यथेति । अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥ १४ ॥

---

चतस्रः सीता यजुषा कृषति । तद् यच्चतसृषु दिक्ष्वन्नम्–तदस्मिन्नेतद्दधाति । तद्वै यजुषा । अद्धा वै तद्–यद्यजुः । अद्धो तद्–यदिमा दिशः ॥ १३ ॥

अथात्मानं विकृषति । तद्यदेव संवत्सरेऽन्नम्–तदस्मिन्नेतद्दधाति । तूष्णीम् । अनिरुक्तं वै तद्–यत्तूष्णीम् । सर्वं वाऽअनिरुक्तम् । सर्वेणैवास्मिन्नेतदन्नं दधाति । इत्यग्रे कृषति, अथेति, अथेति, अथेति–तद्दक्षिणावृत् । तद्धि देवत्रा ॥ १४ ॥

---

उक्तं कर्षणं समन्त्रकमनूद्य स्तौति–चतस्र इति । "स दक्षिणार्द्धेन" इत्यादिना चतसृषु दिक्षु क्रमेण प्रोक्ताः चतस्रः सीताः "शुनं सुफाला विकृषन्तु भूमिम्" इत्यादिना–'यजुषा' यजुर्वेदपठितमन्त्रेणेत्यर्थः । चतसृषु दिक्ष्वित्यादि । प्रागादिषु दिक्षु 'यत्' प्रसिद्धं कृष्टपच्यं व्रीहियवादिकम् 'अन्नम्' अस्ति, 'तत्' 'अस्मिन्' अग्नौ यजमाने वा 'एतत्' एतेन कर्षणेन 'दधाति' स्थापयति ॥

यजुर्मन्त्रेण कर्षणं प्रकारान्तरेण स्तौति–तद्वा इति । 'तत्' खलु कर्षणं 'यजुषा' क्रियते, यजुरिति यदस्ति, 'तत् अद्धा वै' अनुष्ठेयार्थप्रकाशकत्वात् प्रत्यक्षतो विस्पष्टम्, 'इमाः' प्रागाद्याः 'दिशः' च प्रत्यक्षत्वाद् विस्पष्टतराः; अतो यजुषो दिशाश्चाद्धात्वसाम्याद् दिक्षु यजुषा कर्षणं युक्ततरमिति भावः ॥ १३ ॥

अमन्त्रकं द्वादशसङ्ख्याकानां सीतानां कर्षणं विधाय स्तौति–अथात्मानमित्यादिना । यदेव संवत्सर इति । सीतानां संवत्सरसम्बन्धिनां मासानां च द्वादशसङ्ख्यासाम्यात् कृत्स्ने संवत्सरे यदेव व्रीहियवादिकमन्नं पच्यते, 'तत्' सर्वम् 'अस्मिन्' अग्नौ 'एतत्' एतेन द्वादशसीताकर्षणेन 'दधाति' स्थापयतीत्यर्थः ॥

अमन्त्रकत्वमनूद्य स्तौति–तूष्णीमिति । 'तूष्णीम्' अमन्त्रं कृषेत् । 'तूष्णीम्' इति यदस्ति, तत् 'अनिरुक्तं वै' मन्त्रवाक्येन कस्यचिदर्थस्य निष्कृष्यानभिधानात् । अत एव तदनिरुक्तं सर्वात्मकम्, अतः 'सर्वेणैव' साधनेन 'अस्मिन्' अग्नौ 'अन्नं' स्थापितं भवतीत्यर्थः ॥

पूर्ववदत्राप्यभिनयेन कर्षणप्रकारं निर्दिश्य स्तौति–इत्यग्र इति । 'इति' अनेन प्रकारेण 'अग्रे' प्रथममात्मनो दक्षिणार्द्धमारभ्य उत्तरार्द्धपर्यन्तं 'कृषति' कर्षणं कुर्यात् । 'अथ' अनन्तरम्, 'इति' अनेन प्रकारेण दक्षिणां श्रोणिमारभ्य उत्तरांसपर्यन्तमक्ष्णया विकृषेत् । 'अथ' अनन्तरम्, 'इति' अनेन प्रकारेण पश्चाद्भागमारभ्य पूर्वार्द्धपर्यन्तं विकृषेत् । एतदनन्तरम्, 'इति' अनेन प्रकारेणोत्तरां श्रोणिमारभ्य दक्षिणांसपर्यन्तं विकृषेत्, इममेवार्थमभिप्रेत्य सूत्रितम्–"तूष्णीं तिस्रस्तिस्रः प्रदक्षिणं, तिर्यगनूके, अक्ष्णया श्रोण्यंसयोरनूके श्रोण्यंसयोः"–( का. श्रौ. सू. १७ । ३८–४० ) इति । 'तत्' तथा उक्तप्रकारेण कर्षणे सति प्रदक्षिणावर्त्तनं सिध्यति । तच्च 'देवत्रा' देवेषु योग्यम् । "देवमनुष्य"–( पा. सू. ५।४।५६ । ) इत्यादिना सप्तम्यर्थे त्रा–प्रत्ययः ॥ १४ ॥

तिस्रुस्तिस्रः सीताः कृषति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १५ ॥

द्वादश सीतास्तूष्णीं कृषति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥

ताऽउभय्यः षोडश सम्पद्यन्ते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसंमितमेवास्मिन्नेतदन्नं दधाति यदु वाऽआत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १७ ॥

---

तिस्रस्तिस्रः सीताः कृषति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतदन्नं दधाति ॥ १५ ॥

द्वादश सीतास्तूष्णीं कृषति । द्वादश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥

ता उभय्यः षोडश सम्पद्यन्ते । षोडशकलः प्रजापतिः । प्रजापतिरग्निः । आत्मसंमितमेवास्मिन्नेतदन्नं दधाति । यदु वाऽआत्मसंमितमन्नं—तदवति, तन्न हिनस्ति । यद्भूयो—हिनस्ति तत् । यत्कनीयः—न तदवति ॥ १७ ॥

---

विहितानाममन्त्रकाणां चतसृणां सीतानां प्रत्येकं त्रित्वं विधाय स्तौति—तिस्रस्तिस्र इति । त्रिवृदग्निरित्यादि । स्तोत्रियानवकात्मको हि त्रिवृत्स्तोमः ( सा. वे. तां. ब्रा. ३ । ९ । २ । ३ ) अग्नेरपि रुद्रादिनामाष्टकाभिधेयैरष्टाभिरग्निरूपैः स्वात्मना च नवसङ्ख्योपेतत्वात् त्रिवृत्त्वम् । तथा हि—"तमब्रवीद्रुद्रोऽसि" इत्यारभ्य "तान्येतान्यष्टावग्निरूपाणि कुमारो नवमः, सैवाग्नेस्त्रिवृत्ता" इति षष्ठे समाम्नातम् ( श. प. ६।१।३।१० ) । एष च यावान् यत्परिमाणविशिष्टोऽग्निः, 'अस्य' अग्नेः 'यावती' यत्परिमाणविशिष्टा 'मात्रा' अवयवः, 'तावता' तादृक्परिमाणविशिष्टेन कृत्स्नेन चाग्निरूपेण 'अस्मिन्' चीयमानेऽग्नौ यजमाने वा 'एतत्' एतेन त्रिसङ्ख्यायुक्तेन कर्षणेन 'अन्नं' धारयति । एवं सर्वत्र त्रिवृदग्निरिति वाक्यशेषो व्याख्येयः ॥ १५ ॥ १६ ॥

अमन्त्रकसीतासङ्ख्यां सम्भूय प्रशंसति—ता उभय्य इति । 'उभय्यः' उभयविधाः, समन्त्रकामन्त्रकभेदेन द्विविधाः सम्भूय षोडशसङ्ख्याका भवन्ति । 'षोडशकलः' षोडशावयवसमुदायो हि स्थूलशरीराभिमानी विराडात्मकः प्रजापतिरभिधीयते । तथा हि;—तस्य ज्ञानेन्द्रियाणि पञ्च, तथा कर्मेन्द्रियाणि, मन एकम्, पञ्चभिर्भूतैर्वा प्राणैर्वा सह षोडश कलाः । गतमन्यत् । आत्मसम्मितमिति । आत्मना शरीरेण समानम् मितम्, न तु न्यूनमधिकं वेत्यर्थः । आत्मसम्मितान्नस्य तृप्तिहेतुतामाह—यदु वा इति । 'यत्' खलु 'आत्मसम्मितमन्नम्' 'तद्' भोक्तॄन् 'अवति' रक्षति । अत एतदन्नं सात्म्यं सत् 'न हिनस्ति' न बाधते । अधिकन्यूनयोरुक्तवैपरीत्यं क्रमेणाह—यद्भूय इति । 'भूयः' बहुलतरमात्मनोऽधिकम्, 'कनीयः' अल्पतरमात्मनोऽपर्याप्तमित्यर्थः ॥ १७ ॥

यद्वेवैनं विकृषति । (त्ये) एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तात्प्राणानदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तात्प्राणान्दधाति लेखा भवन्ति लेखासु हीमे प्राणाः ॥ १८ ॥ (शतम् ४०००)

(श्रु) चतस्रः सीता यजुषा कृषति । तद्यऽइमे शीर्षंश्चत्वारो निरुक्ताः प्राणास्तानस्मिन्नेतद्दधाति तद्वै यजुषाऽद्धा वै तद्यद्यजुरद्धो तद्यदिमे शीर्षन्प्राणाः ॥ १९ ॥

(०) यद्वेवात्मानं विकृषति । यऽएवेमेऽन्तरात्मन्प्राणास्तानस्मिन्नेतद्दधाति तूष्णीं को हि तद्वेद यावन्त ऽइमेऽन्तरात्मन्प्राणाः ॥ २० ॥

---

यद्वेवैनं विकृषति । एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तात् प्राणानदधुः । तथैवास्मिन्नयमेतत्संस्करिष्यन् पुरस्तात्प्राणान्दधाति । लेखा भवन्ति । लेखासु हीमे प्राणाः ॥ १८ ॥

चतस्रः सीता यजुषा कृषति । तद्य इमे शीर्षंश्चत्वारो निरुक्ताः प्राणाः । तानस्मिन्नेतद्दधाति । तद्वै यजुषा । अद्धा वै तद्यद्यजुः । अद्धो तद्—यदिमे शीर्षन्प्राणाः ॥ १९ ॥

यद्वेवात्मानं विकृषति । यऽएवेमेऽन्तरात्मन्प्राणाः—तानस्मिन्नेतद्दधाति । तूष्णीम् । को हि तद्वेद—यावन्त इमे प्राणाः ॥ २० ॥

---

विकर्षणं प्रकारान्तरेण स्तोतुमनुवदति—यद्वेवैनमिति । पुरा खलु पितरं प्रजापतिं ' संस्करिष्यन्तो देवाः ' ' पुरस्तात् ' चयनलक्षणात् संस्कारात् पूर्वम् ' अस्मिन् 'प्रजापतौ 'प्राणान्' ' एतत् ' एतेन विकर्षणेन 'अदधुः' अधारयन् । ' तथैव ' ' अयं ' यजमानोऽपि ' संस्करिष्यन् ' ' अस्मिन् ' चेष्यमाणेऽग्निलक्षणे प्रजापतौ पूर्वं ' प्राणान् ' स्थापयति । कथमेतदित्यत आह—लेखा भवन्तीति । ' हि ' यस्माल्लोके चक्षुरादिगोलकात्मिकासु ' लेखासु ' रेखासु ' इमे ' ' प्राणाः ' चक्षुरादीन्द्रियाणि वर्त्तन्ते; अतस्तेषामत्र स्थाप्यमानानां सञ्चरणार्थं कर्षणेन रेखाकरणं युक्तमिति भावः ॥ १८ ॥

समन्त्रकं कर्षणमनूद्य सङ्ख्याद्वारा स्तौति—चतस्र इति । ' शीर्षन् ' शीर्ष्णि शिरसि ' ये इमे चत्वारो निरुक्ताः ' चक्षुः, श्रोत्रं, नासिका, मुखमिति निःशेषेणोक्ताः प्रकाशमानाः ' प्राणाः, ' तान् ' ' अस्मिन् ' अग्नौ एतेन सयजुष्केण सीताचतुष्टयेन स्थापितवान् भवति । एतदेव विवृणोति—तद्वै यजुषेति । अद्धेत्यादि । प्रागुक्तार्थम् ॥ १९ ॥

अमन्त्रकं कर्षणमनूद्य स्तौति—यद्वेवात्मानमिति । ' अन्तरात्मन् ' आत्मनि देहे अन्तर्मध्ये ' य एवेमे ' ' प्राणाः ' प्राणवृत्तयः प्राणापानादिलक्षणाः, मनोबुद्ध्यादिरूपा अन्तःकरणवृत्तयश्च, 'तान् '' अस्मिन् ' अग्नौ ' एतत् ' एतेनामन्त्रककर्षणेन ' दधाति ' स्थापयति । एतदेव विवृणोति—तूष्णीमिति । ' यावन्तः ' यत्परिमाणविशिष्टाः ' इमे ' अन्तरात्मन्यवस्थिताः ' प्राणाः ' इति, ' को ' नाम ' तद्वेद ' ? तेषाम् आनन्त्यात्; किन्तु न कश्चिदपि वेत्तुं शक्नोति । तस्मादनिरुक्तानां तेषां सङ्ग्रहणाय तूष्णीमात्मनो द्वादशसीताकर्षणं युक्तमित्यर्थः ॥ २० ॥

(८) अथैनान्विमुञ्चति । ( त्या ) आप्त्वा तं कामं यस्मै कामायैनान्युङ्क्ते विमुच्यध्वमघ्न्याऽइत्यघ्न्या हैते देवत्रा देवयानाऽइति दैवꣳ ह्येभिः कर्म करोत्यगन्म तमसस्पारमस्येत्यशनाया वै तमोऽगन्मास्याऽअशनायायै पारमित्येतज्ज्योतिरापामेति ज्योतिर्ह्याप्नोति यो देवान्यो यज्ञमथैनानुदीचः प्राचः प्रसृजति तस्योक्तो बन्धुस्तानध्वर्यवे ददाति स हि तैः करोति तांस्तु दक्षिणानां कालेऽनुदिशेत् ॥ २१ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ७ । १ । ४ ॥ ( २–२ )

इति प्रथमप्रपाठकः समाप्तः ॥ ७–१ ॥

---

अथैनान्विमुञ्चति । "आप्त्वा तं कामम्, यस्मै कामायैनान्युङ्क्ते विमुच्यध्वमघ्न्याः"–इति । अघ्न्या हैते । "देवत्रा देवयानाः"–इति । दैवं ह्येभिः कर्म करोति । "अगन्म तमसस्पारमस्य"–इति । अशनाया वै तमः । अगन्मास्याऽअशनायायै पारमित्येतत् । "ज्योतिरापाम"–इति । ज्योतिर्ह्याप्नोति । यो देवान्, यो यज्ञम् । अथैनानुदीचः प्राचः प्रसृजति । तस्योक्तो बन्धुः । तानध्वर्यवे ददाति । स हि तैः करोति । तांस्तु दक्षिणानां कालेऽनुदिशेत् ॥ २१ ॥

---

कर्षणानन्तरमनडुहां विमोचनं विधत्ते–अथैनानिति[1] । अघ्न्या इत्यादि । 'यस्मै' खलु प्रयोजनाय 'एनान्' पूर्वं युक्तवान्, 'तं' कामं कर्षणलक्षणं प्रयोजनम् 'आप्त्वा' लब्ध्वा तेषां विमोचनं युक्तमिति शेषः ॥

विमोचने मन्त्रं विधाय व्याचष्टे–विमुच्यध्वमिति । "अघ्न्या"–इति गोनाम ( निघ. । २ । ११ । १ ) । एते खल्वनड्वाहो 'देवत्रा' देवेषु 'अघ्न्याः' अहन्तव्याः, देवसम्बन्धिनो गाव इत्यर्थः । दैवꣳ ह्येभिरिति । 'एभिः' अनडुद्भिः 'दैवं' देवसम्बन्धि कर्षणलक्षणं 'कर्म करोति' । तस्माद्देवान् याति प्राप्नोत्येभिरिति व्युत्पत्त्या 'देवयानाः'–इत्यनडुद्विशेषणं युक्तमिति भावः ॥

द्वितीयं पादमनूद्य तत्रत्यतमःशब्दस्य विवक्षितमर्थमाह–अगन्मेति । अशनस्येच्छा 'अशनाया' क्षुत्पीडा । स्पष्टमन्यत् । ज्योतिर्हीत्यादि । यो हि हविःप्रदातृत्वेन यज्ञं, तत्रत्यान् देवांश्च प्राप्नोति, एष हि 'ज्योतिः' ज्योतिर्मयं स्वर्गादिभोगयोग्यं शरीरम् 'आप्नोति,' अत एव तैत्तिरीयके समाम्नायते–"सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि"– ( तै. सं. ५ । ४ । १ । ३ ) इति । अतोऽत्र मन्त्रे "ज्योतिरापाम"–इति ज्योतिराप्तिप्रतिपादनं युक्ततरमित्यर्थः ॥

उत्तरपूर्वस्यां दिशि तेषामनडुहां प्रस्थापनं विधत्ते–अथैनानुदीच इति ( का. श्रौ. सू. १७ । ४५ ) । 'अथ' विमोचनानन्तरमेव अनडुहः 'उदीचः' उदङ्मुखान् 'प्राचः' प्राङ्मुखांश्च कृत्वा 'प्रसृजति' प्रस्थापयति । प्रागुदक्त्वस्य स्तावकं प्रागाम्नातं वाक्यशेषमतिदिशति–तस्योक्त इति । "एषा होभयेषां देवमनुष्याणां दिग्यदुदीची–प्राची" ( श. प. ६ । ६ । २ । ३ ) इत्यादि ॥

तेषां दक्षिणाकाले दानं विधत्ते–तानध्वर्यव इति । अत एव सूत्रितम्–"दक्षिणाकालेऽध्वर्यवे ददाति"–

---

१–अनडुहो विमुच्यध्वमिति । का. श्रौ. सू. १७ । ४४ ।

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# द्वितीयेऽध्याये च तृतीयं ब्राह्मणम् ।

अथ दर्भस्तम्बमुपदधाति । ( त्ये ) एतद्वै देवा ऽओषधीरुपादधत तथै-वैतद्यजमान ऽओषधीरुपधत्ते ॥ १ ॥

यद्वेव दर्भस्तम्बमुपदधाति । जायतऽएष ऽएतद्यच्चीयते सऽएष सर्व्व-स्माऽअन्नाय जायतऽउभयम्वेतदन्नं यद्दर्भा ऽआपश्च ह्येता ऽओषधयश्च या वै वृत्राद्बीभत्समाना ऽआपो धन्व दृभन्त्यऽउदायंस्ते दर्भा ऽअभवन्यद्दृभ-न्त्यऽउदायंस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्याऽआपोऽवृत्राभिप्रक्षरिता यद्दर्भा यदु दर्भास्तेनौषधय ऽउभयेनैवैनमेतदन्नेन प्रीणाति ॥ २ ॥

---

### अथ दर्भस्तम्बोपधानम् ।

अथ दर्भस्तम्बमुपदधाति । एतद्वै देवा ओषधीरुपादधत । तथैवैतद्यजमान ओषधीरुपधत्ते ॥१॥ यद्वेव दर्भस्तम्बमुपदधाति । जायतऽएष एतद्–यच्चीयते । स एष सर्वस्माऽअन्नाय जायते । उभयम्वेतदन्नम् । यद्दर्भाः–आपश्च ह्येता ओषधयश्च । या वै वृत्राद्बीभत्समाना आपो धन्व दृभन्त्य

---

( का. श्रौ. सू. १७ । ४९ ) इति । अन्यानृत्विजो विहायाध्वर्योरेव सम्प्रदानत्वे कारणमाह–स हीति । 'हि' यस्मात् 'सः' अध्वर्युः 'तैः' अनडुद्भिः कर्षणं 'करोति' तस्मादध्वर्यवे दानं युक्तमिति भावः[2] । तस्मिन् दाने कालविशेषं विधत्ते–तांस्त्विति । ऋत्विक्परिक्रयहेतवो दातव्या गावो दक्षिणाः, तासां यः कालो माध्यन्दिन-सवनात्मकः, तस्मिन्, 'तान्' अनडुहः 'अनुदिशेत्' दद्यादिति यावत् ॥ २१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
सप्तमकाण्डे द्वितीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ७–२–२ ) ॥

इति सप्तमे काण्डे प्रथमः प्रपाठकः ॥ ( ७–१ ) ॥

अथ कुशस्तम्बोपधानं विधत्ते–अथ दर्भस्तम्बमिति[3] । एकमूलोऽनेकशाखः स्तम्ब इत्युच्यते, दर्भाणां स्तम्बो दर्भस्तम्बः । तम् आत्ममध्ये तूष्णीम् 'उपदधाति' स्थापयेदित्यर्थः । तदुपधानं देवकर्तृकौषध्युपधानद्वारा स्तौति–एतद्वा इति । 'उपादधत' उपहितवन्तः । तथैवैतादिति । प्रकृते योजनम् ॥ १ ॥

तदेव प्रकारान्तरेणापि स्तौति–यद्वेवेति । य 'एषः' आहवनीयोऽग्निः 'चीयते' चयनेन सम्पाद्यते, 'एषः' 'जायते' उत्पद्यत एव । 'स एषः' जायमानोऽग्निः 'सर्वस्मै' कृत्स्नाय 'अन्नाय' तदुपभोक्तुं

---

१–पशुवदुत्सृज्य । इत्यादिभागोऽस्य सूत्रस्य । २–दीर्घप्रयुक्तेषु वा पुरुषाः कर्षंति । का. श्रौ. सू. १७ । ४३ ।
३–कुशस्तंबमुपदधाति मध्ये तूर्ष्णीम् । का. श्रौ. सू. १७ । ४६ । अयमपक्वेष्टकास्वप्यन्तर्भूतो नेति बोध्यम् ।

सीतासमरे । व्वाग्वै सीतासमरः प्राणा वै सीतास्त्तासामयुᳬँ समयो व्वाचि वै प्राणेभ्योऽन्नं धीयते मध्यतो मध्यतऽएवास्मिन्नेतदन्नं दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीᳬँ सर्व्वं वाऽअनिरुक्तᳬँ सर्व्वेणैवास्मिन्नेतदन्नं दधाति ॥ ३ ॥

---

उदायन्–ते दर्भा अभवन् । यद्दृभन्त्य उदायन्–तस्माद्दर्भाः । ता ह्येताः शुद्धा मेध्या आपोऽवृत्राभिप्रक्षरिताः–यद्दर्भाः । यदु दर्भाः–तेनौषधयः । उभयेनैवैनमेतदन्नेन प्रीणाति ॥ २ ॥

सीतासमरे । वाग्वै सीतासमरः । प्राणा वै सीताः । तासामयं समयः । वाचि वै प्राणेभ्योऽन्नं धीयते । मध्यतः । मध्यत एवास्मिन्नेतदन्नं दधाति । तूष्णीम् । अनिरुक्तं वै तद्–यत्तूष्णीम् । सर्वं वाऽअनिरुक्तम् । सर्वेणैवास्मिन्नेतदन्नं दधाति ॥ ३ ॥

---

जायते । दर्भाणां नामनिर्वचनद्वारा उभयविधान्नत्वमाह–उभयम्वेतादिति । उभयं किमित्यत आह–यद्दर्भा इति । उभयविधत्वमेव विवृणोति–या वै वृत्रादिति । "वृत्रो ह वा इदं सर्वं वृत्वा शिश्ये"–इत्युपक्रम्य, "तस्मादु हैका आपो बीभत्साञ्चक्रिरे"–इत्यादिना प्रथमकाण्डे अपां दर्भभावप्रत्ययादिति ( श. प. १ । १ । ३ । ४ । ९ ) । 'याः' 'आपः' वृत्रासुराद् 'बीभत्समानाः' जुगुप्समानाः जुगुप्साश्रयत्वाद्दिकुर्वाणा इत्यर्थः । 'धन्व' अन्तरिक्षं 'दृमन्त्यः' गुम्फनं कुर्वन्त्यः 'उदायन्' उद्गतवत्यः । "धन्वान्तरिक्षम्, धन्वन्त्यस्मादापः"–( निरु. ९ । १ । ९ ) इति हि यास्कः । 'दृमन्त्य' इति तौदादिकात् "दृभी गुम्फने"–( धा. पा. तु. प. ४२ । ) इति धातोः शतरि "ऋन्नेभ्यो ङीप्"–( पा. सू. ४।१।५। ) इति ङीप् । 'ते दर्भा अभवन्' आप एव दर्भत्वं प्राप्ता इत्यर्थः । 'ते' इति पुँल्लिङ्गं दर्भापेक्षम् । दर्भनाम निर्वक्ति–यद्दृभन्त्य इति । 'यत्' यस्मात् 'दृमन्त्यो' गुम्फनं कुर्वन्त्य आप उद्गतवत्यः, 'तस्माद्'दर्भणादापो 'दर्भाः' दर्भशब्दवाच्या इत्यर्थः । दर्भभूतास्ता अपः प्रशंसति–ता हैता इति । ये दर्भाः 'ताः' एताः आपः 'शुद्धाः' शुद्धिसाधनभूताः, तथा 'मेध्याः' मेधार्हाः । तदेव विस्पष्टयति–आपोऽवृत्राभिप्रक्षरिता इति । 'न वृत्रात् अभिप्रक्षरिताः' अभिप्रस्रुताः 'उ' पुनः 'यत्' यस्मात् 'दर्भाः,' 'तेन' कारणेन 'ओषधयः' दर्भाणामोषधित्वमन्यत्राप्याम्नायते–"ओषधयो बर्हिः" इति । उभयविधत्वमुपयोगप्रतिपादनेनोपसंहरति–उभयेनैवैनमिति । 'एनं' चित्याग्निम् 'एतत्' एतेनोभयविधेन 'अन्नेन' 'प्रीणाति' ॥ २ ॥

तदुपधानं क्षेत्रे विधाय स्तौति–सीतासमर इति । कृष्टाः सीताः समृच्छन्ते सङ्गच्छन्ते यत्रासौ 'सीतासमरः' क्षेत्रमध्यप्रदेशः, तत्रोपदध्यादिति शेषः । आधियज्ञिकस्य सीतासमरस्याध्यात्मं मुखरूपतामाह–वाग्वा इति । वागायतनत्वाद् 'वाक्' मुखम् खलु 'सीतासमरः' । कथमित्यपेक्षायां तदुपपादयति–प्राणा वा इति । 'प्राणाः' खलु 'सीताः' नाड्यः तत्सञ्चारितत्वात् । तासां नाडीरूपाणां सीतानाम् 'अयं' मुखलक्षणः 'समयः' सङ्गमः, सम्यगयन्ते सङ्गच्छन्ते यत्र सोऽयं समयः; मुखे हि सर्वाः प्राणा नाड्यः सङ्गच्छन्ते । ततः किमित्याकाङ्क्षायामाह–वाचि वा इति । 'वाचि वै' मुखे एव 'प्राणेभ्यः' अर्थे 'अन्नं' 'धीयते' स्थाप्यते; मुखेनैव हि जग्धेऽन्ने प्राणानामाप्यायनस्य सद्भावात् । सीतासमरेऽपि मध्यदेशे उपदध्या-

---

१–धातुपठे "दृभी ग्रन्थे"–इत्यस्ति ग्रन्थनमेव गुम्फनमतः सम्यक् । इति बोध्यम् ॥

(त्यु) अुथैनमभिजुहोति । जायतऽएषु ऽएतद्यच्चीयुते स ऽएष सुर्व्वस्माऽअुन्नाय जायते सुर्व्वस्योऽअुस्यैष रुसो यदाज्यमपां चु ह्येष ऽओषधीनां च रुसोऽस्यैुवैनमेतत्सुर्व्वस्य रुसेन प्रीणाति यावानु वै रुसस्तावानात्माऽनुनैुवैनमेतत्सुर्व्वेण प्रीणाति पञ्चगृहीतेुन पञ्चचितिकोऽग्निः पञ्चर्तुवः संवत्सरः संवत्सुरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैुवैनमेतदन्नेन प्रीणाति ॥ ४ ॥

युद्वेवैनमभिजुहोति। ( त्ये ) एतद्वै युत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निꣳ समुस्कुर्वंस्तदस्मिन्नेतं पुरस्ताद्भागमकुर्वत तुस्मात्पुरस्ताद्भागास्तद्युदभिजुहोति यऽएवास्मिंस्ते प्राणा ऽऋषयः पुरस्ताद्भागमुकुर्वत तानेुवैतुत्प्रीणात्याज्येन पञ्चगृहीतेन तुस्योक्तो बन्धुः ॥ ५ ॥

---

अथैनमभिजुहोति। जायतऽएष एतद्-यच्चीयते। स एष सर्वस्माऽअन्नाय जायते। सर्वस्योऽस्यैष रसो यदाज्यम्। अपां च ह्येष ओषधीनां च रसः। अस्यैवैनमेतत्सर्वस्य रसेन प्रीणाति। यावानु वै रसस्तावानात्मा। अनेनैवैनमेतत्सर्वेण प्रीणाति। पञ्चगृहीतेन। पञ्चचितिकोऽग्निः। पञ्चऽर्तवः संवत्सरः। संवत्सरोऽग्निः। यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ४ ॥

यद्वेवैनमभिजुहोति। एतद्वै यत्रैतं प्राणा ऋषयोऽग्रेऽग्निं समस्कुर्वन्-तदस्मिन्नेतं पुरस्ताद्भाग-

---

दित्याह—मध्यत इति। सप्तम्यर्थे तसिलयम्। 'अस्मिन्' चित्याग्नौ मध्ये 'एव' 'एतत्' एतेन अन्नं स्थापितवान् भवति। उपधाने मन्त्राभावं विधत्ते—तूष्णीमिति। तदेवोपपादयति—अनिरुक्तं वा इति। स्पष्टोऽर्थः ॥ ३॥

अभिहोमं विधत्ते—अथैनमभीति। 'एनं' दर्भस्तम्बम्। जायत एष इत्यादि—पूर्ववद् व्याख्येयम्। अभिहोमे आज्यं द्रव्यं विधातुं स्तौति—सर्वस्योऽस्यैष इति। 'यत्' 'आज्यं' सर्पिः 'एषः' 'अस्य' 'सर्वस्य' विश्वस्य 'रसः'। रसत्वमेवोपपादयति—अपां च हीति। अपामोषधीनां च गोभिः पानाद् भक्षणाच्च ह्याज्यमुत्पद्यते। रसत्वोपपादनस्य प्रयोजनमाह—अस्यैवैनमिति। 'एनं' चित्याग्निं 'प्रीणाति' तर्पयति। सर्वरसत्वकथने कारणमाह—यावानु वा इति। 'रसः' 'यावान्' यत्परिमाणविशिष्टः, 'आत्मा' देहोऽपि 'तावान्' तत्परिमाणविशिष्ट एव; देहस्य रसोपजीवनत्वात्। अनेनेति। 'सर्वेण' रसेनेत्यर्थः। आज्यस्य पञ्चगृहीतत्वं विधत्ते—पञ्चगृहीतेनेति। पञ्चगृहीतत्वं स्तौति—पञ्चचितिकोऽग्निरित्यादिना। 'पञ्चर्तवः' पञ्चर्त्वात्मकः 'संवत्सरः'; "हेमन्तशिशिरयोः समासेन" ( ऐ. ब्रा. १। १। १ )। संवत्सरोऽग्निरित्यादि। गतार्थम् ( श. प. ७। २। २। १६ ) ॥ ४ ॥

प्रकारान्तरेणाभिहोमं स्तौति—यद्वेवैनमिति। 'एतद्वै' कारणं खलु 'यत्र' यदा 'प्राणाः' एव 'ऋषयः' 'अग्रे' प्रपञ्चसृष्टेः पुरा 'एतम्' 'अग्निं' चित्याख्यं संस्कृतवन्तः, 'तत्' तदा 'अस्मिन्' अग्नौ 'एतम्'

( य॒ ) य॒द्वेवैनमभिजु॒होति । ( त्ये ) एतद्वै य॒ान्येत॒स्मिन्नग्नौ रू॒पाण्युप॒धास्यन्भ॒वति य॒ान्त्स्तोमान्या॒नि पृ॒ष्ठानि य॒ानि च्छ॒न्दाᳫँसि त॒ेभ्य॒ऽ एत॒ं पु॒रस्ताद्भा॒गं करोति त॒ान्येवैत॒त्प्रीणात्याज्येन पञ्चगृहीत॒ेन त॒स्योक्तो ब॒न्धुः ६

( य॒ ) य॒द्वेवैनमभिजु॒होति । ( त्ये ) एतद्वै देव॒ाऽ अबिभयु॒र्दीर्घं व॒ाऽइदं कर्म॒ यद्वै न॒ऽ इमुमिह॒ र॒क्षाᳫँसि नाष्ट्रा॒ न॒ ह॒न्युरि॒ति त॒ऽएत॒ामेत॒स्य क॒र्मणः पुरस्तात्स॒ᳫँस्थामपश्यंस्तमत्रैव स॒र्व्वᳫँ स॒मस्थापयन्नत्राचिन्वंस्त॒थै॒वैनमयमेतदत्रैव स॒र्व्वᳫँ स॒ᳫँस्थापयत्यत्र चिनोति ॥ ७ ॥

---

मकुर्वत । तस्मात्पुरस्ताद्भागाः । तद्यदभिजुहोति—यऽएवास्मिंस्ते प्राणा ऋषयः पुरस्ताद्भागमकुर्वत—तानेवैतत्प्रीणाति । आज्येन पञ्चगृहीतेन । तस्योक्तो बन्धुः ॥ ५ ॥

यद्वेवैनमभिजुहोति । एतद्वै यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन्भवति, यान्त्स्तोमान्, यानि पृष्ठानि, यानि च्छन्दांसि—तेभ्य एतं पुरस्ताद्भागं करोति । तान्येवैतत्प्रीणाति । आज्येन पञ्चगृहीतेन । तस्योक्तो बन्धुः ॥ ६ ॥

यद्वेवैनमभिजुहोति । एतद्वै देवा अबिभयुः—दीर्घं वाऽइदं कर्म, यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तऽएतामेतस्य कर्मणः पुरस्तात्संस्थामपश्यन् । तमत्रैव सर्वं समस्थापयन् । अत्राचिन्वन् । तथैवैनमयमेतदत्रैव सर्वं संस्थापयति, अत्र चिनोति ॥ ७ ॥

---

अग्निहोमलक्षणं ' पुरस्ताद्भागम् ' चयनात् प्रागेव भजनीयमंशम् ' अकुर्वत ' सम्पादितवन्तः, ' तस्मात् ' ते ऋषयः ' पुरस्ताद्भागाः ' पुरस्तादादौ भागो भजनीयोंऽशो येषां ते पुरस्ताद्भागाः, प्रथमपूज्या इत्यर्थः । तद्यदिति । ' तत् ' तत्र यत्कारणात् ' अभिजुहोति, ' इदानीन्तनो यजमान इति शेषः । ' ये ' पुरस्ताद्भागकर्तारः प्राणरूपा ' ऋषयः, ' ' तानेव ' ' एतत् ' एतेनाग्निहोमेन तर्पयतीति तत्कारणमित्यर्थः । आज्येनेत्यादि । व्याख्यातम् ॥ ५ ॥

प्रकारान्तरेण तमेवाग्निहोमं स्तौति—यद्वेवेति । ' एतस्मिन् अग्नौ ' चित्यात्मके ' यानि रूपाणि ' गार्हपत्यचितिधिष्ण्यलक्षणानि, तथा ' यान् स्तोमान् ' स्तोत्रियासमूहान् त्रिवृत्पञ्चदशादीन्, ' यानि पृष्ठानि ' बृहद्रथन्तरादीनि, ' यानि च च्छन्दांसि ' गायत्र्यादीनि, ' उपधास्यन् ' एतेषामुपधानं करिष्यन् ' भवति ', ' तेभ्यः ' रूपादिभ्यः ' एतम् ' अग्निहोमलक्षणम् ' पुरस्ताद्भागं ' सम्पादयति । ' तान्येव ' रूपादीनि ' एतत् ' एतेन तर्पयति । आज्येनेत्यादि पूर्ववत् ॥ ६ ॥

प्रकारान्तरेणाप्यग्निहोममेव स्तौति—यद्वेवेति । ' एतत् ' एतेन हेतुना ' देवाः ' ' अबिभयुः ' भीतवन्तः । भयस्वरूपमेव विशदयति—दीर्घं वा इत्यादिना । ' इदं ' चयनलक्षणं ' कर्म, ' ' दीर्घं ' विस्तृतं खलु । अस्तु पुनर्द्राघीयः, तावता को भयहेतुरित्यत आह—यद्वै न इति । ' नः ' अस्माकम् ' इह ' दीर्घे कर्मणि ' इमम् ',

सजूरब्द ऽइति चितिः । (उ) अयवोभिरिति पुरीषꣳ सजूरुषा ऽइति चितिररुणीभिरिति पुरीषꣳ सजोषसावश्विनेति चितिर्दꣳसोभिरिति पुरीषꣳ सजूः सूर ऽइति चितिरेतशेनेति पुरीषꣳ सजूर्वैश्वानर ऽइति चितिरिडयेति पुरीषं घृतेनेति चितिः स्वेति पुरीषꣳ हेति चितिः ॥ ८ ॥

(ऋ) त्रयोदशैता व्याहृतयो भवन्ति । त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनो-

---

"सजूरब्दः"—इति चितिः (१)। "अयवोभिः"—इति पुरीषम् (२)। "सजूरुषाः"—इति चितिः (३)। "अरुणीभिः"—इति पुरीषम् (४)। "सजोषसाव-श्विना"—इति चितिः (५)। "दंसोभिः"—इति पुरीषम् (६)। "सजूः सूरः"—इति चितिः (७)। "एतशेन"—इति पुरीषम् (८)। "सजूर्वैश्वानरः"—इति चितिः (९)। "इडया"—इति पुरीषम् (१०)। "घृतेन"—इति चितिः (११)। "स्वा"—इति पुरीषम् (१२)। "हा"—(वा. सं. १२। ७४) इति चितिः (१३) ॥ ८ ॥

त्रयोदशैता व्याहृतयो भवन्ति । त्रयोदश मासाः संवत्सरः । त्रयोदशाग्नेश्चितिपुरीषाणि । यावानग्निर्यावत्यस्य मात्रा—तावन्तमेवैनमेतच्चिनोति । आज्येन जुहोति । अग्निरेषः—यदाज्यम् ।

---

अग्निं 'नाष्ट्रा रक्षांसि' 'न हन्युः' हिंस्युरिति । अयं सम्भावने लिङ् (पा. सू. ३। ३। १६१)। 'इति'—शब्दो देवाभिप्रायसमाप्तौ । भीतिनिवृत्तिप्रकारं दृष्टवन्त इत्याह—त एतामिति । 'ते' देवाः 'एतस्य' दीर्घस्य चयनाख्यकर्मणः 'पुरस्तात्' चयनात् प्रागेव 'एताम्' अग्निहोमलक्षणाम् 'संस्थां' समाप्तिम् 'अपश्यन्' ददृशुः । दृष्ट्वा चानुष्ठितवन्त इत्याह—तमत्रैवेति । 'अत्रैव' चयनात् प्रागवसरे एव 'तं' चित्यात्मकमग्निं सर्वं निरवशेषं 'समस्थापयन्' समापितवन्तः, 'अत्र' आदावित्यर्थः । 'अचिन्वन्' चितवन्त इति भाविनि भूतवदुपचारः । उक्तमर्थं प्रकृते योजयति—तथैवैनमिति ॥ ७ ॥

अग्निहोमे मन्त्रं विधाय व्याहृतिरूपेण त्रयोदशधा विभज्य चितिपुरीषात्मना स्तौति—सजूरब्द इति चितिरित्यादिना । मन्त्रार्थस्तु,—'अब्दः' संवत्सरः 'अयवोभिः' मासैरर्द्धमासैश्च 'सजूः' समानजोषणः । यवा अयवाश्चार्द्धमासा मासाश्चोच्यन्ते; अर्द्धमासा एव वा, "पूर्वपक्षा वै यवा अपरपक्षा अयवाः"—इति श्रुतेः (श. प. ८। ४। २। ११)। 'उषाः' रात्रेरपरः कालः। 'अरुणीभिः' अरुणवर्णाभिर्गोभिः 'सजूः' समानजोषणः । "अरुण्यो गाव उषसम्"—इति निघण्टुः (१। १५। खं. ७)। 'अश्विना' नासत्यौ देवौ 'दंसोभिः' कर्मभिः सजोषसौ समानजोषणौ । 'सूरः' सूर्यः 'एतशेन' हरितवर्णेनाश्वेन 'सजूः' 'वैश्वानरः' विश्वनरनेता अग्निः 'इडया' अन्नाद्या 'घृतेन' आज्येन हविषा च 'सजूः' 'स्वाहा' इदमाज्यं सुहुतमस्तु ॥ ८ ॥

त्रयोदशधा विभक्ता मन्त्रावयवा व्याहृतिरूपाः स्युरित्याह—त्रयोदशैता इति । व्याह्रियन्त एभिः 'व्याहृ-

---

१. "व्याह्रियन्ते प्रतिपाद्यन्ते एभिश्चितिपुरीषाणीति व्याहृतयो मन्त्रभागाः"—इति क. पा. ।

त्याज्येन जुहोत्यग्निरेष यदाज्यमग्निमेवैतच्चिनोति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यूर्ध्वामुद्गृह्णञ्जुहोत्यूर्ध्वं तदग्निं चितिभिश्चिनोति ॥ ९ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ७ । २ । १ ॥ ( २–३ )

अथोदचमसान्निनयति । ( त्ये ) एतद्वै देवाऽ अब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना वृष्टिमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १ ॥

---

अग्निमेवैतच्चिनोति । पञ्चगृहीतेन । पञ्चचितिकोऽग्निः । पञ्चऽर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निः, यावत्यस्य मात्रा–तावन्तमेवैनमेतच्चिनोति । ऊर्ध्वामुद्गृह्णञ्जुहोति । ऊर्ध्वं तदग्निं चितिभिश्चिनोति ॥ ९ ॥

अपां निनयनं सर्वौषधवपनं च ।

अथोदचमसान्निनयति । एतद्वै देवा अब्रुवन्–चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । ते चेतयमाना वृष्टिमेव चितिमपश्यन् । तामस्मिन्नदधुः । तथैवास्मिन्नयमेतद्दधाति ॥ १ ॥

---

तयः' । 'एताः' इति स्त्रीलिङ्गत्वं व्याहृतिशब्दापेक्षम् । व्याहृतिगतां त्रयोदशसङ्ख्यां प्रशंसति–त्रयोदश मासा इति । संसर्पांहस्पतिसञ्ज्ञकोऽधिमासस्त्रयोदशः । "अस्ति त्रयोदशो मासः"–( श. प. ४ । ३ । १ । ९ ) इति श्रुतेः । त्रयोदशाग्नेरिति । चित्यस्याग्नेश्चितयः पुरीषाणि च मिलित्वा त्रयोदश सम्पद्यन्ते । तथाहि–आदितश्चतस्रश्चितयः पुरीषनिवपनान्ताः ८, स्तोमभागान्ता पञ्चमी चितिः ९, तदनन्तरभावि पुरीषमेकम् १०, नाकसत्प्रभृतिपुरीषनिवपनान्ता षष्ठी चितिरिति द्वे १२, ततो विकर्णीस्वयमातृण्णयोरुपधानं हिरण्यशकलैः प्रोक्षणमग्न्यभ्याधानं चेति सप्तमी चितिः । सा १३ त्रयोदशीत्यादिर्विभाग ऊह्यः ( श. प. ८ । ९ । ४ ब्रा. ) । यावानग्निरित्यादि असकृद् गतम् ॥

आज्यस्य होमसाधनत्वमनूद्य प्रशंसति–आज्येनेत्यादिना । आज्यस्याग्नित्वम् 'तेजो वै घृतम्"–( ऐ. ब्रा. ८ । ४ । ६ तै. सं. २ । ९ । २ । ७ ) इति श्रुतेः । पञ्चगृहीतेनेत्यादि । व्याख्यातचरम् । तत्राभिहोमे स्रुच उद्गृहीतत्वं विधाय प्रशंसति–ऊर्द्ध्वामिति । 'उद्गृह्णन्' स्रुचमूर्द्ध्वां कुर्वन् जुहोतीत्यर्थः । 'तत्' तेन स्रुच ऊर्द्ध्वकरणेन 'अग्निं' प्रकृतं 'चितिभिः' ऊर्द्ध्वं चितवान् भवति । "पञ्चगृहीते नोद्गृह्णन्नभिजुहोति सजूरब्द इति"–( का. श्रौ. सू. १७ । ४७ । ) इति सूत्रम् ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे द्वितीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ७ । २ । ३ ) ॥

अथ कृष्टे क्षेत्रे कर्षणक्रमेणोदचमसकरणकमपान्निनयनं विधत्ते–अथोदचमसान्निनयतीति । उदकपूर्णा-

( त्यु ) उदचमसा भवन्ति । ( न्त्या ) आपो वै वृष्टिर्वृष्टिमेवास्मिन्नेतद्दधात्यौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्वाभ्य एवास्मिन्नेतद्दिग्भ्यो वृष्टिं दधाति ॥ २ ॥

त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ३ ॥

द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ४ ॥

---

उदचमसा भवन्ति । आपो वै वृष्टिः । वृष्टिमेवास्मिन्नेतद्दधाति । औदुम्बरेण चमसेन । तस्योक्तो बन्धुः । चतुःस्रक्तिना । चतस्रो वै दिशः । सर्वाभ्य एवास्मिन्नेतद्दिग्भ्यो वृष्टिं दधाति ॥ २ ॥

त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ३ ॥

द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ४ ॥

---

श्चमसा उदचमसास्तानासिञ्चेदित्यर्थः । एतद्वै देवा इत्यादि—असकृद् गतम् ( श. प. ७ । २ । ३ । १ ) वृष्टिमेवेति । वर्षणरूपां चितिमित्यर्थः ॥ १ ॥

उदकनिनयने चमसकरणतां विधाय वृष्ट्यात्मना स्तौति—उदचमसा भवन्तीति । 'वृष्टिरापः' खलु अपां वृष्टिजन्यत्वात् । चमसस्य उदुम्बरविकारत्वं विधत्ते—औदुम्बरेणेति । तस्योक्त इति । उदुम्बरविकारत्वस्यार्थवादः "तदेतत् सर्वमन्नं यदुदुम्बरः, सर्वे वनस्पतयः" इत्यादिना षष्ठकाण्डे प्रपञ्चित इत्यर्थः ( श. प. ६ । ६ । ३ । ३ ) । चमसस्य चतुष्कोणत्वं विधाय प्रशंसति—चतुःस्रक्तिनेति । सर्वाभ्य इति । चतसृभ्योऽपि दिग्भ्य इत्यर्थः ॥ २ ॥

चतसृषु चतसृषु सीतासु त्रयाणां त्रयाणामुदचमसानां निनयनं विधाय प्रशंसति—त्रींस्त्रीनिति । "नित्यवीप्सयोः"—( पा. सू. ८ । १ । ४ ) इति द्विर्वचनम् । त्रिवृदग्नि—इत्यादि—असकृदुक्तार्थम् ( श. प. । ७ । २ । २ । १९ ) ॥ ३ ॥

कृष्टप्रदेशे द्वादशभिरुदचमसैर्निनयनं विधाय स्तौति—द्वादशोदचमसानिति । "द्वादश मासाः"—इत्यादेः स्पष्टोऽर्थः ॥ ४ ॥

---

१—चतसृषु चतसृषु त्रींस्त्रीनुदचमसान्निनयति यथाकृष्टमौदुंबरेण चतुःस्रक्तिना । का० श्रौ० सू० १७ । ४९ ।

स वै कृष्टे निनयति । तस्मात्कृष्टाय वर्षति स यत्कृष्टऽएव निनयेन्ना-कृष्टे कृष्टायैव वर्षेन्नाकृष्टायाथ यदकृष्टऽएव निनयेन्न कृष्टेऽकृष्टायैव वर्षेन्न कृष्टाय कृष्टे चाकृष्टे च निनयति तस्मात्कृष्टाय चाकृष्टाय च वर्षति ॥ ५ ॥

त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ६ ॥

यद्वेवोदचमसान्निनयति । (त्ये) एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादपोऽदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादपो दधाति ॥ ७ ॥

त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतै-वास्मिन्नेतदपो दधाति ॥ ८ ॥

---

स वै कृष्टे निनयति । तस्मात्कृष्टाय वर्षति । स यत् कृष्टऽएव निनयेत्—नाकृष्टे, कृष्टायैव वर्षेत्—नाकृष्टाय । अथ यदकृष्टऽएव निनयेत्—न कृष्टे, अकृष्टायैव वर्षेत्—न कृष्टाय । कृष्टे चाकृष्टे च निनयति—तस्मात् कृष्टाय चाकृष्टाय च वर्षति ॥ ५ ॥

त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्ने-तद्वृष्टिं दधाति ॥ ६ ॥

यद्वेवोदचमसान्निनयति । एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादपोऽदधुः । तथैवास्मिन्न-यमेतत्संस्करिष्यन्पुरस्तादपो दधाति ॥ ७ ॥

त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निः । यावानग्निः, यावत्यस्य मात्रा—तावतैवास्मिन्नेत-दपो दधाति ॥ ८ ॥

---

तस्योदकनिनयनस्य कृष्टक्षेत्राधिकरणत्वमनूद्य स्तौति—स वै कृष्टे इति । यस्मात् कृष्टप्रदेशे उदकनिनयनं क्रियते, तस्मादेव कारणाल्लोके 'कृष्टाय' कर्षणसंस्कारसंस्कृताय भूमिभागायार्थे 'वर्षति' वृष्टिर्भवति । स यत् कृष्ट एवेत्यादिना कृष्टाकृष्टस्थले उदकनिनयनायैकैकत्र निनयननिन्दा प्रतिपाद्यते; अर्थस्तु निगदसिद्धः ॥ ५ ॥

कृष्टाकृष्टात्मके यदुदकनिनयनं विहितम्, तत्करणचमसानामपि त्रिसङ्ख्यामुपजीव्य स्तौति—त्रीन् कृष्टे चेति । त्रिवृदग्निरित्यादि—असकृद् गतम् ॥ ६ ॥

उक्तेऽर्थे पुरावृत्तमवतारयति- यद्वेवेत्यादिना । 'पुरस्तात्' चयनात् प्रागेव 'अपः' उदकानि स्थापित-वन्तः । शिष्टं स्पष्टम् ॥ ७ ॥

त्रींस्त्रीनित्यादि पूर्ववद् व्याख्येयम् ॥ ८ ॥

---

१–त्रीन् कृष्टाकृष्टयोः । का. श्रौ. सू. १७ । ४९ ।

द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥ ९ ॥

स वै कृष्टे निनयति । प्राणेषु तदपो दधाति स यत्कृष्टऽएव निनयेन्ना-कृष्टे प्राणेष्वेवापः स्युर्नेतरस्मिन्नात्मन्नथ यदकृष्टऽएव निनयेन्न कृष्टऽआ-त्मन्नेवापः स्युर्न प्राणेषु कृष्टे चाकृष्टे च निनयति तस्मादिमाऽ उभयत्रापः प्राणेषु चात्मंश्च ॥ १० ॥

त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा ताव-तैवास्मिन्नेतदपो दधाति ॥ ११ ॥

पञ्चदशोदचमसान्निनयति । पञ्चदशो वै वज्रऽएतेनैवास्यैतत्पञ्चदशेन वज्रेण सर्वं पाप्मानमपहन्ति ॥ १२ ॥

---

द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥ ९ ॥

स वै कृष्टे निनयति । प्राणेषु तदपो दधाति । स यत् कृष्टऽएव निनयेत्—नाकृष्टे, प्राणेष्वेवापः स्युः—नेतरस्मिन्नात्मन् । अथ यदकृष्टऽएव निनयेत्—न कृष्टे, आत्मन्नेवापः स्युः—न प्राणेषु । कृष्टे चाकृष्टे च निनयति । तस्मादिमा उभयत्रापः प्राणेषु चात्मंश्च ॥ १० ॥

त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतदपो दधाति ॥ ११ ॥

पञ्चदशोदचमसान्निनयति । पञ्चदशो वै वज्रः । एतेनैवास्यैतत्पञ्चदशेन वज्रेण सर्वं पाप्मानमपहन्ति ॥ १२ ॥

---

द्वादशोदचमसानित्यादि च ॥ ९ ॥

कृष्टप्रदेशे उदकनिनयनस्य प्राणाधिकरणनिनयनरूपतामाह—स वै कृष्ट इति । कृष्टाकृष्टयोरुभयत्रोदक-निनयने प्राणशब्दाभिधेयेषु चक्षुरादिषु तदाश्रयभूते ‘ आत्मनि ’ शरीरे चापां निनयनं कृतं भवतीत्ययं सयत् कृष्ट एवेत्यादेस्तात्पर्यार्थः ॥ १० ॥

कृष्टाकृष्टयोरुदकनिनयनचमसगतं त्रित्वमनूद्य तस्याप्यपां निधानहेतुतामाह—त्रीन् कृष्टे चेति । अर्थस्तु पूर्ववत् ॥ ११ ॥

पृथग्विहितामुदचमससंख्यां सम्भूय प्रशंसति—पञ्चदशोदचमसानिति । पञ्चदशो वै वज्र इति । पञ्च-दशस्तोमस्येन्द्रस्य च सह प्रजापतिबाहुसकाशादुत्पत्तेरिन्द्रसम्बन्धी वज्रोऽपि पञ्चदशस्तोमात्मकः ( तै. सं. ७ । १ । १ । ४ । ) । तादृशेनैतेन ‘ वज्रेण ’ अस्य यजमानस्य ‘ सर्वम् ’ अपि ‘ पाप्मानम् ’ अपहतवान् भवति ॥ १२ ॥

---

१—कृष्टमात्रे वा । का. श्रौ. सू. । १७ । ५० ।

( न्त्यु ) अथ सर्व्वौषधं व्वपति । ( त्ये ) एतद्वै देवा ऽअब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना ऽअन्नमेव चितिमपश्यंस्ताम-स्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १३ ॥

सर्व्वौषधं भवति । सर्व्वमेतदन्नं यत्सर्व्वौषधꣳ सर्व्वमेवास्मिन्नेत-दन्नं दधाति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्व्वाभ्य ऽएवास्मिन्नेतद्दि-ग्भ्योऽन्नं दधात्यनुष्टुब्भिर्व्वपति व्वाग्वा ऽअनुष्टुब्वाचो वा ऽअन्नमद्यते ॥१४॥

---

अथ सर्वौषधं वपति—एतद्वै देवा अब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । ते चेतयमाना अन्नमेव चितिमपश्यन् । तामस्मिन्नदधुः । तथैवास्मिन्नयमेतद्दधाति ॥ १३ ॥

सर्वौषधं भवति । सर्वमेतदन्नम्—यत्सर्वौषधम् । सर्वमेवास्मिन्नेतदन्नं दधाति । तेषामेकमन्नमु-द्धरेत्—तस्य नाश्नीयाद्—यावज्जीवम् । औदुम्बरेण चमसेन । तस्योक्तो बन्धुः । चतुःस्रक्तिना । चतस्रो वै दिशः । सर्वाभ्य एवास्मिन्नेतद्दिग्भ्योऽन्नं दधाति । अनुष्टुब्भिर्वपति । वाग्वाऽअनुष्टुप् । वाचो वाऽअन्नमद्यते ॥ १४ ॥

---

अथ प्रकृत औदुम्बरचमसे सर्वधान्यावापं विधत्ते—**अथ सर्वौषधं वपतीति** । ' अन्नमेव ' धान्यरूपामेव ' चितिम् ' इत्यर्थः । गतमन्यत् ॥ १३ ॥

सर्वत्वमनूद्य स्तौति—**सर्वौषधं भवतीति** । ओषधीनां समूहः औषधम् । "तस्य समूहः"—( पा.सू.४।२।३७ ) इत्यण् । ओषधयश्चात्र ग्राम्यारण्यादिबीजात्मिका द्रष्टव्याः ( तै.सं.५।४।९।१ ) । यत् सर्वौषधम्, एतत् सर्वं निरवशेषमन्नम् । सर्वमेवेति । ' एतत् ' एतेन सर्वौषधावापेन ' अस्मिन् ' अग्नौ सर्वमेवान्नं निहितवान् भवति । तत्रोप्तानां प्रकृतानामन्नानां मध्ये एकस्य ओषधिरूपस्य बीजस्य वर्जनं विधत्ते—**तेषामेकमिति** । ' तेषाम् ' ओषधिविकाराणामन्नानां मध्ये ' एकमन्नमुद्धरेत् ' पृथक् कुर्यात्, न आवपेदित्यर्थः । तत्र च धर्म-विशेषं विधत्ते—**तस्य नाश्नीयादिति** । ' तस्य ' उद्धृतस्यान्नस्य ' यावज्जीवं नाश्नीयात् ' अत एवोक्तं कात्या-यनेन—" तस्मिन् सर्वौषधमात्रपत्येकवर्जमभोजनं तस्योच्छ्वासात् "—( का. श्रौ. सू. १७ । ५१ ) इति ॥

उदकनिनयन इव बीजावपनेऽपि चतुरस्रमौदुम्बरं चमसं करणत्वेन विधत्ते—**औदुम्बरेण चमसेनेति** । व्याख्यातं प्राक् चैतत् ( श. प. ७ । २।२।१५ ) । **सर्वाभ्य एवास्मिन्नित्यादि** । ' सर्वाभ्यः ' प्राच्यादिभ्य-श्चतसृभ्यो दिग्भ्यः सकाशात् ' एतेन ' चतुःस्रक्तिचमसकरणकेन बीजावापेन ' अस्मिन् ' अग्नौ ' अन्नं ' 'दधाति' स्थापयति । बीजावपनं मन्त्राणां छन्दोद्वारेण प्रशंसति—**अनुष्टुब्भिरिति** । " या ओषधीः " इत्याद्याः अनुष्टुप्छन्दस्कास्ताभिर्वपेदित्यर्थः । **वाग्वा अनुष्टुब्**—इत्यादि । सा तु " चतुरुत्तराणि छन्दांस्यसृजत "—इति श्रुतेः सर्वच्छन्दोरूपत्वादनुष्टुभो वाक्त्वम् ( श. प. ३ । १ । ४ । २१ ) । अन्नमपि वाचैवाद्यमानमित्य-न्नात्मकस्यौषधिवापस्य वाक्संस्तुताऽनुष्टुप्करणकत्वं युक्तमिति भावः ॥ १४ ॥

तिसृभिस्तिसृभिर्ऋग्भिर्वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १९ ॥

द्वादशभिर्ऋग्भिः कृष्टे वपति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥

स वै कृष्टे वपति । तस्मात्कृष्टेऽन्नं पच्यते स यत्कृष्टऽएव वपेन्नाकृष्टे कृष्टऽएवान्नं पच्येत नाकृष्टेऽथ यदकृष्टऽएव वपेन्न कृष्टेऽकृष्टऽएवान्नं पच्येत न कृष्टे कृष्टे चाकृष्टे च वपति तस्मात्कृष्टे चाकृष्टे चान्नं पच्यते॥१७॥

तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १८ ॥

---

तिसृभिस्तिसृभिर्ऋग्भिर्वपति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतदन्नं दधाति ॥ १९ ॥

द्वादशभिर्ऋग्भिः कृष्टे वपति । द्वादश मासाः संवत्सरः । सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥

स वै कृष्टे वपति । तस्मात्कृष्टेऽन्नं पच्यते । स यत्कृष्टऽएव वपेत्—नाकृष्टे, कृष्टऽएवान्नं पच्येत—नाकृष्टे । अथ यदकृष्टऽएव वपेत्—न कृष्टे, अकृष्टऽएवान्नं पच्येत—न कृष्टे । कृष्टे चाकृष्टे च वपति—तस्मात्कृष्टे चाकृष्टे चान्नं पच्यते ॥ १७ ॥

तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतदन्नं दधाति ॥ १८ ॥

---

पञ्चतृचात्मको ह्यनुवाकस्तत्र सर्वत्र क्रमेण तृचैरेवौषधिवापः कर्त्तव्य इति विधाय त्रित्वसंख्यां प्रशंसति—तिसृभिस्तिसृभिरिति[२] । "नित्यवीप्सयोः"—( पा. सू. ८ । १ । ४ ) इति द्विर्वचनम् । त्रिवृदग्निरित्यादि । व्याख्यातम् ॥ १९ ॥

कृष्टप्रदेशे द्वादशभिर्ऋग्भिर्वपनं विधाय स्तौति—द्वादशभिरिति । चतसृषु सीतास्वेकैकस्यां तिसृभिर्वपने सति द्वादशर्चः सम्पद्यन्ते, सैव द्वादशसंख्याऽत्रानूद्य स्तूयते । निगदसिद्धमन्यत् ॥ १६ ॥

तस्य बीजावापस्य कृष्टक्षेत्राधिकरणत्वमनूद्य स्तौति—स वै कृष्ट इति । यस्मात् कृष्टप्रदेशे बीजावापः क्रियते, तस्मादेव कारणात् लोके 'कृष्टे' कर्षणसंस्कारसंस्कृते भूमिभागे व्रीहियवादिलक्षणम् 'अन्नं पच्यते' फलमिति । स यत् कृष्ट एवेत्यादिना—कृष्टाकृष्टक्षेत्रे वपनायैकैकत्र बीजावापनिन्दा प्रतिपाद्यते । निगदसिद्धोऽर्थः ॥ १७ ॥

कृष्टाकृष्टात्मके यद्बीजावपनं विहितम्, तत् करणमन्त्राणामपि त्रिसङ्ख्यामुपजीव्य स्तौति—तिसृभिः कृष्टे चाकृष्टे चेति ॥ १८ ॥

---

१–अनारभ्याधीता द्वादश वर्जयित्वेयं गणना । २–या ओषधीरिति तृचैर्वपत्युदपात्रवत् । का. श्रौ. सू. १७ । ५२ ।

यद्देव सर्व्वौषधं व्वपति । ( त्ये ) एतद्वाऽएनं देवाः संस्करिष्यन्तः पुरस्तात्सर्व्वेण भेषजेनाभिषज्यंस्तथैवैनमयमेतत्संस्करिष्यन्पुरस्तात्सर्व्वेण भेषजेन भिषज्यति ॥ १९ ॥

सर्व्वौषधं भवति । सर्व्वमेतद्भेषजं यत्सर्व्वौषधꣳ सर्व्वेणैवैनमेतद्भेषजेन भिषज्यति ॥ २० ॥

तिसृभिस्तिसृभिर्ऋग्भिर्व्वपति । त्रिव्वृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥ २१ ॥

द्वादशभिर्ऋग्भिः कृष्टे व्वपति । द्वादश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥ २२ ॥

स वै कृष्टे व्वपति । प्राणांस्तद्भिषज्यति स यत्कृष्टऽएव व्वपेन्नाकृष्टे प्राणानेव भिषज्येन्नेतरमात्मानमथ यदकृष्टऽएव व्वपेन्न कृष्टऽआत्मान-

---

यद्देव सर्वौषधं वपति । एतद्वाऽएनं देवाः संस्करिष्यन्तः पुरस्तात्सर्वेण भेषजेनाभिषज्यन् । तथैवैनमयमेतत्संस्करिष्यन्पुरस्तात्सर्वेण भेषजेन भिषज्यति ॥ १९ ॥

सर्वौषधं भवति । सर्वमेतद्भेषजम्—यत्सर्वौषधम् । सर्वेणैवैनमेतद्भेषजेन भिषज्यति ॥ २० ॥

तिसृभिस्तिसृभिर्ऋग्भिर्वपति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥ २१ ॥

द्वादशभिर्ऋग्भिः कृष्टे वपति । द्वादश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतद्भिषज्यति ॥ २२ ॥

स वै कृष्टे वपति । प्राणांस्तद्भिषज्यति । स यत् कृष्टऽएव वपेत्—नाकृष्टे, प्राणानेव भिषज्येत्—

---

एवमन्नचितिरूपेण बीजावापं संस्तुत्य भेषजरूपेणापि स्तौति—यद्देवेत्यादिना । पुरावृत्तकथनम् । सर्वा ह्योषधयो यावदन्नमूलफलकन्दादिरूपेण भेषजानि भवन्ति तथा सति सर्वौषधिसम्बन्धिबीजावपनेन सर्वेणैव भेषजेन 'देवाः' 'एनम्' अग्निम् 'अभिषज्यन्' अचिकित्सन् । "भिषज् चिकित्सायाम्"—इति (पा. सू. ३।१।२७) ( कं.गं.२३ ) धातुः । तद्वदयं यजमानोऽपि 'एतत्' एतर्हि 'एनम्' अग्निं 'संस्करिष्यन्,' ततः प्रागेव सर्वौषधिबीजावापेन सर्वेणैव भेषजेन 'भिषज्यति' चिकित्सति । यथा करिष्यमाणश्चयनसंस्कारो वितथो न भवेत्, तथैनं भिषज्येदित्यर्थः ॥ १९ ॥

सर्वत्वमनूद्य स्तौति—सर्वौषधं भवतीति । पूर्ववद् व्याख्येयम् ॥ २० ॥

तृचकरणकं बीजावपनमनूद्यैतदपि भेषजहेतुत्वेन स्तौति—तिसृभिस्तिसृभिर्ऋग्भिरिति ॥ २१ ॥

चतसृषु सीतासु करणमन्त्राणां द्वादशसङ्ख्यामनूद्य भेषजहेतुत्वेन स्तौति—द्वादशभिर्ऋग्भिरिति ॥ २२ ॥

कृष्टप्रदेशे वपनस्य प्राणभिषज्यरूपतामाह—स वै कृष्ट इत्यादिना । अकृष्टप्रदेशस्य शरीरस्य च साम्यं

मेव भिषज्येन्न प्राणान्कृष्टे चाकृष्टे च वपति प्राणांश्च तदात्मानं च भिषज्यति ॥ २३ ॥

तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥ २४ ॥

पञ्चदशोदचमसान्निनयति । पञ्चदशभिर्ऋग्भिर्वपति तत्त्रिꣳशत्त्रिꣳशदक्षरा विराड्विराडु कृत्स्नमन्नꣳ सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति ॥ २५ ॥

या ऽओषधीः पूर्वा जाताः । ( ० ) देवेभ्यस्त्रियुगं पुरेत्यृतवो वै देवास्तेभ्य ऽएतास्त्रिः पुरा जायन्ते वसन्ता प्रावृषि शरदि मनै नु बभ्रूणामह-

---

नेतरमात्मानम् । अथ यदकृष्टऽएव वपेत्—न कृष्टे, आत्मानमेव भिषज्येत्—न प्राणान् । कृष्टे चाकृष्टे च वपति—प्राणांश्च तदात्मानं च भिषज्यति ॥ २३ ॥

तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतद् भिषज्यति ॥ २४ ॥

पञ्चदशोदचमसान्निनयति, पञ्चदशभिर्ऋग्भिर्वपति—तत्त्रिंशत् । त्रिंशदक्षरा विराट् । विराडु कृत्स्नमन्नम् । सर्वमेवास्मिन्नेतत् कृत्स्नमन्नं दधाति ॥ २५ ॥

" या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा "—इति । ऋतवो वै देवाः । तेभ्य एतास्त्रिः पुरा जायन्ते—वसन्ता प्रावृषि शरदि । " मनै नु बभ्रूणामहम् "—इति । सोमो वै

---

गर्तराहित्यम् । कृष्टाकृष्टयोरुभयत्र बीजावापेन प्राणशब्दाभिधेयांश्चक्षुरादीन्, तदाश्रयभूतम् 'आत्मानं' शरीरं च एतेन भिषज्येदित्यर्थः ॥ २३ ॥

कृष्टाकृष्टबीजावपने च मन्त्रगतं त्रित्वमनूद्य, तस्यापि भेषजहेतुतामाह—तिसृभिः कृष्टे चाकृष्टे चेति ॥२४॥

उदचमससङ्ख्यां बीजावापमन्त्रसङ्ख्यां चानूद्य सम्भूय प्रशंसति—पञ्चदशोदचमसानिति । त्रिꣳशदक्षरा विराडिति । द्वाभ्यामक्षराभ्यामनुष्टुभो न्यूनत्वात् त्रिंशदक्षरा ऋक् विराट्छन्दस्का भवति । " ऊनाधिकेनैकेन निचृद्भुरिजौ, द्वाभ्यां विराट्स्वराजौ "—( पिङ्गलसू. ४ खण्डे, ऋ. प्रा. ४ पटले, का. स. ९।१ ) इति हि तल्लक्षणम् । सा च 'विराट्' 'कृत्स्नमन्नम्'; भूरूपा हि तादृशी विराट् । अत एव श्रूयते—" इयं वै विराड् " ( श. प. १ । ९ । २ । २० । ) इति । सा च स्वेप्सितव्रीहियवादिसर्वधान्योत्पत्तिहेतुत्वात् सर्वान्नरूपा । तथा च विराट्संपत्त्या 'अस्मिन्' अग्निक्षेत्रे 'सर्वमेवान्नम् एतत्' 'कृत्स्नम्' निरवशेषं 'दधाति' स्थापयति ॥ २५ ॥

अथ बीजावापमन्त्रपदानामनुवादपूर्वकमभिप्रायं व्याचष्टे—या ओषधीरित्यादिना । " देवेभ्यस्त्रियुगं पुरा "

---

१—वसन्ता इति सप्तम्यन्तम् । " सुपां सुलुक् "—इति सप्तम्या डादेशे रूपम् । वसन्ते इत्यर्थः ।

मिति सोमो वै बभ्रुः सौम्या ऽओषधय ऽऔषधः पुरुषः शतं धामानीति यदिदꣳ शतायुः शतार्घः शतवीर्य्यऽएतानि हास्य तानि शतं धामानि सप्त चेति यऽएवेमे सप्त शीर्षन्प्राणास्तानेतदाह ॥ २६ ॥

शतं वोऽअम्ब धामानि । सहस्रमुत वो रुहऽइति यदिदꣳ शतधा च सहस्रधा च विरूढाऽअधा शतक्रत्वो यूयमिमं मेऽअगदं कृतेति यमिमं भिषज्यामीत्येतत् ॥ २७ ॥

---

बभ्रुः, सौम्या ओषधयः, औषधः पुरुषः । "शतं धामानि"–इति । यदिदं शतायुः, शतार्घः, शतवीर्यः–एतानि हास्य तानि शतं धामानि । "सप्त च"–( वा. सं. १२।७९ ) इति । यऽएवेमे सप्त शीर्षन् प्राणाः–तानेतदाह ॥ २६ ॥

"शतं वोऽअम्ब धामानि, सहस्रमुत वो रुहः"–इति । यदिदं शतधा च सहस्रधा च विरूढाः । "अधा शतक्रत्वो यूयमिमं मेऽअगदं कृत"–इति । यमिमं भिषज्यामीत्येतत् ॥ २७ ॥

---

इत्यस्य मन्त्रभागस्याभिप्रायमाह–ऋतवो वै देवा इति । 'याः' 'ओषधीः' ओषधयः सृष्ट्यादावुत्पन्नास्ताः 'देवेभ्यः' ऋतुभ्यो वसन्तादिभ्यः 'पुरा' पूर्वम् वसन्तप्रावृट्शरदामादिषु संवत्सरमध्ये 'त्रियुगं' त्रिकालं जायन्त इत्यर्थः ॥

उत्तरार्द्धमनूद्य व्याचष्टे–मनै नु बभ्रूणामिति । अमृतरूपेण सर्वेषां भरणात् 'बभ्रुः' सोमः, ओषधयोऽपि सोमदेवताकत्वात् अत्र बभ्रुशब्दाभिधेयाः, तादृगोषधिपरिणामविशेष एव 'पुरुषः' मनुष्यशरीरमिति तत्तादात्म्यम् । अयमर्थः,–'बभ्रूणां' सौम्यानाम् ओषधीनां सम्बन्धीनि वक्ष्यमाणानि, 'अहं' 'नु' अद्य 'मनै' मन्ये जानामि । कानि पुनस्तानि मन्तव्यानीत्याशङ्क्य चतुर्थपादं व्याचष्टे–शतं धामानीति । ओषधिपरिणामस्य पुरुषस्य शरीरस्य यदिदं शतसंवत्सरं जीवनम्, एवं शतसङ्ख्याका अर्घाः पूजाप्रयोजनानि, यानि च तन्निष्पादकानि शतसङ्ख्याकानि वीर्याणि सामर्थ्यानि, 'एतानि' खल्वस्य ओषधिविकारस्य शरीरस्य 'तानि' मन्त्रोक्तानि शतसङ्ख्याकानि 'धामानि' । धामशब्दस्य त्रयोऽर्थाः यास्केनोक्ताः– "धामानि त्रयाणि भवन्ति,–स्थानानि, नामानि, जन्मानीति" ( निरु. ९ । ३ । ७ । ) इति । सप्त चेति । 'य एवेमे' 'सप्त' सप्तसङ्ख्याकाः 'शीर्षन्' शीर्ष्णि सम्बद्धाश्चक्षुःश्रोत्रादिरूपाः 'प्राणाः' सप्त चेत्येतत् तानेव 'प्राणान्' प्रतिपादयतीत्यर्थः । उदीरितलक्षणानि शतसङ्ख्याकानि धामानि, सप्त शीर्षण्यान् प्राणांश्च ओषधीनां सम्बन्धित्वेन जानामीत्यन्वयः ॥ २६ ॥

द्वितीयस्या ऋचः पूर्वार्द्धमनूद्य व्याचष्टे–शतं वो अम्बेति । 'इदम्' इदानीं 'शतधा' शतप्रकारेण 'सहस्रधा' सहस्रप्रकारेण च 'विरूढाः' 'उत्पन्नाः' ओषधयो दृश्यन्त इति 'यत्' 'एतत्' एतेनार्द्धर्चेन प्रतिपाद्यत इत्यर्थः । 'अम्ब' हे मातः ओषधयः! 'वः' युष्माकं 'धामानि' स्थानानि 'शतं' शतसंख्या-

( त्ता )त्ता ऽएता ऽएकव्याख्यानाः । (ऽ) एतमेवाभि यथैतमेव भिषज्येद्देतं पारयेत्ताऽअनुष्टुभो भवन्ति व्वाग्वाऽअनुष्टुब्वाग्घ सर्व्वं भेषजꣳ सर्व्वेणैवैनमेतद्भेषजेन भिषज्यति ॥ २८ ॥

( त्य ) अथातो निरुक्तानिरुक्तानामेव । यजुषा द्वावनड्वाहौ युनक्ति तूष्णीमितरान्यजुषा चतस्रः सीताः कृषति तूष्णीमितरास्तूष्णीं दर्भस्तम्बमुपदधाति यजुषाऽभिजुहोति तूष्णीमुदचमसान्निनयति यजुषा व्वपति ॥ २९ ॥

---

ता एता एकव्याख्यानाः—एतमेवाभि । यथैतमेव भिषज्येद्—एतं पारयेत् । ता अनुष्टुभो भवन्ति । वाग्वाऽअनुष्टुप् । वाग्घ सर्वं भेषजम् । सर्वेणैवैनमेतद्भेषजेन भिषज्यति ॥ २८ ॥

अथातो निरुक्तानिरुक्तानामेव । यजुषा द्वावनड्वाहौ युनक्ति,—तूष्णीमितरान् । यजुषा चतस्रः सीताः कृषति, तूष्णीमितराः । तूष्णीं दर्भस्तम्बमुपदधाति, यजुषाऽभिजुहोति । तूष्णीमुदचमसान्निनयति, यजुषा वपति ॥ २९ ॥

---

कानि । 'उत' शब्दोऽप्यर्थे । तथा 'वः' युष्माकं 'रुहः' प्ररोहाः अङ्कुरा अपि 'सहस्रं' सहस्रसङ्ख्याका इति ॥

द्वितीयार्द्धमनूद्य तात्पर्यमाह—अधा शतक्रत्व इति । 'अध' शब्दो हेतौ । हे 'शतक्रत्वः' शतकर्माणः ओषधयः ! 'यूयं' मदीयम् 'इमम्' पुरुषम् 'अगदं' व्याधिरहितं 'कृत' कुरुत । 'यम् इमम्' आतुरमिदानीम् अहं 'भिषज्यामि;' तमेव कुरुतेत्येतदस्य वाक्यस्य तात्पर्यमित्यर्थः । "भिषज् चिकित्सायाम्"—(पा. सू. ३ । १ । २७ । धा. पा. कं. २३ ।) इति धातुः कण्ड्वादिः ॥ २७ ॥

एवमृग्द्वयं व्याख्याय उत्तरासामप्येवमेव व्याख्यानमित्यतिदिशति—ता एता एकव्याख्याना इति । 'ता एताः' बीजावपनार्था ऋचः 'एकव्याख्यानाः' समानव्याख्यानाः, अतो न पृथक्तया व्याख्यायन्त इत्यर्थः ॥

अतिदिष्टं व्याख्यानं योजयति—एतमेवाभीति । "इमं मे अगदं कृत" इति योऽयं पुरुषोऽनुक्रान्तः, एतमेवाभिलक्ष्य उत्तरा ऋचोऽप्याम्नाताः, तासाञ्चायं तात्पर्यगम्योऽर्थः—'यथा' येन प्रकारेण 'एतमेव' पुरुषं चिकित्सको 'भिषज्येत्' भेषजैर्युक्तं कुर्यात्, तेन च भैषज्येन 'एतं' व्याधिग्रस्तं 'पारयेत्' पारमारोग्यं प्रापयेत्, हे ओषधयः ! तथा कुरुतेति शेषः ॥

तासां छन्दोद्वारेण भेषजहेतुतामाह—ता अनुष्टुभो भवन्तीति । वाग्घ सर्वं भेषजमिति । 'वाक्' खलु 'सर्वं भेषजम्' तद्धेतुत्वात् । एवं सति 'एनं' पुरुषविधं चेष्यमाणमग्निम् 'एतत्' एतेनानुष्टुप्छन्दसः प्रयोगेण 'सर्वेणैव भेषजेन' 'भिषज्यति' भेषजं कृतवान् भवतीत्यर्थः ॥ २८ ॥

अथ विहितानामनडुद्योजनादीनामोषधिवापान्तानां कर्मणां समन्त्रकामन्त्रकत्वं सम्भूय स्तौति—अथातो निरुक्तानिरुक्तानामेव—इति । 'अथ' अनन्तरं यतः समन्त्रकामन्त्रकभेदेन द्विविधानि विहितानि

प्रजापतिरेषोऽग्निः । ( रु ) उभयम्वेतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्यानिरुक्तं परिमितᳫँ रूपं तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितᳫँ रूपं तदस्य तेन संस्करोति स ह वाऽएतᳫँ सर्वं कृत्स्नं प्रजापतिᳫँ संस्करोति यऽएवं विद्वानेतदेवं करोति बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि पशुरेष यदग्निस्तस्मात्पशोर्बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि ॥ ३० ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ७-२-२ ॥ ( २।४ )

इति द्वितीयोऽध्यायः समाप्तः ॥ ७-२ ॥

---

प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिः-निरुक्तश्चानिरुक्तश्च, परिमितश्चापरिमितश्च । तद् यद्यजुषा करोति-यदेवास्य निरुक्तं परिमितं रूपम्-तदस्य तेन संस्करोति । अथ यत्तूष्णीं-यदेवास्यानिरुक्तमपरिमितं रूपं-तदस्य तेन संस्करोति । स ह वाऽएतं सर्वं कृत्स्नं प्रजापतिं संस्करोति-य एवं विद्वानेतदेवं करोति । बाह्यानि रूपाणि निरुक्तानि भवन्ति, अन्तराण्यनिरुक्तानि । पशुरेषः-यदग्निः । तस्मात्पशोर्बाह्यानि रूपाणि निरुक्तानि भवन्ति, अन्तराण्यनिरुक्तानि ॥ ३० ॥

---

कर्माणि, अतः कारणात् तेषां 'निरुक्तानिरुक्तानां' समन्त्रकामन्त्रकाणां विहितानामेव कर्मणां स्तुतिः क्रियत इति शेषः । निरुक्तानिरुक्तानि कर्माणि क्रमेणानुक्रामति-'यजुषा' मन्त्रेण "सीरा युञ्जन्ति"-( वा. सं. १२ । ६७, ६८ ) इत्यादिकेन 'द्वौ धुर्यावनड्वाहौ युनक्ति,' 'इतरान्' अनडुहोऽग्रे बध्यमानान् 'तूष्णीं' युनक्ति । तथा 'चतस्रः सीताः' 'यजुषा' मन्त्रेण 'कृषति,' 'इतराः' द्वादश सीताः 'तूष्णीं' कृषति । 'तूष्णीं दर्भस्तम्बम्' इत्याद्येवं व्याख्येयम् ॥ २९ ॥

एवं निरुक्तानिरुक्तभेदेन विहितानि कर्माण्यनूद्य चित्याग्निरूपस्य प्रजापतेरपि निरुक्तानिरुक्तात्मना परिमितापरिमितात्मना च द्वैरूप्यमाह-प्रजापतिरेषोऽग्निरिति । योऽयमग्निः 'एषः' एव 'प्रजापतिः' । यदेतन्निरुक्तानिरुक्तात्मकमुभयविधं जगत्, असावेव स प्रजापतिः । अतो निरुक्तानिरुक्तजगत्तादात्म्यात् प्रजापतिरपि 'निरुक्तश्च' ईदृगाकार इति निःशेषेणोक्तश्च, 'अनिरुक्तः' तद्विपरीतः 'च' अत एव 'परिमितः' परिच्छिन्नश्च, 'अपरिमितश्च' अपरिच्छिन्नश्च भवति ॥

इत्थं प्रजापतिरूपस्यापि निरुक्तानिरुक्तभेदेन द्वैविध्यमुक्त्वा, समन्त्रकेण निरुक्तेनानडुद्योजनादिकर्मणा निरुक्तभागस्य, इतरेणेतरभागस्य च संस्कारं विभज्य योजयति-तद्यद्यजुषा करोतीत्यादिना । विद्वदनुष्ठानं प्रशंसति-स ह वा इति । 'कृत्स्नं' सर्वावयवसहितम्, 'सर्वं' निरवशेषम्; अतो न पौनरुक्त्यम् । बाह्याभ्यन्तरभावेन निरुक्तानिरुक्तत्वधर्मयोगात् चित्याग्नेः पशुरूपतामापाद्य स्तौति-बाह्यानि रूपाणीति । यान्येतानि

निरुक्तानि कर्माण्यनुक्रान्तानि, तान्यग्नेः 'बाह्यानि रूपाणि' । अनिरुक्तानि 'अन्तराणि' अभ्यन्तरवर्त्तीनि भवन्ति । ईदृशो यदयमग्निः, 'एषः' 'पशुः' एव, 'तस्मात्' एव कारणात् लोके 'पशोः' 'बाह्यानि' बहिरवस्थितानि 'रूपाणि' रोमादीनि 'निरुक्तानि,' 'अन्तराणि' असृगादीनि 'अनिरुक्तानि' च दृश्यन्ते ॥ ३० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ७–२–४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये सप्तमकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ ७–२ ॥

# अथ तृतीयाऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च तृतीयं ब्राह्मणम् ।

चितो गार्हपत्यो भवति । (त्यु) अचित ऽआहवनीयोऽथ राजानं क्रीणात्ययं वै लोको गार्हपत्यो द्यौराहवनीयोऽथ योऽयं वायुः पवतऽएष सोमऽएतं तदिमौ लोकावन्तरेण दधाति तस्मादेष ऽइमौ लोकावन्तरेण पवते ॥ १ ॥

यद्वेव चिते गार्हपत्ये । (त्येऽचि) अचितऽआहवनीयेऽथ राजानं क्रीणात्यात्मा वाऽअग्निः प्राणः सोम ऽआत्मंस्तत्प्राणं मध्यतो दधाति तस्मादयमात्मन्प्राणो मध्यतः ॥ २ ॥

---

### सोमक्रयणम् ।

चितो गार्हपत्यो भवति—अचित आहवनीयः—अथ राजानं क्रीणाति । अयं वै लोको गार्हपत्यो—द्यौराहवनीयः । अथ योऽयं वायुः पवते—एष सोमः । एतं तदिमौ लोकावन्तरेण दधाति । तस्मादेष इमौ लोकावन्तरेण पवते ॥ १ ॥

यद्वेव चिते गार्हपत्ये—अचितऽआहवनीये—अथ राजानं क्रीणाति । आत्मा वाऽअग्निः, प्राणः सोमः । आत्मंस्तत्प्राणं मध्यतो दधाति । तस्मादयमात्मन्प्राणो मध्यतः ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ साग्निचित्ये क्रतौ सोमक्रयणस्य कालं विधाय स्तौति—चितो गार्हपत्य इति । गार्हपत्याहवनीयचयनयोर्मध्यकाले चोदकप्राप्तः सोमक्रयः कर्त्तव्य इत्यर्थः । सोमस्य गार्हपत्याहवनीययोर्मध्येऽवस्थानं लोकत्रयरूपेणोपपादयति—अयं वै लोक इति । भूलोकस्वर्लोकात्मकौ गार्हपत्याहवनीयौ । 'योऽयं वायुः पवते,' 'एषः' एव क्रीयमाणः—'सोमः'; तत्क्रयस्य गार्हपत्यचयनादूर्ध्वमाहवनीयचयनात् पूर्वमेतस्मिन् समयेऽनुष्ठानात् 'एतं' सोमात्मकं वायुम् 'इमौ लोकावन्तरेण' अनयोर्लोकयोर्मध्ये 'दधाति' स्थापयति । "अन्तरान्तरेण युक्ते" (पा. सू. २ । ३ । ४ ।) इति द्वितीया । यस्मादेव वायुसंस्तुतः सोमो मध्ये क्रीयते, तस्मादेव दृश्यमानो 'वायुः' 'इमौ लोकौ' भूलोकस्वर्लोकौ 'अन्तरेण' 'पवते' परिवर्त्तते ॥ १ ॥

इत्थं सोमक्रयस्य मध्येऽनुष्ठानमधिलोकं स्तुत्वा अध्यात्ममपि स्तौति—यद्वेवेति । आत्मा वा अग्निरिति । गार्हपत्याहवनीयचित्यात्मकः 'अग्निः' 'आत्मा' विस्रस्तावयवस्य प्रजापतेः शरीरम् । तन्मध्यवर्ती प्राणवायुः 'सोमः'; अतस्तस्य गार्हपत्याहवनीयचयनयोर्मध्ये क्रीयमाणत्वात् 'आत्मन्' आत्मनि शरीरे 'प्राणमेव मध्यतो दधाति' धारयति । 'तस्मात्' एव कारणात् पञ्चवृत्त्यात्मकः 'अयं प्राणः' सर्वप्राणिनाम् 'आत्मन्' आत्मनि शरीरे 'मध्यतः' दृश्यते ॥ २ ॥

( तो ) युद्धेव चिते गार्हपत्ये । ( त्येऽचि ) अचित ऽआहवनीयेऽथ राजानं क्रीणात्यात्मा वाऽअग्नी रसः सोमऽआत्मानं तद्रसेनानुषजति तस्मादयमान्तमेवात्मा रसेनानुषक्तः ॥ ३ ॥

(क्री) राजानं क्रीत्वा पर्युह्य । (ह्या) अथास्माऽआतिथ्यꣳ हविर्निर्वपति तस्य हविष्कृता वाचं विसृजतेऽथ वाऽएतद्व्यतिषजत्यध्वरकर्म चाग्निकर्म च कर्मणः समानतायै समानमिदं कर्मासदिति ॥ ४ ॥

---

यद्वेव चिते गार्हपत्ये—अचितऽआहवनीये—अथ राजानं क्रीणाति । आत्मा वाऽअग्निः, रसः सोमः । आत्मानं तद्रसेनानुषजति । तस्मादयमान्तमेवात्मा रसेनानुषक्तः ॥ ३ ॥

सोमातिथ्यम् ।

राजानं क्रीत्वा पर्युह्य—अथास्माऽआतिथ्यं हविर्निर्वपति । तस्य हविष्कृता वाचं विसृजते ॥—

सौमिकाग्निकव्यतिषजनम् ।

अथ वाऽएतद्व्यतिषजति—अध्वरकर्म च, अग्निकर्म च—कर्मणः समानतायै । समानमिदं कर्मासदिति ॥ ४ ॥

---

राजक्रयस्य मध्येऽनुष्ठानमनूद्य कृत्स्नशरीरे रसानुषङ्गहेतुत्वेनापि स्तौति—यद्वेवेति । रसः सोम इति । अभिषवादिसंस्कारसंस्कृतो हि सोमः सुत्यादिवसे रसात्मको भवति; शरीरसंस्तुतयोर्गार्हपत्याहवनीयचयनयोर्मध्ये रसात्मकस्य तस्याऽनुप्रवेशात् ' आत्मानम् ' शरीरम् आप्यायनहेतुना ' रसेनानुषजति ' अनुषक्तमनुस्यूतं करोति । ' तस्माद् ' एव कारणाद् ' अयमात्मा ' देहः ' आन्तम् ' शिरःप्रभृति पादपर्यन्तं ' रसेन ' ' अनुषक्तः ' व्याप्तो दृश्यते ॥ ३ ॥

आतिथ्यहविष्कृदन्ते आहवनीयचितिसंस्कारं विधित्सुः, ततः प्राक्तनं चोदकप्राप्तं प्रयोगजातमनुक्रामति—राजानं क्रीत्वेति । क्रयानन्तरम्, क्रीतस्य तस्य परिवहणं कृत्वाऽपि अनन्तरम्, ' अस्मै ' सोमाय ' आतिथ्यम् ' पूजार्हं ' हविः ' प्रकृतिवत् ' निर्वपति '; ' तस्य ' कर्मणः सम्बन्धिना 'हविष्कृता' "हविष्कृदेहि ३"—( वा. सं. १ । १९ ) इति मन्त्रेण प्राङ्नियमितां ' वाचम् ' ' विसृजते ' ( श. प. १ । १ । ४।११ ) । अस्मिन् समये आहवनीयचितिसंस्कारं विधित्सुस्तदुपोद्घातत्वेन सौमिकाग्निकयोः कर्मणोः परस्परं व्यतिषङ्गं विधत्ते—अथ वा इति । ' अथ ' खलु ' एतद् ' एवं कुर्वन्नध्वर्युः ' व्यतिषजति ' व्यतिषक्तं परस्परं संसृष्टं करोति । " षञ्ज सङ्गे "—( धा. पा. भ्वा. प. १०१२ ) इत्यस्माल्लटि " दंशसञ्जस्वञ्जां शपि "—( पा. सू. ६ । ४ । २९ । ) इत्यनुनासिकलोपः । किं तदिति तदाह—अध्वरेति । व्यतिषङ्गस्य प्रयोजनमाह—कर्मण इति । सौमिकाग्निकभेदेन द्विविधस्य कर्मणः ' समानतायै ' एकीभवनार्थम् । ननु व्यतिषङ्गमात्रात् कथमनयोरैक्यसिद्धिः, तत्राह—समानमिदमिति । ' इदम् ' अनुष्ठीयमानं सौमिकमाग्निकं च ' कर्म ' ' समानम् ' एकम् ' असद् ' भवेत् ' इति ' अनेनाभिप्रायेण तदुभयं व्यतिषजति; न खलु व्यतिषङ्गमन्तरेणानयोरैक्यसिद्धिरिति भावः ॥ ४ ॥

१७४५

यु॒द्वेवु व्यतिषुजति। (त्या) आ॒त्मा वा॒ऽअ॒ग्निः प्रा॒णोऽध्व॒र ऽआ॒त्मंस्तत्प्रा॒णं मध्य॒तो दधाति तस्माद॒यमा॒त्मन्प्रा॒णो मध्य॒तः ॥ ५ ॥

( तो ) यु॒द्वेवु व्यतिषुजति। ( त्या ) आ॒त्मा वा॒ऽअ॒ग्नी र॒सोऽध्व॒र ऽआ॒त्मानं॒ तद्र॒सेना॒नुषजति तस्माद॒यमान्तमे॒वाऽऽत्मा र॒सेना॒नुष॑क्तोऽथा॒हवनी॒यस्या॒र्धमे॑ति ॥ ६ ॥

तद्धै॒के। ( कऽ ) उभय॒त्रैवु पलाशशा॒खया व्युदूहन्त्युभय॒त्र वै चिनो॒तीति न त॒था कु॒र्यादवस्युति वाव गा॒र्हपत्येनो॒र्ध्वऽ ए॒वाहव॒नीये॒न रोहति तस्मा॒त्तथा न कुर्या॒त् ॥ ७ ॥

---

यद्वेव व्यतिषजति। आत्मा वाऽअग्निः, प्राणोऽध्वरः। आत्मंस्तत् प्राणं मध्यतो दधाति। तस्मादयमात्मन्प्राणो मध्यतः ॥ ५ ॥

यद्वेव व्यतिषजति। आत्मा वाऽअग्निः, रसोऽध्वरः। आत्मानं तद्रसेनानुषजति। तस्मादयमान्तमेवात्मा रसेनानुषक्तः। अथाहवनीयस्यार्धमैति ॥ ६ ॥

तद्धैके—उभयत्रैव पलाशशाखया व्युदूहन्ति। उभयत्र वै चिनोतीति। न तथा कुर्यात्। अवस्यति वाव गार्हपत्येन, ऊर्ध्व एवाहवनीयेन रोहति। तस्मात्तथा न कुर्यात् ॥ ७ ॥

---

एतद्व्यतिषजनमनूद्य स्तौति—यद्वेवेति। प्राणोऽध्वर इति। 'अध्वरः' सोमयागः प्राणस्थानीयः, 'आत्मन्' आत्मनि 'मध्यतः' मध्ये 'तत्' 'प्राणम्' स्थापयति। 'तस्मादयं प्राणः' शरीरमध्ये, वर्तत इति शेषः। तथा—रसोऽध्वर इति। 'अध्वरः' सोमयागो रसस्थानीयः, सर्वप्रकृतित्वात्। गतमन्यत्। वाग्विसर्जनानन्तरमाहवनीयसमीपदेशगमनं विधत्ते—अथाहवनीयस्यार्द्धमैतीति। अर्द्धशब्दो देशवाची। 'आहवनीयस्य' अग्नेः यत् स्थानं कर्षणादिसंस्कारसंस्कृतम्, हविष्कृदाह्वानानन्तरम्, तत् स्थानमागच्छेदित्यर्थः ॥ ५ ॥ ६ ॥

गार्हपत्यस्थानवदाहवनीयस्थानस्यापि पलाशशाखया व्युदूहनमेकीयमतेनोपन्यस्य दूषयति—तद्धैक इति। 'तत्' तत्र 'उभयत्रैव' गार्हपत्ये आहवनीये च 'एके' शाखिनः 'पलाशशाखया' व्युदूहनं मार्जनं कुर्वन्ति। 'उभयत्र' खलु 'चिनोति' 'इति' तत्र हेतुः। व्युदूहनस्य चयनार्थत्वादाहवनीयचितावपि तत् कर्तव्यमित्यर्थः ॥

तदेतन्निराकरोति—न तथेति। प्रतिज्ञातमर्थमुपपादयति—अवस्यति वावेति। गार्हपत्यचयनेन हि यं प्रदेशमध्यवस्यति। अध्यवसानसमये भूशोधनार्थं व्युदूहनमपेक्षितम्, अथ पुनरारोहणसमये आहवनीयचयनेनाप्यूर्द्ध्वः समारोहति, 'तस्मात्' तत् 'न' कर्त्तव्यमित्यर्थः ॥ ७ ॥

( ८ ) अथ गार्हपत्यऽएवोषान्निवपति । नाहवनीयेऽयं वै लोको गार्हपत्यः पशवऽ ऊषा ऽअस्मिंस्तल्लोके पशून्दधाति तस्मादिमेऽस्मिँल्लोके पशवः ॥ ८ ॥

( ब्रोऽथा ) अथाहवनीयऽएव पुष्करपर्णमुपदधाति । न गार्हपत्यऽआपो वै पुष्करपर्णं द्यौराहवनीयो दिवि तदपो दधात्युभयत्र सिकता निवपति रेतो वै सिकताऽ उभयत्र वै विक्रियतेऽस्माद्रेतसोऽधि विक्रियाताऽइति ॥ ९ ॥

ता नानामन्त्राभ्यां निवपति । मनुष्यलोको वै गार्हपत्यो देवलोकऽआहवनीयो नानो वाऽएतद्यद्दैवं च मानुषं च द्राघीयसा मन्त्रेणाऽऽहवनीये

---

अथ गार्हपत्यऽएवोषान्निवपति, नाहवनीये । अयं वै लोको गार्हपत्यः, पशव ऊषाः । अस्मिंस्तल्लोके पशून्दधाति । तस्मादिमेऽस्मिंल्लोके पशवः ॥ ८ ॥

अथाहवनीय एव पुष्करपर्णमुपदधाति, न गार्हपत्ये । आपो वै पुष्करपर्णम्, द्यौराहवनीयः । दिवि तदपो दधाति । उभयत्र सिकता निवपति । रेतो वै सिकताः । उभयत्र वै विक्रियते । अस्माद्रेतसोऽधि विक्रियाताऽइति ॥ ९ ॥

ता नानामन्त्राभ्यां निवपति । मनुष्यलोको वै गार्हपत्यो, देवलोक आहवनीयः । नानो वा-

---

गार्हपत्यचितिवत् प्रसक्तमूषाणां निवपनमपि तत्रैव कर्त्तव्यमिति निगमयति—अथ गार्हपत्य एवेति । एवकारव्यवच्छेद्यमाह—नाहवनीय इति । अत्र हेतुमाह—अयं वै लोक इति । भूरिति व्याहृत्या आहितत्वाद् गार्हपत्यो भूलोकात्मकः; " भूर्भुव इत्येतावतैव गार्हपत्यमादधाति " इति हि ब्राह्मणम् ( श. प. २।१।४।१४ ) ऊषरप्रदेशस्य पशुभिर्लिह्यमानत्वादूषाणां पश्वात्मकत्वम् ॥ ८ ॥

अथाहवनीये प्रतिनियतं विधास्यमानं पुष्करपर्णोपधानमनूद्य प्रतिनियतफलप्रतिपादनेन स्तौति—अथाहवनीय एवेति । अवधारणफलमाह—न गार्हपत्य इति । अत्र हेतुमाह—आपो वा इति । पुष्करपर्णस्याप्सु जननात्तदबात्मकमित्यर्थः । द्यौराहवनीय इति । सुवरिति—व्याहृत्याहितत्वाद् आहवनीयो द्युलोकात्मकः । ' तत् ' तत्र पुष्करपर्णोपधानेन द्युलोके ' अपः ' उदकानि वृष्ट्युपादानत्वेन स्थापयतीत्यर्थः ॥

गार्हपत्यवदाहवनीयेऽपि सिकतानिवपनं कर्त्तव्यमिति विधत्ते—उभयत्रेति । तदेतदुपपादयति—रेतो वा इति । सितभास्वरत्वादिरूपसाम्यात् सिकतानां रेतस्त्वम्; ' उभयत्र ' गार्हपत्यस्थान आहवनीयस्थाने च चितिरूपेण चित्योऽग्निः; ' विक्रियते ' विशिष्टरूपवान् क्रियते । विक्रियमाणश्चासौ ' अस्मात् ' सिकतालक्षणाद् ' रेतसः ' ' अधि ' उपरि ' विक्रियातै ' विक्रियेत, विकृतिं भजेत ' इति ' अनेनाभिप्रायेण उभयत्र सिकतानां निवपनम् ॥ ९ ॥

उभयत्र मन्त्रभेदं विधाय स्तौति—ता नानामन्त्राभ्यामिति । ' ताः ' सिकताः भिन्नमन्त्राभ्यामित्यर्थः ।

निवपति ह्रसीयसा गार्हपत्ये द्राघीयो हि देवायुषꣳ ह्रसीयो मनुष्यायुषꣳ स पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति रेतो वै सिकताऽअस्माद्रेतसोऽधीमा विक्रियान्ताऽ इति ॥ १० ॥

तदाहुः । ( यं ) यद्योनिः परिश्रितो रेतः सिकताऽअथ पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति कथमस्यैतद्रेतोऽपरासिक्तं परिगृहीतं भवतीत्युल्बं वाऽऊषास्तद्यदूषान्पूर्वान्निवपत्येतेनो हास्यैतदुल्बेन रेतो-

ऽएतद्–यद्दैवं च मानुषं च । द्राघीयसा मन्त्रेणाहवनीये निवपति, ह्रसीयसा गार्हपत्ये । द्राघीयो हि देवायुषम्, ह्रसीयो मनुष्यायुषम् । स पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति । रेतो वै सिकताः । अस्माद्रेतसोऽधीमा विक्रियान्ताऽइति ॥ १० ॥

तदाहुः–यद्योनिः परिश्रितः, रेतः सिकताः । अथ पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति । कथमस्यैतद्रेतोऽपरासिक्तं परिगृहीतं भवतीति । उल्बं वाऽऊषाः । तद्यदूषान्पूर्वान्निवपति–

"अग्नेर्भस्मासि" इति मन्त्रेण ( वा. सं. १२ । ४६ ) गार्हपत्ये सिकतानिवपनं विहितम्[1] ( श. प. ७ । १ । १ । ११ ), "अग्ने तव श्रवो वयः" ( श. प. ७ । ३ । १ । २९ ) इत्याहवनीये सिकतानिवपनस्य मन्त्रो विधास्यते । एवं नानामन्त्रत्वमनूद्य स्तूयते–गार्हपत्याहवनीययोर्भूलोकस्वर्लोकात्मकत्वं क्रमेण प्रतिपादितम् । नानो वा एतदिति । 'दैवम्' देवसम्बन्धि, 'मानुषम्' मनुष्यसम्बन्धि च यदेतत् स्थानद्वयम्, तदेतन्नानैव खलु विभिन्नमेव । मन्त्रं दैर्घ्यह्रस्वत्वाभ्यां स्तौति–द्राघीयसेति । "अग्ने तव श्रवः" इति मन्त्रः ( वा. सं १२ । १०६ ) "अग्नेर्भस्मासि" इति मन्त्रापेक्षया 'द्राघीयान्' अतिशयेन दीर्घः; दीर्घशब्दादीयसुनि "प्रियस्थिर" (पा.सू. ६–४–१५७) इत्यादिना दीर्घशब्दस्य द्राघादेशः । तेन 'मन्त्रेण' आहवनीये सिकता निवपति । 'ह्रसीयसा' ह्रस्वतरेण "अग्नेर्भस्मासि" इति मन्त्रेण । मन्त्रगतं द्राघीयस्त्वं ह्रसीयस्त्वं च प्रतिपादयति–द्राघीयो हीति । दीर्घतमं हि 'देवायुषम्' देवानामायुर्जीवितम्, 'ह्रसीयः' ह्रस्वतमं स्वल्पम् हि 'मनुष्यायुषम्' मनुष्यजीवितम्, अतो देवलोकमनुष्यलोकसंस्तुतयोराहवनीयगार्हपत्ययोस्तादृङ्मंत्रसम्बन्धो युक्त इत्यर्थः ॥

गार्हपत्यचयने सिकतानिवपनस्य परिश्रितां पूर्वभावित्वमनूद्य स्तौति–स पूर्वा इति । तथा निवपने कारणमाह–रेतो वै सिकता इति । 'अस्मात्' सिकतारूपात् 'रेतसः' 'अधि' उपरि 'इमाः' परिश्रितो 'विक्रियान्ते' विशिष्टरूपाः कृता भवेयुः । अन्यथा हि निरुपादानत्वात् परिश्रितां विक्रिया न स्यादिति भावः ॥ १० ॥

सिकतानिवपनस्य परिश्रितां पूर्वत्वे दोषं दर्शयति–तदाहुरिति । 'तत्' तत्र विषये 'आहुः' चोदयन्ति ब्रह्मवादिनः–योनौ हि रेतः सिच्यते, परिश्रितश्च योनिसंस्तुताः; तथा सति 'अस्य' अग्नेः 'एतत्' सिकतारूपं

१–सिकताश्चाग्नेर्भस्मेत्यूषवत् । का० श्रौ० सू० १७ । ६ ॥

ऽपरासिक्तं परिगृहीतं भवत्यथाहवनीये परिश्रितोऽभिमन्त्रयते तस्योक्तो बन्धुरथ सिकता निवपति रेतो वै सिकताऽएतयोऽअस्यैतद्योन्या रेतोऽपरासिक्तं परिगृहीतं भवति ॥ ११ ॥

( त्यु ) अथाहवनीयऽएवाप्यानवतीभ्यामभिमृशति । न गार्हपत्येऽयं वै लोको गार्हपत्यः स्वर्गो लोकऽ आहवनीयोऽद्धो वाऽअयमस्मिँल्लोके जातो यजमानः स्वर्गऽ एव लोके प्रजिजनयिषितव्यस्तद्यदाहवनीयऽएवाप्यानवतीभ्यामभिमृशति न गार्हपत्ये स्वर्गऽएवैनं तल्लोके प्रजनयति १२

---

एतेनो हास्यैतदुल्बेन रेतोऽपरासिक्तं परिगृहीतं भवति । अथाहवनीये परिश्रितोऽभिमन्त्रयते । तस्योक्तो बन्धुः । अथ सिकता निवपति । रेतो वै सिकताः । एतयोऽअस्यैतद्योन्या रेतोऽपरासिक्तं परिगृहीतं भवति ॥ ११ ॥

अथाहवनीयऽएवाप्यानवतीभ्यामभिमृशति, न गार्हपत्ये । अयं वै लोको गार्हपत्यः, स्वर्गो लोक आहवनीयः । अद्धो वाऽअयमस्मिँल्लोके जातो यजमानः, स्वर्गऽएव लोके प्रजिजनयिषितव्यः । तद्यदाहवनीयऽएवाप्यानवतीभ्यामभिमृशति, न गार्हपत्ये—स्वर्गऽएवैनं तल्लोके प्रजनयति ॥ १२ ॥

---

'रेतः' 'अपरासिक्तम्' आधारादन्यत्र सिक्तम्; परिश्रिद्रूपयोन्यभावात्—कथं परिगृहीतं परिवेष्टितं भवतीत्यस्य चोद्यस्य परिहारमाह—उल्बं वा ऊषा इति । गर्भस्यान्तर्वेष्टनमुल्बम्, तत्संस्तुता ऊषाः; तेषां पूर्वंनिवपनात् तदनन्तरं न्युप्तं सिकतारूपं 'रेतः' तेनोल्बेन 'अपरासिक्तम्' गर्भाशयादन्यत्र सिक्तम् 'परिगृहीतम्, परिवेष्टितं च 'भवति' ॥

आहवनीयचितौ तु सिकतानिवपनात्पूर्वं परिश्रिद्भिः परिश्रयणमभिप्रेत्य तदभिमन्त्रणं विधत्ते—अथाहवनीय इति । गार्हपत्यचयनादाहवनीयचितेर्वैलक्षण्यद्योतकः 'अथ' शब्दः । आहवनीयचितौ सिकतानिवपनात् पूर्वं परिश्रित्संज्ञकान् शर्करापरपर्यायान् क्षुद्रपाषाणानभिमन्त्रयते—"चितः स्थेति" मन्त्रेण, सूत्रितं हि—"आहवनीयपरिश्रितोऽभिमन्त्रयते चितः स्थेति"—( का. श्रौ. १७ । ९३ ) इति । परिश्रिद्विधिशेषमर्थवादवाक्यं प्रागाम्नातम्—"योनिर्वै परिश्रितः" इत्यादिकमतिदिशति—तस्योक्त इति । 'तस्य' परिश्रयणस्य विधिशेष उक्तः ॥

सिकतानिवपनं विधाय स्तौति—अथ सिकता निवपतीति । 'अथ' परिश्रयणानन्तरम् । रेतो वा इत्याद्युक्तार्थम् ॥ ११ ॥

न्युप्तानां सिकतानां समन्त्रकमभिमर्शनं विधत्ते—अथाहवनीय इति[1] । आहवनीयस्थाने न्युप्तानामेव सिकतानाम् 'आप्यायनवतीभ्याम्' आप्यायतिधातुनिष्पन्नशब्दयुक्ताभ्याम्, "आप्यायस्व, सन्ते"—( वा. सं.

---

१—आप्यायस्वेति सिकतालंभनमृग्भ्याम् । का० श्रौ० सू० १७ । ६० ।

(त्यु) अुथ लोगेष्टका ऽउुपदधाति । इमे वै लोका ऽएुषोऽग्निर्दिशो लोगेष्टकाऽ एषु तल्लोकेषु दिशो दधाति तुस्मादिमाऽ एषु लोकेषु दिशः॥१३॥ ( शो ) बाुह्येनाग्निमाहरति । ( त्या ) आप्ता वाुऽअस्य ता दिशो याऽएषु लोकेष्वुथ या ऽइमाँल्लोकान्परेण दिशस्ताऽ अस्मिन्नेतद्दधाति ॥१४॥

( अर्धप्रपाठकः ॥ )

बहिर्व्वेदेरियं व्वै व्वेदिः । (रा) आप्ता वुाऽअस्य ता दिशो याऽ अस्यामुथ याऽइमां परेण दिशस्ताऽ अस्मिन्नेतद्दधाति ॥ १५ ॥

अथ लोगेष्टकोपधानम् ।

अथ लोगेष्टका उपदधाति । इमे वै लोका एषोऽग्निः । दिशो लोगेष्टकाः । एषु तल्लोकेषु दिशो दधाति । तस्मादिमा एषु लोकेषु दिशः ॥ १३ ॥

बाह्येनाग्निमाहरति । आप्ता वाऽअस्य ता दिशो–या एषु लोकेषु । अथ या इमांल्लोकान् परेण दिशः–ता अस्मिन्नेतद्दधाति ॥ १४ ॥

बहिर्वेदेः । इयं वै वेदिः । आप्ता वाऽअस्य ता दिशो–या अस्याम् । अथ या इमां परेण दिशः–ता अस्मिन्नेतद्दधाति ॥ १५ ॥

---

१२ । ११२–११३ ) इत्येताभ्यामृग्भ्यामभिमर्शनं कर्त्तव्यमित्यर्थः। अवधारणफलमाह–न गार्हपत्य इति । एतदेवोपपादयति–अयं वा इत्यादिना । ' अस्मिँल्लोके जातः ' ' अयम् ' ' यजमानः '–इत्ययमर्थः । ' अद्धा ' प्रत्यक्षसिद्धः, न यत्नसम्पाद्यः ' स्वर्गे लोके एव ' हि ' प्रजिजनयिषितव्यः ' प्रजनयितुं प्रकर्षेणोत्पादयितुमिष्टः, अतः स्वर्गलोकसंस्तुते ' गार्हपत्ये ' तत्र स्वभावत एव जातत्वादिति भावः ॥ १२ ॥

अथ लोगेष्टकानामुपधानं विधत्ते–अथेति[1] । तदेतत् प्रशंसति–इमे वै लोका इति । ' इमे ' खलु ये पृथिव्यादयस्त्रयो ' लोकाः ' । ' एषः ' एव खलु ' अग्निः ' । लोकसंस्तुताभिः स्वयमातृण्णाभिर्युक्तत्वाल्लोकत एव सिद्धाः लोष्टरूपा इष्टकाः लोकेष्टकाः, परोक्षं ' लोगेष्टका ' इत्युच्यन्ते । तथाविधत्वं च तैत्तिरीये आम्नायते–" दिग्भ्यो लोष्टान् समस्यति, दिशामेव वीर्यमवरुध्य "–( तै. सं. ५ । २ । ९ । ६ ) इति लोकसम्बन्धिन्यः प्राच्यादिदिशः ता लोकेष्टकाः । अतस्तदुपधानेन ' एषु ' एव लोकेषु ता एव ' दिशः ' स्थापयति । ' तस्मात् ' एव कारणात् ' इमाः ' प्राच्यादि–' दिशः ' ' एषु लोकेषु ' दृश्यन्ते ॥ १३ ॥

वेदेर्बाह्यदेशेनेष्टकानामाहरणं विधाय स्तौति–बाह्येनाग्निमिति । ' अग्निं ' 'बाह्येन' अग्निक्षेत्राद्बाह्यदेशेनैता इष्टकाः ' आहरति ' । आप्ता वा इत्यादि । ' अस्य ' अग्नेः यजमानस्य वा ' ता दिशः ' ' आप्ताः ' प्राप्ताः । ' याः ' इमाः 'एषु' लोकेषु दृश्यन्ते । 'अथ' ' याः ' ' दिशः ' ' इमान् लोकान् ' 'परेण' एभ्यो लोकेभ्यो बहिर्वर्त्तन्ते, ' अस्मिन् ' अग्नौ ' एतत् ' एतेन बाह्यदेशादाहरणेन ' दधाति ' धारयति ॥ १४ ॥

आहरणस्याग्निक्षेत्रापेक्षया बहिर्देशसम्बन्धः, वेद्यपेक्षयाऽपि तथात्वं विधत्ते–बहिर्वेदेरिति । अग्नेर्लोक-

---

१–लोगेष्टकाः स्फ्येनाहृत्य बहिर्वेदेरनूकांतेषूपदधाति तिष्ठन् मा मा हिꣳसीदिति प्रत्यृचं प्रतिदिशं पुरस्तात्प्रथमम् । का॰ श्रौ. सू. । १७ । ५५ ।

यद्देव लोगेष्टका॒ऽउपदधाति । प्र॒जाप॑तेर्विस्र॒स्तस्य सर्वा॒ दि॒शो र॒सोऽनु व्यक्षरत्तं य॒त्र दे॒वाः समस्कुर्व॑स्तदस्मिन्नेता॒भिर्लोगेष्टका॒भिस्तꣳ रसमदधु॒स्तथैवास्मिन्नयमेतद्दधाति ॥ १६ ॥

बाह्येनाग्निमाहरति । ( त्या ) आप्तो वाऽअस्य स र॒सो य॒ऽएषु लोके॒ष्वथ य॒ऽइमाँल्लोकान् परा॒ङ्र॒सोऽत्यक्षरत्तमस्मिन्नेतद्दधाति ॥ १७ ॥

बहिर्वेदेरियं वै वेदिः । ( रा ) आप्तो वा ऽअस्य स र॒सो योऽस्यामथ य॒ऽइमां परा॒ङ्र॒सोऽत्यक्षरत्तमस्मिन्नेतद्दधाति ॥ १८ ॥

---

यद्देव लोगेष्टका उपदधाति । प्रजापतेर्विस्रस्तस्य सर्वा दिशो रसोऽनु व्यक्षरत् । तं यत्र देवाः समस्कुर्वन्—तदस्मिन्नेताभिर्लोगेष्टकाभिस्तं रसमदधुः । तथैवास्मिन्नयमेतद्दधाति ॥ १६ ॥

बाह्येनाग्निमाहरति । आप्तो वाऽअस्य स रसः—य एषु लोकेषु । अथ य इमांल्लोकान्पराङ्रसोऽत्यक्षरत्—तमस्मिन्नेतद्दधाति ॥ १७ ॥

बहिर्वेदेः । इयं वै वेदिः । आप्तो वाऽअस्य स रसः—योऽस्याम् । अथ य इमां पराङ्रसोऽत्यक्षरत्—तमस्मिन्नेतद्दधाति ॥ १८ ॥

---

त्र्यात्मकत्वात्ततो बहिराहरणम् लोकत्रयाद् बहिरवस्थितानां दिशामाप्तिहेतुरित्युक्तम्; इदानीं तु वेदेर्भूमिरूपत्वादस्या बहिरवस्थिताः यावत्यो दिशः, तासां प्राप्त्यर्थं वेदिबाह्यदेशादाहरणमित्यभिप्रेतोऽर्थः । अथ या इमां परेणेति । 'अस्याः' पृथिव्याः 'परेण' परस्ताद्, बहिरित्यर्थः । "एनबन्यतरस्याम्"—इति ( ५ । ३ । ३५ ) परशब्दादेनप्, "एनपा द्वितीया"—( पा. सू. २ । ३ । ३१ ) ॥ १९ ॥

विहितं लोकेष्टकोपधानमनूद्य प्रकारान्तरेण स्तौति—यद्देवेति । 'विस्रस्तस्य' विस्रस्तावयवस्येत्यर्थः । 'सर्वाः' प्राच्यादि—'दिशः' अनुलक्ष्य तदीयो 'रसः' 'व्यक्षरत्' विविधमस्रवत् 'यत्र' यस्मिन् देशे 'तम्' तथाविधं प्रजापतिं 'देवाः' 'समस्कुर्वन्' चित्याग्निरूपेण संस्कृतवन्तः । "अडभ्यासव्यवायेऽपि"—( पा. सू. ६ । १ । १४० वा. १ ) इति कात् पूर्वः सुट् । तत्र 'अस्मिन्' अग्न्यात्मके प्रजापतौ 'एताभिर्लोगेष्टकाभिः तं रसम्' 'अदधुः' स्थापितवन्तः एवमेव 'अस्मिन्' अग्नौ 'अयम्' यजमानोऽपि 'एतद्' रसं 'दधाति' धारयति, लोकेष्टकोपधानेनेत्यर्थः ॥ १६ ॥

आहरणस्याग्निबाह्यत्वमनूद्य स्तौति—बाह्येनेति । पूर्ववदेनप् (पा. सू. ५ । ३ । ३५ ) अत एव 'अग्निम्' इति द्वितीया ( २ । ३ । ३१ ) । अग्नेर्बाह्यदेशेनेत्यर्थः । आप्तो वा अस्येत्यादि । "आप्ता वा अस्य ता दिशः" इत्यादिवद् व्याख्येयः । इमांल्लोकान्पराङ्स इति । 'इमान्' पृथिव्यादिलोकान् विहाय परागतो रस इत्यर्थः ॥ १७ ॥

बहिर्वेदेरित्येतदपि अनूद्य पृथिवीसकाशाद् बहिर्भूतरसस्थापनहेतुत्वेन स्तौति—बहिर्वेदेरिति ।

स्फ्येनाहरति। व्वज्रो वै स्फ्यो व्वीर्यं वै व्वज्रो व्वित्तिरियं व्वीर्येण वै व्वित्तिं व्विन्दते ॥ १९ ॥

स पुरस्तादाहरति। मा मा हिꣳसीज्जनिता यः पृथिव्या ऽइति प्रजापतिर्व्वै पृथिव्यै जनिता मा मा हिꣳसीत्प्रजापतिरित्येतद्यो वा दिवꣳ सत्यधर्मा व्यानडिति यो वा दिवꣳ सत्यधर्माऽसृजतेत्येतद्यश्चापश्चन्द्राः प्रथमो जजानेति मनुष्या वाऽआपश्चन्द्रा यो मनुष्यान्प्रथमोऽसृजतेत्येतत्कस्मै देवाय हविषा व्विधेमेति प्रजापतिर्वै कस्तस्मै हविषा व्विधेमेत्येतत्तामाहृत्यान्तरेण परिश्रितऽआत्मन्नुपदधाति स यः प्राच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्राचीमेवास्मिन्नेतद्दिशं दधाति ॥ २० ॥

---

स्फ्येनाहरति। वज्रो वै स्फ्यः। वीर्यं वै वज्रः। वित्तिरियम्। वीर्येण वै वित्तिं विन्दते ॥ १९ ॥

स पुरस्तादाहरति। "मा मा हिंसीज्जनिता यः पृथिव्याः"—इति। प्रजापतिर्वै पृथिव्यै जनिता। मा मा हिंसीत्प्रजापतिरित्येतत्। "यो वा दिवं सत्यधर्मा व्यानट्"—इति। यो वा दिवं सत्यधर्माऽसृजतेत्येतत्। "यश्चापश्चन्द्राः प्रथमो जजान"—इति। मनुष्या वाऽआपश्चन्द्राः। यो मनुष्यान्प्रथमोऽसृजतेत्येतत्। "कस्मै देवाय हविषा विधेम"—( वा सं. १२। १०२ ) इति। प्रजापतिर्वै कः। तस्मै हविषा विधेमेत्येतत्। तामाहृत्य, अन्तरेण परिश्रित आत्मन्नुपदधाति। स यः प्राच्यां दिशि रसोऽत्यक्षरत्—तमस्मिन्नेतद्दधाति। अथो प्राचीमेवास्मिन्नेतद्दिशं दधाति ॥ २० ॥

---

आहरतीति शेषः। एतदपि पूर्ववद् व्याख्यातप्रायम्। इमां पराङिति। इमामतिक्रम्य परागतो रस इत्यर्थः ॥ १८ ॥

इत्थं लोकेष्टकानामाहरणे अग्नेर्वेदेश्च बाह्यो देशो विहितः, अथ तत्र साधनं विधाय स्तौति—स्फ्येनेति। वज्रो वै स्फ्य इति। त्रेधा भग्नस्य वज्रस्यांशत्वात् स्फ्यस्य वज्रात्मकता। तथा हि तैत्तिरीयकम्—"इन्द्रो वृत्राय वज्रं प्राहरत्, स त्रेधा व्यभवत्, स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयम्" ( तै. सं ५। २। १। १–२ ) * इति। वृत्रासुरवधहेतुत्वात् स वज्रो वीर्यात्मकः। 'इयम्' वेदिलक्षणा भूमिः 'वित्तिः' लब्धव्या धनरूपा, तथा च स्फ्येनाहरन् वज्ररूपेण 'वीर्येण' एव 'वित्तिम्' लब्धव्यां भूमिं 'विन्दते' लभते ॥ १९ ॥

अथ पूर्वस्मादिग्भागादाहरणं समन्त्रकं विधत्ते—स पुरस्तादाहरतीति। 'पुरस्तात्' पूर्वस्याः दिशः सकाशाल्लोकेष्टकां स्फ्येन 'आहरति' पञ्चम्यर्थे अस्तातिः ( पा. सू. ५। ३। २७ )। मा मा हिंसीदिति।

---

*—इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार स प्रहृतश्चतुर्धाऽभवत्तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा रथस्तृतीयं वा यावद्वाऽथ यत्र प्राहरत्तच्छकलोऽशीर्यत स पतित्वा शरोऽभवत्तस्माच्छरो नाम यदशीर्यतैवमु स चतुर्धा वज्रोऽभवत् (-श. प. १। २। ४। १।) इति।

( त्यु ) अथ दक्षिणतः । ( तोऽभ्यु ) अभ्यावर्त्तस्व पृथिवि यज्ञेन पयसा सहेति यथैव यजुस्तथा बन्धुर्वपान्तेऽअग्निरिषितो ऽअरोहदिति यद्वै किं चास्याꣳ᳖ साऽस्यै वपा तामग्निरिषित उपादीप्तो रोहति तामाहृत्यान्तरेण पक्षसंधिमात्मन्नुपदधाति स यो दक्षिणायां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो दक्षिणामेवास्मिन्नेतद्दिशं दधाति ॥ २१ ॥

अथ दक्षिणतः–" अभ्यावर्त्तस्व पृथिवि यज्ञेन पयसा सह "–इति । यथैव यजुस्तथा बन्धुः । "वपान्तेऽअग्निरिषितोऽअरोहत् "–( वा. सं. १२।१०३ ) इति । यद्वै किं चास्याम्–साऽस्यै वपा । तामग्निरिषित उपादीप्तो रोहति । तामाहृत्यान्तरेण पक्षसन्धिमात्मन्नुपदधाति ।

तन्मन्त्रः । ' यः ' ' पृथिव्याः ' ' जनिता ' जनयिता सः ' मा ' मां ' मा हिंसीत् ' मा वधिष्ट । य इति सर्वनाम्ना कृत्स्नजगत्कारणत्वेन प्रसिद्धः प्रजापतिरेव प्रतिपाद्यत इत्याह–प्रजापतिर्वा इति । ' पृथिव्यै ' इति षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ । सू. वा. १ ) । ' जनिता ' जनयिता " जनिता मन्त्रे " इति ( पा. सू. ६ । ४ । ५३ ) निपातनाण्णिलोपः । उक्तमर्थं योजयति–मा मा हिंसीत् प्रजापतिरित्येतदिति ॥

द्वितीयपादमनूद्य तत्र व्यानडिति क्रियापदस्यार्थमाह–यो वा दिवमिति । 'सत्यधर्मा' सत्योऽवितथो धर्मः धारणशक्तिर्यस्य तादृशो ' यः ' ' दिवं ' ' व्यानट् ' व्याप्नोत् । व्यापनमत्र सर्जनमेवेत्याह–असृजतेत्येतदिति । मनुष्या वा इत्यादि । ' चन्द्राः ' आह्लादिकाः । ' आपः ' रेतोरूपाः । अनेन च कारणवाचिशब्देन कार्यभूता मनुष्या एवोच्यन्त इत्यर्थः । अत एव छान्दोग्ये समाम्नातम्–" पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति "– ( छां. उ. ५।९।१ ) इति । पर्यवसितमर्थमाह–मनुष्यान् प्रथम इति । सर्वप्राणिभ्यः पूर्वमुत्पन्नत्वात् प्रजापतिरेव प्रथमः । अत एवाम्नातम्–"हिरण्यगर्भः समवर्त्तताग्रे"–(वा.सं. १३।४ ) इति ॥

चतुर्थपादमनूद्य तत्र ' किं '–शब्दस्यार्थमाह–प्रजापतिर्वै क इति । निरुक्तानिरुक्तरूपत्वेनानिर्द्धारितस्वरूपत्वात् किंशब्दः प्रजापतेर्वाचक इत्यर्थः । एवंभूतो यः ' तस्मै देवाय ' " क्रियाग्रहणमपि कर्त्तव्यम् " इति ( पा. सू. १ । ४ । ३२ । सू. वा. १ ) कर्मणः सम्प्रदानत्वाच्चतुर्थी । तं देवं ' हविषा ' ' विधेम ' परिचरेमेति, विदधातिः परिचरणार्थः ॥

एवमाहृताया इष्टकायाः स्थानविशेषे उपधानं विधत्ते–तामाहृत्येति । परिश्रित्सञ्ज्ञानामुपहितानां शर्कराणामभ्यन्तरदेशे आत्मनि तामुपदध्यात् स्थापयेत् । तस्य प्रयोजनमाह–स य इति । ' स यः ' प्रसिद्धो यो ' रसः ' विस्रस्तात् प्रजापतिशरीरात् ' प्राच्याम् ' ' दिशि ' ' अत्यक्षरत् ' अतिक्रम्य स्रुतोऽभवत् । एतेनोपधानेन, ' तम् ' एव रसम् ' अस्मिन् ' प्रजापतिरूपेऽग्नौ पुनः स्थापयति । ' अथो ' अपि च ' प्राचीं ' दिक्सम्बन्धात्तामेव दिशम् ' अस्मिन् ' स्थापितवान् भवति ॥ २० ॥

दक्षिणस्या दिश आहरणं समन्त्रकं विधत्ते–अथ दक्षिणत इति । पञ्चम्यर्थे तसिल् ( पा. सू. ५ । ३ । ७ ) आहरतीति शेषः । अथवा पूर्वदिग्भागाद्यदाहरणम्, तदनन्तरं दक्षिणस्या दिशः सकाशाल्लोकेष्टकामाह-



 

( त्यु ) अथ पश्चात् । ( द्रु ) अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियमितीयं वाऽअग्निरस्यै तदाह तद्देवेभ्यो भरामसीति तदस्मै दैवाय कर्मणे हरामऽइत्येतत्तामाहृत्यान्तरेण पुच्छसन्धिमात्मन्नुपदधाति स यः प्रतीच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्रतीचीमेवास्मिन्नेताद्दिशं दधाति स नु सम्प्रति पश्चादाहरेन्नेद्यज्ञपथाद्रसमाहराणीतीतऽइवाहरति ॥ २२ ॥

---

स यो दक्षिणायां दिशि रसोऽत्यक्षरत्–तमस्मिन्नेतद्दधाति । अथो दक्षिणामेवास्मिन्नेतद्द्–दिशं दधाति ॥ २१ ॥

अथ पश्चात्–" अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम् "–इति । इयं वाऽअग्निः । अस्यै तदाह । " तद्देवेभ्यो भरामसि "–( वा० सं० १२ । १०४ ) इति । तदस्मै दैवाय कर्मणे हराम इत्येतत् । तामाहृत्यान्तरेण पुच्छसन्धिमात्मन्नुपदधाति । स यः प्रतीच्यां दिशि रसोऽत्यक्षरत्–तमस्मिन्नेतद्दधाति । अथो प्रतीचीमेवास्मिन्नेतद्दिशं दधाति । स न सम्प्रति पश्चादाहरेत् । नेद्यज्ञपथाद्रसमाहराणीति । इत इवाहरति ॥ २२ ॥

---

रतीत्यर्थः । " अभ्यावर्त्तस्व " इति तन्मन्त्रः । पूर्वार्द्धस्य निगदव्याख्याततत्वमाह–यथैव यजुस्तथा बन्धुरिति । यजुर्वाक्यं यथैव श्रूयते तादृगेव तद्व्याख्यापकं ब्राह्मणवाक्यम्; अतः स्पष्टार्थत्वान्न पृथग्व्याख्यायत इत्यर्थः ॥

उत्तरार्द्धमनूद्य तत्र वपाशब्दस्यार्थमाह–यद्वै किञ्चेति । 'अस्यां' पृथिव्यां यदेव किंचिद् वस्तु तरुगुल्मादिकं दृश्यते, सैव ' अस्यै ' ' वपा ' विधेया । सेति नपुंसकलिङ्गार्थो निर्देशः । षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ सू. वा. १ ) । अयमर्थः–हे पृथिवि ! ' यज्ञेन ' यागसाधनेन ' पयसा ' पयोलक्षणेन ' रसेन ' सह अस्मदभिमुखमावर्त्तस्व । ' इषितः ' प्रेरितो दीप्तोऽयमग्निस्त्वदीयं तरुगुल्मादिरूपम् 'आरोहति' अधितिष्ठति । आहृतायास्तस्याः स्थानविशेषे उपधानं विधत्ते–तामाहृत्येति । ' ताम् ' लोकेष्टकां दक्षिणदिग्भागाद्बहिर्वेदेः ' आहृत्य ' ' पक्षसन्धिमन्तरेण ' दक्षिणपक्षस्य आत्मभागस्य च यः सन्धिप्रदेशः, तस्याभ्यन्तरे आत्मभागे स्थापयेदित्यर्थः । अनेनापि पूर्ववद्रसस्थापनं दिक्स्थापनश्चात्र कृतं भवतीत्याह–स यो दक्षिणायामिति ॥ २१ ॥

प्रतीच्यां दिशि समन्त्रकं लोकेष्टकाया आहरणं विधत्ते–अथ पश्चादिति । ' अथ ' अनन्तरं प्रतीच्या दिशः सकाशात् स्फ्येन लोकेष्टकामाहरतीति शेषः । तत्र मन्त्रः–" अग्ने यत्ते " इति । अत्राग्निशब्देन तदधिष्ठिता भूमिरेव अभेदोपचारेणोच्यत इत्याह–इयं वा अग्निरिति । 'अस्यै' पृथिव्यै । तादर्थ्ये चतुर्थी । पूर्वार्द्धेन प्रार्थनं पृथिव्यर्थमित्यर्थः । तृतीयपादमनूद्य देवशब्दस्य विवक्षितमर्थमाह–तदस्मै दैवायेति । एतदग्निचयनाख्यं कर्मैवात्र देवशब्दस्यार्थः । चितिरूपावयवभेदापेक्षया बहुवचनमित्यभिप्रायः ॥

अर्थस्तु–हे पृथिवि ! त्वदीयं यत् ' शुक्रं ' रसवदङ्गम्, यच्च ' चन्द्रम् ' आह्लादकरं, तथा ' पूतं ' शुद्धं, ' यज्ञियं ' यज्ञार्हं च यदस्ति, ' तत् ' ' अस्मै ' अग्न्याख्याय ' दैवाय कर्मणे ' आहराम इति । ' ताम् '

( त्यु ) अथोत्तरतः । ( तऽइ ) इषमूर्जमहमितऽ आदमितीषमूर्जमहमितऽ आददऽइत्येतदृतस्य योनिमिति सत्यं वाऽऋतꣳ सत्यस्य योनिमित्येतन्महिषस्य धारामित्यग्निर्वै महिषः स हीदं जातो महान्त्सर्व्वमैष्णादा मा गोषु विशत्वा तनूष्वित्यात्मा वै तनूरा मा गोषु चात्मनि च विशत्वित्येतज्जहामि सेदिमनिरामभीवामिति सिकताः प्रक्षꣳसयति तद्यैव सेदिर्याऽनिरा याऽमीवा तामेतस्यां दिशि दधाति तस्मादेतस्यां दिशि प्रजाऽ अशनायुकास्तामाहृत्यान्तरेण पक्षसन्धिमात्मन्नुपदधाति स य ऽउदीच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो ऽउदीचीमेवास्मिन्नेताद्दिशं दधाति ॥ २३ ॥

---

अथोत्तरतः—" इषमूर्जमहमित आदम् "—इति । इषमूर्जमहमित आददऽइत्येतत् । " ऋतस्य योनिम् "—इति । सत्यं वाऽऋतम् । सत्यस्य योनिमित्येतत् । " महिषस्य धाराम् "—इति । अग्निर्वै महिषः । स हीदं जातो महान् सर्वमैष्णात् । " आ मा गोषु विशत्वा तनूषु "—इति । आत्मा वै तनूः । आ मा गोषु च, आत्मनि च विशत्वित्येतत् । " जहामि

---

लोकेष्टकाम्—' आहृत्य ' इत्यादि पूर्ववत् । पुच्छसन्धिमिति । पक्ष्याकारस्य चित्याग्नेः पुच्छस्यात्मभागस्य च यः सन्धिः, ' तम् ' ' अन्तरेण ' तस्य मध्ये ' आत्मन् ' आत्मनि अन्यद् गतार्थम् ॥

साक्षात् पश्चादाहरणं निषेधति—स न सम्प्रतीति । ' सः ' अध्वर्युः ' सम्प्रति ' मुख्या या प्रतीची दिक्, तत्सकाशात् ' नाहरेत् ' । निषेद्धुरभिप्रायमाह—नेद्यज्ञपथादिति । यज्ञस्य पन्थाः ' यज्ञपथः, ' अग्नेः पाश्चात्यो देशो हविर्द्धानादिः; ततः सकाशान्नैव ' रसमाहराणि ' इति । यदि खलु तादृग्विधात् साक्षात् पश्चाद्भागादाहरेत्, तर्हि प्रजापतिसम्बन्धिनो विस्रस्तरसस्याहृतत्वात् तत्र करिष्यमाणो यज्ञो नीरसः स्यादित्यभिप्रायः । कथं तर्हि तत्राहरणमित्यत आह—इत इवेति । ' इतः ' प्रतीच्या दिश ' इव ' न तु साक्षात् प्रतीच्या दिशः, उत्तरापरस्या दिश आहरेदित्यर्थः । तदुक्तं कात्यायनेन—" उत्तरापरस्याः पश्चात् " इति ( का. श्रौ. सू. १७ । ९६ ) ॥ २२ ॥

उत्तरस्या दिश आहरणं विधत्ते—अथोत्तरत इति । आहरतीति शेषः । " इषमूर्जम् " इत्याहरणमन्त्रः । ' आदम् '—इति क्रियापदस्यार्थमाह—आदद इत्येतदिति । मनसा यथार्थं सङ्कल्पनम् ' ऋतम्, ' यथार्थभाषणम् ' सत्यम् ' अत्र तु " ऋतस्य योनिम् "—इति मन्त्रभागे तादृशो भेदो न विवक्षित इत्यभिप्रेत्याह—सत्यं वा ऋतमिति । महिषस्य धारामिति । महिषशब्दस्यार्थमाह—अग्निर्वै महिष इति । कथमस्य महिषशब्दाभिधेयतेत्याशङ्क्य तन्निर्ब्रूते—स हीदं जात इति । ' सः ' खल्वग्निः ' इदम् ' इदानीम् ' जातः ' जातमात्र एव ' महान् ' अतिरिक्तो भूत्वा ' सर्वं ' जगद् ' ऐष्णात् ' व्याप्नोत् । अतो महत्त्वादेषितृत्वाच्च महिषशब्दाभिधेयः संपन्न इत्यर्थः । "ऐष्णात्"—इति " इष आभीक्ष्ण्ये "—इत्यस्माल्लङ् ( धा. पा. क्र्या. प. ९३ ) ।

ताऽएता दिशः । ( स्ताः ) ताः सर्व्वतऽ उपदधाति सर्व्वतस्तद्दिशो दधाति तस्मात्सर्व्वतो दिशः सर्व्वतः समीचीः सर्व्वतस्तत्समीचीर्द्दिशो दधाति तस्मात्सर्व्वतः समीच्यो दिशस्ता नानोपदधाति नाना सादयति नाना सूददोहसाऽधिवदति नाना हि दिशस्तिष्ठन्नुपदधाति तिष्ठन्तीव हि दिशोऽथो तिष्ठन्वै व्वीर्य्यवत्तरः ॥ २४ ॥

---

सेदिमनिराममीवाम् "–( वा० सं० १२ । १०५ ) इति सिकताः प्रध्वंसयति । तद्यैव सेदिः, याऽनिरा, याऽमीवा–तामेतस्यां दिशि दधाति । तस्मादेतस्यां दिशि प्रजा अशनायुकाः । तामाहृत्यान्तरेण पक्षसन्धिमात्मन्नुपदधाति । स य उदीच्यां दिशि रसोऽत्यक्षरत्–तमस्मिन्नेतद्दधाति । अथोऽउदीचीमेवास्मिन्नेतद्दिशं दधाति ॥ २३ ॥

ता एता दिशः । ताः सर्वत उपदधाति । सर्वतस्तद्दिशो दधाति । तस्मात् सर्वतो दिशः । सर्वतः समीचीः । सर्वतस्तत् समीचीर्दिशो दधाति । तस्मात् सर्वतः समीच्यो दिशः । ता नानोपदधाति, नाना सादयति, नाना सूददोहसाऽधिवदति । नाना हि दिशः । तिष्ठन्नुपदधाति । तिष्ठन्तीव हि दिशः । अथो तिष्ठन्वै वीर्यवत्तरः ॥ २४ ॥

---

तृतीयं पादमनूद्य तत्र तनूशब्दस्यार्थमभिधाय योजयति–आ मेति । तनूष्विति बहुवचनम्, तेन बह्ववयवोपेत आत्मा देह उच्यते । गतमन्यत् ॥

मन्त्रार्थस्तु–' इषम् ' इष्यमाणमन्नम् । ' ऊर्जम् ' बलकरं रसम् । 'इतः' अस्या उदीच्या दिशः सकाशादहम् ' आददे ' । किंविशिष्टम् ? ' ऋतस्य ' सत्यस्य यथार्थफलस्य यज्ञस्य ' योनिम् ' कारणम्, ' महिषस्य ' महतोऽग्नेः ' धाराम् ' धाराप्रवाहभूताम् तद्वत्साधिताम् । ईदृशी च सा, मामुद्दिश्य मदीयासु ' गोषु ' ' तनूषु ' शरीरेषु ' आविशतु '–इति चतुर्थेन पादेन सम्बन्धः ॥

तस्यां दिशि सिकतानां प्रध्वंसनं विधत्ते–जहामीति । अत एवोक्तं कात्यायनेन–" उत्तरस्याः सिकताः प्रमार्ष्टि जहामि सेदिमिति " ( का. श्रौ. सू. १७ । ९७ ) इति । मन्त्रस्यार्थमाह–तद्यैवेति । ' तत् ' तत्र ' यैव ' खलु ' सेदिः ' अवसादापरपर्याया हानिः, या च ' अनिरा ' इरा अन्नम् ( निघं. २ । ७ । १३ ) तदभावरूपा पीडा, या च ' अमीवा ' रोगात्मिका । ' ताम् ' ' एतस्याम् ' उत्तरस्याम् ' दिशि ' एतन्मन्त्रकरणकेन सिकताप्रध्वंसनेन स्थापयति । इरादीनां तत आहृतत्वादिति भावः । एतच्च तत्कार्यदर्शनादवगम्यत इत्याह–तस्मादिति । यस्माद् अवसादादीनि स्थापितानि, तस्मादेतस्यामुत्तरस्यां दिशि सर्वाः ' प्रजाः ' ' अशनायुकाः ' अशनाया अशनेच्छा क्षुधा, तया पीडिता दृश्यन्त इत्यर्थः । तामाहृत्येत्यादि–पूर्ववत् ॥ २३ ॥

अथैताः सम्भूय प्रशंसति–ता एता दिश इति । ' ताः ' प्राच्यादिदिक्षु क्रमेणोपहिताः ' एताः ' इष्टका ' दिशः ' दिगात्मिकाः, ' ताः ' सर्वाभ्यो दिग्भ्यः आहृत्य ' उपदधाति ' । तेन चोपधानेन ' सर्वतः ' एव ' दिशः ' ' दधाति ' स्थापयति । तस्मादेव कारणादिदानीं सर्वतो दिशो दृश्यन्ते ॥

( स्ता ) ताऽएता यजुष्मत्यऽइष्टकाः । ( स्ता ) ताऽआत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्ह्येव यजुष्मत्यऽइष्टकाऽउपधीयन्ते न पक्षपुच्छेषु॥२९॥

तदाहुः । कथमस्यैताः पक्वाः शृताऽउपहिता भवन्तीति रसो वाऽएताः स्वयꣳ शृतऽउ वै रसोऽथो यद्वै किं चैतमग्निं वैश्वानरमुपनिगच्छति तत ऽएव तत्पक्वꣳ शृतमुपहितं भवति॥ २६ ॥

---

ता एता यजुष्मत्य इष्टकाः । ता आत्मन्नेवोपदधाति, न पक्षपुच्छेषु । आत्मन्ह्येव यजुष्मत्य इष्टका उपधीयन्ते, न पक्षपुच्छेषु ॥ २९ ॥

तदाहुः—कथमस्यैताः पक्वाः शृता उपहिता भवन्तीति । रसो वाऽएताः । स्वयं शृत उ वै रसः । अथो यद्वै किञ्चैतमग्निं वैश्वानरमुपनिगच्छति—तत एव तत् पक्वम्, शृतम्, उपहितं भवति ॥२६॥

---

धर्मविशेषं विधाय स्तौति—सर्वतः समीची इति । सर्वासु दिक्षु ' समीचीः ' सङ्गतदिगाभिमुख्यं गता उपदधाति, न तु तिर्यक्त्वेनेत्यर्थः । ' तत् ' तेन ' सर्वतः ' दिश एव ' समीचीः ' अनूचीनाग्राः स्थापयति । ' तस्माद् ' इति फलनिर्देशः । उपधानादीनां पृथगनुष्ठानं विधत्ते—ता नानोपदधातीति । प्रतीष्टकं समन्त्रकं स्थापनं पृथगेव कर्त्तव्यम्, " तया देवतया " इति सादनमपि पृथक् " ता अस्येति " सूददोहसा मन्त्रेणाधिवदनमपि पृथक् । तत्र कारणमाह—नाना हीति । ' हि ' यस्मात् ' दिशः ' परस्परं विभिन्नाः, अतो दिक्संस्तुतानामप्यासां पृथगुपधानादिकं युक्तमित्यर्थः । तस्मिन्नुपधाने स्थितिगुणं विधत्ते—तिष्ठन्निति । ' तिष्ठन् ' न तु आसीन इत्यर्थः । तिष्ठन्तीव हि दिश इति । प्राच्याद्या 'दिशः' अपि ' हि ' ' तिष्ठन्तीव ' ऊर्ध्वाकारतया दृश्यमानाः स्थितियुक्ता इव लक्ष्यन्त इत्यर्थः । ' अथो ' अपि च आसीनात् पुरुषात् ' तिष्ठन् ' खलु ' वीर्यवत्तरः ' अधिकवीर्यवान् । इतोऽपि तिष्ठता उपधेया इत्यर्थः ॥२४॥

अथासां समन्त्रकत्वमनूद्य अग्निक्षेत्रस्यात्मभाग एवोपधानं प्रतिपादयति—ता एता इति । यजुष्मत्य इति । करणभूतैर्यजुर्मन्त्रैर्युक्ता इत्यर्थः । 'ताः' ' आत्मन् ' आत्मनि आत्मभागे एव ' उपदधाति ' । अवधारणफलमाह—न पक्षेति । तत्र कारणमाह—आत्मन् ह्येवेति । आत्मभागे एव हि यजुर्मन्त्रोपधेया वक्ष्यमाणा इष्टका उपधीयन्ते; अत एवासामुपधानमपि समन्त्रकमित्यात्मन्येवेति नियमद्वयमुपपन्नमित्यर्थः ॥ २९ ॥

अथेतरेष्टकावदासां श्रपणाभावादशृतत्वमाशङ्क्य निरस्यति—तदाहुरिति । ' अस्य ' अग्नेः 'एताः' लोकेष्टकाः ' कथं ' केन प्रकारेण ' पक्वाः शृताः ' पाचनसंस्कारसंस्कृताः सुश्रृताः सत्य उपहिताः ' भवन्ति ' इति ब्रह्मवादिनां प्रश्नः । ' रसो वा एताः '—इति अस्योत्तरम् । विस्रस्तस्य प्रजापतिशरीरस्य रसरूपाः खल्वेता इष्टकाः 'स्वयं शृताः ' खलु, अग्न्यादिपाकानपेक्षः खलु रसः । परिहारान्तरमाह—अथो इति । 'अथो' शब्दः पक्षान्तरद्योतने । एष एव हि चित्योऽग्निः जीव्यो भूत्वा विश्वनरसम्बन्धी वर्त्तते ' यत् ' किञ्चिदप्यामद्रव्यम् ' एतमग्निं वैश्वानरम् ' प्राप्नोति, ' तत एव ' तस्मादेव संसर्गात् ' तत् ' सर्वम् ' पक्वं शृतम् ' पाकेन संस्कृतं सुश्रृतं सत् ' तत् ' तत्र ' उपहितम् ' ' भवति ' इत्यर्थः ॥ २६ ॥

( त्यु ) अथोत्तरवेदिं निवपति । ( ती ) इयं वै व्वेदिर्द्यौरुत्तरवेदिर्दिशो लोगेष्टकास्तद्यदन्तरेण व्वेदिं चोत्तरवेदिं च लोगेष्टका ऽउपदधातीमौ तल्लोकावन्तरेण दिशो दधाति तस्मादिमौ लोकावन्तरेण दिशस्तां युगमात्रीं वा सर्व्वतः करोति चत्वारिꣳशत्पदां वा यतरथा कामयेताथ सिकता निवपति तस्योक्तो बन्धुः ॥ २७ ॥

---

अथोत्तरवेदिं निवपति । इयं वै वेदिः । द्यौरुत्तरवेदिः । दिशो लोगेष्टकाः । तद् यदन्तरेण वेदिं चोत्तरवेदिं च लोगेष्टका उपदधाति—इमौ तल्लोकावन्तरेण दिशो दधाति । तस्मादिमौ लोकावन्तरेण

---

चोदकप्राप्तमुत्तरवेदिनिवपनमस्मिन् काले कर्त्तव्यमिति विधत्ते—अथेति[1] । लोकेष्टकोपधानानन्तर्यम् ' अथ ' शब्दार्थः । एतदुपपादयति—इयं वा इत्यादिना । ' इयम् ' भूमिरेव महावेदिः ' उत्तरवेदिः ' द्युलोकात्मिका, लोकेष्टकात्मिका ' दिशः ' । एवं च वेद्युत्तरवेद्योर्मध्ये लोकेष्टकोपधानं द्यावापृथिव्योर्मध्ये दिशां स्थापनाय भवति । ' तस्मात् ' कारणादिदानीमनयोर्लोकयोर्मध्ये दिशो लक्ष्यन्त इत्यर्थः । उत्तरवेदेः परिमाणं विधत्ते—तां युगमात्रीमिति । षडशीत्यंगुलपरिमितं युगम्[2]; उक्तं ह्यापस्तम्बेन—" अष्टाशीतिशतमीषा तिर्यगक्षश्चतुःशतम् षडशीतिर्युगं चास्य " इति । ' सर्वतः ' सर्वासु दिक्षु तावन्मात्रामुत्तरवेदिं कुर्यादित्येकं परिमाणम्, ' चत्वारिंशत्पदां वेति ' परिमाणान्तरम् । चत्वारिंशत्पदानि प्रमाणमस्याः सा तथोक्ता । अनयोः प्रमाणयोर्मध्ये ' यथा ' येन प्रकारेण ' कामयेत ' तथा कुर्यादित्यर्थः ॥

सिकतानिवपनं विधत्ते—अथेति[3] । उत्तरवेदिनिवपनानन्तर्यम् 'अथ' शब्दार्थः । तस्योक्त इति । ' तस्य ' सिकतानिवपनस्य स्तावको वाक्यशेषः " अग्नेरेतद् वैश्वानरस्य भस्म यत् सिकताः " इत्यादिः प्रागाम्नात इत्यर्थः ( श. प. ७।१।१।९ ) ॥ २७ ॥

---

१—उत्तरवेदिं निवपति चत्वारिंशत्पदां युगमात्रीं वा सर्व्वतः कुशस्तंबे । का. श्रौ. सू. १७ । ५८ । २—शुल्वपरिशिष्टे कात्यायनः—ईषामानम् १ अक्षमानं २ युगमानं ३ चेति त्रीणि मानान्याह । पूर्वसूत्रादंगुलैरित्यनुवृत्तौ अष्टाशीतिशतमीषा १ चतुःशतमक्षः २ षडशीतिर्युगमिति ३ । प्रकृते ईषामानमक्षमानं चानुपयुक्तमेव । अत्रोपयुक्तं तु युगमानं षडशीत्यंगुलानि ८६ । द्व्यंगुलोनाश्चत्वारो हस्ताः ३ । १४ । तथाच सर्वतः सर्वासु दिक्षु युगमात्रीं वेदिं कुर्यादित्येकं परिमाणम् १ । अथ द्वितीयं मानं २ चत्वारिंशत्पदामिति । तदपि शुल्वे चोक्तं कात्यायनेन, " द्विपदा तिर्यङ्मानी, षट्पदा पार्श्वमानी, तस्याक्ष्णयारज्जुस्त्रिकरणी " इति । अक्ष्णयारज्जुर्नाम कर्णसूत्रम् । इयं कर्णरज्जुश्चत्वारिंशत्पदकरणी । चत्वारिंशत्पदक्षेत्रफलस्य चतुरस्रस्य संपादिका भवति । तृतीयांशसहिता षट्पदपरिमिता भवतीत्यर्थः ६ । ४ । एतया रज्ज्वोपरिमितं सयवचतुरस्रं क्षेत्रं चत्वारिंशत्पदफलकं भवतीति यावत् । विंशतिहस्तं समचतुरस्रमित्यर्थः । एवंविधा चत्वारिंशत्पदा इति द्वितीयं मानम् २ । न तु, चत्वारिंशत्पदानि प्रमाणमस्याः सा तथोक्तेति साधारणं मानम् । अंगुलमानं पदमानं च चयनोक्तमेव । "यजमानेनोर्ध्ववाहुना प्रपदोच्छ्रितेन समस्थितेन वा" १६।७।३२ " पंचारत्निः पुरुषो दशपदो द्वादशांगुलं पदं " १६।८।१६। उभयसूत्रार्थस्तु पुरुषस्य ऊर्ध्वबाहोः प्रपदोच्छ्रितस्य समविभक्तस्य वा यः पंचमो भागः सोऽरत्निः । तस्य दशमो भागः पदं, पदस्य द्वादशो भागोऽङ्गुलम् इति । शुल्वेऽपि " पंचारत्निर्दशवितस्तिः विंशतिशतांगुलः पुरुष इत्येतस्मात् द्वादशांगुलं पदमिति चेति । पंचारत्नयो यस्य, दश वितस्तयो यस्य, विंशत्युत्तरशतमंगुलानि यस्य, स पुरुषः । अरत्निमानं, वितस्तिमानं, अंगुलमानं च एतस्मात् पुरुषात् ग्राह्यम् । द्वादशांगुलं पदमित्यपि च एतस्मादेव इति शुल्वार्थः । शुल्वं तु अरत्न्यादिमानांगीकारविधानार्थम् । ३—अग्ने तवेति सिकता न्युप्य छादयत्यात्मानम् । का. श्रौ. सू. १७ । ५९ ।

(स्ता) ताऽउत्तरवेदौ निवपति । योनिर्व्वाऽ उत्तरवेदिर्य्योनौ तद्रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति ताभिः सर्व्वमात्मानं प्रच्छादयति सर्व्वस्मिंस्तदात्मन्रेतो दधाति तस्मात्सर्व्वस्मादेवात्मनो रेतः सम्भवति ॥ २८ ॥

(त्यु) अग्ने तव श्रवो व्वयऽ इति । धूमो वाऽ अस्य श्रवो व्वयः स ह्येनममुष्मिंल्लोके श्रावयति मुहि भ्राजन्तेऽ अर्चयो व्विभावसविति महतो भ्राजन्तेऽर्चयः प्रभूवसवित्येतद्बृहद्भानो शवसा व्वाजमुक्थ्यमिति बलं वै शवो बृहद्भानो बलेनान्नमुक्थ्यमित्येतद्दधासि दाशुषे कवऽइति यजमानो वै दाश्वान्दधासि यजमानाय कवऽइत्येतत् ॥ २९ ॥

---

दिशः । तां युगमात्रीं वा सर्वतः करोति, चत्वारिंशत्पदां वा—यतरथा कामयेत । अथ सिकता निवपति । तस्योक्तो बन्धुः ॥ २७ ॥

ता उत्तरवेदौ निवपति । योनिर्वाऽउत्तरवेदिः । योनौ तद् रेतः सिञ्चति । यद्वै योनौ रेतः सिच्यते—तत्प्रजनिष्णु भवति । ताभिः सर्वमात्मानं प्रच्छादयति । सर्वस्मिंस्तदात्मन् रेतो दधाति । तस्मात्सर्वस्मादेवात्मनो रेतः सम्भवति ॥ २८ ॥

"अग्ने तव श्रवो वयः"—इति । धूमो वाऽअस्य श्रवो वयः । स ह्येनममुष्मिंल्लोके श्रावयति । "महि भ्राजन्ते अर्चयो विभावसो"—इति । महतो भ्राजन्तेऽर्चयः प्रभूवसवित्येतत् । "बृहद्भानो शवसा वाजमुक्थ्यम्"—इति । बलं वै शवः । बृहद्भानो बलेनान्नमुक्थ्यमित्येतत् ।

---

तस्य निवपनस्य स्थानविशेषं विधाय स्तौति—ता उत्तरवेदाविति । अग्निवपनक्षेत्रे युगमात्रीत्यादिलक्षणा योत्तरवेदिर्नियुक्ता, तस्यां सिकताः निवपति । योनिर्वा उत्तरवेदिरिति । निखिलयागोत्पत्तिकारणाहवनीयस्थानत्वात् 'उत्तरवेदिः' अपि 'योनिः' । अत एवाग्निप्रणयनीयास्वाम्नायते—( ऐ. ब्रा. १ । ५ । २ ) "ऊर्णावन्तं प्रथमः सीद योनिम्" इति ( ऋक् सं० ६ । १५ । १६ ) । 'तत्' तेन उत्तरवेदौ सिकतानां निवपनेन 'योनौ' एव 'रेतः' सिक्तं भवतीत्यर्थः । 'यत्' खलु, 'योनौ' गर्भाशये 'रेतः' 'सिच्यते' 'तत्' 'प्रजनिष्णु' प्रजननशीलम्, उत्पत्तिमद् 'भवति' ॥

अस्यात्मभागस्य ताभिः प्रच्छादनं विधत्ते—ताभिः सर्वमिति । 'तत्' तेन प्रच्छादनेन 'सर्वस्मिन्नेव' आत्मनि 'रेतः' 'दधाति' स्थापयति । 'तस्मात्' एव कारणात् 'सर्वस्मादेव' हस्तपादादिसर्वावयवसहितात् 'आत्मनः' देहात् 'रेतः' 'सम्भवति' उत्पद्यते । अत एव—मन्त्रवर्णः—"अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे"—इति ( सा. वे. मं. ब्रा. १ प्र. ५ ख. १६ म. ) ॥ २८ ॥

अस्मिन्निवपने "अग्ने तव"—इति षडृचं सूक्तं ( वा. सं. १२ । १०६—१११ ) करणत्वेन विधत्ते—अग्ने तव श्रवो वय इतीति । तत्र 'श्रवः' इति पदस्याभिप्रेतमर्थमाह—धूमो वा अस्येति ।

पावकवर्चाः शुक्रवर्चाऽइति । पावकवर्चा ह्येष शुक्रवर्चाऽअनूनवर्चाऽउ-दियर्षि भानुनेत्यनूनवर्चाऽउद्दीप्यसे भानुनेत्येतत्पुत्रो मातरा विचरन्नुपाव-सीति पुत्रो ह्येष मातरा विचरन्नुपावति पृणक्षि रोदसीऽउभेऽइतीमे वै द्यावापृथिवी रोदसी तेऽएषऽउभे पृणक्ति धूमेनामूं वृष्ट्येमाम् ॥ ३० ॥

---

" दधासि दाशुषे कवे "–( वा. सं. १२ । १०६ ) इति । यजमानो वै दाश्वान् । दधासि यजमानाय कवऽइत्येतत् ॥ २९ ॥

" पावकवर्चाः शुक्रवर्चाः "–इति । पावकवर्चा ह्येष शुक्रवर्चाः । " अनूनवर्चा उदि-यर्षि भानुना "–इति । अनूनवर्चा उद्दीप्यसे भानुनेत्येतत् । " पुत्रो मातरा विचरन्नुपा-वसि "–इति । पुत्रो ह्येष मातरा विचरन्नुपावति । " पृणक्षि रोदसीऽउभे "–( वा. सं. १२ । १०७ ) इति । इमे वै द्यावापृथिवी रोदसी । तेऽएष उभे पृणक्ति–धूमेनामूम्, वृष्ट्येमाम् ॥ ३० ॥

---

' अस्य ' अग्नेः ' श्रवः ' श्रवणहेतुः ' वयः ' स्वरूपम् ' धूमो वै ' धूमः खलु । एतदुपपादयति—स ह्येनमिति । ' एनम् ' अग्निम् ' अमुष्मिन् ' स्वर्गे 'लोके' ' सः ' खलु धूमः ' श्रावयति ' प्रख्यापयति; आकाशे धूमं दृष्ट्वा यागार्थमग्नय आहिता इति द्युलोकवर्तिनो देवा बुध्यन्त इत्यर्थः । अतोऽन्तर्भावितण्यर्थात् शृणोतेः श्रावयत्यनेनेति करणे "ऋदोरप्" ( पा. सू. ३–३–५७ ) इत्यनेनाप्प्रत्यये श्रव इति रूपं भवति ॥

द्वितीयं पादमनूद्य तत्रत्यं पदद्वयं व्याचष्टे—महि भ्राजन्त इति । महत्प्रातिपदिकस्य अच्छन्दलोपे सति महीति सप्तम्यन्तं पदम् । अत्र " सुपां सुलुक् "–( पा. सू. ७ । १ । ३९ ) इति व्यत्ययेन षष्ठ्यर्थो वर्त्तत इति व्याचष्टे—महतो भ्राजन्त इति । ' विभा ' शब्दस्य तेजोवाचकत्वं प्रसिद्धम्, अत्र तु भूयस्त्वमेव तेन शब्देन विवक्षितमित्याह—प्रभूवसवित्येतदिति ॥

तृतीयपादमनूद्य शवसेत्यस्य बलमर्थः ( निघं० २ । ९ ३ ) ' वाज ' शब्दस्य चान्नमर्थः ( निघं० २ । ७ । २ ) इत्याह—बलं वै शव इत्यादिना ॥

चतुर्थपादमनूद्य दाशुष इति पदस्यार्थमाह—यजमानो वै दाश्वानिति । " दाशृ दाने "–( धा. पा. भ्वा. उ. ९०७ ) इत्यस्मात् क्वसौ " दाश्वान् साह्वान् "–( पा. सू. ६ । १ । १२ ) इति निपातनाद् दत्तवानित्यर्थो भवति, स चात्र प्रकरणाद् यजमान एवेत्यभिप्रायः ॥

ऋगर्थस्तु—हे ' अग्ने ' ! ' तव ' सम्बन्धी ' श्रवः ' धूमः आहुतिपरिणामरूपत्वाद् ' वयः ' देवानामन्नम् ( निघं० २ । ७ । ७ ) । हे ' विभावसो ' प्रभूतधनाग्ने ! ' महि ' महतस्तव ' अर्चयः ' अर्चींषि 'भ्राजन्ते' दीप्यन्ते । किंच हे ' बृहद्भानो ' महादीप्ते ! हे ' कवे ' क्रान्तदर्शिन् ! ' शवसा ' बलेन सहितम् ' उक्थ्यम् ' उक्थार्हं प्रशस्यं ' वाजम् ' अन्नम् ' दाशुषे ' दत्तवते यजमानाय ' दधासि ' प्रयच्छसीति ॥ २९ ॥

द्वितीयामृचमप्येवमेव पादशो व्याचष्टे—पावकवर्चा इति । ' एषः ' अग्निः ' पावकवर्चाः ' शोधकदीप्तिः, 'शुक्रवर्चाः' शुक्लवर्णतेजस्क इत्येतदुभयं प्रसिद्धम्; अतो न पृथग् व्याख्येयमिति 'हि'–शब्दार्थः । 'उदियर्षि'

( मू० ) ऊर्जोनपाज्जातवेदः सुशस्तिभिरिति । ( व्या० ) ऊर्जोनपाज्जातवेदः सुष्टुतिभिरित्येतन्मन्दस्व धीतिभिर्हित ऽइति दीप्यस्व धीतिभिर्हित ऽइत्येतत्त्वेऽइषः संदधुर्भूरिवर्पसऽ इति त्वेऽइषः संदधुर्बहुवर्पस ऽइत्येतच्चित्रोतयो वामजाता ऽइति यथैव यजुस्तथा बन्धुः ॥ ३१ ॥

---

" ऊर्जोनपाज्जातवेदः सुशस्तिभिः "–इति । ऊर्जोनपाज्जातवेदः सुष्टुतिभिरित्येतत् । " मन्दस्व धीतिभिर्हितः "–इति । दीप्यस्व धीतिभिर्हित इत्येतत् । "त्वेऽइषः सन्दधुर्भूरिवर्पसः "–इति । त्वेऽइषः सन्दधुर्बहुवर्पस इत्येतत् । " चित्रोतयो वामजाताः "–( वा० सं० १२ । १०८ ) इति । यथैव यजुस्तथा बन्धुः ॥ ३१ ॥

---

इत्यस्यार्थमाह–उद्दीप्यस इति । अग्नेरुद्गमनं नामोर्ध्वज्वलनम्, अत उद्दीप्यस इत्यस्मिन्नर्थे पर्यवस्यतीत्यभिप्रायः । तृतीयपादार्थोऽपि प्रसिद्ध इति ' हि '–शब्देनैव व्याचष्टे–पुत्रो ह्येष इति । चतुर्थपादमनूद्य व्याचष्टे–इमे वा इति । 'इमे' खलु ' द्यावापृथिव्यौ ' 'रोदसी'–शब्देन वाच्ये । ' एषः ' अग्निः 'ते' 'उमे' ' पृणक्ति ' संयुक्ते करोति । । केन किमिति तदाह–धूमेनेति । द्यावापृथिव्योर्मध्ये वर्तमानोऽयमग्निः धूमेन उद्गच्छता ' अमूम् ' दिवं पृणक्ति; आहुतिद्वारा जनितया ' वृष्ट्या ' च ' इमाम् ' पृथिवीं संयोजयति ॥

मन्त्रार्थस्तु–' पावकवर्चाः ' शोधकदीप्तिः, ' शुक्रवर्चाः ' निर्मलदीप्तिः, ' अनूनवर्चाः ' न्यूनतारहिततेजस्कश्च सन्, हे अग्ने ! त्वम् ' भानुना ' तेजसा ' उदियर्षि ' उद्गच्छसि, उद्दीप्यसे, द्यावापृथिव्योर्मध्ये जातत्वात् तयोः ' पुत्रः ' भूत्वा ' मातरा ' सकलभूतानां निर्मात्र्यौ द्यावापृथिव्यौ ' विचरन् उपावसि ' समीपगतो रक्षसि । यथा लौकिकः पुत्रो मातृसमीपे सञ्चरन् तां रक्षति, तद्वत् । रक्षणप्रकारोऽभिधीयते–' उमे ' 'रोदसी' द्यावापृथिव्यौ क्रमाद् धूमेन वृष्ट्या च ' पृणक्षि ' संयोजयसि । " पृची सम्पर्के "–( धा. पा. रु. प. २९ ) इति धातुः ॥ ३० ॥

तृतीयामृचं व्याचष्टे–ऊर्जोनपादित्यादिना । सुशस्तिभिरिति पदं व्याचष्टे–सुष्टुतिभिरिति । द्वितीयतृतीययोः पादयोः ' मन्दस्व ' ' भूरि ' शब्दावनुवादेन व्याख्यातौ । चतुर्थपादस्तु निगदसिद्ध इत्याह–यथैव यजुरिति ॥

ऋगर्थस्तु–हे ' जातवेदः ' जातानां वेदितः ! हे ' ऊर्जोनपात् ' बलकरस्य अन्नरसस्य न पातयितः ! पौत्र ! वा, ' सुशस्तिभिः ' ' सुष्टुतिभिः ' अस्मत्प्रयुक्ताभिः हृष्टो भूत्वा ' हितः ' निहितस्त्वम् ' धीतिभिः ' कर्मभिः, प्रभाभिर्वा ' मन्दस्व ' दीप्यस्व । ' त्वे ' त्वयि खलु ' इषः ' इष्यमाणान्यन्नानि ' सन्दधुः ' संहितानि बभूवुः । इषो विशेष्यन्ते–भूरिवर्पस इति । " वर्पः "–इति रूपनाम ( निघं. ३ । ७ । ३ । ) ' भूरिवर्पसः ' बहुरूपाः, ' चित्रोतयः ' विचित्ररक्षणोपेताः, ' वामजाताः ' प्रशस्तजननोपेताः ॥ ३१ ॥

( रि ) इरज्युन्नग्ने प्रथयस्व जन्तुभिरिति । मनुष्या वै जन्तवो दीप्यमानोऽग्ने प्रथस्व मनुष्यैरित्येतदस्मे रायोऽअमर्त्येत्यस्मे रयिं दधदमर्त्येत्येतत्स दर्शतस्य वपुषो विराजसीति दर्शतस्य ह्येष वपुषो विराजति पृणक्षि सानसिं क्रतुमिति पृणक्षि सनातनं क्रतुमित्येतत् ॥ ३२ ॥

( दि ) इष्कर्तारमध्वरस्य प्रचेतसमिति । (त्य) अध्वरो वै यज्ञः प्रकल्पयितारं यज्ञस्य प्रचेतसमित्येतत्क्षयन्तꣳ राधसो महऽ इति क्षयन्तꣳ राधसि महतीत्येतद्रातिं वामस्य सुभगां महीमिषमिति रातिं वामस्य सुभगां महतीमिषमित्येतद्दधासि सानसिꣳ रयिमिति दधासि सनातनꣳ रयिमित्येतत् ॥ ३३ ॥

---

" इरज्यन्नग्ने प्रथयस्व जन्तुभिः "–इति । मनुष्या वै जन्तवः । दीप्यमानोऽग्ने प्रथस्व मनुष्यैरित्येतत् । " अस्मे रायोऽअमर्त्य "–इति । अस्मे रयिं दधदमर्त्येत्येतत् । " स दर्शतस्य वपुषो विराजसि "–इति । दर्शतस्य ह्येष वपुषो विराजति । " पृणक्षि सानसिं क्रतुम् "–( वा. सं. १२ । १०९ ) इति । पृणक्षि सनातनं क्रतुमित्येतत् ॥ ३२ ॥

" इष्कर्तारमध्वरस्य प्रचेतसम् "–इति । अध्वरो वै यज्ञः । प्रकल्पयितारं यज्ञस्य प्रचेतसमित्येतत् । " क्षयन्तं राधसो महः "–इति । क्षयन्तं राधसि महतीत्येतत् । " रातिं

---

चतुर्थीमृचमनूद्य व्याचष्टे–इरज्यन्नग्न इति । मनुष्या वै जन्तव इति । जायन्ते पुरुषार्थोपयोगित्वेनोत्पद्यन्त इति जन्तवोऽत्र मनुष्याः; न तु क्रिमिकीटादय इत्यर्थः । " इरज्यतिः "–( धा. पा. कंड्वा० ९ ) कण्ड्वादिर्दीप्तिकर्मेत्यभिप्रेत्याह–दीप्यमान इति । द्वितीयपादे ' रायः ' शब्दस्यार्थमाह–रयिं दधदिति । तृतीयपादार्थः प्रसिद्ध इति ' हि '–शब्देन व्याचष्टे–दर्शतस्य ह्येष इति । चतुर्थपादे ' सानसि '–शब्दः सनातनपर्याय इति च ( उणा. ४ पा. सू. १०७ ) व्याचष्टे–सनातनं क्रतुमित्येतदिति ॥

ऋगर्थस्तु–हे ' अग्ने ' ! ' जन्तुभिः ' प्रशस्तजननैर्मनुष्यैर्ऋत्विग्भिः ' इरज्यन् ' दीप्यमानः सन् ' प्रथयस्व ' स्वार्थिको णिच् प्रथस्व, विस्तीर्णो भव । हे ' अमर्त्य ' मरणरहिताग्ने ! त्वत्प्रसादाद् ' अस्मे ' अस्माकम् ' रायः ' धनानि सन्तु । ब्राह्मणे तु " अस्मे रयिं दधत् "–इत्यर्थतो व्याख्यानम् । तथाविधः ' सः ' त्वम् ' दर्शतस्य ' दर्शनीयस्य ' वपुषः ' ज्वालारूपस्य शरीरस्य शोभातिशयेन ' विराजसि ' विशेषेण दीप्यसे, तथा ' सानसिम् ' सनातनं नित्यफलविषयम् ' क्रतुम् ' यजमानसङ्कल्पम् ' पृणक्षि ' फलेन संयोजयसीति ॥ ३२ ॥

पञ्चमीमृचं व्याचष्टे–इष्कर्त्तारमिति । उपसर्गस्यादिलोपश्छान्दसः । निष्कर्तारम् । तथैव तैत्तिरीयैराम्नायते–( तै. सं. ४ । २ । ७ । ३ ) । ' अध्वरस्य ' यज्ञस्य निःशेषेण कर्त्ता निष्कर्ता । तथाच यज्ञस्य प्रकल्पयितेत्यर्थः सिद्ध्यतीत्याह–अध्वरो वा इति । द्वितीयपादे राधसो मह इति षष्ठ्यन्तयोः सप्तम्यर्थतामाह–

( ६ ) ऋतावानमिति । सत्यावानमित्येतन्महिषमित्यग्निर्वै महिषो विश्वदर्शतमिति विश्वदर्शतो ह्येषोऽग्निᳬ सुम्नाय दधिरे पुरो जना ऽइति यज्ञो वै सुम्नं यज्ञाय वाऽ एतं पुरो दधते श्रुत्कर्णᳬ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगेत्याशृण्वन्तᳬ सप्रथस्तमं त्वा गिरा देवं मनुष्या हवामहऽइत्येतत् ॥ ३४ ॥

---

वामस्य सुभगां महीमिषम् "–इति । रातिं वामस्य सुभगां महतीमिषमित्येतत् । "दधासि सानसिं रयिम् "–( वा. सं. १२ । ११० ) इति । दधासि सनातनं रयिमित्येतत् ॥ ३३ ॥

"ऋतावानम् "–इति । सत्यावानमित्येतत् । "महिषम् "–इति । अग्निर्वै महिषः । "विश्वदर्शतम् "–इति । विश्वदर्शतो ह्येषः । "अग्निं सुम्नाय दधिरे पुरो जनाः"–इति । यज्ञो वै सुम्नम् । यज्ञाय वाऽएतं पुरो दधते । " श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा "–( वा. सं. १२ । १११ ) इति । आशृण्वन्तं सप्रथस्तमं त्वा गिरा देवं मनुष्या हवामह इत्येतत् ॥ ३४ ॥

---

राधसि महतीति । तृतीयपादे 'मही'–इति शब्दस्य 'महती'–शब्दपर्यायतामाह–महतीमिषमित्येतदिति ॥

अयमर्थः–'इष्कर्त्तारम्' यज्ञस्य निःशेषेण कर्त्तारम्, अत एव प्रकृष्टज्ञानवन्तम् । 'राधः'–इति ( निघं. २ । १० । २० । ) धननाम । महति प्रभूते 'राधसि' धने विषये 'क्षयन्तम्' "क्षयतिरैश्वर्यकर्मा "–( निघं. २ । २१ । ३ । ) ईश्वरत्वेन सन्तम्, ममेति शेषः । स त्वं 'वामस्य' वननीयस्य धनस्य 'रातिम्' दानम् 'सुभगाम्' शोभनाम् 'महीम्' महतीम् 'इषम्' इष्यमाणमन्नं च 'सानसिम्' सनातनं चिरन्तनं गवाश्वादिपशुरूपं 'रयिम्' च यजमानाय 'दधासि' धारयसीति ॥ ३३ ॥

षष्ठीमृचमनूद्य पादशो व्याचष्टे–ऋतावानमिति । यद्यपि ऋतसत्ययोर्मानसवाचिकयथार्थसङ्कल्पनतद्भाषणरूपत्वाद् भेदोऽस्ति, तथाप्यत्र तादृशो भेदो न विवक्षित इत्याह–सत्यावानमित्येतदिति । अग्निर्वै महिष इति । "स हीदं जातो महान्त्सर्वमैष्णादिति" ( श. प. ७ । ३ । १ । २२ ) तन्नामनिर्वचनस्य प्रागाम्नातत्वादिति भावः । सर्वैर्दर्शनीयत्वमस्य प्रसिद्धमतो न पृथग्व्याख्यातव्यमित्यभिप्रेत्याह–विश्वदर्शतो ह्येष इति । यज्ञो वै सुम्नमिति । यद्यपि सुखवाची 'सुम्न'–शब्दः ( निघं. ३ । ६ । १६ ) तथाप्यत्र प्रकरणात्तत्साधनो यज्ञ एव तस्यार्थः । उत्तरार्द्धमनूद्य श्रुत्कर्णपदं व्याचष्टे–आशृण्वन्तमिति । श्रवणशीलकर्णोपेतम्, आ समन्तात् शृण्वन्तमिति यावत् । 'गिरा'–इति विशिष्टसाधनश्रवणाद् योग्यक्रियाध्याहारेण वाक्यं पूरयति–मनुष्या हवामह इत्येतदिति ॥

ऋगर्थस्तु–सत्यवन्तं, महान्तं, सर्वेषां दर्शनीयम्, एवम्भूतमग्निम्, ऋत्विग्यजमानलक्षणाः 'जनाः' 'सुम्नाय' सुखसाधनाय यज्ञाय 'पुरो दधिरे' पुरस्कुर्वन्ति, वयमपि 'श्रुत्कर्णम्' अभिमतफलप्रार्थनं सम्यक् शृण्वन्तम्, 'सप्रथस्तमम्' अतिशयितकीर्तिमन्तम्, 'दैव्यम्' स्वार्थिकस्तद्धितः, देवम् 'त्वा'

(त्सु) सऽएषोऽग्निरेव वैश्वानरः। (ऽ) एतत्षडृचमारम्भायैवेमाः सिकता न्युप्यन्तेऽग्निमेवास्मिन्नेतद्वैश्वानरᳬ रेतोभूतᳬ सिञ्चति षडृचेन षडृतवः संवत्सरः संवत्सरो वैश्वानरः ॥ ३५ ॥

(स्तु) तदाहुः । (र्सं) यद्रेतः सिकताऽउच्यन्ते किमासाᳬ रेतोरूपमिति शुक्लाऽइति ब्रूयाच्छुक्लᳬ हि रेतोऽथो पृश्नयऽइति पृश्नीव हि रेतः ॥३६॥

( स्तु ) तदाहुः । ( र्सं ) यदार्द्रᳬ रेतः शुष्काः सिकता निवपति कथमस्यैताऽआर्द्रा रेतोरूपं भवन्तीति रसो वै छन्दाᳬस्यार्द्रऽउ वै रसस्तद्यदेनाश्छन्दोभिर्निवपत्येवमु हास्यैताऽआर्द्रा रेतोरूपं भवन्ति ॥ ३७ ॥

---

स एषोऽग्निरेव वैश्वानरः । एतत्षडृचम् । आरम्भायैवेमाः सिकता न्युप्यन्ते । अग्निमेवास्मिन्नेतद्वैश्वानरं रेतोभूतं सिञ्चति । षडृचेन । षडृतवः संवत्सरः । संवत्सरो वैश्वानरः ॥ ३५ ॥

तदाहुः—यद्रेतः सिकता उच्यन्ते—किमासां रेतोरूपमिति । शुक्ला इति ब्रूयात् । शुक्लं हि रेतः । अथो पृश्नय इति । पृश्नीव हि रेतः ॥ ३६ ॥

तदाहुः—यदार्द्रं रेतः, शुष्काः सिकता निवपति—कथमस्यैता आर्द्रा रेतोरूपं भवन्तीति । रसो वै छन्दांसि । आर्द्रं उ वै रसः । तद्यदेनाश्छन्दोभिर्निवपति—एवमु हास्यैता आर्द्रा रेतोरूपं भवन्ति ॥ ३७ ॥

---

त्वाम् ‘ गिरा ’ स्तुतिरूपया वाचा ‘ हवामहे ’ आह्वयामः । कर्त्तारो विशेष्यन्ते—मानुषेति । मानुषाणि मनोः सम्बन्धीनि ‘ युगा ’ युगानि, युगलानि भूत्वा, जायापत्यात्मना युगलभूता मनुष्या इत्यभिप्रायः ॥३४॥

इत्थं सिकतानिवपने करणभूतं षडृचं व्याख्याय तस्य वैश्वानराग्न्यात्मकतां प्रतिपादयन् स्तौति—स एष इति । यत् ‘ एतत् षडृचम् ’ सूक्तम्, ‘ एषः ’ साक्षाद् ‘ वैश्वानरोऽग्निरेव ’, तथाविधस्याग्नेः ‘ आरम्भाय ’ उत्पादनाय ‘ एव ’ हि ‘ इमाः सिकता न्युप्यन्ते ’; तस्माद्वैश्वानरात्मकेन सूक्तेन तन्निवपनाद् ‘ वैश्वानरम् ’ तमग्निम् ‘ रेतोभूतम् ’ रेतोरूपेणावस्थितम्, ‘अस्मिन्’ चेष्यमाणे अग्नौ ‘सिञ्चति’ प्रक्षिपति । षडृचकरणकत्वमनूद्य तत्सङ्ख्याद्वारेण स्तौति—षडृचेनेति । न्युप्यन्त इति शेषः । संवत्सरो वैश्वानर इति । संवत्सरधारणेन जायमानत्वात् वैश्वानराग्नेः संवत्सरात्मकता ॥ ३५ ॥

सिकतानां रेतस्त्वे तत्साम्यमवश्यं वर्णनीयमिति प्रश्नपूर्वकमाह—तदाहुरिति । यदीमाः सिकता रेतःसंस्तुताः, तर्ह्यवश्यं तत्साधर्म्यं वक्तव्यम्,—‘किम्’ तद् ‘ आसाम् ’ सिकतानां सम्बन्धि ‘ रेतोरूपम् ’ रेतःसम्बन्धी धर्मविशेष इति प्रश्नार्थः । शुक्ला इत्याद्युत्तरम् । शौक्ल्यमासां रेतसश्च तादात्म्यहेतुः साधारणो धर्मः, अयमेकस्तादात्म्यहेतुः । ‘अथो’ अपि च ‘ पृश्नयः ’ सूक्ष्मपरिमाणबिन्दुरूपा हि सिकताः, ‘ रेतः ’ अपि ‘ हि ’ ‘ पृश्नीव ’ सिकतोपमैः सूक्ष्मपरिमाणबिन्दुभिर्युक्तमिव भवति; अयमपरस्तादात्म्यहेतुरित्यर्थः ॥ ३६ ॥

नन्वार्द्रं रेतः, शुष्काः सिकताः, कथमासामार्द्रत्वलक्षणं रेतोरूपं स्यादिति प्रश्नपूर्वकं प्रतिपादयति—तदाहुरिति । कथमस्यैता इति । ‘ अस्य ’ वैश्वानरस्याग्नेः ‘ एताः ’ सिकताः ‘ कथमार्द्राः ’ सत्यो ‘ रेतोरूपं ’

तदाहुः । कथमस्यैता॒ऽ अहोरात्राभ्यामुपहिता भवन्तीति द्वे वा॒ऽअहोरात्रे शुक्लं च कृष्णं च द्वे सिकते शुक्ला च कृष्णा चैवमु हास्यैता॒ऽअहोरात्राभ्यामुपहिता भवन्ति ॥ ३८ ॥

तदाहुः।कथमस्यैता॒ऽ अहोरात्रैः सम्पन्ना ऽअन्यूना ऽअनतिरिक्ता ऽउपहिता भवन्तीत्यनन्तानि वा॒ऽअहोरात्राण्यनन्ताः सिकता ऽएवमु हास्यैता॒ऽअहोरात्रैः सम्पन्ना ऽअन्यूना॒ऽ अनतिरिक्ता॒ऽ उपहिता भवन्त्यथ कस्मात्समुद्रियं छन्दऽइत्यनन्तो वै समुद्रोऽनन्ताः सिकतास्तस्मात्समुद्रियं छन्दः ॥ ३९ ॥

---

तदाहुः—कथमस्यैता अहोरात्राभ्यामुपहिता भवन्तीति । द्वे वाऽअहोरात्रे—शुक्लं च कृष्णं च । द्वे सिकते—शुक्ला च कृष्णा च । एवमु हास्यैता अहोरात्राभ्यामुपहिता भवन्ति ॥ ३८ ॥

तदाहुः—कथमस्यैता अहोरात्रैः सम्पन्ना अन्यूना अनतिरिक्ता उपहिता भवन्तीति । अनन्तानि वाऽअहोरात्राणि; अनन्ताः सिकताः। एवमु हास्यैता अहोरात्रैः सम्पन्ना अन्यूना अनतिरिक्ता उपहिता भवन्ति । अथ कस्मात्समुद्रियं छन्द इति । अनन्तो वै समुद्रः, अनन्ताः सिकताः—तस्मात् समुद्रियं छन्दः ॥ ३९ ॥

---

रेतसः सम्बन्धि आर्द्रत्वलक्षणं स्वरूपं 'भवन्तीति' प्रश्नः। रसो वा इत्याद्युत्तरम् । गायत्र्यादीनि हि 'छन्दांसि' 'रसः' सारवत्त्वात् । रसस्य चार्द्रत्वमन्यत्र प्रसिद्धमित्याह—आर्द्र उ वा इति । ततः किमित्याह—तद्यदेना इति । अस्मिन् षडृचे गायत्र्यादीनां सप्तानां छन्दसामन्तर्भावोऽग्रे प्रतिपादयिष्यते; 'तत्' तथा सति 'यत्' यस्माद् 'एनाः' सिकताः शब्दरसात्मकैः 'छन्दोभिर्निवपति' ततः 'एवमु' अनेन प्रकारेण खलु 'अस्य' सम्बन्धिन्यः सिकताः 'आर्द्राः' सत्यो रेतःस्वरूपं प्रतिपद्यन्त इत्यर्थः ॥ ३७ ॥

अथ सिकतानां शुक्लकृष्णरूपद्वयं स्तोतुं पृच्छति—तदाहुरिति । ननु चित्योऽग्निः संवत्सरात्मकः, संवत्सरश्चाहोरात्रात्मकः, तत्समुदायरूपत्वात्; अतः सिकतोपधानमप्यहोरात्राभ्यां करणभूताभ्यां निष्पादनीयम्, तत् कथमुपपद्यत इति ब्रह्मवादिनां प्रश्नः । द्वे वा इति—परिहारः । 'द्वे' एव हिं 'अहोरात्रे' पर्यावर्त्तमाने तत्र 'शुक्लम्' अहः 'कृष्णम्' रात्रिः, सिकता अपि शुक्लकृष्णभेदेन द्विविधाः । अतस्तद्वर्णयोगादेतासामुपधानम् 'अहोरात्राभ्याम्' एव कृतं भवतीत्यर्थः । इत्थं वर्णतोऽहोरात्रसाम्यमुक्तम् ॥ ३८ ॥

अथ सङ्ख्यासम्पत्तिरपि कथमित्याशङ्कापूर्वकं प्रतिपादयति—तदाहुरिति । संवत्सरसम्बन्धिभिः 'अहोरात्रैः' समानसङ्ख्याकाः न्यूनाधिकसङ्ख्यारहिताः कथम् 'उपहिताः' 'भवन्तीति' प्रश्नः । अनन्तानि वा इत्युत्तरम् । संवत्सराणामानन्त्यात्तदवयवा अहोरात्रा अप्यनन्ताः । यद्यपि "रात्राह्नाहाः पुंसि"—( पा. सू. २ । ४ । २९ ) इति पुंलिङ्गेन भवितव्यम्, तथापि "हेमन्तशिशिरावहोरात्रे च च्छन्दसि"—( पा. सू. २ । ४ । २८ ) इति निपातनाल्लिङ्गाद्बहुवचनान्तस्याऽपि नपुंसकलिङ्गता । 'एवमु हास्य' इत्यादि स्पष्टम् ।

अथैतदुपधानकरणस्य षडृचस्य यच्छन्दस्तस्य 'समुद्रियम्' इति नाम कस्मान्निमित्तादिति पृच्छति—

( स्तु ) तुदाहुः । कथमस्यैताः पृथुङ्नाना यजुर्भिरुपहिता भवन्तीति मनो वै यजुस्तुदिदं मनो यजुः सर्वाः सिकता ऽअनु विभवत्येवमु हास्यैताः पृथङ्नाना यजुर्भिरुपहिता भवन्ति ॥ ४० ॥

तुदाहुः । कथमस्यैताः सर्वैश्छन्दोभिरुपहिता भवन्तीति यद्वेवैना ऽएतेन षड्चेन निवपति यावन्ति हि सप्तानां छन्दसामक्षराणि तावन्त्ये-तस्य षड्चस्याक्षराण्येवमु हास्यैताः सर्वैश्छन्दोभिरुपहिता भवन्ति॥४१॥

---

तदाहुः-कथमस्यैताः पृथङ् नाना यजुर्भिरुपहिता भवन्तीति । मनो वै यजुः । तदिदं मनो यजुः सर्वाः सिकता अनु विभवति । एवमु हास्यैताः पृथङ् नाना यजुर्भिरुपहिता भवन्ति ॥ ४० ॥

तदाहुः-कथमस्यैताः सर्वैश्छन्दोभिरुपहिता भवन्तीति । यद्वेवैना एतेन षड्चेन निवपति । यावन्ति हि सप्तानां छन्दसामक्षराणि तावन्त्येतस्य षड्चस्याक्षराणि । एवमु हास्यैताः सर्वैश्छन्दोभि-रुपहिता भवन्ति ॥ ४१ ॥

---

अथ कस्मादिति । तन्निमित्तमाह-अनन्तो वा इति । ' अनन्तः ' अन्तरहितः समाप्तिरहितः खल्वयं ' समुद्रः ' जलनिधिः ' सिकताः ' च ' अनन्ताः ' परिगणनानर्हत्वात् । अतस्तासामुपवानमन्त्रसम्बन्धिनश्छ-न्दसोऽप्यन्तराहित्यात् समुद्रसाम्यात् समुद्रे भवं ' समुद्रियम् ' इति व्युत्पत्त्या तन्नामधेयतेत्यर्थः ॥ ३९ ॥

नन्वनन्तानां सिकतानामुपधानं पृथक्पृथक् कथं समन्त्रकं स्यादिति पृच्छति-तदाहुरिति । मनो वा इत्याद्युत्तरम् । ' मनः ' एव हि सर्वासां सिकतानां साधारणम् ' यजुः, ' तदुच्चारणहेतुत्वात् । मनसो यजुष्ट्वं ' तदिदं मनो '-रूपं ' यजुः ' ' सर्वाः ' सिकताः ' ' अनु '-लक्ष्य ' विभवति ' प्रत्येकं व्याप्तुं शक्नोति, अनेनैव हि प्रकारेण । अतश्चित्यस्याग्नेः ' एताः ' सर्वाः सिकताः ' पृथङ् नाना यजुर्भिः ' विभिन्नैर्यजुर्मन्त्रैः ' उपहिता भवन्ति ' ॥ ४० ॥

अथैतस्मिन् षड्चे सप्तानां छन्दसामन्तर्भावप्रदर्शनाय स्तौति-तदाहुरित्यादिना । ' एताः ' सिकताः ' सर्वैः ' गायत्र्यादिभिः सप्तभिः ' छन्दोभिः ' ' कथमुपहिताः ' ' भवन्ति ' १ " अग्ने तव श्रवः " इत्यादीनां षण्णामृचां प्रतिनियतैकच्छन्दोरूपत्वात्, इत्यभिप्रायेण प्रश्नः । यद्वेवैना इत्युत्तरम् । ' यत् ' यत एव कार-णात् ' एनाः ' ' एतेन ' ' षड्चेन ' सूक्तेन ' निवपति ' तेन ' एताः ' ' सर्वैश्छन्दोभिरुपहिता भवन्ति ' । कथमिति चेदुच्यते-गायत्र्यादीनां जगत्यन्तानां ' सप्तानाम् छन्दसाम ' ' यावन्ति ' ' अक्षराणि ' मिलित्वा सम्पद्यन्ते तावन्त्येतस्य ' षड्चस्याक्षराणि ' भवन्ति । तथा हि-गायत्री चतुर्विंशत्यक्षरा, उष्णिगष्टाविंशत्यक्षरा, अनुष्टुभो द्वात्रिंशदक्षराणि, बृहत्याः षट्त्रिंशदक्षराणि, पंक्तेश्चत्वारिंशत्, चतुश्चत्वारिंशत्त्रिष्टुभः, अष्टाचत्वारिंश-ज्जगत्याः, तानि च सम्भूय द्विपञ्चाशदधिकशतद्वयसंख्याकानि भवन्ति । अस्मिन् षड्चे प्रथमा चत्वारिंशदक्षरा, द्वितीया एकचत्वारिंशदक्षरा, तृतीया चतुर्थी च चत्वारिंशदक्षरा, पञ्चमीषष्ठ्योः द्विचत्वारिंशदक्षराणि, एवं पञ्च-चत्वारिंशदधिकशतद्वयसङ्ख्याकानि भवन्ति । अन्यानि सप्ताक्षराणि क्षैप्रसंयोगविभागेन द्रष्टव्यानि । एवं सप्त च्छन्दांस्यक्षरसङ्ख्याद्वारेणास्मिन् षड्चेऽन्तर्भवन्ति । एवमु हास्यैता इति प्रतिपादितार्थनिगमनम् ॥ ४१ ॥

यद्देव सिकता निवपति। प्रजापतिरेषोऽग्निः सर्व्वमु ब्रह्म प्रजापतिस्तद्धैतद्ब्रह्मणऽउत्सन्नं यत्सिकताऽअथ यदनुत्सन्नमिदं तद्योऽयमग्निश्चीयते तद्यत्सिकता निवपति यदेव तद्ब्रह्मणऽउत्सन्नं तदस्मिन्नेतत्प्रतिदधाति ताऽअसङ्ख्याताऽअपरिमिता निवपति को हि तद्वेद यावत्तद्ब्रह्मणऽउत्सन्नᳬं स ह वाऽएतᳬं सर्व्वं कृत्स्नं प्रजापतिᳬं संस्करोति यऽएवं विद्वान्त्सिकता निवपति ॥ ४२ ॥

तदाहुः। कैतासामसंख्यातानाᳬं संख्येति द्वेऽइति ब्रूयाद्द्वे हि सिकते शुक्ला च कृष्णा चाथो सप्तविᳬंशतिशतानीति ब्रूयादेतावन्ति हि संवत्सरस्याहोरात्राण्यथो द्वे द्वापञ्चाशे शतेऽइत्येतावन्ति ह्येतस्य षड्टचस्याक्षराण्यथो पञ्चविᳬंशतिरिति पञ्चविᳬंशᳬं हि रेतः ॥ ४३ ॥

---

यद्देव सिकता निवपति। प्रजापतिरेषोऽग्निः। सर्वमु ब्रह्म प्रजापतिः। तद्धैतद्ब्रह्मण उत्सन्नं यत्सिकताः, अथ यदनुत्सन्नम्-इदं तद्-योऽयमग्निश्चीयते। तद् यत्सिकता निवपति। यदेव तद्ब्रह्मण उत्सन्नं तदस्मिन्नेतत्प्रतिदधाति। ता असंख्याता अपरिमिता निवपति। को हि तद्वेद-यावत्तद्ब्रह्मण उत्सन्नम्। स ह वाऽएतं सर्वं कृत्स्नं प्रजापतिं संस्करोति-य एवं विद्वान्त्सिकता निवपति ॥ ४२ ॥

तदाहुः-कैतासामसङ्ख्यातानां सङ्ख्येति। द्वेऽइति ब्रूयात्। द्वे हि सिकते-शुक्ला च कृष्णा च। अथो सप्तविंशतिशतानीति ब्रूयात्। एतावन्ति हि संवत्सरस्याहोरात्राणि। अथो द्वे द्वापञ्चाशे शतेऽइति। एतावन्ति ह्येतस्य षड्टचस्याक्षराणि। अथो पञ्चविंशतिरिति। पञ्चविंशं हि रेतः ॥४३॥

---

उत्सन्नयज्ञभागस्य पुनराहरणार्थत्वेन सिकतानिवपनं स्तौति-यद्देवेति। 'एषः' चित्योऽग्निर्विराडात्मकः 'प्रजापतिः' 'सर्वम्' निरवशेषमेव कृत्स्नम् 'ब्रह्म' मन्त्रजातं स 'प्रजापतिः' 'तत्' तथा सति तस्य 'ब्रह्मणः' यदेतद् 'उत्सन्नम्' विशीर्णं स्वरूपम् 'तत्' सिकतात्मना परिणतम्। 'अथ' तु 'यदनुत्सन्नम्' अविनष्टं ब्रह्मणो रूपं, चीयमानाग्निरूपं 'तत्' 'अतः' अनेन सिकतानिवपनेन 'ब्रह्मणः' 'उत्सन्नमेव' रूपं पुनरस्मिन् प्रजापत्यात्मकेऽग्नौ सन्दधातीति। तासामपरिमितत्वमनूद्य स्तौति-ता असंख्याता इति। 'तद्' 'ब्रह्मण उत्सन्नम्' रूपं यत्परिमाणविशिष्टमिति 'तत्' 'को' नाम जानीयात्। अतस्तासामपरिमितत्वमपरिमितस्योत्सन्नरूपस्य प्राप्तौ सम्पद्यत इत्यर्थः ॥

विद्वदनुष्ठानं प्रशंसति-स ह वा इति। 'सर्वम्' निरवशेषम् 'कृत्स्नम्' सर्वावयवसहितम्। स्पष्टमन्यत् ॥ ४२ ॥

अपरिमितानामप्येतासां सङ्ख्याविशेषप्रदर्शनेन स्तुतिश्चिकीर्षिता तदर्थं पृच्छति-तदाहुरिति। 'असंख्यातानाम्' अपरिमितानाम् 'आसाम्' सम्बन्धिनी 'सङ्ख्या' कीदृशीति प्रश्नः। चतुर्द्धा सङ्ख्यासद्भावं

( स्ता ) ता ऽएता यजुष्मत्य ऽइष्टकाः । (स्ता) ता ऽआत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्ह्येव यजुष्मत्य ऽइष्टका ऽउपधीयन्ते न पक्षपुच्छेषु न सादयति नेद्रेतः प्रजातिᳬं स्थापयानीति ॥ ४४ ॥

( त्यु ) अथैना ऽआप्यानवतीभ्यामभिमृशति । ( ती ) इदमेवैतद्रेतः सिक्तमाप्याययति तस्माद्योनौ रेतः सिक्तमाप्यायते सौमीभ्यां प्राणो वै सोमः प्राणं तद्रेतसि दधाति तस्माद्रेतः सिक्तं प्राणमभिसम्भवति पूयेद्ध यद्वते प्राणात्सम्भवेदेषो हैवात्र सूददोहाः प्राणो वै सोमः प्राणः सूददोहाः ॥ ४५ ॥

---

ता एता यजुष्मत्य इष्टकाः । ता आत्मन्नेवोपदधाति–न पक्षपुच्छेषु । आत्मन् ह्येव यजुष्मत्य इष्टका उपधीयन्ते–न पक्षपुच्छेषु । न सादयति । नेद्रेतः प्रजातिं स्थापयानीति ॥ ४४ ॥

अथैना आप्यानवतीभ्यामभिमृशति । इदमेवैतद्रेतः सिक्तमाप्याययति । तस्माद्योनौ रेतः सिक्तमाप्यायते । सौमीभ्याम् । प्राणो वै सोमः । प्राणं तद्रेतसि दधाति । तस्माद्रेतः सिक्तं प्राणमभिसम्भवति । पूयेद्ध–यद्वते प्राणात् सम्भवेत् । एषो हैवात्र सूददोहाः । प्राणो वै सोमः । प्राणः सूददोहाः ॥ ४५ ॥

---

प्रशंसति–द्वे इत्यादिना । शुक्लकृष्णात्मना द्वैराश्यादपरिमितानां सिकतानां द्वित्वम् । सप्तविंशतिशतानीति । सिकतानामहोरात्ररूपता प्रागुक्ता ( श. प. ७ । ३ । १ । ३८ ) । संवत्सरसम्बन्धिनामह्नां रात्रीणां च परिगणने सति विंशत्यधिकानि सप्त शतानि भवन्ति । अतस्तदात्मिकानां सिकतानामपि सैव सङ्ख्या भवतीत्यर्थः । द्वे द्वापञ्चाशे शते इति । द्विपञ्चाशदधिकद्विशतसङ्ख्यया सङ्ख्येयाः सिकता इति ' ब्रूयात् ' । तदुपधानमन्त्रस्य ' षड्चस्य ' तावत्सङ्ख्याकाक्षरोपेतत्वात्तेषामक्षराणां सिकतानां च तादात्म्यमित्यर्थः । अथो पञ्चविंशतिरिति । पञ्चविंशतिसङ्ख्यया सङ्ख्येयाः सिकताः । कुत इत्यत आह–पञ्चविंशं हीति । शरीरं हि प्रकृतिमहदादिचतुर्विंशतितत्त्वात्मकम्, तत उत्पन्नम् ' रेतः ' पञ्चविंशतिसङ्ख्यापूरकम्, रेतःसंस्तुताश्च सिकताः । अतः पञ्चविंशतिसङ्ख्याकत्वं तासां प्रतिपत्तव्यमित्यर्थः ॥ ४३ ॥

लोकेष्टकावत् सिकतानामप्यात्मभाग एवोपधानं विधत्ते–ता एता इति । इदमपि लोगेष्टकाप्रकरणस्थवाक्यवद् व्याख्येयम् । सिकतानामपीष्टकात्वादितरेष्टकास्विव प्रसक्तं सादनं निषेधति–न सादयतीति । " तया देवतया "–इति मन्त्रेण स्थापनं सादनम्, तन्न कर्त्तव्यम् । निषेधकारणमाह–नेद्रेत इति । प्रजोत्पत्तिकारणं ' रेतः ' शुक्रं नैव कचिदेव ' स्थापयानि ' इत्यनेनाभिप्रायेण; सादने हि तत् कचिदेव प्रतिष्ठितं स्यान्न तु चलितं सद् गर्भाशये प्रविशेदिति भावः ॥ ४४ ॥

अथ समन्त्रकमेतासामभिमर्शनं विधत्ते–अथैना इति । ' आप्यानवतीभ्याम् ' आप्यायनक्रियाप्रतिपादकः शब्दः आप्यानम्, उपचारात्, तद्वतीभ्याम् " आप्यायस्व, सन्ते " ( वा. सं. १२ । ११२।११३ )

---

१–आप्यायस्वेति सिकतालम्भनमृग्भ्याम् । का. श्रौ. सू. १७ । ६० ।

(०) आप्यायस्व समेतु ते । विश्वतः सोम वृष्ण्यमिति रेतो वै वृष्ण्यमाप्यायस्व समेतु ते सर्वतः सोम रेत ऽइत्येतद्भवा वाजस्य संगथ ऽइत्यन्नं वै वाजो भवान्नस्य सङ्गथऽइत्येतत्सं ते पयाꣳसि समु यन्तु वाजाऽइति रसो वै पयोऽन्नं वाजाः सं ते रसाः समु यन्त्वन्नानीत्येतत्सं वृष्ण्यान्यभिमातिषाह ऽइति सꣳ रेताꣳसि पाप्मसहऽइत्येतदाप्यायमानोऽअमृताय सोमेति प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृता दिवि श्रवाꣳस्युत्तमानि धिष्वेति चन्द्रमा वाऽअस्य दिवि श्रव ऽउत्तमꣳ

---

" आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् "–इति । रेतो वै वृष्ण्यम् । आप्यायस्व समेतु ते सर्वतः सोम रेत इत्येतत् । "भवा वाजस्य सङ्गथे"–( वा० सं० १२ । ११२ ) इति । अन्नं वै वाजः । भवान्नस्य संगथ इत्येतत् । " सं ते पयांसि समु यन्तु वाजाः "–इति । रसो वै पयः, अन्नं वाजाः । सं ते रसाः समु यन्त्वन्नानीत्येतत् । " सं वृष्ण्यान्यभिमातिषाहः "–इति । सं रेतांसि पाप्मसह इत्येतत् । " आप्यायमानोऽअमृताय सोम "–( वा० सं० १२ । ११३ ) इति । प्रजात्यां तद् अमृतं दधाति । तस्मात्प्राजातिरमृता । " दिवि श्रवांस्यु-

---

इत्येताभ्याम् । इदमेवैतदिति । ' इदमेवैतत् ' सिकतात्मकं रूपं ' सिक्तम् ' ' रेतः ' आप्यायति-धातुयुक्तमन्त्रकरणकाभिमर्शनेन 'आप्याययति' प्रवर्द्धयति । यत एवैवं यज्ञे ' तस्माद् ' एव स्त्रीणां योनौ पुरुषैः ' सिक्तम् ' ' रेतः ' ' आप्यायते ' शरीराकारेण परिणतं सद्वर्धते । मन्त्रसम्बन्धिदेवताद्वारेण प्रशंसति–सौमीभ्यामिति । सोमोऽनयोर्देवता "साऽस्य देवता"–( पा. सू. ४ । २ । २४ ) इत्यर्थे–" सोमाट्ट्यण्"–( पा. सू. ४ । २ । ३० । ) " टिड्ढाणञ्द्वय "–( पा. सू. ४ । १ । १९ ) इति ङीप् । ऋग्भ्याममिमृशतीति शेषः । प्राणो वै सोम इति । प्राणस्य तावदुदकमयत्वं प्रसिद्धम् । " आपोमयः प्राणः "–इति श्रुतेः । तथा च सोमोऽपि अमृतमयरसात्मकतया प्राणोपादानत्वात् प्राण एव, ' तत् ' तेन सौमीभ्यामभिमर्शनेन सिकतात्मके सिक्ते रेतसि सोमात्मकं प्राणमेव स्थापयति । तस्मादित्यादिना लोकस्थितिनिरूपणम् । यस्माद्वैदिके कर्मणि रेतसि प्राणः स्थापितः । तस्मादेव कारणात्–प्राणमभिलक्ष्य प्राणसहितमेव गर्भाशये ' सिक्तम् ' ' रेतः ' ' अभिसम्भवति ' शरीराकारेण परिणमते । यत् तु ' प्राणादृते ' रेतः सिच्यते तत् ' पूयेद् ' एव न शरीराकारेण सम्पद्यत इत्यर्थः । एवमेवैतरेयकैश्चाम्नातम्–" न ह वा ऋते प्राणाद्रेतः सिच्यते, यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न सम्भवेत् " ( ऐतरेय ब्रा. ) इति । अस्याभिमर्शनस्य सूददोहसाऽधिवदनकार्यकरत्वात्तदात्मकतामाह–एषो हैवात्रेति । यत् सौमीभ्यामभिमर्शनं एषैवात्र सिकतोपधाने सूददोहाः । " ता अस्य सूददोहसः " इति मन्त्रकरणकमधिवदनम् । कथमन्यस्यान्यात्मतेत्यत आह–प्राणो वा इति । अभिमर्शनमन्त्रप्रतिपाद्यस्य सोमस्य सूददोहसश्च प्राणात्मकत्वसाम्यादित्यर्थः ॥ ४९ ॥

तत्र प्रथमामृचमनूद्याप्रसिद्धार्थं पदं व्याचष्टे–आप्यायस्वेति । रेतो वै वृष्ण्यमिति । वृषा सेचनसमर्थो युवा, तत्र भवं वृष्ण्यमिति व्युत्पत्तेर्वृष्ण्यशब्देन रेतः प्रतिपाद्यत इत्यर्थः । पदार्थमुक्त्वा वाक्यार्थं योजयति–सर्वतः सोम रेत इत्येतदिति । अन्नं वै वाज इति । वाजशब्दस्य " वज व्रज गतौ "–( धा. पा. भ्वा. २९३ ) इत्यस्माद् व्युत्पन्नस्य गत्यर्थत्वादत्र च तत्प्रतिपादकत्वायोगाद् रूढ्या वाजशब्देनान्नमुच्यत इत्यर्थः ।

स ह्येनममुष्मिँल्लोके श्रावयति द्वाभ्यामाप्याययति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ४६ ॥

( २ ) अथातः सम्पदेव । चतस्रो लोगेष्टका उपदधाति षडृचेन निवपति द्वाभ्यामाप्याययति तद्द्वादश द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ४७ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ७-२-३ ॥ ( ३।१ )

---

त्तमानि धिष्व "-इति । चन्द्रमा वाऽअस्य दिवि श्रव उत्तमम् । स ह्येनममुष्मिंल्लोके श्रावयति । द्वाभ्यामाप्याययति-गायत्र्या च त्रिष्टुभा च । तस्योक्तो बन्धुः ॥ ४६ ॥

अथातः सम्पदेव । चतस्रो लोगेष्टका उपदधाति । षडृचेन निवपति । द्वाभ्यामाप्याययति । तद्द्वादश, द्वादश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ४७ ॥

---

अत एव वाजशब्दोऽन्ननामसु पठ्यते । " अन्धः वाजः पयः " इति ( निघं. २ । ७ । ) । हे सोम ! त्वम् ' आप्यायस्व ' वर्द्धस्व, अस्मान् वर्द्धय वा, त्वदीयं वृष्णः सम्बन्धि ' रेतः ' इमम् अग्निम् ' विश्वतः ' सर्वतः ' समेतु ' प्राप्नोतु । अन्नस्य सङ्गमनाय त्वमस्माकं भवेति मन्त्रार्थः ॥

द्वितीयामाप्यानवतीमनूद्याप्रसिद्धार्थानि पदानि व्याचष्टे-सं ते पयांसीति । अत्र ' पयः ' शब्दो रसपरः, ' वाज ' शब्दोऽन्नपरः । तथा चायमर्थ इत्याह-सं ते रसा इति । द्वितीयार्द्धे ' अभिमाति '-शब्देन पाप्मोच्यत इत्याह-पाप्मसह इत्येतदिति । तृतीयपादे अमृतशब्दस्याभिप्रायमाह-प्रजात्यामिति । पुत्रपौत्रादिरूपेण यैव प्रजाति-लक्षणा प्रजोत्पत्तिरूपा क्रिया अमृता । आप्यायमान इति । अनेन मन्त्रभागेन तस्याम् ' प्रजात्याम् ' अमृतत्वं स्थापयति । यस्मादेवम् ' तस्मात् ' ' प्रजातिः ' प्रजोत्पत्तिः ' अमृता ' मरणरहिता अविच्छिन्ना सार्वकालिकी वर्तत इत्यर्थः ॥

चतुर्थपादे श्रवःशब्दस्यार्थमाह-चन्द्रमा वाऽअस्य दिवि श्रव इति । ' अस्य ' अधियज्ञं लतारूपेण वर्त्तमानस्य सोमस्य ' दिवि ' द्युलोके ' उत्तमम् ' उत्कृष्टम् ' श्रवः ' नाम चन्द्रमा एवोच्यते । कथमस्य श्रवःशब्दाभिधेयतेति तत् प्रतिपादयति-स ह्येनमिति । ' अमुष्मिन् ' स्वर्गे ' लोके ' 'सः' खलु चन्द्रमाः ' एनम् ' सोमम् । अमृतात्मना पीयमानः सन् ' श्रावयति ' प्रख्यापयति; अतः श्रावयितृत्वात् श्रवःशब्देन स उच्यत इत्यर्थः । मन्त्रगतं द्वित्वं छन्दोविशेषं चानूद्य तस्य स्तावको वाक्यशेषः प्रागाम्नात इत्याह-द्वाभ्यामिति । द्विपाद्यजमान इत्यादिर्द्वित्वसंख्यास्तुतिः ॥ ४६ ॥

लोकेष्टकादिसङ्ख्यां सम्भूय स्तौति-अथातः सम्पदेवेति । स्पष्टोऽर्थः । यावानग्निरित्यादि । प्रागुक्तार्थम् ॥ ४७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ७-३-१ ) ॥

**आप्यानवतीभ्यामभिमृश्य । प्रत्येत्यातिथ्येन प्रचरत्यातिथ्येन प्रचर्य्य प्रवर्ग्योपसद्भ्यां प्रचरति प्रवर्ग्योपसद्भ्यां प्रचर्य्याथैतां चर्मणि चितिᳪं समवशमयन्ति तद्यच्चर्मणि चर्म वै रूपᳪं रूपाणामुपाप्त्यै लोमतो लोम वै रूपᳪं रूपाणामुपाप्त्यै रोहिते रोहिते ह सर्वाणि रूपाणि सर्वेषाᳪं रूपाणामुपाप्त्याऽआनडुहेऽग्निरेष यदनड्वानग्निरूपाणामुपाप्त्यै प्राचीनग्रीवे तद्धि देवत्रा ॥ १ ॥**

---

आप्यानवतीभ्यामभिमृश्य, प्रत्येत्य, आतिथ्येन प्रचरति । आतिथ्येन प्रचर्य, प्रवर्ग्योपसद्भ्यां प्रचरति । प्रवर्ग्योपसद्भ्यां प्रचर्य, अथैतां चर्मणि चितिं समवशमयन्ति । तद्यच्चर्मणि । चर्म वै रूपम् । रूपाणामुपाप्त्यै । लोमतः । लोम वै रूपम् । रूपाणामुपाप्त्यै । रोहिते । रोहिते ह सर्वाणि रूपाणि । सर्वेषां रूपाणामुपाप्त्यै । आनडुहे । अग्निरेषः—यदनड्वान् । अग्निरूपाणामुपाप्त्यै । प्राचीनग्रीवे । तद्धि देवत्रा ॥ १ ॥

---

एवमाहवनीयदेशस्य संस्कारसमनन्तरं कर्त्तव्यं प्राकृतं प्रयोगजातमनुक्रामन् प्रागुक्तयोः आग्निकसौमिकयोः कर्मणोर्व्यतिषङ्गं दर्शयति—आप्यानवतीभ्यामित्यादिना । ‘ प्रत्येत्य ’ उत्तरवेदिदेशात् प्राग्वंशं प्रत्यागत्येत्यर्थः । अन्यन्निगदव्याख्यातम् । प्रथमप्रवर्ग्योपसदन्तं कर्त्तव्यमिति समुदायार्थः । अनन्तरमाग्निकस्य कर्मणः प्रवेशं दर्शयति—अथैतामिति । ‘ अथ ’—शब्दः प्रथमोपसदानन्तर्ये । ‘ आनडुहे ’ लोहिते ‘ चर्मणि ’ ‘ एताम् ’ प्रथम—‘ चितिम् ’ प्रमथचित्यर्थमिष्टकासमूहम् ‘ समवशमयन्ति ’ सम्यग्घृतावोक्षणेन तप्तानामिष्टकानां शमनं कुर्युरित्यर्थः । तस्य शमनस्य चर्माधिकरणतां स्तौति—तद्यच्चर्म्मणि चर्म वै रूपमिति । चर्मसम्बन्धिनां लोम्नां नानावर्णोपेतत्वादसृगादीनामान्तरधातूनां त्वचाऽऽच्छादने सति रूपकरणत्वेन चर्मणो रूपात्मकता । अतश्च तस्मिन्निष्टकानिधानं सर्वेषाम् ‘ रूपाणाम् ’ प्राप्त्यै सम्पद्यत इत्यर्थः । तच्च लोमप्रदेशे कर्त्तव्यमिति विधाय स्तौति—लोमत इति । लौहित्यगुणं चर्मणो विधाय स्तौति—रोहित इति । एतत् सर्वं कात्यायनेनापि सूत्रितम्—“ आतिथ्यशेषाद्योपसदः कृत्वा रोहिते चर्मण्यानडुहेऽन्तःपात्यस्य पुरस्तादिष्टकाः करोति प्रथमचितेः ”—( का. श्रौ. सू. १७।६१ ) इति । लोहितवर्णेषु लोमसु सूक्ष्ममध्याग्रभेदेन शुक्लादीनि ‘सर्वाणि’ ‘ रूपाणि ’ दृश्यन्त इत्यर्थः । चर्मणोऽनडुद्विकारतां विधाय स्तौति—आनडुह इति । अनो वहतीत्यनड्वान्, तथाविधस्य बलीवर्दस्याग्निरूपत्वं प्रागाम्नातम् । “ अग्निदग्धमिवैषां वहं भवति ” ( श.प.१।१।२।९ ) इति । अग्निरूपाणामिति । चित्यस्याग्नेः सम्बन्धीनि यानि रूपाणि, तेषां मध्ये ‘ अनड्वान् ’ अप्येकं रूपम्, अतस्तत्सम्बन्धिनश्चर्मण आस्तरणेन तेषाम् ‘अग्निरूपाणाम्’ उक्तवक्ष्यमाणानां कार्त्स्न्येन प्राप्त्यर्थः सम्पद्यत इत्यर्थः । स्तरणे प्रकारविशेषं विधत्ते—प्राचीनग्रीव इति । प्राचीना प्रागायता ग्रीवा यस्य तत्तथोक्तम् । एतच्च विधेयविशेषणम् । चर्मणः प्राचीनग्रीवता यथा भवति तथा स्तृणीयादित्यर्थः । तद्धि देवत्रेति । ‘तद्धि’ प्राग्दिक्सम्बन्धित्वं ‘ देवत्रा ’ देवेषु योग्यम्, तस्या दिशो देवैरात्मीयभागत्वेन स्वीकृतत्वात् । अत एव हि तैत्तिरीयके श्रूयते—“ देवमनुष्या दिशो व्यभजन्त प्राचीं देवाः ” ( तै. सं. ६।१।१।१। ) इति । ‘ देवत्रा ’—इति—“ देवमनुष्यपुरुष ”—इत्यादिना ( पा. सू. ५ । ४ । ५६ ) सप्तम्यर्थे ‘ त्रा ’—प्रत्ययः ॥ १ ॥

तद्ग्रेण गार्हपत्यम् । ( म ) अन्तर्व्वेद्युत्तरलोम प्राचीनग्रीवमुपस्तृणाति तदेतां चितिᳫँ समवशमयन्त्यथ प्रोक्षति तद्यत्प्रोक्षति शुद्धमेवैतन्मेध्यं करोत्याज्येन तद्धि शुद्धं मेध्यमथोऽअनभ्यारोहाय न हि किंचनान्यद्ध-विराज्येन प्रोक्षन्ति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीᳫँ सर्व्वं वाऽअनिरुक्तᳫँ सर्व्वेणैवैतच्छुद्धं मेध्यं करोत्यथोऽअनभ्यारोहाय न हि किं चनान्यद्ध-विस्तूष्णीं प्रोक्षन्ति ॥ २ ॥

यद्वेव प्रोक्षति । हविर्व्वाऽएतत्तदेतदभिघारयति यद्वै हविरभ्यक्तं यद-भिघारितं तज्जुष्टं तन्मेध्यमाज्येनाज्येन हि हविरभिघारयन्ति तूष्णीं

तदग्रेण गार्हपत्यमन्तर्वेद्युत्तरलोम प्राचीनग्रीवमुपस्तृणाति । तदेतां चितिं समवशमयन्ति । अथ प्रोक्षति । तद्यत्प्रोक्षति–शुद्धमेवैतन्मेध्यं करोति । आज्येन । तद्धि शुद्धं मेध्यम् । अथोऽअनभ्या-रोहाय । न हि किञ्चनान्यद्धविराज्येन प्रोक्षन्ति । तूष्णीम् । अनिरुक्तं वै तद्–यत्तूष्णीम् । सर्वं वाऽअनिरुक्तम् । सर्वेणैवैतच्छुद्धं मेध्यं करोति । अथोऽअनभ्यारोहाय । न हि किञ्चनान्यद्धविस्तूष्णीं प्रोक्षन्ति ॥ २ ॥

यद्वेव प्रोक्षति । हविर्वाऽएतत् । तदेतदभिघारयति । यद्वै हविरभ्यक्तं, यदभिघारितं–तज्जुष्टं,

उदीरितलक्षणस्य चर्मणो देशविशेषे स्तरणं विधत्ते–तदग्रेणेति । 'गार्हपत्यम्' 'अग्रेण' गार्हपत्य-चितेरदूरेण पूर्वभागे महावेदिमध्ये 'तत्' चर्म उदीरितविशेषणविशिष्टम् 'उपस्तृणाति' । 'तत्' तत्र 'एताम्' प्रथमचितिं प्रथनचितेः पर्याप्तमिष्टकासंघं 'समवशमयन्ति' संशान्तौष्ण्यं कुर्युः । आज्येन प्रोक्षणं विधत्ते–अथेति । औष्ण्यसंशमनानन्तरं ताम् 'चितिम्' आज्येन 'प्रोक्षति' प्रकर्षेण सिञ्चति । तदेतदनूद्य स्तौति–तद्यदिति । तस्मिन् प्रोक्षणे द्रव्यं विधत्ते–आज्येनेति । प्रोक्षतीत्यनु-षङ्गः । तद्धि शुद्धमिति । 'तत्' खल्वाज्यम् 'शुद्धम्' "तेजो वै घृतम्"–इत्यादिश्रुत्या तस्य तेजो-रूपत्वप्रतिपादनात्, पुरोडाशादिहविःशुद्धिहेतुत्वाच्च । अत एव 'मेध्यम्' मेधार्हम् । 'अथो' अपि च 'अनभ्यारोहाय' अभ्यारोहणमतिक्रमणम् 'आज्येन' प्रोक्षणमनतिक्रमणाय श्रेष्ठत्वाय सम्पद्यते, एतदेव दर्श-यति–न हीति । इष्टकाभ्योऽन्यच्चरुपुरोडादिकं किमपि हविर्न ह्याज्यकरणकेन प्रोक्षणेन संस्क्रियते, उदकेनैव हि तस्य प्रोक्षणम् । अब्विलक्षणेन तेजोरूपेणाज्येनेष्टकानां प्रोक्षणं चितेः पादसंस्पर्शविरहरूपानभ्यारोहणाय भवतीत्यर्थः । प्रोक्षणस्यामन्त्रकत्वं विधाय स्तौति–तूष्णीमिति । अनिरुक्तं वा–इत्यादि गतम् । न हि अन्यत्र तूष्णीं प्रोक्षणमस्ति, अतस्तद्वैलक्षण्येनेष्टकाप्रोक्षणस्य सर्वात्मकानिरुक्तत्वसम्पादनं तस्य चित्याग्नेरनति-क्रमणीयत्वाय कल्पत इत्यर्थः ॥ २ ॥

अथैतत् प्रोक्षणमनूद्य हविष्ट्वसम्पादनद्वारा स्तौति–यद्वेवेति । हविर्वा इत्यादि । 'यत्' तदिष्टकारूपम्

१–आज्ये न्यज्य कुशाग्राणि तूष्णीं प्रोक्षति । का. श्रौ. सू. १७ । ६४ ।

**तूष्णीꣳ हि हविरभिघारयन्ति दर्भैस्ते हि शुद्धा मेध्याऽअग्रैरग्रꣳ हि देवानाम् ॥ ३ ॥**

**तदाहुः । ( यं ) यत्प्रथमामेव चितिं प्रोक्षति कथमस्यैष सर्व्वोऽग्निः प्रोक्षितो भवति कथं चर्मणि प्रणीतः कथमश्वप्रणीतऽइति यदेवात्र सर्व्वासां चितीनामिष्टकाः प्रोक्षत्येवमु हास्यैष सर्व्वोऽग्निः प्रोक्षितो भवत्येवं चर्मणि प्रणीतऽएवमश्वप्रणीतऽउद्यच्छन्त्येतां चितिम् ॥ ४ ॥**

---

तन्मेध्यम् । आज्येन । आज्येन हि हविरभिघारयन्ति । तूष्णीम् । तूष्णीं हि हविरभिघारयन्ति । दर्भैः । ते हि शुद्धा मेध्याः । अग्रैः । अग्रं हि देवानाम् ॥ ३ ॥

तदाहुः—यत्—प्रथमामेव चितिं प्रोक्षति । कथमस्यैष सर्वोऽग्निः प्रोक्षितो भवति, कथं चर्मणि

---

'हविः' खलु हविरिव देवानां तृप्तिकरम्; अतः 'तदेतत्' इष्टकारूपं हविराज्यप्रोक्षणेन 'अभिघारयति' अभितो घृतधारया सिञ्चति । तस्य प्रयोजनमाह—यद्वा इति । 'यत्' खलु पुरोडाशादिकम् 'हविः' अभितः सर्वतः आज्येन अक्तं सिक्तं 'यत्' च 'अभिघारितम्' उपरि घृतधारया संस्कृतम् 'तज्जुष्टम्' देवैः सेवितुं योग्यम्, अत एव 'तन्मेध्यम्' यज्ञार्हम् । आज्यकरणकत्वमनूद्य स्तौति—आज्येनेति । हविषां हि पाकसमये सुशृतत्वे सति 'आज्येन' खल्वभिघारणं क्रियते । अतोऽत्रापि 'आज्येन' प्रोक्षणं युक्तमिति । अमन्त्रकत्वता-मनूद्य स्तौति—तूष्णीमिति । आज्यप्रोक्षणे करणविशेषं विधाय स्तौति—दर्भैरिति । 'दर्भैः' करणभूतै-राज्याभ्यक्तैस्तत्प्रोक्षणं कर्त्तव्यमित्यर्थः । ते हि शुद्धा इति । "अत इमे दर्भास्ता हैता अनापूयिता आपः"—इति ( श. प. १ । १ । ३ । ९ ) श्रुतेः तेषां शुद्धत्वम् । तत्राप्यग्रभागैः कर्त्तव्यमिति विधा-योपपादयति—अग्रैरिति । अग्रं हीति । दर्भेषु ह्यग्रभागो देवानां सम्बन्धी, अत एवान्यत्राम्नातम्—"यत्प-रुषि दिनं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत् समूलं तत् पितृणाम्" इति ॥ ३ ॥

प्रथमचितिप्रोक्षणसमये द्वितीयतृतीयादिचित्यर्थानामिष्टकानां प्रोक्षणं विधित्सुर्ब्रह्मवादिनां प्रश्नमवतारयति-तदाहुरिति । 'प्रथमामेव' इत्येवकारेण प्रोक्षणस्यान्ययोगव्यावृत्तिः सूच्यते । एवं प्रथमचितेरेव प्रोक्षणात् सप्तचित्यात्मक 'एषोऽग्निः' 'अस्य' यजमानस्य 'कथम्' 'प्रोक्षितो' 'भवति ?' न ह्येकदेशप्रोक्षणे कृत्स्नोऽग्निः प्रोक्षणसंस्कारसंस्कृतो भवतीत्यर्थः । तथा प्रागुक्ताऽनडुच्चर्मणि द्वितीयादिचितीनां प्रणयनं 'कथम्' ? अश्वसहितं प्रणयनं च 'कथम् ?' सिद्ध्यतीति त्रयः प्रश्नाः । अस्योत्तरमाह—यदेवात्रेति । 'अत्र' अस्मिन् समये 'सर्वासां चितीनाम्' सम्बन्धिनीः 'इष्टकाः' आज्येन दर्भाग्रैः 'प्रोक्षति' 'इति' 'यद्' अस्ति, 'एवमु' अनेन प्रकारेणैव खलु 'अस्य' यजमानस्य 'एषः' 'सर्वः' सप्तचितिकः 'अग्निः प्रोक्षितो भवति' । एवमेव चर्माधिकरणप्रणयनमश्वसहितं प्रणयनं चास्मादेव प्रोक्षणात् सिध्यतीत्यर्थः । अथ चर्मण्य-वस्थितानां प्रथमचित्यर्थानामिष्टकानामुद्यमनं विधत्ते—उद्यच्छन्तीति । चर्मणः सकाशादिष्टका उद्गृह्णन्ति यजमानपरिचारकाः ॥ ४ ॥

---

१-इतरासां च । स्वयमातृण्णामत्या च । का. श्रौ. सू. १७ । ६२-६३ ।

(मु) अथाहाग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति । (त्ये) एतद्वै देवाऽनुपप्रैष्यतऽएतं यज्ञं तꣳस्यमानाद्रक्षाꣳसि नाष्ट्रा अजिघाꣳसन्न यक्ष्यध्वे न यज्ञं तꣳस्यध्वऽइति तेभ्यऽएतानग्नीनेता ऽइष्टका वज्रान्क्षुरपवीन्कृत्वा प्राहरंस्तैरेनानस्तृण्वत तान्स्तृत्वाऽभयेऽनाष्ट्रऽएतं यज्ञमतन्वत ॥ ९ ॥ (काण्डस्यार्धम्) ॥

तद्वाऽएतत्क्रियते । यद्देवाऽ अकुर्व्वन्निदं नु तानि रक्षाꣳसि देवैरेवापहतानि यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्यथो यदेव रक्षो यः

---

प्रणीतः, कथमश्वप्रणीत इति । यदेवात्र सर्वासां चितीनामिष्टकाः प्रोक्षति—एवमु हास्यैष सर्वोऽग्निः प्रोक्षितो भवति । एवं चर्मणि प्रणीतः । एवमश्वप्रणीतः । उद्यच्छन्त्येतां चितिम् ॥ ४ ॥

अथाह—अग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति । एतद्वै देवानुपप्रैष्यत एतं यज्ञं तंस्यमानात्रक्षांसि नाष्ट्रा अजिघांसन्—न यक्ष्यध्वे, न यज्ञं तंस्यध्वऽइति । तेभ्य एतानग्नीनेता इष्टका वज्रान् क्षुरपवीन् कृत्वा प्राहरन् । तैरेनानस्तृण्वत । तान्स्तृत्वाऽभयेऽनाष्ट्रऽएतं यज्ञमतन्वत ॥ ९ ॥

तद्वाऽएतत्क्रियते—यद्देवा अकुर्वन् । इदं नु तानि रक्षांसि देवैरेवापहतानि । यत्त्वेतत्करोति—

---

अथाहवनीयदेशं प्रति नयनं विधित्सुस्तदर्थं होतारमुद्दिश्याध्वर्योः सम्प्रैषवचनं विधत्ते—अथाहेति । 'अग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति' सम्प्रैषमध्वर्युर्ब्रूयात् । बहुवचनान्तेनाग्निशब्देनाग्न्यवयवाश्रितयो विवक्षिताः । आहवनीयदेशं प्रति प्राचीनं ह्रियमाणेभ्य इष्टकारूपेभ्योऽन्यवयवेभ्यः हे होतरनुब्रूहि इति संप्रैषार्थः । तच्चानुवचनं होतुराश्वलायनेन दर्शितम् "प्रेषितः पुरीष्यासं चितयेऽन्वाह" इति प्रक्रम्य "पुरीष्यासो अग्नय इति त्रिरुपांशु सप्रणवाम्" इति । एतच्चाग्रे एकीयमतत्वेनोपन्यस्य पक्षान्तरमाम्नास्यते—"आग्नेयीरन्वाह" (श. प. ७ । ३ । २ । ९) इति । संप्रैषानन्तरं प्रथमचित्यर्थानामिष्टकानां पूर्वस्यां दिशि हरणं विधित्सुस्तदाख्यायिकया स्तौति—एतद्वै देवानिति । 'एतत्' एतस्मिन् समये 'रक्षांसि' रक्षोरूपाः 'नाष्ट्रा' नाशकारिण्यः प्रजाः 'देवान्' 'अजिघांसन्' हन्तुमैच्छन् । कथम्भूतान् 'प्रैष्यतः' प्राचीनमाहवनीयं देशं गन्तुमुद्युक्तान्, 'एतम्' अग्निचयनात्मकम् 'यज्ञम्' 'तंस्यमानान्' विस्तारयिष्यमाणान् । जिघांसूनामभिप्रायमाह—न यक्ष्यध्व इति । हे देवाः ! यूयम् 'न' 'यक्ष्यध्वे' यागं न करिष्यथ, तथा 'यज्ञम्' 'न' 'तंस्यध्वे' न विस्तारयिष्यथ 'इति' अनेनाभिप्रायेण । एवं दुष्टाभिप्रायेभ्यो रक्षोभ्यः 'एतान्' चितिरूपान् 'अग्नीन्' 'एताः' तदवयवभूता 'इष्टकाः' द्वितीयाबहुवचनमेतत् । 'क्षुरपवीन्' क्षुरवत्तीक्ष्णधारोपेतान् 'वज्रान् कृत्वा' 'प्राहरन्' पूर्वादिदिगवस्थितानि तानि रक्षांसि लक्षीकृत्य प्रहृतवन्तः । 'तैः' इष्टकारूपैर्वज्रैः 'एनान्' असुरान् 'अस्तृण्वत' अहिंसन् 'तान्स्तृत्वा' हिंसित्वा 'अभये' भयरहिते 'अनाष्ट्रे' नाशकरहिते 'एतं यज्ञम्' विस्तारितवन्तः ॥ ९ ॥

एवमाख्यायिकया इष्टकाहरणस्य रक्षोनिरसने हेतुतामुक्त्वा प्रकृते योजयति—तद्वा एतदिति । 'तत्'

---

१-अग्निभ्यः प्रह्रियमाणेभ्योऽनुवाचयति । का. श्रौ. सू. १७ । ६५ ।

पाप्मा तेभ्य एतानग्नीनेता इष्टका वज्रान्क्षुरपवीन्कृत्वा प्रहरति तैरेनान्त्स्तृणुते तान्त्स्तृत्वाऽभयेऽनाष्ट्रऽएतं यज्ञं तनुते ॥ ६ ॥

तद्यदग्निभ्य इति। बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्प्रह्रियमाणेभ्य इति प्र हि हरति ॥ ७ ॥

तद्धैकेऽन्वाहुः। पुरीष्यासोऽअग्नयः प्रावणेभिः सजोषसऽ इति प्रायणरूपं न तथा कुर्यादाग्नेयीरेव गायत्रीः कामवतीरनुब्रूयादा ते वत्सो मनो यमत्तुभ्यं ताऽ अङ्गिरस्तमाग्निः प्रियेषु धामस्विति ॥ ८ ॥

---

यद्देवा अकुर्वन्—तत्करवाणीति। अथो यदेव रक्षः, यः पाप्मा—तेभ्य एतानग्नीनेता इष्टका वज्रान् क्षुरपवीन्कृत्वा प्रहरति। तैरेनान्त्स्तृणुते। तान्त्स्तृत्वाऽभयेऽनाष्ट्रऽएतं यज्ञं तनुते॥ ६ ॥

तद् यदग्निभ्य इति। बहवो ह्येतेऽग्नयो यदेताश्चितयः। अथ यत्प्रहियमाणेभ्य इति। प्र हि हरति ॥ ७ ॥

तद्धैकेऽन्वाहुः—"पुरीष्यासोऽअग्नयः प्रावणेभिः सजोषसः"—इति प्रायणरूपम्। न तथा कुर्यात्। आग्नेयीरेव गायत्रीः कामवतीरनुब्रूयात्। "आ ते वत्सो मनो यमत्; तुभ्यं ता अङ्गिरस्तम; अग्निः प्रियेषु धामसु"—( वा० सं० १२। ११६–११७ ) इति ॥ ८ ॥

---

खलु 'एतत्' देवैः कृतमिष्टकानां प्रहरणमत्र 'क्रियते' यजमानैरनुष्ठीयते। किं पुनस्तद्देतदित्याह—यद्देवा इति। देवैरेव रक्षसां निरस्तत्वादिदानींतनयजमानकर्तृकमिष्टकानां प्रहरणं केवलं तदनुकरणार्थमित्याह—इदं न्वित्यादिना। 'इदं नु' इदानीं खलु यज्ञविरोधीनि 'तानि' 'रक्षांसि' 'देवैरेवापहतानि' बाधितानि, अतो 'यद्देवाः' पूर्वम् 'अकुर्वन्' 'तद्' इदानीमहमपि 'करवाणीति' तदनुकरणमेवेदानीन्तनेष्टकाप्रहरणस्य प्रयोजनमित्यर्थः। निरस्तसजातीनां रक्षसां पाप्मनां च विद्यमानत्वात् तन्निरसनहेतुत्वमपि सम्भवतीति पक्षान्तरमाह—अथो यद्देवेति। पक्षान्तरद्योतकोऽथशब्दः। 'यदेव रक्षो, यः पाप्मा' इति च जातावेकवचनम्; बहुत्वस्य श्रुतत्वात्। तेभ्य एतानित्यादि पूर्ववद्योज्यम्। अस्माचार्थवादादिष्टकाः पुरस्ताद्धरेदिति विधिरुन्नेतव्यः ॥ ६ ॥

संप्रैषं व्याचष्टे—तद्यदग्निभ्य इति। नन्वेक एव चित्योऽग्निः, कथमस्य बहुत्वमित्याशङ्क्याह—बहवो हीति। सप्तचित्यभिप्रायेण बहुवचनम्। तासामग्न्येकदेशत्वादग्निशब्दाभिधेयता। 'अथ' 'प्रह्रियमाणेभ्य इति' पदमनूद्य निर्वक्ति—प्र हीति। 'हि' यस्मात् अध्वर्युरिमा इष्टकाः 'प्रहरति' पुरस्तादाहवनीयदेशं प्रापयति। अतः प्राचीनं ह्रियन्त इति प्रह्रियमाणास्तेऽग्नय उच्यन्त इत्यर्थः ॥ ७ ॥

तत्र होत्राऽनुवक्तव्यामृचमेकीयमतेनोपन्यस्य व्याचष्टे—तद्धैक इति। 'तत्' तत्र खलु 'एके' केचन ऋक्छाखाध्यायिनः "पुरीष्यासोऽअग्नयः" ( ऋ. सं. अष्ट. ३ व. २२ अ. १ ) इत्येतामृचम् अन्वाहुः।

( त्या ) आग्नेयीरन्वाह । ( इ ) अग्निरूपाणामुपाप्त्यै कामवतीः कामानामुपाप्त्यै गायत्रीर्गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतꣳ सिञ्चति तिस्रस्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतꣳ सिञ्चति ताः सप्त सम्पद्यन्ते सह त्रिरनूक्ताभ्याꣳ सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवत्युपाꣳश्वन्वाह रेतो वाऽअत्र यज्ञऽउपाꣳशु वै रेतः सिच्यते पश्चादनुब्रुवन्नन्वेति च्छन्दोभिरेवैतद्यज्ञं पश्चादभिरक्षन्नेति ॥ ९ ॥

---

आग्नेयीरन्वाह—अग्निरूपाणामुपाप्त्यै । कामवतीः—कामानामुपाप्त्यै । गायत्रीः । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतद्रेतोभूतं सिञ्चति । तिस्रः । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतद्रेतोभूतं सिञ्चति । ताः सप्त सम्पद्यन्ते । सह त्रिरनूक्ताभ्याम् । सप्तचितिकोऽग्निः । सप्तऽर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तद्भवति । उपांश्वन्वाह । रेतो वाऽअत्र यज्ञः । उपांशु वै रेतः सिच्यते । पश्चादनुब्रुवन्नन्वेति । छन्दोभिरेवैतद्यज्ञं पश्चादभिरक्षन्नेति ॥ ९ ॥

---

तत्र पुरीषशब्दस्य पशुपर्यायत्वात् ' पुरीष्यास ' इत्यस्य पशव्यास इति व्याख्यानम् । पशुभ्यो हिता इत्यर्थः । प्रावणेभिरिति पदस्यार्थमाह—प्रायणरूपमिति । प्रायणस्य प्रगमनकर्मप्रवृत्तेः प्रावणेभिरिति प्रशब्दोपेतं पदं सूचकं रूपमित्यर्थः । एतदेकीयमतं प्रतिषिध्य स्वमतमाह—न तथा कुर्यादिति । ' आग्नेयीः ' अग्निदेवताकाः, ' कामवतीः ' कामशब्दोपेताः ' गायत्रीः ' गायत्रीछन्दस्का एव ऋचः ' ब्रूयात् ', काः पुनस्ता इति ता आह—आ ते वत्स इत्यादिना ॥ ८ ॥

आग्नेयीत्यादिधर्मानवयुत्यानूद्य स्तौति—आग्नेयीरन्वाहेति । देवतारूपेणाग्निना तत्सम्बन्धिनां सर्वेषाम् ' रूपाणाम् ' उपाप्तिर्भवतीत्यर्थः । तथा तासामृचां कामशब्दोपेतत्वात् सर्वकामोपाप्तिरपि भवति । रेतोभूतं सिञ्चतीति । अस्यामवस्थायाम् ' रेतः '—संस्तुतानां सिकतानां निवपनाद्रेतोरूपापन्नः खल्वयं चित्योऽग्निस्तादृशं ' सिञ्चति ' अङ्गप्रत्यङ्गयुक्तं संस्करोतीत्यर्थः । ऋचां त्रित्वमनूद्य स्तौति—तिस्र इति । निगदसिद्धमेतत् । ताः सप्तेत्यादि । ' ताः ' तिस्र ऋचः ' सप्त '—संख्याकाः ' सम्पद्यन्ते ' । संपत्तिप्रकारमाह—सहेति । ' त्रिः ' त्रिवारम् ' अनूक्ताभ्याम् ' आद्योत्तमाभ्यां सह सप्तसङ्ख्या सम्पद्यत इत्यर्थः । सप्तर्त्तवः संवत्सर इति । वसन्ताद्याः षड् संसर्प्पांहस्पतिलक्षणः सप्तम ऋतुः । अनुवचने उपांशुस्वरं विधाय स्तौति—उपांश्वन्वाहेति । यथा पार्श्वस्था जना न शृण्वन्ति तथा—ऽनुब्रूयादित्यर्थः । 'अत्र' अस्मिन् समये रेतोरूपः खलु ' यज्ञः ' ' रेतः '—सेचनस्योपांशुत्वं परैरज्ञायमानतया कर्त्तव्यत्वं लोके प्रसिद्धम्, तस्मादनुवचनमुपांशु कर्त्तव्यमित्यर्थः । अनुवचनसमये होतुरनुगमनं विधत्ते—अनुब्रुवन्नन्वेतीति । अनुवचनं कुर्वन् होता स्वयमपीष्टकाः ' अन्वेति ' अनुगच्छति । सर्वेषु छन्दःसु गायत्र्या अन्तर्भावात्तदन्तर्भूतैः ' छन्दोभिरेवैतद् ' एतेनानुगमनेन ' यज्ञम् ' पृष्ठतः ' अभिरक्षन् ' अभितः सर्वतो रक्षःप्रभृतिभ्यो गोपायन् ' एति ' ॥ ९ ॥

( त्य ) अथाश्वꣳ शुक्लं पुरस्तान्नयन्ति । (न्त्ये) एतद्वै देवाऽ अबिभयु-र्यद्वै नऽ इह रक्षाꣳसि नाष्ट्रा नु हन्युरिति तऽएतं वज्रमपश्यन्नमुमेवादि-त्यमसौ वाऽआदित्य ऽएषोऽश्वस्तऽएतेन वज्रेण पुरस्ताद्रक्षाꣳसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्रे स्वस्ति समाश्नुवत तथैवैतद्यजमानऽ एतेन वज्रेण पुरस्ताद्रक्षाꣳसि नाष्ट्राऽ अपहत्याभयेऽनाष्ट्रे स्वस्ति समश्नुतऽआगच्छ-न्त्यग्निं दक्षिणतः पुच्छस्य चितिमुपनिदधत्युत्तरतोऽश्वमाक्रमयन्ति ॥१०॥

तमुत्तरार्धेनाग्नेः । ( रु ) अन्तरेण परिश्रितः प्राश्वं नयन्ति तत्प्राच्यै दिशः पाप्मानमपहन्ति तं दक्षिणा तद्दक्षिणायै दिशः पाप्मानमपहन्ति तं प्रत्यश्वं तत्प्रतीच्यै दिशः पाप्मानमपहन्ति तमुदश्वं तदुदीच्यै दिशः पाप्मानमपहन्ति सर्वाभ्य ऽएवैतद्दिग्भ्यो रक्षाꣳसि नाष्ट्राऽ अपहत्याथैन-मुदश्वं प्राश्वं प्रसृजति तस्योक्तो बन्धुः ॥ ११ ॥ (शतम् ४१०० ॥

---

अथाश्वं शुक्लं पुरस्तान्नयन्ति । एतद्वै देवा अबिभयुः—यद्वै न इह रक्षांसि नाष्ट्रा न हन्युरिति । तऽएतं वज्रमपश्यन्—असुमेवादित्यम् । असौ वाऽआदित्य एषोऽश्वः । तऽएतेन वज्रेण पुरस्ताद्र-क्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रे स्वस्ति समाश्नुवत । तथैवैतद्यजमान एतेन वज्रेण पुरस्ताद्रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रे स्वस्ति समश्नुते । आगच्छन्त्यग्निम् । दक्षिणतः पुच्छस्य चितिमुपनिद-धति । उत्तरतोऽश्वमाक्रमयन्ति ॥ १० ॥

तमुत्तरार्धेनाग्नेः—अन्तरेण परिश्रितः प्राश्वं नयन्ति । तत्—प्राच्यै दिशः पाप्मानमपहन्ति । तं दक्षिणा । तद्दक्षिणायै दिशः पाप्मानमपहन्ति । तं प्रत्यश्वम् । तत् प्रतीच्यै दिशः पाप्मानमप-हन्ति । तमुदश्वम् । तदुदीच्यै दिशः पाप्मानमपहन्ति । सर्वाभ्य एवैतद्दिग्भ्यो रक्षांसि नाष्ट्रा अप-हत्य—अथैनमुदश्वं प्राश्वं प्रसृजति । तस्योक्तो बन्धुः ॥ ११ ॥

---

इष्टकाहरणसमये श्वेतस्याश्वस्य पुरतो नयनं विधत्ते—अथाश्वमिति[1] । अश्वस्यादित्यरूपवज्रात्मकत्वं कथयँ-स्तस्य पुरस्तान्नयनं यज्ञविघातकरक्षोनिबर्हणहेतुत्वेन स्तौति—एतद्वा इत्यादिना । यद्वै न इति । 'नः' अस्मा-नित्यर्थः । असौ वा आदित्य एषोऽश्व इति । विराड्रूपस्य प्रजापतेश्चन्द्रसूर्यौ हि चक्षुषी, अश्वश्च तदीयाच्च-क्षुष उत्पन्नः । तथा च श्रूयते—"प्रजापतेरक्ष्यश्वयत्तत्परापतत्ततोऽश्वः समभवत्"—( श.प.१३।३।१।१ ) इति । अत एव तैत्तिरीयेऽपि श्रूयते—"अमुमादित्यमश्वं श्वेतं भूतं दक्षिणामनयन्"—इति ( तै.ब्रा.१।६।१८ ) । स्वस्ति समाश्नुवतेति । 'स्वस्ति' अविनाशरूपं क्षेमं सम्यगाप्नुवन्नित्यर्थः । अन्यद् व्याख्यातप्रायम् । अग्निक्षेत्र-समीपगमनं विधत्ते—आगच्छन्त्यग्निमिति[2] । अश्वप्रमुखास्ते ऋत्विग्यजमाना इष्टकाभिः सहाग्निसमीपमागच्छेयुः,

---

१—श्वेतेऽश्वे पुरस्तात्तिष्ठति । का. श्रौ. सू. १७ । ६४ । २—त्रिरुक्तायामश्वपूर्वा चितिः हृत्वा पुच्छाद्दक्षिणां निदधाति । का. श्रौ. सू. १७ । ६६ ।

(स्तुं) तं प्रत्युञ्चं युन्तम् । (मे) एतां चितिमुवघ्रापयत्यसौ वाऽआदित्यु ऽएषोऽश्वऽइमा ऽउ सुर्व्वाः प्रजा या ऽइमा ऽइष्टकास्तद्यदवघ्रापयत्यसावेव तदादित्यु ऽइमाः प्रजा ऽअभिजिघ्रति तस्माद्ु हैतत्सर्व्वोऽस्मीति मन्यते प्रजापतेर्व्वीर्येण तद्यत्प्रत्युञ्चं युन्तमवघ्रापयति प्रत्यङ्ह्येवैष यन्निमाः सुर्व्वाः प्रजा ऽअभिजिघ्रति ॥ १२ ॥

---

तं प्रत्यञ्चं यन्तमेतां चितिमवघ्रापयति[1] । असौ वाऽआदित्य एषोऽश्वः । इमा उ सर्वाः प्रजाः—या इमा इष्टकाः । तद्यदवघ्रापयति—असावेव तदादित्य इमाः प्रजा अभिजिघ्रति । तस्माद्ु हैतत्सर्वोऽस्मीति मन्यते—प्रजापतेर्वीर्येण । तद्यत्प्रत्यञ्चं यन्तमवघ्रापयति—प्रत्यङ् ह्येवैष यन्निमाः सर्वाः प्रजा अभिजिघ्रति ॥ १२ ॥

---

आगत्य चाग्नि—'पुच्छस्य' दक्षिणभागे चर्मणा हृताम् 'चितिम्' 'उपनिदधति' चित्यर्थमानीता इष्टकाः स्थापयन्तीत्यर्थः । तस्याग्निपुच्छस्योत्तरभागेन तम् ' अश्वम् ' ' आक्रमयन्ति ' आक्रमयेयुः । आक्रमणानन्तरं पुनस्तमश्वमग्नेरुत्तरार्धेन अग्निक्षेत्रस्य उत्तरभागे परिश्रिदाख्याः शर्कराः अन्तरेण परिश्रितामग्नेश्च मध्यप्रदेशे ' प्राञ्चम् ' प्राङ्मुखम् ' नयन्ति ' ' तत् ' तेन ' प्राच्यै ' " षष्ठ्यर्थे चतुर्थी "—( पा. सू. २ । ३ । ६२ । वा. १ ) प्राचीदिक्सम्बन्धिनं ' पाप्मानम् ' आदित्यात्मकाश्वलक्षणेन वज्रेण ' अपहन्ति ' हिनस्ति । पुनः ' तम् ' अश्वं पूर्वस्यां दिशि, अग्नेः परिश्रितां च मध्ये ' दक्षिणा ' दक्षिणतो निहितमुखमित्यर्थः । " दक्षिणादाच् "—( पा. सू. ५ । ३ । ३६ । ) गतमन्यत् । " तं प्रत्यञ्चम् " इत्यादावेवं योज्यम् । एवं चतसृषु दिक्ष्वाक्रमणेन ' सर्वाभ्य एव ' दिग्भ्यो ' रक्षांसि ' विनाश्यानन्तरम् ' एनम् ' अश्वम् 'उदञ्चं' 'प्राञ्चं' प्रागुदङ्मुखमित्यर्थः । ' प्रसृजति ' विमुञ्चति । ' तस्य ' प्रागुदक्त्वस्य स्तावको वाक्यशेषः प्रागाम्नात इत्यतिदिशति—तस्योक्त इति । एवं हि प्रागाम्नातम्—" एषा ह्युभयेषां देवमनुष्याणां दिग्यदुदीची प्राची "—इत्यादि ( श. प. ब्रा. ६ । ४ । ४ । २२ ) ॥ १० ॥ ११ ॥

तस्याश्वस्य प्रत्यङ्मुखनयनसमये चितेरवघ्रापणं विधत्ते—तं प्रत्यञ्चमिति । पुच्छस्य दक्षिणतो निहिताम् ' एताम् ' ' चितिम् ' ' प्रत्यञ्चम् ' प्रत्यङ्मुखम् ' यन्तम् ' गच्छन्तमश्वम् ' अवघ्रापयति ' यथा सोऽश्वश्चितिम् अभिजिघ्रति तथा तं प्रेरयेदित्यर्थः । " घ्रा गन्धोपादाने "—( धा. पा. भ्वा. प. ९५१ ) इत्यस्माण्णिचि " अर्तिह्री " ( पा. सू. ७ । ३ । ३६ ) इत्यादिना पुक् ॥

तदेतदिष्टकानामादित्येऽवघ्रापणं प्रजासु प्राणप्रतिष्ठापनहेतुत्वेन स्तौति—असौ वा आदित्य इत्यादिना । अश्वस्यादित्यात्मकत्वमुक्तम् ( श. प. ७ । ३ । २ । १० ) । ' इमाः ' परिदृश्यमाना देवतिर्यङ्मनुष्यादिरूपाः ' सर्वाः ' ' प्रजाः ' ईदृक्प्रजारूपा ' इष्टकाः ' बहुत्वसाम्यात् । असावेवेत्यादि । ' तत् ' तेनाश्वकर्तृकेष्टकावघ्राणेन ' असौ ' द्युलोकस्थः ' आदित्यः ' एव ' इमाः ' प्रजाः ' प्राणात्मकैः स्वरश्मिभिः ' अभिजिघ्रति ' अवघ्राणं करोति, ' तस्माद् ' एव कारणाद् ' एतद् ' इदानीम् ' सर्वः ' जनः अस्मिल्लब्धा-

---

१—प्रत्यंचमागतं चितिमवघ्राप्य । का. श्रौ. सू. १७ । ७० ।

यद्वेवावघ्रापयति । (त्य) असौ वाऽआदित्यऽ एषोऽश्वऽ इमऽउ लोका ऽएताः स्वयमातृण्णास्तद्यदवघ्रापयत्यसावेव तदादित्यऽ इमाँल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रमुपरि तस्य बन्धुः ॥ १३ ॥

(ख) यद्वेवावघ्रापयति । ( त्य ) अग्निर्देवेभ्यऽउदक्रामत्सोऽपः प्राविशत्ते देवाः प्रजापतिमब्रुवंस्त्वमिममन्विच्छ स तुभ्यᳪं स्वाय पित्रेऽआविर्भविष्यतीति तमश्वः शुक्लो भूत्वाऽन्वैच्छत्तमद्भ्यऽ उपोदासृप्तं पुष्करपर्णे विवेद तमभ्यवेक्षांचक्रे स हैनमुदुवोष तस्मादश्वः शुक्ल ऽउदुष्टमुख ऽइवाथो ह दुरक्षो भावुकस्तमु वाऽऋत्वेव हिᳪंसित्वेव मेने तᳪं होवाच वरं ते ददामीति ॥ १४ ॥

---

यद्वेवावघ्रापयति । असौ वा आदित्य एषोऽश्वः। इम उ लोका एताः स्वयमातृण्णाः । तद्यदवघ्रापयति—असावेव तदादित्य इमाँल्लोकान्त्सूत्रे समावयते । तद्यत्तत्सूत्रम्—उपरि तस्य बन्धुः ॥१३॥

यद्वेवावघ्रापयति । अग्निर्देवेभ्य उदक्रामत् । सोऽपः प्राविशत् । ते देवाः प्रजापतिमब्रुवन्—त्वमिममन्विच्छ, स तुभ्यं स्वाय पित्रेऽआविर्भविष्यतीति । तमश्वः शुक्लो भूत्वाऽन्वैच्छत् । तमद्भ्य उपोदासृप्तं पुष्करपर्णे विवेद । तमभ्यवेक्षाञ्चक्रे—स हैनमुदुवोष । तस्मादश्वः शुक्ल उदुष्टमुख इव । अथो ह दुरक्षो भावुकः । तमु वाऽऋत्वेव हिंसित्वेव मेने । तमु होवाच—वरं ते ददामीति ॥ १४ ॥

---

त्मको भवामि ' इति मन्यते ' स्वात्मसत्तामवगच्छति । केन रूपेण ? ' प्रजापतेः ' विराडात्मनः ' वीर्येण ' । प्रत्यङ् ह्येवैष इति । ' प्रत्यङ् ' मुखः ' एवैषः ' सूर्यो—' यन् ' गच्छन् ' इमाः सर्वाः प्रजाः ' स्वरश्मिभिः ' अभिजिघ्रति ' । ' हि ' यस्मादेवं प्रत्यङ्मुखेन गच्छताऽश्वेन चितेरवघ्रापणं युक्तमित्यर्थः ॥ १२ ॥

अथैतदवघ्रापणं लोकत्रयसमावपने हेतुत्वेन स्तौति—यद्वेत्यादिना । याः ' एताः ' उपधास्यमानास्तिस्रः स्वयमातृण्णाख्याः शर्कराः क्षुद्रपाषाणाः पृथिव्यादिलोकत्रयात्मिकास्ताः ' तत् ' तथा सति अश्वेन ' अवघ्रापयति ' इति यदस्ति ' तत् ' तेन ' असौ ' ' आदित्यः ' एव ' इमान् ' पृथिव्यादि—' लोकान् ' स्वरश्म्यात्मके ' सूत्रे ' मणिवत् ' समावयते ' सम्यक्प्रोतान् करोति । " वेञ् तन्तुसन्ताने "—( धा. पा. भ्वा. उ. १०३१ ) इति धातुः । यदेतत् सूत्रं तस्य प्रतिपादको वाक्यशेष उपरिष्टादाम्नास्यत इत्यर्थः ॥ १३ ॥

अथैतदेवाश्वकर्तृकमवघ्राणमनूद्याश्वलक्षणेनैव प्रजापतिना रूपेण निलीयमानस्याग्नेश्चेतव्यस्य लाभो नान्येनेत्याख्यायिकया स्तौति—यद्वेत्यादिना । स्वाय पित्र इति । जात्याख्यायां वर्त्तमानत्वादस्य स्वशब्दस्य सर्वनामसञ्ज्ञा पर्युदस्ता, " स्वमज्ञातिधनाख्यायाम् "—इति ( पा. सू. १ । १ । ३५ ) । अतः सर्वनामकार्यं न क्रियते । तमश्वः शुक्ल इत्यादि । इत्थं देवैरभ्यर्थितः प्रजापतिः शुक्लवर्णः ' अश्वो भूत्वा ' स्वपुत्रमप्सु निलीनं ' तम् ' अग्निम् ' अन्वैच्छत् ' अन्विष्टवान् । अन्विष्टम् ' तम् ' अग्निम् ' अद्भ्यः ' सकाशात्

स होवाच । यस्त्वाऽनेन रूपेणान्विच्छाद्विन्दादेव त्वा स ऽइति स यो हैनमेतेन रूपेणान्विच्छति विन्दति हैनं वित्त्वा हैवैनं चिनुते ॥ १५ ॥

स शुक्लः स्यात् । ( तु ) तद्ध्येतस्य रूपं य ऽएष तपति यदि शुक्लं न विन्देदप्यशुक्लः स्यादश्वस्त्वेव स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादाग्नेयो वाऽअनड्वानग्निरु सर्व्वेषां पाप्मनामपहन्ता ॥ १६ ॥

---

स होवाच–यस्त्वाऽनेन रूपेणान्विच्छाद्–विन्दादेव त्वा स इति । स यो हैनमेतेन रूपेणान्विच्छति–विन्दति हैनम् । वित्त्वा हैवैनं चिनुते ॥ १५ ॥

स शुक्लः स्यात् । तद्ध्येतस्य रूपम्–य एष तपति । यदि शुक्लं न विन्देद्–अप्यशुक्लः स्यात् । अश्वस्त्वेव स्यात् । यद्यश्वं न विन्देद्–अप्यनड्वानेव स्यात् । आग्नेयो वाऽअनड्वान् । अग्निरु सर्वेषां पाप्मनामपहन्ता ॥ १६ ॥

---

‘ उपोदासृप्तम् ’ उपनिष्क्रान्तं पद्मिनीपत्रे स्थितम् ‘ विवेद ’ लेभे, ‘ तम् ’ अभिगम्य ‘ अवेक्षाञ्चक्रे ’ ईक्षितवान्, स खल्वग्निः ‘ एनम् ’ अश्वरूपिणं प्रजापतिम् ‘ उद्दुवोष ’ ददाह । “ उष दाहे ”–( धा. पा. भ्वा. प. ६९७ ) इत्यस्माल्लिट् ; एवं यस्मादुद्दुवोष ‘ तस्मात् ’ कारणाच्छुक्लवर्णः ‘ अश्वः ’ ‘ उदुष्टमुखः ’ ‘ इव ’ उत्क्षिप्तमुख इव लोके दृश्यते । ‘ अथो ’ खलु तस्मादेवाग्निदाहात् सोऽश्वो ‘ दुरक्षो भावुकः ’ दुष्टे अक्षिणी यस्यासौ दुरक्षः, “ बहुव्रीहौ सक्थ्यक्ष्णोः ” ( पा. सू. ५ । ४ । ११३ । ) इत्यस्मात् षच् समासान्तः । दुष्टाक्षिभ्यां युक्तो भवितुं शीलवान् भवतीत्यर्थः । ‘ तम् ’ अश्वरूपिणमेव प्रजापतिम् ‘ ऋत्वेव ’ अर्तिं गमयित्वेव ‘ हिंसित्वेव ’ हिंसनं कृत्वेव, ‘ इव ’–शब्दो वाक्यालङ्कारे । आर्तिहिंसयोरपारमार्थ्यद्योतको वा । न ह्यश्वसम्बन्धिहिंसादिना परमार्थतः प्रजापतेर्हिंसा भवतीत्यभिप्रायः । एवमश्वं दाहेन हिंसित्वा पश्चान्मदीयः प्रजापतिरेवायमश्वरूपेण स्थित इति ‘ मेने ’ ज्ञातवान् । अथ च भीतः सन् ‘ तम् ’ अश्वरूपिणं प्रजापतिम् ‘ उवाच ’ हे प्रजापते ! तुभ्यं ‘ वरम् ’ अभिलषितमर्थम् ‘ ददामि ’ प्रयच्छानि ‘ इति ’ ॥ १४ ॥

‘ सः ’ खलु ‘ उवाच ’ प्रजापतिः, ‘ अनेन ’ अश्वेन मदीयरूपेण ‘ यो ’–यजमानस्त्वाम् ‘ अन्विच्छात् ’ अन्विच्छेत् । लेट् आडागमः । स यजमानस्त्वाम् ‘ विन्दादेव ’ लभेतैव । एतं वरमहं वृणे इत्यर्थः । स यो हैनमित्यादिना आख्यायिकासिद्धस्यार्थस्य प्रकृते योजनम् । ‘ एनम् ’ अग्निम् ‘ एतेन ’ अश्वरूपेण ‘ वित्त्वा ’ लब्ध्वेत्यर्थः । स्पष्टमन्यत् ॥ १५ ॥

तस्याश्वस्य वर्णनियमं विधाय स्तौति–स शुक्लः स्यादिति । ‘ तत् ’ खलु शौक्ल्यम् ‘ एतस्य ’ सूर्यस्य ‘ रूपम् ’ ‘ य एषः ’ परिदृश्यमानः सन्नन्तरिक्षे रश्मिभिः ‘ तपति; ’ अतस्तत्सारूप्याय शुक्लवर्ण एवाश्वो नेतव्य इत्यर्थः । तदसम्भवे वर्णान्तरविशिष्टोऽपि स्यादित्याह–यदि शुक्लमिति । शुक्लाभावे लोहितश्यामादिवर्णविशिष्टो भवेत्, स च तादृशः । ‘ अश्वस्त्वेव ’ कर्त्तव्यः । अश्वासम्भवे पक्षान्तरमप्याह–यद्यश्वमिति[1] ।

---

१–श्वेताभावेऽश्वेतेऽश्वाभावेऽनडुहि । का. श्रौ. सू. १७ । ६४ ।

( ब्राऽथा ) अथातोऽधिरोहणस्यैव । तꣳ हैके पुरस्तात्प्रत्यञ्चमधिरोहन्ति पश्चाद्वा प्राञ्चं न तथा कुर्यात्पशुरेष यदग्निर्यो वै पशुं पुरस्तात्प्रत्यञ्चमधिरोहति विषाणाभ्यां तꣳ हन्त्यथ यः पश्चात्प्राञ्चं पद्भ्यां तमात्मनैवैनमारोहेद्यं वाऽआत्मना पशुमारोहन्ति स पारयति स न हिनस्त्युत्तरतो यꣳ हि कं च पशुमारोहन्त्युत्तरत ऽएवैनमारोहन्त्यारुह्याग्निमौत्तरवेदिकं कर्म कृत्वाऽऽत्मन्नग्निं गृह्णीतऽआत्मन्नग्निं गृहीत्वा सत्यꣳ साम गायति पुष्करपर्णमुपदधाति तस्यातः ॥ १७ ॥

---

अथातोऽधिरोहणस्यैव । तं हैके पुरस्तात्प्रत्यञ्चमधिरोहन्ति । पश्चाद्वा प्राञ्चम् । न तथा कुर्यात् । पशुरेषः—यदग्निः । यो वै पशुं पुरस्तात्प्रत्यञ्चमधिरोहति—विषाणाभ्यां तं हन्ति । अथ यः पश्चात्प्राञ्चं—पद्भ्यां तम् । आत्मनैवैनमारोहेत् । यं वाऽआत्मना पशुमारोहन्ति—स पारयति । स न हिनस्ति । उत्तरतः । यं हि कं च पशुमारोहन्ति—उत्तरत एवैनमारोहन्ति । आरुह्याग्निमौत्तरवेदिकं कर्म कृत्वा, आत्मन्नग्निं गृह्णीते । आत्मन्नग्निं गृहीत्वा सत्यं साम गायति । पुष्करपर्णमुपदधाति । तस्यातः ॥ १७ ॥

---

नन्वनडुहः सूर्यात्मकवज्ररूपत्वाभावात् पापहननरूपाश्वकार्यकरत्वं कथं स्यादित्याशङ्क्याह—आग्नेयो वा इति । अग्निसमीपे निर्वापार्थं स्थितस्यानसो वहनाद् ' अनड्वान् ' अग्निदेवताकः । ' अग्निः ' अपि ' सर्वेषां पाप्मनाम् ' रक्षसां च ' अपहन्ता ' बाधकः; अतस्तथाविधाग्निदेवताकत्वादनड्वानप्यश्ववत् रक्षांसि पाप्मनश्च विनाशयितुं शक्नोतीत्यर्थः ॥ १६ ॥

अग्निक्षेत्रस्याधिरोहणे प्रकारविशेषं विधित्सुः प्रस्तौति—अथात इति । यतोऽध्वर्युणा आहुतिप्रदानसमयेऽग्निक्षेत्रस्याधिरोहणमपेक्षितम्, अतः कारणाद् ' अथ ' अनन्तरम् ' अधिरोहणस्यैव ' अधिरुपर्यर्थः । अग्निक्षेत्रस्योपरि पादनिधानलक्षणं क्रमणमधिरोहणं तस्यैव विचारः क्रियत इति शेषः । तत्रैकीयं मतमुपन्यस्यति—तꣳ हैक इति । पुरस्तात्प्रत्यञ्चमिति । पूर्वभागे ' प्रति '—मुखमञ्चन्तम्, आत्माभिमुख्येन स्थितमग्निं मुखप्रदेशे ' अधिरोहन्ति ' इत्येकः पक्षः । ' पश्चाद्वा ' इति पक्षान्तरम् । पश्चाद्भागे पुच्छभागे ' प्राञ्चम् ' प्रकर्षेणाञ्चन्तमनभिमुखमग्निमारोहन्तीत्यर्थः । ' न तथा ' ' कुर्यात् ' इत्येतस्य पक्षद्वयस्य निषेधः । पक्षद्वयेऽपि दोषमाह—पशुरेष इति । ' अग्निः ' इति ' यद् ' अस्ति स पशुरूपः, ' यः ' खलु ' पशुं पुरस्तात् ' पूर्वभागे ' प्रति '—मुखम् ' अञ्चन्तम् ' अधिरोहति, तं पशुः ' विषाणाभ्याम् ' शृङ्गाभ्याम् ' हन्ति ' । ' अथ ' एतद्दोषपरिहाराय ' यः ' पश्चाद्भागे 'प्राञ्चम्' प्रकर्षेणाञ्चन्तम् 'अधिरोहति' ' तम् ' अनभिमुखं सन्तं पशुमारोहन्तं पुरुषं स पशुः 'पद्भ्याम्' पाश्चात्त्यपादाभ्यामाहन्ति । यद्येवं पूर्वपश्चिमभागयोरुभयत्राप्यारोहणे दोषः, कथं तर्हि तदारोहणं कर्त्तव्यमिति तत्राह—आत्मनैवेति । शिरःप्रदेशं पादप्रदेशं च विहाय ' आत्मना ' आत्मभागेन मध्य-

---

१—तीर्थेनाश्वमारोहयत्युत्तरपक्षमपरेण । पुरस्तात्पश्चाद्वैके । अनुयजुःकृष्टं पारिणयत्युत्तरतः प्रथमम् । का. श्रौ. सू. १७।६७-६९ ।

(तोऽथै) अथैतꣳ साये भूतेऽश्वं परिणयन्ति । (न्त्ये) एतद्वै देवाऽ अबिभयुर्यद्वै नऽइममिह रक्षाꣳसि नाष्ट्रा नु हन्युरिति तस्माऽएतं वज्रमभिगोप्तारमकुर्वन्नमुमेवादित्यमसौ वाऽआदित्यऽएषोऽश्वस्तथैवास्माऽअयमेतं वज्रमभिगोप्तारं करोति ॥ १८ ॥

---

अथैतं साये भूतेऽश्वं परिणयन्ति । एतद्वै देवा अबिभयुः यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तस्माऽएतं वज्रमभिगोप्तारमकुर्वन्–अमुमेवादित्यम् । असौ वाऽआदित्य एषोऽश्वः । तथैवास्माऽअयमेतं वज्रमभिगोप्तारं करोति ॥ १८ ॥

---

प्रदेशेनैव 'एनम्' अध्वर्युः 'आरोहेत्' लौकिकस्यापि पशोर्मध्यदेहेनैवारोहणं यतो दृश्यत इत्याह–यं वा इति । 'यम्' खलु 'पशुम्' अश्वादिकम् 'आत्मना' शिरःपुच्छदेशौ विहाय मध्यदेशेन 'आरोहन्ति,' 'सः' पशुस्तान् 'पारयति' पारं गन्तव्यावधिं प्रापयति; 'न' च 'हिनस्ति' आरूढं पुरुषं न व्यथयति । एवमग्नेरप्यधिरोहणमात्मभागे कर्त्तव्यमिति विहितम्; तत्राप्युत्तरतः कर्त्तव्यमिति विधत्ते–उत्तरत इति । पुच्छस्योत्तरभागे उत्तरपक्षस्य च सन्धौ तदधिरोहणं कर्त्तव्यम् । लोकप्रसिद्धिरप्येवमेवेत्याह–यं हि कश्चेति । 'यम्' 'कम्' अपि अश्वादिलक्षणम् 'पशुमारोहन्ति' लौकिकाः 'उत्तरतः' वामभागतः 'एवैनमारोहन्ति' । आरोहणानन्तरं प्राकृतवैकृतपदार्थानामनुष्ठाने क्रमविशेषमनुक्रामति–आरुह्याग्निमिति । आरोहणानन्तरम् 'औत्तरवेदिकम्' उत्तरवेदिसंस्काररूपं यत् कर्मजातमस्ति, तत् 'कृत्वा' इत्यर्थः । तच्च कात्यायनेन विशदमुक्तम्–" पशुवत्, उत्तरवेदिप्रोक्षणाद्यासम्भारनिवपनात्कृत्वा "–( का.श्रौ. सू. १७ । ७० । ७१ ) इति । तदनन्तरम् 'आत्मन्' अध्वर्युः स्वात्मनि स्वकीयमग्निं 'गृह्णीते' यथा बहिश्चित्याग्निप्रदेशे न निष्क्रामति, तथा " मयि गृह्णामि " इति–( वा. सं. १३ । १ ) मन्त्रजपेन स्वात्मनि धारयेदित्यर्थः । तदुक्तं कात्यायनेन–" उत्तरवेदिमपरेण तिष्ठन् यजमानो मयि गृह्णामीति जपति "–( का. श्रौ. सू. १७ । ७१ ) । अग्निग्रहणानन्तरं यत् 'सत्यं साम' इति प्रसिद्धं सामवेदे, तद्यजमानो गायेत्[1] । पुष्करपर्णस्योपधानं विधत्ते–पुष्करपर्णमुपदधातीति[2] । तस्यात इति । 'तस्य' पुष्करपर्णोपधानस्य 'अतः' अस्माद् ब्राह्मणादुत्तरस्मिन् ब्राह्मणे ( श. प. ७ । ४ । १ । ७ )–" योनिर्वै पुष्करपर्णम् "–इत्यादिना वाक्यशेषेण स्तुतिः करिष्यत इत्यर्थः ॥ १७ ॥

सायंकाले कर्त्तव्यं विधत्ते–अथैतमिति । 'अथ' पुष्करपर्णोपधानानन्तरम् 'एतम्' 'अश्वम्' 'साये भूते' अह्नोऽवसाने जाते सति 'परिणयन्ति' अग्निक्षेत्रं परित आवर्त्तयन्ति, " षोऽन्तकर्मणि "–( धा. पा. दि. प. ४१ । ) इत्यस्मात् ( पा. सू. ३ । १ । १४१ ) णप्रत्ययतः सायशब्दः । अथैतदश्वस्य परितो नयनं यज्ञविघातकरक्षोनिमित्ताद्भयाद्रक्षणहेतुत्वेन स्तौति–एतद्वै देवा इति । एतं वज्रमिति । अश्वात्मकं वज्रमित्यर्थः । 'अभिगोप्तारम्' अभितः सर्वासु दिक्षु रक्षितारम । अमुमेवादित्यमिति । अमुष्मि-

---

१–सत्यसाम गायति । का० श्रौ० सू० १७ । ७२ । २–पुष्करपर्णमुपदधाति स्तंबे पूर्ववत् । का. श्रौ. सू. १७ । ७३ ।

तं वाऽउपास्तमयमादित्यस्य परिणयति । ( त्ये ) एष वाऽअस्य प्रत्यक्षं दिवा गोप्ता भवति रात्रिसाचयान्यु वै रक्षाᳪंसि रात्र्या ऽएवास्माऽएतं व्वज्रमभिगोप्तारं करोति सर्व्वतः परिणयति सर्व्वत ऽएवास्माऽएतं व्वज्रमभिगोप्तारं करोति त्रिष्कृत्वः परिणयति त्रिव्वृतमेवास्माऽएतं व्वज्रमभिगोप्तारं करोत्यथैनमुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुरथ स पुनर्विपल्ययते तस्योपरि बन्धुः ॥ १९ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ७ । २ । ४ ॥ ( ३–२ )

इति द्वितीयः प्रपाठकः समाप्तः ॥ ७–२ ॥

इति तृतीयोऽध्यायश्च समाप्तः ॥ ७–३ ॥

---

तं वा उपास्तमयमादित्यस्य परिणयति । एष वा अस्य प्रत्यक्षं दिवा गोप्ता भवति । रात्रिसाचयान्यु वै रक्षांसि । रात्र्या एवास्माऽएतं वज्रमभिगोप्तारं करोति । सर्वतः परिणयति । सर्वत एवास्माऽएतं वज्रमभिगोप्तारं करोति । त्रिष्कृत्वः परिणयति । त्रिवृतमेवास्माऽएतं वज्रमभिगोप्तारं करोति । अथैनमुदञ्चं प्राञ्चं प्रसृजति, तस्योक्तो बन्धुः । अथ स पुनर्विपल्ययते–तस्योपरि बन्धुः १९॥

---

ऽऽकाशे दृश्यमानम् ' आदित्यम् ' आदित्यात्मकमश्वम् । अश्वस्य आदित्यात्मकता प्रागुक्ता ( श. प. ७ । ३ । २ । १० ) । इदानीमप्याह–' असौ वा आदित्यः ' इति । तथैवास्मा इति । यथा सूर्यो राक्षसाद्यज्ञस्याभिगोप्ता तेनैव प्रकारेणायमध्वर्युः ' अस्मै ' चेष्यमाणायाग्नये ' एतम् ' अश्वात्मकम् ' वज्रम् ' सिद्धमन्यत् ॥ १८ ॥

सायङ्कालेऽप्यस्तमयात्प्रागेवाश्वपरिणयनस्य कर्त्तव्यतामाह–तं वा इति । ' आदित्यस्यास्तमयमुप ' अस्तमयस्य समीपे आदित्ये विद्यमाने सत्येवेति यावत् । एष वा अस्येत्यादि । ' एषः ' खलु आदित्यः ' अस्य ' चीयमानस्याग्नेः ' दिवा ' अह्नि ' प्रत्यक्षम् ' ' गोप्ता भवति ' । रात्रिं सचन्ते समवयन्तीति ' रात्रिसाचयानि ' रात्रौ सञ्चरणशीलानि खलु ' रक्षांसि ' तादृश्याः ' रात्र्याः ' ' एव ' सकाशाद् ' अस्मै ' चित्याग्नये ' एतम् ' अश्वात्मकं ' वज्रम् ' परोरजआदित्यात्मकम् अभितो रक्षितारं ' करोति ' । परिणयतीति परिशब्देन सूचितमर्थं स्तोतुमाविष्करोति–सर्वत इति । ' सर्वतः ' सर्वासु दिक्षु । परिणयनक्रियायास्त्रिरावृत्तिं विधाय स्तौति–त्रिष्कृत्व इति । त्रिवृतमेवास्मा इति । ' त्रिवृतम् ' त्रिगुणितम् । अथैनमुदञ्चमित्यादि । ' अथ ' त्रिष्कृत्वः–परिणयनानन्तरम् ' एनम् ' अश्वं ' प्राञ्चं ' ' उदञ्चम् ' विसृजेत् । तस्य च स्तावको वाक्यशेषः प्राक् समाम्नात इत्यर्थः । तस्याश्वस्य पुनः प्रयोगं विधत्ते–अथ स पुनरिति । ' सः ' अश्वः ' पुनः '

' विपल्ययते ' विपरिवर्त्तते, उपचारकाले कर्मणोऽङ्गभावं प्रतिपद्यत इत्यर्थः । " अय गतौ "–( धा. पा. भ्वा. आ. ४७६ ) इत्यस्माल्लिट् । " उपसर्गस्यायतौ "–इति ( पा. सू. ८ । २ । १९ ) लत्वम् । तस्याश्वपर्यावर्त्तनस्योपरिष्टात् प्रयोजनमभिधास्यत इत्यर्थः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे तृतीयाऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ७–३–२ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये सप्तमकाण्डे तृतीयोऽध्यायः समाप्तः ॥ ७–३ ॥

# अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ।
# तृतीयप्रपाठके च प्रथमं ब्राह्मणम् ।

आत्मन्नग्निं गृह्णीते चेष्यन् । (ब्रा) आत्मनो वाऽएतमधि जनयति यादृशाद्वै जायते तादृङ्ङेव भवति स यदात्मन्नगृहीत्वाऽग्निं चिनुयान्मनुष्यादेव मनुष्यं जनयेन्मर्त्यान्मर्त्यमनपहतपाप्मनोऽनपहतपाप्मानमथ यदात्मन्नग्निं गृहीत्वा चिनोति तदग्नेरेवाध्यग्निं जनयत्यमृतादमृतमपहतपाप्मनोऽपहतपाप्मानम् ॥ १ ॥

---

आत्मन्नग्निं गृह्णीते चेष्यन् । आत्मनो वाऽएतमधि जनयति । यादृशाद्वै जायते–तादृङ्ङेव भवति । स यदात्मन्नगृहीत्वाऽग्निं चिनुयाद्–मनुष्यादेव मनुष्यं जनयेत्, मर्त्यान्मर्त्यम्, अनपहतपाप्मनोऽनपहतपाप्मानम् । अथ यदात्मन्नग्निं गृहीत्वा चिनोति–तदग्नेरेवाध्यग्निं जनयति, अमृतादमृतम्, अपहतपाप्मनोऽपहतपाप्मानम् ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अग्निग्रहणसत्यसामगानपुष्करपर्णोपधानानि पूर्वस्मिन् ब्राह्मणे संग्रहेण विहितानि, इदानीं तानि क्रमेण प्रपञ्चयति–आत्मन्नग्निं गृह्णीते चेष्यन्नित्यादिना । 'चेष्यन्' चयनं करिष्यन्नध्वर्युः 'आत्मन्' आत्मनि 'अग्निम्' 'गृह्णीते' मन्त्रेण धारयेत् । आत्मनो वा इत्यादि । अध्वर्युः 'आत्मनोऽधि' अधिः पञ्चम्यर्थानुवादी ''अधिपरी अनर्थकौ''–इति (पा. सू. १ । ४ । ९३) पाणिनिस्मरणात् । आत्मनः सकाशात् खल्वध्वर्युः 'एतम्' चित्याग्निम् 'जनयति' तथा सति लोकस्थितिरीदृशी 'यादृशाद्' यादृक्स्वरूपात् खलु मनुष्यादिशरीराद् गर्भो 'जायते' स 'तादृङ्' तत्सदृश एव निष्पद्यते । सति ह्यग्निग्रहणेऽध्वर्युरग्न्यात्मको भवति । तादृशादध्वर्योर्जायमानचित्याग्निरपि साक्षादग्निरूपो भवति । तस्मादात्मन्यग्निग्रहणं कर्त्तव्यमित्यर्थः । अगृहीत्वा चयने दोषमुपन्यस्यति–स यदात्मन्निति । 'सः' अध्वर्युः 'यद्' यद्यात्मन्यग्निग्रहणमकृत्वा 'अग्निं चिनुयात्' तदा देवरूपाऽनापन्नान्मनुष्यशरीरमात्रान्मनुष्यात्मकमेव जनयेत्, कारणानुरूपत्वात् कार्यस्येति भावः । कारणं हि शरीरं मनुष्यजातीयम्; अत एव 'मर्त्यम्' मरणशीलम्, अनपहतपाप्मकम्, मरणादिहेतुभूतपापसहितम्, तथाविधाज्जायमानोऽग्निरपि तादृग्रूपो भवतीति तात्पर्यार्थः । सति त्वग्निग्रहणेऽभिहितदोषवैपरीत्यमाह–अथ यदिति । तदग्नेरेवेत्यादि । अग्निरूपात्मनः सकाशाज्जनयन्नग्निमेव 'जनयति' अमृतरूपस्याग्नेर्धारणादध्वर्युरप्यमृतात्मकः । शिष्टं स्पष्टम् ॥ १ ॥

( ५ँ ) स गृह्णाति । मयि गृह्णाम्यग्रेऽअग्निमिति तदात्मन्नेवाग्रेऽग्निं गृह्णीते रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति तदु सर्वाऽआशिषऽआत्मन्गृह्णीते मामु देवताः सचन्तामिति तदु सर्वान्देवानात्मन्गृह्णीते तद्यत्किं चात्मनोऽधिजनयिष्यन्भवति तत्सर्वमात्मन्गृह्णीते स वै तिष्ठन्नात्मन्नग्निं गृहीत्वाऽनूपविश्य चिनोति पशुरेष यदग्निस्तस्मात्पशुस्तिष्ठन्गर्भं धित्वाऽनूपविश्य विजायते ॥ २ ॥

( तेऽथ ) अथ सत्यथ्ँ साम गायति । ( त्ये ) एतद्वै देवाऽअब्रुवन्त्सत्यमस्य मुखं करवाम ते सत्यं भविष्यामः सत्यं नोऽनुवर्त्स्यति सत्यो नः स कामो भविष्यति यत्कामाऽएतत्करिष्यामहऽइति ॥ ३ ॥

---

स गृह्णाति–" मयि गृह्णाम्यग्नेऽअग्निम् "–इति । तदात्मन्नेवाग्रेऽग्निं गृह्णीते । " रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय "–इति । तदु सर्वा आशिष आत्मन् गृह्णीते । " मामु देवताः सचन्ताम् "–( वा. सं १३ । १ ) इति । तदु सर्वान्देवानात्मन् गृह्णीते । तद्यत्किं चात्मनोऽधिजनिष्यन्भवति–तत्सर्वमात्मन् गृह्णीते । स वै तिष्ठन्नात्मन्नग्निं गृहीत्वाऽनूपविश्य चिनोति । पशुरेष यदग्निः । तस्मात्पशुस्तिष्ठन् गर्भं धित्वाऽनूपविश्य विजायते ॥ २ ॥

अथ सत्यं साम गायति । एतद्वै देवा अब्रुवन्–सत्यमस्य मुखं करवाम, ते सत्यं भविष्यामः, सत्यं नोऽनुवर्त्स्यति, सत्यो नः स कामो भविष्यति–यत्कामा एतत्करिष्यामहऽइति ॥ ३ ॥

---

इत्थमग्निग्रहणस्यावश्यकर्त्तव्यतामुपपाद्य समन्त्रकं तद्विधत्ते–स गृह्णातीति । " मयि गृह्णामि " इति ग्रहणमन्त्रः । तत्र ' मयि ' इत्यस्मच्छब्दश्रवणादात्मन्यग्नेर्ग्रहणं निगदसिद्धमित्याह–तदात्मन्नेवेति । ' अग्रे ' चयनात्प्राक्काले । द्वितीयभागमनूद्य तस्य तात्पर्यमाह–रायस्पोषायेति । ' रायस्पोषो ' धनसमृद्धिः, ' सुप्रजास्त्वम् ' शोभनपुत्रपौत्रादियुक्तत्वम्, शोभनवीर्ययोगः ' सुवीर्यम् ' । ' तत् ' तेन मन्त्रभागेनोक्तलक्षणाः ' सर्वाः आशिषः ' फलानि आत्मनि स्वीकरोति ॥

तृतीयभागमनूद्य व्याचष्टे–मामु देवता इति । यक्ष्यमाणदेवताः ' माम ' एव ' सचन्ताम् ' मदीययज्ञं सेवन्ताम् ' इति ' एतेन मन्त्रभागेन देवतानामप्यात्मनि ग्रहणं कृतं भवति । तद्यत् किंचेत्यादि । ' तत् ' प्रागुक्तं ' यत् ' किमपि मन्त्रप्रतिपाद्यमग्निरायस्पोषादिकम् ' आत्मना ' जनयितव्यमस्ति ' तत् सर्वम् ' अनेन मन्त्रेण आत्मनि गृहीतमेव भवतीति । अग्निग्रहणं च तिष्ठता कर्तव्यमिति स्थितिलक्षणं गुणं विधत्ते–स वै तिष्ठन्निति । चयनसमये तूपवेशनं तस्य विधत्ते–अनूपविश्य चिनोतीति । यत्र यत्रेष्टकामुपदधाति तं देशं गत्वा तत्समीपे उपविश्य चिनुयादित्यर्थः । एतदुभयं स्तौति–पशुरेष इति । ' पशु-'रूपो हि ' एषः ' ' अग्निः ', ' तस्माद् ' एव हि कारणाद्गवादिलक्षणः ' पशुस्तिष्ठन् ' एव ' गर्भं ' धत्ते 'अनूपविश्य विजायते' प्रसूते । अतोऽग्निग्रहणं गर्भधारणभूतत्वात्तिष्ठतैव कार्यम्, चयनं तु प्रसवरूपत्वादुपविष्टेनेति तात्पर्यम् ॥ २ ॥

अथ प्राग्विहितं सत्यसाम्नो गानमनूद्य स्तौति–अथ सत्यमिति । 'एतद्वै' एतस्मिन्नन्तरे खलु 'देवाः' 'अब्रुवन्'

तऽएतत्सत्यꣳ साम पुरस्तादगायन् । (यँस्तु) तदस्य सत्यं मुख-मकुर्वँस्ते सत्यमभवन्त्सत्यमेनानुन्ववर्त्तत सत्य ऽएषां स कामोऽभवद्य-त्कामा ऽएतदकुर्वत ॥ ४ ॥

तथैवैतद्यजमानः । (नो) यत्सत्यꣳ साम पुरस्ताद्गायति तदस्य सत्यं मुखं करोति स सत्यं भवति सत्यमेनमनुवर्त्तते सत्योऽस्य स कामो भवति यत्काम ऽएतत्कुरुते ॥ ५ ॥

तद्यत्तत्सत्यम् । (सा) आपऽ एव तदापो हि वै सत्यं तस्माद्येनापो यन्ति तत्सत्यस्य रूपमित्याहुरप ऽएव तदस्य सर्व्वस्याग्रमकुर्वँस्तस्माद्य-द्देवापो यन्त्यथेदꣳ सर्व्वं जायते यदिदं किं च ॥ ६ ॥

---

तऽएतत्सत्यं साम पुरस्तादगायन् । तदस्य सत्यं मुखमकुर्वन्, ते सत्यमभवन्, सत्यमेनान-न्ववर्तत, सत्य एषां स कामोऽभवत्—यत्कामा एतदकुर्वत ॥ ४ ॥

तथैवैतद्यजमानो यत् सत्यं साम पुरस्ताद्गायति—तदस्य सत्यं मुखं करोति, स सत्यं भवति, सत्य-मेनमनुवर्तते, सत्योऽस्य स कामो भवति—यत्काम एतत्कुरुते ॥ ५ ॥

तद् यत्तत्सत्यम्—आप एव तत् । आपो हि वै सत्यम् । तस्माद्येनापो यन्ति—तत्सत्यस्य रूप-मित्याहुः । अप एव तदस्य सर्वस्याग्रमकुर्वन् । तस्माद्यदैवापो यन्ति—अथेदं सर्वं जायते—यदिदं किं च ॥ ६ ॥

---

अस्याग्नेः ' सत्यम् ' सत्यफलसाधनं ' साम ' ' मुखं करवाम ' तथाकरणाच्च वयं ' सत्यं भविष्यामः ' सत्यभूताः सर्वदा बाधरहिताः स्याम; ' नः ' अस्मान् ' सत्यम् ' सत्याभिमानिदेवता ' अनुवर्त्स्यति ' अनु-वर्त्तनं करिष्यति । तथा च ' नः ' अस्माकं ' सः ' तादृशः कामः ' यज्ञफलरूपः ' सत्यः ' यथार्थो ' भवि-ष्यति ' । यत् फलं कामयमानाः ' एतद् ' अग्निचयनात्मकं कर्म ' करिष्यामहे, ' ' इति '—शब्दो देवानां कामपरिसमाप्तौ । एवं विचार्य ते देवाः ' एतत्सत्यं साम पुरस्तादगायन् ' ' तत् ' तेन सत्यसाम्नो गानेन ' अस्य ' अग्नेः ' मुखं सत्यमकुर्वन् ' ततः ' ते ' देवाः ' सत्यमभवन् ' सत्यत्वं प्राप्ता इत्यर्थः । व्याख्यात-प्रायमन्यत् ॥ ३ ॥ ४ ॥

इत्थं परकृतिमुपन्यस्य प्रकृते योजयति—तथैवेति । यथा देवाः ' तथैव ' ' एतद् ' एतर्हि ' यजमानः ' ' सत्यं साम ' ' पुरस्तात् ' पूर्वस्यां दिशि ' गायति ' इति ' यद् ' अस्ति ' तत् ' तेन ' अस्य ' चित्याग्नेः ' मुखम् ' ' सत्यम् ' सर्वदा विद्यमानं ' करोति ' ' सः ' यजमानः स्वयमपि तथा करणात् सत्यात्मको ' भवति ' गतमन्यत् ॥ ५ ॥

सत्यपदस्याभिप्रेतमर्थमाविष्कुर्वन् प्रशंसति—तद्यदिति । ' तत् ' तत्र ' तद् ' उक्तविधम् ' यत् ' ' सत्यम् ' ' आप एव ' ' तत्, ' अप्स्वमेव सत्यपदेनोक्तमित्यर्थः । अपां सत्यरूपतामुपपादयति—आपो

( चा ) अथ पुष्करपर्णमुपदधाति । योनिर्वै पुष्करपर्णं योनिमेवैतदुपदधाति ॥ ७ ॥

यद्वेव पुष्करपर्णमुपदधाति । ( त्या ) आपो वै पुष्करं तासामियं पर्णं यथा ह वाऽइदं पुष्करपर्णमप्स्वध्याहितमेवमियमप्स्वध्याहिता सेयं योनिरग्नेरियꣳ ह्यग्निरस्यै हि सर्वोऽग्निश्चीयतऽइमामेवैतदुपदधाति तामनन्तर्हिताꣳ सत्यादुपदधातीमां तत्सत्ये प्रतिष्ठापयति तस्मादियꣳ सत्ये प्रतिष्ठिता तस्माद्वियमेव सत्यमियꣳ ह्येवैषां लोकानामद्धातमाम् ॥ ८ ॥

---

### अथ पुष्करपर्णेष्टकोपधानम् ।

अथ पुष्करपर्णमुपदधाति । योनिर्वै पुष्करपर्णम्—योनिमेवैतदुपदधाति ॥ ७ ॥

यद्वेव पुष्करपर्णमुपदधाति । आपो वै पुष्करम् । तासामियं पर्णम् । यथा ह वाऽइदं पुष्करपर्णमप्स्वध्याहितम्—एवमियमप्स्वध्याहिता । सेयं योनिरग्नेः । इयं ह्यग्निः । अस्यै हि सर्वोऽग्निश्चीयते । इमामेवैतदुपदधाति । तामनन्तर्हितां सत्यादुपदधाति । इमां तत्सत्ये प्रतिष्ठापयति । तस्मादियं सत्ये प्रतिष्ठिता । तस्माद्वियमेव सत्यम् । इयं ह्येवैषां लोकानामद्धातमाम् ॥ ८ ॥

---

हीति । 'हि' यस्माद् 'आपः' सत्यात्मिकाः 'तस्माद्' 'येन' भूप्रदेशेन ताः 'आपः' 'यन्ति' 'गच्छन्ति' 'तत्' स्थानं सत्यस्य उदकात्मकस्य ब्रह्मणो 'रूपमित्याहुः' कथयन्ति ब्रह्मवादिनः । अपां प्रथमसर्गश्च स्मर्यते—"अप एव ससर्जादौ तासु वीर्यमवाकिरत्"—इति ( मनुः ) । अप एव तदस्येत्यादि । अपां सत्यरूपत्वात्तेन सत्यसाम्नोऽग्रतो गानेन 'अस्य' 'सर्वस्य' जगतः 'अप एवाग्रम्' मुखम् 'अकुर्वन्' देवा इत्यर्थः । अपामग्रकरणस्य फलमाह—तस्मादिति । 'तस्माद्' उक्तहेतोः 'यदैव' खलु 'आपः' वृष्ट्युत्पन्नाः 'यन्ति' प्रवहन्ति । 'अथ' अनन्तरमेव 'इदम्' दृश्यमानमोषधिवनस्पत्यादिरूपम् 'सर्वम्' जगदुत्पद्यते । सर्वशब्दस्य संकुचद्वृत्तितां निराचष्टे—यदिदमिति ॥ ६ ॥

पुष्करपर्णोपधानं विधाय स्तौति—अथ पुष्करपर्णमिति । 'अथ'—शब्दः सामगानानन्तर्यार्थः । "तमद्भ्य उपोदास्तं पुष्करपर्णे विवेद"—( श. प. ७ । ३ । २ । १४ ) इति अग्न्युपलम्भाधिकरणत्वस्य श्रुतत्वात् पुष्करपर्णस्य योनित्वम् ॥ ७ ॥

प्रकारान्तरेण पुष्करपर्णस्याग्नियोनित्वमनुवादपूर्वकं प्रतिपादयति—यद्वेवेति । आपो वै पुष्करमित्यादि । "पुष्करं सर्वतोमुखम्"—( अ.को. १।१०।४ ) इत्यादिनिघण्टुप्रसिद्धिद्योतको 'वै'—शब्दः । 'तासाम्' अपां प्रथमसृष्टानाम् 'इयम्' पृथिवी 'पर्णम्' पर्णस्थानीया । एतदेव विशदयति-यथा ह वा इति । 'इदं पुष्करपर्णम्' पद्मपत्रं यथा खलु 'अप्स्वध्याहितम्' उपर्याश्रितं सद् दृश्यते 'एवमियम्' पृथिवी 'अप्सु' उदकेषु 'अध्याहिता' उपर्याश्रिता वर्तते । अत एवोपरिष्टात् "तदपा५ शर आसीत्तत्समहन्यत सा पृथिव्यभवद्"—( श. प. १०।६।५।२ ) इत्याम्नास्यते; अतः पुष्करपर्णसाम्यात्पृथिव्याः पुष्करपर्णत्वम् । सेयं योनिरित्यादि । यदिदं पृथिव्यात्मकं पुष्करपर्णं 'सेयम्' 'अग्नेः' 'योनिः' उत्पत्तिकारणम्, अत एव 'हि' 'इयम्' पृथिवी

( म ) अपां पृष्ठमसि योनिरग्नेरिति । (त्य) अपाᳬं हीयं पृष्ठं योनिर्हीयमग्नेः समुद्रमभितः पिन्वमानमिति समुद्रो हीमामभितः पिन्वते व्वर्धमानो महाँ२॥ऽआ च पुष्करऽइति व्वर्धमानो महीयस्व पुष्करऽइत्येतद्दिवो मात्रया व्वरिम्णा प्रथस्वेत्यनुविमार्ष्ट्यसौ वाऽआदित्यऽएषोऽग्निर्नो हैतमन्यो दिवो व्वरिमा यन्तुमर्हति द्यौर्भूत्वैनं यच्छेत्येवैतदाह स्वराजोपदधाति स्वाराज्यᳬं ह्यपाᳬं सादयित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ ९ ॥

"अपां पृष्ठमसि योनिरग्नेः"—इति । अपां हीयं पृष्ठम् । योनिर्हीयमग्नेः । "समुद्रमभितः पिन्वमानम्"—इति । समुद्रो हीमामभितः पिन्वते । "वर्द्धमानो महाँ२॥आ च पुष्करे"—इति । वर्धमानो महीयस्व पुष्करऽइत्येतत् । "दिवो मात्रया वरिम्णा प्रथस्व"—. वा. सं. १३। २ ) इत्यनुविमार्ष्टि । असौ वाऽआदित्य एषोऽग्निः । नो हैतमन्यो दिवो वरिमा यन्तुमर्हति । द्यौर्भूत्वैनं यच्छेत्येवैतदाह । स्वराजोपदधाति । स्वाराज्यं ह्यपाम् । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ ९ ॥

कार्यकारणयोरभेदाच्चित्याग्निरूपेण वर्त्तते । एतत्तादात्म्यमुपपादयति—अस्यै हि सर्वोऽग्निश्चीयत इति । "षष्ठ्यर्थे चतुर्थी"—( पा. सू. २ । ३ । ६२ । वा. १ । ) अस्याः पृथिव्याः सम्बन्धिनीभिर्मृन्मयीभिरिष्टकाभिः कृत्स्नः 'अग्निश्चीयते' अतः पृथिव्या अग्नेश्च तादात्म्यमुक्तमित्यर्थः । उदीरितरीत्या यतः पुष्करपर्णं पृथिवी, अतस्तदुपधानेन 'इमामेव' पृथिवीमुपहितवान् भवतीत्यर्थः । अथैतस्योपधानस्य सत्यसामानन्तर्यमनूद्य स्तौति—तामनन्तर्हितामिति । 'सत्यात्' सत्यसामगानाद् 'अनन्तर्हिताम्' अव्यवहितां 'ताम्' पुष्करपर्णेष्टकामुपदध्यात् । 'तत्' तेनानन्तर्हितत्वेन 'इमाम्' पृथिवीं 'सत्ये' 'प्रतिष्ठापयति' 'तस्माद्' एव खलु 'इयम्' पृथिवी 'सत्ये' 'ब्रह्मण्यप्त्वोपाधिके 'प्रतिष्ठिता' दृश्यते । तस्माद्वियमिति । "उशब्दोऽवधारणे"—इति । यस्मात् सत्ये प्रतिष्ठिता 'तस्मादेव' कारणादधिकरणाधिकर्तव्ययोरभेदोपचारेण 'इयमेव' पृथिवी 'सत्यम्' । सत्यरूपतामुपपादयति—इयं हीति । 'एषाम्' पृथिव्यन्तरिक्षद्युलोकानां मध्येऽपि 'इयमेव' खलु पृथिवी 'अद्धातमाम्' प्रत्यक्षतमाम्, अपारोक्ष्येणावभासमाना दृश्यते, तस्मादस्याः सत्यरूपत्वं बोद्धव्यम् । "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे"—( पा. सू. ५ । ४ । ११ ) इति आमुप्रत्ययः ॥ ८ ॥

अथ तस्मिन्पुष्करपर्णोपधाने मन्त्रं विधाय पदशो व्याचष्टे—अपां पृष्ठमसीति । अपां हीयमिति । 'इयम्' पृथिव्युपर्यवस्थानाद् 'अपाम्' पृष्ठवत् 'पृष्ठम्,' अतो हे पुष्करपर्ण ! त्वम् ' 'अपाम्' उदकानां 'पृष्ठमसि' पृष्ठभागो भवसि । योनिर्हीयमिति । चित्यस्य 'अग्नेः' 'योनिः' पृथिवी, इष्टकोपादानत्वात् । हे पुष्करपर्ण ! त्वमग्नेस्तादृशी योनिरसीति प्रथमपादार्थः । समुद्रो हीमामिति । 'इमाम्' पृथिवीम् 'अभितः' सर्वतः पृथिव्याः सर्वासु दिक्षु 'समुद्रः' 'पिन्वते' सिञ्चति, "पिवि सेचने"—( धा. पा. भ्वा. प.५९०) इति धातुः । महच्छब्दस्य व्याख्यानम्—महीयस्वेति । "महीङ् वृद्धौ"—( धा. पा. कं. आ. ३९ ) इति

१–सिद्धान्तकौमुद्यां तु "महीङ् पूजायाम्" इति दृश्यते ।

( रु ) अथ रुक्ममुपदधाति । ( त्य ) असौ वाऽआदित्यऽएष रुक्मऽएष हीमाः सर्वाः प्रजाऽअतिरोचते रोचो ह वै तᳪं रुक्मऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाऽअमुमेवैतदादित्यमुपदधाति स हिरण्मयो भवति परिमण्डलऽएकविᳪंशतिनिर्बाधस्तस्योक्तो बन्धुरधस्तान्निर्बाधमुपदधाति रश्मयो वाऽएतस्य निर्बाधा अवस्ताद्ध वाऽएतस्य रश्मयः॥ १०

---

## अथ रुक्मेष्टकोपधानम् ।

अथ रुक्ममुपदधाति । असौ वाऽआदित्य एष रुक्मः । एष हीमाः सर्वाः प्रजा अतिरोचते । रोचो ह वै तं रुक्म इत्याचक्षते परोक्षम् । परोक्षकामा हिं देवाः । अमुमेवैतदादित्यमुपदधाति । स हिरण्मयो भवति परिमण्डल एकविंशतिनिर्बाधः । तस्योक्तो बन्धुः । अधस्तान्निर्बाधमुपदधाति । रश्मयो वाऽएतस्य निर्बाधाः । अवस्ताद्ध वाऽएतस्य रश्मयः ॥ १० ॥

---

धातुः कण्ड्वादिः । अनुविमार्ष्टीति । चतुर्थपादावसाने पुष्करपर्णमुपदधानस्तस्यानुलोम्येन विमार्जनं कुर्यात् । असौ वा आदित्य इत्यादि । चतुर्थपादव्याख्यानम् । नो हैतमन्य इति । द्युलोकव्यतिरिक्तः ' अन्यो ' ' वरिमा, ' भाववाचिना तद्वाँल्लक्ष्यते । उरुतरः पदार्थः । एतमग्निम् ' नो ' खलु ' यन्तुमर्हति ' तथा च ' दिवो मात्रया वरिम्णा ' इति इत्थंभावे तृतीयेति व्याख्यातं भवति; अतोऽयमर्थः सम्पद्यत इत्याह—द्यौर्भूत्वेति । हे पुष्करपर्ण ! त्वं द्युलोको भूत्वा एतमग्निं ' यच्छ ' यमयेति तात्पर्यार्थः । छन्दोद्वारेणैतत् प्रशंसति—स्वराजोपदधातीति । उत्तरार्द्धर्चे वैराजपादाभ्यां द्वेऽअक्षरे अधिके तदाधिक्यं स्वराडाख्यच्छन्दसो लक्षणम् " द्वाभ्यां विराट्स्वराजौ " इति स्मरणात् । स्वायत्तं राजते ईष्टे इति स्वराड्, स्वतन्त्रेश्वरस्तस्य कर्म ' स्वाराज्यम् ' ' अपाम् ' ' हि ' सम्बन्धि यत् स्वाराज्यं तदेव पुष्करपर्णम् । अतस्तस्य स्वराजोपधानं युक्तमिति भावः । सादयित्वा—इत्यादिकं प्रागुक्तार्थम् ॥ ९ ॥

आकाशात्मना स्तुतस्य पुष्करपर्णस्य मध्ये सूर्यमण्डलात्मना ध्यातव्यस्य रुक्मस्योपधानं विधत्ते—अथ रुक्ममिति । ' अथ '—शब्दः पुष्करपर्णोपधानानन्तर्यार्थः । रुक्मस्यादित्यात्मकत्वमुपपादयति—एष हीमा इति । ' एषः ' एव परिदृश्यमानो हि ' असौ वा आदित्यः ' ' इमाः ' ' सर्वाः ' ' प्रजाः ' ' अतिरोचते, ' अतो रोचत इति व्युत्पत्त्या रुच्धातोः पचाद्यचि ' रोच ' इति तस्य नामधेयं सम्पद्यते, तदेव पारोक्ष्येण ' रुक्म ' इति ब्रुवते परोक्षप्रियत्वाद्देवानामित्यर्थः । रुक्मस्य प्रकृतिद्रव्यमाकृतिविशेषं च दर्शयति—स हिरण्मय इति । ' सः ' रुक्मः सुवर्णमयः कार्यः । दाण्डिनायनादिसूत्रे ( पा. सू. ६ । ४ । १७४ ) निपातनान्मयटि, हिरण्यशब्दस्यान्त्ययकारलोपः । ' परिमण्डलः ' वर्तुलाकृतिः, ' एकविंशतिनिर्बाधः ' एकविंशतिसङ्ख्याकैः पुलकैर्युक्तः कार्यः । तस्योक्त इति । ' तस्य ' एकविंशतिनिर्बाधयोगस्य एकविंशो ह्येष-बहिष्टान्निर्बाधं बिभर्ति ( श. प. ६ । ७ । १ । २ ) इत्यादिना स्तुतिः प्रागाम्नातेत्यर्थः । उपधानसमये निर्बाधानामधोभागेऽवस्थानं यथा भवति तथा कर्त्तव्यमिति विधत्ते—अधस्तान्निर्बाधमिति । तस्य कारणमाह—रश्मयो वा एतस्येति । सूर्यमण्डलस्याधस्ताद्भागे हि ' रश्मयो ' निःसरन्ति; अतो रश्म्यात्मकानां निर्बाधानामधस्ताद्भागे करणं युक्तमिति भावः ॥ १० ॥

( स्तुं ) तं पुष्क॒रप॒र्णऽउप॑दधाति । योनि॒र्वै पु॑ष्कर॒पर्णं॒ योना॑वे॒वैन॑मे॒तत्प्र॑ति॒ष्ठाप॑यति ॥ ११ ॥

यद्वे॒व पु॑ष्कर॒पर्ण॒ऽउप॑द॒धाति । प्र॑ति॒ष्ठा वै पु॑ष्कर॒पर्ण॑मि॒यं वै पु॑ष्कर॒पर्ण॑मि॒यमु॒ वै प्र॑ति॒ष्ठा यो वा॒ऽअ॒स्याम॒प्रति॑ष्ठितो॒ऽपि॒ दूरे॒ सन्न॒प्रति॑ष्ठित॒ऽ एव॒ स र॒श्मिभि॒र्वा॒ऽए॒षो॑ऽस्यां॒ प्रति॑ष्ठितो॒ऽस्या॒मे॒वैन॑मे॒तत्प्र॑ति॒ष्ठायां॒ प्रति॑ष्ठापयति १२

यद्वे॒व पु॑ष्कर॒पर्ण॒ऽउप॑द॒धाति । ( त्री ) इन्द्रो॑ वृ॒त्रᳪं ह॒त्वा नास्तृ॑षी॒ति॒ म॒न्यमा॑नो॒ऽपः प्रा॑विश॒त्ता॒ऽ अ॑ब्रवीद्बि॒भेमि॒ वै पु॒रं मे॑ कुरु॒तेति॒ स॒ यो॒ऽपाᳪं र॒स ऽआ॒सी॒त्तमू॒र्ध्वᳪं स॒मु॒दौहं॒स्ताम॑स्मै पु॒रम॑कु॒र्वँस्त॒द्यद॑स्मै पु॒रम॑कु॒र्वँस्त॒स्मात्पू॒ष्क॒रं पू॒ष्क॒रᳪं ह॒ वै तत्पु॒ष्कर॒मि॒त्याच॑क्षते प॒रो॒क्षं प॒रो॒ऽक्ष॑कामा॒ हि दे॒वास्त॒द्यत्पु॑ष्कर॒पर्ण॒ऽउप॑द॒धाति य॒मे॒वास्मै॒ तमा॒पो र॒सᳪं स॒मु॒दौह॒न्त्याम॑स्मै पु॒रम॑कु॒र्वँस्त॒स्मि॒न्ने॒वैन॑मे॒तत्प्र॑ति॒ष्ठाप॑यति ॥ १३ ॥

---

तं पुष्करपर्णऽउपदधाति । योनिर्वै पुष्करपर्णम् । योनावेवैनमेतत्प्रतिष्ठापयति ॥ ११ ॥

यद्वेव पुष्करपर्णऽउपदधाति । प्रतिष्ठा वै पुष्करपर्णम् । इयं वै पुष्करपर्णम् । इयमु वै प्रतिष्ठा । यो वाऽअस्यामप्रतिष्ठितोऽपि दूरे सन्–अप्रतिष्ठित एव सः । रश्मिभिर्वाऽएषोऽस्यां प्रतिष्ठितः । अस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥ १२ ॥

यद्वेव पुष्करपर्णऽउपदधाति । इन्द्रो वृत्रं हत्वा नास्तृषीति मन्यमानोऽपः प्राविशत् । ता अब्रवीत्–बिभेमि वै । पुरं मे कुरुतेति । स योऽपां रस आसीत्–तमूर्ध्वं समुदौहन् । तामस्मै पुरमकुर्वन् । तद्यदस्मै पुरमकुर्वन्–तस्मात्पूष्करम् । पूष्करं ह वै तत् पुष्करमित्याचक्षते परोक्षम् । परोक्ष-

---

तस्य पुष्करपर्णमध्ये उपधानं विधत्ते–तं पुष्करपर्णे इति । पुष्करपर्णस्य योनिरूपत्वं प्रागुक्तम् ॥ ११ ॥

प्रकारान्तरेण पुष्करपर्णे रुक्मोपधानं स्तौति–यद्वेवेति । 'प्रतिष्ठा' आस्पदम्, तद्रूपतां पुष्करपर्णस्योपपादयति–इयं वै पुष्करपर्णमिति । यो वा अस्यामित्यादि । 'यः' खलु 'अस्याम्' पृथिव्याम् 'अप्रतिष्ठितः' प्रतिष्ठितो न भवति, स दूरदेशे 'सन्' वर्त्तमानोऽपि 'अप्रतिष्ठितः' प्रतिष्ठारहितो निरालम्बन एव भवति । यद्येवमाकाशे वर्त्तमानस्य सूर्यस्य पृथिव्यामनवस्थानादेतेन पुष्करपर्ण उपधानेन 'एनम्' रुक्मरूपमादित्यम् 'अस्याम्' पृथिवीरूपायामेव 'प्रतिष्ठायाम्' 'प्रतिष्ठापयति' ॥ १२ ॥

एतदेव रुक्मोपधानस्य पुष्करपर्णाधिकरणत्वमाख्यायिकया पुष्करनामनिर्वचनेन प्रतिष्ठारूपतां ब्रुवन्स्तौति–यद्वेव पुष्करपर्णे इत्यादिना । 'नास्तृषि' न खल्वहमद्यापि वृत्रमहिंसिषमिति विपर्यस्तमतिः सन्नित्यर्थः । सः 'इन्द्रः' अनन्तरम् 'अपः प्राविशत्,' 'ता अब्रवीत्' च, अहं वृत्राद् 'बिभेमि' बिभ्यतो मम 'पुरम्' भयरहितमावासस्थानं हे आपः ! यूयं 'कुरुत' आपश्चैतद् वचः श्रुत्वा 'यः' स्वकीयः 'रसः' प्रातिस्विकः

ब्रह्म जज्ञानं प्रथमं पुरस्तादिति । ( त्य ) असौ वाऽआदित्यो ब्रह्मा-ऽहरहः पुरस्ताज्जायते वि सीमतः सुरुचो वेनऽआवरिति मध्यं वै सीमेमे लोकाः सुरुचोऽसावादित्यो वेनो यद्धै प्रजिजनिषमाणोऽवेनत्तस्माद्वेनस्ता-नेष सीमतो मध्यतो विवृण्वन्नुदेति स बुध्न्याऽउपमाऽअस्य विष्ठाऽइति दिशो वाऽअस्य बुध्न्याऽउपमा विष्ठास्ता ह्येषऽउपवितिष्ठते सतश्च योनिमसतश्च विवरितीमे वै लोकाः सतश्च योनिरसतश्च यच्च ह्यस्ति यच्च न तदेभ्यऽएव लोकेभ्यो जायते त्रिष्टुभोपदधाति त्रैष्टुभो ह्येष साद-यित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ १४ ॥

---

कामा हि देवाः । तद्यत्पुष्करपर्णं उपदधाति—यमेवास्मै तमापो रसं समुदौहन् । यामस्मै पुरमकुर्वन्—तस्मिन्नेवैनमेतत्प्रतिष्ठापयति ॥ १३ ॥

"ब्रह्म जज्ञानं प्रथमं पुरस्ताद्"—इति । असौ वाऽआदित्यो—ब्रह्माहरहः पुरस्ताज्जायते । "वि सीमतः सुरुचो वेन आवः"—इति । मध्यं वै सीमा । इमे लोकाः सुरुचः । असावादित्यो वेनः । यद्धै प्रजिजनिषमाणोऽवेनत्—तस्माद्वेनः । तानेष सीमतो मध्यतो विवृण्वन्नुदेति । "स बुध्न्या उपमा अस्य विष्ठाः"—इति । दिशो वाऽअस्य बुध्न्या उपमा विष्ठाः । ता ह्येष उपवितिष्ठते । "सतश्च योनिमसतश्च विवः"—( वा० सं० १३ । ३ ) इति । इमे वै लोकाः सतश्च योनिरसतश्च—यच्च ह्यस्ति, यच्च न । तदेभ्य एव लोकेभ्यो जायते । त्रिष्टुभोपदधाति । त्रैष्टुभो ह्येषः । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ १४ ॥

---

'आसीत्,' 'तमूर्ध्वं समुदौहन्' समुदक्षिपन् । तमेव रसं पुष्करपर्णात्मना परिणतं निवासस्थानम् 'अकुर्वन्' यस्मादेवं पूरक्रियत तस्मात् तस्य पुष्करमिति नाम संपन्नम् । पूः क्रियतेऽनेनेति व्युत्पत्तेः 'पूष्करम्' इति प्रयोक्तव्ये 'पुष्करम्' इति प्रयोगस्तु पारोक्ष्यकरणायेति संग्रहेणार्थः । एवं पुष्करनामनिर्वचनं कृत्वा प्रकृते योजयति—तद्यत्पुष्करपर्णं इति । 'अस्मै' इन्द्राय 'यमेव तम्' 'रसम्' 'आपः' पुरा 'समुदौहन्' समुत्क्षिप्तवत्यः, तदनन्तरमस्मा एवेन्द्राय 'यां' 'पुरम्' पुष्करपर्णात्मिकाम् 'अकुर्वन्' 'तस्मिन्नेव' उभयरूपे स्वाश्रये रुक्मरूपेणावस्थितमिन्द्रशब्दाभिधेयम् 'एनम्' सूर्यम् 'एतद्' एतेन 'प्रतिष्ठापयति' इत्यर्थः ॥ १३ ॥

तस्मिन् रुक्मोपधाने मन्त्रं दर्शयति—ब्रह्म जज्ञानमिति[1] । ननु षड्भावविकाररहितमौपनिषदं 'ब्रह्म' तत् कथं तस्य जनिक्रियायोगो मन्त्रपदेन प्रतिपाद्यत इत्याशङ्क्य व्याचष्टे—असौ वा आदित्य इति । अत्र प्रादुर्भाव एव जनेरर्थो न तूत्पत्तिः । अयमर्थः—तदुक्तविधं ब्रह्म सगुणं सद् 'असौ' द्युलोकस्थ 'आदित्यो'—भूत्वा प्रत्यहं 'पुरस्तात्' पूर्वस्यां दिशि 'जायते' उदेति । 'जज्ञानम्' इति जनेर्लिटः कानजादेशे ( पा. सू. ३ । २ । १०६ । ) रूपम् ॥

---

१—तस्मिन्नुक्ममधः पिण्डं ब्रह्म जज्ञानमिति । का० श्रौ० सू० । १७ । ७४ ।

(रु) अथ पुरुषमुपदधाति । स प्रजापतिः सोऽग्निः स यजमानः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरग्निरमृतꣳ हिरण्यममृतमग्निः पुरुषो भवति पुरुषो हि प्रजापतिः ॥ १९ ॥

---

## अथ पुरुषेष्टकोपधानम् ।

अथ पुरुषमुपदधाति । स प्रजापतिः, सोऽग्निः, स यजमानः । स हिरण्मयो भवति । ज्योतिर्वै हिरण्यम्, ज्योतिरग्निः । अमृतं हिरण्यम्, अमृतमग्निः । पुरुषो भवति । पुरुषो हि प्रजापतिः ॥ १९ ॥

---

द्वितीयपादे क्रमेण पदार्थानाह—मध्ये वा इति । 'सीमतः' इति पदे यत् सीमेति प्रातिपदिकं तन्मध्यमाचष्टे । सुष्ठु रोचन्ते सवितृप्रकाशेन दीप्यन्त इति 'सुरुचः' पृथिव्यादिलोकाः । "असावादित्यो वेनः"—इति यद् वेनोऽसावुच्यते, तन्नामनिर्वचनं करोति—यद्वा इति । यस्मात् कारणात्—'प्रजिजनिषमाणः' प्रजनितुं प्रादुर्भवितुमुदेतुमिच्छन् 'अवेनत्' कान्तियुक्तोऽभवत् तस्मात् वेनति दीप्यत इति 'वेनः' इति सूर्यस्य नाम सम्पन्नम् । अत एव यास्कोऽप्याह स्म—"वेनो वेनतेः कान्तिकर्मणः"—इति ( निरु. १०।४ । १ ) । इत्थं पदार्थानुक्त्वा वाक्यार्थमाह—तानेष इति । 'तान्' सुरुक्छन्दाभिधेयान् पृथिव्यादिलोकान् 'एषः' सूर्यः 'सीमतो' 'मध्यतो' 'व्यावः' व्यावृणोत् उदयेन प्रकाशितवान् । वृणोतेर्लुङि, "मन्त्रे घस"—( पा. सू. २ । ४ । ८० ) इत्यादिना च्लेर्लुक् । "छन्दस्यपि दृश्यते"—( पा. सू. ६ । ४ । ७३ ) इत्याडागमः । एतस्य पदस्योक्तार्थपरतां व्याचष्टे—विवृण्वन्नुदेतीति ॥

तृतीयपादमनूद्य व्याचष्टे—स बुध्न्या इति । बुध्नो मूलं तत्र भवाः 'बुध्न्याः' पादाः ते च 'अस्य' सूर्यस्य दिगात्मका रश्मिप्रसरणहेतुत्वात् । 'ताः' बुध्न्यशब्दाभिधेया दिशः । उप समीपे स्वगतिभेदेन निर्मिमीत इति 'उपमाः' सूर्यः तथा ताः 'दिशो' ऽनुलक्ष्य 'वितिष्ठते' विविधं पूर्वपश्चिमादिदिग्भेदहेतुत्वेनावतिष्ठत इति 'विष्ठाः' । तिष्ठतेर्माङश्च "आतो मनिन्"—( पा. सू. ३ । २ । ७४ । ) इति विच्, एवम्भूतः सूर्यः 'सतः' लोकत्रयात्मकस्य भावरूपस्य 'असतः' अभावात्मकस्य च 'योनिम्' उत्पत्तिस्थानं 'विवः' विवृणोति । सदसच्छब्दयोर्भावाभावपरतां व्याचष्टे—यच्च ह्यस्ति यच्च नेति । छन्दोद्वारेण प्रशंसति—त्रिष्टुभेति । त्रैष्टुभो ह्येष इति । "गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षम्"—( तै. सं. ९ । २ । १ ) इत्यादिश्रुतेः । द्वितीयस्थानत्वाच्चान्तरिक्षस्य त्रिष्टुप्सम्बन्धः, तत्र संचरत्त्रिष्टुप्छन्दस इन्द्रेण सहोत्पत्तेश्च इन्द्रात्मक एष सूर्योऽपि त्रैष्टुभः । सादयित्वेत्यादि—व्याख्यातम् ॥ १४ ॥

रुक्ममध्ये हिरण्मयपुरुषस्योपधानं विधत्ते—अथ पुरुषमिति । स प्रजापतिरित्यादि । 'सः' उपधेयः पुरुषः 'प्रजापतिः' स्थूलप्रपञ्चाभिमानी विराडात्मकः, 'सः' एव 'अग्निः' सूक्ष्मप्रपञ्चाभिमानी हिरण्यगर्भात्मकः, यजमानस्य तद्रूपप्राप्तेर्यजमानात्मकोऽपि 'सः' इत्यर्थः । तस्य हिरण्यविकृतित्वं विधाय स्तौति—स हिरण्मय इति । ज्योतिर्वा इति । भास्वररूपोपेतत्वाज्ज्योतिरात्मकं हिरण्यम् । तथाऽत्यन्ताग्निसंयोगेऽपि समुच्छित्तिविरहाद् 'अमृतम्' अमरणस्वभावं 'हिरण्यम्' । चीयमानः 'अग्निः' अपि एतदुभयात्मक इति हिरण्मयत्वं युक्तमित्यर्थः । पुरुषरूपतामनूद्य प्रतिपादयति—पुरुषो भवतीति । 'हि' यस्माच्चित्याग्निरूपेण संस्कर्त्तव्यः 'प्रजापतिः' पुरुषविधस्तत्प्रतिरूपत्वाद्धिरण्मयस्योपधेयस्य पुरुषाकृतिर्युक्तेत्यर्थः ॥ १९ ॥

( सु ) यद्वेव पुरुषमुपदधाति । प्रजापतेर्विस्रस्ताद्रम्या तनूर्मध्यत ऽउदक्रामत्तस्यामेनमुत्क्रान्तायां देवा ऽ अजहुस्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेताꣳ रम्यां तनूं मध्यतोऽदधुस्तस्यामस्य देवा ऽअरमन्त तद्यदस्यैतस्याꣳ रम्यायां तन्वां देवा ऽअरमन्त तस्माद्धिरम्यꣳ हिरम्यꣳ ह वै तद्धिरण्यमित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तथैवास्मिन्नयमेताꣳ रम्यां तनूं मध्यतो दधाति तस्यामस्य देवा रमन्ते प्राणो वाऽअस्य सा रम्या तनूः प्राणमेवास्मिन्नेतं मध्यतो दधाति ॥ १६ ॥

---

यद्वेव पुरुषमुपदधाति । प्रजापतेर्विस्रस्ताद्रम्या तनूर्मध्यत उदक्रामत् । तस्यामेनमुत्क्रान्तायां देवा अजहुः । तं यत्र देवाः समस्कुर्वन्–तदस्मिन्नेतां रम्यां तनूं मध्यतोऽदधुः । तस्यामस्य देवा अरमन्त । तद्यदस्यैतस्यां रम्यायां तन्वां देवा अरमन्त–तस्माद्धिरम्यम् । हिरम्यं ह वै तद्धिरण्यमित्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः । तथैवास्मिन्नयमेतां रम्यां तनूं मध्यतो दधाति । तस्यामस्य देवा रमन्ते । प्राणो वाऽअस्य सा रम्या तनूः । प्राणमेवास्मिन्नेतं मध्यतो दधाति॥ १६॥

---

एतदेव पुरुषोपधानमनूद्य मनःप्राणाद्यात्मकसूक्ष्मशरीरस्थापनरूपेण स्तौति–यद्वेवेति । प्रजापतेर्विस्रस्तादित्यादि । 'प्रजापतिः' हि पुरा विस्रस्तशरीरोऽभूत् । तथाविधात्तस्माद्रमणीया ज्ञानक्रियाशक्तिरूपा सूक्ष्मा 'तनूः' 'मध्यतः' शरीरमध्याद् 'उदक्रामत्' ऊदूर्ध्वं निरगमत् । 'तस्याम्' ऊर्ध्वं निष्क्रान्तायां सत्याम् 'एनम्' प्रजापतिं चक्षुराद्यभिमानि–'देवाः' आदित्यादयः 'अजहुः' अत्यजन् । "ओहाक् त्यागे"–( धा. पा. जु. प. ८ ) इति धातुः । 'तं' तथाविधं प्रजापतिं 'देवाः' तत्पुत्राः 'यत्र' यस्मिन् प्रदेशे 'समस्कुर्वन्' चित्याग्निरूपेण संस्कृतवन्तः । "अडभ्यासव्यवायेऽपि"–( पा. सू. ६ । १ । १४० । वा. १ ) इति कात् पूर्वः सुट् । 'तत्' तत्र 'अस्मिन्' प्रजापतौ 'एताम्' निष्क्रान्तां 'रम्याम्' 'तनूम्' 'मध्यतोऽदधुः' स्थापयाञ्चक्रुः । 'अस्य' प्रजापतेः 'तस्याम्' तन्वाम् पुरा निष्क्रान्ता इन्द्रियदेवताः 'अरमन्त' पुनः प्रविश्यातिष्ठन्नित्यर्थः । उक्तार्थोपजीवनेन हिरण्यनामनिर्वचनं करोति–तद्यदस्येति । 'एतस्यां' हितायां स्थापितायां ज्ञानक्रियाशक्त्युपेतत्वेन रमणीयायांतन्वां यस्माद् 'देवा अरमन्त; तस्मात्' हितेऽस्मिन् रमत इति व्युत्पत्त्या 'हिरम्यम्' इति नाम सम्पन्नम्, तदेव पारोक्ष्येण हिरण्यमित्युच्यते, पृषोदरादित्वाद्रूपसिद्धिः ( पा. सू. ६ । ३ । १०९ ) इति । अत एव "हिरण्यं कस्मात्"–इति प्रक्रम्योक्तं यास्केन "हितरमणं भवति इति वा" ( निरु. २ । २ । २ ) इति । एवं पुराकल्पमभिधाय प्रकृते योजयति–तथैवास्मिन्नित्यादिना । 'अयम्' यजमानः । शिष्टं स्पष्टम् । का पुनरसौ रम्या तनूरिति तामाह–प्राणो वा अस्येति । प्राणापानादिपञ्चवृत्त्यात्मकः क्रियाशक्त्यात्मकः 'प्राणः' 'अस्य' प्रजापतेरेव 'रम्या तनूः' अतस्तत्स्थापनमेव कृतं भवतीत्यर्थः ॥ १६ ॥

तꣳ रुक्मऽउपदधाति । ( त्य ) असौ वाऽआदित्यऽएष रुक्मोऽथ यऽएषएतस्मिन्मण्डले पुरुषः सऽएष तमेवैतदुपदधाति ॥ १७ ॥

( त्यु ) उत्तानमुपदधाति । ( त्ये ) एतद्वै देवाऽअब्रुवन्यदि वाऽइमावर्वाञ्चाऽउपधास्यामः सर्वमेवेदं प्रधक्ष्यतो यद्यु पराञ्चौ पराञ्चावेव तप्स्यतो यद्यु सम्यञ्चावन्तरेवैतावेतज्ज्योतिर्भविष्यत्यथोऽअन्योऽन्यꣳ हिꣳसिष्यतऽइति तेऽर्वाञ्चमन्यमुपादधुः पराञ्चमन्यꣳ सऽएष रश्मिभिरर्वाङ् तपति रुक्मः प्राणैरेषऽऊर्ध्वः पुरुषः प्राञ्चमुपदधाति प्राङ्ह्येषोऽग्निश्चीयते ॥ १८ ॥

---

तं रुक्मऽउपदधाति । असौ वाऽआदित्य एष रुक्मः । अथ य एष एतस्मिन्मण्डले पुरुषः—स एषः । तमेवैतदुपदधाति ॥ १७ ॥

उत्तानमुपदधाति । एतद्वै देवा अब्रुवन्—यदि वाऽइमावर्वाञ्चाऽउपधास्यामः—सर्वमेवेदं प्रधक्ष्यतः । यद्यु पराञ्चौ । पराञ्चावेव तप्स्यतः । यद्यु सम्यञ्चौ । अन्तरेवैतावेतज्ज्योतिर्भविष्यति । अथोऽन्योऽन्यं हिंसिष्यत इति । तेऽर्वाञ्चमन्यमुपादधुः, पराञ्चमन्यम् । स एष रश्मिभिरर्वाङ् तपति रुक्मः । प्राणैरेष ऊर्ध्वः पुरुषः । प्राञ्चमुपदधाति । प्राङ् ह्येषोऽग्निश्चीयते ॥ १८ ॥

---

तस्य पुरुषोपधानस्याधारविशेषं विधाय स्तौति—तं रुक्म इति । यो 'रुक्मः' पुष्करपर्णे उपहितस्तस्य मध्ये 'तम्' हिरण्मयं पुरुषमुपदध्यात् । आदित्यमण्डलात्मको ह्येष 'रुक्मः' आदित्यमण्डलमध्ये यो हिरण्मयः पुरुष आस्ते । अत एव श्रूयते—"एषोऽन्तरादित्ये हिरण्मयः पुरुषः"—इति । "हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः"—इति च । स एवैष उपधीयमानो हिरण्मयः पुरुषो रुक्मरूपे आदित्यमण्डले तमेव पुरुषमुपहितवान् भवतीत्यर्थः ॥ १७ ॥

तत्रोपधाने पुरुषस्योपरिमुखत्वं विधत्ते—उत्तानमुपदधातीति । एतदेवोपरिष्टान्मुखत्वमाख्यायिकया प्रतिपादयति—एतद्वै देवा इत्यादिना । 'यदि' खलु 'इमौ' रुक्मपुरुषौ 'अर्वाञ्चौ' अधोमुखौ 'उपधास्यामः' उभयोस्तेजसोः संसृष्टत्वेन प्रबलतरौ अधोमुखं 'सर्वमेवेदम्' जगत् 'प्रधक्ष्यतः' प्रदग्धं करिष्यतः । एतद्दोषपरिहारार्थं 'यदि' खलु 'एतौ' 'पराञ्चौ' पराङ्मुखौ, ऊर्ध्वमुखौ उपधास्यामस्तथा सति 'पराञ्चावेव' पराङ्मुखावेव सन्तौ 'तप्स्यतः' सूर्यमण्डलाद् ये उपरितना लोकास्तत्रैव सूर्यप्रकाशः स्यान्न त्वधस्तनेषु लोकेष्वित्यर्थः । प्रधक्ष्यत इति प्रपूर्वाद्दहतेर्लृटस्तसादेशः, 'तप्स्यतः' इति "तप सन्तापे"—( धा. पा. भ्वा. प. १०१० ) इत्यस्मात् । 'यदि' तर्हि 'सम्यञ्चौ' परस्पराभिमुखौ तौ रुक्मपुरुषावुपदध्यामस्तदा 'एतावन्तरैव' एतयोर्मध्ये एव तदीयं 'ज्योतिर्भविष्यति' तथा च व्यवधानादुपरितनानधस्तनांश्च लोकान्न प्रकाशयेताम् । 'अथो' अपि च 'अन्योन्यं हिंसिष्यतः' रुक्मस्य ज्योतिषा पुरुषज्योतिः प्रतिहन्येत, तेन च रुक्मज्योतिरिति परस्परहिंसेत्यर्थः । कथं तर्हि तावुपधेयाविति तत्राह—तेऽर्वाञ्चमिति । 'ते' देवाः 'अन्यम्'

हि॒र॒ण्य॒ग॒र्भः स॒म॒व॒र्त्त॒ता॒ग्र॒ऽइ॒ति । हि॒र॒ण्य॒ग॒र्भो॑ ह्ये॒ष स॒म॒व॒र्त्त॒ता॒ग्रे॒ भू॒तस्य॒ जा॒तः प॒ति॒रे॒कऽआ॒सी॒दि॒त्ये॒ष ह्य॒स्य स॒र्व॒स्य भू॒तस्य॒ जा॒तः प॒ति॒रे॒कऽआ॒सी॒त्स दा॒धा॒र पृ॒थि॒वीं द्यामु॒तेमा॒मि॒त्ये॒ष वै दि॒वं च॒ पृ॒थि॒वीं च॒ दा॒धा॒र क॒स्मै दे॒वा॒य ह॒वि॒षा वि॒धे॒मे॒ति प्र॒जा॒प॒ति॒र्वै क॒स्त॒स्मै ह॒वि॒षा वि॒धे॒मे॒त्ये॒त॒त् ॥१९॥

(द्र) द्र॒प्स॒श्च॒स्क॒न्द पृ॒थि॒वी॒मनु॒ द्या॒मि॒ति । (त्य) अ॒सौ वा॒ऽआ॒दि॒त्यो द्र॒प्सः स दि॒वं च॒ पृ॒थि॒वीं च॒ स्क॒न्द॒ती॒त्य॒मू॒मि॒ती॒मा॒मि॒मं च॒ यो॒नि॒मनु॒ य॒श्च पूर्वं

---

" हिरण्यगर्भः समवर्त्तताग्रे "–इति । हिरण्यगर्भो ह्येष समवर्त्तताग्रे । " भूतस्य जातः पतिरेक आसीत् "–इति । एष ह्यस्य सर्वस्य भूतस्य जातः पतिरेक आसीत् । " स दाधार पृथिवीं द्यामुतेमाम् "–इति । एष वै दिवं च पृथिवीं च दाधार । " कस्मै देवाय हविषा विधेम "–( वा. सं. १३ । ४ ) इति । प्रजापतिर्वै कः । तस्मै हविषा विधेमेत्येतत् ॥ १९ ॥

" द्रप्सश्चस्कन्द पृथिवीमनु द्याम् "–इति । असौ वाऽआदित्यो द्रप्सः । स दिवं च

---

एकं सूर्यमण्डलात्मकं रुक्मम् ' अर्वाञ्चम् ' अधस्तान्निर्बाधम् ' उपादधुः ' ' अन्यं ' पुरुषं ' पराञ्चं ' पराङ्मुखमुत्तानमुपादधुरित्यनुषङ्गः । यस्मादेवं तस्मादेष मण्डलात्मकः सूर्यो ' रश्मिभिः ' किरणैः ' अर्वाङ् ' अधोमुखः ' तपति ' । स एव रुक्मात्मकः एषः प्राणात्मको मण्डलान्तरवर्त्ती ' पुरुषः ' प्राणिनां ' प्राणैः ' सह ' ऊर्द्ध्वः ' वर्त्तते । अत एवान्यत्राम्नातम्–" योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति "–( तै. आ. १ । १४ । १ ) इति । तस्य प्राङ्मुखत्वं विधाय स्तौति–प्राञ्चमिति । ' तम् ' उत्तानं पुरुषं ' प्राञ्चम् ' प्राङ्मुखमुपदध्यात् । ' हि ' यस्मादेव प्राङ्मुखः प्राक्छिरस्कः ' चीयते ' तस्माद्धिरण्मयपुरुषस्यापि तथात्वं युक्तम् । पुष्करपर्णोपधानं प्रस्तुत्य एतत् सर्वं कात्यायनोऽप्यसूत्रयत्–" तस्मिन्रुक्ममधःपिण्डं ब्रह्मजज्ञानमिति, उत्तानं प्राञ्चं हिरण्यपुरुषं तस्मिन् हिरण्यगर्भ इति "–( का. श्रौ. सू. १७ । ७४ । ७९ ) हिरण्यगर्भो द्रप्सश्चस्कन्देति द्वाभ्यां हिरण्मयपुरुषमुपदध्यादिति सूत्रार्थः ॥ १८ ॥

प्रथमां पादशोऽनूद्य व्याचष्टे–हिरण्यगर्भ इत्यादिना । हिरण्यगर्भो ह्येष इति ' एषः ' हिरण्यपुरुषः सूर्यमण्डलान्तर्वर्ती हिरण्यगर्भः, अपञ्चीकृतभूततत्कार्याभिमानी परमेश्वरो हि हिरण्यगर्भः, स च हिरण्मयाण्डमध्ये गर्भवदवस्थानात् ' हिरण्यगर्भः ' इत्युच्यते । अयम् ' अग्रे ' सृष्ट्यादौ हिरण्यगर्भाख्यः प्रजापतिः प्रथमं ' समवर्त्तत ' प्रथमशरीरी जात इत्यर्थः । अत एवान्यत्र श्रूयते–" स वै शरीरी प्रथमः स वै पुरुष उच्यते "–इति । एष ह्यस्येत्यादि । ' एषः ' खलु हिरण्यगर्भः ' अस्य ' ' सर्वस्य ' भूतभौतिकात्मकस्य कृत्स्नस्य जगतः जातावस्थ एव सन् ' एकः ' असाधारणः ' पतिः ' नियन्ता ' आसीत् ' । एष वै दिवं चेत्यादि । ' एषः ' खल्वादित्यात्मको हिरण्यगर्भो ' दिवम् ' द्युलोकं ' पृथिवीम् ' भूमिं च प्रकाशनवर्षणादिव्यापारेण ' दाधार ' धृतवान् । कस्मै देवायेति । किंशब्दादिह निरुक्तानिरुक्तकृत्स्नजगदात्मकत्वादीदृग्रूप इति निर्वक्तुमशक्यः प्रजापतिरेवोच्यत इत्याह–प्रजापतिर्वै क इति ॥ १९ ॥

द्वितीयामृचमनूद्य व्याचष्टे–द्रप्सश्चस्कन्देति । असौ वा आदित्य इत्यादि । द्रवानुदबिन्दून् किरणैः

  

ऽइतीमं च लोकममुं चेत्येतदथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयतेति समानं योनिमनु संचरन्तमिति समानꣳ ह्येषऽएतं योनिमनु संचरति द्रप्सं जुहोम्यनु सप्त होत्राऽइत्यसौ वाऽआदित्यो द्रप्सो दिशः सप्त होत्रा असुं तदादित्यं दिक्षु प्रतिष्ठापयति ॥ २० ॥

द्वाभ्यामुपदधाति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष सादयित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ २१ ॥

---

पृथिवीं च स्कन्दति । इत्यमूम्, इतीमाम् । " इमं च योनिमनु यश्च पूर्वः "–इति । इमं च लोकममुं चेत्येतत् । यच्चेदमेतर्हि चीयते, यच्चादः पूर्वमचीयतेति । " समानं योनिमनु सञ्चरन्तम् "–इति । समानं ह्येष एतं योनिमनु संचरति । " द्रप्सं जुहोम्यनु सप्त होत्राः "–( वा. सं. १३ । ५ ) इति । असौ वाऽआदित्यो द्रप्सः, दिशः सप्त होत्राः । अमुं तदादित्यं दिक्षु प्रतिष्ठापयति ॥ २० ॥

द्वाभ्यामुपदधाति । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतदुपदधाति । त्रिष्टुब्भ्याम् । त्रैष्टुभो ह्येषः । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ २१ ॥

---

प्साति भक्षयतीति ' द्रप्सः, ' ' असौ ' ' आदित्यः ' । ' सः ' ' दिवं च ' ' पृथिवीञ्च ' ' स्कन्दति ' गच्छति शोषयति वा । " स्कन्दिर् गतिशोषणयोः "–( धा. पा. भ्वा. प. १००९ ) इति धातुः । स्कन्दनप्रकारविशेषमभिनयेन दर्शयति–इत्यमूमितीमामिति । ' इति ' अनेनोर्ध्वगमनप्रकारेण ' अमूम् ' दिवं व्याप्नोति । 'इति' अनेन प्रकारेणाधोमुखैः किरणैः प्रकाशनेन 'इमां' पृथिवीं व्याप्नोतीत्यर्थः ।

द्वितीयपादमनूद्य व्याचष्टे–इमञ्च योनिमिति । ' इमं ' च आहवनीयाख्यं ' योनिं ' ' यश्च पूर्वः ' चितो गार्हपत्याख्यः । तदुभयं द्यावापृथिव्यात्मकमसावादित्यो व्याप्नोतीत्येतदर्थपरतां व्याचष्टे–इमं च लोकमिति । लोकद्वयरूपतामुक्त्वा चितिद्वयरूपतामाह–अथो इति । अपि च ' एतर्हि ' एतस्मिन् समये ' यद् ' ' इदम् ' ' चीयते ' आहवनीयाख्यं स्थानम्, ' यच्चादः ' विप्रकृष्टं गार्हपत्याख्यं स्थानं ' पूर्वमचीयत ' एतदुभयं हिरण्मयपुरुषरूपः सूर्यो व्याप्नोतीत्यर्थः ॥

तृतीयपादमनूद्य व्याचष्टे–समानं योनिमिति । समानं ह्येष इति । ' एषः ' सूर्यः ' समानम् ' एकविधम् ' एतम् ' ' योनिम् ' स्थानम्, ' अनु '–लक्ष्य ' सञ्चरति ', प्राच्यां दिशि उदयेनैकेनैव मार्गेण प्रतिदिवसं सञ्चरतीत्यर्थः ॥

चतुर्थपादमनूद्य व्याचष्टे–द्रप्सं जुहोमीति । तं सञ्चरन्तं ' द्रप्सम् ' प्राच्यां दिश्युद्यन्तं तद्व्यतिरिक्तासु सप्तसु दिक्षु ' जुहोमि ' प्रतिष्ठापयामि । लक्षणे अनोः कर्मप्रवचनीयत्वम् ( पा. सू. १ । ४ । ९० ) । " कर्मप्रवचनीययुक्ते द्वितीया "–( पा. सू. २ । ३ । ८ ) इति होत्राशब्दाद् द्वितीया ॥ २० ॥

मन्त्रद्वित्वमनूद्य स्तौति–द्वाभ्यामिति । व्याख्यातचरमेतत् । मन्त्रगतच्छन्दोद्वारेण स्तौति–त्रिष्टुब्भ्यामिति । आदित्यस्य त्रैष्टुभत्वं प्राक्प्रतिपादितम् । सादयित्वेत्यादिकं प्रागुक्तार्थम् ॥ २१ ॥

( र ) अथ साम गायति । ( त्ये ) एतद्वै देवाऽएतं पुरुषमुपधाय तमेतादृशमेवापश्यन्यथैतच्छुष्कं फलकम् ॥ २२ ॥

(न्ते) तेऽब्रुवन् । ( ब्रु ) उप तज्जानीत यथाऽस्मिन्पुरुषे व्वीर्य्यं दधामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथा ऽस्मिन्पुरुषे व्वीर्य्यं दधामेति ॥ २३ ॥

ते चेतयमानाः । (ऽ) एतत्सामापश्यंस्तदगायंस्तदस्मिन्वीर्य्यमदधुस्तथैवास्मिन्नयमेतद्दधाति पुरुषे गायति पुरुषे तद्वीर्य्यं दधाति चित्रे गायति सर्व्वाणि हि चित्राण्यग्निस्तमुपधाय न पुरस्तात्परीयान्नेन्माऽयमग्निर्हिनसदिति ॥ २४ ॥

---

### चित्रसामगानम् ।

अथ साम गायति । एतद्वै देवाऽएतं पुरुषमुपधाय तमेतादृशमेवापश्यन्–यथैतच्छुष्कं फलकम् २२

तेऽब्रुवन्–उप तज्जानीत–यथाऽस्मिन्पुरुषे वीर्यं दधामेति । तेऽब्रुवन्–चेतयध्वमिति–चितिमिच्छतेति वाव तदब्रुवन् । तदिच्छत–यथाऽस्मिन्पुरुषे वीर्यं दधामेति ॥ २३ ॥

ते चेतयमाना एतत्सामापश्यन् । तदगायन् । तदस्मिन्वीर्यमदधुः । तथैवास्मिन्नयमेतद्दधाति । पुरुषे गायति । पुरुषे तद्वीर्यं दधाति । चित्रे गायति । सर्वाणि हि चित्राण्यग्निः । तमुपधाय न पुरस्तात्परीयात्–नेन्माऽयमग्निर्हिनसदिति ॥ २४ ॥

---

पुरुषोपधानाङ्गत्वेन सामगानं विधत्ते–अथ साम गायतीति । 'अथ'–शब्दो हिरण्मयपुरुषोपधानानन्तर्ये । तस्य सामगायनस्य पुरुषगतवीर्याधानहेतुत्वमाख्यायिकया प्रतिपादयति–एतद्वा इत्यादिना । एतस्मिन् खलु समये 'देवाः' 'पुरुषं' हिरण्मयम् 'उपधाय' 'तम्' पुरुषम् 'एतादृशमेव' एवंरूपमेव 'अपश्यन्' । कीदृशमिति तदाह–यथैतदिति । 'यथा' खलु 'एतत्' 'शुष्कम्' नीरसं 'फलकम्' काष्ठमयम्, तद्वन्निर्वीर्यमेवापश्यन्नित्यर्थः ॥ २२ ॥

ततः 'ते' देवाः अन्योऽन्यम् 'अब्रुवन्' 'यथाऽस्मिन् पुरुषे' 'वीर्यम्' प्राणादिलक्षणं 'दधाम' स्थापयाम, तत्प्रकारं हे देवाः ! यूयम् 'उपजानीत' । एवमालोच्य 'ते' देवाः पुनः 'अब्रुवन्' उपज्ञाहेतुत्वेन 'चेतयध्वमिति' । एतद्वाक्यं श्रुतिः स्वयं व्याचष्टे–चितिमिच्छतेति । चितिरत्र ज्ञानविशेषः । किमर्थं चेतयध्वमिति प्रार्थ्यत इत्याशङ्क्य तस्य प्रयोजनमुक्तम्–तदिच्छतेति । 'यथा' खलु 'अस्मिन्' शुष्कफलकवन्नीरसे 'पुरुषे' 'वीर्यम्' स्थापयाम तमुपायमिच्छतेत्यर्थः ॥ २३ ॥

एवं परस्परमालोच्य 'चेतयमानाः' मीमांसमानाः 'ते' देवाः वीर्याधानार्थम् 'एतत् सामापश्यन्' । दृष्ट्वा च 'तत्' साम 'अगायन्' तेन च 'अस्मिन्' हिरण्मयपुरुषे वीर्यम् 'अस्थापयन्' । इत्थं साम-

( त्यु ) अ॒थ स॒र्पना॒मैरु॒पति॑ष्ठते । ( त ) इ॒मे वै॒ लो॒काः स॒र्पास्ते॒ हा॒नेन॒ स॒र्व्वेण॒ स॒र्पन्ति॒ य॒दि॒दं किं॒ च स॒र्व्वेषा॒मु॒ है॒षु दे॒वाना॒मा॒त्मा य॒द॒ग्निस्ते॒ दे॒वाऽ ए॒त॒मा॒त्मा॒नमु॒प॒धा॒या॒बिभयु॒र्यद्वै॒ नऽ इ॒मे लो॒काऽ अ॒ने॒ना॒त्म॒ना न स॒र्पे॒यु॒रि॒ति ॥ २५ ॥

त॒ऽए॒ता॒नि स॒र्पना॒मा॒न्य॒पश्यन् । ( इयँस्तै ) तै॒रु॒पा॒ति॒ष्ठन्त तैरस्मा॒ऽइ॒माँल्लो॒का॒नस्था॒प॒यं॒स्तै॒रन॒म॒य॒न्य॒दन॒मयं॒स्त॒स्मा॒त्स॒र्प॒ना॒मा॒नि त॒थै॒वै॒त॒द्य॒ज॒मा॒नो य॒त्स॒र्प॒ना॒मै॒रु॒प॒ति॒ष्ठ॒तऽइ॒मा॒ने॒वा॒स्माऽए॒त॒ल्लो॒का॒न्त्स्था॒प॒य॒ती॒माँल्लो॒का॒न्न॒म॒य॒ति त॒थो हा॒स्यै॒त॒ऽए॒ते॒ना॒त्म॒ना न॒ स॒र्पन्ति ॥ २६ ॥

---

अथ सर्पनामैरुपतिष्ठते । इमे वै लोकाः सर्पाः । ते हानेन सर्वेण सर्पन्ति–यदिदं किं च । सर्वेषामु हैष देवानामात्मा–यदग्निः । ते देवा एतमात्मानमुपधाय–अबिभयुः–यद्वै न इमे लोका अनेनात्मना न सर्पेयुरिति ॥ २५ ॥

तऽएतानि सर्पनामान्यपश्यन् । तैरुपातिष्ठन्त । तैरस्माऽइमाँल्लोकानस्थापयन् । तैरनमयन् । यदनमयन् तस्मात्सर्पनामानि । तथैवैतद्यजमानो यत्सर्पनामैरुपतिष्ठते–इमानेवास्माऽएतल्लोकान्त्स्थापयति । इमाँल्लोकान्नमयति । तथो हास्यैतऽएतेनात्मना न सर्पन्ति ॥ २६ ॥

---

गायनस्य वीर्याधानहेतुतामाख्यायिकया प्रतिपाद्य तद्दृष्टान्तेनेदानीमपि पुरुषसामगायनस्य तद्धेतुतामाह–तथैवास्मिन्निति । यथा देवाः ' तथैव अयम् ' यजमानः, सिद्धमन्यत् । पुरुषे गायतीति । ' पुरुषे ' अन्वारब्धे सति ' तत् ' साम गातव्यं ' तत् ' तथा सति तस्मिन् हिरण्मयपुरुषे सामलक्षणं ' वीर्यम् ' स्थापितवान् भवति । चित्रे गायतीति । चित्रलिङ्गके मन्त्रे " चित्रं देवानाम् "–इत्यादिके । तदुक्तं कर्कभाष्ये–" पुरुषे चित्रे साम गायति "–इति कात्यायनेन पुरुष इति सप्तमीनिर्देशादालब्धे ' पुरुषे ' ' चित्रे ' चित्रलिङ्गके मन्त्रे साम ' गायति ' ( का. श्रौ. सू. १७ । ७६ ) इति । सर्वाणि हीत्यादि । लोके यावन्ति हि ' चित्राणि ' विचित्ररूपाणि सन्ति तत्सर्वसमुदायरूपश्चित्यः ' अग्निः ' अतश्चित्रे गानं युक्तमिति । तमुपधायेत्यादि । ' तम् ' हिरण्मयपुरुषम् ' उपधाय ' ' न पुरस्तात् परीयात् ' पूर्वस्यां दिशि नातिक्रामेत् । परिगमने हि अयमग्निः ' मा हिनसत् ' मा हिंस्याद् नैव बाधेत । हिनस्तेर्लेटि अडागमः ( पा. सू. ३ । ४ । ९४ ) इति ॥ २४ ॥

अथ यजमानकर्तृकं पुरुषस्योपस्थानं विधत्ते–अथ सर्पनामैरिति । " नमोऽस्तु सर्पेभ्यः "–इत्याद्याः सर्पनामाख्या मन्त्राः । सूत्रितं हि–" उपतिष्ठते यजमानो नमोऽस्त्विति "–( का. श्रौ. सू. १७ । ७८ ) इति । अथैतत् सर्पनामभिरुपस्थानं लोकत्रयस्थापनहेतुत्वेनाख्यायिकया प्रतिपादयति–इमे वै लोका इत्यादिना । ' यदिदम् ' लोकत्रयवर्त्ति किमपि प्राणिजातमस्ति, ' अनेन ' ' सर्वेण ' सह पृथिव्यादयः ' ते ' ' लोकाः ' ' सर्पन्ति ' तस्मात् सर्पणनिमित्तात् सर्पशब्दाभिधेया लोका इत्यर्थः । तथा चित्याग्निरिति यदस्ति एष एव खलु

---

१–पूर्वेणापरीत्यातः । का० श्रौ० सू० १७ । ७७ ।

यद्वेव सर्पनामैरुपतिष्ठते । ( त ) ऽइमे वै लोकाः सर्पा यद्धि किं च सर्पत्येष्वेव तल्लोकेषु सर्पति तद्यत्सर्पनामैरुपतिष्ठते यैवैषु लोकेषु नाष्ट्रा यो व्यध्वरो या शिमिदा तदेवैतत्सर्वꣳ शमयति ॥ २७ ॥

नमोऽस्तु सर्पेभ्यः । ( भ्यो ) ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमऽ इति यऽएवैषु त्रिषु लोकेषु सर्पास्तेभ्यऽ एतन्नमस्करोति ॥ २८ ॥

---

यद्वेव सर्पनामैरुपतिष्ठते । इमे वै लोकाः सर्पाः । यद्धि किञ्च सर्पति—एष्वेव तल्लोकेषु सर्पति । तद्यत्सर्पनामैरुपतिष्ठते—यैवैषु लोकेषु नाष्ट्रा, यो व्यध्वरो, या शिमिदा—तदेवैतत्सर्वं शमयति ॥ २७ ॥

" नमोऽस्तु सर्पेभ्यो, ये के च पृथिवीमनु, येऽअन्तरिक्षे, ये दिवि, तेभ्यः सर्पेभ्यो नमः "—( वा. सं. १३ । ६ ) इति । यऽएवैषु त्रिषु लोकेषु सर्पाः—तेभ्य एतन्नमस्करोति ॥ २८ ॥

---

' सर्वेषां ' ' देवानामात्मा, ' अतस्ते देवाः ' एतमात्मानम् ' हिरण्मयपुरुषम् ' उपधायाबिभयुः ' भयं प्राप्ताः । यद्वै न इत्यादिना भयस्वरूपप्रतिपादनम् । यदि खलु ' नः ' अस्माकम् ' अनेनात्मना ' सह ' इमे ' लोकाः ' न सर्पेयुः '—तर्ह्यस्मदीयस्यात्मनो लोकसम्बन्धविरहादाश्रयो न स्यादित्येवं भीताः ' ते ' देवाः ' एतानि ' " नमोऽस्तु " इत्यादीनि ' सर्पनामानि ' ' अपश्यन् ' । दृष्ट्वा च ' तैः ' उपस्थानं कृतवन्तः । तेन चोपस्थानेन ' अस्मै ' हिरण्मयपुरुषरूपायाग्नये ' इमान् ' पृथिव्यादि—' लोकान् ' ' अस्थापयन् ' । ' तैः ' लोकैः ' अनमयन् ' वशीकृतवन्तः । ' यदनमयन् ' इति सर्पनामाख्यानिर्वचनम्, सर्पाणां नमनहेतुत्वाच्च ' सर्पनामानि ' इत्यर्थः । तथैवैतदित्यादिनाऽऽख्यायिकया सिद्धार्थस्य दार्ष्टान्तिके योजनम्, तच्च व्याख्यातप्रायम् । तथो हास्येति । सर्पनामभिरुपस्थाने सति ' अस्य ' यजमानस्य 'एते' लोकाः ' एतेन ' चित्याग्निरूपेण आत्मना ' न सर्पन्ति ' किन्त्ववतिष्ठन्त इत्यर्थः ॥ २५ ॥ २६ ॥

सर्पनामभिरुपस्थानमनूद्य प्रकारान्तरेण स्तौति—यद्वेवेति । यदिदं ' किञ्च ' स्थावरजङ्गमात्मकं प्राणिजातमस्ति, तत् सर्वम् ' एष्वेव ' लोकेषु ' सर्पति ' चलति अतः सर्पणाधिकरणत्वात् सर्पाः ' लोकाः ' ' तत् ' तथा सति सर्पनामाख्यैर्मन्त्रैः ' उपतिष्ठते ' इति यदस्ति ' तत् ' तेन ' एष्वेव ' लोकेषु वर्तमानं नाष्ट्रादिकं ' शमयति ' । ' नाष्ट्रा ' नाशकारिणी आसुरी प्रजा ' व्यध्वरः ' व्यधनशीलो दन्दशूकादिः । ' शिमिदा ' विषहेतुर्लूतावृश्चिकादिः ॥ २७ ॥

तत्र प्रथमं सर्पनाममन्त्रमनूद्य तात्पर्यं व्याचष्टे—नमोऽस्त्वित्यादिना । य एवैष्विति । 'ये' 'एवैषु' ' त्रिषु ' ' लोकेषु ' ' ये ' सर्पणशीलाः दन्दशूकाद्याः प्राणिनः ' तेभ्य एतन्नमस्करोति ' इति मन्त्रस्य तात्पर्यार्थः । ' पृथिवीमनु ' इति लक्षणे अनोः कर्मप्रवचनीयत्वम् । ( पा. सू. १ । ४ । ८४ ) ( पा. सू. २ । ३ । ८ ) । मन्त्रार्थो निगदसिद्धः ॥ २८ ॥

याऽइषवो यातुधानानामिति । यातुधानप्रेषिता हैके दशन्ति ये वा व्वनस्पतीँ१॥ रनु ॥ ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमऽइति ये चैव व्वनस्पतिषु सर्पा ये चावटेषु शेरते तेभ्यऽएतन्नमस्करोति ॥ २९ ॥

ये वाऽमी रोचने दिवः । ( वो ) ये वा सूर्यस्य रश्मिषु ॥ येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमऽइति यत्र यत्रैते तद्देवेभ्यऽएतन्नमस्करोति नमो नमऽ इति यज्ञो वै नमो यज्ञेनैवैनानेतन्नमस्कारेण नमस्यति तस्माद् ह नायज्ञियं ब्रूयान्नमस्तऽइति यथा हैनं ब्रूयाद्यज्ञस्तऽइति तादृक् तत् ॥३०॥

---

" या इषवो यातुधानानाम् "–इति । यातुधानप्रेषिता हैके दशन्ति । " ये वा वनस्पतीँ१॥ रनु ॥ ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः "–( वा. सं. १३।७ ) इति । ये चैव वनस्पतिषु सर्पाः, ये चाऽवटेषु शेरते, तेभ्य एतन्नमस्करोति ॥ २९ ॥

" ये वाऽमी रोचने दिवो ये वा सूर्यस्य रश्मिषु ॥ येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः "–( वा. सं. १३ । ८ ) इति । यत्र यत्रैते–तद्देवेभ्य एतन्नमस्करोति । नमो नम इति । यज्ञो वै नमः । यज्ञेनैवैनानेतन्नमस्कारेण नमस्यति । तस्माद्ध ह नायज्ञियं ब्रूयात्–'नमस्ते'–इति । यथा हैनं ब्रूयाद् यज्ञस्त इति । तादृक् तत् ॥ ३० ॥

---

द्वितीयं मन्त्रमनूद्य व्याचष्टे–या इषव इति । यातुधानप्रेषिता इति । ' यातुधानैः ' राक्षसैः ' प्रेषिताः ' प्रेरिताः खलु ' एके ' सर्पाः ' दशन्ति ' खादन्ति । " दंश दशने "–( धा. पा. भ्वा. प. १०१४ ) " दंशसञ्जस्वञ्जां शपि "–( पा. सू. ६ । ४ । २९ ) इति नलोपः । अतस्ते ' यातुधानानाम् ' ' इषवो ' बाणाः, ईदृग्विधाश्च ये ' सर्पाः ' ' ये वा वनस्पतीरँनु ' ' अनु '–लक्ष्य वनस्पतिषु वर्त्तन्ते, ' अवटेषु ' बिलेषु ' शेरते, ' ' ये ' सर्पाः ' तेभ्यः सर्पेभ्यो नमः ' ' इति ' अनेन मन्त्रेण नमस्कारः क्रियत इत्यर्थः ॥ २९ ॥

तृतीयं सर्पनाममन्त्रमनूद्य मन्त्रत्रयतात्पर्यं व्याचष्टे–ये वाऽमी इति । सर्वत्र ' वा '–शब्दश्चार्थे । ' दिवो ' द्युलोकस्य सम्बन्धिनि ' रोचने ' रोचमाने स्थाने ' ये ' च ' अमी ' सर्पाः ' सूर्यस्य रश्मिषु ' च ये वर्त्तन्ते, ' येषां ' सर्पाणाम् ' अप्सु ' उदकमध्ये ' सदः ' सदनं स्थानं ' कृतम् ' अस्ति, ' तेभ्यः सर्पेभ्यो नम इति । **यत्र यत्रेत्यादि** । मन्त्रत्रयतात्पर्यकथनम् । ' यत्र यत्र ' देशे ' एते ' सर्पाः वर्त्तन्ते, ' तत् ' तत्र ' एव ' ' एभ्यः ' सर्वेभ्यो नमो नम इति त्रिष्वपि मन्त्रेषु पठितानां नमःशब्दानां सकृत्प्रहार्या पुनरुक्तिः । ' नमो नम इति ' पुनः पुनर्नमःशब्दप्रयोगेण एतान्नमस्करोति । नमस्कारं स्तौति–यज्ञो वै नम इति । देवतोद्देशेन द्रव्यत्यागो ' यज्ञः ' स यथा देवानां प्रीतिकरस्तद्वन्नमस्कारोऽपीति तस्य यज्ञात्मकता । तथा च यज्ञात्मकेनैव नमस्कारेण ' एनान् ' सर्पान् ' नमस्यति ' पूजयति । नमसः पूजायामर्थे "नमो वरिव०"–( पा सू. ३।१ । १९ ) इति क्यच् । प्रासङ्गिकं किञ्चिदाह–तस्मादिति । यस्मादेवं नमस्कारप्रतिपादको नमःशब्दोऽपि यज्ञात्मकः प्रयुज्यते, ' तस्माद् ' एव कारणाद् ' अयज्ञिम् ' यज्ञानर्हं, हे देवदत्त ! नमस्तुभ्यमित्येवं ' न ब्रूयात् ' ।

( त्रि ) त्रिभिरुपतिष्ठते । त्रय ऽइमे लोका ऽअथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्माऽएतदिमाँल्लोकान्त्स्थापयत्यथो तावतैवैतदिदꣳ सर्वꣳ शमयति तिष्ठन्नुपतिष्ठते तिष्ठन्तीव वाऽइमे लोका ऽअथो तिष्ठन्वै वीर्यवत्तरः ॥ ३१ ॥

( गोऽथै ) अथैनमुपविश्याभिजुहोति । ( त्या ) आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः सर्वतः परिसर्पꣳ सर्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेन प्रीणाति ॥ ३२ ॥

---

त्रिभिरुपतिष्ठते । त्रयऽइमे लोकाः । अथो त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्माऽएतदिमांल्लोकान्त्स्थापयति । अथो तावतैवैतदिदं सर्वं शमयति । तिष्ठन्नुपतिष्ठते । तिष्ठन्तीव वाऽइमे लोकाः । अथो तिष्ठन् वै वीर्यवत्तरः ॥ ३१ ॥

अथैनमुपविश्याभिजुहोति । आज्येन पञ्चगृहीतेन । तस्योक्तो बन्धुः । सर्वतः परिसर्पम् । सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेन प्रीणाति ॥ ३२ ॥

---

कथं तर्हि ब्रूयात् ? 'भो देवदत्त ! नमस्ते' इत्येव ब्रूयात् । तस्य वचनस्य यन्नियत्वमाविष्करोति—यथा हैनमिति । 'यथा' खलु 'एनम्' अतिथिं 'ब्रूयात्' 'यज्ञस्ते' कल्पित इति 'तादृक्' तत्सदृशमेव 'तत्' नमस्त इति वचनम् ॥ ३० ॥

मन्त्रस्य त्रिसंख्यामुपजीव्य स्तौति—त्रिभिरुपतिष्ठत इति । 'त्रय इमे लोकाः' पृथिव्यादयः, अतस्तत्संख्यया मन्त्रत्रित्वमित्यर्थः । अथो त्रिवृदग्निरित्यादिना मन्त्रत्रित्वस्य प्रयोजनान्तरप्रतिपादनम् । त्रिवृदग्निरित्यादिकं प्राग्व्याख्यातम् । तावतैवास्मा इति । 'अस्मै' हिरण्मयपुरुषाय 'तावता' तस्याग्नेः परिमाणेनैव 'इमान्' लोकान् 'एतद्' एतेनोपस्थानेन 'स्थापयति' 'अथो' अपि च 'तावता' तत्परिमाणेन 'एव' 'इदं सर्वम्' जगत्तेनोपस्थानेन 'शमयति' । तच्चोपस्थानं तिष्ठता कर्त्तव्यमिति स्थितिगुणं विधाय स्तौति—तिष्ठन्नुपतिष्ठत इति । ऊर्ध्वाकारेणावस्थानात् 'तिष्ठन्तीव' खलु 'इमे लोकाः' । 'अथो' अपि च उपविष्टात्पुरुषात् 'तिष्ठन्' खलु पुरुषो 'वीर्यवत्तरः' अतिशयितवीर्यवान्, तस्मादुपस्थानस्य तिष्ठत्कर्तृकता युक्तेत्यर्थः ॥ ३१ ॥

अग्निहोमं विधत्ते—अथैनमिति । उपस्थानानन्तर्यम् 'अथ'—शब्दार्थः । 'एनम्' हिरण्मयपुरुषम् 'अभिजुहोति' अभितः सर्वासु दिक्षु उपरिहोमेन संस्कुर्यात् । तत्र द्रव्यं विधत्ते—आज्येनेति । आहुतिपञ्चकार्थं पञ्चगृहीतमाज्यं स्रुचि गृहीत्वा तेनाभिजुहुयादित्यर्थः । तस्योक्त इति । तस्य पञ्चसङ्ख्यायुक्तत्वस्य स्तावको वाक्यशेषः प्रागाम्नातः ( श. ब्रा. ७।२।३।९ ) इत्यर्थः । सर्वतः परिसर्पमिति । 'सर्वतः' सर्वासु दिक्षु 'परिसर्पम्' तां तां दिशं परिक्रम्य "आभीक्ष्ण्ये णमुल् च"—(पा. सू. ३ । ४ । २२) इति णमुल् । परिसर्पणस्य प्रयोजनमाह—सर्वाभ्य इति । 'सर्वाभ्यो' दिग्भ्यः सकाशाद् 'एनम्' पुरुषम् । गतमन्यत् ॥ ३२ ॥

---

१—उपविश्य पंचगृहीतं जुहोति पुरुषे कुरुष्व पाज इति प्रत्यृचं प्रतिदिशं परिसर्पम् । का. श्रौ. सू. १७ । ७९ ।

युद्वेवैनमभिजुहोति । (त्ये) एतद्वै देवाऽएतमात्मानमुपधायाबिभयुर्यद्वै नऽ इममिह रक्षाᳯंसि नाष्ट्रा नु हन्युरिति तऽएतान्राक्षोघ्नान्प्रतिसरानपश्यन् कृणुष्व पाजः प्रसितिं नु पृथ्वीमिति राक्षोघ्ना वै प्रतिसरास्तऽएतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षाᳯंसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतमात्मानᳯं समस्कुर्वत तथैवैतद्यजमानऽएतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षाᳯंसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतमात्मानᳯं संस्कुरुते ॥ ३३ ॥

(तऽ) आज्येन जुहोति । वज्रो वाऽआज्यं वज्रेणैवैतद्रक्षाᳯंसि नाष्ट्राऽअप-हन्ति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चऽर्तव संवत्सरः संवत्सरोऽग्निर्या-वानग्निर्यावत्यस्य मात्रा तावतैवैतद्रक्षाᳯंसि नाष्ट्राऽअपहन्त्याग्नेयीभिरग्निर्वै ज्योती रक्षोहाऽग्निनैवैतद्रक्षाᳯंसि नाष्ट्राऽअपहन्ति त्रिष्टुब्भिर्वज्रो वै त्रिष्टु-ब्वज्रेणैवैतद्रक्षाᳯंसि नाष्ट्राऽअपहन्ति सर्वतः परिसर्पᳯं सर्वाभ्यऽएवैत-द्दिग्भ्यो रक्षाᳯंसि नाष्ट्राऽअपहन्ति ॥ ३४ ॥

---

यद्वेवैनमभिजुहोति । एतद्वै देवा एतमात्मानमुपधायाबिभयुः—यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तऽएतान् राक्षोघ्नान्प्रतिसरानपश्यन् । "कृणुष्व पाजः प्रसितिं न पृथ्वीम्"—( वा० सं० १३ । ९–१३ ) इति । राक्षोघ्ना वै प्रतिसराः । तऽएतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रऽएतमात्मानं समस्कुर्वत । तथैवैतद्यजमान एतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रऽएतमात्मानं संस्कुरुते ॥ ३३ ॥

आज्येन जुहोति । वज्रो वाऽआज्यम् । वज्रेणैवैतद्रक्षांसि नाष्ट्रा अपहन्ति । पञ्चगृहीतेन । पञ्चचितिकोऽग्निः । पञ्चऽर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैत-

---

मन्त्रविध्यर्थमनुवदति—यद्वेवैनमिति । "कृणुष्व पाजः"—इत्याद्यान् राक्षोघ्नान्पञ्च मन्त्रान् विधातुमाख्या-यिकामाह—एतद्वै देवा इति । यद्वै न इममिति । 'नः' अस्माकम् 'इमम्' आत्मानम् 'इह' अस्मिन्न-वसरे 'नाष्ट्रा' 'रक्षांसि' 'यत्' येनोपायेन 'न हन्युः' स उपायः क इति विचारितवन्त इत्यर्थः । राक्षोघ्नान् प्रतिसरानित्यादि । राक्षसान्प्रति अस्त्ररूपेण सरन्ति गच्छन्तीति 'प्रतिसराः' 'कृणुष्व पाजः' इत्याद्या मन्त्राः । अत एव ते रक्षोहननसम्बन्धाद् 'राक्षोघ्नाः' । प्रसिद्धौ 'वै'—शब्दः, सा च "अस्तासि विध्य रक्षसस्तपिष्ठैः"—इत्यादिमन्त्रवर्णादवसेया । तथैवैतादित्यादिना उक्तार्थदृष्टान्तमुखेनाभिहोम-मन्त्रविधिः ॥ ३३ ॥

मन्त्रद्वारा रक्षोहननहेतुतां प्रतिपाद्य द्रव्यमुखेनापि तत् प्रतिपादयति—वज्रो वा इति । "घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्"—( तै, सं, ६।२।२ ) इति तैत्तिरीयके प्रसिद्धं घृतस्य वज्ररूपत्वमत्र 'वै'—शब्दो

पश्चादग्नेः प्राङासीनः । (त्तोऽथो) अथोत्तरतो दक्षिणाऽथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य दक्षिणत ऽउदङ्ङासीनस्तद्दक्षिणावृत्तद्धि देवत्राऽथानुपरीत्य पश्चात्प्राङासीनस्तथो हास्यैतत्प्रागेव कर्म कृतं भवति ॥ ३५ ॥

(त्यु)अथ स्रुचाऽउपदधाति । बाहू वै स्रुचौ बाहूऽएवास्मिन्नेतत्प्रतिदधाति

द्रक्षांसि नाष्ट्रा अपहन्ति । आग्नेयीभिः । अग्निर्वै ज्योती रक्षोहा । अग्निनैवैतद्रक्षांसि नाष्ट्रा अपहन्ति । त्रिष्टुब्भिः । वज्रो वै त्रिष्टुप् वज्रेणैवैतद्रक्षांसि नाष्ट्रा अपहन्ति । सर्वतः परिसर्पम्—सर्वाभ्य एवैतद्दिग्भ्यो रक्षांसि नाष्ट्रा अपहन्ति ॥ ३४ ॥

पश्चादग्नेः प्राङासीनः । अथोत्तरतो दक्षिणा । अथ पुरस्तात्प्रत्यङ् । अथ जघनेन परीत्य दक्षिणत उदङ्ङासीनः । तद्दक्षिणावृत् । तद्धि देवत्रा । अथानुपरीत्य पश्चात् प्राङासीनः । तथो हास्यैतत्प्रागेव कर्म कृतं भवति ॥ ३५ ॥

### अथ स्रुगिष्टकाद्वयोपधानम् ।

अथ स्रुचा उपदधाति । बाहू वै स्रुचौ । बाहूऽएवास्मिन्नेतत्प्रतिदधाति । ते यत्स्रुचौ भवतः—

द्योतयति । यद्वा आज्यस्याग्निज्वालाहेतुत्वाद्वज्रत्वम् । पञ्चर्त्तवः संवत्सर इति । हेमन्तशिशिरयोः समासाभिप्रायेण । तावतैवैतद्रक्षांसीति । यत्परिमाणविशिष्टश्चित्योऽग्निस्तावत्परिमाणेन 'एतद्' एतेन कर्मणा 'नाष्ट्रा' 'रक्षांसि' नाशयति । मन्त्रदेवताद्वारेण प्रशंसति—आग्नेयीभिरिति । अग्निर्देवता यासां ता आग्नेय्यः, "अग्नेर्ढक्"—( पा. सू. ४ । २ । ३३ ) "टिड्ढाणञ्" ( पा. सू. ४ । १ । १५ ) इति ङीप् । छन्दोद्वारेण स्तौति—त्रिष्टुब्भिरिति । वज्रो वै त्रिष्टुबिति । इन्द्रेण सहोत्पन्नत्वाद्वीर्योपेतात्प्रजापत्यवयवादुत्पत्तेश्च त्रिष्टुभो वज्रत्वम् । परिसर्पणप्रकारं विधित्सुर्विहितं परिसर्पणमनूद्य स्तौति—सर्वतः परिसर्पमिति । उक्तार्थमेतत् ॥ ३४ ॥

पश्चादग्नेः इत्यादिना परिसर्पणप्रकारो निरूप्यते । 'अग्ने' प्रथमं 'पश्चात्' प्रतीच्यां दिशि प्राङ्मुख उपविष्टः सन् प्रथमेन मन्त्रेण पुरुषमभिजुहोति । 'अथ' उत्तरभागे 'दक्षिणा'—मुख उपविष्टः सन् द्वितीयेन मन्त्रेणाभिजुहोति । 'अथ पुरस्तात्' प्राच्यां दिशि 'प्रत्यङ्'मुख उपविष्टस्तृतीयेन मन्त्रेण । 'अथ' यथेतं प्रतिनिवृत्य 'जघनेन' 'परीत्य' पुरुषस्य पश्चाद्भागेन परिक्रम्य 'दक्षिणतः' दक्षिणस्यां दिशि 'उदङ्' मुख उपविष्टश्चतुर्थेन मन्त्रेणाभिजुहोति । तद्दक्षिणावृदिति । एवं क्रियमाणे सति होमस्य प्रादक्षिण्येन वृत्तिरुपपन्ना भवति । 'तत्' खलु प्रादक्षिण्यं 'देवत्रा' देवसम्बन्धिनि कर्मणि योग्यम् । 'अथ' अनन्तरम् 'अनुपरीत्य' दक्षिणदिक्सकाशात् प्रतीचीं दिशं गत्वा तत्र 'प्राङासीनः' पञ्चमेन मन्त्रेणाभिजुहुयात् । तथैव सति हि 'अस्य' यजमानस्य 'एतद्' अग्निहोमाख्यं कर्म 'प्राक्' अपवर्गे 'कृतम्' 'भवति' इत्यर्थः ॥ ३५ ॥

स्रुचोरुपधानं विधत्ते— अथ स्रुचाविति[3] । तत् प्रशंसति—बाहू वा इति । "जुहूर्दक्षिणो हस्त उपभृत

१-प्रत्येत्य दक्षिणतः । का० श्रौ० सू० १७ । ८० । २-पश्चात्प्रथमांत्ये । का० श्रौ० सू० १७ । ८१ । ३-तत्र स्रुगुपधानं प्राच्योः । का० श्रौ० । १७ । ८३ ॥

ते यत्स्रुचौ भवतः स्रुचौ हि बाहूऽइदमेव कपुच्छलमयं दण्डो द्वे भवतो द्वौ हीमौ बाहू पार्श्वतऽउपदधाति पार्श्वतो हीमौ बाहू ॥ ३६ ॥

कार्ष्मर्यमयीं दक्षिणतऽउपदधाति । ( त्ये ) एतद्वै देवाऽअबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षाꣳसि नाष्ट्रा नु हन्युरिति तऽएतꣳ रक्षोहणं वनस्पतिमपश्यन्कार्ष्मर्यं तऽएतेन वनस्पतिना दक्षिणतो रक्षाꣳसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञमतन्वत तथैवैतद्यजमान एतेन वनस्पतिना दक्षिणतो रक्षाꣳसि नाष्ट्राऽ अपहत्याभयेऽनाष्ट्रऽएतं यज्ञं तनुतऽआज्येन पूर्णा भवति वज्रो वाऽआज्यं वज्रेणैवैतद्दक्षिणतो रक्षाꣳसि नाष्ट्राऽअपहन्ति ॥ ३७ ॥

---

स्रुचौ हि बाहू—इदमेव कपुच्छलम्, अयं दण्डः । द्वे भवतः । द्वौ हीमौ बाहू । पार्श्वत उपदधाति । पार्श्वतो हीमौ बाहू ॥ ३६ ॥

कार्ष्मर्यमयीं दक्षिणत उपदधाति । एतद्वै देवा अबिभयुः—यद्वै नो यज्ञं दक्षिणतो रक्षांसि नाष्ट्रा न हन्युरिति । तऽएतं रक्षोहणं वनस्पतिमपश्यन्—कार्ष्मर्यम् । तऽएतेन वनस्पतिना दक्षिणतो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रऽएतं यज्ञमतन्वत । तथैवैतद्यजमान एतेन वनस्पतिना दक्षिणतो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रऽएतं यज्ञं तनुते । आज्येन पूर्णा भवति । वज्रो वाऽआज्यम् । वज्रेणैवैतद्दक्षिणतो रक्षांसि नाष्ट्रा अपहन्ति ॥ ३७ ॥

---

सव्यः ''—इत्यादिश्रुत्यन्तरप्रसिद्धेः स्रुचोर्बाहुरूपता । तथा सति ' एतत् ' एतेन स्रुगुपधानेन ' अस्मिन् ' हिरण्मयपुरुषे ' बाहू ' एव 'प्रतिदधाति' सन्दधाति । स्रुचोर्बाहुरूपताप्रसिद्धिमभिनयेन दर्शयति—इदमेवेति । ' इदमेव ' हस्ताग्रं प्रसृतिरूपेण दृश्यमानं 'कपुच्छलं' स्रुगग्रस्थानीयम् । 'अयम्' एव बाहुदण्डः स्रुगु ' दण्डः ' अतः स्रुग्रूपताऽनयोः प्रत्यक्षसिद्धेत्यर्थः । द्वित्वमनूद्य स्तौति—द्वे भवत इति । दक्षिणोत्तरपार्श्वयोस्तदुपधानं विधत्ते—पार्श्वत इति । तत्र हेतुमाह—पार्श्वतो हीति ॥ ३६ ॥

तत्र च दक्षिणपार्श्वे उपधेयायाः स्रुचो वृक्षविशेषं विधत्ते—कार्ष्मर्यमयीमिति[1] । कार्ष्मर्यवृक्षेण निर्मिता स्रुक् ' कार्ष्मर्यमयी ' । स्रुचस्तत्प्रकृतितामाख्यायिकया प्रतिपादयति—एतद्वा इत्यादिना । वनस्पतिमपश्यन्निति । कार्ष्मर्याख्यं ' वनस्पतिम् '[2] इति सम्बन्धः । सिद्धमन्यत् । स्रुच आज्येन पूरणं विधाय स्तौति—आज्येन पूर्णा भवतीति ॥ ३७ ॥

---

१–कार्ष्मर्यमयीं दक्षिणतः पाणिमात्रपुष्करां बाहुमात्रीं पादमात्रीं वा सामर्थ्यात् घृतपूर्णाममेष्ट्वेति । का. श्रौ. सू. १७ । ८४ ।

२–काष्मर्यः, काश्मरी, श्रीपर्णी, गम्भारिः इति समानार्थाः । ' कुम्भेर ' ' खम्भारी ' इति प्रसिद्धो वृक्षविशेषः ।

( न्त्य ) अथौदुम्बरीमुत्तरतऽउपदधाति । (त्यू) ऊर्ग्वै रसऽउदुम्बरऽऊर्ज्जमेवास्मिन्नेतद्रसं दधाति दध्ना पूर्णा भवति रसो वै दधि रसमेवास्मिन्नेतद्दधाति ॥ ३८ ॥

यद्वेव स्रुचाऽउपदधाति । प्रजापतेर्व्विस्रस्तस्याग्निस्तेजऽआदाय दक्षिणाऽकर्षत्सोऽत्रोदरमद्यत्कृष्ट्वोदरमत्तस्मात्कार्ष्मर्य्योऽथास्येन्द्रऽओजऽआदायोदङ्ङुदक्रामत्सऽउदुम्बरोऽभवत् ॥ ३९ ॥

( त्ता ) तावब्रवीत् । (दु) उप मेतं प्रति मऽएतद्धत्तं येन मे युवमुदक्रमिष्टमिति ताभ्यां वै नौ सर्व्वमन्नं प्रयच्छेति तौ वै मा बाहू भूत्वा प्रपद्येथामिति तथेति ताभ्यां वै सर्व्वमन्नं प्रायच्छत्तावेनं बाहू भूत्वा प्रापद्येतां तस्माद्बाहुभ्यामेवान्नं क्रियते बाहुभ्यामद्यते बाहुभ्याᳬं हि स सर्व्वमन्नं प्रायच्छत् ॥ ४० ॥

---

अथौदुम्बरीमुत्तरत उपदधाति । ऊर्ग्वै रस उदुम्बरः । ऊर्जमेवास्मिन्नेतद्रसं दधाति । दध्ना पूर्णा भवति । रसो वै दधि । रसमेवास्मिन्नेतद्दधाति ॥ ३८ ॥

यद्वेव स्रुचाऽउपदधाति । प्रजापतेर्विस्रस्तस्याग्निस्तेज आदाय दक्षिणाऽकर्षत् । सोऽत्रोदरमत् । यत्कृष्ट्वोदरमत्—तस्मात्कार्ष्मर्यः। अथास्येन्द्र ओज आदायोदङ्ङुदक्रामत् । स उदुम्बरोऽभवत् ॥ ३९ ॥

तावब्रवीत्—'उप मेतं, प्रति मऽएतद्धत्तम्, येन मे युवमुदक्रमिष्टम्' इति । 'ताभ्यां वै नौ सर्वमन्नं प्रयच्छ' इति । 'तौ वै मा बाहू भूत्वा प्रपद्येथाम्' इति । तथेति । ताभ्यां वै सर्वमन्नं प्रायच्छत् ।

---

उत्तरपार्श्वे उदुम्बरवृक्षकृतायाः स्रुच उपधानं विधत्ते—अथौदुम्बरीमुत्तरत इति । ऊर्ग्वा इत्यादि । प्रागुक्तार्थम् । उपधानसमये दध्ना तस्याः पूरणं विधाय स्तौति—दध्ना पूर्णा भवतीति । रसो वै दधीति । पयस ओषधिसाररसात्मकत्वाद्दध्नोऽपि रसात्मकत्वम् ॥ ३८ ॥

स्रुचोरुपधानमनूद्य तयोर्बाहुरूपतां वक्तुं तावत्तदुपादानयोर्वृक्षयोरुत्पत्तिमाह—यद्वेवेत्यादिना । विश्लिष्टावयवस्य 'प्रजापतेः तेज आदाय' गृहीत्वा 'अग्निः' दक्षिणतः 'अकर्षत्' अनैषीत् 'सः' अग्निः 'अत्र' अस्मिन् कार्ष्मर्यवृक्षे 'उदरमत्' उत्कृष्टमरमत सुखमवात्सीदित्यर्थः। 'यत्कृष्ट्वा' इत्यादिना कार्ष्मर्यनामनिरुक्तिः । कृषेर्धातोः रमेश्च कार्ष्मर्यशब्दनिष्पत्तिर्वर्णविकारेण द्रष्टव्या । 'अथ' अग्निगमनानन्तरम् 'अस्य' विस्रस्तावयवस्य प्रजापतेः सम्बन्धि 'ओजः' आन्तरं वीर्यम् 'इन्द्रः' 'आदाय' स्वीकृत्य 'उदङ्' उत्तरामुखः सन्नुत्तरभागे 'उदक्रामत्' उत्क्रम्य स 'उदुम्बरो' वृक्षो जातः ॥ ३९ ॥

ततः तौ अग्नीन्द्रौ प्रजापतिः 'अब्रवीत्' 'मा उपेतम्' मामुपगच्छतम् । 'एतत्' मदीयमङ्गं 'प्रति-

---

१—एवमौदुंबरीमुत्तरतो दधिपूर्णामिंद्रस्य त्वेति । का० श्रौ० सू० १७ । ६५ ।

( त्सु ) स कार्ष्मर्यमयीं दक्षिणतऽउपदधाति । ( त्य ) अग्नेष्ट्वा तेजसा सादयामीति यदेवास्य तदग्निस्तेजऽ आदाय दक्षिणाऽकर्षत्तदस्मिन्नेतत्प्रतिदधात्यग्निर्मूर्धा दिवः ककुदित्येषऽउ सोऽग्निर्गायत्र्या गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति घृतेन पूर्णा भवत्याग्नेयं वै घृतꣳ स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ४१ ॥

---

तावेनं बाहू भूत्वा प्रापद्येताम् । तस्माद्बाहुभ्यामेवान्नं क्रियते, बाहुभ्यामद्यते । बाहुभ्यां हि स सर्वमन्नं प्रायच्छत् ॥ ४० ॥

स कार्ष्मर्यमयीं दक्षिणत उपदधाति—" अग्नेष्ट्वा तेजसा सादयामि "—( वा. सं. १३ । १३ ) इति । यदेवास्य तदग्निस्तेज आदाय दक्षिणाऽकर्षत्—तदस्मिन्नेतत्प्रतिदधाति । " अग्निर्मूर्धा दिवः ककुत् "—( वा. सं. १३ । १४ ) इति । एष उ सोऽग्निः । गायत्र्या । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति । घृतेन पूर्णा भवति । आग्नेयं वै घृतम् । स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ४१ ॥

---

धत्तम् ' पुनः सन्धानेन सँस्कुरुतम् । ' येन ' कारणेन ' मे ' मदीयशरीरात् ' युवमुदक्रमिष्टम् ' । ' इति ' शब्दः प्रजापतिवाक्यपरिसमाप्तौ । ' ताभ्याम् ' इत्यादि तयोरग्नीन्द्रयोर्वाक्यम् । " युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः "—( पा. सू. ८ । १ । २० ।) इति चतुर्थ्यन्तस्यात्र नौभावः । हे प्रजापते ! ' ताभ्याम् ' खलु ' नौ ' आवाभ्यां ' सर्वमन्नम् ' ' प्रयच्छ ' तर्ह्यावां त्वामुपगच्छावेति । पुनः प्रजापतिरब्रवीत् । हे अग्नीन्द्रौ ! ' तौ 'युवां ' बाहू भूत्वा' ' मा ' माम् ' प्रपद्येथाम् ' प्रविशताम् ' इति ' । ' तौ ' अपि ' तथा ' अस्त्वित्यब्रूताम् । एवं तौ वशीकृत्य प्रतिज्ञातप्रकारेण ' सर्वमन्नम् ' ' ताभ्याम् ' प्रजापतिः ' प्रायच्छत् ' । 'तौ' अप्यग्नीन्द्रौ ' बाहू ' हस्तौ ' भूत्वा ' ' एनम् ' प्रजापतिं ' प्रापद्येताम् ' प्राप्तवन्तौ । ' हि ' यस्मात् प्रजापतिरुक्तक्रमेण ' सर्वमन्नम् ' 'प्रायच्छत्' 'तस्माद्' एव कारणादन्ननिष्पादनमन्नादनं च बाहुकरणकं लोके दृश्यत इत्यर्थः ॥ ४० ॥

इत्थं कार्ष्मर्योदुम्बरयोरुत्पत्तिमग्नेरिन्द्रस्य च बाहुरूपतां च प्रतिपाद्य तदुपजीवनेनाग्नेयमन्त्रेण कार्ष्मर्यमय्या उपधानं विधत्ते—स कार्ष्मर्यमयीमिति ' यत्तेजः ' ' आदाय ' अग्निः ' निरगात् तेनाग्नेः सम्बन्धिना प्रजापतिशरीरतेजसा त्वां सादयामीति मन्त्रार्थः । तदस्मिन्नेतदिति । ' तत् ' तेन मन्त्रेण ' एतत् ' तेजः ' अस्मिन् ' चित्याग्निरूपे प्रजापतौ ' प्रतिदधाति ' संदधाति अथ तस्मिन्नेव कार्ष्मर्यमय्युपधाने मन्त्रान्तरमपि दर्शयति—अग्निर्मूर्द्धेति । एष उ सोऽग्निरिति । ' सः ' प्रतिपाद्योऽग्निः ' एषः ' चित्योऽग्निरेवेत्यर्थः । अस्य मन्त्रस्य छन्दोऽनूद्य स्तौति—गायत्र्येति । उपदध्यादिति शेषः । गायत्रोऽग्निरित्यादि गतम् । घृतेन पूरणमनूद्य स्तौति—घृतेन पूर्णेति । घृतस्याग्नेयत्वं प्रागुक्तम् ॥ ४१ ॥

( त्य ) अथौदुम्बरीमुत्तरतऽउपदधाति । ( त्री ) इन्द्रस्य त्वौजसा सादयामीति यदेवास्य तदिन्द्र ऽओज ऽआदायोदङ्ङुदक्रामत्तदस्मिन्नेतत्प्रतिदधाति भुवो यज्ञस्य रजसश्च नेतेत्येषऽउ स ऽइन्द्रः सा यदाग्नेय्यग्निकर्म ह्यथ यत्त्रिष्टुप्त्रैष्टुभो हीन्द्र ऽऐन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतदुपदधातीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति दध्ना पूर्णा भवत्यैन्द्रं वै दधि स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ४२ ॥

---

अथौदुम्बरीमुत्तरत उपदधाति । " इन्द्रस्य त्वौजसा सादयामि "–( वा. सं. १३ । १४ ) इति । यदेवास्य तदिन्द्र ओज आदायोदङ्ङुदक्रामत्–तदस्मिन्नेतत्प्रतिदधाति । " भुवो यज्ञस्य रजसश्च नेता "–( वा. सं. १३ । १९ ) इति । एष उ स इन्द्रः । सा यदाग्नेयी–अग्निकर्म हि । अथ यत्त्रिष्टुप्–त्रैष्टुभो हीन्द्रः । ऐन्द्राग्नोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनामेतदुपदधाति । इन्द्राग्नी वै सर्वे देवाः । सर्वदेवत्योऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनामेतदुपदधाति । दध्ना पूर्णा भवति । ऐन्द्रं वै दधि । स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ४२ ॥

---

एवं दक्षिणभागे कार्ष्मर्यमय्युपधानमुक्त्वा तथैवोत्तरभागे औदुम्बर्युपधानमिन्द्रदेवत्येन यजुषा कर्त्तव्य-मित्याह–अथौदुम्बरीम् इति । निगदसिद्धोऽर्थः । ' अस्मिन् ' औदुम्बर्युपधाने मन्त्रान्तरं विधत्ते–भुवो यज्ञस्येति । एष उ स इन्द्र इति । ' एषः ' खलु चित्योऽग्निः ' सः ' प्रसिद्धो मन्त्रप्रतिपाद्य ' इन्द्रः ' । सा यदित्यादि । ' सा ' " भुवो यज्ञस्येति " ऋक्, यस्माद् ' आग्नेयी ' अग्निदेवताका तस्माद् ' इदम् ' अग्निकर्म सम्पन्नम् । कथं तर्हि तस्या ऐन्द्रे औदुम्बरीष्टुगुपधाने विनियोग इत्यत्राह–अथ यत्त्रिष्टुबिति । यस्मात् सा ऋक् त्रिष्टुप्छन्दस्का तस्मादैन्द्रे कर्मणि विनियोक्तुमर्हति; यस्मादिन्द्रस्त्रिष्टुप्छ-न्दसा सहोत्पन्नः । अभिधावृत्त्या छन्दोद्वारेण च मन्त्रस्योपाधिसिद्धमिन्द्राग्निदेवताकत्वं प्रशंसति–ऐन्द्राग्नोऽग्नि-रिति । एतदेव विवृणोति–इन्द्राग्नी वै सर्वे देवा इति । इन्द्रस्याधिपतित्वात्सर्वदेवतात्मत्वम् । अग्नेरपि सर्वान् देवान् प्रति हविषो वहनात्सर्वदेवात्मकता । यद्वा इन्द्रस्य प्राथम्यादग्नेश्चरमभावित्वात्तदन्तरवर्त्तिनः ' सर्वे देवाः ' इतीन्द्राग्न्योः सर्वदेवतात्मकत्वम् " अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः " इत्यनेन समानन्यायत्वात् । चित्याग्निश्च ' सर्वदेवत्यः ' सर्वदेवताप्रीतिकरः । यावानग्निरित्यादि । गतम् । दध्ना पूरणमनूद्य स्तौति–दध्ना पूर्णेति । ऐन्द्रं वा इत्यादि । 'ऐन्द्रम्' इन्द्रदेवत्यं खलु 'दधि,' दर्शयागे इन्द्रं प्रति दध्नो हविष्ट्वेन दीयमानत्वात् । अत एव दर्शयागविधौ श्रूयते–" ऐन्द्रं दध्यमावास्यायाम् "–( तै. स. २।५।२ ) इति । स्वेन रसेनेति । इन्द्रस्य हि स्वकीयो रसः सान्नाय्यम् । वृत्रवधानन्तरमिन्द्रशरीरान्निर्गतस्य पृथिव्यामोषधिवीरुदात्मना परिणतस्य पशुभिर्भक्षणेनात्मन्याहृतस्येन्द्रसम्बन्धिनो वीर्यस्यैव पयोरूपेण परिणामा-त्तद्विकृतिभूतं दध्यपि परंपरया इन्द्रस्य स्वकीयो रसः । एतदेव श्रुत्यन्तरे–" इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यम् "–( तै. सं. २ । ५ । ३ ) इत्यादिना प्रपञ्चितम् । ' प्रीणाति ' तर्पयति । " प्रीञ् तर्पणे "–( धा. पा. क्र्या. उ. २ ) इति धातुः ॥ ४२ ॥

तावस्यैताविन्द्राग्नीऽएव बाहू । तावेनं तेजसा च व्वीर्येण च सह प्रपद्येते स सम्प्रत्युरः पुरुषमाकाश्य यत्राभ्याप्नोति तदालिख्यैनेऽउपदधात्येष हैतयोर्लोकः ॥ ४३ ॥ ( अर्धप्रपाठकः ) ॥

( स्ते ) ते हैके तिरश्च्याऽउपदधति । तिर्यञ्चौ वाऽइमौ बाहूऽइति न तथा कुर्यात्प्राच्यावेवोपदध्यात्प्राङ्ह्येषोऽग्निश्चीयतेऽथोऽएवं वै बाहू व्वीर्यवत्तरौ ते नानोपदधाति नाना सादयति नाना सूददोहसाऽधिवदति नाना हीमौ बाहू ॥ ४४ ॥

तदाहुः । ( नै ) नैतस्य पुरुषस्य बाहू कुर्यादेतौ वाऽअस्य बाहू यऽएते स्रुचौ नेदतिरेचयानीति स वै कुर्यादेवैतौ वाऽअस्य बाहू अन्वेते स्रुचा-

---

तावस्यैताविन्द्राग्नीऽएव बाहू । तावेनं तेजसा च वीर्येण च सह प्रपद्येते । स सम्प्रत्युरः पुरुषमाकाश्य यत्राभ्याप्नोति तदालिख्यैनेऽउपदधाति । एष हैतयोर्लोकः ॥ ४३ ॥

ते हैके तिरश्च्याऽउपदधति । तिर्यञ्चौ वाऽइमौ बाहू इति । न तथा कुर्यात् । प्राच्यावेवोपदध्यात् । प्राङ् ह्येषोऽग्निश्चीयते । अथोऽएवं वै बाहू वीर्यवत्तरौ । ते नानोपदधाति । नाना सादयति । नाना सूददोहसाऽधिवदति । नाना हीमौ बाहू ॥ ४४ ॥

तदाहुः—नैतस्य पुरुषस्य बाहू कुर्यात् । एतौ वाऽअस्य बाहू—येऽएते स्रुचौ—नेदतिरेचयानीति ।

---

तावस्यैतावित्यादि । 'तौ' तथाविधौ 'एतौ' 'इन्द्राग्नी' 'एव' 'अस्य' प्रजापतेः 'बाहू' अभूताम् । भूत्वा च 'तौ' 'तेजसा' अग्निसम्बन्धिना प्रकाशेनेन्द्रसम्बन्धिना 'वीर्येण' च 'सह प्रपद्येते' प्राप्नुतः । स्रुचोरुपधाने च स्थानविशेषमाह—स सम्प्रतीति । 'सः' अध्वर्युरुपहितस्य हिरण्मयपुरुषस्य 'उरः' 'सम्प्रति' उरःप्रदेशेन समानं स्रुचावुपदध्यात् । तत्कथमिति चेदुच्यते—तं 'पुरुषमाकाश्य' अभिज्ञाय 'यत्र' यस्मिन्स्थाने उपहितं स्रुग्द्वयं तदुरः—प्रदेशम् 'अभ्याप्नोति' 'तत्' तत्र 'आलिख्य' चिह्नं कृत्वा 'एने' स्रुचावुपदध्यात् । 'एषः' यदुरोदेशः खलु 'एतयोः' बाहुसंस्तुतयोः 'लोकः' स्थानमित्यर्थः ॥ ४३ ॥

तयोस्तिर्यगग्रतयोपधानं पूर्वपक्षयति—ते हैक इति । "तिरश्च्यावेके" ( का. श्रौ. सू. १७ । ८१ ) । 'तिरश्च्यौ' तिर्यगग्रे । तिर्यञ्चौ वा इति । तत्रोपपत्तिकथनम् । तदेतत्प्रतिषिध्य प्रागग्रत्वं सिद्धान्तयति—न तथा कुर्यादित्यादिना । तत्रोपपत्तिं कथयति—प्राङ् ह्येष इति । प्राक्छिरस्कः खलु 'एषोऽग्निश्चीयते' तदवयवयोर्बाहुसंस्तुतयोः स्रुचोरपि प्रागग्रतैव युक्तेति भावः । 'अथो' अपि च 'एवम्' प्रागग्रौ प्रसारितावेव खलु 'बाहू' 'वीर्यवत्तरौ' अतिशयेन वीर्यवन्तौ । स्थापनसादनाधिवदनानां पृथक्त्वं विधाय स्तौति—ते नानोपदधातीति । स्पष्टोऽर्थः ॥ ४४ ॥

उपहितस्य हिरण्मयपुरुषस्य स्रुग्व्यतिरिक्तबाहुकरणं पूर्वपक्षयति—तदाहुर्नैतस्येति । 'एतस्य' उपहितस्य

वृथोऽएतौ पक्षावृथो युान्येतुस्मिन्नग्नौ रूपुाण्युपधास्यन् भुवति युान्त्स्तो-मान्युानि पृष्ठानि युानि च्छुन्दाᳫँस्येतुयोरेव सा सुंस्कृतिरेतुयोर्व्वृद्धिस्तु-स्मादु कुर्य्यादेवैतुस्य पुरुषस्य बाहू ॥ ४९ ॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ७-३-१ ॥ ( ४. १. )

स्वयमातृण्णामुपदधाति । ( ती ) इयं वुै स्वयमातृण्णेमामुेवैतदुुपदधाति तामुनन्तर्हितां पुरुषादुुपदधात्युन्नं वुै स्वयमातृण्णेयं वुै स्वयमातृण्णेयुमु वाऽअुन्नमस्याᳫँ हि सुर्व्वमुन्नं पच्यतेऽनन्तर्हितमुेवास्मादेतदुन्नं दधा-त्युुत्तरामुत्तरमेवास्मादेतदुन्नं दधाति ॥ १ ॥

---

स वै कुर्यादेव । एतौ वाऽअस्य बाहू-अन्वेते स्रुचौ । अथोऽएतौ पक्षौ । अथो यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन्भवति, यान् स्तोमान्, यानि पृष्ठानि, यानि च्छन्दांसि-एतयोरेव सा संस्कृतिः, एतयोर्वृद्धिः । तस्मादु कुर्यादेव-एतस्य पुरुषस्य बाहू ॥ ४९ ॥

अथ स्वयमातृण्णेष्टकोपधानम् ।

स्वयमातृण्णामुपदधाति । इयं वै स्वयमातृण्णा । इमामेवैतदुपदधाति । तामनन्तर्हितां पुरुषादुप-दधाति । अन्नं वै स्वयमातृण्णा । इयं वै स्वयमातृण्णा । इयमु वाऽअन्नम् । अस्यां हि सर्वमन्नं पच्यते । अनन्तर्हितमेवास्मादेतदन्नं दधाति । उत्तराम् । उत्तरमेवास्मादेतदन्नं दधाति ॥ १ ॥

---

हिरण्मयपुरुषस्य । एतौ वा अस्येति । 'ये एते स्रुचौ' उपहिते, ते च खलु 'अस्य बाहू' स्रुग्व्यतिरिक्त-बाह्वोरपि करणेऽधिकाङ्क्षता स्यात् । 'नेदतिरेचयानि' नैवातिरिक्तं करवाणीति पूर्वपक्षिणोऽभिप्रायः । 'स वै कुर्यादेव' इत्यादिः सिद्धान्तः । 'सः' खल्वध्वर्युः स्रुग्व्यतिरिक्तावपि पुरुषस्य बाहू 'कुर्यादेव' । तत्र हेतुमाह-एतौ वा अस्येति । 'अस्य' पुरुषस्य सम्बन्धिनौ 'बाहू' अनुलक्ष्य 'एते स्रुचौ' उपधातव्ये । अतो न तत्प्रतिनिधिरिति तयोरनिवृत्तिः । बाह्वोः सद्भावं प्रकारान्तरेणोपपादयति-अथो एताविति । 'अथो' अपि च 'एतौ' बाहू 'पक्षौ' पक्षात्मनश्चित्याग्नेः पक्षस्थानीयौ । संस्कारस्य संस्कार्यमन्तरेणानुपपत्तेः संस्कार्यौ बाहू अवश्यं कर्तव्यावित्याह-अथो यान्येतस्मिन्नित्यादिना । 'रूपाणि' अग्निरूपाणि पशुशी-र्षादीनि । स्तोमास्त्रिवृत्पञ्चदशादयः । बृहद्रथन्तरादीनि 'पृष्ठानि' । छन्दांसि गायत्र्यादीनि । एते च स्तोमा-दयः स्वस्वलिङ्गैर्मन्त्रैरिष्टकारूपेणोपधेयाः । यान्येतानि पशुशीर्षादीनि तानि सर्वाण्यध्वर्युः 'उपधास्यन् भवति' 'एतयोरेव' पक्षसंस्तुतयोर्बाह्वोः 'सा संस्कृतिः' गुणोत्कर्षहेतुः संस्कारः 'एतयोर्वृद्धिः' अभिवृद्धिहेतुः । तस्मादित्यादि स्पष्टम् ॥ ४९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ७ । ४ । १ ) ॥

गते ब्राह्मणे रुक्माद्युपधानं विहितम्, अथास्मिन् ब्राह्मणे स्वयमातृण्णादूर्वेष्टकाद्युपधानं विधास्यते । कात्या-यनः-" स्वयमातृण्णां पुरुषे शर्करां छिद्राम् "-( का. श्रौ. सू. १७ । ८७ ) इति । पुरुषप्रयत्नमन्तरेण

यद्धेव स्वयमातृण्णामुपदधाति। प्राणो वै स्वयमातृण्णा प्राणो ह्येवै-तत्स्वयमात्मन ऽआतृन्ते प्राणमेवैतदुपदधाति तामनन्तर्हितां पुरुषादु-पदधाति प्राणो वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वै प्राणो यद्धि किं च प्राणीयं तत्सर्वं बिभर्त्त्यनन्तर्हितमेवास्मादेतत्प्राणं दधात्युत्तरामु-त्तरमेवास्मादेतत्प्राणं दधाति ॥ २ ॥

---

यद्वेव स्वयमातृण्णामुपदधाति। प्राणो वै स्वयमातृण्णा। प्राणो ह्येवैतत्स्वयमात्मन आतृन्ते। प्राणमेवैतदुपदधाति। तामनन्तर्हितां पुरुषादुपदधाति। प्राणो वै स्वयमातृण्णा। इयं वै स्वयमातृण्णा। इयमु वै प्राणः। यद्धि किं च प्राणीयं—तत्सर्वं बिभर्ति। अनन्तर्हितमेवास्मादेतत् प्राणं दधाति। उत्तराम्। उत्तरमेवास्मादेतत्प्राणं दधाति ॥ २ ॥

---

या स्वत एव च्छिद्रयुक्ता शर्करा क्षुद्रपाषाणविशेषः सा स्वयमातृण्णा, तां हिरण्मयपुरुषे उपदध्यात्। तदेतद्वि-धत्ते—स्वयमातृण्णामुपदधातीति। स्वयमातृण्णाख्यामिष्टकामुपदध्यादिति विधिरुन्नेयः, यथा "औदुम्बरो यूपो भवति" इति। तत्र हि भवतीत्यस्य वर्त्तमानापदेशत्वात्प्रत्यक्षविधित्वासम्भवेऽपि "ऊर्व्वा उदुम्बरः" इत्याद्यर्थवादकृतस्तुत्या विधिरुन्नीयत इति निर्णीतम्। ननु "ऊर्व्वा उदुम्बरः"—इत्यादेर्यूपोदुम्बरस्य फला-भिधायकत्वात्कथमर्थवादत्वमिति चेन्न—अविहितस्य फलाभिधानायोगाद्विहितस्येति वक्तव्यम्। विधिश्च तस्यार्थ-वादत्वमन्तरेण न सम्भवतीति। अतोऽत्रापि 'इयं वा' इत्याद्यर्थवादस्य वर्त्तमानापदेशत्वादुन्नेतव्यो विधिः। एवमन्यत्रापि वर्त्तमानापदेशेषु विधिष्वयमेव न्यायो द्रष्टव्यः। तस्याः स्वयमातृण्णायाः पृथिवीविकारत्वात्तदुप-धानेन पृथिव्युपधानमेव सम्पादितं भवतीत्याह—इयं वा इति। यदुक्तं सूत्रे पुरुष इति तद्विधत्ते—तामनन्तर्हि-तामिति। 'ताम्' इष्टकां 'पुरुषादनन्तर्हिताम्' अव्यवहितां तत्सम्बद्धामुपदध्यादित्यर्थः। पुरुषसम्बद्धत्वे-नोपधानं प्रशंसति—अन्नं वा इति। पृथिव्यां व्रीह्यादीनां सर्वेषामन्नानां पच्यमानत्वादन्नरूपा पृथिवी, 'स्वयमा-तृण्णा' च पृथिवीत्युक्तम्। अतश्च पुरुषसम्बद्धेनोपधानेन तस्मिन् 'अन्नम्' एव निहितवान् भवति। अन-न्तर्हितामित्युक्तत्वात् क्वचित् तत्पार्श्वे संश्लेषेणाप्यव्यवधानमुपपद्यत इत्यत आह—उत्तरामिति। 'उत्तराम्' पुरुषस्योपर्यवस्थितां, विधेयविशेषणमेतत्; अत एव सूत्रे 'पुरुषे' इति सप्तम्योपधानाधिकरणत्वमुक्तम्। उत्तरमेवास्मादिति। 'अस्मात्' पुरुषाद् 'उत्तरम्' उपर्यवस्थितम् अन्नं करोति। पुरुषस्य मुखे दधा-तीति भावः ॥ १ ॥

विहितां स्वयमातृण्णामनूद्य प्राणात्मना स्तौति—यद्वेवेति। 'स्वयमातृण्णामुपदधाति' इति 'यद्' अस्ति तत्कारणमुच्यत इत्यर्थः। 'प्राणो ह्येवैतत् स्वयमात्मन आतृन्ते' इति स्वयमातृण्णायाः प्राणत्वोपपादनम्। 'प्राणो'—नाम शरीरान्तर्वर्तमानो वायुः, स 'हि' 'आत्मनः' अर्थे 'स्वयमातृन्ते' आतर्दनं कुरुते, शरीरान्तर्गतनाडीष्ववकाशं कृत्वा प्रवर्त्तते। अथ वा 'आत्मनः' शरीरस्यान्तः 'आतृन्ते' इति योजना। 'आतृन्ते' इति "उतृदिर् हिंसानादरयोः" (धा. पा. रु. उ. ९) इत्यस्माद्रौधादिकाल्लटि रूपम्। अतः स्वयमातर्दनसामान्यात्स्वयमातृण्णायाः प्राणात्मत्वमित्यर्थः। विहितमव्यवधानमनुवदन् न केवलं स्वयमा-तर्दनसामान्यादेव प्राणत्वम्, अपि तु पूर्वोक्तपृथिवीत्वप्रणाल्याऽपि प्राणत्वमस्या विद्यत इति दर्शयति—तामनन्त-

यद्वेव स्वयमातृण्णामुपदधाति प्रजापतिं विस्रस्तं देवताऽ आदाय व्युदक्रामंस्तासु व्युत्क्रामन्तीषु प्रतिष्ठामभिपद्योपाविशत् ॥ ३ ॥

(त्स) स यः स प्रजापतिर्व्यस्रꣳसत । (ताय) अयमेव स योऽयमग्निश्चीयतेऽथ या सा प्रतिष्ठैषा सा प्रथमा स्वयमातृण्णा तद्यदेतामत्रोपदधाति यदेवास्यैषाऽऽत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ॥४॥

तां वै प्रजापतिनोपदधाति । प्रजापतिर्ह्येवैतत्स्वयमात्मनः प्रत्यधत्त ध्रुवाऽसीति स्थिराऽसीत्येतदथो प्रतिष्ठिताऽसीति धरुणेति प्रतिष्ठा वै धरुण-

---

यद्वेव स्वयमातृण्णामुपदधाति । प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामन् । तासु व्युत्क्रामन्तीषु प्रतिष्ठामभिपद्योपाविशत् ॥ ३ ॥

स यः स प्रजापतिर्व्यस्रंसत–अयमेव सः–योऽयमग्निश्चीयते । अथ या सा प्रतिष्ठा–एषा सा प्रथमा स्वयमातृण्णा । तद्यदेतामत्रोपदधाति–यदेवास्यैषाऽऽत्मनः–तदस्मिन्नेतत्प्रतिदधाति । तस्मादेतामत्रोपदधाति ॥ ४ ॥

तां वै प्रजापतिनोपदधाति । प्रजापतिर्ह्येवैतत्स्वयमात्मनः प्रत्यधत्त । "ध्रुवाऽसि"–इति । स्थिराऽसीत्येतत् । अथो प्रतिष्ठिताऽसि–इति । "धरुणा"–इति । प्रतिष्ठा वै धरुणम् । "आस्तृता

---

हिंतामित्यादिना । यत् किञ्चिन्मनुष्यपशुपक्षिसरीसृपादिकं प्राणिजातमस्ति, 'तत्–सर्वम्' पृथिवी 'बिभर्त्ति' खलु, अनेन पृथिव्याः प्राणात्मकत्वमुपपादितम् । स्पष्टमन्यत् ॥ २ ॥

अथ पुनरपि तामेवेष्टकां विस्रस्तावयवस्य प्रजापतेः प्रतिष्ठारूपेण प्रशंसति–यद्वेवेति । पूर्वं प्रजापतिः प्रजाः सृष्ट्वा विस्रस्ताङ्गोऽभूत्, तादृशं तं 'प्रजापतिम्' अवयवशः 'आदाय' देवाः 'व्युदक्रामन्' । ततस्तेषु व्युत्क्रामत्सु स प्रजापतिः प्रतिष्ठारूपमङ्गं स्वयम् 'अभिपद्य' गृहीत्वा 'उपाविशत्,' तदेतत् प्राक् प्रपञ्चेनोक्तम्–" प्रजापतिः प्रजा असृजत स प्रजाः सृष्ट्वा सर्वमाजिमित्वा व्यस्रꣳसत तस्माद्विस्रस्तात् प्राणो मध्यत उदक्रामत् "–( श. प. ६।१।२।१२) इत्यादिना । प्रजापतेः प्रजासर्जनेन विश्लथावयवत्वं तैत्तिरीयकेऽप्याम्नातम्–" प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत "–इति ॥ ३ ॥

स य इति । 'सः' प्रजानां स्रष्टा 'यः' 'प्रजापतिः' विस्रस्तोऽभूत्, सः 'अयमेव' 'यः' एष इष्टकासङ्घातरूपः 'अग्निश्चीयते' । 'अथ या' च 'सा' प्रजापतिना प्राप्ता 'प्रतिष्ठा,' सा 'एषा' इदानीमुपधीयमाना 'प्रथमा स्वयमातृण्णा' । प्रथममध्यमोत्तमासु तिसृष्वपि चितिषु तिस्रः स्वयमातृण्णा उपधीयन्ते, अतोऽत्र प्रथमेति विशेषणम् । तद्यदिति । यतः 'एताम्' इष्टकाम् 'अत्र' पुरुषे 'उपदधाति' 'तत्' तेनास्य पुरुषरूपस्य प्रजापतेः 'आत्मनः' स्वस्य 'यद्' एतत् प्रतिष्ठालक्षणमङ्गम् । एषेति लिङ्गव्यत्ययः (पा. सू. ३ । १ । ८५ ) । 'तदस्मिन्' प्रजापतावेव 'एतत्' एतेन निहितवान् भवति । 'तस्माद्' अस्मिन्पुरुषे उपदध्यात् ॥ ४ ॥

विहिते उपधाने मन्त्रं विधत्ते–तां वै प्रजापतिनोपदधातीत्यादिना । अत्र " ध्रुवाऽसि धरुणाऽऽस्तृता, "

मास्तृता विश्वकर्मणेति प्रजापतिर्वै विश्वकर्मा तेनास्तृताऽसीत्येतन्मा त्वा समुद्र ऽउद्वधीन्मा सुपर्ण ऽइति रुक्मो वै समुद्रः पुरुषः सुपर्णस्तौ त्वा मोद्वधिष्टामित्येतदव्यथमाना पृथिवीं दृꣳहेति यथैव यजुस्तथा बन्धुः ॥५॥

प्रजापतिष्ट्वा सादयत्विति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्यदपां पृष्ठे समुद्रस्येमन्नित्यपाꣳ हीयं पृष्ठꣳ समुद्रस्य हीयमेमा व्यचस्वतीं प्रथस्वतीमिति व्यचस्वती च हीयं प्रथस्वती च प्रथस्व पृथिव्यसीति प्रथस्व पृथिवी चासीत्येतत् ॥ ६ ॥

---

विश्वकर्मणा "–इति । प्रजापतिर्वै विश्वकर्मा । तेनास्तृताऽसीत्येतत् । " मा त्वा समुद्र उद्वधीन्मा सुपर्णः "–इति । रुक्मो वै समुद्रः, पुरुषः सुपर्णः । तौ त्वा मोद्वधिष्टामित्येतत् । "अव्यथमाना पृथिवीं दृंह "–( वा. सं. १३ । १६ ) इति । यथैव यजुस्तथा बन्धुः ॥ ५ ॥

" प्रजापतिष्ट्वा सादयतु "–इति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्यत् । " अपां पृष्ठे समुद्रस्येमन् "–इति । अपां हीयं पृष्ठम् । समुद्रस्य हीयमेमा । " व्यचस्वतीं प्रथस्वतीम् "–इति । व्यचस्वती च हीयं प्रथस्वती च । "प्रथस्व पृथिव्यसि"–( वा. सं. १३ । १७ ) इति । प्रथस्व पृथिवी चासीत्येतत् ॥ ६ ॥

---

" प्रजापतिष्ट्वा सादयतु " " भूरसि भूमिरसि " इति तिसृभिर्ऋग्भिः " विश्वस्मै प्राणाय " इति यजुषा च एषा स्वयमातृण्णेष्टकोपधीयते; अतः प्रजापतिशब्देन तद्विशिष्टं मन्त्रं लक्षयित्वा तेन लक्षितलक्षणया ते सर्वे मन्त्रा लक्ष्यन्ते । ' प्रजापतिर्ह्येवैतत्स्वयमात्मनः प्रत्यधत्त ' इत्यनेन लक्षितलक्षणाविवक्षाकारणमुच्यते । यतः ' प्रजापतिः ' ' स्वयमात्मनः ' ' एतत् ' प्रतिष्ठालक्षणमङ्गम् ' प्रत्यधत्त ', अतस्तत्प्रतिष्ठात्मकस्वयमातृण्णोपधानमन्त्रेऽपि तत्सम्बन्धप्रतीतिर्यथा स्यादिति प्रजापतिनोपदध्यादित्युक्तम् । प्रथमामृचं व्याचष्टे–ध्रुवाऽसीति । ' स्थिराऽसीत्येतद् ' इति ' ध्रुवाऽसि ' इत्यस्य व्याख्यानम् । ' अथो प्रतिष्ठाऽसीति ' एतदपि ' ध्रुवाऽसि ' इत्यस्यैव विवरणम् । धरुणेति प्रतीकमादाय व्याचष्टे–प्रतिष्ठा वै धरुणमिति । सर्वस्याधारभूतेत्यर्थः । आस्तृता विश्वकर्मणेत्यस्य व्याख्यानम्–प्रजापतिर्वै विश्वकर्मेति । विश्वस्य कृत्स्नप्रपञ्चस्य कर्म सृष्टिलक्षणमस्यास्तीति विश्वकर्मशब्देन ' प्रजापतिः ' अभिधीयते; ' तेन ' ' आस्तृता ' आच्छादितोपहिता ' इति ' एतदुक्तं भवति । रुक्मो वै समुद्रः पुरुषः सुपर्ण इति । अत्र पुष्करपर्णे रुक्मं निधाय तत्र च हिरण्मयपुरुषमवस्थाप्य तस्योपरि स्वयमातृण्णोपधानं कर्त्तव्यम् । अतश्च ' मा त्वा समुद्र उद्वधीन्मा सुपर्णः ' ' इति ' अनेन–आधारभूतौ रुक्मपुरुषौ तव हिंसां मा कार्ष्टाम्, किन्त्वानुकूल्येनाङ्गीकुरुतामित्येतदुच्यते । यथैव यजुस्तथा बन्धुः इत्यनेन यथा मन्त्रस्तथैव व्याख्यानम् । ' अव्यथमाना पृथिवीं दृꣳह ' ' इति ' एष मन्त्रभागः स्पष्टार्थ इत्युच्यते ॥ ५ ॥

अथ द्वितीयामृचं व्याचष्टे–प्रजापतिष्ट्वेति । यतः ' प्रजापतिः ' एताम् ' ' प्रथमाम् ' ' चितिम् ' अपश्यत् ' अतः ' प्रजापतिष्ट्वा सादयत्विति ' मन्त्र आह । अपामाच्छादकत्वादियं पृथिवी ' अपां पृष्ठे ' तथा

(छ्रू) भूरसीति। भूर्हीयं भूमिरसीति भूमिर्हीयमदितिरसीतीयं वाऽअदितिरियꣳ हीदꣳ सर्वं ददते विश्वधाया ऽइत्यस्याꣳ हीदꣳ सर्वꣳ हितं विश्वस्य भुवनस्य धर्त्रीति सर्वस्य भुवनस्य धर्त्रीत्येतत्पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीरित्यात्मानं यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्येतत् ॥ ७ ॥

(छ्रि) विश्वस्मै प्राणायापानाय। व्यानायोदानायेति प्राणो वै स्वयमातृण्णा सर्वस्माऽउ वाऽएतस्मै प्राणः प्रतिष्ठायै चरित्रायेतीमे वै लोकाः

---

"भूरसि"–इति। भूर्हीयम्। "भूमिरसि"–इति। भूमिर्हीयम्। "अदितिरासि"–इति। इयं वाऽअदितिः। इयं हीदं सर्वं ददते। "विश्वधायाः"–इति। अस्यां हीदं सर्वं हितम्। "विश्वस्य भुवनस्य धर्त्री"–इति। सर्वस्य भुवनस्य धर्त्रीत्येतत्। "पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं मा हिंसीः"–(वा. सं. १३। १८) इति। आत्मानं यच्छ, आत्मानं दृंह, आत्मानं मा हिंसीरित्येतत् ॥ ७ ॥

"विश्वस्मै प्राणायापानाय व्यानायोदानाय"–इति। प्राणो वै स्वयमातृण्णा सर्वस्मा-

---

'समुद्रस्य' अपि 'एमन्' एमा "इण् गतौ"–(धा. पा. अ. प. २६) इत्यस्मात् "अन्येभ्योऽपि दृश्यन्ते"–(पा. सू. ३। २। ७५) इति मनिन्प्रत्ययः। 'समुद्रस्य' इति कृद्योगे कर्मणि षष्ठी (पा. सू. २।३।६५)। 'समुद्रस्य एमा' समुद्रं प्राप्तेत्यर्थः। परितः समुद्रेण वलयितत्वात्। 'एमन्' इति सप्तम्येकवचनस्य "सुपां सुलुक्"–(पा. सू. ७। १। ३९) इत्यादिना लुकि सति रूपम्। 'इयम्' पृथिवी 'व्यचस्वती' व्यञ्जनवती, अभिव्यक्तियुक्ता, 'प्रथस्वती' विस्तारयुक्ता चेत्येतत् प्रत्यक्षसिद्धम्। स्वयमातृण्णा च पृथिव्यात्मिका, अतश्च 'व्यचस्वतीम्' 'प्रथस्वतीम्' इति मन्त्र आह। प्रथस्व पृथिवी चासीत्येतदिति। यतस्त्वं 'पृथिव्यसि' अतः 'प्रथस्व' इत्येतदुक्तं भवतीत्यर्थः। पृथिवीशब्दस्य प्रथनप्रवृत्तिनिमित्तकत्वं तैत्तिरीयके श्रूयते–"तत्पुष्करपर्णेऽप्रथयत्. यदप्रथयत्तत्पृथिव्यै पृथिवित्वम्"–(तै. सं.) ॥ ६ ॥

अथ तृतीयामृचं व्याचष्टे–भूरसीति। भूमिरसीति भूमिर्हीयमिति। 'इयम्' पृथिवी, यतः सर्वेषां सुखानि भावयतीति 'भूः,' अस्याः सकाशादिदं सर्वमविज्ञातमभूदिति भूमिश्च; अत एव श्रुतिः–"अभूद्वा इयमिति तद्भूम्यै भूमित्वम्"–इति। तस्माद्भूरसि भूमिरसीत्यभिधत्ते। 'इयं हीदं सर्वं ददते' इत्यनेनादितित्वोपपादनम्–'इयम्' पृथिवी 'इदम्' 'सर्वम्' भोग्यवस्तुजातं 'ददते' तस्माददितिः। "दद दाने"–(धा. पा. भ्वा. आ. १७) इत्यस्माददितिशब्दो निष्पन्नो द्रष्टव्यः। विश्वं सर्वमस्यां निहितमिति 'विश्वधायाः'। सर्वस्य भुवनस्येति। भुवनशब्देनात्र भुवनवर्त्तिपदार्थजातं लक्ष्यते, ततश्च सर्वस्य भुवनवर्त्तिपदार्थजातस्य धारयित्रीत्येतदुक्तं भवति, पृथिवीरूपत्वादात्मनः 'पृथिवीं यच्छ' इत्यादिनाऽऽत्मन एव नियमनादिकं क्रियतामित्युच्यत इत्याह–आत्मानं यच्छेत्यादिना ॥ ७ ॥

अथ यजुर्मन्त्रं व्याचष्टे–विश्वस्मै प्राणायेति। एक एव प्राणवायुर्वृत्तिभेदात्प्राणापानव्यानोदानसमानशब्दैः

स्वयमातृण्णाऽइमुऽउ लोकाः प्रतिष्ठा चरित्रमग्निष्ट्वाऽभिपात्वित्यग्निष्ट्वा-ऽभिगोपायत्वित्येतुन्मह्या स्वस्त्येति महत्या स्वस्त्येत्येतुच्छर्दिषा शंतमे-नेति युच्छर्दिः शंतमं तेनेत्येतुत्सादयित्वा सूददोहसाऽधिवदति तुस्योक्तो बन्धुरुथ साम गायति तुस्योपरि बन्धुः ॥ ८ ॥

---

ऽउ वाऽएतस्मै प्राणः । "प्रतिष्ठायै चरित्राय"–इति । इमे वै लोकाः स्वयमातृण्णाः । इमऽउ लोकाः प्रतिष्ठा चरित्रम् । "अग्निष्ट्वाऽभिपातु"–इति । अग्निष्ट्वाऽभिगोपायत्वित्येतत् । "मह्या स्वस्त्या"–इति । महत्या स्वस्त्येत्येतत् । "छर्दिषा शंतमेन"–( वा. सं. १३ । १९ ) इति । यच्छर्दिः शंतमं–तेनेत्येतत् । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः । अथ साम गायति । तस्योपरि बन्धुः ॥ ८ ॥

---

रभिधीयते । "प्राणो ह्येवैतत् स्वयमात्मन आतृन्ते"–इति स्वयमातृण्णायाः प्राणत्वमुक्तम् ( श. प. ७ । ४ । २।२ ) । 'सर्वस्मा उ वा एतस्मा' इति षष्ठयर्थे चतुर्थी ( पा. सू. २ । ३ । ६२, वा. १ ) सर्वस्य खल्वेतस्य प्राणिसंघस्य प्राण एवाशास्यो भवति, अतः सर्वस्यापि प्राणादिस्थैर्यार्थं तवोपधानमिति यावत् । इमे वै लोका इति । तिस्रः 'स्वयमातृण्णाः' पृथिव्यन्तरिक्षद्युलोकात्मिकाः 'इमे' खलु 'लोकाः' 'प्रतिष्ठा' सर्व-प्राणिनामाधारः, 'चरित्रम्' इति प्रत्येकविवक्षयैकवचनम्, नियतलिङ्गत्वान्नपुंसकलिङ्गम् । ततश्च प्रथमायाः स्वयमातृण्णायाः पृथिव्यात्मकत्वात्–सर्वेषामाधारभूताय संसारसाधनभूताय चास्मै लोकाय तवोपधानम् । गोपायत्वित्येतदिति । पृथिव्यभिमानिदेवतात्वादग्निस्त्वां गोपायत्वित्येतदुक्तम् । यच्छर्दिः शन्तमं तेनेत्येतदिति । 'शन्तमम्' अतिशयेन सुखकरं 'यच्छर्दिः' तेजोऽस्ति 'तेन' इति । मन्त्रार्थस्तु–हे स्वयमातृण्णे ! स्थिराऽसि, सर्वेषां प्रतिष्ठाऽसि, प्रजापतिनोपहिताऽसि, तादृशीं त्वां रुक्मो 'मोद्वधीत्' । तथा हिरण्मयपुरुषश्च त्वां मोद्वधीत् । तथा सती 'अव्यथमाना' त्वं 'पृथिवीम्' दृढीकुरु । किञ्च 'प्रजापतिः' अपामाच्छादके समुद्रं प्राप्तवति भूप्रदेशे 'व्यचस्वतीम्' विस्तारवतीं त्वां सादयतु यतस्त्वं 'पृथिव्यसि,' अतः 'प्रथस्व' विस्तारवती भव । किञ्च त्वं सर्वेषां सुखानां भावयित्र्यसि, सर्वेषां चोत्पत्तिस्थानमसि, सर्वस्यापि भोग्यवस्तुनो दात्र्यसि, कृत्स्नस्यापि भुवन-वर्तिपदार्थजातस्य धारयित्र्यसि । तादृशी त्वं पृथिवीरूपमात्मानं नियच्छ दृढीकुरु । मा च हिंसीः । प्रयोजन-मन्तरेण त्वां नोपदधे, किन्तु सर्वस्यापि प्राणिनः स्थैर्यार्थं त्वामुपदधामि । त्वाञ्चाग्निः 'मह्या' 'महत्या,' टिलोपश्छान्दसः । 'स्वस्त्या' अविनाशेन सुखातिशयसम्पादकेन तेजसा च 'गोपायतु' 'तया देवतया' 'अङ्गिरस्वत्' अङ्गिरसा तुल्या 'ध्रुवा' स्थिरा 'सीद' उपविशेति कृत्स्नमन्त्रार्थः । अथ "तया देवतया" इत्यनेन मन्त्रेण सादयित्वा । "ता अस्य" इत्यनेनाधिवदेदित्याह–सादयित्वेति । अत्र सूत्रम्–" नित्ये सादनसूददोहसा उपधानादुत्तरे तया देवतया ता अस्येति"–( का. श्रौ. सू. १७ । २।१३ ) इति । साद-नाधिवदनमन्त्रयोर्व्याख्यानं प्रागुक्तमित्याह–तस्योक्तो बन्धुरिति । तत्रास्मिन्काण्डे " प्राणो वै सूददोहाः "–( श. प. ७।१।१।२६ ) इत्यादिनाऽधिवदनमन्त्रो व्याख्यातः । षष्ठकाण्डे " स उपदधाति तया देवतयेति वाग्वै सा देवता " इत्यादिना व्याख्यातः सादनमन्त्रः ॥ ८ ॥

---

१–महीधरस्तु–'शन्तमेन' अत्यन्तसुखकारिणा 'छर्दिषा' गृहेणेति व्याचख्यौ । तच्च निघण्टौ ( ३ । ४ । १८ ) द्रष्टव्यम्

( स्तु ) तदाहुः । कथमेष पुरुषः स्वयमातृण्णयाऽनभिनिहितो भवतीत्युन्नं वै स्वयमातृण्णा प्राणः स्वयमातृण्णाऽनभिनिहितो वै पुरुषोऽन्नेन च प्राणेन च ॥ ९ ॥

(चा) अथ दूर्व्वेष्टकामुपदधाति । पशवो वै दूर्व्वेष्टका पशूनेवैतदुपदधाति तद्यैरदोऽग्निरनन्तर्हितैः पशुभिरुपैत्तऽएते तानेवैतदुपदधाति तामनन्तर्हिताथ्ँ स्वयमातृण्णाया ऽउपदधातीयं वै स्वयमातृण्णाऽनन्तर्हितांस्तदस्यै पशून्दधात्युत्तरामुत्तरांस्तदस्यै पशून्दधाति ॥ १० ॥

---

तदाहुः—कथमेष पुरुषः स्वयमातृण्णयाऽनभिनिहितो भवतीति । अन्नं वै स्वयमातृण्णा, प्राणः स्वयमातृण्णा । अनभिनिहितो वै पुरुषः—अन्नेन च प्राणेन च ॥ ९ ॥

अथ दूर्वेष्टकोपधानम् ।

अथ दूर्वेष्टकामुपदधाति । पशवो वै दूर्वेष्टका । पशूनेवैतदुपदधाति । तद्यैरदोऽग्निरनन्तर्हितैः पशुभिरुपैत्—तंऽएते । तानेवैतदुपदधाति । तामनन्तर्हितां स्वयमातृण्णाया उपदधाति । इयं वै स्वयमातृण्णा । अनन्तर्हितांस्तदस्यै पशून्दधाति । उत्तराम् । उत्तरांस्तदस्यै पशून्दधाति ॥ १० ॥

---

अथ स्वयमातृण्णायां सामगानं विधाय तत्प्रयोजनकथनलक्षणं व्याख्यानमुपरिष्टाद्वक्ष्यत इति दर्शयति—अथेत्यादिना । अस्यां प्रथमायां स्वयमातृण्णायां 'भूः' इति व्याहृत्या साम गायेत्, अत एव सूत्रम्—"भूरित्येतस्याᳪ साम गायति "—( का. श्रौ. सू. १७ । ८८ ) इति । तद्व्याख्यानं तु " अथ स्वयमातृण्णासु सामानि गायति "—इत्यादिनोत्तरत्राष्टमकाण्डावसाने प्रपञ्च्यते ( श. प. ८।७।४।१ ) । लोके हि पुरुषस्योपरि पाषाणे निहितेऽस्य महानुपरोधो जायते, अतोऽत्र स्वयमातृण्णायाः पाषाणात्मकत्वात्तदुपधानेन पुरुषः कथमनभिनिहितो भवतीति प्रश्नपूर्वकं स्वयमातृण्णाया अन्नप्राणात्मकत्वात्तयोश्चोपरोधहेतुताभावात् प्रत्युतानुकूलत्वात् तत्सन्निधानेऽपि पुरुषो नाभिनिहित एव भवति इत्याह—तदाहुरित्यादिना ॥ ९ ॥

स्वयमातृण्णेष्टकोपधानानन्तरं दूर्वेष्टकोपधानं विधत्ते—अथेति । ' इष्टका ' शब्दो मृन्मयेष्टकासु मुख्यः, दूर्वायां तूपधानसामान्याद्गौणः । पशुपुष्टिसाधनत्वेन दूर्वाणामपि पशुत्वात्तदुपधानेन पशूनामेवोपधानं कृतं भवतीत्याह—पशवो वा इति । यदुक्तम्—' पशूनेवैतदुपदधाति ' इति तत् किं साधारणपशुविषयं ? नेत्याह—तद्यैरद इति । ' अदः ' पुरस्तात् ' अग्निः ' ' अनन्तर्हितैः ' अव्यवहितैः, स्वस्य तेष्वनुप्रवेशादनन्तर्हितत्वम्, तादृशैर्यैः पञ्चभिः ' पशुभिः ' अन्यत्रोपजगाम, ते पशवः ' एते ' दूर्वेष्टकात्मका इत्यर्थः । अग्निः पशून् प्रविश्यान्यत्र जगामेत्येतत् " स एतान् पञ्च पशून् प्राविशद् " इत्यादिना (श.प.६।२।१।४) षष्ठकाण्डे प्रपञ्चेनोक्तम् । ' उपदधाति ' इति सामान्येन विधानात्स्थानविशेषं विधाय प्रशंसति—तामनन्तर्हितामित्यादिना । " तामनन्तर्हितां पुरुषादुपदधाति "—( श. प. ७ । ४ । २ । १ ) इति स्वयमातृण्णेष्टकास्थानविधिव्याख्यानेनैव कृतव्याख्यानमेतत् ॥ १० ॥

यद्वेव दूर्वेष्टकामुपदधाति। प्रजापतेर्व्विस्रस्तस्य यानि लोमान्यशीयन्त ता ऽइमा ऽओषधयोऽभवन्नथास्मात्प्राणो मध्यत ऽउदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत ॥ ११ ॥

सोऽब्रवीत्। ( द् ) अयं वाव माऽधूर्व्वीदिति यदब्रवीदधूर्व्वीन्मेति तस्माद्धूर्व्वा धूर्व्वा ह वै तां दूर्व्वेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तदेतत्क्षत्त्रं प्राणो ह्येष रसो लोमान्यन्या ऽओषधय ऽएतामुपदधत्सर्व्वा ऽओषधीरुपदधाति ॥ १२ ॥

तं यत्र देवाः समस्कुर्वन्। ( र्व्वंस्त ) तदस्मिन्नेतं प्राणᳫ रसं मध्यतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति तामनन्तर्हिताᳫ स्वयमातृण्णाया ऽउपदधातीयं वै स्वयमातृण्णाऽनन्तर्हितास्तदस्याऽओषधीर्दधात्युत्तरामुत्तरा-

---

यद्वेव दूर्वेष्टकामुपदधाति। प्रजापतेर्विस्रस्तस्य यानि लोमान्यशीयन्त—ता इमा ओषधयोऽभवन्। अथास्मात्प्राणो मध्यत उदक्रामत्। तस्मिन्नुत्क्रान्तेऽपद्यत ॥ ११ ॥

सोऽब्रवीत्—अयं वाव माऽधूर्वीदिति। यदब्रवीदधूर्वीन्मेति—तस्माद्धूर्वा। धूर्वा ह वै तां दूर्वेत्याचक्षते परोऽक्षम्। परोऽक्षकामा हि देवाः। तदेतत्क्षत्रम्। प्राणो ह्येष रसः—लोमान्यन्या ओषधयः। एतामुपदधत्सर्वा ओषधीरुपदधाति ॥ १२ ॥

तं यत्र देवाः समस्कुर्वन्—तदस्मिन्नेतं प्राणं रसं मध्यतोऽदधुः। तथैवास्मिन्नयमेतद्दधाति। तामनन्तर्हितां स्वयमातृण्णाया उपदधाति। इयं वै स्वयमातृण्णा। अनन्तर्हितास्तदस्याऽओषधीर्दधाति।

---

विहितमुपधानमनूद्यौषधीनां दूर्वायाश्चोत्पत्तिप्रदर्शनपूर्वकं तदुपधानेनैव क्षत्रमन्याः सर्वौषधीः प्राणं रसं चोपहितवान् भवतीति स्तौति—यद्वेवेत्यादिना। अशीयन्तेति। अपतन्नित्यर्थः ॥ ११ ॥

सोऽब्रवीदिति। 'अयम्' एव प्राणो माम् 'अधूर्वीद्' अहिंसीदिति प्रजापतिः 'अब्रवीत्' यदब्रवीन्माम धूर्वीदिति 'तस्माद्' एष प्राणो नाम्ना 'धूर्वा' अभूत्। ननु धूर्वा न दूर्वा भवितुमर्हति तत्कथं दूर्वेत्युच्यत इत्यत आह—धूर्वा ह वै तामिति। 'धूर्वा' शब्दः पचाद्यजन्तः, लोकेऽपि यत्किञ्चिन्नामधेयविशिष्टं पुरुषं गौरवार्थं भ्राता पितेत्येवं परोक्षेण व्यपदिशन्ति तद्वद्देवा अपीत्यर्थः'। तदेतादिति। यतः 'एषः' दूर्वाप्राणात्मको 'रसः'। प्राणस्य रसात्मकत्वं श्रूयते—"प्राणो हि वाऽअङ्गानाᳫ रसः" ( श. प. १४।१।१। २१ )—इति। 'एषः' इति पुंल्लिङ्गत्वं प्राणरसापेक्षम्; अतः 'तदेतद्' दूर्वा 'क्षत्त्रम्' प्रधानम्, 'क्षत्र'—शब्देनात्र प्राधान्यं लक्ष्यते। 'तदेतत्' इत्यपि नपुंसकलिङ्गं क्षत्रशब्दापेक्षम्। तथा सति लोम्न प्राणानुविधायित्वात्प्राणरसात्मिकामेतां दूर्वेष्टकामुपदधत् लोमात्मिकाः 'सर्वाः' अपि ओषधीरुपदधाति ॥ १२ ॥

किञ्च—'यत्र' यदा 'देवाः' 'तम्' प्रजापतिं चयनसंस्कारेण संस्कृतवन्तः, तदा 'अस्मिन्' प्रजापतौ 'मध्यतो' मध्ये सप्तम्यर्थे तसिः 'प्राणं रसम्' 'अदधुः' स्थापितवन्तः। 'तथैव' 'अयम्' अध्वर्युः

१८१७

शतपथब्रा॰ [७ का०, ३ प्र०, २ ब्रा० ]



स्तदस्याऽओषधीर्दधाति सा स्यात्समूला साग्रा कृत्स्नतायै यथा स्वयमातृण्णायामुपहिता भूमिं प्राप्नुयादेवमुपदध्यादस्याᳬं ह्येवैता जायन्तऽइमामनुप्ररोहन्ति ॥ १३ ॥

काण्डात्काण्डात्प्ररोहन्ती । परुषः परुषस्परीति काण्डात्काण्डाद्ध्येषा पर्व्वणः पर्व्वणः प्ररोहत्येवा नो दूर्व्वे प्रतनु सहस्रेण शतेन चेति यथैव यजुस्तथा बन्धुः ॥ १४ ॥

(स्वा) या शतेन प्रतनोषि । सहस्रेण विरोहसीति शतेन ह्येषा प्रतनोति सहस्रेण विरोहति तस्यास्ते देवीष्टके विधेम हविषा वयमिति यथैव

---

उत्तराम् । उत्तरास्तदस्याऽओषधीर्दधाति । सा स्यात्समूला साग्रा । कृत्स्नतायै । यथा स्वयमातृण्णायामुपहिता भूमिं प्राप्नुयात्;—एवमुपदध्यात् । अस्यां ह्येवैता जायन्ते, इमामनुप्ररोहन्ति ॥ १३ ॥

" काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि "–इति । काण्डात्काण्डाद्ध्येषा पर्वणः पर्वणः प्ररोहति । " एवा नो दूर्वे प्रतनु सहस्रेण शतेन च "–( वा. सं. १३ । २० ) इति । यथैव यजुस्तथा बन्धुः ॥ १४ ॥

" या शतेन प्रतनोषि, सहस्रेण विरोहसि "–इति । शतेन ह्येषा प्रतनोति, सहस्रेण विरोहति । " तस्यास्ते देवीष्टके विधेम हविषा वयम् "–( वा. सं. १३ । २१ ) इति ।

---

' एतद् ' एतेन दूर्वेष्टकोपधानेन प्राणं रसं निहितवान् भवतीत्यर्थः । " तामनन्तार्हिताम् " इत्यादिकस्यार्थस्तु व्यक्त एव । उपधातव्यायाः दूर्वेष्टकाया लक्षणमाह—सा स्यादिति । ' कृत्स्नतायै ' संपूर्णत्वाय अच्छिन्नमूलाग्रं हि संपूर्णमन्यूनं भवति, अतो मूलाग्रवती कार्या । उपधाने विशेषमाह—यथेति । अत्र कात्यायनः—" मूलाग्रवतीं दूर्वां तस्यां पुरस्तादभिप्राग्राम् "–( का. श्रौ. सू. १७ । ९० ) इति । दूर्वेष्टकायाः पुरस्ताद् भूमिसंस्पर्शेनोपधान इमां दूर्वामनुलक्ष्यैता ओषधयो भूमौ प्ररोहेयुरित्याह—अस्याᳬं ह्येवैता इति ॥ १३ ॥

" काण्डात् " इति " या शतेन "–इति च द्वाभ्यामपीयमिष्टकोपधीयते; तत्र प्रथममन्त्रे पूर्वार्धस्यार्थः प्रत्यक्षसिद्ध इति दर्शयति—काण्डात्काण्डादिति । द्वितीयार्द्धं तु निगदव्याख्यातमित्याह—एवा नो दूर्वे इत्यादिना । काण्डशब्दः स्तम्बवाची, परुःशब्दः पर्ववचनः । यावन्तः ' काण्डाः ' स्तम्बा विद्यन्ते तत्रैकैकस्मात् स्तम्बात् प्रकर्षेणोत्पद्यमाना एकस्मिन्नपि स्तम्बे यावन्ति ' परूंषि ' पर्वाणि विद्यन्ते तेष्वेकैकस्मात् ' पर्वणः ' परितः प्रकर्षेणोत्पद्यमाना । अथवा काण्डशब्देन पर्वणोर्मध्यवर्ती दण्ड उच्यते । ' काण्डात् काण्डात् ' सर्वस्मात् काण्डादित्यर्थः । ' परुषः परुषः ' सर्वस्मात्पर्वणः । हे 'दूर्वे !' येषु काण्डेषु यानि सर्वाणि पर्वाणि विद्यन्ते तेभ्यः सर्वेभ्योऽपि परितः ' प्ररोहन्ती ' भवसीत्यर्थः । ' एवा ' एवं यथा त्वं भवसि एवं ' नः ' अस्मान् ' शतेन ' ' सहस्रेण ' च शतसहस्रसङ्ख्याकैः पुत्रादिभिः ' प्रतनु ' विस्तारयेति प्रथमस्यार्थः ॥ १४ ॥

प्रथममन्त्रवद् द्वितीयमन्त्रेऽपि पूर्वार्धस्यार्थः प्रत्यक्षसिद्धः; उत्तरार्धं तु निगदव्याख्यातमिति व्याचष्टे—या

यजुस्तथा बन्धुर्द्वाभ्यामुपदधाति तस्योक्तो बन्धुः सादयित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ १५ ॥

( ३ ) अथ द्वियजुषमुपदधाति । ( ती ) इन्द्राग्नीऽअकामयेताᳫं स्वर्गं लोकमियावेति तावेतामिष्टकामपश्यतां द्वियजुषमिमामेव तामुपादधातां तामुपधायास्यै प्रतिष्ठायै स्वर्गं लोकमैतां तथैवैतद्यजमानो यद्द्वियजुषमुपदधाति येन रूपेण यत्कर्म कृत्वेन्द्राग्नी स्वर्गं लोकमैतां तेन रूपेण तत्कर्म कृत्वा स्वर्गं लोकमयानीति सा यद्द्वियजुर्नाम द्वे ह्येतां देवतेऽअपश्यतां यद्वेव द्वियजुषमुपदधाति यजमानो वै द्वियजुः ॥ १६ ॥

---

यथैव यजुस्तथा बन्धुः । द्वाभ्यामुपदधाति तस्योक्तो बन्धुः । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ १५ ॥

अथ द्वियजुरिष्टकोपधानम् ।

अथ द्वियजुषमुपदधाति । इन्द्राग्नीऽअकामयेताम्—स्वर्गं लोकमियावेति । तावेतामिष्टकामपश्यतां—द्वियजुषम् । इमामेव तामुपादधाताम् । तामुपधायास्यै प्रतिष्ठायै स्वर्गं लोकमैताम् । तथैवैतद्यजमानो यद्द्वियजुषमुपदधाति—येन रूपेण; यत्कर्म कृत्वा, इन्द्राग्नी स्वर्गं लोकमैतां, तेन रूपेण तत्कर्म कृत्वा स्वर्गं लोकमयानीति । सा यद्द्वियजुर्नाम—द्वे ह्येतां देवतेऽअपश्यताम् । यद्वेव द्वियजुषमुपदधाति—यजमानो वै द्वियजुः ॥ १६ ॥

---

शतेनेत्यादिना । हे दूर्वे ! 'या' त्वं काण्डानां 'शतेन' आत्मानं विस्तारयसि, अङ्कुराणां 'सहस्रेण' विविधं प्रादुर्भवसि । हे देवि ! द्योतमाने 'इष्टके' 'तस्यास्ते' 'वयम्' 'हविषा विधेम' परिचरेमेति द्वितीयस्यार्थः ॥

उपधानमन्त्रगतामर्थसिद्धां द्वित्वसङ्ख्यामनुवदति—द्वाभ्यामुपदधातीति । द्वित्वसङ्ख्याप्रशंसालक्षणं व्याख्यानं "द्वाभ्यामभिजुहोति द्विपाद्यजमानो यजमानोऽग्निः" इत्यादिना—( श. प. ६।४।१।१२ ) प्रागुक्तमित्याह—तस्योक्तो बन्धुरिति । 'सादयित्वा' इत्यादिकं तु व्याख्यातम् ॥ १५ ॥

कात्यायनः—"यास्त इति द्वियजुषम्"—( का. श्रौ. सू. १७ । ९२ ) इति । "यास्ते अग्ने सूर्ये रुचः," "या वो देवाः" इति द्वाभ्यां द्वियजुर्नामेष्टकामुपदध्यादिति सूत्रार्थः, तदेतद्विधत्ते—अथेति । विहितामिष्टकां यजमानस्य स्वर्गप्राप्तिसाधनत्वेन प्रशंसति—इन्द्राग्नी इत्यादिना । स्पष्टमेतत् । इमामेवेति । 'ताम्' आत्मना दृष्टाम् 'इमाम्' अस्माभिरधिष्ठीयमानामिष्टकाम् 'एव' 'उपादधाताम्' 'ताम्' 'उपधाय' 'अस्यै प्रतिष्ठायै' "षष्ठ्यर्थे चतुर्थी"—( पा. सू. २ । ३ । ६२ । वा. १ ) इति । अस्याः प्रतिष्ठायाः सकाशात् सोपानवदिमामारुह्य 'स्वर्गं लोकम्' प्राप्नुतामित्यर्थः । तथैवैतदिति । 'यजमानो द्वियजुषमुपदधाति' इति 'यत्' 'एतत्तथैव' इन्द्राग्निदेवतावदेव । तदेव दर्शयति—येनेति । 'येन' प्रकारेण 'यत् कर्म' 'कृत्वा' 'इन्द्राग्नी स्वर्गं लोकं' प्राप्नुताम् । 'तेन' एव प्रकारेण 'तत्कर्म कृत्वा' अहमपि 'स्वर्गं'

( स्तु ) तुदाहुः । ( र्ब्बु ) युदसावेव युजमानो योऽसौ हिरण्मुयः पुरुषो-ऽथ कतमुदस्येदꣳ रूपमिति दैवो वाऽअस्य सु ऽआत्मा मानुषोऽयं तद्यत्स हिरण्मयो भुवत्यमृतं वाऽअस्य तुद्रूपं देवरूपममृतꣳ हिरण्यमुथ युदियं मृदः कृता भुवति मानुषꣳ ह्यस्येदꣳ रूपम् ॥ १७ ॥

( ꣳ ) स युदमूमेवोपदध्यात् । ( न्ने ) नेमामपशिꣳष्यात्क्षिप्रे हास्मा-

---

तदाहुः—यदसावेव यजमानो—योऽसौ हिरण्मयः पुरुषः—अथ कतमदस्येदं रूपमिति । दैवो वा-ऽअस्य स आत्मा, मानुषोऽयम् । तद्यत्स हिरण्मयो भवति—अमृतं वाऽअस्य तद्रूपं देवरूपम्, अमृतं हिरण्यम् । अथ यदियं मृदः कृता भवति,—मानुषं ह्यस्येदं रूपम् ॥ १७ ॥

स यदमूमेवोपदध्यात्—नेमामपशिंष्यात् । क्षिप्रे हास्माल्लोकाद्यजमानः प्रेयात् । अथ यदिमा-मपशिनष्टि—यदेवास्येदं मानुषं रूपम्—तदस्यैतदपशिनष्टि । तथो हानेनात्मना सर्वमायुरेति ॥ १८ ॥

---

'लोकम्' प्राप्नवानीति 'यजमानो द्वियजुषमुपदधाति' तस्मादेषा स्वर्गप्राप्तिसाधनमिति भावः । प्रकृताया इष्टकायाः द्वियजुरिति नामधेयप्राप्तिं दर्शयति—सा यदिति । यतः 'एताम्' 'द्वे' 'देवते' इन्द्राग्नी 'अपश्यताम्' तस्माद् 'द्वियजुर्नाम' इयमिष्टकेत्यर्थः । ननु देवताद्वयदर्शनात्कथं द्वियजुरिति नाम स्यादिति चेदुच्यते-यतो द्वे देवते एतामपश्यताम्, अत एव द्वाभ्यां यजुर्भ्यामुपधीयते, तथा सति यजुर्द्वयेनोपधानस्यापि देवताद्वयदर्शनोपाधिकत्वाद् द्वियजुरिति नामधेयस्यापि देवताद्वयदर्शनमेव निमित्तमित्यभिप्रायः । ननु "यास्ते अग्ने"—"या वो देवाः"—इत्यनयोर्मन्त्रयोर्ऋग्व्यवस्थया पठितत्वात् कथं यजुःशब्देन तदभिधानमिति । एवं तर्ह्यत्र यजुःशब्देन मन्त्रमात्रं लक्ष्यते । ऋक्सामयजुषां लक्षणं जैमिनिना दर्शितम् । "तेषामृक् यत्रार्थवशेन पाद-व्यवस्था, गीतिषु सामाख्या, शेषे यजुःशब्दः"-( जै. सू. २।१।११।३५·३७ ) इति । एतदेवान्यत्र सङ्गृहीतमभि-युक्तैः—"नर्क्सामयजुषां लक्ष्म साङ्कर्यादिति शङ्किते । पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसङ्करः" इति । अथ वा मन्त्रे एव यजुःशब्दव्यवहारो दृश्यते । यथा-"तस्यास्ते देवीष्टके विधेम हविषा वयम्"—इति—"यथैव यजुस्तथा बन्धुः" इत्येवमादौ । अथ तामेवेष्टकां यजमानात्मना प्रशंसति—यद्वेवेति । द्वियजुषो यजमाना-त्मकत्वात्तदुपधानेन यजमानमेवास्मिँल्लोकेऽर्पितवान् भवतीत्यर्थः ॥ १६ ॥

द्वियजुषो यजमानत्वोक्त्या लब्धोदयां याज्ञिकानां जिज्ञासामवतारयति—तदाहुरित्यादिना । अथ कतम-दिति । 'अथ' 'अस्य' यजमानस्य 'इदं' द्वियजुर्नाम एतत् 'कतमत्' 'रूपं' स्वरूपमिति । रूपत्वा-पेक्षया नपुंसकत्वम् । उक्तस्योत्तरमाह—दैवो वा इति । 'सः' हिरण्मयः 'पुरुषः' 'अस्य' यजमानस्य देवत्वप्रयुक्तः 'आत्मा' शरीरम् । यद्द्वियजुरिष्टका सः मनुष्यत्वप्रयुक्त आत्मेत्यर्थः । हिरण्मयत्वात् पुरुषस्य देवशरीरत्वम्, मृन्मयत्वाद् द्वियजुषो मानुषशरीरात्मत्वम्, ( तत् ) प्रतिपादयति—तद्यदित्यादिना । देव-रूपमिति । यतः 'देवरूपम्' अतोऽस्य यजमानस्य 'तद्रूपम्' 'अमृतं' खलु । विलायनेऽप्यविनश्वरत्वा-द्धिरण्यस्यामृतत्वम् । मानुषꣳ हीति । इदं द्वियजुर्लक्षणं स्वरूपं यतो 'मानुषम्,' अतः 'इयं मृदः कृता भवति' पार्थिवी भवति । मानुषाणां पार्थिवत्वादित्यर्थः ॥ १७ ॥

द्वियजुष उपधानस्यान्वयव्यतिरेकयोर्गुणदोषप्रदर्शनेनावश्यकत्वमाह—स यदित्यादिना । 'अमूम्' हिरण्मय-

ल्लोकाद्यजमानः प्रेयादथ यदिमामपशिनष्टि यदेवास्येदं मानुषᳪं रूपं तदस्यैतदुपशिनष्टि तथो हानेनात्मना सर्व्वमायुरेति ॥ १८ ॥

स यन्नानूपदध्यात्। (न्न) नु हैतं दैवमात्मानमनुप्रजानीयादथ यदनूपदधाति तथो हैतं दैवमात्मानमनुप्रजानाति तामनन्तर्हितां दूर्व्वेष्टकाया ऽउपदधाति पशवो वै दूर्व्वेष्टका यजमानं तत्पशुषु प्रतिष्ठापयति॥१९

तदाहुः। कथमस्यैतावात्मानौ प्राणेन संततावव्यवच्छिन्नौ भवत ऽइति प्राणो वै स्वयमातृण्णा प्राणो दूर्व्वेष्टका यजमानो द्वियजुः स यदनन्तर्हिताᳪं स्वयमातृण्णायै दूर्व्वेष्टकामुपदधाति प्राणेनैव तत्प्राणᳪं संतनोति संदधात्यथ यदनन्तर्हितां दूर्व्वेष्टकायै द्वियजुषमुपदधाति प्राणो वै दूर्व्वेष्टका यजमानो द्वियजुरेवमु हास्यैतावात्मानौ प्राणेन संततावव्यवच्छिन्नौ भवतः ॥ २० ॥

---

स यन्नानूपदध्यात्—न हैतं दैवमात्मानमनुप्रजानीयात्। अथ यदनूपदधाति—तथो हैतं दैवमात्मानमनुप्रजानाति। तामनन्तर्हितां दूर्वेष्टकाया उपदधाति। पशवो वै दूर्वेष्टका। यजमानं तत्पशुषु प्रतिष्ठापयति ॥ १९ ॥

तदाहुः—कथमस्यैतावात्मानौ प्राणेन सन्ततावव्यवच्छिन्नौ भवत इति। प्राणो वै स्वयमातृण्णा। प्राणो दूर्वेष्टका। यजमानो द्वियजुः। स यदनन्तर्हितां स्वयमातृण्णायै दूर्वेष्टकामुपदधाति—प्राणेनैव तत्प्राणं सन्तनोति; सन्दधाति। अथ यदनन्तर्हितां दूर्वेष्टकायै द्वियजुषमुपदधाति—प्राणो वै दूर्वेष्टका, यजमानो द्वियजुः—एवमु हास्यैतावात्मानौ प्राणेन सन्ततावव्यवच्छिन्नौ भवतः ॥ २० ॥

---

पुरुषलक्षणामिष्टकाम् 'एव' 'उपदध्यात्'। नेमामिति। 'इमाम्' द्वियजुर्लक्षणामपि तदानीमेव चेदुपदध्यात् 'नापशिंष्यात्' नावशेषयेत्, तर्हि मानुषशरीररूपद्वियजुरिष्टकाया अपरिशेषणात् क्षिप्रकाल एव 'अस्माल्लोकाद्यजमानः प्रेयात्,' एतस्यास्तदानीमनुपधानेनावशेषणे तु 'अनेन' द्वियजुर्लक्षणेन मानुषशरीरेणास्मिल्लोके यजमानः कृत्स्नम् 'आयुरेति' इत्यर्थः ॥ १८ ॥

अथास्या इष्टकायाः हिरण्मयपुरुषसमीपे सर्वथाऽनुपधाने दोषप्रदर्शनपूर्वकं तत्रोपधाने गुणं दर्शयति—स यदित्यादिना। समीपेऽनुपधाने सति असम्बन्धाद्यजमानः स्वकीयं देवरूपमनुक्रमेण 'न' 'प्रजानीयात्'। उपधाने तु प्रजानीयात्। अथ तामेवेष्टकां दूर्वेष्टकासंस्पर्शेनोपदध्यादित्याह—तामनन्तर्हितामिति ॥ १९ ॥

यजमानस्य हिरण्मयपुरुषो दैवं शरीरं द्वियजुस्तु मानुषमित्युक्तम्; तयोर्मध्ये स्वयमातृण्णादूर्वेष्टकयोरुपधानेन व्यवधानाच्छरीरद्वयस्यापि प्राणेन कथमव्यवच्छेद इति याज्ञिकानां प्रश्नमवतारयति—तदाहुरिति। 'सन्ततौ' इत्यस्यैव विवरणम्—'अव्यवच्छिन्नौ' इति। उक्तस्योत्तरं दर्शयति—प्राणो वा इत्यादिना। "प्राणो वै स्वयमातृण्णा प्राणो ह्येवैतत्स्वयमात्मन आतृन्ते"—इति स्वयमातृण्णायाः प्राणत्वमुक्तम् (श. प. ७।४।२।२) "अथास्मात् प्राणो मध्यत उदक्रामत्"—इत्यादिना प्राणरस एव दूर्वाऽभूदित्यप्युक्तम् (श. प, ७।४।२।११) 'सन्तनोति' इत्येतदेव विवृणोति—सन्दधातीति। स्पष्टमन्यत् ॥ २० ॥

(तो) या॒स्ते॑ऽअग्ने॒ सूर्य्ये॒ रुच॑: । (चो) या वो॑ देवा॒: सूर्ये॒ रुच॒ऽ इति॒ रुच॑ꣳ रु॒चमि॒त्यमृ॑त॒त्वं वै रु॒गमृ॑त॒त्वमे॒वास्मि॑न्ने॒तद्द॑धाति॒ द्वाभ्या॒मुप॑दधाति॒ त॒स्योक्तो॒ ब॒न्धुर॒थो॒ द्व॒यꣳ ह्ये॒वैत॒द्रूपं॒ मृच्चाप॑श्च सादयि॒त्वा सू॒ददो॑हसा॒ऽधि॑वदति॒ त॒स्योक्तो॒ ब॒न्धुः ॥ २१ ॥

(रु) अ॒थ रे॑तः॒सिचा॒ऽउप॑दधाति । (ती) इ॒मौ वै॒ लो॒कौ रे॑तः॒सिचा-

---

" यास्तेऽअग्ने सूर्ये रुचः "–" या वो देवाः सूर्ये रुचः "–( वा० सं० १३ । २२, २३ ) इति । रुचं रुचमिति–अमृतत्वं वै रुक् । अमृतत्वमेवास्मिन्नेतद्दधाति । द्वाभ्यामुपदधाति । तस्योक्तो बन्धुः । अथो द्वयं ह्येवैतद्रूपम्–मृच्चापश्च । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ २१ ॥

अथ रेतःसिगिष्टकाद्वयोपधानम् ।

अथ रेतःसिचाऽउपदधाति । इमौ वै लोकौ रेतःसिचौ । इमौ ह्येव लोकौ रेतः सिञ्चतः–इतो

---

द्वियजुष उपधाने मन्त्रौ विधत्ते–यास्ते अग्ने इति । " यास्ते अग्ने सूर्ये रुचो " " या वो देवाः सूर्ये रुचः "–इत्येताभ्यां मन्त्राभ्यां द्वियजुषमुपदध्यादित्यर्थः । मन्त्रयोः पुनः पुना रुक्पदप्रयोगस्याभिप्रायमाह–रुचं रुचमिति । 'अस्मिन्' इति । यजमाने इत्यर्थः । मन्त्रयोस्त्वयमर्थः–हे अग्ने ! 'ते' तव 'सूर्ये' सूर्यमण्डले या 'रुचो' दीप्तयो 'रश्मिभिः' रश्मिरूपेण 'दिवमातन्वन्ति' सर्वतो व्याप्नुवन्ति । रात्रौ या अग्नेर्दीप्तयस्ता एव सूर्योदयकाले सूर्यरश्मयो भवन्ति । एतच्च तैत्तिरीयकेऽग्निहोत्रब्राह्मणे समाम्नातम्–" उद्यन्तं वावादित्यमग्निरनुसमारोहति "–( तै. ब्रा. २।२।१० ) इति । 'ताभिः सर्वाभिः' दीप्तिभिः 'नः' अस्मत्सम्बन्धिने 'जनाय' यजमानलक्षणाय 'रुचे' 'कृधि' प्रकाशं कुरु, 'रुचे' ( पा. सू. ३ । १ । ८९ ) इति विभक्तिव्यत्ययः, रुचमित्यर्थः । नस्कृधीति " कः करत्करति " ( पा. सू. ८ । ३ । ५० ) इत्यादिना विसर्जनीयस्य सकारः । हे देवाः ! 'वः' युष्माकं सम्बन्धिन्यः सूर्यमण्डले वर्त्तमानाः 'या रुचः' दीप्तयः सन्ति, 'ताभिः सर्वाभिः' दीप्तिभिः हे–'इन्द्राग्नी' हे–'बृहस्पते'! त्रयोऽपि यूयं 'नः' अस्मत्सम्बन्धिने यजमानाय 'रुचं धत्त' प्रकाशं सम्पादयत । ननु चायं मन्त्रोऽध्वर्युणा पठ्यते । ततश्च रुचं नो धत्तेति लिङ्गेन मन्त्रमुच्चारयितुरध्वर्योरेव तत्फलं युज्यते; अतो 'न' इति पदं किमित्युपचरितमिति चेन्न–यजेतेत्यात्मनेपदश्रुत्या साङ्गप्रधानफलस्य यजमानगामित्वं प्रतीयते । न च परिक्रीतस्याध्वर्योर्दक्षिणातिरिक्तफलसम्बन्धो न्याय्यः । तस्माच्छ्रुतिन्यायाभ्यां विरुद्धं तल्लिङ्गं यजमानपरत्वेनोपचरणीयम्, तस्माद्यजमानेन पाठ्येषु " आयुर्दा अग्नेऽस्यायुर्मे देहि " इत्यादिषु क्रियमाणानुवादिषु प्रत्यगाशीर्मन्त्रेषु श्रुतं फलं यथा याजमानमेव । तथैवाध्वर्युणा पाठ्येषु करणमन्त्रेषु श्रुतमपि फलं याजमानमेव । द्वाभ्यामित्यादिकं पूर्वं व्याख्यातम् । प्रकारान्तरेणापि द्वित्वं प्रशंसति–अथो द्वयमिति । द्विविधं रूपमस्तीति तदुपधानमन्त्रयोरपि द्वित्वमुपपद्यत इत्यर्थः । व्याख्यातमुत्तरं वाक्यम् ॥ २१ ॥

अथ रेतःसिङ्नामधेययोरिष्टकयोरुपधानं विधत्ते–अथ रेतःसिचा इति । " लोपः शाकल्यस्य " ( पा.

---

१–विराड्ज्योतिरिति रेतःसिचौ प्रतिमंत्रम् । का. श्रौ. सू. १७ । ९४ ।

विमौ ह्येव लोकौ रेतः सिञ्चत ऽइतो वाऽअयमूर्ध्वꣳ रेतः सिञ्चति धूमꣳ साऽमुत्र वृष्टिर्भवति तामसावमुतो वृष्टिं तदिमा ऽअन्तरेण प्रजाः प्रजायन्ते तस्मादिमौ लोकौ रेतःसिचौ ॥ २२ ॥

विराड्ज्योतिरधारयदिति । ( त्य ) अयं वै लोको विराट् स ऽइममग्निं ज्योतिर्धारयति स्वराड्ज्योतिरधारयदित्यसौ वै लोकः स्वराट् सोऽमुमादित्यं ज्योतिर्धारयति विराड्वहेमौ लोकौ स्वराट् च नानोपदधाति नाना हीमौ लोकौ सकृत्सादयति समानं तत्करोति तस्माद्ध हानयोर्लोकयोरन्ताः समायन्ति ॥ २३ ॥

---

वाऽअयमूर्ध्वं रेतः सिञ्चति धूमम्, साऽमुत्र वृष्टिर्भवति । तामसावमुतो वृष्टिम् । तदिमा अन्तरेण प्रजाः प्रजायन्ते—तस्मादिमौ लोकौ रेतःसिचौ ॥ २२ ॥

" विराड्ज्योतिरधारयत् "—इति । अयं वै लोको विराट् । स इममग्निं ज्योतिर्धारयति । " स्वराड्ज्योतिरधारयत् "—इति । असौ वै लोकः स्वराट् । सोऽमुमादित्यं ज्योतिर्धारयति । विराड्वहेमौ लोकौ, स्वराट् च । नानोपदधाति । नाना हीमौ लोकौ । सकृत्सादयति । समानं तत्करोति । तस्माद्ध हानयोर्लोकयोरन्ताः समायन्ति ॥ २३ ॥

---

सू. ८ । ३ । १९ । ) इति वकारलोपः । विहिते इष्टके पृथिवीद्युलोकात्मना प्रशंसति—इमौ वै लोकावित्यादिना । तत्रानयोर्लोकयोः रेतःसिक्त्वप्रतिपिपादयिषयोक्तम्—इमौ वै लोकाविति । तद्रेतःसेचनमनयोः प्रत्यक्षसिद्धमित्याह—इमौ ह्येवेति । इतो वा अयमित्यादिना तदेव प्रत्यक्षत्वं दर्शयति—'अयम्' लोकः 'इतः' अस्मात् प्रदेशाद् धूमलक्षणं 'रेतः' 'सिञ्चति' 'सा' धूमः 'अमुत्र' द्युलोके 'वृष्टिर्भवति' सेति स्त्रीलिङ्गं वृष्ट्यपेक्षम्, धूमस्य मेघकारणत्वात्, तद्द्वारा वृष्टिकारणत्वाद्धूमो वृष्टिरिति कारणे कार्यत्वोपचारः । 'तां' 'वृष्टिम्' 'असौ' द्युलोकोऽमुष्मात् प्रदेशात् सिञ्चति तस्मादनयोर्लोकयोर्मध्ये वृष्टिपरिणतान्नद्वारा प्रजाः प्रजायन्ते । श्रूयते हि—" अन्नाद्धि प्रजाः प्रजायन्ते "—( तै. उ. २ वल्ली ) इति । अन्यत्राप्युक्तम्—"वृष्टेरन्नं ततः प्रजाः"—( मनु. ३।७६ ) इति । 'तस्मादिमौ' लोकौ 'रेतःसिचौ' रेतःसिचोरनयोर्लोकयो रूपेणानुसन्धानादिष्टके अपि रेतःसिचावित्युच्येते ॥ २२ ॥

तत्र प्रथमाया उपधाने मन्त्रं विधाय व्याचष्टे—विराड्ज्योतिरिति । 'अयम्' 'लोकः' पृथिवी, 'विराट्'—शब्देनाभिधीयते । 'स' च 'इमम्' अस्मदादीनां प्रत्यक्षमग्निरूपं 'ज्योतिर्धारयति,' प्रथमा रेतःसिग्भूलोकात्मिकेत्युक्तम् । तस्मात् प्रथमरेतःसिगात्मको विराट्शब्दाभिधेयो भूलोकोऽग्निरूपं 'ज्योतिर्धारयति' । स्वराड्ज्योतिरिति । द्वितीयोपधानमन्त्रः, सोऽप्येवमेव व्याख्येयः । 'अनयोर्लोकयोः' विराट्स्वराट्शब्दाभिधेयत्वमेवोपपादयति—विराड्वहेमाविति । विविधं राजत इति 'विराट्' । स्वयमेव राजत इति 'स्वराट्' । तयोः पृथक्पृथङ्मन्त्रेणोपधानमाह—नानोपदधातीति । यतः 'इमौ' 'लोकौ' 'नाना'

यद्वेव रेतःसिचाऽउपदधाति । ( त्या ) आण्डौ वै रेतःसिचौ यस्य ह्याण्डौ भवतः सऽ एव रेतः सिञ्चति विराड्ज्योतिरधारयत्स्वराड् ज्योतिरधारयदिति विराड्वहेमावाण्डौ स्वराट् च तावेतज्ज्योतिर्धारयतो रेतऽ एव प्रजातिमेव नानोपदधाति नाना हीमावाण्डौ सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनौ तेऽअनन्तर्हिते द्वियजुषऽउप- दधाति यजमानो वै द्वियजुरनन्तर्हितौ तद्यजमानादाण्डौ दधाति ॥ २४ ॥

( त्यु ) अथ विश्वज्योतिषमुपदधाति । ( त्य ) अग्निर्वै प्रथमा विश्व- ज्योतिरग्निर्ह्येवास्मिँल्लोके विश्वं ज्योतिरग्निमेवैतदुपदधाति तामनन्त-

---

यद्वेव रेतःसिचाऽउपदधाति । आण्डौ वै रेतःसिचौ । यस्य ह्याण्डौ भवतः—स एव रेतः सिञ्चति । " विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् "—इति । विराड्वहेमावाण्डौ स्वराट् च । तावेतज्ज्योतिर्धारयतो रेत एव, प्रजातिमेव । नानोपदधाति । नाना हीमावाण्डौ । सकृत्सादयति । समानं तत् करोति । तस्मात्समानसम्बन्धनौ । तेऽअनन्तर्हिते द्वियजुष उपदधाति । यजमानो वै द्वियजुः । अनन्तर्हितौ तद्यजमानादाण्डौ दधाति ॥ २४ ॥

### अथ विश्वज्योतिरिष्टकोपधानम् ।

अथ विश्वज्योतिषमुपदधाति । अग्निर्वै प्रथमा विश्वज्योतिः । अग्निर्ह्येवास्मिंल्लोके विश्वं ज्योतिः ।

---

पृथग्भूतौ, तस्मात्तदात्मिकयोरिष्टकयोरुपधानं पृथक्पृथङ्मन्त्रेण कर्त्तव्यमित्यर्थः । उपधानमन्त्रवत्सादनमन्त्रस्यापि पार्थक्येन प्राप्तावाह—सकृदिति । "तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद"—इत्ययं सादनमन्त्रस्तमेकवारमुच्चार्य सादयेत् । न तु प्रतीष्टकमित्यर्थः । तेन तदुपधानं ' समानम् ' ' करोति ' ' तस्माद् ' ' अनयोर्लोकयोरन्ताः ' प्रान्ताः ' समायन्ति ' परस्परं संबद्धा भवन्ति । अन्तरिक्षभागा हि पृथिवीभागैः सम्बध्यन्त इत्येतत् प्रत्यक्षसिद्धमेव ॥ २३ ॥

अथ तदेवेष्टकाद्वयमाण्डात्मना स्तौति—यद्वेवेति । अण्डशब्दात् स्वार्थिकोऽण्—प्रत्ययः । ' आण्डौ ' इति पुरुषसम्बन्धिनी बीजे उच्येते । ' यस्य ह्याण्डौ भवतः ' इत्यादिना आण्डयो रेतःसिक्त्वं प्रतिपादितम् । विराड्वहेमाविति । आण्डयोः प्रजोत्पादनसामर्थ्याद्विराट्त्वं च प्रत्यक्षमित्यर्थः । ' प्रजाति '—शब्देन प्रजोत्पादनमभिधीयते, रेतसः प्रजातेश्च प्रजा लक्ष्यन्त इति तत्प्रकाशकत्वाज्ज्योतिष्ट्वमित्यवगन्तव्यम् । समानसम्बन्धनाविति । एकरूपसम्बन्धनावित्यर्थः । प्रकृतयोरिष्टकयोः स्थानविशेषमाह—तेऽअनन्तर्हिते इति । द्वियजुषोः समीपेऽव्यवधानेनोपधानं किमर्थमित्यत आह—यजमानो वा इति ॥ २४ ॥

रेतःसिचोरुपधानानन्तरं विश्वज्योतिराख्याया इष्टकाया उपधानं विधाय तामग्न्यात्मना स्तौति—अथेति । स्वयमातृण्णा इव विश्वज्योतिषोऽपि तिस्रो विद्यन्ते, अतोऽत्र ' प्रथमा ' इति विशेषणम् । ' अस्मिँल्लोके '

---

१—एकचोदनास्वेकदेशाद्व तंत्रेण । का० श्रौ० सू० । १६ । २१६ ।

हिंताᳫँ रेतःसिग्भ्यामुपदधातीमौ वै लोकौ रेतःसिचावुनन्तर्हितं तुदाभ्यां लोकाभ्यामग्निं दधात्यन्तुरेवोपदधात्यन्तुरेव हीमौ लोकावग्निः ॥ २५ ॥

(१) युद्वेव विश्वुज्योतिषमुपदधाति । प्रजा वै विश्वुज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजुननमेवैतदुपदधाति तामुनन्तर्हिंताᳫँ रेतःसिग्भ्यामुपदधात्याण्डौ वै रेतःसिचावुनन्तर्हिंतां तुदाण्डाभ्यां प्रजातिं दधात्यन्तुरेवोपदधात्यन्तुरेव ह्याण्डौ प्रजाः प्रजायन्ते ॥ २६ ॥

प्रजापतिष्ट्वा सादयत्विति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्यत्पृष्ठे पृथिव्या ज्योतिष्मतीमिति पृष्ठे ह्ययं पृथिव्यै ज्योतिष्मानग्निः ॥ २७ ॥

---

अग्निमेवैतदुपदधाति । तामनन्तर्हितां रेतःसिग्भ्यामुपदधाति । इमौ वै लोकौ रेतःसिचौ । अनन्तर्हितं तदाभ्यां लोकाभ्यामग्निं दधाति । अन्तरेवोपदधाति । अन्तरेव हीमौ लोकावग्निः ॥ २५ ॥

यद्वेव विश्वज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः । प्रजा ह्येव विश्वं ज्योतिः । प्रजननमेवैतदुपदधाति । तामनन्तर्हितां रेतःसिग्भ्यामुपदधाति । आण्डौ वै रेतःसिचौ । अनन्तर्हितां तदाण्डाभ्यां प्रजातिं दधाति । अन्तरेवोपदधाति । अन्तरेव ह्याण्डौ प्रजाः प्रजायन्ते ॥ २६ ॥

"प्रजापतिष्ट्वा सादयतु"—इति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्यत् । "पृष्ठे पृथिव्या ज्योतिष्मतीम्"—इति । पृष्ठे ह्ययं पृथिव्यै ज्योतिष्मानग्निः ॥ २७ ॥

---

भुवि यत्किञ्चन 'ज्योतिः' अस्ति, तत् सर्वमग्निमयम् 'एव' इति । 'अग्निर्विश्वज्योतिः'—इति तदात्मकत्वेनानुसन्धानादिष्टकाऽपि विश्वज्योतिः,अतस्तदुपधानेऽग्निमेवोपहितवान् भवतीति । विधत्ते—तामनन्तर्हितामिति । 'ताम्' विश्वज्योतिषं 'रेतःसिग्भ्याम्' 'अनन्तर्हिताम्', अव्यवहितां तत्संस्पर्शेनोपदध्यात् । तथा सति रेतःसिचोः पृथिवीद्युलोकात्मकत्वात् ताभ्यामव्यवहितमेव 'अग्निं दधाति' । क्वचित्पार्श्वेऽपि तत्संस्पर्शेनोपधानेऽव्यवधानमुपपद्यत इत्यत आह—अन्तरेवेति । अन्तरेव हीति । 'अन्तरा' 'इव' इति पदविभागः । 'इव'-शब्द एवकारार्थः । "अन्तरान्तरेणयुक्ते"—( पा. सू. २ । ३ । ४ । ) इत्यनेन 'इमौ' इति द्वितीया । अनयोर्लोकयोर्मध्ये पृथिव्या उपरि अन्तरिक्षे खल्वग्निः प्रकाशते तस्मान्मध्यत उपधानम् ॥ २५ ॥

अथैतामिष्टकां प्रजात्मनाऽपि प्रशंसति—यद्वेवेति । 'प्रजा' हि 'विश्वज्योतिः' यतः प्रजा ज्ञानशक्त्या सर्वान् पदार्थान् प्रकाशयति तस्मात् 'प्रजा विश्वं ज्योतिः' इत्येतदपरोक्षम् । अतः प्रजा विश्वज्योतिः । तथा सति 'एतद्' इष्टकोपधानेन 'प्रजननम्' प्रजोत्पादनम् 'एव' उपहितवान् भवति । प्रजायाः प्रजोत्पादनस्य च कार्यकारणभावादभेदविवक्षयैवमुक्तम् । रेतःसिचोराण्डत्वाद्विश्वज्योतिषश्च प्रजात्वात्ताभ्यामव्यवहितत्वेन मध्यत उपधाने प्रजोत्पादनमेवाण्डयोर्निहितं भवतीति दर्शयति—तामनन्तर्हितामिति । अन्तरेव ह्याण्डाविति । आण्डयोर्मध्यत एव रेतोनिर्गमनद्वारत्वात्तत एव 'प्रजाः' 'प्रजायन्ते' ॥ २६ ॥

अथ तस्मिन्नुपधाने मन्त्रं विदधानो व्याचष्टे—प्रजापतिष्ट्वेत्यादिना । यतः 'प्रजापतिः' 'एताम्'

---

१—प्रजापतिरिति विश्वज्योतिषम् । का. श्रौ. सू. १७ । ९५ ।

( विं ) विश्वस्मै प्राणायापानाय । व्व्यानायेति प्राणो वै विश्वज्योतिः सर्वस्माऽउ वाऽएतस्मै प्राणो विश्वं ज्योतिर्यच्छेति सर्वं ज्योतिर्यच्छेत्येतदग्निष्टेऽधिपतिरित्यग्निमेवास्याऽअधिपतिं करोति सादयित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ २८ ॥

( रु ) अथर्तव्येऽउपदधाति । (त्सृ) ऋतवऽएते यदृतव्येऽऋतूनेवैतदुपदधाति मधुश्च माधवश्च व्वासन्तिकावृतूऽइति नामनीऽएनयोरेते नामभ्यामेवैनेऽएतदुपदधाति द्वेऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥ २९ ॥

---

" विश्वस्मै प्राणायापानाय व्यानाय "–इति । प्राणो वै विश्वज्योतिः । सर्वस्माऽउ वाऽएतस्मै प्राणः । " विश्वं ज्योतिर्यच्छ "–इति । सर्वं ज्योतिर्यच्छेत्येतत् । " अग्निष्टेऽधिपतिः "–( वा. सं. १३ । २४ ) इति । अग्निमेवास्या अधिपतिं करोति । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ २८ ॥

### अथ ऋतव्येष्टकाद्वयोपधानम् ।

अथर्तव्येऽउपदधाति । ऋतव एते यदृतव्ये । ऋतूनेवैतदुपदधाति । " मधुश्च माधवश्च

---

' प्रथमाम् चितिमपश्यत्, ' अतः ' प्रथमाम् ' विश्वज्योतिषं ' प्रजापतिष्ट्वा सादयत्विति ' मन्त्रेणोपदध्यादित्यर्थः । पृष्ठे ह्ययमिति । पृथिव्यै इति । षष्ठ्यर्थे चतुर्थी–( पा. सू. २ । ३ । ६२ । वा. १ । ) । यतश्च ' पृथिव्याः ' ' पृष्ठे ' उपरि ' अग्निर्ज्योतिष्मान् ' " विश्वज्योतिश्चाग्निः "–इत्युक्तम् " अग्निर्वै प्रथमा विश्वज्योतिः "–इति । अतः ' पृष्ठे पृथिव्या ज्योतिष्मतीम् ' इति मन्त्रवचनम् ॥ २७ ॥

प्राणो वा इति । विद्यमान एव प्राणे सर्वेषामिन्द्रियाणां स्वस्वविषयप्रकाशकत्वात् प्राणस्य विश्वज्योतिष्ट्वम् । सर्वस्मा उ वा एतस्मै इति । सर्वस्य खल्वेतस्य लोकस्य । पूर्ववच्चतुर्थी ( पा. सू. २।३।६२।वा.१।) । 'प्राणः' आशास्यो भवतीति शेषः । अपानो व्यानश्चेति प्राण एव वृत्तिभेदभिन्नः । प्राणस्य विश्वज्योतिष्ट्वात् ' विश्वस्मै ' सर्वस्य लोकस्य प्राणादिस्थैर्यार्थं तवोपधानमिति मन्त्रभाग आह । ' सर्वं ज्योतिः ' इति विश्वशब्दार्थविवरणम् । ' अग्निष्टेऽधिपतिः ' ' इति ' एतन्मन्त्रभागकथनेन ' अग्निमेव ' ' अस्याः ' विश्वज्योतिषः ' अधिपतिं करोति ' । हे विश्वज्योतिः ! ' पृथिव्याः पृष्ठे ' उपरि ' ज्योतिष्मतीम् ' ज्योतिषा युक्तां त्वां ' प्रजापतिः सादयतु ' स्थापयतु । किमर्थमिति तत्राह–विश्वस्मा इति । 'विश्वस्य' सर्वलोकस्य ' प्राणायापानाय व्यानाय ' प्राणादिव्यापारार्थम् । किञ्च ' विश्वम् ' समस्तं ' ज्योतिः ' तेजो ' यच्छ ' नियच्छ अस्मदायत्तं कुरु, ' ते ' तव ' अग्निः ' ' अधिपतिः, ' अतः सः त्वां परेभ्यो ' गोपायतु ' इति कृत्स्नमन्त्रस्यार्थः ॥ २८ ॥

अथ ऋतव्याख्ययोरिष्टकयोरुपधानं विधत्ते–अथेति[1] । ऋतव्ये इति । " वाय्वृतुपित्रुषसो यत् "–

---

१–ऋतव्ये मधुश्च माधवश्चेति । का. श्रौ. सू. १७ । ९६ ।

तद्यदेतेऽअत्रोपदधाति । संव्वत्सरऽएषोऽग्निरिमऽउ लोकाः संव्वत्सरस्तस्यायमेव लोकः प्रथमा चितिरयमस्य लोको व्वसन्तऽ ऋतुस्तद्यदेतेऽअत्रोपदधाति यदेवास्यैतेऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतेऽअत्रोपदधाति ॥ ३० ॥

---

वासन्तिकावृतू "–( वा० सं० १३ । २५ ) इति । नामनीऽएनयोरेते । नामभ्यामेवैनेऽएतदुपदधाति । द्वेऽइष्टके भवतः । द्वौ हि मासावृतुः । सकृत्सादयति । एकं तदृतुं करोति ॥ २९ ॥

तद्यदेतेऽअत्रोपदधाति । संवत्सर एषोऽग्निः । इम उ लोकाः संवत्सरः । तस्यायमेव लोकः प्रथमा चितिः । अयमस्य लोको वसन्त ऋतुः । तद्यदेतेऽअत्रोपदधाति–यदेवास्यैतेऽआत्मनः–तदस्मिन्नेतत्प्रतिदधाति । तस्मादेतेऽअत्रोपदधाति ॥ ३० ॥

---

(पा. सू. ४ । २ । ३१ ।) इति देवतार्थे यत्प्रत्ययः, "यचि भम्"–( पा. सू. १ । ४ । १८ ) इति भसंज्ञायाम् "ओर्गुणः"–( पा. सू. ६ । ४ । १४६ । ) इति गुणः, "वान्तो यि प्रत्यये"–( पा. सू. ६ । १ । ७९ । ) इति अवादेशः । ऋतुदेवत्येष्टकोपधानेन ऋतूनामेवोपधानं भवतीत्याह–ऋतव एत इति । ऋतव्ययोरुपधाने मन्त्रं विधाय व्याचष्टे–मधुश्चेति । मधुमाधवशब्दाभ्यां चैत्रवैशाखावुच्येते । 'वासन्तिकौ' इति "वसन्ताच्च"–( पा. सू. ४ । ३ । २० । ) इति ठक्प्रत्ययः । ऋतुशब्दो मासद्वये मुख्यः, अत्र तदवयवभूते मासे उपचाराद्वर्त्तते । मधुश्च माधवश्चेत्येतौ वसन्तसम्बन्धिनौ 'ऋतू' मासौ, अतश्च तद्देवत्यत्वेन तदात्मिके वामुपदधामीत्यर्थः । नामनी इत्यादिना मधुमाधवशब्दोपयोगं दर्शयति । ननु स्वयमातृण्णादिवदेकैकस्या इष्टकाया उपधानं विहाय किमिति द्वयोरुपधानमिति ? तत्राह–द्वे इष्टके इति । इष्टकयोर्द्वित्वेऽपि सकृत्सादनेनैकमेवर्तुं सम्पादयतीत्याह–सकृदिति ॥ २९ ॥

प्रथमायां चितौ तदुपधानस्य कारणमाह–तद्यदित्यादिना । 'एते' ऋतव्ये 'अत्र' प्रथमायां चितौ 'उपदधाति' इति यत्, तत्र कारणमुच्यते–'एषः' चीयमानः 'अग्निः' 'संवत्सरः' संवत्सरात्मकः, अग्नेः संवत्सरात्मकत्वं संवत्सरमुखायां सम्भृत्योत्पादनीयत्वात् । चीयमानस्याग्नेः प्रजापतिरूपत्वं प्रागुक्तम् । "स यः स प्रजापतिर्व्यस्रꣳसतायमेव स योऽयमग्निश्चीयते"–इति ( श. प. ७।१।२।९ ) स च प्रजापतिः सर्वलोककारणत्वेन तदात्मकः । संवत्सर एषोऽग्निरिति । तस्य संवत्सरात्मकत्वोक्तेश्च 'संवत्सर इमे लोकाः' खलु । तस्येति । 'तस्य' संवत्सराग्निसर्वलोकात्मकस्य प्रजापतेरयमेव लोकः, पृथिवी प्रथमा चितिः । वसन्तर्तुश्च प्राथम्यसादृश्यादस्य संवत्सरात्मकस्य प्रजापतेरवयवभूतोऽयं लोकः, अतश्चात्र प्रथमायां चितौ एते ऋतव्ये च वसन्तर्तुदेवत्यत्वेन तदात्मिके 'उपदधातीति' यत्, तेन 'यदेवास्य' प्रजापतेः 'आत्मनः' स्वस्यैतदिष्टकाद्वयलक्षणं यदङ्गमस्ति 'तदस्मिन्' अवयवे प्रथमचितिलक्षणे 'एतद्' एतेन पुनः 'प्रतिदधाति' 'तस्मादेते' प्रथमायां चितावुपदध्यात् ॥ ३० ॥

यद्द्वेवैते॒ऽअ॒त्रोप॑द॒धाति । प्र॒जाप॑तिरे॒षोऽग्निः सं॑वत्स॒र ऽउ प्र॒जाप॑ति॒स्तस्य॑ प्रति॒ष्ठैव प्र॑थ॒मा चिति॑ः प्रति॒ष्ठोऽअस्य॒ व॑स॒न्त ऽ ऋ॒तुस्त॒द्यदे॒ते॒ऽअ॒त्रोप॑द॒धाति य॒देवा॒स्यै॒ते॒ऽआ॒त्मन॒स्तद॒स्मिन्न्ने॒तत्प्र॑तिद॒धाति त॒स्मादे॒ते॒ऽअ॒त्रोप॑द॒धाति ते॒ऽअन॑न्तर्हिते॒ व्वि॒श्वज्यो॑तिष॒ ऽउप॑द॒धाति प्र॒जा वै व्वि॒श्वज्यो॑तिर॒नन्त॑र्हिता॒स्तत्प्र॒जाऽ ऋ॒तुभ्यो॑ द॒धाति त॒स्मात्प्र॒जाऽ ऋ॒तूने॒वानु॑प्र॒जाय॑न्त॒ऽऋ॒तुभि॒र्ह्येव गर्भे॒ स॒न्तꣳ सम्प॑श्यन्त्यृ॒तुभि॒र्जा॑तम् ॥ ३१ ॥

( म ) अ॒थाषा॒ढामुप॑द॒धाति । ( ती ) इ॒यं वा॒ऽअषा॒ढेमामे॒वैतदुप॑द॒धाति तां पू॒र्वार्ध॒ऽउप॑द॒धाति प्र॑थ॒मा ह्येयमसृ॒ज्यत ॥ ३२ ॥

---

यद्द्वेवैतेऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः । संवत्सर उ प्रजापतिः । तस्य प्रतिष्ठैव प्रथमा चितिः । प्रतिष्ठोऽअस्य वसन्त ऋतुः । तद्यदेतेऽअत्रोपदधाति । यदेवास्यैतेऽआत्मनः—तदस्मिन्नेतत्प्रतिदधाति । तस्मादेतेऽअत्रोपदधाति । तेऽअनन्तर्हिते विश्वज्योतिष उपदधाति । प्रजा वै विश्वज्योतिः । अनन्तर्हितास्तत्प्रजा ऋतुभ्यो दधाति । तस्मात्प्रजा ऋतूनेवानुप्रजायन्ते । ऋतुभिर्ह्येव गर्भे सन्तं पश्यन्ति—ऋतुभिर्जातम् ॥ ३१ ॥

## अथ अषाढेष्टकोपधानम् ।

अथाषाढामुपदधाति । इयं वाऽअषाढा । इमामेवैतदुपदधाति । तां पूर्वार्द्ध उपदधाति । प्रथमा ह्येयमसृज्यत ॥ ३२ ॥

---

अथ पुनस्ते एव ऋतव्ये प्रजापतेः प्रतिष्ठात्मना स्तौति—यद्द्वेवैते इति । प्रतिष्ठोऽअस्य वसन्त ऋतुरिति । 'प्रतिष्ठा उ' इति पदविभागः; "आद्गुणः"—( पा. सू. ६।१।८७ ) । उकारस्य "निपात एकाजनाङ्" ( पा. सू. १।१।१४ ) इति प्रगृह्यसंज्ञायाम्—"प्लुतप्रगृह्या अचि नित्यम्"—( पा. सू. ६।१।१२५ । ) इति प्रकृतिभावात् प्रतिष्ठो अस्य इत्यत्र "एङः पदान्तादति"—( पा. सू. ६।१।१०९ ) इति पूर्वरूपत्वं न भवति । वसन्तर्तोः संवत्सरप्रथमावयवत्वात् प्रतिष्ठात्वम् । यत्रावयवे प्रतितिष्ठति सा प्रतिष्ठा, यथा पुरुषः पादयोः प्रतितिष्ठति तद्वत् संवत्सरोऽपि वसन्तर्तौ प्रतितिष्ठति । प्रथमायाश्चितेस्तूत्तरचितिलक्षणान् प्रजापतेरवयवान् प्रत्याधारत्वात्प्रतिष्ठात्वम् । अतश्च प्रथमायां चितौ ऋतव्ययोरिष्टकयोरुपधाने प्रजापतेः स्वस्य वसन्तर्तुदेवत्यत्वेन तदात्मकैतदिष्टकाद्वयलक्षणं यत्प्रतिष्ठारूपमङ्गमस्ति तदस्मिन्नेतेन प्रतिनिहितवान् भवतीत्यर्थः ॥

अथानयोरिष्टकयोरुपधानस्य स्थानविशेषं विधाय प्रशंसति—ते अनन्तर्हिते इति । अनन्तर्हितास्तदिति । 'तत्' तेन 'प्रजाः' 'ऋतुभ्यः' 'अनन्तर्हिताः' अव्यवहिताः 'दधाति' ऋतुषु प्रतिष्ठापयतीत्यर्थः । तदेव दर्शयति—तस्मादिति । यत एवम् 'तस्मात्प्रजाः' 'ऋतूनेव' अभिलक्ष्य 'प्रजायन्ते' 'गर्भे' अपि विद्यमानं जन्तुम् 'ऋतुभिर्ह्येव सम्पश्यन्ति' ऋतूनां कालात्मकत्वात् कालस्य च सदातनत्वेन सर्वोत्पत्तिमन्निमित्तत्वादजातावस्था जायमानावस्था जातावस्था च तत्रैव सम्पद्यत इति भावः ॥ ३१ ॥

विधत्ते—अथेति । 'अथ' ऋतव्येष्टकोपधानानन्तरम् अषाढाऽभिधामिष्टकामुपदध्यात् । अषाढायाः

सा यदुषाढा नाम । देवाश्चासुराश्चोभये प्राजापत्याऽअस्पर्धन्त ते देवाऽएतामिष्टकामपश्यन्नुषाढामिमामेव तामुपादधत तामुपधायासुरान्त्सपत्नान्भ्रातृव्व्यानस्मात्सर्व्वस्मादसहन्त यदसहन्त तस्मादषाढा तथैवैतद्यजमानऽएतामुपधाय द्विषन्तं भ्रातृव्व्यमस्मात्सर्व्वस्मात्सहते ॥ ३३ ॥

यद्वेवाषाढामुपदधाति । व्वाग्वाऽअषाढा व्वाचैव तद्देवाऽअसुरान्त्सपत्नान्भ्रातृव्व्यानस्मात्सर्व्वस्मादसहन्त तथैवैतद्यजमानो व्वाचैव द्विषन्तं भ्रातृव्व्यमस्मात्सर्व्वस्मात्सहते व्वाचमेव तद्देवा ऽउपादधत तथैवैतद्यजमानो व्वाचमेवोपधत्ते ॥ ३४ ॥

---

सा यदषाढा नाम । देवाश्चासुराश्चोभये प्राजापत्या अस्पर्धन्त । ते देवा एतामिष्टकामपश्यन् अषाढाम् । इमामेव तामुपादधत । तामुपधायासुरान्त्सपत्नान्भ्रातृव्यानस्मात्सर्वस्मादसहन्त । यदसहन्त–तस्मादषाढा । तथैवैतद्यजमान एतामुपधाय द्विषन्तं भ्रातृव्यमस्मात्सर्वस्मात्सहते ॥ ३३ ॥

यद्वेवाषाढामुपदधाति । वाग्वाऽअषाढा । वाचैव तद्देवा असुरान्त्सपत्नान्भ्रातृव्यानस्मात्सर्व-

---

मृन्मयेष्टकात्वात्तदुपधाने पृथिव्युपधानमेव सम्पादितं भवतीत्याह–इयं वा इति । तस्या अषाढाया उपधानं चयनस्थलस्य पूर्वभागे कर्तव्यमित्याह–तां पूर्वार्द्धे इति । ननु किमर्थमस्याः पूर्वार्द्धे उपधानमिति तत्राह–प्रथमेति । ' इयम् ' अषाढा उखायाः ' प्रथमा ' पूर्वा ' असृज्यत ' खलु ॥ ३२ ॥

प्रकृताया इष्टकाया अषाढेति नामधेयप्राप्तिप्रदर्शनपूर्वकमुपधानोपयोगं दर्शयति–सा यदषाढा नामेत्यादिना । पुरा खलु ' देवाश्चासुराश्च ' ' प्राजापत्याः ' प्रजापतेपत्यभूताः, पत्युत्तरपदत्वाद् " दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" ( पा. सू. ४।१।८५ ) इत्यनेनाऽपत्यार्थे ण्यप्रत्ययः । 'ते' एते ' उभये ' अपि स्पर्द्धामकुर्वन्, ततः ' ते देवाः' केनोपायेनासुराञ्जयेमेति विचार्य ' एताम् ' अषाढाभिधाम् ' इष्टकाम् ' तदुपायत्वेन ' अपश्यन् ' । दृष्ट्वा च ' तामिमाम् ' इष्टकामुपहितवन्तः । ततः ' तामुपधायासुरान् ' ' सपत्नान् ' वैरिणः ' भ्रातृव्यान् ' इति सपत्नशब्दार्थविवरणम् । भ्रातृशब्दात् " व्यन् सपत्ने "–( पा.सू.४।१।१४५ ) इति सपत्नार्थे व्यनो विधानात् । तानसुरान् ' अस्मात् ' ' सर्वस्मात् ' स्थानाद् ' असहन्त ' निराकुर्वन् यथैतेषु लोकेष्ववस्थानं न लभन्ते तथा पर्यबीभवन्नित्यर्थः । यत एतयाऽसुरान् ' असहन्त ' तस्माद् 'अषाढा' इति नामधेयम् । अत्रासुराणां सहनकथनेन स्वेषामसहनमर्थतः प्राप्तमतश्चैतस्या इष्टकायाः स्वेषामसहनं प्रत्यपि कारणत्वादसहनसाधनत्वेनाषाढेत्युच्यते । " साढ्यै साढा साढेति निगमे'–( पा. सू. ६।३।११३ ) इति ' साढा ' शब्दो निपातितः । ततो नञ्समासः ( पा. सू. ३।१।८९ )। व्यत्ययेन मूर्द्धन्यादेशः । तथैवैतादिति । यथैव देवा अषाढामुपधाय असुरान्निराकुर्वन् । ' तथैव ' यजमानः ' एतामुपधाय ' 'द्विषन्तम्' द्वेषं कुर्वन्तं ' भ्रातृव्यमस्मात्सर्वस्मात् ' प्रदेशान्निराकुरुते ॥ ३३ ॥

अथ तामेवेष्टकां वागात्मनाऽपि प्रशंसति–यद्वेवेति । वाचैव तद्देवा इत्यादिना वाग्रूपत्वमषाढायाः प्रतिपाद्यते ।

सेयुं व्वामभृत् । ( त्र्रा ) प्राणा वै व्वामं यद्धि किं च प्राणीयं तत्सुर्व्वं बिभर्त्ति तेनेयं व्वामभृद्वाग्घ त्वेव व्वामभृत्प्राणा वै व्वामुं व्वाचि वै प्राणेभ्योऽन्नं धीयते तुस्माद्वाग्वामभृत् ॥ ३५ ॥

( त्तु ) तुऽएते सुर्व्वे प्राणा यदुषाढा । तां पूर्वार्धऽउपदधाति पुरस्तात्तत्प्राणान्दधाति तुस्मादिमे पुरस्तात्प्राणास्तान्नान्युया युजुष्मत्येष्टकया पुरस्तात्प्रत्युपदध्यादेतुस्यां चितौ नेत्प्राणानपिदधानीति ॥ ३६ ॥

---

स्मादसहन्त । तथैवैतद्यजमानो वाचैव द्विषन्तं भ्रातृव्यमस्मात्सर्वस्मात्सहते । वाचमेव तद्देवा उपादधत । तथैवैतद्यजमानो वाचमेवोपधत्ते ॥ ३४ ॥

सेयं वामभृत् । प्राणा वै वामम् । यद्धि किं च प्राणि । इयं तत्सर्वं बिभर्ति । तेनेयं वामभृत् । वाग्घ त्वेव वामभृत् । प्राणा वै वामम् । वाचि वै प्राणेभ्योऽन्नं धीयते । तस्माद्वाग्वामभृत् ॥ ३५ ॥

तऽएते सर्वे प्राणाः—यदषाढा । तां पूर्वार्धऽउपदधाति । पुरस्तात्तत्प्राणान्दधाति । तस्मादिमे पुरस्तात्प्राणाः । तान्नान्यया यजुष्मत्येष्टकया पुरस्तात्प्रत्युपदध्यात्—एतस्यां चितौ—नेत्प्राणानपिदधानीति ॥ ३६ ॥

---

यतो ' देवाः ' निर्भर्त्सनादिविशिष्टया ' वाचैव ' ' असुरान् ' ' असहन्त ' तस्मान्निराकरणसाधनत्वसाधर्म्याद् ' अषाढा ' वाक् खल्वित्यर्थः । तथैवेति । यतो देवाः वाचाऽसुरानसहन्त, ततो देववदेव ' यजमानः ' अपि ' वाचैव ' ' द्विषन्तम् ' ' भ्रातृव्यमस्मात्सर्वस्मात् सहते ' । यतोऽषाढा उक्तन्यायेन वागात्मिका, अत एतेनाषाढोपधानेन ' वाचमेव ' ' उपादधत ' ' देवाः ' तथैव यजमानो वाचमेवोपधत्ते ॥ ३४ ॥

यदुक्तमियं वा अषाढेत्यषाढायाः पृथिव्यात्मकत्वं तदुपजीव्यास्या अषाढाया इष्टकायाः वामभृत्संज्ञाप्राप्तिं दर्शयति—सेयमिति । वामं वननीयं वस्तु । 'प्राणाः' सर्वैराशास्यमानत्वात् वामं वस्तु । यत्किञ्चित् ' प्राणि ' प्राणवदर्थजातमस्ति, तत्सर्वम् ' इयम् ' पृथिवी ' बिभर्ति ' खलु । अतश्च वामशब्देन प्राणानामभिधानात् प्राणानां तद्वतां चामेदविवक्षया ' इयम् ' पृथिवी ' वामभृत् ' संज्ञेति तदात्मिकाप्यषाढा वामभृत्संज्ञेत्यर्थः । " वाग्वा अषाढा "—इति यदुक्तं वागात्मत्वं तदप्युपजीव्यैतत्संज्ञालाभमाह—वाग्घ त्वेवेति । ' वाचि वै ' इत्यत्र वाक्—शब्देन वागिन्द्रियस्थानं मुखं लक्ष्यते, प्राणानुविधायित्वात् । प्राणशब्देन च श्रोत्रादीनीन्द्रियाणि, ' प्राणेभ्यो 'ऽर्थे ' वाचि ' मुखे ' अन्नं ' ' धीयते ' निधीयते ' तस्माद्वाग्वामभृद् ' इति तदात्मिकाऽषाढाऽपि " वामभृत् " इत्यभिधीयते ॥ ३५ ॥

सेयमित्यादिनोक्तप्रकारेण निष्पन्नमर्थमाह—त एत इति । " सेयम् " इत्यादिना तु अषाढाया आधिभौतिकप्राणात्मकत्वमुक्तम्, " वाग्घ त्वेव " इत्यादिना—तु आध्यात्मिकप्राणात्मकत्वम्, ततश्च ' अषाढा ' इति ' यद् ' एषा ' ते सर्वे प्राणाः ' आध्यात्मिकत्वाधिभौतिकत्वादिभेदेनोभयविधा अपि प्राणा इत्यर्थः । ' त एते ' इति, प्राणा इत्येतदपेक्षया लिङ्गवचने । उक्तमषाढाया उभयविधप्राणात्मकत्वमुपजीव्य तस्याः पूर्वभागे उपधानमुपपादयति—तां पूर्वार्धे इति । तस्मादिति । ' पुरस्तात् ' पूर्वभागे मुख इत्यर्थः । ' इमे ' इत्यमि-

यद्वपस्याः पुञ्च पुरस्तादुपदधाति । ( त्यु ) अन्नं वाऽआपोऽनपिहिता वाऽअन्नेन प्राणास्तामनन्तर्हितामृतव्याभ्यामुपदधात्यृतुषु तद्वाचं प्रतिष्ठापयति सेयं व्वागृतुषु प्रतिष्ठिता व्वदति ॥ ३७ ॥

तदाहुः । ( र्यु ) यत्प्रजा व्विश्वज्योतिर्व्वागषाढाऽथ कस्मादन्तरेणऽर्तव्येऽउपदधातीति संव्वत्सरो वाऽऋतव्ये संव्वत्सरेण तत्प्रजाभ्यो व्वाचमन्तर्दधाति तस्मात्संव्वत्सरवेलायां प्रजा व्वाचं प्रवदन्ति ॥ ३८ ॥

---

यद्वपस्याः पञ्च पुरस्तादुपदधाति । अन्नं वाऽआपः । अनपिहिता वाऽअन्नेन प्राणाः । तामनन्तर्हितामृतव्याभ्यामुपदधाति । ऋतुषु तद्वाचं प्रतिष्ठापयति । सेयं वागृतुषु प्रतिष्ठिता वदति ॥ ३७ ॥

तदाहुः—यत्प्रजा विश्वज्योतिः, वागषाढा, अथ कस्मादन्तरेणऽर्तव्येऽउपदधातीति । संवत्सरो वाऽऋतव्ये । संवत्सरेण तत्प्रजाभ्यो वाचमन्तर्दधाति । तस्मात्संवत्सरवेलायां प्रजा वाचं प्रवदन्ति ॥ ३८

---

नयेन निर्देशः, 'तस्मात्' पूर्वार्द्धे उपधानान्मुखे 'इमे प्राणाः' अवतिष्ठन्त इति शेषः । अषाढायाः पूर्वभागे मन्त्रवत्या इष्टकाया उपधानं निवारयति—तान्नान्ययेति । 'पुरस्तात्' आषाढां प्रति 'अन्यया' 'यजुष्मत्या' मन्त्रवत्या 'इष्टकया' उपधानं न सम्पादयेत् । एतस्यां चिताविति तत्र हेतुरुच्यते । 'नेत्' इति निपातः परिभये वर्तते ( या. नि. १ । ३ । ५ ) । अषाढायाः प्राणात्मकत्वात् एतस्यां प्रथमायां चितौ तस्याः पुरस्तान्मन्त्रवदिष्टकोपधाने तद्व्यवधानात् प्राणानेवापिहितवान् भवतीति परिभयेन नोपदध्यादित्यर्थः ॥ ३६ ॥

ननु यदि समन्त्रकाणामिष्टकानामुपधाने प्राणापिधानम्, तर्हि अपस्यानां मन्त्रविशिष्टानामिष्टकानामुपधानेन तत्कस्मान्न भवतीत्यत आह—यद्वपस्या इति । अपस्यानामन्नात्मकत्वं तद्विधायकब्राह्मणेऽभिधास्यते । ( श. प. ७।५।२।६० ) आपश्चान्नात्मिकास्तत्कारणत्वात् । अन्नेन तु प्राणानामपिधानं न सम्भवति, अन्नोपजीवित्वात् प्राणानाम् । अतश्चान्नात्मकत्वादपस्यानां समन्त्रकाणामप्युपधानं न विरुध्यत इति भावः । अथ तस्या ऋतव्ययोः समीपे उपधानं विधाय स्तौति—तामनन्तर्हितामिति । सेयं वागृतुषु प्रतिष्ठिता वदतीति । 'ऋतुषु' अवस्थितेषु प्राणिषु 'प्रतिष्ठिता वदति' इत्यर्थः ॥ ३७ ॥

"प्रजा वै विश्वज्योतिः" इति विश्वज्योतिषः प्रजात्वमुक्तम्, "वाग्वा अषाढा"—इति आषाढाया वाक्त्वं प्रतिपादितम्; ततश्च विश्वज्योतिषः समीपेऽषाढाया उपधाने सति प्रजासु वागुपहिता भवति । तदकृत्वा तयोर्मध्ये किमर्थमृतव्ययोरुपधानं कृतमित्याशङ्क्य तत्कारणमाह—तदाहुरिति । संवत्सरो वा ऋतव्ये इति । "ऋतव एते यदृतव्ये"—( श. प. ७ । ४ । २ । २९ ) इति ऋतव्ययोर्ऋत्वात्मकत्वात्सम्भूय सर्वेषामृतूनां संवत्सरात्मकत्वाद् 'ऋतव्ये संवत्सरः' ततश्चर्तव्ययोरन्तरोपधाने 'संवत्सरेण' 'प्रजाभ्यो' 'वाचं' व्यवहितां करोति, 'तस्माद्' इदानीमुत्पत्तेरुपरि 'संवत्सरवेलायां' संवत्सरे गते सति पश्चात् 'प्रजाः' 'वाचम्' 'प्रवदन्ति' ॥ ३८ ॥

( न्त्यु ) अषाढाऽसि सुहमानेति । ( त्यु ) असहन्त ह्येतया देवाऽअसुरान्त्सहस्वारातीः सहस्व पृतनायतऽइति यथैव युजुस्तथा बन्धुः सहस्रवीर्याऽसि सा मा जिन्वेति सर्व्वं वै सहस्रꣳ सर्व्ववीर्याऽसि सा मा जिन्वेत्येतत्सादयित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ ३९ ॥

( स्तु ) तदाहुः । कस्मादभिस्वयमातृण्णमन्याऽइष्टका ऽउपधीयन्ते प्राच्यऽएताऽइति द्वौ वै योनीऽइति ब्रूयाद्देवयोनिरन्यो मनुष्ययोनिरन्यः प्राचीनप्रजनना वै देवाः प्रतीचीनप्रजनना मनुष्यास्तद्यदेताः प्राचीरुपदधाति देवयोनेरेवैतद्यजमानं प्रजनयति ॥ ४० ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ७–३–२ ॥ ( ४.२ )

इति तृतीयप्रपाठकः समाप्तः ॥ ७ । ३ ॥

चतुर्थोऽध्यायश्च समाप्तः ॥ ७ । ४ ॥

---

"अषाढाऽसि सहमाना"–इति । असहन्त ह्येतया देवा असुरान् । "सहस्वारातीः सहस्व पृतनायतः"–इति । यथैव यजुस्तथा बन्धुः । "सहस्रवीर्याऽसि सा मा जिन्व"–( वा. सं. १३।२६ ) इति । सर्वं वै सहस्रम् । सर्ववीर्याऽसि । सा मा जिन्वेत्येतत् । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ ३९ ॥

तदाहुः- कस्मादभिस्वयमातृण्णमन्या इष्टका उपधीयन्ते–प्राच्य एता इति । द्वौ वै योनीऽइति ब्रूयात्–देवयोनिरन्यः, मनुष्ययोनिरन्यः । प्राचीनप्रजनना वै देवाः, प्रतीचीनप्रजनना मनुष्याः । तद्यदेताः प्राचीरुपदधाति–देवयोनेरेवैतद्यजमानं प्रजनयति ॥ ४० ॥

---

प्रकृताया इष्टकाया उपधाने मन्त्रं विदधानो व्याचष्टे–अषाढाऽसीत्यादिना । यतो 'देवाः' 'एतया' इष्टकया 'असुरान्' 'असहन्त' निराकुर्वन् । अतः सहनसाधनत्वादषाढाऽसीति मन्त्र आह । 'सहस्रवीर्याऽसि'–इत्यत्र सहस्रशब्देनापरिमितसङ्ख्या विवक्षितेति दर्शयति–सर्वं वै सहस्रमिति । हे इष्टके ! त्वम् 'सहमाना' असुराणां निराकर्त्री, अतो नाम्ना अषाढाऽसि, तस्माद् 'अरातीः' अदानशीलान् शत्रून् 'सहस्व' परिभावय । किं च ये पूर्वं विरोधिनो न भवन्ति इतः परं पृतनां संग्राममिच्छन्ति ते पृतनायन्तः पृतनाशब्दस्याकारलोपाभावश्छान्दसः । तानपि परिभावय । किं च त्वं 'सहस्रवीर्याऽसि' अपरिमितसङ्ख्याकवीर्यविशिष्टाऽसि । अनेन विशेषणेन शत्रुनिराकरणसामर्थ्यमुपपादितम् । सा त्वं 'मा' मां 'जिन्व' प्रीणीहीति मन्त्रार्थः ॥ ३९ ॥

अथ दूर्वेष्टकादीनां स्वयमातृण्णायाः प्राग्भाग उपधाने कारणमाह–तदाहुरिति । 'अभिस्वयमातृण्णम्' स्वयमातृण्णाम् अभिलक्ष्य स्वयमातृण्णाया उपरिभाग इत्यर्थः । "लक्षणेनाभिप्रती आभिमुख्ये"–(पा. सू. २।१।१४)

---

१–अषाढाऽसीत्यपाढाम् । का. श्रौ. सू. १७ । ९७ ।

इत्यव्ययीभावसमासः । अन्या इष्टकाः उपरि वक्ष्यमाणाः उपधीयन्ते, 'एताः' दूर्वेष्टकादयस्तु तस्याः प्राच्य उपधीयन्त इति यदस्ति तत्रोत्तरमाह—द्वौ वै योनी इति । 'देवयोनिरन्यो' 'मनुष्ययोनिरन्यः' इति यदुक्तमन्यत्वं तदाह—प्राचीनेति । प्राचीने पूर्वभागे प्रजननमुत्पत्तिस्तत्कारणं वा येषां ते, तथोक्ताः । 'मनुष्याः' तु 'प्रतीचीनप्रजननाः,' ततश्च 'एताः' इष्टकाः स्वयमातृण्णायाः 'प्राचीः' प्रागपवर्गाः 'उपदधाति' इति यत् तेन 'देवयोनेरेव' एनं 'यजमानम्' उत्पादयति । दूर्वेष्टकादीनामुत्तरोत्तरपूर्वभावेनोपधानं कात्यायनेनोक्तम्—"पूर्वां पूर्वामुत्तराः"—( का. श्रौ. सू. १७ । ९१ ) इति ॥ ४० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे चतुर्थेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ७—४—२ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये सप्तमकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ७—४ ॥

# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।

# चतुर्थप्रपाठके च प्रथमं ब्राह्मणम् ।

कूर्म्मसुपदधाति । रसो वै कूर्म्मो रसमेवैतदुपदधाति यो वै सऽएषां लोकानामप्सु प्रविद्धानां पराङ्रसोऽत्यक्षरत्सऽएष कूर्म्मस्तमेवैतदुपदधाति यावानु वै रसस्तावानात्मा सऽएषऽइमऽएव लोकाः ॥ १ ॥

(स्तु) तस्य यदधरं कपालम् । (म) अयथ्ँ स लोकस्तत्प्रतिष्ठित-मिव भवति प्रतिष्ठितऽइव ह्ययं लोकोऽथ यदुत्तरथ्ँ सा द्यौस्तद्व्युव-गृहीतान्तमिव भवति व्युवगृहीतान्तेव हि द्यौरथ यदन्तरा तदन्तरिक्षथ्ँ सऽएषऽइमऽएव लोकाऽइमानेवैतल्लोकानुपदधाति ॥ २ ॥

---

## अथ कूर्मेष्टकोपधानम् ।

कूर्मसुपदधाति । रसो वै कूर्मः । रसमेवैतदुपदधाति । यो वै स एषां लोकानामप्सु प्रविद्धानां पराङ्रसोऽत्यक्षरत्-स एष कूर्मः । तमेवैतदुपदधाति । यावानु वै रसः-तावानात्मा । स एष इम एव लोकाः ॥ १ ॥

तस्य यदधरं कपालम् । अयं स लोकः । तत्प्रतिष्ठितमिव भवति । प्रतिष्ठित इव ह्ययं लोकः । अथ यदुत्तरम्-सा द्यौः । तद्व्यवगृहीतान्तमिव भवति । व्यवगृहीतान्तेव हि द्यौः । अथ यदन्तरा-तदन्तरिक्षम् । स एष इमऽएव लोकाः । इमानेवैतल्लोकानुपदधाति ॥ २ ॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वस्मिन् ब्राह्मणे स्वयमातृण्णादीनामुपधानमभिहितम्, अथास्मिन् ब्राह्मणे कूर्मादीनामुपधानमभिधास्यते; तत्रादौ तावत्कूर्मोपधानं विधाय तं रसात्मना स्तौति-कूर्मसुपदधातीति । उक्तमेव कूर्मस्य रसत्वं प्रतिपादयति-यो वै स इति । 'एषाम्' पृथिव्यादीनां 'लोकानाम्' 'अप्सु' 'प्रविद्धानाम्' मग्नानां 'सः' प्रसिद्धो 'यो' 'रसः' 'पराङ्' अनावृत्तः 'अत्यक्षरत्' अस्रवत् । 'सः' रसः 'एषः' इदानीमस्माभि-रुच्यमानः 'कूर्मः' अतः 'तमेव' रसम् एतेन कूर्मोपधानेनोपहितवान् भवति । लोकरसत्वप्रणाल्या कूर्मस्य लोकात्मकत्वमेवाह-यावानु वा इति । 'रसो' 'यावान्' यत्परिमाणः, 'आत्मा' देहोऽपि 'तावान्' तत्परि-माणः, रस एव देहस्यान्तर्भावात् । यथा विलीने लोहपिण्डे तत्स्वरूपं तद्रसे सूक्ष्माकारेणावतिष्ठते तद्वल्लोक-रसात्मके कूर्मे 'लोका' अपि सूक्ष्मरूपेणावतिष्ठन्त इति । 'स एषः' कूर्म एव सर्वलोकात्मक इत्यर्थः ॥ १ ॥

यदुक्तं कूर्मस्य पृथिव्यादिलोकत्रयात्मकत्वं तदेव तच्छरीरे विविच्य दर्शयति-तस्येति । 'तस्य' कूर्मस्य 'यद्' अधस्तनं 'कपालम्' कठिनत्वक् 'सः' 'अयम्' 'लोकः' पृथिवी । अधरकपालपृथिव्योः

तम॒भ्यन॑क्ति । द॒ध्ना मधु॑ना घृ॒तेन॒ दधि॒ हैवास्य॑ लो॒कस्य॑ रू॒पं घृ॒तम॒न्तरि॑क्षस्य॒ मध्व॒मुष्य॒ स्वेनै॒वैन॑मे॒तद्रू॒पेण॒ सम॑र्धय॒त्यथो॒ दधि॒ हैवास्य॑ लो॒कस्य॒ रसो॑ घृ॒तम॒न्तरि॑क्षस्य॒ मध्व॒मुष्य॒ स्वेनै॒वैन॑मे॒तद्रसे॑न॒ सम॑र्धयति ॥ ३ ॥

मधु॒ वाता॑ऽऋताय॒तऽइति॑ । यां वै दे॒वता॑मृ॒गभ्यनू॒क्ता यां यजु॒ः सैव दे॒वता॒ स ऽऋक्सो॒ दे॒वता॒ तद्यजु॒स्तद्धै॒तन्मध्वै॒वैषु॒ त्रि॒चो रसो॒ वै मधु॒ रस॑मे॒वास्मि॑न्ने॒तद्द॑धाति गाय॒त्रीभि॑स्ति॒सृभि॒स्तस्यो॒क्तो बन्धु॑ः ॥ ४ ॥

---

तमभ्यनक्ति—दध्ना मधुना घृतेन । दधि हैवास्य लोकस्य रूपम्, घृतमन्तरिक्षस्य, मध्वमुष्य । स्वेनैवैनमेतद्रूपेण समर्धयति । अथो दधि हैवास्य लोकस्य रसः, घृतमन्तरिक्षस्य, मध्वमुष्य । स्वेनैवैनमेतद्रसेन समर्धयति ॥ ३ ॥

" मधु वाता ऋतायते "—( वा. सं. १३।२७–२९ ) इति । यां वै देवतामृगभ्यनूक्ता, यां यजुः–सैव देवता सऽऋक्, सो देवता तद्यजुः । तद्धैतन्मध्वैवैष त्रिचः । रसो वै मधु । रसमेवास्मिन्नेतद्दधाति । गायत्रीभिस्तिसृभिः । तस्योक्तो बन्धुः ॥ ४ ॥

---

कस्यचित्साधर्म्यस्य प्रदर्शनात्तदात्मकत्वमुपपादयति—तत्प्रतिष्ठितमिवेति । ' प्रतिष्ठितम् ' अधः सर्वत्र पृष्ठतलम् । अधरकपालपृथिव्योस्तथाविधत्वात्तस्य पृथिव्यात्मकत्वम् । अथेति । ' अथ ' ' यदुत्तरं ' कपालं तद् ' द्यौः ' द्युलोकः । पूर्ववत्तदेवोपपादयति—तद्व्यवगृहीतान्तमिति । विविधम् ' अवगृहीतः ' अवनतः प्रान्तो यस्य तत्तथोक्तम् । कूर्मस्योपरिकपालं सर्वतो मण्डलाकारेणावनतप्रान्तम् ' इव ' ' भवति ', ' द्यौः ' अपि तथाविधा; अतस्तस्य तदात्मकत्वम् । अथ यदधरोत्तरयोर्द्वयोः कपालयोः ' अन्तरा ' मध्यमस्ति ' तदन्तरिक्षम् ' अतः ' सः ' ' एषः ' कूर्मः ' इमे ' पृथिव्यादयः ' एव लोकाः ' तस्मादेतेनोपधानेन ' इमानेव लोकानुपदधाति ' ॥ २ ॥

विहितस्य कूर्मस्य दधिमधुघृतैरभ्यञ्जनं विधत्ते—तमभ्यनक्तीति । दधिमधुघृतानां पृथिव्यादिलोकरूपत्वात्तैरभ्यञ्जनैः कूर्मं स्वकीयेनैव रूपेण समृद्धं करोतीत्याह—दधि हैवेति । तत्र घनीभावसाधर्म्याद्दध्नः पृथिवीलोकरूपत्वम् । घृतस्य दध्न उपरिभावित्वात् पृथिव्युपरितनान्तरिक्षलोकरूपत्वम् । मधुनस्तु वृक्षाचलशिखरादिषूपरिभागेष्ववस्थितत्वाद् द्युलोकात्मकत्वम् । अथवा मधुनो मधुररसत्वेन सोमात्मकत्वात्सोमस्य च द्युलोकेऽवस्थानान्मधु द्युलोकरूपम् । प्रकारान्तरेणापि दध्यादिभिरभ्यञ्जनं प्रशंसति—अथो इति ॥ ३ ॥

अभ्यञ्जने मन्त्रं विधत्ते—मधु वाता ऋतायत इति । विहितमभ्यञ्जनमन्त्रं रसात्मना प्रशंसति—यां वै देवतामिति । ' याम् ' ' देवताम् ' ' अभि '—लक्ष्य यां ' ऋग् ' ' अनूक्ता ' उच्चारिता यद्देवताप्रतिपादकत्वेनोच्यते सा ऋक् तत्प्रतिपादकत्वात् ' सैव ' प्रतिपाद्या ' देवता ', तथा ' यजुः ' अपि । एवं च सति अत्र तद्देवतास्वरूपमेतन्मधु, " मधु वाता ऋतायते "—इत्यनया ऋचा प्रतिपाद्यत्वात् । ततश्च ' एष तृचः ' प्रति-

---

१–कूर्मं दधिमधुघृतैरनक्ति मधु वाता इति । का. श्रौ. सू. १७।१।९ ।

स युत्कूर्म्मो नुाम । (मै) एतद्वै रूपं कृत्वा प्रजुापतिः प्रजा ऽअसृजत यदसृजताकरोत्तद्यदकरोत्तुस्मात्कूर्म्मुः कश्यपो वै कूर्म्मस्तुस्मादाहुः सुर्व्वाः प्रजाः काश्यप्य ऽइति ॥ ५ ॥

---

स यत् कूर्मो नाम । एतद्वै रूपं कृत्वा प्रजापतिः प्रजा असृजत । यदसृजत–अकरोत् तत् । यदकरोत्–तस्मात्कूर्मः । कश्यपो वै कूर्मः । तस्मादाहुः–सर्वाः प्रजाः काश्यप्य इति ॥ ५ ॥

---

पाद्यत्वेन देवताभूतमध्वात्मकः । तिस्र ऋचो यस्मिन् समुदाये स तृचः । " ऋचि त्रेरुत्तरपदादिलोपश्च च्छन्दसि "–( पा. सू. ६ । १ । ३४ । वा. १ ) इति त्रिशब्दस्य संप्रसारणमृवर्णस्य च लोपः । " ऋक्पूरब्धूःपथामानक्षे "–( पा. सू. ५ । ४ । ७४ । ) इति समासान्तः । मधु च ' रसः ' रसस्वरूपम्, अतश्चैतेन तृचेनोपधाने सति रसात्मकेऽस्मिन् कूर्मे ' रसमेव ' निहितवान् भवति । अभ्यञ्जनमन्त्राणां छन्दःसङ्ख्ये विधत्ते–गायत्रीभिस्तिसृभिरिति । तद्व्याख्यानं प्रागुक्तमित्याह–तस्योक्तो बन्धुरिति । तच्च " गायत्रीभिः प्राणो गायत्री प्राणमेवास्मिन्नेतद्दधाति, तिसृभिस्त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति "–( श. प. ६।४।२।५ ) इति षष्ठकाण्डेऽभिहितम् । मन्त्राणामयमर्थः–' ऋतायते ' ऋतं यज्ञमात्मन इच्छतीति ऋतायन् यजमानः ( पा. सू. ३।१।८५ ) व्यत्ययेनाकारः । तस्मै, 'वाताः' वायवो 'मधु' मधुररसं 'क्षरन्ति' स्रावयन्ति । ' सिन्धवः ' समुद्राश्च नद्यश्च ' मधु क्षरन्ति ' । ' ओषधीः ' ओषधयोऽपि " वा छन्दसि "–( पा. सू. ३ । ४ । ८८ ) इति पूर्वसवर्णदीर्घः । 'नः' अस्मत्सम्बन्धियजमानार्थं ' माध्वीः ' मधुररसोपेताः सन्तु । " ऋत्व्यवास्त्व्य " इत्यादिना ( पा. सू. ६।४।१७५ ) माध्वीशब्दो निपातितः । किञ्च ' नक्तम् ' रात्रिरपि मधुररसोपेता भवतु । अपि च ' उषसः ' मधुररसोपेता भवन्तु । तथा यत् ' पार्थिवं रजः ' तत्सर्वं ' मधुमद् ' अस्तु । ' नः ' अस्माकं यजमानस्य ' पिता ' पितृस्थानीया ' द्यौः ' ' मध्वस्तु ' मधुररसोपेता भवतु । ' वनस्पतिः ' अश्वत्थादिर्यज्ञसाधनभूतो ' नः ' अस्मद्यजमानार्थं ' मधुमानस्तु ' । ' सूर्योऽपि ' ' मधुमान् ' सन्तापराहित्यलक्षणमाधुर्यरसोपेतोऽस्तु । तथा ' गावो ' ' नः ' अस्मद्यजमानार्थं ' माध्वीः ' मधुरक्षीरोपेता ' भवन्तु ' ॥ ४ ॥

अथ कूर्म इति नाम्नः प्रवृत्तिनिमित्तं दर्शयति–स यत्कूर्म इति । ' एतत् ' कूर्मसम्बन्धि ' रूपम् ' आत्मनः ' कृत्वा ' प्रजापतिः ' ' प्रजा असृजत ' । ' असृजत ' इत्यस्य व्याख्यानम्–यदसृजताकरोदिति । ' असृजत ' इति ' यत् ' तत् ' अकरोत् ' इत्यर्थः । ' तत् ' तेन कूर्मरूपेण ' अकरोद् ' इति यत् तस्मादकरोदिति ' कूर्मः ' इति कूर्मशब्दो नामधेयमित्यर्थः । करोतेरौणादिके ( पा. सू. उ. १ । १५० ) मक्प्रत्यये " बहुलं छन्दसि "–( पा. सू. ७ । १ । १०३ ) इत्युत्वे कृते " हलि च "– ( पा. सू. ८ । २ । ७७ ) इति दीर्घे च कृते कूर्म इति रूपं भवति । ' कश्यपो वा ' इत्यादिकस्यायमर्थः । कूर्मशब्दस्य करणप्रवृत्तिनिमित्तकत्वात् कश्यपस्य प्रजापतित्वेन प्रजाकारकत्वात्कश्यपः कूर्मः खलु । अत एव ' सर्वाः प्रजाः ' 'काश्यप्यः' इत्याहुर्जनाः । अतश्च कूर्मस्य कश्यपात्मकत्वात्तदुपधानं प्रशस्तमिति भावः ॥५॥

स यः स कूर्म्मोऽसौ सऽआदित्यः । ( त्योऽमु ) अमुमेवैतदादित्यमुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधात्यमुं तदादित्यं पुरस्तात्प्रत्यञ्चं दधाति तस्मादसावादित्यः पुरस्तात्प्रत्यङ्ङ्धीयते दक्षिणतोऽषाढायै व्वृषा वै कूर्म्मो योषाऽषाढा दक्षिणतो वै व्वृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि व्वृषा योषामुपशेते सैषा सर्व्वासामिष्टकानां महिषी यदषाढैतस्यै दक्षिणतः सन्त्सर्व्वासामिष्टकानां दक्षिणतो भवति ॥ ६ ॥

यद्वेव कूर्म्ममुपदधाति । प्राणो वै कूर्म्मः प्राणो हीमाः सर्व्वाः प्रजाः करोति प्राणमेवैतदुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधाति पुरस्ताच्चत्प्रत्यञ्चं

---

स यः स कूर्मः—असौ स आदित्यः । अमुमेवैतदादित्यमुपदधाति । तं पुरस्तात्प्रत्यञ्चमुपदधाति । अमुं तदादित्यं पुरस्तात्प्रत्यञ्चं दधाति । तस्मादसावादित्यः पुरस्तात्प्रत्यङ्ङ्धीयते । दक्षिणतोऽषाढायै । वृषा वै कूर्मः, योषाऽषाढा । दक्षिणतो वै वृषा योषामुपशेते । अरत्निमात्रे । अरत्निमात्राद्धि वृषा योषामुपशेते । सैषा सर्वासामिष्टकानां महिषी—यदषाढा । एतस्यै दक्षिणतः सन्त्सर्वासामिष्टकानां दक्षिणतो भवति ॥ ६ ॥

यद्वेव कूर्ममुपदधाति । प्राणो वै कूर्मः । प्राणो हीमाः सर्वाः प्रजाः करोति । प्राणमेवैतदुपदधाति ।

---

अथ तमेव कूर्ममादित्यात्मनाऽपि स्तौति—स य इति । 'सः' प्रकृतो 'यः' 'कूर्मः' अस्ति, 'असौ' विप्रकृष्टः 'आदित्यः' आदित्यात्मकत्वं मण्डलाकारसाम्यात्, यथाऽऽदित्यो यूप इति । एतस्योपधाने आदित्यस्यैवोपधानं कृतं भवति । उक्तमादित्यात्मकत्वमुपजीव्य तस्य चयनप्रदेश एव पूर्वभागे प्रत्यङ्मुखत्वेनोपधानमाह—तं पुरस्तादिति । ननु कूर्मस्यादित्यात्मकत्वेन पुरस्तात्प्रत्यगुपधानेनादित्यस्य पुरस्तात्प्रत्यङ्निधानमित्यन्योन्याश्रयतादोष इति चेत् । नैष दोषः । कारकज्ञापकयोर्हेतुहेतुमद्भाववैपरीत्यं भूषणमेव न तु दूषणम् । यथाऽग्निर्धूमस्य कारको हेतुः, धूमश्चाग्नेर्ज्ञापक इति । तथाऽत्रापि कूर्मस्य पुरस्तात्प्रत्यगुपधानमादित्यस्य पुरस्तात् प्रत्यङ्निधाने कारकम् । आदित्यस्य पुरस्तात्प्रत्यगवस्थानं कूर्मस्यैवंविधोपधाने ज्ञापकम् । पुरस्तात् प्रत्यगुपधानमषाढायाः पुरस्तादुत्तरतो वापि स्यादित्यत आह—दक्षिणत इति । 'अषाढायै' इति ( पा. सू. २ । ३ । ६२, वा. १ ) षष्ठ्यर्थे चतुर्थी ।

उक्तेऽर्थे उपपत्तिमाह—वृषा वा इति । 'वृष' शब्देन सेचनसमर्थत्वात् पुमानुच्यते । अषाढाशब्दस्य स्त्रीलिङ्गत्वाद् 'अषाढा योषा' खलु । "उत्तरतो हि स्त्री पुमांसमुपशेते"—इति श्रुतेः । पुमान् दक्षिणंभागे 'योषामुपशेते' उपशयनेनेप्सिततमत्वाद् 'योषाम्' ( पा. सू. २ । ३ । २ ) इति द्वितीया । अतश्चास्य कूर्मस्याषाढायाः दक्षिणभागे उपधानमुपपन्नमित्यर्थः । दक्षिणभागे विप्रकृष्टेऽप्युपधानं स्यादित्यत आह—अरत्निमात्रे इति । उखाया अपि पुरस्तादषाढायाः शिष्टत्वेन सर्वेष्टकानामपि प्रशस्तत्वाद्दक्षिणभागे उपधानेन सर्वेष्टकानामपि दक्षिणभागे उपशयनं सिद्धं भवतीति दर्शयति—सैषेति ॥ ६ ॥

अथ तमेव कूर्मं प्राणात्मनाऽपि स्तौति—यद्वेवेति । प्राणो हीमा इति । 'प्राणः' खलु 'इमाः' 'सर्वाः

---

१-अरत्निमात्रेऽषाढां दक्षिणेनावकासूपरिष्टाच्च पुरुषमभिमुखम् । का. श्रौ सू. १७ । १०० ।

प्राणं दधाति तस्मात्पुरस्तात्प्रत्यङ् प्राणो धीयते पुरुषमभ्यावृत्तं यज- माने तत्प्राणं दधाति दक्षिणतोऽषाढायै प्राणो वै कूर्म्मो वागषाढा प्राणो वै वाचो वृषा प्राणो मिथुनम् ॥ ७ ॥ ( शतम् ४२०० )

( म ) अपां गम्भन्त्सीदेति । (त्ये) एतद्वापां गम्भिष्ठं यत्रैषऽ एतत्तपति मा त्वा सूर्य्योऽभिताप्सीन्माऽग्निर्वैश्वानर ऽइति मैव त्वा सूर्य्यो हिंसी- न्मोऽअग्निर्वैश्वानरऽइत्येतदच्छिन्नपत्राः प्रजा ऽअनुवीक्षस्वेतीमा वै सर्व्वाः प्रजा याऽ इमा ऽइष्टकास्ताऽअरिष्टाऽअनार्ताऽअनुवीक्षस्वेत्येतदनु त्वा दिव्या वृष्टिः सचतामिति यथैवैनं दिव्या वृष्टिरनुसचेतैवमेतदाह ॥ ८ ॥

---

तं पुरस्तात्प्रत्यञ्चमुपदधाति । पुरस्तात्तत्प्रत्यञ्चं प्राणं दधाति । तस्मात्पुरस्तात्प्रत्यङ्प्राणो धीयते । पुरुषमभ्यावृत्तम् । यजमाने तत्प्राणं दधाति । दक्षिणतोऽषाढायै । प्राणो वै कूर्मः,वागषाढा । प्राणो वै वाचो वृषा । प्राणो मिथुनम् ॥ ७ ॥

"अपां गम्भन्त्सीद"–इति । एतद्वापां गम्भिष्ठम्–यत्रैष एतत्तपति । "मा त्वा सूर्योऽभि- ताप्सीन्माऽग्निर्वैश्वानरः"–इति । मैव त्वा सूर्यो हिंसीद्, मोऽअग्निर्वैश्वानर इत्येतत् । "अच्छि- न्नपत्राः प्रजा अनुवीक्षस्व"–इति । इमा वै सर्वाः प्रजाः–या इमा इष्टकाः । ता अरिष्टा अनार्त्ता अनुवीक्षस्वेत्येतत् । "अनु त्वा दिव्या वृष्टिः सचताम्"–( वा. सं. १३ । ३० ) इति । यथैवैनं दिव्यां वृष्टिरनुसचेत–एवमेतदाह ॥ ८ ॥

---

प्रजाः करोति' प्राणिभिरेव प्रजानामुत्पादनात्, अतश्च कर्त्तव्यत्वसामान्यात् 'प्राणः' 'कूर्मः' इति तदुपधाने प्राणस्यैवोपधानं भवति । तं पुरस्तादित्यादिनोक्तं प्राणात्मकत्वमुपजीव्य पुरस्तात्प्रत्यङ्मुखत्वेनोपधान- मुपपाद्यते–तस्मादिति । यत एवं 'तस्मात्' कारणात् 'पुरस्तात्'–मुखः प्राणवायुः 'प्रत्यङ्'–मुख- त्वेन 'धीयते' ध्रियते । कूर्मस्य प्राणात्मकत्वाद्धिरण्मयपुरुषाभिमुख्येन तस्योपधाने पुरुषस्य यजमानरूपत्वाद्य- जमाने प्राणनिधानं भवतीत्याह–पुरुषमभ्यावृत्तमिति । कूर्मस्य प्राणत्वादषाढाया वाक्त्वम्, तस्य दक्षिणत उपधानं युज्यत इति दर्शयति–दक्षिणत इति । स्त्रीत्वसामान्यादषाढायाः वागात्मकत्वम् । 'प्राणः' 'वाचो' 'वृषा' पतिः खलु, प्राणोपजीवनेन वाचः प्रवृत्तेः । अतः 'प्राणो' वागित्युभयमपि 'मिथुनम्' । एवं च वागात्मिकाया अषाढाया दक्षिणभागे प्राणात्मकस्य कूर्मस्योपधानमुपपन्नमित्यर्थः ॥ ७ ॥

अथ तदुपधाने मन्त्रं विदधानो व्याचष्टे–अपाङ्गम्भन्नित्यादिना । यत्रेति । 'यत्र' स्थाने 'एषः' सूर्यः 'एतत्' तपनं करोति । 'एतत्' खलु 'अपाम्' 'गम्भिष्ठम्' गम्भीरतमं ह्रद इत्यर्थः । सूर्यस्य वृष्टिहेतुत्वा- त्तस्यावस्थानप्रदेशस्य ह्रदत्वमुच्यते । ततश्च कूर्मस्य अपामन्तरेवावस्थानाद् 'अपाम्' 'गम्भन्' सूर्यावस्थान- समीपदेशलक्षणेऽपां ह्रदे 'सीद' उपविशेति मन्त्र आह । 'गम्भन्' इति गम्भीरशब्दस्य छान्दसो गम्भन्ना-

(ह्य) अथैनमेजयति । त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानितीमे वै त्रयः समुद्राः स्वर्गा लोकास्तानेष कूर्म्मो भूत्वाऽनुसꣳससर्पापां पतिर्वृषभ ऽइष्टकानामित्यपाꣳ ह्येष पतिर्वृषभ ऽइष्टकानां पुरीषं वसानः सुकृतस्य लोकऽइति पशवो वै पुरीषं पशून्वसानः सुकृतस्य लोक ऽइत्येतत्तत्र गच्छ यत्र पूर्वे परेता ऽइति तत्र गच्छ यत्रैतेन पूर्वे कर्मणेयुरित्येतत् ॥ ९ ॥

---

अथैनमेजयति । "त्रीन्त्समुद्रान्त्समसृपत् स्वर्गान्"–इति । इमे वै त्रयः समुद्राः स्वर्गा लोकाः । तानेष कूर्मो भूत्वाऽनुसंससर्प । " अपां पतिर्वृषभ इष्टकानाम् "–इति । अपां ह्येष पतिर्वृषभ इष्टकानाम् । " पुरीषं वसानः सुकृतस्य लोके "–इति । पशवो वै पुरीषम् । पशून् वसानः सुकृतस्य लोक इत्येतत् । " तत्र गच्छ यत्र पूर्वे परेताः"–( वा. सं. १३।३१ ) इति । तत्र गच्छ यत्रैतेन पूर्वे कर्मणेयुरित्येतत् ॥ ९ ॥

---

देशः । तत उत्तरस्याः सप्तम्याः " सुपां सुलुक् "–( पा. सू. ७ । १ । ३९ ) इत्यादिना लुकि रूपम् । गम्भिष्ठमिति गम्भन्शब्दादतिशायने ( पा. सू. ५ । ३ । ५५ ) इष्ठनि कृते " टेः "–( पा. सू. ६ । ४ । १४३) इति टिलोपे कृते रूपम् । "मा त्वा सूर्योऽभिताप्सीन्माऽग्निर्वैश्वानरः" इत्यत्राभिताप्सीदित्येतत्पदार्थमाह–मैव त्वेति । अच्छिन्नपत्रा इति । ' पत्र ' शब्देनात्रावयवो लक्ष्यते, तेनात्र अच्छिन्नावयवा इत्यर्थः । ' या इमाः ' उपहिताः ' इष्टकास्ताः इमा एव सर्वाः प्रजाः ' खलु, इष्टकानां प्राजापत्यात्मकत्वेन प्रजापतेश्च सर्वप्रजाकारणत्वेन तदात्मकत्वादित्यर्थः । ' रिष्ट '–शब्देनानिष्टं व्याधिप्रभृतिकमुच्यते । तद्रहिता ' अरिष्टाः ' तस्यैव विवरणम्–अनार्त्ता इति । तथा सति अच्छिन्नपत्राः प्रजा अनुवीक्षस्व इत्यनेन एतदुपहितेष्टकारूपाः प्रजाः यथा ' अरिष्टा अनार्त्ताः ' भवन्ति तथा ताः ' अनुवीक्षस्व ' अनुपालयेत्येतदुक्तं भवतीत्यर्थः ॥

यथैवैनमिति । ' एनम् ' कूर्मम् ' अनु '– लक्ष्य ' यथैव ' ' दिव्या वृष्टिः ' सम्बध्नीयात्, ' एवम् ' अनेनाभिप्रायेण ' एतद् ' " अनु त्वा " इत्यादिकम् ' आह ' ॥ ८ ॥

" अपां गम्भन् " " त्रीन् समुद्रान् " " मही द्यौः " इति त्रिभिर्मन्त्रैरयं कूर्म उपधीयते, तत्र मध्यमेन तं चालयन्नुपदध्यात् । अत एव कात्यायनः–"अपां गम्भन्निति तिसृभिः, घट्टयति मध्यमया"–( का. श्रौ. सू. । १७।१००।१०१) इति । तदेतद्दर्शयन् व्याचष्टे–अथेति ।'एजयति' कम्पयति, "एजृ कम्पने"–(धा.पा.भ्वा. आ. २३४। ) इति धातुः । इमे इति । ये ' इमे ' ' त्रयः समुद्राः ' समुद्रवन्ति समुद्गच्छन्ति इति ' समुद्रा लोकाः ' ' स्वर्गाः ' सुखहेतुभूताः 'तानेषः' प्रजापतिः ' कूर्मो भूत्वा ' 'अनुसंससर्प' प्रजापतेर्लोकत्रयात्मकत्वात्, " स एष इम एव लोकाः"–इत्यादिना कूर्मस्य लोकत्रयात्मकत्वाभिधानात्प्रजापतिः कूर्मरूपेण लोकान् 'अनुसंससर्प' इत्ययमत्राभिसन्धिः । अपां पतित्वं कूर्मस्य तत्रैव सर्वदाऽवस्थानात् । वृषभशब्देन श्रेष्ठयं लक्ष्यते, तच्च लोकत्रयात्मकत्वादिना द्रष्टव्यम् । अथवा इष्टकात्मनां स्त्रीणां वृषभः पुमान् । पुरीषशब्देन 'पशवो' ऽभिधीयन्ते, तान् 'वसानः ' आच्छादयन् यजमानस्य सम्पादयन्नित्यर्थः । अथवा इष्टकारूपान् ' पशून् ' आच्छा-

(न्म) मही द्यौः पृथिवी च नऽइति । महती द्यौः पृथिवी च नऽइत्ये-तदिमं यज्ञं मिमिक्षतामितीमं यज्ञमवतामित्येतत्पिपृतां नो भरीमभि-रिति बिभृतां नो भरीमभिरित्येतद्द्यावापृथिव्ययोत्तमयोपदधाति द्यावा-पृथिव्यो हि कूर्म्मः ॥ १० ॥

(त्रि) त्रिभिरुपदधाति । त्रयऽइमे लोकाऽ अथो त्रिवृदग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिभिरभ्यनक्ति तत्षट् तस्योक्तो

---

"मही द्यौः पृथिवी च नः"–इति । महती द्यौः पृथिवी च न इत्येतत् । "इमं यज्ञं मिमिक्षताम्"–इति । इमं यज्ञमवतामित्येतत् । "पिपृतां नो भरीमभिः"–( वा. सं. १३ । ३२ ) इति । बिभृतां नो भरीमभिरित्येतत् । द्यावापृथिव्ययोत्तमयोपदधाति । द्यावा-पृथिव्यो हि कूर्मः ॥ १० ॥

त्रिभिरुपदधाति । त्रय इमे लोकाः । अथो त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतै-वैनमेतदुपदधाति । त्रिभिरभ्यनक्ति । तत् षट् । तस्योक्तो बन्धुः । अवका अधस्ताद्भवन्ति । अवका

---

दयन्निति । पूर्वमुपहिताः कूर्मा एतेनोपधानलक्षणेन कर्मणा 'यत्र' 'परेताः' मृत्वा प्राप्नुवन् 'तत्र गच्छ' इत्येतदुक्तं भवति ॥ ९ ॥

मही द्यौरित्यत्र महीपदस्य विवक्षितमर्थमाह–महतीति । द्वितीयपादे 'मिमिक्षताम्' इत्यस्यावनमर्थ इति दर्शयति–इमं यज्ञमवतामित्येतदिति । अनेकार्थत्वाद्धातूनां मिमिक्षतिरत्रावने वर्त्तते ॥

तृतीयपादे पिपृतामित्यस्यार्थमाह–बिभृतामिति । मन्त्रार्थस्तु हे कूर्म ! 'त्वम्' 'अपां' गम्भीरतरे देशे उपविश, तत्र सीदन्तं त्वां सूर्यो माऽभितपतु । वैश्वानरः सर्वेषामुदरस्थः सर्वात्मा च सर्वज्ञोऽग्निरपि माऽभितपतु । तथाविधस्त्वमनवखण्डितावयवा इष्टकारूपाः प्रजा अनुवीक्षस्व । त्वां दिव्या वृष्टिश्चानुसम्बध्नीता-मिति प्रथमस्यार्थः ॥

हे कूर्म ! त्वं त्रीन् सुखहेतुभूतान् लोकान् 'समसृपत्' संसृप्तोऽसि । व्यत्ययेन तिबादेशः, लृदित्वा-च्च्लेरङादेशः ( पा. सू. ३ । १ । ५५ ) । स त्वम् 'अपां पतिः' 'इष्टकानां' च 'वृषभः,' अतस्त्वां ब्रवीमि 'पुरीषम्' इष्टकारूपान्पशून् 'वसानः' आच्छादयन् 'सुकृतस्य' सुष्ठु सम्पादितस्याग्नेः 'लोके' स्थाने स्थित्वा 'तत्र गच्छ' 'एतेन' कर्मणा 'पूर्वे' कूर्माः 'यत्र परेताः' मृत्वा प्राप्नुवन्निति द्वितीयस्यार्थः ॥

"मही द्यौः" इति मन्त्रस्तु प्रागेव व्याख्यातः । अन्तिममन्त्रस्य द्यावापृथिव्यत्वं प्रशंसति–द्यावापृथि-व्ययेति । "तस्य यदधरं कपालमयं स लोकः"–( श. प. ७ । ५ । १ । २ ) इत्यादिना कूर्मस्याध-स्तनोपरितनयोः कपालयोर्द्यावापृथिवीरूपत्वस्योक्तत्वात् 'कूर्मो द्यावापृथिव्यः' । अतस्तदुपधाने उत्तमाया ऋचो द्यावापृथिव्यत्वं प्रशस्तमिति यावत् । 'द्यावापृथिव्य' शब्दस्तु "द्यावापृथिवीशुनासीर"–( पा. सू. ४ । २ । ३२ ) इत्यादिसूत्रेण देवतार्थे यत्प्रत्ययान्तः ॥ १० ॥

उपधानमन्त्राणां त्रित्वसङ्ख्यामनूद्य प्रशंसति–त्रिभिरिति । 'इमे' पृथिव्यादयो 'लोकास्त्रयः' कूर्मश्च

बुन्धुरवका ऽअधस्ताद्भवन्त्युवका ऽउपरिष्टादापो वाऽअवकाऽ अपामेवै-
नमेतुन्मध्यतो दधाति सादयित्वा सूददोहसाऽधिवदति तुस्योक्तो बुन्धुः ॥ ११ ॥

(२) अथोलूखलमुसलेऽउपदधाति । विष्णुरकामयतान्नादः स्यामिति स ऽएतेऽइष्टकेऽअपश्यदुलूखलमुसले तेऽउपाधत्त तेऽउपधायान्नादोऽभवत्तथै-
वैतद्यजमानो यदुलूखलमुसलेऽउपदधाति येन रूपेण यत्कर्म कृत्वा विष्णुरन्नादोऽभवत्तेन रूपेण तत्कर्म कृत्वाऽन्नादोऽसानीति तदेतत्सर्व्वमन्नं यदु-
लूखलमुसलेऽउलूखलमुसलाभ्याᳪं ह्येवान्नं क्रियतऽउलूखलमुसला-
भ्यामद्यते ॥ १२ ॥

---

उपरिष्टात् । आपो वाऽअवकाः । अपामेवैनमेतन्मध्यतो दधाति । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ ११ ॥

### अथोलूखलमुसलेष्टकोपधानम् ।

अथोलूखलमुसलेऽउपदधाति । विष्णुरकामयत–अन्नादः स्यामिति । स एतेऽइष्टकेऽअपश्यत्–उलूखलमुसले । तेऽउपाधत्त । तेऽउपधायान्नादोऽभवत् । तथैवैतद्यजमानो यदुलूखलमुसलेऽउपदधाति, येन रूपेण यत्कर्म कृत्वा विष्णुरन्नादोऽभवत्–तेन रूपेण तत्कर्म कृत्वाऽन्नादोऽसानीति । तदेतत्सर्वमन्नम्–यदुलूखलमुसले । उलूखलमुसलाभ्यां ह्येवान्नं क्रियते । उलूखलमुसलाभ्यामद्यते ॥ १२ ॥

---

लोकत्रयात्मकः; ततश्च तदुपधानं त्रिभिर्मन्त्रैः सम्पाद्यते । अपि च अग्निस्त्रिवृत्स्तोमात्मकः, अग्नेस्त्रिवृत्त्वमेकस्मादेव सहोत्पत्तेः । तथा च श्रूयते–" स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत "–( तै. सं. ७ । १ । १ ) इति । आहवनीयादिभेदेन वाऽग्नेस्त्रिवृत्त्वम् । अथवा षष्ठकाण्डे रुद्रादिनवनामधेयाभिधेयत्वादग्नेस्त्रिवृत्त्वमुक्तम् ( श.प. ६।३।१०।१८ ) । तथा सति अत्रोपधानमन्त्राणां त्रित्वाद् 'अग्निर्यावान्' यत्परिमाणविशिष्टः । अस्य च ' मात्रा ' अवयवः ' यावती ' यत्परिमाणविशिष्टा ' तावता ' तत्परिमाणविशिष्टेन रूपेण ' एतद् ' उपधानं सम्पादितं भवति । अभ्यञ्जनमन्त्राणामुपधानमन्त्राणां च सङ्ख्यां सम्भूय प्रशंसति–त्रिभिरभ्यनक्तीति । ' तत् ' तथा सति ' षट् '–सङ्ख्या सम्पद्यते । तत्सङ्ख्यासम्पादनस्य तु प्रशंसारूपं व्याख्यानं "षड् वा ऋतवः" इत्यादिना प्रागुक्तमित्यर्थः । कूर्मस्याधस्तादुपरिष्टाच्चावकाः स्थापयेदित्याह–अवका इति । ' अवका ' शैवलम् । अवकास्थापनं किमर्थमित्यत आह–आपो वा इति । ' अवकाः ' अप्सु जायन्त इति कार्यकारणभेदाविवक्षया आपोऽप्यवकाः, अतश्चैतेनावकास्थापनेन ' अपामेव ' ' मध्यतः ' ' एनम् ' कूर्मं निहितवान्भवति । 'सादयित्वा' इत्यादिकं तु प्रागेव व्याख्यातम् ॥ ११ ॥

कूर्मोपधानानन्तरमुलूखलमुसलयोरुपधानं विधत्ते–अथेति । विहितमुलूखलमुसलयोरुपधानमन्नादत्वसाधनतया प्रशंसति–विष्णुरित्यादिना । 'येन रूपेण' प्रकारेण 'यत् कर्म कृत्वा' ' विष्णुः ' ' अन्नादोऽभवत्, ' तेन प्रकारेण 'तत् कर्म कृत्वाऽहमप्यन्नादोऽसानि' इत्यभिप्रायेण यजमानः 'उलूखलमुसले उपदधाति' यतः, अतो

ते रेतःसिचोर्वेलयोपदधाति । पृष्टयो वै रेतःसिचौ मध्यम्मु पृष्टयो मध्यतऽ एवास्मिन्नेतदन्नं दधात्युत्तरेऽउत्तरमेवास्मादेतदन्नं दधात्यरत्नि- मात्रेऽरत्निमात्राद्ध्यन्नमद्यते ॥ १३ ॥

प्रादेशमात्रे भवतः । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसंमितमेवा- स्मिन्नेतदन्नं दधाति यदु वाऽआत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १४ ॥

---

ते रेतःसिचोर्वेलयोपदधाति । पृष्टयो वै रेतःसिचौ । मध्यमु पृष्टयः । मध्यत एवास्मिन्नेतदन्नं दधाति । उत्तरे । उत्तरमेवास्मादेतदन्नं दधाति । अरत्निमात्रे । अरत्निमात्राद्ध्यन्नमद्यते ॥ १३ ॥

प्रादेशमात्रे भवतः । प्रादेशमात्रो वै गर्भो विष्णुः । अन्नमेतद् । आत्मसंमितमेवास्मिन्नेतदन्नं दधाति । यद्दु वाऽआत्मसंमितमन्नं—तदवति, तन्न हिनस्ति । यद्भूयो—हिनस्ति तद् । यत्कनीयो— न तदवति ॥ १४ ॥

---

यथैव विष्णुरभूत्, ' तथैव ' ' एतद् ' एतेन ' यजमानः ' अप्यन्नादो भवतीत्यर्थः । अन्नादनसाधनता कथ- मनयोरिति तदुपपादयति—तदेतदिति । यत उलूखलमुसलाभ्यामन्नं क्रियते, ताभ्यां व्रीह्यादीनां वितुषीकरणाद् वितुषीकृतानामेवान्नत्वाद् ' अन्नम् ' अपि ' उलूखलमुसलाभ्यां क्रियते, ' अतश्च ' उलूखलमुसले ' इति यत्, एतत्कृत्स्नम् ' अन्नम् ' तथा सति अन्नादनसाधनताऽनयोरुपपद्यत इति भावः ॥ १२ ॥

अनयोः स्थानविशेषं विधाय स्तौति—ते इति । रेतःसिचौ इष्टकाविशेषौ ( ७ । ४ । २ । २२ ) प्राग्विहितौ, तयोः ' वेलया ' प्रान्तेन सप्तम्यर्थे तृतीया । अत एव कात्यायनः—" रेतःसिग्वेलायामरत्निमात्र- श्रुतेः "—( का. श्रौ सू. १७ । ९३ । ) इति । तत्रैते उपदध्यात्, यतो ' रेतःसिचौ ' पृष्टयः ' पृष्टिशब्देन कटिपार्श्वस्थावस्थिविशेषावुच्येते । अवयवापेक्षया बहुत्वम् । रेतःसेचनसाधनत्वसामान्याद्रेतःसिचोः पृष्टिरूपता । शरीरमध्येऽवस्थानात् ' पृष्टयो मध्यं ' हि, अतश्च तत्प्रान्तेऽनयोरुपधानान्मध्यभाग एव ' अस्मिन् ' प्रजापतौ चीयमानाग्निरूपे ' एतदन्नम् ' निहितवान् भवति । दिगन्तरेऽपि रेतःसिचोरुपधानं सम्भवेदित्यत आह—उत्तर इति । स्वयमातृण्णाया उत्तरप्रदेशेऽपि प्रमाणविशेषमाह—अरत्निमात्र इति । लोके हि अरत्निमात्रप्रदेशादन्न- मादायाभ्यवह्रियते । अतश्चान्नरूपयोरनयोरुपधानं तावति प्रदेशे कर्तव्यम् । "उलूखलमुसले स्वयमातृण्णामुत्तरे- णारत्निमात्रे "—( का. श्रौ. सू. १७ । १०२ ) इति हि सूत्रम् ॥ १३ ॥

प्रकृते उलूखलमुसले प्रादेशमात्रे कर्त्तव्ये इत्याह—प्रादेशमात्रे भवत इति ( का. श्रौ. सू. १७।१०२ )। परिमाणविशेषोपादाने कारणमाह—प्रादेशमात्रो वा इति । ' विष्णुः ' यज्ञश्चीयमानाग्निरूपः, तदानीमनिष्पन्न- त्वेन गर्भः खलु, अतो यज्ञः 'प्रादेशमात्रः' लोके गर्भाणां तावत्प्रमाणत्वात् । उलूखलमुसलं चान्नम्, " तदेतत् सर्वमन्नम "—इत्युक्तत्वात् । ततश्च ' अस्मिन् ' ' गर्भे '—रूपे विष्णौ एतेनात्मसदृशप्रमाणमेव ' अन्नम् ' ' दधाति ' । अन्नस्यात्मानुरूपप्रमाणपरिग्रहे को लाभस्तदतिक्रमे वा को दोष इत्यत आह—यद्दु वा इत्यादि । ' आत्मसम्मितमन्नम् ' आत्मानं रक्षति न तु हन्ति । ' यत् ' तु ततोऽधिकं न्यूनं वा ' तत् ' तथा न

( त्यौ ) औदुम्बरे भवतः । ( ऽ ) ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जमेवास्मिन्नेतद्रसं दधात्यथो सर्व्वऽएते व्वनस्पतयो यदुदुम्बरऽएतेऽउपदधत्सर्व्वान्व्वनस्पतीनुपदधाति रेतःसिचोर्व्वेलयेमे वै रेतःसिचावनयोस्तद्वनस्पतीन्दधाति तस्मादनयोर्व्वनस्पतयश्चतुःस्त्रक्ति भवति चतस्रो वै दिशः सर्व्वासु तद्दिक्षु व्वनस्पतीन्दधाति तस्मात्सर्व्वासु दिक्षु व्वनस्पतयो मध्ये संगृहीतं भवत्युलूखलरूपतायै ॥ १५ ॥

यद्वेवोलूखलमुसलेऽउपदधाति । प्रजापतेर्व्विस्रस्तात्प्राणो मध्यत-

---

औदुम्बरे भवतः । ऊर्ग्वै रस उदुम्बरः । ऊर्जमेवास्मिन्नेतद्रसं दधाति । अथो सर्वेऽएते वनस्पतयो—यदुदुम्बरः । एतेऽउपदधत्सर्वान्वनस्पतीनुपदधाति । रेतःसिचोर्वेलया । इमे वै रेतःसिचौ । अनयोस्तद्वनस्पतीन्दधाति । तस्मादनयोर्वनस्पतयः । चतुःस्रक्ति भवति । चतस्रो वै दिशः । सर्वासु तद्दिक्षु वनस्पतीन्दधाति । तस्मात्सर्वासु दिक्षु वनस्पतयः । मध्ये सङ्गृहीतं भवति—उलूखलरूपतायै ॥ १५ ॥

यद्वेवोलूखलमुसलेऽउपदधाति । प्रजापतेर्विस्रस्तात्प्राणो मध्यत उदचिक्रमिषत् । तमन्नेनागृह्णात् । तस्मात्प्राणोऽन्नेन गृहीतः । यो ह्येवान्नमत्ति—स प्राणिति ॥ १६ ॥

---

करोति । अल्पस्य बलाङ्गपोषानाधायकत्वादधिकस्य च दुर्जरत्वेन पीडाकरत्वादित्यर्थः । ' हिनस्ति ' इति " हिसि हिंसायाम् "—( धा. पा. रु. प. १९ ) इत्यस्य रौधादिकस्य तिपि. ( पा. सू. ३ । ४ । ७८ ) श्नमि ( पा. सू. ३ । १ । ७८ ) " श्नान्नलोपः "—( पा. सू. ६ । ४ । २३ ) इति नकारलोपे रूपम् । अल्पशब्दात् ( पा. सू. ५ । ३ । ५७ ) ईयसुनि " युवाल्पयोः " ( पा. सू. ५ । ३ । ६४ ) इत्यादिना कनादेशे ' कनीयः ' इति भवति ॥ १४ ॥

अनयोर्वृक्षविशेषं विधाय स्तौति—औदुम्बरे भवत इति । ' औदुम्बरे ' उदुम्बरविकारौ ततो निष्पन्ने ' भवतः ' बिल्वादित्वाद्विकारे ( पा. सू. ४ । ३ । १३६ ) इति अण्—प्रत्ययः । ' उदुम्बरः ' ' ऊर्क् ' बलकरो ' रसः ' खलु । उदुम्बरस्य ऊर्ग्रूपत्वं तैत्तिरीयके श्रूयते—" देवा वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठत् "—( तै. सं. १।२।९ ) इति । तथा चैतेन ' अस्मिन् ' प्रजापतौ ' ऊर्जमेव ' ' रसम् ' निदधाति । सर्ववनस्पतीनामुपधानसिद्ध्यर्थमुदुम्बरस्य सर्ववनस्पतिरूपतामाह—अथो सर्वे एत इति । ' एते ' उलूखलमुसले ' उपदधत् ' उपदधानः ' सर्वान् वनस्पतीन् ' उपहितवान् भवति । रेतःसिग्वेलायामुपधानेन द्यावापृथिव्योर्वनस्पत्युपधानं प्रतिपादयति—रेतःसिचोर्वेलयेति । ' इमे ' द्यावापृथिव्यौ खलु, ' रेतःसिचौ ' इष्टके ' तत् ' तेन ' अनयोः ' द्यावापृथिव्योः ' वनस्पतीन् ' उपहितवान् भवति । ' तस्माद् ' हेतोर्द्यावापृथिव्योः ' वनस्पतयः ' सन्तीति शेषः । उलूखलस्य चतुष्कोणत्वाभिधानेन सर्वदिक्षु वनस्पत्युपधानमाह—चतुःस्रक्तीति । चतस्रः स्रक्तयः कोणा यस्य तदिदं ' चतुःस्रक्ति ' तथा ' मध्ये सङ्गृहीतम् ' मध्यप्रदेशे सङ्कुचितम् । किमर्थम्—' उलूखलरूपतायै ' एवंरूपं हि लोके प्रसिद्धमुलूखलम्, एतस्मादेव च वाक्यशेषादुलूखलमेव चतुःस्रक्ति मध्यसङ्गृहीतं च भवति न मुसलम् । तथा च वक्ष्यते "तद्वृत्तमिव भवति" ( श.प. ७।५।१।३८ ) इति ॥ १५ ॥

अथ विश्लिष्टावयवस्य प्रजापतेः प्राणमन्नमूर्जमस्मिन्नग्नौ प्रतिनिधातुमितिहासमाह—यद्वेवेति । ' मध्यतो '

ऽत्रुदचिक्रमिषत्तमन्नेनागृह्णात्तस्मात्प्राणोऽन्नेन गृहीतो यो ह्येवान्नमत्ति स प्राणिति ॥ १६ ॥

प्राणे गृहीतेऽस्मादन्नमुदचिक्रमिषत्तत्प्राणेनागृह्णात्तस्मात्प्राणेनान्नं गृहीतं यो ह्येव प्राणिति सोऽन्नमत्ति ॥ १७ ॥

( त्त्ये ) एतयोरुभयोर्गृहीतयोः । ( र ) अस्मादूर्गुदचिक्रमिषत्तामेताभ्यामुभाभ्यामगृह्णात्तस्मादेताभ्यामुभाभ्यामूर्ग्गृहीता यो ह्येवान्नमत्ति स प्राणिति तमूर्जयति ॥ १८ ॥

( त्यू ) ऊर्जि गृहीतायाम् । ( म ) अस्मादेतेऽउभेऽउदचिक्रमिषतां तेऽऊर्जाऽगृह्णात्तस्मादेतेऽउभे ऊर्जा गृहीते यᳫं ह्येवोर्जयति स प्राणिति सोऽन्नमत्ति ॥ १९ ॥

---

प्राणे गृहीतेऽस्मादन्नमुदचिक्रमिषत्–तत्प्राणेनागृह्णात् । तस्मात्प्राणेनान्नं गृहीतम् । यो ह्येव प्राणिति–सोऽन्नमत्ति ॥ १७ ॥

एतयोरुभयोर्गृहीतयोः–अस्मादूर्गुदचिक्रमिषत् । तामेताभ्यामुभाभ्यामगृह्णात् । तस्मादेताभ्यामुभाभ्यामूर्ग्गृहीता । यो ह्येवान्नमत्ति–स प्राणिति–तमूर्जयति ॥ १८ ॥

ऊर्जि गृहीतायामस्मादेतेऽउभेऽउदचिक्रमिषताम् । तेऽऊर्जाऽगृह्णात् । तस्मादेतेऽउभे ऊर्जा गृहीते । यं ह्येवोर्जयति–स प्राणिति–सोऽन्नमत्ति ॥ १९ ॥

---

मध्यप्रदेशात् ‘ प्राणः ’ अशेषवृत्तिर्वायुः ‘ उदचिक्रमिषत् ’ उत्क्रमितुमैच्छत् । ‘ तम् ’ प्राणमुत्क्रमितुमिच्छन्तम् ‘ अन्नेन ’ अदनीयेन ‘ अगृह्णात् ’ गृहीतवान्, प्रजापतिरिति शेषः । ‘ तस्मात् ’ कारणात् ‘ प्राणः ’ ‘ अन्नेन गृहीतः ’ । उक्तमेवार्थं प्रसिद्ध्या द्रढयति–यो ह्येवेति । ‘ यो ’ ‘ हि ’ अत्ता ‘ अन्नम् ’ अदनीयम् ‘ अत्ति’ भक्षयति, ‘ सः ’ ‘ प्राणिति ’ चेष्टते ॥ १६ ॥

सिद्धे प्राणग्रहणेऽन्नस्योत्क्रमणेच्छामाह–प्राणे गृहीत इति । ‘ अस्मात् ’ प्रजापतेः ‘ अन्नम् ’ कर्तृ उत्क्रमितुमैच्छत्, ‘ तद् ’ अन्नम् ‘ प्राणेन ’ साधनेन ‘ अगृह्णात् ’ प्रजापतिः । तस्मादित्यादि–पूर्ववद् व्याख्येयम् ॥ १७ ॥

एतयोरुभयोः प्राणान्नयोर्वशीकृतयोः ‘ ऊर्क् ’ बलम् ‘ उदचिक्रमिषत् ’ “ ऊर्ज बलप्राणनयोः ”–( धा. पा. चु. उ. १६ । ) इति धातुः । ऊर्जयति बलयतीति ‘ऊर्क्’ बलम् । यद्वा बलहेतुरन्नरसोऽपि ऊर्गित्यभिधीयते ( निघं. २ । ७ । १६ ) ‘ ताम् ’ ऊर्जम् ‘ एताभ्याम् ’ ‘ उभाभ्याम् ’ ‘ प्राणान्नाभ्याम् ’ ‘अगृह्णात्’ प्रजापतिः । तस्मादन्नप्राणाभ्यां सा ‘ ऊर्क् ’ ‘ गृहीता ’ वशीकृता । ‘ यो ह्येव ’ इत्यादि पूर्ववद् व्याख्येयम् । तमूर्जयतीति । ‘ तम् ’ अत्तारं पुरुषम् ‘ ऊर्जयति ’ बलयति भुक्तमन्नं कर्तुं इति शेषः । ऊर्ग्ग्रहणानन्तरमुच्चिक्रमिषन्तावन्नप्राणौ ‘ ऊर्जाऽगृह्णात् ’ । यᳫं हीति । ऊर्ग् बलं ‘ यमेवोर्जयति ’ बलयति ‘ स ’ चेष्टते, ‘ सोऽन्नमत्ति ’ च ॥ १८ ॥ १९ ॥

तान्येतान्यन्योऽन्येन गृहीतानि । तान्यन्योऽन्येन गृहीत्वाऽऽत्मन्प्रापादयत तदेतदन्नं प्रपद्यमानꣳ सर्वे देवाऽ अनुप्रापद्यन्तान्नजीवनꣳ हीदꣳ सर्व्वम् ॥ २० ॥

तदेष श्लोकोऽभ्युक्तः । ( स्त ) तद्वै स प्राणोऽभवदिति तद्धि स प्राणोऽभवन्महान्भूत्वा प्रजापतिरिति महान् हि स तदभवद्यदेनमेते देवाः प्रापद्यन्त भुजो भुजिष्या व्वित्त्वेति प्राणा वै भुजोऽन्नं भुजिष्याऽएतत्सर्व्वं व्वित्त्वेत्येतद्यत्प्राणान्प्राणयत्पुरीत्यात्मा वै पूर्यद्वै प्राणान्प्राणयत्तस्मात्प्राणा देवाऽअथ यत्प्रजापतिः प्राणयत्तस्मादु प्रजापतिः प्राणो यो वै स प्राण ऽएषा सा गायत्र्यथ यत्तदन्नमेष स व्विष्णुर्देवताऽथ या सोर्गेष स ऽउदुम्बरः ॥ २१ ॥

---

तान्येतान्यन्योऽन्येन गृहीतानि । तान्यन्योऽन्येन गृहीत्वाऽऽत्मन्प्रापादयत । तदेतदन्नं प्रपद्यमानं सर्वे देवा अनुप्रापद्यन्त । अन्नजीवनं हीदं सर्वम् ॥ २० ॥

तदेष श्लोकोऽभ्युक्तः । "तद्वै स प्राणोऽभवत्"—इति । तद्धि स प्राणोऽभवत् । "महान्भूत्वा प्रजापतिः"—इति । महान् हि स तदभवत् । यदेनमेते देवाः प्रापद्यन्त । "भुजो भुजिष्या विस्वा"—इति । प्राणा वै भुजः, अन्नं भुजिष्या । एतत्सर्वं वित्त्वेत्येतत् । "यत्प्राणान्प्राणयत् पुरि"—इति । आत्मा वै पूः । यद्वै प्राणान्प्राणयत्—तस्मात्प्राणा देवाः । अथ यत् प्रजापतिः प्राणयत्—तस्मादु प्रजापतिः प्राणः । यो वै स प्राणः—एषा सा गायत्री । अथ यत् तदन्नम्—एष स विष्णुर्देवता । अथ या सोर्क् । एष स उदुम्बरः ॥ २१ ॥

---

यतस्तावत् 'तानि' सर्वाणि 'अन्योन्येन' 'गृहीतानि' ततः 'तान्' 'अन्योन्येन गृहीत्वा' प्रजापतिरात्मनि 'प्रापादयत' प्रापयत् । आत्मन्निति "सुपां सुलुक्"—( पा. सू. ७।१।३९ । ) इत्यादिना सप्तम्या लुक् । यदिदं 'सर्वम्' इन्द्रियजातम् 'अन्नजीवनम्' अन्नमेव जीवनं यस्य तदन्नजीवनम्; तदभावे सर्वेषां स्वस्वव्यापारासमर्थत्वात् । अतोऽस्मिन् प्रजापतौ 'प्रपद्यमानम्' 'अन्नम्' 'सर्वे देवाः' इन्द्रियाणि प्रपन्नान्यभूवन् ॥ २० ॥

उक्तेऽर्थे कञ्चिन्मन्त्रं संवादयति—तदेष इति । 'तत्' तत्रार्थे 'एषः' वक्ष्यमाणः 'श्लोकः' मन्त्रः 'अभ्युक्तः' मन्त्रः—"तद्वै स प्राणोऽभवन्महान्भूत्वा प्रजापतिः । भुजो भुजिष्या विस्वा यत्प्राणान् प्राणयत्पुरि"—इति । तमेतं मन्त्रं पादशो विभज्य व्याचष्टे—तद्वा इति । 'तद्धि' तदा अन्नलाभाय स वै खलु 'प्राणोऽभवत्' । प्राणशब्देनेन्द्रियाण्युच्यन्ते । ततश्च सेन्द्रियोऽभूदित्यर्थः । महान्भूत्वेति । यदा 'एनम्' 'प्रजापतिम्' 'एते देवाः' इन्द्रियाणि 'प्रापद्यन्त' तदा 'सः' महानभूत् खलु । भुजो भुजिष्या वित्त्वेति । भोगसाधनत्वेन भुजः प्राणा उच्यन्ते, 'भुजिष्या' शब्देन भोग्यत्वाद् 'अन्नम्' । तद् एतत् सर्वं वित्त्वा लब्ध्वेत्येतदुक्तं भवति ।

सोऽब्रवीत् । ( द ) अयं वाव मा सर्व्वस्मात्पाप्मनऽउदभार्षीदिति यदब्रवीदुदभार्षीन्मेति तस्मादुदुम्भरऽउदुम्भरो ह वै तमुदुम्बरऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाऽउरु मेऽकरदिति तस्मादुरुकरमुरुकरꣳ ह वै तदुलूखलमित्याचक्षते परोक्षं परोक्षकामा हि देवाः सैषा सर्व्वेषां प्राणानां योनिर्यदुलूखलꣳ शिरो वै प्राणानां योनिः ॥ २२ ॥

---

सोऽब्रवीत् । अयं वाव मा सर्वस्मात्पाप्मन उदभार्षीदिति । यदब्रवीदुदभार्षीन्मेति—तस्मादुदुम्भरः । उदुम्भरो ह वै तमुदुम्बर इत्याचक्षते—परोऽक्षम् । परोक्षकामा हि देवाः । उरु मेऽकरदिति—तस्मादुरूकरम् । उरूकरं ह वै तदुलूखलमित्याचक्षते । परोऽक्षम्—परोक्षकामा हि देवाः । सैषा सर्वेषां प्राणानां योनिः—यदुलूखलम् । शिरो वै प्राणानां योनिः ॥ २२ ॥

---

यत्प्राणानिति । 'पुरि' आत्मनि शरीरे 'प्राणान्' 'प्राणयत्' स्वस्वव्यापारसमर्थानकरोत् । यत एवं 'प्राणयत्' 'तस्माद्' 'देवाः' इन्द्रियाणि प्राण्यन्त इति व्युत्पत्त्या 'प्राणाः' अभूवन् । 'अथ प्रजापतिः' तान् 'प्राणयद्' इति 'यत्,' 'तस्मात्प्रजापतिः अपि प्राणः अभूत् । अत्र प्राणनप्रयोजकत्वात् प्रजापतेः प्राणत्वमुक्तम् । एतावता तदेतदन्नं प्रपद्यमानं सर्वे देवा अनुप्रापद्यन्त, अन्नजीवनं हीदं सर्वमित्ययमर्थः संवादप्रदर्शनेनोपपादितो भवति । "प्रजापतेर्विस्रस्ताद्"—इत्याद्युपक्रमेण प्रकृते किमायातमित्यत आह—यो वा इत्यादि । 'सः' पूर्वोक्तः प्रजापतिसम्बन्धी 'यः प्राणः' अस्ति 'सैषा गायत्री' "विष्णोः कर्माणि" इत्यत्र यद्गायत्र्यात्मकं छन्दः 'सः प्राणः' इत्यर्थः । प्रकृतोपधानमन्त्रसन्निहितत्वादेषेति परामृश्यते । सैषेति लिङ्गं विधेयापेक्षम् । उत्तरत्राप्येवं द्रष्टव्यम् । प्राणो वृत्तिभेदेन त्रेधा भिद्यते गायत्र्यपि पादभेदेन । अतः सादृश्यात् 'प्राणो गायत्री' इत्युक्तम् । अथ यत्प्रजापतिसम्बन्धि 'अन्नम्' अस्ति 'स एष विष्णुर्देवता' विष्णुरिति यज्ञोऽभिधीयते । भोगसाधनत्वसामान्यादन्नस्य विष्णुरूपत्वम् । 'अथ या सा ऊर्क्' 'स एष उदुम्बरः' उदुम्बरस्य वलकररसत्वादूर्गात्मकत्वम् ॥ २१ ॥

उदुम्बरोलूखलशब्दौ निर्वक्ति—सोऽब्रवीदिति । 'सर्वस्मात्पाप्मनः' कृच्छ्रान्माम् 'अयम्' हि 'उदभार्षीद्' उद्धृतवान् 'इति' 'सः' प्रजापतिः 'अब्रवीत्' । कृच्छ्राद्धुद्धरणं चास्यान्नप्राणयोरवरोधकत्वात् । अतश्चोदभार्षीन्मामिति 'यदब्रवीत्' 'तस्माद्' ऊर्क् 'उदुम्भरोऽभूत्' । अत एवमुक्तत्वादयम् 'उदुम्भरः' तमेव देवाः 'उदुम्बरः' इति 'परोक्षम् आचक्षते' । पारोक्ष्येणाभिधानं गौरवाय कल्प्यत इति देवानां परोक्षकामत्वम् । तथा मे 'उरु' अधिकम् 'अकरद्' 'अकार्षीदिति यदब्रवीत्' 'तस्मादुरूकरम्' देवा 'उलूखलम्' इति परोक्षमाचक्षते । उदुम्बरस्योर्गात्मकत्वादुलूखलस्य चौदुम्बरत्वादुरुकरणं पाप्मन उदभार्षीद् इत्युक्तं च सम्पद्यते । उदुम्बरोलूखलशब्दौ पृषोदरादित्वाद् भरतेः करोतेश्च व्युत्पादनीयौ । अकरदिति "कृमृदृरुहिभ्यश्छन्दसि" ( पा. सू. ३ । १ । ५९ ) इति च्लेरङादेशः । "ऋदृशोऽङि गुणः"—( पा. सू. ७ । ४ । १६ ) प्रकृतमुलूखलं शिरोरूपेण प्रशंसति—सैषेत्यादिना । 'शिरः' 'सर्वेषाम् प्राणानाम्' इन्द्रियाणां 'योनिः' खलु । मुखस्यापि शिरःप्रदेशत्वात् तत्रैव सर्वेन्द्रियाणामुत्पत्तिः । तथा सति 'उलूखलम्' इति 'यत्' सैषाऽपि सर्वेषाम् 'प्राणानां' 'योनिः' भवति ॥ २२ ॥

( स्तु ) तुत्प्रादेशमात्रं भवति । प्रादेशमात्रमिव हि शिरश्चतुःस्रक्ति भवति चतुःस्रक्तीव हि शिरो मुध्ये संगृहीतं भवति मध्ये संगृहीतमिव हि शिरः ॥ २३ ॥

( स्तं ) तं यत्र देवाः समस्कुर्व्वन् । (व्वंस्त) तुदस्मिन्नेतत्सर्व्वं मध्यतोऽदधुः प्राणमन्नमूर्जं तथैवास्मिन्नयमेतुद्दधाति रेतःसिचोर्व्वेलया पृष्ठ्यो वै रेतःसिचौ मुध्यमु पृष्ठ्यो मध्यत एवास्मिन्नेतत्सर्व्वं दधाति ॥ २४ ॥

व्विष्णोः कर्माणि पश्यतेति । व्वीर्यं वै कर्म व्विष्णोर्व्वीर्याणि पश्यतेत्येतद्यतो व्रतानि पस्पशऽइत्यन्नं वै व्रतं यतोऽन्नꣳ स्पाशयांचक्रऽइत्येतदिन्द्रस्य युज्यः सखेतीन्द्रस्य ह्येष युज्यः सखा द्विदेवत्ययोपदधाति द्वे ह्युलूखलमुसले सकृत्सादयति समानं तत्करोति समानꣳ ह्येतदन्नमेव सादयित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ २५ ॥

---

तत् प्रादेशमात्रं भवति । प्रादेशमात्रमिव हिं शिरः । चतुःस्रक्ति भवति । चतुःस्रक्तीव हि शिरः मध्ये सङ्गृहीतं भवति । मध्ये सङ्गृहीतमिव हि शिरः ॥ २३ ॥

तं यत्र देवाः समस्कुर्वन्—तदस्मिन्नेतत्सर्वं मध्यतोऽदधुः—प्राणमन्नमूर्जम् । तथैवास्मिन्नयमेतद्दधाति । रेतःसिचोर्वेलया । पृष्ठ्यो वै रेतःसिचौ, मध्यमु पृष्ठ्यः । मध्यत एवास्मिन्नेतत्सर्वं दधाति ॥ २४ ॥

" विष्णोः कर्माणि पश्यत "—इति । वीर्यं वै कर्म, विष्णोर्वीर्याणि पश्यतेत्येतत् । " यतो व्रतानि पस्पशे "—इति । अन्नं वै व्रतम् । यतोऽन्नं स्पाशयांचक्रऽइत्येतत् । " इन्द्रस्य युज्यः सखा "—( वा. सं. १३ । ३३ )—इति । इन्द्रस्य ह्येष युज्यः सखा । द्विदेवत्ययोपदधाति । द्वे ह्युलूखलमुसले । सकृत्सादयति । समानं तत्करोति । समानं ह्येतत्—अन्नमेव । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ २५ ॥

---

उलूखलस्य शिरःसाधर्म्यसम्पादनादेतदुपपद्यत इत्येतत्प्रदर्श्यते—तदिति । ' तद् ' उलूखलम् ' प्रादेशमात्रम् ' ' चतुःस्रक्ति ' ' मध्ये ' च संगृहीतं ' भवति ' । ' शिरोऽपि तथैवेति सर्वप्राणियोनित्वमुलूखलस्योपपद्यत इत्यर्थः ॥ २३ ॥

उपसंहरति—तं यत्र देवा इति । ' यत्र ' यदा ' देवाः ' ' तम् ' प्रजापतिं संस्कृतवन्तः । ' तद् ' एतस्मिन् ' प्राणमन्नमूर्जम् ' इति ' एतत् सर्वम् ' मध्यप्रदेशे निहितवन्तः । तस्मात् ' तथैव ' ' अयं ' यजमानोऽपि अनेनोपधानेनैतत् सर्वं सम्पादयति । ' रेतःसिचोः ' पृष्टिरूपेण मध्यत्वात् तत्समीपदेश उपधाने देवा यथा ' मध्यतोऽदधुः ' तथैवास्मिन् ' मध्यत एव ' ' सर्वम् ' निदधाति ॥ २४ ॥

विहिते उलूखलमुसलयोरुपधाने मन्त्रं विदधानो व्याचष्टे—विष्णोः कर्माणि इति । ' कर्म '—

(२) अथोखामुपदधाति । योनिर्वाऽउखा योनिमेवैतदुपदधाति तामुलूखलऽउपदधात्यन्तरिक्षं वाऽउलूखलं यद्वै किं चास्याऽ ऊर्ध्वमन्तरिक्षमेव तन्मध्यं वाऽअन्तरिक्षं मध्यतस्तद्योनिं दधाति तस्मात्सर्वेषां भूतानां मध्यतो योनिरपि वनस्पतीनाम् ॥ २६ ॥

यद्वेवोखामुपदधाति । यो वै स प्रजापतिर्व्यस्रꣳसतैषा सोखेमे वै

---

## अथ उखेष्टकोपधानम् ।

अथोखामुपदधाति । योनिर्वाऽउखा । योनिमेवैतदुपदधाति । तामुलूखलऽउपदधाति । अन्तरिक्षं वाऽउलूखलम् । यद्वै किञ्चास्या ऊर्ध्वम्—अन्तरिक्षमेव तत् । मध्यं वाऽअन्तरिक्षम् । मध्यतस्तद्योनिं दधाति । तस्मात्सर्वेषां भूतानां मध्यतो योनिः—अपि वनस्पतीनाम् ॥ २६ ॥

यद्वेवोखामुपदधाति । यो वै स प्रजापतिर्व्यस्रंसत—एषा सोखा । इमे वै लोका उखा । इमे

---

शब्देन वीर्यं विवक्ष्यते, अतश्च हे जनाः ! 'विष्णोः' यज्ञस्य 'वीर्याणि' 'पश्यतेत्येतद्' उक्तं भवति । यत इति । 'यतो' वीर्यतः व्रतशब्देनान्नमुच्यते, अन्नानि 'पस्पशे' 'स्पाशयाञ्चक्रे' स्पर्शयमानश्च स्वजनैर्लम्भयामासेत्यर्थः । "स्पश बाधनस्पर्शनयोः"—( धा. पा. भ्वा. प. ९१२ ) इति धातुः । इन्द्रस्येति । 'एषः' यज्ञः 'इन्द्रस्य' 'युज्यो' योग्यः 'सखा' हि, तस्य तृप्तिहेतुत्वात् । अतः 'इन्द्रस्य युज्यः सखा' इत्युक्तमित्यर्थः । उलूखलमुसलयोर्द्वित्वात्तदुपधानमन्त्रस्य द्विदेवत्यत्वमुपपन्नमिति दर्शयति—द्विदेवत्ययेति । उलूखलमुसलयोः सादनं पृथगेव कर्त्तव्यमित्यत आह—सकृदिति । यत् एतदुलूखलं मुसलं चान्नरूपेण समानमेव, अतः सादनमपि सकृदेव कर्त्तव्यमिति । अनेनैव लिङ्गेनोपधानमन्त्रस्यावृत्तिर्ज्ञाप्यते । यदि युगपदुपधानं स्यात्, सकृत्सादनं नोच्येतेति । उत्तरवाक्यं व्याख्यातम् ।

अत्र कात्यायनः—"उलूखलमुसले स्वयमातृण्णामुत्तरेणारत्निमात्र औदुम्बरे प्रादेशमात्रे चतुरस्रमुलूखलं मध्यसङ्गृहीतमूर्ध्वं वृत्तं मुसलं दक्षिणमुलूखलाद्विष्णोः कर्माणीति"—( का. श्रौ. सू. १७ । १०२ ) इति ॥ २५ ॥

उलूखलमुसलोपधानानन्तरमुखाया उपधानं विधत्ते—अथेति—( का. श्रौ. सू. १७ । १०३ ) । इष्टकाचितिषु निधास्यमानस्याग्नेरुखायां कृत्वोत्पादनादुखायाः योनित्वेन तदुपधाने योनेरेवोपधानं भवतीत्याह—योनिर्वा इति । विहितमुपधानमुलूखले कर्तव्यमित्याह—तामिति । तत्रोपधानं प्रशंसति—अन्तरिक्षं वा इति । 'यत् किम्' अपि वस्त्वस्याः पृथिव्याः 'ऊर्ध्वम्' उपर्यवस्थितम् तत्सर्वं 'अन्तरिक्षम्' 'एव' । अन्तरिक्षं च द्यावापृथिव्योरन्तरालेऽवस्थानात् 'मध्यम्' हि, ततश्चोलूखलस्यापि पृथिव्या उपर्यवस्थानेन मध्यभूतान्तरिक्षात्मकत्वात्तत्रोपधाने मध्यभागे एव योनेरुपधानं भवति । मध्यत इति । "सार्वविभक्तिकस्तसिः"—इति सप्तम्यर्थे तसिः । दृष्टानुसारेणोक्तमर्थं प्रमाणयति—तस्मादिति । 'वनस्पतीनामपि' बीजानां मध्यभागमिच्चोत्पन्नत्वान् 'मध्यतो योनिः' इत्यर्थः ॥ २६ ॥

अथोखायाः प्राजापत्यात्मकत्वेनोलूखल उपधानं प्रशंसति—यद्वेवोखामिति । 'सः' इति प्रजासर्जनेना-

लोका ऽउखेमे लोकाः प्रजापतिस्तामुलूखलऽउपदधाति तदेनमेतस्मिन्त्सर्वस्मिन्प्रतिष्ठापयति प्राणेऽन्नऽऊर्ज्यथोऽएतस्मादेवैनमेतत्सर्वस्मादनन्तर्हितं दधाति ॥ २७ ॥

( त्यु ) अथोपशयां पिष्ट्वा । लोकभाजमुखां कृत्वा पुरस्तादुखाया ऽउपनिवपत्येष हैतस्यै लोकस्तथो हास्यैषाऽनन्तरिता भवति ॥ २८ ॥

तदाहुः । कथमस्यैषा पक्वा शृतोपहिता भवतीति यदेव यजुष्कृता तेनाथो यद्वै किं चैतमग्निं वैश्वानरमुपनिगच्छति तत ऽएव तत्पक्वꣳ शृतमुपहितं भवति ॥ २९ ॥

---

लोकाः प्रजापतिः । तामुलूखलऽउपदधाति । तदेनमेतस्मिन्त्सर्वस्मिन्प्रतिष्ठापयति–प्राणेऽन्नऽऊर्जि । अथोऽएतस्मादेवैनमेतत्सर्वस्मादनन्तर्हितं दधाति ॥ २७ ॥

अथोपशयां पिष्ट्वा लोकभाजमुखां कृत्वा पुरस्तादुखाया उपनिवपति । एष हैतस्यै लोकः । तथो हास्यैषाऽनन्तरिता भवति ॥ २८ ॥

तदाहुः–कथमस्यैषा पक्वा शृतोपहिता भवतीति । यदेव यजुष्कृता, तेन । अथो यद्वै किं चैतमग्निं वैश्वानरमुपनिगच्छति–तत एव तत्–पक्वं शृतमुपहितं भवति ॥ २९ ॥

---

वयवविश्लेषदशापन्नः परामृश्यते । ' सः ' यः ' प्रजापतिर्व्यस्रंसत ' विस्रस्तावयवोऽभूत्, ' सा उखा ' । सेति स्त्रीलिङ्गमुखापेक्षया । अत एव प्रजापतेरेतल्लोकत्रयात्मकत्वादुखाऽपि ' इमे ' पृथिव्यादयो ' लोकाः ' । तथा सति प्राजापत्यात्मिकाया उखाया उलूखल उपधानेन विस्रस्ताङ्गं प्रजापतिम् ' एतस्मिन् ' ' सर्वस्मिन् ' ' प्रतिष्ठापयति ' । तदेव प्रदर्श्यते–प्राणेऽन्न ऊर्जीति । उलूखलस्यौदुम्बरत्वेन तस्य चान्नरसात्मकत्वादन्नरसेन च प्राणानां धारणात् प्राणात्मकत्वमनुसन्धेयम् । प्राणान्नोर्जां परस्परं ग्रहणमुक्तम् । न केवलं प्रतिष्ठापनमात्रम् । अपि त्वव्यवधानेन तत्सम्बद्धमेव कुर्यादित्याह–अथो इति ॥ २७ ॥

उपशया नामोखाभेदे सति तत्प्रतिसंधानार्थं प्रागवशेषिता मन्त्रसंस्कृता मृत्, तां चूर्णीकृत्योखायाः पुरोभागे निदध्यादित्याह–अथेति । ' उखां ' ' लोकभाजं ' स्थानभाजमुलूखलमाजिनीं ' कृत्वा ' इत्यर्थः । उखाभेदप्रतिसन्धानार्थत्वादुपशयायास्तत्पुरोभागेऽवकाशः । अतस्तत्रोपनिवापेन स्वावकाशस्याव्यवहिता भवतीत्याह–एष हैतस्या इति ॥ २८ ॥

इष्टकोपधानप्रदेशे पक्वानामेवोपधानादुपशयायाश्चापकत्वात् कथमत्रोपधानं युज्यत इति याज्ञिकानां जिज्ञासामवतारयति–तदाहुरिति । अस्येति । उपधानप्रदेशावकाशस्येत्यर्थः । शृतेति पाकविशेषाभिधानात् ' पक्वा ' ' शृता ' इति न पुनरुक्तिः । अथवा पाकेन शृता सतीत्यर्थः । एतस्योत्तरं द्वेधा दर्शयति–यदेवेत्यादिना । एषोपशया नाम ' यजुष्कृता ' इति ' यत्, ' 'तेन' असौ पक्वा शृता च भवति । मन्त्रेणाहृतैव मृदुपशया क्रियते, अतश्चास्या मन्त्रेण निष्पादनादेव पाकसम्पत्तिरित्यर्थः । किञ्च ' यत् ' किञ्चिदपि वस्तु

ध्रुवाऽसि धरुणेति । तस्योक्तो बन्धुरितो जज्ञे प्रथममेभ्यो योनिभ्योऽअधि जातवेदाऽइत्येतेभ्यो हि योनिभ्यः प्रथमं जातवेदाऽअजायत स गायत्र्या त्रिष्टुभाऽनुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन्नित्येतैर्वाऽएष छन्दोभिर्देवेभ्यो हव्यं वहति प्रजानन् ॥ ३० ॥

( त्रि ) इषे राये रमस्व । सहसे द्युम्नऽ ऊर्जेऽ अपत्यायेत्येतस्मै सर्व्वस्मै रमस्वेत्येतत्सम्राडसि स्वराडसीति सम्राट् च ह्येषु स्वराट् च सारस्वतौ त्वोत्सौ प्रावतामिति मनो वै सरस्वान्वाक्सरस्वत्येतौ सारस्वताऽ उत्सौ तौ त्वा प्रावतामित्येतद्द्वाभ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयं ह्येवैतद्रूपं मृच्चापश्च सादयित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ ३१॥

---

"ध्रुवाऽसि धरुणा"–इति । तस्योक्तो बन्धुः । "इतो जज्ञे प्रथममेभ्यो योनिभ्योऽअधि जातवेदाः"–इति । एतेभ्यो हि योनिभ्यः प्रथमं जातवेदा अजायत । "स गायत्र्या त्रिष्टुभाऽनुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन्"–( वा० सं० १३।३४ ) इति । एतैर्वाऽएष छन्दोभिर्देवेभ्यो हव्यं वहति प्रजानन् ॥ ३० ॥

" इषे राये रमस्व सहसे द्युम्नऽऊर्जेऽअपत्याय "–इति । एतस्मै सर्वस्मै रमस्वेत्येतत् । " सम्राडसि स्वराडसि "–इति । सम्राट् च ह्येष स्वराट् च । " सारस्वतौ त्वोत्सौ प्रावताम् "–( वा० सं० १३।३५ ) इति । मनो वै सरस्वान् । वाक्सरस्वती । एतौ सारस्वताऽउत्सौ । तौ त्वा प्रावतामित्येतत् । द्वाभ्यामुपदधाति । तस्योक्तो बन्धुः । अथो द्वयं ह्येवैतद्रूपम्–मृच्चापश्च । सादयित्वा सूददोहसाऽधिवदति । तस्योक्तो बन्धुः ॥ ३१ ॥

---

'एतं' 'वैश्वानरमग्निम्' इष्टकोपधानस्थलात्मकं प्राप्नोति, 'तत्' सर्वं 'ततः' 'एव' तत्प्राप्तेरेव 'पक्वं' 'श्रृतं' सदेव 'उपहितं भवति' ॥ २९ ॥

उखोपधाने " ध्रुवाऽसि " इति "इषे राये" इति च द्वौ मन्त्रौ विदधानो व्याचष्टे–ध्रुवाऽसीत्यादिना । 'ध्रुवाऽसि धरुणा' इत्यस्य व्याख्यानं " ध्रुवाऽसीति स्थिराऽसि "–( श. प. ७ । ४।२।५ ) इत्यादिना प्रागुक्तम् । एतेभ्य इति । प्रथमतो यदुखाया जनयित्वा पश्चाद् 'एतेभ्यो' 'योनिभ्यो' लोकेभ्यो 'जातवेदा अजायत', अतश्चामुमर्थम् 'इतः' इत्यादिमन्त्रभागो ब्रूत इत्यर्थः । 'एतैः' गायत्र्यादिभिः 'छन्दोभिः' सह 'एषः' अग्निः स्वाधिकारं 'प्रजानन्' 'हव्यम्' 'वहति' खलु । छन्दसां हविर्वहनं तैत्तिरीयके श्रूयते–" छन्दांसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति "–इति ( तै. सं ५ । १ । १ ) ॥३०॥

"इषे राये" इत्यादिना 'इट्प्रभृतिभ्यः सर्वेभ्यो' रमस्व ' इत्येतदुक्तं भवतीति व्याचष्टे–एतस्मा इति । यत इयमुखा सम्यग्राजते स्वयमेव राजते च, अतः 'सम्राडसि' 'स्वराडसि' इति मन्त्रभागो ब्रूते इति व्याचष्टे–सम्राड्

( उ ) अथैनामभिजुहोति । ( त्ये ) एतद्वाऽ अस्यामेतत्पूर्वꣳ रेतः सिक्तं भवति सिकतास्तदेतदभिकरोति तस्माद्योनौ रेतः सिक्तमभिक्रियतऽआज्येन जुहोति स्रुवेण स्वाहाकारेण द्वाभ्यामाग्नेयीभ्यां गायत्रीभ्यां तस्योक्तो बन्धुः ॥ ३२ ॥

---

उखोपरि होमः ।

अथैनामभिजुहोति । एतद्वाऽअस्यामेतत्पूर्वं रेतः सिक्तं भवति–सिकताः । तदेतदभिकरोति । तस्माद्योनौ रेतः सिक्तमभिक्रियते । आज्येन जुहोति स्रुवेण स्वाहाकारेण द्वाभ्यामाग्नेयीभ्यां गायत्रीभ्याम् । तस्योक्तो बन्धुः ॥ ३२ ॥

---

च हीति । सारस्वताविति । 'सरस्वान् मनः' उच्यते, 'सरस्वती' च 'वाक्' । 'एतौ सारस्वतौ' इति । स्वार्थिकोऽण् प्रत्ययः । 'उत्सौ' वारिप्रवाहौ वाङ्मनसात्मकौ । मनसस्तावत् सर्वशास्त्रार्थपरिज्ञानरसाधारत्वाद् वाचश्च तत्प्रतिपादनरसाधारत्वादुत्सत्वमनयोः । 'तौ' 'त्वा' 'प्रावताम्' पालयतामभिज्ञानवदनव्यापाराभ्यामित्यर्थः । हे उखे ! त्वं 'ध्रुवाऽसि' स्थिराऽसि 'धरुणा' धारिणी चासि । 'जातवेदाः' 'इतः' त्वत्तः सकाशात् 'प्रथमम्' 'अधिजज्ञे' पश्चाद् 'एभ्यो' लोकेभ्योऽधिजातः 'सः' तथाविधो 'जातवेदाः' गायत्र्यादिभिश्छन्दोभिः सह स्वाधिकारं 'प्रजानन्' 'देवेभ्यो' 'हव्यं' हविः 'वहतु' धारयतु । किंच त्वम् 'इषे' अन्नाय 'राये' धनाय 'सहसे' बलाय 'द्युम्ने' द्युम्नं यशः तस्मै 'ऊर्जे' पयोदध्याद्युपसेचनाय 'अपत्याय' पुत्रार्थं च 'रमस्व' तत्सर्वं सम्पादयितुमभिरतिं कुरु । त्वं सम्यग्राजमानाऽसि । स्वेनैव राजमानाऽसि । त्वां च वाङ्मनसरूपौ 'उत्सौ' प्रकर्षेण पालयतामिति मन्त्रद्वयस्यार्थः । अत्र कात्यायनः–" उलूखल उखां कृत्वोपशयां पिंष्ट्वा न्युप्य पुरस्ताद् ध्रुवाऽसीत्युखाम् "–( का. श्रौ. सू. १७ । १०३ ) । अत्र " अथोपशयां पिष्ट्वा " इत्यादिश्रुतिक्रमेणानुष्ठानमुपशयोपनिवापोत्तरकालं च मन्त्रवचनम् । उपधानमन्त्रयोर्द्वित्वसंख्याया व्याख्यानं प्रागुक्तमित्याह–द्वाभ्यामिति । अद्भिरेव सिक्तया मृदा कृतत्वादुखायां मृच्चापश्चेति द्विविधं रूपमस्ति, अतश्च तदुपधानमन्त्रयोर्द्वित्वमुपपद्यत इत्याह–अथो इति । उत्तरवाक्यं तु व्याख्यातम् ॥ ३१ ॥

उपधानानन्तरमुखाया उपरि होमं विधत्ते–अथेति । अभिहोमस्योपयोगमाह–एतद्वा इति । भिन्नं वाक्यमेतत् । एतत् खलु समभूत् । तदेवाह–अस्यामेतत्पूर्वं रेतः सिक्तं भवति सिकता इति । 'पूर्वम्' 'अस्याम्' उखायाम् 'एतद्रेतः सिक्तं भवति' 'सिकतास्तदेतद्' इति निर्दिष्टप्रदर्शनम् । अग्न्युद्वापसमनन्तरमेव ह्युखायाः सिकताभिः पूरितत्वात् । तद् रेतः एतेनाभिहोमेन 'अभिकरोति' अभिवर्द्धयति । यत एवम्, 'तस्माद्' इदानीं 'योनौ' 'सिक्तं रेतः' 'अभिक्रियते' अवयवविरूपेण क्रियत इत्यर्थः । विहितोऽभिहोमः 'आज्येन' 'स्रुवेण' 'स्वाहाकारेण' 'द्वाभ्याम्' 'आग्नेयीभ्याम्' 'गायत्रीभ्याम्' कर्त्तव्य इत्याह–आज्येनेत्यादिना । आज्यस्रुवाद्यर्थवादस्तु प्रागुक्तः (श. प. ६।३।३।१८–२१) इत्याह–तस्योक्तो बन्धुरिति ॥३२॥

---

१–अग्ने युक्ष्वा हीति प्रत्यृचं स्रुवाहुती जुहोति । का. श्रौ. सू. १७ । १०४ ।

( रु ) अ॒ग्ने यु॒क्ष्वा हि ये तव॑ । यु॒क्ष्वा हि दे॑वहू॒तमा॒निति॒ युक्त॑वतीभ्या॒मि॒दमे॒वैत॒द्योनौ॒ रेतो॑ युनक्ति॒ तस्मा॒द्योनौ॒ रेतो॑ यु॒क्तं न नि॒ष्पद्य॑ते ॥ ३३ ॥

स य॒दि सं॑व्वत्सर॒भृतः॑ स्यात् । ( दु ) अ॒था॒भि॒जु॒हु॒या॒त्स॒र्व्वं॒ वै तद्य॒त्सं॒व्व॒त्स॒र॒भृतः॒ सर्व्वं॒ तद्य॒द॒भि॒जु॒हो॒त्यथ॒ य॒द्यसं॑व्वत्सर॒भृतः॑ स्यादु॒पैव॒ ति॒ष्ठे॒त॒ । सर्व्वं॒ वै तद्य॒दसं॑व्वत्सर॒भृ॒तोऽसर्व्वं॒ तद्य॒दु॒प॒ति॒ष्ठ॒तेऽभि॒ त्वे॒व जु॒हु॒या॒त् ॥ ३४ ॥

---

"अग्ने युक्ष्वा हि ये तव, युक्ष्वा हि देवहूतमान्"–( वा. सं. १३।३६–३७ ) इति युक्तवतीभ्याम् । इदमेवैतद्योनौ रेतो युनक्ति । तस्माद्योनौ रेतो युक्तं न निष्पद्यते ॥ ३३ ॥

स यदि संवत्सरभृतः स्यात्–अथाभिजुहुयात् । सर्वं वै तद्–यत्संवत्सरभृतः । सर्वं तद्–यदभिजुहोति । अथ यद्यसंवत्सरभृतः स्याद्–उपैव तिष्ठेत । असर्वं वै तद्–यदसंवत्सरभृतः । असर्वं तद्–यदुपतिष्ठते । अभि त्वेव जुहुयात् ॥ ३४ ॥

---

द्वाभ्यामित्यादिना उक्ते ऋचौ प्रदर्शयन् तयोर्युजिधातुसम्बन्धं प्रशंसति–अग्ने युक्ष्वा हीति । 'युक्तवतीभ्याम्' युजिधातुमतीभ्यामित्यर्थः । 'एतद्' एतेनोपधानमन्त्रयोर्युजिधातुसम्बन्धेन 'योनौ' सिक्तं 'रेतो' 'युनक्ति' नियच्छति, 'तस्माद्' इदानीं' योनौ सिक्तं रेतः' अपत्योत्पादनार्हं 'युक्तं' सत् 'न निष्पद्यते' न निष्पतति, तत्रैवावतिष्ठत इत्यर्थः । मन्त्रयोरर्थस्तु–हे अग्ने देव ! देवनादिगुणविशिष्ट! 'तव ये अश्वासः' अश्वाः 'साधवः' जातिगुणसमन्विताः सन्ति । 'अश्वासः' इति 'आज्जसेरसुक्' ( पा. सू. ७।१।५० ) । तान् 'युक्ष्वा हि' युङ्क्ष्व "बहुलं छन्दसि "( पा सू. २।४।७६ ) इति विकरणस्य लुक् । " द्व्यचोऽतस्तिङः " ( पा. सू. ६।३।१३५ ) इति दीर्घः । एवं च सति ते अश्वाः 'मन्यवे' यज्ञार्थम् 'अरम्' अलं त्वां 'वहन्ति' वक्ष्यन्ति वर्तमानसामीप्ये भविष्यदर्थे लट् ( पा. सू. ३।३।१३१ ) हे अग्ने ! देवहूतमान् देवाना-ह्वयन्तीति देवह्वः, क्विबन्तस्य संप्रसारणे कृते रूपम् । अतिशयेन देवह्वो देवहूतमास्तान् अश्वान् 'नियुक्ष्व' क इव 'रथीरिव' रथिक इव, इकारो मत्वर्थीयः । हि यस्माद् एवम्, अतः 'सदः' सदसि, विभक्तिव्यत्ययः ( पा. सू. ३।१।८५ ) इति । 'पूर्व्यः' अग्र्यः 'होता' सन्निषीदेति शेषः ॥ ३३ ॥

उखायामग्नेः संवत्सरभरणमसंवत्सरभरणं वेति पक्षद्वयमस्ति तत्र प्रथमेऽभिहोम इत्याह–स यदीति । 'सः' अग्निः 'यदि' उखायां 'संवत्सरभृतः स्यात्' 'अथ' एतस्याम् 'अभिजुहुयात्' संवत्सरस्य सर्वावच्छेदकत्वात् 'संवत्सरभृतः' अपि सर्वात्मकः । अभिहोमश्च सर्वस्तेन कृत्स्नतायाः सम्पादनात् । अतः संवत्सरभरणपक्षेऽभिहोमो युज्यत इति । असंवत्सरभरणपक्षे किं कर्त्तव्यमिति, तत्राह–स यदीति । असंवत्सरभृतस्य पूर्वोक्तविपर्ययेणासर्वात्मकत्वादुपस्थानस्य चाहोमात्मकत्वेनानुकल्पत्वमित्यसर्वात्मकत्वात्तस्मिन् पक्षे तदेतदेव युक्तमित्याह–असर्वं वा इति । अस्मिन् पक्षेऽभिहोमं विकल्पेनाह–अभि त्वेव जुहुयादिति । 'एव' कारोऽत्र विकल्पद्योतकः । " उपस्थानं वाऽसंवत्सरभृतिनः "–इति हि कात्यायनसूत्रम् ( का. श्रौ,

(त्प) पशुरेष यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतस्तस्यावाङ्‌ प्राणः स्वयमातृण्णा श्रोणी द्वियजुः पृष्ट्यो रेतःसिचौ कीकसा विश्वज्योतिः ककुदमृतव्ये ग्रीवा ऽअषाढा शिरः कूर्मो ये कूर्मे प्राणा ये शीर्षन्प्राणास्ते ते ३५

तं वाऽएतम् । (मि) इत ऽऊर्ध्वं प्राञ्चं चिनोत्यसौ वाऽआदित्य ऽएषोऽग्निरमुं तदादित्यमित ऽऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्य ऽइत ऽऊर्ध्वः प्राङ्धीयते ॥ ३६ ॥

---

पशुरेष यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतः । तस्यावाङ् प्राणः स्वयमातृण्णा । श्रोणी द्वियजुः । पृष्ट्यो रेतःसिचौ । कीकसा विश्वज्योतिः । ककुदमृतव्ये । ग्रीवा अषाढा । शिरः कूर्मः । ये कूर्मे प्राणाः—ये शीर्षन्प्राणास्ते ते ॥ ३५ ॥

तं वाऽएतमित ऊर्ध्वं प्राञ्चं चिनोति । असौ वाऽआदित्य एषोऽग्निः । अमुं तदादित्यमित ऊर्ध्वं प्राञ्चं दधाति । तस्मादसावादित्य इत ऊर्ध्वः प्राङ् धीयते ॥ ३६ ॥

---

सू. १७ । १०९ ) संवत्सरभृतिनो होमो न तूपस्थानम् । इतरस्य तु विकल्पः, उपस्थानं होमो वेति सिद्धोऽर्थः ॥ ३४ ॥

अथ चित्याग्नेः स्वयमातृण्णादिषु त्रयोदशस्विष्टकासु कृत्स्नपश्वाकारत्वं सम्पादयितुम् " एतान् पञ्च पशून् प्राविशत्, स एते पञ्च पशवोऽभवत् "–( श. प. । ६ । २ । १ । ३ ) इत्युक्तमग्नेः पश्वात्मकत्वम् । स पश्वाकारोऽग्निरत्रैवोखान्ते स्वयमातृण्णादाविष्टकाकलापे सर्वः कृत्स्नः संस्कृतः कथमित्यपेक्षायां तमिष्टकाकलापमङ्गत्वेन सम्पादयति—तस्यावाङ्प्राण इत्यादिना । ' स्वयमातृण्णा ' इष्टका ' तस्य ' पश्वाकारस्याग्नेः ' अवाङ्प्राणः ' अपानाख्यः, पश्चाद्भागस्थितिसामान्यात् । ' द्वियजुः ' इष्टका 'श्रोणी' कटी, तदानन्तर्यात् । ' रेतःसिचौ ' इष्टके पृष्ट्यः महान्ति पार्श्वास्थीनि । ' विश्वज्योतिः ' इष्टका ' कीकसाः ' ह्रस्वपार्श्वास्थीनि । ' ऋतव्ये ' ' ककुदम् ' गलप्रदेशतः पश्चात्पृष्ठदेशेऽवस्थित उन्नतावयवः । ' अषाढा ' ' ग्रीवाः ' कन्धराः । ' कूर्मः ' ' शिरः ' । ' कूर्मे ये 'प्राणास्ते, ' शीर्षन् ' शीर्ष्णि ' ये ' 'प्राणास्ते' चक्षुरादय इत्यर्थः ॥३५॥

एवमग्नेः कृत्स्नरूपत्वं प्रतिपाद्यादित्यरूपत्वमूर्ध्वचयनेन प्रतिपादयति—तं वा एतमिति । ' तम् ' ' एतम् ' चित्यमग्निम् ' इतः ' अवाचः प्राणादारभ्य आशिरस ' ऊर्ध्वम् ' प्रागपवर्गं ' चिनोति ' । किमतः इत्येकेनांशेनादित्यतामाह—असौ वा आदित्य एषोऽग्निरिति । अमुं तदिति । ' इतो '—लोकाद् भूराख्याद् ' अमुम् ' ' आदित्यम् ' ' ऊद्ध्वम् ' ' प्राञ्चम् ' प्रागञ्चनं ' दधाति ' स्थापयति । ' तस्माद् ' एव यज्ञानुकरणात् ' असावादित्यः ' ' इतः ' पृथिवीलोकाद् ' ऊद्ध्वः ' ' प्राङ् धीयते ' धार्यते लोकैरिति शेषः ॥ ३६ ॥

( तु॒ऽथै ) अ॒थैनं प्रसलव्यावर्तयति । ( त्य ) अ॒मुं तु॒दादि॒त्यं प्रसलव्या-वर्त्तयति तु॒स्मादस॒वादि॒त्यऽइ॒मांल्लोका॒न्प्रसल॒व्यनुपर्यैति ॥ ३७ ॥

( त्यु ) उदरमुखा । यो॒निरुलूखलमुत्तरोखा भवत्युधरमुलूखलमुत्तरऽᳪ ह्युदरमधरा योनिः शिश्नं मुसलं तद्वृत्तमिव भवति वृत्तमिव हि शिश्नं तद्दक्षिणतऽउपदधाति दक्षिणतो वै वृषा योषामुपशेते यद्दु पशोः संस्कृतस्यान्नं तद्दूर्वेष्टका तस्य वाऽएतस्योत्तरोऽर्धऽउदाहिततरो भवति पशुरेष यदग्निस्तुस्मात्पशोः सुहितस्योत्तरः कुक्षिरुन्नततरो भवति ॥ ३८ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ७-४-१ ॥ ( ५. १ ) ॥

---

अथैनं प्रसलव्यावर्तयति । असुं तदादित्यं प्रसलव्यावर्तयति । तस्मादसावादित्य इमांल्लोकान्प्र-सलव्यनुपर्यैति ॥ ३७ ॥

उदरमुखा । योनिरुलूखलम् । उत्तरोखा भवति—अधरमुलूखलम् । उत्तरं ह्युदरम्—अधरा योनिः शिश्नं मुसलम् । तद्वृत्तमिव भवति; वृत्तमिव हि शिश्नम् । तद् दक्षिणत उपदधाति । दक्षिणतो वै वृषा योषामुपशेते । यद्धु पशोः संस्कृतस्यान्नम्—तद्दूर्वेष्टका । तस्य वाऽएतस्योत्तरोऽर्ध उदाहिततरो भवति । पशुरेषः—यदग्निः । तस्मात्पशोः सुहितस्योत्तरः कुक्षिरुन्नततरो भवति ॥ ३८ ॥

---

अथ प्रदक्षिणावर्त्तनं विधत्ते—अथैनमिति । 'अथ' अनन्तरम् 'एनम्' आदित्यभूतं स्वयमातृण्णाद्या-त्मकमग्निं 'प्रसलवि' प्रदक्षिणम् 'आवर्त्तयति' आवर्त्तते । अषाढां पूर्वार्द्धे उपधाय तस्या दक्षिणतः कूर्म-मुपदधाति, ततः स्वयमातृण्णाया उत्तरत उलूखलमुसले, तत्रैवोखामुपदधातीत्येवमावर्त्तयति । 'तत्' तेन प्रदक्षिणावर्तनेन 'अमुमादित्यम्' प्रदक्षिणमावर्त्तयति, 'तस्माद्' यज्ञानुकरणाद् 'असावादित्य इमान् लोकान्' तथैव संचरति ॥ ३७ ॥

प्रकारान्तरेण उलूखलमुसलयोरौत्तराधर्यं प्रशंसति—उदरमुखेति । उखायाः सकाशादग्नेरुत्पत्तेः 'उखा' 'उदरम्' 'उलूखलं' तु हविर्निष्पादनाद् 'योनिः' । तथा च लोके उदरयोन्योरौत्तराधर्यादनयोरपि तदात्मकयोरौत्तराधर्यमुपपन्नमित्यर्थः । मुसलस्योलूखलदक्षिणभाग उपधानं सोपपत्तिकमाह—शिश्नमिति । शिश्नस्य वृत्ताकारतया तदाकारत्वेन 'मुसलम्' अपि 'शिश्नम्' । तथाविधं 'तद्' उलूखलस्य दक्षिणभाग उपदध्यात् । लोके दक्षिणभागे 'वृषा' वर्षणसमर्थः पुरुषो 'योषामुपशेते' । अतश्चास्यापि वर्षणसमर्थत्वेन वृषत्वादुलूखलस्य योनित्वेन स्त्रीत्वाद्दक्षिणभागेऽस्योपधानमुपपन्नम् । उक्तमेवाग्नेः पशुरूपत्वं प्रकारान्तरेण द्रढ-यति—यद्दु पशोरिति । 'अग्निः' इति यदेष पशुः खलु, तथैव प्रागुक्तत्वात् । अतश्च 'पशोः' अग्नि-रूपस्य 'संस्कृतस्य' पश्ववयवसम्पादनाय निष्पादितस्य 'यद्' 'अन्नम्' 'तद्दूर्वेष्टका' । तस्मात् 'तस्य' दूर्वेष्टकारूपेणान्नेन 'सुहितस्य' 'एतस्य' अग्निरूपस्य 'पशोः' उत्तरभागः 'उदाहिततरः' उन्नततरो

पशुशीर्षाण्युपदधाति । पशवो वै पशुशीर्षाणि पशूनेवैतदुपदधाति तान्युखायामुपदधातीमे वै लोकाऽ उखा पशवः पशुशीर्षाण्येषु तल्लो-केषु पशून्दधाति तस्मादिमऽएषु लोकेषु पशवः ॥ १ ॥

( वो ) यद्वेवोखायाम् । योनिर्वाऽ उखा पशवः पशुशीर्षाणि योनौ तत्पशून्प्रतिष्ठापयति तस्मादद्यमानाः पच्यमानाः पशवो न क्षीयन्ते योनौ ह्येनान्प्रतिष्ठापयति ॥ २ ॥

---

अथ पञ्चपशुशीर्षेष्टकोपधानम्।

पशुशीर्षाण्युपदधाति । पशवो वै पशुशीर्षाणि । पशूनेवैतदुपदधाति । तान्युखायामुपदधाति । इमे वै लोका उखा। पशवः पशुशीर्षाणि । एषु तल्लोकेषु पशून्दधाति । तस्मादिमऽएषु लोकेषु पशवः ॥ १ ॥

यद्वेवोखायाम् । योनिर्वाऽउखा, पशवः पशुशीर्षाणि । योनौ तत् पशून्प्रतिष्ठापयति । तस्मादद्य-मानाः पच्यमानाः पशवो न क्षीयन्ते । योनौ ह्येनान्प्रतिष्ठापयति ॥ २ ॥

---

'भवति' । उत्तरभाग एवोलूखलमुसलाद्युपधानात् । उक्तमर्थं प्रमाणयति—तस्मादिति । यतोऽग्निरूपस्य 'पशोः' दूर्वेष्टकान्तत्वेन सुहिततरस्योत्तरभाग उन्नततरोऽभूत्, 'तस्माद्' इदानीमपि लोके तृणाभ्यव-हारेण तृप्तस्य 'पशोरुत्तरः कुक्षिरुन्नततरो भवति' ॥ ३८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ७—५—१ ) ॥

अथ पशुशीर्षाणामुपधानं विधाय प्रशंसति—पशुशीर्षाणीति । पशुशीर्षाणां पश्ववयवत्वेन पशुत्वम् । अतश्च तदुपधाने पशूनामेवोपधानं भवतीत्यर्थः । तेषामुपधानस्य स्थानविशेषं विधत्ते—तानीति । "यो वै स प्रजापतिर्व्यस्रꣳसतैषा सोखेमे वै लोका उखेमे लोकाः प्रजापतिः"( श. प. ७।५।१।२७ ) इत्युखाया लोक-त्रयरूपत्वस्योक्तत्वात् तस्यामुपधाने लोकेषु 'पशून्' निहितवान् भवति तस्मादिमे 'पशवः' एतेषु 'लोकेषु' प्रत्यवतिष्ठन्ते ॥ १ ॥

प्रकारान्तरेणाप्युखायामुपधानं प्रशंसति—यद्वेवोखायामिति । उखायाः सकाशादग्न्युत्पत्तेः 'योनिः' 'उखा' अतस्तत्रोपधाने योनावेव 'पशून्' निदधाति । 'तस्मादद्यमानाः' उपभुज्यमानाः 'पच्यमानाः' जीर्यमाणा अपि 'पशवो न क्षीयन्ते' । उपभोगाद्वयःपरिपाकाच्च विनाशे सत्यपि योनौ प्रतिष्ठितत्वान्नोच्छि-द्यन्ते, किन्तु पुनरुत्पद्यन्त इत्यर्थः । 'पच्यमानाः—( पा. सू. ३ । १ । ६७ ) इति कर्मकर्त्तरि यक्—प्रत्ययः ॥ २ ॥

यद्देव पशुशीर्षाण्युपदधाति । या वै ताः श्रियऽएतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितयस्तद्यास्ताः पञ्च चितयऽइमे ते लोकास्तद्ये तऽइमे लोकाऽएषा सोखा तद्यदुखायां पशुशीर्षाण्युपदधात्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि संदधाति ॥ ३ ॥

तान्पुरस्तात्प्रतीचऽ उपदधाति । ( त्ये ) एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत तऽआलिप्स्यमानाऽउदचिक्रमिषंस्तान्प्राणेषु समगृह्णात्तान्प्राणेषु संगृह्य पुरस्तात्प्रतीचऽआत्मन्नधत्त ॥ ४ ॥

तद्वाऽएतत्क्रियते । यद्देवाऽअकुर्वन्निदं न्वस्मात्ते पशवो नोच्चिक्रमिषन्ति यत्त्वेतत्करोति यद्देवाऽअकुर्वंस्तत्करवाणीत्यथो प्राणेष्वेवैनानेतत्संगृह्य पुरस्तात्प्रतीचऽआत्मन्धत्ते ॥ ५ ॥

---

यद्देव पशुशीर्षाण्युपदधाति । या वै ताः श्रियः—एतानि तानि पशुशीर्षाणि । अथ यानि तानि कुसिन्धानि—एतास्ताः पञ्च चितयः। तद्यास्ताः पञ्च चितयः—इमे ते लोकाः । तद्ये त इमे लोकाः—एषा सोखा । तद्यदुखायां पशुशीर्षाण्युपदधाति—एतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥ ३ ॥

तान्पुरस्तात्प्रतीच उपदधाति । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत, तऽआलिप्स्यमाना उदचिक्रमिषन् । तान्प्राणेषु समगृह्णात् । तान्प्राणेषु सङ्गृह्य पुरस्तात्प्रतीच आत्मन्नधत्त ॥ ४ ॥

तद्वाऽएतत्क्रियते—यद्देवा अकुर्वन् । इदं न्वस्मात्ते पशवो नोच्चिक्रमिषन्ति । यत्त्वेतत्करोति—यद्देवा अकुर्वन्—तत्करवाणीति । अथो प्राणेष्वेवैनानेतत्सङ्गृह्य पुरस्तात्प्रतीच आत्मन्धत्ते ॥ ५ ॥

---

अथ तानि पशुशीर्षाणि श्रीरूपत्वेन प्रशंसति—यद्देवेति । 'याः' खलु प्रागुक्ताः 'श्रियः,' 'ताः' एव 'एतानि' 'पशुशीर्षाणि' । अतः एतेषामुपधाने श्रियामेवोपधानं भवति । उखायाः परम्परया कवन्धात्मकत्वम् । तत्रोपधाने कबन्धशिरसां सन्धानं भवतीति दर्शयति—अथ यानीति । 'तानि' इति अम्भःसम्भरणावसरपरामर्शः । 'यानि तानि' 'कुसिन्धानि' कबन्धानि 'तानि' 'एताः' अत्र सम्पाद्यमानाः 'पञ्चचितयः' चित्यात्मकत्वं तु कबन्धानां पञ्चत्वसङ्ख्यासामान्यात् अतस्तथाविधाः 'पञ्च' याः 'चितयः,' 'ताः' 'इमे' पृथिव्यादयः 'लोकाः' चितीनां प्रजापत्यवयवात्मकत्वाल्लोकानामपि तथाभावादिति । तथा च 'ये' एते 'इमे' 'लोकाः,' ते 'एषा' 'उखा;' तस्या लोकत्रयात्मकत्वस्य प्रागुक्तत्वात् । अतश्च उखायां पशुशीर्षाणामुपधाने तैः कबन्धानि संयोजयति । शीर्षभिरिति "शीर्षंश्छन्दसि"—( पा. सू. ६ । १ । ६० । ) इति शीर्षन्नादेशः ॥ ३ ॥

उखायामुपधानं पुरस्तादारभ्य प्रत्यगपवर्गं कर्त्तव्यमित्याह—तानिति । पशुशीर्षाणामपि पशुत्वात् 'तान्' इति पुँल्लिङ्गवचनम् । विहितप्रकारे उपधाने कारणं वक्तुं प्रतिजानीते—एतद्वा इति । तत्रैतत्कारणं खल्वित्यर्थः ।

यद्वेव पशुशीर्षाण्युपदधाति । प्रजापतिर्वाऽइदमग्रऽआसीदेक ऽएव सोऽकामयतान्नꣳ सृजेय प्रजायेयेति स प्राणेभ्य ऽएवाधि पशून्निरमिमीत मनसः पुरुषं चक्षुषोऽश्वं प्राणाद्गाꣳ श्रोत्रादविं वाचोऽजं तद्यदेनान्प्राणेभ्योऽधि निरमिमीत तस्मादाहुः प्राणाः पशव ऽइति मनो वै प्राणानां प्रथमं तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः प्रथमः पशूनां वीर्यवत्तम ऽइति मनो वै सर्वे प्राणा मनसि हि सर्वे प्राणाः प्रतिष्ठितास्तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः सर्वे पशव ऽइति पुरुषस्य ह्येवैते सर्वे भवन्ति ॥ ६ ॥

---

यद्वेव पशुशीर्षाण्युपदधाति । प्रजापतिर्वाऽइदमग्रऽआसीदेक एव । सोऽकामयत—अन्नं सृजेय, प्रजायेयेति । स प्राणेभ्य एवाधि पशून्निरमिमीत, मनसः पुरुषम्, चक्षुषोऽश्वम्, प्राणाद्गाम्, श्रोत्राद्विम्, वाचोऽजम् । तद्यदेनान्प्राणेभ्योऽधि निरमिमीत—तस्मादाहुः—प्राणाः पशव इति । मनो वै प्राणानां प्रथमम् । तद्यन्मनसः पुरुषं निरमितीत—तस्मादाहुः—पुरुषः प्रथमः पशूनां वीर्यवत्तम इति । मनो वै सर्वे प्राणाः । मनसि हि सर्वे प्राणाः प्रतिष्ठिताः । तद्यन्मनसः पुरुषं निरमिमीत—तस्मादाहुः—पुरुषः सर्वे पशव इति । पुरुषस्य ह्येवैते सर्वे भवन्ति ॥ ६ ॥

---

तदेव दर्शयति—यत्रैतानिति । ' यत्र ' यस्मिन् प्रस्तावे ' प्रजापतिः ' ' एतान् ' ' पशून् ' आलब्धुमैच्छत् । तत् ' आलिप्स्यमानाः ' ते पशवः ' उदचिक्रमिषन् ' उत्क्रमितुमैच्छन् ' तान् ' ' प्राणेषु ' शीर्षगतेषु[1] । सर्वप्राणाधारत्वाच्छिरसां प्राणत्वम् । प्राणा इतीन्द्रियाण्युच्यन्ते । तान् प्राणेषु ' सङ्गृह्य ' ' पुरस्तात् ' पूर्वस्माद् देशात् ' प्रतीचः ' प्रत्यङ्मुखानाकृष्य आत्मनि अधत्त, स्वाधीनीकृतवान् । पलायनेच्छूनां पशूनां शिरांसि गृहीत्वा स्वाभिमुखमाकृष्य वशीकृतवानित्यर्थः । तथा सति 'देवाः यदकुर्वन्, ' तदेवैतस्मिन्नपि काले क्रियते खलु । अतश्च यजमानो ' देवा यदकुर्वंस्तत्करवाणि ' इत्यभिप्रायेणैतदुक्तप्रकारमुपधानं करोतीति यत्, ' इदं नु ' अस्माद् एव निमित्तात् ' ते पशवः ' अस्माद्यजमानात् ' नोचिक्रमिषन्ति ' न केवलं तेषामुत्क्रमणेच्छाभावः, अपि तु 'एतान्' पशून् 'प्राणेषु' संगृह्य 'पुरस्तात्प्रतीचः' आकृष्य स्वस्मिन्निहितवान् भवति ॥ ४—५ ॥

उखायां पशुशीर्षाणामुपधाने प्रजापत्युदरेऽन्नं दधातीति दर्शयितुमाख्यायिकामवतारयति—यद्वेवेति । ' पशुशीर्षाण्युपदधाति ' इति यत्, तत्कारणमुच्यत इत्यर्थः । सृष्टेः पूर्वं ' प्रजापतिः ' ' एकः ' ' एवासीत् ' खलु, 'सः' प्रजापतिः ' अन्नम् ' ' सृजेय, ' प्रजारूपेण ' प्रजायेयेति ' ' अकामयत ' । प्रजायेयेति अन्नसृष्टयुपायप्रदर्शनम् । स एवं जातेच्छः प्रजापतिः ' प्राणेभ्य एव ' 'पशून्निरमिमीत' । तदेव विवृणोति—मनसः पुरुषमिति । 'प्राणात्' इति प्राणसञ्चारस्थानत्वाद् घ्राणेन्द्रियमुच्यते । यतः ' एतान् ' पशून् ' प्राणेभ्यो ' निर्मितवान्, ' तस्मात् ' लोके ' प्राणाः पशव ' इति ' आहुः ' जनाः । किञ्च सर्वेषामिन्द्रियाणां ' मनः ' खलु

---

१—" समगृह्णात् " इति क्रिया मूलतो योज्या ।

तदेतदन्नꣳ सृष्ट्वा । पुरस्तात्प्रत्यगात्मन्नधत्त तस्माद्यः कश्चान्नꣳ सृजते पुरस्तादेवैनत्प्रत्यगात्मन्धत्ते तद्वाऽउखायामुदरं वाऽउखोदरे तदन्नं दधाति ॥ ७ ॥

( त्यु ) अथैषु हिरण्यशकलान्प्रत्यस्यति । प्राणा वै हिरण्यमथ वाऽएतेभ्यः पशुभ्यः संज्ञप्यमानेभ्यऽएव प्राणाऽउत्क्रामन्ति तद्यद्धिरण्यशकलान्प्रत्यस्यति प्राणानेवैष्वेतद्दधाति ॥ ८ ॥

सप्त प्रत्यस्यति । सप्त वै शीर्षन्प्राणास्तानस्मिन्नेतद्दधात्यथ यदि पञ्च

---

तदेतदन्नं सृष्ट्वा पुरस्तात्प्रत्यगात्मन्नधत्त । तस्माद्यः कश्चान्नं सृजते—पुरस्तादेवैनत्प्रत्यगात्मन्धत्ते । तद्वाऽउखायाम् । उदरं वाऽउखा । उदरे तदन्नं दधाति ॥ ७ ॥

अथैषु हिरण्यशकलान्प्रत्यस्यति । प्राणो वै हिरण्यम् । अथ वाऽएतेभ्यः पशुभ्यः संज्ञप्यमानेभ्य एव प्राणा उत्क्रामन्ति । तद्यद्धिरण्यशकलान्प्रत्यस्यति—प्राणानेवैष्वेतद्दधाति ॥ ८ ॥

सप्त प्रत्यस्यति । सप्त वै शीर्षन्प्राणाः । तानस्मिन्नेतद्दधाति । अथ यदि पञ्च पशवः स्युः—

---

'प्रथमं' श्रेष्ठम्, तदुपधानादेव सर्वेषां स्वस्वव्यापारक्षमत्वात् । अतश्च 'मनसः' पुरुषस्य निर्माणाल्लोके 'पुरुषः' 'पशूनां' मध्ये श्रेष्ठः 'वीर्यवत्तम इति' आहुः । अपि च 'मनसि' एव 'सर्वे प्राणाः प्रतिष्ठिताः' इति तदेव खलु सर्वे प्राणाः, अतश्च सर्वप्राणात्मकत्वात् 'मनसः पुरुषं निरमिमीत' इति यत् तस्मादाहुः 'पुरुषः सर्वे पशवः' इति । यतः 'पुरुषस्य ह्येवैते सर्वे पशवो भवन्ति,' सर्वपशुसम्पादनक्षमत्वात्पुरुषस्य । अतः 'पुरुषः सर्वे पशवः' इति 'आहुः' । सर्वेन्द्रियप्रतिष्ठारूपान्मनसः सकाशात्पुरुषस्य निर्माणेन तस्य पशुसम्पादनक्षमत्वात् पुरुषः सर्वे पशव इत्याहुरित्यर्थः ॥ ६ ॥

'तदेतत्' पुरुषादिपशुलक्षणम् 'अन्नं' 'सृष्ट्वा' स प्रजापतिः 'पुरस्तात्' प्रतीचीनम् 'आत्मनि' 'अधत्त' 'तस्मात्' लोकेऽपि कश्चनापि 'अन्नम्' सम्पादयति, एतत्सम्पादनं 'पुरस्तादेव' प्रतीचीनमात्मनि धारयति । मुखप्रदेशादेवान्नस्य प्रतीचीनमभ्यवहारात् । अतश्च तत्पुरस्तात् प्रतीचीनं तेषां पशुशीर्षाणामुपधानम् 'उखायाम्' क्रियत इति यत्, तेन प्रजापतेरुदररूपायामुखायां पुरस्तात् प्रतीचीनम् 'अन्नं' निहितवान् भवति ॥ ७ ॥

अथ तेषु पशुशीर्षेषु सुवर्णशकलानां प्रक्षेपं विधाय प्रशंसति—अथैष्विति । प्राणसाधनत्वाद्धिरण्यस्य प्राणात्मकत्वम् । अथ वेति । 'अथ' खलु 'संज्ञप्यमानेभ्यः' एभ्यः 'प्राणा उत्क्रामन्ति' एव । अतश्च 'हिरण्यशकलान् प्रत्यस्यति' इति यत्, एतेन 'प्राणानेव' 'एतेषु' पशुषु निदधाति ॥ ८ ॥

सुवर्णशकलानां संख्याविशेषं विधत्ते—सप्त प्रत्यस्यतीति । शिरसि वागेका, नेत्रे द्वे, श्रोत्रे द्वे, नासाविवरे च

---

१—प्रतिशिरः सप्त सप्त हिरण्यशकलान्मुखे करोति । का० श्रौ० सू०, १७ । १०६ ।

पशवः स्युः पञ्चैव कृत्वः सप्त सप्त प्रत्यस्येत्पञ्च वाऽएतान्पशूनुपदधाति सप्त सप्त वाऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दधाति ॥ ९ ॥

तद्धैकेऽपि । यद्येकः पशुर्भवति पञ्चैव कृत्वः सप्त सप्त प्रत्यस्यन्ति पञ्च वाऽएतान्पशूनुपदधाति सप्त सप्त वाऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दध्मऽइति न तथा कुर्यादेतस्मिन्वै पशौ सर्वेषां पशूनाᳬं रूपं तद्यदेतस्मिन्प्रत्यस्यति तदेवैषु सर्वेषु प्राणान्दधाति ॥ १० ॥

मुखे प्रथमं प्रत्यस्यति । सम्यक्स्रवन्ति सरितो न धेनाऽइत्यन्नं वै धेनास्तदिदᳬं सम्यङ्मुखमभिसᳬंस्रवन्त्यन्तर्हृदा मनसा पूयमानाऽइत्यन्तर्वै

---

पञ्चैव कृत्वः—सप्त सप्त प्रत्यस्येत् । पञ्च वाऽएतान्पशूनुपदधाति । सप्त सप्त वाऽएकैकस्मिन्पशौ प्राणाः । तदेषु सर्वेषु प्राणान्दधाति ॥ ९ ॥

तद्धैके—अपि यद्येकः पशुर्भवति—पञ्चैव कृत्वः सप्त सप्त प्रत्यस्यन्ति । पञ्च वाऽएतान्पशूनुपदधाति । सप्त सप्त वाऽएकैकस्मिन्पशौ प्राणाः । तदेषु सर्वेषु प्राणान्दध्म इति । न तथा कुर्यात् । एतस्मिन्वै पशौ सर्वेषां पशूनां रूपम् । तद्यदेतस्मिन्प्रत्यस्याति—तदेवैषु सर्वेषु प्राणान्दधाति ॥ १० ॥

मुखे प्रथमं प्रत्यस्यति । "सम्यक्स्रवन्ति सरितो न धेनाः"—इति । अन्नं वै धेनाः । तादिदं सम्यङ्मुखमभिसंस्रवन्ति । "अन्तर्हृदा मनसा पूयमानाः"—इति । अन्तर्वै हृदयेन

---

द्वे इति सप्त प्राणाः । तथा सप्त हिरण्यशकलनिधानेन सप्तप्राणवान् भवतीत्याह—सप्त वा इति । पञ्चपशुपक्षः, एकपशुपक्ष इति पक्षद्वयमस्ति, तत्र पञ्चपशुपक्षे पञ्चकृत्वः सप्त सप्त हिरण्यशकलान् प्रतिशीर्षं प्रत्यस्यति ॥९॥

तद्धैक इति । यदि 'एकः' अपि 'पशुर्भवति' तदापि 'पञ्चकृत्वः' एव 'सप्त-सप्त' सुवर्णशकलान् प्रत्यस्येदिति 'एके' शाखिन आहुः । तथा वदतां च तेषामयमाशयः—पञ्चानामपि पशूनां स्थाने एकस्योपधानादसावध्वर्युः 'पञ्च' खलु 'एतान्' 'पशूनुपदधाति' । तथा च 'एकैकस्मिन्पशौ' 'सप्तसप्त' 'प्राणाः' विद्यन्ते, तस्मात्तावतां हिरण्यशकलानां प्रत्यसनेनैतेषु 'सर्वेषु' अपि 'प्राणान् दधाति' इति ।

तं पक्षं दूषयति—न तथा कुर्यादिति । कथं तर्हि सर्वेषां पशूनां प्राणसंघटनेति तत्राह—एतस्मिन्वा इति । 'एतस्मिन्' उपधीयमाने 'पशौ' एकस्मिन्नेव 'सर्वेषां पशूनां रूपम्' अस्ति; तेषां सर्वेषामपि कार्ये एतस्यैव सामर्थ्यावधारणात् । तस्मादेतस्मिन्सप्तसङ्ख्याविशिष्टहिरण्यशकलप्रत्यसनेन सर्वेष्वपि पशुषु प्राणप्रतिसन्धानं संपादितवान् भवति ॥ १० ॥

तत्र प्रथमं मुखे शकलस्य प्रत्यसनं विधत्ते—मुखे प्रथममिति । तत्र मन्त्रं दर्शयन् व्याचष्टे—सम्यक्स्रवन्तीति । 'धेनाः' इति अन्नम् उच्यते । 'तदिदम्' अन्नमभिलक्ष्य 'सम्यक् स्रवन्ति' । कथमिव 'सरितः' इव । इत्ययमर्थो मन्त्रभागेन प्रतिपाद्यत इत्यर्थः ॥

हृदयेन मनसा सताऽन्नं पूतं स ऽऋजुस्तस्य घृतस्य धारा ऽअभिचाकशीमीति या ऽएवैतस्मिन्नग्नावाहुतीर्होष्यन्भवति ता ऽएतदाह हिरण्ययो व्वेतसो मध्येऽअग्नेरिति स ऽएवैष हिरण्मयः पुरुषस्तमेतदाह ॥ ११ ॥

(हृचैं) ऋचे त्वेतीह । प्राणो वाऽऋक्प्राणेन ह्यर्चति रुचे त्वेतीह प्राणो वै रुक्प्राणेन हि रोचतेऽथो प्राणाय हीदथ्ँ सर्वथ्ँ रोचते भासे त्वेतीह ज्योतिषे त्वेतीह भास्वती हीमे ज्योतिष्मती चक्षुषीऽअभूदिदं व्विश्वस्य भुवनस्य व्वाजिनमग्नेर्व्वैश्वानरस्य चेतीहाग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो व्वर्चसा व्वर्चस्वानितीह व्विश्वावतीभ्यां व्विश्वथ्ँ हि श्रोत्रम् ॥ १२ ॥

---

मनसा सताऽन्नं पूतं–य ऋजुस्तस्य । “ घृतस्य धारा अभिचाकशीमि ”–इति । या एवैतस्मिन्नग्नावाहुतीर्होष्यन्भवति–ता एतदाह । “ हिरण्ययो वेतसो मध्येऽअग्नेः ”–( वा. सं. १३ । ३८ ) इति । य एवैष हिरण्मयः पुरुषः । तमेतदाह ॥ ११ ॥

“ ऋचे त्वा ”–इतीह । प्राणो वाऽऋक् । प्राणेन ह्यर्चति । “ रुचे त्वा ”–इतीह । प्राणो वै रुक् । प्राणेन हि रोचते । अथो प्राणाय हीदं सर्वं रोचते । “ भासे त्वा ”–इतीह । “ ज्योतिषे त्वा ”–इतीह । भास्वती हीमे ज्योतिष्मती चक्षुषी । “ अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ”–(वा. सं. १३।३९) इतीह । “अग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वान् ”–इतीह विश्वावतीभ्याम् । विश्वं हि श्रोत्रम् ॥ १२ ॥

---

द्वितीयं पादं व्याचष्टे–अन्तर्हृदेति । ‘ यः ’ ‘ ऋजुः ’ अकुटिलाङ्गः तस्य ‘ अन्तः ’ शरीरमध्ये ‘ हृदा ’ हृदयदेशेन ‘ मनसा ’ च ‘ सता ’ विद्यमानेन ‘अन्नं पूतम्’ भवति । सारासारभेदेन विवेचितं भवति । हृदयदेशस्य त्वन्नावतरणप्रदेशत्वाच्छोधकत्वम् । य ऋजुरकुटिलः शोभनकर्मा यजमानः तस्य मनसेति ॥

तृतीयं पादं व्याचष्टे–घृतस्य धारा इति । अनेन होष्यमाणाहुत्यभिधानमभिप्रेतमित्याह–या एवैतस्मिन् इति ॥

चतुर्थपादेऽग्निमध्यावस्थितहिरण्मयपुरुषाभिधानं क्रियत इति व्याचष्टे–हिरण्यय इति । तदयं मन्त्रस्यार्थः–अकुटिलावयवस्य ‘ अन्तः ’ मध्ये शरीरे ‘ हृदयेन ’ विद्यमानेन ‘ मनसा ’ च शोध्यमानेन अन्नानि ‘ इदं मुखमभि–’ लक्ष्य स्रवन्ति । यथा नद्यः समुद्रं तद्वत् । तथाविधेऽस्मिन् मुखे शकलं निदधामि । निहितं शकलं चेदम् ‘अग्नेः’ ‘ मध्ये ’ यो ‘ हिरण्ययो वेतसः ’ पुरुषः तं प्रति संस्रवन्तीः घृतस्य धाराः ‘ अभिचाकशीमि ’ अभिपश्यति ‘चाकशीमीति’ पुरुषव्यत्ययः । यङ्लुगन्तस्य रूपम् । हिरण्ययशब्दः “ऋत्व्यवास्त्व्य”–इत्यादिना ( पा सू. ६ । ४ । १७५ ) निपातितः ॥ ११ ॥

अथ दक्षिणनासाविवरे समन्त्रकं शकलनिधानं विधत्ते–ऋचे त्वेतीति[२] । ‘ इह ’ इति दक्षिणनासाविवरस्याभिनयेन निर्देशः । व्याचष्टे–प्राणो वा इति । यतः ‘ प्राणो वा ’ ‘ अर्चति ’ प्राप्नोति । प्राणवत्तैव

---

१–उत्तरान् द्वौ द्वौ । का० श्रौ० सू० १७ । १०७ । मंत्रौ प्रतीयादिति सूत्रशेषः ।
२–नासिकयोर्ऋचे त्वेति । का० श्रौ० सू० १७ । १०८ ।

**( मू ) अथ पुरुषशीर्षमुद्गृह्णाति । महयत्येवैनदेतत्सहस्रदाऽअसि सहस्राय त्वेति सर्वं वै सहस्रꣳ सर्वस्य दाताऽसि सर्वस्मै त्वेत्येतत् ॥१३॥**

---

अथ पुरुषशीर्षमुद्गृह्णाति । महयत्येवैनदेतत् । "सहस्रदा असि सहस्राय त्वा"– ( वा. सं. १३ । ४० ) इति । सर्वं वै सहस्रम् । सर्वस्य दाताऽसि । सर्वस्मै त्वेत्येतत् ॥ १३ ॥

---

सर्वस्य प्राप्तेः । अनेकार्थत्वाद्धातूनामर्चतिरत्र प्राप्त्यर्थः । अतश्च 'ऋक्' इति 'प्राणः' । तथा सति 'ऋचे' प्राणाय सञ्चरमाणाय प्रत्यस्यामीति मन्त्रार्थः । सव्यनासाविवरमप्यभिनयेन निर्दिश्य समन्त्रकं शकलनिधानं विधत्ते–रुचे त्वेतीति । 'इह' इति सव्यनासाविवरस्याभिनयेन निर्देशः । 'प्राणो वै' 'रुक्' दीप्यमानः 'प्राणेन' हि शरीरादिकं दीप्यते, प्राणार्थमेव 'सर्वमिदम्' जगत् प्रियं भवति । दक्षिणनेत्रमभिनयेन निर्दिश्य समन्त्रकं शकलनिधानं विधत्ते–भासे त्वेतीति[1] । 'इह' दक्षिणनेत्रे । 'ज्योतिषे त्वेतीह' सव्ये नेत्रे प्रत्यस्यति । यत 'इमे' 'चक्षुषी' 'भास्वती' अर्थप्रकाशनलक्षणतेजोविशिष्टे 'ज्योतिष्मती' स्वयं च ज्योतिर्विशिष्टे, अतस्तत्र शकलप्रत्यसनमन्त्रयोः 'भासे' 'ज्योतिषे' इति प्रयुक्तम् । श्रोत्रयोः समन्त्रकं शकलप्रत्यसनं विधत्ते–अभूदिति[2] । 'इदम्' दक्षिणश्रोत्रम् 'विश्वस्य भुवनस्य' समस्तस्य लोकस्य 'वाजिनम्'– शब्दोपलब्धिसाधनम् 'अभूत्' । न केवलमस्यैवाभूत्, अपि तु 'वैश्वानरस्य' सर्वजनानां जनकत्वेन सम्बन्धिनः "तस्येदम्" ( पा. सू. ४ । ३ । १२० ) इत्यण् प्रत्ययः । "नरे संज्ञायाम्"– ( पा. सू. ६ । ३ । १२९ ) इति पूर्वपदस्य दीर्घः । तस्य 'अग्नेः' प्रजापतेः अपि शब्दोपलब्धिसाधनमभूत् । तादृशे तत्र त्वां प्रत्यस्यामीत्यर्थः । अग्निर्ज्योतिषेति । 'ज्योतिषा' 'ज्योतिष्मान्' प्रशस्तज्योतिष्मान् प्रशस्तज्योतिर्विशिष्टोऽग्निरिव । 'वर्चसा वर्चस्वान्' प्रशस्तवर्चोविशिष्टोऽग्निरिव । इवशब्दोऽध्याहार्यः । इदं यद्दक्षिणेतरं श्रोत्रं प्रकाशते तथाविधे तत्र त्वां प्रक्षिपामीत्यर्थः ॥

मन्त्रे विश्वपदप्रयोगस्याभिप्रायमाह–विश्वावतीभ्यामिति । यद्यप्यत्रैकस्यामेव विश्वपदप्रयोगस्तथापि प्राणभृन्न्यायेन लिङ्गसमवायादुभयोरपि 'विश्वावती' इत्यभिधानमुपपद्यते । यतः 'श्रोत्रं विश्वम्' विश्वव्यापकाकाशात्मकत्वात् । अतस्तत्र शकलप्रत्यसनमन्त्रे विश्वपदप्रयोगः ॥ १२ ॥

पशुशीर्षाणामुपधानम्, तस्य स्थानविशेषम्, उपधाने प्रकारभेदम्, तदुत्पत्त्यादिकं च प्रदर्श्य; अनन्तरमुपधानार्थं पुरुषशिरस उद्ग्रहणं विधत्ते–अथेति[3] । उद्ग्रहणस्योपयोगमाह–महयत्येवैनदेतदिति । एतेनोद्ग्रहणेन 'एतत्' पुरुषशिरः 'महयति' पूजयति सत्कृतवान्भवति । अत एव यजमानदेवत्यत्वाज्जुहूरुद्यम्यते । भ्रातव्यदेवत्यत्वादुपभृन्नियम्यते ॥

विहिते उद्ग्रहणे मन्त्रं विधाय व्याचष्टे–सहस्रदा इति । सर्वं वा इति । यतः 'सहस्रं सर्वम्' तस्मिन्नेव शतादीनामन्तर्भावात् । अतः 'सर्वस्य दाताऽसि' । तस्मात् 'सर्वस्मै' त्वामुद्गृह्णामीति 'एतद्' उक्तं भवतीत्यर्थः । 'सहस्रदा' इति विच्प्रत्ययान्तं पदम् । 'सर्वस्य दाताऽसि' इति पुरुषविवक्षया पुँल्लिङ्गत्वम् ॥ १३ ॥

---

१–अक्ष्णोर्भासे त्वेति । का. श्रौ. सू. १७ । १०९ । २–श्रोत्रयोरभूदिदमिति । का. श्रौ. सू. १७ । ११० ।
३–सहस्रदा इति पुरुषशिर उद्गृह्य मध्ये । का० श्रौ० सू० १७ । ११३ ।

( ड ) अथैनानुपदधाति । पुरुषं प्रथमं पुरुषं तद्वीर्येणात्यादधाति मध्ये पुरुषमभित ऽइतरान्पशून्पुरुषं तत्पशूनां मध्यतोऽत्तारं दधाति तस्मात्पुरुष ऽएव पशूनां मध्यतोऽत्ता ॥ १४ ॥

(तत्राऽश्वं) अश्वं चाविं चोत्तरतः । ( ऽ ) एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥ १५ ॥

गां चाजं च दक्षिणतः । ( ऽ ) एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥ १६ ॥

पयसि पुरुषमुपदधाति । पशवो वै पयो यजमानं तत्पशुषु प्रतिष्ठापयत्यादित्यं गर्भं पयसा समङ्ग्धीत्यादित्यो वाऽएष गर्भो यत्पुरुषस्तं पयसा समङ्ग्धीत्येतत्सहस्रस्य प्रतिमां विश्वरूपमिति पुरुषो वै सहस्रस्य प्रतिमा पुरुषस्य ह्येव सहस्रं भवति परिवृङ्ग्धि हरसा माऽभिमᳪंस्था

---

अथैनानुपदधाति । पुरुषं प्रथमम् । पुरुषं तद्वीर्येणात्यादधाति । मध्ये पुरुषम्, अभित इतरान् पशून् । पुरुषं तत् पशूनां मध्यतोऽत्तारं दधाति । तस्मात्पुरुष एव पशूनां मध्यतोऽत्ता ॥ १४ ॥

अश्वं चाविं चोत्तरतः । एतस्यां तद् दिश्येतौ पशू दधाति । तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ १५

गां चाजं च दक्षिणतः । एतस्यां तद् दिश्येतौ पशू दधाति । तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥ १६ ॥

पयसि पुरुषमुपदधाति । पशवो वै पयः । यजमानं तत्पशुषु प्रतिष्ठापयति । " आदित्यं गर्भं पयसा समङ्ग्धि "—इति । आदित्यो वाऽएष गर्भो यत्पुरुषः । तं पयसा समङ्ग्धीत्येतत् । "सहस्रस्य प्रतिमां विश्वरूपम् "—इति । पुरुषो वै सहस्रस्य प्रतिमा । पुरुषस्य ह्येव सहस्रं भवति ।

---

अथैतेषां पशूनामुपधानमनूद्य तत्र पुरुषस्य प्राथम्यं विधत्ते—अथेति । उपधाने पुरुषस्य प्राथम्याद्वीर्येण पुरुषमतिशयितं करोतीत्याह—पुरुषं तदिति । उखायामुपधानस्य विहितत्वात्तस्यां मध्ये पुरुषोपधानम्, तत्पार्श्वयोरितरपशूनामुपधानं कुर्यादित्यर्थः । मध्ये पुरुषमिति विहितस्य सन्निवेशस्य प्रयोजनमाह—पुरुषं तदिति । 'तत्' तेन सन्निवेशेनोपधाने ' पशूनां ' मध्ये ' पुरुषम् अत्तारम् ' भोक्तारं करोति भोक्तुः पार्श्वे भोग्यस्यावस्थानात् । 'तस्मात्' सम्प्रत्यपि पशूनां मध्ये पुरुष एव भोक्ता भवति, सामान्येन ' अभित इतरान्पशून् ' इति विधानात् ॥ १४ ॥

कस्य कुत्र पार्श्वे उपधानमिति विशेषजिज्ञासायामाह—अश्वं चाविं चेति । गां चाजं चेति ॥ १५ ॥ १६ ॥

" मध्ये पुरुषम् "—इति पुरुषोपधानस्य मध्यस्थानं विहितम् । तत्रैव विशेषं विधत्ते—पयसीति । उखामध्ये पयःपूरिते ' पुरुषम् ' उपदध्यात् । एवं च सति यजमानस्य पुरुषत्वात्, पयसः पशुकार्यत्वेन पशुत्वात्, तत्र यजमानं प्रतिष्ठापयति । विहिते उपधाने मन्त्रं विदधानः पादशो विभज्य व्याचष्टे—

ऽइति पुर्य्येनं वृङ्ग्ध्यर्चिषा मैनथ्ँ हिथ्ँसीरित्येतुच्छतायुषं कृणुहि चीयमान ऽइति पुरुषं तुत्पशूनाथ्ँ शतायुं करोति तुस्मात्पुरुषऽएव पशूनाथ्ँ शतायुः ॥ १७ ॥

( ३ ) अथोत्तरतोऽश्वम् । ( म्वा ) व्वातस्य जूतिमिति व्वातस्य वाऽएष जूतिर्यदुश्वो व्वरुणस्य नाभिमिति व्वारुणो ह्यश्वोऽश्वं जज्ञानथ्ँ सरिरस्य मुध्यऽइत्यापो वै सरिरमप्सुजाऽउ वाऽअश्वः शिशुं नदीनाथ्ँ हरिमद्रिबुध्नमिति गिरिर्वाऽअद्रिर्गिरिबुध्नाऽउ वाऽआपोऽग्ने मा हिथ्ँसीः परमे व्योमन्नितीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिथ्ँसीरित्येतत् ॥ १८ ॥

---

"परिवृङ्ग्धि हरसा माऽभिमंस्थाः"–इति । पर्येनं वृङ्ग्धि अर्चिषा मैनं हिंसीरित्येतत् । "शतायुषं कृणुहि चीयमानः"–( वा सं १३।४१ ) इति । पुरुषं तत् पशूनां शतायुं करोति । तस्मात्पुरुष एव पशूनां शतायुः ॥ १७ ॥

अथोत्तरतोऽश्वम्–" वातस्य जूतिम् "–इतिं । वातस्य वाऽएष जूतिर्यदश्वः । " वरुणस्य नाभिम् "–इति । वारुणो ह्यश्वः । " अश्वं जज्ञानं सरिरस्य मध्ये "–इति । आपो वै सरिरम् । अप्सुजा उ वाऽअश्वः । " शिशुं नदीनां हारिमद्रिबुध्नम् "–इति । गिरिर्वाऽअद्रिः । गिरिबुध्ना उ वाऽआपः । " अग्ने मा हिंसीः परमे व्योमन् "–( वा. सं. १३ । ४२ ) इति । इमे वै लोकाः परमं व्योम । एषु लोकेष्वेनं मा हिंसीरित्येतत् ॥ १८ ॥

---

आदित्यं गर्भमिति[1] । 'पुरुषः' इति 'यद्' 'एष आदित्यो गर्भः' खलु । अदितेः सकाशाद्विवस्वदाख्य आदित्योऽजायत । तथा च श्रूयते–" ततो विवस्वानादित्योऽजायत " ( तै. सं. ६।५।६ ) इति । विवस्वत्सम्बन्धिनश्च सर्वे पुरुषा इति पुरुषस्याप्यादित्यगर्भत्वम् । तथा सति पुरुषमेव 'पयसा समङ्ग्धीत्येतत्' उक्तं भवति । द्वितीयपादेऽपि 'सहस्रस्य प्रतिमाम्' इत्यनेन पुरुष एव विवक्षित इति दर्शयति–सहस्रस्येति । यतः 'पुरुषस्यैव पशूनां सहस्रं भवति' अतोयं सहस्रस्य सदृशः । अत एव तैत्तिरीयके श्रूयते " सहस्रं वै प्रति पुरुषः पशूनां यच्छति" इति । तृतीयपादे 'हरः' शब्देनार्चिरुच्यते । 'माऽभिमंस्थाः' अनेनाहिंसनमिति दर्शयति–परिवृङ्ग्धीति । चतुर्थपादे 'शतायुषं कृणुहि' इति एतदुच्चारणेन पुरुषस्य शतायुष्ट्वं सम्पादयतीत्याह–शतायुषमिति । हे अग्ने ! 'चीयमानः' त्वं पूर्वोक्तप्रकारेणादित्यगर्भरूपं 'सहस्रस्य' सदृशम् । अत एव 'विश्वरूपं' पुरुषं 'पयसा' आर्द्रीकुरु । किञ्च 'एनम्' परितो वर्जय आर्चिषा मा हिंसीः 'शतायुषं' च 'कृणुहि' इति मन्त्रार्थः ॥ १७ ॥

उत्तरतोऽश्वस्योपधानमनूद्य तत्र मन्त्रं विदधानो व्याचष्टे–अथेति[2] । 'अश्वः' इति यद् 'एषः' 'वातस्य' 'जूतिः' खलु । 'जूति-शब्देन' वेग उच्यते । तद्रूपत्वाद् । 'अश्वो' ऽपि तच्छब्देन वायुवेग इत्यर्थः ।

---

१–आदित्यं गर्भमिति प्रतिमंत्रं मंत्रक्रमेण । का. श्रौ. सू. १७ । ११६ ।

२–अश्वाव्योरुत्तरतः पूर्व्वापरे । का. श्रौ. सू. १७ । ११४ ।

( दु ) अथ दक्षिणतो गाम् । ( मु ) अजस्रमिन्दुमरुषमिति सोमो वाऽइन्दुः स हैष सोमोऽजस्रो यद्गौर्भुरण्युमिति भर्त्तारमित्येतदग्निमीडे पूर्व्वचित्तिं नमोभिरित्याग्नेयो वै गौः पूर्व्वचित्तिमिति प्राञ्चᳬं ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्ति स पर्वभिर्ऋतुशः कल्पमानऽइति यद्वाऽएष चीयते तदेष पर्वभिर्ऋतुशः कल्पते गां मा हिᳬंसीरदितिं विराजमिति विराड्वै गौरन्नं वै विराडन्नमु गौः ॥ १९ ॥

---

अथ दक्षिणतो गाम् । " अजस्रमिन्दुमरुषम् "–इति । सोमो वाऽइन्दुः । स हैष सोमोऽजस्रः । यद्गौः । "भुरण्युम्"–इति । भर्त्तारमित्येतत् । " अग्निमीडे पूर्वचित्तिं नमोभिः "–इति । आग्नेयो वै गौः । पूर्वचित्तिमिति प्राञ्चं ह्यग्निमुद्धरन्ति, प्राञ्चमुपचरन्ति । " स पर्वभिर्ऋतुशः कल्पमानः "–इति । यद्वाऽएष चीयते–तदेष पर्वभिर्ऋतुशः कल्पते । " गां मा हिंसीरदितिं विराजम् "–( वा. सं. १३ । ४३ ) इति । विराड् वै गौः । अन्नं वै विराड् । अन्नमु गौः ॥ १९ ॥

---

अपामधिपतेः ' वरुणस्य ' सम्बन्धित्वाद् ' अश्वो ' वरुण–' नाभिः ' । अत एव श्रूयते–" प्रजापतिर्वरुणायाश्वमनयत् "–( तै. सं. २ । ३ । १३ ) इति । ' सरिरम् ' इति ' आप ' उच्यन्ते । अश्वश्च ' अप्सुजाः ' खलु, समुद्रमध्ये वडवारूपेणोत्पन्नत्वात् । अत एव " अप्सुयोनिर्वा अश्वः "–इत्यन्यत्र ( तै. सं. ५ । ३ । १२ ) ( श. प. १३ । २ । ७ । १० ) श्रुतम् । अद्रिबुध्नमिति । ' अद्रिः ' इति गिरिरुच्यते । ' आपो ' गिरिमूलाः खलु, तत्रोत्पद्यमानत्वात् । तथाऽत्र तथा–विधजलसमुद्भूतत्वादश्वोऽपि गिरिबुध्न इत्यर्थः । " इमे वै लोकाः परमं व्योम "–इत्यनेन मन्त्रगतं ' व्योम ', पदमितरलोकयोरप्युपलक्षणमिति तद्दर्शितम । हे ' अग्ने ! वायुवेगविशिष्टम्, वरुणस्य नाभिस्थानीयम्, सरिरस्य मध्ये उत्पन्नम्, अत एव ' नदीनां शिशुम्, ' अद्रिबुध्नम् ' गिरिमूलोत्पत्तिस्थानम्, ' हरिम् ' आरोढुर्हर्तारमश्वं ' परमे व्योमन् ' उत्कृष्टेषु पृथिव्यादिषु ' लोकेषु ' ' मा हिंसीः ' इति मन्त्रार्थः ॥ १८ ॥

दक्षिणदेशे गोरुपधानमनूद्य स्तुतिवन्मन्त्रं विधत्ते–अथेति । इन्दुमिति । सोमो वा इन्दुरिति । यतः ' सः ' ' एषः ' ' अजस्रः ' ' सोमो ' हि, सर्वदा पयोलक्षणस्यामृतस्य स्यन्दनात् । इन्दोस्तु कदाचिदुपक्षयो विद्यत इति तदभिप्रायेण ' अजस्रम् ' इत्युक्तम् । भुरण्युमिति । दोहनादिभिर्भर्तारमित्येतदुक्तं भवति, गोजातीयस्य घृतत्वात् । अथ वा ' गौः ' पुङ्गवः ' अजस्रः ' ' सोमः ' सर्वदाह्लादकत्वात् । कृषिसाधनत्वेन भर्तृत्वाद् ' भुरण्युम् ' इति । अग्निमीड इति । यतो ' गौः ' ' आग्नेयः ' अतोऽसावग्निः । यतः ' अग्निम् ' ' प्राञ्चम् ' ' उद्धरन्ति ' ' प्राञ्चमेव ' होमादिना ' उपचरन्ति ' । अतोऽग्निः पूर्वचित्तिः, पूर्वस्मिन्प्रदेशे चित्तिरनुष्ठेयस्य प्रतीतिर्यस्य स तथोक्तः । यद्वा इति । 'एषः' अग्निः ' चीयते ' इति यत्, तेन ' एषः ' 'पर्वभिः' इष्टकाचितिलक्षणैः ' ऋतुशः ' तेन तेन ऋतुना ' कल्पते ' । चितिलक्षणानां पर्वणामृतुरूपत्वादित्यर्थः । विराड् वा इति । अन्नसाधनत्वाद्विराजोऽन्नत्वम्, गोरपि तथैवान्नत्वमिति ' विराड् ' इति गौरेवेत्यर्थः । सर्वदा-

---

१–गोऽजयोश्च दक्षिणतः । का० श्रौ० सू० १७ । ११५ ।

( ङ ) अथोत्तरतोऽविम् । ( मु ) वरूत्रीं त्वष्टुर्वरुणस्य नाभिमिति वारुणी च हि त्वाष्ट्री चाविरविं जज्ञानाᳬरजसः परस्मादिति श्रोत्रं वै परᳬरजो दिशो वै श्रोत्रं दिशः परᳬरजो महीᳫं साहस्रीमसुरस्य मायामिति महतीᳫं साहस्रीमसुरस्य मायामित्येतदग्ने मा हिᳬसीः परमे व्योमन्निती मे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिᳬसी- रित्येतत् ॥ २० ॥

( छ ) अथ दक्षिणतोऽजम् । यो ऽअग्निरग्नेरध्यजायतेत्यग्निर्वाऽएषो-

---

अथोत्तरतोऽविम् । " वरूत्रीं त्वष्टुर्वरुणस्य नाभिम् "–इति । वारुणी च हि त्वाष्ट्री चाविः । " अविं जज्ञानां रजसः परस्माद् "–इति । श्रोत्रं वै परं रजः । दिशो वै श्रोत्रम् । दिशः परं रजः । " महीं साहस्रीमसुरस्य मायाम् "–इति । महतीं साहस्रीमसुरस्य माया- मित्येतत् । " अग्ने मा हिंसीः परमे व्योमन् "–( वा. सं. १३ । ४४ ) इति । इमे वै लोकाः परमं व्योम । एषु लोकेष्वेनं मा हिंसीरित्येतत् ॥ २० ॥

अथ दक्षिणतोऽजम् । " यो अग्निरग्नेरध्यजायत "–इति । अग्निर्वाऽएषोऽग्नेरध्यजायत ।

---

ऽऽह्लादकत्वेन ' अजस्रम् ' ' इन्दुम् ' ' अरुषम् ' आरोचमानम्, कृष्यादिसाधनत्वेन 'भर्त्तारम्,' 'पूर्वचित्तिम्' पूर्वत्रानुष्ठेयप्रतीतिविशिष्टम् ' अग्निम् ' तदीयत्वेन तदात्मकम्, ' गाम् ' अत्रोपधानाय ' नमोभिः ' नमस्कारै- र्युक्तोऽहम् ' ईडे ' । हे अग्ने ! ' पर्वभिः ' चितिलक्षणैः ' ऋतुशः ' ' कल्पमानः ' तथाविधस्त्वम् ' अदि- तिम् ' अखण्डनीयं ' विराजम् ' अन्नसाधनं ' गाम् ' ' मा हिंसीः ' इत्यर्थः ॥ १९ ॥

अथोत्तरप्रदेशे अवेरुपधानमनूद्य मन्त्रं विधत्ते–अथेति । वारुणी च हीति । यतो ' वरुणस्य ' अनिष्ट- निवारकस्याग्नेर्नाभिस्थानीया, रूपाणां निर्माता यस्त्वष्टा तस्यानुग्रहणीयरूपयुक्ता, अतोऽविस्त्वष्टुर्वरूत्री, वरुणस्य नाभिश्च । श्रोत्रं वा इति । ' श्रोत्रम् ' खलु ' परम् ' ' रजः ' उत्कृष्टो लोकः । तदेवोपपादयति–दिशो वा इति । ' श्रोत्रं ' च ' दिशः ' खलु, तस्य तत्कार्यत्वात् । ' दिशः परं रजः ' दिग्भ्यश्चावय उत्पद्यन्ते दिशां सर्वोत्पत्तिमन्निमित्तकारणत्वात् । ' महीं साहस्रीम् ' इत्यत्र महीपदस्य महतीत्यर्थ इति दर्शितम्–महती- मिति । मन्त्रार्थस्तु–हे अग्ने ! ' त्वष्टुः ' वरणीयरूपयुक्ताम्, ' वरुणस्य ' नाभिस्थानीयाम्, ' परस्माद्रजसो ' दिग्भ्यो जाताम्, ' महतीम् ' सहस्रमूल्यार्हाम्, ' असुरस्य ' ' मायाम् ' स्वर्भानोरसुरस्य सम्बन्धित्वेन निर्मि- ताम्, अत एव तैत्तिरीयके–" सुवर्भानुरासुरः सूर्यं तमसाऽविध्यत्तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्य यत्प्रथमं तमोऽपाघ्नन् सा कृष्णाऽविरभवत् "– ( तै. सं. २ । १ । २ ) इति श्रूयते । तादृशीं ' अविम् ', पृथिव्यादिषु ' एषु ' ' लोकेषु ' ' मा हिंसीः ' ॥ २० ॥

अथ दक्षिणदेशेऽजस्योपधानमनूद्य मन्त्रं विदधानो व्याचष्टे–अथेति । अग्निर्वा इति । ' एषोऽग्निः ' अजः

ऽग्नेरध्यजायत शोकात्पृथिव्याऽउत वा दिवस्परीति यद्वै प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्यै च शोकादजायत येन प्रजा विश्वकर्मा जजानेति वाग्वाऽअजो वाचो वै प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्त्विति यथैव यजुस्तथा बन्धुः ॥ २१ ॥

( स्त ) तऽएते पशवः । ( स्ता ) तान्नानोपदधाति नाना सादयति नाना सूददोहसाऽधिवदति नाना ह्येते पशवः ॥ २२ ॥

( वोऽथ ) अथ पुरुषशीर्षमभिजुहोति । ( त्या ) आहुतिर्वै यज्ञः पुरुषं तत्पशूनां यज्ञियं करोति तस्मात्पुरुषऽएव पशूनां यजते ॥ २३ ॥

---

" शोकात्पृथिव्या उत वा दिवस्परि "–इति । यद्वै प्रजापतेः शोकादजायत–तद्दिवश्च पृथिव्यै च शोकादजायत । " येन प्रजा विश्वकर्मा जजान "–इति । वाग्वाऽअजः । वाचो वै प्रजा विश्वकर्मा जजान । " तमग्ने हेडः परि ते वृणक्तु "–( वा. सं. १३ । ४५ ) इति । यथैव यजुस्तथा बन्धुः ॥ २१ ॥

तऽएते पशवः । तान्नानोपदधाति । नाना सादयति । नाना सूददोहसाऽधिवदति । नाना ह्येते पशवः ॥ २२ ॥

पशूपरि होमः ।

अथ पुरुषशीर्षमभिजुहोति । आहुतिर्वै यज्ञः । पुरुषं तत् पशूनां यज्ञियं करोति । तस्मात्पुरुष एव पशूनां यजते ॥ २३ ॥

---

' अग्नेः ' प्रजापतेः ' अध्यजायत ' अग्नेः सकाशादुत्पन्नत्वादजस्याग्नित्वम् । अग्नेः सकाशादुत्पत्तिरेव प्रदर्श्यते–शोकादिति । यद्वै ' प्रजापतेः ' ' शोकादजायत, ' ' तद्दिवः पृथिव्याश्च शोकादजायत ' । प्रजापतेस्तदात्मकत्वादग्निरिति प्रजापतिरेवोच्यते । ' येन ' अजेनेत्यर्थः । ' विश्वकर्मा ' प्रजापतिर्वाचः सकाशात् ' प्रजाः ' ' जजान ' । जनिरन्तर्भावितण्यर्थः, उत्पादितवान् । अजश्च वागात्मकः, ततश्च 'येन' 'विश्वकर्मा' ' प्रजाः ' ' जजान ' । यथैव यजुस्तथा बन्धुरिति । मन्त्रो ' यथैव ' तथैव व्याख्याने स्पष्टार्थ इत्यर्थः । हे अग्ने ! उपधीयमानो ' यः ' अग्न्यात्मकोऽजः ' अग्नेः ' प्रजापतेः ' अध्यजायत, ' तत्कथम्–यतः ' पृथिव्याः शोकात् ' अपि च ' दिवः शोकाद् ' ' अध्यजायत ' किञ्च ' येन प्रजाः ' ' विश्वकर्मा जजान ' उत्पादयामास, ' तम् ' अजम् ' ते ' ' हेडः ' कोपः ( निघं. २ । १३ । १ ) ' परिवृणक्तु ' अपवर्जयतु ॥ २१ ॥

प्रकृतानां पशूनां नानात्वात् पृथगेवोपधानसादनानि कर्तव्यानीत्याह–त एते पशव इति ॥ २२ ॥

उपधानानन्तरं पुरुषशिरसि होमं विधत्ते–अथेति । अभिहोमस्योपयोगमाह–आहुतिरिति । यदेषा खलु ' आहुतिः ' तदात्मको ' यज्ञः ' स्यात् । तथा सत्यभिहोमेन ' पशूनां ' मध्ये ' पुरुषम् ' ' यज्ञियम् ' यज्ञार्हं ' करोति ', ' तस्मात् ' ' पुरुष एव पशूनां ' मध्ये ' यजते ' ॥ २३ ॥

यद्वेवैनदभिजुहोति । शीर्षंस्तद्वीर्यं दधात्याज्येन जुहोति व्वज्रो वाऽआज्यं व्वीर्यं वै व्वज्रो व्वीर्यमेवास्मिन्नेतद्दधाति स्रुवेण व्वृषा वै स्रुवो व्वीर्यं वै व्वृषा व्वीर्यमेवास्मिन्नेतद्दधाति स्वाहाकारेण व्वृषा वै स्वाहाकारो व्वीर्यं वै व्वृषा व्वीर्यमेवास्मिन्नेतद्दधाति त्रिष्टुभा व्वज्रो वै त्रिष्टुब्व्वीर्यं वै व्वज्रो व्वीर्यं त्रिष्टुब्व्वीर्येणैवास्मिन्नेतद्वीर्यं दधाति ॥ २४ ॥

स वाऽअर्धर्चमनुद्रुत्य स्वाहाकरोति । ( त्यु ) अस्थि वाऽऋगिदं तच्छीर्षकपालं व्विहाप्य यदिदमन्तरतः शीर्ष्णो व्वीर्यं तदस्मिन्दधाति ॥ २५ ॥

---

यद्वेवैनदभिजुहोति—शीर्षंस्तद्वीर्यं दधाति । आज्येन जुहोति । वज्रो वाऽआज्यम् । वीर्यं वै वज्रः । वीर्यमेवास्मिन्नेतद्दधाति । स्रुवेण । वृषा वै स्रुवः । वीर्यं वै वृषा । वीर्यमेवास्मिन्नेतद्दधाति । स्वाहाकारेण । वृषा वै स्वाहाकारः । वीर्यं वै वृषा । वर्यिमेवास्मिन्नेतद्दधाति । त्रिष्टुभा । वज्रो वै त्रिष्टुप् । वीर्यं वै वज्रः । वीर्यं त्रिष्टुप् । वीर्येणैवास्मिन्नेतद्वीर्यं दधाति ॥ २४ ॥

स वाऽअर्धर्चमनुद्रुत्य स्वाहाकरोति । अस्थि वाऽऋक् । इदं तच्छीर्षकपालं विहाप्य यदिदमन्तरतः शीर्ष्णो वीर्यम्—तदस्मिन्दधाति ॥ २५ ॥

---

न केवलमभिहोमस्य यज्ञियत्वमेव प्रयोजनमपि तु तस्य वीर्यत्वमपीत्याह—यद्वेवेति । एतत्पुरुषशीर्षम् 'अभि'—लक्ष्य 'जुहोति' इति 'यत्,' तेन 'शीर्षन्' शीर्ष्णि 'वीर्यं दधाति'। "शीर्षंश्छन्दसि"—( पा. सू. ६ । १ । ६० ) इति शिरःशब्दस्य शीर्षन्नादेशः । तत उत्तरस्याः सप्तम्याः "सुपां सुलुग्"—( पा. सू. ७ । १ । ३९ ) इत्यादिना लुक् । एतदेव वीर्यनिधानमभिहोमसाधनभूताज्यस्रुवादीनां मध्ये प्रत्येकसाध्यतया दर्शयति—आज्येनेत्यादिना । आज्यस्य वज्रत्वं तैत्तिरीयके श्रुतम्—"घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्"—( तै. सं.६। २ । २ ) इति । वज्रस्य प्रहरणरूपत्वाद्वीर्यत्वम् । वृषा वै स्रुव इति । 'वृषा' पुरुषः, स्रुवस्य पुँल्लिङ्गत्वाद्वृषत्वम् । वृष्णश्च वीर्यत्वाद्वीर्याधानहेतुत्वमिति । स्वाहाकारस्याप्येवमेव वीर्यत्वम् । वज्रो वै त्रिष्टुबिति । त्रिष्टुभो रजोहननसाधनत्वसादृश्याद्वज्रता । तथा च वज्रस्य वीर्यरूपत्वात्त्रिष्टुभोऽपि वीर्यतया त्रिष्टुबात्मकेन 'वीर्येणैव' हेतुना 'अस्मिन्' पुरुषशिरसि 'वीर्यं दधाति' ॥ २४ ॥

"चित्रं देवानामुदगाद्"—इत्यस्याभिहोममन्त्रस्य पूर्वेणार्द्धेनैकाहुतिः क्रियते । अपरेण चान्या । अत एव कात्यायनः—"चित्रं देवानामित्यर्धर्चशः स्रुवाहुतिः"—( का. श्रौ. सू. १७ । ११७ ) इति । तत्र पूर्वार्द्धर्चसाध्यामाहुतिं दर्शयति—स वा अर्द्धर्चमिति । 'सः' खलु अध्वर्युः 'अर्द्धर्चमनुद्रुत्य' स्वाहाकारेणैकामाहुतिं सम्पादयेदित्यर्थः । ननु किमर्थमर्द्धर्चे स्वाहाकरणमित्यत आह—अस्थि वा ऋगिति । ऋचोऽस्थ्यात्मकत्वं पादबन्धेन दार्ढ्ययोगात् । ऋचो दार्ढ्यं तैत्तिरीयके—"यदृचा तद् दृढम्"—इति ( तै. सं. ६।५।१० ) ।तथा च सति ऋचो विभागेन 'तद्' 'इदं' पुरुषसम्बन्धि 'शीर्षकपालं' 'विहाप्य' विभिद्य, "ओहाक् त्यागे"—( धा. पा. जु. प. ८ ) ण्यन्तस्य ल्यपि रूपम् । 'शीर्ष्णः' शिरसोऽन्तरे 'यदिदम्' अत्र विद्यमानं 'वीर्यम्,' 'तदस्मिन्' निदधाति । आज्यस्वाहाकारयोर्वीर्यात्मकत्वादित्यर्थः ॥ २५ ॥

( त्यु ) अथोत्तरमर्धर्चमनुद्रुत्य स्वाहाकरोति । ( ती ) इदं तुच्छीर्षकपालुꣳ संधाय युदिदमुपरिष्टाच्छीर्ष्णो व्वीर्यं तुदस्मिन्दधाति ॥ २६ ॥

चित्रं देवानामुदगादुनीकमिति । ( त्य ) असौ वाऽआदित्युऽएष पुरुषस्तुदेतच्चित्रं देवानामुदेत्युनीकं चुक्षुर्मित्रस्य व्वरुणस्याग्नेरित्युभयेषाꣳ हैतद्देवमनुष्याणां चक्षुराऽप्रा द्यावापृथिवीऽअन्तरिक्षमित्युद्यन्वाऽएषु इमाँल्लोकानापूरयति सूर्यऽआत्मा जुगतस्तस्थुषश्चेत्येषु ह्यस्य सर्व्वस्यात्मा युच्च जगद्युच्च तिष्ठति ॥ २७ ॥

---

अथोत्तरमर्धर्चमनुद्रुत्य स्वाहाकरोति । इदं तच्छीर्षकपालं सन्धाय यदिदमुपरिष्टाच्छीर्ष्णो वीर्यं तदस्मिन्दधाति ॥ २६ ॥

"चित्रं देवानामुदगादनीकम्"–इति । असौ वा आदित्य एष पुरुषः । तदेतच्चित्रं देवानामुदेत्यनीकम् । "चक्षुर्मित्रस्य वरुणस्याग्नेः"–इति । उभयेषां हैतद्देवमनुष्याणां चक्षुः । "आऽप्रा द्यावापृथिवीऽअन्तरिक्षम्"–इति । उद्यन्वाऽएष इमांल्लोकानापूरयति । "सूर्य आत्मा जगतस्तस्थुषश्च"–( वा. सं. १३ । ४६ ) इति । एष ह्यस्य सर्वस्यात्मा । यच्च जगद्, यच्च तिष्ठति ॥ २७ ॥

---

अथोत्तरार्द्धर्चसाध्यामाहुतिं दर्शयंस्तत्राप्युपयोगमाह–अथेति । इदं तदिति । पूर्वमन्तरे वीर्यनिधानार्थं कपालभेदनात्पुनस्तत्कपालं 'सन्धाय' शिरसि उपरितनं 'वीर्यम्' अत्र निहितवान् भवति ॥ २६ ॥

'स वा अर्द्धर्चमनुद्रुत्य' इत्यादिना सूचितं मन्त्रं दर्शयन् व्याचष्टे–चित्रं देवानामिति । 'एषः' उपधीयमानः 'पुरुषः' 'असौ' परिदृश्यमानः 'आदित्यः' खलु, आदित्यस्य सर्वात्मकत्वात् । आदित्यमण्डलं च 'देवानाम्' रश्मीनां 'चित्रम्' 'अनीकम्' समुदायः । तथा सति अस्य पुरुषस्योपधानेन 'तदेतच्चित्रं देवानामनीकमुदेति' अत उच्यते–"चित्रं देवानामुदगादनीकम्"–इति मन्त्रेणेत्यर्थः । "चक्षुर्मित्रस्य वरुणस्याग्नेः" 'इति' एवं मित्रादिदेवताग्रहणमन्येषामप्युपलक्षणम् । उभयान्प्रत्यस्य प्रकाशकत्वसाधारण्यादिति दर्शितम्–उभयेषामिति । उद्यन्वा इति । उदयमानः सन् 'एषः' आदित्यः 'इमान्' पृथिव्यादीन् 'लोकानापूरयति' प्राणैः समर्थयति चेष्टयतीत्यर्थः । एतच्च तैत्तिरीयके श्रूयते–"असौ य आपूर्यति, स सर्वेषां भूतानां प्राणैरापूर्यति"–( तै. आ. १।१४ ) इति । अत उक्तम्–आऽप्रा इति । "प्रा पूरणे"–( धा. पा. अ. प. ६१ ) लङि रूपम् । 'सूर्य आत्मा जगतस्तस्थुषश्च'–इत्यनेन स्थावरजङ्गमात्मकस्य सर्वस्य जगतोऽयं 'सूर्यः' चेष्टकत्वेनान्तर आत्मेति विवक्षितमित्याह–एष हीति । 'जगत्' गच्छत् जङ्गमात्मकं जगत्, 'तिष्ठत्' स्थावरात्मकम् । "अन्येभ्योऽपि दृश्यते"–( पा. सू. ३ । २ । १७८ ) इत्यत्र "द्युति–गमि–जुहोतीनां द्वे च"–( सू. वा. २ । ) इति क्विपि द्विर्वचने "गमः क्वौ" ( पा. सू. ६ । १ । ७१ ) इति मलोपे "ह्रस्वस्य पिति" ( पा. सू. ६ । ४ । ४० ) इति तुकि च जगदिति भवति ॥ २७ ॥

(त्य) अथोत्सर्गैरुपतिष्ठते । (त९) एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत तऽआलिप्स्यमानाऽ अशोचंस्तेषामेतैरुत्सर्गैः शुचं पाप्मानमपाहँस्तथै-वैषामयमेतदेतैरुत्सर्गैः शुचं पाप्मानमपहन्ति ॥ २८॥

तद्धैके । यं यमेव पशुमुपदधाति तस्यतस्य शुचमुत्सृजन्ति नेच्छुचं पाप्मानमभ्युपदधामहाऽइति तु ह ते शुचं पाप्मानमभ्युपदधति याँ हि पूर्वस्य शुचमुत्सृजन्ति तामुत्तरेण सहोपदधति ॥ २९ ॥

विपरिक्रामम्मु हैकऽउपतिष्ठन्ते । (न्त९) ऊर्ध्वाँ शुचमुत्सृजाम ऽइति तेह ते शुचं पाप्मानमनूद्यन्त्यूर्ध्वो ह्येतेन कर्मणैत्यूर्ध्वामु शुचमुत्सृ-जन्ति ॥ ३० ॥

---

अथोत्सर्गैरुपतिष्ठते । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत । तऽआलिप्स्यमाना अशोचन् । तेषामेतैरुत्सर्गैः शुचं पाप्मानमपाहन् । तथैवैषामयमेतदेतैरुत्सर्गैः शुचं पाप्मानमपहन्ति ॥ २८ ॥

तद्धैके—यं यमेव पशुमुपदधाति तस्य तस्य शुचमुत्सृजन्ति । नेच्छुचं पाप्मानमभ्युपदधामहाऽइति । ते ह ते शुचं पाप्मानमभ्युपदधति । यां हि पूर्वस्य शुचमुत्सृजन्ति तामुत्तरेण सहोपदधति ॥ २९ ॥

विपरिक्रामम्मु हैकऽउपतिष्ठन्ते । ऊर्ध्वां शुचमुत्सृजाम इति । ते ह ते शुचं पाप्मानमनूद्यन्ति । ऊर्ध्वो ह्येतेन कर्मणैति । ऊर्ध्वामु शुचमुत्सृजन्ति ॥ ३० ॥

---

अग्निहोमानन्तरमुपहितानां पुरुषशिरःप्रभृतीनां पशुशिरसामुत्सर्गनामकैर्मन्त्रैरुपस्थानं विधत्ते—अथेति । विहितमन्त्रसाध्यस्योपस्थानस्य प्रयोजनाभिधानं प्रतिजानीते—एतद्वा इति । 'एतत्' खलु प्रयोजनमित्यर्थः । तदेव दर्शयति—यत्रैतानिति । 'यत्र' यस्मिन् प्रस्तावे 'प्रजापतिः' 'एतान्' पुरुषमुख्यान् 'पशून्' आलब्धु-मैच्छत् तदा 'आलिप्स्यमानास्ते' 'अशोचन्' आलम्भस्य शोकहेतुत्वात् । ततः 'तेषाम्' शोकरूपं पापम् 'एतैः' वक्ष्यमाणैरुत्सर्गमन्त्रैरपहतवान् । तथैवायमपि यजमान एतेनोपस्थानेन 'एषाम्' शोकरूपं पापम् 'अपहन्ति'। "मयुं पशुं मेधमग्ने जुषस्व" इत्यादिना आरण्यपशूत्सर्गप्रतिपादनेन तेषामुत्सर्गत्वं शोकोत्सर्गहेतुत्वाद्वा ॥ २८ ॥

अत्र पञ्चानामपि शीर्षाणामुपधानानन्तरमुत्सर्गमन्त्रैरुपस्थानमिति स्वकीयमतम्, तथैवोक्तत्वात् । अपरे पुनरत्रानुष्ठानक्रमे किञ्चिद्वैषम्यमाचक्षते, तन्मतं दूषयितुमनुवदति—तद्धैके इति । तथा कुर्वतां च तेषामाशय-माह—नेदिति । पूर्वमुपहितस्य पशोः शोकमुत्सारितमभिलक्ष्यैवोत्तरपशोरुपधानं स्यात् । अतस्तन्मा भूदिति तथा कुर्वन्तीत्यर्थः । तन्मतं दूषयति—ते हेति । तथाविधाभिप्रायवन्तः 'ते' खलु याज्ञिकाः शोकरूपं पापम् 'अभि' लक्ष्यैव 'उपदधति' । यतः पूर्वस्य पशोः 'यां' 'शुचम्' 'उत्सृजन्ति' 'ताम्' एव 'उत्तरेण' 'सहोपदधति' । निवृत्तसजातीयानुवृत्तिभावादित्यर्थः ॥ २९ ॥

अथैतेषामेवोपस्थाने केषाञ्चिच्छाखिनां प्रकारविशेषं दूषयितुमनुवदति—विपरिक्राममिति । पशूनां 'शुच-मूर्ध्वाम्' 'उत्सृजामः' इति केचिद्विपरिक्रम्य विपरिक्रम्योपतिष्ठन्ते । उत्क्रमणपूर्वकत्वाद्विपरिक्रमणस्येति तयो-

---

१—उपधायोपधाय वा तस्य तस्य यथालिंगम् । का. श्रौ. सू. १७ । १२० । २—उत्खां परिक्राममेके । का. श्रौ. सू. १७।११९।

बाह्येनैवाग्निमुत्सृजेत् । (दि) इमे वै लोका ऽएषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद्बहिर्धा शुचं दधात्युदङ् तिष्ठन्नेतस्याँ ह दिश्येते पशवस्तद्यत्रैते पशवस्तदेवैष्वेतच्छुचं दधाति ॥ ३१ ॥

पुरुषस्य प्रथममुत्सृजति । तँ हि प्रथममुपदधातीमं मा हिँसीर्द्विपादं पशुमिति द्विपाद्वा ऽएष पशुर्यत्पुरुषस्तं मा हिँसीरित्येतत्सहस्राक्षो मेधाय चीयमान ऽइति हिरण्यशकलैर्वा ऽएष सहस्राक्षो मेधायेत्यन्नायेतन्मयुं

---

बाह्येनैवाग्निमुत्सृजेत् । इमे वै लोकाः । एषोऽग्निः । एभ्यस्तल्लोकेभ्यो बहिर्धा शुचं दधाति । बहिर्वेदि । इयं वै वेदिः । अस्यै तद्बहिर्धा शुचं दधाति । उदङ्तिष्ठन् । एतस्यां ह दिश्येते पशवः । तद्यत्रैते पशवः । तदेवैष्वेतच्छुचं दधाति ॥ ३१ ॥

पुरुषस्य प्रथममुत्सृजति । तं हि प्रथममुपदधाति । "इमं मा हिंसीर्द्विपादं पशुम्"—इति । द्विपाद्वाऽएष पशुर्यत्पुरुषः । तं मा हिंसीरित्येतत् । "सहस्राक्षो मेधाय चीयमानः"—इति । हिरण्यशकलैर्वाऽएष सहस्राक्षः । "मेधाय" इति अन्नायेत्येतत् । "मयुं पशुं मेधमग्ने जुषस्व"—

---

पस्थाने शोक ऊर्ध्व एवोत्सृष्टो भवतीति तेनोपतिष्ठन्त इति भावः । तदपि दूषयति—ते ह ते इति । तथाविधाभिप्रायवन्तः ते शोकरूपं पापम् 'अनूद्यन्ति' विपरिक्रमणार्थमुद्गमने कृते शोकं प्रत्यनुगतवन्तो भवन्ति । अतो न तथा कुर्यात् । कथं तर्हि शोक ऊर्ध्वमुत्सृष्टो भवतीति तत्राह—ऊर्ध्वो हीति । 'एतेन' उपधानलक्षणेन कर्मणा 'ऊर्ध्वः' अध्वर्युः 'एति' उत्तरोत्तरमेतेषां शिरसामुपधानात् । अतस्तेनैव 'ऊर्ध्वाम्' 'उत्सृजन्ति' । व्यत्ययेन बहुवचनम् (पा. सू. ३।१।८९) प्रयोगबहुत्वापेक्षं वा ॥ ३० ॥

अग्नेर्बहिर्देशे शोकमुत्सृजेदित्याह—बाह्येनेति । अग्नेर्बाह्यदेशेनोपलक्षिते शुचमुत्सृजेदित्यर्थः । 'अग्निम्' इति षष्ठ्यर्थे द्वितीयाव्यत्ययो द्रष्टव्यः (पा. सू. ३।१।८९) 'इमे वै लोकाः' इत्यस्यायमर्थः । अग्नेः प्रजापत्यात्मकत्वेन तत्पृथिव्यादिलोकात्मनोक्तत्वात्तस्य बहिर्देशे शोकोत्सर्जनेन 'लोकेभ्यः' एव शोको 'बहिर्द्धा' भवतीति । 'बाह्येनैवाग्निम्' इत्यनेनाग्निप्रदेशव्यतिरिक्तदेशे विधानाद्वेदिमध्येऽपि स्यादित्यत आह—बहिर्वेदीति । वेद्या बहिः "अपपरिबहिरञ्चवः पञ्चम्या"—(पा. सू. २।१।१२।) इत्यव्ययीभावसमासः । बहिर्वेदि शोकोत्सर्गे वेद्याः कृत्स्नपृथिव्यात्मकत्वात्, तस्या बहिरेव शोक उत्सृष्टो भवतीति दर्शितम्—'इयं वै' इत्यादिना । उत्तरस्यां दिशि वक्ष्यमाणा मयुप्रभृतयः 'पशवः' अवतिष्ठन्त इति तत्र शोकनिधानाय उदङ्मुखस्तिष्ठन् उत्सृजेदित्याह—उदङ् तिष्ठन्निति ॥ ३१ ॥

उत्सर्गमन्त्रैरुपस्थानं तत्र स्वाभिमतप्रकारं देशविशेषमध्वर्योरवस्थानविशेषं च प्रदर्श्योपधानक्रमेणैव पुरुषस्य शोकं पूर्वमुत्सृजेदित्याह—पुरुषस्येति । तत्र मन्त्रविशेषं प्रदर्शयन् पादशो विभज्य व्याचष्टे—इमं मा हिंसीरिति । द्विपाद् इति—"सङ्ख्यासुपूर्वस्य"—(पा. सू. ५।४।१४०) इति पादशब्दान्त्यस्य लोपः । हिरण्य-

---

१—बहिर्वेद्युदङ् तिष्ठन्नुपतिष्ठते उत्सर्गैरिमम्मा हिंसीरिति प्रतिमंत्रम् । का. श्रौ. सू. १७ । ११८ ।

पशुं मेधमग्ने जुषस्वेति किम्पुरुषो वै मयुः किम्पुरुषमग्ने जुषस्वेत्येतत्तेन चिन्वानस्तन्वो निषीदेत्यात्मा वै तनूस्तेन चिन्वानऽआत्मानꣳ संस्कुरुष्वेत्येतन्मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तन्मयौ च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३२ ॥

( श्वा ) अथाश्वस्य । ( स्ये ) इमं मा हिꣳसीरेकशफं पशुमित्येकशफो वाऽएष पशुर्यदश्वस्तं मा हिꣳसीरित्येतत्कनिक्रदं वाजिनं वाजिनेष्विति कनिक्रदो वाऽएष वाज्यु वाजिनेषु गौरमारण्यमनु ते दिशामीति तदस्मै गौरमारण्यमनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतद्गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तद्गौरे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३३ ॥

---

इति । किम्पुरुषो वै मयुः । किम्पुरुषमग्ने जुषस्वेत्येतत् । "तेन चिन्वानस्तन्वो निषीद"–इति । आत्मा वै तनूः । तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतत् । " मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु "– ( वा. सं. १३।४७ ) इति । तन्मयौ च शुचं दधाति, यं च द्वेष्टि तस्मिंश्च॥ ३२॥

अथाश्वस्य । " इमं मा हिंसीरेकशफं पशुम् "–इति । एकशफो वाऽएष पशुः–यदश्वः । तं मा हिंसीरित्येतत् । " कनिक्रदं वाजिनं वाजिनेषु "–इति । कनिक्रदो वाऽएष वाज्यु वाजिनेषु । " गौरमारण्यमनु ते दिशामि "–इति । तदस्मै गौरमारण्यमनुदिशाति । " तेन चिन्वानस्तन्वो निषीद "–इति । तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतत् । " गौरन्ते शुगृच्छतु, यं द्विष्मस्तं ते शुगृच्छतु "- ( वा. सं. १३ । ४८ ) इति । तद् गौरे च शुचं दधाति, यं च द्वेष्टि तस्मिंश्च ॥ ३३ ॥

---

शकलैर्वा एष सहस्राक्ष इति । ' सहस्र ' शब्दो बहुत्वस्य लक्षणार्थः । हिरण्यशकलानामत्र सहस्रसङ्ख्यानामभावात् । अथवोत्तरत्र सहस्रसङ्ख्याकैर्हिरण्यशकलैः प्रोक्ष्यमाणत्वात्तदभिप्रायेण सहस्रसङ्ख्याहिरण्यशकलानां प्रकाशकत्वेनाक्षितोपचारः । आत्मा वै तनूरिति । तेनाधिष्ठितत्वादित्यर्थः । स्पष्टमन्यत् । मन्त्रस्यायमर्थः । हे अग्ने ! ' हिरण्यशकलैः ' ' सहस्राक्षो ' ' मेधाय ' ' चीयमानः ' त्वं 'पशूनां' मध्ये ' द्विपादम् ' ' इमम् ' पुरुषं ' मा हिंसीः ' यदि तव भक्ष्यापेक्षाऽस्ति, तर्हि आरण्यं किम्पुरुषम् उत्सृजामि, तेन किम्पुरुषेण आत्मानं पोषयन् संस्कुरुष्व, ते सम्बन्धिनी शुङ् मयुं प्राप्नोतु ॥ ३२ ॥

अथाश्वस्य शोकोत्सर्गमन्त्रं प्रदर्शयन् पूर्ववद् व्याचष्टे–अथेति । कनिक्रदो वा एष इति । ' एषः ' अश्वः 'कनिक्रदः' अत्यर्थं क्रन्दिता, ' वाजिनेषु ' वेगवत्सु ' वाजी ' अत्यर्थं वेगयुक्तः । ' गौरम्[1] ' सिंहम् । स्पष्टार्थमन्यत् ॥ ३३ ॥

---

१–महीधरस्तु ' गौरं ' गौरवर्णं मृगमिति व्याचख्यौ ।

( श्रा ) अथ गोः । ( रि ) इमꣳ साहस्रꣳ शतधारमुत्समिति साहस्रो वाऽएष शतधारऽउत्सो यद्गौर्व्यच्यमानꣳ सरिरस्य मध्यऽइतीमे वै लोकाः सरिरमुपजीव्यमानमेषु लोकेष्वित्येतद्घृतं दुहानामदितिं जनायेति घृतं वाऽएषाऽदितिर्जनाय दुहेऽग्ने मा हिꣳसीः परमे व्योमन्नितीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतद्गवयमारण्यमनु ते दिशामीति तदस्मै गवयमारण्यमनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वानऽआत्मानꣳ संस्कुरुष्वेत्येतद्गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तद्गवये च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३४ ॥

( श्रा ) अथावेः । ( रि ) इममूर्णायुमित्यूर्णाबलमित्येतद्वरुणस्य नाभिमिति वारुणो ह्यविस्त्वचं पशूनां द्विपदां चतुष्पदामित्युभयेषाꣳ ह्येष पशूनां त्वग्द्विपदां च चतुष्पदां च त्वष्टुः प्रजानां प्रथमं जनित्रमित्येतद्ध

---

अथ गोः । "इमं साहस्रं शतधारमुत्सम्"–इति । साहस्रो वाऽएष शतधार उत्सो–यद्गौः । "व्यच्यमानं सरिरस्य मध्ये"–इति । इमे वै लोकाः सरिरम् । उपजीव्यमानमेषु लोकेष्वित्येतत् । "घृतं दुहानामदितिं जनाय"–इति । घृतं वाऽएषाऽदितिर्जनाय दुहे । "अग्ने मा हिंसीः परमे व्योमन्"–इति । इमे वै लोकाः परमं व्योम । एषु लोकेष्वेनं मा हिंसीरित्येतत् । "गवयमारण्यमनु ते दिशामि"–इति । तदस्मै गवयमारण्यमनुदिशति । "तेन चिन्वानस्तन्वो निषीद"–इति । तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतत् । "गवयं ते शुगृच्छतु, यं द्विष्मस्तं ते शुगृच्छतु"–( वा. सं. १३।४९ ) इति । तद् गवये च शुचं दधाति । यं च द्वेष्टि तस्मिंश्च ॥ ३४ ॥

अथावेः । "इममूर्णायुम्"–इति । ऊर्णाबलमित्येतत् । "वरुणस्य नाभिम्"–इति । वारुणो ह्यविः । "त्वचं पशूनां द्विपदां चतुष्पदाम्"–इति । उभयेषां हैष पशूनां त्वग्–

---

अथ गोः शोकोत्सर्गमन्त्रं प्रदर्शयन् व्याचष्टे–अथ गोरिति । साहस्रो वा इति । 'गौः' इति 'यत्', 'एषः' 'साहस्रः' सहस्राक्षः, सजातीयधेनुद्वारा शतसङ्ख्याकक्षीरधारासम्पन्नः, अत एव 'उत्सः' कूपः ( निघं. ३।२३ । १० ) । तस्यानेकजलधारावाहित्वादस्य चानेकक्षीरधारावाहित्वादुत्सत्वोपचारः । घृतं वा एषेति । 'अदितिः' अखण्डनीया अदीना वा 'एषा' गौः 'जनाय' 'घृतम्' 'दुहे', क्षीरादिद्वारा तस्य सम्पादनात् । अत्रापि सजातीयधेनुद्वारा घृतदोहनम्, तदपेक्षं वाऽत्र स्त्रीलिङ्गम् । 'दुहे' इति–"लोपस्त आत्मनेपदेषु"–( पा. सू. ७।१।४१ । ) इति तकारलोपः । स्पष्टमन्यत् ॥ ३४ ॥

अथावेः शोकोत्सर्गमन्त्रं प्रदर्शयन् व्याचष्टे–उभयेषां हैष इति । 'एषः' अविरूपः पशुः 'उभयेषाम्' 'पशूनाम्' 'द्विपदाम्' मनुष्याणां 'चतुष्पदाम्' अश्वादीनां च 'त्वग्'–रूपं भवति । स्वकीयत्वचा तेषा-

त्वष्टा प्रथमॐ रूपं विचकाराग्ने मा हिॐसीः परमे व्योमन्निति इमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिॐसीरित्येतदुष्ट्रमारण्यमनु ते दिशामीति तदस्माऽउष्ट्रमारण्यमनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वानऽआत्मानॐ संस्कुरुष्वेत्येतदुष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तदुष्ट्रे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३९ ॥

( श्रा ) अथाजस्य । ( स्या ) अजो ह्यग्नेरजनिष्ट शोकादिति यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत सोऽअपश्यज्जनितारमग्रऽइति प्रजापतिर्वै जनिता सोऽपश्यत्प्रजापतिमग्रऽइत्येतत्तेन देवा देवतामग्रमायन्निति वाग्वाऽअजो वाचो वै देवा देवतामग्रऽआयंस्तेन रोहमायन्नुप मेध्यासऽइति स्वर्गो वै लोको रोहस्तेन स्वर्गं लोकमायन्नुप मेध्यासऽइत्ये-

---

द्विपदां च चतुष्पदां च । " त्वष्टुः प्रजानां प्रथमं जनित्रम् "–इति । एतद्ध त्वष्टा प्रथमं रूपं विचकार । " अग्ने मा हिंसीः परमे व्योमन् "–इति । इमे वै लोकाः परमं व्योम । एषु लोकेष्वेनं मा हिंसीरित्येतत् । " उष्ट्रमारण्यमनु ते दिशामि "–इति । तदस्माऽउष्ट्रमारण्यमनुदिशति । " तेन चिन्वानस्तन्वो निषीद "–इति । तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतत् । " उष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु "–( वा० सं० १३ । ५० ) इति । तदुष्ट्रे च शुचं दधाति । यं च द्वेष्टि तस्मिंश्च ॥ ३९ ॥

अथाजस्य । " अजो ह्यग्नेरजनिष्ट शोकात् "–इति । यद्वै प्रजापतेः शोकादजायत–तदग्नेः शोकादजायत । " सोऽअपश्यज्जनितारमग्रे"–इति । प्रजापतिर्वै जनिता । सोऽपश्यत्प्रजापतिमग्रऽइत्येतत् । " तेन देवा देवतामग्रमायन् "–इति । वाग्वाऽअजः । वाचो वै देवा देवतामग्र आयन् । " तेन रोहमायन्नुप मेध्यासः "–इति । स्वर्गो वै लोको रोहः, तेन स्वर्गं लोकमायन् उप मेध्यास इत्येतत् । "शरभमारण्यमनु ते दिशामि"–इति । तदस्मै शरभमारण्य-

---

माच्छादनात् । मनुष्यास्तावच्छीतनिवारणायाविजेन कम्बलेन शरीरमाच्छादयन्ति । चतुष्पादोऽश्वा बलीवर्दाश्च स्वभारवहने मार्दवाय पृष्ठे कम्बलेनाच्छादिता भवन्ति । एतद्धेति । 'त्वष्टा' प्रजानां निर्माता देवः । प्रजानां मध्ये 'एतद्'–' रूपम्' अविरूपं पशुं 'प्रथमम्' ' विचकार ' उत्पादितवान् । अत उक्तं ' त्वष्टुः '–इति । विशदार्थमन्यत् ॥ ३९ ॥

अथाजस्य मन्त्रं दर्शयन्व्याचष्टे–अथेति । यद्वा इति । ' प्रजापतेः ' ' शोकादजायत ' इति यत्, तेन ' अग्नेः ' एव ' शोकादजायत ' तस्य तदात्मकत्वात् । अत एव प्रागुक्तम्–" अग्निर्वा एषोऽग्नेरध्यजायत "–( श. प. ७ । ५ । २ । २१ ) इति । प्रजापतिर्वा इति । सर्वोत्पादकत्वात् 'प्रजापतिर्जनिता' खलु ' सः ' आसीऽजः प्राक् ' प्रजापतिम् ' ' अपश्यत् ' । अत उक्तम्–' सोऽअपश्यद् ' इति । " प्रकृत्याऽन्तःपादमव्यपरे "–( पा. सू. ६ । १ । ११५ ) इति प्रकृतिभावात्–" एङः पदान्तादति "–( पा. सू. ६ । १ । १०९ ) ...

तच्छरभमारण्यमनु ते दिशामीति तदस्मै शरभमारण्यमनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वानऽआत्मानꣳ संस्कुरुष्वेत्येतच्छरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तच्छरभे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३६ ॥

तदाहुः । ( यां ) यां वै तत्प्रजापतिरेतेषां पशूनाꣳ शुचं पाप्मानमपाहंस्तऽएते पञ्च पशवोऽभवंस्तऽएतऽउत्क्रान्तमेधाऽअमेध्याऽअयज्ञियास्तेषां ब्राह्मणो नाश्नीयात्तानेतस्यां दिशि दधाति तस्मादेतस्यां दिशि पर्ज्जन्यो न वर्षुको यत्रैते भवन्ति ॥ ३७ ॥

---

मनुदिशति । " तेन चिन्वानस्तन्वो निषीद "–इति । तेन चिन्वान आत्मानं संस्कुरुष्वेत्येतत् । " शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु "–( वा० सं० १३ । ५१ ) इति । तच्छरभे च शुचं दधाति, यं च द्वेष्टि–तस्मिंश्च ॥ ३६ ॥

तदाहुः–यां वै तत्प्रजापतिरेतेषां पशूनां शुचं पाप्मानमपाहन्–तऽएते पञ्च पशवोऽभवन् । तऽएतऽउत्क्रान्तमेधाः, अमेध्याः, अयज्ञियाः । तेषां ब्राह्मणो नाश्नीयात् । तानेतस्यां दिशि दधाति । तस्मादेतस्यां दिशि पर्जन्यो न वर्षुको यत्रैते भवन्ति ॥ ३७ ॥

---

१ । १०९ ) इति पूर्वरूपत्वं न भवति । तेन देवा इति । अजस्य वागात्मकत्वं तज्जन्यत्वात् । तत्पुनः प्रागुक्तम्–" वाचोऽजम् "–(श.प.७।५।२।६) इति । 'देवाः' खलु 'अग्रे' वाचमिमामाश्रित्य देवत्वमाप्नुवन् । 'वाचः' इति "ल्यब्लोपे पञ्चमी" ( पा. सू. १ । ४ । ३१ । वा. १ ) । स्तोत्रशस्त्रादिरूपया वाचा यज्ञनिष्पत्तेर्यज्ञस्य च देवत्वप्राप्तिहेतुत्वाद्वाचमाश्रित्य देवत्वं प्राप्नुवन्नित्यर्थः । उप मेध्यास इति । मेधार्हाः यज्ञार्हा इत्यर्थः । " आजसेरसुक् "–( पा. सू. ७ । १ । ५० ) इत्यसुगागमः । 'शरभो' नाम सिंहघातकः कश्चिन्मृगविशेषः । स्पष्टमन्यत् ॥ ३६ ॥

अथानुदेश्यानां मयुप्रभृतीनां पशूनां शोकादेवोत्पत्तिं ब्राह्मणस्य तदभक्ष्यतां च दर्शयन् दिग्विशेषे तेषां निधानमाह–तदाहुरिति । 'तत्' तदा पश्चालम्भानन्तरं 'प्रजापतिरेतेषाम्' पुरुषादीनां 'पशूनाम्' 'यां' 'शुचम्' पशुपापरूपामपहतवान् । सैव 'एते' मयुप्रभृतयः 'पञ्च पशवोऽभवन्' इति । 'तत्' तत्र पशुविषये वेदविद आहुः । अतः 'ते' पशवः 'उत्क्रान्तमेधाः' तस्यैवार्थप्रदर्शनम्–'अमेध्या' इति । एतस्यैव विवरणम्–'अयज्ञियाः' इत्यपि । अतश्च 'तेषाम्' मध्ये कमपि पशुं 'ब्राह्मणो नाश्नीयात्' तथाविधाननाद्यान्पशून् 'एतस्याम्' 'दिशि,' 'एतस्याम्' इत्यभिनयेनोत्तरदिशो निर्देशः, तत्र 'निदधाति'। 'तस्मादेतस्याम्' उत्तरस्यां दिशि 'पर्जन्यो' न वर्षति 'यत्रैते' पशवोऽवतिष्ठन्त इति कृत्वेत्यर्थः । उत्तरस्यां दिशि क्वचिन्मरुभूमौ पर्जन्यो न वर्षतीति प्रकृता मृगा अपि तत्रैव प्रचुरा इति सिद्धम् ॥ ३७ ॥

प्रत्येत्याग्निमुपतिष्ठते । ( त॰ ) एतद्वाऽएतदयथायथं करोति यदग्नौ सामिचिते बहिर्व्वेद्येति तस्माऽएवैतन्निह्नुतेऽहिᳬसायाऽआग्नेय्याऽग्नयऽएवैतन्निह्नुते गायत्र्या गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्माऽएतन्निह्नुतेऽनिरुक्तया सर्व्वं वा ऽअनिरुक्तᳬ सर्व्वेणैवास्माऽएतन्निह्नुते यविष्ठवत्यैतद्धास्य प्रियं धाम यद्यविष्ठ ऽइति यद्वै जात ऽइदᳬ सर्व्वमयुवत तस्माद्यविष्ठः ॥ ३८ ॥

( स्त्वं ) त्वं यविष्ठ दाशुष ऽइति । यजमानो वै दाश्वान्नॄः पाहीति मनुष्या

---

प्रत्येत्याग्निमुपतिष्ठते । एतद्वाऽएतदयथायथं करोति—यदग्नौ सामिचिते बहिर्वेद्येति । तस्माऽएवैतन्निह्नुतेऽहिंसायै । आग्नेय्या । अग्नयऽएवैतन्निह्नुते । गायत्र्या । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्माऽएतन्निह्नुते । अनिरुक्तया । सर्वं वाऽअनिरुक्तम् । सर्वेणैवास्माऽएतन्निह्नुते । यविष्ठवत्या । एतद्धास्य प्रियं धाम—यद्यविष्ठ इति । यद्वै जात इदं सर्वमयुवत । तस्माद्यविष्ठः ॥ ३८ ॥

" त्वं यविष्ठ दाशुषः "—इति । यजमानो वै दाश्वान् । " नॄः पाहि "—इति । मनुष्या

---

उपस्थानानन्तरं पुनरग्निसमीपमागत्योपतिष्ठत इत्याह—प्रत्येत्येति । तत्र कारणं प्रतिजानीते—एतद्वा इति । तदेवाह—एतदिति । ' अग्नौ ' ' सामिचिते ' अर्द्धचिते ' बहिर्वेद्येति ' इति यत्, एतेन तत्कर्म ' अयथायथम् ' यथास्वं यथायथम्, यथाक्रमं न भवतीत्यर्थः । तथा कृतवान्भवति । अत उपस्थानेनाहिंसार्थं ' तस्मै ' अग्नये ' एतत् ' निह्नवनं करोति, निह्नवनमपनयः । बहिर्वेदिगमननिबन्धनमपराधं परिमार्ष्टीत्यर्थः । उपस्थानमन्त्र आग्नेयो गायत्रोऽनिरुक्तो यविष्ठशब्दयुक्तश्च भवेदित्याह—आग्नेय्येत्यादिना । अग्नेर्गायत्रत्वं षष्ठकाण्डे (श.प.६।१।१।१९) प्रदर्शितम् । अनिरुक्तयेति । अविस्पष्टदेवतया, यत्र देवताविशेषवाचकं पदं नास्ति तद् ' अनिरुक्तम् ' । यविष्ठशब्दस्तु गुणवचनो न पुनरिन्द्रादिशब्दवत् कस्यचिद्देवताविशेषस्य वाचकः । अनिरुक्तत्वादेवास्याग्नेयत्वम् । अनिरुक्तो मन्त्र आग्नेयः प्राजापत्यो वा भवतीत्यनिरुक्तस्य सर्वत्वं साधारण्यात्, तत्पुनर्देवताविशेषाप्रतिपादकत्वात् । एतद्धेति । ' अस्य ' अग्नेः ' यविष्ठ ' इति ' यत् ' ' एतत् ' पदं ' प्रियं धाम ' नामधेयम् । अथाग्नौ यविष्ठपदप्रवृत्तिनिमित्तं दर्शयति—यद्वा इति । यतोऽयमग्निर्विराड्रूपत्वाद् ' इदं सर्वम् ' कृत्स्नमपि जगद् ' अयुवत ' मिश्रितवान् व्याप्तवानित्यर्थः । ' तस्माद् ' असावग्निः ' यविष्ठः ' । ' अयुवत ' इति " यु मिश्रणामिश्रणयोः "—( धा. पा. अ. प. २३ ) इत्येतस्य लङि, व्यत्ययेन ( पा. सू. ३ । १ । ८९ । ) शब्विकरणे रूपम् । ' यविष्ठ ' इति " यु मिश्रणे "—( धा. पा. अ. प. २३ ) तस्य पचाद्यचि ( पा. सू. ३ । १ । १३४ । ) यवशब्दात् ( पा. सू. ५ । ३ । ५५ ) इष्ठन्प्रत्यये रूपम् । इष्ठन्प्रत्ययस्य तद्धितत्वात्तद्धितानां च प्रातिपदिकादित्यधिकारात्प्रातिपदिकात्स्वाद्युत्पत्तेः । इदं सर्वमयुवत तस्माद्यविष्ठ इत्यर्थप्रदर्शनमात्रे तात्पर्यं, युधातोरिष्ठनि यविष्ठशब्द इति प्रतिपाद्यते ॥ ३८ ॥

मन्त्रं व्याचष्टे—त्वं यविष्ठेति । हविरादेर्दातृत्वाद् ' यजमानो ' ' दाश्वान् ' " दाश्ट दाने "—

---

१—एत्य च त्वं यविष्ठेति चित्योपस्थानम् । का. श्रौ. सू. । १७ । १२३ ।

वै नुरः शृणुधी गिरऽइति शृणु नऽ इमाᳬं स्तुतिमित्येतद्रक्षा तोकमुत त्मनेति प्रजा वै तोकᳬं रक्ष प्रजां चात्मानं चेत्येतत् ॥ ३९ ॥

( दा ) आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्याऽउपदधाति । ( त्या ) आपऽएता यदपस्याऽअथ वाऽएतेभ्यः पशुभ्यऽआपऽउत्क्रान्ता भवन्ति तद्यदपस्याऽउपदधात्येष्वेवैतत्पशुष्वपो दधात्यनन्तर्हिताः पशुभ्यऽउपदधात्यनन्तर्हितास्तत्पशुभ्योऽपो दधाति पञ्चपञ्चोपदधाति पञ्च ह्येते पशवः सर्वतऽउपदधाति सर्वतऽ एवैष्वेतदपो दधाति ॥ ४० ॥

---

वै नरः । "शृणुधी गिरः"—इति । शृणु न इमां स्तुतिमित्येतत् । "रक्षा तोकमुत त्मना"—( वा. सं. १३ । ५२ ) इति । प्रजा वै तोकम् । रक्ष प्रजां चात्मानं चेत्येतत् ॥ ३९ ॥

### अथ पञ्चदशापस्येष्टकोपधानम्
### पञ्चच्छन्दस्येष्टकोपधानञ्च ।

आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्या उपदधाति । आप एताः—यदपस्याः । अथ वाऽएतेभ्यः पशुभ्य आप उत्क्रान्ता भवन्ति । तद् यदपस्या उपदधाति—एष्वेवैतत्पशुष्वपो दधाति । अनन्तर्हिताः पशुभ्य उपदधाति । अनन्तर्हितास्तत्पशुभ्योऽपो दधाति । पञ्च पञ्चोपदधाति । पञ्च ह्येते पशवः । सर्वत उपदधाति । सर्वत एवैष्वेतदपो दधाति ॥ ४० ॥

---

( धा. पां. भ्वा. उ. ९०८ ) इत्यस्मात् "दाश्वान्साह्वान्" इत्यादिना ( पा. सू. ३ । २ । १०९ ) 'दाश्वान्'—शब्दो निपातितः । नॄः पाहीति । "नॄन्पे"—( पा. सू. ८ । ३ । १० ) इति नकारस्य रुः । "अत्रानुनासिकः पूर्वस्य तु वा"—( पा. सू. ८ । ३ । २ । ) इत्यनुनासिकादेशः । शृणुधीति । "श्रु-शृ-णु-पॄ-कृ-वृभ्यश्छन्दसि"—( पा. सू. ६ । ४ । १०२ । ) इति हेर्धिरादेशः । रक्षा तोकामिति । 'रक्षा' इति "द्व्यचोऽतस्तिङः"—( पा. सू. ६ । ३ । १३५ ) इति दीर्घः । त्मनेति । "मन्त्रेष्वाङ्यादेरात्मनः" ( पा. सू. ६ । ४ । १४१ ) इति आदिलोपः । हे यविष्ठ ! अग्ने त्वं 'दाशुषो' यजमानस्य, 'नॄन्' मनुष्यान्पाहि । 'नः' अस्माकम् 'गिरः' स्तुतिरूपा वाचः 'शृणु' । न केवलं यजमानसम्बन्धिमनुष्यपालनं त्वया कार्यम् । अपि तु आत्मना सहितं 'तोकम्' प्रजां सन्ततिम् ( निघं. २ । २ । २ ) 'रक्ष' इति मन्त्रार्थः ॥ ३९ ॥

उपस्थानानन्तरमग्निं पश्चाद्भागेनारुह्य स्वयमातृण्णां प्रदक्षिणीकृत्य गत्वा अपस्याख्या इष्टका उपदध्यादित्याह—आरुह्याग्निमिति[1] । अपस्योपधाने प्रयोजनं दर्शयितुं तावदेतासामबात्मकत्वमाह—आप एता इति । तत्प्रयोजनमाह—अथ वा इति । 'अथ' खलु आलम्भसमये 'एतेभ्यः' पुरुषादिभ्यः 'पशुभ्य आप उत्क्रान्ता भवन्ति' । अतश्चापस्यानामुपधाने तासामबात्मकत्वादेतेषु 'पशुष्वेवापः' निहितवान्भवति । तासां पशुशिरःस्वव्यवधानेनोपधानमाह—अनन्तर्हिता इति । एकैकस्मिन्प्रदेशे पञ्च पञ्चोपदध्यादित्याह—पञ्च—पञ्चेति । पञ्च पञ्च सर्वासु दिक्षूपधेया इत्याह—सर्वत इति ॥ ४० ॥

---

१—अपरेण स्वयमातृण्णामेत्यापस्याः पंच पंचानूकतिष्वपां त्वेमन्निति प्रतिमंत्रम् । का. श्रौ. सू. १७ । १२४ ।

तद्याः पुञ्चदश पूर्व्वाः । (स्तु) ता ऽअपुस्या व्वज्रो वाऽआपो व्वज्रः पञ्च-दशस्तुस्माद्येनापो यन्त्युपैव तुत्र पाप्मानं घ्नन्ति व्वज्रो हैव तस्यार्धस्य पाप्मानमुपहन्ति तुस्माद्वर्षत्यप्रावृतो व्व्रजेदयं मे व्वज्रः पाप्मान-मुपहनदिति ॥ ४१ ॥

( त्यु ) अथ याः पञ्चोत्तराः । ( स्तु ) ताश्छन्दुस्याः पशवो वै छन्दा᳘सि स्युन्नं पशवोऽन्नमु पशोर्मा᳘समुथ वाऽएतेभ्यः पशुभ्यो मा᳘सान्यु-त्क्रान्तानि भवन्ति तद्युच्छन्दुस्या ऽउपदधात्येष्वेवैतत्पशुषु मा᳘सानि दधात्युनन्तर्हिताः पशुभ्य ऽउपदधात्युनन्तर्हितानि तुत्पशुभ्यो मा᳘सानि दधात्युन्तरा ऽअपुस्या भुवन्ति बाह्याश्छन्दुस्या ऽअुन्तरा ह्यापो-बाह्यानि मा᳘सानि ॥ ४२ ॥

---

तद्याः पञ्चदश पूर्वाः । ता अपस्याः । वज्रो वाऽआपः । वज्रः पञ्चदशः । तस्माद्येनापो यन्ति-अपैव तत्र पाप्मानं घ्नन्ति । वज्रो हैव तस्यार्धस्य पाप्मानमपहन्ति । तस्माद्वर्षत्यप्रावृतो व्रजेत् । अयं मे वज्रः पाप्मानमपहनादिति ॥ ४१ ॥

अथ याः पञ्चोत्तराः—ताश्छन्दस्याः । पशवो वै छन्दांसि । अन्नं पशवः । अन्नमु पशोर्मांसम् । अथ वाऽएतेभ्यः पशुभ्यो मांसान्युत्क्रान्तानि भवन्ति । तद्यच्छन्दस्या उपदधाति—एष्वेवैतत्पशुषु मांसानि दधाति । अनन्तर्हिताः पशुभ्य उपदधाति । अनन्तर्हितानि तत्पशुभ्यो मांसानि दधाति । अन्तरा अपस्या भवन्ति, बाह्याश्छन्दस्याः । अन्तरा ह्यापो, बाह्यानि मांसानि ॥ ४२ ॥

---

प्रतिदिशं पञ्चानामुपधाने विंशतिः सम्पद्यन्ते । तत्र याः पञ्चदश पूर्वा इष्टकास्ता अपस्याख्या भवन्तीत्याह—तद्या इति । पञ्चदशसङ्ख्यानामेवापस्यात्वमुपपादयति—वज्रो वा इत्यादिना । अपां वज्रत्वं नैशित्यात्पर्यन्त-सेवनात् । तदेव श्रूयते—" तस्मादिन्द्रोऽबिभेत्स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रं सिक्त्वा प्रायच्छ-देतेन जहीति " ( तै. सं. २ । ५ । २ ) इति । पञ्चदशस्य वज्रात्मकत्वं वीर्यवत्त्वात् । तत्पुनः प्रजापतेर्वीर्य-वत्प्रदेशादुत्पत्तेः । अत एव श्रूयते—" उरसो बाहुभ्यां पञ्चदशं निरमिमीत " इत्यारभ्य " तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त " ( तै. सं. ७ । १ । १ ) इति । यत एवम्, 'तस्माद्येन' मार्गेण 'आपो यन्ति' ' तत्र पाप्मानमपघ्नन्त्येव ' अपां वज्रत्वात् । ' वज्र एव ' खलु 'तस्य' भागस्य ' पाप्मानमपहन्ति ' । ' तस्मात् ' पापहननादेव ' वर्षति ' पर्जन्ये ' अयं वज्रः ' ' मे पाप्मानम् ' अपहन्त्विति 'अप्रावृत' एव ' व्रजेत् '॥४१॥

अपस्याभ्यः पञ्चदशभ्य उत्तराः पञ्चेष्टका विद्यन्ते ताश्छन्दस्या इत्याह—अथेति । छन्दस्यानामुपधानेन पशुषूत्क्रान्तमांसप्रतिविधानं भवतीत्याह—पशवो वा इत्यादिना । पशूनां छन्दस्त्वं यज्ञसाधनत्वात्, अथ वा जगत्यानीतत्वात्, एतत्तैत्तिरीयके श्रूयते—" जगत्युदपतच्चतुर्दशाक्षरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेतां सा पशुभिश्च दीक्षया चागच्छत् "—( तै. सं ६ । १ । ६ ) इति । ' अन्नमु पशोर्मांसम् ' इत्य-नेन ' अन्नं पशवः ' इत्येतदुपपादितम् । एवञ्च सति छन्दस्यानां पश्वात्मकत्वेन मांसरूपत्वात्, आलम्भावसरे

---

१-श. प. १।१।१।१७।

तुदाहुः । ( युं ) युदिमाऽआपऽएतानि माᳬंसान्यथ क्व त्वक्क्व लोमे-त्युन्नं व्वाव पुशोस्त्वगुन्नं लोम तद्युच्छन्दुस्याऽउपदुधाति सैव पुशोस्त्वक्त-ल्लोमाथो यान्यमूुन्युखायामजलोमानि तानि लोमानि बाह्यखा भवत्युन्त-राणि पशुशीर्षाणि बाह्यानि हि लोमान्युन्तरऽआत्मा यदीतरेण यदीतरेणेति ह स्माह शाण्डिल्यः सुर्व्वानेव व्वयं कृत्स्नान्पशून्त्संस्कुर्मऽइति ॥ ४३ ॥

युद्वेवापस्याऽ उपदुधाति । प्रजापतेर्व्विस्रस्ताद्वापऽ आयंस्ताखितास्व-विशुद्यदविशत्तुस्माद्विᳬंशतिस्ताऽअस्याङ्गुलिभ्योऽध्यस्रवन्तन्तो वाऽ-अङ्गुलयोऽन्ततुऽएवास्मात्ताऽआपऽआयन् ॥ ४४ ॥

---

तदाहुः—यदिमा आपः, एतानि मांसानि—अथ क्व त्वक्, क्व लोमेति । अन्नं वाव पशोस्त्वक्, अन्नं लोम । तद्यच्छन्दस्या उपदधाति । सैव पशोस्त्वक् । तल्लोम । अथो यान्यमून्युखायामजलोमानि । तानि लोमानि । बाह्योखा भवति, अन्तराणि पशुशीर्षाणि । बाह्यानि हि लोमानि, अन्तर आत्मा । यदीतरेण यदीतरणेति ह स्माह शाण्डिल्यः । सर्वानेव वयं कृत्स्नान्पशून्त्संस्कुर्म इति ॥ ४३ ॥

यद्वेवापस्या उपदधाति—प्रजापतेर्विस्रस्तादाप आयन् । तास्वितास्वविशत् । यदविशत्—तस्मा-द्विंशतिः । ता अस्याङ्गुलिभ्योऽध्यस्रवन् । अन्तो वाऽअङ्गुलयः । अन्तत एवास्मात्ता आप आयन् ॥ ४४ ॥

---

उत्क्रान्तानि मांसानि पुनरेतेषु प्रतिनिहितवान्भवति । तासामप्यपस्यावदव्यवधानेनोपधानमाह—अनन्तर्हिता-नीति । अपामुदरमध्यवर्तित्वेनान्तरत्वान्मांसानां ततो बाह्यत्वम् । तथैवापस्या अन्तराः, छन्दस्या बाह्या भवेयुरित्याह—अन्तरा अपस्या इति । उक्तप्रकारेण पशुष्वापो मांसानि च सम्पादितानि नैतावता तेषां कार्त्स्न्यं सम्पद्यते, किं पुनस्ततोऽपि बाह्ययोस्त्वग्लोम्नोरपि कारणत्वेनान्नत्वात्, छन्दस्यानां चान्नात्मकत्वस्योक्तत्वात्तदुप-धानेनैव तयोरप्युपधानं सम्पादितमिति तत्रोत्तरं दर्शितम्—अन्नं वाव पशोरिति ॥

प्रकारान्तरेण पशूनां लोमसम्पत्तिमाह—अथो इति । कृष्णाजिनलोमानुबद्धया मृदोखाया निर्माणात्, उखायां यानि चाजलोमानि सन्ति तान्येव पशूनां लोमानि भवन्ति । लोमाधारत्वेनोखाया अभिधाना-दुखा लोमानीत्यभिप्रेत्य 'बाह्योखा भवति' इत्यादिनोक्तस्यैवार्थस्योपपादनम् । त्वग्लोमसम्पादने उक्तं पक्ष-द्वयमप्यभिमतमित्याह—यदीति । 'यदीतरेण' अन्येन प्रकारेण तत्सम्पादनं भवति, तर्हि तथैवास्तु, अथवा 'इतरेण प्रकारान्तरेण यदि भवति, तर्हि तथैवास्त्वित्यन्योन्यापेक्षया उभयोरपीतरत्वम् । अपस्याद्युपधनेनान्नादि-सम्पादनं केन विवक्षितमिति तत्राह—इति ह स्माह शाण्डिल्य इति । तेनापि केनाभिप्रायेणैवमुक्तमित्यत आह—सर्वानेवेति । 'सर्वानेव पशून्' 'कृत्स्नान्' कार्त्स्न्येन 'संस्कुर्मः' सर्वावयवसम्पादनेन समृद्धान् कुर्म इत्यभिप्रायेण तथोक्तमित्यर्थः ॥ ४२ ॥ ४३ ॥

प्रकारान्तरेणाप्यपस्यानामुपधानं प्रशंसति—यद्वेवेति । विस्रस्तावयवात् 'प्रजापतेः' 'आप आयन्' निर्गताः । ततः 'तासु' निर्गतासु 'अविशत्' उपविष्टवान् अपां निर्गमने दौर्बल्याद्गन्तुमक्षमस्तथैवोपविष्टवा-

( न्त्स ) स यः स प्रजापतिर्व्यस्रँ्सत । ( तायु ) अयमेव स योऽयमग्निश्चीयतेऽथ या ऽअस्मात्ता ऽआप ऽआयन्नेतास्ता ऽअपस्यास्तद्यदेता ऽउपदधाति या ऽएवास्मात्ता ऽआप ऽआयंस्ता ऽअस्मिन्नेतत्प्रतिदधाति तस्मादेता ऽअत्रोपदधाति ॥ ४५ ॥

( त्य ) अपां त्वेमन्त्सादयामीति । व्वायुर्वाऽअपामेम यदा ह्येवैषऽइतश्चेतश्च व्वात्यथापो यन्ति व्वायौ ताँ सादयति ॥ ४६ ॥

( त्य ) अपां त्वोद्मन्त्सादयामीति । ( त्यो ) ओषधयो वाऽअपामोद्म यत्र ह्याप ऽउन्दन्त्यस्तिष्ठन्ति तदोषधयो जायन्तऽओषधिषु ताँ सादयति ॥ ४७ ॥

---

स यः स प्रजापतिर्व्यस्रंसत–अयमेव सः–योऽयमग्निश्चीयते । अथ या अस्मात्ता आप आयन्–एतास्ता अपस्याः । तद्यदेता उपदधाति–या एवास्मात्ता आप आयन्–ता अस्मिन्नेतत्प्रतिदधाति। तस्मादेता अत्रोपदधाति ॥ ४५ ॥

" अपां त्वेमन्त्सादयामि "–इति ( १ ) । वायुर्वाऽअपामेम । यदा ह्येवैष इतश्चेतश्च वाति–अथापो यन्ति । वायौ तां सादयति ॥ ४६ ॥

" अपां त्वोद्मन्त्सादयामि "–इति ( २ ) । ओषधयो वाऽअपामोद्म । यत्र ह्याप उन्दन्त्यस्तिष्ठन्ति–तदोषधयो जायन्ते । ओषधिषु तां सादयति ॥ ४७ ॥

---

नित्यर्थः । ततश्च वेशनसाधनत्वादपस्या ' विंशतिः ' सम्पन्नाः । यद्यपि " तद्याः पञ्चदश पूर्वास्ता अपस्याः " इत्युक्तम् ( श. प. ७।१।२।४१ ) । तथापि च्छन्दस्यासाहित्येनात्र विंशतिरित्युक्तम् । सर्वासां वा अपस्याशब्देनाभिधानं भूमलिङ्गात् सृष्टीरुपदधातीतिवत् । अथवा " तद्या अस्यैतेभ्यश्छन्दोभ्य आप आयन् "–इति ( श. प. ७।१।२।६१ ) वक्ष्यमाणत्वात्सर्वा अपस्या भवन्तीति । आपो निर्गमनावसरे ' अस्याङ्गुलिभ्योऽध्यस्रवन् ' । निर्गच्छन्तीनामपाम् ' अस्य ' प्रजापतेः ' अन्ततो ' निर्गमनादङ्गुलीनां चान्तत्वादिति ॥ ४४ ॥

एवमपि ' सः ' ' यः ' ' प्रजापतिर्व्यस्रंसत ' ' सोऽयमेव ' ' यः ' इदानीम् ' अग्निश्चीयते ' ' अथ ' प्रजापतेः सकाशाद् ' या आपः ' निर्गताः ' ता अपस्याः ' ततश्चैतासामत्रोपधाने ततो निर्गता अप एव ' प्रतिदधाति ' ॥ ४५ ॥

अथ क्रमेण तासामुपधाने मन्त्रान्प्रदर्शयन् व्याचष्टे–अपां त्वेमन्नित्यादिना ( का. श्रौ. सू. १७ । १२४ ) । ' यदा हि ' ' एषः ' ' वायुः ' ' इतश्चेतश्च वाति ' । तदा ' आपो यन्ति ' चलन्ति । अतश्च वायुरनेन यन्त्याप इति व्युत्पत्त्या ' एम ' । " इण् गतौ " ( धा. पा. अदा. प. ३९ ) इत्यस्माद् " अन्येभ्योऽपि दृश्यन्ते " ( पा. सू. ३ । २ । १७९ ) इति मनिन्प्रत्ययः । स च व्यत्ययेन–( पा. सू. ३ । १ । ८५ ) करणे द्रष्टव्यः । " एमन्नादिषु च्छन्दसि पररूपं वक्तव्यम् " ( पा. सू. ६ । १ । ७० । वा. १ ) इति पररूपत्वम् । यत्र हीति । ' आपो यत्र ' प्रदेशे ' उन्दन्त्यस्तिष्ठन्ति ' तत्र ' ओषधयः '

( त्य ) अपां त्वा भस्मन्त्सादयामीति । ( त्य ) अभ्रं वाऽअपां भस्माभ्रे ताᳯं सादयति ॥ ४८ ॥

(त्य) अपां त्वा ज्योतिषि सादयामीति । विद्युद्वाऽअपां ज्योतिर्विद्युति ताᳯं सादयति ॥ ४९ ॥

( त्य ) अपां त्वाऽयने सादयामीति । (ती) इयं वाऽ अपामयनमस्याᳯं ह्यापो यन्त्यस्यां ताᳯं सादयति तद्या ऽअस्यैतेभ्यो रूपेभ्यऽ आपऽआयंस्ता ऽअस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ५०

( त्य ) अर्णवे त्वा सदने सादयामीति । प्राणो वाऽअर्णवः प्राणे ताᳯं सादयति ॥ ५१ ॥

---

" अपां त्वा भस्मन्त्सादयामि "–इति ( ३ ) । अभ्रं वा अपां भस्म । अभ्रे तां सादयति ॥ ४८ ॥

" अपां त्वा ज्योतिषि सादयामि "–इति ( ४ ) । विद्युद्वाऽअपां ज्योतिः । विद्युति तां सादयति ॥ ४९ ॥

"अपां त्वाऽयने सादयामि "–इति ( ५ ) । इयं वाऽअपामयनम् । अस्यां ह्यापो यन्ति । अस्यां तां सादयति । तद्या अस्यैतेभ्यो रूपेभ्य आप आयन्–ता अस्मिन्नेतत्प्रतिदधाति । अथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५० ॥

"अर्णवे त्वा सदने सादयामि"–इति (६) । प्राणो वाऽअर्णवः । प्राणे तां सादयति ॥५१॥

---

' जायन्ते ' इत्यधिकरणव्युत्पत्त्या ' अगामोद्म ओषधयः ' । "उन्दी क्लेदने" (धा. पा. रु. प. १९) इत्यस्मात्पूर्ववन्मनिन्प्रत्ययः । छान्दसे अनुनासिकलोपे गुणे च ' ओद्मन् ' इति भवति । पूर्ववत्पररूपत्वम् । अभ्रं वा अपां भस्मेति । ' अभ्रं ' मेघः, स चाप्सु निर्गतासु निःसारत्वाद् ' अपां भस्म ' इत्युच्यते । एवं भस्म मेघः । ' भस्मन् ' इति । " सुपां सुलुक् "–( पा. सू. ७ । १ । ३९ ) इत्यादिना सप्तम्या लुक् । " न ङिसम्बुद्ध्योः "–( पा. सू. ८ । २ । ८ ) इति नलोपाभावः ॥ ४६–४९ ॥

इयं वा अपामयनमिति । सर्वा अप्यापः पृथिवीमधिष्ठायैव प्रवहन्तीति । तद्या इति । ' तत् ' तदा विस्रंसनावसरे खलु ' अस्य ' प्रजापतेः ' एतेभ्यः ' वाय्वादिभ्यो ' रूपेभ्य आपः ' निर्गताः तथाविधाः 'ताः' अप एवैतस्मिन् प्रजापतौ ' प्रतिदधाति ' । न केवलमपामेव प्रतिधानम्, अपि तु येभ्यो रूपेभ्य आपः निर्गतास्तेषामपि तदा निर्गतत्वात् तान्यपि पुनः ' अस्मिन् ' योजयति । उक्तमन्त्रसाध्योपधानाः पञ्चेष्टकाः पूर्वस्यां दिशि उपदध्यात् । एवं वक्ष्यमाणमन्त्रसाध्योपधाना अपीष्टकाः पञ्च पञ्च दक्षिणादिषु दिक्षूपधेयाः । ' प्राणो वा अर्णवः ' अर्णो जलम् ( निघं. १ । १२ । १ ) तद्वान् । ' अर्णः ' शब्दान्मत्वर्थीये वप्रत्यये " अर्णसो लोपश्च " ( पा. सू. ५।२।१०९वा. २ ) इति सकारलोपः । अर्णवत्वं च प्राणवता जलस्य पीयमानत्वादिति ॥ ५० ॥ ५१ ॥

समुद्रे त्वा सदने सादयामीति । मनो वै समुद्रो मनसो वै समुद्राद्वाचाऽभ्र्या देवास्त्रयीं विद्यां निरखनंस्तदेष श्लोकोऽभ्युक्तो ये समुद्रान्निरखनन्देवास्तीक्ष्णाभिरभ्रिभिः । सदेवोऽअद्य तद्विद्याद्यत्र निर्वपणं दधुरिति मनः समुद्रो वाक्तीक्ष्णाऽभ्रिस्त्रयी विद्या निर्वपणमेतदेष श्लोकोऽभ्युक्तो मनसि ताᳪं सादयति ॥ ९२ ॥

सरिरे त्वा सदने सादयामीति । वाग्वै सरिरं वाचि ताᳪं सादयति ॥९३॥

( त्य ) अपां त्वा क्षये सादयामीति । चक्षुर्वाऽअपां क्षयस्तत्र हि सर्वे देवापः क्षियन्ति चक्षुषि ताᳪं सादयति ॥ ९४ ॥

( त्य ) अपां त्वा सधिषि सादयामीति । श्रोत्रं वाऽअपाᳪं सधिः श्रोत्रे

---

"समुद्रे त्वा सदने सादयामि"–इति(७)।मनो वै समुद्रः । मनसो वै समुद्राद्वाचाऽभ्र्या देवास्त्रयीं विद्यां निरखनन् । तदेष श्लोकोऽभ्युक्तः–" ये समुद्रान्निरखनन्, देवास्तीक्ष्णाभिरभ्रिभिः । सदेवोऽअद्य तद्विद्याद् यत्र निर्वपणं दधुः"–इति । मनः समुद्रः, वाक्तीक्ष्णाऽभ्रिः । त्रयी विद्या निर्वपणम् । एतदेष श्लोकोऽभ्युक्तः । मनसि तां सादयति ॥ ९२ ॥

" सरिरे त्वा सदने सादयामि "–इति ( ८ ) । वाग् वै सरिरम् । वाचि तां सादयति ॥ ९३ ॥

" अपां त्वा क्षये सादयामि "–इति ( ९ ) । चक्षुर्वाऽअपां क्षयः । तत्र हि सर्वेदेवापः क्षियन्ति । चक्षुषि तां सादयति ॥ ९४ ॥

" अपां त्वा सधिषि सादयामि "–इति ( १० ) । श्रोत्रं वाऽअपां सधिः । श्रोत्रे तां साद-

---

तदेष श्लोकोऽभ्युक्त इति । 'समुद्राद्वाचाऽभ्र्या देवास्त्रयीं विद्यां निरखनन्' इत्यस्मिन्नर्थे 'एषः' वक्ष्यमाणो मन्त्रः 'अभ्युक्तः' इति प्रतिज्ञा, तत्र 'ये समुद्रात्' इत्यारभ्य 'यत्र निर्वपणं दधुः' इत्यन्तो मन्त्रः । एतस्मिन्मन्त्रे स्वयमेव प्रकृतोपयोगीनि पदानि व्याचष्टे–मनः समुद्र इति । 'समुद्रात्' इति पञ्चम्यन्तस्य पदस्यार्थो मनः । 'तीक्ष्णाभिरभ्रिभिः' इत्यस्य वागर्थ इत्याह–वाक् तीक्ष्णाऽभ्रिरिति । 'निर्वपणम्' इत्यस्य च 'त्रयी' ऋग्यजुःसामलक्षणा 'विद्या' अर्थः । पुनः 'तदेष श्लोकः' इत्युपसंहारः । अत उक्तप्रकारेण 'समुद्रो मनः' इति मनस्येव 'ताम्' इष्टकां 'सादयति' ॥ ९२ ॥

वाग्वै सरिरमिति । सरणवत्त्वेन 'वाक्' सलिलं खलु, अतः 'वाचि ताम्' सादितवान्भवति ॥ ९३ ॥
तत्र हीति । 'तत्र' चक्षुषि 'सर्वेदेवापः क्षियन्ति' निवसन्ति खलु, अतश्चक्षुरपां क्षयः ॥ ९४ ॥
अत्र 'अपां सधिः' इति 'सधिः' शब्देन स्थानमुच्यते । श्रोत्रस्यान्तरार्द्रीभावात् । एतच्च तैत्तिरीयके श्रूयते–" तस्मादार्द्रा अन्तरतः प्राणाः " ( तै. सं. ६ । २ । ११ ) इति ॥ ९५–९६ ॥

तांऽ सादयति तद्या अस्यैतेभ्यो रूपेभ्य ऽआप ऽआयंस्ता ऽअस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५५ ॥

( त्य ) अपां त्वा सदने सादयामीति । द्यौर्वाऽअपाᳫँ सदनं दिवि ह्यापः सन्ना दिवि तांऽ सादयति ॥ ५६ ॥

( त्य ) अपां त्वा सधस्थे सादयामीति । ( त्य ) अन्तरिक्षं वा अपाᳫँ सधस्थमन्तरिक्षे तांऽ सादयति ॥ ५७ ॥

( त्य ) अपां त्वा योनौ सादयामीति । समुद्रो वाऽअपां योनिः समुद्रे तांऽ सादयति ॥ ५८ ॥

( त्य ) अपां त्वा पुरीषे सादयामीति । सिकता वाऽअपां पुरीषᳫँ सिकतासु तांऽ सादयति ॥ ५९ ॥

( त्य ) अपां त्वा पाथसि सादयामीति । ( त्य ) अन्नं वाऽअपां पाथोऽन्ने

---

यति । तद्या अस्यैतेभ्यो रूपेभ्य आप आयन् । ता अस्मिन्नेतत्प्रतिदधाति । अथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५५ ॥

"अपां त्वा सदने सादयामि"–इति ( ११ ) । द्यौर्वाऽअपां सदनम् । दिवि ह्यापः सन्नाः । दिवि तां सादयति ॥ ५६ ॥

"अपां त्वा सधस्थे सादयामि"–इति ( १२ ) । अन्तरिक्षं वाऽअपां सधस्थम् । अन्तरिक्षे तां सादयति ॥ ५७ ॥

"अपां त्वा योनौ सादयामि"–इति ( १३ ) । समुद्रो वाऽअपां योनिः । समुद्रे तां सादयति ॥ ५८ ॥

"अपां त्वा पुरीषे सादयामि"–इति ( १४ ) । सिकता वाऽअपां पुरीषम् । सिकतासु तां सादयति ॥ ५९ ॥

"अपां त्वा पाथसि सादयामि"–इति ( १५ ) । अन्नं वाऽअपां पाथः । अन्ने तां साद-

---

सधस्थ इति । "सधमादयोश्छन्दसि"–( पा. सू. ६ । ३ । ९६ ) इति सहशब्दस्य सधादेशः । आपोऽस्मिन् सम्भूय तिष्ठन्तीति अन्तरिक्षमपां सधस्थम् ॥ ९७ ॥

समुद्रो वा अपां योनिरिति । समुद्रस्य सकाशादपामुत्पत्तेः 'अपां योनिः समुद्रः' ॥ ९८ ॥

सिकता वा अपां पुरीषमिति । भुक्तस्य निःसारोंऽशो लोके पुरीषशब्दवाच्यः, तद्वत्सिकतानामपि निःसारत्वादपां पुरीषत्वम् ॥ ९९ ॥

अन्नं वा इति । 'पाथः' सारांशः, अन्नस्य तत्सम्पाद्यत्वेन तत्सारत्वादन्नमपां पाथः ॥ ६० ॥

ता१ँ सादयति तद्या ऽअस्यैतेभ्यो रूपेभ्य ऽआप ऽआयंस्ता ऽअस्मिन्ने-तत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ६० ॥

गायत्रेण त्वा च्छन्दसा सादयामि । त्रैष्टुभेन त्वा च्छन्दसा सादयामि जागतेन त्वा च्छन्दसा सादयाम्यानुष्टुभेन त्वा च्छन्दसा सादयामि पाङ्क्तेन त्वा च्छन्दसा सादयामीति तद्या ऽअस्यैतेभ्यश्छन्दोभ्य ऽआप ऽआयंस्ता ऽअस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतच्छन्दा१ँसि दधाति ॥ ६१ ॥

ता ऽएता ऽअङ्गुलयः । ( स्ताः ) ताः सर्व्वत ऽउपदधाति सर्व्वतो हीमा अङ्गुलयोऽन्तेषूपदधात्यन्तेषु हीमा ऽअङ्गुलयश्चतुर्धोपदधाति चतुर्धा हीमा ऽअङ्गुलयः पञ्चपञ्चोपदधाति पञ्चपञ्च हीमा ऽअङ्गुलयो नानोपदधाति नाना हीमा ऽअङ्गुलयः सकृत्सकृत्सादयति समानं तत्करोति तस्मात्स-मानुसम्बन्धनाः ॥ ६२ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ७-४-२ ॥ ( ९. २. ) ॥

इति चतुर्थः प्रपाठकः समाप्तः ॥ ७-४ ॥ ( कण्डिकासंख्या १०० )

इति पञ्चमोऽध्यायश्च समाप्तः ॥ ७-५ ॥

अस्मिन्काण्डे कण्डिकासंख्या ॥ ३९८ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे हस्ति ( घ ) षट्नामकं सप्तमं काण्डं समाप्तम् ॥ ७ ॥

---

यति । तद् या अस्यैतेभ्यो रूपेभ्य आप आयन्—ता अस्मिन्नेतत्प्रतिदधाति । अथोऽएतान्येवा-स्मिन्नेतद्रूपाणि दधाति ॥ ६० ॥

( १ ) " गायत्रेण त्वा च्छन्दसा सादयामि, (२) त्रैष्टुभेन त्वा च्छन्दसा सादयामि, ( ३ ) जागतेन त्वा च्छन्दसा सादयामि, ( ४ ) आनुष्टुभेन त्वा च्छन्दसा सादयामि, ( ५ ) पाङ्क्तेन त्वा च्छन्दसा सादयामि "–(वा० सं० १३ । ५३) इति । तद् या अस्यैतेभ्य-श्छन्दोभ्य आप आयन्–ता अस्मिन्नेतत्प्रतिदधाति । अथोऽएतान्येवास्मिन्नेतच्छन्दांसि दधाति ॥ ६१ ॥

ता एता अङ्गुलयः । ताः सर्वत उपदधाति । सर्वतो हीमा अङ्गुलयः । अन्तेषूपदधाति । अन्तेषु

---

" गायत्रेण त्वा च्छन्दसा सादयामि "—इत्यादिभिः पञ्चभिर्मंत्रैरुत्तरस्यां दिशि च्छन्दस्या उपदध्यात् । 'गायत्रेण' इत्यादिषु स्वार्थिकोऽण् प्रत्ययः ( पा. सू. ४ । ३ । १२० ) । स्पष्टार्थमन्यत् ॥ ६१ ॥

अथासामपस्यानामङ्गुल्यात्मकत्वमाह—ता एता अंगुलय इति । " ता अस्याङ्गुलिभ्योऽध्यस्रवन् "—

हीमा अङ्गुलयः । चतुर्धोपदधाति । चतुर्धा हीमा अङ्गुलयः । पञ्च पञ्चोपदधाति । पञ्च पञ्च हीमा अङ्गुलयः । नानोपदधाति । नाना हीमा अङ्गुलयः । सकृत्सकृत्सादयति । समानं तत् करोति । तस्मात् समानसंबन्धनाः ॥ ६२ ॥

---

इत्युक्तत्वात् ( श. प. ७ । ५ । २ । ४४ ) ता अपस्या अङ्गुलय इत्यर्थः । उक्तमेवाङ्गुल्यात्मकत्वमुपपादयति—ताः सर्वत उपदधातीत्यादिना । तत्र ' नानोपदधाति ' पृथक् पृथगुपदधाति । उपधानमन्त्राः पृथक्पृथग्भवेयुरित्यर्थः । सकृदिति । पञ्चानां पञ्चानां ' सकृत् '—सादनमन्त्रः । न तूपधानमन्त्रवत् प्रतीष्टकमित्यर्थः । एवं च सति तद् इष्टकानां स्वरूपं ' समानं ' सम्बद्धं करोति । तस्मादङ्गुलयः पञ्च समानबन्धना एकस्मिन्नेव हस्ते ' पञ्च—पञ्च ' संबध्यन्त इत्यर्थः ॥ ६२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे पञ्चमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ७–५–२ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये सप्तमकाण्डे पञ्चमोऽध्यायः ॥ ( ७ । ५ )

इति श्रीसायणभाष्यसमेतं समाप्तमिदं हस्ति ( घ ) षडाख्यं सप्तमं काण्डम् ॥ ७ ॥

# अथ चितिनामकेऽष्टमकाण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

ओम् । प्राणभृतऽउपदधाति । प्राणा वै प्राणभृतः प्राणानेवैतदुपदधाति ताः प्रथमायां चिताऽउपदधाति पूर्वार्धेऽएषोऽग्नेर्यत्प्रथमा चितिः पुरस्तात्तत्प्राणान्दधाति तस्मादिमे पुरस्तात्प्राणाः ॥ १ ॥

( स्ता ) ता दशदशोपदधाति । दश वै प्राणा यदु वाऽअपि बहुकृत्वो दश-दश दशैव तत्पञ्चकृत्वो दशदशोपदधाति पञ्च वाऽएतान्पशूनुपदधाति दशदश वाऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्वेषु प्राणान्दधात्यनन्तर्हिताः पशुभ्यऽउपदधात्यनन्तर्हितांस्तत्पशुभ्यः प्राणान्दधाति सर्वतऽउपदधाति सर्वतऽएवैष्वेतत्प्राणान्दधाति ॥ २ ॥

---

अथ पञ्चाशत्प्राणभृदिष्टकोपधानम् ।

प्राणभृत उपदधाति । प्राणा वै प्राणभृतः । प्राणानेवैतदुपदधाति । ताः प्रथमायां चिताऽउपदधाति । पूर्वार्द्धे एषोऽग्नेः—यत्प्रथमा चितिः । पुरस्तात्तत्प्राणान्दधाति । तस्मादिमे पुरस्तात्प्राणाः ॥ १ ॥

ता दश-दशोपदधाति । दश वै प्राणाः । यदु वाऽअपि बहुकृत्वो दश-दश-दशैव तत् । पञ्चकृत्वो दश-दशोपदधाति । पञ्च वाऽएतान्पशूनुपदधाति । दश-दश वाऽएकैकस्मिन्पशौ प्राणाः, तदेषु सर्वेषु प्राणान्दधाति । अनन्तर्हिताः पशुभ्य उपदधाति । अनन्तर्हितांस्तत्पशुभ्यः प्राणान्दधाति । सर्वत उपदधाति, सर्वत एवैष्वेतत्प्राणान्दधाति ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

गार्हपत्यचयनादिपशुशीर्षोपस्येष्टकोपधानपर्यन्तं सप्तमे प्रतिपादितम् । अथाष्टमकाण्डे चितीनामुपधानं प्रपञ्च्यते । तत्र प्रथमचितौ प्राणभृदुपधानं विधत्ते—प्राणभृत उपदधातीति । प्राणान् बिभर्ति शरीरे धारयत्यामिरिति वा प्राणलिङ्गोपेतमन्त्रोपधानाद्वा 'प्राणभृतः' इष्टकाः । श्रुत्या तु प्रकारान्तरेणापि निर्वचनमग्रे करिष्यते । ता उपदध्यादित्यर्थः । तदेतत् प्रशंसति—प्राणा वा इति । याः प्राणभृदाख्या इष्टकास्ताश्चक्षुरादिप्राणात्मिकाः खलु । तथा च 'एतत्' एतेन प्राणभृदुपधानेन अग्नौ 'प्राणानेव' स्थापितवान्भवति । तासां प्रथमचितावुपधानं विधाय स्तौति—ताः प्रथमायामिति । प्रथमचितिरग्निशरीरस्य पूर्वो भागः । तत्र प्राणभृतामुपधानेन प्राणानेव स्थापयतीति ॥ १ ॥

ताः पञ्चाशत्सङ्ख्याकाः प्राणभृतः 'दश-दश' उपधेयाः । 'दश' सङ्ख्याकाः खलु 'प्राणाः'—सप्त शीर्षण्याः, द्वाववाञ्चौ, नाभिर्दशमीति । अतः सङ्ख्यासाम्यात् तासां प्राणरूपता सिद्धेति । यदु वा इत्यादि ।

यद्वेव प्राणभृत ऽउपदधाति । प्रजापतेर्विस्रस्तात्प्राणाऽउदक्रामन्देवता भूत्वा तानब्रवीदुप मेत प्रति मऽएतद्धत्त येन मे यूयमुदक्रमिष्टेति स वै तदन्नꣳ सृजस्व यत्ते व्वयं पश्यन्तऽउपवसामेति ते वाऽउभये सृजामहाऽइति तथेति ते प्राणाश्च प्रजापतिश्चैतदन्नमसृजन्तैताः प्राणभृतः ॥ ३ ॥

---

यद्वेव प्राणभृत उपदधाति । प्रजापतेर्विस्रस्तात्प्राणा उदक्रामन्-देवता भूत्वा । तानब्रवीत्-उप मेत, प्रति मऽएतद्धत्त-येन मे यूयमुदक्रमिष्टेति । स वै-तदन्नं सृजस्व-यत्ते वयं पश्यन्त उपवसामेति । ते वा उभये सृजामहाऽइति । तथेति । ते प्राणाश्च प्रजापतिश्चैतदन्नमसृजन्त-एताः प्राणभृतः ॥ ३ ॥

---

बहुकृत्वः बहुवारं दशसङ्ख्याका इष्टका उपधीयन्ते 'यत्' तथापि विभज्यमानाः सत्यस्ताः प्राणभृतः 'दशैव' सम्पद्यन्ते । दशसङ्ख्यातानां सङ्ख्यां विधाय स्तौति-पञ्चकृत्वो दश-दशोपदधातीति । 'पञ्चकृत्वः' पञ्चवारम् । पञ्च वा इत्यादि । पञ्चसङ्ख्याकान् हि 'पशून्' अयमध्वर्युः 'उपदधाति' तेषु एकैकस्मिन् 'पशौ' 'दश-दश' 'प्राणाः' 'तत्' तथा सति 'एषु' 'सर्वेषु' पञ्चस्वपि पशुषु प्रत्येकं दश-दश प्राणान् स्थापितवान् भवतीत्यर्थः । उपहितानां पशुशीर्षाणां समीपे तासामुपधानं विधाय स्तौति-अनन्तर्हिताः पशुभ्य इति । 'पशुभ्यः' पशुशीर्षेभ्यः सकाशाद् 'अनन्तर्हिताः' अव्यवहिताः 'तत्' तेन 'पशुभ्यः' 'अनन्तर्हितान्' अव्यवहितानेव 'प्राणान्' स्थापयति । प्राच्याद्यासु पञ्चसु दिक्षु तासामुपधानं विधत्ते-सर्वत उपदधातीति । 'सर्वतः' सर्वासु दिक्षु दश-दशोपदध्यात् । 'सर्वतः' सर्वाभ्यो दिग्भ्यः । गतमन्यत् ॥ २ ॥

प्राणभृदुपधानमनूद्य प्रकारान्तरेण स्तौति-यद्वेव प्राणभृत उपदधातीति । 'विस्रस्ताद्' विश्लिष्टावयवात् 'प्रजापतेः' सकाशात् 'प्राणाः' उत्क्रान्ताः । केन रूपेणोदक्रामन्निति तदाह-देवता भूत्वेति । अग्न्याद्यधिष्ठातृदेवतारूपं प्राप्येत्यर्थः । तानब्रवीदित्यादि । प्रजापतिः 'तान्' प्राणान् 'अब्रवीत्' । हे प्राणाः ! यूयं 'मा' माम् 'उपेत' उपगच्छत । "त्वामौ द्वितीयायाः"-इति ( पा. सू. ८ । १ । २३ ) मादेशः । 'मे' मदीयम् 'एतद्' अङ्गम् 'प्रतिधत्त' व्यवहारयोग्यं संस्कुरुत । 'येन' खलु शरीरेण विस्रस्तेन हेतुना हे प्राणाः ! 'यूयमुदक्रमिष्ट' उत्क्रान्ता अभूत । तच्छरीरं यथापूर्वं कुरुतेति सम्बन्धः । एवं प्रजापतिप्रार्थितानां प्राणानां वाक्यम्-स वै तदन्नमित्यादि । हे प्रजापते ! 'सः' तादृशस्त्वमस्मदर्थम् 'अन्नं' 'सृजस्व' 'ते' तव सम्बन्धि सृष्टम् 'यद्' अन्नम् 'पश्यन्तः' वयं तव समीपे 'उपवसामः' उपविशामेति । अथ प्रजापतिस्तानब्रवीत्; 'ते' तथाविधा 'उभये' उभयविधा अहं च यूयं च मिलिताः सन्तस्तदन्नम् 'सृजामहा इति' प्रार्थितवान् । 'ते' अपि 'तथेति' अङ्गीचक्रुः । तदनन्तरम् 'ते' 'प्राणाः' 'प्रजापतिश्च' सम्भूय प्राणभृदिष्टकारूपम् 'अन्नमसृजन्त' इत्यर्थः ॥ ३ ॥

स पुरस्तादुपदधाति । ( त्य ) अयं पुरो भुव ऽइत्यग्निर्वै पुरस्तद्यत्तमाह पुर ऽइति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्भुव ऽइत्याहाग्निर्वै भुवोऽग्नेर्हीदꣳ सर्व्वं भवति प्राणो ह्यग्निर्भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधाति ॥ ४ ॥

तस्य प्राणो भौवायन ऽइति । प्राणं तस्माद्रूपादग्नेर्निरमिमीत व्वसन्तः प्राणायन ऽइति व्वसन्तमृतुं प्राणान्निरमिमीत गायत्री व्वासन्तीति गायत्रीं

---

स पुरस्तादुपदधाति । " अयं पुरो भुवः "–इति । अग्निर्वै पुरः । तद्यत्तमाह–पुर इति । प्राञ्चं ह्यग्निमुद्धरन्ति, प्राञ्चमुपचरन्ति । अथ यद्भुव इत्याह । अग्निर्वै भुवः, अग्नेर्हीदं सर्वं भवति, प्राणो ह्यग्निर्भूत्वा पुरस्तात्तस्थौ । तदेव तद्रूपमुपदधाति ॥ ४ ॥

"तस्य प्राणो भौवायनः"–इति । प्राणं तस्माद्रूपादग्नेर्निरमिमीत ।"वसन्तः प्राणायनः"–इति । वसन्तमृतुं प्राणान्निरमिमीत । " गायत्री वासन्ती "–इति । गायत्रीं छन्दो वसन्तादतो-

---

अथ प्राच्यां दिशि प्राणभृदुपधानं समन्त्रकं विवक्ते–स पुरस्तादिति । ' पुरस्तात् ' पूर्वस्यां दिशि । सप्तम्यर्थेऽस्तातिः । अत्र " पञ्चाशदिष्टकाः, पञ्चाशद्यजूंषि " इति वचनात् खण्डशः पञ्चाशद्वा विभक्ता मन्त्राः प्रयोक्तव्या इत्येकः पक्षः । विभक्तानां मन्त्रभागानामपरिसमाप्तार्थत्वात्पञ्चैव मन्त्राः; पञ्चाशत्संख्या तु आवृत्त्या पूरणीयेति पक्षान्तरम् ।

अत्र प्रथमपक्षानुसारेण तावद्व्याख्यायते–" अयं पुरो भुवः "–इत्याद्याः पूर्वस्यां दिशि प्राणभृदुपधानमन्त्राः । "अग्निर्वै पुरः " इति पूर्वदिग्वाचिना पुरःशब्देन तत्सम्बद्धोऽग्निरत्र विवक्षित इत्यर्थः ।

एतदेवोपपादयति–तद्यत्तमाहेति । ' तत् ' तत्र ' यत् ' यस्मात् ' तम् ' अग्निम् ' पुरः ' ' इत्याह ' पुरःशब्दवाच्यतया प्रतिपादयति, तत्कारणमभिधीयत इति शेषः । प्राञ्चं हीत्यादि तत्कारणवर्णनम् । ' प्राञ्चम् ' पूर्वदिगभिमुखम् ' अग्निम् ' आहवनीयात्मना ' उद्धरन्ति ' । तथा ' प्राञ्चम् ' प्रागपवर्गम् ' उपचरन्ति ' अग्निपरिचर्यां कुर्वन्ति ' हि ' यस्मात् तस्मात्पुरःशब्देनाग्निरभिधीयत इत्यर्थः । पक्षान्तरमनूद्य व्याचष्टे–अथ यद्भुव इति । भवत्यस्मादिति व्युत्पत्त्या ' भुव '–शब्दोऽग्निवचनः । उक्तार्थपरतामाह–प्राणो हेति । प्राणवायुरेव हि ' अग्निर्भूत्वा ' ' पुरस्तात् ' पूर्वस्यां दिशि आहवनीयात्मना ' तस्थौ ' स्थितवान् । ' तद् ' अग्न्यात्मकं प्राणमेवोपहितवान् भवतीत्यर्थः । इत्थं प्रथमदशके प्रथमो मन्त्रो व्याख्यातः ॥ ४ ॥

द्वितीयं मन्त्रमनूद्य व्याचष्टे–तस्य प्राण इति । भुवस्यापत्यम् ' भौवायनः ' स च प्राणस्याग्नेरनन्तर उत्पन्नः । प्राणं तस्मादिति । ' तस्मात् ' प्रथममन्त्रप्रतिपाद्यादग्न्यात्मकाद्रूपात् ' प्राणम् ' ' निरमिमीत '

---

१–व्याघारणवत्प्राणभृतः कर्णसहिता दश दश पुरुषमुपाप्यैके रेतःसिग्वेलायां च सर्व्वतो यथायोगमयं पुर इति प्रतिमंत्रम् । का. श्रौ. सू. १७ । १२५ ।

२–द्वितीयमयं पश्चादिति । का. श्रौ. सूत्रे १७ । १२६ । कर्कः । अत्र चैके खंडशो मंत्रान् प्रयुंजते । पंचाशदिष्टकाः पंचाशद्यजूंषीति वचनात् । तत् पुनरयुक्तम् । वाक्यानामपरिसमाप्तत्वात् । कथं तर्हि यजुषां पंचाशत्त्वम् । अभ्यासेनेत्यदोषः । लिंगाच्च । कथमस्यैताः सर्व्वाः प्राजापत्या भवंतीति प्रकृत्याह । यदेव सर्व्वास्वाह प्रजापतिगृहीतया त्वयेत्येवमु हास्यैताः सर्वाः प्राजापत्या भवंतीति । तस्मात्सकलमंत्रप्रयोगो न खंडशः इति ।

छन्दो व्वसन्तादृतोर्न्निरमिमीत गायत्र्यै गायत्रमिति गायत्र्यै छन्दसो गायत्रꣳ साम निरमिमीत गायत्रादुपाꣳशुमिति गायत्रात्साम्नऽउपाꣳशुं ग्रहं निरमिमीतोपाꣳशोस्त्रिव्वृदित्युपाꣳशोर्ग्रहात्त्रिव्वृतꣳ स्तोमं निरमिमीत त्रिव्वृतो रथन्तरमिति त्रिव्वृतः स्तोमाद्रथन्तरं पृष्ठं निरमिमीत ॥ ५ ॥

व्वसिष्ठऽऋषिरिति । प्राणो वै व्वसिष्ठऽऋषिर्यद्वै नु श्रेष्ठस्तेन व्वसिष्ठोऽथो यद्वस्तृतमो व्वसति तेनोऽएव व्वसिष्ठः प्रजापतिगृहीतया त्वयेति प्रजापतिसृष्टया त्वयेत्येतत्प्राणं गृह्णामि प्रजाभ्यऽइति प्राणं पुरस्तात्प्रापादयत

---

निरमिमीत । "गायत्र्यै गायत्रम्"–इति । गायत्र्यै छन्दसो गायत्रं साम निरमिमीत । "गायत्रादुपांशुः"–इति । गायत्रात्साम्न उपांशुं ग्रहं निरमिमीत । "उपांशोस्त्रिवृत्"–इति । उपांशोर्ग्रहात्त्रिवृतं स्तोमं निरमिमीत । "त्रिवृतो रथन्तरम्"–इति । त्रिवृतः स्तोमाद्रथन्तरं पृष्ठं निरमिमीत ॥ ५ ॥

"वसिष्ठ ऋषिः"–इति । प्राणो वै वसिष्ठ ऋषिः । यद्वै नु श्रेष्ठः–तेन वसिष्ठः । अथो यद्वस्तृतमो वसति–तेनोऽएव वासिष्ठः । "प्रजापतिगृहीतया त्वया"–इति । प्रजापतिसृष्टया त्वयेत्येतत् । "प्राणं गृह्णामि प्रजाभ्यः"–( वा० सं० १३ । ५४ ) इति । प्राणं पुरस्तात्

---

निर्मितवान् सृष्टवान् भवतीत्यर्थः । " वसन्तः प्राणायनः " इति तृतीयमन्त्रः । प्राणस्यापत्यम् ' प्राणायनः ' । अत्र पूर्वपूर्वमन्त्रप्रतिपाद्यादुत्तरोत्तरमन्त्रप्रतिपाद्यानामुत्पत्तिरिति प्रकरणार्थः । स च प्राणसृष्टः ' वसन्तः ' । हे इष्टके ! तदात्मिकां त्वामुपदधामीति सर्वत्र योजना । 'प्राणायनः' इत्यनेन ' प्राणाद्वसन्तमृतुम् ' सृष्टवानित्यर्थः सिद्धः । वसन्तादुत्पन्नत्वाद् ' गायत्री वासन्ती ' । तदेवाह–गायत्रीं छन्दो वसन्तादृतोरिति । तस्या गायत्र्याः सकाशाद् गायत्राख्यं 'साम' सृष्टम् । तदाह–गायत्र्यै छन्दस इति । षष्ठ्यर्थे चतुर्थी ( पा. सू. २।३।६२वा.१ ) । तस्माच्च गायत्राख्यात् 'साम्नः' उपांशुनामको ग्रहो निर्मितस्तदाह–गायत्रात्साम्न उपांशुमिति । स्तोत्रियानवकात्मकः स्तोमः ' त्रिवृत् ' स च ' उपांशोः ' निर्मितस्तदाह–उपांशोर्ग्रहात्त्रिवृतमिति । तस्मात् ' त्रिवृतः ' रथन्तराख्यं साम निर्मितम् । तदाह–त्रिवृतः स्तोमाद्रथन्तरमिति । पृष्ठस्तोत्रस्य निष्पादकत्वात् ' रथन्तरं ' साम ' पृष्ठम् ' ॥ ५ ॥

तस्मात् ' वसिष्ठ ऋषिः ' उत्पन्नः । तस्य च वसिष्ठस्य स्वरूपमाह–प्राणो वा इति । देहस्थितिहेतुत्वेन इन्द्रियाणां वासयितृत्वाद्वसिष्ठ इति प्राण एवोच्यते, तदेवाह–यद्वा इति । ' यद्वै ' यस्मादेव ' नु ' निश्चितमिन्द्रियाणां मध्ये प्राणः ' श्रेष्ठः, ' अनुग्रहीतृत्वात् । तदनुगृहीतानि हीन्द्रियाणि स्वस्वव्यापारं कर्तुं प्रभवन्ति, ' तेन ' श्रैष्ठ्ययोगेन प्राणो ' वसिष्ठः ' जातः ॥

पक्षान्तरमाह–अथो इति । ' यद् ' यस्मात्प्राणः ' वस्तृतमः ' अतिशयेन वासयिता सन् ' वसति ' शरीरे वर्तते 'तेनो' तेनैव कारणेन ' वसिष्ठः ' । " तुश्छन्दसि " ( पा. सू. ५ । ३ । ५९ ) इति स्मरणात् वस्तृशब्दादातिशायिनिके ( पा. सू. ५।३।५५ ) इष्ठनि " तुरिष्ठेमेयस्सु " (पा. सू. ६ । ४ । १५४ ) इति तृलोपः । " प्रजापतिगृहीतया " इति दशमो मन्त्रस्तं व्याचष्टे–प्रजापतिसृष्टयेति । कर्तृविशेषोपादान-

नानोपदधाति ये नाना कामाः प्राणे तांस्तद्दधाति सकृत्सादयत्येकं तत्प्राणं करोत्यथ यन्नाना सादयेत्प्राणꣳ ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका यजुः सादनꣳ सूददोहास्तत्त्रिवृत्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तत्कृत्वोपदधाति ॥ ६ ॥

( त्यु ) अथ दक्षिणतः । ( तो॰ ) अयं दक्षिणा विश्वकर्मेत्ययं वै वायुर्विश्वकर्मा योऽयं पवत एष हीदꣳ सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति मनो ह वायुर्भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ ७ ॥ ( शतम् ४३०० )

---

प्रापादयत । नानोपदधाति । ये नाना कामाः प्राणे—तांस्तद्दधाति । सकृत्सादयति । एकं तत्प्राणं करोति । अथ यन्नाना सादयेत्—प्राणं ह विच्छिन्द्यात् । सैषा त्रिवृदिष्टका—यजुः, सादनं, सूददोहाः—तत्त्रिवृत् । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तत्कृत्वोपदधाति ( १ ) ॥ ६ ॥

अथ दक्षिणतः । "अयं दक्षिणा विश्वकर्मा"–इति । अयं वै वायुर्विश्वकर्मा—योऽयं पवते । एष हीदं सर्वं करोति । तद्यत्तमाह दक्षिणेति । तस्मादेष दक्षिणैव भूयिष्ठं वाति । मनो ह वायुर्भूत्वा दक्षिणतस्तस्थौ—तदेव तद्रूपमुपदधाति ॥ ७ ॥

---

सामर्थ्यादत्र गृहिधातुः सृजिधात्वर्थे वर्तत इत्यर्थः । हे इष्टके ! 'प्रजापतिसृष्टया त्वया' 'प्रजाभ्यः' तादर्थ्ये चतुर्थी, सर्वप्रजार्थम् 'प्राणं गृह्णामि' सृजामीत्यर्थः । अनेन प्राणं 'पुरस्तात्' पूर्वस्यां दिशि 'प्रापादयत' प्रजापतिः प्रावेशयत् । यजमानोऽप्यनेन मन्त्रेण प्राणं प्रपादयति प्रवेशयतीत्यर्थः ॥

दशानां पूर्वदिगुपधेयानां प्राणभृतामुपधानस्य पृथक्त्वं विधाय स्तौति—नानोपदधातीति । ये नाना कामा इति । प्राणाख्ये वायौ 'ये' नानाविधफलविषयाः 'कामाः' सन्ति 'तान्' कामान् 'तत्' तेनोपधानेन स्थापितवान् भवतीत्यर्थः । सादनस्याप्युपधानवत्प्रसक्तं नानात्वं व्यावर्तयति—सकृत्सादयतीति । 'तत्' तेन सकृत्सादनेन 'प्राणम्' 'एकम्' अविच्छिन्नं 'करोति' ॥

व्यतिरेके बाधं दर्शयति—अथ यन्नाना सादयेदिति । पार्थक्येन सादने त्रिवृत्त्वसम्पत्तिविघातः स्यात् । त्रिवृत्त्वं विवृणोति—सैषेत्यादिना । 'सैषा' प्राणभृदिष्टका 'त्रिवृत्' त्रिगुणा । त्रैगुण्यमेव दर्शयति—यजुरिति । तत्तदुपधानमन्त्रो 'यजुः' तया देवतयेत्येतत् 'सादनम्' ता अस्येति 'सूददोहाः' 'तत्' एतत्त्रितयं मिलितं सत् 'त्रिवृत्' । गतमन्यत् ॥ ६ ॥

अथ दक्षिणस्यां दिश्युपधेयानां प्राणभृतां मन्त्रान् विधाय व्याचष्टे—अथ दक्षिणत इति । अथ पुरस्तादुपधानानन्तरं दक्षिणस्यां दिशि "अयं दक्षिणा" इत्यादिभिर्मन्त्रैर्दश प्राणभृत उपदध्यादित्यर्थः । अयं वै वायुरिति । 'योऽयम्' अन्तरिक्षे 'पवते' सञ्चरति सः 'अयम्' 'वायुर्विश्वकर्मा' विश्वं सर्वं जगत् कर्म कर्तव्यं यस्य सूत्रात्मनो वायोः स तथोक्तः । श्रूयते हि—"वायुर्वै गौतम तत्सूत्रम्, वायुना वै गौतम सूत्रेणायं च लोकः, परश्च लोकः, सर्वाणि च भूतानि सन्दृब्धानि भवन्ति"–(श.प. १४।६।७।६) इति । इममेवार्थमाह—एष हीदमिति ।

तस्य मनो वैश्वकर्मणमिति मनस्तस्माद्रूपाद्वायोर्निरमिमीत ग्रीष्मो मानसऽइति ग्रीष्ममृतुं मनसो निरमिमीत त्रिष्टुब्ग्रैष्मीति त्रिष्टुभं छन्दो ग्रीष्मादृतोर्निरमिमीत त्रिष्टुभः स्वारमिति त्रिष्टुभश्छन्दसः स्वारꣳ साम निरमिमीत स्वारादन्तर्यामऽइति स्वारात्साम्नोऽन्तर्यामं ग्रहं निरमिमीतान्तर्यामात्पञ्चदशऽइत्यन्तर्यामाद्ग्रहात्पञ्चदशꣳ स्तोमं निरमिमीत पञ्चदशाद्बृहदिति पञ्चदशात्स्तोमाद्बृहत्पृष्ठं निरमिमीत ॥ ८ ॥

भरद्वाजऽऋषिरिति । मनो वै भरद्वाजऽऋषिरन्नं वाजो यो वै मनो बिभर्ति

---

"तस्य मनो वैश्वकर्मणम्"–इति । मनस्तस्माद्रूपाद्वायोर्निरमिमीत । "ग्रीष्मो मानसः"–इति । ग्रीष्ममृतुं मनसो निरमिमीत । "त्रिष्टुब् ग्रैष्मी"–इति । त्रिष्टुभं छन्दो ग्रीष्मादृतोर्निरमिमीत । "त्रिष्टुभः स्वारम्"–इति । त्रिष्टुभश्छन्दसः स्वारं साम निरमिमीत । "स्वारादन्तर्यामः"–इति । स्वारात्साम्नोऽन्तर्यामं ग्रहं निरमिमीत । "अन्तर्यामात्पञ्चदशः"–इति । अन्तर्यामाद् ग्रहात्पञ्चदशं स्तोमं निरमिमीत । "पञ्चदशाद्बृहत्"–इति । पञ्चदशात्स्तोमाद्बृहत्पृष्ठं निरमिमीत ८ ॥

"भरद्वाज ऋषिः"–इति । मनो वै भरद्वाज ऋषिः । अन्नं वाजः । यो वै मनो बिभर्त्ति–

---

क्रियाशक्त्यात्मनाऽवस्थितः 'एषः' एव खलु वायुः 'इदम्' सर्वं करोति, तस्माद्विश्वकर्मेत्युच्यत इत्यर्थः । 'तत्' तत्र 'तम्' वायुम् 'दक्षिणेति' दक्षिणदिग्वाचिना शब्देन 'यद्' यस्माद् 'आह' 'तस्मादेषः' वायुः प्राणः सन् 'दक्षिणैव' शरीरस्य दक्षिणभाग एव 'भूयिष्ठम्' अधिकतरं 'वाति' सञ्चरते । "वा गतिगन्धनयोः" (धा. पा. अ. प. ४०) इति धातुः । मनो ह वायुर्भूत्वेत्यादि । सुखापरोक्ष्यसाधनमान्तरमिन्द्रियं 'मनः' तत्खलु प्राणवायुर्भूत्वा 'दक्षिणतः' देहस्य दक्षिणभागे 'तस्थौ' स्थितवत् । तस्मात् 'तदेव' वाय्वात्मकं मनसः रूपमुपहितवान् भवति ॥ ७ ॥

तस्य मनो वैश्वकर्मणमिति । द्वितीयदशकस्य द्वितीयमन्त्रः । विश्वकर्मशब्दाभिधेयाद्वायोर्जातं 'मनो वैश्वकर्मणम्' । हे इष्टके ! तद्रूपां त्वामुपदधामीति शेषः । एतन्मन्त्रप्रयोगेण तस्माद् विश्वकर्मशब्दाभिधेयाद्वायोः 'मनः' इन्द्रियम् 'निरमिमीत' सृष्टवान् ॥

ग्रीष्मो मानस इति तृतीयेन मन्त्रेण ग्रीष्माख्यम् 'ऋतुम्' 'मनसः' सकाशान्निर्मितवान् । ग्रीष्मादुत्पन्नं छन्दस्त्रिष्टुप् 'ग्रैष्मी' । तथा च 'ग्रीष्माद्' 'ऋतोः' सकाशात् त्रिष्टुबाख्यम् 'छन्दः' निर्मितवान् ॥

त्रिष्टुभः स्वारमिति । पञ्चममन्त्रः । त्रिष्टुप्छन्दसः सकाशात् 'स्वारम्' स्वरसंज्ञकैरकारादिभिरेव वर्णैः समाप्यमानं साम स्वारम् तदुत्पन्नमित्यर्थः । तदाह–'त्रिष्टुभश्छन्दसः स्वारम्' इति । एवमुत्तरत्रापि योजनीयम् । 'अन्तर्याम' इति सोमग्रहः । पञ्चदशभिः स्तोत्रियाभिर्ऋग्भिर्निष्पाद्यः स्तोमः 'पञ्चदशः' । बृहत्पृष्ठमिति । 'त्वामिद्धि हवामहे' इत्यस्मादुत्पन्नं साम 'बृहत्' तच्च पृष्ठस्तोत्ररूपेण प्रयुज्यमानत्वात् 'पृष्ठम्' ॥८॥

भरद्वाज ऋषिरिति । नवमो मन्त्रस्तं व्याचष्टे–मनो वा इति । एतन्निर्ब्रूते–अन्नं वाज इति । 'यः' खलु प्राणी 'मनो बिभर्ति' धारयति जीवनविशिष्टो भवतीत्यर्थः । 'सः' च वाजाख्यम् 'अन्नम्'

सो॒ऽन्नं॒ वा॒जं भ॑रति॒ त॒स्मान्म॒नो भ॒रद्वा॑ज॒ ऽऋषिः प्र॒जाप॑तिगृहीतया॒ त्वये॑ति प्र॒जाप॑तिसृष्टया॒ त्वये॒त्येतन्म॒नो गृ॑ह्णामि प्र॒जाभ्य॒ ऽइति॒ म॒नो द॑क्षिण॒तः प्रा॒पाद॑यत॒ नानो॒पद॑धाति॒ ये॒ नाना॒ कामा॒ म॒नसि॒ तांस्त॒द्द॑धाति॒ स॒कृत्साद॑यत्ये॒कं त॒न्म॒नः क॒रो॒त्यथ॒ य॒न्नाना॑ सा॒द॒येन्म॒नो ह॒ वि॒च्छि॒न्द्यात्सै॒षा॒ त्रि॒वृ॒दि॒ष्टका॑ त॒स्योक्तो॒ ब॒न्धुः ॥ ९ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ८-१-१ ( १. १. )

सोऽन्नं वाजं भरति । तस्मान्मनो भरद्वाज ऋषिः । "प्रजापतिगृहीतया त्वया"-इतिं । प्रजापतिसृष्टया त्वयेत्येतत् । " मनो गृह्णामि प्रजाभ्यः "-( वा. सं. १३ । ५५ ) इति । मनो दक्षिणतः प्रापादयत । नानोपदधाति । ये नाना कामाः मनसि, तांस्तद्दधाति । सकृत्सादयति । एकं तन्मनः करोति । अथ यन्नाना सादयेत्-मनो ह विच्छिन्द्यात् । सैषा त्रिवृदिष्टका । तस्योक्तो बन्धुः ( २ ) ॥ ९ ॥

' भरति ' देहे धत्ते । ' तस्माद् ' भरणाद्वाजेन धार्यमाणत्वाच्च ' भरन् ' ध्रियमाणो वाजश्च यस्येति व्युत्पत्त्या ' मनः ' एव ' भरद्वाज ऋषिः ' इत्यर्थः । प्रजापतिगृहीतयेत्याद्युक्तार्थम् । ' मनो गृह्णामि प्रजाभ्य इति ' अनेन मन्त्रभागेन दक्षिणदिशि प्राणभृदुपधानं कुर्वन् ' दक्षिणतः ' शरीरस्य दक्षिणभागे ' मनः ' ' प्रापादयत ' प्रजापतिः प्रावेशयत् ।

उपधानस्य नानात्वं सादनस्य सकृत्त्वं पूर्ववद्विधाय स्तौति-नानोपदधातीत्यादिना । ' मनसि ' स्थिता ये नानाविधाः ' कामाः ' अभिलाषविशेषाः ' तान् ' ' तत् ' तत्र मनसि स्थापयति । एकं तन्मन इति । 'तत्' तेन मनःसादनसकृत्त्वेन ' एकम् ' अविच्छिन्नम् ' मनः ' सम्पादयति । पृथक्सादने तु दोषविशेषमाह-अथ यन्नाना सादयेदिति । ' सैषा ' दशमीष्टका ' त्रिवृत् ' तथात्वं च प्रागाम्नातम्-" सैषा त्रिवृदिष्टका यजुः सादनꣳ सूददोहास्तत्त्रिवृत्त्रिवृदग्निः"-इत्यादिना " ( श. प. ८ । १ । १ । ६ । ) तत्प्रशंसा च तत्रानुसन्धेयेत्यतिदिशति-तस्योक्त इति । ' तस्य ' त्रिवृत्त्वस्य ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे प्रथमाऽध्याये प्रथमं ब्राह्मणम् ॥ ( ८-१-१ ) ॥

अथ पश्चात् । ( द ) अयं पश्चाद्विश्वव्यचा ऽइत्यसौ वाऽआदित्यो विश्वव्यचा यदा ह्येवैषुऽउदेत्युथेदᳪ सर्व्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति चक्षुर्हादित्यो भूत्वा पश्चात्तस्थौ तदेव तद्रूपमुपदधाति ॥ १ ॥

तस्य चक्षुर्वैश्वव्यचसमिति । चक्षुस्तस्माद्रूपादादित्यान्निरमिमीत वर्षाश्चाक्षुष्यऽइति वर्षाऋतुं चक्षुषो निरमिमीत जगती वार्षीति जगतीं छन्दो वर्षाभ्यऽऋतोर्निरमिमीत जगत्याऽऋक्समम्मिति जगत्यै छन्दस

---

अथ पश्चात् । " अयं पश्चाद्विश्वव्यचाः "–इति । असौ वाऽआदित्यो विश्वव्यचाः । यदा ह्येवैष उदेति–अथेदं सर्वं व्यचो भवति । तद्यत्तमाह–पश्चादिति । तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति । चक्षुर्हादित्यो भूत्वा पश्चात्तस्थौ । तदेव तद्रूपमुपदधाति ॥ १ ॥

" तस्य चक्षुर्वैश्वव्यचसम् "–इति । चक्षुस्तस्माद्रूपादादित्यान्निरमिमीत । " वर्षाश्चाक्षुष्यः "–इति । वर्षाऋतुं चक्षुषो निरमिमीत । " जगती वार्षी "–इति । जगतीं छन्दो वर्षाभ्य ऋतोर्निरमिमीत । " जगत्या ऋक्समम् "–इति । जगत्यै छन्दस ऋक्समं साम

---

अथ प्रतीच्यां दिश्युपधेयानां प्राणभृतां दशकस्य दश मन्त्रान्दर्शयन् क्रमेण व्याचष्टे–अथ पश्चादिति । 'पश्चात्' प्रतीच्यां दिशि । "पश्चात्" ( पा.सू.५।३।३२ ) इत्यस्तातिर्निपात्यते । "अयं पश्चाद्विश्वव्यचाः"–इति प्रथमो मन्त्रः । " व्यचतिर्व्याप्तिकर्मा " विश्वं व्यचति व्याप्नोतीति विश्वव्यचाः ' असौ ' द्युलोकस्थ 'आदित्यः' । एतदेवाह–यदा ह्येवैष इति । यस्मिन् काले खलु ' एषः ' सूर्यः ' उदेति' ' अथ ' अनन्तरमेव ' इदं सर्वम् ' ' व्यचः ' व्यापनम् ' भवति ' तस्मादसौ 'विश्वव्यचाः' इत्यर्थः । तद्यत्तमाहेति । ' तम् ' आदित्यम् ' पश्चादिति ' प्रत्यग्दिग्वाचिना शब्देन ' यत् ' यस्मात्प्रतिपादयति, ' तस्माद् ' एव प्रतीचीदिक्सम्बन्धात्कारणाद् ' एतम् ' आदित्यम् ' प्रत्यञ्चम् ' प्रत्यङ्मुखम् ' एव ' ' यन्तम् ' गच्छन्तम् ' पश्यन्ति ' सर्वप्राणिनां ' चक्षुः ' एव हि ' आदित्यो भूत्वा ' ' पश्चात् ' प्रत्यङ्मुखः 'तस्थौ' । ' तदेव ' चक्षुरात्मकमेव ' तत् ' आदित्यात्मकम् ' रूपम् ' उपहितवान्भवतीत्यर्थः ॥ १ ॥

तस्य चक्षुर्वैश्वव्यचसमिति । द्वितीयो मन्त्रः । विश्वव्यचसो जातं ' वैश्वव्यचसम् ' । अनेन मन्त्रेण ' तस्माद् ' आदित्य–' रूपात् ' कारणात् ' चक्षुः ' निर्मितवान् प्रजापतिरित्यर्थः । ' वर्षाः ' ऋतुः ' चाक्षुष्यः ' तस्माच्चक्षुषः सृष्टाः । " अप्सुमनःसिकतासमावर्षाणाम् " इति ( लिङ्गानुशासन १ । २९ ) स्मरणात् नियतबहुत्वेनैकस्मिन्नपि बहुत्वम् । ' वर्षाऋतुम् ' इति वर्षाख्यमृतुमित्यर्थः । जगती वार्षीति ।

---

१–द्वितीयमयं पश्चादिति । का० श्रौ० सू० १७ । १२६ ।

ऽऋक्समꣳ साम निरमिमीतऽर्क्समाच्छुक्र ऽइत्यृक्समात्साम्नः शुक्रं ग्रहं निरमिमीत शुक्रात्सप्तदश ऽइति शुक्राद्ग्रहात्सप्तदशꣳ स्तोमं निरमिमीत सप्तदशाद्वैरूपमिति सप्तदशात्स्तोमाद्वैरूपं पृष्ठं निरमिमीत ॥ २ ॥

जमदग्निर्ऋषिरिति । चक्षुर्वै जमदग्निर्ऋषिर्यदेनेन जगत्पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वयेति प्रजापतिसृष्टया त्वयेत्येतच्चक्षुर्गृह्णामि प्रजाभ्य ऽइति चक्षुः पश्चात्प्रापादयत नानोपदधाति ये नाना कामाश्चक्षुषि तांस्तद्दधाति सकृत्सादयत्येकं तच्चक्षुः करोत्यथ यन्नाना सादयेच्चक्षुर्ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥३॥

---

निरमिमीत । " ऋक्समाच्छुक्रः "–इति । ऋक्समात्साम्नः शुक्रं ग्रहं निरमिमीत । " शुक्रात्सप्तदशः "–इति । शुक्राद्ग्रहात्सप्तदशं स्तोमं निरमिमीत । "सप्तदशाद्वैरूपम्"–इति । सप्तदशात्स्तोमाद्वैरूपं पृष्ठं निरमिमीत ॥ २ ॥

" जमदग्निर्ऋषिः "–इति । चक्षुर्वै जमदग्निर्ऋषिः । यदेनेन जगत्पश्यति, अथो मनुते–तस्माच्चक्षुर्जमदग्निर्ऋषिः । " प्रजापतिगृहीतया त्वया "–इति । प्रजापतिसृष्टया त्वयेत्येतत् । " चक्षुर्गृह्णामि प्रजाभ्यः "–( वा. सं. १३ । ५६ ) इति । चक्षुः पश्चात्प्रापादयत । नानोपदधाति । ये नाना कामाः–चक्षुषि तांस्तद्दधाति । सकृत्सादयति । एकं तच्चक्षुः करोति । अथ यन्नाना सादयेत्–चक्षुर्ह विच्छिन्द्यात् । सैषा त्रिवृदिष्टका । तस्योक्तो बन्धुः ॥ ३ ॥

---

वर्षाभ्यो जाता ' वार्षी ' । गतमन्यत् । जगत्या ऋक्सममिति । यत्साम ऋचा समं समाप्यते न न्यूनाधिकभावेन तत् ' ऋक्समं साम ' जगतीछन्दसः सकाशात्सृष्टम् । तदेवाह–जगत्यै छन्दस ऋक्समं सामेति । पूर्ववत्षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ वा. १ ) तस्मादृक्समाख्यात् ' साम्नः ' शुक्राख्यः सोमग्रहः सृष्टस्तदाह–ऋक्समात्साम्नः शुक्रं ग्रहमिति । सप्तदश इति । सप्तदशभिः स्तोत्रियाभिर्निष्पाद्यः स्तोमः ' सप्तदशः ' । तस्माच्च वैरूपाख्यं पृष्ठं साम निर्मितमित्याह–सप्तदशात्स्तोमाद्वैरूपं पृष्ठमिति । ' सप्तदशात् स्तोमात् वैरूपं पृष्ठं ' भवति । स्पष्टोऽर्थः ॥ २ ॥

जमदग्निर्ऋषिरिति । नवमो मन्त्रः । तत्र जमदग्निपदं व्याचष्टे–चक्षुर्वा इति । एतदुपपादयति–यदेनेनेति । एनेन ' चक्षुषा ' जगद् ' रूपादिकम् ' पश्यति ' इति यत् ' अथो ' अपिच चक्षुषैव ' मनुते ' जानातीति यत् ' तस्माद् ' हेतोः जगन्मनुतेऽनेन इति व्युत्पत्त्या वर्णलोपेन जमच्चक्षुः प्रकाशकत्वादग्निर्दर्शनादृषिश्चेति " जमदग्निर्ऋषिः " इति वाक्यतात्पर्येण चक्षुरेव प्रतिपाद्यत इत्यर्थः । " प्रजापतिगृहीतया " इति दशममन्त्रं पूर्ववद्व्याचष्टे–प्रजापतिसृष्टया त्वयेत्येतदिति । ' चक्षुर्गृह्णामि ' इत्यस्य तात्पर्यमाह–चक्षुः पश्चात्प्रापादयतेति । ' पश्चात् ' प्रतीच्यां दिश्यनेन मन्त्रभागेन ' चक्षुः ' प्रावेशयदित्यर्थः । पूर्ववदुपधाने नानात्वम्,

( ३ ) अथोत्तरतः । ( ५ ) इदमुत्तरात्स्वरिति दिशो वा ऽ उत्तरात्तद्यत्ता ऽआहोत्तरादित्युत्तरा ह्यस्मात्सर्वस्माद्दिशोऽथ यत्स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रꣳ ह दिशो भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधाति॥४॥

तस्य श्रोत्रꣳ सौवमिति । श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीत शरच्छ्रौत्रीति शरदमृतुꣳ श्रोत्रान्निरमिमीतानुष्टुप्शारदीत्यनुष्टुभं छन्दः शरद ऽऋतोर्निरमिमीतानुष्टुभ ऽऐडमित्यनुष्टुभश्छन्दस ऽऐडꣳ साम निरमिमीतैडान्मन्थीत्यैडात्साम्नो मन्थिनं ग्रहं निरमिमीत मन्थिन ऽएकविꣳश ऽइति मन्थिनो ग्रहादेकविꣳशꣳ स्तोमं निरमिमीतैकविꣳशाद्वैराजमित्येकविꣳशात्स्तोमाद्वैराजं पृष्ठं निरमिमीत ॥ ५ ॥

---

अथोत्तरतः । " इदमुत्तरात्स्वः "–इति । दिशो वाऽउत्तरात् । तद्यत् ता आह–उत्तरादिति । उत्तरा ह्यस्मात्सर्वस्माद्दिशः । अथ यत्स्वरित्याह–स्वर्गो हि लोको दिशः । श्रोत्रं ह दिशो भूत्वोत्तरतस्तस्थौ । तदेव तद्रूपमुपदधाति ॥ ४ ॥

" तस्य श्रोत्रं सौवम् "–इति । श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीत । " शरच्छ्रौत्री "–इति । शरदमृतुं श्रोत्रान्निरमिमीत । " अनुष्टुप्शारदी "–इति । अनुष्टुभं छन्दः शरद ऋतोर्निरमिमीत । " अनुष्टुभऽऐडम् "–इति । अनुष्टुभश्छन्दस ऐडं साम निरमिमीत । " ऐडान्मन्थी "–इति । ऐडात्साम्नो मन्थिनं ग्रहं निरमिमीत । " मन्थिनऽएकविंशः "–इति । मन्थिनो ग्रहादेकविंशं स्तोमं निरमिमीत । " एकविंशाद्वैराजम् "–इति । एकविंशात्स्तोमाद्वैराजं पृष्ठं निरमिमीत ॥ ५ ॥

---

सादने सकृत्त्वं च विधत्ते–नानोपदधातीत्यादिना । एकं तच्चक्षुरिति । 'एकम्' अविच्छिन्नम् । नानासादने पूर्ववद्दोषमाह–अथ यन्नाना सादयेदिति । ' विच्छिन्द्यात् ' विच्छिन्नं प्रशीर्णं वियुक्तं वा कुर्यादित्यर्थः । 'सैषा' त्रिवृद् ' इत्यादि पूर्ववद्योज्यम् ॥ ३ ॥

अथोत्तरस्यां दिश्युपधेयस्य प्राणभृद्दशकस्य मन्त्रदशकं विधाय व्याचष्टे–अथोत्तरत इत्यादिना । ' उत्तरतः ' उत्तरस्यां दिशि । तत्र " इदमुत्तरात्स्वः " इति प्रथमो मन्त्रः । ' उत्तरात् ' ' इति ' पदस्य विवक्षितमर्थमाह–दिशो वा उत्तरादिति । एतदेव विवृणोति–तद्यदिति । ' तत् ' तत्र ' ताः ' दिशः ' उत्तराद् ' इति शब्देन ' आह ' प्रतिपादयतीति ' यत् ' तत्कारणमुच्यत इति शेषः । ' हि ' यस्मात् ' अस्मात् ' दृश्यमानात्स्थावरजङ्गमात्मकात् ' सर्वस्मात् ' जगतः ' दिशः ' प्राच्याद्याः ' उत्तराः ' उत्कृष्टतराः, उत्तरभागे वर्तमाना वा । अतो हेतोः " उत्तरात् " इति पदेन दिशः प्रतिपाद्यन्त इत्यर्थः । दिशां स्वर्गलोकात्मकत्वात् ' स्वः ' इति पदेनापि दिश एवोच्यन्त इत्याह–अथ यत्स्वरित्याहेति । श्रोत्रं ह दिश इत्यादि । ' श्रोत्रम् ' शब्दग्रहणसाधनमिन्द्रियम्; तत्स्वकारणात्मना दिग्रूपत्वं प्राप्य 'उत्तरतः' उत्तरस्यां दिशि । 'तस्थौ' तद्रूपमिति । स्वकारणात्मकमेव दिगात्मकमेव रूपमुपहितवान्भवतीत्यर्थः ॥ ४ ॥

तस्य श्रोत्रꣳ सौवमिति । द्वितीयो मन्त्रः । दिगात्मकात्स्वर्गलोकाज्जातं ' श्रोत्रम् ' ' सौवम् ' स्वर्शब्दस्य तद्धिते परतः द्वारादित्वादैजागमः ( पा. सू. ७ । ३ । ४ ) । ' तस्मात् ' स्वर्शब्दाभिधेयात् ' रूपात् '

विश्वामित्रऽऋषिरिति । श्रोत्रं वै विश्वामित्र ऽऋषिर्यदेनेन सर्व्वतः शृणोत्यथो यदस्मै सर्व्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऽऋषिः प्रजापतिगृहीतया त्वयेति प्रजापतिसृष्टया त्वयेत्येतच्छ्रोत्रं गृह्णामि प्रजाभ्य ऽइति श्रोत्रमुत्तरतः प्रापादयत नानोपदधाति ये नाना कामाः श्रोत्रे तांस्तद्दधाति सकृत्सादयत्येकं तच्छ्रोत्रं करोत्यथ यन्नाना सादयेच्छ्रोत्रँ ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ६ ॥

( ३ ) अथ मध्ये । ( ध्य२ ) इयमुपरि मतिरिति चन्द्रमा वाऽउपरि तद्य-

---

" विश्वामित्र ऋषिः "–इति । श्रोत्रं वै विश्वामित्र ऋषिः । यदेनेन सर्वतः शृणोति । अथो यदस्मै सर्वतो मित्रं भवति–तस्माच्छ्रोत्रं विश्वामित्र ऋषिः । " प्रजापतिगृहीतया त्वया "–इति । प्रजापतिसृष्टया त्वयेत्येतत् । " श्रोत्रं गृह्णामि प्रजाभ्यः "–( वा. सं. १३ । ५७ ) इति । श्रोत्रमुत्तरतः प्रापादयत । नानोपदधाति । ये नाना कामाः–श्रोत्रे तांस्तद्दधाति । सकृत्सादयति । एकं तच्छ्रोत्रं करोति । अथ यन्नाना सादयेत्–श्रोत्रं ह विच्छिन्द्यात् । सैषा त्रिवृदिष्टका । तस्योक्तो बन्धुः ( ४ ) ॥ ६ ॥

अथ मध्ये । "इयमुपरि मतिः"–इति । चन्द्रमा वाऽउपरि । तद्यत्तमाह–उपरीति । उपरि हि

---

श्रोत्रेन्द्रियम् ' दिग्भ्यः ' सकाशान्निर्मितवानित्यर्थः । तच्छ्रोत्रादुत्पन्ना 'शरच्छ्रौत्री' । तस्याः शरदः सकाशादुत्पन्ना ' अनुष्टुप् शारदी ' । तथाविधादनुष्टुप्छन्दसः ' ऐडम् ' यस्य साम्नोऽन्ते इडाशब्दः प्रयुज्यते तद् ' ऐडं साम ' उत्पन्नम् । तस्माच्च ' ऐडात्साम्नः ' मन्थिसंज्ञः सोमग्रहो निर्मितः । तस्मान्मन्थिग्रहादेकविंशाख्यस्तोमः, तस्माच्च वैराजाख्यं पृष्ठं साम निर्मितम् । एतावदत्र प्रतिपाद्यम् । ततः अक्षरयोजना पूर्ववत् कार्या ॥ ५ ॥

श्रोत्रं वै विश्वामित्र ऋषिरित्यादि । विश्वं सर्वं मित्रमनेन श्रोत्रेण पुरुषस्य भवतीति विश्वस्य मित्रहेतुत्वाद्दर्शनसाधनत्वाच्च ' श्रोत्रम् ' खलु विश्वामित्राख्य ऋषिरित्यर्थः । "मित्रे चर्षौ"–( पा. सू. ६ । ३ । १३० ) इति पूर्वपदस्य दीर्घः । उक्तमेवार्थमाविष्करोति–यदेनेनेति । ' सर्वतः ' सर्वाभ्यो दिग्भ्यः । अथो यद् अस्मा इति । व्युत्पत्त्यन्तरप्रदर्शनम् । ' अथो ' इति पक्षान्तरद्योतने । ' अस्मै ' शृण्वते जनाय ' यद् ' यस्माद् अनेन ' सर्वतः ' सर्वासु दिक्षु ' मित्रं भवति ' सम्पद्यते; तस्माद्विश्वामित्र इत्यर्थः । प्रजापतिगृहीतया इत्यादि गतम् । श्रोत्रमुत्तरतः प्रापादयतेति । उत्तरस्यां दिशि ' श्रोत्रम् ' ' प्रापादयत ' प्रजापतिः सृष्टिकाले प्रावेशयत् । ततः तस्याः दिशः सकाशात् प्रजार्थं श्रोत्रेन्द्रियं ' गृह्णामि ' उपाददे इत्यर्थः । ' नानोपदधाति ' इत्यादि पूर्ववद्योज्यम् । श्रोत्रस्य विच्छेदो बाधिर्यम् ॥ ६ ॥

अथ मध्यभाग उपधेयस्य प्राणभृद्दशकस्य दश मन्त्रान्प्रदर्शयन् व्याचष्टे–अथ मध्य इति । ' अथ ' चतसृषु दिक्षूपधानानन्तरमग्निक्षेत्रस्य मध्यभागे दश प्राणभृत उपदध्यादित्यर्थः । तत्र " इयमुपरि मतिः "–

त्तमाहोपरीत्युपरि हि चन्द्रमाऽअथ यन्मतिरित्याह व्वाग्वै मतिर्व्वाचा हीदथ्ँ सर्व्वं मनुते व्वागथ चन्द्रमा भूत्वोपरिष्टात्तस्थौ तदेव तद्रूप-मुपदधाति ॥ ७ ॥

तस्यै व्वाङ्मात्येति । व्वाचं तस्माद्रूपाच्चन्द्रमसो निरमिमीत हेमन्तो व्वाच्य ऽइति हेमन्तमृतुं व्वाचो निरमिमीत पङ्क्तिर्हैमन्तीति पङ्क्तिं च्छन्दो हेमन्तादृतोर्निरमिमीत पङ्क्त्यै निधनवदिति पङ्क्त्यै छन्दसो निधन-वत्साम निरमिमीत निधनवत ऽआग्रयण ऽइति निधनवतः साम्न ऽआग्रयणं ग्रहं निरमिमीताग्रयणात्रिणवत्रयस्त्रिथ्ँशावित्याग्रयणाद्ग्रहात्त्रिणवत्रयस्त्रि-थ्ँशौ स्तोमौ निरमिमीत त्रिणवत्रयस्त्रिथ्ँशाभ्याथ्ँ शाक्वररैवतेऽइति त्रिणवत्रयस्त्रिथ्ँशाभ्याथ्ँ स्तोमाभ्याथ्ँ शाक्वररैवते पृष्ठे निरमिमीत ॥ ८ ॥

---

चन्द्रमाः । अथ यन्मतिरित्याह । वाग्वै मतिः । वाचा हीदं सर्वं मनुते । वागथ चन्द्रमा भूत्वो-परिष्टात्तस्थौ—तदेव तद्रूपमुपदधाति ॥ ७ ॥

" तस्यै वाङ्मत्या "—इति । वाचं तस्माद्रूपाच्चन्द्रमसो निरमिमीत । "हेमन्तो वाच्यः"—इति । हेमन्तमृतुं वाचो निरमिमीत । " पङ्क्तिर्हैमन्ती "—इति । पङ्क्तिं छन्दो हेमन्तादृतो-र्निरमिमीत । " पङ्क्त्यै निधनवत् "—इति । पङ्क्त्यै छन्दसो निधनवत्साम निरमिमीत । "निध-नवत आग्रयणः "—इति । निधनवतः साम्न आग्रयणं ग्रहं निरमिमीत । " आग्रयणात्त्रि-णवत्रयस्त्रिंशौ "—इति । आग्रयणाद्ग्रहात्त्रिणवत्रयस्त्रिंशौ स्तोमौ निरमिमीत । " त्रिणवत्रय-स्त्रिंशाभ्यां शाक्वररैवते "—इति । त्रिणवत्रयस्त्रिंशाभ्यां स्तोमाभ्यां शाक्वररैवते पृष्ठे निरमिमीत ॥ ८ ॥

---

इति प्रथमो मन्त्रः । तत्र ' उपरि '—शब्दस्य विवक्षितमर्थमाह—चन्द्रमा वा उपरीति । प्रतिज्ञातमर्थमुपपादयति—तद्यदिति । ' तं ' चन्द्रमसमुपरीत्यूर्ध्ववाचिना शब्देन यस्मात्कारणादाह तत्कारणमुच्यत इत्यर्थः । उपरि हीति । यस्मादुपरिष्टाद्दिशि आकाशे, ' चन्द्रमाः ' दृश्यते; तस्मात् ' तम् ' सोमम् ' उपरि ' दिक्स-म्बन्धादुपरीत्युच्यत इत्यर्थः । ' मतिः ' शब्दो ज्ञाने । 'मनुते' जानाति ' हि ' यस्मादेवं तस्मान्मननसाधन-त्वाद् ' वाग् '—इन्द्रियम् ' चन्द्रमाः भूत्वा ' चन्द्ररूपतां प्राप्य ' उपरिष्टाद् ' ऊर्ध्वदिशि ' तस्थौ ' । अतः ' तदेव ' वागात्मकं ' रूपम् ' उपहितवान्भवतीत्यर्थः ॥ ७ ॥

तस्यै वाङ्मात्येति । द्वितीयो मन्त्रः । मतेः सकाशाज्जाता वाक् ' मात्या ' । वाचं तस्मादित्यादि । ' तस्माद् ' वाक्कारणभूताद् ' रूपाच्चन्द्रमसः ' सकाशाद् ' वाचम् ' सृष्टवान्भवतीत्यर्थः । तस्याः वाचः सकाशादुत्पन्नो ' हेमन्तो वाच्यः ' । तस्माद्धेमन्तादुत्पन्ना ' हैमन्ती पङ्क्तिः ' पङ्क्त्याख्यं छन्द इत्यर्थः । ' पङ्क्त्यै ' पङ्क्त्याः सकाशात्, ( पा. सू. २।३।६२ वा. २ ) षष्ठ्यर्थे चतुर्थी । ' निधनवत् ' पञ्चभक्तिकस्य ' साम्नः ' अन्तिमो भागो निधनम्—" विश्वं समत्त्रिणं दह " इत्यादि, तद्युक्तं साम ' निधनवत् ' तदुत्पन्न-

विश्वकर्मऽऋषिरिति । वाग्वै विश्वकर्मर्षिर्वाचा हीदꣳ सर्वं कृतं तस्माद्वाग्विश्वकर्मर्षिः प्रजापतिगृहीतया त्वयेति प्रजापतिसृष्टया त्वयेत्येतद्वाचं गृह्णामि प्रजाभ्य ऽइति वाचमुपरिष्टात्प्रापादयत नानोपदधाति ये नाना कामा वाचि तांस्तद्दधाति सकृत्सादयत्येकां तद्वाचं करोत्यथ यन्नाना सादयेद्वाचꣳ ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः॥९

( रे ) एतद्वै तदन्नम् । यत्तत्प्राणाश्च प्रजापतिश्चासृजन्तैतावान्वै सर्वो यज्ञो यज्ञ ऽउ देवानामन्नम् ॥ १० ॥

---

" विश्वकर्मऽऋषिः "–इति । वाग्वै विश्वकर्मर्षिः । वाचा हीदं सर्वं कृतम् । तस्माद्वाग्विश्वकर्मर्षिः । " प्रजापतिगृहीतया त्वया "–इति । प्रजापतिसृष्टया त्वयेत्येतत् । " वाचं गृह्णामि प्रजाभ्यः "–( वा. सं. १३।५८ ) इति । वाचमुपरिष्टात्प्रापादयत । नानोपदधाति । ये नाना कामाः–वाचि तांस्तद्दधाति । सकृत्सादयति । एकां तद्वाचं करोति । अथ यन्नाना सादयेद् । वाचं ह विच्छिन्द्यात् । सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः (९) ॥ ९ ॥

एतद्वै तदन्नम् । यत्तत्प्राणाश्च प्रजापतिश्चासृजन्त । एतावान्वै सर्वो यज्ञः । यज्ञ उ देवानामन्नम् १० ॥

---

मित्यर्थः । तस्माच्च ' निधनवतः ' सकाशाद् आग्रयणाख्यः सोमग्रहो जातः । तस्माद् ' आग्रयणात् ' ' त्रिणवत्रयस्त्रिंशौ ' ' स्तोमौ ' जातौ । त्रिरावृत्तस्तोत्रियानवकेन निष्पाद्यः स्तोमस्त्रिणवः । त्रयस्त्रिंशता स्तोत्रियाभिर्निष्पाद्यस्त्रयस्त्रिंशः । " स्तोमे डविधिः पञ्चदशाद्यर्थमिति " वार्तिककृत्स्मृतेः स्तोमवाचिनः पञ्चदशसप्तदशादयः शब्दा डप्रत्ययान्ता द्रष्टव्याः । ताभ्यां त्रिणवत्रयस्त्रिंशाभ्यां सकाशाच्छाक्वररैवताख्ये पृष्ठसामनी निष्पन्ने ॥ ८ ॥

विश्वकर्मऋषिरिति मन्त्रस्य पूर्ववदिन्द्रियपरतामाह–वाग्वा इति । ' वाक् ' इन्द्रियं हि विश्वकर्माख्यः ' ऋषिः ' । तदुपपादयति–वाचा हीदमिति । वागिन्द्रियेण खलु कारणेन ' इदं सर्वम् ' जगत् प्रजापतिना ' कृतम् ' । अत एव करणीयस्य वाक्पूर्वकत्वमन्यत्राम्नातम्–" यद्वै मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति "–इति । विश्वं क्रियतेऽनयेति व्युत्पत्त्या वागेव विश्वकर्मा सैव दर्शनादृषिश्च । अन्यन्निगदसिद्धम् । प्रजापतिगृहीतया इत्यादि पूर्ववत् । वाचं गृह्णामीत्यस्य प्रयोजनमाह–प्रजाभ्य इति । प्रजापतिर्वाचं सृष्ट्वा ऊर्ध्वायां दिशि तां प्रावेशयत् । अतः ' प्रापादयत ' । ' नानोपदधाति ' इत्यादि पूर्ववत् । एकां तद्वाचमिति । ' एकाम् ' अविच्छिन्नां सन्ततां 'वाचम्' कृतवान्भवतीत्यर्थः । विपर्यये दोषमाह–अथ यन्नानेति । ' सैषा त्रिवृदिष्टका ' इत्यादि पूर्ववद्योज्यम् ॥ ९ ॥

एतद्वै तदन्नमिति । इत्थं पञ्चाशत्संख्याकैर्मन्त्रैर्यावन्तोऽर्थाः प्रतिपादिताः, एतदात्मकमेव खलु ' तदन्नम् ' यत्प्राणभृदाख्यमन्नं सृष्ट्यादौ ' प्राणाश्च प्रजापतिश्च ' सह मिलिताः सृष्टवन्तः । उक्तार्थजातस्यान्नरूपतां प्रतिपादयति–एतावान्वा इति । अग्नि–प्राण–वसन्त–गायत्र्यादयोऽत्र यावन्तोऽर्थाः अनुक्रान्ताः एतावान् एव ' सर्वो यज्ञः ' सर्वेषां यज्ञसाधनानां कालच्छन्दःसामग्रहस्तोमपृष्ठादीनामेतन्मन्त्रेष्वन्तर्भूतत्वात् । तादृशश्च ' यज्ञः ' ' देवानाम् ' ' अन्नम् ' उपजीवनीयो जीवनोपायः । अतस्तन्मन्त्रोपधेयानां प्राणभृतामन्नरूपत्वं युक्तमित्यर्थः ॥ १० ॥

(न्ता) तां दुश-दशोपदधाति । दुशाक्षरा व्विराड्विराड्ड कृत्स्नमुन्न४ँ सुर्व्वमेवास्मिन्नेतुत्कृत्स्नमुन्नं दधाति सर्व्वुतऽउपदधाति सर्व्वुतऽएवास्मिन्नेतुत्कृत्स्नमुन्नं दधाति ता हैता व्विराजऽ एतुान्प्राणुान्बिभ्रति युत्प्राणान्बिभ्रति तुस्मात्प्राणभृतः ॥ ११ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ८-१-२ ॥ ( १. २. ) ॥

तुदाहुः । किं प्राणाः किं प्राणभृतऽइति प्राणाऽएवु प्राणाऽअुङ्गानि प्राणभृन्त्युङ्गानि हि प्राणान्बिभ्रति प्राणास्त्वेवु प्राणाऽअुन्नं प्राणभृदुन्न४ँ हि प्राणान्बिभर्त्ति ॥ १ ॥

---

तां दश-दशोपदधाति । दशाक्षरा विराट् । विराड्ड कृत्स्नमन्नम् । सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति । सर्वत उपदधाति । सर्वत एवास्मिन्नेतत्कृत्स्नमन्नं दधाति । ता हैता विराज एतान्प्राणान्बिभ्रति । यत्प्राणान्बिभ्रति । तस्मात्प्राणभृतः ॥ ११ ॥

तदाहुः—किं प्राणाः, किं प्राणभृत इति । प्राणा एव प्राणाः, अङ्गानि प्राणभृन्ति । अङ्गानि हि प्राणान्बिभ्रति । प्राणास्त्वेव प्राणाः, अन्नं प्राणभृत् । अन्नं हि प्राणान्बिभर्ति ॥ १ ॥

---

दशसंख्यानुवादेनाप्यन्नरूपतामाह—तां दश दशेति । 'ताः' प्राणभृतः प्रतिदिशं दशदशोपधीयन्ते । तथा च दशसंख्यायोगाद्विराड्रूपता सम्पद्यते । लोके च भुज्यमानं 'कृत्स्नमन्नम्' विराडात्मकम्, अतः 'अस्मिन्' चित्येऽग्नौ 'सर्वमेव' अन्नजातं 'कृत्स्नम्' निरवशेषमेव 'एतत्' एतेन प्राणभृदुपधानेन स्थापितवान्भवतीत्यर्थः । सर्वत उपधानमनूद्य स्तौति—सर्वत उपदधातीति । सर्वत एवास्मिन्निति । 'सर्वतः' सर्वाभ्यो दिग्भ्यः सकाशादेव 'अस्मिन्' चित्येऽग्नौ 'एतत्' एतेन सर्वासु दिक्षूपधानेनोदीरितलक्षणं प्राणभृदाख्यमन्नं स्थापितवान्भवतीत्यर्थः । प्राणभृत्संज्ञां निर्ब्रूते—ता हैता इति । 'ताः' खलु 'एताः' उपहिता इष्टकाः 'विराजः' दशसंख्यायोगात्, 'एतान्प्राणान्' मनश्चक्षुरादीन् 'बिभ्रति' धारयन्ति पोषयन्ति वा । अन्नरूपत्वात्तासां प्राणभरणहेतुत्वम् । "डुभृञ् धारणपोषणयोः" ( धा. पा. जु. उ. ६ ) इति धातुः । 'तस्मात्' प्राणभरणाद्धेतोः एता इष्टकाः प्राणभृत्संज्ञाः सम्पन्नाः ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ८-१-२ ) ॥

प्राणान् बिभ्रतीति प्राणभृत इति नामनिर्वचनं कृतम्, तत्र प्राणस्वरूपं प्राणभृत्स्वरूपं च विशदयितुं ब्रह्मवादिनां प्रश्नमुद्भावयति—तदाहुरिति । तत्रोदीरितप्रश्नांश्चोदयन्ति—प्राणानां प्राणभृतां च किं स्वरूपमिति । उत्तरमाह—प्राणा इति । प्राणा एवात्रापि प्राणाः विवक्षिताः, नान्ये । 'अङ्गानि' शरीरावयवभूताश्चक्षुराद्याः । कथमेतदित्यत आह—अङ्गानि हीति । यस्माद् 'अङ्गानि' 'प्राणान् बिभ्रति' धारयन्ति पोषयन्ति वा, तस्मात्तानि 'प्राणभृतः' । प्रकारान्तरेण प्रतिवक्ति—प्राणास्त्वेवेति । 'तु'—शब्दः पक्षव्यावर्तकः, अस्मिन्नपि पक्षे प्राणा एव प्राणाः; 'प्राणभृत्' तु 'अन्नम्' एव । तत्प्रतिपादयति—अन्नं हीति । अन्नरसस्य प्राणपोषकत्वं प्रसिद्धमिति 'हि' शब्दार्थः ॥ १ ॥

तुदाहुः । कथमस्यैताः सर्वाः प्राजापत्या भवन्तीति यदेव सर्वास्वाह प्रजापतिगृहीतया त्वयेत्येवमु हास्यैताः सर्वाः प्राजापत्या भवन्ति ॥ २ ॥

तदाहुः । (यं) यद्ग्रहाय गृहीताय स्तुवतेऽथ शंसत्यथ कस्मात्पुरस्ताद् ग्रहाणामृचश्च सामानि चोपदधातीति सꣳस्था वै कर्मणोऽन्वीक्षितव्यर्चा वै प्रतिपदा ग्रहो गृह्यतऽऋचि साम गीयते तदस्यैतद्यत्पुरस्ताद्ग्रहाणामृचश्च सामानि चोपदधात्यथ यदुपरिष्टाद्ग्रहाणाꣳ स्तुतशस्त्रे भवतस्तद्स्यैतद्यदुपरिष्टाद्ग्रहाणाꣳ स्तोमांश्च पृष्ठानि चोपदधाति ॥ ३ ॥

---

तदाहुः—कथमस्यैताः सर्वाः प्राजापत्या भवन्तीति । यदेव सर्वास्वाह—प्रजापतिगृहीतया त्वयेति । एवमु हास्यैताः सर्वाः प्राजापत्या भवन्ति ॥ २ ॥

तदाहुः—यद्ग्रहाय गृहीताय स्तुवते—अथ शंसति—अथ कस्मात्पुरस्ताद्ग्रहाणामृचश्च सामानि चोपदधातीति । संस्था वै कर्मणोऽन्वीक्षितव्या । ऋचा वै प्रतिपदा ग्रहो गृह्यते, ऋचि साम गीयते । तदस्यैतद्—यत्पुरस्ताद्ग्रहाणामृचश्च सामानि चोपदधाति । अथ यदुपरिष्टाद् ग्रहाणां स्तुतशस्त्रे भवतः—तदस्यैतद्—यदुपरिष्टाद् ग्रहाणां स्तोमांश्च पृष्ठानि चोपदधाति ॥ ३ ॥

---

" अयं पुरो भुवः "—( वा. सं. १३ । ५४ ) इत्यादिकैर्विभक्तैः पञ्चाशन्मन्त्रैः पञ्चाशदिष्टका उपधेया इत्येकः पक्षस्तमेवाभिप्रेत्य प्रश्नमुद्भावयति—तदाहुः कथमस्यैता इति । ' तत् ' तत्र ' आहुः ' चोदयन्ति ब्रह्मवादिनः, ' अस्य ' अग्नेः सम्बन्धिन्यः ' एताः ' पञ्चाशदिष्टकाः ' सर्वाः ' ' कथम् ' ? ' प्राजापत्याः ' प्रजापतिदेवताका उपहिता ' भवन्तीति ' तस्मिन्पक्षे एकस्मिन्नेव हि मन्त्रे " प्रजापतिगृहीतया " इति पदं, न सर्वत्र, अतः सर्वासां प्राजापत्यता न सम्भवतीति । अस्योत्तरमाह—यदेव सर्वास्वाहेति । यस्मादेव कारणात् ' सर्वासु ' अपि पञ्चाशदिष्टकासु यत् " प्रजापतिगृहीतया " इति ' आह ' अनेनैव खलु ' एताः ' प्राणभृतः ' सर्वाः ' ' प्राजापत्याः भवन्ति ' । अयमभिसन्धिः, यद् " अयं पुरः " इत्यादीनां विभक्तानां मन्त्राणां प्रयोग एव न सम्भवति, अपरिसमाप्तार्थत्वात् । " अयं पुरः " इत्यारभ्य " प्रजाभ्यः "—इत्यन्ते ह्येकोऽर्थः परिसमाप्यते । एकार्थावच्छेदकत्वादेको मन्त्र इति प्रतीष्टकं सङ्घ एवावर्तनीयः । अतः सर्वास्वपीष्टकासु प्रजापतिगृहीतयेत्येतत्प्रजापतिशब्दसम्बन्धो भविष्यतीति सर्वासां प्राजापत्यतासिद्धिरिति ॥ २ ॥

अथ मन्त्रगतानुपूर्व्या ऋक्सामग्रहाणां प्रतीयमानमानन्तर्यमाक्षिप्य समाधत्ते—तदाहुर्यद्ग्रहाय गृहीतायेत्यादिना । एवं ह्यनुष्ठानक्रमः—प्रथमं ग्रहग्रहणम्, पश्चात्स्तोत्रम्, तदनन्तरं शस्त्रमिति । नन्वत्र गायत्रादिसामानि वैपरीत्येनोपदधातीत्याक्षेपः । संस्था वा इति । ' संस्था ' निष्पत्तिः ' अन्वीक्षितव्या ' अनुक्रमेण द्रष्टव्या । प्रतिपद्यते देवतास्वरूपं ज्ञायते अनयेति ' प्रतिपत् ' तया खलु ' ऋचा ' प्रथममैन्द्रवायवादि—' ग्रहो गृह्यते, ' ततः सामाधारभूतायाम् ' ऋचि ' ' साम गीयते ' सामगानं क्रियते । ' तत् ' तस्मात्साम्न ऋगाश्रितत्वादृचश्च प्रतिपद्रूपत्वाद् ग्रहग्रहणात्पूर्वभावित्वात्, ऋचां गायत्रीत्रिष्टुबादीनां, साम्नां गायत्रसामादीनां च उपांश्वादिग्रहेभ्यः पूर्वमुपधानमुत्पत्तिक्रमानुरोधाद्युक्तमित्यर्थः । तथा प्रयोगक्रमानुसारेणा-

तुदाहुः । (र्यु) युदेतुत्त्रयुꣳ सुह क्रियते ग्रुह स्तोत्रुꣳ शस्त्रमथात्र ग्रुहं चैवु स्तोत्रं चोपदुधाति कुथमस्यात्रापि शस्त्रमुपहितं भवतीति युद्धावु स्तोत्रं तुच्छस्त्रं यासु ह्येवु स्तुवुते ताऽउ ऽएवानुशꣳसन्त्येवमु हास्यात्रापि शस्त्रमुपहितं भवति ॥ ४ ॥

तुदाहुः । ( र्य ) युद्युथा पितुः पुत्रमेवं त्रीणि प्रथमान्याहाथ कुस्माद्दक्सामुयोः संक्रामतीति सुाम वुाऽऋचः पतिस्तद्यत्तत्रापि युथा पितुः पुत्रमेवं ब्रूयाद्युथा पतिꣳ सन्तं पुत्रं ब्रूयात्ताहक्तुत्तस्माहक्सामुयोः संक्रामति कुस्मादु त्रिः संतनोतीति पितुरं पुत्रं पौत्रं तांस्तत्संतनोति तुस्मादु तेभ्य ऽएक ऽएवु ददाति ॥ ५ ॥

---

तदाहुः—यदेतत्त्रयं सह क्रियते—ग्रहः, स्तोत्रम्, शस्त्रम् । अथात्र ग्रहं चव स्तोत्रं चोपदधाति । कथमस्यात्रापि शस्त्रमुपहितं भवतीति । यद्वाव स्तोत्रं—तच्छस्त्रम् । यासु ह्येव स्तुवते—ताऽउ एवानुशंसन्ति । एवमु हास्यात्रापि शस्त्रमुपहितं भवति ॥ ४ ॥

तदाहुः—यद्यथा पितुः पुत्रमेवं त्रीणि प्रथमान्याह । अथ कस्मादृक्सामयोः संक्रामतीति । साम वाऽऋचः पतिः । तद्यत्तत्रापि यथा पितुः पुत्रमेवं ब्रूयात्, यथा पतिं सन्तं पुत्रं ब्रूयात्—तादृक् तत् । तस्मादृक्सामयोः संक्रामति । कस्मादु त्रिः सन्तनोतीति—पितरम्, पुत्रम्, पौत्रम्—तांस्तत्सन्तनोति । तस्मादु तेभ्य एक एव ददाति ॥ ५ ॥

---

ध्युपांश्वादीनां ग्रहाणां ' उपरिष्टाद् ' उत्तरकाले उपांशोस्त्रिवृत् त्रिवृतो रथन्तरमित्यादिना त्रिवृदादीन्स्तोमान्, रथन्तरादीनि पृष्ठसामानि च ' उपदधाति ' अतो न क्रमभङ्ग इत्यर्थः ॥ ३ ॥

अन्यं प्रश्नमुद्भाव्य समाधत्ते—तदाहुर्यदेतत्त्रयमिति । ग्रह—स्तोत्र—शस्त्राणि पौर्वापर्येण ' सह ' प्रयुज्यन्ते । अत्र तु प्राणभृद्रूपोपांश्वादिग्रहं रथन्तरादिपृष्ठस्तोत्रं तत्तत्प्रतिपादकमन्त्रभागेन कृत्वा इष्टकात्वेन ' उपदधाति '। अथास्याध्वर्योः ' कथम् ' केन प्रकारेण ' अत्र ' प्राणभृत्सु आज्यप्रउगादि 'शस्त्रमप्युपहितं भवतीति' प्रश्नः । स्तोत्रोपधानादेव शस्त्रस्याप्युपधानं सिध्यतीत्याह—यद्वाव स्तोत्रमिति । ' यद् ' एव हि ' स्तोत्रम् ' ' तद् ' एव ' शस्त्रम् ' तयोः प्रगीताप्रगीतत्वमेव विशेषः । एतदेवाह—यासु ह्येवेति । ' यासु हि ' स्तोत्रियासु ऋक्षु ' स्तुवते ' रथन्तरादीनि सामानि गायन्ति सामगाः ' ताः ' एवर्चो होतृमैत्रावरुणादयः ' अनुशंसन्ति ' । अतः स्तोत्रशस्त्रयोर्भेदाभावात्स्तोत्रोपधानेन ' शस्त्रमपि ' अस्य ' उपहितम् ' एव ' भवति ' इत्यर्थः ॥ ४ ॥

तत्रैव प्रश्नान्तरमुद्भाव्य परिहरति—तदाहुर्यद्यथा पितुः पुत्रमिति । ' यथा ' येन प्रकारेण तद्धितवृत्त्या अश्वलस्यापत्यमाश्वलीय इत्येवंरूपया 'पितुः' सम्बन्धविशिष्टं 'पुत्रं' कथयति । 'एवम्' अनेन प्रकारेण तद्धितवृत्त्या " तस्य प्राणो भौवायनः " इत्येवंरूपया ' प्रथमानि ' 'त्रीणि' प्राणवसन्तगायत्रीरूपाणि ' आह ' प्रतिपादयति ' अथ ' एवं सति ' कस्माद् ' हेतोः " गायत्र्यै गायत्रम् " इत्यादिना—प्रतिपाद्यमानयोः ' ऋक्सामयोः ' स्वरूपं ' सङ्क्रामति ' सङ्क्रमणं नाम कार्यकारणतया ' ऋचः ' सामात्मना सङ्क्रमणम्, साम्नश्च ग्रहात्मना,

तद्या᳕ः पुरस्ता᳖दुपद॒धाति᳖ । ता᳕ः प्रा᳖ण॒भृतो॒ऽथ॒ या᳕ः प॒श्चात्ता॒श्चक्षु᳖र्भृत॒स्ता ऽअ᳖पान॒भृतो॒ऽथ॒ या द᳖क्षिण॒तस्ता᳖ मनो॒भृत॒स्ता᳖ऽ उ᳖ व्यान॒भृतो॒ऽथ॒ या ऽउत्त᳖र॒तस्ता᳕ः श्रोत्र॒भृत॒स्ता᳖ऽउ᳖दान॒भृतो॒ऽथ॒ या म᳖ध्ये॒ ता वा᳖ग्भृत॒स्ता᳖ऽउ स᳖मान॒भृत᳖ः ॥ ६ ॥

---

तद्द्याः पुरस्तादुपदधाति—ताः प्राणभृतः । अथ याः पश्चात्—ताश्चक्षुर्भृतः, ता अपानभृतः । अथ या दक्षिणतः—ता मनोभृतः, ता उ व्यानभृतः । अथ या उत्तरतः—ताः श्रोत्रभृतः, ता उदान-भृतः । अथ या मध्ये-ता वाग्भृतः, ता उ समानभृतः ॥ ६ ॥

---

अत्र सर्वत्र तद्धितवृत्त्यभावात् । अनयोः पूर्वेषु त्रिष्विव पितापुत्रभावं तद्धितवृत्त्या ब्रूयात् प्रतिपादयेत् । अनयोर्जन्यजनकभावः कथं सिद्ध्येदिति प्रश्नभावार्थः । "अचतुर"—( पा. सू. ५ । ४ । ७७ ) इत्यादिसूत्रेण निपातनाद् ऋक्सामशब्दोऽच्प्रत्ययान्तः । संक्रमणं समर्थयते—साम वा इति । 'साम' खलु गीयमानमाधारभूतायाः 'ऋचः पतिः,' आधेयत्वेन प्राधान्यात् । तथा सति 'यत्' यदि तयोः 'ऋक्सामयोः' अपि पूर्वेषु त्रिष्विव पितापुत्रभावं तद्धितवृत्त्या 'ब्रूयात्,' तर्हि कस्याश्चित् 'पतिं सन्तम्' तामेवापेक्ष्य 'पुत्रम्' इति 'ब्रूयात्,' इत्येतद् 'यथा' अनुचितम् 'तादृग्' एव 'तत्;' यत् पत्युः सतः साम्नः ऋचः पुत्रत्वप्रतिपादनम् । 'तस्मात्' कारणाद् ऋक्सामयोराधाराधेयभावलक्षण एव सम्बन्धः इत्याह—तस्मादिति ॥

प्रथमतस्त्रिषु मन्त्रेषु ख्यापितस्य पितापुत्रभावस्य प्रयोजनं वक्तुमाकाङ्क्षामुत्थापयति—कस्माद्ु त्रिरिति । 'कस्मात्' खलु प्रयोजनादादितस्त्रीन् तद्धितवृत्त्या पितापुत्रभावेन 'सन्तनोति' सम्बद्धान् प्रतिपादयतीत्यर्थः । पितृ-पुत्र-पौत्रलक्षणत्रिपुरुषसन्तानप्रतिपादनाय तत् इति प्रतिवक्ति—पितरं पुत्रं पौत्रमिति । 'पितरं' पुत्रेण, 'पुत्रं' पौत्रेण । एवं 'तान्' पित्रादीनेव 'तत्' तेन 'सन्तनोति' सन्ततानविच्छिन्नान्करोति । 'तस्मात्' तेषां सम्बद्धत्वादेव 'तेभ्य एक एव' प्रपौत्रः 'ददाति' पिण्डानिति शेषः ॥ ५ ॥

अथैतासामुपधानमन्त्रेषु प्राणादिलिङ्गदर्शनात्तदुपजीवनेन तेषां दशकानां पृथक् संज्ञाकरणं प्रतिजानीते—तद्याः पुरस्तादित्यादिना । 'तत्' तासु प्राणभृत्सु मध्ये 'याः' पूर्वस्यां दिशि 'उपदधाति' 'ताः' प्राणभृत्संज्ञाः, तासामुपधानमन्त्रेषु "प्राणं गृह्णामि प्रजाभ्यः" इति श्रवणात् । अथेति । चक्षुर्लिंग-प्रयुक्तेन मन्त्रेण पश्चादुपधेया 'याः' एव 'चक्षुर्भृतः' ता एवेष्टका 'अपानभृतः' इत्यर्थः । कौष्ठस्य वायोर्मुखनासिकाभ्यां बहिर्निःसरणं प्राणवृत्तिः, अधः सञ्चरणम् अपानवृत्तिः, पूर्वापरभावेन तयोः सञ्च-रणात्पूर्वापरदिगवस्थितानामिष्टकानां तदुभयरूपतेत्यर्थः । ता मनोभृत इति । मनोलिङ्गप्रयुक्तेन मन्त्रेण दक्षिणत उपधेया इष्टका 'मनोभृतः' 'ता' एव 'व्यानभृतः' मनस इव व्यानस्यापि सर्वशरीरव्याप्तेः । श्रोत्रलिङ्गकेन मन्त्रेण 'उत्तरतः' उपधेया इष्टकाः 'श्रोत्रभृतः' 'ता' एव 'उदानभृतः,' श्रोत्रस्येवोदानस्यापि ऊर्द्ध्व-देशावस्थितत्वात् । वागूलिङ्गप्रयुक्तेन मन्त्रेण मध्यत उपधेया इष्टका एव 'वाग्भृतः' 'ता' एव 'समा-नभृतः' इत्थं प्राणभृत इति सामान्यतया विहिता एव अपानभृत इत्यादिविशेषसंज्ञामपि लभन्ते । अपानादीनां तत्तद्वृत्तित्वाच्चक्षुरादीनां च तदनुग्राह्यत्वात् प्राणभृतश्चक्षुर्भृत इत्येवं पृथङ्नामधेया इत्यर्थः ॥ ६ ॥

(स्तु)तदु ह चरकाध्वर्यवः । (वोऽन्या) अन्या ऽएवापानभृतो व्यानभृत ऽउदानभृतः समानभृतश्चक्षुर्भृतो मनोभृतः श्रोत्रभृतो वाग्भृत ऽइत्युपदधति न तथा कुर्यादत्यहैव रेचयन्त्यत्रो ऽएवैतानि सर्वाणि रूपाण्युपधीयन्ते ७

स वै पुरस्तादुपधाय पश्चादुपदधाति । प्राणो हापानो भूत्वाऽऽङ्गुल्यग्रेभ्य ऽइति संचरत्यपान ऽउ ह प्राणो भूत्वाऽऽङ्गुल्यग्रेभ्य ऽइति संचरति तद्यत्पुरस्तादुपधाय पश्चादुपदधात्येतावेवैतत्प्राणौ संतनोति संदधाति तस्मादेतौ प्राणौ संततौ सꣳहितौ ॥ ८ ॥

(तावु) अथ दक्षिणत ऽउपधायोत्तरत ऽउपदधाति । व्यानो होदानो भूत्वाऽऽङ्गुल्यग्रेभ्य ऽइति संचरत्युदान ऽउ ह व्यानो भूत्वाऽऽङ्गुल्यग्रेभ्य

---

तदु ह चरकाध्वर्यवः—अन्या एवापानभृतो व्यानभृत उदानभृतः समानभृतः, चक्षुर्भृतो मनोभृतः श्रोत्रभृतो वाग्भृत—इत्युपदधति । न तथा कुर्यात् । अत्यहैव रेचयन्ति । अत्रोऽएवैतानि सर्वाणि रूपाण्युपधीयन्ते ॥ ७ ॥

स वै पुरस्तादुपधाय पश्चादुपदधाति । प्राणो हापानो भूत्वाऽऽङ्गुल्यग्रेभ्य इति सञ्चरति । अपान उ ह प्राणो भूत्वाऽऽङ्गुल्यग्रेभ्य इति सञ्चरति । तद्यत्पुरस्तादुपधाय पश्चादुपदधाति । एतावेवैतत्प्राणौ सन्तनोति, सन्दधाति । तस्मादेतौ प्राणौ सन्ततौ संहितौ ॥ ८ ॥

अथ दक्षिणत उपधायोत्तरत उपदधाति । व्यानो होदानो भूत्वाऽऽङ्गुल्यग्रेभ्य इति संचरति ।

---

अन्यदीयं मतमुपन्यस्य निराचष्टे—तदु ह चरकाध्वर्यव इति । चरकप्रोक्तशाखाध्यायिनोऽर्ध्वर्यवः 'चरकाध्वर्यवः' 'तत्' तत्र उक्तविषये प्राणभृद्भ्योऽन्या एवापानभृदादीष्टकाः 'उपदधति' इति तन्मतोपन्यासः । तदेतन्निषेधति—न तथा कुर्यादिति । 'अत्रो' 'एव' अत्रैव प्राणभृत्स्वेवोदीरितरीत्या 'एतानि सर्वाणि' अपानभृच्चक्षुर्भृदेवमादीनि 'रूपाण्युपधीयन्ते' पृथगुपदधतां तेषामतिरेकदोष एव स्यादित्यर्थः ॥ ७ ॥

पूर्वदिशि प्राणभृतामुपधानानन्तरं दक्षिणां दिशं विहाय प्रतीच्यां दिशि कर्तव्यमिति विधत्ते—स वै पुरस्तादिति । एतदुपपादयति—प्राणो हेति । मुखनासिकाभ्यां बहिर्निःसरञ्छरीरस्य पूर्वभागेऽवस्थितः प्राणवायुः पुनर्मुखनासाभ्यामेवान्तःप्रविशन्नपानवृत्त्यात्मकः 'भूत्वा' 'आङ्गुल्यग्रेभ्यः' नखाग्रपर्यन्तम् 'इति'—शब्दोऽभिनयद्योतकः । अनेन प्रकारेण देहमध्ये प्रत्यङ्मुखः 'सञ्चरति' । अधोमुखः स एव 'अपानः' पुनरूर्ध्वमुखः 'प्राणो भूत्वा' नखाग्रपर्यन्तम् 'इति' अनेन प्रकारेण प्राचीनं 'सञ्चरति' अतः पूर्वापरदिशोर्नैरन्तर्येण प्राणभृदुपधानाद् 'एतावेव' प्राणापानौ परस्परं सम्बद्धौ 'संहितौ' अविच्छिन्नौ च भवत इत्यर्थः । यस्मादेवमेतस्मिन्कर्मणि 'तस्माद्' एव कारणाल्लोकेऽप्येवं प्राणापानौ दृश्येते इत्यर्थः ॥ ८ ॥

अथ दक्षिणोत्तरदिशोरपि नैरन्तर्येण प्राणभृदुपधानं विधाय स्तौति—अथ दक्षिणत इति । 'अथ'—शब्दः प्रत्यग्दिगुपधानानन्तर्यार्थः । दक्षिणत उपहिताः प्राणभृत एव मनोभृतः व्यानभृतश्च, उत्तरत उप-

ऽङ्गुति सुंचरति तद्युद्दक्षिणतु ऽउपधायोत्तरतुऽउपदुधात्येतावुेवैतुत्प्राणौ सुंतनोति सुंदधाति तुस्मादेतौ प्राणौ सुंततौ सुᳪहितौ ॥ ९ ॥

( तावु ) अुथ या मुध्यऽउपदुधाति । सु प्राणस्ता रेतःसिचोर्व्वेलुयोपदुधाति पृष्ट्यो वै रेतःसिचौ मुध्यमु पृष्ट्यो मध्यतऽ एवास्मिन्नेतुत्प्राणं दधाति सर्व्वुतऽउपदधाति सर्व्वुतऽएवास्मिन्नेतुत्प्राणं दधात्युथोऽएवुᳪहैषु गुदः प्राणः समन्तं नुाभिं पुर्यङ्कोऽनूचीश्च तिरश्चीश्चोपदधाति तुस्मादिमेऽन्वुञ्चश्च तिर्युञ्चश्चात्मुन्प्राणाः सुᳪस्पृष्टाऽउपदधाति प्राणानेुवैतत्सुंतनोति सुंदधाति तुस्मादिमे प्राणाः सुंतताः सुᳪहिताः ॥ १० ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ ८-१-३ ॥ ( १. ३. ) ॥

---

उदान उ ह व्यानो भूत्वाऽऽङ्गुल्यग्रेभ्य इति सञ्चरति । तद्यद्दक्षिणत उपधायोत्तरत उपदधाति । एतावेवैतत्प्राणौ सन्तनोति , सन्दधाति । तस्मादेतौ प्राणौ सन्ततौ, संहितौ ॥ ९ ॥

अथ या मध्यऽउपदधाति–स प्राणः । ता रेतःसिचोर्वेलयोपदधाति । पृष्ट्यो वै रेतःसिचौ । मध्यमु पृष्ट्यः, मध्यत एवास्मिन्नेतत्प्राणं दधाति । सर्वत उपदधाति । सर्वत एवास्मिन्नेतत्प्राणं दधाति । अथोऽएवं हैष गुदः प्राणः समन्तं नाभिं पर्यङ्कः । अनूचीश्च तिरश्चीश्चोपदधाति । तस्मादिमेऽन्वञ्चश्च तिर्यञ्चश्चात्मन्प्राणाः । संस्पृष्टा उपदधाति । प्राणानेवैतत्सन्तनोति, सन्दधाति । तस्मादिमे प्राणाः सन्तताः संहिताः ॥ १० ॥

---

हिताः श्रोत्रभृत उदानभृतश्च । ' तत् ' तथा च ' दक्षिणत उपधायोत्तरतः ' उपधाने व्यानोदानयोः पूर्वंवत्परस्पराभिमुख्येन संचरणम्, तद्धेतुकाविच्छेदश्च सिद्ध्यतीति ' व्यानो ह्युदानो भूत्वा ' इत्यादेस्तात्पर्यार्थः । गतमन्यत् ॥ ९ ॥

अथ मध्यत उपधेयानां स्थानविशेषं विधाय स्तौति–अथ या मध्य इति । ' मध्ये ' ' याः ' दशसङ्ख्याकाः प्राणभृत उपधीयन्ते ' स प्राणः ' समानवृत्त्युपेतप्राणात्मिकास्ता इत्यर्थः । ' स ' इति विधेयापेक्षयैकवचनम् । रेतःसिगाख्ययोरिष्टकयोर्या वेला प्रान्तदेशस्तया ' वेलया ' ' ताः ' उपदध्यात्, ताः मध्यवर्तिनीः प्राणभृत इत्यर्थः । पृष्ट्यो वा इत्यादि । कटिसम्बन्धीन्यस्थीनि ' पृष्ट्यः ' तदात्मिके हि रेतःसिगाख्ये इष्टके । ताश्च पृष्ट्यो 'मध्यमु' पुरुषशरीरस्य मध्यभाग एव तथा च 'एतत्' एतेन मध्यवर्तिपृष्टिरूपरेतःसिक्समीपे प्राणभृदुपधानेन ' मध्यतः ' चित्याग्निशरीरस्य मध्य एव पञ्चमवृत्त्यात्मकम् ' प्राणम् ' प्रतिष्ठापयति । सर्वत उपधानमनूद्य स्तौति–सर्वत उपदधातीति । सर्वत एवास्मिन्निति । ' सर्वतः ' सर्वाभ्यो दिग्भ्यः । सर्वत उपधानं प्रकारान्तरेण स्तौति–अथो एवं हैष इति । ' अथो ' अपि च ' एवमेषः ' खल्वेषः ' गुदः प्राणः ' प्राणोत्पत्तिस्थानस्य मूलाधाराख्यस्योपलक्षणमेतत्; तथाविधः सः ' समन्तं नाभिम् ' नाभेः सर्वतः ' पर्यक्नः ' परिणतः " अञ्चु गतौ "–( धा. पा. भ्वा. प. १८८ ) इत्यस्मान्निष्ठायाम् " अञ्चोऽनपादाने "–( पा. सू. ८ । २ । ४८ ) इति नत्वम् । अथ सर्वासां प्राणभृतामुपधाने धर्मविशेषं

ता हैके पुरुषमुपाप्योंपदधति । ( त्ये ) एष वै प्राणस्तमेता बिभ्रति यत्प्राणं बिभ्रति तस्मात्प्राणभृतऽइति न तथा कुर्यादेषो ऽहैव प्राणो यऽएष हिरण्मयः पुरुषस्तस्य त्वयमात्मा यावदिदमभ्ययमग्निर्व्विहितस्तद्यद्धास्यैताऽअङ्गं नाभिप्राप्नुयुः प्राणो हास्य तदङ्गं नाभिप्राप्नुयाद्यदु वै प्राणोऽङ्गं नाभिप्राप्नोति शुष्यति वावैतन्म्लायति वा तस्मादेनाः परिश्रित्स्वेवोपाप्योंपदध्यादथ या मध्यऽउपदधाति ताभिरस्यैष ऽआत्मा पूर्णस्ताऽ उऽएवैतस्मादनन्तर्हिताः ॥ १ ॥

ता हैके पुरुषमुपाप्योंपदधति । एष वै प्राणस्तमेता बिभ्रति । यत्प्राणं बिभ्रति—तस्मात्प्राणभृत इति । न तथा कुर्याद्—एषोऽहैव प्राणो—य एष हिरण्मयः पुरुषः । तस्य त्वयमात्मा—यावदिदमभ्ययमग्निर्विहितः । तद्यद्धास्यैता अङ्गं नाभिप्राप्नुयुः—प्राणो हास्य तदङ्गं नाभिप्राप्नुयात् । यदु वै प्राणोऽङ्गं नाभिप्राप्नोति—शुष्यति वावैतत्, म्लायति वा । तस्मादेनाः परिश्रित्स्वेवोपाप्योंपदध्यात् । अथ या मध्यऽउपदधाति । ताभिरस्यैष आत्मा पूर्णः । ता उऽएवैतस्मादनन्तर्हिताः ॥ १ ॥

विधत्ते—अनूचीश्च तिरश्चीश्चेति । 'अनूचीः' प्राक्प्रत्यगायताः । 'तिरश्चीः' दक्षिणोत्तरायताः । तत्प्रशंसति—तस्मादिम इति । 'आत्मन्' आत्मनि शरीरे वर्तमानाः 'इमे' 'प्राणाः' तत्तन्नाडीसंस्थानवशेन तत्र तत्र सञ्चरन्तः कचिद् 'अन्वञ्चः' अनूचीनाः कचित् 'तिर्यञ्चः' तिरश्चीनाश्च भवन्ति । तासामुपहितानां परस्परसंस्पर्शं विधाय स्तौति—सꣳस्पृष्टा उपदधातीति । निगदसिद्धोऽर्थः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
अष्टमकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ८–१–३ ) ॥

अथ तासां पुरुषशिरसः समीपे प्रागादिदिक्षूपधानं पूर्वपक्षयति—ता हैक इति । 'एके' शाखिनः 'ताः' प्राणभृतः 'पुरुषमुपाप्य' उपहितं पुरुषशिरः प्राप्य तत्समीपे 'उपदधति' । एष वै प्राणः—इत्यादिना तदुपपादनम् । 'एषः' खलु पुरुषः 'प्राणः' प्राणात्मकः । "आत्मान्तर आत्मा प्राणः" इत्यादिश्रुतेः । 'तं' पुरुषात्मकम् 'प्राणम्' 'एताः' इष्टकाः 'बिभ्रति' धारयन्ति । ( 'यत्प्राणम्' इति प्रासन्ति ) तदेव निषिध्य प्रकारान्तरेणाह—न तथा कुर्यादेषोऽहैवेति । 'यः' अयम् 'हिरण्मयः पुरुषः' उपहितः 'एषः' खलु प्राणात्मकः । तस्य पूर्वोक्तस्य शिरोरूपस्य पुरुषस्य 'अयम्' बुद्धिसान्निध्यमारूढः हिरण्मयः पुरुषः 'आत्मा' तत्र कारणमाह—यावदिदमिति । यतो हेतोः 'इदम्' हिरण्मयपुरुषस्य स्वरूपम् 'अभि' लक्ष्य 'अयम्' चित्यः 'अग्निः' 'विहितः' उपहितः 'तत्' तथा सति 'यत्' यदि 'अस्य' चित्याग्निशरीरोपेतस्य हिरण्मयपुरुषस्य 'अङ्गम्' अवयवम् 'एताः' प्राणभृतः 'नाभिप्राप्नुयुः' न सम्बध्नीयुः । तर्हि प्राणभरणहेतूनां तासामसम्बन्धात् 'प्राणः' एव 'अस्य' हिरण्मयपुरुषस्य 'अङ्गम्' शरीरम् 'नाभिप्राप्नुयात्' । ततः को दोषः ? इति तत्राह—यदु वा इति । 'यत्' खलु 'अङ्गम्' 'प्राणः' न व्याप्नोति तत्काष्ठवच्छुष्कं म्लानं च भवतीत्यर्थः । तस्माद्धिरण्मयपुरुषस्याभिप्राप्तिर्यथा भवति तथोपदध्यादित्याह—तस्मादिति । 'परिश्रित्सु'

( स्तु ) तदाहुः । ( यु ) यदयं पुरो भुवोऽयं दक्षिणा विश्वकर्माऽयं पश्चाद्विश्वव्यचाऽ इदमुत्तरात्स्वरियमुपरि मतिरिति सम्प्रति दिशोऽभ्यनूच्यन्तेऽथ कस्मादेना ऽअक्ष्णया देशेषूपदधातीति प्राणा वै प्राणभृतस्ता यत्सम्प्रति दिश ऽउपदध्यात्प्रागयꣳ हैवायं प्राणः संचरेदथ यदेना ऽएवमभ्यनूक्ताः सतीरक्ष्णया देशेषूपदधाति तस्मादयं प्रागयं प्राणः सन्नक्ष्णया सर्व्वाण्यङ्गानि सर्व्वमात्मानमनुसंचरति ॥ २ ॥

स ऽएष पशुर्यदग्निः । सोऽत्रैव सर्व्वः कृत्स्नः संस्कृतस्तस्य याः पुरस्ता-

---

तदाहुः—यद् अयं पुरो भुवः । अयं दक्षिणा विश्वकर्मा । अयं पश्चाद्विश्वव्यचाः । इदमुत्तरात्स्वः । इयमुपरि मतिः, इति सम्प्रति दिशोऽभ्यनूच्यन्ते । अथ कस्मादेना अक्षणया देशेषूपदधातीति । प्राणा वै प्राणभृतः । ता यत्सम्प्रति दिश उपदध्यात्—प्रागयं हैवायं प्राणः संचरेत् । अथ यदेना एवमभ्यनूक्ताः सतीरक्षणया देशेषूपदधाति—तस्मादयं प्रागयं प्राणः सन्नक्षणया सर्वाण्यङ्गानि, सर्वमात्मानमनुसंचरति ॥ २ ॥

स एष पशुर्यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतः । तस्य याः पुरस्तादुपदधाति—तौ बाहू ।

---

चतसृषु दिक्षु परिश्रयणार्थमुपहितासु शर्करासु ‘ एव उपार्प्य ’ परिक्रम्य हिरण्मयपुरुषप्राप्तिपर्यन्तम् ‘ एनाः ’ प्राणभृतः ‘ उपदध्यात् ’ । तथा चास्य कृत्स्नशरीरे प्राणव्याप्तिः सिध्यतीत्यर्थः ॥

नन्वेवं शरीरस्य प्राणव्याप्तावपि शरीरिणः पुरुषस्य प्राणव्याप्तिः कथमित्यत आह—अथ या मध्य इति । ताभिरस्यैष आत्मा पूर्ण इति । ‘ अस्य ’ चित्याग्निशरीरस्य ‘ एषः ’ हिरण्मयः पुरुषः ‘ आत्मा ’ ‘ ताभिः ’ मध्य उपहिताभिः प्राणभृद्भिः सम्बन्धात् प्राणेन ‘ पूर्णः ’ । कथमेतदित्यत आह—ता उ एवैतस्मादिति । ‘ ताः ’ खलु मध्ये उपहिताः प्राणभृतः ‘ एतस्मात् ’ हिरण्मयपुरुषात् ‘ अनन्तर्हिताः ’ अव्यवहिताः सम्बद्धा एव यतो भवन्ति तत इत्यर्थः ॥ १ ॥

आग्नेयादिकोणदिग्भागेषु प्राणभृतां वक्ररीत्योपधानमाक्षिप्य समाधत्ते—तदाहुर्यदयं पुरो भुव इत्यादिना । ‘सम्प्रति दिशः’ सम्प्रतिपन्नाः प्रसिद्धाः प्रागादिपञ्चदिशः ‘यत्’ यदि ताः ‘अभ्यनूच्यन्ते’ प्रतिपाद्यन्ते ‘अथ कस्मात्’ कारणात् ‘ एनाः ’ प्राणभृतः ‘ अक्षणया ’ वक्रगत्या ‘ देशेषु ’ आग्नेयादिकोणेषु ‘ उपदधाति ’ इति । तथा च मन्त्रस्यासामर्थ्यप्रसङ्गः । ‘प्राणा वै’ इत्यादिपरिहारः । ‘यत्’ यदि ‘ताः’ प्राणभृतः ‘सम्प्रति दिशः’ प्रागादिमुख्यदिक्सम्बद्धा एव ‘ उपदध्यात् ’ । तर्ह्ययं शरीरमध्ये वर्तमानः ‘ प्राणः ’ ‘ प्रागयम् ’ ऊर्ध्वाऽधोगतिरूपेणैव ‘ सञ्चरेत् ’ न पुनस्तिर्यग्गमनेन कृत्स्नदेहं व्याप्नुयात् । अत एतद्दोषपरिहाराय ‘ एवं ’ प्रागादिदिक्सम्बन्धितया ‘ अभ्यनूक्ताः सतीः ’ अपि यत् वक्रगत्याऽऽग्नेयादिकोणेषूपदधाति ‘ तस्मात् ’ कारणात् ‘ अयं प्राणः ’ उच्छ्वासश्वासात्मना ‘ प्रागयम् ’ ‘ सन् ’ ऊर्ध्वाधोगतिकोऽपि वर्तमानः ‘अक्षणया’ वक्रगत्या ‘ सर्वाण्यङ्गानि ’ व्याप्नुवन् ‘ सर्वमात्मानम् ’ शरीरम् ‘ अनुसञ्चरति ’ सर्वतो व्याप्नोति ॥ २ ॥

प्राणभृदुपधानं , पशुत्वसम्पत्त्या स्तौति—स एष पशुरिति । चित्योऽग्निः—इति यत् ‘ स एष पशुः ’ ‘ सः ’ च ‘ अत्रैव ’ प्राणभृदुपधाने ‘ सर्वः ’ निरवशेषः ‘ कृत्स्नः ’ सम्पूर्णावयवः ‘ संस्कृतः ’ निष्पादितो भवति ।

दुपदुधाति तौ बाहू ऽअथ युाः पश्चात्ते सुक्थ्यावथ या मुध्यऽउपदुधाति सुऽआत्मा ता रेतःसिचोर्व्वेलयोपदधाति पृष्टयो वै रेतःसिचौ मुध्यमु पृष्ट्यो मध्यतो ह्ययमात्मा सर्व्वतऽउपदधाति सर्व्वतो ह्ययमात्मा ॥ ३ ॥

तुदाहुः । ( यं ) यत्पूर्व्वेषु गणेष्वेकैकथ्ँ स्तोममेकैकं पृष्ठमुपदधात्यथ कस्मादत्र द्वौ स्तोमौ द्वे पृष्ठेऽउपदधातीत्यात्मा वाऽअस्यैष ऽआत्मानं तदङ्गानां ज्येष्ठं वरिष्ठं वीर्यवत्तमं करोति तस्मादयमात्माऽङ्गानां ज्येष्ठो वरिष्ठो वीर्यवत्तमः ॥ ४ ॥

( स्तु ) तदाहुः । कथमस्यैषोऽग्निः सर्व्वः कृत्स्नऽइष्टकायामिष्टकायाथ्ँ संस्कृतो भवतीति मज्जा युजुरस्थीष्टका माथ्ँसथ्ँ सादनं त्वक्सूददोहा

---

अथ याः पश्चात्-ते सक्थ्यौ । अथ या मध्यऽउपदधाति-स आत्मा । ता रेतःसिचोर्वेलयोपदधाति । पृष्ट्यो वै रेतःसिचौ । मध्यमु पृष्ट्यः । मध्यतो ह्ययमात्मा । सर्वत उपदधाति । सर्वतो ह्ययमात्मा ॥ ३ ॥

तदाहुः-यत्पूर्वेषु गणेष्वेकैकं स्तोममेकैकं पृष्ठमुपदधाति । अथ कस्मादत्र द्वौ स्तोमौ, द्वे पृष्ठे उपदधातीति । आत्मा वाऽअस्यैषः । आत्मानं तदङ्गानां ज्येष्ठं वरिष्ठं वीर्यवत्तमं करोति । तस्मादयमात्माऽङ्गानां ज्येष्ठो वरिष्ठो वीर्यवत्तमः ॥ ४ ॥

तदाहुः-कथमस्यैषोऽग्निः सर्वः कृत्स्न इष्टकायामिष्टकायां संस्कृतो भवतीति । मज्जा यजुः,

---

पशुरूपतां सम्पादयति-तस्य याः पुरस्तादिति । बाहुद्वय-पादद्वय-मध्यशरीरभेदेन पञ्चावयवात्मकः पशुः । अत्र च पूर्वदिश्युपहिताः प्राणभृतो 'बाहू' । 'पश्चाद्' उपहिताः प्राणभृतस्तु 'सक्थ्यौ' सक्थ्युपलक्षितौ पादौ । 'अथ या मध्ये' उपधीयन्ते 'स आत्मा' मध्यदेहः । स्थानविशेषसम्बन्धेनापि ताद्रूप्यं प्रतिपादयति-रेतःसिचोर्वेलयेति । एतदुक्तार्थम् । सर्वतो ह्ययमात्मेति । सर्वाभिर्दिग्भिः परिच्छिन्नोऽयं मध्यदेह इत्यर्थः ॥ ३ ॥

अन्तिममन्त्रे स्तोमद्वयपृष्ठद्वयप्रतिपादनरूपस्य विशेषस्य प्रश्नपूर्वकं प्रयोजनं कथयति-तदाहुरिति । 'तत्' तत्र प्राणभृद्विषये 'पूर्वेषु' प्रागादिदिक्षूपधेयेषु चतुर्षु मन्त्र 'गणेषु' त्रिवृदादिम् 'एकैकं-स्तोमम्' रथन्तरादिकम् 'एकैकं पृष्ठम्' उपदधाति.' । अत्रान्तिमे तु 'कस्मात्' कारणात्त्रिणवत्रयस्त्रिंशाविति स्तोमद्वयम्, शाकररैवते इति पृष्ठसामद्वयं च 'उपदधाति' इति प्रश्नः । आत्मा वै इति तस्योत्तरम् । 'अस्य' अग्नेः 'एषः' अन्तिमो गणः 'आत्मा वै' मध्यमशरीरं खलु 'तत्' तेन स्तोमपृष्ठयोर्द्वैगुण्येनाङ्गेभ्यः सकाशादङ्गिनम् 'आत्मानम्' मध्यदेहम् 'ज्येष्ठम्' प्रवृद्धतमम् 'वरिष्ठम्' वरतमम्, अत एव 'वीर्यवत्तमम्' बलवत्तममतिशयितसामर्थ्योपेतं च 'करोति' । तस्मादयमिति । लोकप्रसिद्ध्या उक्तार्थनिगमनम् ॥ ४ ॥

प्रतीष्टकं कृत्स्नस्याग्नेः संस्कृतिं प्रश्नपूर्वकमुपपादयति-तदाहुरिति । 'अस्य' यजमानस्य ॥ ६ ॥

लोम पुरीषस्य युजुरन्नं पुरीषमेवमु हास्यैषोऽग्निः सर्व्वः कृत्स्नऽइष्टकाया-मिष्टकायाᳪं सुंस्कृतो भवति ॥ ५ ॥

सुऽएषु सार्व्वायुषोऽग्निः । स यो हैतमेवᳪं सार्व्वायुषमग्निं व्वेद सुर्व्वᳪं हैवायुरेति ॥ ६ ॥

( त्य ) अथातः समञ्चनप्रसारणस्यैव । संचितᳪं हैके समञ्चनप्रसारणे-नेत्यभिमृशन्ति पशुरेष यदग्निर्यदा वै पशुरङ्गानि सं चाञ्चति प्र च सार-यत्यथ स तैर्व्वीर्यं करोति ॥ ७ ॥

संव्वत्सरोऽसि परिवत्सरोऽसि । ( सी ) इदावत्सरोऽसीद्वत्सरोऽसि व्वत्सरोऽसि ॥ उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्धमासास्ते

---

अस्थीष्टका, मांसं सादनम्, त्वक् सूददोहाः, लोम पुरीषस्य यजुः, अन्नं पुरीषम्—एवमु हास्यै-षोऽग्निः सर्वः कृत्स्न इष्टकायामिष्टकायां संस्कृतो भवति ॥ ५ ॥

स एष सार्वायुषोऽग्निः । स यो हैतमेवं सार्वायुषमग्निं वेद । सर्वं हैवायुरेति ॥ ६ ॥

अथातः समञ्चनप्रसारणस्यैव । संचितं हैके समञ्चनप्रसारणेनेत्यभिमृशन्ति । पशुरेष यदग्निः । यदा वै पशुरङ्गानि सं चाञ्चति, प्र च सारयति—अथ तैर्वीर्यं करोति ॥ ७ ॥

" संवत्सरोऽसि, परिवत्सरोऽसि, इदावत्सरोऽसि, इद्वत्सरोऽसि, वत्सरोऽसि । उषसस्ते कल्पन्ताम् । अहोरात्रास्ते कल्पन्ताम् । अर्धमासास्ते कल्पन्ताम् । मासास्ते

---

स इति । 'स एषः' चित्यः ' अग्निः ' 'सार्वायुषः' सर्वस्यापि यावज्जीवनं प्राणात्मत्वेन, यस्य स तथोक्तः । स यो हैतमिति । तद्वेदितुः फलम् ॥ ६ ॥

सुपर्णरूपस्य चित्याग्नेः 'समञ्चनं' संकोचः, ' प्रसारणम् ' प्रस्तारस्तद्धेतुतया प्राणभृदुपधानं स्तोतुमुपक्रमते—अथातः समञ्चनप्रसारणस्यैवेति । यतः पक्षिरूपस्य चित्याग्नेः पक्षसङ्कोचनरूपं समञ्चनम्, तत्प्रसारणं च; उभयमपि सम्पादयितव्यम् अतः कारणात्तदुभयस्य विचारः क्रियत इत्यर्थः । तत्रैकीयं मतमुपन्यस्यति—तं ' सञ्चितम्' अग्निम् ' समञ्चनप्रसारण '—प्रतिपादकेन ' इति ' अनेन वक्ष्यमाणमन्त्रेण,' अभिमृशन्ति ' अभितः संस्पृशन्ति । समञ्चनप्रसारणयोर्वीर्यहेतुतयाऽवश्योत्पाद्यतामाह—पशुरेष इति । अग्नेः पशुरूपता प्रागुक्ता ( श. प. ६ ।२।१।१२ ) । लोके हि 'पशुर्यदा' स्वकीयानि 'अङ्गानि' 'सम्' 'अञ्चति' ' प्र च सारयति ' सङ्कुचितानि, प्रसारितानि च कर्तुं शक्नोतीत्यर्थः । ' अथ ' अनन्तरमेव ' सः ' पशुः ' तैः ' समञ्चन-प्रसारणोपेतैरङ्गैः ' वीर्यम् ' स्वव्यापारं 'करोति' कर्तुं प्रभवति । अतोऽग्निः पशुः—इति तस्यापि समञ्चनप्रसा-रणवत्त्वं सम्पादनीयम् ॥ ७ ॥

अभिमर्शनमन्त्रम् ' इति '—शब्दनिर्दिष्टं पठन्ति—संवत्सरोऽसीति । संवत्सर-परिवत्सरादिशब्दाः प्रभवा-दिषु पञ्चसु वत्सरेषु सङ्केतिताः । हे अग्ने ! त्वम् ' संवत्सरोऽसि ' यथा संवत्सरादयः सम्पूर्णावयवाः; त्वमपि सम्पूर्णावयवत्वात्तद्रूपोऽसीत्यर्थः । तथा च संवत्सराद्यात्मनः ' ते ' तव अवयवभूताः ' उषसः ' उषःकाऽः

कॢपन्तां मासास्ते कल्पन्तामृतवस्ते कल्पन्ताᳬं संवत्सरस्ते कल्पताम् ॥ प्रेत्याऽएत्यै सं चाञ्च प्र च सारय ॥ सुपर्णचिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवः सीदेति ॥ ८ ॥

( त्यु ) अपि ह स्माह शाट्यायनिः । स्फोटतोर्हैकः पक्षयोरुपशुश्रावैतेनाभिमृष्टस्य तस्मादेनमेतेनाभ्येव मृशेदिति ॥ ९ ॥

( त्यु ) अथ ह स्माह स्वर्जिन्नाग्नजितः । ( तो ) नग्नजिद्वा गान्धारः प्राणो वै समञ्चनप्रसारणं यस्मिन्वाऽअङ्गे प्राणो भवति तत्सं चाञ्चति प्र च सारयति संचितमेवैनं बहिष्टादभ्यन्यात्तदस्मिन्प्राणᳬं समञ्चनप्रसारणं दधाति

---

कल्पन्ताम् । ऋतवस्ते कल्पन्ताम् । संवत्सरस्ते कल्पताम् । प्रेत्यै, एत्यै, सं चाञ्च । प्र च सारय । सुपर्णचिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवः सीद "–( वा० सं० २७ । ४५ ) इति ॥ ८ ॥

अपि ह स्माह शाट्यायनिः । स्फोटतोर्हैकः पक्षयोरुपशुश्राव–एतेनाभिमृष्टस्य । तस्मादेतेनाभ्येव मृशेदिति ॥ ९ ॥

अथ ह स्माह स्वर्जिन्नाग्नजितो, नग्नजिद्वा गान्धारः । प्राणो वै समञ्चनप्रसारणम् । यस्मिन्वाऽअङ्गे प्राणो भवति–तत्सं चाञ्चति, प्र च सारयति । संचितमेवैनं बहिष्टादभ्यन्यात् । तदस्मिन्

---

' कल्पन्ताम् ' समर्था भवन्तु । अहानि च रात्रयश्च ' अहोरात्राः ' " अहःसर्वैकदेश "–( पा. सू. ५ । ४ । ८७ ) इत्यादिना अच् समासान्तः । " रात्राह्नाहाः पुंसि "–( पा. सू. २ । ४ । २९ ) इति पुँल्लिङ्गता । अहोरात्रपक्षमासर्तुरूपास्त्वदीयावयवाः स्वस्वव्यापारसमर्था भवन्तु । तत्समुदायात्मकस्तद्रूपः ' संवत्सरः ' च ' कल्पताम् ' समर्थो भवतु । किमर्थमेषां सामर्थ्यमिति तत्राह–' प्रेत्यै ' प्रगमनाय सम्यग् ' अञ्च ' । ' एत्यै ' आगमनाय ' प्रसारय च ' अवयवैः समञ्चनम्, प्रसारणं च कुर्वित्यर्थः । हे अग्ने ! त्वम् ' सुपर्णचिदसि ' सुपर्णो गरुत्मान् तदाकृत्या चीयमानो भवसि । ' तया देवतया ' इत्यादि गतम् । अग्नेरभिधेयत्वाद् ' ध्रुवः ' इति पुँल्लिङ्गत्वम् ॥ ८ ॥

एतदेकीयं मतं शाट्यायनेरप्यभिमतमित्याह–अपि ह स्माहेति । ' शाट्यायनिः ' अप्येवमेव ' आह स्म ' । स्फोटतोरित्यादि तद्वाक्यम्, " संवत्सरोऽसि परिवत्सरोऽसि " इत्यनेन मन्त्रेणाभिमृष्टस्य चित्यस्याग्नेः ' स्फोटतोः ' स्फुटनस्वभावयोः वियति वीज्यमानत्वेन प्रकटीभावमापन्नयोः ' पक्षयोः ' स्वरूपम् ' एकः ' कश्चित्साधारणो जनः ' उपशुश्राव ' अभिमर्शनजनितसामर्थ्योपेताविमौ पक्षाविति ज्ञातवान् । ' तस्मात् ' कारणाद् ' एतेन '–एव मन्त्रेण ' एनम् ' अग्निम् ' अभिमृशेत् ' । ' इति '–शब्दः शाट्यायनिवाक्यपरिसमाप्तौ ॥ ९ ॥

पक्षान्तरमाह–अथ ह स्माह स्वर्जिदिति । नग्नजितः पुत्रः ' स्वर्जित् '–नामा अथवा गन्धारेषु भवो नग्नजिदेव राजा वक्ष्यमाणपक्षस्य प्रवक्ता । प्राणो वा इत्यादि । ' प्राणः ' एव हि समञ्चनप्रसारणात्मकः,

तुथा सं चाञ्चति प्र च सारयुतीति तदुहैव समञ्चनप्रसारणं यत्स तुदुवाच राजुन्यबन्धुरिवु त्वेव तुदुवाच यन्नु शतं कृत्वोऽथो सहस्रं बहिष्टादभ्यन्युर्न वै तुस्मिँस्ते प्राणं दध्युर्यो वाऽआत्मन्प्राणः स ऽएव प्राणस्तद्युत्प्राणभृत ऽउपदुधाति तुदुस्मिन्प्राणᳪं समञ्चनप्रसारणं दधाति तुथा सं चाञ्चति प्र च सारयत्युथ लोकम्पृणेऽउपदधात्यस्याᳪं स्रक्त्यां तुयोरुपरि बुन्धुः पुरीषं निवपति तुस्योपरि बुन्धुः ॥ १० ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ८-१-४ ॥ ( १. ४. ) ॥

इति प्रथमोऽध्यायः समाप्तः ॥ ८ । १ ॥

---

प्राणं समञ्चनप्रसारणं दधाति । तथा सं चाञ्चति, प्र च सारयति-इति । तदहैव समञ्चनप्रसारणं-यत् स तदुवाच । राजन्यबन्धुरिव त्वेव तदुवाच । यन्नु शतं कृत्वोऽथो सहस्रं बहिष्टादभ्यन्युः-न वै तस्मिंस्ते प्राणं दध्युः । यो वाऽआत्मन्प्राणः-स एव प्राणः । तद्यत् प्राणभृत उपदधाति-तदस्मिन्प्राणं समञ्चनप्रसारणं दधाति । तथा सं चाञ्चति, प्र च सारयति । अथ लोकंपृणेऽउपदधाति-अस्यां स्रक्त्याम् । तयोरुपरि बन्धुः । पुरीषं निवपति । तस्योपरि बन्धुः ॥ १० ॥

इत्याहवनीयाग्निचित्यायां पञ्चचितिकायां प्रथमा चितिः ।

---

तद्धेतुत्वात् । एतदेव तादात्म्यं प्रतिपादयति-यस्मिन्वा इति । 'यस्मिन्' खलु 'अङ्गे' 'प्राणो भवति' 'तत्' अङ्गम् 'समञ्चति' च 'प्रसारयति च' आकुञ्चनप्रसारणसमर्थं भवतीत्यर्थः । तथा सति 'सञ्चितमेवैनम्' अग्निम् 'बहिष्टाद्' बाह्यदेशादागत्य 'अभ्यन्यात्' पर्युच्छ्वासं कुर्यात् । 'तत्' तेन समञ्चनप्रसारणात्मकं 'प्राणम्' स्थापितवान् भवति । 'तथा' च सोऽग्निः समञ्चनप्रसारणसमर्थो भवति, न पुनरुक्तमन्त्राभिमर्शनं कर्तव्यमिति, नाग्निजितस्य पक्ष उपन्यस्तः ॥

तमेतं दूषयति-तदहैवेति । 'तत्' एव "संवत्सरोऽसि"-इति मन्त्राभिमर्शनरूपमेव प्रागुक्तं 'समञ्चनप्रसारणम्' अनन्तरोक्तं न भवति; इत्येवकारार्थः । तत्र दूषणमाह-यत्स तदुवाचेति । 'स' नाग्नजित् स्वर्जिद्वा 'यत्' प्रागुक्तवान्, एतदेवोद्घाटयति-राजन्येति । राजन्याधम इव यथा वक्ति तथा तदभ्यननरूपं समञ्चनप्रसारणमुक्तवान् । एतदेवोद्घाटयति-यन्नु शतमिति । 'बहिष्टात्' बाह्यदेशादागत्य 'यन्नु' यमेव पदार्थम् शतवारं सहस्रवारं वा 'अभ्यन्युः' अभितः पर्युच्छ्वासमाज कुर्युः जनाः । 'न' खलु 'तस्मिन्' पदार्थे ते 'प्राणम्' 'दध्युः' स्थापयेयुः, अतोऽभ्यननेन यत्प्राणस्थापनं प्रागुदीरितं तदसङ्गतमित्यर्थः । ननु चित्याग्नेः पक्षपुच्छादावपि प्राणेन भवितव्यं तस्य क उपाय इत्यत आह-यो वा आत्मन्निति । 'यः' खलु आत्मनि चित्याग्नेर्मध्यदेहे 'प्राणः स एव' पक्षाद्यङ्गेष्वपि 'प्राणः' भवति । आत्मन्यपि प्राणसद्भावः कथमिति तत्राह-तद्यत् प्राणभृत इति । उक्तार्थमेतत् । लोकंपृणाख्ययोरिष्टकयोरुपधानं विधत्ते-अथ लोकंपृणे इति । अवशिष्टं स्थानं पृणाति पूरयति इति 'लोकंपृणा' ते 'अस्यां स्रक्त्यां' कोणे इत्यर्थः । उक्तं हि सूत्रकृता-

" लोकंपृणा दक्षिणाꣳसादध्यामध्यात् "–( का. श्रौ. सू. १७ । १२७ ) इति । ततः पुरीषनिवपनं विधत्ते–पुरीषं निवपतीति । छिद्रपूरणार्थः पांसुः ' पुरीषम् ' । ' तयोः ' लोकंपृणयोः ' तस्य ' पुरीषनिवपनस्य च प्रतिपादको वाक्यशेष उपर्याम्नास्यते " अथ लोकंपृणामुपदधात्यसौ वा आदित्यो लोकंपृणा " इति ( श. प. ८ । ७ । २ । १–१९ ) " अथ पुरीषं निवपति माꣳसं वै पुरीषम् "–( श. प. ८।७।३।१ ) इत्यादिना च ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे प्रथमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ८–१–४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्येऽष्टमकाण्डे प्रथमोऽध्यायः ॥ ( ८–१ ) ॥

# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।
# प्रथमप्रपाठके च पञ्चमं ब्राह्मणम् ।

द्वितीयां चितिमुपदधाति । (त्ये) एतद्वै देवाः प्रथमां चितिं चित्वा समारोहन्नयं वै लोकः प्रथमा चितिरिममेव तल्लोकꣳ संस्कृत्य समारोहन् ॥ १ ॥

(हंस्ते) तेऽब्रुवन् । (वंश्चे) चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्नितऽ ऊर्ध्वमिच्छतेति ते चेतयमानाऽ एतां द्वितीयां चितिमपश्यन्युदूर्ध्वं पृथिव्याऽ अर्वाचीनमन्तरिक्षात्तेषामेष लोकोऽध्रुव इवाप्रतिष्ठितऽइव मनस्यासीत् ॥ २ ॥

(त्ते) तेऽश्विनावब्रुवन् । (न्यु) युवं वै ब्रह्माणौ भिषजौ स्थो युवं नऽइमां द्वितीयां चितिमुपधत्तमिति किं नौ ततो भविष्यतीति युवमेव

---

द्वितीयां चितिमुपदधाति । एतद्वै देवाः प्रथमां चितिं चित्वा समारोहन् । अयं वै लोकः प्रथमा चितिः । इममेव तल्लोकं संस्कृत्य समारोहन् ॥ १ ॥

तेऽब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । इत ऊर्ध्वमिच्छतेति । ते चेतयमाना एतां द्वितीयां चितिमपश्यन्—यदूर्ध्वं पृथिव्याः, अर्वाचीनमन्तरिक्षात् । तेषामेष लोकोऽध्रुव इवाप्रतिष्ठित इव मनस्यासीत् ॥ २ ॥

तेऽश्विनावब्रुवन्—युवं वै ब्रह्माणौ भिषजौ स्थः । युवं न इमां द्वितीयां चितिमुपधत्तमिति । किं

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थं प्रथमचितावुपधेयानां प्राणभृतामुपधानं पुरीषनिवपनान्तं वर्णितम्, तावता प्रथमचितिः समापिता । अथ द्वितीयस्याश्चितेरुपधानं विधत्ते—द्वितीयां चितिमुपदधातीति । इष्टकानां प्रस्तारश्चितिः । एतस्य द्वितीयचित्युपधानस्य प्रयोजनं प्रथमचितिप्रयोजनप्रतिपादनपूर्वकमुपपादयति—एतद्वै देवा इत्यादिना । 'एतत्' एतर्हि खलु 'देवाः' उदीरितरूपां 'प्रथमां चितिं चित्वा' उपधाय 'समारोहन्' सम्यगारोहणं कृतवन्तः । समारूढव्यमाह—अयं वै लोक इति । स्वयमातृण्णोपधानादौ पूर्वचितेर्भूलोकरूपतोक्ता, तथा च प्रथमचित्यात्मना 'इममेव' भू-'लोकं संस्कृत्य' तस्योपरि देवताः समारोहन् ॥ १ ॥

तेऽब्रुवन्नित्यादि । प्रागु व्याख्यातम् । इत ऊर्ध्वमिच्छतेति । 'इतः' अस्मात्प्रथमचितिरूपाद्भूलोकाद् 'ऊर्ध्वम्' लोकम् 'इच्छतेति' एवं परस्परं सम्प्रधार्य 'चेतयमानाः' सञ्जानन्तः 'ते' देवाः 'एताम्' वक्ष्यमाणां 'द्वितीयां चितिमपश्यन्' । तामेव लोकात्मना विशिनष्टि—यदूर्ध्वमिति । 'पृथिव्या ऊर्ध्वम्' उपरिभागः, 'अन्तरिक्षादर्वाचीनम्' अधोभागः, पृथिव्यन्तरिक्षयोर्मध्यवर्ती यो 'लोकः' तदात्मिका द्वितीया चितिरित्यर्थः । तत्राश्विनीनां प्रथममुपधानं विधित्सुराह—तेषामेष लोक इति । 'एषः' उदीरितलक्षणः 'लोकः' 'तेषां' देवानाम् 'अप्रतिष्ठितः' आधाररहितः 'इवासीत्' ॥ २ ॥

ततः 'ते' देवास्तस्य लोकस्य प्रतिष्ठितत्वाय 'अश्विनावब्रुवन्' । हे अश्विनौ ! 'युवम्' युवाम् खलु

नोऽस्याऽअग्निचित्यायाऽ अध्वर्यू भविष्यथ ऽइति तथेति तेभ्य ऽएताम-श्विनौ द्वितीयां चितिमुपाधत्तां तस्मादाहुरश्विनावेव देवानामध्वर्यूऽइति॥३॥

स ऽउपदधाति । ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवाऽसीति यद्वै स्थिरं यत्प्रतिष्ठितं तद्ध्रुवमथ वाऽएषामेष लोकोऽध्रुवऽइवाप्रतिष्ठितऽइव मनस्यासीत्तमेवै-तत्स्थिरं ध्रुवं कृत्वा प्रत्यधत्तां ध्रुवं योनिमासीद साधुयेति स्थिरं योनि-मासीद साधुयेत्येतदुख्यस्य केतुं प्रथमं जुषाणेत्ययं वाऽअग्निरुख्यस्त-स्यैष प्रथमः केतुर्यत्प्रथमा चितिस्तं जुषाणेत्येतदश्विनाऽध्वर्यू सादयता-मिह त्वेत्यश्विनौ ह्यध्वर्यूऽउपाधत्ताम् ॥ ४ ॥

---

नौ ततो भविष्यतीति । युवमेव नोऽस्याऽअग्निचित्यायाऽअध्वर्यू भविष्यथः–इति । तथेति । तेभ्य एतामश्विनौ द्वितीयां चितिमुपाधत्ताम् । तस्मादाहुः–अश्विनावेव देवानामध्वर्यू इति ॥ ३ ॥

स उपदधाति । "ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवाऽसि"–इति । यद्वै स्थिरं, यत्प्रतिष्ठितं–तद्ध्रुवम् । अथ वाऽएषामेष लोकोऽध्रुव–इवाप्रतिष्ठित–इव मनस्यासीत् । तमेवैतत्स्थिरं ध्रुवं कृत्वा प्रत्यधत्ताम् । "ध्रुवं योनिमासीद साधुया"–इति । स्थिरं योनिमासीद साधुयेत्येतत् । "उख्यस्य केतुं प्रथमं जुषाणा"–इति । अयं वाऽअग्निरुख्यः । तस्यैष प्रथमः केतुः–यत्प्रथमा चितिः । तं जुषाणेत्येतत् । "अश्विनाऽध्वर्यू सादयतामिह त्वा"–( वा. सं. १४ । १ ) इति । अश्विनौ ह्यध्वर्यूऽउपाधत्ताम् ॥ ४ ॥

---

' ब्रह्माणौ ' परिवृढौ ' भिषजौ स्थः ' भवतः । अतो युवाम् 'नः' अस्मदीयां ' इमां द्वितीयां चितिमुपधत्तम् ' उपधानेन सम्पादयतम् ' इति ' देवानां वचः श्रुत्वा अश्विनावब्रूताम् । ' ततः ' तस्माद्द्वितीयचित्युपधानात् ' नौ ' आवयोः ' किम् ' प्रयोजनं ' भविष्यतीति ' । ' युवमेव '–इति देवानां वाक्यम् । ' नः ' अस्माकं सम्बन्धिन्याः ' अस्या अग्निचित्यायाः ' युवामेव ' अध्वर्यू भविष्यथः ' । ' अश्विनौ ' अपि 'तथा' अस्त्वित्यङ्गी-कृत्य ' तेभ्यः ' देवेभ्यः, तादर्थ्ये चतुर्थी ( पा. सू. २ । ३।६२ ) । ' एताम् ' वक्ष्यमाणां ' द्वितीयां चिति-मुपाधत्ताम् ' उपहितवन्तौ । यस्मादेवमश्विभ्यामाध्वर्यवमाचरितं देवकर्तृकेऽग्निचयने ' तस्माद् ' एव कारणात् ' अश्विनावेव देवानामध्वर्यू इत्याहुः ' ब्रह्मवादिनस्तत्र तत्र कथयन्ति ॥ ३ ॥

एवमुपोद्घातत्वेन द्वितीयचित्युपधानेऽश्विकर्तृत्वं प्रतिपाद्य औपोद्घातिकमाश्विनीनामुपधानं समन्त्रकं विधत्ते–स उपदधातीति । ' सः ' अध्वर्युः प्रथमम् आश्विनीः पञ्चेष्टका उपदध्यात् । " ध्रुवक्षितिः " इत्याद्यास्तन्मन्त्राः । अत्र प्रथममन्त्रे ध्रुवशब्दं कुर्वन् प्रागुक्तदोषपरिहाररूपं तस्य प्रयोजनमाविष्करोति–यद्वै स्थिरमिति । ' यत् ' खलु ' स्थिरम् ' अनश्वरम् ' प्रतिष्ठितम् ' लब्धास्पदं च यत् ' तत् ' उभयम् ' ध्रुवम् ' ध्रुवशब्दप्रतिपाद्यमित्यर्थः । एषामित्यादि । अथ खलु ' एषाम् ' प्रागुक्तानां देवानां ' मनसि ' पृथिव्यन्तरिक्षमध्यवर्ती ' लोकः ' अस्थिर ' इव ' निराधार इव च ' आसीत् ' ' तमेव ' लोकम् ' एतत् ' एतेन ध्रुवशब्दोपेतमन्त्रकरणकोपधानेन ' स्थिरम् ' अनश्वरं ' प्रतिष्ठितं ' च ' कृत्वा ' ' प्रत्यधत्ताम् ' अश्विनौ समाहितवन्तावित्यर्थः ॥

**( ङ ) कुलायिनी घृतवती पुरंधिरिति मा कुलायमिव वै द्वितीया चितिः स्योने सीद सदने पृथिव्या ऽइति पृथिवी वै मे थमा चितिस्तस्यै शिवे स्योने सीद सदनऽइत्येतदभि त्वा रुद्रा वसवो गृ ऽन्त्वित्येतास्त्वां देवताऽ अभि- गृणन्त्वित्येतदिमा ब्रह्म पीपिहि सौभगा ः तीमा ब्रह्माव सौभगायेत्येतद- श्विनाऽध्वर्यू सादयतामिह त्वेत्यश्विनौ द ध्वर्यूऽउपाधत्ताम् ॥ ९ ॥**

---

“ कुलायिनी घृतवती पुरन्धिः ”–इति । कुळायमिव वै द्वितीया चितिः । “ स्योने सीद सदने पृथिव्याः ”–इति । पृथिवी वै प्रथमा चितिः । तस्यै शिवे स्योने सीद सदने– इत्येतत् । “ अभि त्वा रुद्रा वसवो गृणन्तु ”–इति । एतास्त्वां देवता अभिगृणन्त्वित्येतत् । “ इमा ब्रह्म पीपिहि सौभगाय ”–इति । इमा ब्रह्माव सौभगायेत्येतत् । “ अश्विनाऽध्वर्यू सादयतामिह त्वा ”–( वा. सं. १४ । २ ) इति । अश्विनौ ह्यध्वर्यूऽउपाधत्ताम् ॥ ९ ॥

---

द्वितीयपादमनूद्य तत्रापि ध्रुवशब्दस्योक्तार्थपरतामाह–स्थिरं योनिमिति । तृतीयं व्याचष्टे–अयं वा अग्निरुख्य इति । उखायां भवोऽग्निः ‘ उख्यः ’ गर्भरूपेण स्थितः उख्योऽग्निरेव हिं शिरःपक्षाद्युपेतचित्याग्नि- रूपेण स्थितः ‘तस्य’ चोख्यस्याग्नेः ‘ एष प्रथमः केतुः ’ प्रज्ञापकोऽवयवः । येयं ‘प्रथमा चितिः’ ‘तम्’ अवयवं ‘जुषाणा’ सेवमानेत्यर्थः सम्पद्यते । अश्विनाऽध्वर्यू इत्यादि निगदसिद्धम् । मन्त्रार्थस्तु हे इष्टके ! ‘ ध्रुवक्षितिः ’ स्थिरनिवासा ‘ ध्रुवयोनिः ’ स्थिराधारा ‘ ध्रुवा ’ स्थिरस्वरूपा ‘ असि ’ । ‘ ध्रुवम् ’ स्थिरतरम् ‘ योनिम् ’ प्रथमचितिलक्षणम् ‘ आसीद ’ उपविश । ‘ साधुया ’ अस्माभिः साधनीया । ‘ उख्यस्य ’ उखायामुत्पन्नस्य चित्याग्नेः ‘ केतुम् ’ प्रज्ञापकम् , ‘ प्रथमम् ’ प्रथमचितिरूपं ‘ जुषाणा ’ सेवमाना ‘ असि ’ । तादृशीं ‘त्वा’ त्वाम् ‘ अध्वर्यू ’ ‘ इह सादयताम् ’ अत्र स्थापयताम् ॥ ४ ॥[1] ॥ ८ ॥

द्वितीयं मन्त्रं पादशोऽनूद्य व्याचष्टे–कुलायिनी घृतवती— । कुलायमिव वा इति । कुलायो नीडम्, तद्विव हि द्वितीया चितिर्भवति । यथा वृक्षादेरुपरि नीडमवतिष्ठते, तथा द्वितीयचितेरपि प्रथमचितेरुपर्यवस्थाना- त्तत्सादृश्यम् । द्वितीयपादे ‘ पृथिव्यै ’ इति पदस्यार्थमाह– पृथिवी वै प्रथमा चितिरिति । प्रथमचितेः पृथिवीरूपता प्राक् प्रतिपादिता ( श. प. ८ । २ । १ । १ ) । तस्याः सम्बन्धिनि ‘शिवे’ शोभने ‘ स्योने ’ सुखकरे ( निघं. ३ । ६ । १९ ) । मन्त्रस्यायमर्थः–हे इष्टके ! त्वं कुलायसदृशी द्वितीया चितिः कुलायस्त- त्सम्बन्धिनी कुलायिनी, घृतमुदकमाज्यं वा तद्वती, पुरं शरीरं धीयते गर्भतयाऽस्यामिति ‘ पुरन्धिः ’ योषिद्रूपाऽसि । सा त्वं ‘ पृथिव्याः ’ प्रथमचितेः सम्बन्धिनि सुखकरे स्थाने ‘ सीद ’ आस्व । ‘ अभि त्वा ’ इत्यादि निगदसिद्धम् । ‘ अभिगृणन्तु ’ अभिष्टुवन्त्वित्यर्थः । “ गृ शब्दे ” ( धा. पा. क्र्या. प. २६ ) इति क्रैयादिको धातुः । प्वादित्वाच्च ह्रस्वः ( पा. सू. ७ । ३ । ८० ) । ‘ पीपिहि ’ इति पदं व्याचष्टे–इमा ब्रह्मावेति । हे इष्टके ! त्वं ‘सौभगाय’ सौभाग्याय,यद्वा धनं सौभगं ‘सौभगाय’ धनाय इमानि ब्रह्माणि परिवृढानि हविरादीनि ‘ पीपिहि ’ अव पालय वर्धय वा । ‘ अश्विनाऽध्वर्यू ’ इत्यादि गतम् ॥ ९ ॥

---

१–अत्र महीधरः “ कीदृशं ‘ साधुया ’ साधुं श्रेष्ठम् “ सुपां सुलुक् ” ( पा. सू. ७ । १ । ३९ ) इत्यमो यादेशः ” इति व्याख्यातवान् ।

( ६ ) या । स्वैर्दक्षैर्दक्षपितेह सीदति । स्वेन वीर्येणेह सीदेत्येतद्देवानाꣳ सुम्ने बृहते रणायेति देवानाꣳ सुम्नाय महते रणायेत्येतत्पितेवैधि सूनवऽआ सुशेवेति यथा पिता पुत्राय स्योनः सुशेवऽएवꣳ सुशेवैधीत्येतत्स्वावेशा तन्वा संविशस्वेत्यात्मा वै तनूः स्वावेशेनात्मना संविशस्वेत्येतदश्विनाऽध्वर्यू सादयतामिह त्वेत्यश्विनौ ह्यध्वर्यूऽउपाधत्ताम् ॥ ६ ॥

( ७ ) पृथिव्याः पुरीषमसीति । पृथिवी वै प्रथमा चितिस्तस्या ऽएतत्पुरीषमिव यद्द्वितीयाऽप्सो नामेति रसो नामेत्येतत्तां त्वा विश्वेऽअभिगृणन्तु देवाऽइति तां त्वा सर्वेऽभिगृणन्तु देवाऽइत्येतत्स्तोमपृष्ठा घृत-

---

" स्वैर्दक्षैर्दक्षपितेह सीद "—इति । स्वेन वीर्येणेह सीदेत्येतत् । " देवानां सुम्ने बृहते रणाय "—इति । देवानां सुम्नाय महते रणायेत्येतत् । " पितेवैधि सूनवऽआ सुशेवा "—इति । यथा पिता पुत्राय स्योनः सुशेवः—एवं सुशेवैधीत्येतत् । " स्वावेशा तन्वा संविशस्व "—इति । आत्मा वै तनूः, स्वावेशेनात्मना संविशस्वेत्येतत् । " अश्विनाऽध्वर्यू सादयतामिह त्वा "—( वा. सं. १४ । ३ ) इति । अश्विनौ ह्यध्वर्यूऽउपाधत्ताम् ॥ ६ ॥

" पृथिव्याः पुरीषमसि "—इति । पृथिवी वै प्रथमा चितिः । तस्या एतत्पुरीषमिव—यद्द्वितीया । " अप्सो नाम "—इति । रसो नामेत्येतत् । " तां त्वा विश्वेऽअभिगृणन्तु देवाः "—इति । तां त्वा सर्वेऽभिगृणन्तु देवा इत्येतत् । " स्तोमपृष्ठा घृतवतीह सीद "—इति । यान्

---

तृतीयं मन्त्रमनूद्य व्याचष्टे—स्वैर्दक्षैरिति [illegible] श्रुत्वा [illegible] वीर्यवचनः । बहुवचनं पूजार्थमित्यभिप्रेत्याह—स्वेन वीर्येणेति । स्वकीयेन सामर्थ्येनेत्यर्थः । ' [illegible] ' इति, ' बृहते ' इति पदयोर्व्याख्यानम् सुम्नाय महत इति । सुम्नशब्दाच्चतुर्थ्येकवचने "सर्वे वि[illegible] सि विकल्प्यन्ते" इति यादेशस्य विकल्पितत्वाद् "अतो गुणे"—( पा. सू. ६ । १ । ९७ ) [illegible] ( पा. [illegible] तृतीयपादमनूद्य व्याचष्टे—पितेवैधीति । अयमर्थः—हे इष्टके ! ' दक्षपिता ' दक्षो वर्धयिताऽग्नि[illegible] पालको यस्याः सा तादृशी भूत्वा ' इह ' अस्मिन्स्थाने ' स्वेन वीर्येण ' उपविश । किमर्थम् ? [illegible] नां सुम्नाय ' सुखाय, ' महते रणाय ' च ' पितेव ' ' यथा पिता ' ' सूनवे ' पुत्राय ' स्योनः ' स[illegible]शेवः ' सुमुखो भवति, एवं सा त्वं देवानां सुखयित्री ' एधि ' भव । चतुर्थपादमनूद्य व्याचष्टे—स्वावे[illegible] तन्वेति । अत्र तनूशब्दः शरीरवाचीत्याह—स्वावेशेनात्मनेति । सुष्ठु आवेशयतीति स्वावेशा " अन्येभ्योऽपि दृश्यन्ते "—( पा. सू. ३ । २ । ७५ ) इति विच् । तथा च ' स्वावेशेन ' सुखोपवेशनहेतुभूतेन ' आत्मना ' ' संविशस्व ' सम्यगुपविश ' इति ' तुरीयपादस्यार्थः । अश्विनाऽध्वर्यू इत्यादि गतम् ॥ ६ ॥

चतुर्थमन्त्रमनूद्य व्याचष्टे—पृथिव्याः पुरीषमसीत्यादिना । पुरीषमिवेति । प्रथमचितेरुपरि पुरीषमुप्यते । द्वितीया चितिरपि तथेति; तस्याश्चितेः पुरीषसाम्यम् । अप्स इत्येतत्पदं व्याचष्टे—रसो नामेत्येतदिति । अप्स इत्युदकनामसु पठितत्वात् तेन रसः प्रतिपाद्यत इत्यर्थः । तां त्वा विश्वे इत्यादि निगदसिद्धम् । 'स्तोमपृष्ठा'

वर्ताह्व सीदेति यान्त्स्तोमानस्यां तᳬस्यमानो भवति तैरेषा स्तोमपृष्ठा प्रजावदस्मे द्रविणाऽऽयजस्वेति प्रजावदस्मे द्रविणमायजस्वेत्येतदश्विना-ऽध्वर्यू सादयतामिह त्वेत्यश्विनौ ह्यध्वर्यूऽउपाधत्ताम् ॥ ७ ॥

( न्ता ) ताऽएता दिशः । (स्ता) ता रेतःसिचोर्वेलयोपदधातीमे वै रेतः-सिचावनयोस्तद्दिशो दधाति तस्मादनयोर्दिशः सर्वतऽउपदधाति सर्वतस्तद्दिशो दधाति तस्मात्सर्वतो दिशः सर्वतः समीचीः सर्वतस्त-त्समीचीर्दिशो दधाति तस्मात्सर्वतः समीच्यो दिशस्ता नानोपदधाति नाना सादयति नाना सूददोहसाऽधिवदति नाना हि दिशः ॥ ८ ॥

( शोऽथ ) अथ पञ्चमीं दिश्यामुपदधाति । ( त्यू ) ऊर्ध्वा ह सा दिक्सा या सोर्ध्वा दिगसौ सऽआदित्योऽमुमेवैतदादित्यमुपदधाति तामन्तरेण

---

स्तोमानस्यां तंस्यमानो भवति । तैरेषा स्तोमपृष्ठा । " प्रजावदस्मे द्रविणा यजस्व "—इति । प्रजावदस्मे द्रविणमायजस्वेत्येतत् । "अश्विनाऽध्वर्यू सादयतामिह त्वा"—( वा. सं. १४।४ ) इति । अश्विनौ ह्यध्वर्यूऽउपाधत्ताम् ॥ ७ ॥

ता एता दिशः । ता रेतःसिचोर्वेलयोपदधाति । इमे वै रेतःसिचौ । अनयोस्तद्दिशो दधाति । तस्मादनयोर्दिशः । सर्वत उपदधाति । सर्वतस्तद्दिशो दधाति । तस्मात्सर्वतो दिशः । सर्वतः समीचीः । सर्वतस्तत्समीचीर्दिशो दधाति । तस्मात्सर्वतः समीच्यो दिशः । ता नानोपदधाति । नाना सादयति । नाना सूददोहसाऽधिवदति । नाना हि दिशः ॥ ८ ॥

अथ पञ्चमीं दिश्यामुपदधाति। ऊर्ध्वा ह सा दिक् । सा या सोर्ध्वा दिक्—असौ स आदित्यः ।

---

इति पदं व्याचष्टे—यान्स्तोमानिति । 'अस्याम्' चितौ 'यान्' त्रिवृदाद्यान् 'स्तोमान्' 'तंस्यमानः' विस्तारयिष्यमाणो 'भवति' 'तैः' स्तोमैरुपेतत्वात् स्तोमाः पृष्ठे यस्या इति व्युत्पत्त्या 'एषा स्तोम-पृष्ठा'। 'द्रविणा' इति द्वितीयार्थे आकार इत्याह—द्रविणमायजस्वेत्येतदिति । 'अश्विना' इत्यादि गतम् । मन्त्रार्थः सुगमः ॥ ७ ॥

एताश्चतस्र इष्टकाः संभूय प्रशंसति—ता एता दिश इति । प्राच्यादिदिक्षूपधीयमानत्वाद्दिगात्मिकाः । तासामुपधाने स्थानविशेषं विधाय स्तौति—ता रेतःसिचोरिति । 'इमे' द्यावापृथिव्यौ हि 'रेतःसिचौ' अखिलजगदुत्पत्तिहेतुत्वात् । 'तत्' तेनाश्विनीनां रेतःसिक्समीपोपधानेन 'अनयोः' द्यावापृथिव्योः प्राच्या-द्याश्चतस्रः 'दिशो दधाति' स्थापयति । 'तस्मात्' इति लोकप्रसिद्धिकथनम् । सर्वासु दिक्षु क्रमेण चत-सृणामुपधानं विधत्ते—सर्वत उपदधातीति । आसामुपधाने गुणान्तरं विधाय स्तौति—सर्वतः समीचीरिति । सर्वास्वपि दिक्षु 'समीचीः' अनूचीनाग्राः न तु तिर्यगवस्थिता इत्यर्थः । उपधानसादनसूददोहसां नानात्वं विधाय स्तौति—ता नानोपदधातीति ॥ ८ ॥

अथ मध्य उपधेयामाश्विनीं विधत्ते—अथ पञ्चमीमिति । उक्तानां पञ्चसंख्यापूरणी पञ्चमी, दिशि ऊर्ध्वायां भवा इति 'दिश्या' " दिगादिभ्यो यत् " ( पा. सू. ४।३।५४ )। इमां पञ्चमीमूर्ध्वदिगादित्यरूपेण स्तौति—

दुक्षिणां दिश्यामुपदधात्यमुं तदादित्यमुन्तरेण दक्षिणां दिशं दधाति तुस्मादेषोऽन्तरेण दक्षिणां दिशमेति ॥ ९ ॥

( त्यु ) अदित्यास्त्वा पृष्ठे सादयामीति । ( ती ) इयं वाऽअदितिरस्यामे-वैनमेतत्प्रतिष्ठायां प्रतिष्ठापयत्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशामधिपत्नीं भुवनानामित्यन्तरिक्षस्य ह्येष धर्ता विष्टम्भनो दिशामधिपतिर्भुवनाना-मूर्मिर्द्रप्सोऽअपामसीति रसो वाऽऊर्मिर्विश्वकर्मा तऽऋषिरिति प्रजा-पतिर्वै विश्वकर्मा प्रजापतिसृष्टाऽसीत्येतदश्विनाऽध्वर्यू सादयतामिह त्वेत्यश्विनौ ह्यध्वर्यूऽउपाधत्ताम् ॥ १० ॥

---

अमुमेवैतदादित्यमुपदधाति । तामन्तरेण दक्षिणां दिश्यामुपदधाति । अमुं तदादित्यमन्तरेण दक्षिणां दिशं दधाति । तस्मादेषोऽन्तरेण दक्षिणां दिशमेति ॥ ९ ॥

" अदित्यास्त्वा पृष्ठे सादयामि "–इति । इयं वाऽअदितिः । अस्यामेवैनमेतत्प्रति-ष्ठायां प्रतिष्ठापयति । " अन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशामधिपत्नीं भुवनानाम् "–इति । अन्तरिक्षस्य ह्येष धर्त्ता, विष्टम्भनो दिशाम्, अधिपतिर्भुवनानाम् । " ऊर्मिर्द्रप्सोऽअपा-मसि "–इति । रसो वाऽऊर्मिः । " विश्वकर्मा तऽऋषिः "–इति । प्रजापतिर्वै विश्वकर्मा । प्रजापतिसृष्टाऽसीत्येतत् । "अश्विनाऽध्वर्यू सादयतामिह त्वा"–( वा. सं. १४ । ९ ) इति । अश्विनौ ह्यध्वर्यूऽउपाधत्ताम् ॥ १० ॥

---

ऊर्ध्वा हेत्यादिना । ' या ' इयं पञ्चमीष्टका ' सा ' ' ऊर्ध्वा दिक्, ' ' सा ' इष्टकारूपा 'या सोर्ध्वा दिक्,'। ' असौ ' एव 'सः' प्रसिद्धः ' आदित्यः ' ऊर्ध्वायां हि तस्य सञ्चरणम् । अतः ' अमुम् ' आकाशे दृश्यमान-मेव ' आदित्यम् ' ' एतत् ' एतेन पञ्चमेष्टकोपधानेनोपहितवान्भवतीत्यर्थः । तामन्तरेणेत्यादि । दक्षिण-दिश्युपहिता येयं दिश्या ताम् 'अन्तरेण' तस्या अभ्यन्तरदेशे 'तां' पञ्चमीमादित्यरूपामिष्टकामुपदध्यात् । 'तस्मात्' कारणात् ' एष ' आदित्यः ' दक्षिणां दिशमन्तरेण ' दक्षिणस्या दिशोऽभ्यन्तरदेशे ' एति ' गच्छति ॥९॥

तन्मन्त्रमनूद्य व्याचष्टे–अदित्यास्त्वेति । अत्रादितिशब्देन पृथिवी विवक्षितेत्याह–इयं वा अदिति-रिति । अस्यामेवैनमिति । ' एनम् ' पञ्चमेष्टकारूपमादित्यम् ।अन्तरिक्षस्य धर्त्रीम् इत्यादि । पञ्चमेष्टकाया आदित्यरूपत्वादादित्यरूपतयेत्याह–अन्तरिक्षस्य ह्येष धर्तेत्यादि । ' एषः ' खलु सूर्यः ' अन्तरिक्षस्य ' ' धर्ता ' धारयिता यथा दिशो न पतन्ति तथा तासां ' विष्टम्भनः ' विशेषेण स्तम्भयिता ' भुवनानाम् ' अधिकं प्रकाशवर्षादिना पालयिता, अतस्तद्रूपिण्या इष्टकाया अप्येतत्सर्वमुपपद्यत इति विशेषणानामभिप्रायः । रसो वा ऊर्मिरिति । ' रसः ' एव ह्यप्सु तरङ्गरूपेण वर्तते । तस्मादत्रोर्मिशब्दो रसपर इत्यर्थः । एतदुक्तं भवति । हे इष्टके ! अपां सम्बन्धी यो रसरूप ' ऊर्मिः ' तरङ्गो ' द्रप्सो ' दृढश्च तदुभयरूपाऽसीति । प्रजा-पतिर्वै विश्वकर्मेति । विश्वं सर्वं जगत् कर्म कर्तव्यं येनेति व्युत्पत्तेः ' विश्वकर्मा ' ' प्रजापतिः ' । हे इष्टके ! उदीरितरूपायाः ' ते ' तव ' विश्वकर्मा ऋषिः ' द्रष्टा । अस्य तात्पर्यमाह–प्रजापतिसृष्टाऽसीत्येतदिति । अश्विनौ ह्यध्वर्यू इत्यादि गतम् ॥ १० ॥

य॒द्वेवै॒ता॑ऽआश्विनी॒रु॑प॒द॒धा॑ति । प्र॒जाप॑तिं॒ विस्र॑स्तं दे॒वता॑ऽआ॒दाय॒ व्यु॑दक्राम॒ꣳस्तस्य॑ य॒दू॒र्ध्वं प्र॑ति॒ष्ठाया॑ऽअवा॒ची॒नं म॒ध्या॒त्तद॑स्याश्वि॒नावा॒दायो॑-त्क्र॒म्याति॑ष्ठताम् ॥ ११ ॥

( न्तौ ) तावब्रवीत् । ( उ ) उप मे॒तं प्रति॒ म॑ऽए॒तद्ध॑त्तं ये॒न मे॒ यु॒वमु॒द॑-क्र॒मिष्ट॒मिति॒ किं नौ॒ त॒तो भ॑विष्य॒तीति॒ यु॒वद्दे॑वत्यमे॒व म॑ऽए॒तदा॒त्म॒नो भ॒वि॑-ष्य॒तीति॒ त॒थेति॒ तद॒स्मिन्ने॒तद॒श्वि॒नौ॒ प्र॒त्य॒धत्ता॒म् ॥ १२ ॥

( न्त ) त॒द्या॑ऽए॒ताः प॒ञ्चा॑श्वि॒न्यः॑ । ( ऽ ) ए॒तद॑स्य॒ तदा॒त्मन॒स्तद्यदे॒ता ऽअ॒त्रो॑पद॒धा॑ति य॒दे॒वा॒स्यै॒ता॑ऽआ॒त्मन॒स्तद॒स्मिन्ने॒तत्प्र॒ति॒द॒धा॑ति त॒स्मा॒दे॒ता ऽअ॒त्रो॑पद॒धा॑ति ॥ १३ ॥

---

यद्वेवैता आश्विनीरुपदधाति । प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामन् । तस्य यदूर्ध्वं प्रतिष्ठायाः, अवाचीनं मध्यात्, तदस्याश्विनावादायोत्क्रम्यातिष्ठताम् ॥ ११ ॥

तावब्रवीत्—उप मेतं, प्रति मऽएतद्धत्तम्, येन मे युवमुदक्रमिष्टमिति । किं नौ ततो भविष्यतीति । युवद्देवत्यमेव मऽएतदात्मनो भविष्यतीति । तथेति । तदस्मिन्नेतदश्विनौ प्रत्यधत्ताम् ॥ १२ ॥

तद्या एताः पञ्चाश्विन्यः—एतदस्य तदात्मनः । तद्यदेता अत्रोपदधाति—यदेवास्यैता आत्मनः—तदस्मिन्नेतत्प्रतिदधाति । तस्मादेता अत्रोपदधाति ॥ १३ ॥

---

अथैतासामाश्विनीनामात्मभाग उपधानमनुवादपुरःसरमाख्यायिकया प्रतिपादयति—यद्वेवैता इत्यादिना । अश्विशब्दवानासामुपधानो मन्त्र इति विगृह्य " तद्वानासामुपधानो मन्त्रः "—( पा. सू. ४ । ४ । १२५ ) इति मतुपो लुकि प्राप्ते; " अश्विमानण् " ( पा सू. ४ । ४ । १२६ ) इत्यण् प्रत्ययः, ततः ( पा. सू. ४ । १ । १५ ) ङीप् । ' प्रजापतिम् ' विस्रस्तावयवं प्रजापतिम् ' देवताः ' अग्न्यादयः पृथक् पृथक् एकैकमवयवम् ' आदाय ' ' व्युदक्रामन् ' शरीरमध्यान्निष्क्रान्ताः । ' तस्य ' प्रजापतेः ' प्रतिष्ठाया यदूर्ध्वम् ' प्रतिष्ठाशब्दः पादवाची पादतलादारभ्योर्ध्वम्, ' मध्यात् ' कटिप्रदेशात् ' अवाचीनम् ' अधस्तनमङ्गजातम् ' अस्य ' प्रजापतेः सम्बन्धि तदङ्गं ' अश्विनावादाय ' तस्मात्स्थानादपक्रम्य ' अतिष्ठताम् ' ॥ ११ ॥

स प्रजापतिः ' तावब्रवीत् ' हे अश्विनौ ! ' मा ' माम् ' उपेतम् ' उपगच्छतम् । मदीयम् ' एतत् ' अङ्गं ' प्रतिधत्तम् ' ' येन ' मदीयाङ्गेन सह ' युवं ' युवां ' उदक्रमिष्टमिति ' । ततोऽश्विनावब्रूताम् । ' ततः ' तस्मात् प्रतिधानात् ' नौ ' आवयोः ' किम् ' प्रयोजनं ' भविष्यतीति ' । ततः प्रजापतिरब्रवीत् । ' मे ' मम ' आत्मनः ' शरीरस्य सम्बन्धि ' एतद् ' अङ्गम् ' युवद्देवत्यम् ' ' भविष्यति ' युवाम् ' अश्विनौ ' देवते यस्य ' तत् ' तथोक्तम् । " युवावौ द्विवचने "—( पा. सू. ७ । २ । ९२ ) इति मपर्यन्तस्य द्व्यर्थस्य युष्मदो युवादेशः । तौ 'तथेति' अङ्गीकृत्य ' अस्मिन् ' प्रजापतौ यदुपात्तमङ्गं तत् पुनः 'प्रत्यधत्ताम्' ॥ १२ ॥

किं पुनस्तदङ्गमिति तत्राह—तद्या एता इति । ' तत् ' तत्र ' या एताः ' ' पञ्च ' सङ्ख्याकाः ' आश्विन्यः ' ' अस्य ' प्रजापतेः ' आत्मनः ' ' एतत् ' एव ' तत् ' अङ्गं तदश्विभ्यां पूर्वप्रतिहितम् । तस्मा-

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवाऽसीति । यद्वै स्थिरं यत्प्रतिष्ठितं तद्ध्रुवमथ वाऽअस्यैतदस्थिरमिवाध्रुवमिवात्मन ऽआसीत्तदेवैतत्स्थिरं ध्रुवं कृत्वा प्रत्यधत्ताम् ॥ १४ ॥

( ङ ) कुलायिनी घृतवती पुरन्धिरिति । कुलायमिव वाऽअस्यैतदात्मनः स्वैर्दक्षैर्दक्षपितेह सीदेत्यदक्षयतामेवास्यैतदात्मनः पृथिव्याः पुरीषमसीति पुरीषसँहितमिव वाऽअस्यैतदात्मनो रेतःसिचोर्वेलया पृष्ट्यो वै रेतःसिचौ पृष्टिसाचयमिव वाऽअस्यैतदात्मनः सर्व्वत ऽउपदधाति सर्व्वतो ह्यस्यैतदश्विनावात्मनः प्रत्यधत्ताम् ॥ १५ ॥

---

"ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवाऽसि"—इति। यद्वै स्थिरं, यत्प्रतिष्ठितं—तद्ध्रुवम् । अथ वाऽअस्यैतदस्थिरमिवाध्रुवमिवात्मन आसीत्—तदेवैतत्स्थिरं ध्रुवं कृत्वा प्रत्यधत्ताम् ॥ १४ ॥

"कुलायिनी घृतवती पुरन्धिः"—इति । कुलायमिव वाऽअस्यैतदात्मनः । "स्वैर्दक्षैर्दक्षपितेह सीद"—इति । अदक्षयतामेवास्यैतदात्मनः । "पृथिव्याः पुरीषमसि"—इति । पुरीषसंहितमिव वाऽअस्यैतदात्मनः । रेतःसिचोर्वेलया । पृष्ट्यो वै रेतःसिचौ । पृष्टिसाचयमिव वाऽअस्यैतदात्मनः । सर्वत उपदधाति । सर्वतो ह्यस्यैतदश्विनावात्मनः प्रत्यधत्ताम् ॥ १५ ॥

---

दात्मभागे तासामुपधानं कर्तव्यमिति प्रकृतमनुसरति—तद्यदेता इति । 'अत्र' आत्मनि । 'तस्मादेता' इति प्रतिपादितार्थनिगमनम् ॥ १३ ॥

प्रजापत्यवयवसन्धानरूपेऽर्थे मन्त्राणामपि सामर्थ्यं प्रतिपादयति—ध्रुवक्षितिरित्यादिना । यद्वै स्थिरम्—इत्यादि प्रागुक्तार्थम् । आत्मन आसीदिति । 'आत्मनः' प्रजापतिशरीरस्य सम्बन्ध्यङ्गं 'अस्थिरमिव' अदृढमिव 'अध्रुवम्' अप्रतिष्ठितम् 'इव च आसीत्' 'एतत्' एतेन ध्रुवशब्दोपेतमन्त्रेण 'तदेवैतत्'—अङ्गम् 'स्थिरं ध्रुवम्' च कृत्वा अश्विनौ 'प्रत्यधत्ताम्' ॥ १४ ॥

द्वितीयमन्त्रेऽप्युक्तार्थपरतामाह—कुलायिनीति । यदेतदश्विभ्यां प्रतिहितमङ्गम् 'एतत्' अस्यात्मनः 'कुलायमिव' हि भवति । अतः "कुलायिनी" इति मन्त्रेण तत्सन्धानं युज्यत इत्यर्थः । तृतीयमन्त्रस्याप्युक्तार्थपरतां सूचयति—स्वैर्दक्षैरिति । 'अस्यात्मनः' प्रजापतिशरीरस्य 'एतत्' उक्तमङ्गमश्विनौ 'अदक्षयताम्' अवर्द्धयताम् । "दक्ष वृद्धौ"—( धा. पा. भ्वा. प. ६०९ ) इति धातुः । अस्मिन्मन्त्रे दक्षशब्देन सोऽर्थः प्रज्ञाप्यते । चतुर्थमन्त्रस्याप्येतदर्थपरतामाह—पृथिव्याः पुरीषमसीति । 'अस्य' आत्मनः 'एतत्' अश्विभ्यां प्रतिहितमङ्गम् 'पुरीषसंहितमिव' पुरीषेण संयुक्तमिव खलु भवति । अतो मन्त्रगतपुरीषशब्देनायमर्थः प्रतिपाद्यत इति तन्मन्त्रप्रयोगो युक्त इत्यर्थः । स्थानविशेषस्याप्येतदर्थानुगुणत्वमाविष्करोति—रेतःसिचोर्वेलयेति । रेतःसिगाख्ये ये इष्टके तयोः समीपे ह्येता आश्विन्य उपधीयन्ते ते च 'रेतःसिचौ' 'पृष्ट्यः'

---

१—द्वितीयायामाश्विनीः प्रतिदिशम् । रेतःसिग्वेलायामनूकमुत्तरेण पूर्वा द्वितीये दक्षिणा पूर्वेण । अपरा दक्षिणेन उत्तराऽपरेण दक्षिणामुत्तरेण पंचमी । का. श्रौ. सू. । १७ १६५–१७० । २—आश्विनीर्ध्रुवक्षितिरिति प्रतिमंत्रम् । का. श्रौ. सू. १७ । १८० ।

( मु ) अथर्तव्ये॑ऽउपदधाति । ( त्सृ ) ऋतव॑ऽएते यदृतव्ये॑ऽऋतूनेवै॑-तदुपदधाति शुक्रश्च शुचिश्च ग्रैष्मावृतूऽइति नामनीऽएनयोरेते नामभ्या-मेवैनेऽएतदुपदधाति द्वेऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥ १६ ॥

तद्यदेतेऽअत्रोपदधाति । संवत्सरऽएषोऽग्निरिमऽउ लोकाः संवत्सर-स्तस्य यदूर्ध्वं पृथिव्याऽअर्वाचीनमन्तरिक्षात्तदस्यैषा द्वितीया चितिस्त-द्वस्य ग्रीष्मऽऋतुस्तद्यदेतेऽअत्रोपदधाति यदेवास्यैतेऽआत्मनस्तद-स्मिन्नेतत्प्रतिदधाति तस्मादेतेऽअत्रोपदधाति ॥ १७ ॥

### अथ ऋतव्येष्टकोपधानम् ।

अथर्तव्येऽउपदधाति । ऋतव एते-यदृतव्ये । ऋतूनेवैतदुपदधाति । " शुक्रश्च शुचिश्च ग्रैष्मावृतू "-( वा. सं. १४ । ६ ) इति । नामनीऽएनयोरेते । नामभ्यामेवैनेऽएतदुपदधाति । द्वेऽइष्टके भवतः । द्वौ हि मासावृतुः । सकृत्सादयति । एकं तदृतुं करोति ॥ १६ ॥

तद्यदेतेऽअत्रोपदधाति । संवत्सर एषोऽग्निः । इम उ लोकाः संवत्सरः । तस्य यदूर्ध्वं पृथिव्याः, अर्वाचीनमन्तरिक्षात्—तदस्यैषा द्वितीया चितिः । तद्वस्य ग्रीष्म ऋतुः । तद्यदेते-अत्रोपदधाति । यदेवास्यैतेऽआत्मनः—तदस्मिन्नेतत्प्रतिदधाति । तस्मादेतेऽअत्रोपदधाति ॥ १७ ॥

कटिप्रदेशास्थीनि पृष्ट्य इत्युच्यन्ते । 'पृष्टिसाचयमिव' पृष्टिभिः कटिसम्बन्धिभिरस्थिभिः सम्बद्धमिव खलु 'अस्य' प्रजापतिशरीरस्य ' एतद् ' अश्विभ्यां प्रतिहितमङ्गम्, अतः पृष्टिसंस्तुतरेतःसिक्समीपोपधानमाश्विनीनां युक्त-मिति भावः । सर्वत उपधानमप्यस्मिन्नर्थे योजयति—सर्वत इति । ' सर्वतः ' सर्वासु प्राच्यादिदिक्षु ' उपद-धाति ' इति । अत्र कारणमाह—सर्वतो हीति । ' हि ' यस्माद् ' अस्य ' आत्मनः ' एतद् ' अङ्गम् ' अश्विनौ ' सर्वाभ्यो दिग्भ्य आहृत्य ताभिरेवाच्छिन्नं ' प्रत्यधत्ताम् ' अतः ' सर्वतः ' उपधानमप्येतत्प्रयोजन-सिद्धये सम्पद्यत इत्यर्थः ॥ १९ ॥

इत्थमाश्विनीर्विधाय ऋतव्ययोरुपधानं विधत्ते—अथर्तव्ये उपदधातीति । ' अथ ' आश्विन्युपधानानन्त-रम् ' ऋतव्ये ' ऋतुदेवताके इष्टके उपदध्यात् । तत्प्रशंसति—ऋतव एत इति । संवत्सरात्मकस्य चित्यस्याग्ने-"मधुश्च माधवश्च" इत्यादिमन्त्रैरुपधेया ऋतव्या इष्टका ऋतुस्थानीया अतस्तेनैव ऋतव्योपधानेनैव ' ऋतून् ' स्थापितवान्भवतीत्यर्थः । मन्त्रं विधाय व्याचष्टे—शुक्रश्च शुचिश्चेति । नामनी एनयोरिति । 'एनयोः' ग्रीष्म-र्त्वात्मिकयोर्ऋतव्ययोः 'एते' शुक्रशुचिशब्दरूपे ' नामनी ' अतो ' नामभ्यामेव ' एतयोरुपधानं कृतं भवती-त्यर्थः । " ऋतव्ये उपदधाति " इति विशिष्टविधिनैव सिद्धं द्वित्वमनूद्य स्तौति—द्वे इष्टके भवतो द्वौ हि मासा-वृतू इति । ' हि ' शब्दः सर्वजनप्रसिद्धिद्योतनार्थः । इष्टकयोर्द्वित्वात् पृथक् सादनप्रसक्तावाह—सकृत्सादय-तीति । ' तत् ' सेन सकृत्त्वकरणेन ' ऋतुमेकम् ' अद्वयात्मकं ' करोति ' यजमानः ॥ १६ ॥

ऋतव्ययोर्द्वितीयचितावुपधानं प्रशंसति—तद्यदेते अत्रेति । वसन्तादृत्विष्टकानिष्पाद्यत्वाद् ' एषः ' चीय-

१—शुक्रश्च शुचिश्चेत्यृतव्ये पूर्व्वयोरुपरि । का. श्रौ. सू. । १७ । १८१ ।

युद्वैवैते॒ऽअुत्रोप॑दधाति । प्रजाप॑तिरे॒षोऽग्निः संव्वत्स॒र ऽउ प्रजाप॑तिस्तस्य॒ यदूर्ध्वं प्रतिष्ठाया॒ ऽअवाचीनं मध्या॒त्तद॑स्यै॒षा द्वितीया चितिस्तद्व॑स्य ग्रीष्म॒ऽऋतुस्तद्यदेते॒ऽअुत्रोप॑दधाति युदे॒वास्यै॒ते॒ऽआत्मुन॒स्तद॒स्मिन्नेतत्प्रतिद॑धाति तुस्मादेते॒ऽअुत्रोप॑दधाति ॥ १८ ॥ ( अर्धप्रपाठकः ५८ ) ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ८-१-५ ॥ ( २.१ ) ॥

अुथ वैश्व॑देवीरु॒प॑दधाति । ( त्ये ) एषा वै सा द्वितीया चितिर्यामे॒भ्यस्तद॒श्विना॒ऽउपाध॑त्तां तामुपधायेदथ्ँ सर्व्व॑मभवतां यदि॒दं किं च ॥ १ ॥

---

यद्वैवैतेऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः । संवत्सर उ प्रजापतिः । तस्य यदूर्ध्वं प्रतिष्ठायाः, अवाचीनं मध्यात्–तदस्यैषा द्वितीया चितिः । तद्वस्य ग्रीष्म ऋतुः । तद्यदेतेऽअत्रोपदधाति–यदेवास्यैतेऽआत्मनः–तदस्मिन्नेतत्प्रतिदधाति । तस्मादेतेऽअत्रोपदधाति ॥ १८ ॥

अथ पञ्चवैश्वदेवेष्टकोपधानम् ।

अथ वैश्वदेवीरुपदधाति । एषा वै सा द्वितीया चितिः–यामेभ्यस्तदश्विनाऽउपाधत्ताम् । तामुपधायेदं सर्वमभवताम्–यदिदं किं च ॥ १ ॥

---

मानोऽग्निः ' संवत्सरः ' स च संवत्सर ' इमे लोकाः ' खलु संवत्सरात्मकेन प्रजापतिना सृष्टत्वात् । अग्नेः संवत्सररूपस्य लोकत्रयात्मकत्वकल्पनायाः प्रयोजनमाह–तस्य यदूर्ध्वमिति । पृथिव्याः प्रथमचित्यात्मकतायाः प्रागुक्तत्वात् ( श. प. ८ । २ । १ । १ ) तत उपरितनम्, अन्तरिक्षादधस्तनं यदस्ति; ' तदस्य ' अग्नेर्द्वितीयचितिस्थानीयम् । ' तदु ' तदेव ' अस्य ' संवत्सररूपस्य ' ग्रीष्म ऋतुः ' ' तत् ' तस्मात् ' एते ' इष्टके ' अत्र ' द्वितीयायां चितौ ' उपदधाति ' इति यत् ' तत् ' तेन ' यदेवास्य ' अग्नेः ' आत्मनः ' शरीरस्य इष्टकाद्वयरूपमङ्गं विकलमभूत ; ' तत् ' विकलम् ' अस्मिन् ' आत्मनि ' एतत् ' इदानीम् ' प्रतिदधाति ' पुनः स्थापितवान् भवति । ' तस्मादेते ' इति निगमनम् । अयमर्थः–लोकत्रयात्मकस्य चित्याग्नेर्यत्पृथिव्यन्तरिक्षान्तरालरूपमङ्गं तद्द्वितीयचित्यनुष्ठानेन, यत्तु संवत्सरात्मकस्य ग्रीष्मर्तुरूपं तदृतव्ययोरुपधानेन प्रतिहितं भवतीति ॥ १७ ॥

पुनः प्रकारान्तरेण प्रशंसति–यद्वैवैते इत्यादिना । ' एषः ' चीयमानः ' अग्निः प्रजापतिः ' सोऽपि संवत्सर एव, किं ? ततः ' तस्य ' संवत्सरादभिन्नस्य प्रजापतिरूपस्याग्नेः ' यत् ' ' प्रतिष्ठायाः ' प्रतिष्ठा पादौ तत ' ऊर्ध्वम् ' ' मध्यात् ' कटिप्रदेशादधस्तनं च यदस्ति । शिष्टं पूर्ववत् ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ८ २–१ ) ॥

ऋतव्ययोरुपधानानन्तरं वैश्वदेवीनामुपधानं विधायाख्यायिकया स्तौति–अथ वैश्वदेवीरुपदधात्येषा वै सेत्यादिना । ' याम् ' इष्टकाम् ' एभ्यः ' देवेभ्योऽर्थाय ' तत् ' तदा ' अश्विनौ उपाधत्ताम् ' । ' सैव

---

१–वैश्वदेवीः । पूर्वां दक्षिणेन दक्षिणामपरेण अपरामुत्तरेण उत्तरां पूर्वेण । का. श्रौ. सू. १७ । १७१–१७५ ।

२–वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम् । का. श्रौ. सू. १७ । १८२ ।

ते देवाऽअब्रुवन् । ( न्न ) अश्विनौ वाऽइदꣳ सर्व्वमभूतामुप तज्जानीत यथा व्वयमिहाप्यसामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथा व्वयमिहाप्यसामेति ते चेतयमानाऽएताऽइष्टकाऽअपश्यन्वैश्वदेवीः ॥ २ ॥

( स्ते ) तेऽब्रुवन् । ( न्न ) अश्विनौ वाऽइदꣳ सर्व्वमभूतामश्विभ्यामेवाश्विनोश्चितिमनूपदधामहाऽइति तेऽश्विभ्यामेवाश्विनोश्चितिमनूपादधत तस्मादेतामाश्विनी चितिरित्याचक्षते तस्माद्यथैव पूर्व्वासामुदर्कऽएवमेतासामश्विभ्याꣳ ह्येवाश्विनोश्चितिमनूपादधत ॥ ३ ॥

यद्वेव व्वैश्वदेवीरुपदधाति । ये वै ते व्विश्वे देवाऽएतां द्वितीयां चितिमपश्यन्ये तऽएतेन रसेनोपायंस्तऽएते तानेवैतदुपदधाति ताऽएताः सर्व्वाः

---

ते देवा अब्रुवन्—अश्विनौ वाऽइदं सर्वमभूताम्, उप तज्जानीत—यथा वयमिहाप्यसामेति । तेऽब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । तदिच्छत—यथा वयमिहाप्यसामेति । ते चेतयमाना एता इष्टका अपश्यन्वैश्वदेवीः ॥ २ ॥

तेऽब्रुवन्—अश्विनौ वाऽइदं सर्वमभूताम्, अश्विभ्यामेवाश्विनोश्चितिमनूपदधामहाऽइति । तेऽश्विभ्यामेवाश्विनोश्चितिमनूपादधत । तस्मादेतामाश्विनी चितिरित्याचक्षते । तस्माद्यथैव पूर्वासामुदर्कः—एवमेतासाम् । अश्विभ्यां ह्येवाश्विनोश्चितिमनूपादधत ॥ ३ ॥

यद्वेव वैश्वदेवीरुपदधाति । ये वै ते विश्वे देवा एतां द्वितीयां चितिमपश्यन्, ये त ऽएतेन रसेनोपायन्—

---

द्वितीया चितिः ' खलु । ' ताम् ' द्वितीयाम् ' उपधायेदं सर्वमभवताम्; ' सर्वमिदं तयोः स्वाधीनमभूदित्यर्थः । सर्वशब्दस्यासङ्कोचं दर्शयति—यदिदं किञ्चेति । ' यत् '—यत्प्रतीयते तत्सर्वमित्यर्थः ॥ १ ॥

' ते देवाः ' ' इदं सर्वम् ' ' अश्विनौ ' एव ' अभूताम् ' अतः ' यथा ' येन प्रकारेण ' इह ' अस्मिन् सर्वस्मिन् ' वयमप्यसाम ' ' तत् ' तथा ' उपजानीत ' 'इति' परस्परम् ' अब्रुवन् ' । एवमुक्त्वा ते पुनरब्रुवन् ' चेतयध्वमिति ' । एवं वदतामुक्तेरभिप्रायं श्रुतिरितरथा ब्रूते—चितिमिच्छतेति वाव तदब्रुवन्निति । इतस्ततो विक्षिप्ताया बुद्धिवृत्तेरैकाग्र्येणैकत्र समावेशः—श्चितिः । ' ते चेतयमानाः ' इत्यादि स्पष्टम् । स्वातन्त्र्येण कार्यं साधयितुमशक्ताः ' ते ' देवा एवम् 'अब्रुवन्' । कथं ? पूर्वम् ' इदं सर्वमश्विनौ ' एव ' अभूताम् ' खलु । अतो वयमपि ' अश्विभ्यामेव ' साधनाभ्यां ( तद्धस्तादित्यर्थः ) तयोः ' चितिम् ' अनुसृत्यैव वैश्वदेवीः ' उपदधामहा इति ' एवमुक्त्वा ' ते ' तथैवाकुर्वन् । ' तस्मात् ' अश्विप्रधानत्वात् ' एताम् ' द्वितीयां चितिम् ' आश्विनीत्याचक्षते ' अभिज्ञाः । ' तस्माद् ' अश्विभ्यां साधितत्वात् ' यथैव पूर्वासाम् ' आश्विनीनाम् ' उदर्कः ' मन्त्रस्यावसानम् " अश्विनाऽध्वर्यू सादयताम् " इत्येवंरूपः; ' एवमेतासाम् ' वैश्वदेवीनामप्युदर्क इति शेषः । तत्र कारणं पूर्वोक्तं पुनः स्मारयति—अश्विभ्यां ह्येवेति ॥ २ ॥ ३ ॥

प्रकारान्तरेण स्तौति—यद्वेवेति । ' यदेव ' कारणाद् ' वैश्वदेवीरुपदधाति ' तदभिधीयत इत्यर्थः । ' ये ' खलु ' ते विश्वे देवा एताम् ' वैश्वदेवीभिर्निर्मिताम् ' द्वितीयां चितिमपश्यन् ' अजानन् । ' ते ' देवाः ' एतेन

प्रजास्ता रेतःसिचोर्व्वेलयोपदधातीमे वै रेतःसिचावनयोस्तत्प्रजा दधाति तस्मादनयोः प्रजाः सर्व्वतऽउपदधाति सर्व्वतस्तत्प्रजा दधाति तस्मात्सर्व्वतः प्रजा दिश्याऽअनूपदधाति दिक्षु तत्प्रजा दधाति तस्मात्सर्व्वासु दिक्षु प्रजाः ॥ ४ ॥

( ० ) यद्देव वैश्वदेवीरुपदधाति । प्रजापतेर्व्विस्रस्तात्सर्व्वाः प्रजा मध्यत ऽउदक्रामन्नेतस्याऽअधि योनेस्ताऽएनमेतस्मिन्नात्मनः प्रतिहिते प्रापद्यन्त ५॥ स यः स प्रजापतिर्व्यस्रंसत । (ता) अयमेव स योऽयमग्निश्चीयतेऽथ या ऽअस्मात्ताः प्रजा मध्यतऽउदक्रामन्नेतास्ता वैश्वदेव्यऽइष्टकास्तद्यदेता ऽउपदधाति या ऽएवास्मात्ताः प्रजा मध्यतऽउदक्रामंस्ता ऽअस्मिन्ने-

---

त एते । तानेवैतदुपदधाति । ता एताः सर्वाः प्रजाः । ता रेतःसिचोर्वेलयोपदधाति । इमे वै रेतःसिचौ । अनयोस्तत्प्रजा दधाति । तस्मादनयोः प्रजाः । सर्वत उपदधाति । सर्वतस्तत्प्रजा दधाति । तस्मात्सर्वतः प्रजाः । दिश्या अनूपदधाति । दिक्षु तत्प्रजा दधाति । तस्मात्सर्वासु दिक्षु प्रजाः ॥ ४ ॥

यद्वेव वैश्वदेवीरुपदधाति । प्रजापतेर्विस्रस्तात्सर्वाः प्रजा मध्यत उदक्रामन्—एतस्या अधि योनेः । ता एनमेतस्मिन्नात्मनः प्रतिहिते प्रापद्यन्त ॥ ५ ॥

स यः स प्रजापतिर्व्यस्रंसत—अयमेव सः—योऽयमग्निश्चीयते । अथ या अस्मात्ताः प्रजा मध्यत उदक्रामन्—एतास्ता वैश्वदेव्य इष्टकाः । तद्यदेता उपदधाति—या एवास्मात् ताः प्रजा मध्यत

---

रसेनोपायन् ' रसेन सङ्गता अभवन्नित्यर्थः । ' त एते ' प्रसिद्धा विश्वे देवाः । ' तानेव ' रसेनोपेतानेव देवान् ' एतद् ' एतेन वैश्वदेवीनामुपधानेन ' उपदधाति ' अध्वर्युः । कोऽसौ रस इति स उच्यते—ता एताः सर्वाः प्रजा इति । ' ताः ' रसत्वेन निर्दिष्टा इष्टकाः ' एताः ' परिदृश्यमानाः 'सर्वाः प्रजाः' । एतासां स्थानमाह—ता रेतःसिचोर्वेलयेति । गतमिदम् । ' तस्माद् ' रेतःसिचोर्द्यावापृथिव्यात्मकत्वाद् ' अनयोः ' द्यावापृथिव्योर्मध्ये ' प्रजाः ' वर्तन्त इति शेषः । तत्रापि विशेषं सार्थवादमाह—सर्वत उपदधातीति । तत्राप्याश्विनीनामानन्तर्यमाह—दिश्या अन्विति । ' दिश्याः ' आश्विन्यस्ताः सर्वत उपहिताः, ता अन्वेता अप्युपदध्यात् । स्पष्टोऽर्थवादः ॥ ४ ॥

पुनः प्रकारान्तरेण स्तौति—यद्वेवेति । ' विस्रस्तात्प्रजापतेर्मध्यतः सर्वाः प्रजाः ' उद्गताः । मध्यं विशिनष्टि—एतस्या अधि योनेरिति । ' अधि ' इति पञ्चम्यर्थानुवादी । ' एतस्याः ' प्रजोत्पादिकायाः ' योनेः ' सकाशात् । ' ताः ' उद्गता; प्रजापतिशरीरस्य सम्बन्धिन्यः ' एतस्मिन् ' मध्ये ' प्रतिहिते ' समाहिते सति ' एनम् ' प्रजापतिं पुरस्तात् प्रापद्यन्त ॥ ५ ॥

कोऽसौ विस्रस्तः प्रजापतिरिति तमाह—अयमेव स इति । एतच्छन्दार्थमाह—योऽयमिति । अस्तु सः । उत्क्रान्ताः प्रजाः का इति ता आह—एतास्ता वैश्वदेव्य इति । ' तद्यदेताः ' वैश्वदेवीः अत्र द्वितीयायां चितौ

तत्प्रुपादयति रेतःसिचोर्व्वेलया पृष्ट्यो वै रेतःसिचौ मुध्यमु पृष्ट्यो मध्यतऽ-एुवास्मिन्नेत्ताः प्रजाः प्रुपादयति सुर्व्वतऽउुपदधाति सर्व्वतऽ एुवास्मिन्नेत्ताः प्रजाः प्रुपादयति ॥ ६ ॥

युद्वेवु व्वैश्वदेवीरुपदुधाति । ( त्ये ) एतद्वै प्रजापतिरेतुस्मिन्नात्मुनः प्रतिहितेऽकामयत प्रजुाः सृजेय प्रुजायेयेुति सु ऽऋतुभिरद्भिः प्राणैः संव्वत्सरेुणाश्विुभ्याᳬं सयुग्भूत्वैताः प्रजाः प्राजनयत्तुथैवैतद्युजमानऽएत्ताभिर्देवुताभिः सयुग्भूत्वैताः प्रजाः प्रुजनयति तुस्मादु सुर्व्वास्वेुव सजूः सजूरित्युनुवर्त्तते ॥ ७ ॥

सजूर्ऋतुभिरिति । तुद्दृतून्प्राजनयद्दृतुभिर्व्वै सयुग्भूत्वा प्राजनयत्सजूर्व्विधाभिरित्यापो वै व्विधाऽअद्भिर्हीदᳬं सुर्व्वं व्विहितमद्भिर्व्वै सयुग्भूत्वा

---

उदक्रामन्—ता अस्मिन्नेतत्प्रपादयति । रेतःसिचोर्वेलया । पृष्ट्यो वै रेतःसिचौ । मध्यमु पृष्ट्यः । मध्यत एवास्मिन्नेताः प्रजाः प्रपादयति । सर्वत उपदधाति । सर्वत एवास्मिन्नेताः प्रजाः प्रपादयति ॥ ६ ॥

यद्वेव वैश्वदेवीरुपदधाति । एतद्वै प्रजापतिरेतस्मिन्नात्मनः प्रतिहितेऽकामयत—प्रजाः सृजेय, प्रजायेयेति । स ऋतुभिः—अद्भिः—प्राणैः—सम्वत्सरेण—अश्विभ्यां सयुग्भूत्वैताः प्रजाः प्राजनयत् । तथैवैतद्यजमान एताभिर्देवताभिः सयुग्भूत्वैताः प्रजाः प्रजनयति । तस्मादु सर्वास्वेव सजूः सजूरित्यनुवर्तते ॥ ७ ॥

" सजूर्ऋतुभिः "—इति । तदृतून्प्राजनयत् । ऋतुभिर्वै सयुग्भूत्वा प्राजनयत् । " सजूर्विधाभिः "—इति । आपो वै विधाः । अद्भिर्हीदं सर्वं विहितम् । अद्भिर्वै सयुग्भूत्वा प्राजनयत् ।

---

' उपदधाति ' ' या एव प्रजाः ' ' अस्मात् ' प्रजापतेः ' मध्यतः ' मध्यदेशात् उत्क्रान्ताः ' ताः ' एव पुनस्तत्र ' प्रपादयति ' । रेतःसिग्व्याख्यानम्—' पृष्ट्यः ' इत्यादिकम् ' सर्वत उपदधाति ' इति च स्पष्टम् ॥ ६ ॥

अथासां पञ्चानां वैश्वदेवीनामुपधाने मन्त्रं विधातुमाह—यद्वेव वैश्वदेवीरुपदधात्येतद्वै प्रजापतिरित्यादिना । ' आत्मनः ' शरीरस्य ' एतस्मिन् ' मध्यमेऽङ्गे ' प्रतिहिते ' सति ' अकामयत प्रजाः सृजेय, प्रजायेयेति ' सृज्यमानप्रजारूपेण मेऽस्तु प्रादुर्भावोऽपीत्यर्थः । एवं कामयमानः ' स ' ऋत्वप्प्राणसंवत्सराश्विभिः ' सयुक् ' तत्सहायो ' भूत्वा ' ' एताः ' वक्ष्यमाणवैश्वदेव्याख्याः ' प्रजाः प्राजनयत् ' । तथैवेत्यादि स्पष्टम् । ' तस्माद् '—एव सयुग्भावाद्धेतोर्वैश्वदेवीनामुपधानमन्त्रेषु ' सजूः सजूरित्यनुवर्तते ' ॥ ७ ॥

अनुवृत्तिप्रकारं च स्वयमेवाह-सजूर्ऋतुभिरिति । ' इति ' एवं प्रतिमन्त्रमादावनुवर्तते । ' तत् ' तेन ' ऋतून् प्राजनयत् ' । ऋतूत्पादनमितरप्रजासृष्टेर्ऋतुसयुग्भावाऽन्यथानुपपत्त्या समर्थयते—ऋतुभिर्वै सयुग्भूत्वा प्राजनयदिति । अन्यानिति शेषः । उत्पन्नस्य ऋतोः सयुग्भावमापद्य तत्सहायवानन्यान्

प्राजनयत्सजूर्देवैरिति तद्देवान्प्राजनयद्यद्देवाऽइत्याचक्षते सजूर्देवैर्व्वयोनाधैरिति प्राणा वै देवा व्वयोनाधाः प्राणैर्हीदᳫँ सर्व्वं व्वयुनं नद्धमथो च्छन्दाᳫँसि वै देवा व्वयोनाधाश्छन्दोभिर्हीदᳫँ सर्व्वं व्वयुनं नद्धं प्राणैर्व्वै सयुग्भूत्वा प्राजनयदग्नये त्वा व्वैश्वानरायेति संव्वत्सरो वाऽअग्निर्व्वैश्वानरः संव्वत्सरेण वै सयुग्भूत्वा प्राजनयदश्विनाऽध्वर्यू सादयतामिह त्वेत्यश्विभ्यां वै सयुग्भूत्वा प्राजनयत् ॥ ८ ॥

( त्स ) सजूर्व्वसुभिरिति दक्षिणतः । ( स्त ) तद्वसून्प्राजनयत्सजू रुद्रैरिति पश्चात्तद्रुद्रान्प्राजनयत्सजूरादित्यैरित्युत्तरतस्तदादित्यान्प्राजनय-

---

" सजूर्देवैः "–इति । तद्देवान्प्राजनयत्–यद्देवा इत्याचक्षते । " सजूर्देवैर्वयोनाधैः "–इति । प्राणा वै देवा वयोनाधाः । प्राणैर्हीदं सर्वं वयुनं नद्धम् । अथो छन्दांसि वै देवा वयोनाधाः । छन्दोभिर्हीदं सर्वं वयुनं नद्धम् । प्राणैर्वै सयुग्भूत्वा प्राजनयत् । " अग्नये त्वा वैश्वानराय "–इति । संवत्सरो वाऽअग्निर्वैश्वानरः । संवत्सरेण वै सयुग्भूत्वा प्राजनयत् । " अश्विनाऽध्वर्यू सादयतामिह त्वा "–इति । अश्विभ्यां वै सयुग्भूत्वा प्राजनयत् ॥ ८ ॥

" सजूर्वसुभिः "–इति दक्षिणतः । तद्वसून्प्राजनयत् । " सजू रुद्रैः "–इति पश्चात् । तद्रुद्रान्प्राजनयत् । " सजूरादित्यैः "–इत्युत्तरतः । तदादित्यान्प्राजनयत् ।

---

विश्वदेववस्वादीन् प्राजनयदित्यर्थः । एवमुत्तरेष्वपि 'सजूर्विधाभिः' ' सजूर्देवैः ' ' सजूर्देवैर्वयोनाधैः ' इत्यादिष्वनुषञ्जनीयभागेष्वपि द्रष्टव्यम् । 'सजूर्विधाभिरिति' अनुषञ्जनीयो द्वितीयभागः । तत्र विधाशब्दार्थमाह–आपो वै विधा इति । अप्सु विधाशब्दप्रवृत्तिं दर्शयति–अद्भिर्हीति । विधीयते क्रियते आभिरद्भिरिदमिति विधा आपः । ' हि '–शब्दोऽपां सर्वाश्रयत्वस्य प्रसिद्धिद्योतनार्थः । शिष्टं पूर्ववत् । इत्थं पञ्चस्वपि मन्त्रेषु पूर्वभागेऽनुषञ्जनीयमभिधाय प्रथमं मन्त्रं व्याचष्टे–सजूर्देवैरिति । " तद्देवान्प्राजनयत् " इत्यत्रत्यदेवशब्देन वक्ष्यमाणवस्वादयः सर्वेऽपि देवा विवक्षिता इति व्याचष्टे–यद्देवा इत्याचक्षत इति । देवशब्देन येऽभिधीयन्ते ते सर्वेऽप्यनेन विवक्षिता इत्यर्थः । उपरिष्टादनुषञ्जनीयप्रथमभागं व्याचष्टे–सजूर्देवैर्वयोनाधैरिति । वयोनाधशब्दार्थमाह–प्राणा वै देवा वयोनाधा इति । वयोनाधशब्दः कथं प्राणानभिधत्त इति तदुपपादयति–प्राणैर्हीदं सर्वं वयुनं नद्धमिति । वयो वयुनं नह्यन्ति बध्नन्तीति ' वयोनाधाः ' 'प्राणाः' । वयःशब्दस्य विवक्षितार्थान्तरमाह–अथो छन्दांसि वै देवा वयोनाधा इति । शिष्टं पूर्ववद्व्याख्येयम् । अनुषङ्गस्य द्वितीयभागमुदाहृत्य व्याचष्टे–अग्नये त्वा वैश्वानरायेत्यादिना । तृतीयभागं विधाय व्याचष्टे–अश्विनाऽध्वर्यू सादयतामिह त्वेति । हे इष्टके ! त्वाम् अश्विनावध्वर्यू 'इह' द्वितीयचितिप्रदेशे ' सादयताम् ' इति तस्यार्थः ॥ ८ ॥

द्वितीयेष्टकोपधानमन्त्रमुक्त्वा व्याचष्टे–सजूर्वसुभिरिति दक्षिणत इति । उपदध्यादिति शेषः । ' तत् ' तेन एतन्मन्त्रसाध्येष्टकोपधानेन ' वसून् ' अष्टसंख्यान् ' प्राजनयत् ' । सजू रुद्रैरिति तृतीयो मन्त्रः । रुद्रा एकादश, तन्मन्त्रेण पश्चादुपदध्यात् । सजूरादित्यैरिति चतुर्थेन मन्त्रेणोत्तरतः सादयेत् । स्पष्टमन्यत् ।

त्सुजूर्विश्वैर्देवैरित्युपरिष्टात्तद्विश्वान्देवान्प्राजनयत्ता वै समानप्रभृतयः समानोदर्का नाना मध्यतस्ता यत्समानप्रभृतयः समानोदर्काः समानीभिर्हि देवताभिः पुरस्ताच्चोपरिष्टाच्च सयुग्भूत्वा प्राजनयदथ यन्नाना मध्यतोऽन्याऽ अन्या हि प्रजा मध्यतः प्राजनयत् ॥ ९ ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ ८-१-६ ॥ ( २. २. ) ॥

अथ प्राणभृतऽउपदधाति । ( त्ये ) एतद्वै देवाऽअब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना वायुमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १ ॥

---

" सजूर्विश्वैर्देवैः "–( वा. सं. १४ । ७ ) इत्युपरिष्टात् । तद्विश्वान्देवान्प्राजनयत् । ता वै समानप्रभृतयः समानोदर्काः, नाना मध्यतः । ता यत्समानप्रभृतयः समानोदर्काः । समानीभिर्हि देवताभिः पुरस्ताच्चोपरिष्टाच्च सयुग्भूत्वा प्राजनयत् । अथ यन्नाना मध्यतः । अन्या अन्या हि प्रजा मध्यतः प्राजनयत् ॥ ९ ॥

अथ पञ्चप्राणभृदिष्टकोपधानम् ।

अथ प्राणभृत उपदधाति । एतद्वै देवा अब्रुवन् । चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । ते चेतयमाना वायुमेव चितिमपश्यन् । तामस्मिन्नदधुः । तथैवास्मिन्नयमेतद्दधाति ॥ १ ॥

---

सजूर्देवैरिति उपरिष्टात्सादयेत् । उक्तानां सादनमन्त्राणामाद्यन्तानुषङ्गसाम्यमाह–ता वै समानप्रभृतयः समानोदर्का इति । प्रभृतिरुपक्रमः । उदर्कोऽवसानम् । तौ सर्वासामिष्टकानां समानावित्यर्थः ॥

कृत्स्नमन्त्राणां मध्यमभागस्य नानारूपतामाह–नाना मध्यत इति । " सजूर्ऋतुभिः " इत्यादिकः सर्वासामुपक्रमः । मध्ये " सजूर्देवैः सजूर्वसुभिः " इत्यादिः पञ्चमन्त्रेष्वेकैको मन्त्रः । अन्ते " सजूर्देवैर्वयोनाधैः " इत्यादिक इत्यर्थः । तत्त्रितयं प्रशंसति–ता यत्समानप्रभृतय इत्यादिना । ' समानीभिर्हि देवताभिः ' ' पुरस्ताच्चोपरिष्टाच्च ' इति ऋत्वादिभिः पुरस्तात् , ' सजूर्वयोनाधैः ' इत्यादिभिरुपरिष्टाच्चेति विभागः । अन्या अन्या हि प्रजा इति । प्रजानां वैलक्षण्यं वस्त्रादीनां विलक्षणत्वाद् द्रष्टव्यम् ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे द्वितीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ८–२–२ ) ॥

प्राणभृत्संज्ञकानामिष्टकानामुपधानं विधाय स्तौति–अथ प्राणभृत इति[1] । 'अथ' वैश्वदेवीनामनन्तरम् । ' चेतयध्वम् ' इत्यादिभागः स्पष्टः । 'चेतयमानास्ते वायुमेव चितिमपश्यन्' 'ताम्' वायुरूपां चितिम् 'अस्मिन्' द्वितीयचितिप्रदेशे ' अदधुः ' स्थापितवन्तः । ' तथैव ' इत्यादि पूर्ववत् ॥ १ ॥

---

१–एवं व्वैश्वदेवीभ्यः प्राणभृतः । प्राणभृतः प्राणं म इति । का. श्रौ. सू. १७ । १७६ । १८४ ।

प्राणभृतऽउपदधाति । प्राणो वै व्वायुर्व्वायुमेवास्मिन्नेतद्दधाति रेतःसिचोर्व्वेलयेमे वै रेतःसिचावनयोस्तद्वायुं दधाति तस्मादनयोर्व्वायुः सर्व्वतऽउपदधाति सर्व्वतस्तद्वायुं दधाति तस्मात्सर्व्वतो व्वायुः सर्व्वतः समीचीः सर्व्वतस्तत्सम्यञ्चं व्वायुं दधाति तस्मात्सर्व्वतः सम्यङ्भूत्वा सर्व्वाभ्यो दिग्भ्यो व्वाति दिश्याऽअनूपदधाति दिक्षु तद्वायुं दधाति तस्मात्सर्व्वासु दिक्षु व्वायुः ॥ २ ॥

( यं ) यद्वेव प्राणभृतऽउपदधाति । ( त्या ) आस्वेवैतत्प्रजासु प्राणान्दधाति ताऽअनन्तर्हिता व्वैश्वदेवीभ्यऽउपदधात्यनन्तर्हितांस्तत्प्रजाभ्यः प्राणान्दधाति प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्मऽउर्व्या विभाहि श्रोत्रं मे श्लोकयेत्येतानेवास्वेतत्क्लृप्तान्प्राणान्दधाति ॥ ३ ॥

---

प्राणभृत उपदधाति । प्राणो वै वायुः । वायुमेवास्मिन्नेतद्दधाति । रेतःसिचोर्वेलया । इमे वै रेतःसिचौ । अनयोस्तद्वायुं दधाति । तस्मादनयोर्वायुः । सर्वत उपदधाति । सर्वतस्तद्वायुं दधाति । तस्मात्सर्वतो वायुः । सर्वतः समीचीः । सर्वतस्तत्सम्यञ्चं वायुं दधाति । तस्मात्सर्वतः सम्यङ् भूत्वा सर्वाभ्यो दिग्भ्यो वाति । दिश्या अनूपदधाति । दिक्षु तद्वायुं दधाति । तस्मात् सर्वासु दिक्षु वायुः ॥ २ ॥

यद्वेव प्राणभृत उपदधाति । आस्वेवैतत्प्रजासु प्राणान्दधाति । ता अनन्तर्हिता वैश्वदेवभ्यि उपदधाति । अनन्तर्हितांस्तत्प्रजाभ्यः प्राणान्दधाति । "( १ ) प्राणं मे पाहि, ( २ ) अपानं मे पाहि, ( ३ ) व्यानं मे पाहि, ( ४ ) चक्षुर्मऽउर्व्या विभाहि, ( ५ ) श्रोत्रं मे श्लोकय"-इति । एतानेवास्वेतत्क्लृप्तान्प्राणान्दधाति ॥ ३ ॥

---

पुनः स्तोतुमनुवदति—प्राणभृत उपदधातीति । प्राणो वै वायुरिति । वैशब्दो " वायुः प्राणो भूत्वा नासिके प्राविशत् " इत्यादिश्रुत्यन्तराम्नातवायुप्राणैकत्वप्रसिद्धिद्योतनार्थः । तासां स्थानमाह—रेतःसिचोर्वेलयेति । तस्मात्क्षित्यन्तरिक्षसंस्तुतरेतःसिचोर्निकटे प्राणभृतामुपधानात् रेतःसिग्रूपयोः ' अनयोः' क्षित्यन्तरिक्षयोर्मध्ये ' वायुः ' सञ्चरतीति शेषः । स्पष्टः सर्वतउपधानार्थवादः । सर्वतः समीचीरिति । प्रागादिसर्वदिक्षु तिर्यक्त्वाभावेनार्जवेन यथा वर्त्तन्ते तथोपदध्यादित्यर्थः । ' तत् ' तेन तथोपधानेन ' वायुम् ' अपि ' सम्यञ्चम् ' अकुटिलं स्थापितवान् भवति । ' तस्मात् सर्वतः ' इत्यादिः स्पष्टः ।

दिश्या अनूपदधातीति । दिश्यानन्तर्यार्थवादो वैश्वदेवीष्टकावाक्यवद्व्याख्येयः ॥ २ ॥

प्रकारान्तरेण प्राणभृतः प्रशंसति—यद्वेव प्राणभृत इति । ' आस्वेव प्रजासु ' वैश्वदेवीनां प्रजारूपत्वेन स्तुतत्वात् तासामनन्तरं प्राणभृतामुपधानेन प्रजासु प्राणान् स्थापितवान् भवति । ' ताः ' प्राणभृतो 'वैश्वदेवीभ्यः' ' अनन्तर्हिताः ' इष्टकान्तरेणाव्यवहिता यथा स्युस्तथा उपदध्यात् । तेन प्राणानपि ताभ्यः प्रजाभ्यः 'अनन्त-

( त्यु ) अथापुस्याऽउुपदधाति । ( त्ये ) एतद्वै देवाऽअब्रुवंश्चेतयध्व-मिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना व्वृष्टिमेव चितिमप-श्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ ४ ॥

( त्य ) अपुस्याऽउुपदधाति । ( त्या ) आपो वै व्वृष्टिर्वृष्टिमेवास्मिन्ने-तद्दधाति रेतःसिचोर्व्वेलयेमे वै रेतःसिचावनयोस्तद्वृष्टिं दधाति तस्मा-दनयोर्व्वर्षति सर्व्वत ऽउुपदधाति सर्व्वतस्तद्वृष्टिं दधाति तस्मात्सर्व्वतो व्वर्षति सर्व्वतः समीचीः सर्व्वतस्तत्समीचीं व्वृष्टिं दधाति तस्मात्सर्व्वतः सम्युङ्भूत्वा सर्व्वाभ्यो दिग्भ्यो व्वर्षति व्वायुव्या ऽअनूपदधाति व्वायौ तद्वृष्टिं दधाति तस्माद्यां दिशं व्वायुरेति तां दिशं व्वृष्टिरन्वेति ॥ ५ ॥

---

अथापस्या उपदधाति । एतद्वै देवा अब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । ते चेतयमाना वृष्टिमेव चितिमपश्यन् । तामस्मिन्नदधुः । तथैवास्मिन्नयमेतद्दधाति ॥ ४ ॥

अपस्या उपदधाति । आपो वै वृष्टिः। वृष्टिमेवास्मिन्नेतद्दधाति । रेतःसिचोर्वेलया । इमे वै रेतः-सिचौ । अनयोस्तद्वृष्टिं दधाति । तस्मादनयोर्वर्षति । सर्वत उपदधाति । सर्वतस्तद्वृष्टिं दधाति । तस्मात्सर्वतो वर्षति । सर्वतः समीचीः । सर्वतस्तत्समीचीं वृष्टिं दधाति । तस्मात्सर्वतः सम्यङ् भूत्वा सर्वाभ्यो दिग्भ्यो वर्षति । वायव्या अनूपदधाति । वायौ तद्वृष्टिं दधाति । तस्माद्यां दिशं वायुरेति—तां दिशं वृष्टिरन्वेति ॥ ५ ॥

---

हिंतान् ' कृतवान्भवति । तासामुपधानमन्त्रान् विधाय संगृह्य तात्पर्यमाह—प्राणं मे इत्यादिना । " प्राणं मे पाहि "—इति प्रथमो मन्त्रः । " अपानं मे पाहि "—इति द्वितीयः । " व्यानं मे " इति तृतीयः । " चक्षुर्म उर्व्या "—इति चतुर्थः । हे चतुर्थेष्टके ! ' मे ' मम ' चक्षुः ' ' उर्व्या ' अविकृतया दृष्ट्या ' विभाहि ' विशेषेण दीपय । हे पञ्चमेष्टके ! ' मे ' मम ' श्रोत्रं श्लोकय ' श्लाघनं कुरु । अत्र यद्यपि प्रथमेष्टकामन्त्रे एव ' प्राणं मे ' इति प्राणलिङ्गमुक्तं तथापि छत्रिन्यायेन लिङ्गमात्रमपेक्ष्य सर्वा अपि प्राणभृत इत्युच्यन्ते । एवं सर्वत्र यथालाभं द्रष्टव्यम् ॥ ३ ॥

अपस्या विधाय प्रशंसति[1]—अथापस्या इति । अब्लिङ्गैर्मन्त्रैरुपधेयत्वाद् 'अपस्याः', यद्वा 'वृष्टिमेव चितिम-पश्यन् ' इत्युक्तत्वादभेदादाप एवापस्याः । ' एतद्वै देवा अब्रुवंश्चेतयध्वमिति ' इत्यादिः सर्वोऽपि पूर्वोक्तेनैवोक्त-प्रयोजनो व्याख्यातप्रायः । आपो वै वृष्टिरिति । वृष्टिकर्मत्वादाप एव वृष्टिः । वायव्या अनूपदधातीति । प्राणभृतामन्वित्यर्थः ॥ ४ ॥ ५ ॥

---

१—प्राणभृद्वद्योऽपस्याः । अपः पिन्वेत्यपस्याः । का. श्रौ. सू. १७ । १७७ । १८५ ।

यद्वेवापस्याऽउपदधाति । ( त्ये ) एष्वेवैतत्प्राणेष्वपो दधाति ताऽअनन्तर्हिताः प्राणभृद्भ्यऽउपदधात्यनन्तर्हितास्तत्प्राणेभ्योऽपो दधात्यथोऽअन्नं वाऽआपोऽनन्तर्हितं तत्प्राणेभ्योऽन्नं दधात्यपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरयेत्येताऽएवैष्वेतत्क्लृप्ताऽअपो दधाति ॥ ६ ॥

(त्य) अथ च्छन्दस्याऽउपदधाति। (त्ये) एतद्वै देवाऽअब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमानाः पशूनेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ ७ ॥

---

यद्वेवापस्या उपदधाति । एष्वेवैतत्प्राणेष्वपो दधाति । ता अनन्तर्हिताः प्राणभृद्भ्य उपदधाति । अनन्तर्हितास्तत्प्राणेभ्योऽपो दधाति । अथोऽअन्नं वाऽआपः । अनन्तर्हितं तत्प्राणेभ्योऽन्नं दधाति । "( १ ) अपः पिन्व, ( २ ) ओषधीर्जिन्व, ( ३ ) द्विपादव, ( ४ ) चतुष्पात्पाहि, ( ५ ) दिवो वृष्टिमेरय "–( वा. सं. १४ । ८ ) इति । एता एवैष्वेतत्क्लृप्ता अपो दधाति ॥६॥

### अथैकोनविंशतिवयस्येष्टकोपधानम् ।

अथ च्छन्दस्या उपदधाति । एतद्वै देवा अब्रुवन्–चेतयध्वमिति–चितिमिच्छतेति वाव तदब्रुवन् । ते चेतयमानाः पशूनेव चितिमपश्यन् । तामस्मिन्नदधुः । तथैवास्मिन्नयमेतद्दधाति ॥ ७ ॥

---

प्रकारान्तरेण स्तौति–यद्वेवेति । एष्वेवैतदिति । पूर्वोपस्थापितेषु 'प्राणेष्वेव' 'अपो दधाति' "आपोमयः प्राणः"–इति श्रुतेः तासामभावे प्राणाः सीदन्तीत्यतः प्राणेष्वपां निधानं युक्तम् । आसां प्राणभृद्भ्यो व्यवधानाभावं विधत्ते–ता अनन्तर्हिताः प्राणभृद्भ्य उपदधातीति । तेन प्राणानामपां चाव्यवधानं कृतवान् भवति । अनन्तर्हितत्वस्य परंपरायितं प्रयोजनं दर्शयति–अथो इति । 'अथो' अपि च 'अन्नं वा' एतत् अन्वयव्यतिरेकानुविधायित्वादन्नस्य । 'तत्' तेन 'अन्नं प्राणेभ्यः' 'अनन्तर्हितम्' स्थापितवान् भवति । अपस्यानां मन्त्रान् विधाय, सङ्गृह्य तात्पर्यमाह–अपः पिन्वेति । हे इष्टके ! त्वम् 'अपः पिन्व' सेचय । तेन च 'ओषधीः' व्रीहियवाद्याः 'जिन्व' प्रीणय । तदनन्तरं हे इष्टके ! 'द्विपात्' पादद्वयोपेतं यन्मनुष्यादिकं तत् 'अव' रक्ष तथा 'चतुष्पात्' पश्वादिकं 'पाहि' रक्ष । 'दिवः' सकाशात् 'वृष्टिमेरय' आ सर्वतः प्रेरय इत्येतदिष्टकोपधानेन 'एता एव अपः क्लृप्ताः' स्वकार्यसमर्थाः 'एषु' एव प्राणेषु 'दधाति' स्थापितवान् भवति ॥ ६ ॥

अथ च्छन्दस्येष्टका विधाय प्रशंसति–अथ च्छन्दस्या इत्यादिना । 'चेतयमाना देवाः पशूनेव' चितित्वेनापश्यन् 'ताम्' पशुरूपां चितिम् 'अस्मिन्' द्वितीयचयने 'अदधुः' स्थापितवन्तः । अयं यजमानोऽपि तथैवास्मिन् 'एतत्' इदानीं 'दधाति' स्थापयति ॥ ७ ॥

छन्दुस्या ऽउुपदधाति । पशुवो वै छुन्दाᳫँसि पशूनेवास्मिन्नेतुद्दधाति सर्व्वुत ऽउुपदधाति सर्व्वुतस्तुत्पशून्दधाति तुस्मात्सर्व्वुतः पशुवोऽपुस्याऽ अनूपदधात्यप्सु तुत्पशून्प्रतिष्ठापयति तुस्माद्यदा व्वुर्षत्युथ पशुवः प्रतितिष्ठन्ति ॥ ८ ॥

युद्वेवु च्छन्दुस्याऽउपदुधाति । प्रजापतेर्व्विस्रस्तात्पशुव ऽउुदक्रामंश्छुन्दाᳫँसि भूत्वा तुान्गायत्री छुन्दो भूत्वा व्वुयसाऽऽप्नोत्तद्युद्गायत्र्याुऽऽप्नोदेतद्धि छुन्द ऽआुाशिष्ठᳫँ सा तुद्भूत्वा प्रजापतिरेतान्पशून्वयसाऽऽप्नोत् ॥९॥

( न्मू ) मूर्धा व्वुय ऽइुति । प्रजापतिर्व्वै मूर्धा स व्वुयोऽभवत्प्रजापतिश्छुन्दऽ इुति प्रजापतिरेव च्छुन्दोऽभवत् ॥ १० ॥

---

छन्दस्या उपदधाति । पशवो वै छन्दांसि । पशूनेवास्मिन्नेतद्दधाति । सर्वत उपदधाति । सर्वतस्तत्पशून्दधाति । तस्मात्सर्वतः पशवः । अपस्या अनूपदधाति । अप्सु तत्पशून्प्रतिष्ठापयति । तस्माद्यदा वर्षति–अथ पशवः प्रतितिष्ठन्ति ॥ ८ ॥

यद्वेव च्छन्दस्या उपदधाति । प्रजापतेर्विस्रस्तात्पशव उदक्रामन्–छन्दांसि भूत्वा । तान्गायत्री छन्दो भूत्वा वयसाऽऽप्नोत् । तद्यद्गायत्र्याऽऽप्नोत्–एतद्धि छन्द आशिष्ठम् । सा तद्भूत्वा प्रजापतिरेतान्पशून्वयसाऽऽप्नोत् ॥ ९ ॥

( १ ) " मूर्धा वयः "–इति । प्रजापतिर्वै मूर्धा । स वयोऽभवत् । " प्रजापतिश्छन्दः "–इति । प्रजापतिरेव च्छन्दोऽभवत् ॥ १० ॥

---

छन्दःशब्देन पशवो विवक्षिता इति दर्शयति–पशवो वै छन्दांसीति । सर्वत उपदधातीत्यादि पूर्ववत् । एतासामपस्यासान्निध्यं विधाय प्रशंसति–अपस्या अन्विति । । 'तत्' तेन अपस्यानन्तर्येण 'अप्सु' उपजीवनीयासु 'पशून् प्रतिष्ठापयति' स्थिरीकरोति । इदानीन्तनी या वृष्टिसमनन्तरभाविनी पशूनां प्रतिष्ठा साऽप्यपस्याछन्दस्यानां मेलनप्रयुक्तेति दर्शयति–तस्माद्यदा वर्षत्यथ पशवः प्रतितिष्ठन्तीति ॥ ८ ॥

छन्दस्यानां पशुरूपत्वेन स्तुतिः कृता पुनस्तामेव पशुरूपतां ज्येष्ठां दर्शयति–यद्वेव च्छन्दस्या इति । 'प्रजापतेर्विस्रस्तात्' विश्लिष्टाङ्गादित्यर्थः । 'पशवः' वक्ष्यमाणाः अजादिलक्षणाः 'उदक्रामन्' । केन रूपेण ? 'छन्दांसि भूत्वा' वक्ष्यमाणविवलादिच्छन्दोरूपमास्थाय । 'तान्' उद्गतान् पशून् 'गायत्री छन्दो भूत्वा' 'वयसा' तत्तन्निर्गतपशूचितस्वशरीरपरिणामेन परिणतो भूत्वेत्यर्थः । 'आप्नोत्' अन्तर्गतान् पशून् स्वस्मिन् कृतवान् । गायत्र्या यदाशुतरत्वं तद्गायत्रीद्वारा प्रजापतिना शीघ्रं या सर्वपश्वाप्तिस्तन्मूलमिति दर्शयति–तद्यद्गायत्र्याऽऽप्नोदिति । यस्माद्गायत्र्यैव सर्वान् पशूनाप्नोत्तस्मात् 'एतच्छन्दः' गायत्र्याख्यम् 'आशिष्ठम्' आशुतरम् 'हि' स्वयं प्रतिपादितोऽर्थः । " पूर्वं तथाऽऽसीदिति " श्रुतिराह–सा तद्भूत्वेति । 'तत्' तदा पूर्वं 'प्रजापतिः' 'सा' गायत्री 'भूत्वा' 'एतान् पशून् वयसाऽऽप्नोत्' ॥ ९ ॥

इत्थमिष्टकानां पशुरूपतामुपपाद्य, अथ पूर्वदिश्युपधेयानां चतसृणामिष्टकानां मन्त्रान्विधाय, व्याख्यास्यन्-

( त्क्ष ) क्षत्रं व्वयऽइति । प्रजापतिर्वै क्षत्रꣳ स व्वयोऽभवन्मयन्दं छन्दऽइति यद्वाऽअनिरुक्तं तन्मयन्दमनिरुक्तो वै प्रजापतिः प्रजापतिरेव च्छन्दोऽभवत् ॥ ११ ॥

( द्वि ) विष्टम्भो व्वयऽइति । प्रजापतिर्व्वै व्विष्टम्भः स व्वयोऽभवदधिपतिश्छन्दऽइति प्रजापतिर्वाऽअधिपतिः प्रजापतिरेव च्छन्दोऽभवत् ॥ १२ ॥

---

( २ ) " क्षत्रं वयः "–इति । प्रजापतिर्वै क्षत्रम् । स वयोऽभवत् । " मयन्दं छन्दः "–इति । यद्वाऽअनिरुक्तं तन्मयन्दम् । अनिरुक्तो वै प्रजापतिः । प्रजापतिरेव च्छन्दोऽभवत् ॥ ११ ॥

( ३ ) " विष्टम्भो वयः "–इति । प्रजापतिर्वै विष्टम्भः । स वयोऽभवत् । " अधिपति-श्छन्दः "–इति । प्रजापतिर्वाऽअधिपतिः । प्रजापतिरेव च्छन्दोऽभवत् ॥ १२ ॥

---

र्थान्निष्पन्नं गायत्रीरूपमिष्टमपि दर्शयति–मूर्द्धा वय इत्यादिना । 'प्रजापतिर्वै मूर्धा, स वयोऽभवत्' इति, उत्तर-तत्तत्प्राप्तव्यपशूचिता वयोविशेषास्तेन तेन प्राप्तव्यास्तत्तच्छन्दोरूपाः पशवश्च वक्ष्यन्ते, अत्र तावत्तानि वयांसि तानि च्छन्दांसि सामान्येन प्रजा एवेति प्रतिपाद्यते, यथा प्रजापतिः सर्वेषां प्रधानं तथा मूर्द्धाऽपि सर्वेषामङ्गानां प्रधानमिति प्राधान्येन विवक्षितत्वात् ' प्रजापतिः ' एव 'मूर्द्धा' इत्युच्यते । एवमुत्तरवाक्येष्वपि तत्तदुपचारबीजं द्रष्टव्यम् । ' वयोऽभवत् ' वयस्थानमवदित्यर्थः । यद्वा ' स ' प्रजापतिः ' वै ' प्रसिद्धः प्रजापतिर्ननु ' मूर्द्धा वयोऽभवत् ' मूर्द्धरूपमत्युत्कृष्टं वयोऽभवत् । एवमुत्तरत्र मन्त्रत्रयेऽपि योज्यम् । प्रजापतिश्छन्द इति । 'प्रजापतिरेव' वक्ष्यमाणं तद्विवलं छन्दोऽभवदित्यर्थः । अथवा प्रजापतिरेव च्छन्दः प्राजापत्याख्यं छन्दोऽभवदित्यर्थः । एवमुत्तरेष्वपि त्रिषु वाक्येषु योज्यम् ॥ १० ॥

क्षत्रं वय इति । क्षत्रियजातितया तद्गतो बलविशेषो लक्ष्यते । " तच्छ्रेयोरूपमत्यसृजत क्षत्रम् " इत्यादिश्रुतेः । अथवा " क्षत्रम् इति बलनाम "–( निघं. ) शरीरपरिणामेन तद्रूपं प्राप्त इत्यर्थः । योजना पूर्ववत् । मयन्दं छन्द इति । " मयः इति सुखनाम "–( निघं. ३ । ६ । ७ ) तद्ददातीति मयन्दम् । अस्य प्रजापतिरूपत्वे बीजमाह–यद्वा अनिरुक्तं तन्मयन्दम् इति । सुखदस्वरूपस्य विशेषेणानभिधानाल्लोकेऽपि ईदृक्–सुखदमित्यविशेषितं सामान्येन मयन्दमिति व्यवहृतत्वादिदम् 'अनिरुक्तम्' । प्रजापतेस्तु सर्वात्मकत्वाद्विशेषेण निर्वक्तुमशक्यत्वाद् अनिरुक्तत्वम् ॥ ११ ॥

विष्टम्भो वय इति । अत्र ' प्रजापतिर्वै विष्टंभः ' इति ' वै '–शब्देन " विष्टंभो धरुणः पृथिव्याः " इत्यादिसर्वश्रुतिगता प्रजापतेः सर्वजगदवलम्बनप्रसिद्धिर्द्योत्यते । ' अधिपतिश्छन्द इति ' अत्र प्रजापतेः सर्वाधिपतित्वम् " सर्वस्याधिपतिः सर्वस्येशानः " इत्यादिश्रुतिप्रसिद्धमुक्तम् ॥ १२ ॥

---

१–व्ययस्याः पंच पंचानूकांतेषु मूर्द्धा व्वय इति प्रतिमंत्रम् । चतस्रः पुरस्तात् दक्षिणत उत्तरतः पश्चात् । का० श्रौ० सू० । १७ । १८६–१८८ ।

(द्वि) व्विश्वकर्मा व्वयऽइति । प्रजापतिर्वै व्विश्वकर्मा स व्वयोऽभवत्परमेष्ठी छन्दऽइत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी छन्दोऽभवत् ॥ १३ ॥

(तृ) तानि वाऽएतानि । चत्वारि व्वयाᳬसि चत्वारि च्छन्दाᳬसि तदष्टावष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान्पशून्वयसाऽऽप्नोत्तस्माज्जीर्णं पशुं व्वयसाऽऽप्त ऽइत्याचक्षते तस्मादु सर्वास्वेव व्वयो व्वय ऽइत्यनुवर्ततेऽथ येऽस्मात्ते पशव ऽउदक्रामन्नेते ते पञ्चदशोत्तरे व्वज्रो वै पशवो व्वज्रः पञ्चदशस्तस्माद्यस्य पशवो भवन्त्यपैव स पाप्मानᳬ हते व्वज्रो हैव तस्य पाप्मानमपहन्ति तस्माद्यां कां च दिशं पशुमानेति व्वज्रविहताᳬ हैव तामन्वेति ॥ १४ ॥

इति प्रथमप्रपाठके सप्तमं ब्राह्मणम् ॥ ८-१-७ ॥ (२. ३.)

---

(४) "विश्वकर्मा वयः"-इति । प्रजापतिर्वै विश्वकर्मा । स वयोऽभवत् । "परमेष्ठी छन्दः"-इति । आपो वै प्रजापतिः परमेष्ठी । ता हि परमे स्थाने तिष्ठन्ति । प्रजापतिरेव परमेष्ठी छन्दोऽभवत् ॥ १३ ॥

तानि वाऽएतानि चत्वारि वयांसि, चत्वारि च्छन्दांसि-तदष्टौ । अष्टाक्षरा गायत्री । एषा वै सा गायत्री-या तद्भूत्वा प्रजापतिरेतान्पशून्वयसाऽऽप्नोत् । तस्माज्जीर्णं पशुं वयसाऽऽप्त इत्याक्षते । तस्मा[द्] सर्वास्वेव वयो वय इत्यनुवर्तते । अथ येऽस्मात्ते पशव उदक्रामन्-एते ते-पञ्चदशोत्तरे । वज्रो [वै] पशवः । वज्रः पञ्चदशः । तस्माद्यस्य पशवो भवन्ति-अपैव स पाप्मानं हते । वज्रो हैव तस्य पाप्मानमपहन्ति । तस्माद्यां कां च पशुमानेति-वज्रविहतां हैव तामन्वेति ॥ १४ ॥

---

विश्वकर्मा वय इति । अत्र 'प्रजापतिर्वै विश्वकर्मा' इति प्रजापतेर्विश्वकर्मत्वम् "य इमा विश्वा भुवनानि जुह्वत्"-इति "यतो भूमिं जनयन् विश्वकर्मा" इत्यादिप्रसिद्धिं दर्शयति । परमेष्ठी छन्द इति । अत्र प्रजापतेः परमेष्ठित्वं शब्दद्वारकमिति दर्शयति । 'आपो वै प्रजापतिः परमेष्ठी' जगत्स्रष्टुः पूर्वमपां सर्जनात्तदभेदेनापां परमेष्ठिरूपप्रजापतिरूपत्वम् । अपामस्तु प्रजापतिरूपत्वमभेदात्; कथं पुनस्तासां परमेष्ठित्वम् ? इति तद्दर्शयति-ता हि परमे स्थाने तिष्ठन्ति इति । "आदित्याज्जायते वृष्टिः" इति स्मृतेः (म. स्मृ. ३ । ७६), "दिवो वृष्टिमेरय दिवो ह्याप: सन्ना:" इत्यादिश्रुतेश्च वृष्टेः परमस्थानभूतद्युसम्बन्धः ॥

तान् गायत्री छन्दो भूत्वेति यद्गायत्रीछन्द उक्तं तदिदानीं सम्पाद्य दर्शयति-तानि वा एतानि चत्वारि वयांसीत्यादिना । स्पष्टोऽर्थः । एषा वै सा गायत्रीति । 'एषा' इति इदानीं सम्पादितप्रकारा गायत्री प्रङ्निर्दिष्टा सा खलु । सा केति तामाह-या तद्भूत्वा प्रजापतिरिति । प्रजापतिर्या भूत्वा पशूनाप्नोत्सेत्यर्थः ।

**बस्तो व्वयऽइति । बस्तं व्वयसाऽऽप्नोद्विवलं छुन्दऽइत्येकपदा वै व्विवलं छुन्दऽएकपदा ह भूत्वाऽजाऽउच्चक्रमुः ॥ १ ॥**

---

( १ ) "बस्तो वयः"–इति । बस्तं वयसाऽऽप्नोत् । "विवलं छन्दः"–इति । एकपदा वै विवलं छन्दः । एकपदा ह भूत्वाऽजा उच्चक्रमुः ॥ १ ॥

---

"वयोऽभवद्वयोऽभवद्"–इति या प्रजापतेर्वयस आप्तिरुक्ता सा इदानींतनव्यवहारस्य मूलमिति दर्शयति–तस्माज्जीर्णं पशुं वयसाऽऽप्त इत्याचक्षत इति । 'जीर्णम्' वृद्धं 'पशुम्' दृष्ट्वाऽसौ प्रभूतेन 'वयसाऽऽप्तः' इति यथेदानीं ब्रूते तथा पूर्वमपि प्रजापतिर्वयसाऽऽप्नोदित्येष सत्यवादः । 'तस्माद्' तस्मादेव वयसाऽऽप्तत्वादेव पशुस्थानीयासु सर्वास्विष्टकासु 'मूर्द्धा वयः बस्तो वयः' इत्येवं वयःशब्दोऽनुवर्तते ॥

इत्थं गायत्र्यात्मना सम्पन्नेन मन्त्रचतुष्टयेनाऽऽप्तस्य प्रजापतेः स्वरूपं दर्शितम् । अथाऽऽप्तव्यानां पशूनां स्वरूपं सामान्येन निर्दिशन्ती श्रुतिः पशूंस्तद्गतसङ्ख्यां च प्रशंसति–अथ येऽस्मादिति । 'अस्मात्' विस्रस्तात् प्राजापत्यङ्गात् 'ये पशवः' 'उदक्रामन्' 'एते ते' प्रसिद्धा वक्ष्यमाणा बस्तादय इत्यर्थः । के ते ? 'उत्तरे' कियन्तो वा पञ्चदशेत्युत्तरम् । पञ्चदशस्तोमस्य प्रजापतेः सारभूतांशबाहुलक्षणावयवेभ्य उत्पन्नत्वाद्वा बाह्वोर्वधसाधनत्वाद्वज्रत्वम् । पशूनां वज्रत्वं स्वयमेव दर्शयति–तस्माद्यस्य पशवो भवन्तीति । 'पाप्मानम्' क्षुद्दारिद्र्यलक्षणम् 'सः' पशुमान् 'अपहत एव' । 'वज्रो हैव' वज्रः खलु 'तस्य पाप्मानमपहन्ति' अतो यद्धननसाधनं तद्वज्रमिति सिद्धोऽर्थः ॥

युक्तिभिरुपपादितमर्थं लोकस्थित्या द्रढयति–तस्माद्यां कां चेति । तां दिशं 'वज्रविहताम्' 'एवान्वेति' पशुभिरुपक्रान्तस्य वर्त्मनोऽप्रतिहतत्वात् ॥ १३–१४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे द्वितीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ८–२–३ ) ॥

"पञ्चदशोत्तरे" इति ये पशवः संग्रहेण निर्दिष्टाः, तान् इदानीं दक्षिणोत्तरपश्चिमदिक्षु क्रमेणोपधेयेष्टकानां मन्त्रव्याख्यानप्रसङ्गेन दर्शयति–बस्तो वय इत्यादिना । 'बस्तः' अजजातिः शरीरपरिणामविशेषः 'वयः' बस्ताकारः शरीरपरिणामो बस्ततया प्रजापतिना स्वीकृत इत्यर्थः । "अजेतराऽभवद् बस्त इतरः" इति श्रुतेः । 'बस्तं वयसाऽऽप्नोद्' इति तात्पर्यतो व्याख्यानं, बस्तोचितवयो धृत्वा बस्तमाप्नोदिति । ब्राह्मणं तु मन्त्रपदयोर्विभक्तिं परिणमय्य व्याचष्टे–'बस्तः' बस्तमित्यर्थः । 'वयः' वयसेत्यर्थः । वयसा बस्तमाप्नोदिति वाक्यार्थः । एवं सर्वत्र व्याख्येयम् । इत्थं स्वाभाविकं पशूनां रूपमभिधायोत्क्रमणसमये छन्दोरूपेणोत्क्रान्तत्वात्तद्रूपप्राप्तिमाह–विवलं छन्द इति । स्वीकृतवानिति शेषः । एतद्व्याचष्टे–एकपदा वै विवलं छन्द इति । विगतं बलं यस्या एकपदायाः सकाशादित्येकपदा वाग्विवलं छन्दः । पदद्वयाभावादेकपदायां विवलच्छन्दोरूपता युक्ता । ननु बस्तापरपर्यायेष्वजेषु उत्क्रान्तेषु विवलच्छन्दोऽवाप्तिः कुत्रोपयुज्यत ? इत्यत आह–एकपदा ह भूत्वाऽजा उच्चक्रमुरिति । एवमुत्तरत्र तत्तच्छन्दोवाक्यानि व्याख्येयानि ॥ १ ॥

(व्वृं) व्वृष्णिर्व्वय ऽइति। व्वृषिंण व्वयसाऽऽप्नोद्विशालं छुन्द ऽइति द्विपदा वै व्विशालं छुन्दो द्विपदा ह भूत्वाऽवय ऽउच्चक्रमुः ॥ २ ॥

पुरुषो व्वय ऽइति। पुरुषं व्वयसाऽऽप्नोत्तन्द्रं छुन्द ऽइति पङ्क्तिर्वै तन्द्रं छुन्दः पंक्तिर्हं भूत्वा पुरुषा ऽउच्चक्रमुः ॥ ३ ॥

(व्यां) व्याघ्रो व्वय ऽइति। व्याघ्रं व्वयसाऽऽप्नोदुनाधृष्टं छुन्द ऽइति व्विराड्वाऽअुनाधृष्टं छन्दोऽन्नं वै व्विराडन्नमुनाधृष्टं व्विराड्ढ भूत्वा व्याघ्रा ऽउच्चक्रमुः ॥ ४ ॥

सिर्ठंहो व्वय ऽइति। सिर्ठंहं व्वयसाऽऽप्नोच्छदिश्छुन्दऽइत्युतिच्छन्दा वै छदिश्छुन्दः सा हि सुर्व्वाणि च्छुन्दार्ठंसि च्छादयत्युतिच्छन्दा ह भूत्वा सिर्ठंहा ऽउच्चक्रमुरथातो निरुक्तानेव पशून्निरुक्तानि च्छुन्दार्ठंस्युपदधाति ५

---

(२) " वृष्णिर्वयः "–इति। वृषिंण वयसाऽऽप्नोत्। " विशालं छन्दः "–इति। द्विपदा वै विशालं छन्दः। द्विपदा ह भूत्वाऽवय उच्चक्रमुः ॥ २ ॥

(३) " पुरुषो वयः "–इति। पुरुषं वयसाऽऽप्नोत्। " तन्द्रं छन्दः "–इति। पङ्क्तिर्वै तन्द्रं छन्दः। पङ्क्तिर्हं भूत्वा पुरुषा उच्चक्रमुः ॥ ३ ॥

(४) " व्याघ्रो वयः "–इति। व्याघ्रं वयसाऽऽप्नोत्। " अनाधृष्टं छन्दः "–इति। विराड् वा अनाधृष्टं छन्दः। अन्नं वै विराड्। अन्नमनाधृष्टम्। विराड्ढ भूत्वा व्याघ्रा उच्चक्रमुः॥ ४॥

(५) "सिंहो वयः "–इति। सिंहं वयसाऽऽप्नोत्। " छदिश्छन्दः"–इति। अतिच्छन्दा वै छदिश्छन्दः। सा हि सर्वाणि च्छन्दांसि च्छादयति। अतिच्छन्दा ह भूत्वा सिंहा उच्चक्रमुः। अथातो निरुक्तानेव पशून्, निरुक्तानि च्छन्दांस्युपदधाति ॥ ५ ॥

---

वृष्णिर्वय इति। वृष्णिनामाऽविजातिः। व्याख्या पूर्ववत्। विशालं छन्द इति। अत्र ; 'द्विपदा वै विशालं छन्दः' इति द्विपदायामृचि पादद्वयसद्भावादेकपदापेक्षया युक्ता विशालच्छन्दोरूपता। उत्क्रमणावसरेऽवीनां द्विपदारूपाश्रयणाद् द्विपदारूपस्य विशालच्छन्दस आप्तिः प्रजापतेर्युक्तैवेत्यर्थः ॥ २ ॥

पुरुषो वय इति। 'पुरुषः' स्पष्टः। तन्द्रशब्दं व्याचष्टे–पङ्क्तिर्वै तन्द्रं छन्द इति ॥ ३ ॥

व्याघ्रो वय इति। वयसाऽऽप्तव्यस्य व्याघ्रस्यानाधृष्टत्वात्तदीयस्य च्छन्दसोऽपि अनाधृष्टत्वेनैव भवितव्यमिति तदेतद्व्याचष्टे–विराड्वा अनाधृष्टं छन्द इति। विराट्छन्दोऽन्नात्मना स्तौति–अन्नं वै विराडिति। अन्नत्वेन स्तुतौ बीजमनाधृष्टत्वसाम्यमिति दर्शयति—अन्नमनाधृष्टमिति। अन्नस्य धर्षणायोग्यत्वं सर्वप्रसिद्धम् ॥ ४ ॥

सिंहो वय इति। छदिश्छन्द इति'। सर्वेषां छन्दसामाच्छादकम्, न चैकपदा द्विपदा पंक्तिरित्येवमादीनि च्छन्दांसि यथा प्रसिद्धानि तादृशमिव छदिश्छन्दः, 'छदिश्छन्द अतः' इत्येतस्यार्थमाह–अतिच्छन्दा वै छदिश्छन्द इति। यथा सिंहः सर्वान् पशूनतीत्य वर्तते, एवं तद्रूपं छन्दोऽपि 'अतिच्छन्दाः' इति युक्तम्।

पष्ठवाड्वय ऽइति । पष्ठवाहं व्वयसाऽऽप्नोद्बृहती छन्द ऽइति बृहती ह भूत्वा पष्ठवाह ऽउच्चक्रमुः ॥ ६ ॥

( रु ) उक्षा व्वय ऽइति । (त्यु) उक्षाणं व्वयसा ऽऽप्नोत्ककुप्छन्द ऽइति ककुब्भ भूत्वोक्षाण ऽउच्चक्रमुः ॥ ७ ॥

( ऋँ ) ऋषभो व्वय ऽइति । ( त्यृ ) ऋषभं व्वयसाऽऽप्नोत्सतोबृहती च्छन्दऽ इति सतोबृहती ह भूत्वऽर्षभा ऽउच्चक्रमुः ॥ ८ ॥

---

( १ ) "पष्ठवाड्वयः"–इति । पष्ठवाहं वयसाऽऽप्नोद् । "बृहती छन्दः"–इति । बृहती ह भूत्वा पष्ठवाह उच्चक्रमुः ॥ ६ ॥

( २ ) "उक्षा वयः"–इति । उक्षाणं वयसाऽऽप्नोत् । "ककुप्छन्दः"–इति । ककुब्भ भूत्वोक्षाण उच्चक्रमुः ॥ ७ ॥

( ३ ) "ऋषभो वयः"–इति । ऋषभं वयसाऽऽप्नोत् । "सतोबृहती च्छन्दः" ( वा. सं १४ । ९ ) इति । सतोबृहती ह भूत्वर्षभा उच्चक्रमुः ॥ ८ ॥

---

कुतस्तस्यातिच्छन्दस्त्वमिति तत्राह–सा हि सर्वाणि च्छन्दांसि च्छादयतीति । सर्वाण्यतिजगत्यादीनि छन्दांसि 'सा' इति तच्छन्दोबद्धामृचमपेक्ष्य स्त्रीलिङ्गता, अस्याश्च इतो न्यूनच्छन्दसामन्तर्भावात् अतिच्छन्दस्त्वव्यपदेशः । अर्थात्, छादनात् 'छदिः' इति व्युत्पत्तिः प्रदर्शिता भवति ॥

इत्थं दक्षिणत उपधेयानां पञ्चानां पञ्च मन्त्रा व्याख्याताः । अथोत्तरतः पश्चाच्चोपधेयानां दशानामिष्टकानां मन्त्रान्विधाय व्याचिख्यासुरुक्तेभ्यो वक्ष्यमाणानां किञ्चिद्वैलक्षण्यमाह–अथातो निरुक्तानेव पशून्निरुक्तानि च्छन्दांस्युपदधातीति । उक्तवैलक्षण्ये 'अथ' शब्दः । पूर्वत्र पशवो निरुक्ता अजाव्यादयः, छन्दांसि तु विवलादीन्यनिरुक्तान्युक्तानि । यद्वा पूर्वत्र च्छन्दांसि पशवश्चेत्युभयमप्यनिरुक्तम्, उत्तरत्र निरुक्तमिति विशेषः । पूर्वं हि "प्रजापतिश्छन्दः" "मयन्दं छन्दः" इत्युक्तत्वात् छन्दसां मध्ये प्रजापतिमयन्दादेरपि गणनात् । वक्ष्यमाणास्तु पष्ठवाडादयस्तत्तद्भेदयुक्ता निरुक्ता एव च्छन्दांस्यपि बृहतीककुबादीनि निरुक्तान्येव । 'अतः' उत्तरत्र 'निरुक्तानेव पशून्, निरुक्तानि च्छन्दांसि' उपदध्यात् ॥ ९ ॥

तत्र प्रथमं पशुं छन्दश्च निरुक्तं दर्शयति–पष्ठवाडित्यादिना । योजना तु पूर्ववत् । 'पष्ठं' पृष्ठभागः । तत्र भारं वोढुं शक्तः पष्ठवाट् तं 'पष्ठवाहम्' प्रजापतिरासव्यपष्ठवाड्यो ऽयं वयः शरीरविकारं प्राप्तवानित्यर्थः । 'बृहती छन्द' इत्यस्य समर्थनम्–बृहती ह भूत्वेति । बृहतीककुबादीनि च्छन्दांसि प्रसिद्धानि । बृहतीरूपेणोत्क्रान्तत्वात् प्रजापतिरपि बृहतीछन्दोऽभूदित्यर्थः ॥ ६ ॥

सेचनसमर्थः पशुः 'उक्षा' । ककुप् छन्द इति । "मध्यमश्चेत्ककुप्" इति तल्लक्षणम् । मध्यमो द्वादशाक्षरश्चेदित्यर्थः । शिष्टावष्टाक्षरौ ॥ ७ ॥

'ऋषभः' ततोऽपि उत्कृष्टवयस्कः । सतोबृहती च्छन्द इति । आद्यतृतीयौ पादौ द्वादशाक्षरौ, द्वितीयचतुर्थावष्टाक्षरौ चेत्सा सतोबृहतीनाम बृहत्यवान्तरविशेषः । "अयुजौ जागतौ सतोबृहती" इति तल्लक्षणम् ॥ ८ ॥

( र ) अनड्वान्वुय ऽइति । ( त्य ) अनड्वाहं व्वुयसाऽऽप्नोत्पङ्क्तिश्छन्द ऽइति पङ्क्तिर्हं भूत्वाऽनड्वाहऽउच्चक्रमुः ॥ ९ ॥

( धे ) धेनुर्व्वुयऽइति । धेनुं व्वुयसाऽऽप्नोज्जगती छन्द ऽइति जगती ह भूत्वा धेनवऽउच्चक्रमुः ॥ १० ॥

( त्र्यु ) त्र्युविर्व्वुयऽइति । त्र्युविं व्वुयसाऽऽप्नोत्त्रिष्टुप्छन्दऽइति त्रिष्टुब्भ भूत्वा त्र्युवयऽउच्चक्रमुः ॥ ११ ॥

( दि ) दित्यवाड्वुयऽइति । दित्यवाहं व्वुयसाऽऽप्नोद्विराट्छन्द ऽइति व्विराड्ढ भूत्वा दित्यवाहऽउच्चक्रमुः ॥ १२ ॥

पुष्ठाविर्व्वुयऽइति । पुष्ठाविं व्वुयसाऽऽप्नोद्गायत्री छन्दऽइति गायत्री ह भूत्वा पुष्ठावयऽउच्चक्रमुः ॥ १३ ॥

---

( ४ ) "अनड्वान्वयः"–इति । अनड्वाहं वयसाऽऽप्नोत् । "पंक्तिश्छन्दः"–इति । पङ्क्तिर्ह भूत्वाऽनड्वाह उच्चक्रमुः ॥ ९ ॥

( ५ ) "धेनुर्वयः"–इति । धेनुं वयसाऽऽप्नोत् । "जगती छन्दः"–इति । जगती ह भूत्वा धेनव उच्चक्रमुः ॥ १० ॥

( १ ) " त्र्यविर्वयः "–इति । त्र्यविं वयसाऽऽप्नोत् । " त्रिष्टुप्छन्दः "–इति । त्रिष्टुब्भ भूत्वा त्र्यवय उच्चक्रमुः ॥ ११ ॥

( २ ) " दित्यवाड्वयः "–इति । दित्यवाहं वयसाऽऽप्नोत् । " विराट् छन्दः "–इति । विराड्ढ भूत्वा दित्यवाह उच्चक्रमुः ॥ १२ ॥

( ३ ) " पश्चाविर्वयः "–इति । पश्चाविं वयसाऽऽप्नोत् । " गायत्री छन्दः "–इति । गायत्री ह भूत्वा पश्चावय उच्चक्रमुः ॥ १३ ॥

---

अनड्वान्वय इति । अनोवहनसमर्थः 'अनड्वान्' । पङ्क्तिश्छन्द इति । "अष्टाक्षरपञ्चपदा पंक्तिः" ॥९॥

धेनुर्वय इति । नवप्रसूतिका ' धेनुः ' । जगती छन्द इति । अष्टाचत्वारिंशदक्षरा ' जगती ' ॥ १० ॥

पश्चाद्वुपधेयानां मन्त्रानाह–त्र्यविर्वय इति । त्रेधाऽवतीति त्र्यविः, त्रैवार्षिको वाऽविस्त्र्यविः । त्रिष्टुप् छन्द इति । चतुश्चत्वारिंशदक्षरा ' त्रिष्टुप् ' ॥ ११ ॥

दितिरवखण्डनम्, तदर्हतीति ' दित्यम् ' धान्यम्, तद्वहतीति ' दित्यवाट् ' अल्पानल्पवाहक इत्यर्थः । दशाक्षरा ' विराट् ' ॥ १२ ॥

पश्चाविर्वय इति । पञ्चवार्षिकोऽत्यन्तवर्षीयान्वा ' अविः ' । गायत्री च्छन्द इति । चतुर्विंशत्यक्षरा ' गायत्री ' ॥ १३ ॥

( त्रि ) त्रिवत्सो व्वय ऽइति । त्रिवत्सं व्वयसाऽऽप्नोदुष्णिक्छन्द ऽइत्युष्णिग्घ भूत्वा त्रिवत्साऽउच्चक्रमुः ॥ १४ ॥

( स्तु ) तुर्यवाड्वय ऽइति । तुर्यवाहं व्वयसाऽऽप्नोदनुष्टुप्छन्द ऽइत्यनुष्टुब्भ भूत्वा तुर्यवाह ऽउच्चक्रमुः ॥ १५ ॥

( रे ) एते वै ते पशवः । ( वो ) यांस्तत्प्रजापतिर्व्वयसाऽऽप्नोत्स वै पशुं प्रथममाहाथ व्वयोऽथ च्छन्दो व्वयसा च ह्येनांश्छन्दसा च परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनानयमेतद्वयसा चैव च्छन्दसा च परिगत्यात्मन्धत्तऽआत्मन्कुरुते ॥ १६ ॥

स ऽएष पशुर्यदग्निः । सोऽत्रैव सर्व्वः कृत्स्नः संस्कृतस्तस्य याः पुरस्तादुपदधाति शिरोऽस्य ताऽअथ या दक्षिणतश्चोत्तरतश्च स ऽआत्माऽथ याः पश्चात्तत्पुच्छम् ॥ १७ ॥

---

( ४ ) " त्रिवत्सो वयः "– इति । त्रिवत्सं वयसाऽऽप्नोत् । " उष्णिक्छन्दः "– इति । उष्णिग्घ भूत्वा त्रिवत्सा उच्चक्रमुः ॥ १४ ॥

( ५ ) " तुर्यवाड्वयः "–इति । तुर्यवाहं वयसाऽऽप्नोत् । " अनुष्टुप्छन्दः "–( वा. सं. १४ । १० ) इति । अनुष्टुब्भ भूत्वा तुर्यवाह उच्चक्रमुः ॥ १५ ॥

एते वै ते पशवो–यांस्तत्प्रजापतिर्वयसाऽऽप्नोत् । स वै पशुं प्रथममाह–अथ वयः–अथ च्छन्दः । वयसा च ह्येनांश्छन्दसा च परिगत्याऽऽत्मन्नधत्त, आत्मन्नकुरुत । तथैवैनानयमेतद्वयसा चैव च्छन्दसा च परिगत्याऽऽत्मन्धत्ते–आत्मन्कुरुते ॥ १६ ॥

स एष पशुर्यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतः । तस्य याः पुरस्तादुपदधाति । शिरोऽस्य ताः । अथ या दक्षिणतश्चोत्तरतश्च–स आत्मा । अथ याः पश्चात्–तत्पुच्छम् ॥ १७ ॥

---

' त्रिवत्सः ' त्रयो वत्सा यस्य साम्येन शक्ताः त्रिवत्सः । ' उष्णिग् ' अष्टाविंशत्यक्षरा ॥ १४ ॥

तुर्यवाड् वय इति । अनआदेरग्रतः प्रविश्य तुर्यत्वेन वोढुं शक्तः 'तुर्यवाट्' । "द्वात्रिंशदक्षराऽनुष्टुप्" ॥ १५ ॥

उपक्रमे प्रतिपादितमर्थं प्रतिज्ञापयन्नुपसंहरति–एते वै ते पशव इति । ' एते ' प्रागुक्ताः ' पशवः ' ' ते वै ' " बस्तो वयः " इत्यादिनोक्ताः खलु । के ते ? ' यांस्तत्प्रजापतिर्वयसाऽऽप्नोद् ' इत्युत्तरम् । ' तत् ' तदा ' यान् ' पशून् ' वयसा प्रजापतिराप्नोद् ' ' त एते ' इत्यर्थः ॥

सर्वेषु मन्त्रेषु पशुवयश्छन्दसां यत् पौर्वापर्यं तत्प्रशंसति–स वै पशुमिति । ' सः ' प्रजापतिः " बस्तो वयः " इत्येवमादौ बस्तं ' पशुं ' पश्चाद् ' वयः ' तदनन्तरं विवलं 'छन्दः, ' तथा सत्येनं प्रथमनिर्दिष्टं पशुं ' वयसा ' स्वाभाविकेन रूपेण ' छन्दसा ' पलायनोचितैकपदादिरूपेण च ' परिगत्य ' ' आत्मन् ' आत्मनि 'अधत्त;' धृत्वा च स्वात्मन्यकुरुत, स्वात्मना सहैकीकृतवान् । ' तथैवैनान् ' इत्याद्युक्तप्रायम् ॥ १६ ॥

इष्टकानां पश्वात्मना स्तुतेः प्रयोजनमाह–स एष पशुर्यदग्निरिति । चित्यात्मकोऽग्निरिति ' यत् '

( १८ ) स वै पुरस्तादेवाग्रऽउपदधाति । शिरो हि प्रथमं जायमानस्य जायतेऽथ दक्षिणतऽउपधायोत्तरतऽ उपदधाति साधुमयमात्मा जायताऽइत्यथ पश्चात्पुच्छꣳ ह्यन्ततो जायमानस्य जायते ॥ १८ ॥

तद्यानि वर्षिष्ठानि च्छन्दाꣳसि । ये स्थविष्ठाः पशवस्तान्मध्यऽउपदधाति मध्यं तत्प्रति पशुं वरिष्ठं करोति तस्मान्मध्यं प्रति पशुर्वरिष्ठोऽथ ये वीर्यवत्तमाः पशवस्तान्दक्षिणतऽउपदधाति दक्षिणं तदर्धं पशोर्वीर्यवत्तरं करोति तस्माद्दक्षिणोऽर्धः पशोर्वीर्यवत्तरः ॥ १९ ॥

---

स वै पुरस्तादेवाग्र उपदधाति । शिरो हि प्रथमं जायमानस्य जायते । अथ दक्षिणत उपधायोत्तरत उपदधाति । साद्धमयमात्मा जायताऽइति । अथ पश्चात् । पुच्छं ह्यन्ततो जायमानस्य जायते ॥ १८ ॥

तद् यानि वर्षिष्ठानि च्छन्दांसि—ये स्थविष्ठाः पशवः—तान्मध्यऽउपदधाति । मध्यं तत् प्रति पशुं वरिष्ठं करोति । तस्मान्मध्यं प्रति पशुर्वरिष्ठः । अथ ये वीर्यवत्तमाः पशवः—तान्दक्षिणत उपदधाति । दक्षिणं तदर्धं पशोर्वीर्यवत्तरं करोति । तस्माद्दक्षिणोऽर्धः पशोर्वीर्यवत्तरः ॥ १९ ॥

---

योऽस्ति ' एषः ' इदानीमभिहितः ' पशुः ' एव पशुरूपेष्टकाभिश्चितत्वात् ' सोऽग्निरत्रैव ' द्वितीयचितावेव सर्वोऽपि संस्कृतः चयनाख्येन संस्कारेण स्वरूपापन्नः कृत इत्यर्थः । सर्वशब्दस्यापेक्षिकत्वशङ्कां निराकरोति—कृत्स्न इति । नन्वग्नेः पक्षपुच्छाद्यङ्गानि सन्ति तानि सर्वाणि कथमुक्तपश्विष्टकाभिः संस्कृतानीत्याशंक्य विभज्य दर्शयति—तस्य याः पुरस्तादिति । ' तस्य ' अग्नेः ' पुरस्तात् ' पूर्वदेशे ' याः ' चतस्र इष्टकाः " मूर्द्धा वयः " इत्यादिमन्त्रचतुष्टयसाध्या उपदधाति ' ताः ' ' अस्य अग्नेः ' शिरःस्थानीयाः, ' अथ याः ' " बस्तो वयः " इत्यादिभिः " पष्ठवाड्वयः " इत्यादिभिश्च पञ्चभिर्मन्त्रैः ' दक्षिणतश्चोत्तरतश्च ' क्रमेणोपधेयाः पञ्च पञ्चेष्टकास्ता ' आत्मा ' मध्यदेहः । ' अथ याः ' " त्र्यविर्वयः "—इत्यादिभिः पञ्चभिर्मन्त्रैः ' पश्चात् ' उपधेयाः ' तत्पुच्छम् ' ॥ १७ ॥

अस्तु शिरआदिरूपता प्रागादिषूपधेयानां, तथापि केन क्रमेणोपधेया इति, तं क्रमं सोपपत्तिकं दर्शयति—स वै पुरस्तादेवाग्र उपदधातीत्यादिना । निगदव्याख्यातमिदम् ॥ १८ ॥

इदानीमविभागेन विहितानां पश्वात्मिकानामिष्टकानां यथोचितं मध्याद्यङ्गेषु विभज्य विनियोगमाह—तद्यानि वर्षिष्ठानि—इत्यादिना । ' वर्षिष्ठानि ' अतिशयेन वृद्धानि ' छन्दांसि ' ' यानि ' विवलादीनि दश उक्तानि ' ये ' च ' स्थविष्ठाः ' अतिशयेन स्थूलाः ' पशवः ' बस्तादयो दश ' तान् ' मध्यतो मध्यदेशे ' उपदधाति ' । मध्यत इति दक्षिणोत्तरपक्षयोरित्यर्थः । तत्रापि क्रमस्तूक्त एव " दक्षिणत उपधायोत्तरतः " इति ( पूर्वकंडिकायाम् ) । ' मध्यं तत्प्रति पशुम् ' इत्यर्थवादः स्पष्टः । तत्रापि विशेषमाह—अथ ये वीर्यवत्तमाः पशवस्तान्दक्षिणत इति । पुरुष—व्याघ्र—सिंहादिलक्षणेषु पशुष्वतिशयेन वीर्यवत्त्वं प्रसिद्धम् । दक्षिणं तदर्धमित्यादि स्पष्टम् ॥ १९ ॥

पूर्व्वार्धं च जघनार्धं चाणिष्ठौ करोति । यद्दहामूश्श्रुतस्त्रस्तेनैना अणिष्ठाऽअथ यदिह ह्रसिष्ठान्पशूनुपदधाति तेनोऽएता ऽअणिष्ठाः पूर्व्वार्धं च तज्जघनार्धं च पशोरणिष्ठौ करोति तस्मात्पूर्व्वार्धश्च जघनार्धश्च पशोरणिष्ठौ तस्मात्पूर्व्वार्धेन च जघनार्धेन च पशुरुच्च तिष्ठति सं च विशत्यथ लोकम्पृणेऽउपदधात्यस्याᳪं स्रक्त्यां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः ॥ २० ॥

इति प्रथमप्रपाठके अष्टमं ब्राह्मणम् ॥ ८–१–८ ॥ ( २. ४. ) ॥

इति द्वितीयोऽध्यायः समाप्तः ॥ ८ ॥ २ ॥

---

पूर्वार्धं च जघनार्धं चाणिष्ठौ करोति । यद्दहामूश्चतस्रः–तेनैना अणिष्ठाः । अथ यदिह ह्रसिष्ठान्पशूनुपदधाति–तेनो एता अणिष्ठाः । पूर्वार्धं च तज्जघनार्धं च पशोरणिष्ठौ करोति । तस्यात्पूर्वार्धेन च जघनार्धेन च पशुरुच्च तिष्ठति, सं च विशति । अथ लोकम्पृणेऽउपदधाति–अस्यां स्रक्त्याम् । तयोरुपरि बन्धुः । पुरीषं निवपति । तस्योपरि बन्धुः ॥ २० ॥

इत्याहवनीयचित्यायां पञ्चचितिकायां द्वितीया चितिः ।

---

अथ शिरःपुच्छयोरणुतरत्वं विदधाति–पूर्वार्द्धे चेति । ननु पूर्वार्द्ध उपधेयानां ये मन्त्रास्तत्र प्रजापतिरभिधीयते, तत्कथं तदणुतरत्वमित्याशङ्क्येष्टकासङ्ख्याणुत्वेनेत्याह–यद्दहामूश्चतस्र इति । जघनार्धस्याणिष्ठत्वं ह्रस्वपशूपधानद्वारेणेति दर्शयति–अथ यदिह ह्रसिष्ठान्पशूनिति । 'इह' जघनार्द्धे 'ह्रसिष्ठान्' अतिशयेन ह्रस्वा अल्पशरीराः, त्र्यव्यादिषु तथा दर्शनात् । "सर्वतः पशूनुपदधाति"–इत्यभिधानम् । "स एष पशुर्यदग्निः" ( श.प.८।२।४।१७ ) इत्युक्तत्वात् । उपक्रान्तः प्रजापतिरिति चयनाग्निस्तदङ्गादुद्गताः पशव इष्टका अतोऽपि पशूनामुपधानमित्यभिप्रेतम् । तस्मात्पूर्वार्द्धेन च जघनार्द्धेन च पशुरुच्च तिष्ठति सं च विशतीति । 'तस्मात्' पूर्वार्द्धभूतस्य शिरसोऽणिष्ठत्वात्, 'उत्तिष्ठति' इति ऊर्ध्वकर्मत्वात् परस्मैपदम्, संवेशापेक्षया 'च' शब्दः, तस्माज्जघनार्द्धस्याणुत्वात् 'संविशति च' उत्थानमपेक्ष्य 'च' शब्दः । अत्र कात्यायनः–"वयस्याः पञ्च पञ्चानूकान्तेषु मूर्द्धा वय इति प्रतिमन्त्रम्, चतस्रः पुरस्तात्, दक्षिणत उत्तरतः पश्चात्"–इति ( का. श्रौ. सू. १७ । १८७–१८९ ) । अथ लोकंपृणलिङ्गकमन्त्रोपधेयेष्टके 'लोकंपृणे' उपदध्यात् । स्थानमाह–अस्यां स्रक्त्यामिति । 'अस्याम्' दक्षिणस्यामित्यर्थः । 'स्रक्तिः' कोणप्रदेशः । अत्र कात्यायनः–"दक्षिणाश्रोणेरधि लोकंपृणाः पूर्ववद्"–इति ( का. श्रौ. सू. १७ । १९० ) । अनयोरपेक्षितं ब्राह्मणशेषमुत्तरत्र वक्ष्यमाणमतिदिशति– तयोरुपरि बन्धुरिति । 'उपरि' सप्तमाध्यायस्य द्वितीयब्राह्मणादौ 'तयोः' लोकंपृणयोः 'बन्धुः' अर्थवादः "असौ वा आदित्यो लोकंपृणैष हीमाँल्लोकान्पूरयत्यमुमेवैतदादित्यमुपदधाति"–( श. प. ८ । ७ । २ । १ ) इत्यादिनोक्त इत्यर्थः । पुरीषनिवापार्थवादमप्युत्तरत्र वक्ष्यमाणमत्रातिदिशति–पुरीषं निवपति–तस्योपरि बन्धुरिति । 'उपरि' काण्डान्ते "अन्तारिक्षमेव द्वितीया चितिर्वयांसि पुरीषम्"–

( श. प. ८ । ७ । ४ । १३ ) इति । यद्वा 'उपरि' स्तोमभागाभिधानप्रस्तावे "अन्नं वै पुरीषम्"—इत्यादि वक्ष्यत इत्यर्थः ॥ २० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ८–२–४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,<br>
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।<br>
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,<br>
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥<br>
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,<br>
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।<br>
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,<br>
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमे काण्डे द्वितीयोऽध्यायः समाप्तः ॥ ( ८ । २ ) ॥

# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
# प्रथमप्रपाठके च नवमं ब्राह्मणम् ।

तृतीयां चितिमुपदधाति । (त्ये) एतद्वै देवा द्वितीयां चितिं चित्वा समारोहन्युदूर्ध्वं पृथिव्याऽअर्वाचीनमन्तरिक्षात्तदेव तत्संस्कृत्य समारोहन् ॥ १ ॥

(हंस्ते) तेऽब्रुवन् । (वंश्चे) चेतयध्वमिति चितिमिच्छतेति वाव तद्-ब्रुवन्नितऽऊर्ध्वमिच्छतेति ते चेतयमानाऽअन्तरिक्षमेव बृहतीं तृतीयां चितिमपश्यंस्तेभ्यऽएष लोकोऽच्छदयत् ॥ २ ॥

(त्तु) तऽइन्द्राग्नीऽअब्रुवन् । (न्यु) युवं नऽइमां तृतीयां चितिमुपधत्त-मिति किं नौ ततो भविष्यतीति युवमेव नः श्रेष्ठौ भविष्यथऽइति तथेति तेभ्य ऽएतामिन्द्राग्नी तृतीयां चितिमुपाधत्तां तस्मादाहुरिन्द्राग्नीऽएव देवानाᳬं श्रेष्ठाविति ॥ ३ ॥

---

तृतीयां चितिमुपदधाति । एतद्वै देवा द्वितीयां चितिं चित्वा समारोहन् । यदूर्ध्वं पृथिव्याः, अर्वाचीनमन्तरिक्षात्—तदेव तत्संस्कृत्य समारोहन् ॥ १ ॥

तेऽब्रुवन्—चेतयध्वमिति, चितिमिच्छतेति वाव तदब्रुवन्—इत ऊर्ध्वमिच्छतेति । ते चेतयमाना अन्तरिक्षमेव बृहतीं तृतीयां चितिमपश्यन् । तेभ्य एष लोकोऽच्छदयत् ॥ २ ॥

तऽइन्द्राग्नीऽअब्रुवन्—युवं न इमां तृतीयां चितिमुपधत्तामिति । किं नौ ततो भविष्यतीति । युवमेव नः श्रेष्ठौ भविष्यथ इति । तथेति । तेभ्य एतामिन्द्राग्नी तृतीयां चितिमुपाधत्ताम् । तस्मादाहुः—इन्द्राग्नी एव देवानां श्रेष्ठाविति ॥ ३ ॥

---

अथ तृतीयचितिं विधाय प्रशंसति—तृतीयां चितिमुपदधात्येतद्वै देवा इत्यादि । 'एतद्वै' एतत्खलु पूर्वमासीत् । एतच्छब्दार्थमाह—'देवा द्वितीयां चितिं चित्वा समारोहन्' । तत्किमिति तदाह—यदूर्ध्वं पृथिव्या इति । पृथिव्यन्तरिक्षयोर्मध्यदेशमारोहन्नित्यर्थः । 'तत्' तदा समारोहणकाले 'तदेव' द्वितीयचितिस्वरूपं 'संस्कृत्य समारोहन्' ॥ १ ॥

लोकान्तरसमारोहणेऽपि चितिसंस्कारमेवोपायत्वेनामनन्तः 'ते' देवाः परस्परं 'चेतयध्वमित्यब्रुवन्' । चेतितव्यविषयं श्रुतिस्तटस्था ब्रूते—चितिमिच्छतेति वाव तदब्रुवन्निति । 'चेतयमानास्ते' 'अन्तरिक्षमेव बृहतीं तृतीयां चितिमपश्यन्' ।अस्या बृहतीत्वमुत्तरत्र षट्त्रिंशत्सङ्ख्याकेष्टकासंपादनेन वक्ष्यति । ( श.प. ८ । ३ । ३ । ८ ) । 'एषः' अन्तरिक्षलोक इष्टकाच्छादनाभिधः 'अच्छदयत्' आत्मानं छादित्वा आच्छन्नोऽस्पष्टोऽभूदित्यर्थः ॥ २ ॥

'ते' देवास्तदा 'इन्द्राग्नी' प्रत्येवम् 'अब्रुवन्' । 'युवम्' युवां 'नः' अस्मदर्थे 'इमां तृतीयाम् ।

स वाऽइन्द्राग्निभ्यामुपदधाति । विश्वकर्मणा सादयतीन्द्राग्नी च वै विश्वकर्मा चैतां तृतीयां चितिमपश्यंस्तस्मादिन्द्राग्निभ्यामुपदधाति विश्वकर्मणा सादयति ॥ ४ ॥

यद्वेवेन्द्राग्निभ्यामुपदधाति । विश्वकर्मणा सादयति प्रजापतिं विस्रस्तं देवता ऽआदाय व्युदक्रामंस्तस्येन्द्राग्नी च विश्वकर्मा च मध्यमादायोत्क्रम्यातिष्ठन् ॥ ५ ॥

( स ) तानब्रवीत् । ( उ ) उप मेत प्रति मऽएतद्धत्त येन मे यूयमुदक्रमिष्टेति किं नस्ततो भविष्यतीति युष्मद्देवत्यमेव मऽएतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतदिन्द्राग्नी च विश्वकर्मा च प्रत्यदधुः ॥६॥ ( शतम् ४४०० ) ॥

---

स वाऽइन्द्राग्निभ्यामुपदधाति । विश्वकर्मणा सादयति । इन्द्राग्नी च वै विश्वकर्मा चैतां तृतीयां चितिमपश्यन् । तस्मादिन्द्राग्निभ्यामुपदधाति, विश्वकर्मणा सादयति ॥ ४ ॥

यद्वेवेन्द्राग्निभ्यामुपदधाति, विश्वकर्मणा सादयति । प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामन् । तस्येन्द्राग्नी च विश्वकर्मा च मध्यमादायोत्क्रम्यातिष्ठन् ॥ ५ ॥

तानब्रवीत्—'उप मेत, प्रति मऽएतद्धत्त, येन मे यूयमुदक्रमिष्ट' इति । किं नस्ततो भविष्यतीति । युष्मद्देवत्यमेव मऽएतदात्मनो भविष्यतीति । तथेति । तदस्मिन्नेतदिन्द्राग्नी च विश्वकर्मा च प्रत्यदधुः ॥ ६ ॥

---

अन्तरिक्षरूपां 'चितिमुपधत्तमिति'। अथ तौ श्रैष्ठ्यं वृतवन्तौ, तच्च लब्ध्वा 'तृतीयां चितिम् उपाधत्ताम्'। यस्मादेवं 'तस्मात्' वेदवादिनः 'इन्द्राग्नीऽएव देवानां श्रेष्ठावित्याहुः' ॥ ३ ॥

'सः' खलु यजमानोऽपि 'इन्द्राग्निभ्याम्' तृतीयां चितिं 'उपदधाति'। उपधानमन्त्रे तथा प्रतिपादनात् । 'विश्वकर्मणा' विश्वकर्मलिङ्गकेन मन्त्रेण 'सादयति' "विश्वकर्मा त्वा सादयतु"—इति हि मन्त्रः । अस्तु देवैः प्रार्थितत्वादिन्द्राग्निभ्यामुपधानम् । विश्वकर्मणः कः प्रसङ्ग इति तत्राह—इन्द्राग्नी च वै विश्वकर्मा चैतां तृतीयां चितिमपश्यन्निति । 'तस्मात्' इत्युपसंहारः ॥ ४ ॥

उक्तमर्थं पुनरनूद्य प्रकारान्तरेण प्रशंसति—यद्वेवेन्द्राग्निभ्यामित्यादिना । पुरा किल 'विस्रस्तं प्रजापतिं देवताः' एकैकमंशम् 'आदाय व्युदक्रामन्' विविधमुद्गताः । तस्य 'मध्यम्' मध्यभागम् 'इन्द्राग्नी च विश्वकर्मा चादायोत्क्रम्यतिष्ठन्' ॥ ५ ॥

'तान्' मध्यदेशापहर्तॄन् प्रजापतिः 'अब्रवीत्'। किमिति ? उच्यते—उप मेतेति । 'मा' माम् 'उपेत' उपगच्छत उपगत्य च 'मे' मदीयम् 'एतत्' अपहृतमङ्गं 'प्रतिधत्त' सन्धानं कुरुत । एतच्छब्दार्थमाह—येनेति । सार्द्धमिति शेषः । स्पष्टमन्यत् । 'युष्मद्देवत्यमेव म एतद् आत्मनो भविष्यतीति' मम-

(स्तु) तद्यैषा मध्यमा स्वयमातृण्णा । (ण्णे) एतदस्य तदात्मन-स्तद्यदेतामत्रोपदधाति यदेवास्यैषाऽऽत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ॥ ७ ॥

(ती) इन्द्राग्नीऽअव्यथमानाम् । (मि) इष्टकां दृꣳहतं युवमिति यथैव यजुस्तथा बन्धुः पृष्ठेन द्यावापृथिवीऽअन्तरिक्षं च विबाधसऽइति पृष्ठेन ह्येषा द्यावापृथिवीऽअन्तरिक्षं च विबाधते ॥ ८ ॥

विश्वकर्मा त्वा सादयत्विति । विश्वकर्मा ह्येतां तृतीयां चितिमपश्यदन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीमित्यन्तरिक्षस्य ह्येतत्पृष्ठं व्यचस्वत्प्रथस्वदन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीरित्यात्मानं यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्येतत् ॥ ९ ॥

---

स्वयमातृण्णेष्टकोपधानम् ।

तद्यैषा मध्यमा स्वयमातृण्णा—एतदस्य तदात्मनः । तद्यदेतामत्रोपदधाति—यदेवास्यैषा ऽऽत्मनः—तदस्मिन्नेतत्प्रतिदधाति । तस्मादेतामत्रोपदधाति ॥ ७ ॥

"इन्द्राग्नीऽअव्यथमानामिष्टकां दृꣳहतं युवम्"—इति । यथैव यजुस्तथा बन्धुः । "पृष्ठेन द्यावापृथिवीऽअन्तरिक्षं च विबाधसे"—(वा० सं० १४ । ११) इति । पृष्ठेन ह्येषा द्यावापृथिवीऽअन्तरिक्षं च विबाधते ॥ ८ ॥

"विश्वकर्मा त्वा सादयतु"—इति । विश्वकर्मा ह्येतां तृतीयां चितिमपश्यत् । "अन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीम्"—इति । अन्तरिक्षस्य ह्येतत्पृष्ठं व्यचस्वत् प्रथस्वत् । "अन्तरिक्षं यच्छान्तरिक्षं दृंहान्तरिक्षं मा हिंसीः"—इति । आत्मानं यच्छ, आत्मानं दृंह, आत्मानं मा हिंसीरित्येतत् ॥ ९ ॥

---

त्मनः शरीरस्य सम्बन्ध्येतदङ्गं तृतीयचितिरूपमित्यर्थः । यूयं देवता दीपयित्र्यो यस्य तद्युष्मद्दैवत्यम् । तादृशं भविष्यतीति प्रजापतिश्चाब्रवीत् । 'तथेति' अङ्गीकृत्य 'तत्' अङ्गम् 'अस्मिन्' चयनात्मकप्रजापतिशरीरमध्यदेशे 'प्रत्यदधुः' प्रतिनिहितवन्तः ॥ ६ ॥

किं तदङ्गमिति तत्राह—तद्यैषेति[1] । 'स्वयमातृण्णा' एव मध्ये उपधेयत्वेन प्राधान्यान्मध्यमचितिरूपाऽस्ति । 'एतदस्य' प्रजापतेः 'आत्मनः' शरीरस्य 'तत्' विस्रस्तमङ्गमित्यर्थः । 'तद्यदेताम्' स्वयमातृण्णाम् 'अत्र' मध्यमदेशे । स्पष्टमन्यत् । तस्मादेतामिति । प्रतिपादितार्थनिगमनम् ॥ ७ ॥

स्वयमातृण्णाया उपधानमन्त्रस्य पूर्वभागः स्पष्टार्थ इत्याह—इन्द्राग्नी अव्यथमानामित्यादिना । 'यथैव यजुः' इत्यस्यार्थ उक्तचरो बहुशः । हे 'इन्द्राग्नी' 'युवम्' युवाम् 'अव्यथमानाम्' कुशलाम् युवाभ्यामुपधेयत्वाद्व्यथारहितां सुखितामित्यर्थः । तादृशीम् 'इष्टकां' 'दृंहतम्' दृढीकुरुतम् । हे स्वयमातृण्णेष्टके ! त्वं 'पृष्ठेन' स्वपृष्ठभागेन 'द्यावापृथिवी अन्तरिक्षं च' इति लोकत्रयं 'विबाधसे' पीडयसीत्ययमर्थः सुप्रसिद्ध

---

१—तृतीयायां स्वयमातृण्णामिंद्राग्नी इति मध्ये । का. श्रौ. सू. १७ । १९१ ।

( ह्वि ) व्विश्वस्मै प्राणायापानाय व्यानायोदानायेति प्राणो वै स्वयमातृण्णा सर्व्वस्मा ऽ उ वा ऽ एतस्मै प्राणः प्रतिष्ठायै चरित्रायेतीमे वै लोकाः स्वयमातृण्णा ऽ इमु ऽ उ लोकाः प्रतिष्ठा चरित्रं व्वायुष्ट्वा ऽभिपात्विति व्वायुष्ट्वा ऽभिगोपायत्वित्येतन्मह्या स्वस्त्येति महत्या स्वस्त्येत्येतच्छर्दिषा शंतमेनेति यच्छर्दिः शंतमं तेनेत्येतत्सादयित्वा सूददोहसा ऽधिवदति तस्योक्तो बन्धुरथ साम गायति तस्योपरि बन्धुः ॥ १० ॥

---

"विश्वस्मै प्राणायापानाय व्यानायोदानाय"–इति । प्राणो वै स्वयमातृण्णा । सर्वस्मा ऽउ वा ऽएतस्मै प्राणः । " प्रतिष्ठायै चरित्राय "–इति । इमे वै लोकाः स्वयमातृण्णा । इम ऽउ लोकाः प्रतिष्ठा चरित्रम् । " वायुष्ट्वा ऽभिपातु "–इति । वायुष्ट्वा ऽभिगोपायत्वित्येतत् । " मह्या स्वस्त्या "–इति । महत्या स्वस्त्येत्येतत् । " छर्दिषा शंतमेन "–( वा. सं. १४।१२ ) इति । यच्छर्दिः शंतमं–तेनेत्येतत् । सादयित्वा सूददोहसा ऽधिवदति । तस्योक्तो बन्धुः । अथ साम गायति । तस्योपरि बन्धुः ॥ १० ॥

---

इति व्याचष्टे–पृष्ठेन ह्येषेति । ' हि ' यस्माद् ' विश्वकर्मा ' सकलजगन्निर्माता देवः ' एतां तृतीयां चितिम् ' स्वयमातृण्णाख्याम् ' अपश्यत् ' अतस्तन्मन्त्रोऽपि " विश्वकर्मा त्वा सादयतु "–इति ब्रूते । कुत्र सादनम् ? ' अन्तरिक्षस्य पृष्ठे ' एतान्मध्यस्थानं यदन्तरिक्षस्य पृष्ठं, तच ' व्यचस्वत् ' व्यञ्जनवत् , ' प्रथस्वत् ' प्रथनं निम्नोन्नतत्वराहित्यं तद्वत् विस्तारवदित्यर्थः । " अन्तरिक्षं यच्छ "–इत्यादयस्त्रयो मन्त्रभागाः, तत्रत्या ये त्वन्तरिक्षशब्दाः सन्ति तैरात्मैवाभिधीयत इत्याह–आत्मानं यच्छेत्यादिना ॥ ८–९ ॥

" विश्वस्मा " इत्यादिमन्त्रभागस्य तात्पर्यमाह–प्राणो वा इति । येयं स्वयमातृण्णा सा 'प्राणो वै' चित्यात्मशरीरस्य मध्ये प्राणरूपतयोपधीयमानत्वात् । अतस्तस्या उपधानम् ' एतस्मै ' परिदृश्यमानाय ' सर्वस्मै ' जगते तदर्थं प्राणाधारस्थानीयमित्यर्थः । एतदर्थं त्वामुपदधामीत्यन्वयः । अपानादीनां तु प्राणवृत्तिविशेषत्वात् प्राधान्येन प्राणस्यैव कीर्तनम् "प्राणो वै स्वयमातृण्णा" इति । मन्त्रे " प्रतिष्ठायै चरित्राय "–इत्यनेन लोकत्रयं विवक्ष्यत इति व्याचष्टे–इमे वै लोकाः स्वयमातृण्णा इम उ लोकाः प्रतिष्ठा चरित्रमिति । प्रथममध्यमोत्तमचितिषु लोकत्रयरूपेणोपधेयत्वात्तिस्रः ' स्वयमातृण्णा इमे लोकाः ' खलु । ' इम उ ' इमे एव ' लोकाः प्रतिष्ठा चरित्रम् ' चरत्यत्र कृत्स्नं जगत् इति चरित्रम् । प्रतितिष्ठत्यत्रेति प्रतिष्ठा, इमे त्रयोऽपि लोकाः चरित्ररूपाः, प्रतिष्ठात्मकत्वमस्य भूलोकस्यैव तदर्थं त्वामुपदधामीत्यर्थः । स्पष्टं ' वायुष्ट्वा ' इत्यस्य ब्राह्मणम् । 'मह्या' इत्यस्य व्याख्यानं 'महत्या ' इति । तद् अयं मन्त्रभागत्रयस्यार्थः । हे स्वयमातृण्णे ! वायुर्महत्या प्रभूतया ' स्वस्त्या ' अविनाशेन ' शन्तमेन ' अत्यन्तसुखहेतुभूतेन ' छर्दिषा ' गृहनामैतत् (निघं. ३ । ४ । १८ ।) ' तेन ' च 'त्वा' त्वाम् ' अभिपातु ' सर्वतो गोपायत्वित्यर्थः । " तया देवतया "–इति मन्त्रेण सादयित्वा " ता अस्य सूददोहसः"–इति मन्त्रेणाधिवदति । अस्यार्थवादं गार्हपत्यचितावुक्तम् ( ७ । १ । १ । २६ ) अतिदिशति–तस्योक्तो बन्धुरिति । ' अथ ' अधिवदनानन्तरम् ' साम ' स्वयमातृण्णाङ्गभूतं गायेत्, तत्प्रतिपादकं ब्राह्मणम् ' उपरि ' अन्त्यचितौ प्रदर्श्यत इत्यर्थः ॥ १० ॥

( ३ ) अथ दिश्याऽ उपदधाति । दिशो वै दिश्या दिशऽएवैतदुपदधाति तद्याभिरदो व्वायुर्दिग्भिरनन्तर्हिताभिरुपैत्ता ऽएतास्ता ऽएवैतदुपदधाति ताऽ उऽएवामूः पुरस्ताद्दर्भस्तम्बं च लोगेष्टकाश्चोपदधात्यसौ वाऽ-आदित्यऽएताऽअमुं तदादित्यं दिक्ष्वध्यूहति दिक्षु चिनोति ता यत्तत्रैव स्युर्बहिर्धा तत्स्युर्बहिर्धो वाऽएतद्योनेरग्निकर्म यत्पुरा पुष्करपर्णात्ता यदि-हाहृत्योपदधाति तदेना योनौ पुष्करपर्णे प्रतिष्ठापयति तथो हैता ऽअब-हिर्धा भवन्ति ता ऽअनन्तर्हिताः स्वयमातृण्णाया ऽउपदधात्यन्तरिक्षं वै मध्यमा स्वयमातृण्णाऽनन्तर्हितास्तदन्तरिक्षाद्दिशो दधात्युत्तराऽउत्तरा-स्तदन्तरिक्षाद्दिशो दधाति रेतःसिचोर्व्वेलयेमे वै रेतःसिचावनयोस्त-द्दिशो दधाति तस्मादनयोर्दिशः सर्व्वतऽ उपदधाति सर्व्वतस्ताद्दिशो दधाति तस्मात्सर्व्वतो दिशः सर्व्वतः समीचीः सर्व्वतस्तत्समीचीर्दिशो दधाति तस्मात्सर्व्वतः समीच्यो दिशः ॥ ११ ॥

---

अथ पञ्चदिश्येष्टकोपधानम् ।

अथ दिश्या उपदधाति । दिशो वै दिश्याः । दिश एवैतदुपदधाति । तद्याभिरदो वायुर्दिग्भि-रनन्तर्हिताभिरुपैत्–ता एताः । ता एवैतदुपदधाति । ता उऽएवामूः पुरस्ताद्दर्भस्तम्बं च लोगेष्टका-श्चोपदधाति । असौ वाऽआदित्य एताः। अमुं तदादित्यं दिक्ष्वध्यूहति । दिक्षु चिनोति । ता यत्तत्रैव स्युः–बहिर्धा तत्स्युः । बहिर्धो वाऽएतद्योनेरग्निकर्म । यत्पुरा पुष्करपर्णात् । ता यदिहाहृत्योपदधाति । तदेना योनौ पुष्करपर्णे प्रतिष्ठापयति । तथो हैता अबहिर्धा भवन्ति । ता अनन्तर्हिताः स्वयमा-तृण्णाया उपदधाति । अन्तरिक्षं वै मध्यमा स्वयमातृण्णा । अनन्तर्हिता स्तदन्तरिक्षाद्दिशो दधाति । उत्तराः । उत्तरास्तदन्तरिक्षाद्दिशो दधाति । रेतःसिचोर्वेलया । इमे वै रेतःसिचौ । अनयोस्तद्दिशो दधाति । तस्मादनयोर्दिशः । सर्वत उपदधाति । सर्वतस्तद्दिशो दधाति। तस्मात्सर्वतो दिशः । सर्वतः समीचीः । सर्वतस्तत्समीचीर्दिशो दधाति । तस्मात्सर्वतः समीच्यो दिशः ॥ ११ ॥

---

अथ दिश्या नामेष्टका विधाय प्रशंसति–अथ दिश्या इति । दिग्लिङ्गैर्मन्त्रैरुपधेया 'दिश्याः' ताः पञ्चोप-पदध्यात् । 'दिश्या' नाम 'दिशो वै' साक्षात् दिश एव, दिक्तदुपधेययोरभेदात् । अतो दिशामेवोपधानं कृतवान्भवति । तद्याभिरिति । 'तत्' तदा 'अदः' विप्रकृष्टकाले प्रजापतिविस्रंसावसरे 'अनन्तर्हिताभिः' अतिरोहिताभिर्याभिर्दिग्भिः प्रजापत्यवयवभूताभिः सहितः 'वायुरुपैत्' उपागतः । 'ता एताः' इष्टका

---

१–अनूकेषु पञ्च दिश्या वैश्व देवीवत् राज्ञ्यसीति प्रतिमंत्रम् । वत्करणं च रेतःसिग्वेलार्थं दक्षिणामुत्तरेण पंचमीत्येवमर्थं चेत्य-स्मिन् सूत्रे का. श्रौ. सू. १७।१९२ । कर्कः ।

( शो ) यद्वेव दिश्या ऽउपदधाति । छन्दाᳬंसि वै दिशो गायत्री वै प्राची दिक्त्रिष्टुब्दक्षिणा जगती प्रतीच्यनुष्टुबुदीची पङ्क्तिरूर्ध्वा पशवो वै छन्दाᳬंस्यन्तरिक्षं मध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः ॥ १२ ॥

( वो ) यद्वेव दिश्या ऽउपदधाति । छन्दाᳬंसि वै दिशः पशवो वै छन्दाᳬंस्यन्नं पशवो मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति ताऽअनन्तर्हिताः स्वयमातृण्णायाऽउपदधाति प्राणो वै स्वयमातृण्णाऽनन्तर्हितं

---

यद्वेव दिश्या उपदधाति । छन्दांसि वै दिशः । गायत्री वै प्राची दिक् । त्रिष्टुब्दक्षिणा । जगती प्रतीची । अनुष्टुबुदीची । पङ्क्तिरूर्ध्वा । पशवो वै छन्दांसि । अन्तरिक्षं मध्यमा चितिः । अन्तरिक्षे तत्पशून् दधाति । तस्मादन्तरिक्षायतनाः पशवः ॥ १२ ॥

यद्वेव दिश्या उपदधाति । छन्दांसि वै दिशः । पशवो वै छन्दांसि । अन्नं पशवः । मध्यं मध्यमा चितिः । मध्यतस्तदन्नं दधाति । ता अनन्तर्हिताः स्वयमातृण्णायाऽउपदधाति । प्राणो वै स्वय-

---

इत्यर्थः । 'ता एव' दिश उपस्थापितवान् भवति । एतासां दिश्यानां प्रथमचितावेवोपहितत्वान्मध्यमचितौ किमर्थं तदुपधानमित्याशङ्क्यात्राप्युपधेयत्वं सोपपत्तिकमाह—ता उ एवामूरित्यादिना । ' ता उ एव ' ता अपि प्रजापतेर्दिग्रूपावयवस्था एव या ' अमूः ' ' दर्भस्तम्बं च लोगेष्टकाश्च पुरस्तात् ' ताभ्यः पूर्वं प्रथमचितौ 'उपदधाति ' । ' एताः' दिश्याः ' असौ ' उपरि दृश्यमानः 'आदित्यः ' रुक्मरूपेणोपहितोऽतः 'अमुम् आदित्यम् ' 'दिक्षु ' ' अध्यूहति' उपरि स्थापितवान्भवति । अतस्तत्रावश्यमेता उपधेया इत्यर्थः । 'ताः' दिश्याः 'यत्' यदि ' तत्रैव स्युः' प्रथमचितावेव भवेयुः नात्र 'तत्' तर्हि ताः 'बहिर्धा' अत्यन्तं भूगोलापेक्षया बहिरेव भवेयुः । तत् कथमिति तदुपपादयति—बहिर्द्धो वाऽएतद्योनेरग्निकर्म यत्पुरा पुष्करपर्णादिति । पुष्करपर्णोपधानस्य चितेर्योनिस्थानीयत्वात्ततः ' पुरा ' यदग्निचयनलक्षणं कर्म क्रियते तत्सर्वं ' योनेः ' ' बहिर्द्धो ' बाह्यं खलु । यस्मादेवं तस्मात् ' ताः ' दिश्याः 'यदिह ' तृतीयायां चितौ ' आहृत्योपदधाति ' ' तदेनाः ' दिश्या योनिभूते ' पुष्करपर्णे प्रतिष्ठापयति' । ' तथा ' सति अबहिर्भूता ' भवन्ति ' । आसां स्वयमातृण्णानन्तर्हितत्व—तदुत्तरभावित्व—रेतःसिग्निकटमाक्त्व—सर्वतोभावित्व—सम्यक्त्वार्थवादाः पूर्ववत् ॥ ११ ॥

दिश्याः पुनः छन्दोलक्षणरूपेण प्रशंसति—यद्वेव दिश्या इति । कथं छन्दोरूपत्वमिति तत्राह—गायत्री वै प्राची दिगित्यादिना । प्रागादिदिशां गायत्र्यादिरूपत्वे लिङ्गमात्रं बीजम् । छन्दसां पशुरूपत्वे तु " प्रजापतेर्विस्रस्तात्पशव उदक्रामञ्छन्दांसि भूत्वा "—( श. प. ८ । २ । ३ । ९ ) इति प्राक्प्रतिपादितम् । येयं ' मध्यमा चितिः ' तदन्तरिक्षम् । अतोऽत्र दिश्यानामुपधानेन ' अन्तरिक्षे पशून्दधाति ' । ' तस्मादन्तरिक्षायतनाः पशवः ' अवकाशेनोरस्यवष्टम्भाभावात् ॥ १२ ॥

अन्नरूपेणापि प्रशंसति—यद्वेवेति । ' अन्नं पशवः ' उपभोग्यत्वात् । शिष्टं स्पष्टम् । दिश्यानां

तत्प्राणादन्नं दधात्युत्तरा ऽउत्तरं तत्प्राणादन्नं दधाति रेतःसिचोर्व्वेलया पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मध्यत ऽएवास्मिन्नेतदन्नं दधाति सर्व्वतऽउपदधाति सर्व्वतऽएवास्मिन्नेतदन्नं दधाति ॥ १३ ॥

राज्यसि प्राची दिक् । ( ग्वि ) व्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिगिति नामान्यासामेतानि नामग्राहमेवैना ऽएतदुपदधाति ता नानोपदधाति नाना सादयति नाना सूददोहसाऽधिवदति नाना हि दिशः ॥ १४ ॥

इति प्रथमप्रपाठके नवमं ब्राह्मणम् ॥ ८-१-९ ॥ ( ३. १. ) ॥

इति प्रथमः प्रपाठकः समाप्तः ॥ कण्डिकासंख्या ॥ ११९ ॥

---

मातृण्णा । अनन्तर्हितं तत्प्राणादन्नं दधाति । उत्तराः । उत्तरं तत्प्राणादन्नं दधाति । रेतःसिचोर्वेलया । पृष्ट्यो वै रेतःसिचौ । मध्यमु पृष्ट्यः । मध्यत एवास्मिन्नेतदन्नं दधाति । सर्वत उपदधाति । सर्वत एवास्मिन्नेतदन्नं दधाति ॥ १३ ॥

" राज्यसि प्राची दिक्, विराडसि दक्षिणा दिक्, सम्राडसि प्रतीची दिक्, स्वराडस्युदीची दिक्, अधिपत्न्यसि बृहती दिक्"–(वा. सं. १४ । १३) इति । नामान्यासामेतानि । नामग्राहमेवैना एतदुपदधाति । ता नानोपदधाति । नाना सादयति । नाना सूददोहसाऽधिवदति । नाना हि दिशः ॥ १४ ॥

---

स्वयमातृण्णाया अनन्तर्हितत्वाद्यर्थवादः । पूर्वं स्वयमातृण्णाया अन्तरिक्षरूपत्वेन संस्तुतिः । इह तु प्राणरूपत्वेन । दिश्यानां च छन्दःपशुद्वाराऽन्नरूपत्वेन स्तुतिरिति विशेषः ॥ १३ ॥

" राज्यसि " इत्यादयः पञ्च दिश्योपधानमन्त्रास्तेषां च तात्पर्यतो व्याख्यानं ' नामान्यासामेतानि ' इत्यादिकम् । ' राज्ञी, ' ' विराड् '–इत्यादीनि प्रागादिदिशां यानि ' नामानि ' क्रमेण ' एतद् ' एतेन " राज्यसि "–इत्यादिमन्त्रेण तत्तन्नाम गृहीत्वा गृहीत्वैव ' एनाः ' इष्टका उपहितवान्भवति । हे प्राच्यामुपधेयेष्टके ! त्वं ' राज्ञी ' एतन्नामिका भवसि । का सा ? प्राची दिक् । एवं सर्वेऽपि व्याख्येयाः । दिश्यानां पृथक् पृथक् मन्त्रभेदेन उपधानम्; पृथक् सादनम्; पृथक् अधिवदनं च, प्रागादीनां नानात्वात्पार्थक्यं युक्तमित्यर्थः ॥ १४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ८-३-१ ) ॥

समाप्तश्च प्रथमः प्रपाठकः ॥ ८ । १ ॥

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# तृतीयाऽध्याये च द्वितीयं ब्राह्मणम् ।

अथ विश्वज्योतिषमुपदधाति । वायुर्वै मध्यमा विश्वज्योतिर्वायुर्ह्येवान्तरिक्षलोके विश्वं ज्योतिर्वायुमेवैतदुपदधाति तामनन्तर्हितां दिश्याभ्यऽउपदधाति दिक्षु तद्वायुं दधाति तस्मात्सर्वासु दिक्षु वायुः ॥ १ ॥

(१) यद्वेव विश्वज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजननमेवैतदुपदधाति तामनन्तर्हितां दिश्याभ्यऽउपदधाति दिक्षु तत्प्रजा दधाति तस्मात्सर्वासु दिक्षु प्रजाः ॥ २ ॥

(१) विश्वकर्मा त्वा सादयत्विति । विश्वकर्मा ह्येतां तृतीयां चितिमपश्यदन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमित्यन्तरिक्षस्य ह्ययं पृष्ठे ज्योतिष्मान्वायुः ॥ ३ ॥

---

### अथ विश्वज्योतिरिष्टकोपधानम् ।

अथ विश्वज्योतिषमुपदधाति । वायुर्वै मध्यमा विश्वज्योतिः । वायुर्ह्येवान्तरिक्षलोके विश्वं ज्योतिः । वायुमेवैतदुपदधाति । तामनन्तर्हितां दिश्याभ्य उपदधाति । दिक्षु तद्वायुं दधाति । तस्मात्सर्वासु दिक्षु वायुः ॥ १ ॥

यद्वेव विश्वज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः । प्रजा ह्येव विश्वं ज्योतिः । प्रजननमेवैतदुपदधाति । तामनन्तर्हितां दिश्याभ्य उपदधाति । दिक्षु तत्प्रजा दधाति । तस्मात्सर्वासु दिक्षु प्रजाः ॥ २ ॥

**" विश्वकर्मा त्वा सादयतु "**–इति । विश्वकर्मा ह्येतां तृतीयां चितिमपश्यत् । **" अन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् "**–इति । अन्तरिक्षस्य ह्ययं पृष्ठे ज्योतिष्मान्वायुः ॥ ३ ॥

---

विश्वज्योतिराख्यामिष्टकां विधाय स्तौति–अथ विश्वज्योतिषमिति । मध्यमाया विश्वज्योतिरिष्टकाया वायुत्वोक्तौ मध्यमचितेस्तद्रूत्वात्तद्देवताकान्तरिक्षलोकस्थानीयत्वं बीजम् । अस्त्वेवं तथापि वायोस्तच्छब्दवाच्यत्वं कथमिति तत्राह–वायुर्ह्येवान्तरिक्षलोके विश्वं ज्योतिरिति । उपचारप्रयोजनमाह–वायुमेवैतदुपदधातीति ।

पूर्वेष्टकाभ्योऽस्या अव्यवहितत्वं विधाय स्तौति–तामनन्तर्हितां दिश्याभ्य इति ॥ १ ॥

इत्थं वायुरूपेण प्रशस्याथ प्रजारूपेणापि प्रशंसति–यद्वेव विश्वज्योतिषमित्यादिना । पूर्ववद् व्याख्येयम् २॥

स्वयमातृण्णावद्विश्वज्योतिषोऽपि विश्वकर्मणा सादनम् । तद्व्याख्यानं च पूर्ववत् । अन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमिति । ' अयं वायुः ' एवान्तरिक्षपृष्ठवर्ती ' ज्योतिष्मान्, ' तत्स्थानत्वात् । अतस्तदभेदेनेष्टकाऽपि तद्रूपिणीत्यर्थः ॥ ३ ॥

---

१–विश्वकर्म्मेति विश्वज्योतिषमुपरि पूर्व्वस्याः । का० श्रौ० सू० १७ । १९३ ।

( व्वि ) व्विश्वस्मै प्राणायापानाय व्यानायेति प्राणो वै व्विश्वज्ज्योतिः सर्व्वस्माऽउ वाऽएतस्मै प्राणो व्विश्वं ज्योतिर्यच्छेति सर्व्वं ज्योतिर्यच्छेत्येतद्वायुष्टेऽधिपतिरिति व्वायुमेवास्या ऽअधिपतिं करोति सादयित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ ४ ॥

( उ ) अथऽर्त्तव्याऽउपदधाति । ( त्स्र ) ऋतवऽएते यद्दतव्याऽऋतूनेवै-तदुपदधाति नभश्च नभस्यश्च व्वार्षिकावृतूऽइति नामनीऽएनयोरेते नामभ्यामेवैनेऽएतदुपदधाति द्वेऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सा-दयत्येकं तदृतुं करोत्यवकासूपदधात्यवकाभिः प्रच्छादयत्यापो वाऽ-अवकाऽअपस्तदेतस्मिन्नृतौ दधाति तस्मादेतस्मिन्नृतौ भूयिष्ठं व्वर्षति॥९॥

---

“ विश्वस्मै प्राणायापानाय व्यानाय ”–इति । प्राणो वै विश्वज्योतिः । सर्वस्माऽउ वाऽ-एतस्मै प्राणः । “ विश्वं ज्योतिर्यच्छ ”–इति । सर्वं ज्योतिर्यच्छेत्येतद् । “ वायुष्टेऽधि-पतिः ”–( वा. सं. १४ । १४ ) इति । वायुमेवास्या अधिपतिं करोति । सादयित्वा सूददोहसा-ऽधिवदति । तस्योक्तो बन्धुः ॥ ४ ॥

## अथ चतुर्ऋतव्येष्टकोपधानम् ।

अथऽर्तव्या उपदधाति । ऋतव एते यदृतव्याः । ऋतूनेवैतदुपदधाति । “ नभश्च नभस्यश्च वार्षिकावृतू ”–( वा. सं. १४ । १५ ) इति । नामनी एनयोरेते । नामभ्यामेवैने एतदुपदधाति । द्वेऽइष्टके भवतः । द्वौ हि मासावृतुः । सकृत्सादयति । एकं तदृतुं करोति । अवकासूपदधाति । अवकाभिः प्रच्छादयति । आपो वाऽअवकाः । अपस्तदेतस्मिन्नृतौ दधाति । तस्मादेतस्मिन्नृतौ भूयिष्ठं वर्षति ॥ ९ ॥

---

विश्वस्मै प्राणायेत्यादि । स्वयमातृण्णावत् । तत्र ‘ विश्वं ज्योतिर्यच्छ ’ इत्यस्य तात्पर्यम्–सर्वं ज्योति-र्यच्छेत्येतदिति । वायुष्टे इत्यादि सूददोहसोऽर्थवादातिदेशान्तं स्पष्टम् ॥ ४ ॥

“अथर्तव्या उपदधाति” इत्यादिः “एकं तदृतुं करोति” इत्यन्तः द्वितीयचितिवत् द्रष्टव्यः । “नभश्च नभस्यश्च वार्षिकावृतू ”–इति तयोरुपधानमन्त्रः । ‘ नभः ’ नाम श्रावणो मासः, ‘ नभस्यः ’ भाद्रः; तावुभौ वर्षाख्यावृतू । अवयवापेक्षया द्विवचनम् । ताश्चतस्र ऋतव्या अवकासूपधायावकाभिरेव प्रच्छादयेत् । अवका नाम ह्रदादिजलेषु स्तबकाकारेण प्ररोहन्तो हरितवर्णाः पदार्थाः शैवलानीत्यर्थः । तासां चाप्सु एव जायमानत्वादाश्रयाश्रयिणोरभेदे-नाबात्मता । ऋतव्यानामृतुत्वात् तेनावकास्थापनेन तस्मिन्नेवर्त्तावप एव स्थापितवान् भवति ॥ ९ ॥

---

१–ऋतव्ये नभश्च नभस्यश्चेति । अवकाः कूर्मवत् । का. श्रौ. सू. १७ । १९५ ।

( त्य ) अथोत्तरे । ( र८ ) इषुश्चोर्जुश्च शारदावृतूऽइति नामनी ऽएनयोरेते नामभ्यामेवैने ऽएतदुपदधाति द्वेऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोत्युवकासूपदधात्यापो वाऽअवका ऽअपस्तदेतस्यऽर्तोः पुरस्ताद्दधाति तस्मादेतस्यऽर्तोः पुरस्ताद्वर्षति नोपरिष्टात्प्रच्छादयति तस्मान्न तथेवोपरिष्टाद्वर्षति ॥ ६ ॥

तद्यदेता ऽअत्रोपदधाति । संव्वत्सर ऽएषोऽग्निरिमऽ उ लोकाः संव्वत्सरस्तस्यान्तरिक्षमेव मध्यमा चितिरन्तरिक्षमस्य व्वर्षाशरदावृतू तद्यदेता ऽअत्रोपदधाति यदेवास्यैता ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेताऽअत्रोपदधाति ॥ ७ ॥

यद्वेवैताऽ अत्रोपदधाति । प्रजापतिरेषोऽग्निः संव्वत्सर ऽउ प्रजापतिस्तस्य मध्यमेव मध्यमा चितिर्मध्यमस्य व्वर्षाशरदावृतू तद्यदेताऽअत्रोपदधाति यदेवास्यैताऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेताऽअत्रोपदधाति ॥ ८ ॥

---

अथोत्तरे—" इषश्चोर्जश्च शारदावृतू "—( वा. सं. १४ । १६ ) इति । नामनीऽएनयोरेते । नामभ्यामेवैनेऽएतदुपदधाति । द्वेऽइष्टके भवतः । द्वौ हि मासावृतुः । सकृत्सादयति । एकं तदृतुं करोति । अवकासूपदधाति । आपो वाऽअवकाः । अपस्तदेतस्यऽर्तोः पुरस्ताद्दधाति । तस्मादेतस्यऽर्तोः पुरस्ताद्वर्षति । नोपरिष्टात्प्रच्छादयति । तस्मान्न तथेवोपरिष्टाद्वर्षति ॥ ६ ॥

तद्यदेता अत्रोपदधाति । संवत्सर एषोऽग्निः । इम उ लोकाः संवत्सरः । तस्यान्तरिक्षमेव मध्यमा चितिः । अन्तरिक्षमस्य वर्षाशरदावृतू । तद्यदेता अत्रोपदधाति—यदेवास्यैता आत्मनः—तदस्मिन्नेतत्प्रतिदधाति । तस्मादेता अत्रोपदधाति ॥ ७ ॥

यद्वेवैता अत्रोपदधाति । प्रजापतिरेषोऽग्निः । संवत्सर उ प्रजापतिः । तस्य मध्यमेव मध्यमा चितिः । मध्यमस्य वर्षाशरदावृतू । तद्यदेता अत्रोपदधाति । यदेवास्यैता आत्मनः—तदस्मिन्नेतत्प्रतिदधाति । तस्मादेता अत्रोपदधाति ॥ ८ ॥

---

' अथोत्तरे '—ऋतव्ये इष्टके अभिधीयेते इति शेषः । " इषश्चोर्जश्च शारदावृतू "—इत्युत्तरयोर्ऋतव्ययोरुपधानमन्त्रः । ' इषः ' आश्वयुजः ' ऊर्जः ' कार्त्तिकः । ' नामनी ' इत्यादि गतम् । अत्रोत्तरयोर्ऋतव्ययोरवकासूपधानमेव, नोपर्यवकाभिरछादनं कर्त्तव्यमिति, अमुमर्थमिदानींतनवर्षणप्रकारदर्शनमुखेनोपपादयति—अवकासूपदधातीति । अधस्तादवकासम्बन्धाद्यथा ऋत्वादौ वृष्टिर्जायते, तथैवोपरिष्टात्तु तदृत्वन्ते वृष्टिर्नास्ति अवकासम्बन्धाभावात् । अत एतस्य तादृग्विधत्वं सिद्धमित्यर्थः ॥ ६ ॥

तद्यदेता अत्रोपदधाति संवत्सर एषोऽग्निरिति यद्वेवैता अत्रोपदधाति प्रजापतिरेषोऽग्निरिति—

---

१–इषश्चोर्जश्चेत्यपरे । का. श्रौ. सू. । १७ । १९६ ।

ता वुाऽएताः। ( श्चु ) चुतस्र ऽऋतुव्या मध्यमुायां चुिताऽउुपदधाति द्वे द्वेऽइुतरासु चुितिषु चुतुष्पादा वै पशुवोऽन्तुरिक्षं मध्यमा चुितिरन्तुरिक्षे तुत्पशूुन्दधाति तुस्मादन्तुरिक्षायतनाः पशुवः ॥ ९ ॥

( वो ) युद्वेव चुतस्रः। ( श्चु ) चुतुष्पादा वै पशुवोऽन्नं पशुवो मुध्यं मध्यमा चुितिर्मध्यतस्तदुन्नं दधाति ॥ १० ॥

युद्वेव चुतस्रः। ( श्चु ) चुतुरक्षरं वुाऽअन्तुरिक्षुं द्व्यक्षराऽइुतराश्चितयस्तद्यावदन्तुरिक्षं तुावच्चुत्क्रृत्वोपदधाति ॥ ११ ॥

युद्वेव चुतस्रः। पशुुरेष युदग्निर्मुध्यं तत्प्रति पशुं वुरिष्ठं क्करोति तुस्मान्मुध्यं प्रुति पशुर्व्वुरिष्ठः ॥ १२ ॥

---

ता वाऽएताश्चतस्र ऋतव्या मध्यमायां चिताऽउपदधाति, द्वे द्वे इतरासु चितिषु। चतुष्पादा वै पशवः। अन्तरिक्षं मध्यमा चितिः। अन्तरिक्षे तत्पशून्दधाति। तस्मादन्तरिक्षायतनाः पशवः ॥९॥

यद्वेव चतस्रः। चतुष्पादा वै पशवः। अन्नं पशवः, मध्यं मध्यमा चितिः। मध्यतस्तदन्नं दधाति ॥ १० ॥

यद्वेव चतस्रः। चतुरक्षरं वाऽअन्तरिक्षम्। द्व्यक्षरा इतराश्चितयः। तद्यावदन्तरिक्षं–तावत्तत्कृत्वोपदधाति ॥ ११ ॥

यद्वेव चतस्रः। पशुरेष यदग्निः। मध्यं तत्प्रति पशुं वरिष्ठं करोति। तस्मान्मध्यं प्रति पशुर्वरिष्ठः ॥ १२ ॥

---

चार्थवादद्वयं द्वितीयचितितृतीयचितिवत् ऋत्वर्थवादव्याख्यानैर्व्याख्यातप्रायम्, अतो न पुनर्व्याख्यानापेक्षाऽस्ति। तत्र क्षित्यन्तरिक्षयोर्मध्यदेशो द्वितीया चितिः। 'अत्र त्वन्तरिक्षमेव' तृतीया चितिः, तत्र ग्रीष्मर्तुरत्र 'वर्षा-शरदौ' इति विशेषः ॥ ७ ॥ ८ ॥

मध्यमचित्यां प्रथमोत्तमचित्योर्वैलक्षण्यमृतव्यानां चतुष्ट्वं तत्प्रशंसति–ता वा एताश्चतस्र ऋतव्या मध्यमायामित्यादिना। नात्र तिरोहितोऽर्थोऽस्ति ॥ ९ ॥

चतुष्ट्वमुक्त्वा पशुत्वमुपजीवनन्नात्मनाऽपि प्रशंसति–यद्वेव चतस्र इति। इष्टकासु संख्याचतुष्ट्वमस्ति, 'पशवः' अपि 'चतुष्पादाः' यतस्ताः पशवः अतः 'अन्नम्' हि पयोद्वारा गवादयः, स्वरूपेण चाजादयः, 'मध्यमा-चितिः' च 'मध्यम्' उदरस्थानीया, अतश्चतसृणामृतव्यानामुपधानेनोदरेऽन्नमेव स्थापितं भवतीत्यर्थः ॥ १० ॥

उक्तमेव चतुष्ट्वं शब्दगतचतुःसंख्यायुक्तान्तरिक्षाख्यमध्यमचितेर्योग्यत्वाभिधानद्वारेण स्तौति–यद्वेव चतस्र इति। चतुरक्षरं वा इति। अन्तरिक्षशब्दगताक्षरपरिगणनायां चत्वार्यक्षराणि, अतोऽन्तरिक्षेतरचितीनां द्व्यक्षरत्वाद्यावदक्षरप्रमाणं तावत्कृत्वा चतुःसंख्याका इष्टका 'उपदधाति' पूर्णप्रमाणमुपहितवान्भवति ॥ ११ ॥

प्रकारान्तरेणापि प्रशंसति–यद्वेव चतस्रः पशुरेष यदग्निरिति। चित्याग्नेः पशुत्वं छन्दस्यानां प्रकरणे–

( स्ता ) ता वाऽएताः । ( श्च ) चतस्र ऽऋतव्यास्तासां विश्वज्योतिः पञ्चमी पञ्च दिश्यास्तद्दश दशाक्षरा विराडन्नं विराण्मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति ताऽअनन्तर्हिताः स्वयमातृण्णायाऽ उपदधाति प्राणो वै स्वयमातृण्णाऽनन्तर्हितं तत्प्राणादन्नं दधात्युत्तराऽ उत्तरं तत्प्राणादन्नं दधाति ॥ १३ ॥

( त्यु ) अथ प्राणभृतऽ उपदधाति । प्राणा वै प्राणभृतः प्राणानेवैतदुपदधाति ता दश भवन्ति दश वै प्राणाः पूर्वार्धऽउपदधाति पुरस्ताद्धीमे प्राणाऽआयुर्मे पाहि ज्योतिर्मे यच्छेति प्राणो वै ज्योतिः प्राणं मे यच्छेत्येवैतदाह ताऽअनन्तर्हिताऽऋतव्याभ्यऽउपदधाति प्राणो वै वायुर्ऋतुषु तद्वायुं प्रतिष्ठापयति ॥ १४ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ८–२–१ ॥ ( ३. २. ) ॥

---

ता वाऽएताश्चतस्र ऋतव्याः । तासां विश्वज्योतिः पञ्चमी । पञ्च दिश्याः । तद्दश । दशाक्षरा विराट् । अन्नं विराट् । मध्यं मध्यमा चितिः । मध्यतस्तदन्नं दधाति । ता अनन्तर्हिताः स्वयमातृण्णाया उपदधाति । प्राणो वै स्वयमातृण्णा । अनन्तर्हितं तत्प्राणादन्नं दधाति । उत्तराः । उत्तरं तत्प्राणादन्नं दधाति ॥ १३ ॥

अथ दशप्राणभृदिष्टकोपधानम् ।

अथ प्राणभृत उपदधाति । प्राणा वै प्राणभृतः । प्राणानेवैतद्युपदधाति । ता दश भवन्ति । दश वै प्राणाः । पूर्वार्धे उपदधाति । पुरस्ताद्धीमे प्राणाः । "आयुर्मे पाहि ज्योतिर्मे यच्छ"–( वा० सं० १४ । १७ ) इति । प्राणो वै ज्योतिः । प्राणं मे यच्छेत्येवैतदाह । ता अनन्तर्हिता ऋतव्याभ्य उपदधाति । प्राणो वै वायुः, ऋतुषु तद्वायुं प्रतिष्ठापयति ॥ १४ ॥

---

"स एष पशुर्यदग्निः"–इत्यादिना दर्शितम् । मध्यं तत् प्रति पशुं वरिष्ठं करोतीति । 'तस्मात्' तेन 'पशुं प्रति' 'मध्यं' मध्यदेशमिति यावत् । स्पष्टमन्यत् ॥ १२ ॥

अथैताश्चतस्रः प्रागुक्ताभिः सह समुच्चित्य विराट्त्वसम्पादनाय स्तौति–ता वा इत्यादिना । 'ताः' 'एताश्चतस्र ऋतव्याः' एका 'विश्वज्योतिः' 'पञ्च दिश्याः' इति 'दश' । विराडपि 'दशाक्षरा' अत आसां विराट्सम्पत्तिर्भवति । सा च 'विराडन्नम्' गोरूपत्वात् । अतो दशानामुपधानेनान्नमेव 'मध्यतः' उदरे स्थापितवान् भवति । ता अनन्तर्हिताः स्वयमातृण्णाया इति । 'ताः' विराट्त्वेन स्तुता दशापीष्टका इत्यर्थः । उत्तरा इति । ता एव दश 'स्वयमातृण्णायाः' 'उत्तराः' उपरिवर्तिनीरित्यर्थः ॥ १३ ॥

अथ प्राणभृत उपदधातीत्यादि । प्राणलिङ्गकमन्त्रोपधेयाः 'प्राणभृतः' 'ता दश' एव । दश वै प्राणा इति । सप्त शीर्षण्याः, द्वाववाञ्चौ, नाभिर्दशमीति प्राणानां दशसंख्याकत्वात् । एतां चितिं 'पूर्वार्धे' उपद-

अथ च्छन्दस्याऽउपदधाति । पशवो वै छन्दाᳫँस्यन्तरिक्षं मध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः ॥ १ ॥

(वो) यद्वेव च्छन्दस्याऽउपदधाति । पशवो वै छन्दाᳫँस्यन्नं पशवो मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति ॥ २ ॥

ता द्वादश द्वादशोपदधाति । द्वादशाक्षरा वै जगती पशवो वै जगत्यन्तरिक्षं मध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः ॥ ३ ॥

---

अथ च्छन्दस्या उपदधाति । पशवो वै छन्दांसि । अन्तरिक्षं मध्यमा चितिः । अन्तरिक्षे तत्पशून् दधाति । तस्मादन्तरिक्षायतनाः पशवः ॥ १ ॥

यद्वेव च्छन्दस्या उपदधाति । पशवो वै छन्दांसि । अन्नं पशवः । मध्यं मध्यमा चितिः । मध्यतस्तदन्नं दधाति ॥ २ ॥

ता द्वादश द्वादशोपदधाति । द्वादशाक्षरा वै जगती । पशवो वै जगती । अन्तरिक्षं मध्यमा चितिः । अन्तरिक्षे तत्पशून्दधाति । तस्मादन्तरिक्षायतनाः पशवः ॥ ३ ॥

---

ध्यात् । तत्रोपपत्तिः—पुरस्ताद्वीमे प्राणा इति । 'पुरस्तात्' शरीरस्य पुरोभागे 'इमे' शीर्षण्यादयः 'प्राणाः' वर्त्तन्त इति शेषः । "पूर्वार्द्धे प्राणभृतो दशायुर्म इति प्रतिमन्त्रम्" इति हि सूत्रम् ( का. श्रौ. सू. १७ । १९७ ) । प्राणानां प्रतीकमुपादत्ते—आयुर्मे पाहीति । स्पष्टार्थत्वादकार्त्स्न्येनाभिधाय प्रत्याहारन्यायेनान्त्यं निर्दिशति—ज्योतिर्मे यच्छेति । तदर्थवादः—प्राणो वै ज्योतिरिति स्पष्टः । ता अनन्तर्हिता इत्यादि—निगदव्याख्यातम् ॥ १४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
अष्टमकाण्डे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ८–३–२ ) ॥

अथ च्छन्दस्या उपदधातीत्यादि । छन्दोलिङ्गकमन्त्रोपधेयाः 'छन्दस्याः' छन्दस्यानां पशुरूपत्वं द्वितीयचितिस्थच्छन्दस्यार्थवादे दर्शितम् ( श. प. ८ । २ । ३ । ८ ) । पशवश्च अन्नरूपाः, मध्यमा चितिर्थाऽस्ति सा प्रजापतेर्मध्यम्; उदरस्थानीयाऽतस्तेन मध्यदेश एवान्नं दधाति । ताश्छन्दस्याः पूर्वार्द्धे प्राणभृतामुपहितत्वाद्दक्षिणादिदिक्षु 'द्वादश—द्वादश' उपदध्यात् । 'जगती' अपि 'द्वादशाऽक्षरा' सा च 'जगती पशवो वै,' सोमाहरणप्रस्तावे पश्वात्मनाऽऽहरणसम्बन्धात्पशुत्वम् । "अन्तरिक्षमेव बृहतीं तृतीयां चितिमपश्यन्"—इत्युक्तत्वान्मध्यमचितेरन्तरिक्षत्वम् ( श. प. ८ । ३ । १ । २ ) । अतः मध्यमचितौ द्वादशसङ्ख्याकेष्टकोपधानात् 'अन्तरिक्षे पशून्दधाति' ॥ १–३ ॥

( वो ) युद्धेव द्वादश-द्वादश । द्वादशाक्षरा वै जगती पशवो वै जगत्युन्नं पशवो मध्यं मध्यमा चितिर्मध्यतस्तदुन्नं दधाति ताऽअुनन्तर्हिताः प्राणभृद्भ्यऽउपदधात्युनन्तर्हितं तुत्प्राणेभ्योऽन्नं दधात्युत्तराऽउत्तरं तुत्प्राणेभ्योऽन्नं दधाति ॥ ४ ॥

मा च्छन्दऽइति । (त्य) अयं वै लोको माऽयꣳ हि लोको मितऽइव प्रमा च्छन्दऽइत्यन्तरिक्षलोको वै प्रमाऽन्तरिक्षलोको ह्यस्माल्लोकात्प्रमितऽइव प्रतिमा च्छन्दऽइत्यसौ वै लोकः प्रतिमैष ह्यन्तरिक्षलोके प्रतिमितऽइवास्त्रीवियश्छन्दऽइत्युन्नमस्त्रीवियस्तद्युदेषु लोकेष्वन्नं तुदस्त्रीवयोऽथो युदेभ्यो लोकेभ्योऽन्नꣳ स्रवति तुदस्त्रीवयोऽथातो निरुक्तान्येव च्छन्दाꣳस्युपदधाति ॥ ५ ॥

---

यद्वेव द्वादश द्वादश । द्वादशाक्षरा वै जगती । पशवो वै जगती । अन्नं पशवः । मध्यं मध्यमा चितिः । मध्यतस्तदन्नं दधाति । ता अनन्तर्हिताः प्राणभृद्भ्य उपदधाति । अनन्तर्हितं तत्प्राणेभ्योऽन्नं दधाति । उत्तराः । उत्तरं तत्प्राणेभ्योऽन्नं दधाति ॥ ४ ॥

( १ ) " मा च्छन्दः "–इति । अयं वै लोको मा । अयं हि लोको मित इव । (२) " प्रमा च्छन्दः "–इति । अन्तरिक्षलोको वै प्रमा । अन्तरिक्षलोको ह्यस्माल्लोकात्प्रमित इव ( ३ ) " प्रतिमा च्छन्दः "–इति । असौ वै लोकः प्रतिमा । एष ह्यन्तरिक्षलोके प्रतिमित इव । ( ४ ) " अस्त्रीवयश्छन्दः "–इति । अन्नमस्त्रीवयः । तद्यदेषु लोकेष्वन्नम्–तदस्त्रीवयः । अथो यदेभ्यो लोकेभ्योऽन्नं स्रवति–तदस्त्रीवयः । अथातो निरुक्तान्येव च्छन्दांस्युपदधाति ॥ ५ ॥

---

उक्तामेवेष्टकासङ्ख्यां पुनर्जगत्यादिद्वारेणान्नात्मना प्रशंसति–यद्वेव द्वादश–द्वादश–द्वादशाक्षरा वा इत्यादिना । पूर्वेष्टकाभ्योऽव्यवधानं विधाय स्तौति–ता अनन्तर्हिताः प्राणभृद्भ्य इति । ' उत्तराः ' ऊर्ध्वभाविनीश्च कुर्यात् । स्पष्टोऽर्थवादः ॥ ४ ॥

तत्र दक्षिणत उपधेयेष्टकानां मन्त्रान्विधाय व्याचष्टे–मा च्छन्द इत्यादिना । मा संज्ञया छन्दो ' मा च्छन्दः ' तच्च ' अयं लोको वै ' भूलोकः खलु, मीयते परिच्छिद्यत इति ' मा ' इति व्युत्पत्तेः । एतल्लोकसाम्यमुपपादयति–अयं हि लोको मित इवेति । सर्वतः परिच्छिन्न एव, पञ्चाशत्कोटियोजनविस्तारा पृथिवीति ह्याचक्षते । प्रमा च्छन्द इति । द्वितीयो मन्त्रः । प्रकर्षेण मितः प्रमा तत्संज्ञकः छन्दोऽन्तरिक्षलोकः खलु । तल्लोकसाम्यमाह–अन्तरिक्षलोको ह्यस्माल्लोकात्प्रमित इवेति । भूलोकादप्यधिकतरेण मानेन मित इव वर्तते ' अन्तरिक्षलोकः ' । प्रतिमा च्छन्द इति । तृतीयः । असौ वै लोकः प्रतिमेति । ' असौ ' द्युलोकः प्रतिमाख्यं छन्दः । कुतः ? ' एषोऽन्तरिक्षलोके प्रतिमित इव ' अन्तरिक्षपरिमाणेन परिच्छिन्न इव वर्तते । अतः प्रतिरूपत्वेन मितत्वात् ' प्रतिमा ' ' असौ लोकः ' । चतुर्थमन्त्रं विधाय व्याचष्टे–अस्त्रीवयश्छन्द

पङ्क्तिश्छन्दः । (५) उष्णिक्छन्दो बृहती च्छन्दोऽनुष्टुप्छन्दो विराट् छन्दो गायत्री च्छन्दस्त्रिष्टुप्छन्दो जगती च्छन्दऽइत्येतानि निरुक्तानि विराडष्टमानि च्छन्दाꣳस्युपदधाति पृथिवी च्छन्दोऽन्तरिक्षं च्छन्द ऽइति यान्येतद्देवत्यानि च्छन्दाꣳसि तान्येवैतदुपदधात्यग्निर्देवता वातो देवतेत्येता वै देवताश्छन्दाꣳसि तान्येवैतदुपदधाति ॥ ६ ॥

---

(५) "पङ्क्तिश्छन्दः" (६) "उष्णिक्छन्दः" (७) "बृहती च्छन्दः" (८) "अनुष्टुप्छन्दः" (९) "विराट्छन्दः" (१०) "गायत्री च्छन्दः" (११) "त्रिष्टुप्छन्दः" (१२) "जगती च्छन्दः"–(वा० सं० १४ । १८) इति । एतानि निरुक्तानि विराडष्टमानि च्छन्दांस्युपदधाति । "पृथिवी च्छन्दोऽन्तरिक्षं छन्दः"–(वा० सं० १४ । १९) इति । यान्येतद्देवत्यानि च्छन्दांसि–तान्येवैतदुपदधाति । "अग्निर्देवता वातो देवता"–(वा. सं. १४ । २०) इति । एता वै देवताश्छन्दांसि । तान्येवैतदुपदधाति ॥ ६ ॥

---

इति । अन्नम् 'अस्रीवयः' लोकानां त्रित्वात्तन्निष्ठान्नस्यापि त्रित्वम् । अतस्तदपेक्षया 'अस्रीवयः' इति बहुवचननिर्देशः । तदेवोपपादयति–यद्येषु लोकेष्वन्नं तदस्रीवय इति । अस्रीविच्छन्दःसाम्यमन्नस्य दर्शयति–यदेभ्यो लोकेभ्योऽन्नं स्रवति तदस्रीवय इति । भूम्यादिलोकेभ्य आसमन्ताद्वृष्टिरूपेण स्रवतीत्यस्रीवि अन्नम्, छान्दसत्वादभिमतरूपसिद्धिः । अर्थान्मादीनां छन्दसां व्युत्पत्तिर्दर्शिता । मादीनि हि गायत्र्यादिष्वपाठादनिरुक्तानि मन्तव्यानि । अतः उक्तेभ्यो वक्ष्यमाणानां वैलक्षण्यं दर्शयन्नुत्तरा अष्टाविष्टका विधत्ते–अथातो निरुक्तान्येव च्छन्दांस्युपदधातीति । अनिरुक्तेष्टकामन्त्रचतुष्टयादनन्तरं निरुक्तानि पङ्क्त्यादीनि प्रसिद्धानि छन्दांस्युपदधातीत्युच्यते । एवं तत्र तत्र द्रष्टव्यम् ॥ ५ ॥

तानि निरुक्तानि दर्शयति–पङ्क्तिश्छन्द इत्यादिना । एतेषां लक्षणानि द्वितीयचितौ दर्शितानि (श. प. ८ । २ । ४ । ३–१९) । विराट्छन्दसः प्रसिद्धगायत्र्यादिसप्तच्छन्दोमध्ये अपठितत्वात् "द्वाभ्यां विराट् स्वराजौ"–इत्युक्तेष्वन्तर्भावात् निर्दिष्टस्यापि 'विराडष्टमानि' इति पुनरभिधानम् ॥

पश्चादुपधेयानां द्वादशानामिष्टकानां ये मन्त्रास्तेषां प्रतीकमुपादाय तेषां समानार्थत्वेन मादिच्छन्दोरूपतामाशङ्क्य तद्भिन्नत्वमुपपादयंस्तात्पर्यमाह–पृथिवी च्छन्दोऽन्तरिक्षं छन्द इति । यान्येतद्देवत्यानि च्छन्दांसि तान्येवैतदुपदधातीति । 'एतद्देवत्यानि' पृथिव्यन्तरिक्षादिदेवताकमन्त्रोपरिबद्धानि 'यानि च्छन्दांसि' सन्ति तानीत्यर्थः । पूर्ववदुपधेयेष्टकामन्त्रप्रतीकमुपादाय व्याचष्टे–अग्निर्देवता वातो देवतेति । एता वै देवताश्छन्दांसि तान्येवैतदुपदधातीति । अग्निवातसूर्यादिदेवताः खलु 'च्छन्दांसि' 'अग्नेर्गायत्र्यभवत्' इति वाक्यादेव ताभ्यश्छन्दसामुत्पत्तेः, उत्पादकोत्पाद्यानामभेदविवक्षया देवतानामेव छन्दस्त्वव्यपदेशः । अत्र कात्यायनः–"छन्दस्या द्वादश द्वादश पक्षपुच्छाप्ययेषु मा च्छन्द इति प्रतिमन्त्रम्"–(का. श्रौ. सू. १७ । १९८) इति ॥ ६ ॥

स वै निरुक्तानि चानिरुक्तानि चोपदधाति । स यत्सुर्व्वाणि निरुक्तान्युपाधास्यदुन्तवद्धान्नमभविष्यदुक्षेष्यत ह्याथ यत्सुर्व्वाण्युनिरुक्तानि परोऽक्षꣳ ह्यान्नमभविष्यन्न हैनदुद्रक्ष्यंश्चन निरुक्तानि चानिरुक्तानि चोपदधाति तुस्मान्निरुक्तमन्नमद्यमानं नु क्षीयते ॥ ७ ॥

तानि वाऽएतानि । त्रीणि द्वादशान्युपदधाति तत्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा बृहत्येषा वै सा बृहती यां तद्देवाऽअन्तरिक्षं बृहतीं तृतीयां चितिमुपश्यंस्तस्याऽएतस्यै देवाऽउत्तमाः ॥ ८ ॥

---

स वै निरुक्तानि चानिरुक्तानि चोपदधाति । स यत्-सर्वाणि निरुक्तान्युपाधास्यत् । अन्तवद्धान्नमभविष्यत्-अक्षेष्यत ह । अथ यत्सर्वाण्यनिरुक्तानि-परोऽक्षं हान्नमभविष्यत्-न हैनदद्रक्ष्यंश्चन । निरुक्तानि चानिरुक्तानि चोपदधाति । तस्मान्निरुक्तमन्नमद्यमानं न क्षीयते ॥ ७ ॥

तानि वाऽएतानि त्रीणि द्वादशान्युपदधाति । तत् षट्त्रिंशत् । षट्त्रिंशदक्षरा बृहती । एषा वै सा बृहती-यां तद्देवा अन्तरिक्षं बृहतीं तृतीयां चितिमपश्यन् । तस्याऽएतस्यै देवा उत्तमाः ॥ ८ ॥

---

अथ दक्षिणोत्तरपक्षपुच्छसन्धिषु निरुक्तानिरुक्तभेदेन द्विविधानामपि च्छन्दसामुपधानमन्यतरोपधानपक्षे दोषप्रदर्शनपुरःसरं प्रशंसति-स वै निरुक्तानि चेत्यादिना । 'सः' उपधाता 'यदि' केवलम् 'निरुक्तानि एवोपाधास्यत्,' तर्हि छन्दसां पशुरूपत्वेनान्नत्वात्तेषां छन्दसां निःशेषोपधानेन मितत्वात् 'अन्नमप्यन्तवदेवामविष्यत्'। यथा द्विप्रस्थं त्रिप्रस्थम् इत्येवं निरुक्तिमापन्नं ख्यापितं सत् पुनश्चानिरुक्तस्यान्नस्यासम्भवात् अन्तवदेव भवति । तद्वत्त्वे को बाधः ? इत्यत्राह-अक्षेष्यत हेति । 'ह' इति विनिग्रहार्थीयः ( निरु. १ । २ । २ । ) क्षयमापद्येत ॥

अथ उक्तवैपरीत्येन 'यत्' यदि 'सर्वाणि' अपि च्छदांसि 'अनिरुक्तानि' एवोपाधास्यत् इत्यनुषज्यते; तर्हि इदमिति निरुक्तत्वाभावादन्नं परोऽक्षमभविष्यत्'। अस्तु 'परोक्षं को दोषस्तत्राह-न हैनदद्रक्ष्यंश्चनेति । 'एनद्' अन्नम् जना नापि 'अद्रक्ष्यन्' अस्पष्टत्वेनेन्द्रियाविषयत्वात् । दोषद्वयासंस्पर्शोपायमाह-निरुक्तानि चानिरुक्तानि चोपदधातीति । 'तस्मात्' उभयस्याप्यनुष्ठितत्वात् 'निरुक्तमन्नमद्यमानम्' अपि अनिरुक्तस्यासङ्ख्यातस्यान्यस्यान्नस्य सद्भावात् 'न संक्षीयते'। अतः केषांचिन्निरुक्तानां केषाञ्चिदनिरुक्तानां चोपधानं प्रशस्तमित्यर्थः ॥ ७ ॥

प्रतिदिक्षु यद्द्वादशत्वं तद्बृहतीसम्पत्तिद्वारा स्तौति-तानि वा एतानि त्रीणि द्वादशान्युपदधातीति । छन्दसां द्वादशकं द्वादशम्, तादृशानि 'त्रीणि द्वादशानि' उपदध्यात् । मिलितानि 'षट्त्रिंशत्', बृहत्याश्च 'षट्त्रिंशत् अक्षराणि,' अतः 'एषा बृहती' सम्पन्ना । तृतीयचित्युपक्रमे प्रतिपादिता या बृहती "अन्तरिक्षं बृहतीं तृतीयां चितिमपश्यन्"-( श. प. ८ । ३ । १ । २ ) इति । 'तस्याऽएतस्यै देवा उत्तमाः' इत्युपधीयन्त इति शेषः । ते च "अग्निर्देवता वातो देवता" इत्यादिना निर्दिष्टाः ॥ ८ ॥

( ० ) युद्वैवैताऽइष्टकाऽउपदधाति । प्रजापतेर्व्विस्रस्तात्सर्व्वाणि भूतानि सर्व्वा दिशोऽनु व्युदक्रामन् ॥ ९ ॥

( न्त्स ) स यः स प्रजापतिर्व्यस्रꣳसत । ( ता ) अयमेव स योऽयमग्निश्चीयतेऽथ यान्यस्मात्तानि भूतानि व्व्युदक्रामन्नेतास्ताऽइष्टकास्तद्युदेताऽउपदधाति यान्येवास्मात्तानि भूतानि व्व्युदक्रामंस्तान्यस्मिन्नेतत्प्रतिदधाति ॥ १० ॥

तद्या दश प्रथमाऽउपदधाति । स चन्द्रमास्ता दश भवन्ति दशाक्षरा व्विराडन्नं व्विराडन्नमु चन्द्रमाऽअथ याऽ उत्तराः षट्त्रिꣳशदर्धमासाश्च ते मासाश्च चतुर्विꣳशतिरर्धमासा द्वादश मासाश्चन्द्रमा वै संव्वत्सरः सर्व्वाणि भूतानि ॥ ११ ॥

---

यद्वैवैता इष्टका उपदधाति । प्रजापतेर्विस्रस्तात्सर्वाणि भूतानि सर्वा दिशोऽनु व्युदक्रामन् ॥९॥ स यः स प्रजापतिर्व्यस्रंसत–अयमेव सः–योऽयमग्निश्चीयते । अथ यान्यस्मात्तानि भूतानि व्युदक्रामन्–एतास्ता इष्टकाः । तद्यदेता उपदधाति–यान्येवास्मात्तानि भूतानि व्युदक्रामन्–तान्यस्मिन्नेतत्प्रतिदधाति ॥ १० ॥

तद्या दश प्रथमा उपदधाति–स चन्द्रमाः । ता दश भवन्ति । दशाऽक्षरा विराट् । अन्नं विराट् । अन्नमु चन्द्रमाः । अथ या उत्तराः षट्त्रिंशत्–अर्धमासाश्च ते, मासाश्च । चतुर्विंशतिरर्धमासाः, द्वादश मासाः । चंद्रमा वै संवत्सरः सर्वाणि भूतानि ॥ ११ ॥

---

एता एवेष्टकाः पुनर्विस्रस्तप्रजापत्यवयवप्रतिसन्धानरूपत्वेन स्तौति–यद्वैवैता इष्टका उपदधाति प्रजापतेर्विस्रस्तादित्यादिना । प्रजापतिर्नाम चितिलक्षणोऽग्निः । ततो विस्रस्तानि भूतानीत्येताः षट्त्रिंशदिष्टकाः । अत एतासामुपधानेन विस्रस्तात्प्रजापतेर्निर्गतानां भूतानां प्रतिसन्धानं कृतं भवतीत्यर्थः ॥ ९ ॥ १० ॥

अथैताः पूर्वोक्ताभिः सह समुच्चित्य स्तौति–तद्या दशेत्यादिना । 'याः' 'दश' 'प्रथमाः' प्राणभृत उपहिताः 'स चन्द्रमाः' चन्द्रमोऽपेक्षया 'स' इति पुँल्लिङ्गनिर्देशः ॥

उक्तं चन्द्रमस्त्वमेवोपपादयति–ता दश भवन्तीत्यादिना । 'ताः' प्राणभृतः 'दश' 'विराट्' अपि 'दशाक्षरा' सा तु 'अन्नम्' विराजोऽन्नत्वं प्रागुक्तम् ( श. प. ८ । ३ । २ । १३ ) । 'चन्द्रमाः' अपि 'अन्नमु' अन्नमेव "एष वै सोमो राजा देवानामन्नम्, तं देवा भक्षयन्ति" इति श्रुतेः । ओषध्यादिरूपस्य तस्यान्नत्वं व्यक्तमेव । 'अथ या उत्तराः षट्त्रिंशत्' छन्दस्याः सन्ति, 'तेऽर्द्धमासा मासाश्च' । मासापेक्षया 'ते' इति पुँल्लिङ्गनिर्देशः । विभज्य दर्शयति–चतुर्विंशतिरर्धमासा द्वादश मासा इति । चन्द्रस्योपचयापचयाभ्यां शुक्लकृष्णौ पक्षौ भवतः, तयोरावृत्त्या मासादिद्वारेण संवत्सरो निष्पद्यत इत्यभिप्रेत्य 'चन्द्रमा वै संवत्सरः' इत्युक्तम् । स च 'सर्वाणि भूतानि' संवत्सरकाले सर्वभूतानामुत्पत्तेः ॥ ११ ॥

तं युत्र देवाः सुमुस्कुर्वन् । ( वंस्तु ) तुदस्मिन्नेतुानि सुर्व्वांणि भूतुानि मध्युतोऽदधुस्तुथैवास्मिन्नयुमेतुद्दधाति ताऽअुनन्तर्हिताऽऋतुव्याभ्यऽ-ुपदधात्यृतुषु तत्सुर्व्वाणि भूतुानि प्रुतिष्ठापयति ॥ १२ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ८-२-२ ॥ ( ३. ३. ) ॥

अुथ व्वालखिल्याऽउुपदधाति । प्राणा वै व्वालखिल्याः प्राणानुेवैतदु-पदधाति ता यद्वालखिल्या नुाम यद्वाऽउर्वुरयोरुसम्भिन्नं भुवति खिलऽइति वै तदाचक्षते व्वालमात्रादु हेमे प्राणाऽअुसम्भिन्नास्ते युद्वालमात्रादुसम्भि-न्नास्तुस्माद्वालखिल्याः ॥ १ ॥

---

तं यत्र देवाः समस्कुर्वन्—तदस्मिन्नेतानि भूतानि मध्यतोऽदधुः । तथैवास्मिन्नयमेतद्दधाति । ता अनन्तर्हिता ऋतव्याभ्य उपदधाति । ऋतुषु तत्सर्वाणि भूतानि प्रतिष्ठापयति ॥ १२ ॥

अथ चतुर्दशवालखिल्येष्टकोपधानम् ।

अथ वालखिल्या उपदधाति । प्राणा वै वालखिल्याः । प्राणानेवैतदुपदधाति । ता यद्वाल-खिल्या नाम । यद्वाऽउर्वरयोरसम्भिन्नं भवति—खिल इति वै तदाचक्षते । वालमात्रादु हेमे प्राणा असम्भिन्नाः । ते यद्वालमात्रादसम्भिन्नाः—तस्माद्वालखिल्याः ॥ १ ॥

---

'तम्' संवत्सरात्मकं प्रजापतिम् । 'यत्र' यस्मिन्काले 'देवाः' 'समस्कुर्वन्' तदा 'सर्वाणि' भूतानि मध्यदेशे स्थापयामासुः 'तथैव' देववदेव 'अयम्' अपि यजमानः 'एतत्' एतेन छन्दस्येष्टकोपधानेन स्थापयति । गतोऽनन्तर्हितत्वार्थवादः ( श. प. ८।३।२।१४ ) भाष्ये ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीय शतपथब्राह्मणभाष्ये अष्टमकाण्डेतृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ८-३-३ ) ॥

वालखिल्येष्टका विधाय स्तौति—अथ वालखिल्या उपदधाति प्राणा वै वालखिल्या· इति । प्राणत्व-मुपरिष्टाद्वक्ष्यते । प्रतिज्ञापूर्वकं नाम निर्ब्रूते—ता यद्वालखिल्या नामेति । तत्प्रकारः प्रदर्श्यत इति शेषः । खिलस्वरूपं तावदाह—यद्वा इति । यदेव खलु क्षेत्रम् । 'उर्वरयोः' द्वयोः सर्वसस्याढययोः क्षेत्रयोः 'असम्भिन्नम्' अस्पृष्टम् 'भवति' । स्वयमसस्यं भवतीत्यर्थः । 'तत्' क्षेत्रं 'खिलः' इत्याचक्षते । प्रकृते कथं तत्राह—वालमात्राद्धिति । 'इमे' प्राणाः 'वालमात्राद्' व्यवधानाद् 'असम्भिन्नाः' अत एव खिलाः 'ते' खिला एव खिल्याः, यस्मादेवं तस्मात् प्राणा वालखिल्याः देहे स्थितानां प्राणानां वालमात्रेणापि भेदाभावे देहेन साङ्कर्य्यं स्यात्, प्राणानां वालमात्रनाडीव्यवधानं तु शास्त्रसिद्धम् ॥ १ ॥

स वै सप्त पुरस्तादुपदधाति । सप्त पश्चात्तद्याः सप्त पुरस्तादुपदधाति यऽएवेमे सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति ॥ २ ॥

( त्यु ) अथ याः सप्त पश्चात् । ( दे ) एषामेवैतत्प्राणानामेतान्प्राणान्प्रतिप्रतीन्करोति तस्माद्यदेभिरन्नमत्ति तदेतैरत्येति ॥ ३ ॥

यद्वेव सप्त पुरस्तादुपदधाति । सप्त वाऽइमे पुरस्तात्प्राणाश्चत्वारि दोर्बाहवाणि शिरो ग्रीवा यदूर्ध्वं नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राणऽएते वै सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति ॥ ४ ॥

---

स वै सप्त पुरस्तादुपदधाति । सप्त पश्चात् । तद्याः सप्त पुरस्तादुपदधाति—यऽएवेमे ; सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति ॥ २ ॥

अथ याः सप्त पश्चात् । एषामेवैतत्प्राणानामेतान्प्राणान्प्रतिप्रतीन्करोति । तस्माद्यदेभिरन्नमत्ति—तदेतैरत्येति ॥ ३ ॥

यद्वेव सप्त पुरस्तादुपदधाति । सप्त वाऽइमे पुरस्तात्प्राणाः—चत्वारि दोर्बाहवाणि, शिरः, ग्रीवा, यदूर्ध्वं नाभेः-स्तत्सप्तमम् । अङ्गेऽङ्गे हि प्राणः । एते वै सप्त पुरस्तात्प्राणाः-तानस्मिन्नेतद्दधाति ॥ ४ ॥

---

ताः 'पुरस्तात्' पश्चाच्च 'सप्त सप्तोपदध्यात्'[1] । पुरस्तादुपधेयेष्टकासप्तकं प्राणात्मना स्तौति—तद्याः सप्तेति । 'अस्मिन्' शरीरे । स्पष्टमन्यत् ॥ २ ॥

तत्पश्चाद्भागे च 'सप्त' उपदध्यात् । 'एषामेव' पुरस्तादुपधीयमानेष्टकालक्षणसप्तप्राणानामेव 'एतत्' एतेन पश्चादुपधानेन 'एतान्' अधोवर्तिनः 'प्राणान्' 'प्रतिप्रतीन्' प्रतिनिधिरूपान् 'करोति' । अथवा 'प्रतिप्रतीन्' प्रतिकूलव्यापारवतः करोति । तेषामूर्ध्वमुखव्यापारः, एषां त्वधोमुख इति प्रातिकूल्यमेव दर्शयति—तस्माद्यदेभिरन्नमत्ति तदेतैरत्येतीति । 'एभिः' पुरस्ताद्वर्तमानैर्भक्षितम् 'अन्नम्' 'एतैः' अधोवर्तमानैः 'अत्येति' देहान्मलादिरूपेणातिक्रामति, निःसारयतीत्यर्थः । यद्यप्यूर्ध्वप्राणेष्वेकस्यैवात्तृत्वम्, तथापीतरेषां षण्णां तदनुकूलव्यापारवत्त्वादत्तृत्वमुपचर्यते । एवमधस्तात्प्राणानामप्यन्नापसारकत्वम् ॥ ३ ॥

इत्थं प्राणात्मना पुरस्तात्पश्चाच्चोपधेयेष्टकाः प्रशस्येदानीं प्राणशब्देन विवक्षितमर्थमभिदधत्प्रकारान्तरेण स्तौति—यद्वेव सप्त पुरस्तादित्यादिना । के ते ? पुरस्तात्प्राणा इति तान् दर्शयति—चत्वारि दोर्बाहवाणीति । दोर्द्वयं बाहुद्वयं चेति चत्वार्यङ्गानि, मध्यसन्धेरुपरिभागो दोः, अधोभागो बाहुः, चत्वारि दोर्बाहवाणि, शिरो ग्रीवा चेति द्वे अङ्गे, 'नाभेरूर्ध्वं, यदेकं 'तत्सप्तमम्' । सर्वाणि मिलित्वा पुरस्तात्सप्त प्राणाः । नन्वेतान्यङ्गानि भवन्ति कथमेषां प्राणत्वमिति, ? तत्राह—अङ्गेऽङ्गे हि प्राण इति । प्रत्यङ्गं प्राणाभावे तु तत्तदङ्गचेष्टैव नोपपद्यते । एते वा इत्यादि स्पष्टमेव ॥ ४ ॥

---

१—वालखिल्याः सप्त पुरस्तात् । प्राणभृद्भ्यो वाऽपराः । द्वादशभ्योऽपरास्तु । मूर्द्धासि राडिति प्रतिमंत्रम् । का. श्रौ. सू. १७ । १९९–२०३ ।

(त्यु) अथ याः सप्त पश्चात्। (त्स) सप्त वाऽइमे पश्चात्प्राणाश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राणऽएते वै सप्त पश्चात्प्राणास्तानस्मिन्नेतद्दधाति॥५॥

मूर्द्धाऽसि राड्। (द्धु) ध्रुवाऽसि धरुणा धर्त्र्यसि धरणी यन्त्री राड्यन्त्र्यसि यमनी ध्रुवाऽसि धरित्रीत्येतानेवास्मिन्नेतद् ध्रुवान्प्राणान्यच्छति॥६॥ यद्वेव वालखिल्याऽउपदधाति। (त्ये) एतद्वै देवा वालखिल्याभि-

---

अथ याः सप्त पश्चात्—सप्त वाऽइमे पश्चात्प्राणाः—चत्वार्यूर्वष्ठीवानि, द्वे प्रतिष्ठे, यदवाङ्नाभेस्तत्सप्तमम्। अङ्गेऽङ्गे हि प्राणः। एते वै सप्त पश्चात्प्राणाः—तानस्मिन्नेतद्दधाति॥५॥

"मूर्धाऽसि राड् ध्रुवाऽसि धरुणा धर्त्र्यसि धरणी" "यन्त्री राड् यन्त्र्यसि यमनी ध्रुवाऽसि धरित्री"—(वा० सं १४। २१। २२) इति। एतानेवास्मिन्नेतद्ध्रुवान्प्राणान्यच्छति॥६॥

यद्वेव वालखिल्या उपदधाति। एतद्वै देवा वालखिल्याभिरेवेमाँल्लोकान्त्समयुः, इतश्चोर्ध्वान्,

---

अथ याः सप्त पश्चादित्यादि—एवमेव व्याख्येयम्। पादस्य मध्यसन्धेरुपरिभाग ऊरुः, अधोभागोऽष्ठीवशब्दवाच्यः, द्वे प्रतिष्ठे पादौ नाभेरधोऽङ्गं सप्तमं स्पष्टमन्यत्॥५॥

पुरस्तात्पश्चाच्चोपधेयानां मध्ये त्रीँस्त्रीन्मन्त्रानुदाहृत्य सङ्गृह्य तात्पर्यमाह—मूर्द्धाऽसीत्यादिना। उत्तरत्र मूर्द्धादीनां त्रयाणां भूरादिलोकत्रयरूपेण स्तूयमानत्वान्मूर्द्धादिभिः शब्दैर्भूरादिलोका विवक्ष्यन्ते। हे इष्टके! त्वं मूर्द्धाऽसि मूर्द्धवदुत्कृष्टभूर्लोकरूपाऽसि। मूर्द्धत्वं सर्ववस्त्वाश्रयत्वात्। तथा 'राट्' राजमानाऽसि। हे द्वितीयेष्टके! त्वं 'ध्रुवा'। उभयतो लोकसद्भावाद्ध्रुवोऽन्तरिक्षलोकस्तद्रूपा 'असि'। सैव विशेष्यते—'धरुणा' सर्वस्य पक्ष्यादेः [illegible] धारिका। हे तृतीयेष्टके! त्वं 'धर्त्र्यसि' धरणी चासि। त एते त्रयो मन्त्राः। "आयुषे त्वा" "वर्चसे त्वा" "कृष्यै त्वा" "क्षेमाय त्वा" इति चत्वार आम्नास्यन्ते; ते तु स्पष्टार्थाः। तान्पृथगुदाहृत्य व्याख्यास्यति। तत्र 'यन्त्री राट्'—इति पश्चादुपधेयानां प्रथमो मन्त्रः, एतेषां त्रयाणां स्वर्गादिक्रमणसाधनत्वेन स्तूयमानत्वादिष्टकाः स्वर्गादिरूपेण स्तूयन्ते—हे प्रथमेष्टके! त्वं 'यन्त्री' सर्वस्य नियमयित्री 'राट्' राजमाना, उक्तलक्षणस्वर्गरूपाऽसीत्यर्थः। हे द्वितीयेष्टके! त्वं 'यमनी' विशेषेण नियन्तृरूपा 'यन्त्री' उक्तलक्षणान्तरिक्षरूपाऽसीत्यर्थः। हे तृतीयेष्टके! त्वं 'ध्रुवा' अविचलिता 'धरित्री' सर्वस्य धारिका उक्तलक्षणपृथिवीरूपाऽसि। अग्रिमेष्टकोपधानमन्त्राश्चत्वारः—"इषे त्वा" "ऊर्जे त्वा" "रय्यै त्वा" "पोषाय त्वा"—इत्येत उपरिष्टादाम्नास्यन्ते; ते स्पष्टार्थाः। निर्दिष्टानां षण्मन्त्राणां तात्पर्यमाह—एतानेवास्मिन्नेतद्ध्रुवान्प्राणान्यच्छतीति। एषु मन्त्रेषु ध्रुवसंशब्दनात् 'एतानेव ध्रुवान्' लोकान् ध्रुवप्राणात्मकान्कृत्वा 'अस्मिन्' प्रजापतिशरीरात्मके चितिस्वरूपे एतेन मूर्द्धादिमन्त्रसाध्येष्टकोपधानेन 'यच्छति' स्थापयतीत्यर्थः॥६॥

प्रकारान्तरेण स्तौति—यद्वेव वालखिल्या इत्यादिना। 'एतद्वै' एतत् खलु पुराऽऽसीत्। किमेतदिति? तत्राह—'देवाः' पुरा 'वालखिल्याभिः' इष्टकाभिः 'एव' इमाँस्त्रीँल्लोकान्समयुः' सम्यगाप्तवन्तः। केन

रेवेमाँल्लोकान्त्समयुरितश्चोर्ध्वानमुतश्चार्वाचस्तथैवैतद्यजमानो वाल-खिल्याभिरेवेमाँल्लोकान्त्संयातीतश्चोर्ध्वानमुतश्चार्वाचः ॥ ७ ॥

(चो) मूर्द्धाऽसि राडितीमं लोकमरोहन् । (न्धु) ध्रुवाऽसि धरुणेत्यन्तरिक्षं लोकं धर्त्र्यसि धरणीत्यमुं लोकमायुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वेति चत्वारश्चतुष्पादाः पशवोऽन्नं पशवस्तऽएतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनामुष्मिंल्लोके प्रत्यतिष्ठंस्तथैवैतद्यजमान ऽएतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनामुष्मिंल्लोके प्रतितिष्ठति ॥ ८ ॥

स स पराङिव रोहः । (ऽ) इयमु वै प्रतिष्ठा ते देवाऽइमां प्रतिष्ठामभिप्रत्यायंस्तथैवैतद्यजमान ऽइमां प्रतिष्ठामभिप्रत्यैति ॥ ९ ॥

---

अमुतश्चार्वाचः । तथैवैतद्यजमानो वालखिल्याभिरेवेमाँल्लोकान्त्संयाति । इतश्चोर्ध्वान्, अमुतश्चार्वाचः ॥ ७ ॥

" मूर्द्धाऽसि राट् "–इति । इमं लोकमरोहन् । " ध्रुवाऽसि धरुणा "–इति । अन्तरिक्षलोकम् । " धर्त्र्यसि धरणी "–इति । अमुं लोकम् । " आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा "–(वा. सं. १४ । २१) इति । चत्वारश्चतुष्पादाः पशवः । अन्नं पशवः । तऽएतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनामुष्मिँल्लोके प्रत्यतिष्ठन् । तथैवैतद्यजमान एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनामुष्मिँल्लोके प्रतितिष्ठति ॥ ८ ॥

स स पराङिव रोहः । इयमु वै प्रतिष्ठा । ते देवा इमां प्रतिष्ठामभिप्रत्यायन् । तथैवैतद्यजमान इमां प्रतिष्ठामभिप्रत्यैति ॥ ९ ॥

---

क्रमेण ? इत्युच्यते–' इतः ' भूलोकात् ' ऊर्ध्वान् ' ' अमुतः ' स्वर्गात् ' अर्वाचः ' अधस्तनान्, इत्यारोहावरोहभेदाद् द्विप्रकारेण समयुरित्यर्थः ' तथैवैतद्यजमानः ' इत्यादि स्पष्टम् ॥ ७ ॥

उक्तं प्रकारं विभज्य दर्शयति–मूर्द्धाऽसि राडितीमं लोकमरोहन्नित्यादिना । एतन्निगदसिद्धम् । पुरस्तादुपधेयेष्टकानां चतुरो मन्त्रानुदाहृत्य तात्पर्यं दर्शयति–आयुषे त्वेत्यादिना । एते ' चत्वारः ' ' पशवश्चतुष्पादाः ' ते च ' अन्नम् ' ते देवाः 'एतैश्चतुर्भिः' मन्त्रैश्चतुःसंख्यासाम्येन चतुष्पाद्युक्तैः ' पशुभिः ' तद्रूपेण ' एतेन ' ' अमुष्मिन् ' भूरादिक्रमेणारूढे स्वर्गे ' प्रत्यतिष्ठन् ' प्रतिष्ठिता अभूवन् । एवं पूर्वोक्तास्त्रयो मन्त्राः क्रमेण लोकत्रयाक्रमणस्थानीयाः, उपरितनाश्चत्वार आक्रान्तवतां देवानामन्नस्थानीयाः, इति सिद्धा पुरस्तादुपधेयानां वालखिल्यानां स्तुतिः । ' तथैव '–इत्याद्युक्तप्रायम् ॥ ८ ॥

पश्चाद्वालखिल्याप्रसञ्जनार्थमाह–स स पराङिवेति । लोकानां त्रित्वेन तदारोहस्यापि त्रित्वात्तदपेक्ष्य ' स ' इति वीप्सा । ' पराङिव ' पुनरावृत्तिरिवेयम् । कथमेवं स्वर्गेऽपि प्रतिष्ठानं किं न स्यादित्यत आह–इयमु वै प्रतिष्ठेति । सुकृतक्षये पुनर्भूलोके पतनादित्यभिप्रायः । अस्याः प्रतिष्ठात्वं तु सर्वजीवाश्रयत्वात् । यस्मादेवं तस्माद्देवाः स्वर्गं प्राप्ताः सन्तोऽपि इमां ' प्रतिष्ठां ' भुवम् अभिलक्ष्य ' प्रत्यायन् ' प्रतिमुखं प्राप्ताः । ' तथैवैतद् ' इति गतप्रायम् ॥ ९ ॥

यन्त्री राडित्यमुं लोकमरोहन् । ( न्य ) यन्त्र्यसि यमनीत्यन्तरिक्षलोकं ध्रुवाऽसि धरित्रीतीमं लोकमिषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वेति चत्वारश्चतुष्पादाः पशवोऽन्नं पशवस्तऽएतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनास्मिँल्लोके प्रत्यतिष्ठंस्तथैवैतद्यजमान ऽएतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनास्मिँल्लोके प्रतितिष्ठति ॥ १० ॥

( त्य ) अथातः संस्कृतिरेव । या ऽअमूरेकादशेष्टका ऽउपदधाति योऽसौ प्रथमोऽनुवाकस्तदन्तरिक्षᳪं स ऽआत्मा तद्यत्ता ऽएकादश भवन्त्येकादशाऽक्षरा वै त्रिष्टुप्त्रैष्टुभमन्तरिक्षमथ या ऽउत्तराः षष्टिः स वायुः स प्रजापतिः सोऽग्निः स यजमानः ॥ ११ ॥

---

" यन्त्री राड् "–इति । अमुं लोकमरोहन् । " यन्त्र्यसि यमनी "–इति । अन्तरिक्षलोकम् । " ध्रुवाऽसि धरित्री "–इति । इमं लोकम् । " इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा "–( वा० सं० १४ । २२ ) इति । चत्वारश्चतुष्पादाः पशवः । अन्नं पशवः । तऽएतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनास्मिँल्लोके प्रत्यतिष्ठन् । तथैवैतद्यजमान एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनास्मिँल्लोके प्रतितिष्ठति ॥ १० ॥

अथातः संस्कृतिरेव । या अमूरेकादशेष्टका उपदधाति । योऽसौ प्रथमोऽनुवाकः । तदन्तरिक्षम् । स आत्मा । तद्यत्ता एकादश भवन्ति । एकादशाक्षरा वै त्रिष्टुप् । त्रैष्टुभमन्तरिक्षम् । अथ या उत्तराः षष्टिः–स वायुः । स प्रजापतिः । सोऽग्निः । स यजमानः ॥ ११ ॥

---

प्रतिगतिप्रकारं विभज्य दर्शयति–यन्त्री राडित्यमुं लोकमित्यादिना । एवमुत्तरांश्चतुरो मन्त्रान्प्रदर्शयन् भुवः प्रतिष्ठात्वमन्नत्वेन स्तौति–इषे त्वेत्यादिना । एतत्पूर्वेणैव व्याख्यातप्रायम् ॥ १० ॥

वक्ष्यमाणग्रन्थस्य विषयं दर्शयति–अथातः संस्कृतिरेवेति । तृतीयचितौ या इष्टकाः सन्ति ताभिरुपहिताभिश्चित्याग्निरूपस्य प्रजापतेर्लोकस्तदभिमानिदेवतादिरूपः सस्कार एवोत्पाद्यत इत्यर्थः । संस्कृतिरेव प्रदर्श्यते–या अमूरित्यादिना । ' अमूरेकादशेष्टकाः, ' एका स्वयमातृण्णा, पञ्च दिश्याः, एका विश्वज्योतिः, चतस्र ऋतव्या इत्येकादश । ताः सङ्गृह्याह–'योऽसौ प्रथमोऽनुवाकः' एकादशपद्यात्मकः सङ्घः तदन्तरिक्षस्थानीयम् । ' स आत्मा ' मध्यशरीरम् । उक्तामेकादशसंख्यां स्तौति–एकादशाऽक्षरा वै त्रिष्टुबिति । गायत्रीत्रिष्टुब्जगतीनां क्षित्यन्तरिक्षद्युरूपत्वेन सर्वत्राभिधानाद् ' अन्तरिक्षं त्रैष्टुभम् ' । अथ या उत्तराः षष्टिरिति । प्राणभृतो दश, छन्दस्याः षट्त्रिंशत्, वालखिल्याश्चतुर्दशेति ' षष्टिः ' ' स वायुः ' बाह्या एकोनपञ्चाशत् वायवः, आन्तरा दश एकः साधारण इति वायोः षष्ट्यात्मकता । ' सः ' एव ' प्रजापतिः, ' तत्रात्मा ' सः ' एवोपधीयमानः ' अग्निः ' ' सः ' एव यजमानः । चयनसंस्कारेणोत्तरत्र प्रजापत्यात्मनोत्पत्तेः ॥ ११ ॥

( स्त ) तद्याः पुरस्तादुपदधाति । शिरोऽस्य तास्ता दश भवन्ति दश वै प्राणाः प्राणाऽ उ वै शिरः पूर्वार्धऽउपदधाति पुरस्ताद्धीदꣳ शिरः॥ १२॥

( रोऽथ ) अथ या दक्षिणतः । ( तो ) यदूर्ध्वं मध्यादवाचीनꣳ शीर्ष्ण-स्तदस्य ताऽअथ याः पश्चाद्यदूर्ध्वं प्रतिष्ठायाऽअवाचीनं मध्यात्तदस्य ताः प्रतिष्ठैवोत्तरतः ॥ १३ ॥

( स्त ) तद्याः सप्त पुरस्ताद्वालखिल्याऽउपदधाति । यऽएवेमे सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति ताऽअनन्तर्हिताऽएताभ्यो दशभ्य ऽउपदधात्यनन्तर्हितांस्तच्छीर्ष्णः प्राणान्दधाति ॥ १४ ॥

( त्यु ) अथ याः सप्त पश्चात् । ( च्यु ) यऽएवेमे सप्त पश्चात्प्राणास्तान-

---

तद्याः पुरस्तादुपदधाति । शिरोऽस्य ताः । ता दश भवन्ति । दश वै प्राणाः । प्राणा उ वै शिरः । पूर्वार्धऽउपदधाति । पुरस्ताद्धीदं शिरः ॥ १२ ॥

अथ या दक्षिणतः । यदूर्ध्वं मध्यात्, अवाचीनं शीर्ष्णः–तदस्य ताः । अथ याः पश्चात्–यदूर्ध्वं प्रतिष्ठायाः, अवाचीनं मध्यात्,–तदस्य ताः । प्रतिष्ठैवोत्तरतः ॥ १३ ॥

तद्याः सप्त पुरस्ताद्वालखिल्या उपदधाति । यऽएवेमे सप्त पुरस्तात्प्राणाः–तानस्मिन्नेतद्दधाति । ता अनन्तर्हिता एताभ्यो दशभ्य उपदधाति । अनन्तर्हितांस्तच्छीर्ष्णः प्राणान्दधाति ॥ १४ ॥

अथ याः सप्त पश्चात् । यऽएवेमे सप्त पश्चात्प्राणाः–तानेतस्मिन्नेतद्दधाति । ता अनन्तर्हिता

---

इत्थं प्रजापतेः शरीररूपेण संस्कारमभिधायेदानीमाद्या स्वयमातृण्णा, पञ्च दिश्याः, विश्वज्योतिः, चतस्र ऋतव्या इत्येकादश त्यक्त्वाऽवशिष्टानां शिरआद्यङ्गकल्पनया तत्रत्यप्राणरूपसंस्कारं दर्शयति–तद्याः पुरस्तादित्यादिना । ' तत् ' तत्रात्मनि ' याः ' प्राणभृतो दश ' पुरस्तात् ' पूर्वदिशि ' उपदधाति, ' ' ताः ' ' अस्य ' चितिशरीरस्य ' शिरः ' आश्रयाश्रयिणामभेदस्य विवक्षितत्वात् ' प्राणा उ वै शिरः ' इति व्यपदेशः ॥ १२ ॥

' अथ या दक्षिणतः ' द्वादश ' तत् ' कटिप्रदेशात् ' ऊर्ध्वम् ' ' शीर्ष्णः ' अधस्तनं यदङ्गं तत्स्थानीया इत्यर्थः । पश्चाद्भाविन्यः ' याः ' द्वादशेष्टकाः ' ताः ' पादादुपरि, ' मध्याद् ' अधस्तनमङ्गम् । उत्तरत्र या दश ताः ' प्रतिष्ठैव ' पादावेवेत्यर्थः ॥ १३ ॥

एवं च सति ' याः सप्त पुरस्ताद्वालखिल्या उपदधाति ' ताभिः ' इमे ' परिदृश्यमानाः ' सप्त पुरस्तात्प्राणाः ' " चत्वारि दोर्बाहवाणि "–इत्यादिनोक्ताः । ( श. प. ८ । ३ । ४ । ४ ) ' तानस्मिन्नेतद्दधाति ता अनन्तर्हिता एताभ्यो दशभ्य उपदधातीति । ' दशभ्यः ' प्राणभृद्भ्य इत्यर्थः । ' तत् ' तेन ' शीर्ष्णः ' शिरसः ' अनन्तर्हितान्प्राणान्दधाति ' ॥ १४ ॥

एवम् ' अथ याः सप्त पश्चात् ' इत्युत्तरवाक्यमपि व्याख्येयम् । सप्त पश्चात्प्राणाः " चत्वार्यूर्वष्ठीवानि " इत्यादिनोक्ताः ( श. प. ८।३।४।९ । ) एताभ्यो द्वादशभ्य इति । मध्यत उपधेयाभ्यश्छन्दस्याभ्यः ' अन-

स्मिन्नेतुद्दधाति ताऽअुनन्तर्हिताऽएुताभ्यो द्वादशुभ्यऽउुपदधात्युनन्तर्हितांस्तुदात्मुनः प्राणान्दधाति सुऽएुष व्वायुः प्रजापतिरस्मिंस्त्रैष्टुभेऽन्तुरिक्षे समन्तं पुर्यक्कस्तद्यत्तृतीयां चितिमुपदधाति व्वायुं चैव तुदन्तुरिक्षं च संस्कृत्योपधत्तेऽथ लोकम्पृणेऽउुपदधात्यस्याउँ स्रक्त्यां तयोरुपरि बुन्धुः पुरीषं निवपति तुस्योपरि बुन्धुः ॥ १९ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ८-२-३ ॥ ( ३. ४. )

इति तृतीयोऽध्यायः समाप्तः ॥ ८ ॥ ३ ॥

---

एताभ्यो द्वादशभ्य उपदधाति । अनन्तर्हितांस्तदात्मनः प्राणान्दधाति । स एष वायुः प्रजापतिरस्मिंस्त्रैष्टुभेऽन्तरिक्षे समन्तं पर्यङ्कः । तद्यत्तृतीयां चितिमुपदधाति-वायुं चैव तदन्तरिक्षं च संस्कृत्योपधत्ते । अथ लोकम्पृणेऽउपदधाति-अस्यां स्रक्त्याम् । तयोरुपरि बन्धुः । पुरीषं निवपति । तस्योपरि बन्धुः ॥ १९ ॥

---

न्तर्हिताः ' इत्यर्थः । ' स एषः ' प्राणभृदादिवालखिल्यान्त इष्टकारूपः प्राणशरीरवान् ' प्रजापतिः ' ' अस्मिन् ' स्वयमातृण्णाद्यृतव्यान्तैकादशेष्टकारूपे त्रैष्टुभेऽन्तरिक्षे ' ' समन्तं पर्यङ्कः ' परिव्याप्तो वर्तते । ' तत् ' तस्मात् इमाम् ' तृतीयां चितिमुपदधाति ' इति ' यत् ' ' तत् ' तेनोपधानेन ' वायुम् ' ' अन्तरिक्षं च ' ' संस्कृत्य ' उपहितवान्भवति । अथ लोकंपृणे इति । द्वे इष्टके उपदध्यात् । तयोर्ब्राह्मणमुपरि वक्ष्यते । (८।७।२।१) । अथ ' पुरीषं निवपति ' तस्यापि ब्राह्मणमुत्तरत्र वक्ष्यत इत्यतिदिशति-तस्योपरि बन्धुरिति। काण्डावसाने " असौ वा आदित्यो लोकम्पृणा इति-( श. प. ८ । ७ । २ । १ । ) " अन्नं वै पुरीषम् " ( श. प. ८ । ७ । ३ । २ ) इत्यादिना वक्ष्यत इत्यर्थः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे तृतीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ८-३-४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,<br>
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।<br>
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,<br>
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥<br>
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,<br>
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।<br>
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,<br>
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमकाण्डे तृतीयोऽध्यायः ॥ ( ८-३ ) ॥

# अथ चतुर्थाऽध्याये प्रथमं ब्राह्मणम् ।

## द्वितीयप्रपाठके च चतुर्थं ब्राह्मणम् ।

चतुर्थीं चि॒तिमुप॑दधाति । (त्ये) एतद्वै देवास्तृतीयां चितिं चित्वा सम॒रो॑हन्नन्त॒रि॑क्षं वै तृ॒तीया चि॒तिरन्त॒रि॑क्षमेव त॒त्संस्कृ॒त्य सम॒ारोहन् ॥ १ ॥

(हुंस्ते) तेऽब्रुवन् । (वंश्चे) चेतयध्वमिति चितिमिच्छतेति वाव तद॑ब्रुवन्नितऽऊर्ध्वमिच्छतेति ते चेतयमानाऽएतां चतुर्थीं चितिमपश्यन्यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तेषामेष लोकोऽध्रुव ऽइवाप्रतिष्ठितऽइव मनस्यासीत् ॥ २ ॥

(त्ते) ते ब्रह्माब्रुवन् । (वँस्त्वा) त्वामिहोपदधामहाऽइति किं मे ततो भविष्यतीति त्वमेव नः श्रेष्ठं भविष्यसीति तथेति तेऽत्र ब्रह्मोपादधत तस्मादाहुर्ब्रह्मैव देवानाᳬँ श्रेष्ठमिति तदेतया वै चतुर्थ्या चित्येमे द्यावापृथिवी विष्टब्धे ब्रह्म वै चतुर्थी चितिस्तस्मादाहुर्ब्रह्मणा द्यावापृथिवी विष्टब्धेऽइति स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणाऽउ वै ब्रह्म ब्रह्मैवैतदुपदधाति ॥ ३ ॥

---

### अष्टादशस्तोमेष्टकोपधानम् ।

चतुर्थीं चितिमुपदधाति । एतद्वै देवास्तृतीयां चितिं चित्वा समारोहन् । अन्तरिक्षं वै तृतीया चितिः । अन्तरिक्षमेव तत्संस्कृत्य समारोहन् ॥ १ ॥

तेऽब्रुवन्—चेतयध्वमिति—चितिमिच्छतेति वाव तदब्रुवन्—इत ऊर्ध्वमिच्छतेति । ते चेतयमाना एतां चतुर्थीं चितिमपश्यन्—यदूर्ध्वमन्तरिक्षाद् अर्वाचीनं दिवः । तेषामेष लोकोऽध्रुवऽइवाप्रतिष्ठित इव मनस्यासीत् ॥ २ ॥

ते ब्रह्माब्रुवन्—त्वामिहोपदधामहाऽइतिं । किं मे ततो भविष्यतीति । त्वमेव नः श्रेष्ठं भविष्यसीति । तथेति । तेऽत्र ब्रह्मोपादधत । तस्मादाहुः—ब्रह्मैव देवानां श्रेष्ठमिति । तदेतया वै चतुर्थ्या चित्येमे द्यावापृथिवी विष्टब्धे । ब्रह्म वै चतुर्थी चितिः । तस्मादाहुः—ब्रह्मणा द्यावापृथिवी विष्टब्धे इति । स्तोमानुपदधाति । प्राणा वै स्तोमाः । प्राणा उ वै ब्रह्म । ब्रह्मैवैतदुपदधाति ॥ ३ ॥

---

अथ चतुर्थे चतुर्थचित्या उपधानं विधाय स्तौति—चतुर्थीं चितिमुपदधात्येतद्वै देवा इत्यादिना । अन्तरिक्षादूर्ध्वं दिवोऽर्वाचीनं यत्स्थानं तच्चतुर्थी चितिः । अस्यां ब्रह्मण उपधानंविधातुमाह—तेषामेष लोक इति । 'तेषां मनसि' 'अध्रुवः' अत एव 'अप्रतिष्ठित इव' स 'लोकः' आसीत् ॥ १–२ ॥

'ते' देवाः ब्रह्माख्यां देवताम् 'अब्रुवन्' किमिति ? 'त्वामिहोपदधामहा इति' ब्रह्म; तेन 'मे किम्'

यद्वेव स्तोमानुपदधाति । ( त्ये ) एतद्वै देवाः प्रजापतिमब्रुवंस्त्वामिहोपदधामहाऽइति तथेति स वै नाब्रवीत्किं मे ततो भविष्यतीति यदु ह किं च प्रजापतिर्देवेष्वीषे किमस्माकं ततो भविष्यतीत्येवोचुस्तस्माद्ध हैतद्यत्पिता पुत्रेष्विच्छते किमस्माकं ततो भविष्यतीत्येवाहुरथ यत्पुत्राः पितरि तथेत्येवाहैवꣳ हि तदग्रे प्रजापतिश्च देवाश्च समवदन्त स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणाऽउ वै प्रजापतिः प्रजापतिमेवैतदुपदधाति ४

---

यद्वेव स्तोमानुपदधाति । एतद्वै देवाः प्रजापतिमब्रुवन्—त्वामिहोपदधामहाऽइति । तथेति । स वै नाब्रवीत्—किं मे ततो भविष्यतीति । यदु ह किं च प्रजापतिर्देवेष्वीषे— किमस्माकं ततो भविष्यतीत्येवोचुः । तस्माद्ध हैतद्—यत्पिता पुत्रेष्विच्छते—किमस्माकं ततो भविष्यतीत्येवाहुः । अथ यत्पुत्राः पितरि ' तथा ' इत्येवाह,–एवं हि तदग्रे प्रजापतिश्च देवाश्च समवदन्त । स्तोमानुपदधाति । प्राणा वै स्तोमाः । प्राणा उ वै प्रजापतिः । प्रजापतिमेवैतदुपदधाति ॥ ४ ॥

---

स्यादित्यब्रवीत् । ते देवाः ' त्वमेव ' ' नः ' अस्माकं मध्ये ' श्रेष्ठं भविष्यसि ' ' इति '—अब्रुवन् । ' तथेति ' चेत्युक्ताः ' ते ' ब्रह्मैवात्र ' उपादधत ' ' तस्मात् ' वेदविदो वदन्ति—' ब्रह्मैव देवानां श्रेष्ठमिति ' ' तत् ' तस्मात् परिवृढस्य ब्रह्मण उपहितत्वात् ' एतया चतुर्थ्या चित्या ' ' इमे द्यावापृथिवी ' ' विष्टब्धे ' विशेषेण धृते । चतुर्थ्याः चित्या विष्टम्भकारणत्वमाह—ब्रह्म वै चतुर्थी चितिरिति । स्पष्टमेतत् । स्तोमसंज्ञका इष्टका विधाय ब्रह्मात्मना स्तौति—स्तोमानुपदधाति प्राणा वै स्तोमा इति । त्रिवृत्स्तोमस्य वायुत्वेन स्तूयमानत्वाद् वायोश्च प्राणत्वात्तत्प्राधान्येऽपि सर्वेऽपि ' स्तोमाः प्राणाः ' इत्युच्यन्ते । ते च प्राणा ब्रह्मैव तदधिष्ठितत्वात् । अतस्तेन स्तोमोपधानेन साक्षाद्ब्रह्मैवात्रोपदधाति ॥ ३ ॥

पुनः प्रजापत्यात्मना स्तौति—यद्वेव स्तोमानुपदधातीत्यादिना । पुरा देवा लक्ष्यं ' प्रजापतिं ' चतुर्थचितौ ' त्वामुपदधामह इत्यब्रुवन् ' । ' सः ' तु तथेत्येवाङ्गीचकार । एवं यथा पुरा ब्रह्म किं मे ततः स्यादित्यब्रवीत्; तथा प्रजापतिर्नोवाचेत्यमुमर्थं लौकिकपितृपुत्रव्यवहारप्रदर्शनपुरःसरमुपपादयति—स वै नाब्रवीत्किं मे तत इत्यादिना । ' सः ' प्रजापतिः ' किं मे ततः ' स्यादिति ! ' नाब्रवीत् ' । ' यदु ह ' यदेव किंचित्फलं ' प्रजापतिः ' ' देवेषु ' देवानधिकृत्य ' ईषे ' ऐच्छत् । तदा देवाः ' किमस्माकं ततो भविष्यतीत्येव ऊचुः ' । ' तस्माद् '—एव कारणादिदानीमपि ' पिता पुत्रेषु ' कार्यमिच्छते, यदि किञ्चित् फलमिच्छति तदा स्वकर्तव्यप्रतिनिधित्वे ' किमस्माकं ततो भविष्यति ' इति ब्रूयुः । ' अथ यत् पुत्राः पितरि ' इच्छेयुस्तर्हि तथैवेत्याह; पिता हि पुत्रार्थं कस्मिन्फले साध्ये सति तथैवेत्यङ्गीकुर्यात्, किं ततः स्यादिति न ब्रूयादित्यर्थः । ' एवं हि ' उक्तेन प्रकारेण खलु ' तत् ' तदा ' अग्रे ' देवकर्तृकप्रजापतिप्रार्थनासमये ' प्रजापतिश्च देवाश्च समवदन्त ' संवादमकुर्वन् । " व्यक्तवाचां समुच्चारणे "–( पा. सू. १ । ३ । ४८ ) इत्यात्मनेपदम् । प्रयोगान्तरेण व्यवधानात् पुनरनुवदति—स्तोमानुपदधातीति । स्तोमानां प्राणत्वमुक्तं प्राक् ( अनुपदमेव तृतीयकण्डिकायाम् ) । अङ्गाङ्गिनोरभेदात् प्राण एव प्रजापतिः । अतः स्तोमोपधाने प्रजापतिमेवोपदधाति ॥ ४ ॥

यद्वेव स्तोमानुपदधाति । ये वै ते प्राणा ऽऋषय ऽएतां चतुर्थीं चितिमपश्यन्ये तऽएतेन रसेनोपायंस्तऽएते तानेवैतदुपदधाति स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणाऽ उ वाऽऋषय ऽऋषीनेवैतदुपदधाति ॥ ५ ॥

यद्वेव स्तोमानुपदधाति । प्रजापतिं विस्रस्तं देवताऽआदाय व्युदक्रामंस्तस्य यदूर्ध्वं मध्यादवाचीनꣳ शीर्ष्णस्तदस्य वायुरादायोत्क्रम्यातिष्ठद्देवताश्च भूत्वा संव्वत्सररूपाणि च ॥ ६ ॥

तमब्रवीत् । ( उ ) उप मेहि प्रति मऽएतद्धेहि येन मे त्वमुदक्रमीरिति किं मे ततो भविष्यतीति त्वद्देवत्यमेव मऽएतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतद्वायुः प्रत्यदधात् ॥ ७ ॥

---

यद्वेव स्तोमानुपदधाति । ये वै ते प्राणा ऋषय एतां चतुर्थीं चितिमपश्यन्, ये तऽएतेन रसेनोपायन्—तऽएते । तानेवैतदुपदधाति । प्राणा वै स्तोमाः । प्राणा उ वा ऋषयः । ऋषीनेवैतदुपदधाति ॥ ५ ॥

यद्वेव स्तोमानुपदधाति । प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामन् । तस्य यदूर्ध्वं मध्यात्, अवाचीनं शीर्ष्णः—तदस्य वायुरादायोत्क्रम्यातिष्ठत्—देवताश्च भूत्वा संवत्सररूपाणि च ॥ ६ ॥

तमब्रवीत्—उप मेहि, प्रति मऽएतद्धेहि—येन मे त्वमुदक्रमीरिति । किं मे ततो भविष्यतीति । त्वद्देवत्यमेव म एतदात्मनो भविष्यतीति । तथेति । तदस्मिन्नेतद्वायुः प्रत्यदधात् ॥ ७ ॥

---

पूर्वं प्राणद्वारा प्रजापतिरूपत्वेन स्तुत्वेदानीं चितिप्रयुक्तमृषित्वं प्राणेषु सम्पाद्य तदात्मना स्तौति—यद्वेव स्तोमानित्यादिना । 'ये' प्राणाख्याः 'ऋषयः' 'एतां चतुर्थीं चितिमपश्यन्'; एते चितिद्रष्टारः ऋषयः प्राणाः, 'एतेन रसेन' चतुर्थचित्यात्मना दृष्टेन सारेण 'उपायन्' । 'ते' प्रजापत्यात्मकतां प्राप्ता एव 'एते' प्रसिद्धाः प्राणा इत्यर्थः । 'तानेव' चितिरसाभिज्ञान्प्राणानेव 'उपदधाति' । उक्तमृषित्वमुपजीव्य पुनः स्तौति—प्राणा उ वा ऋषय इति । स्तोमदर्शनात् 'ऋषयः प्राणाः' ॥ ५ ॥

अथ पुनर्विस्रस्तप्रजापत्यवयवप्रतिसन्धानरूपतया प्रशंसति—यद्वेव स्तोमानुपदधाति प्रजापतिमित्यादिना । पितुः प्रजापतेः सर्वपुत्रसाधारणद्रव्यत्वादितरदेवतावद् 'वायुः' अपि प्रजापतेर्मध्यभागशिरोभागयोर्मध्यदेशम् 'आदाय देवताश्च संवत्सररूपाणि च भूत्वोत्क्रम्यातिष्ठत्' ॥ ६ ॥

अथ 'तम्' वायुं प्रजापतिः 'अब्रवीत्' 'मा' मां 'उपेहि' 'मे' मदीयम् 'एतत्' त्वयाऽपहृतमङ्गं 'प्रतिधेहि' प्रतिधानं कुरु । 'येन' 'मे' अङ्गेन सह 'त्वमुदक्रमीः' गतवानसि । 'किं मे ततो भविष्यति' इति पृष्टः प्रजापतिः 'मे आत्मनः' शरीरस्य 'सम्बन्धि एतद्' अङ्गं 'त्वद्देवत्यमेव भविष्यति' 'इति'—अब्रवीत् । अथासौ वायुः 'तथेति' उक्त्वा तदङ्गं 'प्रत्यदधात्' ॥ ७ ॥

(त्त) तद्या ऽएता ऽअष्टादश प्रथमाः । (ऽ) एतदस्य तदात्मनस्तद्य- देता ऽअत्रोपदधाति यदेवास्यैता ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मा- देता ऽअत्रोपदधाति स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा ऽउ वै व्वायुर्व्वायुमेवैतदुपदधाति ॥ ८ ॥

स पुरस्तादुपदधाति । (त्या) आशुस्त्रिवृदिति स ऽएव त्रिवृत्स्तोमस्तं तदुपदधाति तद्यत्तमाहाशुरित्येष हि स्तोमानामाशिष्ठोऽथो व्वायुर्व्वा- ऽआशुस्त्रिवृत्स ऽएषु त्रिषु लोकेषु व्वर्तते तद्यत्तमाहाशुरित्येष हि सर्व्वेषां भूतानामाशिष्ठो व्वायुर्ह भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधाति ॥ ९ ॥

---

तद् या एता अष्टादश प्रथमाः—एतदस्य तदात्मनः । तद्यदेता अत्रोपदधाति—यदेवास्यैता आत्मनः—तदस्मिन्नेतत्प्रतिदधाति । तस्मादेता अत्रोपदधाति । स्तोमानुपदधाति । प्राणा वै स्तोमाः । प्राणा उ वै वायुः । वायुमेवैतदुपदधाति ॥ ८ ॥

स पुरस्तादुपदधाति । ( १ ) " आशुस्त्रिवृत् "—इति । य एव त्रिवृत्स्तोमस्तं तदुपदधाति । तद्यत्तमाह—आशुरिति । एष हि स्तोमानामाशिष्ठः । अथो वायुर्वा आशुस्त्रिवृत् । स एषु त्रिषु लोकेषु वर्तते । तद्यत्तमाह—आशुरिति—एष हि सर्वेषां भूतानामाशिष्ठः । वायुर्ह भूत्वा पुरस्तात्तस्थौ । तदेव तद्रूपमुपदधाति ॥ ९ ॥

---

प्रतिहितो भागः क इति तं दर्शयति—तद्या एता अष्टादश प्रथमा एतदस्य तदात्मन इति । प्रथम-मुपधेया 'अष्टादश'—सङ्ख्याकाः 'याः' स्तोमेष्टकाः "आशुस्त्रिवृत्" इत्यादिमन्त्रोपधेयाः सन्ति एतदेव तदङ्गमित्यर्थः । 'तस्मादेताः' इत्यादि स्पष्टम् । स्तोमानुपदधाति प्राणा वा इत्यादिना—वायुत्वेनैकैका स्तूयते ॥ ८ ॥

उपधानमनूद्य मन्त्रान्विधाय व्याचष्टे—स पुरस्तादुपदधात्याशुस्त्रिवृदित्यादिना । 'आशुस्त्रिवृत्'—'इति'—मन्त्रसाध्येष्टकोपधानेन 'य एव' त्रिवृदाख्यः "तिसृभ्यो हिङ्करोति" इत्याद्युक्तलक्षणस्तोमोऽस्ति तमेव तत्रोपदधाति । एवं पञ्चदशादिष्वपि व्याख्येयम् । त्रिवृतो यद्विशेषणमाशुरिति तद्व्याचष्टे—तद्यत्तमाहेति । 'तत्' तत्र 'यत्' येनाभिप्रायेण 'तम्' त्रिवृत्स्तोमम् 'आशुरिति' 'आह' मन्त्रः, सोऽभिप्रायोऽभिधी-यत इत्यर्थः । 'एष हि' त्रिवृत्स्तोमः खलु 'स्तोमानाम्' पञ्चदशादीनां मध्ये 'आशिष्ठः' अतिशयेनाशुः ऋचां नवकरूपत्वेन शीघ्रं समाप्तेः । प्रकारान्तरेण मन्त्रं व्याचष्टे—अथो वायुर्वा आशुस्त्रिवृदिति । स च त्रिषु लोकेषु वर्तमानस्त्रिवृत् । अस्तु त्रिवृद्वायुस्तस्याशुत्वविशेषणं कथमिति तदुपपादयति—तद्यत्तमाहेत्यादिना । अस्तु व्युत्पत्त्या वायुराशुस्त्रिवृत्, तथापि तस्य चितिसम्बन्धः कथमिति तत्राह—वायुर्ह भूत्वा पुरस्तात्तस्था-विति । पुरा त्रिवृत्स्तोमो 'वायुर्भूत्वा' पूर्वस्यां दिशि देवानां चयनानुष्ठानसमये 'तस्थौ' स्थितवान् । 'तदेव' वायुरूपं पुरस्तादेशे 'उपदधाति' यजमानः ॥ ९ ॥

---

१—उत्तरां पूर्वयोराशुस्त्रिवृदिति । का. श्रौ. सू. । १७ । २११ ।

भान्तः पञ्चदश ऽइति । स ऽएव पञ्चदश स्तोमस्तं तदुपदधाति तद्यत्त-माह भान्तऽइति वज्रो वै भान्तो वज्रः पञ्चदशोऽथो चन्द्रमा वै भान्तः पञ्च-दशः स च पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते तद्यत्तमाह भान्त ऽइति भाति हि चन्द्रमाश्चन्द्रमा ह भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमु-पदधाति ॥ १० ॥

व्योमा सप्तदश ऽइति । स ऽएव सप्तदश स्तोमस्तं तदुपदधाति तद्यत्तमाह व्योमेति प्रजापतिर्वै व्योमा प्रजापतिः सप्तदशोऽथो संवत्सरो वाव व्योमा सप्तदशस्तस्य द्वादश मासाः पञ्चऽर्त्तवस्तद्यत्तमाह व्योमेति व्योमा हि संवत्सरः संवत्सरो ह भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ ११ ॥

---

( २ ) "भान्तः पञ्चदशः"—इति । य एव पञ्चदश स्तोमः—तं तदुपदधाति । तद्यत्तमाह—भान्त इति—वज्रो वै भान्तः । वज्रः पञ्चदशः । अथो चन्द्रमा वै भान्तः पञ्चदशः । स च पञ्चद-शाहान्यापूर्यते, पञ्चदशापक्षीयते । तद्यत्तमाह—भान्त इति । भाति हि चन्द्रमाः । चन्द्रमा ह भूत्वा दक्षिणतस्तस्थौ । तदेव तद्रूपमुपदधाति ॥ १० ॥

( ३ ) "व्योमा सप्तदशः" इति । य एव सप्तदश स्तोमः—तं तदुपदधाति । तद् यत्तमाह—व्योमेति । प्रजापतिर्वै व्योमा । प्रजापतिः सप्तदशः । अथो संवत्सरो वाव व्योमा सप्तदशः । तस्य द्वादश मासाः, पञ्चर्तवः । तद् यत्तमाह—व्योमेति । व्योमा हि संवत्सरः । संवत्सरो ह भूत्वो-त्तरतस्तस्थौ । तदेव तद्रूपमुपदधाति ॥ ११ ॥

---

दक्षिणत उपधेयद्वितीयेष्टकामन्त्रं व्याचष्टे—भान्तः पञ्चदशः इति । द्वितीयाभिष्टकामुपदध्यादित्यर्थः । त्रिवृत्पञ्चदशादयो वक्ष्यमाणाः । सप्तदशादिस्तोमाश्च सामब्राह्मणे, तत्सूत्रे च द्रष्टव्याः । पञ्चदशस्तोमोपधानेन साक्षात्तं स्तोममेवोपदधाति । तद्यत्तमाहेति । एतत्पूर्ववद्व्याख्येयम् । 'भान्तः' इति पञ्चदशस्तोमविशेषणम् । विशेषणविशेष्ययोः सामानाधिकरण्यायैकार्थपरतामाह--वज्रो वै भान्तो वज्रः पञ्चदश इति । मन्त्रस्या-र्थान्तरमाह—अथो चन्द्रमा वै भान्तः पञ्चदश इति । पञ्चदशस्तोमस्य यथा स्तोत्रीयागतपञ्चदशसंख्या-सम्बन्धः । एवं पञ्चदशशब्दाभिधेयस्य चन्द्रमसोऽपि पञ्चदशसंख्यायोगमाह—स च पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते इति । अयमर्थः सर्वजनदृश्यः उपचयापचयकालावच्छेदकत्वेन पञ्चदशानामह्नां सम्बन्धा-च्चन्द्रः पञ्चदश इति । तथा पञ्चदशशब्दस्य चन्द्रे प्रवृत्तौ निमित्तं दर्शितं भवति । एवं भान्तशब्दस्यापि चन्द्रे प्रवृत्तिनिमित्तं दर्शयति—भाति हि चन्द्रमा इति । भाति दीप्यत इति भान्तश्चन्द्रः शिष्टं वायुवाक्यवत् । 'दक्षिणतस्तस्थौ' इति लिङ्गादनेन मन्त्रेण दक्षिणत उपदध्यादित्यर्थः । एवमुत्तरतः पश्चात् इत्यनयो-रपि वाक्ययोर्द्रष्टव्यम् ॥ १० ॥

उत्तरत्रोपधेयेष्टकामन्त्रः—व्योमा सप्तदश इति । तत्र विशेषणविशेष्ये उभे अपि प्रजापतिमेवैकार्थवृत्तित्व-

---

१—दक्षिणां दक्षिणयोर्भान्तः पंचदश इति । का. श्रौ. सू. १७ । २१३ । २—दक्षिणामुत्तरयोर्व्योमा सप्तदश इति । का. श्रौ. सू. १७ । २१४ ।

धरुणऽएकविꣳश ऽइति । य ऽएवैकविꣳश स्तोमस्तं तदुपदधाति तद्यत्तमाह धरुण ऽइति प्रतिष्ठा वै धरुणः प्रतिष्ठैकविꣳशोऽथोऽअसौ वाऽआदित्यो धरुण ऽएकविꣳशस्तस्य द्वादश मासाः पञ्चऽर्त्तवस्त्रय ऽइमे लोका ऽअसावेवादित्यो धरुण ऽएकविꣳशस्तद्यत्तमाह धरुण ऽइति यदा ह्येवैषोऽस्तमेत्यथेदꣳ सर्वं ध्रियतऽआदित्यो ह भूत्वा पश्चात्तस्थौ तदेव तद्रूपमुपदधात्यथ संव्वत्सररूपाण्युपदधाति ॥ १२ ॥ ( अर्धप्रपाठकः ) ॥

प्रतूर्त्तिरष्टादश ऽइति । य ऽएवाष्टादश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाव प्रतूर्त्तिरष्टादशस्तस्य द्वादश मासाः पञ्चऽर्त्तवः संव्वत्सर ऽएव प्रतूर्त्तिरष्टादशस्तद्यत्तमाह प्रतूर्त्तिरिति संव्वत्सरो हि सर्व्वाणि भूतानि प्रतिरति तदेव तद्रूपमुपदधाति ॥ १३ ॥

---

(४) "धरुण एकविंशः"–इति । य एवैकविंशः स्तोमः–तं तदुपदधाति । तद् यत्तमाह–धरुण इति । प्रतिष्ठा वै धरुणः । प्रतिष्ठैकविंशः । अथो असौ वा आदित्यो धरुण एकविंशः । तस्य द्वादश मासाः, पञ्चर्तवः, त्रय इमे लोकाः, असावेवादित्यो धरुण एकविंशः । तद् यत्तमाह धरुण–इति । यदा ह्येवैषोऽस्तमेति–अथेदं सर्वं ध्रियते । आदित्यो ह भूत्वा पश्चात्तस्थौ । तदेव तद्रूपमुपदधाति । अथ संवत्सररूपाण्युपदधाति ॥ १२ ॥

( ५ ) "प्रतूर्तिरष्टादशः"–इति । य एवाष्टादशः स्तोमः–तं तदुपदधाति । अथो संवत्सरो वाव प्रतूर्तिरष्टादशः । तस्य द्वादश मासाः, पञ्चर्तवः, संवत्सर एव प्रतूर्तिरष्टादशः । तद्यत्तमाह–प्रतूर्तिरिति । संवत्सरो हि सर्वाणि भूतानि प्रतिरति । तदेव तद्रूपमुपदधाति ॥ १३ ॥

---

प्रदर्शनाय ब्रूत इत्याह–प्रजापतिर्वै व्योमेति । विशेषेणावति सर्वमिति व्योमा[1] । प्रजापतिः सप्तदश इति । प्रजापतेः सप्तदशत्वं दर्शयति–द्वादश मासाः पञ्चर्तव इति ॥ ११ ॥

पश्चादुपधेयेष्टकामन्त्रमुदाहृत्य व्याचष्टे–धरुण एकविंश इति[2] । आदित्यस्यैकविंशत्वं द्वादशमासपञ्चर्तुलोकत्रयात्मकान्पदार्थानपेक्ष्यास्यैकविंशतिसङ्ख्यापूरकत्वादित्याह–द्वादशेत्यादिना । आदित्यस्य धरुणत्वमुपपादयति–यदा ह्येवैषोऽस्तमेत्यथेदं सर्वं ध्रियत इति । अस्तमयानन्तरं स्वस्वव्यापारस्य दृष्टिप्रसवाभावात्सर्वं निभृतं धृतमिव भवति;अतः 'असावेवादित्यो धरुणः' शिष्टं पूर्ववत् ॥

इत्थं चतुर्दिक्षु वाय्वादिदेवतारूपाणां चतसृणामिष्टकानामुपधानमभिधायोत्तरत्रोपधेयानां चतुर्दशानां संवत्सररूपतां प्रतिजानीते–अथ संवत्सररूपाण्युपदधातीति ॥ १२ ॥

तानि क्रमेण दर्शयति–प्रतूर्तिरष्टादश इत्यादिना[3] । प्रजापतेः प्रतूर्तित्वमुपपादयति–संवत्सरो हि सर्वाणि

---

१–विपूर्वादवतेर्व्याप्त्यर्थात् " सर्वधातुभ्यो मनिन् " इति ( पा. सू. उणा. ४ । १४८ ) उणादिसूत्रेण मनिन्प्रत्यय " ज्वरत्वरस्रिव्यविमवामुपधायाश्च " ( पा. सू. ६ । ४ । २० ) इत्यूठि च ( पा० सू० ६ । १ । ८७ ) गुणः ।

२–दक्षिणामपरयोर्धरुण एकविंश इति । का. श्रौ. सू. १७ । २१२ । ३–चतुर्दश प्रतिमंत्रं प्रतूर्तिरष्टादश इति । का. श्रौ. सू. १७ । २१५ ॥

तपो नवदशऽइति । सऽएव नवदश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाव तपो नवदशस्तस्य द्वादश मासाः षडृतवः संव्वत्सरऽएव तपो नवदशस्तद्यत्तमाह तप ऽइति संव्वत्सरो हि सर्व्वाणि भूतानि तपति तदेव तद्रूपमुपदधाति ॥ १४ ॥

( त्य ) अभीवर्तः सविंशऽइति । स ऽएव सविंश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाऽअभीवर्तः सविंशस्तस्य द्वादश मासाः सप्तऽर्त्तवः संव्वत्सरऽएवाभीवर्तः सविंशस्तद्यत्तमाहाभीवर्त ऽइति संव्वत्सरो हि सर्व्वाणि भूतान्यभिवर्तते तदेव तद्रूपमुपदधाति ॥ १५ ॥

वर्चो द्वाविंश ऽइति । सऽएव द्वाविंश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाव वर्चो द्वाविंशस्तस्य द्वादश मासाः सप्तऽर्त्तवो द्वेऽअहोरात्रे

---

( ६ ) " तपो नवदशः "–इति । य एव नवदशः स्तोमः–तं तदुपदधाति । अथो संवत्सरो वाव तपो नवदशः । तस्य द्वादश मासाः, षडृतवः, संवत्सर एव तपो नवदशः । तद्यत्तमाह–तप इति । संवत्सरो हि सर्वाणि भूतानि तपति । तदेव तद्रूपमुपदधाति ॥ १४ ॥

( ७ ) "अभीवर्तः सविंशः"–इति । य एव सविंशः स्तोमः–तं तदुपदधाति । अथो संवत्सरो वा अभीवर्तः सविंशः । तस्य द्वादश मासाः, सप्तऽर्तवः, संवत्सर एवाभीवर्तः सविंशः । तद्यत्तमाह–अभीवर्त इति । संवत्सरो हि सर्वाणि भूतान्यभिवर्तते । तदेव तद्रूपमुपदधाति ॥ १५ ॥

( ८ ) " वर्चो द्वाविंशः "–इति । य एव द्वाविंशः स्तोमः–तं तदुपदधाति । अथो संवत्सरो

---

भूतानि प्रतिरतीति । ' सर्वाणि भूतानि ' उद्दिश्य तत्तदुत्पत्त्यादिनिमित्तं स्वयं ' प्रतिरति ' प्रपूर्वस्तिरतिर्वर्धनार्थः; कलाकाष्ठादिक्रमेण वर्धत इत्यर्थः । शिष्टं पूर्ववत् ॥ १३ ॥

एवमुत्तरत्रापि त्रयोदशस्तोमेष्टकोपधानमन्त्रब्राह्मणानि व्याख्येयानि, तत्र तपो–ऽभीवर्त–वर्चः–सम्भरण–योनि–गर्भ–ओजः–क्रतु–प्रतिष्ठा–ब्रध्नस्यविष्टप–नाक–विवर्त–धर्त्रैस्त्रयोदशभिर्विशेषणैर्विशेष्याः–नवदश–सविंश–द्वाविंश–त्रयोविंश–चतुर्विंश–पञ्चविंश–त्रिणव–एकत्रिंश–त्रयस्त्रिंश–चतुस्त्रिंश–षट्त्रिंश–अष्टाचत्वारिंश–चतुष्टोमाख्यास्त्रयोदश स्तोमा एव । तत्र पूर्वपूर्वस्तोत्रेभ्यश्चतुःस्तोत्रियाधिकस्तोमश्चतुष्टोमस्तस्य क्लृप्तिप्रकारो वाध्वायने सामसूत्रे प्रदर्शितः । शिष्टास्तत्तत्संख्याकाभिः स्तोत्रियाभिर्निष्पाद्यास्तत्रैव द्रष्टव्याः । एतैः सर्वैः सविशेषणैः स्तोमैः प्रजापतिरेवाभिधीयते । तस्य तावत्सङ्ख्यापूरकत्वं मासार्धमासपञ्चषट्सप्तर्तुलोकत्रयाहोरात्राद्यपेक्षया तत्र तत्रोक्तप्रकारेण द्रष्टव्यम् । तपआदिविशेषणानां संवत्सराभिधायकत्वं योजयित्वा प्रदर्श्यते तथा हि–तपतीति 'तपः' संवत्सरः । कथम् ? संवत्सरो हि सर्वाणि भूतानि, तेषामर्थाय ' तपति ' सकलभौतिकपदार्थपरिपाकस्य संवत्सरकालाधीनत्वात्तत्कृततपनस्य भूतार्थता । 'संवत्सरः सर्वाणि भूतान्यभिवर्तते' तदर्थं पुनरावर्तते इति ' अभीवर्तः ' । अभिवर्तनस्य भूतार्थत्वं पूर्ववद्द्रष्टव्यम् । अतो भूतार्थमभिवर्तनाद् अभीवर्तः । " उपसर्गस्य घञ्यमनुष्ये बहुलम् "–( पा. सू. ६ । ३ । १२२ ) इति दीर्घः । यस्मात् ' संवत्सरः

संव्वत्सर ऽएव व्वर्चो द्वाविꣳशस्तद्यत्तमाह व्वर्च ऽइति संव्वत्सरो हि सर्व्वेषां भूतानां व्वर्चस्वितमस्तदेव तद्रूपमुपदधाति ॥ १६ ॥

सम्भरणस्त्रयोविꣳश ऽइति । स ऽएव त्रयोविꣳश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाव सम्भरणस्त्रयोविꣳशस्तस्य त्रयोदश मासाः सप्तर्त्तवो द्वेऽअहोरात्रे संव्वत्सर ऽएव सम्भरणस्त्रयोविꣳशस्तद्यत्तमाह सम्भरण ऽइति संव्वत्सरो हि सर्व्वाणि भूतानि सम्भृतस्तदेव तद्रूपमुपदधाति ॥ १७ ॥

योनिश्चतुर्विꣳश ऽइति । स ऽएव चतुर्विꣳश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाव योनिश्चतुर्विꣳशस्तस्य चतुर्विꣳशतिरर्धमासास्तद्यत्तमाह योनिरिति संव्वत्सरो हि सर्व्वेषां भूतानां योनिस्तदेव तद्रूपमुपदधाति ॥ १८ ॥

गर्भाः पञ्चविꣳश ऽइति । स ऽएव पञ्चविꣳश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाव गर्भाः पञ्चविꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः संव्वत्सरऽ

---

वाव वर्चो द्वाविंशः । तस्य द्वादश मासाः, सप्तऽर्तवः, द्वेऽअहोरात्रे, संवत्सर एव वर्चो द्वाविंशः । तद्यत्तमाह—वर्च इति । संवत्सरो हि सर्वेषां भूतानां वर्चस्वितमः । तदेव तद्रूपमुपदधाति ॥ १६ ॥

( ९ ) "सम्भरणस्त्रयोविंशः"—इति । य एव त्रयोविंशः स्तोमः—तं तदुपदधाति । अथो संवत्सरो वाव सम्भरणस्त्रयोविंशः । तस्य त्रयोदश मासाः, सप्तऽर्तवः, द्वेऽअहोरात्रे, संवत्सर एव सम्भरणस्त्रयोविंशः । तद्यत्तमाह—सम्भरण इति । संवत्सरो हि सर्वाणि भूतानि सम्भृतः । तदेव तद्रूपमुपदधाति ॥ १७ ॥

( १० ) "योनिश्चतुर्विंशः"—इति । य एव चतुर्विंशः स्तोमः—तं तदुपदधाति । अथो संवत्सरो वाव योनिश्चतुर्विंशः । तस्य चतुर्विंशतिरर्धमासाः । तद्यत्तमाह—योनिरिति । संवत्सरो हि सर्वेषां भूतानां योनिः । तदेव तद्रूपमुपदधाति ॥ १८ ॥

( ११ ) "गर्भाः पञ्चविंशः"—इति । य एव पञ्चविंशः स्तोमः—तं तदुपदधाति । अथो संवत्सरो वाव गर्भाः पञ्चविंशः । तस्य चतुर्विंशतिरर्धमासाः । संवत्सर एव गर्भाः पञ्चविंशः । तद्यत्तमाह—गर्भा इति । संवत्सरो ह त्रयोदशो मासो गर्भो भूत्वर्तून्प्रविशति । तदेव तद्रूपमुपदधाति ॥ १९ ॥

---

सर्वेषां भूतानां' मध्ये 'वर्चस्वितमः' वर्चो बलम् अतिशयेन तद्वानित्यर्थः । तत्तद्वतोरभेदाद्वर्चः संवत्सरः । यस्मात्सर्वाणि भूतानि सम्भ्रियन्ते स्वाङ्गैः सम्पूर्णैः, अतः सम्भरतीति 'सम्भरणः' संवत्सरः । "कालः सृजति भूतानि कालः संहरते प्रजाः" ( हारीतस्मृ. ४ अ. ) इति स्मरणात्सर्वभूतोत्पत्त्याश्रयत्वाद् 'योनिः' उच्यते । संवत्सरः कदाचित्त्रयोदशेनाधिकमासेन गर्भः, अतः 'संवत्सरो ह त्रयोदशो मासो गर्भो भूत्वर्तून्प्रविशति'

एव गुर्भाः पञ्चविंᳬशस्तद्यत्तमाह गुर्भा ऽइति संव्वत्सरो ह त्रयोदशो मासो गुर्भो भूत्वऽर्तून्प्रविशति तुदेव तुद्रूपमुपदधाति ॥ १९ ॥

( त्यो ) ओजस्त्रिणव ऽइति । स ऽएव त्रिणव स्तोमस्तं तदुपदधाति तद्य-त्तमाहौज ऽइति व्वज्रो वाऽओजो व्वज्रस्त्रिणवोऽथो संव्वत्सरो वाऽओज-स्त्रिणवस्तस्य चतुर्विंᳬशतिरर्धमासा द्वेऽअहोरात्रे संव्वत्सरऽ एवौजस्त्रिण-वस्तद्यत्तमाहौज ऽइति संव्वत्सरो हि सर्व्वेषां भूतानामोजस्वितमस्तदेव तुद्रूपमुपदधाति ॥ २० ॥

क्रतुरेकत्रिंᳬश ऽइति । स ऽएवैकत्रिंᳬश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाव क्रतुरेकत्रिंᳬशस्तस्य चतुर्विंᳬशतिरर्धमासाः षडृतवः संव्वत्सर ऽएव क्रतुरेकत्रिंᳬशस्तद्यत्तमाह क्रतुरिति संव्वत्सरो हि सर्व्वाणि भूतानि करोति तुदेव तुद्रूपमुपदधाति ॥ २१ ॥

प्रतिष्ठा त्रयस्त्रिंᳬश ऽइति । स ऽएव त्रयस्त्रिंᳬश स्तोमस्तं तदुपदधाति तद्यत्तमाह प्रतिष्ठेति प्रतिष्ठा हि त्रयस्त्रिंᳬशोऽथो संव्वत्सरो वाव प्रतिष्ठा त्रयस्त्रिंᳬशस्तस्य चतुर्विंᳬशतिरर्धमासाः षडृतवो द्वेऽअहोरात्रे संव्वत्सरऽ

---

( १२ ) " ओजस्त्रिणवः "—इति । य एव त्रिणवः स्तोमः—तं तदुपदधाति । तद्यत्तमाह—ओज इति । वज्रो वाऽओजः । वज्रस्त्रिणवः । अथो संवत्सरो वाऽओजस्त्रिणवः । तस्य चतुर्विंशतिरर्धमासाः, द्वेऽअहोरात्रे, संवत्सर एवौजस्त्रिणवः । तद्यत्तमाह—ओज इति । संवत्सरो हि सर्वेषां भूतानामोजस्वितमः । तदेव तद्रूपमुपदधाति ॥ २० ॥

( १३ ) " क्रतुरेकत्रिंशः "—इति । य एवैकत्रिंशः स्तोमः—तं तदुपदधाति । अथो संवत्सरो वाव क्रतुरेकत्रिंशः । तस्य चतुर्विंशतिरर्धमासाः, षडृतवः, संवत्सर एव क्रतुरेकत्रिंशः । तद्यत्तमाह—क्रतुरिति । संवत्सरो हि सर्वाणि भूतानि करोति । तदेव तद्रूपमुपदधाति ॥ २१ ॥

( १४ ) "प्रतिष्ठा त्रयस्त्रिंशः"—इति । य एव त्रयस्त्रिंशः स्तोमः—तं तदुपदधाति । तद्यत्तमाह—प्रतिष्ठेति । प्रतिष्ठा हि त्रयस्त्रिंशः । अथो सम्वत्सरो वाव प्रतिष्ठा त्रयस्त्रिंशः । तस्य चतुर्विंशतिरर्ध-

---

इत्युक्तम् । यथा गर्भो जननीजठरे प्रविष्ट एवमृत्वन्तःप्रवेशाद्गर्भत्वम् । तथाऽयमेव मासोऽधिको भवतीति नियमाभावात् कदाचित्कस्मिंश्चिदृतावनुप्रवेशादृतून् प्रविशतीति बहुवचननिर्देशः । संवत्सरस्यौजोरूपत्वं वर्चोवद्व्याख्येयम् । ' सर्वाणि भूतानि करोति ' इति ' क्रतुः ' । सर्वत्र भूतशब्देन भूतविकाराः पदार्था उच्यन्ते ॥ १४–२१ ॥

सर्वभूतानां प्रतिष्ठास्पदत्वात् ' संवत्सरः प्रतिष्ठा ' ॥ २२ ॥

एव प्रतिष्ठा त्रयस्त्रिꣳशस्तद्यत्तमाह प्रतिष्ठेति संव्वत्सरो हि सर्व्वेषां भूतानां प्रतिष्ठा तदेव तद्रूपमुपदधाति ॥ २२ ॥

ब्रध्नस्य व्विष्टपं चतुस्त्रिꣳश ऽइति । स ऽएव चतुस्त्रिꣳश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाव ब्रध्नस्य व्विष्टपं चतुस्त्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः सप्तऽर्तवो द्वेऽअहोरात्रे संव्वत्सर ऽएव ब्रध्नस्य व्विष्टपं चतुस्त्रिꣳशस्तद्यत्तमाह ब्रध्नस्य व्विष्टपमिति स्वाराज्यं वै ब्रध्नस्य व्विष्टपꣳ स्वाराज्यं चतुस्त्रिꣳशस्तदेव तद्रूपमुपदधाति ॥ २३ ॥

नाकः षट्त्रिꣳश ऽइति । स ऽएव षट्त्रिꣳश स्तोमस्तं तदुपदधात्यथो संव्वत्सरो वाव नाकः षट्त्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासा द्वादश मासास्तद्यत्तमाह नाक ऽइति न हि तत्र गताय कस्मैचनाकं भवत्यथो संव्वत्सरो वाव नाकः संव्वत्सरः स्वर्गो लोकस्तदेव तद्रूपमुपदधाति ॥२४॥

---

मासाः, षड्ऋतवः, द्वे अहोरात्रे, संवत्सर एव प्रतिष्ठा त्रयस्त्रिंशः । तद्यत्तमाह—प्रतिष्ठेति । सम्वत्सरो हि सर्वेषां भूतानां प्रतिष्ठा । तदेव तद्रूपमुपदधाति ॥ २२ ॥

( १५ ) "ब्रध्नस्य विष्टपं चतुस्त्रिंशः"—इति । य एव चतुस्त्रिंशः स्तोमः—तं तदुपदधाति । अथो सम्वत्सरो वाव ब्रध्नस्य विष्टपं चतुस्त्रिंशः । तस्य चतुर्विंशतिरर्धमासाः, सप्तऽर्तवः, द्वे अहोरात्रे, सम्वत्सर एव ब्रध्नस्य विष्टपं चतुस्त्रिंशः । तद्यत्तमाह—ब्रध्नस्य विष्टपमिति । स्वाराज्यं वै ब्रध्नस्य विष्टपम् । स्वाराज्यं चतुस्त्रिंशः । तदेव तद्रूपमुपदधाति ॥ २३ ॥

( १६ ) "नाकः षट्त्रिंशः"—इति । य एव षट्त्रिंशः स्तोमः—तं तदुपदधाति । अथो सम्वत्सरो वाव नाकः षट्त्रिंशः । तस्य चतुर्विंशतिरर्धमासाः, द्वादश मासाः । तद्यत्तमाह—नाक इति । न हि तत्र गताय कस्मैचनाकं भवति । अथो सम्वत्सरो वाव नाकः । सम्वत्सरः स्वर्गो लोकः । तदेव तद्रूपमुपदधाति ॥ २४ ॥

---

चतुस्त्रिंशस्तोमात्मकस्य संवत्सरस्य ब्रध्नस्य विष्टपत्वं प्रतिपादयति—स्वाराज्यं वै ब्रध्नस्य विष्टपं स्वाराज्यं चतुस्त्रिंश इति । 'ब्रध्न' आदित्यस्तस्य विष्टपं स्थानं 'ब्रध्नस्य विष्टपम्' तत् 'स्वाराज्यम्' स्वयमेव राजते अनन्यपरतन्त्रतयेति स्वराट् तस्य भावः स्वाराज्यम् । सूर्यलोके हि तथाविधस्वाराज्योपपत्तेरत्र लोक एव स्वाराज्यमिति व्यपदिश्यते ॥ २३ ॥

नाकशब्देन षट्त्रिंशस्तोमो विशेष्यते । कथं स नाक इति तदुपपादयति—न हि तत्र गताय कस्मैचनाकं भवति इति । तत्र स्वर्गं प्राप्ताय कस्मैचन पुरुषाय अकं दुःखं न खलु भवतीत्यतो न विद्यते अकमत्रेति 'नाकः' । 'हि'—शब्दो "न वा अमुं लोकं जग्मुषे किंचनाकम्" इत्यादिप्रसिद्धिद्योतनार्थः । "षडुदङ्ङेति हि मासान्मासेभ्यः संवत्सरं संवत्सरादादित्यम्" इति च च्छन्दोगश्रुतेः । सुकृतिभिः प्राप्तव्यत्वात् 'संवत्सरो वाव नाकः' अत एव सः 'स्वर्गो लोकः' ॥ २४ ॥

विवुर्तोऽष्टाचत्वारिᳪंश ऽइति । स ऽएवाष्टाचत्वारिᳪंश स्तोमस्तं तदु- पदधात्यथो संव्वत्सरो वाव विवुर्तोऽष्टाचत्वारिᳪंशस्तुस्य षड्विᳪंशति- रर्धमासास्त्रयोदश मासाः सप्तऽर्तवो द्वेऽअहोरात्रे तद्यत्तमाह विवुर्त ऽइति संव्वत्सराद्धि सर्व्वाणि भूतानि विवर्तन्ते तदेव तद्रूपमुपदधाति ॥ २५ ॥

धर्त्रं चतुष्टोम ऽइति । स ऽएव चतुष्टोम स्तोमस्तं तदुपदधाति तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं प्रतिष्ठा चतुष्टोमोऽथो व्वायुर्वाव धर्त्रं चतुष्टोमः स ऽआभिश्चतसृभिर्दिग्भिः स्तुते तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं व्वायुरु सर्व्वेषां भूतानां प्रतिष्ठा तदेव तद्रूपमुपदधाति स वै व्वायुमेव प्रथममुपदधाति व्वायुमुत्तमं व्वायुनैव तदेतानि सर्व्वाणि भूतान्युभयतः परिगृह्णाति ॥ २६ ॥

---

( १७ ) ' विवर्तोऽष्टाचत्वारिंशः "–इति । य एवाष्टाचत्वारिंशः स्तोमः–तं तदुपदधाति । अथो सम्वत्सरो वाव विवर्तोऽष्टाचत्वारिंशः । तस्य षड्विंशतिरर्धमासाः, त्रयोदश मासाः, सप्तऽर्तवः, द्वेऽअहोरात्रे । तद्यत्तमाह–विवर्त इति । सम्वत्सराद्धि सर्वाणि भूतानि विवर्तन्ते । तदेव तद्रूपमुप- दधाति ॥ २५ ॥

(१८)"धर्त्रं चतुष्टोमः"–(वा.सं.१४।२३) इति । य एव चतुष्टोमः स्तोमः । तं तदुपदधाति । तद्यत्तमाह–धर्त्रमिति । प्रतिष्ठा वै धर्त्रम् । प्रतिष्ठा चतुष्टोमः । अथो वायुर्वाव धर्त्रं चतुष्टोमः । स आभिश्चतसृभिर्दिग्भिः स्तुते । तद्यत्तमाह–धर्त्रमिति । प्रतिष्ठा वै धर्त्रम् । वायुरु सर्वेषां भूतानां प्रतिष्ठा । तदेव तद्रूपमुपदधाति । स वै वायुमेव प्रथममुपदधाति, वायुमुत्तमम् । वायुनैव तदेतानि सर्वाणि भूतान्युभयतः परिगृह्णाति ॥ २६ ॥

---

विवर्त इति । एतस्य संवत्सरवाचकत्वमुपपादयति–' संवत्सराद्धि सर्वाणि भूतानि विवर्तन्ते ' इति । सर्व- भूतविवर्तनायतनत्वाद् ' विवर्तः संवत्सरः ' ॥ २५ ॥

धर्त्रं चतुष्टोम इति । स च चरमेष्टकोपधानमन्त्रः । उक्तं चतुष्टोमस्वरूपम् (अत्रैव १४कं.भाष्ये)। धर्त्रचतुष्टोमा- वुभावपि प्रतिष्ठात्मना स्तौति–प्रतिष्ठा वै धर्त्रं प्रतिष्ठा चतुष्टोम इति । यत् 'धर्त्रम्' धारकं वस्तु तस्य सर्वस्याप्या- श्रय इति धर्त्रशब्दवाच्यस्य संवत्सरस्य प्रतिष्ठात्मकता । चतुष्टोमस्यापि चतुःसङ्ख्यायोगात्पादचतुष्टयोपेतमिव, इति प्रतिष्ठारूपत्वम् । प्रकारान्तरेण व्याचष्टे–अथो वायुर्वाव धर्त्रं चतुष्टोम इति । वायोश्चतुष्टोमशब्दवाच्यत्वमाह– स आभिश्चतसृभिर्दिग्भिः स्तुत इति । वायोश्चतुर्दिङ्मध्ये सशब्दं सञ्चारात् ' चतसृभिर्दिग्भिः स्तुते ' स्तूयते इत्युपचर्यते । यकारलोपश्छान्दसः । अतश्चतसृभिः स्तूयमानत्वाच्चतुष्टोमः । वायुपक्षेऽपि धर्त्रशब्दस्य सङ्गतार्थतामाह– प्रतिष्ठा वै धर्त्रमिति । यत् ' धर्त्रम् ' सा 'प्रतिष्ठा' इत्येतत्पृथिव्यादौ दृष्टम् । 'वायुः' अपि ' सर्वेषां भूतानां प्रतिष्ठा ' प्राणरूपत्वेन धारकत्वात् । एवं स्तोमविशेषणत्वपक्षेऽपि तपआदिशब्दा यथायोगं द्रष्टव्याः । शिष्टं त्रिवृदादिवाक्यवद्व्याख्येयम् । आद्यन्तस्तोमेष्टकयोर्वायुरूपतां स्तौति–स वै वायुमेव प्रथममित्यादिना॥२६॥

ता वा ऽएताः । ( ऽ ) अष्टादशेष्टका ऽउपदधाति । तौ द्वौ त्रिवृतौ प्राणो वै त्रिवृद्वायुरु प्राणो व्वायुरेषा चितिः ॥ २७ ॥

( र्यु ) यद्वेवाष्टादश । ( शा ) अष्टादशो वै संव्वत्सरो द्वादश मासाः पञ्चऽर्तवः संव्वत्सर ऽएव प्रजापतिरष्टादशः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तत्कृत्वोपदधाति ॥ २८ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ८-२-४ ॥ ( ४. १. )

अथ स्पृतऽ उपदधाति । ( त्ये ) एतद्वै प्रजापतिरेतस्मिन्नात्मनः प्रतिहिते सर्व्वाणि भूतानि गर्ब्भ्यभवत्तान्यस्य गर्भऽएव सन्ति पाप्मा मृत्युरगृह्णात् ॥ १ ॥

---

ता वाऽएताऽअष्टादशेष्टका उपदधाति । तौ द्वौ त्रिवृतौ । प्राणो वै त्रिवृत् । वायुरु प्राणः । वायुरेषा चितिः ॥ २७ ॥

यद्वेवाष्टादश । अष्टादशो वै सम्वत्सरः—द्वादश मासाः, पञ्चऽर्तवः, संवत्सर एव प्रजापतिरष्टादशः । प्रजापतिरग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तत्कृत्वोपदधाति ॥ २८ ॥

अथ स्पृदिष्टकोपधानम् ।

अथ स्पृत उपदधाति । एतद्वै प्रजापतिः, एतस्मिन्नात्मनः प्रतिहिते सर्वाणि भूतानि गर्भ्यभवत् । तान्यस्य गर्भऽएव सन्ति पाप्मा मृत्युरगृह्णात् ॥ १ ॥

---

उक्तामष्टादशसंख्यां त्रिवृत्स्तोमद्वयसंपत्त्या स्तौति—ता वा एता अष्टादशेष्टका उपदधाति तौ द्वौ त्रिवृताविति । अष्टादशसंख्यया निष्पाद्यौ 'तौ द्वौ त्रिवृतौ' भवतः एकस्य त्रिवृत्स्तोमस्य ऋचां नवकत्वादष्टादशसंख्यया द्वौ स्तोमौ सम्पद्येते, स च 'त्रिवृत्प्राणः' प्राण उदानो व्यान इति त्रित्वात् 'सप्त शीर्षण्या द्राववाञ्चौ' इति नवसंख्यायोगाद्वा । स च 'प्राणो वायुः' एव, "एषा चतुर्थी चितिः" इति प्रागुक्तम् । अतस्तादृक्त्रिवृद्द्वयरूपत्वादिष्टकागताष्टादशसंख्या प्रशस्ता ॥ २७ ॥

प्रकारान्तरेण स्तौति—यद्वेवाष्टादशाष्टादशो वै संवत्सर इत्यादिना । यावानग्निरिति । 'अग्निः' प्रजापतिः संवत्सरद्वारा 'यावान्' यावत्प्रमाणः द्वादश मासाः षड्ऋतव इत्याद्यष्टादशसंख्याप्रमाण इत्यर्थः । तस्यैव व्याख्यानम्—यावत्यस्य मात्रेति । 'तावत्तत्कृत्वा' अग्निमात्रासमं कृत्वा 'उपदधाति' ॥ २८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमे काण्डे चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ८-४-१ ) ॥

अथ स्पृत्संज्ञकेष्टका विधाय स्तौति—अथ स्पृत उपदधात्येतद्वा इत्यादिना । पुरा 'प्रजापतिः' 'आत्मनः' स्वशरीरस्य सम्बन्धिनि 'एतस्मिन्' अन्तरिक्षस्वर्गयोरन्तराललक्षणेऽङ्गे पूर्वोक्तेष्टकोपधानेन 'प्रतिहिते' सति 'सर्वाणि भूतानि' अपेक्ष्य 'गर्भ्यभवत्' भूतज्ञानलक्षणेन गर्भेण तद्वानासीदित्यर्थः ।

( त्स ) स देवानब्रवीत् ( द्यु ) युष्माभिः सहेमानि सर्वाणि भूतानि पाप्मनो मृत्यो स्पृणवानीति किं नस्ततो भविष्यतीति वृणीध्वमित्यब्रवीत्तं भागो नोऽस्त्वित्येकेऽब्रुवन्नाधिपत्यं नोऽस्त्वित्येके स भागमेकेभ्यः कृत्वाऽऽधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्योरस्पृणोद्यदस्पृणोत्तस्मात्स्पृतस्तथैवैतद्यजमानो भागमेकेभ्यः कृत्वाऽऽधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्यो स्पृणोति तस्मादु सर्वास्वेव स्पृतꣳ स्पृतमित्यनुवर्तते ॥ २ ॥

( तेऽग्ने ) अग्नेर्भागोऽसि । दीक्षाया आधिपत्यमिति वाग्वै दीक्षाऽग्नये भागं कृत्वा वाचऽआधिपत्यमकरोद्ब्रह्म स्पृतं त्रिवृत्स्तोम ऽइति ब्रह्म प्रजानां त्रिवृता स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ३ ॥

---

स देवानब्रवीत्—युष्माभिः सहेमानि सर्वाणि भूतानि पाप्मनो मृत्योः स्पृणवानीति । किं नस्ततो भविष्यतीति । वृणीध्वमित्यब्रवीत् । तं 'भागो नोऽस्तु' इत्येकेऽब्रुवन्, 'आधिपत्यं नोऽस्तु' इत्येके । स भागमेकेभ्यः कृत्वाऽऽधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्योरस्पृणोत् । यदस्पृणोत्तस्मात्स्पृतः । तथैवैतद्यजमानो भागमेकेभ्यः कृत्वाऽऽधिपत्यमेकेभ्यः सर्वाणि भूतानि पाप्मनो मृत्योः स्पृणोति । तस्मादु सर्वास्वेव स्पृतं स्पृतमित्यनुवर्तते ॥ २ ॥

( १ ) "अग्नेर्भागोऽसि दीक्षाया आधिपत्यम्"—इति । वाग्वै दीक्षा । अग्नये भागं कृत्वा वाचऽआधिपत्यमकरोत् । "ब्रह्म स्पृतं, त्रिवृत्स्तोमः"—इति । ब्रह्म प्रजानां त्रिवृता स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ३ ॥

---

'तानि' 'अस्य' प्रजापतेः 'गर्भ एव सन्ति' अवस्थितान्युदरस्थान्येव 'पाप्मा' पापरूपः 'मृत्युः' अगृह्णात्' जग्राह ॥ १ ॥

अथ 'सः' प्रजापतिः 'देवानब्रवीत्' हे देवाः ! युष्मत्सहायो भूत्वाऽहं गर्भस्थानि 'इमानि' 'भूतानि' मृत्योः' सकाशात् 'स्पृणवानि' स्पृतानि चलितानि करवाणीति । अथ देवैः 'किं नस्ततः' इति पृष्टः 'वृणीध्वम्' इत्युक्तैर्वृतश्च केषांचिद्देवानामिष्टकास्वध्यस्तरूपाणां ब्रह्मक्षत्रादिरूपाणां भूतानां 'भागम्', केषाञ्चित् 'आधिपत्यं' च तत्तदभिलाषाऽनुसारेण प्रदाय पश्चाद्देवसहायः सन् 'सर्वाणि भूतानि पाप्मनो मृत्योरस्पृणोत्' "स्पृ स्थितिबलनयोः ( धा. पा. स्वा. प. १३ )" बलवन्ति कृतवान् । यद्वा "स्पृ स्थितिचलनयोः" इति केषाञ्चित्पाठः । प्रविचालितवानित्यर्थः । प्रसङ्गात् तन्नाम निर्वक्ति—यद् अस्पृणोत् तस्मात् स्पृत इति । स्परणात्स्पृत इत्युक्तं भवति । 'तथैवैतत्' इत्यादि स्पष्टम् । तस्मात् सर्वास्विष्टकासु स्पृतं स्पृतमित्यनुवर्तते ॥ २ ॥

तत्र प्रथमेष्टकामन्त्रं विधाय व्याचष्टे—अग्नेर्भागोऽसीत्यादिना । हे इष्टके ! त्वं 'अग्नेः' देवस्य 'भागोऽसि' तथा दीक्षायाः वाग्देव्याः 'आधिपत्यम्' अधिपतित्वं तव, त्वं दीक्षास्वामिकेत्यर्थः । ब्रह्म स्पृतं त्रिवृत्स्तोम

---

१—दक्षिणां पूर्वयोरग्नेर्भाग इति । का. श्रौ. सू. १७।२।१६ ।

( द्वि ) इन्द्रस्य भागोऽसि । विष्णोराधिपत्यमितीन्द्राय भागं कृत्वा विष्णवऽआधिपत्यमकरोत्क्षत्रंᳬ स्पृतं पञ्चदश स्तोमऽइति क्षत्रं प्रजानां पञ्चदशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ४ ॥

( नृ ) नृचक्षसां भागोऽसि। धातुराधिपत्यमिति देवा वै नृचक्षसो देवेभ्यो भागं कृत्वा धात्रऽआधिपत्यमकरोज्जनित्रᳬ स्पृतᳬ सप्तदश स्तोमऽइति विड्वै जनित्रं विशं प्रजानाᳬ सप्तदशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ५ ॥

---

( २ ) " इन्द्रस्य भागोऽसि विष्णोराधिपत्यम् "–इति। इन्द्राय भागं कृत्वा विष्णव आधिपत्यमकरोत् । " क्षत्रं स्पृतं, पञ्चदशः स्तोमः "–इति। क्षत्रं प्रजानां पञ्चदशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ४ ॥

( ३ ) " नृचक्षसां भागोऽसि धातुराधिपत्यम् "–इति। देवा वै नृचक्षसः । देवेभ्यो भागं कृत्वा धात्र आधिपत्यमकरोत् । " जनित्रं स्पृतं, सप्तदशः स्तोमः "–इति विड्वै जनित्रम्। विशं प्रजानां सप्तदशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ५ ॥

---

इति भागान्तरम्। अत्राध्यासाश्रयाणामिष्टकानामध्यस्यमानानां ब्रह्मक्षत्रादिभूतानां चाभेदस्य विवक्षितत्वात्तत्थं रूपमभिधीयते । प्रजानां भूतानां मध्ये 'ब्रह्म' ब्राह्मणजातिः ' स्पृतं ' पाप्मनो मृत्योः सकाशादपसारितम्। केन साधनेनेति तदुच्यते–त्रिवृत् स्तोम इति । ब्राह्मणानुसारेण विभक्तिविपरिणमयितव्या। तव स्वभूतेन त्रिवृता स्तोमेन। एवमुत्तरेष्टकामन्त्रा अपि योज्याः, तत्र दीक्षाशब्दस्योक्तार्थपरतामाह–वाग्वै दीक्षेति । वाग्देवताया दीक्षाभिमानिदेवतात्वाद्वा नियन्तव्यतया वाक्सम्बन्धाद्वा दीक्षा वागित्युच्यते । तामिष्टकाम् ' अग्नये भागं कृत्वा ' 'दीक्षायै' तस्या इष्टकाया ' आधिपत्यमकरोत् ' प्रजापतिः। भागान्तरं व्याख्यातुं " ब्रह्म स्पृतं त्रिवृत्स्तोमः " इत्यस्य विभक्तिविपरिणामः कृतः। " ब्रह्म प्रजानां त्रिवृता स्तोमेन पाप्मनो मृत्योरस्पृणोत् " इति । उक्तमिदम्। अत्र ब्रह्मणः त्रिवृत्स्तोमसंबन्धे प्राथम्यं बीजम्। प्रजापतिमुखात् सहोत्पत्तिर्वा कारणं त्रिवृद्ब्रह्मणोः सम्बन्धे । एवमुत्तरेषां मन्त्राणां ब्राह्मणान्यपि व्याख्यातव्यानि ॥ ३ ॥

तत्र किञ्चित् किञ्चिदभिधीयते–क्षत्रं स्पृतमिति[1] । ' क्षत्रम् ' क्षत्रियजातिः ॥ ४ ॥

नृचक्षसां भागोऽसीति[2]। तृतीयमन्त्रे–' देवा वै नृचक्षसः ' इति स्तूयते, तत्र नॄन् पुण्यपापकृतो मनुष्यान् साक्षितया चक्षते पश्यन्तीति नृचक्षसो देवा इत्यर्थः । विड् वै जनित्रमिति । जायत इति ' जनित्रम् ' ' विट् ' वैश्यजातिः; एतच्छूद्रस्याप्युपलक्षणम् । यद्वा सामान्येन विट्शब्दः प्रजामभिधत्ते ॥ ५ ॥

---

१–उत्तरामुत्तरयोरिन्द्रस्य भाग इति। का. श्रौ. सू. १७। २१९। २ उत्तरां दक्षिणयोर्नृचक्षसां भाग इति। का. श्रौ. सू. १७। २१८।

( न्मि ) मि॒त्रस्य॑ भा॒गो॑ऽसि । वरु॑णस्या॒धिप॑त्यमि॒ति प्रा॒णो वै मि॒त्रो॑ऽपा॒नो वरु॑णः प्रा॒णाय॑ भा॒गं कृ॒त्वाऽपा॒नाया॒धिप॑त्यमकरोद्दि॒वो वृ॒ष्टिर्वात॑ स्पृ॒तऽएकवि॒ꣳश स्तोम॒ऽइति॒ वृ॒ष्टिं च॒ वातं॑ च प्र॒जाना॑मेकवि॒ꣳशेन॒ स्तोमे॑न पा॒प्मनो॑ मृ॒त्योर॑स्पृणोत् ॥ ६ ॥

( द्व ) वसू॑नां भा॒गो॑ऽसि । रु॒द्राणा॑मा॒धिप॑त्यमि॒ति वसु॑भ्यो भा॒गं कृ॒त्वा रु॒द्रेभ्य॒ऽआधिप॑त्यमकरो॒च्चतु॑ष्पात्स्पृ॒तं च॑तुर्वि॒ꣳश स्तोम॒ऽइति॒ चतु॑ष्पात्प्र॒जानां॑ चतुर्वि॒ꣳशेन॒ स्तोमे॑न पा॒प्मनो॑ मृ॒त्योर॑स्पृणोत् ॥ ७ ॥

( दा ) आ॒दि॒त्यानां॑ भा॒गो॑ऽसि । म॒रुता॑मा॒धिप॑त्यमि॒त्या॒दि॒त्येभ्यो॑ भा॒गं कृ॒त्वा म॒रुद्भ्य॒ऽआधिप॑त्यमकरो॒द्गर्भाः॑ स्पृ॒ताः प॑ञ्चवि॒ꣳश स्तोम॒ऽइति॒ गर्भा॑न्प्र॒जानां॑ पञ्चवि॒ꣳशेन॒ स्तोमे॑न पा॒प्मनो॑ मृ॒त्योर॑स्पृणोत् ॥ ८ ॥

---

( ४ ) "मित्रस्य भागोऽसि वरुणस्याधिपत्यम्"–इति । प्राणो वै मित्रः, अपानो वरुणः । प्राणाय भागं कृत्वाऽपानायाधिपत्यमकरोत् । "दिवो वृष्टिर्वातः । स्पृतः, एकविंशः स्तोमः"–( वा. सं. १४ । २४ ) इति । वृष्टिं च वातं च प्रजानामेकविंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ६ ॥

( ५ ) "वसूनां भागोऽसि रुद्राणामाधिपत्यम्"–इति । वसुभ्यो भागं कृत्वा रुद्रेभ्य आधिपत्यमकरोत् । "चतुष्पात्स्पृतं, चतुर्विंशः स्तोमः"–इति । चतुष्पात्प्रजानां चतुर्विंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ७ ॥

( ६ ) "आदित्यानां भागोऽसि मरुतामाधिपत्यम्"–इति । आदित्येभ्यो भागं कृत्वा मरुद्भ्य आधिपत्यमकरोत् । "गर्भाः स्पृताः, पञ्चविंशः स्तोम"–इति । गर्भान्प्रजानां पञ्चविंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ८ ॥

---

मित्रस्य भागोऽसि वरुणस्याधिपत्यमिति[१] । अत्र 'प्राणो वै मित्रः,' 'अपानो वरुणः,' इति । मित् नाशब्दः; १ ततस्त्रायत इति मित्रः प्राणः । ऊर्ध्वं निर्गच्छन्तं प्राणमावृणोति, इति वरुणोऽपानः । दिवो वृष्टिर्वातः स्पृत इति । चतुर्थमन्त्रभागः । वाताभिप्रायेण स्पृत इति पुंल्लिङ्गता । अत्र वृष्टेर्वातस्य चोभयोः स्परणमिति व्याचष्टे–वृष्टिं च वातं चेति ॥ ६ ॥

चतुष्पात्स्पृतमिति[२] । अत्र चतुष्पादोपेतं पशुजातं 'स्पृतम्' इति सामान्याभिप्रायेण नपुंसकता ॥ ७–८ ॥

---

१–उत्तरामपरयोर्मित्रस्य भाग इति । का. श्रौ. सू. । १७ । २१७ ।
२–षट् प्रतिमंत्रं वसूनां भाग इति । का. श्रौ. सू. १७ । २२० ।

(ङ) अ॒दि॑त्यै भा॒गो॑ऽसि। पू॒ष्ण ऽआधि॑पत्यमि॒तीयं॒ वा ऽअदि॑तिर॒स्यै भा॒गं कृ॒त्वा पू॒ष्णऽआधि॑पत्यमकरो॒दोज॒ स्पृ॒तं त्रि॑ण॒व स्तोम॒ ऽइत्योजः॑ प्र॒जानां॑ त्रिण॒वेन॒ स्तोमे॑न पा॒प्मनो॑ मृ॒त्योर॑स्पृणोत्॥ ९॥

(ह्) दे॒वस्य॑ सवि॒तुर्भा॒गो॑ऽसि। बृह॒स्पते॑राधि॑पत्यमि॒ति दे॒वाय॑ सवि॒त्रे भा॒गं कृ॒त्वा बृह॒स्पत॑य ऽआधि॑पत्यमकरोत्स॒मीची॒र्दिशः॑ स्पृ॒ताश्च॑तुष्टो॒म स्तोम॒ऽ इति॒ सर्वा॒ दिशः॑ प्र॒जानां॑ चतुष्टो॒मेन॒ स्तोमे॑न पा॒प्मनो॑ मृ॒त्यो-र॑स्पृणोत्॥ १०॥

(ग्र) य॒वानां॑ भा॒गो॑ऽसि। (स्यु) अय॑वाना॒माधि॑पत्यमि॒ति पूर्व॑पक्षा॒ वै य॒वा ऽअप॑रपक्षा ऽअय॑वा॒स्ते ही॒दꣳ सर्वं॑ यु॒वते॒ चायु॒वते॑ च॒ पूर्व॑पक्षे॒भ्यो भा॒गं कृ॒त्वाऽप॑रपक्षे॒भ्य ऽआधि॑पत्यमकरोत्प्र॒जा स्पृ॒ताश्च॑तु॒श्च॒त्वारि॒ꣳश स्तोम॒ ऽइति॒ सर्वाः॑ प्र॒जाश्च॑तुश्चत्वारि॒ꣳशेन॒ स्तोमे॑न पा॒प्मनो॑ मृ॒त्यो-र॑स्पृणोत्॥ ११॥

---

(७) "आदित्यै भागोऽसि पूष्ण आधिपत्यम्"-इति। इयं वाऽआदितिः। अस्यै भागं कृत्वा पूष्ण आधिपत्यमकरोत्। "ओजः स्पृतं, त्रिणवः स्तोमः"-इति। ओजः प्रजानां त्रिणवेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्॥ ९॥

(८) "देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यम्"-इति। देवाय सवित्रे भागं कृत्वा बृहस्पतय आधिपत्यमकरोत्। "समीचीर्दिशः स्पृताः, चतुष्टोमः स्तोमः"-(वा. सं. १४। २९)-इति। सर्वा दिशः प्रजानां चतुष्टोमेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्॥ १०॥

(९) "यवानां भागोऽस्ययवानामाधिपत्यम्"-इति। पूर्वपक्षा वै यवाः; अपरपक्षा अयवाः। ते हीदं सर्वं युवते चायुवते च। पूर्वपक्षेभ्यो भागं कृत्वाऽपरपक्षेभ्य आधिपत्यमकरोत्। "प्रजाः स्पृताः, चतुश्चत्वारिंशः स्तोमः"-इति। सर्वाः प्रजाश्चतुश्चत्वारिंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्॥ ११॥

---

ओजः स्पृतमिति। ओजो बलं तत्कारणमष्टमो धातुर्वा। "ओजो नामाष्टमो धातुः" इत्याचार्यस्मरणात्॥ ९॥

समीचीर्दिशः स्पृता इति। सामान्येन तिर्यक्त्वेन चावर्तमाना इत्यर्थः। उक्तं चतुष्टोमलक्षणं चतुस्तोत्रीयावृच्येति॥ १०॥

यवायवशब्दयोः पूर्वपक्षापरपक्षवाचकत्वमुपपादयति-ते हीदं सर्वं युवते चायुवते चेति। 'ते' पूर्वपक्षा अपरपक्षाश्च क्रमेण 'इदं सर्वम्' जगत् 'युवते चायुवते च' यथाक्रमं मिश्रणामिश्रणं कुर्वन्ति। अयुवत इत्यत्र "अमानोनाः प्रतिषेधे"-इति स्मरणात् 'अ' इति प्रतिषेधवाचि भिन्नं पदम्। पूर्वपक्षेषु चन्द्रस्य

---

१-'अ' इति "संबोधनेऽधिक्षेपे निषेधे च" इति तत्त्वबोधिनी। "अभावे नह्यनोनापि" इत्यमरः।

(१०) ऋभूणां भागोऽसि । विश्वेषां देवानामाधिपत्यमित्यृभुभ्यो भागं कृत्वा विश्वेभ्यो देवेभ्य ऽआधिपत्यमकरोद्भूतᳬं स्पृतं त्रयस्त्रिᳬंश स्तोमऽइति सर्व्वाणि भूतानि त्रयस्त्रिᳬंशेन स्तोमेन पाप्मनो मृत्यो-रस्पृणोत्तथैवैतद्यजमानः सर्व्वाणि भूतानि त्रयस्त्रिᳬंशेन स्तोमेन पाप्मनो मृत्यो स्पृणोति ॥ १२ ॥

ता वाऽएता दशेष्टकाऽउपदधाति । दशाक्षरा विराड् विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणाऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तदेतानि सर्व्वाणि भूतानि पाप्मनो मृत्यो स्पृणोति ॥ १३ ॥

---

(१०) "ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यम्"—इति। ऋभुभ्यो भागं कृत्वा विश्वेभ्यो देवेभ्य आधिपत्यमकरोत्। "भूतं स्पृतं, त्रयस्त्रिंशः स्तोमः"—(वा. सं. १४। २६) इति। सर्वाणि भूतानि त्रयस्त्रिंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्। तथैवैतद्यजमानः सर्वाणि भूतानि त्रयस्त्रिंशेन स्तोमेन पाप्मनो मृत्योः स्पृणोति ॥ १२ ॥

ता वा एता दशेष्टका उपदधाति। दशाक्षरा विराट् विराडग्निः। दश दिशः। दिशोऽग्निः। दश प्राणाः। प्राणा अग्निः। यावानग्निर्यावत्यस्य मात्रा—तावतैव तदेतानि सर्वाणि भूतानि पाप्मनो मृत्योः स्पृणोति ॥ १३ ॥

---

कलावृद्धिसद्भावात्, सर्वजगदाप्यायनस्य च तदधीनत्वाद्, 'युवते' इत्युक्तम्। उक्तवैपरीत्यात् चायुवत इति। यद्वा मासर्तुसंवत्सरादिरूपस्य कालस्य पूर्वापरपक्षावृत्तिरूपत्वात् 'ते' पूर्वापरपक्षरूपाः कालविशेषाः इदं सर्वमुत्पत्त्यवस्थापन्नं युवते, विनाशावस्थापन्नं वियुवते चेत्यर्थः ॥ ११ ॥

इत्थं भूतानां मध्ये ब्रह्मक्षत्रादिभूतैकैकदेशमभिधाय, अन्ते सर्वं भूतजातं सङ्गृह्याभिधत्ते—भूतं स्पृतं त्रयस्त्रिंशः। स्तोम इति। भूतशब्दस्य भविष्यदादिप्रतियोगिकाले प्रसिद्धेरत्राभिमतमर्थमाह—सर्वाणि भूतानीति। एतदेवाभिप्रेत्य 'विश्वेभ्यो देवेभ्य आधिपत्यमकरोत्' इत्यन्ते विश्वेऽपि देवा उपात्ताः "ये देवासो दिव्येकादशस्थ"—(वा. सं. ७। १९) इत्यादिमन्त्रेषु त्रयस्त्रिंशत्सङ्ख्याकानां देवानामभिधानात् "त्रयस्त्रिंशद्वै सर्वा देवताः" इति श्रुतेश्च सर्वेषां देवानामेष्वन्तर्भावादुचितस्त्रयस्त्रिंशस्तोमोऽन्ते निर्दिष्ट इति वेदितव्यम्। इत्थं प्रजापत्यनुष्ठितमर्थं दृष्टान्तत्वेन प्रदर्श्य दार्ष्टान्तिकतया यजमानेऽपि योजयति—तथैवैतद्यजमानः सर्वाणि भूतानि त्रयस्त्रिंशेन स्तोमेन पाप्मनो मृत्योः स्पृणोतीति। अन्तिमवाक्ये 'तथैवैतत्' इत्यभिधानम्, इतरवाक्येष्वप्येवं द्रष्टव्यमित्यवगमयितुम्। यद्वाऽस्य सर्वोक्तार्थपरत्वादस्मिन्नेवाभिधानं कृतमिति ॥ १२॥

अथ सङ्ख्यां स्तौति—ता वा एता दशेष्टका उपदधाति दशाक्षरा विराडित्यादिना। कृत्स्नस्य चितिरूपस्याग्नेर्विराडात्मकत्वादन्येकदेशस्याप्यग्नित्वादनन्तरोक्तस्पृत्संज्ञकेष्टकादशकसाध्यत्वाद्वा 'विराडग्निः,' । 'दिशोऽग्निः' इति सर्वासु दिक्षु चीयमानत्वात्। "अग्निर्देवेभ्यो न्यलीयत स दिशोऽनुप्राविशत्" इति श्रुतिप्रसिद्ध-

( त्यु ) अथर्तव्ये उपदधाति । ( त्पृ ) ऋतवऽएते यदृतव्येऽऋतूनेवैतदुपदधाति सहश्च सहस्यश्च हैमन्तिकावृतूऽइति नामनीऽएनयोरेते नामभ्यामेवैनेऽएतदुपदधाति द्वेऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥ १४ ॥

तद्यदेतेऽअत्रोपदधाति । संव्वत्सरऽएषोऽग्निरिमऽउ लोकाः संव्वत्सरस्तस्य यदूर्ध्वमन्तरिक्षादर्व्वाचीनं दिवस्तदस्यैषा चतुर्थी चितिस्तद्वस्य हेमन्त ऽऋतुस्तद्यदेतेऽअत्रोपदधाति यदेवास्यैतेऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतेऽअत्रोपदधाति ॥ १५ ॥

यद्वेवैतेऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः संव्वत्सर ऽउ प्रजापतिस्तस्य यदूर्ध्वं मध्यादवाचीनꣳ शीर्ष्णस्तदस्यैषा चतुर्थी चितिस्तद्वस्य

---

अथ ऋतव्येष्टकोपधानम् ( २ ) ।

अथर्तव्ये उपदधाति । ऋतव एते–यदृतव्ये । ऋतूनेवैतदुपदधाति । "सहश्च सहस्यश्च हैमन्तिकावृतू"–( वा. सं. १४–२७ ) इति । नामनी एनयोरेते । नामभ्यामेवैने एतदुपदधाति । द्वे इष्टके भवतः । द्वौ हि मासावृतुः । सकृत्सादयति । एकं तदृतुं करोति ॥ १४ ॥

तद्यदेते अत्रोपदधाति । संवत्सर एषोऽग्निः । इम उ लोकाः संवत्सरः । तस्य यदूर्ध्वमन्तरिक्षाद्, अर्वाचीनं दिवः–तदस्यैषा चतुर्थी चितिः । तद्वस्य हेमन्त ऋतुः । तद्यदेते अत्रोपदधाति–यदेवास्यैते आत्मनः–तदस्मिन्नेतत्प्रतिदधाति । तस्मादेते अत्रोपदधाति ॥ १५ ॥

यद्वेवैते अत्रोपदधाति । प्रजापतिरेषोऽग्निः । संवत्सर उ प्रजापतिः । तस्य यदूर्ध्वं मध्याद्, अवा-

---

दिगन्तप्रवेशाद्वा दशसंख्येष्टकासाध्यत्वाद्वा 'दिशोऽग्निः' । पूर्वत्र "स्तोमानुपदधाति प्राणा वै स्तोमाः" इति प्रकृत्य "ये वै ते प्राणा ऋषय एतां चतुर्थीं चितिमपश्यंस्तानेवैतदुपदधाति" इति च स्तोमेष्टकानां प्राणत्वेनाभिधानात्तदिष्टकासाध्यस्याग्नित्वात् 'प्राणा अग्निः' इत्युक्तम् । 'यावानग्निः'–इति विराट् दिक्प्राणैरभिन्नत्वाद् यावान् विराडादिप्रमाणक इत्यर्थः । 'यावत्यस्य मात्रा'–इति विराड्–दिक्प्राणत्वेन स्तुतस्याग्नेर्या चितिमात्रा विराडादिद्वारिका दशसङ्ख्यात्मिकेत्यर्थः । स्पष्टमन्यत् ॥ १३ ॥

अथर्तव्येऽउपदधातीत्यादिकम् ऋतव्येष्टकाब्राह्मणं पूर्वचितिवद्व्याख्येयम् । सहश्च सहस्यश्च हैमन्तिकावृतू इति । एतावानेव भेदः, 'सहो' मार्गशीर्षः, 'सहस्यः' पौषमासः ॥ १४ ॥

तद्यदेते अत्रोपदधाति संवत्सर एषोऽग्निरिम उ लोकाः संवत्सर इति, यद्वेवैते अत्रोपदधाति

---

१–ऋतव्ये सहश्च सहस्यश्चेति । का० श्रौ० सू० १७ । २२१ ।

हेमन्तऽऋतुस्तद्यदेतेऽअत्रोपदधाति यदेवास्यैतेऽआत्मनस्तदस्मिन्ने-तत्प्रतिदधाति तस्मादेतेऽअत्रोपदधाति ॥ १६ ॥

इति द्वितीयप्रपाठके पंचमं ब्राह्मणम् ॥ ८ । २ । ५ ॥ ( ४ । २ ) ॥

अथ सृष्टीरुपदधाति । ( त्ये ) एतद्वै प्रजापतिः सर्व्वाणि भूतानि पाप्मनो मृत्योर्मुक्त्वाऽकामयत प्रजाः सृजेय प्रजायेयेति ॥ १ ॥

स प्राणानब्रवीत् । ( यु ) युष्माभिः सहेमाः प्रजाः प्रजनयानीति ते वै केन स्तोष्यामहऽइति मया चैव युष्माभिश्चेति तथेति ते प्राणैश्चैव

---

चीनं शीर्ष्णः,–तदस्यैषा चतुर्थी चितिः । तद्वस्य हेमन्त ऋतुः । तद्यदेते अत्रोपदधाति–यदेवास्यैते आत्मनः । तदस्मिन्नेतत्प्रतिदधाति । तस्मादेते अत्रोपदधाति ॥ १६ ॥

अथ सृष्टीरुपदधाति । एतद्वै प्रजापतिः सर्वाणि भूतानि पाप्मनो मृत्योर्मुक्त्वाऽकामयत–प्रजाः सृजेय, प्रजायेयेति ॥ १ ॥

स प्राणानब्रवीत्–' युष्माभिः सहेमाः प्रजाः प्रजनयानि ' इति । ते वै–केन स्तोष्यामह इति ।

---

प्रजापतिरेषोऽग्निः संवत्सर उ प्रजापतिः इति चार्थवादद्वयेन प्रजापतेर्लोकत्रयात्मकं संवत्सरात्मकं चेति रूपद्वयं यत्, यच्च तस्य विश्लिष्टमङ्गं तत्प्रतिसन्धानस्थानीयमिति ऋतव्ययोः स्तुतिः कृतेति तात्पर्यार्थः॥ १९॥ १६॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
अष्टमे काण्डे चतुर्थेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ८–४–२ ) ॥

अथ सृष्टिसंज्ञकाः सप्तदशेष्टका विधाय स्तौति –अथ सृष्टीरुपदधात्येतद्वै प्रजापतिरित्यादिना । कथमासां सृष्टिशब्दवाच्यतेत्याकाङ्क्षायां स्वयमेवोत्तरत्र " तद्यदसृजत तस्मात्सृष्टयः "–( श. प. ८।४।३।२० ) इति वक्ष्यते। व्याकरणप्रसिद्धया "तद्वानसाम्" (पा.सू.४।४।१२५) इति सृष्टिशब्दोपेतमन्त्रैरुपधेयत्वात् सृष्टयः। यद्यपि " एकयाऽस्तुवत, सप्तविंशत्याऽस्तुवत "–( श. प. ८।४।३।३।१६ । ) इत्यादौ सृष्टिशब्दो नास्ति तथापि धातुमात्रं सृष्टसृष्टिसमूहे वर्त्तत इति । सर्वासां सृष्टिशब्दवाच्यत्वं द्रष्टव्यम् । पुरा ' प्रजापतिः ' पूर्वोक्तप्रकारेण ' सर्वाणि भूतानि ' ब्रह्मक्षत्रादीनि ' पाप्मनो मृत्योः '–सकाशात् ' मुक्त्वा ' सर्वभूतानां स्वव्यक्तिरूपत्वाद्भूतसमष्टिरूपः स्वयं मृत्योः सकाशान्मुक्तः सन्नित्यर्थः । यद्वा भूतानां गर्भरूपावस्थानस्योक्तत्वात्तानि स्वयं ' मुक्त्वा ' इत्युच्यते । स च ' अकामयत, ' किमिति ? ' प्रजाः सृजेय ' सृष्टाभिस्ताभिः स्वयमेव ' प्रजायय ' इत्यकामयत ॥ १ ॥

' सः ' स्वयमेक एवासक्तः सन् ' प्राणान् ' ' युष्माभिः ' सहितः प्रजायेय इति । ' अब्रवीत् ' प्रजापतेः स्थूलशरीरत्वात्प्राणाभावे केवलस्य शरीरस्य निर्वाहाभावात्सृज्यमानस्य प्राणिजातस्य शरीरप्राणसङ्घातात्मकत्वात्प्राणसाहाय्यमपेक्षितवानित्यभिप्रायः । इत्थं सृष्टिपुरुषसामग्रीमभिधाय सृष्टेः सामर्थ्यसव्यपेक्षत्वात् , तस्याश्च

---

१–रेतःसिग्वेलायां च सप्तदश सर्व्वतो नव दक्षिणेनानूकं सृष्टीरेकयाऽस्तुवतेति प्रतिमन्त्रम् । का. श्रौ. सू. । १७ । २२३ ।

प्रजापतिना चास्तुवत यदु ह किं च देवाः कुर्वते स्तोमेनैव तत्कुर्वते यज्ञो वै स्तोमो यज्ञेनैव तत्कुर्वते तस्मादु सर्वास्वेवास्तुवतास्तुवतेत्यनुवर्तते ॥ २ ॥

( त८ ) एकयाऽस्तुवतेति । वाग्वाऽएका वाचैव तदस्तुवत प्रजाऽअधीयन्तेति प्रजाऽअत्राधीयन्त प्रजापतिरधिपतिरासीदिति प्रजापतिरत्राधिपतिरासीत् ॥ ३ ॥

---

मया चैव युष्माभिश्चेति । तथेति । ते प्राणैश्चैव प्रजापतिना चास्तुवत । यदु ह किंच देवाः कुर्वते–स्तोमेनैव तत्कुर्वते । तस्मादु सर्वास्वेवास्तुवतास्तुवतेत्यनुवर्तते ॥ २ ॥

( १ ) "एकयाऽस्तुवत"–इति । वाग्वाऽएका । वाचैव तदस्तुवत । "प्रजाऽअधीयन्त"–इति । प्रजाऽअत्राधीयन्त । "प्रजापतिरधिपतिरासीत्"–इति । प्रजापतिरत्राधिपतिरासीत् ॥ ३ ॥

---

कर्मजन्यत्वात्, तद्रूपां सामग्रीं दर्शयति–ते वै केन स्तोष्यामह इति । अब्रुवन्निति शेषः । स्तुतेरावश्यकत्वं स्वयमेव वक्ष्यति । अतोऽत्र स्वव्यतिरिक्तस्य कस्याप्यभावादुद्गात्रादिस्थानीयेन केन स्तोष्यामह इति पृष्टवन्त इत्यर्थः । अलमन्यैरस्मद्व्यतिरिक्तैः परं 'मया च युष्माभिश्च स्तोष्यामहे' इति प्रजापतिरब्रवीत् । 'तथेति' प्राणा अङ्गीकृत्य 'ते' प्राणप्रजापतयः 'प्राणैः' स्वस्वरूपेण 'प्रजापतिना चास्तुवत' स्वात्मानमेव देवत्वादन्यतयाऽभिधानं स्वयमेव कर्तारः स्वैरेव कारणभूतैरस्तुवतेत्यर्थः । स्तोत्रं त्रिवृदादिस्तोमसाध्यम् स च स्तोमः किमर्थमपेक्ष्यत ? इत्यत आह–यदु ह किं च देवाः कुर्वत इति । यज्ञो वै स्तोम–इति । स्तोमप्राधान्यात् ज्योतिष्टोमादियज्ञो नाम स्तोम एवेत्यर्थः अस्तुवतास्तुवतेत्यनुवर्तत इति । तस्मात्सर्वस्या विकृतेः स्तोमसाध्यत्वात्सर्वास्विष्टकासु तत्तत्सृष्ट्यभिधायकेष्टकामन्त्र इति यावत् ॥ २ ॥

तत्र प्रथमेष्टकामन्त्रं विधाय व्याचष्टे–वाग्वा एकेत्यादिना । यद्यपि परापश्यन्त्यादिभेदेन बहुविधा तथापि वागात्मना एकत्वात् 'वाग्वा एका' इत्याह । 'तत्' तेन 'एकयाऽस्तुवत' इति मन्त्रपाठेन वाच एकत्वात् साक्षाद् 'वाचैवास्तुवत' । यद्वा तदा प्रजासृष्टिसमये 'वाचैवास्तुवत, अतो मन्त्र 'एकयाऽस्तुवत' इत्याहेत्यर्थः । एवमुत्तरत्रापि व्याख्येयम् । 'एकया' स्तोत्रियया 'अस्तुवत' एकेन स्तोमेनास्तुवतेत्यर्थः । सैवैका स्तोत्रिया वागात्मना स्तुता भवति । एवं 'तिसृभिरस्तुवत' इत्यादयो व्याख्येयाः । भागान्तरमुपादाय व्याचष्टे–प्रजा अधीयन्तेति प्रजा अत्राधीयन्तेति । 'अत्र' सृष्टिप्रस्तावे 'प्रजाः' धारिता आसन् । दधातेः ( धा. पा. जु. उ. १० ) लङ् । बहुवचने कर्मणि रूपम् । अतः 'प्रजा अधीयन्त' इति मन्त्र आहेत्यर्थः । भागान्तरमुदाहृत्य व्याचष्टे–प्रजापतिरधिपतिरासीदिति । 'अत्र' प्रजासृष्टौ 'प्रजापतिः' प्रजास्वाधिपत्यवान् 'आसीत्' तस्मान्मन्त्रः 'प्रजापतिरधिपतिरासीत्' इत्याहेत्यर्थः । एवमुत्तरेषां षोडशमन्त्राणां तद्ब्राह्मणानां चापि व्याख्यानं द्रष्टव्यम् । 'अधीयन्त' इत्यस्य स्थाने 'असृज्यन्त' इति विशेषः । स च तत्र तत्र विशेषोऽभिधास्यते ॥ ३ ॥

( त्ति ) तिसृभिरस्तुवतेति । त्रयो वै प्राणाः प्राणऽ उदानो व्यानस्तैरेव तदस्तुवत ब्रह्माऽसृज्यतेति ब्रह्मात्रासृज्यत ब्रह्मणस्पतिरधिपतिरासीदिति ब्रह्मणस्पतिरत्राधिपतिरासीत् ॥ ४ ॥

( त्प ) पञ्चभिरस्तुवतेति । यऽएवेमे मनःपञ्चमाः प्राणास्तैरेव तदस्तुवत भूतान्यसृज्यन्तेति भूतान्यत्रासृज्यन्त भूतानां पतिरधिपतिरासीदिति भूतानां पतिरत्राधिपतिरासीत् ॥ ५ ॥

( त्स ) सप्तभिरस्तुवतेति । यऽएवेमे सप्त शीर्षन्प्राणास्तैरेव तदस्तुवत सप्तऽऋषयोऽसृज्यन्तेति सप्तर्षयोऽत्रासृज्यन्त धाताऽधिपतिरासीदिति धाताऽत्राधिपतिरासीत् ॥ ६ ॥

( त्र ) नवभिरस्तुवतेति । नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तैरेव तदस्तुवत पितरोऽसृज्यन्तेति पितरोऽत्रासृज्यन्तादितिरधिपत्न्यासीदित्यदितिरत्राधिपत्न्यासीत् ॥ ७ ॥ ( शतम् ४५०० )

---

( २ ) " तिसृभिरस्तुवत "–इति । त्रयो वै प्राणाः–प्राणः, उदानः, व्यानः । तैरेव तदस्तुवत । " ब्रह्मासृज्यत "–इति । ब्रह्मात्रासृज्यत । " ब्रह्मणस्पतिरधिपतिरासीत् "–इति । ब्रह्मणस्पतिरत्राधिपतिरासीत् ॥ ४ ॥

( ३ ) " पञ्चभिरस्तुवत "–इति । यऽएवेमे मनःपञ्चमाः प्राणास्तैरेव तदस्तुवत । " भूतान्यसृज्यन्त "–इति । भूतान्यत्रासृज्यन्त । " भूतानां पतिरधिपतिरासीत् "–इति । भूतानां पतिरत्राधिपतिरासीत् ॥ ५ ॥

( ४ ) " सप्तभिरस्तुवत "–इति । यऽएवेमे सप्त शीर्षन्प्राणास्तैरेव तदस्तुवत । " सप्तऽऋषयोऽसृज्यन्त "–इति । सप्तर्षयोऽत्रासृज्यन्त । "धाताऽधिपतिरासीत्"–( वा. सं. १४। २८ ) इति । धाताऽत्राधिपतिरासीत् ॥ ६ ॥

( ५ ) " नवभिरस्तुवत "–इति । नव वै प्राणाः–सप्त शीर्षन्, अवाञ्चौ द्वौ । तैरेव तदस्तुवत । " पितरोऽसृज्यन्त "–इति । पितरोऽत्रासृज्यन्त । " अदितिरधिपत्न्यासीत् "–इति । अदितिरत्राधिपत्न्यासीत् ॥ ७ ॥

---

ब्रह्मासृज्यत इत्यत्र सर्वसृष्टिसाधनभूतो वेदराशिः ' ब्रह्म ' इत्युच्यते । ' ब्रह्मणस्पतिः ' तत्पालकश्च चतुर्वक्त्रः, यद्वा उत्तरत्र ' पञ्चदशभिरस्तुवत ' इत्यत्र पञ्चदशेन स्तोमेन क्षत्रसृष्टेरभिधास्यमानत्वादत्र त्रिवृत्स्तोमेन ब्राह्मणजातिर्विवक्षिता । तत्र ब्रह्मणस्पतिरुच्यते "आग्नेयो वै ब्राह्मणः" इति (श.प.११।५।४।१२)श्रुतेः ॥४॥

" पञ्चभिरस्तुवत " इत्यत्र ' य एवेमे मनःपञ्चमाः प्राणाः ' इति श्रूयते; तत्र मन एकम्, इमे पूर्वोक्ताः वाक्प्राणोदानव्यानाश्चत्वार इत्यवगन्तव्यम । चक्षुःश्रोत्रनासारन्ध्रगताः षट् प्राणाः, वदनस्थ एक इति सप्त

( द्वे ) एकादशभिरस्तुवतेति । दश प्राणाऽआत्मैकादशस्तेनैव तदस्तुवतऽऋतवोऽसृज्यन्तेत्यृतवोऽत्रासृज्यन्तार्तवाऽ अधिपतयऽ आसन्नित्यार्तवाऽ अत्राधिपतयऽ आसन् ॥ ८ ॥

( संत्र ) त्रयोदशभिरस्तुवतेति । दश प्राणा द्वे प्रतिष्ठेऽआत्मा त्रयोदशस्तेनैव तदस्तुवत मासाऽ असृज्यन्तेति मासाऽ अत्रासृज्यन्त संवत्सरोऽधिपतिरासीदिति संवत्सरोऽत्राधिपतिरासीत् ॥ ९ ॥

( तप ) पञ्चदशभिरस्तुवतेति । दश हस्त्याऽ अङ्गुलयश्चत्वारि दोर्बाहवाणि यदूर्ध्वं नाभेस्तत्पञ्चदशं तेनैव तदस्तुवत क्षत्रमसृज्यतेति क्षत्रमत्रासृज्यतेन्द्रोऽधिपतिरासीदितीन्द्रोऽत्राधिपतिरासीत् ॥ १० ॥

( त्स ) सप्तदशभिरस्तुवतेति । दश पाद्या ऽअङ्गुलयश्चत्वार्यूर्वष्ठी-

---

( ६ ) " एकादशभिरस्तुवत "–इति । दश प्राणाः, आत्मैकादशः । तेनैव तदस्तुवत । " ऋतवोऽसृज्यन्त "–इति । ऋतवोऽत्रासृज्यन्त । "आर्तवा अधिपतय आसन् "–इति । आर्तवा अत्राधिपतय आसन् ॥ ८ ॥

(७) "त्रयोदशभिरस्तुवत"–इति। दश प्राणाः, द्वे प्रतिष्ठे, आत्मा त्रयोदशः। तेनैव तदस्तुवत । " मासा असृज्यन्त "–इति । मासा अत्रासृज्यन्त । "संवत्सरोऽधिपतिरासीत्"–( वा. सं. १४ । २९ ) इति । संवत्सरोऽत्राधिपतिरासीत् ॥ ९ ॥

(८) " पञ्चदशभिरस्तुवत "–इति । दश हस्त्या अंगुलयः, चत्वारि दोर्बाहवाणि, यदूर्ध्वं नाभेः तत्पञ्चदशम् । तेनैव तदस्तुवत " क्षत्रमसृज्यत "–(वा. सं. १४।२९) इति । क्षत्रमत्रासृज्यत । " इन्द्रोऽधिपतिरासीत् "–इति । इन्द्रोऽत्राधिपतिरासीत् ॥ १० ॥

( ९ ) "सप्तदशभिरस्तुवत"–इति । दश पाद्या अंगुलयः, चत्वार्यूर्वष्ठीवानि, द्वे प्रतिष्ठे,

---

शीर्षण्याः प्राणाः । सप्त ऋषय इति । भरद्वाजः कश्यपोऽत्रिर्गौतमो विश्वामित्रो जमदग्निर्वसिष्ठः सप्तर्षयः । अवाञ्चाविति । मलमूत्रद्वारस्थावित्यर्थः । ' पितरः ' अग्निष्वात्ताः, बर्हिषदश्च ' असृज्यन्त ' । ' अदितिः ' देवमाता अदीनत्वात् सा पितॄणाम् ' अधिपत्न्यासीत् ' ॥ ६–७ ॥

दश प्राणा इति । " नाभिर्दशमी " इति श्रुत्यन्तरात् नाभिसहिताः पूर्वोक्ता दश ' आत्मा ' देहः स चैकादशः । ' आर्तवाः ' ऋत्वभिमानिदेवाः । द्वे प्रतिष्ठे इति । द्वौ पादावित्यर्थः । पञ्चदशभिरस्तुवत इति । अत्र हस्तद्वयगता दश अंगुलयः, चत्वारि दोर्बाहवाणि दोर्द्वयम्, बाहुद्वयमिति चत्वारीत्यर्थः । नाभेरुपरिष्टाद्भागः सर्वोऽपि पञ्चदशः । ' क्षत्रम् ' क्षत्रियजातिस्तस्याः ' पतिः ' ' इन्द्र आसीत् ' ॥ ८–१० ॥

सप्तदशभिरस्तुवतेति । अत्र ' पाद्याः ' पादयोर्भवाः ' अंगुलयः दश, ' ' ऊर्वष्ठीवानि चत्वारि ',

वानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तदशं तेनैव तदस्तुवत ग्राम्याः पशवोऽसृज्यन्तेति ग्राम्याः पशवोऽत्रासृज्यन्त बृहस्पतिरधिपतिरासीदिति बृहस्पतिरत्राधिपतिरासीत् ॥ ११ ॥

( न्न ) नवदशभिरस्तुवतेति । दश हस्त्याऽ अङ्गुलयो नव प्राणास्तैरेव तदस्तुवत शूद्रार्यावसृज्येतामिति शूद्रार्यावत्रासृज्येतामहोरात्रेऽअधिपत्नीऽआस्तामित्यहोरात्रेऽअत्राधिपत्नीऽआस्ताम् ॥ १२ ॥

( मु ) एकविꣳशत्याऽस्तुवतेति । दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशस्तेनैव तदस्तुवतैकशफाः पशवोऽसृज्यन्तेत्येकशफाः पशवोऽत्रासृज्यन्त वरुणोऽधिपतिरासीदिति वरुणोऽत्राधिपतिरासीत् ॥ १३ ॥

( त्रु ) त्रयोविꣳशत्याऽस्तुवतेति । दश हस्त्या ऽअङ्गुलयो दश

---

यदवाङ्नाभेस्तत्सप्तदशम् । तेनैव तदस्तुवत । " ग्राम्याः पशवोऽसृज्यन्त "–इति । ग्राम्याः पशवोऽत्रासृज्यन्त । " बृहस्पतिरधिपतिरासीत् "–( वा. सं. १४ । २९ ) इति । बृहस्पतिरत्राधिपतिरासीत् ॥ ११ ॥

( १० ) "नवदशभिरस्तुवत"–इति । दश हस्त्या अंगुलयो, नव प्राणाः, तैरेव तदस्तुवत । "शूद्रार्यावसृज्येताम्"–इति । शूद्रार्यावत्रासृज्येताम् । "अहोरात्रे अधिपत्नी आस्ताम्"–इति । अहोरात्रे अत्राधिपत्नी आस्ताम् ॥ १२ ॥

( ११ ) " एकविंशत्याऽस्तुवत "–इति । दश हस्त्या अंगुलयो, दश पाद्याः, आत्मैकविंशः, तेनैव तदस्तुवत । "एकशफाः पशवोऽसृज्यन्त"–इति । एकशफाः पशवोऽत्रासृज्यन्त । " वरुणोऽधिपतिरासीत् "–इति । वरुणोऽत्राधिपतिरासीत् ॥ १३ ॥

( १२ ) " त्रयोविंशत्याऽस्तुवत "–इति । दश हस्त्या अंगुलयो, दश पाद्याः, द्वे प्रतिष्ठे,

---

ऊरुद्वयम्, अष्ठीवद्द्वयं चेति भावः। अष्ठीवच्छब्देन जानुमण्डलभाग उच्यते । ' द्वे प्रतिष्ठे ' द्वौ पादौ । ' नाभेः ' अधोभागः सप्तदशसङ्ख्यापूरणः । ' ग्राम्याः पशवः ' गोमहिषाजादयः ॥ ११ ॥

शूद्रार्यावसृज्येतामिति । शूद्रः प्रसिद्धः, ' अर्यः ' वैश्यजातिः ॥ १२ ॥

' एकशफाः पशवः ' गर्दभाश्वादयः । " अप्सुयोनिर्वा अश्वः " इति श्रुतेः अपां च वरुणस्वामिकत्वादेकशफानां ' वरुणोऽधिपतिरासीत् ' इत्युक्तम् । एवं सर्वत्र यथासम्भवमूहनीयम् ॥ १३ ॥

' क्षुद्राः पशवः ' अजाविप्रभृतयः, तेषां ' पूषा ' पुष्टयभिमानी देवः ' अधिपतिः ' स्वामी इत्यभिप्रायः ॥ १४ ॥

पाद्या द्वे प्रतिष्ठेऽआत्मा त्रयोविᳬंशस्तेनैव तदस्तुवत क्षुद्राः पशवोऽसृज्यन्तेति क्षुद्राः पशवोऽत्रासृज्यन्त पूषाऽधिपतिरासीदिति पूषाऽत्राधिपतिरासीत् ॥ १४ ॥

( त्पु ) पञ्चविᳬंशत्याऽस्तुवतेति । दश हस्त्या ऽअङ्गुलयो दश पाद्याश्चत्वार्यङ्गान्यात्मा पञ्चविᳬंशस्तेनैव तदस्तुवतारण्याः पशवोऽसृज्यन्तेत्यारण्याः पशवोऽत्रासृज्यन्त वायुरधिपतिरासीदिति वायुरत्राधिपतिरासीत् ॥ १५ ॥

( त्स ) सप्तविᳬंशत्याऽस्तुवतेति । दश हस्त्याऽ अङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि द्वे प्रतिष्ठेऽआत्मा सप्तविᳬंशस्तेनैव तदस्तुवत द्यावापृथिवी व्यैतामिति द्यावापृथिवीऽअत्र व्यैतां वसवो रुद्रा ऽआदित्याऽअनुव्यायन्निति वसवो रुद्रा ऽआदित्या ऽअत्रानुव्यायंस्तऽएवाधिपतयऽआसन्निति तऽ उऽ एवात्राधिपतयऽआसन् ॥ १६ ॥

---

आत्मा त्रयोविंशः, तेनैव तदस्तुवत । " क्षुद्राः पशवोऽसृज्यन्त "–इति । क्षुद्राः पशवोऽत्रासृज्यन्त । " पूषाऽधिपतिरासीत् "–इति । पूषाऽत्राधिपतिरासीत् ॥ १४ ॥

( १३ ) "पञ्चविंशत्याऽस्तुवत"–इति । दश हस्त्या अंगुलयो, दश पाद्याः, चत्वार्यङ्गानि, आत्मा पञ्चविंशः । तेनैव तदस्तुवत । "आरण्याः पशवोऽसृज्यन्त"–इति । आरण्याः पशवोऽत्रासृज्यन्त । "वायुरधिपतिरासीत्"–(वा. सं. १४।३०) इति । वायुरत्राधिपतिरासीत्॥ १५॥

(१४) " सप्तविंशत्याऽस्तुवत"–इति । दश हस्त्या अंगुलयो, दश पाद्याः, चत्वार्यङ्गानि, द्वे प्रतिष्ठे, आत्मा सप्तविंशः । तेनैव तदस्तुवत । " द्यावापृथिवी व्यैताम् "–इति । द्यावापृथिवीऽअत्र व्यैताम् । "वसवो रुद्रा आदित्या अनुव्यायन्"–इति । वसवो रुद्रा आदित्या अत्रानुव्यायन् । " तऽएवाधिपतय आसन् "–( वा. सं. १४।३० ) इति । त उ एवात्राधिपतय आसन् ॥ १६ ॥

---

एवमारण्यानां वायुरधिपतिः ॥ १५ ॥

चत्वार्य्यङ्गानीति । पादौ द्वौ, पाणी द्वौ इत्यर्थः । द्यावापृथिवी अत्र व्यैतामिति । पूर्वसृष्टे द्यावापृथिव्यौ प्राण्युपकारार्थं विमक्ते अभवताम् । संसर्गस्तु शाखान्तरे उक्तः,–" द्यावापृथिवी संसृष्टे आस्तां ते वियती अब्रूताम् " इति । द्यावापृथिव्योर्ग्रहणेन तदन्तरालवर्तिनोऽन्तरिक्षस्यापि ग्रहणं बोध्यम् । अत एव तत्तत्स्वामिनो ' वसवः, रुद्राः, आदित्याः' च ' अनुव्यायन् ' इत्युक्तम् ॥ १६ ॥

(न्न) नवविꣳशत्याऽस्तुवतेति । दश हस्त्या ऽअङ्गुलयो दश पाद्या नव प्राणास्तैरेव तदस्तुवत वनस्पतयोऽसृज्यन्तेति वनस्पतयोऽत्रासृज्यन्त सोमोऽधिपतिरासीदिति सोमोऽत्राधिपतिरासीत् ॥ १७ ॥

(दे) एकत्रिꣳशताऽस्तुवतेति । दश हस्त्या ऽअङ्गुलयो दश पाद्या दश प्राणा ऽआत्मैकत्रिꣳशस्तेनैव तदस्तुवत प्रजा ऽअसृज्यन्तेति प्रजाऽअत्रासृज्यन्त यवाश्चायवाश्चाधिपतय ऽआसन्निति पूर्वपक्षापरपक्षा ऽएवात्राधिपतय ऽआसन् ॥ १८ ॥

(संत्र) त्रयस्त्रिꣳशताऽस्तुवतेति । दश हस्त्याऽ अङ्गुलयो दश पाद्या दश प्राणा द्वे प्रतिष्ठेऽआत्मा त्रयस्त्रिꣳशस्तेनैव तदस्तुवत भूतान्यशाम्यन्निति सर्वाणि भूतान्यत्राशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीदिति प्रजापतिः परमेष्ठ्यत्राधिपतिरासीत् ॥ १९ ॥ ( काण्डस्यार्धम् )

---

( १९ ) "नवविंशत्याऽस्तुवत"–इति । दश हस्त्या अंगुलयो, दश पाद्याः, नव प्राणाः । तैरेव तदस्तुवत । "वनस्पतयोऽसृज्यन्त"–इति । वनस्पतयोऽत्रासृज्यन्त । "सोमोऽधिपतिरासीत्"–इति । सोमोऽत्राधिपतिरासीत् ॥ १७ ॥

( १६ ) "एकत्रिंशताऽस्तुवत"–इति । दश हस्त्या अङ्गुलयो, दश पाद्याः, दश प्राणाः, आत्मैकत्रिंशः । तेनैव तदस्तुवत । "प्रजा असृज्यन्त"–इति । प्रजा अत्रासृज्यन्त । "यवाश्चायवाश्चाधिपतय आसन्"–इति । पूर्वपक्षापरपक्षा एवात्राधिपतय आसन् ॥ १८ ॥

( १७ ) "त्रयस्त्रिंशताऽस्तुवत"–इति । दश हस्त्या अङ्गुलयो, दश पाद्याः, दश प्राणाः, द्वे प्रतिष्ठे, आत्मा त्रयस्त्रिंशः । तेनैव तदस्तुवत । "भूतान्यशाम्यन्"–इति । सर्वाणि भूतान्यत्राशाम्यन् । "प्रजापतिः परमेष्ठ्यधिपतिरासीत्"–( वा. सं. १४ । ३१ ) इति । प्रजापतिः परमेष्ठ्यत्राधिपतिरासीत् ॥ १९ ॥

---

वनस्पतिशब्देनौषध्यादयोऽपि विवक्षिताः, तासां पृथगनभिधानात् ॥ १७ ॥

विविच्याभिहितं सङ्गृह्याभिधत्ते–प्रजा असृज्यन्तेति । तासां 'यवाश्चायवाश्चाधिपतय आसन्' । एतद्व्याचष्टे–पूर्वपक्षापरपक्षा एवात्राधिपतय आसन्निति । उपादानं तु "ते हीदं सर्वं युवते चायुवते च"–इत्यादिना प्राक् उक्तत्वादत्र नोक्तम् । सर्वासां प्रजानामुत्पत्तेः कालस्यापेक्षत्वान्मासर्त्वादिकालस्य पूर्वपक्षापरपक्षावृत्ति साध्यत्वात्तेषां तदधिपतित्वाभिधानमिति द्रष्टव्यम् ॥ १८ ॥

त्रयस्त्रिंशेन स्तोमेन स्तुते 'सर्वाणि भूतान्यशाम्यन्' शान्तान्यपगतोपद्रवाण्यभूवन् । त्रयस्त्रिंशस्तोमो हि सर्वेषां स्तोमानां श्रेष्ठः । अतः परमे निरतिशये स्थाने तिष्ठतीति 'परमेष्ठी' तादृशः 'प्रजापतिः' हिरण्यगर्भोऽत्र 'अधिपतिः' इति युक्तम् ॥ १९ ॥

( त्ता ) ता वुऽएतुाः । सप्तदशेष्टकाऽउुपदधाति सप्तदशो वै संव्वत्सरः प्रजापतिः स प्रजनयिता तदेतेन वै सप्तदशेन संव्वत्सरेण प्रजापतिना प्रजनयित्रैताः प्रजाः प्राजनयद्यत्प्राजनयदसृजत तद्यदसृजत तस्मात्सृष्टयस्ताः सृष्ट्वाऽऽत्मन्प्रापादयत तथैवैतद्यजमानऽएतेन सप्तदशेन संव्वत्सरेण प्रजापतिना प्रजनयित्रैताः प्रजाः प्रजनयति ताः सृष्ट्वाऽऽत्मन्प्रपादयते रेतःसिचोर्व्वेलया पृष्ठ्यो वै रेतःसिचौ मध्यम्पृष्ठ्यो मध्यतुऽएवास्मिन्नेताः प्रजाः प्रपादयति सर्व्वतऽउुपदधाति सर्व्वत ऽएवास्मिन्नेताः प्रजाः प्रपादयति ॥ २० ॥

इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ८-२-६ ॥ ( ४. ३. ) ॥

इति द्वितीयः प्रपाठकः समाप्तः ॥ ८ । २ ॥

कण्डिकासंख्या ॥ १०५ ॥

---

ता वा एताः सप्तदशेष्टका उपदधाति । सप्तदशो वै सम्वत्सरः प्रजापतिः । स प्रजनयिता । तदेतेन वै सप्तदशेन सम्वत्सरेण प्रजापतिना प्रजनयित्रैताः प्रजाः प्राजनयत् । यत् प्राजनयत्–असृजत तत् । यदसृजत–तस्मात्सृष्टयः । ताः सृष्ट्वाऽऽत्मन्प्रापादयत । तथैवैतद्यजमान एतेन सप्तदशेन सम्वत्सरेण प्रजापतिना प्रजनयित्रैताः प्रजाः प्रजनयति । ताः सृष्ट्वाऽऽत्मन्प्रपादयते । रेतःसिचोर्वेलया । पृष्ठ्यो वै रेतःसिचौ । मध्यम्पृष्ठ्यः । मध्यत एवास्मिन्नेताः प्रजाः प्रपादयति । सर्वत उपदधाति । सर्वत एवास्मिन्नेताः प्रजाः प्रपादयति ॥ २० ॥

---

इष्टकागतां सङ्ख्यां स्तौति–ता वा एता इति । संवत्सरात्मकः ' प्रजापतिः सप्तदशः ' सप्तदशसमुदायात्मकः; द्वादश मासाः पञ्चर्तव इति सप्तदशता । स एव भूतानां प्रजनयिता ' तत् ' स्रष्टव्यं जगत्स्रष्टा स प्रजापतिः ' एतेन ' ' सप्तदशेन ' सप्तदशसङ्ख्यात्मकेन संवत्सरलक्षणेन ' प्रजापतिना ' स्वकीयकालात्मकशरीरेणेत्यर्थः । ' प्रजनयित्रा ' सर्वोत्पादकेन ' एताः प्रजाः ' ब्रह्मक्षत्रादिरूपाः ' प्राजनयत् ' उदपादयत् । सर्वेषामुत्पत्तिमतां कालत एवोत्पत्तेः प्रजनयितृत्वम् । तस्मात् सप्तदशसङ्ख्या प्रशस्तेत्यर्थः । तदेतदप्रोक्तं तच्छब्दार्थं विशिनष्टि–यत्प्राजनयदसृजतेति । ' यद् ' भूतजातं ' प्राजनयत् ' इति ' असृजत ' इत्यर्थः । तदेतेन वा इति । पूर्वत्रान्वयः । प्रसङ्गात् सृष्टिनामनिरुक्तिं दर्शयति–तद्यदसृजत तस्मात्सृष्टय इति । सर्जनात्सृष्टय इत्युक्तं भवति । ननु सृष्टाः प्रजाः, कथमिष्टकाः सृष्टय इत्युच्यन्त इति चेत्, नैष दोषः । इष्टकासु तासामध्यस्तरूपत्वात् । तथैवैतदित्याद्युक्तप्रायम् । रेचःसिचोर्वेलयेत्याद्यपि–गतम् ॥ २० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमे काण्डे चतुर्थेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ८-४-३ ) ॥

# अथ तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।

## चतुर्थाध्याये च चतुर्थं ब्राह्मणम् ।

अथातोऽन्वावृतम् । (त्रि) त्रिवृद्वतीं पुरस्तादुपदधात्येकविꣳशवतीं पश्चात्पञ्चदशवतीं दक्षिणतः सप्तदशवतीमुत्तरतः ॥ १ ॥

(ऽ) एतद्वै प्रजापतिम् । (त्रि) त्रिवृद्वत्यामुपहितायां पञ्चदशवत्यां मृत्युरसीददिमामुतऽ उपधास्यते तमत्र ग्रहीष्यामीति तं प्रापश्यत्तं प्रख्याय परिक्रम्यैकविꣳशवतीमुपाधत्तैकविꣳशवतीं मृत्युरागच्छत्पञ्चदशवतीमुपाधत्त पञ्चदशवतीं मृत्युरागच्छत्सप्तदशवतीमुपाधत्त सोऽत्रैव मृत्युं न्यकरोदत्रामोहयत्तथैवैतद्यजमानोऽत्रैव सर्व्वान्पाप्मनो निकरोत्यत्र मोहयति ॥ २ ॥

---

अथातोऽन्वावृतम् । त्रिवृद्वतीं पुरस्तादुपदधाति, एकविंशवतीं पश्चात्, पञ्चदशवतीं दक्षिणतः । सप्तदशवतीमुत्तरतः ॥ १ ॥

एतद्वै प्रजापतिं त्रिवृद्वत्यामुपहितायां पञ्चदशवत्यां मृत्युरसीदत्–इमामत उपधास्यते, तमत्र ग्रहीष्यामीति । तं प्रापश्यत् । तं प्रख्याय परिक्रम्यैकविंशवतीमुपाधत्त । एकविंशवतीं मृत्युरागच्छत् । पञ्चदशवतीमुपाधत्त । पञ्चदशवतीं मृत्युरागच्छत् । सप्तदशवतीमुपाधत्त । सोऽत्रैव मृत्युं न्यकरोत्, अत्रामोहयत् । तथैवैतद्यजमानोऽत्रैव सर्वान्पाप्मनो निकरोति, अत्र मोहयति ॥२॥

---

अथातोऽन्वावृतमिति । अत्र ब्राह्मणे स्तोमानां स्पृतां च क्रमदेशावुच्येते । किन्त्वप्रासङ्गिकं तत् प्रतिजानीते–' अथातः ' परम् ' अन्वावृतम् ' वक्ष्यत इति शेषः । आवृत एवानुकुर्यात् किंचित् क्रमादिना वक्ष्यत इति । ( ननु किञ्चित् क्रमायां ) किं चितिमाशुस्त्रिवृदिति मंत्रोपधेयां ' पुरस्तात् ' पूर्वस्यां दिशि 'एनामुपदधाति' इति । अनूक्रान्ते तूक्तम् । उत्तरेण कुत एतत् पुरस्तादित्यवशेषितत्वात् परं पूर्वार्द्धो गम्यते । तत्रापि ' त्रिवृद्वत्यामेव त्रिवृद्वतीमनूपदधाती ' ति वचनादनूकमुत्तरेणेति गम्यते । एवं हि सा अन्या त्रिवृद्वती दक्षिणेनानूकमुपधीयमाना गम्यते ( मन्तर्धाय ) तेनान्यथा एकविंशस्तोमवतीं धरुण एकविंश इत्येतन्मन्त्रोपधेयां पश्चात्तथैव ( अनुकाक्ष्यन्तीनुदगू ) दक्षिणेऽनूकमुपदधाति । येनोत्तरेणैकविंशवतीं तां मन्त्रान्तरेण तामुपधीयते पश्चात् । पञ्चदशवतीं मांतः पञ्चदश इत्येतां दक्षिणतोऽनूकान्ते सप्तदशवतीमिमां सप्तदश इत्येतामुत्तरत एव । सोऽत्रैव लोके । तथा हि तस्यामुत्तरतो वायूनां पञ्चदशवतीमिति । एतत् क्रमवाक्यमेव द्रष्टव्यम् । देशस्तु पूर्वार्द्ध उपदधातीत्यत्रैव विधास्यत इति । इह तस्मिन् विधीयमाने गुणवाक्यमनेकार्थं भिद्येत ॥

' एतद्वा ' इति । इतिहासेनास्य क्रमस्य ' प्रजापतिम् ' ऋषिं मृत्युः उपासीदत्, इत्युपप्लवः सदिर्द्रष्टव्यः । तथापि सकर्मकः प्रजापतिमित्यनेन सम्बध्यते नान्यथति ॥ १ ॥ २ ॥

( त्य ) अथोत्तराः । ( त्रि ) त्रिवृद्वत्यामेव त्रिवृद्वतीमनूपदधात्येकविंशवत्यामेकविंशवतीं पञ्चदशवत्यांसप्तदशवतीं सप्तदशवत्यां पञ्चदशवतीं ता यदेवं व्यतिहारमुपदधाति तस्मादक्ष्णयास्तोमीया ऽअथो यदेते स्तोमा ऽअतोऽन्यथाऽनुपूर्वं तस्माद्वेवाक्ष्णयास्तोमीया ऽअथोऽएवं देवा ऽउपादधतेतरथाऽसुरास्ततो देवा ऽअभवन्पराऽसुरा भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ ३ ॥

स ऽएष पशुर्यदग्निः । सोऽत्रैव सर्व्वः कृत्स्नः संस्कृतस्तस्य त्रिवृद्-

---

अथोत्तराः—त्रिवृद्वत्यामेव त्रिवृद्वतीमनूपदधाति; एकविंशवत्यामेकविंशवतीम् ; पञ्चदशवत्यां सप्तदशवतीम् ; सप्तदशवत्यां पञ्चदशवतीम् । ता यदेवं व्यतिहारमुपदधाति—तस्मादक्ष्णयास्तोमीयाः । अथो यदेते स्तोमाः—अतोऽन्यथाऽनुपूर्वम् । तस्माद्वेवाक्ष्णयास्तोमीयाः । अथोऽएवं देवा उपादधत, इतरथाऽसुराः । ततो देवा अभवन्, पराऽसुराः । भवत्यात्मना, पराऽस्य द्विषन्भ्रातृव्यो भवति—य एवं वेद ॥ ३ ॥

स एष पशुः—यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतः । तस्य त्रिवृद्वत्यावेव शिरः । ते यत्त्रिवृ-

---

अथोत्तरा इति । 'त्रिवृद्वत्यामेव' त्रिवृद्वतीसमीपे एव, एकविंशवत्यादिसमीप इति द्रष्टव्यं लक्षणया, कुत एतत् ते अनन्तर्हिते उपदधातीति वचनाद्वाह्ये पंचदशवत्यौ भवतोऽन्तरे सप्तदशवत्याविति च पार्श्वे उपधानदर्शनम् । 'त्रिवृद्वतीम्' अग्नेर्भागोऽसीत्येतामनुलग्नामुपदधाति । पूर्वार्द्धे अनूकं दक्षिणा एकविंशवती (समीपगुणग्राममेवान्तकमुतद्रेघाणैकविंशतीमि ) इन्द्रस्य भाग इति तां पूर्वश्चोत्तरश्च यस्मादेवं व्यतिहाराय दधातीत्यस्मात्ता इष्टका अक्ष्णयास्तोमीया अधोऽधोवर्तिनः स्तोमा आसामित्यक्ष्णयास्तोमीयाः मत्वर्थीयः छप्रत्ययो द्रष्टव्यः । कुत एतत् । त्रिवृद्वतीमित्यादिषु मतुपो दर्शनादन्यस्य च तद्धितार्थस्यासम्भवात् इष्टकानां व्यतिहारमुपधाने सति तदनुरूपोऽयं स्तोमानामपि व्यतिहारो युक्तः । ( तैस्तु वध्येति हिपमनिष्ठु तद्बेष्टत्का । ) अक्ष्णयास्तोमीया भवन्तीत्यभिप्रायः । ( अतोयदेते स्तोमा अतो उपदन्यथा स्थिताः । कं ) ये अनुपूर्वं त्रिवृत्पञ्चदश सप्तदश एकविंश-इत्येवंरूपादेवान्यत्र (वस्था) तस्मादप्येता अक्ष्णया एवमुक्ता इत्येकोऽभिप्रायः । एतदुक्तं त्रिवृद्वत्यामुपहिपहितायां पञ्चदशवत्यां मृत्युरसीददिति तच्चैवं द्रष्टव्यम् । पूर्वस्यामिष्टकायामुपहितायां दक्षिणस्याः स्थाने मृत्युरुपासीदत् ( इमोमेतत्स्थानां ) अत्र स्थाने ग्रहीष्यामीति तं च मृत्युं तत्र दक्षिणपार्श्वे उपासीदत्तं प्रख्याय दृष्ट्वा परिक्रम्य ( तुतिर्यतद्दक्षिणं स्थानं वोपस्थादुपहितवानित्यादि ततश्च एवैव गाशिकस मृत्युं दृष्ट्वा नन्तरात्क्रमातीदन्देवस्तोमेष्वपि ततश्च वृषतिस्तो उपहिते पञ्चदशे स्तोमे मृत्युरासीदेति ·तमसीदेति तमीत्येकविंशमुपासीत्ततः पञ्चदशंमसदशमित्येवमक्ष्णयोपहितवान ) मृत्युं मोहयितुमत्र पूर्वेण त्रिवृत्पञ्चदशसप्तदशैकविंशानीति । आद्या एवमक्ष्णयास्तोमीया देवा उपहितवन्तः ॥ ३ ॥

स एष पशुः ( विततसप्तथुना ) अतः परं प्रागुत्तमायाः काण्डिकायाः पूर्वोक्तानामेव यजुष्मतीनां देशो विधीयते ' त्रिवृद्धि शिरः ' ( स्वर्गछिमछिमस्तिष्क ) इति त्रिगुणं त्रिवृदपि स्तोमः । त्रिगुण एष गुणा अपि तु

त्यावेव शिरस्ते यत्त्रिवृद्वत्यौ भवतस्त्रिवृद्धि शिरो द्वे भवतो द्विकपालꣳ हि शिरः पूर्वार्धऽउपदधाति पुरस्ताद्धीदꣳ शिरः ॥ ४ ॥

प्रतिष्ठैकविꣳशवत्यौ । ते यदेकविꣳशवत्यौ भवतः प्रतिष्ठा ह्येकविꣳशो द्वे भवतो द्वन्द्वꣳ हि प्रतिष्ठा पश्चादुपदधाति पश्चाद्धीयं प्रतिष्ठा ॥ ५ ॥

बाहू पञ्चदशवत्यौ । ते यत्पञ्चदशवत्यौ भवतः पञ्चदशौ हि बाहू द्वे भवतो द्वौ हीमौ बाहू पार्श्वतऽ उपदधाति पार्श्वतो हीमौ बाहू ॥ ६ ॥

( ऽ ) अन्नꣳ सप्तदशवत्यौ । ते यत्सप्तदशवत्यौ भवतः सप्तदशꣳ ह्यन्नं द्वे भवतो द्व्यक्षरꣳ ह्यन्नं तेऽअनन्तर्हिते पञ्चदशवतीभ्यामुपदधात्यनन्तर्हितं तद्बाहुभ्यामन्नं दधाति बाह्ये पञ्चदशवत्यौ भवतोऽन्तरे सप्तदशवत्यौ बाहुभ्यां तदुभयतोऽन्नं परिगृह्णाति ॥ ७ ॥

( त्यु ) अथ या मध्यऽउपदधाति । स ऽआत्मा ता रेतःसिचोर्वेलयोपदधाति पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यतो ह्ययमात्मा सर्वत

---

द्वत्यौ भवतः—त्रिवृद्धि शिरः । द्वे भवतः—द्विकपालं हि शिरः । पूर्वार्द्ध,उपदधाति—पुरस्ताद्धीदं शिरः ॥ ४ ॥

प्रतिष्ठैकविंशवत्यौ । ते यदेकविंशवत्यौ भवतः—प्रतिष्ठा ह्येकविंशः । द्वे भवतो—द्वन्द्वं हि प्रतिष्ठा । पश्चादुपदधाति—पश्चाद्धीयं प्रतिष्ठा ॥ ५ ॥

बाहू पञ्चदशवत्यौ । ते यत्पञ्चदशवत्यौ भवतः—पञ्चदशौ हि बाहू । द्वे भवतो—द्वौ हीमौ बाहू । पार्श्वत उपदधाति—पार्श्वतो हीमौ बाहू ॥ ६ ॥

अन्नं सप्तदशवत्यौ । ते यत्सप्तदशवत्यौ भवतः—सप्तदशं ह्यन्नम् । द्वे भवतः—द्व्यक्षरं ह्यन्नम् । ते अनन्तर्हिते पञ्चदशवतीभ्यामुपदधाति । अनन्तर्हितं तद्बाहुभ्यामन्नं दधाति । बाह्ये पञ्चदशवत्यौ भवतः—अन्तरे सप्तदशवत्यौ । बाहुभ्यां तदुभयतोऽन्नं परिगृह्णाति ॥ ७ ॥

अथ या मध्य उपदधाति—स आत्मा । ता रेतःसिचोर्वेलयोपदधाति । पृष्टयो वै रेतःसिचौ । मध्यमु पृष्टयः । मध्यतो ह्ययमात्मा । सर्वत उपदधाति । सर्वतो ह्ययमात्मा । अथ यदतोऽन्यद्—

---

तस्य (त्रिगुणयेवनातु) 'द्विकपालं हि शिरः ·' इति ( दक्षिणोत्तरे सः कया जेनिष्टयत इति—द्वोपादावन्यतः ) सहचारिणौ सहाभिव्याप्यते इति द्वन्द्वः ॥ ४–५ ॥

'पञ्चदशौ हि बाहू' इति प्रत्येकं ( सयुलीना त्रीणिर्वरामति प्रत्यपञ्चदशादिशब्दाश्च ) बाह्वादिषु पञ्चदशपरिमाणमस्य सवज्रस्येव वज्रस्य वै स्तोमेन सिद्धिः पञ्चदशाद्यर्थे इत्येतदङ्गीकृत्य द्रष्टव्य इति स्रष्टव्य इति सृष्टयस्तु रेतःसिचोरित्यनुवाद एव ( याविधसंदेशः । ) 'अथ यदतो' अनुक्रान्ताः स्युश्चतुर्दश षड्वेष्टका अतिरिक्तता । ( तत्पशुत्वादग्नेवतीनिरितराष्वाष्टासु सप्तदशसु चक्षुत्सस्य ) पशुविधस्य संस्कृतत्वादित्यभिप्रायः ।

ऽउपदधाति सर्व्वंतो ह्ययमात्माऽथ यदतोऽन्यदतिरिक्तं तद्यद्वै देवाना- मतिरिक्तं छन्दाᳬंसि तानि तद्यानि तानि च्छन्दाᳬंसि पशवस्ते तद्ये ते पशवः पुण्यास्ता लक्ष्म्यस्तद्यास्ताः पुण्या लक्ष्म्योऽसौ सऽ आदित्यः सऽ आसामेष दक्षिणतः ॥ ८ ॥

(स्ता) ता हैकेऽनन्तर्हितास्त्रिवृद्वतीभ्यामुपदधाति । जिह्वा हनूऽइति वदन्तो याश्चतुर्दश ते हनू याः षट् सा जिह्वेति न तथा कुर्य्यादति ते रेचयन्ति यथा पूर्व्वयोर्हन्वोरपरे हनूऽअनूपदध्याद्यथा पूर्व्वस्यां जिह्वायामपरां जिह्वामनूपदध्यात्तादृक्तद्यत्राहैव शिरस्तदेव हनू तज्जिह्वा ॥ ९ ॥

---

अतिरिक्तं तत् । यद्वै देवानामतिरिक्तम्—छन्दांसि तानि । तद्यानि तानि च्छन्दांसि—पशवस्ते । तद्ये ते पशवः—पुण्यास्ता लक्ष्म्यः । तद्यास्ताः पुण्या लक्ष्म्यः—असौ स आदित्यः । स आसा मेष दक्षिणतः ॥ ८ ॥

ता हैकेऽनन्तर्हितास्त्रिवृद्वतीभ्यामुपदधति । जिह्वा हनू इति वदन्तः । याश्चतुर्दश-ते हनू । याः षट्-सा जिह्वेति । न तथा कुर्यात् । अति ते रेचयन्ति । यथा पूर्वयोर्हन्वोरपरे हनू अनूपदध्याद्, यथा पूर्वस्यां जिह्वायामपरां जिह्वामनूपदध्यात् । तादृक्तत् । यत्राहैव शिरः—तदेव हनू, तज्जिह्वा ॥ ९ ॥

---

यत् 'देवानामतिरिक्तं' किञ्चित्तत् 'छन्दांसि' तेषामपरिमितत्वात् तत्तेषां देवानां 'यानि तानि' अतिरिक्तानि च्छन्दांसि 'ते पशवः' पशवोऽतिरिक्तानि हविर्वहनाद् छन्दोभिमानिन्यो देवता इति । तेषां च ते छन्दआत्मकाः पशवः 'ताः पुण्या लक्ष्म्यः' "पुण कर्मणि शुभे" पुण्येति शुभं कर्म तत्कुर्वन्तीति पुण्याः । किं पुण्याः पशवस्ता लक्ष्म अलंकारेण लक्ष्म तैश्चिक्ष्यते ताभिरिति लक्ष्यते पशुर्हि तद्वा लक्ष्यतेऽसौ नामेश्वरो बहुपशुरिति लक्षणत्व- पुण्यमपि भवत्यसौ (नामा श्वागानिगो वेति तन्निवृत्त्यर्थं) 'पुण्या लक्ष्म्यः' इत्याह देवानामेव हि ते कार्यसिद्ध्ये संसारा अत इत्यभिप्रायः । 'तद्यास्ताः' तेषां यास्ताः 'पुण्या लक्ष्म्यः असौ स आदित्यः' "सैषा त्रयी विद्या तपति"—(श.प.१०।९।२।२) इति वक्ष्यते । तथा चोक्तम्—अवद्यास्ता देवा यजुष्मत्यस्त्वनः प्रियाणि ध मानि सार्द्धसमवदति रेत आदित्ये सन्नीयते हितवन्त इति 'स आसामेष दक्षिणत' इति च्छन्दोमय आदित्य आसां मध्यो न हि (तत्सितमकानां) प्रजानामेष इति स्थितिः । आदित्यमभिनन्द्यैनं दर्शयति दक्षिणत इति आर्या- वर्तनिवासिनीनां प्रजानां दक्षिणत यदेतीत्येतदभिप्रायमेतदध्यात्मकमभिसत्यासां प्रजानामेतद्दक्षिणतो दक्षिणेऽ- क्षिणि व्यवस्थितस्तथा च वक्ष्यति "स एष या पुरुषं एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः" (श. प. १० । ९ । २ । २३ ) इति ॥ ६–८ ॥

'ता हैकेऽनन्तर्हिताः' स्तोम्नापैश्रुत्येतदभिप्रायमेतदध्यात्मकमपि स आसां प्रजानामेष यद्दक्षिणतो दक्षिणो- दक्षिणेऽक्षणि व्यवस्थितः । तथा च वक्ष्यति—स एव एष एतस्मिन् हि या अतिरिक्ताः 'चतुर्दश' षड्वेष्टका

( ह्वाऽस्मि ) अस्मिन्नु हैकेऽवान्तरदेशऽउपदधति । ( त्य ) असौ वाऽ-आदित्यऽएताऽअमुं तदादित्यमेतस्यां दिशि दध्म ऽइति न तथा कुर्या-दन्यानि वाव तानि कर्माणि यैरेतमत्र दधाति ॥ १० ॥

दक्षिणतऽउ हैकऽउपदधति । तदेताः पुण्या लक्ष्मीर्दक्षिणतो दध्मऽइति तस्माद्यस्य दक्षिणतो लक्ष्म भवति तं पुण्यलक्ष्मीकऽ इत्याचक्षतऽउत्त-रतु स्त्रियाऽ उत्तरतऽआयतना हि स्त्री तत्तत्कृतमेव पुरस्तात्त्वेवैनाऽउप-दध्याद्यत्राहैव शिरस्तदेव हनू तज्जिह्वाऽथैताः पुण्या लक्ष्मीर्मुखतो धत्ते तस्माद्यस्य मुखे लक्ष्म भवति तं पुण्यलक्ष्मीकऽ इत्याचक्षते ॥ ११ ॥

---

अस्मिन्नु हैकेऽवान्तरदेश उपदधति । असौ वा आदित्य एताः । अमुं तदादित्यमेतस्यां दिशि दध्म इति । न तथा कुर्यात् । अन्यानि वाव तानि कर्माणि—यैरेतमत्र दधाति ॥ १० ॥

दक्षिणत उ हैक उपदधति—तदेताः पुण्या लक्ष्मीर्दक्षिणतो दध्मह इति । तस्माद्यस्य दक्षिणतो लक्ष्म भवति—तं पुण्यलक्ष्मीक इत्याचक्षते । उत्तरतः स्त्रियाः । उत्तरतआयतना हि स्त्री । तत् तत्कृ-तमेव । पुरस्तात्त्वेवैनाऽउपदध्यात् । यत्राहैव शिरः—तदेव हनू, तज्जिह्वा । अथैताः पुण्या लक्ष्मी-र्मुखतो धत्ते । तस्माद्यस्य मुखे लक्ष्म भवति—तं पुण्यलक्ष्मीक इत्याचक्षते ॥ ११ ॥

---

स्तौन्य शाखिनः 'शिरः' संस्तुताभ्यां 'त्रिवृद्वतीभ्याम्' अनुलग्नां पश्चात् 'उपदधति' 'जिह्वा' च पशुस्थाने चैत्य इष्टकानि द्वाहनूनां च शिरसामन्तरोद्देशेन वदन्तस्तत्राप्येतां व्यवस्थामाहुर्यां व्यवस्थामाहुः ( 'याश्चतुर्दश तदहत्तव शिरसोत्तारत्रिवृद्वतीभ्यामपराभ्यामुत्तराभ्यामन्तरा एवं चतुर्दशोपधेया इत्यभिप्रायः । ) ( योपरसाजिह्वावन्तर्हितो भवतीति चतुर्दशायांप्यपराः यद्दुपधेपा इत्यभिप्रायः ) ॥ ९ ॥

अस्मिन्नुहैक इति । अस्मिन्निति दक्षिणमाशांसमभिनयेन दर्शयति । कुत एतत् 'अमुं तदादित्यमेतस्यां दिशि दध्म इति' वचनात् पूर्वां दक्षिणेति आदित्या एते व्यत्ययेन हि सनित्यमुदितो गच्छति । तथा चोक्तम् " स आसामेष दक्षिणतः " इति । तथा चादित्यसंस्तुते क्रमे उक्तं 'दक्षिणतोऽषाढाया ' इति तथा युक्ते ग्रहर्क्षं दक्षिणार्द्धं सादयत्येतां ह्येष दिशः संत्विति अन्यानि वाव तानि कर्माणीति । अथैनमित ऊर्ध्वं प्रांचं प्रमृहीति । अथैनमतऊर्ध्वं प्रांचं ( विनोत्ये—पञ्चमी दित्यात्स्या मुपदधाति स वायुनस्त्वां ) स्रक्त्यां प्रथमे उपद-धाति । इत्येतैरेवमुपादैव्यमेतस्यां दिशि दधाति । दक्षिणतो यस्माद्यस्य—दक्षिणतः पुण्या लक्ष्म्य उपधीयन्ते । तस्मात्तदनुकारेणाथात्म—स्य दक्षिणपार्श्वे लक्षणं । किं यस्य वाक्रमते सा किं तरात्मकं भवति तं पुरुषं पुण्य-लक्ष्मीकमित्याचक्षते । उत्तरतः स्त्रिया यस्या लक्ष्म भवति तां पुण्यलक्ष्मीकेत्याचक्षते । इत्यपि प्रासङ्गि-कमुक्तं उत्तरत आयतन स्थानं तस्या इत्युत्तरतआयतना स्त्री सा हि प्राक्शिरसं शयानं उत्तरत उपशेते तेन उत्तरतआयतना' ततश्च यत्र यस्यां उत्तरतो लक्ष्म तत्सामानि—तस्याः ( प्रवीत्यभिप्रायः । ) तत्र तत्रैव क्रमोपधा-नादौ कृतमेवादित्यात्मिकानां पुण्यानां लक्ष्मणां कूर्मादिरूपैर्दक्षिणत उपहितत्वात् किं पुनस्ततश्च पुरस्ता-देवैता उपदध्यात्तदनु च तत्रातिरिक्तदोष एवोक्त एव इत्यत आह—सत्यं यत्रैव जिह्वा च वक्तृत्वं किन्तु

सैषा ब्रह्मचितिः । ( र्षं ) यद्ब्रह्मोपादधत तस्माद्ब्रह्मचितिः सा प्रजापतिचितिर्यत्प्रजापतिमुपादधत तस्मात्प्रजापतिचितिः सऽर्षिचितिर्यदृषीनुपादधत तस्मादृषिचितिः सा वायुचितिर्यद्वायुमुपादधत तस्माद्वायुचितिः सा स्तोमचितिर्यत्स्तोमानुपादधत तस्मात्स्तोमचितिः सा प्राणचितिर्यत्प्राणानुपादधत तस्मात्प्राणचितिरतो यतमदेव कतमच्च विद्यात्तेन हैवास्यैषाऽऽर्षेयवती बन्धुमती चितिर्भवत्यथ लोकम्पृणेऽउपदधात्यस्याᳪ स्रक्त्यां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः ॥ १२ ॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ८-३-१ ॥ ( ४, ४, ) ॥

इति चतुर्थोऽध्यायः समाप्तः ॥ ८ ॥ ४ ॥

---

सैषा ब्रह्मचितिः । यद्ब्रह्मोपादधत—तस्माद्ब्रह्मचितिः । सा प्रजापतिचितिः । यत्प्रजापतिमुपादधत—तस्मात्प्रजापतिचितिः । सऽर्षिचितिः । यदृषीनुपादधत—तस्मादृषिचितिः । सा वायुचितिः । यद्वायुमुपादधत—तस्माद्वायुचितिः । सा स्तोमचितिः । यत्स्तोमानुपादधत—तस्मात्स्तोमचितिः । सा प्राणचितिः । यत्प्राणानुपादधत—तस्मात्प्राणचितिः । अतो यतमदेव कतमच्च विद्यात्—तेन हैवास्यैषाऽऽर्षेयवती बन्धुमती चितिर्भवति । अथ लोकम्पृणेऽउपदधात्यस्यां स्रक्त्याम् । तयोरुपरि बन्धुः । पुरीषं निवपति । तस्योपरि बन्धुः ॥ १२ ॥

इत्याहवनीयचित्यां पञ्चचितिकायां चतुर्थी चितिः ।

---

पुण्यलक्ष्मीरेतस्य मुखे धत्ते न हतजिह्वा इत्यनतिरेकः । यस्माच्च यज्ञे मुखतो लक्ष्मी पुण्या धत्ते तस्मात्तदनुकारेणाध्यात्ममपि यस्य मुखलक्षणदक्षिणदंष्ट्राभिरेकादि भवति ' तं पुण्यलक्ष्मीक इति ' विशेषत ' आचक्षते ' ॥ १०-११ ॥

' सैषा ब्रह्मोपादधत । सैषेत्यष्टादशात्मिकैवोपादधत । इतरासु तस्या एवोपकरणमित्यभिप्रायः । ब्रह्मैव चितिः 'ब्रह्मचितिः' । समानाधिकरणसमासः । कुत एतत् । 'यद्ब्रह्मोपादधत' । ब्रह्मण उपधानकर्मत्वात् एवमुत्तरत्रापि त एषां ब्रह्मादीनां " किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् । " (पा.सू.५।३।९२) इति डतरच् प्रत्ययो द्रष्टव्यः । यदैवैषा मायाविद्या उपासीत तेनैषा चतुर्थी चितिरस्य यजमानस्य 'आर्षेयवती' भवतीति आर्षेयवतीमेव कर्म क्रियमाणमभ्युदयाय भवतीति दर्शयति—ननु च ' विद्यात् ' इति ज्ञानमात्रमिह श्रूयते—नोपासना नैष दोषः । ( विद्याग्रहणेनात्रोदसेन लक्षणो वानलक्षणे वानलक्षणो वा न स्मृतं गृह्यते ) । कुत एतत् । ' अतो यतमदेव ' इति विकल्पादिवचनात् । यदि हि विज्ञानमात्रेणार्षेयवती स्यात् तत एव तस्माद्ग्रन्थात् सर्वाण्येव ब्रह्मादीनि विज्ञायन्त इति । साधोरार्षेयवती स्यात् । नैकेनचित् उपासनं तु न नियोगतः सर्वविषयं भवतीत्युपपन्नस्तत्र विकल्प एवमन्यत्रापि प्रायेणायं विदितरूपोपासनाभिप्राय एव द्रष्टव्यः । उत नु वाऽत्र ब्रह्मादय इष्टकाशरीरा उपधेयाः उक्ताः ततश्च तैस्तदेवं भवति नार्षेय आर्षेयत्वं स्यादेवार्षेयत्वाद्दृष्टत्वात्तस्या हि ते चेतयमाना एतां

# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।
# तृतीयप्रपाठके च द्वितीयं ब्राह्मणम् ।

पञ्चमीं चितिमुपदधाति । ( त्ये ) एतद्वै देवाश्चतुर्थीं चितिं चित्वा समारोहन्युदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तदेव तत्संस्कृत्य समारोहन् ॥ १ ॥
( हंस्ते ) तेऽब्रुवन् । ( वंश्चे ) चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्नितऽऊर्ध्वमिच्छतेति ते चेतयमाना दिवमेव विराजं पञ्चमीं चितिमपश्यंस्तेभ्यऽएष लोकोऽच्छदयत ॥ २ ॥
( त्ते ) तेऽकामयन्त । ( न्ता ) असपत्नमिमं लोकमनुपबाधं कुर्वीम-

---

**अथ असपत्नेष्टकोपधानम् ।**

पञ्चमीं चितिमुपदधाति । एतद्वै देवाश्चतुर्थीं चितिं चित्वा समारोहन् । यदूर्ध्वमन्तरिक्षात्, अर्वाचीनं दिवः–तदेव तत्संस्कृत्य समारोहन् ॥ १ ॥

तेऽब्रुवन्–चेतयध्वमिति–चितिमिच्छतेति वाव तदब्रुवन्–इत ऊर्ध्वमिच्छतेति । ते चेतयमाना दिवमेव विराजं पञ्चमीं चितिमपश्यन् । तेभ्य एष लोकोऽच्छदयत् ॥ २ ॥

तेऽकामयन्त–असपत्नमिमं लोकमनुपबाधं कुर्वीमहीति । तेऽब्रुवन्–उप तज्जानीत–यथेमं लोक-

---

चतुर्थीं चितिमपश्यन् ते देवा द्रष्टार उक्ताश्चितिमालिकायां चर्षयश्चतुर्थीमित्यृषयः । एवं तर्हि कथमथ ग्रन्थो योजनीयः । अस्य ब्रह्मादिर्देवैर्ऋषिभिश्च द्रष्टार उक्तास्तथार्षेयस्य यदेव किञ्चिद्देवैर्ऋषिभिर्वै पिहितमित्येवं विद्यात् तेनैव येन निदितार्षेयवती भवति 'बन्धुमती' इति ब्रह्मादिनाऽऽधिदैवेनेति । 'अस्यां स्रक्त्याम्' इत्युत्तरांसे॥ १२॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतिश्रीहरिस्वामिनः कृतौ माध्यंन्दिनीयशतपथब्राह्मणभाष्ये अष्टमकाण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ८–४–४ ) ॥

इत्यष्टमे काण्डे चतुर्थोऽध्यायः समाप्तः ॥ ( ८ । ४ ) ॥

**पञ्चमीं चितिमिति ।** विराजामुपधानस्योपन्यासः ॥ १ ॥

कुत एतत् ?–' ते चेतयमाना दिवमेव विराजं पञ्चमीं चितिमपश्यन् ' इति वचनात्, " एषा वै सा विराडयां तद्देवा विराजं पञ्चमीं चितिमपश्यन् " इति च 'तेभ्यः' देवेभ्यः 'एष लोको' यो नाम ' अच्छदयत् ' " छद अपवारणे "–(धा. पा. चु. उ. ३००) । अत्र रुच्यर्थो द्रष्टव्यः । तथा हि "रुच्यर्थानां प्रीयमाणः"–(पा. सू. १।४।३३ ) इति देवाः संप्रदानं भवति । ततश्च तेभ्य इति चतुर्थी युज्यते नान्या ॥ २ ॥

तेऽकामयन्तेति । कण्डिकाद्वयेनैतेनासपत्नानां पञ्चानामिष्टकानामुपधानं[2] तस्य च देवा द्रष्टार इत्येतदु-

---

१–उत्तराः सादयि लोकंपृणाः पूर्ववत् । का. श्रौ. सू. १७।२२३।

२–पंचम्यामंतेष्वाश्विनीवदसपत्नाः । दक्षिणयोरस्त्यंतरं अग्ने जाता नेति प्रतिमंत्रम् । पश्चिमा द्वितीया । का. श्रौ. सू. । १७ । २२४–२२७ ।

ह्वीति तेऽब्रुवन्नुप तज्जानीत यथेमं लोकमसपत्नमनुपबाधं करवामहाऽइति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेमं लोकमसपत्नमनुपबाधं करवामहाऽइति ॥ ३ ॥

ते चेतयमानाः । ( ऽ ) एताऽइष्टका ऽअपश्यन्नसपत्नास्ताऽ उपादधत ताभिरेतं लोकमसपत्नमनुपबाधमकुर्वत तद्यदेताभिरेतं लोकमसपत्नमनुपबाधमकुर्वत तस्मादेताऽअसपत्नास्तथैवैतद्यजमानो यदेताऽ उपदधात्येतमेवैतल्लोकमसपत्नमनुपबाधं कुरुते सर्व्वतऽउपदधाति सर्व्वतऽएवैतदेतं लोकमसपत्नमनुपबाधं कुरुते परार्धऽउपदधाति सर्व्वमेवैतदेतं लोकमसपत्नमनुपबाधं कुरुते ॥ ४ ॥

(तेऽथ) अथ विराजऽ उपदधाति । (त्ये) एषा वै सा विराड्यां तद्देवा विराजं पञ्चमीं चितिमपश्यंस्ता दश दशोपदधाति दशाक्षरा विराड् विराडेषा चितिः सर्व्वतऽ उपदधाति यो वाऽएकस्यां दिशि विराजति न वै स विराजति यो वाव सर्व्वासु दिक्षु विराजति स एव विराजति ॥ ५ ॥

---

मसपत्नमनुपबाधं करवामहाऽइति । तेऽब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । तदिच्छत—यथेमं लोकमसपत्नमनुपबाधं करवामहाऽइति ॥ ३ ॥

ते चेतयमाना एता इष्टका अपश्यन्—असपत्नाः । ता उपादधत । ताभिरेतं लोकमसपत्नमनुपबाधमकुर्वत । तद्यदेताभिरेतं लोकमसपत्नमनुपबाधमकुर्वत—तस्मादेता असपत्नाः । तथैवैतद्यजमानो यदेता उपदधाति—एतमेवैतल्लोकमसपत्नमनुपबाधं कुरुते । सर्वत उपदधाति । सर्वत एवैतदेतं लोकमसपत्नमनुपबाधं कुरुते । परार्धे उपदधाति । सर्वमेवैतदेतं लोकमसपत्नमनुपबाधं कुरुते ॥४॥

अथ विराज उपदधाति । एषा वै सा विराट्—यां तद्देवा विराजं पञ्चमीं चितिमपश्यन् । ता दश—दशोपदधाति । दशाऽक्षरा विराट् । विराडेषा चितिः । सर्वत उपदधाति । यो वाऽएकस्यां दिशि विराजति—न वै स विराजति । यो वाव सर्वासु दिक्षु विराजति—स एव विराजति ॥ ५ ॥

---

च्यते । ‘ सर्वतः ’ सर्वासु दिक्षु । ‘ परार्द्धे ’ परस्मिन्नग्नेर्भागेऽन्त्ये लोक इत्यर्थः । पञ्चम्या उपधानं च वक्ष्यति ‘ अन्तरेण दक्षिणां दिश्याम् ’ इति ( त्रयोदश्यां कण्डिकायाम् ) ॥ ३—४ ॥

अथ विराज इति । असपत्ना उपधाय ‘अथ’ अनन्तरं ‘विराज उपदधाति’ इति क्रमवचनम् । अथ यदुक्त ‘पञ्चमीं चितिमुपदधाति ते चेतयमाना दिवमेव विराजं पञ्चमीं चितिमपश्यन्’ इति किमियं पञ्चमचितिस्तूक्तमर्थं पुनरुपन्यस्यत आहोस्विदन्यासामेवेष्टकानामपूर्वमेवेदमुपधानमुपदिश्यत इति सन्देहनिवृत्त्यर्थमाह—एषा वै सा विराडिति । ननु च ‘अथ विराज’ इति या विराज उपक्रान्ताः, कथम् ‘एषा वै सा विराट्’ इत्येकवचनेन परामृश्यन्ते । नैष दोषः, विराडक्षरास्तावच्छन्दोवचनास्तें संख्यासामान्याच्च प्रयुज्यन्ते । तत्र छन्दः दशाक्षरेणैव केनापि पादेन

यद्वेवैताऽअसपत्नाऽउपदधाति । ( त्ये ) एतद्वै प्रजापतिमेतस्मिन्नात्मनः प्रतिहिते सर्वतः पाप्मोपायतत सऽएताऽइष्टकाऽअपश्यदसपत्नास्ताऽउपाधत्त ताभिस्तं पाप्मानमपाहत पाप्मा वै सपत्नस्तद्यदेताभिः पाप्मानꣳ सपत्नमपाहत तस्मादेताऽअसपत्नाः ॥ ६ ॥

( स्त ) तद्वाऽएतत्क्रियते । यद्देवाऽअकुर्वन्निदं न्विमꣳ स पाप्मा नोपयतते यस्त्वेतत्करोति यद्देवाऽअकुर्वंस्तत्करवाणीत्यथो यऽएव पाप्मा

---

यद्वेवैता असपत्ना उपदधाति । एतद्वै प्रजापतिमेतस्मिन्नात्मनः प्रतिहिते सर्वतः पाप्मोपायतत । स एता इष्टका अपश्यदसपत्नाः । ता उपाधत्त । ताभिस्तं पाप्मानमपाहत । पाप्मा वै सपत्नः । तद्यदेताभिः पाप्मानं सपत्नमपाहत—तस्मादेता असपत्नाः ॥ ६ ॥

तद्वाऽएतत्क्रियते—यद्देवा अकुर्वन् । इदं न्विमं स पाप्मा नोपयतते । यस्त्वेतत्करोति । यद्देवा अकुर्वन्—तत्करवाणीति । अथो य एव पाप्मा, यः सपत्नः—तमेताभिरपहते । तद्यदेताभिः पाप्मानं

---

विराडित्युच्यते । चतुर्भिरपि ततश्च तदनुकारेणायमत्र विराड् इष्टकानां दशके यदा प्रयुज्यतेऽतस्तदा ते चत्वारो दशका इति कृत्वा विराज इति बहुवचनं न भवति । यदा तु चत्वारिंशदक्षरा विराट् च तत्सामान्यादिष्टकानामपि चत्वारिंशदेव विराडित्येतदभिप्रायमेतदेकवचनमेव भवतीत्युपपन्नम् । कीदृशी पुनर्विराड् उपदधाति—किं च चत्वारिंशदात्मिका । आहोस्विद्दशात्मिका इत्यत आह—ता दश दशेति । 'ता दश दश' तदात्मिका विराजो न चत्वारिंशदात्मिका इति तदर्थः । चत्वारिंशद्विराज इत्येतदात्मकमेव, लोकाश्चतस्रो विराजो दशात्मिकास्ताश्चत्वारिंशद्यजुष्मत्य इति । अन्यास्तु ता विराजो दशदशेति सामानाधिकरण्याच्चत्वारिंशद्विराज इति च सामानाधिकरण्यादिष्टकानामेव विराज इत्येतेन समं मन्यन्ते । तत्प्रागुक्तम् । प्रतीष्टकयोर्योगस्यादर्शनात् सङ्ख्यासामान्याच्च प्रवृत्तिनिमित्तस्यासंभवादेतस्यां विराज इति च दशके एकवचनात्तस्य दर्शनाच्चतस्रो दश च इति च शब्देनात्मव्यवहारदर्शनाच्छन्दस्याशब्दस्य तन्निमित्तस्येष्टकानां तु प्रागुक्तत्वात् । तस्माद्यथावर्णित एव ग्रन्थार्थो युक्तः । एवं तावद्देवैरसपत्ना विराजश्च दृष्टा इत्येतदुक्तं संप्रति ब्राह्मणशेषेणासपत्नासु प्राजापत्यं दर्शनं प्रपञ्च्यते । परेण च ब्राह्मणेन विराड् 'एतस्मिन्नात्मनः' इति तदूर्ध्वमध्या.... 'सर्वतः' सर्वासु दिक्षु 'पाप्मा' न क्षरणे पातव्यं तस्मादिति पाप्मा दृष्टादृष्टम् उपपातकम् । अदृष्टस्तावदधर्मस्तत्पूर्वश्चाध्यात्मिको मोहरागद्वेषमिथ्याभिनिवेशनिद्रालस्यप्रमादव्याधिगौरवादिबाह्यश्चाकीर्तिप्रभावो विभूतिः । साधनवैगुण्यद्वेष्टा द्वेष्यदात्मको दन्दशूकोऽन्यो वा न तु कुलशीतोष्णादि उपायतत इति ( प्रचां तु उपरन्ते यतस्तस्मिन् ) 'तद्यदेताभिः' इत्यनेन सोपपन्नताकारणभूता 'असपत्ना' इत्येतदर्शयति ॥ ९ ॥ ६ ॥

तद्वा एतदिति । प्राजापत्यस्येतिहासस्यायमधियज्ञमुपसंहारः । 'यद्देवा अकुर्वन्' इति ( प्रजापतिपदमसीरतिश्चान्यैरपि ) देवैरुपहिता इति बहुवचनम् । इतरथा त्वेवमवक्ष्यत् तद्वा एतत् क्रियते यत्प्रजापतिरकरोत् । 'इदम्'

---

१—विराजो दश दश प्रतिदिशं पुरस्तात् प्रथमंमेवश्छंद इति प्रतिमंत्रम् । गायत्र्यसपत्नागणमध्येऽसंभवात् । दक्षिणाभ्यो वा पर अर्धपर्या उपधाय असपत्नां स्तृषोऽन्यतोऽन्तराः ॥ का. श्रौ. सू. १७ । २२८ ।

युः सपत्नस्तमेताभिरपहते तद्यदेताभिः पाप्मानꣳ सपत्नमपहते तस्मादेताऽअसपत्नाः सर्व्वतऽउपदधाति सर्व्वतऽएवैतत्पाप्मानꣳ सपत्नमपहते परार्धऽउपदधाति सर्व्वस्मादेवैतदात्मनः पाप्मानꣳ सपत्नमपहते ॥ ७ ॥

स पुरस्तादुपदधाति । ( त्य ) अग्ने जातान्प्रणुदा नः सपत्नानिति यथैव यजुस्तथा बन्धुरथ पश्चात्सहसा जातान्प्रणुदा नः सपत्नानिति यथैव यजुस्तथा बन्धुः ॥ ८ ॥

सा या पुरस्तादग्निः । सा या पश्चादग्निः साऽग्निनैव तत्पुरस्तात्पाप्मानमपाहताग्निना पश्चात्तथैवैतद्यजमानोऽग्निनैव पुरस्तात्पाप्मानमपहतेऽग्निना पश्चात् ॥ ९ ॥

---

सपत्नमपहते—तस्मादेता असपत्नाः । सर्वत उपदधाति । सर्वत एवैतत्पाप्मानं सपत्नमपहते । परार्धे उपदधाति । सर्वस्मादेवैतदात्मनः पाप्मानं सपत्नमपहते ॥ ७ ॥

स पुरस्तादुपदधाति । "अग्ने जातान्प्रणुदा नः सपत्नान्"—( वा० सं० १९ । १ ) इति । यथैव यजुस्तथा बन्धुः । अथ पश्चात् । "सहसा जातान्प्रणुदा नः सपत्नान्"— ( वा० सं० १९ । २ ) इति । यथैव यजुस्तथा बन्धुः ॥ ८ ॥

सा या पुरस्ताद्—अग्निः सा । या पश्चाद्—अग्निः सा । अग्निनैव तत्पुरस्तात्पाप्मानमपाहत, अग्निना पश्चात् । तथैवैतद्यजमानोऽग्निनैव पुरस्तात्पाप्मानमपहते, अग्निना पश्चात् ॥ ९ ॥

---

इति सन्निहितं प्रमाणान्तरं दृश्यं दर्शयति । चतुर्थ्यां चितौ चितायामिमं यजमानं स पाप्मा चोपयतत इदं दृश्यते एव नहि नियोग एतस्यामवस्थायां स केन चिद्ध्यात्मिकेन बाह्येन चोपद्रवेणासाध्यत इत्यर्थः । 'अथो य एव' इति यद्यप्यपूर्वपाप्मानमेनमपाहत तयोर्याभिर्मनुष्यत्वात्तस्यास्त्येव कश्चित्पात्मानम् । 'एताभिरपहते' यः सपत्नः पाप्मा विशेष एव यः समानार्थस्य पतिरेकार्थाभिलाषी समुच्यते तस्य च भेदेन ग्रहणमिहासपत्नाशब्दनिर्वचनार्थः । एतदुक्तं भवति । असपत्नाशब्दे सपत्नशब्दः पाप्मलक्षणार्थस्ततश्च पाठः सपत्नः स पाप्मा इत्ययमेवार्थ इति ॥ ७ ॥

स पुरस्तादिति । 'स पुरस्तात्' सर्वत उपदधातीत्येतेन दिशः प्राप्ताः य एव मन्त्राश्च पाठक्रमो नियमार्थोऽन्ये चैतानि वचनानि पुरस्तात् प्रथमम् 'उपदधाति' ततः पश्चात्, ततो दक्षिणतः । तत उत्तरतो मध्येचिति एवं सतीह दिग्विधानं स्पष्टं नास्ति गायत्र्यादिषु च पूर्वार्द्धे उपदधातीति स्पष्टमस्तीति तदनुरोधेनैव अश्विनीवदनूकमुत्तरेण द्वितीयेषु लोकेषूपधेया इति गम्यते 'यथैव यजुः' इतीष्टकाशरीरोऽग्निरात्मन्युपधीयत इत्यभिप्रायः ॥ ८ ॥

एतदेव स्पष्टीकरोति—सा या पुरस्तादग्निः सा या पश्चादग्निरिति । 'सा या पुरस्तात्' इष्टकाभिः 'सा' इत्यादिना ॥ ९ ॥

( ढ ) अथ दक्षिणतः । षोडशी स्तोमऽओजो द्रविणमित्येकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभमन्तरिक्षं चतस्रो दिशऽएषऽ एव वज्रः पञ्चदशस्तस्यासावेवादित्यः षोडशी वज्रस्य भर्ता सऽएतेन पञ्चदशेन वज्रेणैतया त्रिष्टुभा दक्षिणतः पाप्मानमपाहत तथैवैतद्यजमानऽएतेन पञ्चदशेन वज्रेणैतया त्रिष्टुभा दक्षिणतः पाप्मानमपहते ॥ १० ॥

( तेऽथो ) अथोत्तरतः । ( श्च ) चतुश्चत्वारिꣳश स्तोमो वर्चो द्रविणमिति चतुश्चत्वारिꣳशदक्षरा वै त्रिष्टुप्त्रैष्टुभो वज्रः सऽएतेन चतुश्चत्वारिꣳशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपाहत तथैवैतद्यजमानऽएतेन चतुश्चत्वारिꣳशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपहते ॥ ११ ॥

---

अथ दक्षिणतः । " षोडशी स्तोम ओजो द्रविणम् "–इति । एकादशाक्षरा वै त्रिष्टुप् । त्रैष्टुभमन्तरिक्षम् । चतस्रो दिशः । एष एव वज्रः पञ्चदशः । तस्यासावेवादित्यः षोडशी वज्रस्य भर्ता । स एतेन पञ्चदशेन वज्रेणैतया त्रिष्टुभा दक्षिणतः पाप्मानमपाहत । तथैवैतद्यजमान एतेन पञ्चदशेन वज्रेणैतया त्रिष्टुभा दक्षिणतः पाप्मानमपहते ॥ १० ॥

अथोत्तरतः । " चतुश्चत्वारिंशः स्तोमो वर्चो द्रविणम् "–इति । चतुश्चत्वारिंशदक्षरा वै त्रिष्टुप् । त्रैष्टुभो वज्रः । स एतेन चतुश्चत्वारिंशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपाहत । तथैवैतद्यजमान एतेन चतुश्चत्वारिंशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपहते ॥ ११ ॥

---

( द्विविधः दर्योंकुरायैनृण्णवेति ) षोडशिमन्त्रोपात्ताः त्रिष्टुभः अन्तर्गता दर्शयति । त्रैष्टुभो विकारस्त्रिष्टुभा वा सम्मितं दशदिशोऽन्तारिक्षमेकादशं रुद्रायतनं चेति कृत्वा ( वस्तः ) दिशो महत्या पूर्वं एकादशभिर्मणिः स एष वज्रः पञ्चदशपरिमाणमस्य वज्रस्योत्पत्त्यैवं वज्रमात्रेण प्रत्ययो द्रष्टव्यः । तस्य च वज्रं यस्य पञ्चदशादित्यो भर्ता स च षोडशीति प्रयोगात् षोडशानां पूरण इत्येतस्मिन्नर्थे णिनिप्रत्ययं दर्शयति । अथवा षोडशं स्थानं ( संख्यां ) अस्य यजमानस्यास्तीति षोडशी मत्वर्थीय एव णिनिः, एवं षोडश्युपादा नैव वज्रस्त्रिष्टुभोऽनुपातं दर्शयित्वा ( तयोर्वेति यो रामाह । ) प्रजापतिरेतेनेति एतत् ब्रुवति । इमं मन्त्रार्थं दर्शयति । यः षोडशी स्तोम इति त्रिष्टुप् वज्रस्तं पाप्मा यद्येतेनोपधेयमुपदधातीति एवमुत्तरत्रापि यश्चतुश्चत्वारिंशो वज्रस्तमुपदधामीति मन्त्रार्थः । अर्थे हि तद्यदेताभिः–अपाहतेतीष्टकाभिरपयातो दर्शितः । तेन मन्त्रे, इष्टकाः वज्रात्मिका दर्शनीया इति युक्तम् ॥ १० ॥

अथोत्तरत इति । ' अथोत्तरतः ' त्रैष्टुभस्त्रिष्टुप्संमितो वा ' चतुश्चत्वारिंशत् ' अस्ति अपहितवधेव वज्रः, अन्तरिक्षमपि च चतुश्चत्वारिंशमेकैका दिगित्येवं गृह्यमाणा ॥ ११ ॥

( तु॒ऽथ ) अथ॒ मध्ये॑ । ( ध्येऽग्नेः ) अ॒ग्नेः पुरी॑षमसी॒ति ब्रह्म॒ वै च॑तु॒र्थी चि॒तिर॒ग्निरु॒ वै ब्रह्म॒ त॒स्या ऽएतत्पुरी॑षमिव॒ य॒त्पश्च॒म्यप्सो॒ नामे॑ति त॒स्योक्तो॒ ब॒न्धुः ॥ १२ ॥

( स्तां ) तां प्रा॒चीं ति॒रश्ची॒मुप॑दधाति । ( त्ये ) ए॒तद्धै॒त॒या प्र॒जाप॑तिः पा॒प्मनो॒ मू॒लम॑वृश्चत्त॒थै॒वै॒नया॒ऽयमे॒तत्पा॒प्मनो॒ मूलं॑ वृश्चति दक्षिण॒तो द॑क्षिण॒तऽउ॒द्यामो॒ हि वज्रो॒ऽन्तरे॑ण द॒क्षिणां॒ दि॒श्यामु॒द्यामा॒य ह त॒मवका॒शं क॑रोति ॥ १३ ॥

सा या पु॒रस्ता॑त्प्रा॒णः सा । या प॒श्चाद॑पा॒नः सा प्रा॒णेनै॒व त॒त्पुरस्ता॒त्पा॒प्मान॑मपाहता॒पा॒नेन॑ प॒श्चात्त॒थै॒वैत॒द्यज॑मानः प्रा॒णेनै॒व पु॒रस्ता॒त्पा॒प्मान॑मु॒पहते॒ऽपा॒नेन॑ प॒श्चात् ॥ १४ ॥

---

अथ मध्ये-" अग्नेः पुरीषमसि "-इति । ब्रह्म वै चतुर्थी चितिः । अग्निरु वै ब्रह्म । तस्या एतत्पुरीषमिव-यत्पञ्चमी । " अप्सो नाम "-( वा. सं. १५ । ३ ) इति । तस्योक्तो बन्धुः ॥ १२ ॥

तां प्राचीं तिरश्चीमुपदधाति । एतद्धैतया प्रजापतिः पाप्मनो मूलमवृश्चत् । तथैवैनयाऽयमेतत्पाप्मनो मूलं वृश्चति । दक्षिणतः । दक्षिणतउद्यामो हि वज्रः । अन्तरेण दक्षिणां दिश्याम् । उद्यामाय ह तमवकाशं करोति ॥ १३ ॥

सा या पुरस्तात्-प्राणः सा । या पश्चाद्-अपानः सा । प्राणेनैव तत् पुरस्तात्पाप्मानमपाहत, अपानेन पश्चात् । तथैवैतद्यजमानः प्राणेनैव पुरस्तात्पाप्मानमपहते, अपानेन पश्चात् ॥ १४ ॥

---

' अथ मध्ये ' ' अग्निरु वै ब्रह्मेति ' चतुर्थ्यां चितौ ब्रह्मोपहितं तदग्न्यात्मकमिति दर्शयति-किंदेवत्या पुनरेषा पुरीषवती चन्द्रावती कुत एतत् । अनन्तरं पुरीष....नीतिह्याह चन्द्रमाश्च दैवमन्नमिति तथा च मन्त्रवर्णस्य ' अप्सो नामेति ' रसो नामत्येतदिति ॥ १२ ॥

तां प्राचीमिति । ' तां ' मध्यमां (मय) 'प्राचीं' प्राग्लक्षणामुपदधाति ' तिरश्चीम् ' इति सन्निकृष्टेष्टका-न्तरापेक्षया तिरश्चीमिति केवल्याः सन्निकृष्टास्तत्रोदग्लक्षणा इष्टका उपधेयाः ( स्कन्धोश्च ) प्राचीत्ववचना-दुत्तरामपि उपधीयन्त इति दर्शयति । ततश्च श्रोण्यंसयोरन्तराले उदग्लक्षणा एव । परिशेषात्तु लोमसंस्त-वाच, आसामन्तराले च प्राग्लक्षणा उपधेयाः । ' मूलमवृश्चत् ' इति । तिरश्चोत्तरस्य प्रयोजनमतिरश्चा-भिशक्यमूलं छेत्तुमित्यभिप्रायः । ताश्च दक्षिणत उपदधाति नच पारमार्थिक एवाग्नेर्मध्य इत्यर्थः । किं कारणं ? 'दक्षिणतउद्यामो हि वज्रः' दक्षिणत उद्याम उत्कर्षोऽस्येति दक्षिणतउद्यामः । स्वभावो वज्रे चोभामवज्रं क्षिपति । किमस्मिन् पुनःप्रादेशे दक्षिणतस्तामुपदधातीत्यत आह-अन्तरेण दक्षिणां दिश्यां । न अरत्निमात्रे कुत एत-द्वहिस्तोममागं पुरीषवतीमतिच्छन्दसं चोपदधातीति वचनात् । किमर्थमन्तरेण ( नव हि यतदेलायाभिवचेत्यत आह ) ' उद्यामाय ' प्रक्षेपार्थाय तमवकाशं करोति यदस्या दक्षिणतोऽग्नेरवशिष्यत इत्यभिप्रायः ॥ १३ ॥

सा या पुरस्तादिति-त्रिभिरेताभिः कण्डिकाभिः प्राजापत्यमेव दर्शनान्तरं यजमान उपसंह्रियते । किं

( इ ) अथ येऽअभितः । (स्तौ) तौ बाहू स योऽस्याभितः पाप्माऽऽसी-द्बाहुभ्यां तमपाहत तथैवैतद्यजमानो योऽस्याभितः पाप्मा भवति बाहु-भ्यामेव तमपहते ॥ १५ ॥

(तेऽन्नं) अन्नं पुरीषवती । स योऽस्योपरिष्टात्पाप्माऽऽसीदन्नेन तमपाहत तथैवैतद्यजमानो योऽस्योपरिष्टात्पाप्मा भवत्यन्नेनैव तमपहते ॥ १६ ॥

स यद्ध वाऽएवंवित्प्राणिति । योऽस्य पुरस्तात्पाप्मा भवति तं तेनाप-हतेऽथ यदपानिति तेन तं यः पश्चादथ यद्बाहुभ्यां कर्म कुरुते तेन तं योऽभितोऽथ यदन्नमत्ति तेन तं यऽउपरिष्टात्सर्व्वदा ह वाऽएवंवित्पा-प्मानमपहतेऽपि स्वपंस्तस्मादेवं विदुषः पापं न कीर्तयेन्नेदस्य पाप्मा-ऽसानीति ॥ १७ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ८–३–२ ॥ ( ५. १ ) ॥

---

अथ येऽअभितः–तौ बाहू । स योऽस्याभितः पाप्माऽऽसीद्–बाहुभ्यां तमपाहत । तथैवैतद्यजमानो योऽस्याभितः पाप्मा भवति–बाहुभ्यामेव तमपहते ॥ १५ ॥

अन्नं पुरीषवती । स योऽस्योपरिष्टात्पाप्माऽऽसीद्–अन्नेन तमपाहत । तथैवैतद्यजमानो योऽस्यो-परिष्टात्पाप्मा भवति–अन्नेनैव तमपहते ॥ १६ ॥

स यद्ध वाऽएवंवित्प्राणिति–योऽस्य पुरस्तात्पाप्मा भवति–तं तेनापहते । अथ यदपानिति–तेन तम्–यः पश्चात् । अथ यद्बाहुभ्यां कर्म कुरुते–तेन तम्–योऽभितः । अथ यदन्नमत्ति–तेन तम्–य उपरिष्टात् । सर्वदा ह वाऽएवं वित्पाप्मानमपहते–अपि स्वपन् । तस्मादेवं विदुषः पापं न कीर्तयेत्–नेदस्य पाप्माऽसानीति ॥ १७ ॥

---

पुनः 'उपरिष्टात् पाप्मा भवति' य उपरिभागे न कृतः यो वा शिरोरोगादिकं परिवर्त्तते संनिपातादिर्वा॥ १४–१६॥

'स यद्ध वै' एवंविदेव (सको वेरेवासि) चयनादेवं 'पाप्मानमपहत' इत्यर्थः । कुत एतत् । यजमानः पाप्मानमपहन्तीत्यस्यार्थस्यापूर्वेणैवोक्तत्वात् । तस्मादेवमुपासकस्य भूताद्या 'पापम्' अन्यो 'न कीर्तयेत्' प्रोक्तं किमिति विदुषः ( आहते ) त अस्यैवमुपासकस्य पाप्माऽपहन्तव्यः असानि ( वार्थनाथाते ) 'नेत्' न हि पाप्मा भवतीति मान्योऽर्थः ॥ १७ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमे काण्डे पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ८–५–१ ) ॥

२००२

अथ च्छन्दस्याऽ उपदधाति । ( त्यै ) एतद्वै प्रजापतिः पाप्मनो मृत्योर्मुक्त्वाऽन्नमैच्छत्तस्मादु हैतदुपतापी व्वसीयान्भूत्वाऽन्नमिच्छति तस्मिन्नाशꣳसन्तेऽन्नमिच्छति जीविष्यतीति तस्मै देवाऽएतदन्नं प्रायच्छन्नेताश्छन्दस्याः पशवो वै छन्दाꣳस्यन्नं पशवस्तान्यस्माऽअच्छदयंस्तानि यदस्माऽअच्छदयंस्तस्माच्छन्दाꣳसि ॥ १ ॥

ता दश दशोपदधाति । दशाऽक्षरा व्विराड्विराडु कृत्स्नमन्नꣳ सर्व्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति सर्व्वतऽ उपदधाति सर्व्वतऽएवास्मिन्नेतत्कृत्स्नमन्नं दधाति ॥ २ ॥

---

### अथ चत्वारिंशच्छन्दस्येष्टकोपधानम् ।

अथ च्छन्दस्या उपदधाति । एतद्वै प्रजापतिः पाप्मनो मृत्योर्मुक्त्वाऽन्नमैच्छत् । तस्मादु हैतदुपतापी वसीयान्भूत्वाऽन्नमिच्छति । तस्मिन्नाशंसन्ते-अन्नमिच्छति, जीविष्यतीति । तस्मै देवा एतदन्नं प्रायच्छन्-एताश्छन्दस्याः । पशवो वै छन्दांसि । अन्नं पशवः । तान्यस्माऽअच्छदयन् । तानि यदस्माऽअच्छदयन्-तस्माच्छन्दांसि ॥ १ ॥

ता दश दशोपदधाति । दशाऽक्षरा विराट् । विराडु कृत्स्नमन्नम् । सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति । सर्वत उपदधाति । सर्वत एवास्मिन्नेतत्कृत्स्नमन्नं दधाति ॥ २ ॥

---

एवमसपत्नासु प्राजापत्यदर्शनं प्रपंच्यानेन तदेव परा प्रपञ्चयति । तासां च प्रसंगस्तावत् पञ्चमीं चितिमुपदधातीत्येवमुपधानं उपन्यस्तं ततः पुनरपि विराज उपदधातीत्येतदेव क्रमार्थमुत्कीर्तनमधुना तु च्छन्दःसंबन्धिना निमित्तेन ( प्रतीष्टेवर्तिनोपादाय ) पुरस्तादेवोपन्यस्यते (असपत्यानं या तेर्थतेत्तरं) 'छन्दस्या उपदधाति' या पूर्वं विराड्वदेषोपन्यस्ता इति । कथं पुनरस्य ते विराजामेवायं प्रपञ्चार्थः । पुनरर्थाधीनच्छन्दस्या इष्टकान्तराणीत्युच्यते । तत्र विराण्मितानां मन्त्राणामनुक्रमेणोदितानुक्रमेण विराजां च दशकात्मिकानामिहैव प्रत्यभिज्ञानादसपत्नवच्च प्रपञ्चस्यापेक्षितत्वाच्च । ( मपभाश्च ) चत्वारिंशद्विराज एकधानः त्रिंशस्तोमभाग इत्यत्र च प्रत्यभिज्ञानादेशेदर्शनाद्विराजामेवापुनर्वाद इति गम्यते । ' प्रजापतिः पाप्मनः ' आत्मानं मुक्त्वा अधियज्ञिकमेव अन्नमैच्छदनुकरणवादोऽपि उपतप्यतेऽनेनेत्युपतापो रोगोऽस्यास्तीति ' उपतापी ' आतुरः इति यावत् "वस निवासे" ("नस्तरः" स्थिरतर्वारा दृढतरपूर्वन्निविवस्थातो भूत्वा) अत्तुमिच्छति तस्मिन्नत्तुमिच्छति पार्श्वस्था आशंसंते जीवितं कामयतेऽन्नमिच्छत्ययं जीवतीति मन्यमानास्तां पचन्तीत्यर्थः । तस्मै प्राजापत्याय एतदाधियज्ञिकमन्नं छन्दस्यात्मकं दत्तवन्तः ' पशवो वै छन्दांसि ' (इतीष्टकानामन्नत्वो यामोदात्वन ) एतदुक्तं भवत्येता इष्टकाश्छन्दांसि पश्वात्मकानि पशवोऽन्नात्मका एवं तस्मा अन्नमित्येवं च छन्दः तदिष्टकाशरीरमुपदधातीत्येतद् मन्त्रार्थं दर्शयत्येवमुत्तरेष्वपि दर्शनीयस्तानि च्छन्दांस्यस्मै प्रजापतये अच्छदयन्नाराधयन्नित्यर्थः ॥ १ ॥

ता दश दशेति । पूर्ववदध्यात्मं व्याख्याता एव छन्दःक्रमप्राप्तमन्त्रानुक्रमणव्याख्यानार्थं चेत्यस्मिंस्तान्येव

( त्ये ) एवश्छन्द ऽइति । (त्य) अयं वै लोकऽ एवश्छन्दो वरिवश्छन्दऽ-इत्यन्तरिक्षं वै वरिवश्छन्दः शम्भूश्छन्दऽइति द्यौर्वै शम्भूश्छन्दः परिभू-श्छन्द ऽइति दिशो वै परिभूश्छन्द ऽआच्छच्छन्दऽइत्यन्नं वाऽआच्छच्छन्दो मनश्छन्दऽ इति प्रजापतिर्वै मनश्छन्दो व्यचश्छन्दऽइत्यसौ वाऽआदित्यो व्यचश्छन्दः ॥ ३ ॥

सिन्धुश्छन्द ऽइति । प्राणो वै सिन्धुश्छन्दः समुद्रश्छन्दऽइति मनो वै समुद्रश्छन्दः सरिरं छन्द ऽइति वाग्वै सरिरं छन्दः ककुप्छन्द ऽइति प्राणो वै ककुप्छन्दस्त्रिककुप्छन्द ऽइत्युदानो वै त्रिककुप्छन्दः काव्यं छन्द ऽइति त्रयी वै विद्या काव्यं छन्दोऽङ्कुपं छन्द ऽइत्यापो वाऽअङ्कुपं छन्दोऽक्षरपङ्क्ति-श्छन्द ऽइत्यसौ वै लोकोऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्द ऽइत्ययं वै लोकः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्द ऽइति दिशो वै विष्टारपङ्क्ति-श्छन्दः क्षुरो भ्रुजश्छन्दऽइत्यसौ वाऽआदित्यः क्षुरो भ्रुजश्छन्द ऽआच्छ-च्छन्दः प्रच्छच्छन्दऽइत्यन्नं वाऽआच्छच्छन्दोऽन्नं प्रच्छच्छन्दः ॥ ४ ॥

---

(१) (१) "एवश्छन्दः"–इति । अयं वै लोक एवश्छन्दः । (२) "वरिवश्छन्दः"–इति । अन्तरिक्षं वै वरिवश्छन्दः । (३) "शम्भूश्छन्दः"–इति । द्यौर्वै शम्भूश्छन्दः । (४) "परिभूश्छन्दः"–इति । दिशो वै परिभूश्छन्दः । (५) "आच्छच्छन्दः"–इति । अन्नं वा आच्छच्छन्दः । (६) "मनश्छन्दः"–इति । प्रजापतिर्वै मनश्छन्दः । (७) "व्यचश्छन्दः"–इति । असौ वा आदित्यो व्यचश्छन्दः ॥ ३ ॥

(८) "सिन्धुश्छन्दः"–इति । प्राणो वै सिन्धुश्छन्दः । (९) "समुद्रश्छन्दः"–इति । मनो वै समुद्रश्छन्दः । (१०) "सरिरं छन्दः"–इति । वाग्वै सरिरं छन्दः । (२) (११) "ककुप्छन्दः"–इति । प्राणो वै ककुप्छन्दः । (१२) "त्रिककुप्छन्दः"–इति । उदानो वै त्रिककुप्छन्दः । (१३) "काव्यं छन्दः"–इति । त्रयी वै विद्या काव्यं छन्दः । (१४) "अङ्कुपं छन्दः"–इति । आपो वाऽअङ्कुपञ्छन्दः । (१५) "अक्षरपङ्क्तिश्छन्दः"–इति । असौ वै लोकोऽक्षरपङ्क्तिश्छन्दः । (१६) "पदपङ्क्तिश्छन्दः"–इति । अयं वै लोकः पदपङ्क्तिश्छन्दः । (१७) "विष्टारपङ्क्तिश्छन्दः"–इति । दिशो वै विष्टारपङ्क्तिश्छन्दः । (१८) "क्षुरो भ्रजश्छन्दः"–(वा. सं. १५।४) इति । असौ वा आदित्यः क्षुरो भ्रजश्छन्दः । (१९) "आच्छच्छन्दः । (२०) प्रच्छच्छन्दः"–इति । अन्नं वाऽआच्छच्छन्दः । अन्नं प्रच्छच्छन्दः ॥ ४ ॥

---

छन्दोऽयं लोक इत्याधिदैविकेन शरीरेण छन्दोविशेषमुपासनार्थं निरूपयत्येवं सर्वमावृणोतीति वरिवः । शं भाव-

संयच्छन्द ऽइति । रात्रिर्व्वै संयच्छन्दो वियच्छन्द ऽइत्यहर्व्वै वियच्छन्दो बृहच्छन्दऽइत्यसौ वै लोको बृहच्छन्दो रथन्तरं छन्दऽइत्ययं वै लोको रथन्तरं छन्दो निकायश्छन्द ऽइति व्वायुर्व्वै निकायश्छन्दो विवधश्छन्दऽइत्यन्तरिक्षं वै विवधश्छन्दो गिरश्छन्द ऽइत्यन्नं वै गिरश्छन्दो भ्रजश्छन्दऽइत्यग्निर्वै भ्रजश्छन्दः सँस्तुप्छन्दोऽनुष्टुप्छन्दऽइति व्वागेव सँस्तुप्छन्दो व्वागनुष्टुप्छन्द ऽएवश्छन्दो व्वरिवश्छन्द ऽइति तस्योक्तो बन्धुः ॥ ५ ॥

(व्वु) व्वयश्छन्दऽइति । (त्यु) अन्नं वै व्वयश्छन्दो व्वयस्कृच्छन्दऽइत्यग्निर्व्वै व्वयस्कृच्छन्दो विष्पर्धाश्छन्द ऽइत्यसौ वै लोको विष्पर्धाश्छन्दो विशालं छन्द ऽइत्ययं वै लोको विशालं छन्दश्छदिश्छन्दऽइत्यन्तरिक्षं वै छदिश्छन्दो दूरोहणं छन्द ऽइत्यसौ वाऽआदित्यो दूरोहणं छन्दस्तन्द्रं छन्द ऽइति पङ्क्तिर्व्वै तन्द्रं छन्दोऽङ्काङ्कं छन्द ऽइत्यापो वाऽअङ्काङ्कं छन्दः ॥ ६

( स्त ) तद्याः पुरस्तादुपदधाति । प्राणस्तासां प्रथमा व्यानो द्विती-

---

( ३ ) ( २१ ) "संयच्छन्दः "–इति । रात्रिर्वै संयच्छन्दः । (२२) "वियच्छन्दः"–इति । अहर्वै वियच्छन्दः । (२३) " बृहच्छन्दः "–इति । असौ वै लोको बृहच्छन्दः । ( २४ ) " रथन्तरं छन्दः "–इति । अयं वै लोको रथन्तरं छन्दः । ( २५ ) " निकायश्छन्दः "–इति । वायुर्वै निकायश्छन्दः । ( २६ ) " विवधश्छन्दः "–इति । अन्तरिक्षं वै विवधश्छन्दः । ( २७ ) "गिरश्छन्दः"–इति । अन्नं वै गिरश्छन्दः । ( २८ ) "भ्रजश्छन्दः"–इति । अग्निर्वै भ्रजश्छन्दः । ( २९ ) "संस्तुप्छन्दः " ( ३० ) "अनुष्टुप्छन्दः"–इति । वागेव संस्तुप्छन्दो वागनुष्टुप्छन्दः । ( ४ ) ( ३१ ) " एवश्छन्दः " ( ३२ ) "वरिवश्छन्दः"–इति । तस्योक्तो बन्धुः ॥ ५ ॥

( ३३)" वयश्छन्दः "–इति । अन्नं वै वयश्छन्दः । ( ३४ ) "वयस्कृच्छन्दः "–इति । अग्निर्वै वयस्कृच्छन्दः । ( ३५ ) " विष्पर्धाश्छन्दः "–इति । असौ वै लोको विष्पर्धाश्छन्दः । ( ३६ ) " विशालं छन्दः "–इति । अयं वै लोको विशालं छन्दः । (३७) "छदिश्छन्दः"–इति । अन्तरिक्षं वै छदिश्छन्दः । ( ३८ ) " दूरोहणं छन्दः "–इति । असौ वा आदित्यो दूरोहणं छन्दः । ( ३९ ) " तन्द्रं छन्दः "–इति । पंक्तिर्वै तन्द्रं छन्दः । ( ४० ) " अङ्काङ्कं छन्दः " ( वा० सं० १५ । ५ ) –इति । आपो वा अङ्काङ्कं छन्दः ॥ ६ ॥

( १ ) तद्याः पुरस्तादुपदधाति–प्राणस्तासां प्रथमा, व्यानो द्वितीया, उदानस्तृतीया ।

---

यतीति शंभूः । परिभवतीति परिभ्वादिनिर्वचनं द्रष्टव्यम् । तद्याः पुरस्तादुपदधाति प्राणस्तासां प्रथमेत्येवादीन्येव छन्दांसि प्राणादिरूपाणि निरूपयति दर्शनानन्तरम् । अथ पुनः प्राणास्ते इन्द्रियात्मका दर्शनानन्तरमेवमुत्तरस्यापि।

योदानुस्तृतीयोदानुश्चतुर्थी व्व्यानुः पञ्चमी प्राणुः षष्ठी प्राणुः सप्तमी व्व्यानोऽष्टम्युदानो नवमी युजमान ऽएवात्र दशमी सु ऽएष युजमान ऽएतुस्यां व्विराज्युध्यूढः प्रतिष्ठितः प्राणमुय्यामव्र्वाचीश्च पुराचीश्चोपद्धाति तुस्मादिमे प्राणा ऽअर्व्वाञ्चश्च पुराञ्चश्च ॥ ७ ॥

( या ) अथ या दक्षिणतः । (तोऽ) अग्निस्तुासां प्रथमा व्वायुर्द्वितीया ऽऽदित्युस्तृतीयाऽऽदित्युश्चतुर्थी व्वायुः पञ्चम्यग्निः षुष्ठयग्निः सप्तमी व्वायुरष्टम्यादित्यो नवमी युजमान ऽएवात्र दशमी सु ऽएष युजमान ऽएतुस्यां व्विराज्युध्यूढः प्रतिष्ठितो देवतामुय्यामव्र्वाचीश्च पुराचीश्चोपदधाति तुस्मादेते देवा ऽअर्व्वाञ्चश्च पुराञ्चश्च ॥ ८ ॥

( या ) अथ याः पश्चात् । (द) अयं लोकस्तुासां प्रथमाऽन्तुरिक्षं द्वितीया द्यौस्तृतीया द्यौश्चतुर्थ्यन्तुरिक्षं पञ्चम्ययं लोकुः षुष्ठ्ययं लोकुः सप्तम्यन्तुरिक्षमष्टमी द्यौर्नवमी युजमान ऽएवात्र दशमी सु ऽएष युजमान ऽएतुस्यां विराज्युध्यूढः प्रतिष्ठितो लोकमुय्यामव्र्वाचीश्च पुराचीश्चोपदधाति तुस्मादिमे लोका ऽअर्व्वाञ्चश्च पुराञ्चश्च ॥ ९ ॥

( या ) अथ या ऽउत्तरतः । ( तो ) ग्रीष्मस्तुासां प्रथमा व्वर्षा द्वितीया हेमन्तुस्तृतीया हेमन्तुश्चतुर्थी व्वर्षाः पञ्चमी ग्रीष्मुः षष्ठी ग्रीष्मुः सप्तमी

---

उदानश्चतुर्थी, व्यानः पञ्चमी, प्राणः षष्ठी । प्राणः सप्तमी, व्यानोऽष्टमी, उदानो नवमी । यजमान एवात्र दशमी । स एष यजमान एतस्यां विराज्यध्यूढः प्रतिष्ठितः प्राणमय्याम् । अर्वाचीश्च पराचीश्चोपदधाति । तस्मादिमे प्राणा अर्वाञ्चश्च पराञ्चश्च ॥ ७ ॥

(२) अथ या दक्षिणतः–अग्निस्तासां प्रथमा, वायुर्द्वितीया, आदित्यस्तृतीया । आदित्यश्चतुर्थी, वायुः पञ्चमी, अग्निः षष्ठी । अग्निः सप्तमी, वायुरष्टमी, आदित्यो नवमी । यजमान एवात्र दशमी । स एष यजमान एतस्यां विराज्यध्यूढः प्रतिष्ठितो देवतामय्याम् । अर्वाचीश्च पराचीश्चोपदधाति । तस्मादेते देवा अर्वाञ्चश्च पराञ्चश्च ॥ ८ ॥

(३) अथ याः पश्चात् । अयं लोकस्तासां प्रथमा, अन्तरिक्षं द्वितीया, द्यौस्तृतीया । द्यौश्चतुर्थी, अन्तरिक्षं पञ्चमी, अयं लोकः षष्ठी । अयं लोकः सप्तमी, अन्तरिक्षमष्टमी, द्यौर्नवमी । यजमान एवात्र दशमी । स एष यजमान एतस्यां विराज्यध्यूढः प्रतिष्ठितो लोकमय्याम् । अर्वाचीश्च पराचीश्चोपदधाति । तस्मादिमे लोका अर्वाञ्चश्च पराञ्चश्च । ॥ ९ ॥

(४) अथ या उत्तरतः–ग्रीष्मस्तासां प्रथमा, वर्षा द्वितीया, हेमन्तस्तृतीया । हेमन्तश्चतुर्थी, वर्षाः पञ्चमी, ग्रीष्मः षष्ठी । ग्रीष्मः सप्तमी, वर्षा अष्टमी, हेमन्तो नवमी । यजमान एवात्र दशमी ।

र्व्वर्षा ऽअष्टमी हेमन्तो नवमी यजमान ऽएवात्र दशमी स ऽएष यजमान ऽएतस्यां व्विराज्यध्यूढः प्रतिष्ठितऽऋतुमध्यामर्व्वाचीश्च पराचीश्चोपदधाति तस्मादेतऽऋतवोऽर्व्वाञ्चश्च पराञ्चश्च ॥ १० ॥

( श्रा ) अथ पुनरेव । याः पुरस्तादुपदधाति प्राणास्ते ता दश भवन्ति दश वै प्राणाः पूर्वार्धऽउपदधाति पुरस्ताद्धीमे प्राणाः ॥ ११ ॥

( ऽ ) अथ या दक्षिणतः । ( ऽ ) एतास्ता देवता ऽअग्निश्च पृथिवी च व्वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चान्नं चापश्च ॥ १२ ॥

( श्रा ) अथ याः पश्चात् । ( दि ) दिशस्ताश्चतस्रो दिशश्चतस्रोऽवा-न्तरदिश ऽऊर्ध्वा चेयं च ॥ १३ ॥

( चा ) अथ या ऽउत्तरतः । ( तो ) मासास्ते व्वासन्तिकौ द्वौ ग्रैष्मौ द्वौ व्वार्षिकौ द्वौ शारदौ द्वौ हैमन्तिकौ द्वौ ॥ १४ ॥

( द्वाव ) अथ पुनरेव । या प्रथमा दशदयँ स लोको या द्वितीयाऽन्त-रिक्षं तद्या तृतीया द्यौः सेममेव लोकं प्रथमया दशताऽरोहन्नन्तरिक्षं द्विती-यया दिवं तृतीयया तथैवैतद्यजमान ऽइममेव लोकं प्रथमया दशता रोहत्य-न्तरिक्षं द्वितीयया दिवं तृतीयया ॥ १५ ॥

---

स एष यजमान एतस्यां विराज्यध्यूढः प्रतिष्ठित ऋतुमध्याम् । अर्वाचीश्च पराचीश्चोपदधाति । तस्मादेत ऋतवोऽर्वाञ्चश्च पराञ्चश्च ॥ १० ॥

( १ ) अथ पुनरेव याः पुरस्तादुपदधाति । प्राणास्ते । ता दश भवन्ति । दश वै प्राणाः । पूर्वार्द्ध उपदधाति । पुरस्ताद्धीमे प्राणाः ॥ ११ ॥

( २ ) अथ या दक्षिणतः—एतास्ता देवताः—अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चान्नं चापश्च ॥ १२ ॥

( ३ ) अथ याः पश्चाद्—दिशस्ताः। चतस्रो दिशः, चतस्रोऽवान्तरादिशः, ऊर्ध्वं चेयं च ॥ १३ ॥

( ४ ) अथ या उत्तरतः—मासास्ते । वासन्तिकौ द्वौ, ग्रैष्मौ द्वौ, वार्षिकौ द्वौ, शारदौ द्वौ, हैमन्तिकौ द्वौ ॥ १४ ॥

अथ पुनरेव या प्रथमा दशद्—अयं स लोकः । या द्वितीया—अन्तरिक्षं तत् । या तृतीया—द्यौः सा । इममेव लोकं प्रथमया दशताऽरोहन् । अन्तरिक्षं द्वितीयया । दिवं तृतीयया । तथैवैतद्यजमान इममेव लोकं प्रथमया दशता रोहति । अन्तरिक्षं द्वितीयया । दिवं तृतीयया ॥ १५ ॥

---

अथ पुनरेव या प्रथमा दशदयं स लोक इति दर्शनान्तरं सर्वाणि वैतानि च्छन्दांस्येव द्रष्टव्यानि सर्वे पशवः सर्वेषु

स स पराङिव रोहः । (ऽ)इयमु वै प्रतिष्ठा ते देवाऽ इमां प्रतिष्ठामभिप्रत्या-यंस्तथैवैतद्यजमानऽ इमां प्रतिष्ठामभिप्रत्यैत्यथ योत्तमा दशदयꣳ स लोकस्तस्माद्यथैव प्रथमायै दशतः प्रभृतिरेवमुत्तमायै समानꣳ ह्येतद्य-देते दशतावयमेव लोकः ॥ १६ ॥

( स्ता ) ता वाऽएताः । ( श्च ) चत्वारिꣳशदिष्टकाश्चत्वारिꣳशद्यजूꣳ-षि तदशीतिरन्नमशीतिस्तद्यद्यदेतदाह तदस्माऽअन्नमशीतिं कृत्वा प्रयच्छति तेनैनं प्रीणाति ॥ १७ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ८–३–३ ॥ ( ५. २. ) ॥

अथ स्तोमभागाऽ उपदधाति । ( त्ये ) एतद्वै प्रजापतेरेतदन्नमिन्द्रोऽ-भ्यध्यायत्सोऽस्मादुदचिक्रमिषत्तमब्रवीत्कथोत्क्रामसि कथा मा जहासीति स वै मेऽस्यान्नस्य रसं प्रयच्छेति तेन वै मा सह प्रपद्यस्वेति तथेति तस्माऽएतस्यान्नस्य रसं प्रायच्छत्तेनैनꣳ सह प्रापद्यत ॥ १ ॥

---

स स पराङिव रोहः । इयमु वै प्रतिष्ठा । ते देवा इमां प्रतिष्ठामभिप्रत्यायन् । तथैवैतद्यजमान इमां प्रतिष्ठामभिप्रत्यैति । अथ योत्तमा दशद्–अयं स लोकः । तस्माद्यथैव प्रथमायै दशतः प्रभृतिः एवमुत्तमायै । समानं ह्येतद्–यदेते दशतौ–अयमेव लोकः ॥ १६ ॥

ता वाऽएताश्चत्वारिंशदिष्टकाः, चत्वारिंशद्यजूंषि–तदशीतिः । अन्नमशीतिः । तद् यद् यदेत-दाह–तदस्मा अन्नमशीतिं कृत्वा प्रयच्छति, तेनैनं प्रीणाति ॥ १७ ॥

अथैकोनत्रिंशत्स्तोमभागेष्टकोपधानम् ।

अथ स्तोमभागा उपदधाति । एतद्वै प्रजापतेरेतदन्नमिन्द्रोऽभ्यध्यायत् । सोऽस्मादुदचिक्रमि-षत् । तमब्रवीत्–कथोत्क्रामसि, कथा मा जहासीति । स वै मेऽस्यान्नस्य रसं प्रयच्छेति । तेन वै मा सह प्रपद्यस्वेति । तथेति । तस्माऽएतस्यान्नस्य रसं प्रायच्छत् । तेनैनं सह प्रापद्यत ॥ १ ॥

---

वे वादयः शब्दाश्चेति वक्तव्याः । यथा प्रथमा दशतः. प्रथमं क्रियतेऽनयेति भृत्यारम्भ एवश्छन्दो वरिव श्छंद इत्येषा । ता वा एताः । प्रसन्ना ॥ २–१७ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमे काण्डे पञ्चमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ८–५–२ ) ॥

अथ स्तोमभागा इति । स्तोमभागा नामेष्टका उपदधातीति[1] । अतः परेणेतिहासेन तासामधिदेवं निरूपयन्नाह ' एतद्वै ' तस्मिन्काले प्रजापतेः स्वतवान् । छन्दस्यात्मकत्वमिन्द्रः प्राणोऽभिध्यातवान् स इन्द्रो-

---

१–सर्व्वतोऽषाढावेलायाः स्तोमभागा रश्मिना सत्यायेति प्रतिमन्त्रम् । पंचदश दक्षिणेनानूकम् । व्येषश्रीः क्षत्राय क्षत्रं जिन्वेति त्रिंशत्तममिके । का. श्रौ. सू. १७ । २३२–२३४ ।

स यः स प्रजापतिः । ( २ ) अयमेव स योऽयमग्निश्चीयतेऽथ यत्तदन्नमेतास्ताश्छन्दस्याऽअथ यः सोऽन्नस्य रसऽएतास्ता स्तोमभागाऽअथ यः स ऽइन्द्रोऽसौ स ऽआदित्यः स ऽएष ऽएव स्तोमो यद्धि किं च स्तुवतऽएतमेव तेन स्तुवन्ति तस्माऽएतस्मै स्तोमायैतं भागं प्रायच्छत्तद्यदेतस्मै स्तोमायैतं भागं प्रायच्छत्तस्मात्स्तोमभागाः ॥ २ ॥

( ० ) रश्मिना सत्याय सत्यं जिन्वेति । ( त्ये ) एष वै रश्मिरन्नꣳ रश्मिरेतं च तद्रसं च संधायात्मन्प्रपादयते प्रेतिना धर्मणा धर्मं जिन्वेत्येष वै प्रेतिरन्नं प्रेतिरेतं च तद्रसं च संधायात्मन्प्रपादयतेऽन्वित्या दिवा दिवं

---

स यः स प्रजापतिः—अयमेव सः—योऽयमग्निश्चीयते । अथ यत्तदन्नम्—एतास्ताश्छन्दस्याः । अथ यः सोऽन्नस्य रसः—एतास्ताः सोमभागाः । अथ यः स इन्द्रः—असौ स आदित्यः । स एष एव स्तोमः । यद्धि किं च स्तुवते—एतमेव तेन स्तुवन्ति । तस्मा एतस्मै स्तोमायैतं भागं प्रायच्छत् । तद्यदेतस्मै स्तोमायैतं भागं प्रायच्छत्—तस्मात्स्तोमभागाः ॥ २ ॥

" रश्मिना सत्याय सत्यं जिन्व "—इति । एष वै रश्मिः । अन्नं रश्मिः । एतं च तद्रसं च सन्धायात्मन्प्रपादयते । " प्रेतिना धर्मणा धर्मं जिन्व "—इति । एष वै प्रेतिः । अन्नं प्रेतिः । एतं च तद्रसं च सन्धायात्मन्प्रपादयते । " अन्वित्या दिवा दिवं जिन्व "—इति । एष

---

ऽस्मात् प्रजापतेरपक्रमितुमैच्छत् 'तम्' इन्द्रम् प्रजापतिः 'अब्रवीत्' 'कथा' "था हेतौ च च्छन्दसि" (पा.सू. ५।३।२६) इति हेतौ थाप्रत्यये रूपम् । 'कथा' च केन हेतुना 'मा' पितरं 'जहासीति' तं प्रजापतिमिन्द्र उवाच अस्यान्नस्य छन्दस्यात्मकस्य 'रसं प्रयच्छेति' । प्रजापतिरुवाच तेन तस्य रसेन मा सह रसेनैव त्वं मा प्रपद्यस्व मच्छरीररस एव भव तथा हि त्वं च तेन रसेन वसतिद्वारेण ह चेत्यभिप्रायः । प्रजापतिस्तु तयेत्युक्त्वा तस्मा इन्द्रायैतस्य छन्दस्यात्मकस्याधिदेवाधितयाऽध्यात्मस्यान्नस्य रसं प्रायच्छत् । तथैवानेन रसेन सहैनं प्रजापतिमिन्द्रः प्रपन्नः ॥ १ ॥

स यः स प्रजापतिरिति । प्रजापत्यादीनि मन्त्राद्यात्मिकानि शरीराणि दृश्यन्ते । आधिदैवपक्षस्यायमर्थः—"यः स इन्द्रोऽसौ स आदित्यः" इति यः प्राणस्य तेजसा सहांगे शस्तश्चासावादित्योऽवकाशस्तथा चाह (तद्वा एवैनो उच्चैधनगमषयोयं दक्षिणेऽक्षन्पुरुषधेनामे योयं दक्षिणेक्षन्पुरुष इत्यादित्ये एवादित्ये मर्तव्यत्वात्स्तोमः । बा देवेहिकं वाचा लोकवेदयोः स्तुवते केचित्तेन सर्वेण द्वारस्ततिनः समवादित्यस्तुवन्त्येतस्यैव सर्वविशिनः सर्वे स्तूयमानत्वात् प्राणमित्यभिप्रायः । ततः किञ्चिद्यदादित्यः स्तोम इत्येतदादित्यस्तोम इत्यत आह 'तस्मै एतस्मै' स्तोमादित्यौ । यतः परमात्मसपत्नकं देवाधिदेवाकारेणावस्थितं ततो भजनीयमित्यत्र भूतं स्थितिहेतुं प्रभवमित्यादिनिर्वचनेन तु चैवं कुर्वतो षष्ठीसमासोऽयं दर्शितः स्तोमस्य भागः स्तोमभाग इति च । तथासामिति भागवत्त्वाच्च स्त्रीलिङ्गबहुवचनेनोपधेयता ) नैष दोषः ॥ २ ॥

निरूढस्यैव स्त्रीलिङ्गस्य बहुवचनान्तस्य चाव्युत्पत्तिमन्त्रमात्रेणैवारभ्यते—रश्मिना इति । एष वै रश्मिरित्यादिनेतिहासार्थं मन्त्राणामभिधानं दर्शयति—तस्य चेतिहासशेषसंक्षेपेणार्थः । प्रजापतेर्विश्वरूपस्य

जिन्वेत्येष वाऽअन्वितिरन्नमन्वितिरेतं च तद्रसं च संधायात्मन्प्रपादयते तद्यदेतदाह तच्च तद्रसं च संधायात्मन्प्रपादयतेऽमुनाऽदो जिन्वादोऽस्यमुष्मै त्वाऽधिपतिनोर्जोर्जं जिन्वेति त्रेधाविहितास्त्रेधाविहितᳫं ह्यन्नम् ॥३॥

---

वाऽअन्वितिः । अन्नमन्वितिः । एतं च तद्रसं च संधायात्मन्प्रपादयते । तद् यद्यदेतदाह—तच्च तद्रसं च संधायात्मन्प्रपादयते । अमुनाऽदो जिन्व, अदोऽसि, अमुष्मै त्वा, " अधिपतिनोर्जा, ऊर्जं जिन्व "–( वा. सं. १५ । ६–९ ) इति त्रेधा विहिताः । त्रेधाविहितं ह्यन्नम् ॥ ३ ॥

---

सत्यधर्मादिभिराकारैरवस्थितस्य यदिदं स्थावरजङ्गमात्मकमन्नं तस्य रश्मिरादाय संचरतीत्यादित्यप्रजापतिनामात्मानं च सर्वांश्च प्रजापतेः प्रत्यङ्गभूतदेवतास्तेन रसेन तर्पयति न केवलमात्मानम् । तथैवायमध्यात्मं प्राणं सर्वान् प्राणान् प्राणिनामात्मानमवान्तररसेन तर्पयत्येतत्तेन प्रजापतिसंवादेनेति निष्पन्नम् । तच्चैतदधियज्ञमन्त्रेणेष्टकासु दर्शयते तत्र प्रथमतो यदिष्टकोच्यते । हे इष्टके ! सत्याय सत्यात्मकाय प्रजापतये यदात्मानं (यवत्वीहमु) उपवीयेति शेषः । कुत एतत्त्रिवृतोपदधामीत्यादि चतुर्थ्यत्वात्तत्र चोपदधातीत्यस्य तस्य कल्पनीयत्वादत्रापि त्वामुपदधामीति शब्दो विज्ञायते । तत् सत्यात्मकं प्रजापतिं यजमानत्वमत्राग्नीकोपधीयमानं 'जिन्व' तर्पय केन रश्मिना समश्नुत इति । रश्मिश्चादित्येन रसस्थितस्य तस्य रसो रश्मिता रसोऽपि रश्मिस्थितत्वाद्रश्मिः । अथवा रसत्वसाधनादयस्तेन रश्मिना रसपूर्णनादित्यनेन जित्वा रसः पूर्णः स्यादित्यस्य त्वमधियज्ञिकशरीरभूता इमं चित्यामेकमधियज्ञं प्रजापतिं यजमानं च प्रपद्यस्वेत्यर्थः । एतदाह—एष वै आदित्यो रश्मिभिरुक्तो निर्वचनात् । रसं चान्नरसं रश्मिना स्थानशब्देन योगादेव ता एवं च ( तदादित्यरसवसवापि कीर्त्या ) तथैकशब्दोपादानेनेष्टकाशरीरोक्तत्वात्सशरीरे अधियज्ञिके प्रजापतेर्यजमानस्य च प्रपादयते । एवमेवोत्तरेष्वपि मन्त्रेषु यद्द्वितीयान्तेन धर्मादि तर्पणीय प्रपद्य तत्पूर्वं चतुर्थ्यन्तेन ( उपधानप्रयोजनत्वेनोपत्यस्तृतीयनेमश्च) यत्र द्वितीयायुक्तानां प्रातिपदिकानां प्रथमतृतीयानिर्देशास्ते व्यत्ययेन चतुर्थीनिर्देशा द्रष्टव्या इत्येतदङ्गीकृत्य प्रेतिशब्देन च केवलेनादित्यं रसं चोपात्ते सन्ध्यात्मकं प्रपादयत इत्याह—(प्रकृत्यष्वागतिरादित्य भूतानां तस्थावादभ्यरसो पिबति । एवमनयन्ति तमित्यात्विगिस्थत्वाद्वातरसः । एवं रश्मीति स्त्रीच्छन्दत्वात्तुमित्यावद्वचनत्वात् ) अभ्याख्यानव्यात्यर्थं सामान्यव्याख्यां करोति । यत्संविधादित्यतीया अनेन शब्देन जिन्वतिकारणमाह—तच्च संवत्सर स्थितं सन्धायात्मन् प्रपादयत इति । अत्र तस्येति वचनं प्रायः संधाय तत् । संवत्सरमित्यर्थः । ' अमुनाऽदो जिन्वेति सवननामत्वमग्नेर्नानाविशेषयुक्तानां मन्त्राणामेकप्रकारं दर्शयति । अमुनाऽदो रश्म्यादिना । 'अदः' सत्यादीत्येवंरूपस्तावदेका कण्डिकादधोमन्त्राणां राशिः । अत्र च राशावमुष्मै त्वोपदधातीत्येतदनाम्नातत्वादर्थतो विद्यमानमपि न कीर्त्तितः । 'अदः' त्रिवृदाद्यस्य अमुष्मै त्रिवृदादिकार्यायेत्येवंरूपोऽपरो तत्र राशिः अधिपतिनेरस्तेन चोर्जं प्रजापतिं जिन्वोपदधामीत्येष तृतीयो मन्त्रभेदः । यद्यपि च प्रथमस्यैवाद्यमन्त्रस्य राशेरपहरति तेषामपि लक्षणैर्व्यवहितत्वात् पृथगवस्थितापि । एवमेते तावन्मन्त्राः ' त्रेधा ' त्रिषु स्थानेषु ' विहिताः ' तेषां त्रेधा विहितत्वात् । आद्युक्ता इष्टकास्त्रेधा विहिता इत्याह—त्रेधा विहितं ह्यन्नम् । जङ्गमं तावत्पिता माता पुत्र इत्येवं स्थावरमपि तापो वृष्टिर्बीजमिति तदनुकारेण सोऽपि त्रेधाविहितस्तदनुकारा इष्टका इत्यभिप्रायः ॥ ३ ॥

यद्वेव स्तोमभागाऽउपदधाति । ( त्ये ) एतद्वै देवा विराजं चितिं चित्वा समारोहंस्तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना नाकमेव स्वर्गं लोकमपश्यंस्तमुपादधत स यः स नाकः स्वर्गो लोकऽ एतास्ताः स्तोमभागास्तद्यदेताऽ उपदधाति नाकमेवैतत्स्वर्गं लोकमुपधत्ते ॥ ४ ॥

तद्यास्तिस्रः प्रथमाः । ( ऽ ) अयꣳ स लोको या द्वितीयाऽअन्तरिक्षं तद्यास्तृतीया द्यौः सा याश्चतुर्थ्यः प्राची सा दिग्याः पञ्चम्यो दक्षिणा सा याः षष्ठ्यः प्रतीची सा याः सप्तम्य ऽउदीची सा ॥ ५ ॥

ता वाऽएताः । ( ऽ ) एकविꣳशतिरिष्टकाऽइमे च लोका दिशश्चेमे च वै लोका दिशश्च प्रतिष्ठेमे च लोका दिशश्चैकविꣳशस्तस्मादाहुः प्रतिष्ठैकविꣳश ऽइति ॥ ६ ॥

---

यद्वेव स्तोमभागा उपदधाति । एतद्वै देवा विराजं चितिं चित्वा समारोहन् । तेऽब्रुवन्—चेतयध्वमिति—चितिमिच्छतेति वाव तदब्रुवन् । ते चेतयमाना नाकमेव स्वर्गं लोकमपश्यन् । तमुपादधत । स यः स नाकः स्वर्गो लोकः—एतास्ताः स्तोमभागाः । तद्यदेता उपदधाति—नाकमेवैतत्स्वर्गं लोकमुपधत्ते ॥ ४ ॥

तद् यास्तिस्रः प्रथमाः—अयं स लोकः । या द्वितीयाः—अन्तरिक्षं तत् । यास्तृतीयाः—द्यौः सा । याश्चतुर्थ्यः—प्राची सा दिक् । याः पञ्चम्यो—दक्षिणा सा । याः षष्ठ्यः—प्रतीची सा । याः सप्तम्यः—उदीची सा ॥ ५ ॥

ता वा एता एकविंशतिरिष्टकाः—इमे च लोकाः, दिशश्च । इमे च वै लोका दिशश्च प्रतिष्ठा । इमे च लोका दिशश्चैकविंशः । तस्मादाहुः—प्रतिष्ठैकविंश इति ॥ ६ ॥

---

एवं तावच्छन्दस्यासु यत् प्राजापत्यदर्शनमुक्तं तस्यानन्तरं (सम्बन्धमेवास्तरमेव भागास्विदं) प्राजापत्यदर्शनसम्बद्धं स्तोमभागास्वपि दैवे दर्शनं वक्तुमाह—यद्वेव स्तोमभागा इति । 'यद्वेव' विराजम् द्युलोकं 'चित्वा' समारूढाः स्तोमभागमवदः । ( स्वरहितं वाऽमी ) तद्दिवः सारभूतं प्रधानो देवनिवासं 'स्वर्गम्' 'लोकम्' स्तोमभागात्मकं त्रैलोक्यदिशश्च । दर्शयति—तत्र त्विदं वक्तव्यम् । द्युलोक एवायं विद्वद्भिः कल्पितः । कुतोऽत्र प्रकृत्य पृथिवी चान्तरिक्षं त्वायातमिति । नैष दोषः । द्युलोक एव ह्येतदुत्तममध्यमाधमस्तोमगतेष्टका त्रैलोक्यं परिकल्पते ॥ ४ ॥

तत्र चायं लोक इत्यादयः शब्दाः स्थानसामान्येन वेदितव्याः । एवं प्रथमादयोऽपि दिश आदित्या एव द्रष्टव्याः । अथ वा तेऽपि स्वर्गो लोको लवणोदकवत् त्रैलोक्येऽप्युक्त एवेत्येतदभिप्रायमेतत्ततश्चामुत्रापि लोके यः सारभूतः सुखोक्तदेशः स स्वर्ग एवेत्येतदेतेन त्रैलोक्यकल्पनेनावसीयते ॥ ५ ॥

ता वा एता इति । एकविंशतिपरिमाणसमूह एकविंशः सम्भूतानां प्रतिष्ठास्वधिवास इति प्रसिद्धिः ॥ ६ ॥

(त्यु) अथ या ऽअष्टाविष्टका ऽअतियुन्ति । साऽष्टाक्षरा गायत्री ब्रह्म गायत्री तद्यत्तद्ब्रह्मैतत्तद्युदेतन्मुण्डलं तुपति तुदेतुस्मिन्नेकविंशे प्रतिष्ठायां प्रतिष्ठितं तपति तुस्मान्नावपद्यते ॥ ७ ॥

तद्धैके । व्वेषश्रीः क्षत्राय क्षत्रं जिन्वेति त्रिंशत्तमीमुपदधति त्रिंशदक्षरा व्विराड्विराडेषा चितिरिति न तुथा कुर्यादति तु रेचयन्त्येकविंशसम्पदमुथो गायत्रीसम्पदमुथोऽइन्द्रलोको हैषु यैषा न्यूना व्विराडिन्द्राय ह तुऽइन्द्रलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्व्वन्तीन्द्रमिन्द्रलोकान्नुदन्ते युजमानो वै स्वे यज्ञऽइन्द्रो युजमानाय ह तु यजमानलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्व्वन्ति युजमानं यजमानलोकान्नुदन्ते यं वाऽएतुमग्निमाहुरन्त्येषु ऽएव युजमान ऽआयुतनेनैषु उऽएवात्र त्रिंशत्तमी ॥ ८ ॥ (अर्धप्रपाठकः ॥)

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ८-३-४ ॥ (५. ३.)

---

अथ या अष्टाविष्टका अतियन्ति—साऽष्टाक्षरा गायत्री । ब्रह्म गायत्री । तद्—यत्तद्ब्रह्म—एतत्तद्—यदेतन्मण्डलं तपति । तदेतस्मिन्नेकविंशे प्रतिष्ठायां प्रतिष्ठितं तपति । तस्मान्नावपद्यते ॥ ७ ॥

तद्धैके—"वेषश्रीः क्षत्राय क्षत्रं जिन्व"—इति त्रिंशत्तमीमुपदधाति । त्रिंशदक्षरा विराट् । विराडेषा चितिरिति । न तथा कुर्यात् । अति ते रेचयन्त्येकविंशसम्पदम् । अथो गायत्रीसम्पदम् । अथो इन्द्रलोको हैष—यैषा न्यूना विराट् । इन्द्राय ह त इन्द्रलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्ति । इन्द्रमिन्द्रलोकान्नुदन्ते । यजमानो वै स्वे यज्ञ इन्द्रः । यजमानाय ह ते यजमानलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्ति । यजमानं यजमानलोकान्नुदन्ते । यं वा एतमग्निमाहरन्ति—एष एव यजमान आयतनेन । एष उ एवात्र त्रिंशत्तमी ॥ ८ ॥

---

अथ या अष्टाविति । साऽष्टाक्षरा गायत्री संख्यासामान्याद् ब्रह्मलक्षणा गायत्री प्रतिपादयति । ऋगादीनां गायत्र्यामेव भूत्वा चतुर्थीलक्षणं ब्रह्मैतत्तद्यत् यस्मात् एतन्मण्डलं एव तपति त्रयीजन्यापूर्वाराध्वायं सत् तदिति नाधिवासास्तनत्रयीकार्यत्वात्त्रयी कल्प्यत इत्येते त्रयीपाप्मत्वेनातिगतामेतत्तेजसा समानार्थपुरुषात्मकं शरीरमित्यन्यत्र एव तु विकारस्तेजसोऽयं मतान्तरं ब्रह्मणोऽभिधेयत्वान्मण्डलं ब्राह्मत्पार ( ) यथा वासनं तु सर्वमुपपन्नमिति स्थितिः । तदेतस्मिन्नेकविंशतिरश्मिभिः प्रतिष्ठितमेवैतस्मिन्नेतत् । 'तस्मान्नावपद्यते' यस्मादलं प्रथमोऽत्र विवृत्तत्वाद्यां मत्प्रधानात्मिकम् ॥ ७ ॥

तद्धैके इति । अथ उ इन्द्रलोको हैष इति । यत्तद्विराजः त्रिंशत्तमं शून्यं स्थानं तदिन्द्रस्य स्वराज्यस्य भोक्तुं स्थानं तत्र स्थितः स तां विराजं भुङ्क्ते । यस्तु तत्रापीष्टकामुपदधाति स तस्येन्द्रस्य लोकस्थाने भ्रातृव्यं

---

१—व्वेषश्रीः क्षत्राय क्षत्रं जिन्वेति त्रिंशत्तमीमेके । का. श्रौ. सू. । १७ । २३४ ॥

३०१२

ता॒ऽअ॒षाढा॑यै वे॒लयो॒पद॑धाति । वाग्वाऽअ॑षाढा र॒सऽए॒ष वाचि॑ तद्र॒सं द॑धाति त॒स्मात्स॒र्व्वे॑षाम॒ङ्गानां वा॒चैवान्न॑स्य र॒सं वि॑जानाति ॥ १ ॥

य॒द्वे॒वा॒षाढा॑यै । ( या॒ऽ ) इ॒यं वा॒ऽअ॒षाढा॒ऽस॒ावा॒दि॒त्यः स्तो॒मभागा॒ ऽअ॒मुं त॒दा॒दि॒त्यम॒स्यां प्र॒ति॒ष्ठा॒यां प्र॒ति॒ष्ठा॒पय॑ति ॥ २ ॥

य॒द्वे॒वा॒षाढा॑यै । ( या॒ऽ ) इ॒यं वा॒ऽअ॒षाढा॒ हृ॒दय॑ꣳ स्तो॒मभा॒गा ऽअ॒स्यां त॒द्धृद॑यं मनो॑ दधाति त॒स्माद॒स्याꣳ हृ॒दये॑न मन॑सा चे॒तय॑ते स॒र्व्वत॑ऽ उ॒पद॑धाति स॒र्व्वत॑स्त॒द्धृद॑यं मनो॑ दधाति त॒स्माद॒स्याꣳ स॒र्व्वतो॑ हृ॒द-

---

ता अषाढायै वेलयोपदधाति । वाग्वाऽअषाढा । रस एषः । वाचि तद्रसं दधाति । तस्मात्सर्वे-षामङ्गानां वाचैवान्नस्य रसं विजानाति ॥ १ ॥

यद्वेवाषाढायै । इयं वाऽअषाढा; असावादित्यः स्तोमभागाः । अमुं तदादित्यमस्यां प्रति-ष्ठायां प्रतिष्ठापयति ॥ २ ॥

यद्वेवाषाढायै । इयं वा अषाढा, हृदयं स्तोमभागाः । अस्यां तद्धृदयं मनो दधाति । तस्मा-दस्यां हृदयेन मनसा चेतयते । सर्वत उपदधाति । सर्वतस्तद्धृदयं मनो दधाति । तस्मादस्यां सर्वतो

---

करोति, इत्यागमिकम् । यदि तु त्रिंशत्तम्याः प्रयोजनं ततोऽयमेवाग्निः सञ्चिनोति चिते आहरन्त्येषु पचन्ति । सप्तमीष्टका भविष्यतीति । न तु तत्रापि स दोषः स्थित एव यजमानस्य द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्ती-त्यत आह—एष यजमान इति । स एवाग्निः स एव यजमानः कथमानयते न तु प्राधान्यतेत्यर्थः । स्वामी हि यजमानो यज्ञे प्रधानं चित्योऽग्निः प्रधानम् । अतः प्राधान्याद्यजमान एवाग्निः । ततश्चाग्नौ त्रिंशत्तम्याम् एवेन्द्रो यज-मानश्चायतनवान् भवतीति । अत्रापि च देवे दर्शनमन्त्रास्तथैव योजनीयाः । स हि नाकः स्वर्गो लोको रश्मि-शरीरसत्यादिदेवयास्ताव स्तोमेष्टकोच्यते सत्यादयश्च ये स्वर्गावयवभूताः । यत्त्वोपदधाति सा त्वमुपधीय-माना सह रसेन सत्यं जिन्व तर्पयेत्याकारसमर्थं कुर्वित्ययमुत्तरेष्वपि योज्यः ॥ ८ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमे काण्डे

पञ्चमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ८-५-३ ) ॥

**ता अषाढाया इति** । ताः स्तोमभागा अषाढाया वेलायां मध्ये षष्ठे पादलोके उपदधातीत्येतत् त्रिभिः कण्डिकाभिर्विधीयते—वाग्वा अषाढेति । वाचा तु जिह्वा लक्ष्यते । सर्वेषां अङ्गादीनां मध्येच विधानात्तस्य रसं विजानातीति वचनात् ॥ १ ॥

**यद्वेवाषाढाया इति** । प्रसन्ना ॥ २ ॥

**यद्वेवाषाढाया इति** । इयं वै पृथिवी शरीराकारेण व्यवस्थिताऽषाढा 'हृदयं' हृदयस्थम् । मनः स्तोम-भागो रसत्वात् । रसो हि सारः शरीरे च मनःसार इति । तस्य यदषाढा वेलायां स्तोमभागा उपदधाति

---

१-सर्वतोऽषाढावेलायाः स्तोमभागा रश्मिना सत्यायेति प्रतिमंत्रम् का. श्रौ. सू. १७ । २३२ ॥

येन मनसा चेतयतेऽथो पुण्या हैता लक्ष्म्यस्ताऽएतत्सर्व्वतो धत्ते तस्माद्यस्य सर्व्वतो लक्ष्म भवति तं पुण्यलक्ष्मीकऽइत्याचक्षते ॥ ३ ॥

( तेऽथै ) अथैनाः पुरीषेण प्रच्छादयाति । ( त्यु ) अन्नं वै पुरीषꣳ रसऽ एष तमेतत्तिरः करोति तस्मात्तिरऽइवान्नस्य रसः ॥ ४ ॥

( सो ) यद्वेव पुरीषेण । ( णा ) अन्नं वै पुरीषꣳ रसऽएषोऽन्नं च तद्रसं च संतनोति संदधाति ॥ ५ ॥

यद्वेव पुरीषेण । हृदयं वै स्तोमभागाः पुरीतत्पुरीषꣳ हृदयं तत्पुरीतता प्रच्छादयति ॥ ६ ॥

---

हृदयेन मनसा चेतयते । अथो पुण्या हैता लक्ष्म्यः । ता एतत्सर्वतो धत्ते । तस्माद्यस्य सर्वतो लक्ष्म भवति–तं पुण्यलक्ष्मीक इत्याचक्षते ॥ ३ ॥

अथैनाः पुरीषेण प्रच्छादयति । अन्नं वै पुरीषम् । रस एषः । तमेतात्तिरः करोति । तस्मात्तिर इवान्नस्य रसः ॥ ४ ॥

यद्वेव पुरीषेण । अन्नं वै पुरीषम् । रस एषः । अन्नं च तद्रसं च सन्तनोति, सन्दधाति ॥ ५ ॥

यद्वेव पुरीषेण । हृदयं वै स्तोमभागाः, पुरीतत्पुरीषम् । हृदयं तत्पुरीतता प्रच्छादयति ॥ ६ ॥

---

तस्यां पृथिव्यां हृदयादिशरीरभावे भावस्थितायां हृदयं चास्यां मनो दधाति तस्मादेव च यज्ञानुकारात् 'अस्यामेव चेतयते' शरीरस्यान्यतरं वा वस्तुनाहि वतस्माः अस्यां शरीरलक्षणायां पृथिव्यां सर्वतः सरसं चेतयते इत्यर्थः। अग्रतः पार्श्वतः पृष्ठतश्च ( नवज्ञ रोषतयाग्रत ) इत्यर्थः । अथो पुण्याः प्रशंस्या एता लक्ष्म्यस्ताः स्तोमभागाः देवैः दर्शनेनावयवार्थाभिमानिन्य एता देवताः ताश्च पुण्यलक्ष्मीकाः ॥ ३ ॥

अथैना इति । 'एनाः' स्तोमभागाः शरीरेण तूर्णं प्रच्छादयति[1] इत्येतदन्नं पुरीषग्रन्थिना विधीयते । अन्नं वै पुरीषमन्नकारणत्वाददो ह्यन्नं प्रभवति स तं एष स्तोमभागात्मके पथि ( मरिनाप्य ) दैवाभिप्रायेण तत्तिरः समेतत्पुरीषेण व्यवहितं प्रच्छन्नं करोति तस्मात्तिर इत्यन्नत्वाच्च तस्य . रसः सारो अन्नात् पृथगुपलभ्यत इति ॥ ४ ॥

यद्वेवेति प्रायः प्रसन्ने । पुरीतत्पुरीषं पुरि हृदये तायते इति पुरीतत् हृदयवेष्टनं । यद्वेव वपुः संवत्सर एषोऽग्निस्तमेतं चित्वा चितिभिः पुरीषैश्च व्यावर्त्तयति । व्यावृत्त्या संवर्त्तयति सर्वेषामेव भूतानामेकैकानां सञ्चित्या चयनेनेत्येकैकपुरीषेणेत्यर्थः ॥

---

१–पुरीषमास्वावपति मंत्रेण वाताप्राश्रितस्य तूष्णीं२ श्रुतेः । तूष्णीमेवेह पुरीषनिवापः । न मंत्रेणेति कर्कभाष्यम् । का. श्रौ. सू. १७ । २३५ ॥

यद्वेव पुरीषेण । संवत्सर ऽएषोऽग्निस्तमेतच्चितिपुरीषैर्व्यावर्तयति तद्या-श्चतस्रः प्रथमाश्चितयस्ते चत्वार ऽऋतवोऽथ स्तोमभागा ऽउपधाय पुरीषं निवपति सा पञ्चमी चितिः स पञ्चमऽऋतुः ॥ ७ ॥

( स्तु ) तदाहुः । ( यं ) यल्लोकम्पृणान्ता ऽअन्याश्चितयो भवन्ति नात्र लोकम्पृणामुपदधाति क्वाऽत्र लोकम्पृणेत्यसौ वाऽआदित्यो लोकम्पृणैष उऽएषा चितिः सैषा स्वयं लोकम्पृणा चितिरथ यदत ऽऊर्ध्वमा पुरीषात्सा षष्ठी चितिः स षष्ठऽऋतुः ॥ ८ ॥

( स् ) अथ पुरीषं निवपति । तत्र विकर्णीं च स्वयमातृण्णां चोपदधाति हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति सा सप्तमी चितिः स सप्तमऽ ऋतुः ९

( स्ता ) ता ऽउ वै षडेव । यद्धि विकर्णी च स्वयमातृण्णा च षष्ठ्या एव तच्चितेः ॥ १० ॥

(स्ता) ताऽ उ वै पञ्चैव । यजुषाऽन्यासु पुरीषं निवपति तूष्णीमत्र तेनैषा

---

यद्वेव पुरीषेण । संवत्सर एषोऽग्निः । तमेतच्चितिपुरीषैर्व्यावर्तयति । तद्—याश्चतस्रः प्रथमाश्चितयः—ते चत्वार ऋतवः । अथ स्तोमभागा उपधाय पुरीषं निवपति । सा पञ्चमी चितिः । स पञ्चम ऋतुः ॥ ७ ॥

तदाहुः—यल्लोकम्पृणान्ता अन्याश्चितयो भवन्ति, नात्र लोकंपृणामुपदधाति, काऽत्र लोकम्पृणेति । असौ वा आदित्यो लोकम्पृणा । एष उ एषा चितिः । सैषा स्वयं लोकम्पृणा चितिः । अथ यदत ऊर्ध्वम्—आ पुरीषात्—सा षष्ठी चितिः, स षष्ठ ऋतुः ॥ ८ ॥

अथ पुरीषं निवपति । तत्र विकर्णीं च स्वयमातृण्णां चोपदधाति । हिरण्यशकलैः प्रोक्षति । अग्निमभ्यादधाति । सा सप्तमी चितिः, स सप्तम ऋतुः ॥ ९ ॥

ता उ वै षडेव । यद्धि विकर्णी च स्वयमातृण्णा च—षष्ठ्या एव तच्चितेः ॥ १० ॥

ता उ वै पञ्चैव । यजुषाऽन्यासु पुरीषं निवपति । तूष्णीमत्र । तेनैषा न चितिः । अथो

---

तास्त्रयः स्तोमवच्चतस्रश्चितयः । प्रथमास्तोमाश्चत्वारः प्रसिद्धयाऽन्तर्वर्तन्त एव ता अपि पुरीषाः स्तोमभागाः पंचमी चितिः । पंचमश्चंद्रः संपत्स्यते इत्येवमर्थं येन पुरीषेण प्रच्छादयति ॥ ५—७ ॥

तदाहुरिति । नात्र स्तोमात्मिकायां चितौ लोकंपृणां तां अग्निमित्यतस्तूपरिवर्त्तित्वात्पुरीषमित्याशय एवमेतत् संवत्सरमग्निश्चितिं पुरीषे व्यावर्त्तयति ॥ ८ ॥ ९ ॥

ता उ वै षडेवेति । प्रसन्ना एवैतास्तिस्रः । चितिषु षडेव दर्शनं प्रासङ्गिकं कुर्वन्ति ॥ १०—१२॥

न चितिरथो लोकम्पृणान्ता ऽअन्याश्रितयो भवन्ति नात्र लोकम्पृणामुपदधाति तेनोऽएवैषा न चितिः ॥ ११ ॥

( स्ता ) ताऽ उ वै तिस्रऽ एव । ( वा ) अयमेव लोकः प्रथमा चितिर्द्यौरुत्तमाऽथ याऽ एतास्तिस्रस्तदन्तरिक्षं तद्वाऽइदमेकमिवैवान्तरिक्षं ताऽएवं तिस्रऽ एवं पञ्चैवꣳ षडेवꣳ सप्त ॥ १२ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ८–३–५ ॥ ( ५. ४. ) ॥

इति पञ्चमोऽध्यायः समाप्तः ॥

---

लोकम्पृणान्ता अन्याश्रितयो भवन्ति, नात्र लोकम्पृणामुपदधाति। तेनो एवैषा न चितिः ॥ ११ ॥

ता उ वै तिस्र एव। अयमेव लोकः प्रथमा चितिः, द्यौरुत्तमा, अथ या एतास्तिस्रः–तदन्तरिक्षम्। तद्वा इदमेकमिवैवान्तरिक्षम्। ता एवं तिस्रः, एवं पञ्च, एवं षट्, एवं सप्त ॥ १२ ॥

---

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमे काण्डे पञ्चमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ८–५–४ ) ॥

इति पञ्चमोऽध्यायश्च समाप्तः ॥ ( ८–५ ) ॥

# अथ षष्ठेऽध्याये प्रथमं ब्राह्मणम् ।

## तृतीयप्रपाठके च षष्ठं ब्राह्मणम् ।

नाकसद ऽउपदधाति । देवा वै नाकसदोऽत्रैष सर्व्वोऽग्निः संस्कृतः स ऽएषोऽत्र नाकः स्वर्गो लोकस्तस्मिन्देवा ऽअसीदंस्तद्यदेतस्मिन्नाके स्वर्गे लोके देवा ऽअसीदंस्तस्माद्देवा नाकसदस्तथैवैतद्यजमानो यदेता ऽउपदधात्येतस्मिन्नेवैतन्नाके स्वर्गे लोके सीदति ॥ १ ॥

यद्वेव नाकसद ऽउपदधाति । ( त्ये ) एतद्वै देवाऽएतं नाकꣳ स्वर्गं लोकमपश्यन्नेताः स्तोमभागास्तेऽब्रुवन्नुप तज्जानीत यथाऽस्मिन्नाके स्वर्गे लोके सीदामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथाऽस्मिन्नाके स्वर्गे लोके सीदामेति ॥ २ ॥

ते चेतयमानाः । ( ऽ ) एता ऽइष्टकाऽअपश्यन्नाकसदस्ता ऽउपादधत ताभिरेतस्मिन्नाके स्वर्गे लोकेऽसीदंस्तद्यदेताभिरेतस्मिन्नाके स्वर्गे लोके-

---

### अथ पञ्चनाकसादिष्टकोपधानम् ।

नाकसद उपदधाति । देवा वै नाकसदः । अत्रैष सर्वोऽग्निः संस्कृतः । स एषोऽत्र नाकः स्वर्गो लोकः । तस्मिन्देवा असीदन् । तद्यदेतस्मिन्नाके स्वर्गे लोके देवा असीदन्—तस्माद्देवा नाकसदः । तथैवैतद्यजमानो यदेता उपदधाति—एतस्मिन्नेवैतन्नाके स्वर्गे लोके सीदति ॥ १ ॥

यद्वेव नाकसद उपदधाति । एतद्वै देवा एतं नाकं स्वर्गं लोकमपश्यन्—एताः स्तोमभागाः । तेऽब्रुवन्—उप तज्जानीत यथाऽस्मिन्नाके स्वर्गे लोके सीदामेति । तेऽब्रुवन्—चेतयध्वमिति—चितिमिच्छतेति वाव तदब्रुवन्—तदिच्छत—यथाऽस्मिन्नाके स्वर्गे लोके सीदामेति ॥ २ ॥

ते चेतयमाना एता इष्टका अपश्यन्नाकसदः । ता उपादधत । ताभिरेतस्मिन्नाके स्वर्गे लोके-

---

नाकसद इति । नाकसदो नाम पञ्चेष्टकास्तासामुपधानमेतासु दशसु कण्डिकासु प्रपञ्च्यते[1] । देवा वै नाकसदो नाके असीदन्निति । तेषां चाधियाज्ञिकानि शरीराणि इष्टका अपि तदात्मिका एवेति । नाकसदो यजमानोऽपि आत्मरूपा एवमपश्यत् तमुपदधुः उपदधाति इत्येतत् प्रथमायां कण्डिकायां भेददर्शनम् ॥ १ ॥

यद्वेव नाकसद इति । एताभ्यां कण्डिकाभ्यां भेददर्शनं मदशक्तीन्युच्यन्ते । ताभिरुपायभूताभिर्भिन्नादिति नार्थवदेवासीदिति यजमानोऽप्यात्मने ता एवोपायभूताः पश्यंस्ताभिर्नाके सीदतीति नाकसदः न करणसाधनः घञ् । किन्तु क्विप्प्रत्ययो दर्शितः ॥ २ ॥ ३ ॥

---

१-नाकसदोऽनूकेषु पूर्व्ववर्जमृतव्यावेलायामाश्विनीवद्राड्यसीति प्रतिमंत्रम् । का. श्रौ. सू. १७ । २३६ ।

ऽसीदंस्तस्मादेता नाकसदस्तथैवैतद्यजमानो यदेताऽउपदधात्येतस्मिन्नेवैतन्नाके स्वर्गे लोके सीदति ॥ ३ ॥

दिक्षूपदधाति । दिशो वै स नाकः स्वर्गो लोकः स्वर्गऽएवैना ऽएतल्लोके सादयत्यृतव्यानां वेलया संवत्सरो वाऽऋतव्याः संवत्सरः स्वर्गो लोकः स्वर्गऽएवैना ऽएतल्लोके सादयत्यन्तस्तोमभागमेष वै स नाकः स्वर्गो लोकस्तस्मिन्नेवैनाऽएतत्प्रतिष्ठापयति ॥ ४ ॥

स पुरस्तादुपदधाति । राज्ञ्यसि प्राची दिगिति राज्ञी ह नामैषा प्राची दिग्वसवस्ते देवाऽअधिपतयऽइति वसवो हैतस्यै दिशो देवाऽअधिपतयोऽग्निर्हेतीनां प्रतिधर्तेत्यग्निर्हैवात्र हेतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः पृथिव्याᳪं श्रयत्विति त्रिवृता हैषा स्तोमेन पृथिव्याᳪं श्रिताऽऽज्यमुक्थमव्यथायै स्तभ्नात्वित्याज्येन हैषोक्थेनाव्यथायै पृथिव्याᳪं स्तब्धा रथन्तरᳪं साम प्रतिष्ठित्याऽअन्तरिक्षऽइति रथन्तरेण हैषा साम्ना प्रति-

---

ऽसीदन् । तद्यदेताभिरेतस्मिन्नाके स्वर्गे लोकेऽसीदन्—तस्मादेता नाकसदः। तथैवैतद्यजमानो यदेता उपदधाति—एतस्मिन्नेवैतन्नाके स्वर्गे लोके सीदति ॥ ३ ॥

दिक्षूपदधाति । दिशो वै स नाकः स्वर्गो लोकः । स्वर्ग एवैना एतल्लोके सादयति । ऋतव्यानां वेलया । सम्वत्सरो वा ऋतव्याः । सम्वत्सरः स्वर्गो लोकः । स्वर्ग एवैना एतल्लोके सादयति । अन्तस्तोमभागम् । एष वै स नाकः स्वर्गो लोकः । तस्मिन्नेवैना एतत्प्रतिष्ठापयति ॥ ४ ॥

(१) स पुरस्तादुपदधाति । "राज्ञ्यसि प्राची दिक्"—इति । राज्ञी ह नामैषा प्राची दिक् । "वसवस्ते देवा अधिपतयः"—इति । वसवो हैतस्यै दिशो देवा अधिपतयः । "अग्निर्हेतीनां प्रतिधर्ता"—इति । अग्निर्हैवात्र हेतीनां प्रतिधर्ता । "त्रिवृत्त्वा स्तोमः पृथिव्यां श्रयतु"—इति । त्रिवृता हैषा स्तोमेन पृथिव्यां श्रिता ।"आज्यमुक्थमव्यथायै स्तभ्नातु"—इति । आज्येन हैषोक्थेनाव्यथायै पृथिव्यां स्तब्धा । "रथन्तरं साम प्रतिष्ठित्या अन्तरिक्षे"—इति । रथन्तरेण हैषा साम्ना प्रतिष्ठिताऽन्तरिक्षे । "ऋषयस्त्वा प्रथमजा देवेषु"—

---

दिक्षूपदधातीति । दिक्षूपदधाति ता वै दिक्ष्वित्येतत् यमेव ( ततश्चास्याश्चतुचतोवै दिशो वै भवति भुक्तं इत्यभिप्रायः ) । अन्ये स्तोमभागानां ऋतव्या वदन्तीत्यनुवाद एवायम् ॥ ४ ॥

स पुरस्तादिति । पञ्चभिरेताभिः प्रसन्नम् । एवमन्या व्याख्यायंते । ते च संक्षेपेणात्र इष्टका उच्यते । देवता यूयं भरतवस्वादयश्च देवा अधिपतयोऽभवन्नग्न्यादयश्च रक्षितारस्त्रिवृदाद्याः पृथिव्यां वा भूतानि प्रतिष्ठापयन्त आज्यादीनि शस्त्राणि तत्रैव ददीत रथन्तरादीनि सामान्यन्तरिक्षस्तत्र तत्तु प्रतिष्ठार्थम् । ऋषयश्च सहदेवलोकादिभिर्यवपराक्षत्रमर्य एवावस्था. नाके स्वर्गे दिवः सारं तेयुग्मा यजमानं च सादयंत्विति प्राणा वा ऋषय इतीन्द्रियग्राहिणः

२०१८

ष्ठिताऽन्तुरिक्षऽ ऋषयस्त्वा प्रथमजा देवेष्विति प्राणा वाऽऋषयः प्रथमजा-स्तद्धि ब्रह्म प्रथमजं दिवो मात्रया व्वरिम्णा प्रथन्त्विति यावती द्यौस्तावतीं व्वरिम्णा प्रथन्त्वित्येतद्विधर्त्ता चायमधिपतिश्चेति वाक्च तौ मनश्च तौ हीदᳯं सर्व्वं विधारयतस्ते त्वा सर्व्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्विति यथैव यजुस्तथा बन्धुः ॥ ५ ॥

( २ ) अथ दक्षिणतः । ( तो ) व्विराडसि दक्षिणा दिगिति व्विराड्ढ नामैषा दक्षिणा दिग्रुद्रास्ते देवाऽ अधिपतयऽ इति रुद्रा हैतस्यै दिशो देवाऽ अधिपतयऽ इन्द्रो हेतीनां प्रतिधर्त्तेतीन्द्रो हैवात्र हेतीनां प्रतिधर्त्ता पञ्चदशस्त्वा स्तोमः पृथिव्याᳯं श्रयत्विति पञ्चदशेन हैषा स्तोमेन पृथिव्याᳯं श्रिता प्रउगमुक्थमव्यथायै स्तभ्नात्विति प्रउगेण हैषोक्थेना-व्यथायै पृथिव्याᳯं स्तब्धा बृहत्साम प्रतिष्ठित्याऽअन्तरिक्षऽइति बृहता हैषा साम्ना प्रतिष्ठिताऽन्तरिक्षऽऋषयस्त्वा प्रथमजा देवेष्विति तस्योक्तो बन्धुः ॥ ६ ॥

---

इति । प्राणा वा ऋषयः प्रथमजाः, तद्धि ब्रह्म प्रथमजम् । "दिवो मात्रया वरिम्णा प्रथन्तु"-इति । यावती द्यौस्तावतीं वरिम्णा प्रथन्त्वित्येतद् । " विधर्ता चायमधिपतिश्च "-इति । वाक्च तौ मनश्च तौ हीदं सर्वं विधारयतः । " ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु "-(वा. सं. १५ । १० ) इति । यथैव यजुस्तथा बन्धुः ॥ ५ ॥

( २ ) अथ दक्षिणतः । "विराडसि दक्षिणा दिक्"-इति। विराड्ढ नामैषा दक्षिणा दिक् । " रुद्रास्ते देवा अधिपतयः "-इति । रुद्रा हैतस्यै दिशो देवा अधिपतयः । " इन्द्रो हेतीनां प्रतिधर्ता "-इति । इन्द्रो हैवात्र हेतीनां प्रतिधर्ता । " पञ्चदशस्त्वा स्तोमः पृथिव्यां श्रयतु "-इति । पञ्चदशेन हैषा स्तोमेन पृथिव्यां श्रिता । " प्रउगमुक्थमव्यथायै स्तभ्नातु "-इति । प्रउगेण हैषोक्थेनाव्यथायै पृथिव्यां स्तब्धा । " बृहत्साम प्रतिष्ठित्या-अन्तरिक्षे "-इति । बृहता हैषा साम्ना प्रतिष्ठिताऽन्तरिक्षे । "ऋषयस्त्वा प्रथमजा देवेषु"-( वा. सं. १५ । ११ ) इति । तस्योक्तो बन्धुः ॥ ६ ॥

---

(सुसीरक्रियातद्यावाय) एवाभिः प्रतानेन्द्रियाणि कुतः विधर्ता चायमधिपतिश्च ते त्वा नरः सद्य उत्तरत्रोपादानात् । ऋषिशब्देनेन्द्रियाण्युपात्तानि स्युः । ततोऽस्य रसस्तयोस्तदन्तर्भूतयोः पृथगुपादानमनर्थकमेव स्यात् कथं पुनः प्राणाः प्रथमजा इत्येतदाह-तद्धि प्राणात्मकं ब्राह्मविकाराणां भर्तृप्रथमजं सर्वाङ्गमेव गीयते । ता आपः सत्यम-

---

१-" दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु "-इत्येतावान् मन्त्रभागः प्रतीष्टकोपधानमन्त्रे योज्यः ।

( ३ ) अथ पश्चात् । ( त्स ) सम्राडसि प्रतीची दिगिति सम्राड्ढ नामैषा प्रतीची दिगादित्यास्ते देवा ऽअधिपतय ऽइत्यादित्या हैतस्यै दिशो देवाऽअधिपतयो वरुणो हेतीनां प्रतिधर्त्तेति वरुणो हैवात्र हेतीनां प्रतिधर्त्ता सप्तदशस्त्वा स्तोमः पृथिव्याँ श्रयत्विति सप्तदशेन हैषा स्तोमेन पृथिव्याँ श्रिता मरुत्वतीयमुक्थमव्यथायै स्तभ्नात्विति मरुत्वतीयेन हैषोक्थेनाव्यथायै पृथिव्याँ स्तब्धा वैरूपँ साम प्रतिष्ठित्याऽअन्तरिक्षऽइति वैरूपेण हैषा साम्ना प्रतिष्ठिताऽन्तरिक्षऽऋषयस्त्वा प्रथमजा देवेष्विति तस्योक्तो बन्धुः ॥ ७ ॥

( ४ ) अथोत्तरतः । स्वराडस्युदीची दिगिति स्वराड्ढ नामैषोदीची दिङ्मरुतस्ते देवाऽअधिपतय ऽइति मरुतो हैतस्यै दिशो देवाऽअधिपतयः सोमो हेतीनां प्रतिधर्त्तेति सोमो हैवात्र हेतीनां प्रतिधर्त्तैकविँशस्त्वा स्तोमः पृथिव्याँ श्रयत्वित्येकविँशेन हैषा स्तोमेन पृथिव्याँ श्रिता निष्केवल्यमुक्थमव्यथायै स्तभ्नात्विति निष्केवल्येन हैषोक्थेनाव्यथायै पृथिव्याँ स्तब्धा वैराजँ साम प्रतिष्ठित्याऽअन्तरिक्षऽ-

---

( ३ ) अथ पश्चात् । "सम्राडसि प्रतीची दिक्"–इति । सम्राड्ढ नामैषा प्रतीची दिक् । "आदित्यास्ते देवा अधिपतयः"–इति । आदित्या हैतस्यै दिशो देवा अधिपतयः । "वरुणो हेतीनां प्रतिधर्ता"–इति । वरुणो हैवात्र हेतीनां प्रतिधर्ता । "सप्तदशस्त्वा स्तोमः पृथिव्यां श्रयतु"–इति । सप्तदशेन हैषा स्तोमेन पृथिव्यां श्रिता । "मरुत्वतीयमुक्थमव्यथायै स्तभ्नातु"–इति । मरुत्वतीयेन हैषोक्थेनाव्यथायै पृथिव्यां स्तब्धा । "वैरूपं साम प्रतिष्ठित्या अन्तरिक्षे"–इति । वैरूपेण हैषा साम्ना प्रतिष्ठिताऽन्तरिक्षे । "ऋषयस्त्वा प्रथमजा देवेषु"–( वा. सं. १५ । १२ ) इति । तस्योक्तो बन्धुः ॥ ७ ॥

(४) अथोत्तरतः । "स्वराडस्युदीची दिक्"–इति । स्वराड्ढ नामैषोदीची दिक् । "मरुतस्ते देवाऽअधिपतयः"– इति । मरुतो हैतस्यै दिशो देवा अधिपतयः । "सोमो हेतीनां प्रतिधर्ता"–इति । सोमो हैवात्र हेतीनां प्रतिधर्ता । "एकविंशस्त्वा स्तोमः पृथिव्यां श्रयतु"–इति । एकविंशेन हैषा स्तोमेन पृथिव्यां श्रिता । "निष्केवल्यमुक्थमव्यथायै स्तभ्नातु"–इति । निष्केवल्येन हैषोक्थेनाव्यथायै पृथिव्यां स्तब्धा । "वैराजं साम प्रति-

---

सृजन्त । सत्यं ब्रह्मेत्यादिष्वेतदुक्तं भवति । एवम् ऋषयः सन् मूर्च्छितरूपा ब्रह्मेत्युच्यते । ततश्च नैव सशयितव्यं तद्ब्रह्म प्रथमजमुक्तमिति । तत्तु प्राणास्तेन विरुद्धावेतावाभाति । किं तर्हि समानार्थावेताविति वा वाङ्मनः

इति वैराजेन हैषा साम्ना प्रतिष्ठिताऽन्तरिक्षऽऋषयस्त्वा प्रथमजा देवेष्विति तस्योक्तो बन्धुः ॥ ८ ॥

( ९ ) अथ मध्ये । ( ध्येऽधि ) अधिपत्न्यसि बृहती दिगित्यधिपत्नी ह नामैषा बृहती दिग्विश्वे ते देवाऽ अधिपतयऽ इति विश्वे हैतस्यै दिशो देवाऽ अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्त्तेति बृहस्पतिर्हैवात्र हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतामिति त्रिणवत्रयस्त्रिꣳशाभ्याꣳ हैषा स्तोमाभ्यां पृथिव्याꣳ श्रिता वैश्वदेवाग्निमारुतेऽउक्थेऽअव्यथायै स्तभ्नीतामिति वैश्वदेवाग्निमारुताभ्याꣳ हैषोक्थाभ्यामव्यथायै पृथिव्याꣳ स्तब्धा शाक्वररैवते सामनी प्रतिष्ठित्याऽ अन्तरिक्षऽइति शाक्वररैवताभ्याꣳ हैषा सामभ्यां प्रतिष्ठिताऽन्तरिक्षऽऋषयस्त्वा प्रथमजा देवेष्विति तस्योक्तो बन्धुः ॥ ९ ॥

( १० ) एतावान्वै सर्व्वो यज्ञः । ( ज्ञो ) यज्ञऽ उ देवानामात्मा यज्ञमेव तद्देवाऽ आत्मानं कृत्वैतस्मिन्नाके स्वर्गे लोकेऽसीदंस्तथैवैतद्यजमानो यज्ञमेवात्मानं कृत्वैतस्मिन्नाके स्वर्गे लोके सीदति ॥ १० ॥

---

ष्ठित्याऽअन्तरिक्षे "–इति । वैराजेन हैषा साम्ना प्रतिष्ठिताऽन्तरिक्षे । " ऋषयस्त्वा प्रथमजा देवेषु "–( वा० सं० १५ । १३ ) इति । तस्योक्तो बन्धुः ॥ ८ ॥

( ९ ) अथ मध्ये । " अधिपत्न्यसि बृहती दिक् "–इति । अधिपत्नी ह नामैषा बृहती दिक् । " विश्वे ते देवा अधिपतयः "–इति । विश्वे हैतस्यै दिशो देवा अधिपतयः । " बृहस्पतिर्हेतीनां प्रतिधर्ता "–इति । बृहस्पतिर्हैवात्र हेतीनां प्रतिधर्ता । " त्रिणवत्रयस्त्रिंशौ त्वा स्तोमौ पृथिव्यां श्रयताम् "–इति । त्रिणवत्रयस्त्रिंशाभ्यां हैषा स्तोमाभ्यां पृथिव्यां श्रिता । " वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नीताम् "–इति । वैश्वदेवाग्निमारुताभ्यां हैषोक्थाभ्यामव्यथायै पृथिव्यां स्तब्धा । "शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षे "–इति । शाक्वररैवताभ्यां हैषा सामभ्यां प्रतिष्ठिताऽन्तरिक्षे । " ऋषयस्त्वा प्रथमजा देवेषु "–( वा. सं. १५ । १४ ) इति । तस्योक्तो बन्धुः ॥ ९ ॥

एतावान्वै सर्वो यज्ञः । यज्ञ उ देवानामात्मा । यज्ञमेव तद्देवा आत्मानं कृत्वैतस्मिन्नाके स्वर्गे लोकेऽसीदन् । तथैवैतद्यजमानो यज्ञमेवात्मानं कृत्वैतस्मिन्नाके स्वर्गे लोके सीदति ॥ १० ॥

---

साहचर्याद्वागिन्द्रियं विज्ञायते तौ हीदं सर्वं जगद्विधारयत इति । मनश्च सर्वव्यवहारांशत्वात् । ( तास्वपि न सविवक्षादयः ) ॥ ९–९ ॥

एतावान्वै सर्वो यज्ञ इति । न च देवा नाकसदोऽत्र कीर्त्तनीयाः । त्रिवृदादीनां यज्ञोपकरणानामेव कः

( त्यु ) अ॒थ प॒ञ्चचू॑डाऽ उ॒पद॑धाति । य॒ज्ञो वै॒ नाक॒सदो॑ य॒ज्ञ ऽउ॑ऽए॒व प॒ञ्चचू॑डास्त॒द्य॑ऽ इ॒मे च॒त्वार॑ऽ ऋ॒त्विजो॑ गृ॒हप॑तिपञ्च॒मास्ते॒ नाक॒सदो॒ होत्राः॑ प॒ञ्चचू॑डा॑ऽ अ॒तिरि॑क्तं॒ वै तद्य॒द्धोत्रा॑ य॒द्व वा॑ऽअ॒तिरि॑क्तं॒ चूडः॑ स तद्य॒त्पञ्चा॑तिरि॒क्तास्त॒स्मात्प॒ञ्चचू॑डाः ॥ ११ ॥

( ० ) य॒द्वेव नाक॒सत्प॒ञ्चचू॑डा ऽउ॒पद॑धाति । (त्या) आ॒त्मा वै॒ नाक॒सदो॑ मिथु॒नं प॒ञ्चचू॑डा ऽअ॒र्धमु॑ हैत॒दात्म॑नो य॒न्मिथु॒नं य॒दा वै॒ स॒ह मि॑थु॒नेना॒थ सर्वो॑ऽथ कृ॒त्स्नः॑ कृ॒त्स्नता॑यै ॥ १२ ॥

---

### अथ पञ्चचूडेष्टकोपधानम् ।

अथ पञ्चचूडा उपदधाति[1] । यज्ञो वै नाकसदः, यज्ञ उ पञ्चचूडाः । तद् य इमे चत्वार ऋत्विजो गृहपतिपञ्चमाः—ते नाकसदः । होत्राः पञ्चचूडाः । अतिरिक्तं वै तद्—यद्धोत्राः । यद्धु वा अतिरिक्तं—चूडः सः । तद्यत्पञ्चातिरिक्ताः—तस्मात्पञ्चचूडाः ॥ ११ ॥

यद्वेव नाकसत्पञ्चचूडा उपदधाति। आत्मा वै नाकसदो, मिथुनं पञ्चचूडाः । अर्धमु हैतदात्मनो—यन्मिथुनम् । यदा वै सह मिथुनेन । अथ सर्वः । अथ कृत्स्नः । कृत्स्नतायै ॥ १२ ॥

---

प्रसङ्गः । सति चाङ्गे यावत एता दिगादयो यज्ञोपकरणनीव यद्युक्ताः स एतावानेव प्राधान्येन एतेष्वेवोपकरणान्तराणामन्तर्भावात् । कथं दिक्षु तावद्दिक्कान्युपकरणान्यन्तर्गतानि वस्वग्न्यादिषु च देवताः स्तोमेषु सामसु च स्तोत्राणि सामानि च उक्थेषु ना शस्त्राणि च प्राणेषु प्राणिनः सर्व इत्येव । ननु चात्र यजुरेव यज्ञोपकरणं नास्ति किमुच्यते—वाग्वै सर्वो यज्ञ इति । नैष दोषः । अन्यानि तु यज्ञोपकरणानि यजुषा निधेयत्वात् इत्युपादीयते यज्ञं साक्षादेवेदं प्रगृह्यते । तस्य किमभिधानेन प्रयोजनं यावत्तदेतदत्रैव यज्ञश्चित्तमिति नित्यस्यच तुष्ट्वामेधदर्शयति । ततश्चोपपन्नमेतदेतावानेव यज्ञ इति । ततःकिमित्यत आह—यज्ञ इति । तद्देवानामात्मानं हितमात्मत्वेनाभिगीता आत्मयाजित्वात् ततश्चाधियज्ञं हि याजिताभ्यां ते देवा अधिदेवमपि यज्ञमेवात्मानं कृत्वा एतस्मिन् नाके स्वर्गे लोकेऽसीदन्, यज्ञरूपेणैव देवत्वस्य प्रतिलब्धत्वात् । यज्ञमात्मानं कृत्वाऽसीदन्निति । चक्रवते तद्दर्शयति । यथैव प्राच्यादयो दिश इष्टकाशरीरा इन्द्रादी (          ) ते एव (                    ) पूर्वं हित्वास इष्टकात्मकत्वादतिरिक्तमधुना तेषामेव यज्ञात्मकत्वमुच्यते । तेनेष्टकानां (          ) यज्ञोपकरणात्मकत्वमस्तीति गम्यते ॥ १० ॥

अथ पञ्चचूडा इति । अथ पञ्चचूडा नामेष्टका उपदधाति । इत्येतदत एव उपधत्ते न तत्र आद्याभिश्चतसृभिः कण्डिकाभिरन्त्याभ्यां च द्वाभ्यां नाकसदामपि किञ्चिदुच्यते । 'यज्ञो वै नाकसद' इति । संख्यासामान्यमुपपादयितुमुपन्यासः । गृहपतिरिति यजमान एवात्राभिप्रेतः स हि यज्ञ गृहीणा (          ) दिक्षुः एतदक्षिसाहचर्यात् (          ) तावते च यजमान इति वा उपहाराद्धोत्राः प्रशास्त्रादयः पञ्चमे पुनरपत्ये शब्दानुग्रहेषु सबलं कुर्वन्ति ततोऽभिप्रेताः कुतस्तद्यत्पञ्चातिरिक्ता इति वचनादितरे ऋत्विजस्तत्रैवान्तर्गता इत्यभिप्रायः । अतोऽ-

---

1—पुरीषमोप्योपर्ययं पुर भति पंचचूडाः प्रतिमंत्रम् । प्रतिदिशं यथालिंगं पश्चिमोत्तमा । का. श्रौ. सू. १७ । २३७ ।

यद्वेव नाकसत्पञ्चचूडा ऽउपदधाति । ( त्या ) आत्मा वै नाकसदः प्रजा पञ्चचूडा ऽअतिरिक्तं वै तदात्मनो यत्प्रजा यद्दु वाऽअतिरिक्तं चूडः स तद्यत्पञ्चातिरिक्तास्तस्मात्पञ्चचूडाः ॥ १३ ॥

( ० ) यद्वेव नाकसत्पञ्चचूडा ऽउपदधाति । दिशो वै नाकसदो दिश ऽउऽएव पञ्चचूडास्तद्याऽअमुष्मादादित्यादर्व्वाच्यः पञ्च दिशस्ता नाकसदो याः पराच्यस्ताः पञ्चचूडा ऽअतिरिक्ता वै ता दिशो याऽअमुष्मादादित्यात्पराच्यो यद्दु वाऽअतिरिक्तं चूडः स तद्यत्पञ्चातिरिक्तास्तस्मात्पञ्चचूडाः ॥ १४ ॥

( ० ) यद्वेव पञ्चचूडा ऽउपदधाति । ( त्ये ) एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइमाँल्लोकानुपरिष्टाद्रक्षाᳬसि नाष्ट्रा न हन्युरिति तऽएतानेषां लोकानामुपरिष्टाद्गोप्तॄनकुर्व्वत यऽएते हेतयश्च प्रहेतयश्च तथैवैतद्यजमान ऽएतानेषां लोकानामुपरिष्टाद्गोप्तॄन्कुरुते यऽएते हेतयश्च प्रहेतयश्च ॥ १५ ॥

---

यद्वेव नाकसत्पञ्चचूडा उपदधाति । आत्मा वै नाकसदः, प्रजा पञ्चचूडाः । अतिरिक्तं वै तदात्मनो—यत्प्रजा । यद्वुवा अतिरिक्तं चूडः सः । तद्यत्पञ्चातिरिक्ताः—तस्मात्पञ्चचूडाः ॥ १३ ॥

यद्वेव नाकसत्पञ्चचूडा उपदधाति । दिशो वै नाकसदः, दिश उ एव पञ्चचूडाः । तद्या अमुष्मादादित्यादर्वाच्यः पञ्च दिशः—ता नाकसदः । याः पराच्यः—ताः पञ्चचूडाः । अतिरिक्ता वै ता दिशः—या अमुष्मादादित्यात्पराच्यः । यद्दु वा अतिरिक्तं—चूडः सः । तद्यत्पञ्चातिरिक्ताः—तस्मात्पञ्चचूडाः ॥ १४ ॥

यद्वेव पञ्चचूडा उपदधाति । एतद्वै देवा अबिभयुः—यद्वै न इमाँल्लोकानुपरिष्टाद्रक्षांसि नाष्ट्रा न हन्युरिति । त एतानेषां लोकानामुपरिष्टाद्गोप्तॄनकुर्वत—य एते हेतयश्च प्रहेतयश्च । तथैवैतद्यजमान एतानेषां लोकानामुपरिष्टाद्गोप्तॄन्कुरुते—य एते हेतयश्च प्रहेतयश्च ॥ १५ ॥

---

तिरिक्तं वै तद्यद्धोत्रा इति पूर्वेभ्यः पुरुषेभ्यो बहिरङ्गत्वादतिरिक्ता यद्दृत्विजस्तत्रैवान्तर्गताः अतिरिक्तं कायस्य वै (ताततवर्जितं) स चूडः केशपुञ्जस्ततश्चातिरिक्तसामान्याद्धोत्रा यज्ञस्य चूडा अभूत्, 'तद्यत्पञ्चातिरिक्ता' इति समानाधिकरणं समासं दर्शयति—तस्मात् पञ्चचूडा इति । चूडशब्दस्योभयलिङ्गनिर्देशः । अथ च इष्टकासु पञ्चचूडाशब्दस्य निरूढस्यैव व्युत्पत्तिमात्रमेतदिति द्रष्टव्यम् ॥ ११ ॥ १२ ॥

यद्वेव नाकसत्पञ्चचूडा इति । आत्मा यजमानस्य शरीरं पुनः आत्मा स चात्माधिदैवादग्निमेव पञ्चमाध्यायस्थितमिति पञ्चनाकसदो मिथुनमस्याधिदैविकमासर्वादिकसंग्रहेण पञ्चैवावस्थिता इति । तदात्मिकाः पञ्चचूडा अपि वै नाकसदः प्रजापतिनैवायं पञ्च इत्यभिप्रायः ॥ १३ ॥ १४ ॥

यद्वेव पञ्चचूडा इति । ननु च यदि य एते हेतयश्च प्रहेतयश्च दङ्क्ष्णवः पशव इत्यादयस्ताः पञ्चचूडात्मका एषां लोकानामुपरिष्टाद् गोप्तॄनकुर्वत । ततः हरिकेशादीनां किमर्थमुपादानम् । नैष दोषः ।

स पुरस्तादुपदधाति । ( त्य ) अयं पुरो हरिकेशऽइत्यग्निर्वै पुरस्त-
द्यत्तमाह पुरऽइति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्धरिकेश
ऽइत्याह हरिरिव ह्यग्निः सूर्यरश्मिरिति सूर्यस्येव ह्यग्ने रश्मयस्तस्य रथगृ-
त्सश्च रथौजाश्च सेनानीग्रामण्याविति वासन्तिकौ तावृतू पुञ्जिकस्थला
च क्रतुस्थला चाप्सरसाविति दिक्चोपदिशा चेति ह स्माह माहित्थिः सेना
च तु ते समितिश्च दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिरिति यद्वै
सेनायां च समितौ चऽर्तीयन्ते तु दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः
प्रहेतिरिति यदन्योऽन्यं घ्नन्ति स पौरुषेयो वधः प्रहेतिस्तेभ्यो नमोऽ-
अस्त्वित्ति तेभ्य ऽएव नमस्करोति ते नो मृडयन्त्विति तऽएवास्मै मृड-
यन्ति ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म ऽइति यमेव द्वेष्टि
यश्चैनं द्वेष्टि तमेषां जम्भे दधात्यमुमेषां जम्भे दधामीति ह ब्रूयाद्यं
द्विष्यात्ततोऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयं निर्दिष्टो ह्येव
स यमेवंविद् द्वेष्टि ॥ १६ ॥

---

(१)स पुरस्तादुपदधाति । "अयं पुरो हरिकेशः"–इति । अग्निर्वै पुरः । तद् यत्तमाह–पुर इति । प्राञ्चं ह्यग्निमुद्धरन्ति, प्राञ्चमुपचरन्ति । अथ यद्धरिकेश इत्याह–हरिरिव ह्यग्निः । "सूर्यरश्मिः"–इति । सूर्यस्येव ह्यग्ने रश्मयः । "तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ"–इति । वासन्तिकौ तावृतू । "पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ"–इति । दिक् चोपदिशा चेति ह स्माह–माहित्थिः । सेना च तु ते समितिश्च । "दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिः"–इति । यद्वै सेनायां च समितौ चऽर्तीयन्ते–ते दङ्क्ष्णवः पशवः । हेतिः पौरुषेयो, वधः प्रहेतिरिति । यदन्योऽन्यं घ्नन्ति–स पौरुषेयो वधः प्रहेतिः । "तेभ्यो नमो अस्तु"–इति । तेभ्य एव नमस्करोति । "ते नो मृडयन्तु"–इति । त एवास्मै मृडयन्ति । "ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः"–( वा. सं. १५ । १५ ) इति । यमेव द्वेष्टि, यश्चैनं द्वेष्टि–तमेषां जम्भे दधाति । अमुमेषां जम्भे दधामीति ह ब्रूयात्–यं द्विष्यात् । तस्मिन्न पुनरस्ति । अपि तन्नाद्रियेत । स्वयं निर्दिष्टो ह्येव सः–यमेवंविद् द्वेष्टि ॥ १६ ॥

---

स्वामिभिरधिष्ठिता एव ( मेनाडां आभणाभिस्यते ) गोपायितुं सामर्थ्यं नान्यथेति । याः स्वामिका एवोपधीयंते न केवलाः पूज्यतमत्वात् स्वामिन एव गोप्तार इत्युक्तम् । ( स सेरस्ता ) यद्वै सेनायां समितौ चेति लिङ्गवचन-प्रत्युपस्थिता । समितौ च स्थल मेलके सन्तो दङ्क्ष्णवः पशवो दङ्क्ष्णवन्तीति दङ्क्ष्णवः पशवो जन्मनः (स्पर्द्धा- यद्वै सेनायां चेन्मंत्रेण सेनायां चेति लिङ्गवचनात्पौरुषेयो । वधः पुरुषेभ्यो हितः चूडाः पशवो दयान्मोन्यावबन्धनः पश्यन्ति ) तदा पुरुषेभ्यो हितः पशवो यदा पुरुषाणां क्षेमो भवति । पशून् पुरुषा उपयुञ्जते । नैयायिकास्तु

( सृप्तु ) अथ दक्षिणतः । (तोऽयं) अयं दक्षिणा व्विश्वकर्मेत्ययं वै व्वायुर्व्विश्वकर्मा योऽयं पुवतऽएषु हीदᳬं सुर्व्वं करोति तद्यत्तमाह दक्षिणेति तुस्मादेषु दक्षिणैव भूयिष्ठं व्वाति तुस्य रथस्वनुश्च रुथेचित्रश्च सेनानीग्रामुण्याविति ग्रैष्मौ तावृतू मेनका च सहजन्या चाप्सरसाविति दिक्चोपदिशा चेति ह स्माह माहित्थिरिमे तु ते द्यावापृथिवी यातुधाना हेती रुक्षाᳬंसि प्रहेतिरिति यातुधाना हैवात्र हेती रुक्षाᳬंसि प्रहेतिस्तेभ्यो नुमोऽअस्त्विति तुस्योक्तो बन्धुः ॥ १७ ॥

( रु ) अथ पश्चात् । ( द ) अयं पश्चाद्विश्वव्यचाऽ इत्यसौ वाऽआदित्यो व्विश्वव्यचा यदा ह्येवैषुऽ उदेत्युथेदᳬं सुर्व्वं व्युचो भवति तद्यत्तमाह पश्चादिति तुस्मादेतं प्रत्यञ्चमेव युन्तं पश्यन्ति तुस्य रुथप्रोतश्चासमरथश्च सेनानीग्रामुण्याविति व्वार्षिकौ तावृतू प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसाविति दिक्चोपदिशा चेति ह स्माह माहित्थिरहोरात्रे तु ते ते

---

( २ ) अथ दक्षिणतः । " अयं दक्षिणा विश्वकर्मा "–इति । अयं वै वायुर्विश्वकर्मा–योऽयं पवते । एष हीदं सर्वं करोति । तद् यत्तमाह–दक्षिणेति । तस्मादेष दक्षिणैव भूयिष्ठं वाति । " तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ "–इति । ग्रैष्मौ तावृतू । " मेनका च सहजन्या चाप्सरसौ "–इति । दिक्चोपदिशा चेति ह स्माह माहित्थिः । इमे तु ते द्यावा-पृथिवी । " यातुधाना हेती रक्षांसि प्रहेतिः "–इति । यातुधाना हैवात्र हेती रक्षांसि प्रहेतिः । " तेभ्यो नमो अस्तु "–( वा. सं. १५ । १६ ) इति । तस्योक्तो बन्धुः ॥ १७ ॥

(३)अथ पश्चात् । "अयं पश्चाद्विश्वव्यचाः"–इति । असौ वाऽआदित्यो विश्वव्यचाः । यदा ह्येवैष उदेति–अथेदं सर्वं व्यचो भवति । तद् यत्तमाह–पश्चादिति । तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति । " तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ "–इति । वार्षिकौ तावृतू । " प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ"–इति । दिक्चोपदिशा चेति ह स्माह माहित्थिः । अहो-

---

" पुरुषेभ्यो हितत्वञ्च पुरुषाणामयं वध " इत्यस्मिन्नर्थे पौरुषेयशब्दं व्युत्पादयन्ति तेषां तत्र विरोधः प्राप्नोति तस्मात् पुरुषेभ्यो हित इत्ययमेवार्थो युक्तः । एवं तु वर्ण्यमाने वधक्रियाऽऽयुधं हेतिरित्युक्तं स्यात् । उत्तरत्र रक्षांसि प्रहेतिरिति प्राणिः प्रहेतयश्च वक्ष्यन्ते भवनसादृश्यं स्यात् तस्माद्वचनादर्थत एवान्योऽन्यं हन्तारो लक्ष्यन्त इति वक्तव्यम् । ततोऽस्मिन् ततः ( अमखदिरधर्माणां ) एषां रक्षःप्रभृतीनां जम्भे दधामीति इत्येतस्माद्वचना-दुत्तरकाले तद्वेष्टा तस्मिन् देशे नास्ति न भवति तदेव प्रवचनार्थः ॥१५ ॥ १६ ॥

अथ दक्षिणत इति । प्रसन्नप्रायाः । ततः प्रभृति यज्ञं हिंसन्ति जन्म दक्षिणं वक्ष्यमाणं मन्यमानाः कथम-

हि प्र च म्लोचतोऽनु च म्लोचतो व्याघ्रा हेतिः सर्पाः प्रहेतिरिति व्याघ्रा हैवात्र हेतिः सर्पाः प्रहेतिस्तेभ्यो नमोऽअस्त्विति तस्योक्तो बन्धुः ॥ १८ ॥

( ४ ) अथोत्तरतः । ( तोऽयं ) अयमुत्तरात्संयद्वसुरिति यज्ञो वाऽउत्तरात्तद्यत्तमाहोत्तरादित्युत्तरतऽउपचारो हि यज्ञोऽथ यत्संयद्वसुरित्याह यज्ञँ हि संयन्तीतीदं वस्विति तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्याविति शारदौ तावृतू विश्वाची च घृताची चाप्सरसाविति दिक्चोपदिशा चेति स्माह माहित्थिर्वेदिश्च तु ते स्रुक्च वेदिरेव विश्वाची स्रुग्घृताच्यापो हेतिर्वातः प्रहेतिरित्यापो हैवात्र हेतिर्वातः प्रहेतिरतो ह्येवोष्णो वात्यतः शीतस्तेभ्यो नमोऽअस्त्विति तस्योक्तो बन्धुः ॥ १९ ॥

( ५ ) अथ मध्ये । ( ध्येऽय ) अयमुपर्यर्वाग्वसुरिति पर्जन्यो वाऽउपरि तद्यत्तमाहोपरीत्युपरि हि पर्जन्योऽथ यदर्वाग्वसुरित्याहातो ह्यर्वाग्वसु वृष्टिरन्नं प्रजाभ्यः प्रदीयते तस्य सेनजिच्च सुषेणश्च सेनानी-

---

रात्रे तु ते । ते हि प्र च म्लोचतोऽनु च म्लोचतः । " व्याघ्रा हेतिः सर्पाः प्रहेतिः "—इति । व्याघ्रा हैवात्र हेतिः, सर्पाः प्रहेतिः । " तेभ्यो नमो अस्तु " –( वा. सं. १५ । १७ ) इति । तस्योक्तो बन्धुः ॥ १८ ॥

(४) अथोत्तरतः । " अयमुत्तरात्संयद्वसुः "—इति । यज्ञो वा उत्तरात् । तद् यत्तमाहोत्तरादिति । उत्तरतउपचारो हि यज्ञः । अथ यत्संयद्वसुरित्याह । यज्ञं हि संयन्ति–इतीदं वस्विति । " तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ "—इति । शारदौ तावृतू । " विश्वाची च घृताची चाप्सरसौ "—इति । दिक्चोपदिशा चेति ह स्माह—माहित्थिः । वेदिश्च तु ते स्रुक्च । वेदिरेव विश्वाची, स्रुग्घृताची । " आपो हेतिर्वातः प्रहेतिः "—इति । आपो हैवात्र हेतिः, वातः प्रहेतिः । अतो ह्येवोष्णो वात्यतः शीतः । " तेभ्यो नमो अस्तु "–( वा. सं. १५ । १८ ) इति । तस्योक्तो बन्धुः ॥ १९ ॥

( ५ ) अथ मध्ये । " अयमुपर्यर्वाग्वसुः "—इति । पर्जन्यो वाऽउपरि । तद्यत्तमाह उपरीति । उपरि हि पर्जन्यः । अथ यदर्वाग्वसुरित्याह–अतो ह्यर्वाग्वसु–वृष्टिरन्नं प्रजाभ्यः प्रदीयते । " तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ "—इति । हैमन्तिकौ तावृतू ॥

---

सपत्न इति । एतमवस्थितं नाम रे ! वत्र ते तुभ्यं पशुहिरण्यादि दर्शयतीदं धनं तुभ्यं हे दीक्षितेत्येव युक्तिर्धीनै संयतिः ततः किं धनवत्संयुक्तधनानां नाति संयतितश्च सम्यक् यन्ति वसुने धनाय तत्र तस्मिन् स संयद्वसुर्यज्ञः । आपो हैवात्रोत्तरस्यां दिशि हेतिः प्रहेतिः कथमापो हैवात्र अस्यामेव ह्युत्तरस्यां दिश्युत्तरायामनुष्णो वायुर्वाति ग्रीष्मर्तौ । अत्रैवोपदर्शितः शीतकाले न तथाऽन्येषु शीतोष्णाभ्यां च प्राणिनो हन्यन्ते । पर्जन्यः अर्वाग्वसुः तौ हि पर्जन्यादर्वाग्वा पृथिव्यां वसु प्रजाभ्यः पशुभ्यः प्रदीयते कथं पुनर्वृष्टिरन्नमित्येतदाह–अन्न-

ग्रामुण्याविति हैमन्तिकौ तुान्नृतू॒ऽउर्व्वुशी च पूर्व्वुचित्तिश्चाप्सुरुसाविति दिक्चोपदिशा चेति ह स्माह माहित्थिराहुतिश्च तु ते दुक्षिणा चावस्फूर्ज- न्हेतिर्व्विद्युत्प्रहेतिरित्यवस्फूर्जन्हैवात्र हेतिर्व्विद्युत्प्रहेतिस्तेभ्यो नुमो- ऽअस्त्वुति तुस्योक्तो बुन्धुः ॥ २० ॥

( २ ) एते वै तु हेतुयश्च प्रहेतयश्च । यांस्तुदेवा ऽएषां लोकुानामु- पुरिष्टाद्गोमृनुकुर्व्वतुाथ यास्तुाः प्रजुाऽएते ते सेनानीग्रामण्योऽथ यत्तु- न्मिथुनुमेतास्तुाऽअप्सरुसः सुर्व्वऽएव तुदेवुाः कृत्स्नुा भूत्वा सह प्रजुया सह मिथुनेनैतुस्मिन्नाके स्वर्गे लोकेऽसीदंस्तुथैवैतद्यजमानः सुर्व्वऽ एवु कृत्स्नो भूत्वा सह प्रजुया सह मिथुनेनैतुस्मिन्नाके स्वर्गे लोके सीदति ॥ २१ ॥( शतम् ४६०० )

ता वुाऽएताः । ( ० ) दशेष्टकाऽ उपदधाति दुशाक्षरा व्विराड्विरा- डेषा चितिस्तुा ऽउ वै पुञ्चैव द्वे द्वे ह्युपदुधाति तुा हैता ऽअग्नेराशिषस्तुाऽ उत्तमायां चितुाऽउपदधात्युन्त ऽएषोऽग्नेर्युदुत्तमा चितिरन्ततस्तुदग्नेरा- शिषो निराह पुञ्च भवन्ति पुञ्च हि यज्ञऽआशिषोऽथैनेऽअन्तरा पुरीषं

"उर्वशी च पूर्वचित्तिश्चाप्सरसौ"—इति । दिक्चोपदिशा चेति ह स्माह माहित्थिः । आहुतिश्च तु ते दक्षिणा च । "अवस्फूर्जन्हेतिर्विद्युत्प्रहेतिः"—इति । अवस्फूर्जन्हैवात्र हेतिः, विद्युत्प्रहेतिः । "तेभ्यो नमो अस्तु"—(वा० सं० १५ । १९) इति । तस्योक्तो बन्धुः ॥२०॥

एते वै ते हेतयश्च प्रहेतयश्च—यांस्तद्देवा एषां लोकानामुपरिष्टाद्गोमृनकुर्वत । अथ यास्ताः प्रजाः—एते ते सेनानीग्रामण्यः । अथ यत्तन्मिथुनम्—एतास्ता अप्सरसः । सर्व एव तद्देवाः कृत्स्ना भूत्वा सह प्रजया सह मिथुनेनैतास्मिन्नाके स्वर्गे लोकेऽसीदन् । तथैवैतद्यजमानः सर्व एव कृत्स्नो भूत्वा सह प्रजया सह मिथुनेनैतस्मिन्नाके स्वर्गे लोके सीदति ॥ २१ ॥

ता वा एता दशेष्टका उपदधाति । दशाक्षरा विराट् । विराडेषा चितिः । ता उ वै पञ्चैव । द्वे द्वे ह्युपदधाति । ता हैता अग्नेराशिषः । ता उत्तमायां चिता उपदधाति । अन्त एषोऽग्नेः—यदुत्तमा चितिः । अन्ततस्तदग्नेराशिषो निराह । पञ्च भवन्ति । पञ्च हि यज्ञ आशिषः । अथैने अन्तरा

---

हेतुत्वाद्वृष्टिरन्नं (ततश्चावधिसुत्यतो ) द्यर्वाग्वसुः पर्जन्य इत्युपपत्तिः । अवस्फूर्जन् ज्ञातव्यपिपशु तदित्यर्थः ॥ १७–२० ॥

एते वै ते हेतयश्च प्रहेतयश्च यद्वा प्रभृतयः । 'अथ यास्ताः पञ्चचूडा इत्येके । नामाप्ये अथ यत्तन्मिथुनं सर्वासु अथ चूडासु इति तदेता अप्सरसश्चेत्युपकरणानि । अत्रोपधीयत इतिवत् तत्सर्वान्येतानीष्टकाशरीराण्युपधीयन्त इति दर्शयति । ता उ वै पञ्चैवेति । कथं द्वे द्वे ह्युपदधात्येकैकस्मिन् लोक इत्य-

निवपत्यग्नी हैतौ युदेतेऽइष्टके नेदिमावग्नी सꣳशोचात ऽइत्यथोऽअन्नं वै पुरीषमन्नेनैवाभ्यामेतत्संज्ञां करोति ॥ २२ ॥

( त्य ) अथातोऽन्वावृतम् । ( म्पु ) पुरस्तादुपधाय दक्षिणतः पश्चादुत्तरतो मध्यऽउपदधात्यथोत्तराः पुरस्तादेवाग्रऽउपधाय दक्षिणतऽउत्तरतो मध्ये पश्चादुपदधात्यवस्तात्प्रपदनो ह स्वर्गो लोकऽएतद्वै देवाऽइमाँल्लोकान्त्सर्वतः समपिधायावस्तात्स्वर्गं लोकं प्रापद्यन्त तथैवैतद्यजमान ऽइमाँल्लोकान्त्सर्वतः समपिधायावस्तात्स्वर्गं लोकं प्रपद्यते ॥२३॥

इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ८–३–६ ॥ ( ६.१ ) ॥

---

पुरीषं निवपति । अग्नी हैतौ–यदेते इष्टके । नेदिमावग्नी संशोचात इति । अथो अन्नं वै पुरीषम् । अन्नेनैवाभ्यामेतत्संज्ञां करोति ॥ २२ ॥

अथातोऽन्वावृतम् । पुरस्तादुपधाय दक्षिणतः, पश्चाद्–उत्तरतः, मध्य उपदधाति । अथोत्तराः । पुरस्तादेवाग्र उपधाय दक्षिणतः, उत्तरतो मध्ये पश्चादुपदधाति । अवस्तात्प्रपदनो ह स्वर्गो लोकः । एतद्वै देवा इमांल्लोकान्त्सर्वतः समपिधायावस्तात्स्वर्गं लोकं प्रापद्यन्त । तथैवैतद्यजमान इमांल्लोकान्त्सर्वतः समपिधायावस्तात्स्वर्गं लोकं प्रपद्यते ॥ २३ ॥

---

भिप्रायः । सहोजो धीयते न वा पार्श्वत उपधीयमानान्यपाङ्गप्रदेशो लभते । एकस्मिन् लोके पूर्वस्या उपरि उपहितामेदे व्यपदेशं जहात्यपि पूर्वस्याः सादृश्यत्वाल्लोकान्तरानवधारणात्तस्मादभाववचनात् । नाकसदामुपरि स्थाने ये उपधेया इति । अतो अग्रे सारमुपरि स्थाने ये उपधेया इति । अतो अग्रे सारमुपादयितुं व्यावर्तेत नाममायमित्येतेन मन्त्रेणोपधानात् पञ्च भवन्त्युत्तराः पञ्च भवन्ति । अन्तरायोरेकादशत्वादन्यत्वमेवेत्यभिप्रायः । ‘ पञ्च हि यज्ञे आशिषः ’ सूक्तवाके दर्शिताः जीवितं प्रजाः पशवः सज्जातवनस्पत्यादिबन्धमित्येत्यता । ( अथैनं द्वन्द्वं उपदधाति त एनं तपसुरात्री अन्यं न हि साररुतः । गाधातोराशङ्कायां लभत एवाश्चत्वारो मन्त्राग्नीष्टकाभ्यां तु यत्तदुक्तवतः । ) परन्तु आवृतं क्रियामुपधानम् ( उपपन्नम् ) तदवतिष्ठत इति शेषः । अधस्तात् प्रपदनमाक्रमणम् उन्मादस्थानीयं यस्य साध्यावस्था प्रपदनः क्षमारोहणमित्यर्थः । द्वे एते इमाँल्लोकान्नर्हतः । उत्तरायां भूमिकायामपिधाय ततो ( अधस्ताद् ( ) मुष्कोक्षणान्तर्गतेन आरोहन् स्वर्गं लोकं स्वापदांतेनैति ) ॥ २१–२३ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमे काण्डे षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ८–६–१ ) ॥

छन्दुस्याऽ उुपदधाति । (त्यु) अुत्रैष सुर्व्वोऽग्निः सुंस्कृतः सु ऽएुषोऽत्र श्रियमैच्छुन्नो हैषोऽतः पुरा तुस्माऽअुलमास यच्छ्रियमुधारयिष्यत्तुस्मादिदमुप्येतुर्ह्याहुर्न वुाऽएुषोऽलᳫँ श्रियै धुारणाय राज्याय वा ग्रामणीष्ठ्याय वेुति तुस्मै देवुाऽएताᳫँ श्रियं प्रायच्छन्नेताुइछन्दुस्याः पशुवो वै च्छुन्दाᳫँस्युन्नं पशुवोऽन्नमु श्रीः ॥ १ ॥

( त्रि ) त्रिचान्युुपदधाति । त्रिवृद्वै पशुः पिता माता पुत्रोऽथो गुर्भऽउुल्वं जराुय्वथो त्रिवृद्धाऽअुन्नं कृषिर्व्वृष्टिर्बीजमेुकैकुवाति च्छन्दा भवत्येका ह्येव

---

## अथ एकत्रिंशच्छन्दस्येष्टकोपधानम् ।

छन्दस्या उपदधाति । अत्रैष सर्वोऽग्निः संस्कृतः । स एषोऽत्र श्रियमैच्छत् । नो हैषोऽतः पुरा तस्मा अलमास—यच्छ्रियमधारयिष्यत् । तस्मादिदमप्येतर्ह्याहुः—न वा एषोऽलं श्रियै धारणाय, राज्याय वा, ग्रामणीष्ठ्याय वेति । तस्मै देवा एतां श्रियं प्रायच्छन्—एताश्छन्दस्याः । पशवो वै छन्दांसि । अन्नं पशवः । अन्नमु श्रीः ॥ १ ॥

त्रिचान्युपदधाति । त्रिवृद्वै पशुः—पिता, माता, पुत्रः । अथो गर्भमुल्बं जरायु । अथो त्रिवृद्धा

---

छन्दस्या उपदधातीति[1] । छन्दोभ्यो निर्मिताः छन्दस्या इष्टकास्ता उपदधातीत्येतदत्र ब्राह्मणे । कथं पुरस्तादयमग्निरित्यादिना वक्ष्यते । तच्छन्दसां (सुभद्र) तस्यापि सारभूता एकत्रिंशदृचः सारभूता निष्क्रामिताः स पृथगुपलभ्यत इति प्रसिद्धं । तेनैतास्तावच्छन्दोनिर्मिता एतासां च ब्राह्मणशरीरा छन्दस्या इत्युच्यन्ते । अत्र पाद्याभिश्चतसृभिश्चैताः छन्दस्या एतदुक्थमित्येतत्प्रदर्शयति प्रसिद्धार्थं परेण तु ब्राह्मणशेषेण प्रजापतिरपि च्छन्दस्या शिष्टा इत्येतद्दर्श्यते । अस्यामवस्थायां वेषश्रीर्यस्यातीत्यग्निः स्थावरं जंगमं (प्रत्यंगौमन्नामिव) द्रुमाः पुष्पं फलश्रियं श्रपणीयमुपजीव्यं सारं बलमैच्छत् । अथ पूर्वं कस्मान्नैच्छदित्यत आह—नो हैषोऽतः पुरा तस्मा अलं बभूव । ये देवश्रियं सागरवाधिष्यं न ह्यङ्कुरावस्था स एवारभ्य वृक्षः पुष्यति फलति वा तस्मादेतावानशक्त्यानुभावाद्द्रुमाः । एवं जानातीति । श्रियै एष धारणाय नालमित्यत आह—'राज्याय वा' राज्यकर्मणि 'ग्रामणीष्ठ्याय वा' ग्रामणीष्ठस्य कर्म ग्रामणीष्ठ्यं कर्मणि प्रत्ययो द्रष्टव्यः ( श्रुतस्त्रीरिति सर्वतत्रैव गधदः नुमुपजीव्यं ) संसारः श्रीरिति प्रोच्यत इत्यभिप्रायः॥ १॥

त्रिचान्युपदधातीति । तिसृणामिदं नैष तृच इति पुलिङ्गोऽपि तृचशब्दः प्रयुज्यते तास्तिस्रो दिश्या उपदधाति

---

१—छंदस्यास्तिस्रस्तिस्रोऽनूकांतेषु पुरस्तात् गायत्रीरग्निर्मूर्द्धेति प्रत्यृचम् । उत्तराश्च । चशब्दात् प्रत्यृचम् । पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्येति । एभिर्मंत्रैः प्रतिमंत्रम् । जगतीश्च पश्चादयमिहेति । चशब्दात् रेतःसिग्वेलायामेव । अपरास्ताभ्योऽनुष्टुभः सखायः संव इति । एभिर्मंत्रैर्जगतीभ्योऽपरा अनुष्टुभः । अषाढावेलायाः पुरस्तात् बृहतीरेना व इति । भद्रो न इति ककुभस्ताभ्यो बृहत्यंतरे श्रुतेर्मंत्रक्रमेण । उद्धृता न्यपकृष्येच्छन् । अपरा गायत्रीभ्य उष्णिहोऽग्ने व्वाजस्येति । अनूकांते दक्षिणे पंक्तीरग्निं तमिति । उत्तरे पदपंक्तीरग्ने तमद्येति । पुरीषवत्याः पूर्व्वामति च्छंदसं प्राच्यौ पुरीषसहिते भद्रा रात्रिर्नृत्रतूर्येऽवस्थिराऽग्निः होतारमिति । अग्ने त्वमित्यनूकांतेऽपरे द्विपदाः । का. श्रौ. सू. १७ । २४०-२५२ ॥

सा सर्व्वाणि च्छन्दाꣳस्युति सा या सा श्रीर्महत्तदुक्थं तद्यत्तन्महदुक्थ-मेतास्ताश्छन्दस्याः ॥ २ ॥

( स्तु ) तस्य शिरो गायत्र्यः । ( ऽ ) आत्मा त्रिष्टुभोऽनूकं जगत्यः पक्षौ पङ्क्तयोऽथैतासां ककुभां चत्वारि चत्वार्यक्षराण्यादायातिच्छन्दस्युपद-धाति सा साऽतिच्छन्दाऽ एव भवति गायत्र्यऽ इतराः सम्पद्यन्ते सैव गायत्र्यशीतिर्या बृहत्यः सा बार्हती याऽउष्णिहः सौष्णिह्यथ यद्वशो यदर्धर्चौ यदैन्द्राग्नं यदावपनं तदतिच्छन्दाऽ अथ यन्नदो यत्सूददोहा यत्पदनुषङ्गा यत्किंचात्रानुष्टुप्कर्माणं तदनुष्टुभः ॥ ३ ॥

---

अन्नम्-कृषिर्वृष्टिर्बीजम् । एकैवातिच्छन्दा भवति । एका ह्येव सा सर्वाणि च्छन्दांस्यति । सा-या सा श्रीः । महत्तदुक्थम् । तद्यत्तन्महदुक्थम्-एतास्ताश्छन्दस्याः ॥ २ ॥

तस्य शिरो गायत्र्यः । आत्मा त्रिष्टुभः । अनूकं जगत्यः । पक्षौ पङ्क्तयः । अथैतासां ककुभां चत्वारि चत्वार्यक्षराण्यादायातिच्छन्दस्युपदधाति । सा साऽतिच्छन्दा एव भवति । गायत्र्य इतराः सम्पद्यन्ते । सैव गायत्र्यशीतिः । या बृहत्यः-सा बार्हती । या उष्णिहः-सौष्णिही । अथ यद्वशो, यदर्धर्चौ, यदैन्द्राग्नम्; यदावपनम्, तदतिच्छन्दाः । अथ यन्नदो, यत्सूददोहाः, यत्पदनुषङ्गा, यत्किंचात्रानुष्टुप् कर्माणं-तदनुष्टुभः ॥ ३ ॥

---

छन्दः महाग्निकं भवति । यस्मादेकैव सा सर्वाणि च्छन्दांस्यतिवर्तते । तस्मादेकैकरसा भवति सा प्रजापतये देवैः सन्ना । तन्महदुक्थं महाव्रतं सहचारि होतव्यं तु पृषदाज्यवद्धि सर्वमच्छिन्नं सारभूतं व्रतपतिं यदुक्थमिति ( जीव गच्छन्मतायेमं) महदुक्थाय सर्वा हि एतास्तृचो हृदयस्थानयोः सारभूताश्च इत्यभिप्रायः । तस्य शिरः प्रतिष्ठा द्विपदा इत्येवमपि च्छन्दस्यासु महदुक्थमिममनुप्रविष्टमिति दर्शयति तस्य महदुक्थस्य पट्टु इदं सुषिरो बृहदिति क्रमेण मंत्राः मिता (मृदत्राग्नेस्तत्येतत्रिधोपधेय) इत्येवमुपासनीयम् । आत्मा त्रिष्टुभो यस्तु नामेति । न होताऽपमृष्टाः सम्पत्तेः एष महत्तदुक्थस्य तन्मात्र 'भुवो यज्ञस्य' एतेनात्र त्रिष्टुभो द्रष्टव्याः । ननु च महदुक्थे आहारानन्तरं तूष्णीं संत्रिवंशस्थानान्तरमेवायमात्मा शस्यते । तत्रात्मन्येवाख्रिसम्भवतः सम्भवति सम्भवक्रमेणात्मा प्रथमस्य तु शिरो हि प्रथमं जायमानस्य जायत इति ।

(सीति छन्दांसि प्यतेन्यासिक्यादुनो द्वारेण) त एव ककुभो गायत्रीमेवोपपादयत्यर्थे वा संवादयत्यथैतासां ककुभामिति ततश्चायनककुभां द्वादशाक्षराः पादास्तेषां यानियानि चत्वार्यक्षराणि तानि वचनान्यतिच्छन्दांसि प्रपाद्यानि ककुप्सु या बृहत्योऽत्र सा तत्र चाहते ( ) सीति । इन्द्रभुजां आकार इत्यादि । अत्राद्या-उष्णिहोऽग्ने वाजस्येति स तत्र औष्णिही राइयसीति । इन्द्रसुतेषु सोमोऽन्वित्यादि अथ यद्वशः यदङ्गं महदुक्थः परमपुरुषा इति त्रयस्त्रिंशगतानां द्वादश उदरं यदयच्छत 'तदिदासभुवनेषु ज्येष्ठ' मिति । (स समाने तृतीयोरुत्तरो-द्वर्त्तो न सूत एतस्याश्चोत्तर एतस्योत्तर एवार्धद्वाःस्थैव वृषणो दशस्यानन्तरं स स्यात् । एता) द्विपदा विंशतिः । शस्ता इन्द्राग्नी परं सुतं दमो विनाऽपि तस्य वृत्तिरित्युत्तरपदे द्रष्टव्यः । तपश्च तपस्यश्च तु गङ्गा इन्द्रस्य नु वीर्याणि

प्रतिष्ठा द्विपदाः। ( ऽ ) एतावद्वै महदुक्थं महदुक्थꣳ श्रीः सर्वामेवास्माऽएतां देवाः श्रियं प्रायच्छंस्तथैवास्माऽअयमेताꣳ सर्वाꣳ श्रियं प्रयच्छति ॥ ४ ॥

यद्वेव च्छन्दस्याऽउपदधाति। ( त्ये ) एतद्वै देवाऽ एतं नाकꣳ स्वर्गं लोकमपश्यन्नेताः स्तोमभागास्तस्मिन्नविशंस्तेषां विशतां प्रजापतिरुत्तमोऽविशत्स यः स प्रजापतिरेतास्ताश्छन्दस्याः ॥ ५ ॥

( स्तु ) तस्य शिरो गायत्र्यः। ( स्ता ) ता यद्गायत्र्यो भवन्ति गायत्रꣳ हि शिरस्तिस्रो भवन्ति त्रिवृद्धि शिरः पूर्वार्धऽउपदधाति पुरस्ताद्धीदꣳ शिरः ॥ ६ ॥

---

प्रतिष्ठा द्विपदाः। एतावद्वै महदुक्थम्। महदुक्थं श्रीः। सर्वामेवास्मा एतां देवाः श्रियं प्रायच्छन्। तथैवास्मा अयमेतां सर्वां श्रियं प्रयच्छति ॥ ४ ॥

यद्वेव च्छन्दस्या उपदधाति। एतद्वै देवा एतं नाकं स्वर्गं लोकमपश्यन्। एताः स्तोमभागाः। तस्मिन्नविशन्। तेषां विशतां प्रजापतिरुत्तमोऽविशत्। स यः स प्रजापतिः—एतास्ताश्छन्दस्याः ॥ ५ ॥

तस्य शिरो गायत्र्यः। ता यद्गायत्र्यो भवन्ति—गायत्रं हि शिरः। तिस्रो भवन्ति। त्रिवृद्धि शिरः। पूर्वार्धे उपदधाति—पुरस्ताद्धीदं शिरः ॥ ६ ॥

---

प्रवोचमित्यस्यान्त्यस्य विभ्रंशे तस्य पहावशिष्टा स्यानुष्टुभे ऋचे योप्यतीरंफण इत्यस्य कर्माणं। एभिः स्तोमा अभिस्वरैव्यानुष्टुभः समाम्नाताः पञ्चमी ऋचः तत्सर्वमत्रानुष्टुभो द्रष्टव्याः। एष चानुष्टुभः समाम्नातस्तत्रावपनादनन्तरं वागात्मकः शस्यते ॥ २ ॥ ३ ॥

प्रतिष्ठा द्विपदा इति। तत्र द्विपदादिचत्वं प्रसिद्ध इह तु द्विपदा एव प्रसिद्धा सा दृष्टव्या। एतावद्वै महदुक्थम् इत्युक्तस्याप्युपक्रतं भवतीत्यभिप्रायः इति।

जन्मक्रमेण शिरः प्रथममुपधीयत इति द्रष्टव्यम्। ( तथा तत्र महदुक्थं शिरसोऽनन्तरं औष्णिहस्तृचः शस्यते तस्य द्वे गायत्र्या नकारेभ्यः ञाषुतेन च गायत्री यनात्रगतोऽत्र द्रष्टव्यः। ग्रीवानन्तरं च तत्र स्त ( ) गोदक्षिणः शस्यते तस्य च मध्ये ततः पक्षस्ततोक्तं इहानुक्रममनुक्तत्वाद्बहूदकं जगत्याः यत्तस्योक्तस्य इन्द्राय यह्वाइव युतमित्यादीनि जागतपर्यन्ताग्निऋचाम्य ( ) आजगतीषु सर्वेषां छन्दसामन्तर्भावात्तस्य च सर्वच्छन्दो ? पार्श्वात्तदित्यभिप्रायः। ) पङ्क्तयः। यो तव भक्षादि कासौ ( ) पक्षौ तावत्तत्र पंक्तयो दक्षयज्ञया दक्षिणाश्च तत्राग्निरसुत्य "अग्नि तं मन्ये" इत्यादयः। अथैतासां ककुभामिति या तस्य महदुक्थस्थ गायत्र्यः तृचोऽस्तीति दर्शित अवशङ्कुभिरित्यर्थः। सकुप्यं गायत्र्य-( ) ॥ ४ ॥

यद्वेव च्छन्दस्या उपदधातीति। छन्दस्यासु च दर्शनान्तरमेतद्ब्राह्मणशेषेणान्यतमे स्थाने विशाखाश्चः

( ऽ ) उ॒रस्त्रि॒ष्टुभः॑ । ( स्ता ) ता॒ रेतः॑सि॒चोर्व्वे॑ल॒योप॑दधाति पृ॒ष्ट्यो वै॒ रेतः॑सि॒चा॑ऽउ॒रो वै॒ प्र॑ति पृ॒ष्ट्यः॑ ॥ ७ ॥

श्रो॑णी जग॒त्यः॑ । स य॒ाव॑ति पु॒रस्ता॑त्स्वयमातृ॒ण्णायै॒ त्रि॒ष्टुभ॒ऽउप॑द॒धाति॒ ता॒व॑ति प॒श्चाज्ज॒गती॒र्यो वा॒ऽअ॒यं म॒ध्ये प्रा॒णस्त॒दे॒षा स्व॑यमातृ॒ण्णा याव॒त्यु वा॒ऽए॒तस्मा॑त्प्रा॒णात्पु॒रस्ता॑दु॒रस्ता॒व॑ति प॒श्चाच्छ्रो॒णी ॥ ८ ॥

स॒क्थ्या॒व॒नु॒ष्टु॒भः॑ । ( स्ता ) ता॒ऽअ॒न॒न्त॒र्हि॑ता ज॒गती॒भ्य॒ऽउ॒प॑द॒धात्य॒न॒न्त॒र्हि॑ते तच्छ्रो॒णिभ्या॑ꣳ स॒क्थ्यौ॑ दधाति ॥ ९ ॥

प॒र्शवो॑ बृ॒ह॒त्यः॑ । की॒क॒सा॑: क॒कु॒भः॑ सो॒ऽन्त॒रे॑ण त्रि॒ष्टु॒भ॑श्च क॒कु॒भ॑श्च बृ॒ह॒ती॒रु॒प॑द॒धाति॒ त॒स्मा॑दि॒मा॒ऽ उ॒भय॑त्र प॒र्शवो॑ ब॒द्धाः की॒क॒सा॑सु च ज॒त्रु॒षु॑ च ॥ १० ॥

ग्री॒वा॒ऽउ॒ष्णि॒हः॑ । ( स्ता ) ता॒ऽअ॒न॒न्त॒र्हि॑ता गा॒य॒त्री॒भ्य॒ऽउ॒प॑द॒धात्य॒न॒न्त॒र्हि॑ता॒स्त॒च्छी॒र्ष्णो ग्री॒वा द॑धाति ॥ ११ ॥

---

उरस्त्रिष्टुभः । ता रेतःसिचोर्वेलयोपदधाति । पृष्ट्यो वै रेतःसिचौ । उरो वै प्रति पृष्ट्यः ॥ ७ ॥

श्रोणी जगत्यः । स यावति पुरस्तात्स्वयमातृण्णायै त्रिष्टुभ उपदधाति;—तावति पश्चाज्जगतीः । यो वा अयं मध्ये प्राणः—तदेषा स्वयमातृण्णा । यावत्यु वा एतस्मात्प्राणात्पुरस्तादुरः—तावति पश्चाच्छ्रोणी ॥ ८ ॥

सक्थ्यावनुष्टुभः । ता अनन्तर्हिता जगतीभ्य उपदधाति । अनन्तर्हिते तच्छ्रोणिभ्यां सक्थ्यौ दधाति ॥ ९ ॥

पर्शवो बृहत्यः । कीकसाः ककुभः । सोऽन्तरेण त्रिष्टुभश्च ककुभश्च बृहतीरुपदधाति । तस्मादिमा उभयत्र पर्शवो बद्धाः—कीकसासु च जत्रुषु च ॥ १० ॥

ग्रीवा उष्णिहः । ता अनन्तर्हिता गायत्रीभ्य उपदधाति । अनन्तर्हितास्तच्छीर्ष्णो ग्रीवा दधाति ॥ ११ ॥

---

निरूप्यन्ते यावत्यध्वनि स्वयमातृण्णायाः पुरस्तात्त्रिष्टुभ उपदधाति तावत्येव पश्चात् स्वयमातृण्णायाः जगतीरुप- दधाति रेतःसिचोर्वेलायामित्यर्थः । यो वा अयं मध्ये प्राण इति स्वयमातृण्णाः इत्यत्र कटिशीर्षकेशस्थानानि- अत्रोच्यन्ते । अनन्तर्हिते तत्तच्छ्रोणीभ्यां सक्थ्यौ दधातीति वचनात् । सर्वस्य दोष्णो दक्षिणायाश्च श्रोणिरित्यत्र तु प्रत्यासत्त्योरू एव श्रोणिशब्देनोक्तः । पर्शवो बृहत्यस्ता बृहत्यः ककुभो ग्रीवाणमधस्तात्पृष्ठतः स्तोभवन्ति ततः ककुभः स्ववशीयात्मकानामुष्णिहः पश्चादुपवया इति गम्यत एवेत्युक्तम् । सोत्तरेण त्रिष्टुभश्च ककु- भश्च बृहतीरूपे तस्मादिमाः पर्शव उभयत्र बद्धाः क्षोभयते इत्यत आह—कीकसासु च कीकसाऽतिरात्रं लक्ष्यते सम्बद्धत्वात् कीकसासम्बन्धे पृष्टवंशे सर्वे बद्धास्तत्र एव तासामुत्थानात् । जत्रुषु च पर्शवो बद्धा जत्रुषु च पर्शवो बद्धा जत्रवः कंबलशलाकास्ताभिरप्यत्र उरो लक्ष्यते । प्रत्यासत्तेरेव ( तत्वर्श्वर्यमद्यः ) त्रिष्टुप्ककुभोः को ( ) जत्रुवसम्बन्ध उरसि च प्रतिपद्य अर्धत पर्शवः पश्चाच कीकसासम्बद्धेष्टका दश इति । यद्यपि सोऽन्तरेण त्रिष्टुभश्च ककुभश्चैतावत्तावदुच्यते । तथाऽषाढावेलायां पुरस्ताद्बृहत्य उपधेयाः कुतः

पक्षौ पङ्क्तयः । ( स्ता ) ता यत्पङ्क्तयो भवन्ति पाङ्क्तौ हि पक्षौ पार्श्वतऽ उपदधाति पार्श्वतो हीमौ पक्षौ यद्वर्षीयश्छन्दस्तद्दक्षिणतऽउपदधाति दक्षिणं तदर्धं पशोर्वीर्यवत्तरं करोति तस्माद्दक्षिणोऽर्धः पशोर्वीर्यवत्तरः ॥ १२ ॥

( ऽ ) उदरमतिच्छन्दाः । पशवो वै च्छन्दाꣳस्यन्नं पशवऽउदरं वाऽ-अन्नमत्त्युदरꣳ हि वाऽ अन्नमत्ति तस्माद्यदोदरमन्नं प्राप्नोत्यथ तज्जग्धं यातयामरूपं भवति तद्यदेषा पशूंश्छन्दाꣳस्यत्ति तस्मादत्तिच्छन्दा ऽअत्तिच्छन्दा ह वै तामतिच्छन्दा ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः ॥ १३ ॥

( ० ) योनिः पुरीषवती । ते सꣳस्पृष्टेऽउपदधाति सꣳस्पृष्टे ह्युदरं च योनिश्च पुरीषसꣳहिते भवतो माꣳसं वै पुरीषं माꣳसेन वाऽउदरं च योनिश्च सꣳहिते पूर्वाऽतिच्छन्दा भवत्यपरा पुरीषवत्युत्तरꣳ ह्युदर-मधरा योनिः ॥ १४ ॥

---

पक्षौ पङ्क्तयः । ता यत्पङ्क्तयो भवन्ति—पाङ्क्तौ हि पक्षौ । पार्श्वत उपदधाति । पार्श्वतो हीमौ पक्षौ । यद्वर्षीयश्छन्दः—तद्दक्षिणत उपदधाति । दक्षिणं तदर्धं पशोर्वीर्यवत्तरं करोति । तस्माद्दक्षिणोऽर्धः पशोर्वीर्यवत्तरः ॥ १२ ॥

उदरमतिच्छन्दाः । पशवो वै च्छन्दांसि । अन्नं पशवः । उदरं वाऽअन्नमत्ति । उदरं हि वाऽअन्न-मत्ति । तस्माद्यदोदरमन्नं प्राप्नोति—अथ तज्जग्धं यातयामरूपं भवति । तद्यदेषा पशूंश्छन्दांस्यत्ति—तस्मादत्तिच्छन्दाः । अत्तिच्छन्दा ह वै तामतिच्छन्दा इत्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः ॥ १३ ॥

योनिः पुरीषवती । ते संस्पृष्टेऽउपदधाति । संस्पृष्टे ह्युदरं च योनिश्च । पुरीषसंहिते भवतः । मांसं वै पुरीषम् । मांसेन वाऽउदरं च योनिश्च संहिते । पूर्वाऽतिच्छन्दा भवति, अपरा पुरीषवती । उत्तरं ह्युदरम्, अधरा योनिः ॥ १४ ॥

---

अषाढावेलायां तावत्स्तोमभागो ( दुर द्वा प्रविश्वाव्यारिति ) ऋतव्यावेलायाश्च स्वयमेव विश्वज्योतिरिति ताभिरेव गम्यमानत्वात् । पञ्चभिः पूर्वार्धे गायत्र्यस्तासां अर्धपद्याः ( चोस्मेसिः ) विश्वादनन्तर्हिता उष्णिहस्ततः ककुभः । ततो बृहत्य इत्यषाढावेलायां विराजां—मध्ये गायत्र्यो यत्र उपधेयाः सहेति गम्यते ॥ ९–१२ ॥

उदरमतिच्छन्दा इति । उदरमत्र अतिच्छन्दाः तत्प्राप्तं स्यात् तस्य विनाशात् । एवं च सति पूर्वार्द्धे गायत्र्यस्तासां विराडनन्तर्हिता उपन्यस्यतिमिलानाच्छन्दः अतिच्छन्दांस्यतिच्छन्दोऽन्तराणां तस्यामन्तर्भावात् । छन्दांसि च पश्वान्नादत्ते ततश्चैषां छन्दोलक्षणमन्नमत्तीत्युदरमित्युपपन्नम् । यस्माच्चैषा छन्दांस्यत्ति तस्मादत्तिच्छ-न्दसं ( स ह वैतां ) सतीं अतिच्छन्दा इत्याचक्षते । द्वितीयास्थाने प्रथमा प्रयुक्ता । अत्तिच्छन्दा इत्यत्र ( ) तिङन्तस्यात्ति—शब्दस्य समासो दर्शितः ॥ १३ ॥

योनिः पुरीषवती ( पञ्चम्या सम्पन्नोऽग्नेपुरीषमित्येतस्यागात् ) ॥ १४ ॥

२०३३

( स्ते ) ते प्राच्याऽउपदधाति । प्राङ् ह्येषोऽग्निश्चीयतेऽथो प्राग्वै प्राचऽ उदरं प्राची योनिर्बहिस्तोमभागꣳ हृदयं वै स्तोमभागा हृदयमु वाऽ- उत्तममथोदरमथ योनिः ॥ १५ ॥

( स्ते ) ते दक्षिणतः स्वयमातृण्णायाऽउपदधाति । ( त्य ) अथ प्रथमायां चिताऽउत्तरतः स्वयमातृण्णायाऽउदरं च योनिं चोपदधाति यो वाऽअयं मध्ये प्राणस्तदेषा स्वयमातृण्णैतस्य तत्प्राणस्योभयत ऽउदरं च योनिं च दधाति तस्मादेतस्य प्राणस्योभयत ऽउदरं च योनिश्च ॥ १६ ॥

प्रतिष्ठा द्विपदाः । ( स्ता ) ता यद्द्विपदा भवन्ति द्वन्द्वꣳ हि प्रतिष्ठा तिस्रो भवन्ति त्रिवृद्धि प्रतिष्ठा पश्चादुपदधाति पश्चाद्धीयं प्रतिष्ठा ॥ १७ ॥

सोऽस्यैष सुकृतऽआत्मा । तद्यस्य हैतमेवꣳ सुकृतमात्मानं कुर्व्व- न्त्येतꣳ ह स सुकृतमात्मानमभिसम्भवत्यथ यस्य हैतमतोऽन्यथा

---

ते प्राच्या उपदधाति । प्राङ् ह्येषोऽग्निश्चीयते । अथो प्राग्वै प्राचऽउदरम्, प्राची योनिः । बहि- स्तोमभागम् । हृदयं वै स्तोमभागाः । हृदयमु वाऽउत्तमम् । अथोदरम्, अथ योनिः ॥ १५ ॥

ते दक्षिणतः स्वयमातृण्णायाऽउपदधाति । अथ प्रथमायां चिता उत्तरतः स्वयमातृण्णाया उदरं च योनिं चोपदधाति । यो वाऽअयं मध्ये प्राणः—तदेषा स्वयमातृण्णा । एतस्य तत्प्राणस्योभयत उदरं च योनिं च दधाति । तस्मादेतस्य प्राणस्योभयत उदरं च योनिश्च ॥ १६ ॥

प्रतिष्ठा द्विपदाः । ता यद्द्विपदा भवन्ति । द्वन्द्वं हि प्रतिष्ठा । तिस्रो भवन्ति । त्रिवृद्धि प्रतिष्ठा । पश्चादुपदधाति । पश्चाद्धीयं प्रतिष्ठा ॥ १७ ॥

सोऽस्यैष सुकृत आत्मा । तद्यस्य हैतमेवं सुकृतमात्मानं कुर्वन्ति—एतं ह स सुकृतमात्मान-

---

ते प्राच्यौ प्राग्लक्षणे उपदधाति । 'प्राङ् ह्येषोऽग्निश्चीयते' (सुच्छन्दस्यपश्चाद्वचनादथो) प्राचः प्राङ्मुखस्य प्रागेवोर्ध्वं भवति ( प्राचीनयोन्यावरात्मकेतो ) प्राच्यामुपदधाति । बहिः स्तोमभागेभ्यो बहिस्तोमभागम् । " अपपरिबहिरञ्चवः पञ्चम्या "–( पा. सू. २ । १ । १२ । ) इत्यव्ययीभावसमासः । हृदयं हि स्तोमभागा हृदयमणिः कोष्ठमुत्तमं भवत्यधस्तादुदरमथ तस्याप्यधस्ताद्योनिरेव स्वभावादनुकारेणात्राप्युदरं स्तोमभागास्ततो हि मध्येऽग्निः शिरो भविष्यति । शिरश्च प्रत्यासन्नं हृदयमित्यभिप्रायः । ते दक्षिणत इति दर्शनार्थोऽनुवादः । 'प्रथमायां चितौ' उत्तरत इत्युखायोनि सत्त्ववलमित्येतौ स्वावेव पादौ प्रतिष्ठे इत्यर्थः । त्रिवृद्धि प्रतिष्ठा ऊरू जंघे पादावित्येवं त्रिविभागा प्रतिष्ठेत्यर्थः । सोऽस्य यजमानस्यैष छन्दस्योमयं 'सुकृतः' शोभनः 'आत्मा' शरीरं भवति ततश्च यस्य यजमानस्यैतमवश्यं यथोक्तमात्मानं कुर्वन्त्यृत्विजः स

कुर्व्वुन्ति दुष्कृतॅं ह तुस्यात्मानं कुर्व्वुन्ति सु ह स दुष्कृतमेवात्मानम-भिसुम्भवति ॥ १८ ॥

तुदेते सामनिधनेऽअभ्युक्ते । ( क्तेऽअ ) अर्को देवानां परमे व्योमन्न-र्कुस्य देवाः परमे व्योमन्नित्येतद्धै देवानां विशतां प्रजापतिरुत्तमोऽविश-त्तस्मादाहार्को देवानां परमे व्योमन्नित्युथ यदाहार्कुस्य देवाः परमे व्योम-न्नित्ययं वाऽअग्निरर्कस्तुस्यैतदुत्तमायां चितौ सुर्व्वे देवा विष्टास्तुस्मा-दाहार्कुस्य देवाः परमे व्योमन्निति ॥ १९ ॥

इति तृतीयप्रपाठके सप्तमं ब्राह्मणम् ॥ ८-३-७ ॥ ( ६. २. ) ॥

इति तृतीयः प्रपाठकः समाप्तः ॥ ८ । ३ ॥

कण्डिकासंख्या ॥ १०८ ॥

---

मभिसम्भवति । अथ यस्य हैतमतोऽन्यथा कुर्वन्ति—दुष्कृतं ह तस्यात्मानं कुर्वन्ति । स ह स दुष्कृतमेवात्मानमभिसम्भवति ॥ १८ ॥

तदेते सामनिधने अभ्युक्ते । " अर्को देवानां परमे व्योमन्, अर्कस्य देवाः परमे व्योमन् "—इति । एतद्धै देवानां विशतां प्रजापतिरुत्तमोऽविशत् । तस्मादाह—अर्को देवानां परमे व्योमन्—इति । अथ यदाह—अर्कस्य देवाः परमे व्योमन्—इति । अयं वा अग्निरर्कः—तस्यै-तदुत्तमायां चितौ सर्वे देवा विष्टाः । तस्मादाह—अर्कस्य देवाः परमे व्योमन्—इति ॥ १९ ॥

---

सुकृतमेवैतं प्रजापतिमात्मानमभिसम्भवति । ( ) ' यस्य हैनमतोऽन्यथा ' चरकाध्वर्यवमार्गेणे-त्यभिप्रायः ॥ १९-१८ ॥

तदेते इति । तेजसा देवानां विशतां प्रजापतिरुत्तमोऽविशदित्येतद्वस्तुभिर्यतनं वक्ष्यमाणश्चायं पुष्पाख्ययोः साम्नोर्निधने उक्ते । अर्कः प्रजापतिर्देवानां 'परमे' स्थाने अविशदिति शेषः । अर्कस्य प्रजापतेश्चित्यस्य परमे सत्र-स्थाने 'उत्तमायां चितौ देवाः' विष्टा इति शेषः । ननु चार्को देवानामित्यनेनैव प्रकृतं च स्तूयते न द्वितीयं ममेतदेवं केवलेन द्युकेन तत्र दिवि कचिद्देवान' परमेष्ठी परमे प्रजापतिर्निविष्ट इति गम्यते । यत् स विशिष्टे-नेति ( ) अग्नेरुत्तमायां चितौ देवानां प्रजापतिरुत्तमो विष्ट इत्येष एकस्मिन्निधना ( ) गम्यते इत्युभयोपन्यासः। ननु चायमागमः स्वयमेव प्रमाणं किमित्यागमान्तरमनुसंवादिस्ववचनस्योपोद्बलकमुपन्य-स्यति । उच्यते—नैवागमान्तरमुपोद्बलनार्थमुपन्यस्यते । किं तर्हि प्रसङ्गाद् व्याख्यातः । सामवेदे हि कालोऽयं वृत्तान्त एव ( पोव्याख्यानापनरतद्वणीयस्य ) नात्रैव प्रसङ्गाद् व्याख्यायते । एवमन्येऽप्यागमान्तराभ्यासः तदे-तदृचाऽभ्युक्तमित्यादयो व्याख्यानार्था एवेति वक्तव्यम् ॥ १९ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमे काण्डे षष्ठेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ८-६-२ ) ॥

२०३५

# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।
## षष्ठेऽध्याये च तृतीयं ब्राह्मणम् ।

गार्हपत्यमुपदधाति । (त्ये) एतद्वै देवाः प्राप्य राद्ध्वेवामन्यन्त ते॑ऽब्रुवन्केनेदमरात्स्मेति गार्हपत्येनैवेत्यब्रुवन्गार्हपत्यं वै चित्वा समारुह्य प्रथमां चितिमपश्याम प्रथमायै द्वितीयां द्वितीयायै तृतीयां तृतीयायै चतुर्थीं चतुर्थ्यै पञ्चमीं पञ्चम्या ऽइदमिति ॥ १ ॥

ते॑ऽब्रुवन् । (न्नु) उप तज्जानीत यथेयमस्मास्वेव राद्धिरसदिति ते॑ऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेयमस्मास्वेव राद्धिरसदिति ॥ २ ॥

---

### अथाष्टगार्हपत्येष्टकोपधानम् ।

गार्हपत्यमुपदधाति । एतद्वै देवाः प्राप्य राद्ध्वेवामन्यन्त । तेऽब्रुवन्—केनेदमरात्स्मेति । गार्हपत्येनैवेत्यब्रुवन् । गार्हपत्यं वै चित्वा समारुह्य प्रथमां चितिमपश्याम, प्रथमायै द्वितीयां, द्वितीयायै तृतीयां, तृतीयायै चतुर्थीं, चतुर्थ्यै पञ्चमीं, पञ्चम्या इदम्—इति ॥ १ ॥

तेऽब्रुवन्—उप तज्जानीत—यथेयमस्मास्वेव राद्धिरसदिति । तेऽब्रुवन्—चेतयध्वमिति—चितिमिच्छतेति वाव तदब्रुवन्—तदिच्छत यथेयमस्मास्वेव राद्धिरसदिति ॥ २ ॥

---

गार्हपत्यमुपदधातीति । शालाद्वार्योऽग्निस्तदर्था चितिरपि गार्हपत्यस्तस्यां सारभूतोऽयं यजुष्मतीश्चैत्येकादश सोऽपि गार्हपत्यस्तस्य प्रतिरूपभूतोऽन्यत्रान्यस्तदाकारस्तद्धर्मकस्तद्धक्तिश्च गार्हपत्यापृष्ठे तमुपदधातीत्येतदर्थं सप्तभिः कण्डिकाभिः प्रपञ्च्यते । तत्राद्यासु चतसृष्वितिहासेनेदं दर्शयति—योऽसौ गार्हपत्यः पूर्वं चितः सोऽस्याः समृद्धेः कारणं मङ्गल्य इति मत्वा देवैस्तु स्वर्गस्य मध्ये सर्वसाधारणे देशे स्थापितः तद्वृद्धिकारणभूतमात्मन्नदधत इति । एतत्स्थानं स्वर्गाख्यं 'प्राप्य' 'देवाः' 'राद्धिः' "राध साध संसिद्धौ"—(धा. पा. स्वा. प. १६) भावे क्तिप्रत्ययः । राद्धिः समृद्धिः (राधुद्धाः आत्मनो मन्दात्मासुं) वयं समृद्धाः यैरिदं प्राप्तं ते कथं केन मूलभूतेन वयमरात्स्म संसिद्धा इति । ते गार्हपत्येनैवेत्यब्रुवन्- । तस्य चितिकर्ममूलभूतत्वात् 'प्रथमायै' प्रथमाया ऊर्ध्वं द्वितीयां चितिमपश्याम । 'पञ्चम्यर्थे सर्वत्र चतुर्थी' । पञ्चम्या ऊर्ध्वम् 'इदं' स्वर्गाख्यं स्थानम् ॥ १ ॥

तेऽब्रुवन्निति । समृद्धिकारणं राद्धेः स एव गार्हपत्यः—तत्र नेत्याह तादृशमेवान्यानि (श्वतहेत अअ) इति । मानिनस्तु गार्हपत्यस्य तच्चेतयध्वमिति वचनं कृत एतद्विविनाशप्रसङ्गायेन हि तत्र स्थितेन राद्धिरसदनाप्ता सा

ते चेतयमानाः । ( ऽ ) एतदपश्यन्निहेममाहृत्योपदधामहाऽइति तमिहाहृत्योपादधत तस्मिन्व्यवदन्त वसवः पुरस्ताद्रुद्रा दक्षिणतऽआदित्याः पश्चान्मरुत ऽउत्तरतो विश्वे देवा ऽउपरिष्टादिहोपदधामेहोपदधामेति॥३॥

तेऽब्रुवन् । ( न्मु ) मध्यऽएवोपदधामहै स नो मध्यऽउपहितः सर्वेषां भविष्यतीति तं मध्यऽउपादधत तदेताꣳ राद्धिमात्मन्नदधत मध्यतो मध्यतऽएवैतदेताꣳ राद्धिमात्मन्नदधत तथैवैतद्यजमानो यद्गार्हपत्यमुपदधात्येतामेवैतद्राद्धिमात्मन्धत्ते मध्यतो मध्यतऽ एवैतदेताꣳ राद्धिमात्मन्धत्ते ॥ ४ ॥

यद्वेव गार्हपत्यमुपदधाति । ( त्य ) अन्नं वै गार्हपत्योऽत्ताऽयमग्निश्चितोऽत्रऽएवैतदन्नमपिदधाति मध्यतो मध्यत ऽ एवास्मिन्नेतदन्नं दधाति ॥ ५ ॥

यद्वेव गार्हपत्यमुपदधाति । वेदिर्वै देवलोकोऽथ वाऽएष बहिर्वेदि

---

ते चेतयमाना एतदपश्यन्—इहेममाहृत्योपदधामहा इति । तमिहाहृत्योपादधत । तस्मिन्व्यवदन्त—वसवः पुरस्तात् । रुद्रा दक्षिणतः, आदित्याः पश्चात्, मरुत उत्तरतः, विश्वे देवा उपरिष्टात्—इहोपदधाम, इहोपदधामेति ॥ ३ ॥

तेऽब्रुवन्—मध्य एवोपदधामहै । स नो मध्य उपहितः सर्वेषां भविष्यतीति । तं मध्य उपादधत । तदेतां राद्धिमात्मन्नदधत । मध्यतः । मध्यत एवैतदेतां राद्धिमात्मन्नदधत । तथैवैतद्यजमानो यद्गार्हपत्यमुपदधाति—एतामेवैतद्राद्धिमात्मन्धत्ते । मध्यतः । मध्यत एवैतदेतां राद्धिमात्मन्धत्ते ॥ ४ ॥

यद्वेव गार्हपत्यमुपदधाति । अन्नं वै गार्हपत्यः, अत्ताऽयमग्निश्चितः । अत्र एवैतदन्नमपिदधाति । मध्यतः । मध्यत एवास्मिन्नेतदन्नं दधाति ॥ ५ ॥

यद्वेव गार्हपत्यमुपदधाति । वेदिर्वै देवलोकः । अथ वा एष बहिर्वेदि चितो भवति । तं यदिहाहृत्योपदधाति—तदेनं वेदौ देवलोके प्रतिष्ठापयति ॥ ६ ॥

---

कथं तस्मादपनीयते । तदपरित्यागेन तु सन्नीयत इति नानुपपन्नम् । तस्मिन् गार्हपत्ये निमित्तभूते विरुद्धमवदन्त देवाः, इहोपदधाम इत्येव का पुनर्दर्शयन्निहेति विरुद्धं दर्शितवन्त इत्यत आह—वसवः पुरस्तादुक्तवन्त इहोपदधाम इत्येतमन्येऽपि यथादेशम् ॥ २—४ ॥

यद्वेव गार्हपत्यमिति । प्रसन्ने द्वे । अन्नं वै गार्हपत्य इति हविःश्रपणप्रधानत्वादन्नं गार्हपत्यः। होमप्रधानत्वादाहवनीयोऽयमग्निश्चित इति दर्शनान्तरम् ॥ ५ ॥ ६ ॥

---

१—मध्येऽष्टकं गार्हपत्यम् । का. श्रौ. सू. १७ । २५३ ।

चितो भवति तं यदिहाहृत्योपदधाति तदेनं व्वेदौ देवलोके प्रतिष्ठापयति ॥ ६ ॥

यद्वेव गार्हपत्यमुपदधाति । योनिर्व्वै पुष्करपर्णमथ वाऽएष बर्हिर्योनि चितो भवति बहिर्धा वाऽएतद्योनेरग्निकर्म यत्पुरा पुष्करपर्णात्तं यदिहाहृत्योपदधाति तदेनं योनौ पुष्करपर्णे प्रतिष्ठापयति तथो हैषोऽबहिर्धा भवत्यष्टाविष्टका ऽउपदधाति तस्योक्तो बन्धुस्तं वाऽएतैरेव यजुर्भिरेतयाऽऽवृता चिनोति यो ह्येवासौ स ऽएवायं तमेवैतदाहृत्येहोपदधाति ॥ ७ ॥

( त्यु ) अथ पुनश्चितिमुपदधाति । ( त्ये ) एतद्वै देवा गार्हपत्यं चित्वा तस्मिन्राद्धिं नापश्यन्योनिर्वै गार्हपत्या चितिरेषो वै योने राद्धिर्यद्रेतः प्रजातिस्तस्यामेतस्यां योनौ रेतः प्रजातिं नापश्यन् ॥ ८ ॥

---

यद्वेव गार्हपत्यमुपदधाति । योनिर्वै पुष्करपर्णम् । अथ वा एष बर्हिर्वेनि चितो भवति । बहिर्धा वा एतद्योनेरग्निकर्म—यत् पुरा पुष्करपर्णात् । तं यदिहाहृत्योपदधाति—तदेनं योनौ पुष्करपर्णे प्रतिष्ठापयति । तथो हैषोऽबहिर्धा भवति । अष्टाविष्टका उपदधाति । तस्योक्तो बन्धुः । तं वा एतैरेव यजुर्भिरेतयाऽऽवृता चिनोति । यो ह्येवासौ स एवायम् । तमेवैतदाहृत्येहोपदधाति ॥ ७ ॥

अथाष्टपुनश्चितीष्टकोपधानम् ।

अथ पुनश्चितिमुपदधाति । एतद्वै देवा गार्हपत्यं चित्वा तस्मिन्राद्धिं नापश्यन् । योनिर्वै गार्हपत्या चितिः । एषो वै योने राद्धिः—यद्रेतः प्रजातिः । तस्यामेतस्यां योनौ रेतः प्रजातिं नापश्यन् ॥ ८ ॥

---

एतैरेव यजुर्भिरयं सोऽग्निरिति । 'एतयाऽऽवृता' दक्षिणत उपदधाति । उत्तरार्धे प्रथमामुपदधातीत्यादिकया ह्येवासौ स एवायमभिधत्तेत्यभिप्रायः । न चैतद् यदिहाहृत्योपदधाति । पुनस्ता एवेष्टकास्तत (उत्पाथे बाक्यति) कुतस्तस्यावयवस्याविघातप्रसङ्गादादौ गार्हपत्यादित्यष्टौ पुनश्चितिरिति च पञ्चम्यां चितावुक्तौ पुनर्लोकंपृणं (म्ले) संकल्पमाना स्वाहा तादात्म्यैकविंशतिं गार्हपत्य उपदधाति द्वाभ्यां न स्तीति धिष्ण्येष्विति (न च कथं मनायां क्रियमाणायां अत एवेष्टकाद्विर्गण्येतारं तस्यायसेधै तदाहृत्ये तत्समादाभिप्रास्योत्पाद्य न च नास्ति) प्रायस्तथापि पुनश्चितात्रपि परिक्ष्यति य एवायमग्निश्चितस्तमेवैतदाहृत्य गार्हपत्यस्योपरिष्टात्पुनश्चिनोतीति । तदपि तद्भक्तित्वादेव युज्यते नोत्पाद्य हरणेन ॥ ७ ॥

अथ पुनरिति । यैरिदं गार्हपत्यं चास्मात् पुनश्चितिरिति दर्शनान्तरमनुव्याख्यायोपयोगित्वेन स यः

---

१–पुनश्चितिं चोपरि तद्द्वयेन ऋषय इति प्रत्यृचं पुच्छसंधावेके । पूर्वार्द्धे वा । गार्हपत्यं पुच्छसंधौ कृत्वा । का. श्रौ. सू. १७ । २५४–२५७ ॥

( इयँस्ते ) तेऽब्रुवन् । (नु) उप तज्जानीत यथाऽस्यां योनौ रेतः प्रजातिं दधामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथाऽस्यां योनौ रेतः प्रजातिं दधामेति ॥ ९ ॥

ते चेतयमानाः । ( ऽ ) एतां पुनश्चितिमपश्यंस्तामुपादधत तदेतस्यां योनौ रेतः प्रजातिमदधुर्मध्यतो मध्यत ऽएवैतदेतस्यां योनौ रेतः प्रजातिमदधुस्तथैवैतद्यजमानो यत्पुनश्चितिमुपदधात्येतस्यामेवैतद्योनौ रेतः प्रजातिं दधाति मध्यतो मध्यतऽएवैतदेतस्यां योनौ रेतः प्रजातिं दधाति १०

ताᳬं हैके जघनार्धऽउपदधति । जघनार्धाद्वै रेतः सिच्यते पुच्छसंधौ पुच्छाद्वै रेतः सिच्यतऽइति न तथा कुर्याद्वहिर्धा ह ते योने रेतः प्रजातिं दधति ये तथा कुर्वन्ति मध्यऽएवोपदध्यात्तत्सम्प्रति योनौ रेतः प्रजातिं दधाति ॥ ११ ॥

( त्य ) अष्टाविष्टकाऽ उपदधाति । ( त्य ) अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतᳬं सिञ्चति पञ्चकृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतᳬं सिञ्चत्यष्टाविष्टकाः पञ्चकृत्वः

---

तेऽब्रुवन्—उप तज्जानीत—यथाऽस्यां योनौ रेतः प्रजातिं दधामेति । तेऽब्रुवन्—चेतयध्वमिति—चितिमिच्छतेति वाव तदब्रुवन्—तदिच्छत—यथाऽस्यां योनौ रेतः प्रजातिं दधामेति ॥ ९ ॥

ते चेतयमाना एतां पुनश्चितिमपश्यन् । तामुपादधत । तदेतस्यां योनौ रेतः प्रजातिमदधुः । मध्यतः । मध्यत एवैतदस्यां योनौ रेतः प्रजातिमदधुः । तथैवैतद्यजमानो यत्पुनश्चितिमुपदधाति—एतस्यामेवैतद्योनौ रेतः प्रजातिं दधाति । मध्यतः । मध्यत एवैतदेतस्यां योनौ रेतः प्रजातिं दधाति ॥ १० ॥

तां हैके जघनार्ध उपदधति । जघनार्धाद्वै रेतः सिच्यते । पुच्छसन्धौ । पुच्छाद्वै रेतः सिच्यते—इति । न तथा कुर्यात् । बहिर्धा ह ते योने रेतः प्रजातिं दधति—ये तथा कुर्वन्ति । मध्य एवोपदध्यात्—तत्सम्प्रति योनौ रेतः प्रजातिं दधाति ॥ ११ ॥

अष्टाविष्टका उपदधाति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतद्रेतोभूतं सिञ्चति । पञ्चकृत्वः सादयति । पञ्चचितिकोऽग्निः । पञ्चऽर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतद्रेतोभूतं सिञ्चति । अष्टाविष्टकाः पञ्चकृत्वः साद-

---

सप्तभिरेताभिः प्रसन्नप्रायाभिरेव मन्त्रव्याख्यानं च । अस्मिन्नेतादृशी (        ) विश्वसृजे दूरस्थान् दर्शयति—सर्वदा हैव स स्वर्गो लोकस्तीर्णो बहिर्यज्ञस्योपकरणात्तत्र नित्यमवस्थानात्तथा वक्ष्यति । ( प्रस्तारणपति

सादयति तत्त्रयोदश त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १२ ॥

यद्वेव पुनश्चितिमुपदधाति । ( त्ये ) एतद्वाऽएतदयथायथं करोति यदाहवनीयाद्गार्हपत्यमुत्तरं चिनोति तद्यत्पुनश्चितिमुपदधाति य ऽएवायमग्निश्चितस्तमेवैतदाहृत्यास्योपरिष्टात्पुनश्चिनोति तद्यच्चितꣳ सन्तं पुनश्चिनोति तस्मात्पुनश्चितिः ॥ १३ ॥

( स्त ) तद्धैके । जघनार्धे गार्हपत्यमुपदधति पूर्वार्धे पुनश्चितिमाहवनीयश्च वाऽएतौ गार्हपत्यश्चैवं वाऽएतावग्नीऽइति न तथा कुर्यादयं वै लोको गार्हपत्यो द्यौराहवनीयऽउत्तरो वाऽअसावस्यै तस्मादेनामुत्तरामेवोपदध्यात् ॥ १४ ॥

( द्यु ) यद्वेव गार्हपत्यं च पुनश्चितिं चोपदधाति । वेदिश्च हैतेऽअग्नेरुत्तरवेदिश्चाथ येऽअमू पूर्वे निवपत्यध्वरस्य तेऽअथ हैतेऽअग्नेस्तद्यदेतेऽउपधायाग्निं निदधाति वेदौ चैवैनमेतदुत्तरवेदौ च प्रतिष्ठापयति॥ १५॥

यद्वेव पुनश्चितिमुपदधाति । पुनर्यज्ञो हैष ऽउत्तरा हैषा देवयज्या पुनर्यज्ञमेवैतदुपधत्तऽउत्तरामेव देवयज्यामुप हैनं पुनर्यज्ञो नमति ॥ १६ ॥

---

यति-तत्त्रयोदश । त्रयोदश मासाः संवत्सरः । त्रयोदशाग्नेश्चितिपुरीषाणि । यावानग्निर्यावत्यस्य मात्रा-तावत्तद्भवति ॥ १२ ॥

यद्वेव पुनश्चितिमुपदधाति । एतद्वा एतदयथायथं करोति-यदाहवनीयाद्गार्हपत्यमुत्तरं चिनोति । तत् पुनश्चितिमुपदधाति-य एवायमग्निश्चितः-तमेवैतदाहृत्यास्योपरिष्टात्पुनश्चिनोति । तद्यच्चितं सन्तं पुनश्चिनोति-तस्मात्पुनश्चितिः ॥ १३ ॥

तद्धैके जघनार्धे गार्हपत्यमुपदधति, पूर्वार्धे पुनश्चितिम् । आहवनीयश्च वा एतौ गार्हपत्यश्च । एवं वा एतावग्नी इति । न तथा कुर्यात् । अयं वै लोको गार्हपत्यः, द्यौराहवनीयः । उत्तरो वा असावस्यै । तस्मादेनामुत्तरामेवोपदध्यात् ॥ १४ ॥

यद्वेव गार्हपत्यं च पुनश्चितिं चोपदधाति । वेदिश्च हैते अग्नेरुत्तरवेदिश्च । अथ ये अमू पूर्वे निवपति-अध्वरस्य ते । अथ हैते अग्नेः । तद्यदेते उपधायाग्निं निदधाति-वेदौ चैवैनमेतदुत्तरवेदौ च प्रतिष्ठापयति ॥ १५ ॥

यद्वेव पुनश्चितिमुपदधाति । पुनर्यज्ञो हैषः, उत्तरा हैषा देवयज्या । पुनर्यज्ञमेवैतदुपधत्ते- उत्तरामेव देवयज्याम् । उप हैनं पुनर्यज्ञो नमति ॥ १६ ॥

---

ह्यस्यसासंस्य ) स्वर्गगमनयाग्निं निदधाति । पुनश्चितिरिति शरीरं निदधे । तं स्वर्गं लोकं पत्न्यादिना सर्वेण

यद्देव पुनश्चितिमुपदधाति । यं वै तं प्राणाऽ ऋषयोऽग्रेऽग्निꣳ समस्कुर्वन्त्स ऽएष तमेवैतत्पुनश्चिनोति तद्यच्चितꣳ सन्तं पुनश्चिनोति तस्माद्देव पुनश्चितिः ॥ १७ ॥

( येन ) येनऽऋषयस्तपसा सत्रमायन्निति । ( त्य ) अमूनेतदृषीनाहेन्धानाऽ अग्निꣳ स्वराभरन्तऽइतीन्धानाऽ अग्निꣳ स्वर्गं लोकमाहरन्तऽ इत्येतत्तस्मिन्नहं निदधे नाकेऽअग्निमिति स्वर्गो वै लोको नाको यमाहुर्मनव स्तीर्णबर्हिषमिति ये विद्वाꣳसस्ते मनव स्तीर्णबर्हिषमिति सर्वदा हैव स स्तीर्णबर्हिः ॥ १८ ॥

(स्तं)तं पत्नीभिरनुगच्छेम देवाः । पुत्रैर्भ्रातृभिरुत वा हिरण्यैरित्येतेनैनꣳ सर्वेणानुगच्छेमेत्येतन्नाकं गृभ्णानाः सुकृतस्य लोकऽइति स्वर्गो वै लोको नाकः स्वर्गं लोकं गृभ्णानाः सुकृतस्य लोकऽइत्येतत्तृतीये पृष्ठेऽअधिरोचने दिवऽ इत्येतद्ध तृतीयं पृष्ठꣳ रोचनं दिवो यत्रैषऽएतत्तपति १९

---

यद्देव पुनश्चितिमुपदधाति । यं वै तं प्राणा ऋषयोऽग्रेऽग्निं समस्कुर्वन्–स एषः । तमेवैतत्पुनश्चिनोति । तद्यच्चितं सन्तं पुनश्चिनोति तस्माद्देव पुनश्चितिः ॥ १७ ॥

" येन ऋषयस्तपसा सत्रमायन् "–इति । अमूनेतदृषीनाह । " इन्धाना अग्निं स्वराभरन्तः "–इति । इन्धाना अग्निं स्वर्गं लोकमाहरन्त इत्येतत् । " तस्मिन्नहं निदधे नाके अग्निम् "–इति । स्वर्गो वै लोको नाकः । "यमाहुर्मनवः स्तीर्णबर्हिषम्"–( वा. सं. १९ । ४९ ) इति । ये विद्वांसस्ते मनवः । स्तीर्णबर्हिषमिति । सर्वदा हैव स स्तीर्णबर्हिः ॥ १८ ॥

" तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः "–इति । एतेनैनं सर्वेणानुगच्छेमेत्येतत् । " नाकं गृभ्णानाः सुकृतस्य लोके "–इति । स्वर्गो वै लोको नाकः । स्वर्गं लोकं गृभ्णानाः सुकृतस्य लोक इत्येतत् । "तृतीये पृष्ठे अधिरोचने दिवः "–( वा. सं. १९ । ५० ) इति । एतद्ध तृतीयं पृष्ठं रोचनं दिवः–यत्रैष एतत्तपति ॥ १९ ॥

---

अनुगच्छेम तद्देवा इत्युपधीयमानेष्टकाशरीरेणाग्निरेव तस्याश्च प्रजननार्थं बहुवचनम् । अन्ये तु मन्त्रवर्णात् एतदेव एता इष्टका मन्यंते । एतद्धचा पृष्ठं दिवः सर्वान् पृथिव्यन्तरिक्षे पृष्ठापेक्षया तृतीयं दिवः पृष्ठम् एतद्धेधा

---

१–इह " अग्निर्मूर्द्धा दिवः "–( वा. सं. १५ । २० ) इत्यारभ्य–" अग्ने त्वं नो अन्तमः "–( वा. सं. १५ । ४९ )इत्येतत्पर्यन्तं ये मन्त्रास्ते नावलम्बिताः ।

( त्रा ) आ वाचो मध्यमरुहद्भुरण्युरिति । ( त्ये ) एतद्ध वाचो मध्यं यत्रैष एतच्चीयते भुरण्युरिति भर्त्तेत्येतदयमग्निः सत्पतिश्चेकितानऽइत्ययमग्निः सतां पतिश्चेतयमान ऽइत्येतत्पृष्ठे पृथिव्या निहितो दविद्युतदिति पृष्ठे पृथिव्या निहितो दीप्यमान ऽइत्येतदधस्पदं कृणुतां ये पृतन्यवऽ इत्यधस्पदं कुरुताᳪं सर्व्वान्पाप्मन ऽइत्येतत् ॥ २० ॥

( द ) अयमग्निर्व्वीरतमो व्वयोधा ऽइति । ( त्य ) अयमग्निर्वीर्यवत्तमो व्वयोधा ऽइत्येतत्सहस्रियो द्योततामप्रयुच्छन्निति सहस्रियो दीप्यतामप्रमत्त ऽइत्येतद्विभ्राजमानः सरिरस्य मध्यऽइतीमे वै लोकाः सरिरं दीप्यमानऽएषु लोकेष्वित्येतदुप प्रयाहि दिव्यानि धामेत्युप प्रयाहि स्वर्गं लोकमित्येतत् ॥ २१ ॥

( त्स ) सम्प्रच्यवध्वमुपसम्प्रयातेति । ( त्य ) अमूनेतदृषीनाह समेनं प्रच्यवध्वमुप चैनᳪं सम्प्रयातेत्यग्ने पथो देवयानान्कृणुध्वमिति यथैव

---

"आ वाचो मध्यमरुहद्भुरण्युः"–इति । एतद्ध वाचो मध्यम्–यत्रैष एतच्चीयते । भुरण्युरिति–भर्त्तेत्येतत् । "अयमग्निः सत्पतिश्चेकितानः"–इति । अयमग्निः सतां पतिश्चेतयमान इत्येतत् । "पृष्ठे पृथिव्या निहितो दविद्युतत्"–इति । पृष्ठे पृथिव्या निहितो दीप्यमानः–इत्येतत् । "अधस्पदं कृणुतां ये पृतन्यवः"–( वा० सं० १५।५१ ) इति । अधस्पदं कुरुतां सर्वान् पाप्मन इत्येतत् ॥ २० ॥

"अयमग्निर्वीरतमो वयोधाः"–इति । अयमग्निर्वीर्यवत्तमो वयोधा–इत्येतत् । "सहस्रियो द्योततामप्रयुच्छन्"–इति । सहस्रियो दीप्यतामप्रमत्तः–इत्येतत् । "विभ्राजमानः सरिरस्य मध्ये"–इति । इमे वै लोकाः सरिरम् । दीप्यमान एषु लोकेष्वित्येतत् । "उप प्रयाहि दिव्यानि धाम"–( वा. सं. १५ । ५२ ) इति । उप प्रयाहि स्वर्गं लोकमित्येतत् ॥ २१ ॥

"सम्प्रच्यवध्वमुपसम्प्रयात"–इति । अमूनेतदृषीनाह–समेनं प्रच्यवध्वम्, उप चैनं सम्प्रयातेति । "अग्ने पथो देवयानान्कृणुध्वम्"–इति । यथैव यजुस्तथा बन्धुः । "पुनः

---

मध्यं चैवैषोऽग्निरन्यत्रोपधानात् । सहस्रियः सहस्रेण संमितः सहस्रियः ( व्युथेव ) बृहतीसहस्रस्य मितः संमितः आहवनीयः स एवायमिति कृत्वा सहस्रिय इत्याह । उपप्रयात्विति पुरुषव्यत्ययो द्रष्टव्यः । "सहस्रियो द्योतताम्" इति प्रथमपुरुषेणोपक्रान्तत्वात् । "समेनं प्रच्यवध्वमुप चैनं संप्रयात" इत्यत्राप्येवम् अग्नेरुपधीयमाने इष्टकाशरीरस्यामन्त्रितविभक्त्याऽप्रत्यक्षीकृतत्वादृषीणां पारोक्ष्यं युज्यते । ततश्चात्र पुरुषसर्वनामव्यत्ययो द्रष्टव्यः ।

यजुस्तथा बन्धुः पुनः कृण्वाना पितरा युवानेति वाक् च वै मनश्च पितरा युवाना वाक् च मनश्चैतावग्नीऽअन्वाताᳪंसीत्त्वयि तन्तुमेतमिति योऽसावृषिभिस्तन्तुस्ततस्तमेतदाह ॥ २२ ॥

( हो ) उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिति । ( ती ) इममेतदग्निमाहोच्चैनं बुध्यस्व प्रति चैनं जागृहीतीष्टापूर्ते सᳪंसृजेथामयं चेति यथैव यजुस्तथा बन्धुरस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्निति द्यौर्वाऽउत्तरᳪं सधस्थं विश्वे देवा यजमानश्च सीदतेति तद्विश्वैर्देवैः सह यजमानᳪं सादयति ॥ २३ ॥

येन वहसि सहस्रम् । येनाग्ने सर्व्ववेदसमित्येतद्धास्य प्रतिज्ञाततमं धाम येन सहस्रं वहति येन सर्व्ववेदसं तेनेमं यज्ञं नो नय स्वर्देवेषु गन्त-

---

कृण्वाना पितरा युवाना"–इति । वाक् च वै मनश्च पितरा । युवाना वाक् च मनश्चैतावग्नी । " अन्वातांसीत्त्वयि तन्तुमेतम् "–( वा. सं. १९ । ५३ ) इति । योऽसावृषिभिस्तन्तुः, ततस्तमेतदाह ॥ २२ ॥

" उद्बुध्यस्वाग्ने प्रतिजागृहि त्वम् "–इति । इममेतदग्निमाह–उच्चैनं बुध्यस्व, प्रति चैनं जागृहीति । " इष्टापूर्ते संसृजेथामयं च "–इति । यथैव यजुस्तथा बन्धुः । " अस्मिन्त्सधस्थे अध्युत्तरस्मिन्"–इति । द्यौर्वा उत्तरं सधस्थम् । " विश्वे देवा यजमानश्च सीदत"–( वा. सं. १९ । ५४ ) इति । तद्विश्वैर्देवैः सह यजमानं सादयति ॥ २३ ॥

" येन वहसि सहस्रम्, येनाग्ने सर्ववेदसम् "–इति । एतद्धाऽस्य प्रतिज्ञाततमं धाम–येन सहस्रं वहति, येन सर्ववेदसम् । " तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे "–( वा. सं. १९।५५)

---

द्योततामप्रयुच्छन् गतायेत्यर्थः । उपसंप्रयातेति वचनात् । एतद्दषयः । पथो देवयानान् कृणुध्वं तदुपगमनेन यद्बहिष्ठादयमित्यर्थः । वाक् च वै मनश्च पितरा ते वाङ्मनसी स्वेनोपकारेण जगतः पालयितारौ युवाना नित्यतरुणौ अन्वाताᳪंसीदिति अनुनासिकमिति लोडर्थ एव लुङ्लकारवचने व्यत्ययो द्रष्टव्यः । ( किमत्वातनुतो त्वयिके अग्नेवतकंम ) ऋषिभिः योऽसौ यज्ञे तन्तुः ततः तमेव तनुतामिति प्रार्थ्यते । कथं वाङ्मनसी नाशयति ये तत्र त्वया तनुतामित्यत आह–वाङ्मनश्चैतावग्नी गार्हपत्याहवनीयौ तत्पूर्वकत्वात् । ततश्च तौ पितरौ पुनरेव ताविवात्मानौ गार्हपत्यं पुनश्चितिलक्षणं मत्वा तनुतां त्वयैतं यज्ञे यं तंतुं इदं पदान्त इममेतदग्निमुपधीयमानेष्टकाशरीरमाह–' उद्बुध्यस्वाग्ने ' इत्येतेन मन्त्रेण नामात्र पावितं च कुर्वन्ति । एवमिति यजमानं कुत एतत् इष्टापूर्ते ससर्वेवचनाद्यजमानश्च सीदतेति च परतो दर्शनात् । एतद्धास्य प्रतिज्ञाततममतिशयेन परिज्ञातेमे मम जन्म शरीरं येन

वऽइति तेन नऽइमं यज्ञं नय स्वर्गं लोकं देवेषु गन्तवऽइत्येतदयं ते योनिर्ऋत्वियऽइति तस्योक्तो बन्धुरष्टाविष्टका ऽउपदधाति तस्योऽएवोक्तः ॥ २४ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ८-४-१ ॥ ( ६. ३. ) ॥

इति षष्ठोऽध्यायः समाप्तः ॥ ८ । ६ ॥

---

इति । तेन न इमं यज्ञं नय स्वर्गं लोकं देवेषु गन्तव इत्येतत् । " अयं ते योनिर्ऋत्वियः "-( वा. सं. १५ । ५६ ) इति । तस्योक्तो बन्धुः । अष्टाविष्टका उपदधाति । तस्यो एवोक्तः ॥२५॥

---

सहस्रं बहु वहसि येन सर्ववेदसं वहसि यजमानाय प्रतिदातुं नः शरीरेण तेन यज्ञं स्वर्गलोकं देवेषु देवानां मध्ये नः पराधास्माक त्वमत्रोपधीयमानो यज्ञमश्वश्च स्वर्गमिष्टकाशरीरोऽग्निरूपश्च ते गार्हपत्यचितिलक्षणाऽसौ योनिस्तयोराह इष्टकाशरीरोऽग्निः निरुप्यते ॥ ८-२४ ॥

इति सर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीश्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये अष्टमे काण्डे षष्ठेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ८-६-३ ) ॥

इति षष्ठोऽध्यायः समाप्तः ॥ ( ८-६ )

# अथ सप्तमेऽध्याये प्रथमं ब्राह्मणम् ।
# चतुर्थप्रपाठके च द्वितीयं ब्राह्मणम् ।

ऋतुव्याऽ उपदधाति । (त्सू) ऋतवऽ एते यदृतव्याऽ ऋतूनेवैतदुपदधाति तदेतत्सर्वं यदृतव्याः संवत्सरो वाऽऋतव्याः संवत्सरऽ इदꣳ सर्वमिदमेवैतत्सर्वमुपदधात्यथो प्रजननमेतत्संवत्सरो वाऽऋतव्याः संवत्सरः प्रजननं प्रजननमेवैतदुपदधाति ॥ १ ॥

यद्वेवर्तव्याऽउपदधाति । क्षत्रं वाऽऋतव्या विशऽइमाऽइतराऽ इष्टकाः क्षत्रं तद्विश्यत्तारं दधाति ताः सर्वासु चितिषूपदधाति सर्वस्यां तद्विशि क्षत्रमत्तारं दधाति ॥ २ ॥

यद्वेवर्तव्याऽ उपदधाति । संवत्सरऽएषोऽग्निः स ऋतव्याभिः सꣳहितः संवत्सरमेवैतदृतुभिः संतनोति संदधाति ता वै नानाप्रभृतयः समानोदर्काऽऋतवो वाऽअसृज्यन्त ते सृष्टा नानैवासन् ॥ ३ ॥

---

### अथ द्वयोर्ऋतव्येष्टकयोरुपधानम् ।

ऋतव्या उपदधाति–ऋतव एते–यदृतव्याः; ऋतूनेवैतदुपदधाति । तदेतत्सर्वं–यदृतव्याः । संवत्सरो वा ऋतव्याः । संवत्सर इदं सर्वम् । इदमेवैतत्सर्वमुपदधाति । अथो प्रजननमेतत् । संवत्सरो वा ऋतव्याः । संवत्सरः प्रजननम् । प्रजननमेवैतदुपदधाति ॥ १ ॥

यद्वेवर्तव्या उपदधाति । क्षत्रं वा ऋतव्याः, विश इमा इतरा इष्टकाः । क्षत्रं तद्विश्यत्तारं दधाति । ताः सर्वासु चितिषूपदधाति । सर्वस्यां तद्विशि क्षत्रमत्तारं दधाति ॥ २ ॥

यद्वेवर्तव्या उपदधाति । संवत्सर एषोऽग्निः । स ऋतव्याभिः संहितः । संवत्सरमेवैतदृतुभिः संतनोति सन्दधाति । ता वै नानाप्रभृतयः समानोदर्काः । ऋतवो वा असृज्यन्त । ते सृष्टा नानैवासन् ॥ ३ ॥

---

ऋतव्या उपदधातीति । प्रसन्ना एवैताश्चतुर्दश कण्डिका ज्ञातव्याः अत्र ब्राह्मणे ॥ तत्राद्याश्चतस्रोऽन्त्याश्च सर्वर्त्तव्यानामेव । प्रसन्नप्रायाः साचारण्यमध्ये तु षोडश तयोरुत्तमयोरिति च दर्शितमित्युक्तमेवोत्तरार्थं पुनरुपन्यस्यते । विश इमा इतरा यजुष्मत्य एवायमधिकारात् ' ताः वै ' ऋतव्याः ' नानाप्रभृतयो ' नानारम्भाः

---

१–ऋतव्ये तपश्च तपस्यश्चेति । का. श्रौ. सू. १७ । २५८ ।

( सुंस्ते ) तेऽब्रुवन् । ( न्न ) न वाऽइत्थꣳ सन्तः शक्ष्यामः प्रजनयितुꣳ रूपैः समायामेति तऽएकैकमृतुꣳ रूपैः समायंस्तस्माऽदेकैकस्मिन्नृतौ सर्व्वेषामृतूनाꣳ रूपं ता यन्नानाप्रभृतयो नाना ह्यसृज्यन्ताथ यत्समानोदर्का रूपैर्हि समायन् ॥ ४ ॥

(न्त्स) सऽउपदधाति । तपश्च तपस्यश्च शैशिरावृतूऽइति नामनीऽएनयोरेते नामभ्यामेवैनेऽएतदुपदधात्यसौ वाऽआदित्यस्तपस्तस्मादेतावृतूऽअनन्तर्हितौ तद्यदेतस्मादेतावृतूऽअनन्तर्हितौ तस्मादेतौ तपश्च तपस्यश्च ॥ ५ ॥

( श्चा ) अग्नेरन्तःश्लेषोऽसीति । संव्वत्सरऽ एषोऽग्निः स ऽऋतव्याभिः सꣳहितः संव्वत्सरमेवैतदृतुभिः सन्तनोति सन्दधाति कल्पेतां द्यावापृथिवी कल्पन्तामापऽओषधयऽ इतीदमेवैतत्सर्व्वमृतुभिः कल्पयति कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताऽ इत्यग्नयो हैते पृथग्यदेता ऽइष्टकास्ते यथाऽनयोर्ऋत्वोर्ज्यैष्ठ्याय कल्पेरन्नेवमेतदाह येऽअग्नयः समनसोऽन्तरा द्यावापृथिवीऽइमेऽ इति यथैव यजुस्तथा बन्धुः शैशिरा-

---

तेऽब्रुवन्–न वा इत्थं सन्तः शक्ष्यामः प्रजनयितुम्, रूपैः समायामेति । त एकैकम् ऋतुं रूपैः समायन् । तस्मादेकैकस्मिन्नृतौ सर्वेषामृतूनां रूपम् । ता यन्नानाप्रभृतयो–नाना ह्यसृज्यन्त । अथ यत्समानोदर्काः–रूपैर्हि समायन् ॥ ४ ॥

स उपदधाति । " तपश्च तपस्यश्च शैशिरावृतू "–इति । नामनी एनयोरेते । नामभ्यामेवैने एतदुपदधाति । असौ वा आदित्यस्तपः । तस्मादेतावृतू अनन्तर्हितौ । तत्; यदेतस्मादेतावृतू अनन्तर्हितौ । तस्मादेतौ तपश्च तपस्यश्च ॥ ५ ॥

" अग्नेरन्तःश्लेषोऽसि "–इति । संवत्सर एषोऽग्निः । स ऋतव्याभिः संहितः । संवत्सरमेवैतदृतुभिः संतनोति, सन्दधाति । " कल्पेतां द्यावापृथिवी, कल्पन्तामाप ओषधयः "–इति । इदमेवैतत्सर्वमृतुभिः कल्पयति । "कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः"–इति । अग्नयो हैते पृथग्–यदेता इष्टकाः; ते यथाऽनयोर्ऋत्वोर्ज्यैष्ठ्याय कल्पेरन्–एवमेतदाह । " ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे "–इति । यथैव यजुस्तथा बन्धुः ।

---

' समानोदर्काः ' समाना इति धर्मेणेष्टकानामुपदेशः । कस्मात्ताः समानावयवा भवन्तीत्यत आह–ऋतवो वा असृज्यन्त इति ॥ १–५ ॥

अग्नेरन्तःश्लेषोऽसीत्यृतुरुच्यते तमेवैतदृतुभिः सन्तनोति संदधातीति वचनात् इति दर्शयति । ते यथाऽनयो-

वृतूऽअभिकल्पमानाऽ इन्द्रमिव देवाऽ अभिसंविशन्त्विति यथेन्द्रं देवाऽ अभिसंविष्टाऽएवमिमावृतू ज्यैष्ठ्यायाभिसंविशन्त्वित्येतद्द्वेऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥ ६ ॥

तद्यदेतेऽअत्रोपदधाति । संवत्सरऽ एषोऽग्निरिमऽउ लोकाः संवत्सरस्तस्य द्यौरेव पञ्चमी चितिर्द्यौरस्य शिशिरऽ ऋतुस्तद्यदेतेऽअत्रोपदधाति यदेवास्यैतेऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतेऽअत्रोपदधाति ॥ ७ ॥

यद्वेवैतेऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सरऽ उ प्रजापतिस्तस्य शिरऽ एव पञ्चमी चितिः शिरोऽस्य शिशिरऽ ऋतुस्तद्यदेतेऽअत्रोपदधाति यदेवास्यैतेऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतेऽअत्रोपदधाति ॥ ८ ॥

स पुरस्तात्स्वयमातृण्णायै च विश्वज्योतिषश्चऽर्तव्येऽउपदधाति । द्यौर्वाऽउत्तमा स्वयमातृण्णाऽऽदित्यऽउत्तमा विश्वज्योतिरर्वाचीनं तद्दिवश्चादित्याच्चऽर्तून्दधाति तस्मादर्वाचीनमेवातऽऋतवोऽथो प्रजननमेत-

---

"शैशिरावृतूअभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु"–( वा. सं. १९।५७ ) इति । यथेन्द्रं देवा अभिसंविष्टाः; एवमिमावृतू ज्यैष्ठ्यायाभिसंविशन्त्वित्येतत् । द्वे इष्टके भवतः । द्वौ हि मासावृतुः । सकृत्सादयति । एकं तदृतुं करोति ॥ ६ ॥

तद्यदेते अत्रोपदधाति–संवत्सर एषोऽग्निः । इम उ लोकाः संवत्सरः । तस्य द्यौरेव पञ्चमी चितिः । द्यौरस्य शिशिर ऋतुः । तद्यदेते अत्रोपदधाति–यदेवास्यैते आत्मनः–तदस्मिन्नेतत्प्रतिदधाति । तस्मादेते अत्रोपदधाति ॥ ७ ॥

यद्वेवैते अत्रोपदधाति । प्रजापतिरेषोऽग्निः । संवत्सर उ प्रजापतिः । तस्य शिर एव पञ्चमी चितिः । शिरोऽस्य शिशिर ऋतुः । तद्यदेते अत्रोपदधाति;–यदेवास्यैते आत्मनस्तदस्मिन्नेतत्प्रतिदधाति । तस्मादेते अत्रोपदधाति ॥ ८ ॥

स पुरस्तात्स्वयमातृण्णायै च विश्वज्योतिषश्चऽर्तव्येऽउपदधाति । द्यौर्वा उत्तमा स्वयमातृण्णा । आदित्य उत्तमा विश्वज्योतिः । अर्वाचीनं तद्दिवश्चादित्याच्चर्तून्दधाति । तस्मादर्वाचीनमेवातः

---

ऋत्वोः ज्यैष्ठ्याय कल्पेरन्नेवमेतदाहेत्यत्र चोद्यते "कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय" इति ( मा त्वेपद्यन्त ) तस्य कथमयमर्थो भवत्येतयोर्ऋत्वोः ज्यैष्ठ्याय कल्पेरन्निति । नैष दोषः । यद्यत्र यजमानस्य ( याज्येष्ठोरुपांसोयज्ञानुकारणत्वाणावाजा ) ज्यैष्ठ्ये सत्युपपद्यते । नान्यथेत्यादि दैविकयोग्य ( )

दर्व्वाचीनं तद्दिवश्चादित्याच्च प्रजननं दधाति तस्मादर्व्वाचीनमेवातः प्रजायते स्थितछँ हैवातः पराक्प्रजननं यावन्तो ह्येव सनाग्रे देवास्तावन्तो देवाः ॥ ९ ॥

(ऽ) अथ प्रथमायै स्वयमातृण्णायै प्रथमायै च विश्वज्ज्योतिषऽउपरिष्टादृतव्येऽउपदधाति । (तौ) इयं वै प्रथमा स्वयमातृण्णाऽग्निः प्रथमा विश्वज्ज्योतिस्तदूर्ध्वानृतून्दधाति तस्मादितऽऊर्ध्वाऽऋतवोऽथो प्रजननमेतदितस्तदूर्ध्वं प्रजननं दधाति तस्मादितऽऊर्ध्वमेव प्रजायते ॥ १० ॥

ता न व्यूहेत् । ( ते ) नेदृतून्व्यूहानीति यो वै म्रियतऽऋतवो ह तस्मै व्युह्यन्ते तस्माद्यत्रैव प्रथमेऽउपदधाति तत्सर्वाऽउपदध्यात् ॥ ११ ॥

( द ) अथोऽइमे वै लोकाऽऋतव्याः । ( ऽ ) इमांस्तल्लोकानूर्ध्वांश्चितिभिश्चिनोत्यथो क्षत्रं वाऽऋतव्याः क्षत्रं तदूर्ध्वं चितिभिश्चिनोत्यथो संवत्सरो वाऽऋतव्याः संवत्सरं तदूर्ध्वं चितिभिश्चिनोति ता नान्यया यजुष्मत्येष्टकयोपरिष्टादभ्युपदध्यान्नेत्क्षत्रं विशाऽभ्युपदधानीति ॥ १२ ॥

---

ऋतवः । अथो प्रजननमेतत् । अर्वाचीनं तद् दिवश्चादित्याच्च प्रजननं दधाति । तस्मादर्वाचीनमेवातः प्रजायते । स्थितं हैवातः पराक्प्रजननम् । यावन्तो ह्येव सनाग्रे देवाः—तावन्तो देवाः ॥ ९ ॥

अथ प्रथमायै स्वयमातृण्णायै प्रथमायै च विश्वज्योतिष उपरिष्टादृतव्ये उपदधाति । इयं वै प्रथमा स्वयमातृण्णा । अग्निः प्रथमा विश्वज्योतिः । तदूर्ध्वानृतून्दधाति । तस्मादित ऊर्ध्वा ऋतवः । अथो प्रजननमेतत् । इतस्तदूर्ध्वं प्रजननं दधाति । तस्मादित ऊर्ध्वमेव प्रजायते ॥ १० ॥

ता न व्यूहेत् । नेदृतून्व्यूहानीति । यो वै म्रियते—ऋतवो ह तस्मै व्युह्यन्ते । तस्माद्यत्रैव प्रथमे उपदधाति—तत्सर्वा उपदध्यात् ॥ ११ ॥

अथो इमे वै लोका ऋतव्याः । इमांस्तल्लोकानूर्ध्वांश्चितिभिश्चिनोति । अथो क्षत्रं वा ऋतव्याः । क्षत्रं तदूर्ध्वं चितिभिश्चिनोति । अथो संवत्सरो वा ऋतव्याः । संवत्सरं तदूर्ध्वं चितिभिश्चिनोति । ता नान्यया यजुष्मत्येष्टकयोपरिष्टादभ्युपदध्यात् । नेत्क्षत्रं विशाऽभ्युपदधानीति ॥ १२ ॥

---

ज्यैष्ठ्याय कल्पेरन् इति ब्राह्मणे दर्शितम् । सर्वाधीनमेवातो दिव अर्वाचीना ( . ...... ) तावत्येव तु विशेषः । अथो प्रजननं तत्प्रजायते दिवि प्रजननं तस्मादर्वाचीनानामेवातिदिव. आदित्याच्च प्रजायते स्थावरं जङ्गमं च न वत्सरादिकम् । ननु च परतोऽपि देवाः सन्ति कथं ते प्रजननाद्दतेतवः इत्युपपद्यते(नादित्यरित्यत) अत—आह—स्थितमेवातः परं प्रजायते यावत् यमग्रे सृष्ट्वाऽयं वक्ष्यमाणप्रकार इति । यत्रैव देशे सर्वा ऋतव्या

ता हैता ऽएव संयान्यः । ( ऽ ) एतद्वै देवा ऽ ऋतव्याभिरेवेमाँल्लोकान्त्समयुरितश्चोर्ध्वानमुतश्चार्वाचस्तथैवैतद्यजमान ऽऋतव्याभिरेवेमाँल्लोकान्त्संयातीतश्चोर्ध्वानमुतश्चार्वाचः ॥ १३ ॥

( स्तु ) तदु ह चरकाध्वर्यवः । ( वोऽन्या ) अन्या ऽ एव संयानीरित्युपदधति न तथा कुर्यादत्यहैव रेचयन्त्येता ऽ उऽ एव संयान्यः ॥ १४ ॥

( न्योऽथ ) अथ विश्वज्योतिषमुपदधाति । (त्या) आदित्यो वाऽउत्तमा विश्वज्योतिरादित्यो ह्येवामुष्मिँल्लोके विश्वं ज्योतिरादित्यमेवैतदुपदधाति ॥ १५ ॥

यद्वेव विश्वज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजननमेवैतदुपदधाति ॥ १६ ॥

स पुरस्तात्स्वयमातृण्णायै विश्वज्योतिषमुपदधाति । द्यौर्वाऽउत्तमा स्वयमातृण्णाऽऽदित्यऽ उत्तमा विश्वज्योतिरर्वाचीनं तद्दिवऽआदित्यं दधाति तस्मादेषोऽर्वाचीनमेवातस्तपत्यथो प्रजननमेतदर्वाचीनं तद्दिवः प्रजननं दधाति तस्मादर्वाचीनमेवातः प्रजायते ॥ १७ ॥

---

ता हैता एव संयान्यः । एतद्वै देवा ऋतव्याभिरेवेमांल्लोकान्त्समयुः । इतश्चोर्ध्वान्,—अमुतश्चार्वाचः । तथैवैतद्यजमान ऋतव्याभिरेवेमांल्लोकान्त्संयाति—इतश्चोर्ध्वान्, अमुतश्चार्वाचः ॥ १३ ॥

तदु ह चरकाध्वर्यवोऽन्या एव संयानीरित्युपदधति । न तथा कुर्यात् । अत्यहैव रेचयन्ति—एता उ एव संयान्यः ॥ १४ ॥

अथ विश्वज्योतिषमुपदधाति । आदित्यो वा उत्तमा विश्वज्योतिः । आदित्यो ह्येवामुष्मिल्लोके विश्वं ज्योतिः । आदित्यमेवैतदुपदधाति ॥ १५ ॥

यद्वेव विश्वज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः । प्रजा ह्येव विश्वं ज्योतिः । प्रजननमेवैतदुपदधाति ॥ १६ ॥

स पुरस्तात्स्वयमातृण्णायै विश्वज्योतिषमुपदधाति । द्यौर्वाऽउत्तमा स्वयमातृण्णा । आदित्य उत्तमा विश्वज्योतिः । अर्वाचीनं तद्दिव आदित्यं दधाति । तस्मादेषोऽर्वाचीनमेवातस्तपति । अथो प्रजननमेतत् । अर्वाचीनं तद्दिवः प्रजननं दधाति । तस्मादर्वाचीनमेवातः प्रजायते ॥ १७ ॥

---

उपदधाति ते वाऽन्यया यजुष्मत्येष्टकयोपरिष्टाद्वक्ष्यमाणः प्रकार इति । लोके वृद्ध्याऽभ्युपधानं दर्शयति । इतरथा हि ततोऽन्यथा इष्टकाया उपरिष्टादभ्युपदधाति इत्येवावक्ष्यत ॥ ९—१४ ॥

अथ विश्वज्योतिषमुपदधातीति । अतः परं प्रसन्नमेव ब्राह्मणम् ॥ १५—१७ ॥

( तेऽथ ) अथ प्रथमायै स्वयमातृण्णायै । ( याऽउ ) उपरिष्टाद्विश्वज्योतिषमुपदधातीयं वै प्रथमा स्वयमातृण्णाऽग्निः प्रथमा विश्वज्योतिरितस्तदूर्ध्वमग्निं दधाति तस्मादितऽऊर्ध्वोऽग्निर्दीप्यतेऽथो प्रजननमेतदितस्तदूर्ध्वं प्रजननं दधाति तस्मादितऽऊर्ध्वमेव प्रजायते ॥ १८ ॥

( तेऽथ ) अथ मध्यमायै स्वयमातृण्णायै । ( याऽउ ) उपरिष्टाद्विश्वज्योतिषमुपदधात्यन्तरिक्षं वै मध्यमा स्वयमातृण्णा वायुर्मध्यमा विश्वज्योतिरन्तरिक्षे तद्वायुं दधाति तस्मादयमन्तरिक्षे वायुः ॥ १९ ॥

( स्ता ) तान्येतानि ज्योतीꣳषि । तद्यदेता ऽएवमुपदधात्येतान्येवैतज्ज्योतीꣳषि सम्यञ्चि दधाति तस्मादित ऽऊर्ध्वोऽग्निर्दीप्यतेऽर्वाङसावादित्यस्तपत्यन्तरिक्षेऽयं तिर्यङ् वायुः पवते ॥ २० ॥

परमेष्ठी त्वा सादयत्विति । परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यद्दिवस्पृष्ठे ज्योतिष्मतीमिति दिवो ह्यसौ पृष्ठे ज्योतिष्मानादित्यः ॥ २१ ॥

( त्यो ) विश्वस्मै प्राणायापानाय । व्यानायेति प्राणो वै विश्वज्योतिः सर्व्वस्माऽउ वाऽएतस्मै प्राणो विश्वं ज्योतिर्यच्छेति सर्व्वं ज्योतिर्यच्छे-

---

अथ प्रथमायै स्वयमातृण्णाया उपरिष्टाद्विश्वज्योतिषमुपदधाति । इयं वै प्रथमा स्वयमातृण्णा । अग्निः प्रथमा विश्वज्योतिः । इतस्तदूर्ध्वमग्निं दधाति । तस्मादित ऊर्ध्वोऽग्निर्दीप्यते । अथो प्रजननमेतत् । इतस्तदूर्ध्वं प्रजननं दधाति । तस्मादित ऊर्ध्वमेव प्रजायते ॥ १८ ॥

अथ मध्यमायै स्वयमातृण्णाया उपरिष्टाद् विश्वज्योतिषमुपदधाति । अन्तरिक्षं वै मध्यमा स्वयमातृण्णा । वायुर्मध्यमा विश्वज्योतिः । अन्तरिक्षे तद्वायुं दधाति । तस्मादयमन्तरिक्षे वायुः ॥ १९ ॥

तान्येतानि ज्योतींषि । तद् यदेता एवमुपदधाति–एतान्येवैतज्ज्योतींषि सम्यञ्चि दधाति । तस्मादित ऊर्ध्वोऽग्निर्दीप्यते । अर्वाङ् असावादित्यस्तपति । अन्तरिक्षेऽयं तिर्यङ् वायुः पवते ॥ २० ॥

" परमेष्ठी त्वा सादयतु "–इति । परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यत् । " दिवस्पृष्ठे ज्योतिष्मतीम् "–इति । दिवो ह्यसौ पृष्ठे ज्योतिष्मानादित्यः ॥ २१ ॥

"विश्वस्मै प्राणायापानाय व्यानाय"–इति । प्राणो वै विश्वज्योतिः । सर्वस्मा उ वा एतस्मै प्राणः । " विश्वं ज्योतिर्यच्छ "–इति । सर्वं ज्योतिर्यच्छेत्येतत् । " सूर्यस्तेऽधि-

---

प्रथमाया मध्यमायाश्च प्रासङ्गिकं दर्शनमत्रोक्तम् ॥ १८–२४ ॥

---

१–विश्वज्योतिषं परमेष्ठी त्वेति । का. श्री. सू. १७ । २५९ ।

स्येतत्सूर्यस्तेऽधिपतिरिति सूर्यमेवास्या ऽअधिपतिं करोति सादयित्वा सूददोहसाऽधिवदति तस्योक्तो बन्धुः ॥ २२ ॥

( स्ता ) ता हैता ऽएव संयान्यः । ( ऽ ) एतद्वै देवा विश्वज्योतिर्भि-रेवेमाँल्लोकान्त्समयुरितश्चोर्ध्वानमुतश्चार्वाचस्तथैवैतद्यजमानो विश्व-ज्योतिर्भिरेवेमाँल्लोकान्त्संयातीतश्चोर्ध्वानमुतश्चार्वाचः ॥ २३ ॥

( स्तु ) तदु ह चरकाध्वर्यवः । ( वोऽन्या ) अन्या ऽएव संयानीरित्युपद-धति न तथा कुर्यादत्यहैव रेचयन्त्येताऽउऽएव संयान्यः ॥ २४ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ८ । ४ । २ ॥ ( ७ । १ )

अथ लोकम्पृणामुपदधाति । ( त्य ) असौ वाऽआदित्यो लोकम्पृणैष हीमाँल्लोकान्पूरयत्यमुमेवैतदादित्यमुपदधाति ताᳬं सर्वासु चितिषूपद-

---

पतिः "–( वा. सं. १९ । ५८ ) इति । सूर्यमेवास्या अधिपतिं करोति । सादयित्वा सूददोहसा-ऽधिवदति । तस्योक्तो बन्धुः ॥ २२ ॥

ता हैता एव संयान्यः । एतद्वै देवा विश्वज्योतिर्भिरेवेमांल्लोकान्त्समयुः । इतश्चोर्ध्वान्, अमुत-श्चार्वाचः । तथैवैतद्यजमानो विश्वज्योतिर्भिरेवेमांल्लोकान्त्संयाति–इतश्चोर्ध्वान्, अमुतश्चा-र्वाचः ॥ २३ ॥

तदु ह चरकाध्वर्यवोऽन्या एव संयानीरित्युपदधति । न तथा कुर्यात् । अत्यहैव रेचयन्ति । एता उ एव संयान्यः ॥ २४ ॥

इत्याहवनीयचित्यां पञ्चचितिकायां पञ्चमी चितिः ।

( यजुष्मतीष्टकोपधानं सम्पूर्णम् । )

अथ सर्वचितिशेषः ।

अथ लोकम्पृणेष्टकोपधानम् ।

अथ लोकम्पृणामुपदधाति । असौ वा आदित्यो लोकम्पृणा । एष हीमांल्लोकान्पूरयति ।

---

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमे काण्डे सप्तमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ८–७–१ ) ॥

अथ लोकम्पृणामिति । अधिलोकं पृणशब्दवानप्रधानं मत्वा पयस्या इष्टका लोकंपृणा उपदधाति[1] विश्व-

---

१–दक्षिणा स्सात्प्रत्यगरत्निमात्रादधिलोकंपृणाः पूर्ववत् । का. श्रौ. सू. १७ । २६० ।

धातीमे वै लोकाऽएताश्चितयोऽमुं तदादित्यमेषु लोकेषु दधाति तस्मादेष सर्व्वेभ्यऽ एवैभ्यो लोकेभ्यस्तपति ॥ १ ॥

यद्वेव लोकम्पृणामुपदधाति । क्षत्रं वै लोकम्पृणा विशऽइमा ऽइतरा इष्टकाः क्षत्रं तद्विश्यत्तारं दधाति ताᳪं सर्व्वासु चितिषूपदधाति सर्व्वस्यां तद्विशि क्षत्रमत्तारं दधाति ॥ २ ॥

सैषैकैव भवति । ( त्ये ) एकस्थं तत्क्षत्रमेकस्थाᳪं श्रियं करोत्यथ या द्वितीया मिथुनं तदर्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्व्वोऽथ कृत्स्नः कृत्स्नतायाऽएकेन यजुषा बह्वीरिष्टका ऽउपदधाति क्षत्रं तद्वीर्येणात्यादधाति क्षत्रं विशो वीर्यवत्तरं करोत्यथेतराः पृथङ्नाना यजुर्भिरुपदधाति विशं तत्क्षत्रादवीर्यतरां करोति पृथग्वादिनीं नानाचेतसम् ॥ ३ ॥

---

अमुमेवैतदादित्यमुपदधाति । तां सर्वासु चितिषूपदधाति । इमे वै लोका एताश्चितयः । अमुं तदादित्यमेषु लोकेषु दधाति । तस्मादेष सर्वेभ्य एवैभ्यो लोकेभ्यस्तपति ॥ १ ॥

यद्वेव लोकम्पृणामुपदधाति । क्षत्रं वै लोकम्पृणा, विश इमा इतरा इष्टकाः । क्षत्रं तद् विश्यत्तारं दधाति । तां सर्वासु चितिषूपदधाति । सर्वस्यां तद् विशि क्षत्रमत्तारं दधाति ॥ २ ॥

सैषैकैव भवति । एकस्थं तत् क्षत्रमेकस्थां श्रियं करोति । अथ या द्वितीया—मिथुनं तत् । अर्धमु हैतदात्मनो—यन्मिथुनम् । यदा वै सह मिथुनेन—अथ सर्वः, अथ कृत्स्नः । कृत्स्नतायै । एकेन यजुषा बह्वीरिष्टका उपदधाति । क्षत्रं तद्वीर्येणात्यादधाति । क्षत्रं विशो वीर्यवत्तरं करोति । अथेतराः पृथङ्नाना यजुर्भिरुपदधाति । विशं तत्क्षत्रादवीर्यतरां करोति—पृथग्वादिनीं नानाचेतसम् ॥ ३ ॥

---

ज्योतिषामुपधानानन्तरमेवेति विधिः । 'असौ वा आदित्यो लोकंपृणा' एष हि रश्मिभिरिमाँल्लोकान्पूरयति । तत्सर्वासु चितिषु पुनर्वचनमर्थवादसम्बन्धार्थम् । अथ लोकंपृणामुपदधाति । प्राप्तमेव लोकंपृणायाः सर्वचितिषूपधानम् ॥ १ ॥

यद्वेव लोकंपृणामिति । प्रसन्ना ॥ २ ॥

सैषैकैवेति । एषा लोकंपृणाप्येकैव भवति इत्येकविभक्तित्वादित्यभिप्रायः । 'एकस्थम्' एकत्वात्तेन क्षत्रं एकस्थं तत्फलम् । यत्स्वयं करोति तथा च व्यवहारं कल्पयन् यजुषोपदधाति तेन । विशं नानाचेतसं चेति शेषः । स परस्परं वीर्यवत्तरं करोति क्षत्रमेकस्थां श्रियं सहैकवित्तमेकवचनमिति शेषः ॥ ३ ॥

( ४ ) स वाऽअस्याᳪं स्रक्त्यां प्रथमेऽउपदधाति । ( त्य ) अमुं तदादित्यमेतस्यां दिशि दधात्यथेतस्तस्मादतोऽनुपर्यैत्यथेतस्तस्मादतोऽनुपर्यैत्यथेतस्तस्मादतोऽनुपर्यैत्यथातस्तस्मादतोऽनुपर्यैति ॥ ४ ॥

स यत्रैव प्रथमेऽउपदधाति । तदुत्तमेऽअनूपदध्यात्सकृद्धैवासावादित्यऽइमाँल्लोकान्पर्यैत्य नातिप्रच्यवेतातिहृत्य पूर्वेऽउत्तमेऽअनूपदधात्यमुं तदादित्यमिमाँल्लोकानतिप्रच्यावयति तस्मादसावादित्य ऽइमाँल्लोकानुसᳪंस्थितो दक्षिणावृत्पुनः पुनरनुपर्यैति ॥ ५ ॥

लोकं पृण च्छिद्रं पृणेति । लोकं च पूरय च्छिद्रं च पूरयेत्येतदथो सीद ध्रुवा त्वमित्यथो सीद स्थिरा त्वं प्रतिष्ठितेत्येतदिन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्नितीन्द्राग्नी च त्वा बृहस्पतिश्चास्मिन्योनौ प्रत्य-

---

स वा अस्यां स्रक्त्यां प्रथमे उपदधाति । अमुं तदादित्यमेतस्यां दिशि दधाति । अथेतस्तस्मादतोऽनुपर्यैति, अथेतस्तस्मादतोऽनुपर्यैति, अथेतस्तस्मादतोऽनुपर्यैति, अथातस्तस्मादतोऽनुपर्यैति ॥ ४ ॥

स यत्रैव प्रथमे उपदधाति–तदुत्तमे अनूपदध्यात् । सकृद्धैवासावादित्य इमांल्लोकान्पर्यैत्य नातिप्रच्यवेत । अतिहृत्य पूर्वे उत्तमे अनूपदधाति । अमुं तदादित्यमिमांल्लोकानतिप्रच्यावयति । तस्मादसावादित्य इमांल्लोकानसंस्थितो दक्षिणावृत् पुनः पुनः अनुपर्यैति ॥ ५ ॥

" लोकं पृण च्छिद्रं पृण "–इति । लोकं च पूरय छिद्रं च पूरयेत्येतत् । " अथो सीद ध्रुवा त्वम् "–इति । अथो सीद स्थिरा त्वं प्रतिष्ठितेत्येतत् । " इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् "–( वा. सं. १५ । ५९ ) इति । इन्द्राग्नी च त्वा बृहस्पतिश्चास्मिन्योनौ

---

स वा अस्यामिति । अस्यामित्यभिनयेन दक्षिणस्रक्तिं दर्शयति–कुत एतत् ? ' अमुं तदादित्यमेतस्यां ' पूर्वस्यां ' दिशि ' उपदधातीति वाक्यशेषात् । ननु च वाक्यशेषोऽसौ तदादित्यं विवक्ष्यत इत्यविस्पष्टमेवैतत् । नैष दोषः । अत्रापि वाक्यशेषादेष निर्णयः । तस्मादसावादित्यः पुरस्तात् प्रणिधीयते इत्येतेन तावत् पूर्वोक्ता स्रक्तिरिति निर्णीयते । तस्मादसावादित्य इमाँल्लोकान् दक्षिणावृदत्येति । दक्षिणावृदसावुदेत्येतां ( ) दिशं ज्येवानुसंचरतीत्येतेन दक्षिणा स्रक्तिरिति निर्णीयते । लोकंपृणे प्रथमायां चितावित्यर्थः । अथ प्रथमायां चितौ दक्षिणस्यां श्रोण्यां तेन चामुमादित्यमेतस्यामुपरिष्टाद्दिशि दधाति तस्मादेवानुपर्यैति । पूर्वस्यां दिश्युदित आलोकः पृणयति पञ्चम्यां चितौ । यैस्तु लोकंपृणा इति उपदधाति भवेदित्यर्थः । प्रत्यतिष्ठिपन् प्रतिष्ठापितवन्तः ( देषु त्वांवज्यं सोऽयं ) न तु ते प्रतिष्ठापितवन्तः किं तर्हि प्रतिष्ठापयन्ति तेन प्रार्थ्यते न च्छन्दसाऽयं मे भूतवत्प्रयोगो द्रष्टव्यः । प्रतिष्ठापयन्तीत्यर्थः । वाक्यैः शब्दात्मिका अनुष्टुभा तु सर्वमत्र स्तोम ( ) वाचैवेन्द्रियेणादित्यस्तुत्येकत्वादिन्द्र आदित्यो लोकं पृणाति । दार्शितमेव न सादयति तया देवतयेत्यनेन

तिष्ठिपन्नित्येतदनुष्टुभा व्वाग्वाऽअनुष्टुब्वागिन्द्र ऽइन्द्रो लोकम्पृणा न सादयत्युसन्नो ह्येष सूददोहसाऽधिवदति प्राणो वै सूददोहाः प्राणेनैवैनमेतत्सुंतनोति सुंदधाति ॥ ६ ॥

तदाहुः । कथमेषा लोकम्पृणाऽयातयाम्नी भवतीत्यसौ वाऽआदित्यो लोकम्पृणाऽयातयामा वाऽएषोऽथो व्वाग्वै लोकम्पृणाऽयातयाम्न्यु वै व्वाक् ॥ ७ ॥

( क्स ) स वै यजुष्मतीरुपधाय । लोकम्पृणया प्रच्छादयत्यन्नं वै यजुष्मत्यऽइष्टकाऽ आत्मा लोकम्पृणाऽन्नं तदात्मना परिदधाति तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ ८ ॥

स वाऽआत्मन्नेव । यजुष्मतीरुपदधाति न पक्षपुच्छेष्वात्मंस्तदन्नं दधाति यद्व वाऽआत्मन्नन्नं धीयते तदात्मानमवति तत्पक्षपुच्छान्यथ यत्पक्षपुच्छेषु नैव तदात्मानमवति न पक्षपुच्छानि ॥ ९ ॥

( न्यु ) उभयीर्यजुष्मतीश्च लोकम्पृणाश्चात्मन्नुपदधाति । तस्मादय-

---

प्रत्यतिष्ठिपन्नित्येतत् । अनुष्टुभा । वाग्वाऽअनुष्टुप्, वागिन्द्रः । इन्द्रो लोकम्पृणा । न सादयति । असन्नो ह्येषः । सूददोहसाऽधिवदति । प्राणो वै सूददोहाः । प्राणेनैवैनमेतत्सन्तनोति, सन्दधाति ॥ ६ ॥

तदाहुः—कथमेषा लोकम्पृणाऽयातयाम्नी भवतीति । असौ वा आदित्यो लोकम्पृणा । अयातयामा वा एषः । अथो वाग्वै लोकम्पृणा । अयातयाम्न्यु वै वाक् ॥ ७ ॥

स वै यजुष्मतीरुपधाय लोकम्पृणया प्रच्छादयति । अन्नं वै यजुष्मत्य इष्टकाः, आत्मा लोकम्पृणा । अन्नं तदात्मना परिदधाति । तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ ८ ॥

स वा आत्मन्नेव यजुष्मतीरुपदधाति, न पक्षपुच्छेषु । आत्मंस्तदन्नं दधाति । यद्ध वा आत्मन्नन्नं धीयते—तदात्मानमवति, तत्पक्षपुच्छानि । अथ यत्पक्षपुच्छेषु—नैव तदात्मानमवति, न पक्षपुच्छानि ॥ ९ ॥

उभयीर्यजुष्मतीश्च लोकंपृणाश्चात्मन्नुपदधाति । तस्मादयमात्मा द्विगुणो बहुलतर इव लोकं-

---

मन्त्रेणेति सामान्यविधेः पर्युदासः । सूद दोहसाऽधिवदति इति ( ) (प्रच्छादयेरन्ततोनमामिनो परिष्टुत ) प्रच्छादयेरन्यथा यजुष्मत्योऽपि पृथगेवाख्यायन्ते । तथाऽन्नमपि आख्यायते । न च सर्वोऽग्निर्दिष्टिविषये लोकंपृणमेवातिसम्पद्येत प्राणेन वाक्यात्मकं किंचिदन्नं स्यात् । सर्वाण्येवान्नानि वासांसि भवेयुर्यजुष्मत्य एवान्नानामाजानानः प्रधानभूता इत्येतदुपधानं नेच्छति । स वा आत्मन्नेवेति । अनुवाद एवायं दर्शनार्थः ॥४—९॥
उभयीर्यजुष्मतीश्चेति । उभयीरित्यनुवाद एव लोकंपृणा एवेत्ययं पक्ष । एतदेव यजुष्मतीरुपधाय

२०५४.

मात्मा द्विगुणो बहुलतर-इव लोकम्पृणा ऽएव पक्षपुच्छेषु तस्मात्पक्षपुच्छानि तनीयाᳪँसीवानूचीश्च तिरश्चीश्चात्मन्नुपदधात्यस्थीनि वाऽइष्टकास्तस्मादिमान्यन्वञ्चि च तिर्यञ्चि चात्मन्नस्थीनि पराचीरेव पक्षपुच्छेषु न हि किंचन पक्षपुच्छेषु तिर्यगस्थ्यस्ति तद्धैतदेव चितस्य चाचितस्य च विज्ञानमेवमेव चितऽइतरथाऽचितः ॥ १० ॥

स वै स्वयमातृण्णां लोकम्पृणया प्रच्छादयति । प्राणो वै स्वयमातृण्णाऽऽदित्यो लोकम्पृणा प्राणं तदादित्येन समिन्द्धे तस्मादयमुष्णः प्राणस्तया सर्व्वमात्मानं प्रच्छादयति सर्व्वं तदात्मानमादित्येन समिन्द्धे तस्मादयᳪँ सर्व्व ऽएवात्मोष्णस्तद्धै तदेव जीविष्यतश्च मरिष्यतश्च विज्ञानमुष्णऽएव जीविष्यञ्छीतो मरिष्यन् ॥ ११ ॥

( न्त्स ) स यस्याᳪँ स्रक्त्यां प्रथमेऽउपदधाति । ततो दशभिर्दशभिः संच्छादयन्नेत्या स्वयमातृण्णायै स तनैव दक्षिणावृज्जघनेन स्वयमातृण्णां

---

पृणा एव पक्षपुच्छेषु । तस्मात्पक्षपुच्छानि तनीयांसीव । अनूचीश्च तिरश्चीश्चात्मन्नुपदधाति । अस्थीनि वा इष्टकाः । तस्मादिमान्यन्वञ्चि च तिर्यञ्चि चात्मन्नस्थीनि । पराचीरेव पक्षपुच्छेषु । न हि किंचन पक्षपुच्छेषु तिर्यगस्थ्यास्ति । तद्धैतदेव चितस्य चाचितस्य च विज्ञानम् । एवमेव चितः, इतरथाऽचितः ॥ १० ॥

स वै स्वयमातृण्णां लोकम्पृणया प्रच्छादयति । प्राणो वै स्वयमातृण्णा, आदित्यो लोकंपृणा । प्राणं तदादित्येन समिन्द्धे । तस्मादयमुष्णः प्राणः । तया सर्वमात्मानं प्रच्छादयति । सर्वं तदात्मानमादित्येन समिन्द्धे । तस्मादयं सर्व एवात्मोष्णः । तद्धैतदेव जीविष्यतश्च मरिष्यतश्च विज्ञानम् । उष्ण एव जीविष्यन्, शीतो मरिष्यन् ॥ ११ ॥

स यस्यां स्रक्त्यां प्रथमे उपदधाति—ततो दशभिर्दशभिः संछादयन्नेति—आ स्वयमातृण्णायै

---

लोकंपृणया प्रच्छादयतीति । पराचीः पक्षपुच्छानीत्येव मतं वित्तस्यादेव विपरीतं तद्विज्ञानलिङ्गं तदाह—एवमेव यजुष्मतीरुपधाय लोकंपृणया प्रच्छादयतीत्यनेनैव स्वयमातृण्णाया अनुवादप्रदर्शनार्थं पुनरुच्यते । तदादित्येन समिन्धे प्राणस्य समिन्धनं विधीयते तैरेवैतत्प्राणवायुधारिणं वायुना इत्येतत्कायाग्निरूपेण सदा स्थापयति । तथा लोकंपृणया सर्वमग्नेरायातं सर्वं कार्यं यजुष्मत्येष्टकयाऽव्यतिरिक्तमपि प्रच्छादयति स पक्षपुच्छमित्यभिप्रायः । तस्मादयं सर्व एवात्मोष्ण इति पक्षपुच्छानामप्युष्णत्वात् ॥ १० ॥ ११ ॥

स यस्यां स्रक्त्यामिति । यस्यां स्रक्त्यां अंसे श्रोण्यां प्रथमे लोकंपृणे उपदधाति । तत्स्रक्तेरारभ्य

संच्छादयन्नेत्याऽऽनूक्यायाऽअथ पुनरेत्य तमवधिꣳ संच्छादयति ॥ १२ ॥

( त्या ) आत्मानमग्रे संछादयति । ( त्या ) आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्राऽथोऽएवं वाऽअसावादित्य ऽइमाँल्लोकान्दक्षिणावृदनुपर्य्येति ॥ १३ ॥

स ऽएष प्राण ऽएव यल्लोकम्पृणा । तया सर्व्वमात्मानं प्रच्छादयति सर्व्वस्मिंस्तदात्मन्प्राणं दधाति तद्यद्धास्यैषाऽङ्गं नाभिप्राप्नुयात्प्राणो हास्य तदङ्गं नाभिप्राप्नुयाद्यद्वै प्राणोऽङ्गं नाभिप्राप्नोति शुष्यति वावैतन्म्लायति वा तस्मादेनꣳ सर्व्वमेवैतया प्रच्छादयेत् ॥ १४ ॥

( त्स ) स वाऽआत्मनऽएवाधि पक्षपुच्छानि चिनोति । ( त्या ) आत्मनो ह्येवाध्यङ्गानि प्ररोहन्त्यथ यत्पुरस्तादर्व्वाचीरुपदध्याद्यथाऽन्यतऽआहृत्याङ्गं प्रतिदध्यात्तादृक्तत् ॥ १५ ॥

---

स तेनैव दक्षिणावृज्जघनेन स्वयमातृण्णां संछादयन्नेत्य—आनूक्यायै । अथ पुनरेत्य तमवधिं संछादयति ॥ १२ ॥

आत्मानमग्रे संछादयति । आत्मा ह्येवाग्रे सम्भवतः सम्भवति । अथ दक्षिणं पक्षम् । अथ पुच्छम् । अथोत्तरम् । तद् दक्षिणावृत् । तद्धि देवत्रा । अथो एवं वा असावादित्य इमाँल्लोकान्दक्षिणावृदनुपर्य्येति ॥ १३ ॥

स एष प्राण एव—यल्लोकम्पृणा । तया सर्वमात्मानं प्रच्छादयति । सर्वस्मिंस्तदात्मन्प्राणं दधाति । तद्यद्धास्यैषाऽङ्गं नाभिप्राप्नुयात्—प्राणो हास्य तदङ्गं नाभिप्राप्नुयात् । यद्व वै प्राणोऽङ्गं नाभिप्राप्नोति—शुष्यति वावैतत्, म्लायति वा । तस्मादेनं सर्वमेवैतया प्रच्छादयेत् ॥ १४ ॥

स वा आत्मन एवाधि पक्षपुच्छानि चिनोति । आत्मनो ह्येवाध्यङ्गानि प्ररोहन्ति । अथ यत्पुरस्तादर्वाचीरुपदध्यात्—यथाऽन्यत आहृत्याङ्गं प्रतिदध्यात्—तादृक् तत् ॥ १५ ॥

---

दशभिर्दशभिर्लोकंपृणाभिः सकृत्प्रयुक्तमन्त्राभिः संछादयन्नेत्यायत्या स्वयमातृण्णायै एवमनन्तरापंक्तीर्यस्य स तेनैव मार्गेण प्रदक्षिणं जघनेन स्वयमातृण्णां संछादयन्नागच्छति यावत्पूर्वम् आनूक्याया अनूकं भवायाः । अथ पुनर्जघनेन स्वयमातृण्णायामेत्य संछादयन्नवधि संछादयन्ननूक्याया एवारभ्य तथाहि प्रदक्षिणं भवति । आत्मानं अग्रे संछादयति इति क्रमवचनम् ॥ १२ ॥ १३ ॥

स एष प्राण इति । 'प्राणः' कायाग्निः ॥ १४ ॥

स वा आत्मन इति । 'आत्मन एवाऽधि पक्षपुच्छानि चिनोति' इत्येतदत्रोच्यते । आहृत्याङ्गमिष्टका उपदध्यादित्यर्थः ॥ १५ ॥

(न्न) न भिन्नां न कृष्णामुपदध्यात् । (द्रा) आर्च्छति वाऽएषा या भिद्यतऽआर्तम्वेतद्रूपं यत्कृष्णं नेदार्तमात्मानमभिसंस्करवाऽइति नाभिन्नां परास्येन्नेदनार्तमात्मनो बहिर्धा करवाणीति धिष्ण्येभ्यः प्रतिसंख्याय या विराजमतिरिच्येरन्नोत्तरामुद्धवेयुस्तद्वै खलु ता ऽआर्च्छन्ति ता भित्त्वोत्करऽउत्किरेदुत्करो वाऽअतिरिक्तस्य प्रतिष्ठा तद्यत्रातिरिक्तस्य प्रतिष्ठा तदेवैना ऽएतत्प्रतिष्ठापयति ॥ १६ ॥

(त्य) अथातऽइष्टकामात्राणामेव । पादमात्रीः प्रथमायां चोत्तमायां च चित्योरुपदध्यात्प्रतिष्ठा वै पादो यो वै पादः स हस्त ऽऊर्वस्थमात्र्यो वर्षिष्ठाः स्युर्न ह्यूर्वस्थात्किंचन वर्षीयोऽस्थ्यस्ति त्र्यालिखितवत्यस्तिस्रश्चितयः स्युस्त्रिवृतो हीमे लोकाऽअपरिमिताऽऽलिखिते द्वे रसो ह्येते

---

न भिन्नां न कृष्णामुपदध्यात् । आर्च्छति वा एषा—या भिद्यते । आर्तम्वेतद्रूपं—यत्कृष्णम् । नेदार्तमात्मानमभिसंस्करवा इति । नाभिन्नां परास्येत् । नेदनार्तमात्मनो बहिर्धा करवाणीति । धिष्ण्येभ्यः प्रतिसङ्ख्याय या विराजमतिरिच्येरन्, नोत्तरामुद्धवेयुः । तद्वै खलु ता आर्च्छन्ति । ता भित्त्वोत्कर उत्किरेत् । उत्करो वा अतिरिक्तस्य प्रतिष्ठा । तद् यत्रातिरिक्तस्य प्रतिष्ठा—तदेवैना एतत्प्रतिष्ठापयति ॥ १६ ॥

अथात इष्टकामात्राणामेव । पादमात्रीः प्रथमायां चोत्तमायां च चित्योरुपदध्यात् । प्रतिष्ठा वै पादः । यो वै पादः । स हस्तः । ऊर्वस्थमात्र्यो वर्षिष्ठाः स्युः । न ह्यूर्वस्थात्किञ्चन वर्षीयोऽस्थ्यस्ति । त्र्यालि-

---

'आर्च्छति' ऋ गतौ धातुः आङ्पूर्वः ऋच्छतिर्नाशे वर्त्तते न विनश्यतीति चैषा या वेष्टका भिद्यते आर्तं च विनष्टं 'उ एतद् रूपम्' तत एवमात्मानमभिसंस्करवै इति न वा परोऽक्षेऽपि तदेतन्मार्गे (मम) मासानामभ्यर्द्धं करवाणीति । कथं तर्ह्यतिरिक्ता इष्टकाः कुर्यादित्येतदाह—आत्मनि अन्नं धीयते आत्मार्थं प्रतिसंख्याय गणयित्वा द्वाभ्यां नासीदिति इष्टकादशको विराडिति (संकालायदोश्च न) कामयेत् न संकल्प्यमानाश्च इष्टका विराजं (दशकमारंभे तवतूत्तरवेदिविराजं चोद्धवेयुर्ये) पुरस्तात् भित्वा उत्किरेत् । ननु चैवं सत्यनार्तमेवायमात्मनो बहिर्धा कुर्यादित्यत आह । तद्वै खलु आर्च्छति तेनैव ते विनश्यन्ति येन विराजं नानुवर्त्तीत्येव वृथा हि सा विराडित्यभिप्रायः ॥ १६ ॥

अथात इष्टकामात्राणामेव पादमात्रीः प्रथमायां चोत्तमायां च चित्योरुपदध्यादिति । विशेषेण यजुष्मतीः लोकंपृणाश्च ताश्च समन्ततः पादमात्रीः समचतुरस्राः पादमात्रीः । अशिरोऽपिहि पादमात्रमेव प्रादेशमात्रत्वादित्येषोऽत्राभिप्रायः । ऊर्वस्थमात्र्यो वृद्धतमाः स्युरन्यास्त्वर्थादतोऽर्वाङ्नैवेत्यभिप्रायः । समचतुरस्रा इत्येषामविशेषात् प्राप्ते क्षेत्रस्याल्पत्वान्नैतानि सङ्ख्यानियतपरिमाणाश्च तत्र पादमात्रीरिति सामर्थ्याद्युचितत्वा-

चितीऽअपरिमित ऽउ वै रसः सर्व्वास्त्वेव त्र्यालिखितवत्यः स्युः सर्व्वे ह्येवेमे लोकास्त्रिवृतः ॥ १७ ॥

( तोऽथा ) अथातऽ इष्टकानामेवावपनस्य । यां कां च यजुष्मतीमिष्टकां विद्यात्तां मध्यमायां चिताऽउपदध्यादन्तरिक्षं वै मध्यमा चितिरन्तरिक्षमु वै सर्व्वेषां भूतानामावपनमथोऽ अन्नं वै यजुष्मत्य ऽइष्टका ऽउदरं मध्यमा चितिरुदरे तदन्नं दधाति ॥ १८ ॥

तदाहुः । ( नों ) नोपदध्यान्नेदतिरेचयानीति स वाऽउपैव दध्यात्कामेभ्यो वाऽएताऽइष्टकाऽउपधीयन्ते न वै कामानामतिरिक्तमस्ति स वै नैवोपदध्यादेतावद्वाऽएतद्देवा ऽअकुर्व्वन् ॥ १९ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ८–४–३ ॥ ( ७. २. ) ॥

---

खितवत्यस्तिस्त्रश्चितयः स्युः । त्रिवृती हीमे लोकाः । अपरिमिताऽऽलिखिते द्वे । रसो हैते चिती । अपरिमित उ वै रसः । सर्वास्त्वेव त्र्यालिखितवत्यः स्युः । सर्वे ह्येवेमे लोकास्त्रिवृतः ॥ १७ ॥

अथात इष्टकानामेवावपनस्य । यां कां च यजुष्मतीमिष्टकां विद्यात्—तां मध्यमायां चिता उपदध्यात् । अन्तरिक्षं वै मध्यमा चितिः । अन्तरिक्षमु वै सर्वेषां भूतानामावपनम् । अथो अन्नं वै यजुष्मत्य इष्टकाः, उदरं मध्यमा चितिः । उदरे तदन्नं दधाति ॥ १८ ॥

तदाहुः—नोपदध्यात्, नेदतिरेचयानीति । स वा उपैव दध्यात् । कामेभ्यो वा एता इष्टका उपधीयन्ते । न वै कामानामतिरिक्तमस्ति । स वै नैवोपदध्यात् । एतावद्वा एतद्देवा अकुर्वन् ॥ १९ ॥

---

त्पादमात्रता च हीयते सा तु केन वा पूरणकारेण चतुरस्रपादभागावतीयापादभागार्द्धपादभागचतुर्भागेषु( ) सर्वे चैवेत्युक्तेर्द्वार्षे ( ) पद्यास्वे तस्य चान्ततः स्वगृहीतासु तद्यतः संगृहीता अपि नैवास्तु पादभागोद्दिष्टाप्येकतः परित्यक्तं तच्चापि हि पादमात्रीत्वं प्रतिहतम् । यथा समिति अवधि प्रादेशमात्रीत्वमेककर्त्त एव निविष्टमिति मन्यमाने ।(इदमेव अवोस्तपक्तं प्रसंगेन प्रतिष्ठा वै पादः ततः किं प्रथमावविति: प्रतिष्ठाते मगस्यां विप्रकृष्टाऽनुरूपाः पादमात्रीरूपवित्यभिप्रायः यद्येवं ततः प्रतिष्ठोमेकायां प्रथमायामेव पादमात्र्यो नैवं तु पंचमी तु शिरः संस्तुता तस्यां किमिति पादमात्र इत्यत आह यो वैषादसहरिस्तुल्यपरिमाणत्वायोत्तरताद्यततः कियद्येवं एतदैवो भवति तदस्थिरः प्रादेशमात्रं प्रादेशहासस्तोहश्चपश्चापादस्तेन शिरोभूतान्यामपि पंचम्यां चितौ युक्त्या एव यामेव लिंगोत्युमेकैकस्य मेते नस्यां विप्रक्तितिष्टानुरूपाः पादमात्रीरूपत्वादित्यभिप्रायः । लोकप्रत्यापुरीषं व्यपधीयते तेन यजुष्मत्यां अपि तदस्तीति व्यपदेक्ष्यते ) ॥ १७ ॥

अथात इति । प्रसन्ने द्वे ॥ १८ ॥ १९ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमे काण्डे सप्तमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ८–७–२ ) ॥

अथ पुरीषं निवपति । माᳬ सं वै पुरीषं माᳬ सेनैवैनमेतत्प्रच्छादय-त्यीष्टकाऽउपधायास्थीष्टकाऽअस्थि तन्माᳬ सैः संछादयति ॥ १ ॥

स वै स्वयमातृण्णायामावपति । प्राणो वै स्वयमातृण्णाऽन्नं पुरीषं प्राणे तदन्नं दधाति तेन सर्व्वमात्मानं प्रच्छादयति तस्माद्यत्प्राणेऽन्नं धीयते तत्सर्व्वमात्मानमवति सर्व्वमात्मानमनुव्येति ॥ २ ॥

न स्वयमातृण्णायामावपेदित्यु हैकऽआहुः । प्राणः स्वयमातृण्णा नेत्प्राणानपिदधानीति स वाऽएव व्वपेदन्नेन वै प्राणा व्विष्टब्धा यो वाऽअन्नं नात्ति सम्वै तस्य प्राणा रोहन्ति तद्यस्य ह तथा कुर्व्वन्ति यथा शुष्का सूर्म्मी सुषिरैवᳬ ह सोऽमुष्मिँल्लोके सम्भवति तस्मात्स्वयमातृण्णायामेव व्वपेत् ॥ ३ ॥

---

### अथ पुरीषनिवपनम् ।

अथ पुरीषं निवपति । मांसं वै पुरीषम् । मांसेनैवैनमेतत्प्रच्छादयति । इष्टका उपधाया । अस्थीष्टकाः । अस्थि तन्मांसैः संछादयति ॥ १ ॥

स वै स्वयमातृण्णायामावपति । प्राणो वै स्वयमातृण्णा । अन्नं पुरीषम् । प्राणे तदन्नं दधाति । तेन सर्वमात्मानं प्रच्छादयति । तस्माद्यत्प्राणेऽन्नं धीयते—तत् सर्वमात्मानमवति, सर्वमात्मानमनुव्येति ॥ २ ॥

न स्वयमातृण्णायामावपेदित्यु हैके आहुः । प्राणः स्वयमातृण्णा । नेत्प्राणानपिदधानीति । स वा एव वपेत् । अन्नेन वै प्राणा विष्टब्धाः । यो वा अन्नं नात्ति—सं वै तस्य प्राणा रोहन्ति । तद् यस्य ह तथा कुर्वन्ति—यथा शुष्का सूर्मी सुषिरा—एवं ह सोऽमुष्मिंल्लोके सम्भवति । तस्मात्स्वयमातृण्णायामेव वपेत् ॥ ३ ॥

---

अथ लोकंपृणायां पञ्चम्यां चितावुपदिष्टमाह—अथेति । 'अथ' लोकंपृणाधानस्यानन्तरं पुरीषं निवपति, अस्यामेव पञ्चम्यां चिताविति गम्यते । तथा च यदेतदूर्ध्वमुपरि पुरीषं सा एषा चितिः । अथ पञ्चमीं चितिमुपधाय पुरीषं निवपतीत्युत्तमायामपि चितौ पुरीषं दृश्यते । न च तस्यान्यद्विधानं किंचन अस्ति यथाऽन्यासु चितिषु पुरीषं निवपति तस्योपरि बन्धुरिति तस्मादुत्तमाया एवायं विधिरथ पुरीषं निवपतीति । मांसं वै पुरीषमित्यादिस्त्वर्थवादसाधारणस्योपरि बन्धुरिति वचनात् । मांसं पुरीषमिष्टकापेक्षया फल्गुत्वाद्वाप्याचलघुत्वात् वाऽप्याल्पत्वाच्चेष्टका उपधाय सर्वास्वेव दर्शनायानुवाद अपीष्टकाकाठिन्यादंत्ययंयोरनन्तरत्वात् ॥ १ ॥

स वै स्वयमातृण्णायामिति । स्वयमातृण्णायाः स्वयमातृण्णादेशे मध्ये सर्वमेव पुरीषं प्रथमं तावदावपति । ततस्तेन सर्वमात्मानं प्रच्छादयति कस्मात्पुनः स्वयमातृण्णायाः प्रदेशो लक्ष्यते । सामर्थ्यादस्यां तावच्चितावपि स्वयमातृण्णोपधीयते । अन्यथा कथं तस्यां पुरीषमोप्येत ? अथ प्रथमतृतीयचितावेतदित्युच्यते । ततः 'तस्योपरि बन्धुः' इत्यनेनार्तवं सर्वविषयप्रत्ययो बाध्येत अपि च तत्रापि स वै स्वयमातृण्णां लोकंपृणया प्रच्छादयतीति प्रच्छन्नायां लोकंपृणायां( सौख्यातपुरीषमशक्यामावापस्तुतस्मादवश्यं ) स्वयमातृण्णादेशमध्ये आवपतीत्येतद-

( त्स्व ) स्वयमातृण्णायामोप्य । (प्या) अनूक्यया संछादयन्नैत्या परिश्रिद्भ्यः स तेनैव दक्षिणावृज्जघनेन स्वयमातृण्णाꣳ संछादयन्नैत्या पुनरनूक्यायै ॥ ४ ॥

( याऽआ ) आत्मानमग्रे संछादयति । ( त्या ) आत्मा ह्येवाग्रे सम्भुवतः सम्भवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा॥५॥

स एषऽप्राण ऽएव यत्पुरीषम् । (न्ते) तेन सर्व्वमात्मानं प्रच्छादयति सर्व्वस्मिंस्तदात्मन्प्राणं दधाति तद्यद्धास्यैतदङ्गं नाभिप्राप्नुयात्प्राणो हास्य तदङ्गं नाभिप्राप्नुयाद्यद्रु वै प्राणोऽङ्गं नाभिप्राप्नोति शुष्यति वावैतन्म्लायति वा तस्मादेनꣳ सर्व्वमेवैतेन प्रच्छादयेत् ॥ ६ ॥

( द्रि ) इन्द्रं विश्वाऽअवीवृधन्निति । ( त्री ) इन्द्रꣳ हि सर्व्वाणि भूतानि व्वर्धयन्ति समुद्रव्यचसं गिरऽइति महिमानमस्यैतदाह रथीतमꣳ रथीनामिति रथितमो ह्येष रथिनां व्वाजानाꣳ सत्पतिं पतिमित्यन्नं वै

---

स्वयमातृण्णायामोप्य, अनूक्यया संछादयन्नैति–आ परिश्रिद्भ्यः । स तेनैव दक्षिणावृज्जघनेन स्वयमातृण्णां संछादयन्नैति–आ पुनरनूक्यायै ॥ ४ ॥

आत्मानमग्रे संछादयति । आत्मा ह्येवाग्रे सम्भवतः संभवति । अथ दक्षिणं पक्षम् । अथोत्तरम् । तद्दक्षिणावृत् । तद्धि देवत्रा ॥ ५ ॥

स एष प्राण एव–यत्पुरीषम् । तेन सर्वमात्मानं प्रच्छादयति । सर्वस्मिंस्तदात्मन् प्राणं दधाति । तद् यद्धास्यैतदङ्गं नाभिप्राप्नुयात्–प्राणो हास्य तदङ्गं नाभिप्राप्नुयात् । यद्व वै प्राणोऽङ्गं नाभिप्राप्नोति–शुष्यति वावैतत्, म्लायति वा । तस्मादेनं सर्वमेतेन प्रच्छादयेत् ॥ ६ ॥

" इन्द्रं विश्वा अवीवृधन् "–इति । इन्द्रं हि सर्वाणि भूतानि वर्धयन्ति । " समुद्रव्यचसं गिरः "–इति । महिमानमस्यैतदाह । " रथीतमं रथीनाम् "–इति । रथितमो ह्येष रथिनाम् । " वाजानां सत्पतिं पतिम् "–( वा. सं. १५ । ६१ ) इति । अन्नं वै वाजाः । अन्नानां

---

म्युपगन्तव्यम् । प्राणो वै स्वयमातृण्णा मध्यवर्त्तित्वात् । अन्नं पुरीषं फलं कामयतीत्यर्थः । मध्ये तथा कुर्वन्ति । स्वयमातृण्णायामावपंति । स यथा शुष्कासु सूर्मीसु ईरिता दीर्घकाष्ठकोष्ठीसु रात्रिः सुषिरैवमस्मिँल्लोके सम्भवति सर्वपुरीषं स्वयमातृण्णादेशे कूटयित्वा अनूक्यया लेख्यया सहितं छन्दाः प्राङ्मुख एव यावत्यः परिश्रितः स तेनैव अनुवाकानुकारेणं दक्षिणावृत्तं छादयंस्तावदेव यावत् सैवाजायेत ॥ २-४ ॥

आत्मानमग्रे संछादयतीति । प्रसन्ने द्वे ॥ ५ ॥ ६ ॥

इन्द्रं विश्वा अवीवृधन्निति । ऐन्द्रमिमं ( पुरीषशरीरमयान्युत्ता मनं सर्वावारिनि ) सामात्मिका वर्द्धयन्त्वित्यनेन मन्त्रार्थो दर्शित इति द्रष्टव्यम् । स इन्द्रं इति वचनात् ॥ ७ ॥

व्वाजाऽ अन्नानाᳬ सत्पतिं पतिमित्येतदैन्द्र्याऽनुष्टुभा निवपत्यैन्द्रᳬ हि पुरीषं तदेतदर्धमग्नेर्यत्पुरीषमर्धमैष्टकम् ॥ ७ ॥

(न्तु) तदाहुः । (र्य) यत्सर्व्वैश्छन्दोभिः सर्व्वाभिर्देवताभिरिष्टका ऽउपदधात्यथैतदेकयैकदेवत्यया निवपति कथमेतदर्धमग्नेरितीन्द्रो वै सर्व्वान्देवान्प्रतिप्रतिस्तद्यदैन्द्र्या निवपति तेनैतदर्धमग्नेरथ यदनुष्टुभा व्वाग्वाऽअनुष्टुब्वाग्घि सर्व्वाणि च्छन्दाᳬसि तेनोऽएवार्धम् ॥ ८ ॥

( मु ) अथ व्विकर्णीं च स्वयमातृण्णां चोपदधाति । व्वायुर्वै व्विकर्णी द्यौरुत्तमा स्वयमातृण्णा व्वायुं च तद्दिवं चोपदधात्युत्तमेऽउपदधात्युत्तमे हि व्वायुश्च द्यौश्च सᳬस्पृष्टे सᳬस्पृष्टे हि व्वायुश्च द्यौश्च पूर्व्वां विकर्णीमुपदधात्यर्व्वाचीनं तद्दिवो व्वायुं दधाति तस्मादेषोऽर्व्वाचीनमेव व्वातः पवते ॥ ९ ॥

---

सत्पतिं पतिमित्येतत् । ऐन्द्र्याऽनुष्टुभा निवपति । ऐन्द्रं हि पुरीषम् । तदेतदर्धमग्नेः—यत्पुरीषम्, अर्धमैष्टकम् ॥ ७ ॥

तदाहुः—यत्सर्वैश्छन्दोभिः सर्वाभिर्देवताभिरिष्टका उपदधाति, अथैतदेकयैकदेवत्यया निवपति, कथमेतदर्धमग्नेरिति । इन्द्रो वै सर्वान्देवान्प्रतिप्रतिः । तद् यदैन्द्र्या निवपति—तेनैव तदर्धमग्नेः । अथ यदनुष्टुभा । वाग्वा अनुष्टुप् । वाग्घि सर्वाणि च्छन्दांसि । तेनो एवार्धम् ॥ ८ ॥

अथ विकर्णीं च स्वयमातृण्णां चोपदधाति । वायुर्वै विकर्णी । द्यौरुत्तमा स्वयमातृण्णा । वायुं च तद्दिवं चोपदधाति । उत्तमे उपदधाति । उत्तमे हि वायुश्च द्यौश्च । संस्पृष्टे । संस्पृष्टे हि वायुश्च द्यौश्च । पूर्वां विकर्णीमुपदधाति । अर्वाचीनं तद्दिवो वायुं दधाति । तस्मादेषोऽर्वाचीनमेव वातः पवते ॥ ९ ॥

---

तदाहुर्यत्सर्वैश्छन्दोभिरिति । "प्रकारे गुणवचनस्य" ( पा. ८ । १ । १२ ) इति प्रतेर्द्विर्वचनं कर्मधारयवद्रूपमेतत्प्रतिप्रतिरिति । गुणवचनत्वं सादृश्ये वक्तव्यम् । इन्द्रः सर्वेषां देवानां सदृशः प्रतिरूपमित्यर्थः ॥ ८ ॥

अथ विकर्णीं चेति । विष्णोः स्थानाकाराश्छिद्राः शर्कराः स्वयमातृण्णाः स्वयंछिद्राः शर्करास्तयोः पुरीषस्योपधानमेताभिस्त्रयोदशभिः कण्डिकाभिः प्रपञ्च्यते । तत्र आद्या-तृतीया द्वादशी त्रयोदशी एताः साधारण्य एव द्वितीयया चतुर्थ्या विकर्ण्या किंचिदुच्यते । शिष्टाभिः स्वयमातृण्णायाः प्रायः ( प्राग्वावेता ) पूर्वं प्रथमां विकर्णीमुपदधाति ॥ ९ ॥

---

१—प्रच्छाद्य पुरीषेण व्विकर्ण्णीयस्वयमातृण्णे शर्करे सँस्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां व्विकर्ण्णीमायोष्ट्वेति स्वयमातृण्णां सङ्ख्यात्ये । का. श्रौ. सू. १७ । २६१-२६२ ।

यद्देव विकर्णीमुपदधाति । यत्र वाऽअदोऽश्वं चितिमवघ्रापयन्ति तदसावादित्य ऽइमाँल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रं वायुः स स यः स वायुरेषा सा विकर्णी तद्यदेतामुपदधात्यसावेव तदादित्यऽ इमाँल्लोकान्त्सूत्रे समावयते ॥ १० ॥

यद्देव विकर्णीं च स्वयमातृण्णां चोपदधाति । ( त्या ) आयुर्वै विकर्णी प्राणः स्वयमातृण्णाऽऽयुश्च तत्प्राणं चोपदधात्युत्तमेऽउपदधात्युत्तमे ह्यायुश्च प्राणश्च सꣳस्पृष्टे सꣳस्पृष्टे ह्यायुश्च प्राणश्च पूर्वामुत्तरां विकर्णीमुपदधात्यायुषा तत्प्राणमुभयतः परिगृह्णाति ॥ ११ ॥

प्रोथदश्वो न यवसे । ( सेऽवि ) अविष्यन्यदा महः संवरणाद्व्यस्थात् । आदस्य वातोऽअनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्तीति यदा वाऽएतस्य वातोऽनुवाति शोचिरथैतस्य व्रजनं कृष्णं भवति त्रिष्टुभोपदधाति

---

यद्देव विकर्णीमुपदधाति । यत्र वा अदोऽश्वं चितिमवघ्रापयन्ति—तदसावादित्य इमांल्लोकान्त्सूत्रे समावयते । तद् यत्तत्सूत्रम्—वायुः सः । स यः स वायुः—एषा सा विकर्णी । तद् यदेतामुपदधाति—असावेव तदादित्य इमांल्लोकान्त्सूत्रे समावयते ॥ १० ॥

यद्देव विकर्णीं च स्वयमातृण्णां चोपदधाति । आयुर्वै विकर्णी, प्राणः स्वयमातृण्णा । आयुश्च तत्प्राणं चोपदधाति । उत्तमे उपदधाति । उत्तमे ह्यायुश्च प्राणश्च । संस्पृष्टे । संस्पृष्टे ह्यायुश्च प्राणश्च । पूर्वामुत्तरां विकर्णीमुपदधाति । आयुषा तत्प्राणमुभयतः परिगृह्णाति ॥ ११ ॥

"प्रोथदश्वो न यवसेऽविष्यन् यदा महः संवरणाद्व्यस्थात् । आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति"—( वा. सं. १५ । ६२ ) इति । यदा वा एतस्य वातोऽनुवाति शोचिरथैतस्य व्रजनं कृष्णं भवति । त्रिष्टुभोपदधाति । त्रैष्टुभो हि वायुः ।

---

यद्देव विकर्णीमिति । 'समावयते' समापूर्वकस्य "वेञ् तन्तुसन्ताने"—( धा. पा. भ्वा. उ. १० ३१ ) इत्येतस्य रूपम् । सूत्रस्योपरि सन्तनोति इत्यर्थः ॥ १० ॥

यद्देव विकर्णीं च स्वयमातृण्णां चेति । 'आयुः' ( स्वयमातृण्णा ) विकर्णी आग्नेयेन मन्त्रेणोपधानात् । उत्तमे ह्यायुश्च प्राणश्चेति सर्वाङ्गे व्याधितेऽपि उत्तमेऽन्तकाले (      ) एवोपसंह्रियत इत्यभिप्रायमेतत् । 'सꣳस्पृष्टे ह्यायुश्चेति' । प्राणाग्न्योरत्यन्तसम्पर्कं दर्शयति—पूर्वां क्रमतः उत्तरां दैवतः । उत्तरपार्श्वे स्वयमातृण्णायाः, विकर्णीमुपदधाति । आयुषाऽग्निना तत्प्राणं वायुमुभयोः पूर्वतः उत्तरतश्च परिगृह्णाति । कायाग्निं परित एव प्राणो मध्ये संचरति इत्यभिप्रायः ॥ ११ ॥

प्रोथदश्व इति । अश्वो यदा तावद्वायुर्व्यस्थात् प्रकाशीभवति । इति दर्शनं तदा योनेः शोचिरधः

त्रैष्टुभो हि वायुराग्नेय्याऽग्निकर्म ह्यनिरुक्तयाऽनिरुक्तो हि वायुरथ यद्वात इत्याह वातो हि वायुः ॥ १२ ॥ ( शतम् ४७०० ) ॥

( ३ ) अथ स्वयमातृण्णामुपदधाति । ( त्या ) आयोष्ट्वा सदने सादयामीत्येष वाऽआयुस्तस्यैतत्सदनमवतऽइत्येष हीदꣳ सर्वमवति च्छायायामित्येतस्य हीदꣳ सर्वं छायायाꣳ समुद्रस्य हृदय ऽइति समुद्रस्य ह्येतद्धृदयꣳ रश्मीवतीं भास्वतीमिति रश्मीवती हि द्यौर्भास्वत्या या द्यां भास्या पृथिवीमोर्व्वन्तरिक्षमित्येवꣳ ह्येष ऽइमाँल्लोकानाभाति ॥ १३ ॥

परमेष्ठी त्वा सादयत्विति । परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यत् ॥ १४ ॥

( ४ ) यद्वेव परमेष्ठिनोपदधाति । प्रजापतिं विस्रस्तं देवताऽ आदाय व्युदक्रामंस्तस्य परमेष्ठी शिर ऽआदायोत्क्रम्यातिष्ठत् ॥ १५ ॥

---

आग्नेय्या अग्निकर्म हि । अनिरुक्तया । अनिरुक्तो हि वायुः । अथ यद्वात इत्याह—वातो हि वायुः ॥ १२ ॥

अथ स्वयमातृण्णामुपदधाति । " आयोष्ट्वा सदने सादयामि "–इति । एष वा आयुः । तस्यैतत्सदनम् । " अवतः "–इति । एष हीदं सर्वमवति । " छायायाम् "–इति । एतस्य हीदं सर्वं छायायाम् । " समुद्रस्य हृदये "–इति । समुद्रस्य ह्येतद्धृदयम् । " रश्मीवतीं भास्वतीम् "–इति । रश्मीवती हि द्यौः, भास्वती । "आ या द्यां भास्या पृथिवीमोर्वन्तरिक्षम् "–( वा० सं० १५ । ६३ ) इति । एवं ह्येष इमांल्लोकानाभाति ॥ १३ ॥

" परमेष्ठी त्वा सादयतु "–इति । परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यत् ॥ १४ ॥

यद्वेव परमेष्ठिनोपदधाति । प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामन् । तस्य परमेष्ठी शिर आदायोत्क्रम्यातिष्ठत् ॥ १५ ॥

---

( अनेन वाविनयस्तामसूपदधाति ) इति मन्त्रार्थः । उपहर्त्तव्यः यदा वायुरग्निः विकर्णीति दर्शनं तदा यस्य प्रोथत् शोचिरधः वाति यस्य च व्रजनं कृष्णं भवति तामहमुपदधामीति ॥ १२ ॥

अथ स्वयमातृण्णामिति । ( स्वयमातृण्णामायुरमादित्ययसाश्वेः तदातद्य) एष आदित्य इदं जगत् सर्वं भवति रक्षति न प्रकाशादिना ह्येतस्य आदित्यस्येति ( इदं सर्वधाययां ) अवननिमित्तं वर्त्तते । तदनु च निसिसस्य वृत्तिः समुद्राद्युदकस्यैतदयं हृदयमिति तत्तु न बहिर्द्यौरिति द्यौः सेयं स्वयमातृण्णा इत्यभिप्रायः । एवं हि सहितानि लोकानि यः सविताऽऽभाति तत्त्वया (        ) भास्वतीमिति मंत्रे द्यौरिष्टकासक्ता कथं ब्राह्मणा । एवं ह्येतदादित्यो विवृत्य नैष दोषः । न हि द्योरिष्टा साऽऽभाति किं तर्हि आदित्यसम्पर्कात् तनू य (        ) दिव इति एवं भाव एव ब्राह्मणरक्षणे दर्शितः । 'ह्येष इमाँल्लोकानाभाति ' तत्संपर्काद्द्यौरिष्टका चेत्यर्थः ॥ १३ ॥

परमेष्ठी त्वेति । षट् प्रसन्नाः ॥ १४–१९ ॥

( त्तु ) तुमब्रवीत् ( डु ) डुप मेहि प्रुति मऽएतुद्धेहि येन मे त्वमुदक्रमी-रिति किं मे तुतो भविष्यतीति त्वद्देवुत्यमेवु मऽएतुदात्मुनो भविष्यतीति तथेति तुदस्मिन्नेतुत्परमेष्ठी प्रत्यदधात् ॥ १६ ॥

( त्तु ) तुद्यैषोत्तमा स्वयमातृण्णा । ( ण्णे ) एतुदस्य तुदात्मुनस्तद्यु-देतामुत्रोपदुधाति युदेवास्यैषाऽऽत्मुनस्तुदस्मिन्नेतत्प्रतिदधाति तुस्मादेता-मत्रोपदधाति ॥ १७ ॥

दिवुस्पृष्ठे व्युचस्वतीं प्रुथस्वतीमिति । दिवो ह्येतुत्पृष्ठं व्युचस्व-त्प्रुथस्वद्दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीरित्यात्मानं यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्येतत् ॥ १८ ॥

(द्वि)विश्वस्मै प्राणायापानाय। व्यानायोदानायेति प्राणो वै स्वयमातृण्णा सुर्व्वस्माऽउ वाऽएतस्मै प्राणुः प्रतिष्ठायै चरित्रायेतीमे वै लोकाः स्वय-मातृण्णाऽइमुऽउ लोकाः प्रतिष्ठा चरित्रꣳ सूर्यस्त्वाऽभिपात्विति सूर्यस्त्वाऽ भिगोपायत्वित्येतुन्मह्या स्वस्त्येति महत्या स्वस्त्येत्येतुच्छिर्दिषा शंत-मेनेति युच्छार्दिः शंतमं तेनेत्येतत् ॥ १९ ॥

( न्ना ) नानोपदधाति । नाना हि व्वायुश्च द्यौश्च सकृत्सादयति समानं

---

तमब्रवीत्—उप मेहि, प्रति म एतद्धेहि, येन मे त्वमुदक्रमीरिति । किं मे ततो भविष्यतीति । त्वद्देवत्यमेव म एतदात्मनो भविष्यतीति । तथेति । तदस्मिन्नेतत् परमेष्ठी प्रत्यदधात् ॥ १६ ॥

तद् यैषोत्तमा स्वयमातृण्णा—एतदस्य तदात्मनः । तद् यदेतामत्रोपदधाति—यदेवास्यैषाऽऽत्मनः—तदस्मिन्नेतत्प्रतिदधाति । तस्मादेतामत्रोपदधाति ॥ १७ ॥

" दिवस्पृष्ठे व्यचस्वतीं प्रथस्वतीम् "—इति । दिवो ह्येतत्पृष्ठं व्यचस्वत्प्रथस्वत् । " दिवं यच्छ, दिवं दृंह, दिवं मा हिंसीः "—इति । आत्मानं यच्छ, आत्मानं दृंह, आत्मानं मा हिंसीरित्येतत् ॥ १८ ॥

" विश्वस्मै प्राणायापानाय व्यानायोदानाय "—इति । प्राणो वै स्वयमातृण्णा । सर्वस्मा उ वा एतस्मै प्राणः । " प्रतिष्ठायै चरित्राय "—इति । इमे वै लोकाः स्वयमातृण्णा, इम उ लोकाः प्रतिष्ठा चरित्रम् । " सूर्यस्त्वाऽभिपातु "—इति । सूर्यस्त्वाऽभिगोपायत्वित्येतत् । " मह्या स्वस्त्या "—इति । महत्या स्वस्त्येत्येतत् । " छर्दिषा शंतमेन "—( वा. सं. १९ । ६४ ) इति । यच्छार्दिः शंतमं तेनेत्येतत् ॥ १९ ॥

नानोपदधाति । नाना हि वायुश्च द्यौश्च । सकृत् सादयति । समानं तत्करोति । समानं ह्यायुश्च

---

स प्राणो विभूत इति । प्राणत्वमतः प्राणकारणत्वात्प्राणः । नान्यस्य तु याव सोधिका ( ) भातः स

तुत्करोति समानॐ ह्युवायुश्च प्राणश्च ते वाऽउभेऽएव शर्क्करे भवतऽउभे स्वयमातृण्णे समानुॐ ह्येवायुश्च प्राणश्चाथैने सूददोहसाऽधिवदति प्राणो वै सूददोहाः प्राणेनैवैनेऽएतत्संतनोति संदधाति ॥ २० ॥

ताऽ अस्य सूददोहस ऽइति । ( त्या ) आपो वै सूदोऽन्नं दोहः सोमॐ श्रीणन्ति पृश्नय इत्यन्नं वै पृश्नि जन्मन्देवानामिति संव्वत्सरो वै देवानां जन्म व्विश ऽइति यज्ञो वै व्विशो यज्ञे हि सर्व्वाणि भूतानि व्विष्टानि त्रिष्वा रोचने दिव ऽइति सवनानि वै त्रीणि रोचनानि सवनान्येतदाहानुष्टुभा व्वाग्वाऽअनुष्टुब्वाग्गु सर्व्वे प्राणा व्वाचा चैवैनेऽएतत्प्राणेन च संतनोति संदधाति सा वाऽएषैका सती सूददोहाः सर्व्वाऽ इष्टका ऽअनुसंचरति प्राणो वै सूददोहास्तस्मादयमेक ऽएव प्राणः सन्त्सर्व्वाण्यङ्गानि सर्व्वमात्मानमनुसंचरति ॥ २१ ॥

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ ८–४–४ ॥ ( ७. ३. ) ॥

---

प्राणश्च । ते वा उभे एव शर्करे भवतः । उभे स्वयमातृण्णे—समानं ह्येवायुश्च प्राणश्च । अथैने सूददोहसाऽधिवदति । प्राणो वै सूददोहाः । प्राणेनैवैने एतत्सन्तनोति, सन्दधाति ॥ २० ॥

" ता अस्य सूददोहसः "–इति । आपो वै सूदः, अन्नं दोहः । " सोमं श्रीणन्ति पृश्नयः "–इति । अन्नं वै पृश्नि । " जन्मन्देवानाम् "–इति । संवत्सरो वै देवानां जन्म । " विशः "–इति । यज्ञो वै विशः । यज्ञे हि सर्वाणि भूतानि विष्टानि । " त्रिष्वा रोचने दिवः "–( वा. सं. १९ । ६० ) इति । सवनानि वै त्रीणि रोचनानि । सवनान्येतदाह । अनुष्टुभा । वाग्वा अनुष्टुप् । वाग्गु सर्वे प्राणाः । वाचा चैवैने एतत्प्राणेन च सन्तनोति, सन्दधाति । सा वा एषैका सती सूददोहाः सर्वा इष्टका अनुसंचरति । प्राणो वै सूददोहाः । तस्मादयमेक एव प्राणः सन् सर्वाण्यङ्गानि, सर्वमात्मानमनुसंचरति ॥ २१ ॥

---

लोकमागता अपस्ता अस्य यजमानस्य या अपः ( १ ) ति प्रापयानि त्रीणि सवनानि तेषु ( प. सूता ) दधामीत्येतस्य समुदायार्थसिद्धयर्थं च पदार्थानाचष्टे । आपो वै तदा तद्दक्षिणकरणे स्यन्दतीति सूदः स्थानसंघातस्तदाह—संघोदकः संघातः कार्याद्यभावेन परिणत उपजीव्यत्वादन्नं वृत्त इति दोहः । तदुदकसंघातो दोहः । कार्यं चासां सूक्ष्माणामुपात्तानां सूददोहस इत्यभिप्रायः । एतदस्य दिवस्पते अन्नं वै पृश्नि प्राप्य नानावर्णं तर्हीवान्नानि अद्यापि पृश्नय इत्यभिप्रायः । संवत्सरो वै यज्ञोत्पन्नानां देवानां तस्माद्धि तद्देवत्यं लभते । विश इति षष्ठी । सवनसम्बन्धजनितारः सवनानीति सवनरोचत इति वचनव्यत्ययं दर्शयति । वाचा चैवैने एतत्प्राणेनेति । सर्वं प्राणानामेव एष स्थितिकारणेन सन्धीयमानत्वात् । ( ) प्राणा हि ता एव भवन्ति ताश्च वाचा वाक्यमुखैः प्राणैः प्राणेनैव मान्यो एकः नैतन्मनः तिर्यक् सूददोहसा

अथ स्वयमातृण्णासु सामानि गायति । (ती) इमे वै लोकाः स्वयमातृण्णास्त एता: शर्करास्ता देवा उपधायैतादृशीरेवापश्यन्यथैताः शुष्काः शर्कराः ॥ १ ॥

(स्ते) तेऽब्रुवन् । (न्नु) उप तज्जानीत यथैषु लोकेषु रसमुपजीवनं दधामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथैषु लोकेषु रसमुपजीवनं दधामेति ॥ २ ॥

ते चेतयमानाः । (ऽ) एतानि सामान्यपश्यंस्तान्यगायंस्तैरेषु लोकेषु रसमुपजीवनमदधुस्तथैवैतद्यजमानो यदेतानि सामानि गायत्येष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ३ ॥

स्वयमातृण्णासु गायति । (ती) इमे वै लोकाः स्वयमातृण्णा एष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ४ ॥

स वै भूर्भुवः स्वरिति । (त्ये) एतासु व्याहृतिषु गायति भूरिति वाऽअयं लोको भुव इत्यन्तरिक्षलोकः स्वरित्यसौ लोकऽएष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ५ ॥

---

अथ स्वयमातृण्णसु सामानि गायति । इमे वै लोकाः स्वयमातृण्णाः । ता एताः शर्कराः । ता देवा उपधायैतादृशीरेवापश्यन्—यथैताः शुष्काः शर्कराः ॥ १ ॥

तेऽब्रुवन्—उप तज्जानीत—यथैषु लोकेषु रसमुपजीवनं दधामेति । तेऽब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । तदिच्छत—यथैषु लोकेषु रसमुपजीवनं दधामेति ॥ २ ॥

ते चेतयमाना एतानि सामान्यपश्यन् । तान्यगायन् । तैरेषु लोकेषु रसमुपजीवनमदधुः । तथैवैतद्यजमानो यदेतानि सामानि गायति—एष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ३ ॥

स्वयमातृण्णासु गायति । इमे वै लोकाः स्वयमातृण्णाः । एष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ४ ॥

स वै "भूर्भुवः स्वः"—इति एतासु व्याहृतिषु गायति । भूरिति वाऽअयं लोकः, भुव इत्यन्तरिक्षलोकः, स्वरित्यसौ लोकः । एष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ५ ॥

---

संदधाति सा वा एषैका सतीति सामान्यो विधिः । अथ त्वायाहि (             ) योन्ते च सर्वत्र विसृष्टो विधिः । किमिति क्लिष्टेन कल्पितेनेति ततस्तस्यायमर्थवादो द्रष्टव्यः ॥ २० ॥ २१ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमेकाण्डे सप्तमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ८–७–३ ) ॥

अथ साम गायतीति वक्तव्ये—स्वयमातृण्णासु सामानि गायतीति पूर्वोक्तोऽप्युपन्यासो ब्राह्मणस्य साधारण्यार्थः । अथ च द्विविधोक्तिः स्वयमातृण्णासामगानस्योत्तरार्थं तु वचनद्वयमिति द्रष्टव्यम् । तदाऽन्तरिक्षलोकं-

---

१.-सत्यसाम गायति । का. श्रौ. सू. । १७ । ७२ ।

तानि वै नानाप्रस्तावानि । समाननिधनानि तानि यन्नानाप्रस्तावानि नाना ह्यपश्यन्नथ यत्समाननिधनान्येका ह्येव यज्ञस्य प्रतिष्ठैकं निधनꣳ स्वर्ग एव लोकस्तस्मात्स्वर्ज्योतिर्निधनानि ॥ ६ ॥

(न्यु)अथैनꣳ हिरण्यशकलैः प्रोक्षति । (त्यु) अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुस्तथैवास्मिन्नयमेतदमृतꣳ रूपमुत्तमं दधाति ॥ ७ ॥

यद्वेवैनꣳ हिरण्यशकलैः प्रोक्षति । ( त्ये ) एतद्वाऽअस्मिन्नदोऽमूं पुरस्ताद्रुम्यां तनूं मध्यतो दधाति रुक्मं च पुरुषं चाथैनमेतत्सर्वमेवोपरिष्टाद्रुम्यया तन्वा प्रच्छादयति ॥ ८ ॥

द्वाभ्यां द्वाभ्याꣳ शताभ्याम् । ( न्द्रि ) द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति

---

तानि वै नानाप्रस्तावानि, समाननिधनानि । तानि यन्नानाप्रस्तावानि—नाना ह्यपश्यन् । अथ यत्समाननिधनानि—एका ह्येव यज्ञस्य प्रतिष्ठा, एकं निधनं स्वर्ग एव लोकः । तस्मात्स्वर्ज्योतिर्निधनानि ॥ ६ ॥

अथैनं हिरण्यशकलैः प्रोक्षति । अत्रैष सर्वोऽग्निः संस्कृतः । तस्मिन्देवा एतदमृतं रूपमुत्तममदधुः । तथैवास्मिन्नयमेतदमृतं रूपमुत्तमं दधाति ॥ ७ ॥

यद्वेवैनं हिरण्यशकलैः प्रोक्षति । एतद्वा अस्मिन्नदोऽमूं पुरस्ताद्रुम्यां तनूं मध्यतो दधाति—रुक्मं च पुरुषं च । अथैनमेतत्सर्वमेवोपरिष्टाद्रुम्यया तन्वा प्रच्छादयति ॥ ८ ॥

द्वाभ्यां द्वाभ्यां शताभ्याम् । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतदमृतं रूपमुत्तमं दधाति । पञ्चकृत्वः । पञ्चचितिकोऽग्निः । पञ्चऽर्तवः सम्वत्सरः ।

---

पृणावाक्येऽप्यस्या ( वेषनीति ) द्रष्टव्यः । प्रसन्नप्रायाश्चैताः षट् कण्डिकाः । 'नाना' पृथग्भूताः प्रस्तावाः येषामिति नानाप्रस्तावानि भूर्भुवः स्वरित्यनेन हि नानाप्रारम्भास्तेषां समानं निधनं समाप्तिः एषामिति समाननिधनानि स्वर्ज्योतिरित्येषा ( एवायमपि चैषामेतानि समाख्यानादध्वर्युः । एवमन्नदमर्दति शेषवचनमुद्रा नास्ति । ) एका ह्येव यज्ञस्य प्रतिष्ठा ( ) प्रतिनिधिः कार्यः तस्याः चितिं प्रयतिष्यामि यतः ( ) तस्मिन्निति च नाकं तु स्वर्ग एव लोकस्तस्मादेतत्स्वर्ज्योतिरित्येतन्निधनानि ॥ १—६ ॥

अथैनं हिरण्यशकलैरिति । प्रसन्नाः चतस्रः ॥ ७—१० ॥

---

१—पुरुषाभिहोमवत् तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्योति प्रतिमंत्रञ्च सहस्रस्येति प्रतिमंत्रम् । का. श्रौ. सू. १५ । २६३ ॥

पञ्चकृत्वः पञ्चचितिकोऽग्निः पञ्चऽर्तवः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति सहस्रेण सर्व्वं वै सहस्रꣳ सर्व्वेणैवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति ॥ ९ ॥

पश्चादग्रे प्राङ्तिष्ठन् । ( न ) अथोत्तरतो दक्षिणाऽथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य दक्षिणतऽ उदङ्तिष्ठंस्तद्दक्षिणावृत्तद्धि देवत्राऽथानुपरीत्य पश्चात्प्राङ्तिष्ठंस्तथो हास्यैतत्प्रागेव कर्म कृतं भवति ॥ १० ॥

सहस्रस्य प्रमाऽसि । सहस्रस्य प्रतिमाऽसि सहस्रस्योन्माऽसि साहस्रोऽसि सहस्राय त्वेति सर्व्वं वै सहस्रꣳ सर्व्वमसि सर्व्वस्मै त्वेत्येतत् ॥ ११ ॥

( द ) अथातश्चितिपुरीषाणामेव मीमाꣳसा । ( साऽयं ) अयमेव लोकः प्रथमा चितिः पशवः पुरीषं यत्प्रथमां चितिं पुरीषेण प्रच्छादयतीमं तल्लोकं पशुभिः प्रच्छादयति ॥ १२ ॥

( त्य ) अन्तरिक्षमेव द्वितीया चितिः । ( व्वं ) व्वयाꣳसि पुरीषं यद्द्वितीयां चितिं पुरीषेण प्रच्छादयत्यन्तरिक्षं तद्वयोभिः प्रच्छादयति ॥ १३ ॥

---

सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवास्मिन्नेतदमृतं रूपमुत्तमं दधाति । सहस्रेण । सर्वं वै सहस्रम् । सर्वेणैवास्मिन्नेतदमृतं रूपमुत्तमं दधाति ॥ ९ ॥

पश्चादग्रे प्राङ् तिष्ठन् । अथोत्तरतो दक्षिणा । अथ पुरस्तात्प्रत्यङ् । अथ जघनेन परीत्य दक्षिणत उदङ् तिष्ठन् । तद्दक्षिणावृत् । तद्धि देवत्रा । अथानुपरीत्य पश्चात्प्राङ् तिष्ठन् । तथो हास्यैतत्प्रागेव कर्म कृतं भवति ॥ १० ॥

"सहस्रस्य प्रमाऽसि, सहस्रस्य प्रतिमाऽसि, सहस्रस्योन्माऽसि, साहस्रोऽसि, सहस्राय त्वा"—( वा. सं. १५ । ६५ ) इति । सर्वं वै सहस्रम् । सर्वमसि सर्वस्मै त्वेत्येतत् ॥ ११ ॥

( १ ) अथातश्चितिपुरीषाणामेव मीमांसा । अयमेव लोकः प्रथमा चितिः । पशवः पुरीषम् । यत्प्रथमां चितिं पुरीषेण प्रच्छादयति—इमं तल्लोकं पशुभिः प्रच्छादयति ॥ १२ ॥

( २ ) अन्तरिक्षमेव द्वितीया चितिः । वयांसि पुरीषम् । यद्द्वितीयां चितिं पुरीषेण प्रच्छादयति—अन्तरिक्षं तद्वयोभिः प्रच्छादयति ॥ १३ ॥

---

सहस्रस्य प्रमाऽसीत्येते पञ्च मन्त्राः ॥ ११ ॥

अथातश्चितिपुरीषाणामिति । सप्तभिरेताभिरेव चितिभिः पुरुषविषयाणि दर्शनान्तराण्युच्यन्ते ॥ १२–१८ ॥

द्यौरेव तृतीया चितिः। (नुं) नक्षत्राणि पुरीषं यत्तृतीयां चितिं पुरीषेण प्रच्छादयति दिवं तन्नक्षत्रैः प्रच्छादयति ॥ १४ ॥

यज्ञऽएव चतुर्थी चितिः। (दुं) दक्षिणाः पुरीषं यच्चतुर्थीं चितिं पुरीषेण प्रच्छादयति यज्ञं तद्दक्षिणाभिः प्रच्छादयति ॥ १५ ॥

यजमानऽ एव पञ्चमी चितिः। प्रजा पुरीषं यत्पञ्चमीं चितिं पुरीषेण प्रच्छादयति यजमानं तत्प्रजया प्रच्छादयति ॥ १६ ॥

स्वर्गऽ एव लोकः षष्ठी चितिः। (दें) देवाः पुरीषं यत्षष्ठीं चितिं पुरीषेण प्रच्छादयति स्वर्गं तल्लोकं देवैः प्रच्छादयति ॥ १७ ॥

(त्य) अमृतमेव सप्तमी चितिः। (स्ता) तामुत्तमामुपदधात्यमृतं तदस्य सर्वस्योत्तमं दधाति तस्मादस्य सर्वस्यामृतमुत्तमं तस्माद्देवाऽ अनन्तर्हितास्तस्मादु तेऽमृताऽ इत्यधिदेवतम् ॥ १८ ॥

(मु) अथाध्यात्मम्। यैवेयं प्रतिष्ठा यश्चायमवाङ्प्राणस्तत्प्रथमा चितिर्मांꣳसं पुरीषं यत्प्रथमां चितिं पुरीषेण प्रच्छादयत्येतदस्य तदात्मनो माꣳसैः संछादयतीष्टका ऽउपधायास्थीष्टकाऽ अस्थि तन्माꣳसैः संछादयति नाधस्तात्संछादयति तस्मादिमे प्राणा ऽअधस्तादसंछन्ना ऽउपरिष्टात्त

(३) द्यौरेव तृतीया चितिः। नक्षत्राणि पुरीषम्। यत्तृतीयां चितिं पुरीषेण प्रच्छादयति—दिवं तन्नक्षत्रैः प्रच्छादयति ॥ १४ ॥

(४) यज्ञ एव चतुर्थी चितिः। दक्षिणाः पुरीषम्। यच्चतुर्थीं चितिं पुरीषेण प्रच्छादयति—यज्ञं तद् दक्षिणाभिः प्रच्छादयति ॥ १५ ॥

(५) यजमान एव पञ्चमी चितिः। प्रजा पुरीषम्। यत्पञ्चमीं चितिं पुरीषेण प्रच्छादयति—यजमानं तत् प्रजया प्रच्छादयति ॥ १६ ॥

(६) स्वर्ग एव लोकः षष्ठी चितिः। देवाः पुरीषम्। यत् षष्ठीं चितिं पुरीषेण प्रच्छादयति—स्वर्गं तल्लोकं देवैः प्रच्छादयाति ॥ १७ ॥

(७) अमृतमेव सप्तमी चितिः। तामुत्तमामुपदधाति। अमृतं तदस्य सर्वस्योत्तमं दधाति। तस्मादस्य सर्वस्यामृतमुत्तमम्। तस्माद्देवा अनन्तर्हिताः। तस्मादु तेऽमृता इत्यधिदेवतम् ॥ १८ ॥

(१) अथाध्यात्मम्—यैवेयं प्रतिष्ठा, यश्चायमवाङ् प्राणः—तत्प्रथमा चितिः। मांसं पुरीषम्। यत्प्रथमां चितिं पुरीषेण प्रच्छादयति—एतदस्य तदात्मनो मांसैः संछादयति। इष्टका उपधाय। अस्थीष्टकाः। अस्थि तन्मांसैः संछादयति। नाधस्तात्संछादयति। तस्मादिमे प्राणा अधस्तादसंछन्नाः। उपरि-

अथाध्यात्मम्। एताभिराध्यात्मिकानि दर्शनान्युच्यन्ते ॥ १९–२१ ॥

प्रच्छादयत्येतदस्य तदात्मनऽ उपरिष्टान्माᳬसैः संछादयति तस्मादस्यैतदात्मनऽ उपरिष्टान्माᳬसैः संछन्नं नावकाशते ॥ १९ ॥

यदूर्ध्वं प्रतिष्ठायाऽअवाचीनं मध्यात्। (२) तद्द्वितीया चितिर्माᳬसं पुरीषं यद्द्वितीयां चितिं पुरीषेण प्रच्छादयत्येतदस्य तदात्मनो माᳬसैः संछादयतीष्टकाऽ उपधायास्थीष्टका ऽअस्थि तन्माᳬसैः संछादयति पुरीषऽउपदधाति पुरीषेण प्रच्छादयत्येतदस्य तदात्मनऽ उभयतो माᳬसैः संछादयति तस्मादस्यैतदात्मन ऽउभयतो माᳬसैः संछन्नं नावकाशते२०

मध्यमेव तृतीया चितिः। (४) यदूर्ध्वं मध्यादवाचीनं ग्रीवाभ्यस्तच्चतुर्थी चितिर्ग्रीवाऽ एव पञ्चमी चितिः शिरऽ एव षष्ठी चितिः प्राणाऽ एव सप्तमी चितिस्तामुत्तमामुपदधाति प्राणांस्तदस्य सर्वस्योत्तमान्दधाति तस्मादस्य सर्वस्य प्राणाऽ उत्तमाः पुरीषऽउपदधाति माᳬसं वै पुरीषं माᳬसेन तत्प्राणान्प्रतिष्ठापयति नोपरिष्टात्प्रच्छादयति तस्मादिमे प्राणाऽ उपरिष्टादसंछन्नाः ॥ २१ ॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ ८॥४–५ ॥ (७. ४.) ॥

इति चतुर्थः प्रपाठकः समाप्तः ॥ ८॥४ ॥ (कण्डिकासंख्या १०९)

इति सप्तमोऽध्यायश्च समाप्तः ॥ ८ ॥ ७ ॥

अस्मिन्काण्डे कण्डिकासंख्या ॥ ४३७ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे चितिनामकमष्टमं काण्डं समाप्तम् ॥ ८ ॥

---

ष्टात् प्रच्छादयति। एतदस्य तदात्मन उपरिष्टान्मांसैः संछादयति। तस्मादस्यैतदात्मन उपरिष्टान्मांसैः संछन्नं नावकाशते ॥ १९ ॥

(२) यदूर्ध्वं प्रतिष्ठायाः, अवाचीनं मध्यात्–तद्द्वितीया चितिः। मांसं पुरीषम्। यद्द्वितीयां चितिं पुरीषेण प्रच्छादयति–एतदस्य तदात्मनो मांसैः संछादयति। इष्टका उपधाय। अस्थीष्टकाः। अस्थि तन्मांसैः संछादयति। पुरीष उपदधाति, पुरीषेण प्रच्छादयति। एतदस्य तदात्मन उभयतो मांसैः संछादयति। तस्मादस्यैतदात्मन उभयतो मांसैः संछन्नं नावकाशते ॥ २० ॥

(३) मध्यमेव तृतीया चितिः (४)। यदूर्ध्वं मध्यादवाचीनं ग्रीवाभ्यः तच्चतुर्थी चितिः। (५) ग्रीवा एव पञ्चमी चितिः। (६) शिर एव षष्ठी चितिः। (७) प्राणा एव सप्तमी चितिः।

तामुत्तमामुपदधाति—प्राणांस्तदस्य सर्वस्योत्तमान्दधाति । तस्मादस्य सर्वस्य प्राणा उत्तमाः । पुरीष उपदधाति । मांसं वै पुरीषम् । मांसेन तत्प्राणान्प्रतिष्ठापयति । नोपरिष्टात्प्रच्छादयति । तस्मादिमे प्राणा उपरिष्टादसंछन्नाः ॥ २१ ॥

## इत्याहवनीयाग्निचयनं समाप्तम् ।

---

* इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्येऽष्टमे काण्डे सप्तमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ८—७—४ ) ॥

इति सप्तमोऽध्यायश्च समाप्तः ॥ ( ८—७ ) ॥

## इति समाप्तमिदमष्टमं चितिकाण्डम् ॥ ८ ॥

---

* अस्मिन्नष्टमे काण्डे आद्ययोर्द्वयोः प्रपाठकयोरर्थादादितश्चतुर्थाध्यायस्य तृतीयब्राह्मणपर्यन्तमेव सायणभाष्यमुपलब्धम् । ततोऽग्रिमं सायणभाष्यं लुप्तप्रायमभूत् तदन्वेषणे प्रयतितव्यं विपश्चिद्भिः । अन्त्ययोर्द्वयोः प्रपाठकयोरर्थाच्चतुर्थाध्यायस्य चतुर्थं ब्राह्मणमारभ्य काण्डसमाप्तिपर्यन्तमेकेन ब्राह्मणेनाधिकस्याध्यायत्रयस्य हरिस्वामिभाष्यमुपलब्धमतस्तदेवात्र संगृहीतम् । परंच तदत्यन्ताशुद्धमस्ति । यदेतद्भाष्यस्यादर्शभूतं पुस्तकद्वयं प्राप्तं तदप्यशुद्धिबहुलम् । परंतु केवलं मूलमात्रसंग्रहापेक्षया सभाष्यस्य संग्रहः प्रशस्त इति मत्वा तादृगपीदं हरिस्वामिभाष्यं यथामति यथाशक्ति संशोध्य संगृहीतमिति ध्येयम् । अस्याशुद्धिविषये विद्वद्भिः क्षन्तव्यम् । एतद्भाष्यस्य शुद्धं पुस्तकान्तरं यदि केषांचन विदुषां सविधे स्यात्तैर्दीयेत चेद्द्वितीयावृत्तौ तत्संयोजयाम इति सविनयं प्रार्थ्यन्ते ते महाभागाः ॥

# इति श्रीशतपथब्राह्मणे सायणभाष्यसमेतम् चितिनामकमष्टमं काण्डं समाप्तम् ।

( तत्र आदितश्चतुर्थाध्यायस्य तृतीयब्राह्मणावध्येव सायणभाष्यमुपलब्धम् । अग्रे चासमाप्ति हरिस्वामिभाष्यं संगृहीतं वर्तते ॥ )

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## नवमं काण्डम् ९ ।

गङ्गाविष्णु श्रीकृष्णदास,

मालिक-" लक्ष्मीवेङ्कटेश्वर " स्टीम्-प्रेस,

कल्याण-बंबई.

संवत् १९९६, शके १८६१.

1939.

# अथ संचितिसंज्ञकं नवमं काण्डं प्रारभ्यते।

## प्रथमोऽध्यायः प्रारभ्यते।

### तत्र प्रथमं ब्राह्मणम्।

### प्रथमप्रपाठके च प्रथमं ब्राह्मणम्।

अथातः शतरुद्रियं जुहोति। (त्यु) अत्रैष सर्व्वोऽग्निः संस्कृतः सऽ एषोऽत्र रुद्रो देवता तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुः स एषोऽत्र दीप्यमानोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा ऽअबिभयुर्यद्वै नोऽयं न हिꣳस्यादिति ॥ १ ॥

तेऽब्रुवन्। (ब्रु) अन्नमस्मै सम्भराम तेनैनꣳ शमयामेति तस्माऽ-

---

अथातः शतरुद्रियं जुहोति। अत्रैष सर्वोऽग्निः संस्कृतः। स एषोऽत्र रुद्रो देवता। तस्मिन्देवा एतदमृतं रूपमुत्तममदधुः। स एषोऽत्र दीप्यमानोऽतिष्ठदन्नमिच्छमानः। तस्माद्देवा अबिभयुः—यद्वै नोऽयं न हिंस्यादिति ॥ १ ॥

तेऽब्रुवन्—अन्नमस्मै सम्भराम, तेनैनं शमयाम—इति। तस्मा एतदन्नं समभरन् शान्तदेवत्यम्।

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

चितीनामुपधानं हि काण्डेऽष्टम उदीरितम्। अथास्मिन्नवमे कर्म संचितस्याभिधास्यते ॥ २ ॥

तत्रादौ तावच्छतरुद्रियहोमं विधत्ते—अथात इति। 'अथ'—शब्देनात्र चित्युपधानपरिसमाप्त्यानन्तर्यं द्योत्यते। 'अतः' इति यतः कारणात्संचितोऽग्निरुपशमनीयः अतो हेतोः, 'शतरुद्रियम्' इति कर्मनामधेयम्; यथा अग्निहोत्रं जुहोतीति 'शतरुद्रियं जुहोति' शतरुद्रियाख्यं होमं भावयेदित्यर्थः। विहितोऽयं होमो रुद्ररूपतापन्नस्याग्नेरुपशमनार्थं इत्याह—अत्रैष इत्यादिना तेनैनं शमयतीत्यन्तेन। 'अत्र' अस्मिन्नवसरे 'एषः' 'अग्निः' साकल्येन 'संस्कृतः' भवति। अतश्च 'सः' 'रुद्रो देवता' यतः कारणाद् 'देवाः' 'तस्मिन्' 'एतत्' चयनलक्षणेन संस्कारेण निष्पन्नम् 'अमृतम्' अत एव 'उत्तमं रूपम्' 'अदधुः' विस्रंसनात्प्राक् यदमृतं रूपमस्ति तस्य विस्रंसनावसरे गतत्वात्तदेव पुनरत्र चयनसंस्कारेणादधुः। 'तस्माद्' 'एषः' अग्निः 'दीप्यमानः' 'अन्नमिच्छमानः' 'अतिष्ठत्'। इच्छमान इति व्यत्ययेन—(पा. सू. ३।१।८५) शानच्। अथवा (पा. सू. ३।२।१२९) शक्यार्थे चानश्प्रत्ययः। तथाविधाद्रुद्राद् 'देवाः' येनोपायेन 'नः' 'अयं न हिंस्यादिति' 'अबिभयुः' इति "सिजभ्यस्तविदिभ्यश्च"—(पा. सू. ३।४।१०९) इति झेर्जुस् ॥ १ ॥

पश्चात् 'ते' देवाः 'अस्मै' रुद्राय 'अन्नं सम्भराम' 'तेनैनं शमयामेति' परस्परमुक्त्वा तथैवाकार्षुः। 'शान्तदेवत्यं' देवताशान्त्यर्थमित्यर्थः। अत एव शमनार्थत्वात् 'तद्' अन्नं 'शान्तदेवत्यम्,' 'तत्' च

एतदन्नꣳ सुमभरञ्छान्तदेवुत्यं तेनैनमशमयंस्तद्यदेतं देवुमेतेनाशमयंस्तुस्माच्छान्तदेवुत्यꣳ शान्तदेवुत्यꣳ ह वै तुच्छतरुद्रियमित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तुथैवास्मिन्नयुमेतुदमृतꣳ रूपमुत्तमं दधाति स ऽएषोऽत्र दीप्यमानस्तिष्ठत्युन्नमिच्छमानस्तुस्माऽएतदुन्नꣳ सुम्भरति शान्तदेवुत्यं तेनैनꣳ शमयति ॥ २ ॥

जर्तिलैर्जुहोति । जायतऽएष ऽएतद्यच्चीयुते सुऽएष सुर्वस्माऽअन्नाय जायतऽउभयम्वेतदुन्नं युज्जर्तिला युच्च ग्राम्यं युच्चारण्यं यदुह तिलास्तेन ग्राम्यं यदकृष्टे पच्युन्ते तेनारण्युमुभयेनैवैनमेतदुन्नेन प्रीणाति ग्राम्येण चारण्येन च ॥ ३ ॥

( चा ) अर्कपर्णेन जुहोति । ( त्यु ) अुन्नमर्कोऽन्नेनैवैनमेतुत्प्रीणाति ॥ ४ ॥

परिश्रित्सु जुहोति । ( त्य ) अग्नय ऽएते युत्परिश्रितस्तुथो हास्यैताऽअग्निमत्येवाहुतयो हुता भवन्ति ॥ ५ ॥

---

तेनैनमशमयन् । तद् यदेतं देवमेतेनाशमयन् । तस्माच्छान्तदेवत्यम् । शान्तदेवत्यं ह वै तच्छतरुद्रियमित्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः । तथैवास्मिन्नयमेतदमृतं रूपमुत्तमं दधाति । स एषोऽत्र दीप्यमानः तिष्ठत्यन्नमिच्छमानः। तस्मा एतदन्नं सम्भरति–शान्तदेवत्यम् । तेनैनं शमयति॥२॥

जर्तिलैर्जुहोति । जायतऽएष एतद्–यच्चीयते । स एष सर्वस्मा अन्नाय जायते । उभयम्वेतदन्नं–यज्जर्तिलाः–यच्च ग्राम्यं, यच्चारण्यम् । यदह तिलाः–तेन ग्राम्यम् । यदकृष्टे पच्यन्ते–तेनारण्यम् । उभयेनैवैनमेतदन्नेन प्रीणाति–ग्राम्येण चारण्येन च ॥ ३ ॥

अर्कपर्णेन जुहोति । अन्नमर्कः । अन्नेनैवैनमेतत्प्रीणाति ॥ ४ ॥

परिश्रित्सु जुहोति । अग्नय एते–यत्परिश्रितः । तथो हास्यैता अग्निमत्येवाहुतयो हुता भवन्ति ॥ ५ ॥

---

देवाः परोऽक्षकामत्वात् ' शतरुद्रियमिति ' अभिदधते, तदन्नसाध्यत्वात्कर्मापि तथैव व्यपदिश्यते । तथा च पूर्वं यथैव ' देवाः ' अकार्षुः ' तथैव ' असावपि यजमानः ' तेन ' अन्नेन ' रुद्रं ' शमितवान् भवति ॥ २ ॥

प्रकृते होमद्रव्यविशेषं विधाय तस्य चोभयविधान्नात्मकत्वाच्चयनसंस्कारे जातरुद्रदैवतोचितरूपत्वेन प्रशंसति–जर्तिलैर्जुहोतीत्यादिना । जर्तिला आरण्यतिलाः । स एष इति । उत्पद्यमानस्य सर्वस्य सर्वभोगार्थमुत्पत्तेः ' स एषः ' अग्निः ' सर्वस्मै ' ' अन्नाय जायते ' सर्वान्नभोगार्थं जायत इत्यर्थः ॥ ३ ॥

साधारण्येन होमसाधनतया जुह्वाः प्राप्तावपवादमाह–अर्कपर्णेनेति । अन्नमर्क इति । अर्कस्य भोग्यप्रपञ्चान्तःपातित्वादन्नत्वम् ॥ ४ ॥

जुहोतीति चोदितत्वेनाहवनीये होमप्रसक्तावाह–परिश्रित्स्विति । ' परिश्रितः ' इति । चितीः परितो

यद्वेवैतच्छतरुद्रियं जुहोति । प्रजापतेर्विस्रस्ताद्देवता ऽउदक्रामंस्तमेकऽ एव देवो नाजहान्मन्युरेव सोऽस्मिन्नन्तर्विततोऽतिष्ठत्सोऽरोदीत्तस्य यान्यश्रूणि प्रास्कन्दंस्तान्यस्मिन्मन्यौ प्रत्यतिष्ठन्त्सऽ एव शतशीर्षा रुद्रः समभवत्सहस्राक्षः शतेषुधिरथ याऽअन्या विप्रुषोऽपतंस्ताऽअसंख्याता सहस्राणीमाँल्लोकाननुप्राविशंस्तद्यद्रुदितात्समभवंस्तस्माद्रुद्राः । सोऽयꣳ शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्वा प्रतिहितायी भीषयमाणोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवाऽअबिभयुः ॥ ६ ॥

( स्ते ) ते प्रजापतिमब्रुवन् । ( न्न ) अस्माद्वै बिभीमो यद्वै नोऽयं न हिꣳस्यादिति सोऽब्रवीदन्नमस्मै सम्भरत तेनैनꣳ शमयतेति तस्माऽएतदन्नꣳ समभरञ्छतरुद्रियं तेनैनमशमयंस्तद्यदेतꣳ शतशीर्षाणꣳ रुद्र-

---

यद्वेवैतच्छतरुद्रियं जुहोति । प्रजापतेर्विस्रस्ताद्देवता उदक्रामन् । तमेक एव देवो नाजहात्—मन्युरेव । सोऽस्मिन्नन्तर्विततोऽतिष्ठत् । सोऽरोदीत् । तस्य यान्यश्रूणि प्रास्कन्दन्—तान्यस्मिन्मन्यौ प्रत्यतिष्ठन् । स एव शतशीर्षा रुद्रः समभवत्—सहस्राक्षः शतेषुधिः । अथ या अन्या विप्रुषोऽपतन्—ता असंख्याता सहस्राणीमाँल्लोकाननुप्राविशन् । तद्यद्रुदितात्समभवन्—तस्माद्रुद्राः । सोऽयं शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिराधिज्यधन्वा प्रतिहितायी भीषयमाणोऽतिष्ठद्—अन्नमिच्छमानः । तस्माद्देवा अबिभयुः ॥ ६ ॥

ते प्रजापतिमब्रुवन्—'अस्माद्वै बिभीमो—यद्वै नोऽयं न हिंस्याद्'—इति । सोऽब्रवीत्—'अन्नमस्मै सम्भरत, तेनैनं शमयत' इति । तस्मा एतदन्नं समभरञ्छतरुद्रियम् । तेनैनमशमयन् । तद्यदेतं

---

निक्षिप्ताः क्षुद्रपाषाणाः । तेष्वयं होमः कर्तव्यः । तेषां चाग्नेः परितः श्रयणादग्नित्वेन 'एताः' 'आहुतयः' 'अग्निमत्येव' प्रदेशे 'हुता भवन्ति' । अत्र कात्यायनः—"शतरुद्रियहोम उत्तरपक्षस्यापरस्याꣳ स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन्निति" ( का. श्रौ. सू. १८ । १ ) इति । अर्ककाष्ठं च दण्डस्थाने करणीयम् ॥ ९ ॥

अथ पुनस्तमेव होमं शतशीर्ष्णः रुद्रस्येतरेषां च रुद्राणामुत्पत्तिप्रकारं दर्शयन् तच्छमनार्थत्वेन प्रशंसति—यद्वेवैतदित्यादिना । 'प्रजापतेः' सकाशाद् विस्रंसनावसरे सर्वासु देवतासु निर्गतास्वपि 'एक एव मन्युर्देवः' तमपरित्यज्य 'तस्मिन् एवान्तर्विततः' 'अतिष्ठत्' पश्चात् 'सः' प्रजापतिः विस्रंसनाद् 'अरोदीत्' रोदनाद् वदनतो 'यान्यश्रूणि प्रास्कन्दन्' अपतन् । तान्यन्तर्वर्तमाने 'मन्यौ' प्रतिष्ठितान्यभूवन् । ततः 'सः' मन्युः शतशीर्षत्वादिगुणको 'रुद्रः' अभूत् 'अथ' ततो ये अश्रुकणा जातास्ते अनेकभूताः पृथिव्यादिलोकान् प्राविशन् । ततश्च ते अनेके रुद्रा जाताः । रोदनाच्च तेषामुत्पत्तेः रुद्रत्वम् । यः पुनः 'शतशीर्षा रुद्रः' अभूत् सः 'प्रतिहितायी' अभिमुखस्थायी 'भीषयमाणः' 'अन्नम्' इच्छन्

मेतेनाशमयंस्तस्माच्छतशीर्षरुद्रशमनीयᳫँ शतशीर्षरुद्रशमनीयᳫँ ह वै तच्छतरुद्रियमित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तथैवास्माऽ-अयमेतदन्नᳫँ सम्भरति शतरुद्रियं तेनैनᳫँ शमयति ॥ ७ ॥

गवेधुकासक्तुभिर्जुहोति । यत्र वै सा देवता व्विस्रस्ताऽशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ८ ॥

( त्य ) अर्कपर्णेन जुहोति । ( त्ये ) एतस्य वै देवस्याशयादर्कः समभवत्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ९ ॥

---

शतशीर्षाणं रुद्रमेतेनाशमयन्–तस्माच्छतशीर्षरुद्रशमनीयम् । शतशीर्षरुद्रशमनीयं ह वै तच्छतरुद्रियमित्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः । तथैवास्मा अयमेतदन्नं सम्भरति शतरुद्रियम् । तेनैनं शमयति ॥ ७ ॥

गवेधुकासक्तुभिर्जुहोति । यत्र वै सा देवता विस्रस्ताऽशयत्–ततो गवेधुकाः समभवन् । स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ८ ॥

अर्कपर्णेन जुहोति । एतस्य वै देवस्याशयादर्कः समभवत् । स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ९ ॥

---

' अतिष्ठत् ' ' तस्माद्देवाः ' ' अबिभयुः ' । भीत्वा च ' प्रजापतिम् ' अपृच्छन् । ततोऽन्नसंभरणैः ' शमयत ' इत्युपदेशं प्राप्य तथैवान्वतिष्ठन् । तच्चान्नं शतशीर्षरुद्रशमनार्थत्वात् ' शतशीर्षरुद्रशमनीयम् ' तच्च परोऽक्षकामत्वाद्देवाः ' शतरुद्रियम् ' इति व्याहरन्ति । अतो यथैव देवाः शतशीर्षाणं रुद्रमशमयन् तथैव ' अयम् ' अपि यजमानः ' एनम् ' ' एतत् ' शतरुद्रियहोमलक्षणेनोपायेन शमितवान् भवति ॥ ६–७ ॥

होमद्रव्यान्तरं विधाय प्रशंसति–गवेधुकासक्तुभिरिति । गवेधुका आरण्यगोधूमास्तेषां पिष्टैः शतरुद्रियं जुहुयात् । ' सा ' प्रजापतिरूपा ' देवता ' यस्मिन् प्रदेशे ' विस्रस्ताऽशयत् ' अशयदिति शेतेर्लङि व्यत्ययेन परस्मैपदं शब्विकरणे च रूपम् । शयितप्रदेशाद्गवेधुका जाता अतः स्वे होमसम्पादने ' स्वेनैव ' ' भागेन ' तस्यैवार्थप्रदर्शनं–स्वेन रसेनेति । स्वकार्येण रसनीयेन ' भागेन ' ' एनं ' प्रीणितवान् भवति । अत्र जर्तिलैर्जुहोति गवेधुकासक्तुभिर्जुहोतीति पृथगेव विहितत्वाद्द्रव्यविकल्पः । अत एवापस्तंबेन सूत्रितम्–" शतरुद्रियं जुहोति जर्तिलयवाग्वा गवेधुकयवाग्वा जर्तिलैर्गवेधुकसक्तुभिः कुशत्रयं–सर्पिषाऽजाक्षीरेण मृगीक्षीरेण वा " इति । यत्पुनरुक्तं कात्यायनेन ' सन्ततं जर्तिलमिश्रान् गवेधुकासक्तून् '–( का. श्रौ. सू. १८ । १ ) इति समुच्चयेन, तच्छाखान्तरानुसारेणोक्तमित्यवगन्तव्यम् ॥ ८ ॥

" अर्कपर्णेन जुहोत्यन्नमर्कः " इत्यनेनैवार्कपर्णं होमसाधनं विहितम्, तदेव पुनरपि प्रकारान्तरेण स्तौति–अर्कपर्णेनेति । आशयो हृदयदेशः ॥ ९ ॥

---

१–अजाक्षीरमेके तिष्ठन्नुदङ्मुखस्त इत्यध्यायेन । इति सूत्रशेषः ।

परिश्रित्सु जुहोति । लोमानि वै परिश्रितो न वै लोमसु विषं न किंचन हिनस्त्युत्तरार्धेऽग्नेरुदङ्तिष्ठञ्जुहोत्येतस्याᳬ ह दिश्येतस्य देवस्य गृहाः स्वायामेवैनमेतद्दिशि प्रीणाति स्वायां दिश्यवयजते ॥ १० ॥

स वै जानुदघ्ने प्रथमᳬ स्वाहाकरोति । ( त्य ) अध ऽइव वै तद्यज्जानुदघ्नमध ऽइव तद्यदयं लोकस्तद्य ऽइमं लोकᳬ रुद्राः प्राविशंस्तांस्तत्प्रीणाति ॥ ११ ॥

( त्य ) अथ नाभिदघ्ने । मध्यमिव वै तद्यन्नाभिदघ्नं मध्यमिवान्तरिक्षलोकस्तद्येऽन्तरिक्षलोकᳬ रुद्राः प्राविशंस्तांस्तत्प्रीणाति ॥ १२ ॥

( त्य ) अथ मुखदघ्ने । ( ग्र ऽ ) उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्यदसौ लोकस्तद्येऽमुं लोकᳬ रुद्राः प्राविशंस्तांस्तत्प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारोऽन्नेनैवैनानेतत्प्रीणाति ॥ १३ ॥

---

परिश्रित्सु जुहोति । लोमानि वै परिश्रितः । न वै लोमसु विषम्, न किंचन हिनस्ति । उत्तरार्धेऽग्नेरुदङ्तिष्ठन् जुहोति । एतस्यां ह दिश्येतस्य देवस्य गृहाः । स्वायामेवैनमेतद्दिशि प्रीणाति, स्वायां दिश्यवयजते ॥ १० ॥

स वै जानुदघ्ने प्रथमं स्वाहाकरोति । अध इव वै तद्—यज्जानुदघ्नम् । अध इव तद्—यदयं लोकः । तद्य इमं लोकं रुद्राः प्राविशन्—तांस्तत् प्रीणाति ॥ ११ ॥

अथ नाभिदघ्ने । मध्यमिव वै तद्—यन्नाभिदघ्नम् । मध्यमिवान्तरिक्षलोकः । तद्येऽन्तरिक्षलोके रुद्राः प्राविशन्—तांस्तत् प्रीणाति ॥ १२ ॥

अथ मुखदघ्ने । उपरीव वै तद्—यन्मुखदघ्नम् । उपरीव तद्—यदसौ लोकः । तद्येऽमुं लोकं रुद्राः प्राविशन्—तांस्तत् प्रीणाति । स्वाहाकारेण । अन्नं वै स्वाहाकारः । अन्नेनैवैनानेतत्प्रीणाति ॥ १३ ॥

---

अर्कपर्णवदेव परिश्रितोऽपि प्रकारान्तरेण स्तौति—परिश्रित्सु जुहोतीति । लोमानि वै परिश्रित इति । लोमानि देहं परितः श्रयन्ति, परिश्रितोऽप्यग्निं परितः श्रयन्तीति 'लोमसु' । 'विषं' नास्ति । लोमसु विषसंस्पृष्टेष्वपि बाधाभावात् । अतश्च लोमात्मकेषु परिश्रित्सु होमाद्रुद्रोऽपि 'न किञ्चन' अपि वस्तु 'हिनस्ति' । 'एतस्यां ह दिश्येतस्य' इत्यादिकस्यायमर्थः—'एतस्य देवस्य' रुद्रस्य 'गृहाः' उत्तरस्यां दिशि भवन्ति, तस्या दिशोऽहिंसात्मकत्वात्, अत 'एतद्' उत्तरार्द्धहोमेन स्वस्यामेव 'दिशि' 'एनं' रुद्रं 'प्रीणाति' तस्यामेव तम् 'अवयजते' पृथक्करोति ॥ १० ॥

“ स वा अशीत्यां च स्वाहाकरोति ” इत्यादिना तिसृष्वशीतिषु स्वाहाकारः क्रियत इत्युपरिष्टाद्वक्ष्यते; तत्र कस्मिन् प्रदेशे स्वाहाकार इति तत्राह—जानुदघ्न इति । 'जानुदघ्ने' जानुप्रमाणदेशे 'सः' अध्वर्युः 'प्रथमं स्वाहाकरोति' । तथा सति जानुदघ्नदेशस्याधोदेशत्वादधःस्थान् पृथिवीं प्रविष्टान् रुद्रानेतेन 'प्रीणाति'।

---

१—त्र्यानुकवाकान्ते स्वाहाकारो जानुमात्रे । का. श्रौ. सू. १८ । २ ।

नमस्ते रुद्र मन्युवऽइति । स ऽएवास्मिन्त्सोऽन्तर्मन्युर्व्विततोऽतिष्ठ-त्तस्माऽएतन्नमस्करोत्युतो तऽइषवे नमो बाहुभ्यामुत ते नमऽ इतीष्वा च हि बाहुभ्यां च भीषयमाणोऽतिष्ठत् ॥ १४ ॥

(त्स) स ऽएष क्षत्त्रं देवः । (वो) यः स शतशीर्षा समभवद्विशऽ इमऽ-इतरे ये विप्रुड्भ्यः समभवंस्तस्माऽएतस्मै क्षत्त्रायैता व्विशऽ एतं पुर-स्तादुद्धारमुदहरन्यऽ एष प्रथमोऽनुवाकस्तेनैनमप्रीणंस्तथैवास्माऽअय-मेतं पुरस्तादुद्धारमुद्धरति तेनैनं प्रीणाति तस्मादेषऽएकदेवत्यो भवति रौद्र ऽएतꣳ ह्येतेन प्रीणाति ॥ १५ ॥

---

" नमस्ते रुद्र मन्यवे "—इति । य एवास्मिन्त्सोऽन्तर्मन्युर्विततोऽतिष्ठत्—तस्मा एतन्नम-स्करोति । " उतो त इषवे नमो, बाहुभ्यामुत ते नमः "—( वा. सं. १६ । १ ) इति । इष्वा च हि बाहुभ्यां च भीषयमाणोऽतिष्ठत् ॥ १४ ॥

स एष क्षत्रं देवो—यः स शतशीर्षा समभवत् । विश इम इतरे—ये विप्रुड्भ्यः समभवन् । तस्मा-एतस्मै क्षत्रायैता विश एतं पुरस्तादुद्धारमुदहरन्—य एष प्रथमोऽनुवाकः—तेनैनमप्रीणन् । तथै-वास्मा अयमेतं पुरस्तादुद्धारमुद्धरति । तेनैनं प्रीणाति । तस्मादेष एकदेवत्यो भवति रौद्रः । एतं ह्येतेन प्रीणाति ॥ १५ ॥

---

एवं ' नाभिदघ्ने ' ' मुखदघ्ने ' च स्वाहाकरोति । ततोऽन्तरिक्षगतान् द्युलोकगतांश्च रुद्रान् प्रीणाति[1]। लोकत्रये पतिता अश्रुकणाः असङ्ख्याता रुद्राः समभवन्निति ( षष्ठ्यां कण्डिकायां ) प्रागुक्तम् । अथ या अन्या इत्यादिना स्वाहाकारस्य हविर्लक्षणान्नप्रदानसाधनत्वेनान्नत्वात्तेन होमविधानेन एनान् रुद्रानेतेन प्रीणितवान् भवतीत्याह—स्वाहाकारेणेति ॥ ११–१३ ॥

अथ प्रथमानुवाकस्य[2] प्रथमामृचं व्याचष्टे—नमस्त इति । ' अस्मिन् ' प्रजापतौ ' सः ' प्रागुक्तः ' य एव ' ' मन्युर्विततोऽतिष्ठत् ' ' तस्मा ' एवैतेन ' नमस्करोति ' । यद्यप्यत्र मन्युरेव शतशीर्षा रुद्रः समभव-दिति मन्युरेव रुद्रः, तथापि रुद्रशब्देनात्र तदाधारत्वेनाभेदात्प्रजापतिरुच्यते । ' इषवे बाहुभ्यां नमः ' इति तैः ' भीषयमाणोऽतिष्ठत् ' इति तेभ्य एव नमस्कारं करोति । मन्युरेव शतशीर्षा रुद्रो भूत्वा इषुणा बाहुभ्यां च सर्वेषां भयमुत्पादयामासेति तन्निबन्धनभयपरिहाराय तेभ्यः सर्वेभ्यो नमस्कारः क्रियते ॥ १४ ॥

' स एष क्षत्रम् ' इत्यादिकस्यायमर्थः । प्रजापते रोदनावसरे ' सः ' मन्युरूपः ' यो देवः ' ' शतशीर्षा ' रुद्रोऽभूत् । ' सः ' एव ' देवः ' ' क्षत्रम् ', ' विप्रुड्भ्यः ' ' ये ' जातास्ते ' इतरे विशः ' ततश्च ' एता विशः ' ' तस्मै ' ' क्षत्राय ' ' य एष प्रथमोऽनुवाकः ' ' एतं पुरस्तादुद्धारं ' भागमब्रुवन्, ' तेन ' भागेन ' एनं ' रुद्रं प्रीणितवन्तः । यथा लोके प्रजा राज्ञे भागं प्रदाय प्रीणयन्ति तद्वत् । अतो यजमानोऽपि तथैव

---

१—पंचांते च नाभिमात्रे । प्राक्च प्रत्यवरोहेभ्यो मुखमात्रे । का. श्रौ. सू. १८ । ३ । ४ ।

२—प्रथमेऽनुवाके " नमस्ते रुद्र मन्यवे " इत्याद्याः–" सदामित्वा हवामहे " इत्यन्ताः षोडश मन्त्रा विज्ञेयाः ॥

चतुर्दशैतानि यजूꣳषि भवन्ति । त्रयोदश मासाः संवत्सरः प्रजापतिश्चतुर्दशः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति नमो नम इति यज्ञो वै नमो यज्ञेनैवैनमेतन्नमस्कारेण नमस्यति तस्माद्ध ह नायज्ञियं ब्रूयान्नमस्तऽइति यथा हैनं ब्रूयाद्यज्ञस्तऽइति तादृक्तत् ॥ १६ ॥

( ड ) अथ द्वन्द्विभ्यो जुहोति । नमोऽमुष्मै चामुष्मै चेति तद्यथा वै ब्रूयादसौ त्वं च न ऽएष च मा हिꣳसिष्टमित्येवमेतदाह नतराꣳ हि विदितऽआमन्त्रितो हिनस्ति ॥ १७ ॥

---

चतुर्दशैतानि यजूंषि भवन्ति । त्रयोदश मासाः संवत्सरः । प्रजापतिश्चतुर्दशः । प्रजापतिरग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतदन्नेन प्रीणाति । नमो नम इति । यज्ञो वै नमः । यज्ञेनैवैनमेतन्नमस्कारेण नमस्यति । तस्माद्ध ह नायज्ञियं ब्रूयाद्–'नमस्ते' इति, यथा हैनं ब्रूयाद्–यज्ञस्ते इति–तादृक् तत् ॥ १६ ॥

अथ द्वन्द्विभ्यो जुहोति । नमोऽमुष्मै चामुष्मै च–इति । तद्यथा वै ब्रूयाद्–असौ त्वं च नः, एष च मा हिंसिष्टमिति, एवमेतदाह । नतरां हि विदित आमन्त्रितो हिनस्ति ॥ १७ ॥

---

तस्य प्रथमानुवाकलक्षणं भागं कृत्वा 'तेनैनं' 'प्रीणाति' प्रथमानुवाकस्य साध्यो होमो रुद्रस्य प्रीतिहेतुः पुरस्ताद्भागः सम्पादितो भवतीत्यर्थः । तस्मादेष इति । यतः 'एषः' अनुवाकः रुद्रस्य 'पुरस्ताद् उद्धारः,' अतः 'एकदेवत्यः' तदेव प्रदर्शितं 'रौद्रः' इति ॥ १९ ॥

प्रथमानुवाके षोडश मन्त्रास्तत्र चतुर्दश मन्त्रानवयुत्य स्तौति–चतुर्दशैतानीति । अधिमासेन सह 'संवत्सरस्त्रयोदश मासाः' 'प्रजापतिः' 'चतुर्दशः' चतुर्दशसंख्यापूरकः । स पुनः 'प्रजापतिः' अग्न्यात्मकः । सोऽग्निरपि चतुर्दशः । तथा च 'अग्निः' यत्परिमाणकः अस्य येऽन्नादयोऽपि यत्परिमाणकाः तत्परिमाणेनैव 'अन्नेन' अग्न्यात्मकं रुद्रं 'प्रीणाति' । चतुर्दशमन्त्रसाध्यहोमलक्षणेनान्नेन अग्न्यात्मकं रुद्रं कार्त्स्न्येन प्रीणातीत्यर्थः । मन्त्रे पौनःपुन्येन 'नमः' शब्दः प्रयुज्यते । स च पूजावचनत्वेन यज्ञात्मकः । ततश्च 'नमो नमः,' इत्यनेन यज्ञरूपेणैव 'नमस्कारेणैनम्' पूजितवान् भवतीत्याह–नमो नमः इति । नमस्यति इति । "नमोवरिवश्चित्रङः क्यच्"–( पा. सू. ३ । १।१९ ) इत्यत्र "नमसः पूजायामिति" वचनात्–पूजार्थे क्यच्प्रत्ययः । तस्माद्ध हेति । यस्मात् 'नमः' शब्दो यज्ञः 'तस्मान्नमस्ते' इत्येतत् 'नायज्ञियं' 'ब्रूयात्' । किन्तु 'यज्ञियं' यज्ञकर्मार्हमेव 'ब्रूयात्' ततश्च 'एनं' रुद्रं यज्ञस्त इति 'ब्रूयात्' 'नमस्त' इत्यपि तद्वदेव ॥ १६ ॥

अथ द्वन्द्विभ्यो होमं विधत्ते–अथेति । "नमो हिरण्यबाहवे" इत्यादिषु मन्त्रेषु प्रतिपाद्या देवता द्वन्द्विनः, तत्र द्वयोर्देवतयोः प्रतिपादनात् । 'दिशां च पतये' इत्येतत् 'हिरण्यबाहवे सेनान्ये' इत्येतयोर्विशेषणम् । एवमुत्तरत्रापि, एकैकस्य विशेषणमन्यत् द्वयोर्द्वयोरेव देवतयोः प्रतिपादनं भवति । 'अमुष्मै

नमो हिरण्यबाहवे । सेनान्ये दिशां च पतये नमऽ इत्येषऽ एव हिरण्यबाहुः सेनानीरेष दिशां पतिस्तद्यत्किं चात्रैकदेवत्यमेतमेव तेन प्रीणाति क्षत्रमेव तद्विश्यपि भागं करोति तस्माद्यद्विशस्तस्मिन्क्षत्रियोऽपि भागोऽथ याऽ असंख्याता सहस्राणीमाँल्लोकानुनुप्राविशन्नेतास्ता देवता याभ्यऽ एतज्जुहोति ॥ १८ ॥

(त्यु) अथ जातेभ्यो जुहोति । (त्ये) एतानि ह जातान्येते रुद्राऽअनुप्रविविशुर्यत्र यत्रैते तदेवैनानेतत्प्रीणात्यथोऽएवं हैतानि रुद्राणां जातानि देवानां वै विधामनु मनुष्यास्तस्माद्ध हेमानि मनुष्याणां जातानि यथाजातमेवैनानेतत्प्रीणाति ॥ १९ ॥

---

"नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः"–(वा. सं. १६ । १७) इति । एष एव हिरण्यबाहुः सेनानीः । एष दिशां पतिः । तद्यत्किंचात्रैकदेवत्यम्–एतमेव तेन प्रीणाति–क्षत्रमेव तद् विश्यपि भागं करोति । तस्माद् यद्विशः–तस्मिन्क्षत्रियोऽपि भागः । अथ या असंख्याता सहस्राणीमान् लोकाननुप्राविशन्–एतास्ता देवताः–याभ्य एतज्जुहोति ॥ १८ ॥

अथ जातेभ्यो जुहोति । एतानि ह जातानि, एते रुद्रा अनु प्रविविशुः । यत्र यत्रैते–तदेवैनानेतत्प्रीणाति । अथो एवं हैतानि रुद्राणां जातानि । देवानां वै विधामनु मनुष्याः । तस्माद्ध हेमानि मनुष्याणां जातानि । यथाजातमेवैनानेतत्प्रीणाति ॥ १९ ॥

---

चामुष्मै चेति ' 'नमो हिरण्यबाहवे' इत्यादिना द्वन्द्विनां निर्देशः । ' यथा ' लोके 'असौ त्वं च एष च' उभावपि नो ' मा हिंसिष्टमिति ' जनो ' ब्रूयात् ' । एवमेवामुष्मा अमुष्मा इत्यनेनाभिहितं भवति । लोके असौ त्वं च एष च नो मा हिंसिष्टम् इत्येवमभिधानस्य प्रयोजनं दर्शयति–नतरां ह हीति । ' विदितो ' ज्ञातो जनः ' आमन्त्रितः ' सन् यथाऽभिधातारं न हिनस्ति, एवमिह ' नतराम् ' ' हिनस्ति ' । ततश्च प्रकृतेऽपि तद्वदेवाभिधानात् रुद्रो न हिनस्तीति भावः ॥ १७ ॥

तानेव देवान् दर्शयति–नमो हिरण्यबाहव इति । ' एष एव ' रुद्र एव ' हिरण्यबाहुः ' ' सेनानीः ' ' दिशां पतिश्च ' । अत उक्तं मन्त्रे–'नमो हिरण्यबाहव' इति । प्रथमानुवाकः शतशीर्षरुद्रदेवत्यः । द्वितीयाद्यनुवाकेष्वपि यत्किञ्चैकदेवत्यमेकवचनान्तमन्त्रसाध्यहोमलक्षणमन्नमस्ति ' तेन ' अपि ' एतमेव ' रुद्रं ' प्रीणाति ' नेतरम्, "स एष क्षत्रं देवः विश इम इतरे" ( श. प. ९।१।१।१५ ) इत्युक्तत्वात् प्रजायामपि तं क्षत्रं भागिनं करोति । तस्माल्लोकेऽपि प्रजाया यद्धनमस्ति तत्रापि क्षत्रियसम्बद्धो ' भागो ' विद्यते । ' वृक्षेभ्यो हरिकेशेभ्यः ' इत्यादिबहुवचनान्तमन्त्रप्रतिपादिताभ्यो याभ्यो देवताभ्य एतद्धोमं करोति ताः पृथिव्यादिलोकान्प्रविष्टा विप्रुड्भ्यो जाता अनेका रुद्रदेवताः बहुवचनान्तमन्त्रसाध्यो होमोऽपि विप्रुड्जातानां रुद्राणामित्यर्थः ॥ १८ ॥

द्वन्द्विहोमानन्तरं जातेभ्यो जुहुयादित्याह–अथेति । "नमः सभाभ्यः सभापतिभ्यः" (वा. सं. १६।२४)–इत्यादिप्रतिपादितानि द्वन्द्विविशेषभूतान्येव जातानि, ' एतानि ' खलु जातान्यनु ' एते ' ' रुद्राः ' ' प्रवि-

तेषां वाऽउभयतोनमस्काराऽ अन्ये । ( न्येऽ ) अन्यतरतोनमस्कारा ऽअन्ये ते ह ते घोरतरा ऽअशान्ततरा यऽउभयतोनमस्काराऽ उभयत ऽएवैनानेतद्यज्ञेन नमस्कारेण शमयति ॥ २० ॥

स वाऽअशीत्यां च स्वाहाकरोति । प्रथमे चानुवाकेऽथाशीत्यामथा-शीत्यां च यानि चोर्ध्वानि यजूꣳष्याऽवतानेभ्योऽन्नमशीतयोऽन्नेनैवैना-नेतत्प्रीणाति ॥ २१ ॥

( त्यु ) अथैतानि यजूꣳषि जपति । नमो वः किरिकेभ्यऽइत्येतद्धास्य

---

तेषां वा उभयतोनमस्कारा अन्ये । अन्यतरतोनमस्कारा अन्ये । ते ह ते घोरतरा अशान्त-तराः—य उभयतोनमस्काराः । उभयत एवैनानेतद्यज्ञेन नमस्कारेण शमयति ॥ २० ॥

स वा अशीत्यां च स्वाहाकरोति । प्रथमे चानुवाके । अथाशीत्याम्, अथाशीत्यां च, यानि चोर्ध्वानि यजूंष्याऽवतानेभ्यः । अन्नमशीतयः । अन्नेनैवैनानेतत्प्रीणाति ॥ २१ ॥

अथैतानि यजूंषि जपति । " नमो वः किरिकेभ्यः "–( वा. सं. १६ । ४६ ) इति ।

---

विशुः' । यत्र यत्रैते 'तत्, तत्र तत्र ' एवैनान् ' ' प्रीणाति' । किंच "एवम् ' ' एतानि रुद्राणां जातानि ' खलु ' देवानां ' ' विधाम् ' प्रकारमनुसृत्य ' मनुष्याः ' भवन्ति । ' तस्माद् ' एतानि ' मनुष्याणाम् ' अपि ' जातानि ' अतो मनुष्यजातेभ्यः ' एव ' होमे सति देवजातेभ्योऽपि स्यादिति ' यथा जातम् ' एव ' एनान् ' सर्वान् रुद्रान् ' प्रीणाति ' ॥ १९ ॥

तेषां मन्त्राणां मध्ये केचन उभयतोनमस्काराः केचनान्यतरतोनमस्कारा इति तद्वैषम्ये कारणमाह—तेषां वा इति ॥ २० ॥

अन्यत्र सर्वत्र होमे प्रतिमन्त्रद्रव्यप्रक्षेपं स्वाहाकार इत्यत्रापि तथैव प्राप्तावाह—स वा इति । ' सः वै ' अध्वर्युर्मन्त्राणाम् ' अशीत्यां ' तत् ' स्वाहाकरोति ' । तत्र ' प्रथमानुवाके ' षोडश मन्त्राः, तेषां सर्वेषामन्ते सकृत्स्वाहाकारः । " अथ नमो हिरण्यबाहवे " ( वा. सं. १६ । १७ ) इत्यारभ्य " अर्भकेभ्यश्च वो नमः " ( वा. सं. १६ । २६ ) इत्यन्तमेका अशीतिः सम्पद्यते । एकैकस्यां कण्डिकायामष्टावष्टौ मन्त्राः । " दिशां च पतये नमः " इत्यादिकं विशेषणतया सम्बन्धनीयमिति ( श. प. ९ । १ । १ । १७ भाष्ये ) प्रागेवोक्तम् । तथा च दशसु कण्डिकासु मन्त्राणामशीतिः सम्पद्यते । " नमस्तक्षभ्यः " ( वा. सं. १६ । २७ ) इत्यारभ्य " सुधन्वने च " ( वा. सं. १६ । ३६ ) इत्यन्तमेका—अशीतिः सम्पद्यते । पुनः " नमः स्रुत्याय " ( वा. सं. १६ । ३७ )–इत्यारभ्य " धनुष्कृद्भ्यश्च वो नमः " ( वा. सं. १६ । ४६ ) इत्यन्त-मेका—अशीतिः सम्पद्यते । एतस्या अशीत्याः ' ऊर्ध्वानि ' अवतानसंज्ञेभ्यः पूर्वाणि ' यानि च यजूंषि ' सन्ति, एतच्चोत्तरत्र विनियोगाय प्रतिनिर्देष्टुं व्याख्यातम् । अत्राशीत्यां स्वाहाकरोति । यानि चोर्ध्वानि—चेति यदुभयं निर्दिष्टमत्राशीर्ति प्रशंसति—अन्नमशीतय इति । अशीति—शब्दे अशिधातुस्मरणादन्नत्वम् । अशीतिषु स्वाहाकारे ' अन्नेनैवैनान् ' रुद्रान् प्रीणाति ॥ २१ ॥

अथ यानि चेति निर्दिष्टानां विनियोगमाह—अथैतानीति । ' एतद्धास्य ' इत्यादिकस्यायमर्थः ।

प्रतिज्ञाततमं धाम यथा प्रियो वा पुत्रो हृदयं वा तस्माद्यत्रैतस्माद्देवा-च्छङ्केत तदेताभिर्व्याहृतिभिर्जुहुयादुप हैवैतस्य देवस्य प्रियं धाम गच्छति तथो हैनमेष देवो न हिनस्ति ॥ २२ ॥

नमो वः किरिकेभ्य ऽइति । ( त्ये ) एते हीदꣳ सर्वं कुर्वन्ति देवा-नाꣳ हृदयेभ्य ऽइत्यग्निर्वायुरादित्य ऽएतानि ह तानि देवानाꣳ हृद-यानि नमो विचिन्वत्केभ्य ऽइत्येते हीदꣳ सर्वं विचिन्वन्ति नमो विक्षि-णत्केभ्य ऽइत्येते वै तं विक्षिणन्ति यं विचिक्षीषन्ति नम ऽआनिर्हतेभ्य ऽइत्येते ह्येभ्यो लोकेभ्यो निर्हताः ॥ २३ ॥

---

एतद्वा अस्य प्रतिज्ञाततमं धाम । यथा प्रियो वा, पुत्रो, हृदयं वा । तस्माद्यत्रैतस्माद्देवाच्छ-ङ्केत—तदेताभिर्व्याहृतिभिर्जुहुयात् । उप हैवैतस्य देवस्य प्रियं धाम गच्छति । तथो, हैनमेष देवो न हिनस्ति ॥ २२ ॥

नमो वः किरिकेभ्यः—इति । एते हीदं सर्वं कुर्वन्ति । " देवानां हृदयेभ्यः "—( वा. सं. १६ । ४६ ) इति । अग्निर्वायुरादित्यः,—एतानि ह तानि देवानां हृदयानि । " नमो विचिन्वत्केभ्यः "—( वा. सं. १६ । ४६ ) इति । एते हीदं सर्वं विचिन्वन्ति । " नमो विक्षिणत्केभ्यः "—( वा. सं. १६ । ४६ ) इति । एते वै तं विक्षिणन्ति—यं विचिक्षीषन्ति । " नम आनिर्हतेभ्यः "—( वा. सं. १६ । ४६ ) इति । एते ह्येभ्यो लोकेभ्यो निर्हताः ॥ २३ ॥

---

' यथा प्रियः पुत्रो हृदयं वा प्रतिज्ञाततमम्,' अभिमतं ' धाम ' स्थानम्, तद्वदेतन्मन्त्रचतुष्टयमपि प्रियं 'धाम' ' तस्माद्यत्रैतस्माद्देवाद् ' रुद्राच्छङ्कितो भवति 'तद्' ' एताभिर्व्याहृतिभिर्जुहुयात् ' । तथा चैतस्य रुद्रस्य ' प्रियं धाम ' एव प्राप्नोतीति स ' देवः ' पश्चाद् ' एनं ' ' न हिनस्ति ' इति ॥ २२ ॥

मन्त्रान् क्रमेण व्याचष्टे—नमो वः किरिकेभ्य इति । ' एते हि ' रुद्राः ' इदं सर्वम् ' अपि जगत् ' कुर्वन्ति ' एतेषां प्रजापत्यश्रुकणनिष्पन्नत्वेन प्रजापत्यात्मकत्वात् । अत एते किरिकाः कर्त्तारस्ततस्तादृशेभ्यो वो नमोऽस्त्विति मन्त्रार्थः । अग्निर्वायुरिति । ' अग्निर्वायुरादित्यः ' इति ' एतानि ' ' देवानां हृदयानि ' । यथा हृदयं प्रधानं तथैवैते प्रधानानीत्यर्थः । अतस्तदात्मकेभ्यो रुद्रेभ्यो ' नमः ' इत्यर्थः । अत्राग्निवाय्वादित्य-प्रकाशमन्त्रसाहित्येनैतेषां मन्त्राणां व्याहृतिशब्देनाभिधानम् ( श. प. ९ । १ । १ । २२ ) । किंच यद्देवानां हृदयानीति तत्प्रकाशकानामपि मन्त्राणां हृदयत्वम्, तस्मात्तदभिप्रायेण " एतद्वास्य प्रतिज्ञाततमं धाम यथा प्रियो वा पुत्रो हृदयं वा " ( श. प. ९ । १ । १ । २२ ) इत्युक्तम् । विचिन्वन्त एव विचिन्वत्काः ' एते ' रुद्राः ' इदं सर्वं विचिन्वन्ति ' अभ्यवहारार्थम्, अतस्तत्परिहाराय तेभ्यो ' नमः ' इत्याह । विक्षिण्वन्त एव विक्षिणत्काः ' एते ' रुद्राः ' यं ' विक्षीणं कर्तुमिच्छन्ति तं ' विक्षिणन्ति ' । अतश्च तेभ्यो नमोऽस्तु । ' निर्हताः ' निर्गताः, तत्र विशीर्णेभ्योऽश्रुकणेभ्यस्तदुत्पत्तेः । अतः 'आनिर्हतेभ्यः' रुद्रेभ्यो नम इत्याह ॥ २३ ॥

( ८ ) अथोत्तराणि जपति । द्रापेऽअन्धसस्पतऽइत्येष वै द्रापिरेष वै तं द्रापयति यं दिद्रापयिषत्यन्धसस्पतऽइति सोमस्य पतऽइत्येतद्दरिद्र नीललोहितेति नामानि चास्यैतानि रूपाणि च नामग्राहमेवैनमेतत्प्रीणात्यासां प्रजानामेषां पशूनां मा भेर्मा रोङ्मो च नः किं चनाममदिति यथैव यजुस्तथा बन्धुः ॥ २४ ॥

सऽएष क्षत्रं देवः । ( स्तु ) तस्माऽएतस्मै क्षत्रायैता विशोऽमुं पुरस्तादुद्धारमुदहरन्योऽसौ प्रथमोऽनुवाकोऽथास्माऽएतमुपरिष्टादुद्धारमुदहरंस्तेनैनमप्रीणंस्तथैवास्माऽ अयमेतमुपरिष्टादुद्धारमुद्धरति तेनैनं प्रीणाति तस्मादप्येषऽ एकदेवत्यो भवति रौद्रऽ एवैतꣳ ह्येवैतेन प्रीणाति ॥ २५ ॥

सप्तैतानि यजूꣳषि भवन्ति । सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः

---

अथोत्तराणि जपति । " द्रापेऽअन्धसस्पते "-इति । एष वै द्रापिः । एष वै तं द्रापयति-यं दिद्रापयिषति । अन्धसस्पतऽइति । सोमस्य पत इत्येतत् । " दरिद्र नीललोहित "-इति । नामानि चास्यैतानि रूपाणि च । नामग्राहमेवैनमेतत्प्रीणाति । " आसां प्रजानामेषां पशूनां मा भेर्मा रोङ्मो च नः किं चनाममत् "-( वा० सं० १६ । ४७ ) इति । यथैव यजुस्तथा बन्धुः ॥ २४ ॥

स एष क्षत्रं देवः । तस्मा एतस्मै क्षत्रायैता विशोऽमुं पुरस्तादुद्धारमुदहरन्-योऽसौ प्रथमोऽनुवाकः । अथास्मा एतमुपरिष्टादुद्धारमुदहरन् । तेनैनमप्रीणन् । तथैवास्मा अयमेतमुपरिष्टादुद्धारमुद्धरति । तेनैनं प्रीणाति । तस्मादप्येष एकदेवत्यो भवति-रौद्र एव । एतं ह्येवैतेन प्रीणाति ॥ २५ ॥

सप्तैतानि यजूंषि भवन्ति । सप्तचितिकोऽग्निः। सप्तर्तवः सम्वत्सरः। सम्वत्सरोऽग्निः। यावानग्निर्या-

---

व्याहृतिहोमानन्तरमुत्तराणि यजूंषि जपेदित्याह-अथेति । तत्र प्रथमं मन्त्रं व्याचष्टे-एष वा इति । 'यं' जनं 'दिद्रापयिषति' कुत्सितं कर्तुमिच्छति 'तं' तथैव करोति । अत एव 'एषः' रुद्रो 'द्रापिः' । अन्धः-शब्देन सोमलक्षणमन्नं विवक्षितमित्याह-सोमस्येति । दरिद्र नीललोहितेति 'एतानि' 'अस्य' रुद्रस्य 'नामानि च रूपाणि च' भवन्तीति तस्य नाम गृहीत्वा 'एव' 'एनं' रुद्रं प्रीणितवान् भवतीत्याह-दरिद्रेति । 'आसां प्रजानामेषां पशूनाम्' इत्येष मन्त्रभागः स्पष्टार्थ इत्याह-यथैवेति ॥ २४ ॥

असङ्ख्यातरुद्ररूपाः 'विशः' शतशीर्षरुद्ररूपाय 'क्षत्राय' प्रथमानुवाकं 'पुरस्तादुद्धारमुदहरन्' । अथ " द्रापे अन्धसस्पते " इत्येतमनुवाकम् 'उपरिष्टादुद्धारम्' उद्धृत्य तम् 'अप्रीणन्' । 'तथैव' यजमानोऽप्येतदनुवाकजपेन कृतवान् भवतीत्याह-स एष इत्यादिना । यतोऽस्य रुद्रस्यैकोऽनुवाक उद्धारः कृतस्तस्मात् स रुद्रः 'एकदेवत्यः' इत्याह-तस्मादिति ॥ २५ ॥

एतस्मिन्ननुवाके यजुर्गता सप्तत्वसङ्ख्या कार्त्स्न्येन तृप्तिहेतुर्भवतीत्याह-सप्तैतानीति । 'सप्तचितिकोऽग्निः'

संव्वत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तान्युभयान्येकविᳬशतिः सम्पद्यन्ते द्वादश मासाः पञ्चऽर्त्तवस्त्रय ऽइमे लोकाऽ असावादित्यऽ एकविᳬशऽएतामभिसम्पदम् ॥ २६ ॥

( म ) अथावतानाञ्जुहोति । ( त्ये ) एतद्वाऽएनान्देवा ऽएतेनान्नेन प्रीत्वाऽथैषामेतैरवतानैर्धनूᳬष्यवातन्वंस्तथैवैनानयमेतदेतेनान्नेन प्रीत्वाऽथैषामेतैरवतानैर्धनूᳬष्यवतनोति न ह्यवततेन धनुषा कं चन हिनस्ति ॥ २७ ॥

तद्वै सहस्रयोजनऽइति । ( त्ये ) एतद्ध परमं दूरं यत्सहस्रयोजनं तद्य-देव परमं दूरं तदेवैषामेतद्धनूᳬष्यवतनोति ॥ २८ ॥

---

वत्यस्य मात्रा–तावतैवैनमेतदन्नेन प्रीणाति । तान्युभयान्येकविंशतिः सम्पद्यन्ते । द्वादश मासाः, पञ्चर्तवः, त्रय इमे लोकाः, असावादित्य एकविंशः–एतामभिसम्पदम् ॥ २६ ॥

अथावतानाञ्जुहोति । एतद्वा एनान्देवा एतेनान्नेन प्रीत्वाऽथैषामेतैरवतानैर्धनूंष्यवातन्वन् । तथैवैनानयमेतत् एतेनान्नेन प्रीत्वाऽथैषामेतैरवतानैर्धनूंष्यवतनोति । न ह्यवततेन धनुषा कं चन हिनस्ति ॥ २७ ॥

तद्वै–" सहस्रयोजनः "–( वा० सं० १६।५४ ) इति । एतद्ध परमं दूरं–यत्सहस्रयोजनम् । तद् यदेव परमं दूरं तदेवैषामेतद्धनूंष्यवतनोति ॥ २८ ॥

---

इत्यनेनैकेन प्रकारेणाग्नेः सप्तत्वसङ्ख्यासम्बन्ध उक्तः । 'सप्तर्तवः संवत्सरः' 'संवत्सरोऽग्निः' इत्यन्येन प्रकारेण सप्तत्वसङ्ख्यायोगित्वं प्रदर्श्यते । अधिमासापेक्षया संवत्सरे सप्तर्तवो भवन्ति । प्रथमानुवाके एत-स्मिन्ननुवाके च मिलिता या यजुःसङ्ख्या तामिदानीं प्रशंसति–तान्युभयानीति । 'चतुर्दशैतानि यजूंषि भवन्ति' ( श. प. ९।१।१।१६ ) इति तत्रोक्तत्वात्, तानि चतुर्दश, अत्रत्यानि सप्त च मिलित्वा उभयान्यपि 'एक-विंशतिः' 'सम्पद्यन्ते' । सा चैकविंशतिसङ्ख्या 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इति यैषा सङ्ख्या सम्पत्तिस्तामभिलक्ष्य भवति, तथाविधा सङ्ख्यासम्पत्तिरत्र सम्पादिता भवतीत्यर्थः ॥ २६ ॥

अथावतानाख्यान्होमान्कुर्यादित्याह–अथेति । " सहस्राणि सहस्रशः " इत्यादिमन्त्रसाध्यहोमा अवतानाः । तेषामवतन्यन्ते अवरोह्यन्ते धनूंष्येभिरित्युपदिशति तत्संज्ञाम् । तेषामुक्तमेवार्थं प्रयोजनतया दर्शयति–एतद्वा इति । धनूंष्यवातन्वन्निति । आरोपितानि धनूंष्यवरोपितवन्त इत्यर्थः । 'न ह्यवततेन' इत्यनेन अवरोपणस्य प्रयोजनमहिंसनं दर्शितम् ॥ २७ ॥

मन्त्रेषु सहस्रयोजनपदप्रयोगात् परमे दूरे धनुषामवरोपणं कृतं भवतीत्याह–तद्वा इति ॥ २८ ॥

यद्वेवाह सहस्रयोजनऽइति । ( त्य ) अयमग्निः सहस्रयोजनं न ह्येतस्मादिति नेत्यन्यत्परमस्ति तद्यदग्नौ जुहोति तदेवैषाᳬ सहस्रयोजने धनूᳬष्यवतनोति ॥ २९ ॥

(त्यु) असंख्याता सहस्राणि । (ण्य) अस्मिन्महत्यर्णवऽइति यत्र यत्र ते तदेवैषामेतद्धनूᳬष्यवतनोति ॥ ३० ॥

दशैतानवतानाञ्जुहोति । दशाक्षरा विराड् विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणाऽ अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैषामेतद्धनूᳬष्यवतनोति ॥ ३१ ॥

---

यद्वेवाह—सहस्रयोजन इति । अयमग्निः सहस्रयोजनम् । न ह्येतस्मादिति । नेत्यन्यत्परमस्ति । तद् यदग्नौ जुहोति । तदेवैषां सहस्रयोजने धनूंष्यवतनोति ॥ २९ ॥

“ असंख्याता सहस्राणि, अस्मिन्महत्यर्णवे ”—( वा. सं. १६ । ५४, ५५ ) इति । यत्र यत्र ते—तदेवैषामेतद्धनूंष्यवतनोति ॥ ३० ॥

दशैतानवतानाञ्जुहोति । दशाक्षरा विराट् । विराडग्निः । दश दिशः । दिशोऽग्निः । दश प्राणाः । प्राणा अग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैषामेतद्धनूंष्यवतनोति ॥ ३१ ॥

---

अथाग्नेः सहस्रयोजनत्वादग्नौ होमेन सहस्रयोजन एव धनुषामवरोपणं भवतीत्याह—यद्वेवेति । ‘ अयमग्निः ’ ‘ सहस्रयोजनम् ’ इत्येतदेवोपपाद्यते—न ह्येतस्मादितीति । एतद्व्यतिरिक्तम् ‘ अन्यत् ’ किञ्चिदपि वस्तु ‘परम्’ अधिकं ‘नास्ति’ । तस्याग्नेः प्रजापत्यात्मकत्वेन सर्वाधिकत्वात् । अतश्चाग्नेः सहस्रयोजनत्वेन तत्र होमे सहस्रयोजन एव धनुषामवरोपणं सम्पादितवान् भवति ॥ २९ ॥

मन्त्रे ‘असंख्याता सहस्राणि, अस्मिन्महत्यर्णवे’ इत्येतत्पदप्रयोगस्याभिप्रायमाह—असंख्यातेति । ‘यत्र यत्र’ स्थाने ‘ ते ’ एते भवन्ति, तत्र तत्रैवैतेषामेतेन ‘ धनूंषि ’ अवरोपयति । अर्णव—शब्देन पृथिव्यादयो लोका विवक्ष्यन्ते, तस्य च ‘ महति ’ इत्यनेन कार्त्स्न्यं विवक्ष्यते । एवं च पृथिव्यादिषु लोकेषु सर्वत्र “ असंख्याता सहस्राणि ’ अपरिमितसहस्रसंख्याका एते रुद्रा अवतिष्ठन्ते । तेषां सर्वेषामेव धनुषामवरोपणं सिद्ध्यतीति यत्र यत्रैते रुद्रास्ते तत्र सर्वत्र असंख्याता इत्येतद्वचनेन रुद्राणां धनूंष्यवरोपितवान्भवतीत्युक्तम्॥ ३० ॥

विहितानामवतानानां होमानां संख्याविशेषं विधाय प्रशंसति—दशैतानवतानान् जुहोतीति । विराडग्निरिति । षष्टिश्च त्रीणि च शतानि यजुष्मत्य इष्टका उपधीयन्ते, ताश्च षट्त्रिंशद्दशकानि भवन्ति । अतश्चैवं दशसंख्यायोगादग्नेर्विराट्त्वम्, ऊर्ध्वाधोदिग्भिः सह दिशां दशत्वम् । अग्नेरत्र दिगात्मकत्वं सर्वदिग्व्यापकत्वात् । मुखे सप्त प्राणाः, अधः पायूपस्थौ द्वौ, नाभिर्दशमीति ‘ दश प्राणाः ’ । प्राणानां च सूत्रात्मकत्वाद् ‘ अग्निः ’ प्राणात्मकः । एवं च सत्यवतानानां दशत्वेनाग्न्यात्मकानां रुद्राणां यावत्परिमाणं ‘ तावतैव ’ एतानि ‘ धनूंषि ’ अवरोपयति । साकल्येन सर्वेषां धनुरवरोपणं कृतं भवतीति भावः ॥ ३१ ॥

( त्यु ) अथ प्रत्यवरोहाञ्जुहोति । ( त्ये ) एतद्वाऽएतदिमाँल्लोकानितुऽ ऊर्ध्वो रोहति स स पराङिव रोहऽइयमु वै प्रतिष्ठा ते देवाऽइमां प्रतिष्ठामभिप्रत्यायंस्तथैवैतद्यजमान ऽइमां प्रतिष्ठामभिप्रत्यैति ॥ ३२ ॥

यद्वेव प्रत्यवरोहति । ( त्ये ) एतद्वाऽएनानेतत्प्रीणन्नन्ववैति तत ऽएवैतदात्मानमपोद्धरते जीवात्वै तथो हानेनात्मना सर्व्वमायुरेति ॥ ३३ ॥

यद्वेव प्रत्यवरोहति । ( त्ये ) एतद्वाऽएतदेतान्रुद्रानितुऽ ऊर्ध्वान्प्रीणाति तान्पुनरमुतोऽर्व्वाचः ॥ ३४ ॥

---

अथ प्रत्यवरोहाञ्जुहोति । एतद्वाएतदिमाँल्लोकानित ऊर्ध्वो रोहति । स स पराङिव रोहः । इयमु वै प्रतिष्ठा । ते देवा इमां प्रतिष्ठामभिप्रत्यायन् । तथैवैतद्यजमान इमां प्रतिष्ठामभिप्रत्यैति॥ ३२॥

यद्वेव प्रत्यवरोहति । एतद्वा एनानेतत्प्रीणन्नन्ववैति । तत एवैतदात्मानमपोद्धरते—जीवात्वै । तथो हानेनात्मना सर्वमायुरेति ॥ ३३ ॥

यद्वेव प्रत्यवरोहति । एतद्वा एतदेतान्रुद्रानित ऊर्ध्वान्प्रीणाति । तान्पुनरमुतोऽर्वाचः ॥ ३४ ॥

---

अवतानहोमानन्तरं प्रत्यवरोहान् जुहुयादित्याह—अथेति । "नमोऽस्तु रुद्रेभ्यः" इत्यादिमन्त्रसाध्या होमाः प्रत्यवरोहास्तान् कुर्यादित्यर्थः । तेषामुपयोगमाह—एतद्वा इति । एतस्मिन्काले खलु एतेन होमेन इमान् । पृथिव्यादीन् लोकानितः 'ऊर्ध्वो' भूत्वा 'रोहति' 'स' यजमानः । एतद्वा इत्यनेन बुद्धिस्थः कालः परामृश्यते । एतदिति च जान्वादिप्रमाणेषु जातो होमः, आतश्च "स रोहः पराङिव' भवति । तदारोहणममावृत्ततया ऊर्ध्वमेव भवतीत्यर्थः । अतश्च देवाः अस्याः पृथिव्याः प्रतिष्ठात्मकत्वाद् 'इमां प्रतिष्ठां' प्रत्यागतवन्तः । यथैव देवाः प्रत्यागतवन्तस्तथैवायं यजमानोऽप्येतेन प्रत्यवरोहहोमेनेमां प्रतिष्ठात्मिकां पृथिवीं प्रत्यैति ॥ ३२ ॥

प्रकारान्तरेणापि प्रत्यवरोहान् प्रशंसति—यद्वेवेति । एतस्मिन् खलु काले एतेन जान्वादिप्रमाणेषु कृतेन होमेन 'एनान्' रुद्रान् 'प्रीणन्' अनुगच्छति यजमानः । अतश्च तेन प्रत्यवरोहणेन 'तत एव' रुद्रेभ्य एव 'आत्मानं' 'जीवात्वै' जीवनाय पृथक्करोति । तथा सति 'अनेन' इदानीं पृथक् क्रियमाणेनैव 'आत्मना' शरीरेण 'सर्वमायुरेति' ॥ ३३ ॥

अथ पुनरपि केनचित्प्रकारेण तानेव स्तौति—यद्वेवेति । तूर्णं जान्वादिप्रमाणेषु कृतेन होमेन 'इत ऊर्ध्वान्' रुद्रान् 'प्रीणाति' उपर्युपरिप्रदेशे होमस्य निष्पादनात् । अतश्च प्रत्यवरोहैः 'एतान्' 'रुद्रान्' 'अमुतः' ऊर्ध्वप्रदेशादर्वाचीनान् प्रीणाति । पूर्वं पृथिव्यादिलोकत्रयानुप्रविष्टान् रुद्रान् पृथिवीमारभ्य द्युलोकपर्यन्तं प्रीणाति । इदानीं द्युलोकमारभ्य पृथिवीपर्यन्तं प्रीणातीत्यर्थः । अत एव सूत्रे "प्रतिलोमं प्रत्यवरोहान् जुहोति" ( का. श्रौ. सू. १८।९ ) इत्युक्तम् । प्रातिलोम्यं च प्रथमं मुखप्रमाणे ततो नाभिप्रमाणे-पश्चाज्जानुप्रमाणे होमः ॥ ३४ ॥

---

१—प्रमाणेषु नमोऽस्त्विति प्रतिमंत्रम् इति सूत्रशेषः ।

( चो ) नमोऽस्तु रुद्रेभ्यो ये दिवीति तद्येऽमुष्मिँल्लोके रुद्रास्तेभ्यऽ एतन्नमस्करोति येषां वर्षमिषवऽ इति वर्षँ ह तेषामिषवो वर्षेण ह ते हिँसन्ति यं जिहिँसिषन्ति ॥ ३९ ॥

नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षऽइति । तद्येऽन्तरिक्षलोके रुद्रास्तेभ्यऽ एतन्नमस्करोति येषां वातऽ इषवऽ इति वातो ह तेषामिषवो वातेन ह ते हिँसन्ति यं जिहिँसिषन्ति ॥ ३६ ॥

नमोऽस्तु रुद्रेभ्यो ये पृथिव्यामिति । तद्येऽस्मिँल्लोके रुद्रास्तेभ्यऽ एतन्नमस्करोति येषामन्नमिषव ऽइत्यन्नँ ह तेषामिषवोऽन्नेन ह ते हिँसन्ति यं जिहिँसिषन्ति ॥ ३७ ॥

तेभ्यो दश प्राचीः । ( इं ) दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाऽ इति दशदशेति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणाऽ अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्रीणाति ॥३८॥

---

" नमोऽस्तु रुद्रेभ्यो ये दिवि "–(वा. सं. १६ । ६४ ) इति । तद् येऽमुष्मिँल्लोके रुद्राः–तेभ्य एतन्नमस्करोति । "येषां वर्षमिषवः"–( वा. सं. १६ । ६४ ) इति । वर्षं ह तेषामिषवः । वर्षेण ह ते हिंसन्ति–यं जिहिंसिषन्ति ॥ ३९ ॥

"नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे"–( वा. सं. १६।६५ ) इति । तद् येऽन्तरिक्षलोके रुद्राः–तेभ्य एतन्नमस्करोति । " येषां वात इषवः "–( वा. सं. १६ । ६५ ) इति । वातो ह तेषामिषवः । वातेन ह ते हिंसन्ति–यं जिहिंसिषन्ति ॥ ३६ ॥

"नमोऽस्तु रुद्रेभ्यो ये पृथिव्याम्"–( वा. सं. १६ । ६६ ) इति तद् येऽस्मिंल्लोके रुद्राः–तेभ्य एतन्नमस्करोति । "येषामन्नमिषवः"–(वा. सं. १६ । ६६ ) इति । अन्नं ह तेषामिषवः । अन्नेन ह ते हिंसन्ति–यं जिहिंसिषन्ति ॥ ३७ ॥

"तेभ्यो दश प्राचीः, दश दक्षिणाः, दश प्रतीचीः, दशोदीचीः, दशोर्ध्वाः" इति । दशदशेति । दशाक्षरा विराट् । विराडग्निः । दश दिशः । दिशोऽग्निः । दश प्राणाः । प्राणा अग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनानेतदन्नेन प्रीणाति ॥ ३८ ॥

---

अथ प्रत्यवरोहान् प्रदर्शयन् व्याचष्टे–नमोऽस्त्वित्यादिना । " नमोऽस्तु रुद्रेभ्यो ये दिवि "–इत्यनेन द्युलोकस्थेभ्यो रुद्रेभ्यो नमस्कारः कृतो भवति । तत्रत्याश्च रुद्राः यं हिंसितुमिच्छन्ति तं वर्षेण हिंसति । अतश्च 'तेषाम्' 'इषवो वर्षं' खलु । अत उक्तं मन्त्रे 'येषां वर्षमिषवः' इति । 'तेभ्यो दश प्राचीः' इत्यादिकस्तु मन्त्रभागस्त्रयाणामपि सम्मत इत्युत्तरत्र सकृदेव व्याख्यास्यत इति ॥ ३९ ॥

द्वितीयं मन्त्रं व्याचष्टे–नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्ष इति । स स्पष्टार्थ इति । अन्यत् मन्त्रत्रयसाधारणम् । तेभ्यो दशेत्यादिकं तु प्रागेव ( श. प. ९ । १ । १ । ३१ ) व्याख्यातम् ॥ ३६–३८ ॥

यद्देवाह दश दशेति । दश वाऽअञ्जलेरङ्गुलयो दिशि दिश्येवैभ्यऽ एतदञ्जलिं करोति तस्माद्‌ हैतद्भीतोऽञ्जलिं करोति तेभ्यो नमोऽअस्त्विति तेभ्यऽ एव नमस्करोति ते नो मृडयन्त्विति तऽएवास्मै मृडयन्ति ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मऽ इति यमेव द्वेष्टि यश्चैनं द्वेष्टि तमेषां जम्भे दधत्यमुमेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्यात्ततोऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयंनिर्दिष्टो ह्येव स यमेवं विद्वेष्टि ॥३९॥

---

यद्देवाह–दशदशेति । दश वा अञ्जलेरङ्गुलयः । दिशि दिश्येवैभ्य एतदञ्जलिं करोति । तस्माद्‌ हैतद्भीतोऽञ्जलिं करोति । "तेभ्यो नमो अस्तु"–इति । तेभ्य एव नमस्करोति । "ते नो मृडयन्तु"–इति । त एवास्मै मृडयन्ति । "ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः"–(वा. सं. १६ । ६६ ) इति । यमेव द्वेष्टि, । यश्चैनं द्वेष्टि–तमेषां जम्भे दधाति । अमुमेषां जम्भे दधामीति ह ब्रूयाद्‌–यं द्विष्यात् । ततो ह तस्मिन् न पुनरस्ति । अपि तन्नाद्रियेत । स्वयंनिर्दिष्टो ह्येव सः– यमेवं विद्वेष्टि ॥ ३९ ॥

---

पूर्वं दश प्राचीर्दश दक्षिणा इत्यादौ सङ्ख्येयं दिग्विशेषं च पर्यालोच्य सङ्ख्यामात्रमुपजीव्य प्राशंसि ।·इदानीं तत्सर्वमुपजीव्य प्रशंसति–यद्देवाहेति । पुटीकृतं करद्वयमञ्जलिरित्युच्यते । तस्य च 'अञ्जलेः' 'अङ्गुलयो दश' भवन्ति । प्रत्येकं करयोः पञ्चाङ्गुलीनां भावात् । तथा च सति "दश प्राचीः" इत्यादिना मन्त्रभागेन तेभ्यो रुद्रेभ्यः प्रागादिमुखादयो दशाङ्गुलयः कृता इत्यस्यार्थस्य प्रतिपादनात् प्रतिदिशम् 'एव' 'एभ्यो' रुद्रेभ्यः 'अञ्जलिं करोति' होमावसरे तेभ्यो दश प्राचीरित्यादिमन्त्रभागकथनेनैव तत्र तत्र दिशि वर्त्तमानेभ्यो रुद्रेभ्योऽञ्जलिं कृतवान् भवतीत्यर्थः । तस्माद्‌ हैतदिति । अञ्जलिकरणस्य कारणं प्रदर्श्यते–'तस्माद्' रुद्राद् 'भीतः' सन्नेतेन 'अञ्जलिं' 'करोति' इति । अथवा एवं व्याख्यानम्–असौ यजमानोऽध्वर्युमुखेन रुद्रेभ्यो भीतः सन्–उक्तवान् । 'तस्माद्' एतस्मिँल्लोकेऽपि जनो भीतोऽञ्जलिं करोतीति । 'तेभ्यो नमो अस्त्वित्यादि" अवशिष्टमन्त्रप्रयोगोपयोगमाह–तेभ्यो नम इत्यादिना । तेभ्य एवेति । 'ते' एव रुद्रा 'असौ' यजमानाय 'मृडयन्ति' सुखमुत्पादयन्ति । यमेवेति । असौ यजमानो 'यमेव' पुरुषं 'द्वेष्टि' 'यो वा' 'एनं' यजमानं 'द्वेष्टि' 'तमेषां' रुद्राणां 'जम्भे' मुखे निदधातीत्यर्थः । "तमेषां जम्भे दध्मः"–इत्यत्र तमित्यस्य स्थाने अमुमिति प्रयुञ्ज्यादिति कस्यचिन्मतं पूर्वपक्षयितुमाह–अमुमेषामिति । 'यं' पुरुषं 'द्विष्यात्,' 'ताम्' 'अमुम्' 'एषां जम्भे दध्मः' इति ब्रूयात् । अमुमिति तन्नामनिर्देशः । ततश्च 'तस्मिन्' द्विष्यमाणे 'पुनर्न किञ्चिदप्यस्ति' म्रियत इत्यर्थः । समुपन्यस्तं मतं निराचष्टे–अपीति । 'तद्' उक्तं मतं नाद्रियेत इत्यपि कथं तस्य वध्यस्य निर्देशः सेत्स्यतीति तत्राह–स्वयमिति । 'यं' पुरुषम् 'एवं' 'यं द्विष्म' इति 'विद्वेष्टि" सः' 'स्वयमेव' 'निर्दिष्टो' भवति । नामधेयग्रहणं तन्निर्देशसिद्ध्यर्थं भवति । स च निर्देशो 'यं द्विष्मो यश्च नो द्वेष्टि तमेषाम्' इत्यभिधानादेव सिद्ध इति तथा न कुर्यादित्यर्थः ॥ ३९ ॥

त्रिष्कृत्वः प्रत्युवरोहति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवै-नानेतदुन्नेन प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारोऽन्नेनैवैनानेतत्प्री-णाति त्रिरितु ऽऊर्ध्वो रोहति तत्षद् तस्योक्तो बन्धुः ॥ ४० ॥

( सु ) युद्वेव त्रिष्कृत्वः प्रत्यवरोहति । त्रिर्हि कृत्वऽ ऊर्ध्वो रोहति तद्याव-त्कृत्वऽ ऊर्ध्वो रोहति तावत्कृत्वः प्रत्युवरोहति ॥ ४१ ॥

( त्यु ) अथ तुदर्कपर्णं चात्वाले प्रास्यति । ( त्ये ) एतद्वाऽएनेनैतद्रौद्रं कर्म करोति तुदेतदशान्तं तुदेतत्तिरः करोति नेदिदमशान्तं कश्चिदभिति-ष्ठात्तन्नेद्धिनसदिति तस्माच्चात्वाले युद्वेव चात्वालेऽग्निरेष यच्चात्वाल-स्तथो हैनदेषोऽग्निः संदहत्यथातः सम्पदेव ॥ ४२ ॥

---

त्रिष्कृत्वः प्रत्यवरोहति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनानेतदन्नेन प्रीणाति । स्वाहाकारेण । अन्नं वै स्वाहाकारः । अन्नेनैवैनानेतत्प्रीणाति । त्रिरित ऊर्ध्वो रोहति । तत्षद् । तस्योक्तो बन्धुः ॥ ४० ॥

यद्वेव त्रिष्कृत्वः प्रत्यवरोहति । त्रिर्हि कृत्व ऊर्ध्वो रोहति । तद्—यावत्कृत्व ऊर्ध्वो रोहति—तावत्कृत्वः प्रत्यवरोहति ॥ ४१ ॥

अथ तदर्कपर्णं चात्वाले प्रास्यति । एतद्वा एनेनैतद्रौद्रं कर्म करोति । तदेतदशान्तम् । तदेतत्तिरः करोति । नेदिदमशान्तं कश्चिदभितिष्ठात्, तन्नेद्धिनसदिति । तस्माच्चात्वाले । यद्वेव चात्वाले । अग्निरेषः—यच्चात्वालः । तथो हैनदेषोऽग्निः सन्दहति । अथातः सम्पदेव ॥ ४२ ॥

---

अथ प्रत्यवरोहान् जुहोतीति सामान्येन विधाय सङ्ख्याविशेषे पर्यावर्त्तनमभिधत्ते—त्रिष्कृत्व इति । सा त्रित्वसंख्या रुद्राणां साकल्येन तृप्तिहेतुर्भवतीत्याह—त्रिवृदिति । आद्यस्तु त्रिवृत्प्रकारः षष्ठकाण्डेऽभिहितः । 'अग्निर्यावान्' 'अस्य' च 'मात्रा यावती' 'तावतैव' 'एनान्' अग्न्यात्मकान् रुद्रान् 'प्रीणाति' प्रीणितवान् भवति । मन्त्रान्ते स्वाहाकारस्यान्नप्रदानसाधनत्वादन्नरूपेण प्रशंसति—स्वाहाकारेणेति । आरोहप्रत्यवरोहाणां च मिलितां सङ्ख्यां प्रशंसति—त्रिरित इति । जान्वादिमुखान्तेषु त्रिषु प्रमाणेषु होमकरणाद्, 'इत ऊर्ध्वं' 'त्रिःकृत्वो 'रोहति,' पुनश्च त्रिःकृत्वः प्रत्यवरोहति । तथा सति षट्संख्या सम्पद्यते । तस्याश्च ब्राह्मणं "षड् वा ऋतवः" इत्यादिना प्रागेवोक्तमित्यर्थः ॥ ४० ॥

प्रकारान्तरेणापि षट्सङ्ख्यामुपपादयति—यद्वेवेति । त्रिःकृत्व ऊर्ध्वमारोहणात्तदनुसारेण त्रिःकृत्व एव प्रत्यवरोहणं कृतं भवति । उपपन्नं चैतत्, ी चेत् न्यूनातिरिक्तम्; अस्त्विति चेत्, मैवं; न्यूनत्वे चा-पर्याप्तत्वादतिरेके च आधिक्याद्यथापूर्वमवस्थानं न सुलभमिति आरोहणसङ्ख्यानुसारेणैव प्रत्यवरोहणे तत् सुलभ-मिति सैव सङ्ख्योचितेत्यर्थः ॥ ४१ ॥

उक्तहोमानन्तरं तद्धोमसाधनमर्कपर्णं चात्वाले प्रक्षिपेदित्याह—अथेति[1] । चात्वालप्रक्षेपस्य कारणमाह—

---

१—हवने प्रास्यति चात्वाले । का. श्रौ. सू. १८ । ६ ।

तदाहुः । कथमस्यैतच्छतरुद्रियꣳ संव्वत्सरमग्निमाप्नोति कथꣳ संव्वत्सरेणाग्निना सम्पद्यतऽइति षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियमथ त्रिꣳशदथ पञ्चत्रिꣳशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संव्वत्सरस्याहानि तत्संव्वत्सरस्याहान्याप्नोत्यथ यानि त्रिꣳशत्त्रिꣳशन्मासस्य रात्रयस्तन्मासस्य रात्रीराप्नोति तदुभयानि संव्वत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिꣳशत्स त्रयोदशो मासः सऽ आत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिरऽ एव पञ्चत्रिꣳशमेतावान्वै संव्वत्सरऽएवमु हास्यैतच्छतरुद्रियꣳ संव्वत्सरमग्निमाप्नोत्येवꣳ संव्वत्सरेणाग्निना सम्पद्यतऽएतावत्यऽ उ वै शाण्डिलेऽग्नौ मध्यतो यजुष्मत्यऽ इष्टकाऽ उपधीयन्तेऽग्नयो हैते पृथग्यदेताऽइष्टका ऽएवमु हास्यैतेऽग्नयः पृथक्छतरुद्रियेणाभिहुता भवन्ति ॥ ४३ ॥

---

तदाहुः—कथमस्यैतच्छतरुद्रियं संवत्सरमग्निमाप्नोति, कथं संवत्सरेणाग्निना सम्पद्यत इति । षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियम् । अथ त्रिंशत्, अथ पञ्चत्रिंशत् । ततो यानि षष्टिश्च त्रीणि च शतानि, तावन्ति संवत्सरस्याहानि । तत्—संवत्सरस्याहान्याप्नोति । अथ यानि त्रिंशत्—त्रिंशन्मासस्य रात्रयः—तन्मासस्य रात्रीराप्नोति । तदुभयानि संवत्सरस्याहोरात्राण्याप्नोति । अथ यानि पञ्चत्रिंशत्—स त्रयोदशो मासः । स आत्मा । त्रिंशदात्मा, प्रतिष्ठा द्वे, प्राणा द्वे, शिर एव पञ्चत्रिंशम् । एतावान्वै संवत्सरः । एवमु हास्यैतच्छतरुद्रियं संवत्सरमग्निमाप्नोति । एवं संवत्सरेणाग्निना सम्पद्यते । एतावत्य उ वै शाण्डिलेऽग्नौ मध्यतो यजुष्मत्य इष्टका उपधीयन्ते । अग्नयो हैते पृथक्—यदेता इष्टकाः । एवमु हास्यैतेऽग्नयः पृथक् शतरुद्रियेणाभिहुता भवन्ति ॥ ४३ ॥

---

एतद्वा इति । एतस्मिन् काले खलु 'एनेन' अर्कपर्णेन 'एतद्रौद्रं कर्म करोति' । अतश्च 'एतत्' पर्णम् 'अशान्तं भवति । 'तद्' 'इदमशान्तं' पर्णं 'कश्चिद्' अपि नाभितिष्ठतु । तच्च न कमपि हिनस्त्विति 'तदेतत्' पर्णं 'तिरः करोति' व्यवहितं करोति, चात्वालस्य गतत्वादित्यर्थः । अथ पुनरपि तत्रैव प्रक्षेपमुपपादयति—यद्वेवेति । चात्वालस्य "योनिर्वै यज्ञस्य चात्वालम्"—(तै. सं. ६ । १ । ३ । ८) इति श्रुतेः—धिष्ण्यत्वेनाग्नित्वात्तत्र प्रक्षिप्तं तदर्कपर्णम् 'एषः' चात्वालरूपः 'अग्निः' 'सन्दहति' सम्यग्दहति । इत्थं शतरुद्रियहोममभिधायेदानीं तस्य सम्पत्त्यभिधानं प्रतिजानीते—अथातः सम्पदेवेति । सम्पत्सम्पत्तिः केनचित्प्रकारेण सादृश्यसम्पादनं यतः कारणात् कर्मानुष्ठानावसरे सम्पत्तिरनुसन्धातव्या; 'अतः' कारणात् सा 'सम्पदेव' अभिधास्यत इत्यर्थः । 'एव'—कारेणात्र होमकरणप्रकारस्य कार्त्स्न्येन विहितत्वमुच्यते । अतः सम्पदेव प्रदर्श्यते न पुनर्होमकरणप्रकारः तस्य सर्वस्याभिहितत्वादिति ॥ ४२ ॥

तामेव सम्पत्तिं प्रश्नोत्तराभ्यां दर्शयति—तदाहुः कथमित्यादिना । 'तत्' तत्र शतरुद्रियविषये 'अस्य' यजमानस्य 'एतच्छतरुद्रियं' 'कथं' संवत्सरात्मकम् 'अग्निमाप्नोति' 'कथं' च तेन 'संपद्यते' सदृशो भवति

तदाहुः । कथमस्यैतच्छतरुद्रियं महदुक्थमाप्नोति कथं महतोक्थेन सम्पद्यतऽइति यान्यमूनि पञ्चविꣳशतिर्यजूꣳष्यभितोऽशीतीः स पञ्चविꣳशऽ आत्मा यत्र वाऽआत्मा तदेव शिरस्तत्पक्षपुच्छान्यथ या अशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्ध्वमशीतिभ्यो यदेवादो महतऽ उक्थस्योर्ध्वमशीतिभ्य ऽएतदस्य तदेवमु हास्यैतच्छतरुद्रियं महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते ॥ ४४ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ९-१-१ ॥ ( १. १. ) ॥

---

तदाहुः—कथमस्यैतच्छतरुद्रियं महदुक्थमाप्नोति, कथं महतोक्थेन सम्पद्यत इति । यान्यमूनि पञ्चविंशतिर्यजूंषि—अभितोऽशीतीः—स पञ्चविंश आत्मा । यत्र वा आत्मा—तदेव शिरः, तत्पक्षपुच्छानि । अथ या अशीतयः—सैवाशीतीनामाप्तिः । अशीतिभिर्हि महदुक्थमाख्यायते । अथ यदूर्ध्वमशीतिभ्यो—यदेवादो महत उक्थस्योर्ध्वमशीतिभ्यः—एतदस्य तत् । एवमु हास्यैतच्छतरुद्रियं महदुक्थमाप्नोति । एवं महतोक्थेन सम्पद्यते ॥ ४४ ॥

---

'इत्याहुः' याज्ञिकाः । एतस्योत्तरं—षष्टिश्च ह वा इत्यादि । 'एतच्छतरुद्रियं' षष्ट्युत्तराणि 'त्रीणि शतानि' यजूंषि पश्चात् 'त्रिंशत्' ततः 'पञ्चत्रिंशद्' इति । ततश्चात्र 'यानि' षष्ट्युत्तराणि 'त्रीणि च शतानि,' 'संवत्सरस्याहानि' अपि 'तावन्ति' सम्भवन्ति । ततः तैः 'संवत्सरस्याहानि' प्राप्नोति । अथ 'यानि त्रिंशद्' यजूंषि, मासरात्रीणामपि त्रिंशत्त्वात् तैः 'मासस्य रात्रीः' प्राप्नोति । एवं सति मासस्य संवत्सरावयवत्वात् 'तत्' संवत्सरात्मकत्वात्, 'उभयानि संवत्सरस्याहोरात्राण्याप्नोति' । 'अथ' अवशिष्टानि 'यानि' 'पञ्चत्रिंशद्' विद्यन्ते तानि 'त्रयोदशो मासः' । स च अधिको मासः 'सः' 'संवत्सरस्य आत्मा' मध्यभागः । 'द्वे' यजुषी पादौ । प्रतिष्ठा-शब्देन पादावुच्येते । पुनः 'द्वे' यजुषी 'प्राणाः' इन्द्रियाणि । यद्यपि ते प्राणा बहवस्तथापि येन पञ्चत्रिंशदिनाधिकमासस्य संवत्सरान्तःपातित्वमभिदधत् तन्मासात्मकेन पञ्चत्रिंशत्त्वात् संवत्सरस्य कर—चरणादिविशिष्टपुरुषाकारतया प्रदर्श्यते—एतावानिति । एतत्प्रमाणकः खलु संवत्सरः । 'एवं' च सति संवत्सरे यावती सङ्ख्याऽस्ति शतरुद्रियेऽपि तावती सङ्ख्या विद्यत इति सङ्ख्याद्वारा 'शतरुद्रियं संवत्सरमग्निमाप्नोति' तेन तस्य सदृशो भवति । 'एतावत्य उ वै' इत्यादिकस्यायमर्थः । 'शाण्डिले' शाण्डिलदृष्टेऽस्मिन् 'अग्नौ' 'मध्यतो' मध्यप्रदेशे 'एतावत्यः' षष्ट्युत्तर—शतत्रयसङ्ख्याका याः 'इष्टकाः' मन्त्रवत्य 'उपधीयन्ते' । इयं च परिगणनोत्तरस्मिन् काण्डे अभिधास्यते । इष्टकाश्चाग्न्यवयवत्वात् 'पृथगग्नयः' एवं च सति सङ्ख्यासामान्यात् 'शतरुद्रियेण' इष्टकारूपाः 'अग्नयः' 'पृथग्' एव 'अभिहुताः' 'भवन्ति' इति ॥ ४३ ॥

अथ प्रकारान्तरेणापि शतरुद्रियस्य सम्पत्तिं प्रश्नोत्तराभ्यामाह—तदाहुरित्यादिना । महदुक्थमिति । महाव्रते बृहस्पतिसहस्रव्यपदेशं शस्त्रं तेनानुशंसनीयं स्तोत्रं पक्ष्याकारं भवति । तत्र पञ्चविंशस्तोम आत्मभागः । अतश्चात्रापि अशीतीनाम् 'अभितो' विद्यमानानि 'यानि पञ्चविंशतिर्यजूंषि' तान्येव महदुक्थे पञ्च-

अथैनमतः परिषिञ्चति । (त्ये) एतद्वाऽएनं देवाः शतरुद्रियेण शमयित्वाऽथैनमेतद्भूयऽ एवाशमयंस्तथैवैनमयमेतच्छतरुद्रियेण शमयित्वाऽथैनमेतद्भूय ऽएव शमयति ॥ १ ॥

(त्य) अद्भिः परिषिञ्चति । शान्तिर्वाऽआपः शमयत्येवैनमेतत्सर्वतः

---

अथैनमतः परिषिञ्चति । एतद्वा एनं देवाः शतरुद्रियेण शमयित्वाऽथैनमेतद्भूय एवाशमयन् । तथैवैनमयमेतच्छतरुद्रियेण शमयित्वाऽथैनमेतद्भूय एव शमयति ॥ १ ॥

अद्भिः परिषिञ्चति । शान्तिर्वा आपः । शमयत्येवैनमेतत् । सर्वतः परिषिञ्चति । सर्वत एवैन-

---

विंशतिस्तोमात्मक आत्मभागः । यद्यप्यत्र पक्ष्याकारता स्तोमस्येवाग्नेरिति आत्मभाग इत्यपि तत्रैव, तथापि तदनुशंसनात्मके शस्त्रे भेदेनोच्यते । 'यत्र' आत्मा भवति तत्रैव शिरःपक्षपुच्छानीत्यङ्गानि भवन्ति । आत्मभागादेषां सर्वेषामुत्पत्तेरात्मभागे तानि सर्वाण्यन्तर्भूतानि । आत्मभागोपपादनादेव शिरःपुच्छप्रभृतीन्यपि सङ्गृहीतानि भवन्तीत्यर्थः । अथातः शतरुद्रिये 'या अशीतयो' भवन्ति ताभिर्महदुक्थस्याशीतिभिराख्यानात्तत्सम्बन्धिनीनाम् 'अशीतीनामाप्तिः' भवति । अथ शतरुद्रिये 'अशीतिभ्यो यदेवोर्ध्वं' मन्त्रजातमस्ति—महदुक्थस्य 'अशीतिभ्यः' 'ऊर्द्ध्वं' 'अदो' यदेव मन्त्रजातं तदेव भवति । तेन तस्याप्तिरित्यर्थः । अद इति महदुक्थात्परं मन्त्रजातं बुद्धिस्थं परामृश्यते । 'एवम्' उक्तप्रकारेण शतरुद्रिये विद्यमानेनानेन भागेन महति उक्थे विद्यमानस्य तस्य तस्य साङ्गस्याप्तेः शतरुद्रियं 'महदुक्थमाप्नोति' तथा 'महतोक्थेन सम्पद्यते' ॥ ४४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥ (९-१-१) ॥

पूर्वस्मिन् ब्राह्मणे शतरुद्रियहोमोऽभिहितः । अथास्मिन्नग्नौ परिषेकधेनूकरणावकर्षणादिकं कर्माभिधास्यते । कात्यायनः—"चित्यं परिषिञ्चत्यग्नीद्दक्षिणे निकक्षेऽद्रिं कृत्वाऽश्मन्नूर्जमित्यद्रेरधि"—(का. श्रौ. सू. १८ । ७) इति । आग्नीध्रो दक्षिणकक्षप्रदेशे पाषाणं निधाय "अश्मन्नूर्जम्"—(वा. सं. १७ । १) इति मन्त्रेण पाषाणस्योपरि आरभ्याग्निं परिषिञ्चतीति सूत्रार्थः । तमेकं परिषेकं विधत्ते—अथेति । यतः कारणात्संचितोऽग्नी रुद्ररूपत्वादशान्तः । 'अतः' 'एनं' शान्त्यर्थं परिषिञ्चेत् । ननु चात्र सञ्चितस्याग्ने रुद्ररूपत्वेनाशान्तस्य शमनार्थमेव शतरुद्रियहोमः । अत एव तत्रोक्तम् "तस्माऽएतदन्नं समभरञ्छान्तदेवत्यम्"—(श. प. ९।१।१।२) इति । अतः किमर्थं पुनः शमनार्थं परिषेकस्य विधानम् । न हि शान्तः पुनरपि शान्तिमपेक्षते । न हि भुक्तवान् भोजनमपेक्षत—इत्यत आह—एतद्वा इति । 'एतत्' इति देवानां कर्मानुष्ठानावसरपरामर्शः । एतस्मिन्नवसरे सर्वे 'देवाः' अशान्तम् 'एनम्' अग्निं 'शतरुद्रियेण' 'शमयित्वा' 'अथ' एतेन परिषेकेण 'भूय एव' अधिकमेव 'अशमयन्' । अतो यथैव देवा अकुर्वन्, 'तथैव' अयमपि यजमानः शतरुद्रियेण शान्तमपि पुनरधिकशमनार्थं परिषिञ्चति । अतः शमनाधिक्यार्थत्वात्परिषेकोऽवश्यं विधेय इति भावः ॥ १ ॥

'अथैनमतः परिषिञ्चति' इति सामान्यविधानात्पयआदिनाऽपि परिषेकः स्यादित्यत आह—अद्भिरिति । परिषेकस्य शमनार्थत्वादपां चाग्न्यादिकृतसन्तापशमनक्षमत्वेन शान्तित्वादद्भिः सम्पादितेन परिषेकेणैनं शमयति ।

परिषिञ्चति सर्व्वतऽ एवैनमेतुच्छमयाति त्रिष्कृत्वः परिषिञ्चति त्रिवृदग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतुच्छमयति ॥ २ ॥

यद्वेवैनं परिषिञ्चति। (ती) इमे वै लोका ऽएषोऽग्निरिमांस्तल्लोका-नद्भिः परितनोति समुद्रेण हैनांस्तत्परितनोति सर्व्वतस्तस्मादिमाँल्लो-कान्त्सर्व्वतः समुद्रः पर्य्येति दक्षिणावृत्तस्मादिमाँल्लोकान्दक्षिणावृत्स-मुद्रः पर्य्येति ॥ ३ ॥

(त्य) अग्नीत्परिषिञ्चति। (त्य) अग्निरेष यदाग्नीध्रो नो वा ऽआत्मा-ऽऽत्मानꣳ हिनस्त्यहिꣳसायाऽअश्मनोऽध्यश्मनो ह्यापः प्रभवन्ति निकक्षान्निकक्षाद्ध्यापः प्रभवन्ति दक्षिणान्निकक्षाद्दक्षिणाद्धि निकक्षादापः प्रभवन्ति ॥ ४ ॥

---

मेतच्छमयति । त्रिष्कृत्वः परिषिञ्चति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमे-तच्छमयति ॥ २ ॥

यद्वेवैनं परिषिञ्चति । इमे वै लोकाः एषोऽग्निः । इमांस्तल्लोकानद्भिः परितनोति । समुद्रेण हैनांस्त-त्परितनोति । सर्वतः । तस्मादिमाँल्लोकान्त्सर्वतः समुद्रः पर्येति । दक्षिणावृत् । तस्मादिमांल्लोका-न्दक्षिणावृत्समुद्रः पर्येति ॥ ३ ॥

अग्नीत्परिषिञ्चति । अग्निरेषः—यदाग्नीध्रः । नो वा आत्माऽऽत्मानं हिनस्ति । अहिंसायै । अश्मनोऽधि । अश्मनो ह्यापः प्रभवन्ति । निकक्षात् । निकक्षाद्ध्यापः प्रभवन्ति । दक्षिणा-न्निकक्षात् । दक्षिणाद्धि निकक्षादापः प्रभवन्ति ॥ ४ ॥

---

अद्भिरपि क्वचिदेव परिषेके साकल्येन शमनं न सेत्स्यतीत्याह—सर्वत इति । " सकृत् कृतः शास्त्रार्थः " इति न्यायेन सकृदपि परिषेके कृते परिषेकविधिश्चरितार्थः स्यादित्यभिप्रेत्य तदावृत्तिसङ्ख्यां दर्शयति—त्रिष्कृत्व इति । त्रित्वसङ्ख्यस्य परिषेकस्य कार्त्स्न्येन शमनहेतुत्वमित्याह—त्रिवृदग्निरिति ॥ २ ॥

अथ तमेव परिषेकं प्रकारान्तरेण प्रशंसति—यद्वेवैनमिति । 'एषः' सञ्चितः 'अग्निः' प्रजापत्यात्मक-त्वेन प्रजापतेश्च सर्वलोकहेतुत्वेन तदात्मकत्वाद् 'इमे' पृथिव्यादयो 'लोकाः' खलु । अतश्च तादृशस्याग्नेः परिषेकेण 'इमान्' 'एव' 'लोकान्' 'अद्भिः परितनोति' परिवेष्टयति । समुद्रस्याबात्मकत्वात् 'अद्भिः' परिषेके 'समुद्रेण' एव 'एनान्' 'लोकान्' परिवेष्टयति । स च परिषेकः 'सर्वतः' सम्पादित इति 'समुद्रः' अपि 'इमान् लोकान्' 'सर्वतः' 'पर्येति' पृथिव्याः समुद्रेण वलयितत्वादन्तरिक्षद्युलोकयोः पृथिव्या उपरि वर्त्तमानत्वात् पृथिव्यादीन्सर्वान् लोकान्सर्वतः समुद्रः 'पर्येति' इत्युच्यते । सर्वतः परिषेकः सव्यावृदपि कर्तुमीप्सितः स्यात् इत्यत आह—दक्षिणावृदिति । यतः प्रादक्षिण्येन क्रमेण परिषेकः सम्पादितः अतः 'समुद्रः' अपि तथैव 'पर्येति' ॥ ३ ॥

समाख्याविनियोगादध्वर्योः परिषेकप्राप्तावपवादमाह—अग्नीदिति । अथ कस्मादध्वर्युपरित्यागेनाग्नीध्रः परिगृह्यत इत्यत आह—अग्निरेष इति । परिषेक्तव्यस्याग्नेः शमने नक्षमत्वादध्वर्यौ परिषेक्तरि च हिंसा सम्भाविता

( न्त्यु ) अ॒श्मन्नूर्जं॒ पर्व॑ते शिश्रिया॒णामिति । (त्यु) अश्म॑नि॒ वाऽए॒षोर्क् पर्व॑तेषु॒ श्रि॒ता यदा॒पोऽद्भ्यऽ ओष॑धीभ्यो॒ वन॒स्पति॑भ्यो॒ऽअधि॒ सम्भृ॑तं॒ पय॒ ऽइत्ये॒तस्मा॒द्ध्येतत्सर्व॑स्मा॒दधि॒ सम्भृ॑तं॒ पय॒स्तान्न॒ ऽइष॒मूर्जं॑ धत्त मरुतः सꣳररा॒णाऽ इति॑ म॒रुतो॒ वै व॒र्षस्ये॑श॒तेऽश्मं॑स्ते॒ क्षुदिति॑ नि॒दधाति त॒द॒श्मनि॑ क्षु॒धं॒ दधाति त॒स्माद॒श्मा नाद्यो॒ऽथो स्थि॒रो वाऽअ॒श्मा स्थिरा क्षु॒त्स्थि॒रऽए॒व त॒त्स्थिरं॑ दधाति मयि॒ तऽऊर्गित्य॒पादत्ते॒ त॒दात्म॒न्नूर्जं॑ धत्ते त॒था द्वि॒तीयं॑ त॒था तृ॒तीय॑म् ॥ ९ ॥

" अश्मन्नूर्जं पर्वते शिश्रियाणाम् "–इति । अश्मनि वा एषोर्क् पर्वतेषु श्रिता । यदापः । " अद्भ्य ओषधीभ्यो वनस्पतिभ्यो अधि सम्भृतं पयः "–इति । एतस्माद्ध्येतत्सर्वस्मादधि सम्भृतं पयः । " तान्न इषमूर्जं धत्त मरुतः संरराणाः "–इति । मरुतो वै वर्षस्येशते । " अश्मंस्ते क्षुत् "–इति निदधाति । तदश्मनि क्षुधं दधाति । तस्मादश्मा नाद्यः । अथो स्थिरो वा अश्मा, स्थिरा क्षुत् । स्थिर एव तत् स्थिरं दधाति । " मयि तऽऊर्क् "–इति अपादत्ते । तदात्मन्नूर्जं धत्ते । तथा द्वितीयम्, तथा तृतीयम् ॥ ९ ॥

स्यात् । आग्नीध्रस्य पुनरन्यात्मकत्वेन आत्मनैवात्मनो हिंसाया असम्भवादहिंसार्थं तस्य परिग्रह इत्यर्थः । परिषेकावसरे दक्षिणे निकक्षे कंचित्पाषाणं निधाय तत आरभ्यत इत्याह–अश्मनोऽधीत्यादिना । ' निकक्षः ' कक्षप्रदेशः तत्सन्धिस्थानम् । लोकेऽपि पर्वतादिषु दक्षिणात्पाषाणात्संधिस्थानादपामुत्पत्तेरुक्तस्थाने पाषाणं निधाय, तत आरभ्य परिषिच्यत इत्यर्थः ॥ ४ ॥

इत्थं सप्रकारकं परिषेकं विधाय तत्र मन्त्रं प्रदर्शयन् व्याचष्टे–अश्मन्नूर्जमिति । ' आपः ' इति ' यद् ' ' एषा ' ' पर्वतेषु ' ' अश्मनि ' स्थिता ' ऊर्क् ' रसः । पर्वतेषु पाषाणसन्धिभ्योऽपामुत्पत्तेः अतश्चाश्मन्नूर्जमित्येष भागोऽप एवाभिधत्ते । ' शिश्रियाणाम् ' इति श्रयतेः कानचि, इयङादेशे च रूपम् । उत्तरत्र ' रराणाः ' इत्येतदपि कानजन्तं पदम् । ' अद्भ्य ओषधीभ्यः ' इत्येतन्मन्त्रभागप्रतिपाद्योऽर्थः प्रसिद्ध इत्याह–एतस्माद्धीति । ' पयः ' क्षीरं तच्चाबादिभ्यः सम्पाद्यत इत्येतत्प्रसिद्धमेव । अबाद्युपभुक्तवतीभ्यो गोभ्यस्तदुत्पत्तिरिति । तां न इषमित्यनेन भागेन मरुतां तत्प्रदातृत्वस्य प्रतिपादनात्तेषां तत्प्रेरकत्वेन तदुपपादयति–मरुतो वा इति । मन्त्रस्यायमर्थः–' पर्वते ' अश्मनि ' शिश्रियाणां ' श्रिताम् ' ऊर्जं ' रसम्, अप इत्यर्थः । ' ताम् ' ऊर्जम् ' अद्भ्य ओषधीभ्यो वनस्पतिभ्यश्च ' सम्पादितं पयो व्याहरन्ति तद्रसत्वात् । हे मरुतः ! ' संरराणाः ' " रा दाने "–( धा. पा. अ. प. ४७ ) सम्यग्ददाना यूयं ' तामिषम् ' इष्यमाणाम् ' ऊर्जं ' रसं ' नः ' अस्मभ्यं ' धत्त ' सम्पादयतेति । परिषेकानन्तरं ' अश्मंस्ते ' इत्यनेन मन्त्रेण पाषाणे कुम्भं निदध्यादित्याह–अश्मंस्ते क्षुदिति[1] निदधातीति । अश्मनि कुम्भस्य निधाने परिषेकेण शान्तस्य रुद्रस्य क्षुधं

[1]–अश्मंस्ते क्षुदित्यश्मनि कुम्भं कृत्वा मयि त ऊर्गित्यादायैवं द्विरपरम् । का. श्रौ. सू. १८ । ८ ।

( त्रि ) निधायोदहरणं त्रिर्विपल्ययते । ( तऽ ) एतद्वाऽएतमेतल्लघूयतीव यदेनᳬं समन्तं पर्य्येति तस्माऽएवैतन्निह्नुतेऽहिᳬंसायै ॥ ६ ॥

यद्वेव विपल्ययते । ( तऽ ) एतद्वाऽएनमेतदन्ववैति ततऽ एवैतदात्मानमपोद्धरते जीवात्वै तथो ह्यनेनात्मना सर्व्वमायुरेति ॥ ७ ॥

---

निधायोदहरणं त्रिर्विपल्ययते । एतद्वा एनमेतल्लघूयतीव–यदेनं समन्तं पर्येति । तस्मा एवैतन्निह्नुतेऽहिंसायै ॥ ६ ॥

यद्वेव विपल्ययते । एतद्वा एनमेतदन्ववैति । तत एवैतदात्मानमपोद्धरते । जीवात्वै । तथो ह्यनेनात्मना सर्वमायुरेति ॥ ७ ॥

---

पाषाणे निहितवान्भवतीत्याह–तदश्मनि क्षुधं दधातीति । तस्मादिति । यतः ' अश्मनि क्षुद् ' निहिता ' तस्मादश्मा नाद्यः ' नः भक्षणीयः । तस्याग्निक्षुदाधारत्वेन घस्मरत्वात् । नन्वग्निसंबन्धिन्याः क्षुधो निधानं पाषाणव्यतिरिक्तस्थानेऽपि कर्तव्यं स्यात् । अतस्तदुल्लङ्घनेनात्रैव किमिति निहितेति तत्राह–अथो इति । 'अश्मा' कठिनत्वात् ' स्थिरः ' ' क्षुद् ' अपि तथा ' स्थिरा ' हि । इदानीमुपशान्तापि कालान्तरेऽनुवर्त्तनात् । अतोऽश्मनि क्षुधो निधाने ' स्थिर एव स्थिरं दधाति ' । अश्मनि निहितस्य कुम्भस्य पुनर्मन्त्रेण स्वीकारं विधत्ते–मयि त इति । ' तत् ' तेन स्वीकारेण पुनरात्मनि 'ऊर्जम्' अवात्मिकां ' धत्ते ' । पूर्वं क्षुधोऽपगमनार्थम् अश्मनि कुम्भो निहितः । ' तथा ' चाश्मन्यूर्जो धारणं न सिद्ध्येदिति तदर्थं पुनः तस्य स्वीकारो भवतीत्यर्थः । परिषेकादि अश्मनि निधानान्तं कर्म पुनर्द्विवारं कर्तव्यमित्याह–तथा द्वितीय तथा तृतीयम् इति ॥ ५ ॥

तृतीयवारनिधाने किं कर्त्तव्यमिति तत्राह–निधायेति । उदकं ह्रियतेऽनेनेति ' उदहरणं ' कुम्भः । "उदकस्योदः संज्ञायाम् "–( पा. सू. ६ । ३ । ५७ ) इत्युदादेशः । तं ' निधाय ' त्रिवारं ' विपल्ययते ' प्रतिपर्येति । सव्यावृत् पर्येति । ' विपल्ययते ' इति " उपसर्गस्यायतौ "–( पा. सू. ८ । २ । १९ ) इति लत्वम् । किमर्थं विपल्ययनमित्याह–एतद्वा इति । एतस्मिन्नवसरे खलु ' एनम् ' अग्निं समन्तात् ' पर्येति ' इति यत् एतेन ' एनम् ' लघुमिवाचरति । अतस्तथा कृतेऽग्निं हिंस्यादिति । अहिंसार्थं ' तस्मा एव ' अग्नये ' निह्नुते ' स्वकृतं तद्विषयमपराधमपमार्ष्टीत्यर्थः । ' लघूयतीति ' " उपमानादाचारे "–( पा. सू. ३ । १ । १० ) इति क्यच् प्रत्ययः । तस्मा एवाग्नये " श्लाघह्नुङ्स्था० " ( पा. सू. १ । ४ । ३४ ) इत्यादिना सम्प्रदानसंज्ञायां चतुर्थी ॥ ६ ॥

प्रकारान्तरेणापि विपल्ययनं प्रशंसति–यद्वेवेति । प्रदक्षिणप्रक्रमावसरे ' एनम् ' अग्निमनुगतो भवति । विपल्ययनात्तत एव जीवनायात्मानं पृथक्करोति । तथा सति ' अनेन ' इदानीं ध्रियमाणेन शरीरेण च ' सर्वमायुः ' प्राप्नोति ॥ ७ ॥

---

१–तावत्प्रतिपर्येति । का. श्रौ. सू. १८ । ९ ।

त्रिर्व्विपुल्ययते । त्रिर्हि कृत्वः पर्य्येति तद्यावत्कृत्वः पर्य्येति तावत्कृत्वो व्विपुल्ययते ॥ ८ ॥

(तेऽथ) अथ तमश्मानमुदहरणेऽवधाय । (यै) एतां दिशᳬँ हरन्त्येषा वै नैर्ऋती दिङ्नैर्ऋत्यामेव तद्दिशि शुचं दधाति ॥ ९ ॥

(त्ये) एतद्वाऽएनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वाऽथास्यैतेन शुचं पाप्मानमुपाघ्नंस्तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वाऽथास्यैतेन शुचं पाप्मानमुपहन्ति ॥ १० ॥

बाह्येनाग्निᳬँ हरति । (ती) इमे वै लोकाऽ एषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्धा शुचं दधाति बहिर्व्वेदीयं वै व्वेदिरस्यै तद्बहिर्धा शुचं दधाति ॥ ११ ॥

(अर्धप्रपाठकः ९९)

स व्वेदेर्द्दक्षिणायाᳬँ श्रोणौ । प्राङ्तिष्ठन्दक्षिणा निरस्यति यं द्विष्मस्तं

---

त्रिर्विपल्ययते । त्रिर्हि कृत्वः पर्येति । तद् यावत्कृत्वः पर्येति—तावत्कृत्वो विपल्ययते ॥ ८ ॥

अथ तमश्मानमुदहरणेऽवधायैतां दिशं हरन्ति । एषा वै नैर्ऋती दिक् । नैर्ऋत्यामेव तद्दिशि शुचं दधाति ॥ ९ ॥

एतद्वा एनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वाऽथास्यैतेन शुचं पाप्मानमपाघ्नन् । तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वाऽथास्यैतेन शुचं पाप्मानमपहन्ति ॥ १० ॥

बाह्येनाग्निं हरति । इमे वै लोका एषोऽग्निः । एभ्यस्तल्लोकेभ्यो बहिर्धा शुचं दधाति । बहिर्वेदि । इयं वै वेदिः । अस्यै तद्बहिर्धा शुचं दधाति ॥ ११ ॥

स वेदेर्दक्षिणायां श्रोणौ प्राङ्तिष्ठन् दक्षिणा निरस्यति । "यन्द्विष्मस्तं ते शुगृच्छतु"—

---

विपल्ययनस्य त्रिवारकरणं प्रशंसति—त्रिर्विपल्ययत इति ॥ ८ ॥

त्रिवारं पर्येत्य पश्चात् साश्मानं कुम्भं नैर्ऋत्यां दिशि प्रक्षिपेदित्याह—अथेति । एतां दिशमिति । नैर्ऋतीं 'दिशं' हस्तेनाभिनीय दर्शयति—'एषा वै नैर्ऋती दिग्' इति विवरणात् ॥ ९ ॥

एतद्वा—इति । पूर्वं देवा 'एनम्' अग्निं 'शतरुद्रियेणाद्भिश्च शमयित्वा 'अथ' 'अस्य' अग्नेः 'एतेन' उक्तप्रदेशे प्रक्षेपेण 'शुचं' शोकरूपं पापं हतवन्तः अतो यजमानोऽपि तत्र प्रक्षेपेण तथैव कृतवान् भवति ॥ १० ॥

प्रक्षेपार्थं हरणावसरे अग्नेर्बाह्यभागेन हरेदित्याह—बाह्येनाग्निमिति । तथा हरणेन शोच्यः पृथिव्यादिभ्यो लोकेभ्यो बहिर्धा कृतो भवतीत्याह—इमे वा इति । अग्नेः पृथिव्यादिलोकरूपात्मकत्वं प्रजापत्यात्मकत्वात्[1] । तथैव वेदेरपि बहिर्हरणमभिधाय प्रशंसति—बहिर्वेदीति ॥ ११ ॥

उक्तप्रकारेण साश्मानं कुम्भं कृत्वा वेदेर्दक्षिणस्यां श्रोणौ प्राङ्मुखस्तिष्ठन् 'यं द्विष्मः' इत्यनेन मन्त्रेण दक्षिणतो निरस्यतीत्याह—स इत्यादिना[2] । उक्तमन्त्रेण निरसने मन्त्रार्थस्तथैव फलतीत्याह—यमेवेति ।

---

१—बहुत्वं चिन्त्यम् । २—कुंभेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ्तिष्ठन् दक्षिणाऽस्यत्ति यं द्विष्म इति । का.श्रौ.सू. १८।१०।

ते शुगृच्छत्विति यमेव द्वेष्टि तमस्य शुगृच्छत्यमुं ते शुगृच्छत्विति ह ब्रूयाद्यं द्विष्यात्ततो ह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयंनिर्दिष्टो ह्येव स यमेवं विद्वेष्टि यदि नु भिद्येत भेत्तवै ब्रूयाद्यदा ह्येव स भिद्यतेऽथ तᳪं शुगृच्छति यं द्वेष्ट्यप्रतीक्षमायन्त्यप्रतीक्षमेव तच्छुचं पाप्मानं जहति १२

प्रत्येत्येष्टका धेनूः कुरुते । ( त८ ) एतद्वाऽएनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य प्रत्येत्येष्टका धेनूरकुर्वत तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य प्रत्येत्येष्टका धेनूः कुरुते ॥ १३ ॥

---

( वा. सं. १७ । १ ) इति । यमेव द्वेष्टि—तमस्य शुगृच्छति । अमुं ते शुगृच्छतु—इति ह ब्रूयात्—यं द्विष्यात् । ततो ह तस्मिन्न पुनरास्ति । अपि तन्नाद्रियेत । स्वयंनिर्दिष्टो ह्येव सः—यमेवं विद्वेष्टि । यदि न भिद्येत—भेत्तवै ब्रूयात् । यदा ह्येव स भिद्यते—अथ तं शुगृच्छति—यं द्वेष्टि । अप्रतीक्षमायन्ति । अप्रतीक्षमेव तच्छुचं पाप्मानं जहति ॥ १२ ॥

प्रत्येत्येष्टका धेनूः कुरुते । एतद्वा एनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य प्रत्येत्येष्टका धेनूरकुर्वत । तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य प्रत्येत्येष्टका धेनूः कुरुते ॥ १३ ॥

---

'अमुं ते शुगृच्छतु' इत्यादिकं तु प्रागेव व्याख्यातम् । निरस्तस्य तस्याश्मनोऽभेदने किं कुर्यादिति तत्राह—यदीति । 'भेत्तवै' भेत्तुं "तुमर्थे" ( पा. सू. ३ । ४ । ९ ) इत्यादिसूत्रेण तुमर्थे तवै-प्रत्ययः । निरसनेनाभिन्नस्य तस्य बलाद्भेदने किं लभ्यत इति तत्राह—यदीति । अत्र 'यदि न भिद्येत भेत्तवै ब्रूयाद्' इति सामान्येन च तद्भेदनमश्मविषयमुत कुम्भविषयमिति निर्णयो न दृश्यते अतोऽत्र विचार्यते किमेतद्भेदनं कुम्भविषयमश्मविषयं वेति । किं तावत्प्राप्तम् । सामर्थ्यात्कुम्भविषयमेतद्भेदनं नाश्मविषयम् । कुत एतत् । एवमेतद्वचनं समर्थं भवति—यदि न भिद्येत भेत्तवै ब्रूयादिति । अद्रौ त्वसमर्थमेव । नहि तस्य कठिनत्वाद्भेदनमाशङ्क्येत इति प्राप्तेऽभिधीयते । अश्मविषयं चैतद्भेदनं प्रतिपत्तव्यम्, न कुम्भविषयम् । कुतः ? अर्थवादात् 'यदा ह्येव स भिद्यतेऽथ तं शुगृच्छति यं द्वेष्टि' इति । सा च शुगश्मनि निहिता "तदश्मनि शुचं दधाति" इति । किञ्च अश्मन्येव वाच्यं भेदनम्, न कुम्भे । स ह्यद्रिगर्भः क्षिप्तोऽवश्यमेव भिद्येतेति । तदेतत्सर्वं कात्यायनेन सूत्रितम्—"अभिन्ने भेत्तवै ब्रूयात्, कुम्भे भेदनं सामर्थ्यात्, अश्मनि वाऽर्थवादात्, वाच्यत्वाच्च "—( का. श्रौ. सू. १८ । ११, १२, १३, १४ ) इति । निरसनानन्तरं कर्त्तव्यमाह—अप्रतीक्षमिति ॥ १२ ॥

साश्मानं कुम्भं निरस्य प्रत्येत्येष्टका धेनूः कुर्यादित्याह—प्रत्येत्येति । धेनुकरणं नाम वक्ष्यमाणमन्त्रजपपूर्वकं धेनुरूपेणानुसंधानम् । शतरुद्रियादिकुम्भनिरसनान्तं कर्म कृत्वा प्रत्येत्य देवैः धेनुकरणाद्यजमानोऽपि एतेन तथैव कृतवान् भवतीत्याह—एतद्वा इति । 'देवा इष्टका धेनूरकुर्वत, तथैवैनमयम्' इत्यादि स्पष्टम् ॥ १३ ॥



१८७

(तऽ) आसीनः कुर्व्वीतेत्यु हैकऽआहुः । (गु) आसीनो वै धेनुं दोग्धीति तिष्ठंस्त्वेवु कुर्व्वीतेमे वै लोकाऽएषोऽग्निस्तिष्ठन्तीव वाऽइमे लोकाऽअथो तिष्ठन्वै व्वीर्यवत्तरः ॥ १४ ॥

(ऽ) उदङ्प्राङ्तिष्ठन् । (न्यु) पुरस्ताद्वाऽएषा प्रतीची यजमानं धेनुरुपतिष्ठते दक्षिणतो वै प्रतीचीं धेनुं तिष्ठन्तीमुपसीदन्ति ॥ १५ ॥

स यत्राभ्याप्नोति । तदभिमृश्यैतद्यजुर्जपतीमा मेऽअग्नऽइष्टका धेनवः सन्त्वित्यग्निर्हैतासां धेनुकरणस्येष्टे तस्मादेतावतीनां देवतानामग्निमेवा-

---

आसीनः कुर्वीतेत्यु हैक आहुः । आसीनो वै धेनुं दोग्धीति । तिष्ठंस्त्वेव कुर्वीत । इमे वै लोका एषोऽग्निः । तिष्ठन्तीव वा इमे लोकाः । अथो तिष्ठन्वै वीर्यवत्तरः ॥ १४ ॥

उदङ् प्राङ्तिष्ठन् । पुरस्ताद्वा एषा प्रतीची यजमानं धेनुरुपतिष्ठते । दक्षिणतो वै प्रतीचीं धेनुं तिष्ठन्तीमुपसीदन्ति ॥ १५ ॥

स यत्राभ्याप्नोति–तदभिमृश्यैतद्यजुर्जपति । "इमा मे अग्न इष्टका धेनवः सन्तु"–इति । अग्निर्हैतासां धेनुकरणस्येष्टे । तस्मादेतावतीनां देवतानामग्निमेवामन्त्रयते । " एका च दश

---

विहितं धेनुकरणम् आसीनेन संपाद्यमिति केषांचिच्छाखिनां सोपपत्तिकं मतं पूर्वपक्षयितुं दर्शयति–आसीन इति । स्वमतमाह–तिष्ठंस्त्वेवेति । ' तिष्ठन् एव कुर्वीत ' न पुनरासीन इत्येवकारेण पूर्वमुपन्यस्तस्य मतस्य निरासः । स्वमते उपपत्तिमाह–इमे वा इति ।'एषः' संचितः 'अग्निः' 'इमे' पृथिव्यादयो ' लोकाः ' । कुतः ? प्रजापतिस्तावत्पृथिव्यादिलोकहेतुत्वेन तदात्मकः । एषोऽग्निः प्रजापत्यात्मकः । " स यः स प्रजापतिर्व्यस्रंसतायमेव स योऽयमग्निश्चीयते " (श. प. ८ । २ । २ । ६)–इत्युक्तत्वात् । एवं प्रजापत्यात्मना अग्निरिमे लोकाः, लोकाश्चैते ' तिष्ठन्तीव ' ऊर्द्ध्वा अवतिष्ठन्त इव । अतश्च पृथिव्यादिलोकत्रयात्मकस्याग्नेरवयवीभूतानामिष्टकानां धेनुकरणं स्थित्वा संपाद्यमित्यर्थः । अपि च अग्निवल्लोके तिष्ठन् पुरुषो वीर्यवत्तरो भवति न त्वासीनः । ततश्च वीर्यवानिव भूत्वाऽनुकरोति । यथा धेनवोऽभिमतं पयो दुहन्ति तद्वदेवैता अपीष्टकाः स्वाभिलषितं दुहन्ति इति बुद्ध्या धेनुरूपेणानुसन्धानं क्रियते । धेनवश्च वीर्यवत्तरेण जनेन दुह्यमानाः भूयः पयो दुहन्ति न पुनर्दुर्बलेन । अतोऽत्रापि स्वाभिलषितदोहनार्थं धेनुकरणं वीर्यवता सम्पाद्यम् । तच्च वीर्यवत्त्वं तिष्ठत एव सम्भवतीति तिष्ठन्नेव धेनूः कुर्यादिति भावः ॥ १४ ॥

तिष्ठन्नपि कथं तिष्ठन्कुर्यादिति तत्राह-उदङ्प्राङिति । ' उदङ् प्राङ् ' इति ऐशानी दिगुच्यते तदभिमुखस्तिष्ठन्नित्यर्थः । लोके हि यजमानस्य पूर्वभागे धेनोः प्रत्यङ्मुखतयाऽवस्थानाद्दोग्धॄणां च प्रत्यङ्मुखाया धेनोः दक्षिणतो दोहनात्स्वाभिलषितदोहनार्थे इष्टकानां धेनुकरणे तथा करणमुचितमित्याह–पुरस्ताद्वा इति ॥ १५ ॥

प्रकृते धेनुकरणे स्थानविशेषस्पर्शपूर्वकं मन्त्रं विधत्ते–स यत्रेति । अग्नेरात्मभागस्योपरि ' यत्र ' स्प्रष्टुमाप्नोति ' तत् ' स्थानम् ' अभिमृश्य ' " इमा मे अग्ने "–(वा. सं. १७।२) इति मन्त्रं जपेदित्यर्थः । अत्र आत्मन

---

१–अनपेक्षमेत्योदङ्प्राङ् तिष्ठन्नात्मन उपरि प्रापणांते जपतीमा म इति । का० श्रौ० सू० १८ । १५ ।

मन्त्रयतऽएका च दुश चान्तश्च पराधश्चेत्येषु ह्यवराध्यो भूमा यदेका च दुश चाथ हैषु पुराध्यो भूमा यदन्तश्च पराधश्चावरार्धतश्चैवैनाऽएतत्परार्धतश्च परिगृह्य देवा धेनूरकुर्वत तथैवैनाऽअयमेतदवरार्धतश्चैव परार्धतश्च परिगृह्य धेनूः कुरुते तुस्मादपि नाद्रियेत बह्वीः कर्तुममुत्र वाऽएषुऽएता ब्रह्मणा यजुषा बह्वीः कुरुतेऽथ यत्संतनोति कामानेव तत्सन्तनोति ॥ १६ ॥

यद्वेवेष्टका धेनूः कुरुते । वाग्वाऽअयमग्निर्वाचा हि चितः स यदाहैका

चान्तश्च पराधश्च"—इति । एष ह्यवराध्यो भूमा—यदेका च दश च । अथ हैष पराध्यो भूमा—यदन्तश्च पराधश्च । अवरार्धतश्चैवैना एतत्परार्धतश्च परिगृह्य देवा धेनूरकुर्वत । तथैवैना अयमेतदवरार्धतश्चैव परार्धतश्च परिगृह्य धेनूः कुरुते । तस्मादपि नाद्रियेत बह्वीः कर्तुम् । अमुत्र वा एष एता ब्रह्मणा यजुषा बह्वीः कुरुते । अथ यत्सन्तनोति—कामानेव तत्सन्तनोति ॥ १६ ॥

यद्वेवेष्टका धेनूः कुरुते । वाग्वा अयमग्निः । वाचा हि चितः । स यदाह—एका च दश चान्तश्च

इत्यग्न्यात्मभागस्येत्यर्थः । अग्निव्यतिरिक्तासु बह्वीषु देवतासु सतीष्वपि तत्राग्निमेव प्राधान्येन किमिति संबोधयतीत्याह—अग्निर्हैतासामिति । अवयवव्यापारेऽवयविनः सामर्थ्योपलम्भादिष्टकानामग्न्यवयवत्वेनाग्निस्तासां धेनुकरणे समर्थ इति भावः । मन्त्रे आदावेका च दश चेति, अवसाने—अन्तश्च परार्द्धश्चेति सङ्ख्याविशेषप्रयोगस्याभिप्रायमाह—एका च दश चेति । य एषः 'अवराध्यो भूमा' अवकृष्टं बहुत्वम् अवरसङ्ख्यावरसीमा । शताद्यपेक्षया दशत्वसङ्ख्या अवरा, ततोऽप्यवरा एकत्वसङ्ख्या । ततश्चार्वाचीनायाः सङ्ख्याया अभावादिति । यदन्तश्चेति । य एव पुनः 'परार्द्ध्यो भूमा' उत्कृष्टं बहुत्वम् अधिकसंख्या । एकदशशतसहस्रादिसंख्यापेक्षयाऽन्तस्याधिकत्वम् । ततोऽपि परार्द्धस्याधिकत्वम् , तत उत्तरस्या अधिकसंख्याया अभावादित्यर्थः । एवं च 'देवाः' न्यूनसंख्याभूम्ना अधिकसंख्याभूम्ना च मध्यतः शतादिसंख्याका 'एनाः' इष्टकाः परितो गृहीत्वा 'धेनूरकुर्वत' यत एवम्, तस्मादिदानीं यजमानोऽपि "एका च" इत्यादिमन्त्रपाठेन तद्वदेव 'परिगृह्य धेनूः कुरुते' इति । नन्वेवं सति मन्त्रे यत्संख्याकानामिष्टकानां धेनुरूपता सम्पाद्यते तत्संख्याका इष्टका धेनवः क्रियन्ते । तथाप्युक्तसंख्यातिक्रमेण तत्संख्यानुसाराद् 'बह्वीः कर्तुं नाद्रियेत' इत्यर्थः । कथं तथेष्टकास्तत्संख्याका धेनवः सम्पाद्यन्त इत्यत आह—अमुत्र वा इति । 'एषः' यजमानोऽमुष्मिँल्लोके, उपलक्षणमेतत् । इह लोकेऽपि ब्रह्मणा बृहता वीर्यवतेत्यर्थः । तेन यजुर्मन्त्रेण 'एता' इष्टकाः 'बह्वीः' एकादिपरार्द्धान्तसंख्याकाः 'कुरुते' मन्त्रसामर्थ्यादल्पस्य बहुभवनं तैत्तिरीयके श्रूयते—"धान्यमसि धिनुहि देवानित्याह । एतस्य यजुषो वीर्येण । यावदेका देवता कामयते यावदेका । तावदाहुतिः प्रथते । नहि तदस्ति । यत्तावदेव स्यात् । यावज्जुहोति" (तै. ब्रा. ३ । २ । ६ । ३) इति । मन्त्रे एका च दश चेत्यादिनोत्तरोत्तराधिकसंख्यासन्तानस्य फलमाह—अथ यदिति ॥ १६ ॥

अथ तदेवेष्टकाधेनुकरणं वाग्धेनुकरणात्मना प्रशंसति—यद्वेवेति । मन्त्ररूपया वाचा चितत्वादग्निर्वागात्मकः । एकत्वादिका अपि संख्या वाचा प्रकाश्यमानत्वाद् वागात्मिकाः । एवं च सति अग्न्यवयवीभूतानामिष्टकानाम्

च दश चान्तश्च परार्धश्चेति व्वाग्वाऽएका व्वाग्दश व्वागन्तो व्वाक्परार्धो व्वाचमेव तद्देवा धेनुमकुर्व्वत तथैवैतद्यजमानो व्वाचमेव धेनुं कुरुतेऽथ यत्सन्तनोति व्वाचमेव तत्संतनोत्येता मेऽअग्नऽइष्टका धेनवः सन्त्वमुत्रामुष्मिँल्लोकऽ इत्येतद्वाऽ एना ऽअस्मिँल्लोके धेनूः कुरुतेऽथैनाऽएतदमुष्मिँल्लोके धेनूः कुरुते तथो हैनमेता ऽउभयोर्लोकयोर्भुञ्जन्त्यस्मिंश्चामुष्मिंश्च ॥ १७ ॥

( ऋतु ) ऋतव स्थेति । ( त्यृ ) ऋतवो ह्येता ऽऋतावृध ऽइति सत्यवृध ऽइत्येतद्दतुष्ठा स्थ ऽऋतावृध ऽइत्यहोरात्राणि वाऽइष्टकाऽऋतुषु वाऽ अहोरात्राणि तिष्ठन्ति घृतश्चुतो मधुश्चुत ऽइति तदेना घृतश्चुतश्च मधुश्चुतश्च कुरुते ॥ १८ ॥

---

परार्धश्चेति । वाग्वा एका, वाग्दश, वागन्तः, वाक् परार्धः । वाचमेवं तद्देवा धेनुमकुर्वत । तथैवैतद्यजमानो वाचमेव धेनुं कुरुते । अथ यत्सन्तनोति–वाचमेव तत्सन्तनोति । " एता मे अग्न इष्टका धेनवः सन्त्वमुत्रामुष्मिँल्लोके "–( वा. सं. १७ । २ ) इति । एतद्वा एना अस्मिँल्लोके धेनूः कुरुते । अथैना एतदमुष्मिँल्लोके धेनूः कुरुते । तथो हैनमेता उभयोर्लोकयोर्भुञ्जन्ति–अस्मिंश्चामुष्मिंश्च ॥ १७ ॥

" ऋतव स्थ "–इति । ऋतवो ह्येताः । " ऋतावृधः "–इति । सत्यवृध इत्येतत् । "ऋतुष्ठा स्थ ऋतावृधः"–इति । अहोरात्राणि वा इष्टकाः । ऋतुषु वा अहोरात्राणि तिष्ठन्ति । " घृतश्चुतो मधुश्चुतः "–इति । तदेना घृतश्चुतश्च मधुश्चुतश्च कुरुते ॥ १८ ॥

---

' एका च दश च ' इत्यादिसंख्याप्रकाशकेन मन्त्रेण ' देवा वाचम् ' एव ' धेनुम् ' अकुर्वन् । अत इदानीन्तनोऽपि ' यजमानः ' तद्वदेव करोति । एकत्वादिसंख्यानां वागात्मकत्वादुत्तरोत्तराधिकसंख्यासन्तानेन वाचमेव भूयसीमविच्छिन्नां सम्पादितवान् भवतीत्याह–अथेति । ननु च " इमा मे अग्न इष्टका धेनवः सन्तु " इत्यनेन धेनुरूपत्वसंपादनात् पुनरपि तदेव "एता मे अग्ने" इत्यादिना सम्पाद्यत इति पौनरुक्त्याशङ्कां निवारयति–एतद्वा इति । " इमा मे अग्ने " इत्येतेनैता ' इष्टकाः ' ' अस्मिँल्लोके ' इह लोके धेनूः करोति । अथ 'एता मे अग्ने' इत्यनेन ' अमुष्मिँल्लोके ' स्वर्गे ' धेनूः ' करोति । अतश्च पृथगर्थत्वान्न पुनरुक्तिरिति भावः । इष्टकानां लोकद्वयेऽपि धेनुरूपतासम्पादनस्य फलमाह–तथो हेति । तथा सति, ' एताः ' इष्टकारूपा धेनवः, ' अस्मिंश्चामुष्मिंश्च ' इति ' उभयोर्लोकयोः ' अपि ' एनम् ' यजमानं ' भुञ्जन्ति ' पालयन्तीत्यर्थः । भुञ्जन्तीति " भुजोऽनवने "–( पा. सू. १ । ३ । ६६ ) इत्यात्मनेपदविधाने अवननिषेधात्परस्मैपदम् । हे अग्ने ! इमा ' इष्टका ' इह लोके एकत्वादिपरार्द्धान्तसंख्याविशिष्टा ' धेनवः ' न केवलं हि इह लोक एव, किन्तु हे अग्ने ! अमुत्रेत्येतत्पदं मन्त्र एव विवृणोति–अमुष्मिँल्लोक इति । तत्रापि ' एता इष्टका मे धेनवः सन्तु ' इति मन्त्रस्यार्थः ॥ १७ ॥

अथ तत्रैव मन्त्रान्तरं प्रदर्शयन् व्याचष्टे–ऋतवः स्थेति । ऋतवो हीति । एता इष्टका ऋतवः खलु

व्विराजो नामेति । ( त्ये ) एतद्वै देवा ऽएताऽ इष्टका नामभिरुपाह्व-यन्त यथायथैना ऽएतदाचक्षते ताऽएनानभ्युपावर्तन्ताथ लोकम्पृणाऽएव पराच्यस्तस्थुरहितनाम्न्यो निर्मेमिहत्यस्ता व्विराजो नामाकुर्वत ता ऽएनानभ्युपावर्तन्त तस्माद्दशदशेष्टकाऽउपधाय लोकम्पृणयाऽभिमन्त्र-यते तदेना व्विराजः कुरुते दशाक्षरा हि व्विराट्कामदुघा ऽअक्षीयमाणा ऽइति तदेनाः कामदुघाऽअक्षीयमाणाः कुरुते ॥ १९ ॥

( तेऽथै ) अथैनं व्विकर्षति । मण्डूकेनावकया व्वेतसशाखयैतद्वा-ऽएनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्या-थैनमेतद्भूय ऽएवाशमयंस्तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वा

---

" विराजो नाम "–इति । एतद्वै देवा एता इष्टका नामभिरुपाह्वयन्त–यथायथैना एतदा-चक्षते । ता एनानभ्युपावर्तन्त । अथ लोकम्पृणा एव पराच्यस्तस्थुरहितनाम्न्यो निर्मेमिहत्यः । ता विराजो नामाकुर्वत । ता एनानभ्युपावर्तन्त । तस्माद्दशदशेष्टका उपधाय लोकम्पृणयाऽभि-मन्त्रयते । तदेना विराजः कुरुते । दशाक्षरा हि विराट् । " कामदुघा अक्षीयमाणाः "–( वा. सं. १७ । ३ ) इति । तदेनाः कामदुघा अक्षीयमाणाः कुरुते ॥ १९ ॥

अथैनं विकर्षति–मण्डूकेनावकया वेतसशाखया । एतद्वा एनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्याथैनमेतद्भूय एवाशमयन् । तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च

---

संवत्सरात्मकस्य अग्नेरवयवत्वादित्यर्थः । अहोरात्राणि वा इष्टका इत्यत्राप्येवमेवाभिप्रायः । ' ऋतावृधः ' इति च्छान्दसो दीर्घः । ' ऋतावृध ' इति पुनर्वचनमादरार्थम् । स्पष्टमन्यत् ॥ १८ ॥

विराजो नामेत्यादिकस्यायमर्थः । एतस्मिन्काले खलु ' देवाः ' यथायथा ' एता इष्टका ' आचक्षाणा यैर्नामभिः ' एना ' इष्टका ' आचक्षते ' जनास्तैरेव ' नामभिः ' स्वयमभ्युपाह्वयन्त । ततश्च एता इष्टका ' एनान् ' देवान् 'अभ्युपावर्त्तन्त' समीपमगमन् । अथ लोकम्पृणा इति । एता अविहितनाम्न्यः धेनुरूपतया-ऽस्यर्थं मूत्रं विसृजन्त्यः पराङ्मुख्य एव 'तस्थुः' । अन्यासामिष्टकानां स्वयमातृण्णारेतःसिग्विश्वज्योतिरपस्याप्राण-भृदित्यादिकानि नामानि विद्यन्ते । लोकम्पृणानां तु तथा प्रातिस्विकनामधेयाभावादितरेष्टकावत्स्वसमानाह्वानेन विमुखीभूता अवस्थिता इत्यर्थः । पश्चाद्देवाः ' ताः ' इष्टका विराड्नाम्नीः ' अकुर्वत ' अतः स्वयमपि तत्समीपमगमन् । अत एव तदुपधानावसरेऽपि लोकम्पृणा ' दशदशोपधाय ' मन्त्रेण ' अभिमन्त्रयते ' । एवं च सति विराजो दशाक्षरत्वादेता ' विराजः ' कृतवान् भवतीति तस्मान्मन्त्रे लोकम्पृणा उद्दिश्य विराजो नामेति प्रयुक्तमिति विशदमन्यत् । ' ऋतवः स्थ ' इत्यादिमन्त्रस्य योजनं यथाश्रुतमेव ॥ १९ ॥

इष्टकानां धेनुरूपतासम्पादनानन्तरं मण्डूकावकावेतसशाखाभिरग्निस्थलस्य विकर्षणं विधत्ते–अथेति[1] ।

---

१–मंडूकावकावेतसशाखा व्वेणौ बध्वाऽवकर्षति मंत्रकृष्टवत् समुद्रस्य त्वेति प्रत्यृचम् । का. श्रौ. सू. १८ । १६ ।

शुचमस्य पाप्मानमपहत्याथैनमेतद्भूयऽएव शमयति सर्व्वतो विकर्षति सर्व्वतऽएवैनमेतच्छमयति ॥ २० ॥

यद्वेवैनं विकर्षति । ( त्ये ) एतद्वै यत्रैतं प्राणाऽऋषयोऽग्रेऽग्निꣳ समस्कुर्वंस्तमद्भिरवोक्षंस्ताऽआपः समस्कन्दंस्ते मण्डूकाऽअभवन् ॥ २१ ॥

(वंस्ताः) ताः प्रजापतिमब्रुवन् । ( न्य ) यद्वै नः कमभूदवाक्कुदगादिति सोऽब्रवीदेष वऽएतस्य वनस्पतिर्वेत्त्विति वेत्तु स वेत्तसो ह वै तं वेतसऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाऽअथ यदब्रुवन्नवाङ्नः कमगादिति ताऽअवाकाऽअभवन्नवाका ह वै ता ऽअवका ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्ता हैतास्त्रय्य ऽआपो यन्मण्डूकोऽवका वेतसशाखैताभिर्वैवैनमेतत्त्रयीभिरद्भिः शमयति ॥ २२ ॥

---

शमयित्वा शुचमस्य पाप्मानमपहत्याथैनमेतद्भूय एव शमयति । सर्वतो विकर्षति । सर्वत एवैनमेतच्छमयति ॥ २० ॥

यद्वेवैनं विकर्षति । एतद्वै यत्रैतं प्राणा ऋषयोऽग्रेऽग्निं समस्कुर्वन् । तमद्भिरवोक्षन्–ता आपः समस्कन्दन्–ते मण्डूका अभवन् ॥ २१ ॥

ताः प्रजापतिमब्रुवन्–यद्वै नः कमभूद्–अवाक्तदगादिति । सोऽब्रवीत्–एष व एतस्य वनस्पतिर्वेत्त्विति । वेत्तु सः । वेत्तसो ह वै तं वेतस इत्याचक्षते परोक्षम् । परोक्षकामा हि देवाः । अथ यदब्रुवन्–अवाङ् नः कमगादिति–ता अवाका अभवन् । अवाका ह वै ता अवका इत्याचक्षते परोक्षम् । परोक्षकामा हि देवाः । ता हैतास्त्रय्य आपः–यन्मण्डूकः, अवका, वेतसशाखा, एताभिर्वैवैनमेतत्त्रयीभिरद्भिः शमयति ॥ २२ ॥

---

" एतद्वा " इत्यादिकस्य संबन्धस्तु ( श. प. ९ । १ । २ । १० ) प्रागेवाभिहितः । विहितं तद्विकर्षणं सर्वतः कर्तव्यमित्याह–सर्वत इति । सर्वत्रापि विकर्षणप्रकारः परस्तात्स्वयमेव वक्ष्यते ॥ २० ॥

अथ मण्डूकावकावेतसशाखानामुत्पत्तिप्रदर्शनपूर्वकं तत्संपाद्यस्य विकर्षणस्य शमनार्थतां दर्शयति–यद्वेवैनमिति । ' एनम् ' अग्निं मण्डूकादिभिर्विकर्षतीति ' यत् ' तत्र ' एतत् ' कारणं खल्विति कारणाभिधानं प्रतिज्ञाय ' यत्रैतम् ' इत्यादिना तत्प्रदर्श्यते–' अग्रे ' पूर्वं ' यत्र ' यस्मिन्प्रस्तावे ऋषिशब्दाभिधेयाः ' प्राणाः ' ' एतमग्निं ' ' समस्कुर्वन् ' । संस्कारप्रकारस्तु षष्ठकाण्डस्यादावुक्तः । तदा ते प्राणाः ' तम् ' अग्निम् ' अद्भिः ' अवोक्षितवन्तः । ' ताः ' चापः ' समस्कन्दंस्ते मण्डूका अभवन् ' ॥ २१ ॥

ततः प्रजापतिं प्रति ' नः ' अस्माकं ' कं ' रसः ' अवागगात् ' इत्यद्भिरुक्ते स प्रजापतिः ' वः ' एतस्य ' रसस्य ' एष वनस्पतिर्वेत्तु ' इति ' अब्रवीत् ' । एतस्येति कर्मार्थे षष्ठी । ' एष ' इति प्रत्यक्षेण निर्दिष्टस्तं ' वनस्पतिर्वेत्तु सः ' इति परोक्षेणाप्याह । यत एवमुक्तं तेन वेत्तुसोऽभूत् खलु । ' तं ' देवाः परोक्षकामत्वाद् ' वेतस ' इति

यद्वेवैनं व्विकर्षति । जायतऽएव ऽएतद्यच्चीयते सऽएष सर्व्वस्माऽअन्नाय जायते सर्व्वम्वेतदन्नं यन्मण्डूकोऽवका व्वेतसशाखा पशवश्च ह्येता ऽआपश्च व्वनस्पतयश्च सर्व्वैणैवैनमेतदन्नेन प्रीणाति ॥ २३ ॥

मण्डूकेन पशूनाम् । ( न्तु ) तस्मान्मण्डूकः पशूनामनुपजीवनीयतमो यातयामा हि सोऽवकाभिरपां तस्मादवकाऽ अपामनुपजीवनीयतमा यातयाम्न्यो हि ता व्वेतसेन व्वनस्पतीनां तस्माद्वेतसो व्वनस्पतीनामनुपजीवनीयतमो यातयामा हि सः ॥ २४ ॥

---

यद्वेवैनं विकर्षति । जायतऽएष एतद्—यच्चीयते । स एष सर्वस्मा अन्नाय जायते । सर्वम्वेतदन्नम्—यन्मण्डूकः, अवका, वेतसशाखा । पशवश्च ह्येताः, आपश्च, वनस्पतयश्च । सर्वेणैवैनमेतदन्नेन प्रीणाति ॥ २३ ॥

मण्डूकेन पशूनाम् । तस्मान्मण्डूकः पशूनामनुपजीवनीयतमः । यातयामा हि सः । अवकाभिरपाम् । तस्मादवका अपामनुपजीवनीयतमाः । यातयाम्न्यो हि ताः । वेतसेन वनस्पतीनाम् । तस्माद्वेतसो वनस्पतीनामनुपजीवनीयतमः । यातयामा हि सः ॥ २४ ॥

---

‘ आचक्षते ’ । ‘ अथ ’ आपो ‘ यदब्रुवन् ’ ‘ अवाक् तदगादिति ’ तस्मात् स रसः ‘ अवाका ’ अभवन् । ‘ ताः ’ च देवाः परोक्षकामत्वाद् ‘ अवका ’ इति ‘ आचक्षते ’ । ता हैता इति । उक्तप्रकारेण मण्डूकाः साक्षादेवापः, वेतसोऽपि तद्रसवेदनाद्, अवकास्तु तद्रसात्मकत्वादिति सर्वेऽप्येते मण्डूकादयः अबात्मका इति ‘ ता एताः ’ त्रिविधा आपः खलु । तस्मात्तैरवकर्षणे ‘ एताभिः ’ त्रिविधाभिरपि ‘ अद्भिः ’ ‘ एनम् ’ अग्निम् शमितवान्भवति ॥ २२ ॥

इत्थं मण्डूकादीनामबात्मकत्वेन शमनार्थत्वं प्रदर्श्याथ तानेव कृत्स्नान्नरूपेण प्रशंसति—यद्वेवेति । पूर्वं प्रजासृष्टिनिबन्धनेन परासुः प्रजापतिरिदानीं चयनलक्षणान्नसंस्कारेण प्राणादीनां निधानात्पुनरुत्पद्यत इति चीयमानाग्निलक्षणः प्रजापतिर्जायत एव । जायमानस्य च सर्वान्नभोगार्थमेवोत्पत्तेः ‘ एषः ’ अपि ‘ सर्वस्मा अन्नाय जायते’ । मण्डूकादयश्च कृत्स्नमन्नं, तदेव प्रदर्श्यते—पशवश्च ह्येता इति ।‘एताः’ मण्डूकावकावेतसशाखाः क्रमेण ‘ पशव आपो वनस्पतयश्च ’ भवन्तीति मण्डूकादयः स्थावरजङ्गमात्मकं कृत्स्नमन्नम् । अत्र यद्यप्येते मण्डूकादयः सर्वेऽप्यबात्मकाः, तथापि अवकानां जलैकायतनत्वाद् वेतसानामप्प्ररूढवनस्पतिरूपत्वाच्च ता आप इत्युक्तम् । एवं च सति मण्डूकादिभिर्विकर्षणेन ‘ एनम् ’ अग्निं ‘ सर्वेणैवान्नेन प्रीणाति ’ इति ॥ २३ ॥

विकर्षणेन वान्तरसा मण्डूकादयोऽनुपजीवनीया आसन्नित्याह—मण्डूकेनेति । “ पशूनां ” मध्ये मण्डूकेन विकृष्टवानिति ‘ यद् ’ तस्मात् पशूनां मध्ये मण्डूको गतसारत्वात् पश्वंतरवदुपकारको न भवति । एवमवका अपि भक्ष्याः पेया वा न भवन्तीति । वेतसोऽपि वनस्पत्यन्तरवत्पुष्पफलादिनोपकारको न भवतीति एते सर्वेऽप्यनुपजीवनीया अभूवन्नित्यर्थः ॥ २४ ॥

( स तु ) तानि व॒ꣳशे प्रबुध्य । दक्षिणार्धेनाग्नेरन्तरेण परिश्रितः प्रागग्रे व्विकर्षति समुद्रस्य त्वाऽवकयाऽग्ने पुरिव्ययामसि । पावकोऽअस्मुभ्यꣳ शिवो भवेति समुद्रियाभिस्त्वाऽद्भिः शमयामऽइत्येतत् ॥ २५ ॥

( दु ) अथ जघनार्धेनोदक् । ( ग्घि ) हिमस्य त्वा जरायुणाऽग्ने पुरिव्ययामसि । पावकोऽअस्मुभ्यꣳ शिवो भवेति यद्वै शीतस्य प्रशीतं तद्धिमस्य जरायु शीतस्य त्वा प्रशीतेन शमयामऽइत्येतत्॥२६॥(शतम्४८००॥)

---

तानि वंशे प्रबध्य दक्षिणार्धेनाग्नेरन्तरेण परिश्रितः प्रागग्रे विकर्षति । " समुद्रस्य त्वाऽवकयाऽग्ने परिव्ययामसि । पावकोऽस्मभ्यं शिवो भव "–( वा. सं. १७ । ४ ) इति । समुद्रियाभिस्त्वाऽद्भिः शमयाम इत्येतत् ॥ २५ ॥

अथ जघनार्धेनोदक् । " हिमस्य त्वा जरायुणाऽग्ने परिव्ययामसि । पावकोऽस्मभ्यं शिवो भव "–( वा. सं. १७ । ५ ) इति । यद्वै शीतस्य प्रशीतं–तद्धिमस्य जरायु । शीतस्य त्वा प्रशीतेन शमयाम इत्येतत् ॥ २६ ॥

---

मण्डूकादिभिः कथं विकर्षणं सम्भवतीति तदुपायमाह–तानीति । ' तानि ' मण्डूकादीनि ' वंशे ' ' प्रबध्य ' विकर्षेदिति शेषः । पूर्वमग्निस्थलस्य सामान्येन विकर्षणमुक्तम् । " अथैनं विकर्षति " इति । कुत्रेदानीं कस्मिन् कस्मिन् प्रदेशे केन केन प्रकारेणेति विशेषजिज्ञासायामाह–दक्षिणार्धेनेति । परिश्रिताम् ' अन्तरेण ' अग्नेरात्मभागस्य दक्षिणभागे प्रथमं ' प्राक् ' अपवर्गं कर्षति " समुद्रस्य त्वा "–( वा. सं. १७ । ४ ) इति मन्त्रेणेत्यर्थः । दक्षिणार्द्धेनेति । ( पा. सू. ३ । १ ।८९ ) व्यत्ययेन तृतीया । समुद्रस्य त्वाऽवकयाऽग्ने परिव्ययामसीत्यस्य तात्पर्यमाह–समुद्रियाभिरिति । ' समुद्र ' शब्देनात्र जलाशय उच्यते । समुद्रसम्बन्धिनीभिः ' अद्भिः ' त्वां ' शमयाम ' ' इत्येतद् ' उक्तं भवति । अवकाया अबात्मकत्वात् तया संवरणेन शमनस्य निष्पादनादित्यर्थः । समुद्रियाभिरिति " समुद्राभ्राद्घः "–( पा. सू. ४ । ४ । ११८ ) इति घप्रत्ययः । " आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् "–( पा. सू. ७ । १ । २ ) इति सूत्रेणेयादेशः । हे अग्ने ! त्वां समुद्रसम्बन्धिन्या अवकया ' परिव्ययामसि ' परितः संवृणुमः । " इदन्तो मसि " ( पा. सू. ७ । १ । ४६ ) इत्युत्तमपुरुषबहुवचनसकारस्यान्ते इकारागमः । तेन च संवरणेन शान्तस्त्वम् ' अस्मभ्यम् ' अस्मदर्थं पावयति शोधयतीति ' पावकः ' ' शिवः ' स्योनः आनुकूल्यवान् ' भव ' इति मन्त्रस्यार्थः ॥ २५ ॥

उक्तप्रकारेण दक्षिणभागे विकृष्य पश्चिमभागमुदगपवर्गं हिमस्य त्वेत्यनेन मन्त्रेण विकर्षेदित्याह–अथ जघनार्द्धेनेति । ' यद्वै शीतस्य ' इत्यादिकस्यायमर्थः–' यत् ' खलु ' शीतस्य ' अपि ' प्रशीतं ' प्रकृष्टं शीतं ' तद्धिमस्य ' ' जरायु ' जरायु–शब्दो गर्भवेष्टनवचनः । अतश्च जरायुर्यथा गर्भमाच्छादयति तद्वदधिकं शीतमप्यलं शीतम् । ' तद्धिमस्य जरायुणा ' इति । शीतादप्यधिकं शीतमुच्यत इति । अत्राबात्मका मण्डूकादय एव हिमस्य जरायुणेत्येतेन विवक्ष्यन्ते । तेन च शब्देन तेषामभिधानं प्रकृष्टशमनसमर्थत्वसूचनार्थमिति प्रतिपत्तव्यम् ॥ २६ ॥

( ङु ) अुथोत्तरार्धेन प्राक् । ( ग़ु ) उुप ज्मन्नुप वेतसेऽवतर नदीष्वा । अुग्ने पित्तुमपामसि मुण्डूकि तुाभिरागहि सेमं नो यज्ञं पावकुवर्णꣳ शिवं कृधीति युथैव युजुस्तुथा बुन्धुः ॥ २७ ॥

( रु ) अुथ पूर्वार्धेन दक्षिणा । ( णाऽपा ) अपामिदं न्ययनꣳ समुद्रस्य निवेशनम् । अन्याꣳस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यꣳ शिवो भवेति युथैव युजुस्तुथा बुन्धुरित्युग्रे विकर्षत्यथेति । अथेत्यथेति तुद्दक्षिणावृत्ताद्धि देवुत्रा ॥ २८ ॥

( त्राऽऽत्मा ) आत्मानमुग्रे विकर्षति । ( त्या ) आत्मा ह्येवाग्रे सम्भवतः सम्भवत्युथ दुक्षिणं पक्षमुथ पुच्छमथोत्तरं तुद्दक्षिणावृत्ताद्धि देवुत्रा ॥ २९ ॥

---

अथोत्तरार्धेन प्राक् । "उप ज्मन्नुप वेतसेऽवतर नदीष्वा । अग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेमं नो यज्ञं पावकवर्णं शिवं कृधि "–( वा. सं. १७ । ६ ) इति । यथैव यजुस्तथा बन्धुः ॥ २७ ॥

अथ पूर्वार्धेन दक्षिणा । " अपामिदं न्ययनं समुद्रस्य निवेशनम् । अन्यांस्ते अस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यं शिवो भव "–( वा. सं. १७।७ ) इति । यथैव यजुस्तथा बन्धुः । इत्यग्रे विकर्षति । अथेति, अथेति, अथेति–तद् दक्षिणावृत् । तद्धि देवत्रा ॥ २८ ॥

आत्मानमग्रे विकर्षति । आत्मा ह्येवाग्रे सम्भवतः सम्भवति । अथ दक्षिणं पक्षम् । अथ पुच्छम् । अथोत्तरम् । तद्दक्षिणावृत् । तद्धि देवत्रा ॥ २९ ॥

---

अथ पश्चाद्भागे विकर्षणानन्तरमुत्तरभागं प्रागपवर्गं विकर्षेदित्याह–अथोत्तरार्द्धेन प्रागिति । विकर्षणे मन्त्रमाह–उप ज्मन्नुपेति । मन्त्रस्तु स्पष्टार्थ इत्याह–यथैवेति ॥ २७ ॥

अथ पूर्वभागे अपामिदमिति मन्त्रेण दक्षिणापवर्गं विकर्षेदित्याह–अथ पूर्वार्द्धेनेति । अयमपि मन्त्रः स्पष्टार्थ इत्याह–यथैवेति । हे अग्ने ! यदेतन्मण्डूकावकावेतसशाखालक्षणं वस्तु ' इदमपां न्ययनं ' नितरां स्थानम् । अपां मध्ये लीनत्वेन तदयनत्वं सम्भवतीति तत्राह–समुद्रस्येति । न ह्यल्पीयसीनामपामयनमेतत् , अपि तु ' समुद्रस्य ' जलनिधेरेव 'निवेशनं' निविशतेऽस्मिन्निति निवेशनम् । अधिकरणे ल्युट् , स्थानमित्यर्थः । एवं च तथाविधेन मण्डूकादिना विकृष्यसे यतः, अतः त्वां ब्रवीमि । ' ते हेतयो ' ज्वालाः ' अस्मदन्याँस्तपन्तु ' । ' अस्मभ्यं ' तु त्वं 'पावकः' ' शिवः ' च भवेति मन्त्रार्थः । तत्तद्भागे विकर्षणप्रकारं हस्ताभिनयेन दर्शयन् दक्षिणभागादिक्रमेण विकर्षणात् सिद्धं प्रादक्षिण्यक्रमं प्रशंसति –इत्यग्रे विकर्षतीति । ' देवत्रेति ' " देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्– "–( पा. सू. ५ । ४ । ५६ ) इति सूत्रेणात्र देवात्सप्तम्यर्थे त्राप्रत्ययः । देवदेयं देवोचितं भवतीत्यर्थः ॥ २८ ॥

आत्मभागविकर्षणस्य प्राथमिकत्वमुपपादयति–आत्मानमिति । दक्षिणार्द्धेनेत्यादिना विहितं विकर्षणमग्रे-

( त्राऽभ्या ) अभ्यात्मं पक्षपुच्छानि विकर्षति । ( त्य ) अभ्यात्ममेव तच्छान्तिं धत्ते परस्तादर्वाक्परस्तादेव तदर्वाचीᳪं शान्तिं धत्तेऽग्ने पावक रोचिषेति दक्षिणं पक्षᳪं स नः पावक दीदिव ऽइति पुच्छं पावकया यश्चितयन्त्या कृपेत्युत्तरं पावकं पावकमिति यद्वै शिवᳪं शान्तं तत्पावकᳪं शमयत्येवैनमेतत् ॥ ३० ॥

( त्स ) सप्तभिर्विकर्षति । सप्तचितिकोऽग्निः सप्तर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्विकर्षति तं वᳪंशमुत्करे न्यस्य ॥ ३१ ॥

---

अभ्यात्मं पक्षपुच्छानि विकर्षति । अभ्यात्ममेव तच्छान्तिं धत्ते । परस्तादर्वाक् । परस्तादेव तदर्वाचीं शान्तिं धत्ते । " अग्ने पावक रोचिषा "–( वा. सं. १७ । ८ ) इति दक्षिणं पक्षम् । " स नः पावक दीदिवः "–( वा. सं. १७ । ९ ) इति पुच्छम् । " पावकया यश्चितयन्त्या कृपा"–( वा. सं. १७।१० ) इति उत्तरम् । पावकं पावकमिति । यद्वै शिवं शान्तं तत्पावकम् । शमयत्येवैनमेतत् ॥ ३० ॥

सप्तभिर्विकर्षति । सप्तचितिकोऽग्निः । सप्तर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतद्विकर्षति । तं वंशमुत्करे न्यस्य ॥ ३१ ॥

---

त्मभाग एव क्रियते । अतश्चाग्रे आत्मानं विकर्षतीत्येतदुपपन्नम् । कुतः ? ' सम्भवतो ' जायमानस्य करचरणाद्यवयवजातस्य मध्ये पूर्वमात्मभाग एव ' सम्भवति ' तत्सकाशात्करचरणादीनामुत्पत्तिरिति । अथ दक्षिणपक्षादीनां विकर्षणं विधाय ततः क्रमसिद्धं प्रादक्षिण्यं पूर्ववत्प्रशंसति–अथेति ॥ २९ ॥

पक्षादीनां विकर्षणमात्मभागमभिलक्ष्य कुर्यादित्याह–अभ्यात्ममिति[1] । अग्निरूपमात्मानमभि अभ्यात्मम् " लक्षणेनाभिप्रती आभिमुख्ये "–( पा. सू. २ । १ । १४ ) इत्यव्ययीभावसमासः । " अनश्च "–( पा. सू. ५ । ४ । १०८ ) इति समासान्तष्टच् । विकर्षणानुसारेण शान्तिं निहितवान्भवतीत्याह–अभ्यात्ममेवेति । कथमभ्यात्मं विकर्षणं भवतीति तत्राह–परस्तादिति अथ दक्षिणपक्षादीनां विकर्षणेषु मन्त्रान्विधत्ते–अग्ने पावक रोचिषेत्यादिना । मन्त्रेषु पावकशब्दप्रयोगस्याभिप्रायमाह–पावकं पावकमिति । 'यद्वै' खलु वस्तु ' शिवम् ' तस्यैवार्थप्रदर्शनं ' शान्तम् ' इव तत्पावकं भवति । शान्तं शान्तेः शुद्धिसम्पादकत्वात् । अतश्चाग्नेः शान्ततासिद्धये तेन शब्देन सम्बोधनमिति भावः ॥ ३० ॥

विकर्षणे विनियुक्तानां मन्त्राणां सप्तसंख्यां प्रशंसति–सप्तचितिकोऽग्निरिति । पञ्च चितयो नित्याः इतरे द्वे चिती नैमित्तिके इति सप्त चितयः । अधिमासापेक्षया ' सप्तर्तवः ' । यस्मिन् वंशे मण्डूकादीनि बद्धानि ' तं वंशम् ' ' उत्करे ' प्रक्षिपेदित्याह–तं वंशमिति[2] ॥ ३१ ॥

---

१–पक्षपुच्छानि चाभ्यात्ममग्ने पावक रोचिषेति । अन्त्यमुत्तरम् । का० श्रौ० सू० । १८ । १७ । १८ ।

२–वेणुमुत्करे कृत्वा । का० श्रौ० सू० । १८ । १९ ।

( स्यु ) अथैनꣳ सामभिः परिगायति । ( त्यु ) अत्रैष सर्व्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुस्तथैवास्मिन्नयमेतदमृतꣳ रूपमुत्तमं दधाति सामानि भवन्ति प्राणा वै सामान्यमृतमु वै प्राणाऽअमृतमेवास्मिन्नेतद्रूपमुत्तमं दधाति सर्व्वतः परिगायति सर्व्वतऽएवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति ॥ ३२ ॥

यद्वेवैनꣳ सामभिः परिगायति । ( त्ये ) एतद्वै देवाऽ अकामयन्तानस्थिकमिममृतमात्मानं कुर्व्वीमहीति तेऽब्रुवन्नुप तज्जानीत यथेममात्मानमनस्थिकममृतं करवामहाऽइति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेममात्मानमनस्थिकममृतं करवामहाऽइति ॥ ३३ ॥

ते चेतयमानाः । ( ऽ ) एतानि सामान्यपश्यंस्तैरेनं पर्यगायंस्तैरेतमात्मानमनस्थिकममृतमकुर्व्वत तथैवैतद्यजमानो यदेनꣳ सामभिः परिगायत्येतमेवैतदात्मानमनस्थिकममृतं कुरुते सर्व्वतः परिगायति सर्व्वतऽएवैतदेतमात्मानमनस्थिकममृतं कुरुते तिष्ठन्गायति तिष्ठन्तीव वाऽइमे

---

अथैनं सामभिः परिगायति । अत्रैष सर्वोऽग्निः संस्कृतः । तस्मिन्देवा एतदमृतं रूपमुत्तममदधुः । तथैवास्मिन्नयमेतदमृतं रूपमुत्तमं दधाति । सामानि भवन्ति । प्राणा वै सामानि । अमृतमु वै प्राणाः । अमृतमेवास्मिन्नेतद्रूपमुत्तमं दधाति । सर्वतः परिगायति । सर्वत एवास्मिन्नेतदमृतं रूपमुत्तमं दधाति ॥ ३२ ॥

यद्वेवैनं सामभिः परिगायति । एतद्वै देवा अकामयन्त—अनस्थिकमिममृतमात्मानं कुर्वीमहीति । तेऽब्रुवन्—उप तज्जानीत—यथेममात्मानमनस्थिकममृतं करवामहा इति । तेऽब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । तदिच्छत—यथेममात्मानमनस्थिकममृतं करवामहा इति ॥ ३३ ॥

ते चेतयमाना एतानि सामान्यपश्यन् । तैरेनं पर्यगायन् । तैरेतमात्मानमनस्थिकममृतमकुर्वत । तथैवैतद्यजमानो यदेनं सामभिः परिगायति—एतमेवैतदात्मानमनस्थिकममृतं कुरुते । सर्वतः परि-

---

अथैनमग्निं परितः सामभिर्गायेदित्याह—अथेति[1] । विहितं सामगानममृतरूपतया प्रशंसति—अत्रैष इति । कथमेतत्साम्नाममृतरूपत्वमिति तत्राह—यद्वेवेत्यादिना ॥ ३२–३४ ॥

---

१—चित्यमालभ्य तिष्ठन् हिंकृत्य साम गायति । का० श्रौ० सू० १८ । १९ ।

लोका ऽअथो तिष्ठन्वै व्वीर्यवत्तरो हिङ्कृत्य गायति तत्र हि सर्व्वं कृत्स्नꣳ साम भवति ॥ ३४ ॥

गायत्रं पुरस्ताद्गायति । ( त्य ) अग्निर्व्वै गायत्रमग्निमेवास्यैतच्छिरः करोत्यथो शिर ऽएवास्यैतदनस्थिकममृतं करोति ॥ ३५ ॥

रथन्तरं दक्षिणे पक्षे । ( क्षऽ ) इयं वै रथन्तरमियमु वा ऽएषां लोकानाꣳ रसतमोऽस्याꣳ हीमे सर्व्वे रसा रसंतमꣳ ह वै तद्रथन्तरमित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा ऽइमामेवास्यैतद्दक्षिणं पक्षं करोत्यथो दक्षिणमेवास्यैतत्पक्षमनस्थिकममृतं करोति ॥ ३६ ॥

बृहदुत्तरे पक्षे । द्यौर्व्वै बृहद्द्यौर्हि बर्हिष्ठा दिवमेवास्यैतदुत्तरं पक्षं करोत्यथोऽउत्तरमेवास्यैतत्पक्षमनस्थिकममृतं करोति ॥ ३७ ॥

---

गायति । सर्वत एवैतदेतमात्मानमनस्थिकममृतं कुरुते । तिष्ठन् गायति । तिष्ठन्तीव वा इमे लोकाः । अथो तिष्ठन्वै वीर्यवत्तरः । हिङ्कृत्य गायति । तत्र हि सर्वं कृत्स्नं साम भवति ॥ ३४ ॥

गायत्रं पुरस्ताद्गायति । अग्निर्वै गायत्रम् । अग्निमेवास्यैतच्छिरः करोति । अथो शिर एवास्यैतदनस्थिकममृतं करोति ॥ ३५ ॥

रथन्तरं दक्षिणे पक्षे । इयं वै रथन्तरम् । इयमु वा एषां लोकानां रसतमः । अस्यां हीमे सर्वे रसाः; रसन्तमं ह वै तद्रथन्तरमित्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः । इमामेवास्यैतद्दक्षिणं पक्षं करोति । अथो दक्षिणमेवास्यैतत्पक्षमनस्थिकममृतं करोति ॥ ३६ ॥

बृहदुत्तरे पक्षे । द्यौर्वै बृहत् । द्यौर्हि बर्हिष्ठा । दिवमेवास्यैतदुत्तरं पक्षं करोति । अथो उत्तरमेवास्यैतत्पक्षमनस्थिकममृतं करोति ॥ ३७ ॥

---

गायत्रं पुरस्ताद्गायतीति[1] । गायत्रस्य शिरः–प्रदेशत्वात् । किं चास्य शिर एवोक्तसामगानेनानस्थिकममृतं करोति ॥ ३५ ॥

" अभि त्वा शूर नोनुमः " ( वा. सं. २७ । ३५ ) इत्येतस्यामृच्युत्पन्नं साम ' रथन्तरम् ' । तद्दक्षिणपक्षे[2] । अतिशयरसाधारत्वेनेयं ' रसतमः ' । रसतम एव रसंतमः । तं च परोऽक्षकामत्वाद्देवा रथन्तरमित्यभिदधत इत्यर्थः । एवं चास्य पृथिवीमेव दक्षिणपक्षं कृतवान् भवति ॥ ३६ ॥

बृहदुत्तरे पक्ष इति[3] । " त्वामिद्धि हवामहे "–( वा. सं. २७ । ३७ ) इत्येतस्यामृच्युत्पन्नं साम ' बृहत् ' । ' बर्हिष्ठा ' अतिशयेन बृहती । बृहच्छब्दादतिशयार्थे इष्ठनि टिलोपे च रूपम् ॥ ३७ ॥

---

१–पुरस्तात् गायत्रम् । का. श्रौ. सू. १८ । २० । २–दक्षिणे पक्षे रथंतरम् । का. श्रौ. सू. १८ । २१ । ३–उत्तरे बृहत् । का. श्रौ. सू. १८ । २१ ।

व्वामदेव्व्यमात्मन् । ( न्त्रा ) प्राणो वै व्वामदेव्व्यं व्वायुरु प्राणः सर्व्वे-षाम्मु हैष देवानामात्मा यद्वायुर्व्वायुमेवास्यैतदात्मानं करोत्यथोऽआत्मा-नमेवास्यैतदनस्थिकममृतं करोति ॥ ३८ ॥

यज्ञायज्ञियं पुच्छम् । ( श्च ) चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः संतिष्ठत ऽएतमेव तस्याहुतीनाꣳ रसोऽप्येति तद्यदेतं यज्ञो यज्ञोऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियं चन्द्रमसमेवास्यैतत्पुच्छं करोत्यथो पुच्छमेवा-स्यैतदनस्थिकममृतं करोति ॥ ३९ ॥

( त्यु ) अथ प्रजापतेर्हृदयं गायति । ( त्य ) असौ वाऽआदित्यो हृद-

---

वामदेव्यमात्मन् । प्राणो वै वामदेव्यम् । वायुरु प्राणः । सर्वेषाम्मु हैष देवानामात्मा—यद्वायुः । वायुमेवास्यैतदात्मानं करोति । अथो आत्मानमेवास्यैतदनस्थिकममृतं करोति ॥ ३८ ॥

यज्ञायज्ञियं पुच्छम् । चन्द्रमा वै यज्ञायज्ञियम् । यो हि कश्च यज्ञः सन्तिष्ठते—एतमेव तस्याहुतीनां रसोऽप्येति । तद्यदेतं यज्ञो—यज्ञोऽप्येति—तस्माच्चन्द्रमा यज्ञायज्ञियम् । चन्द्रमसमेवास्यैतत्पुच्छं करोति । अथो पुच्छमेवास्यैतदनस्थिकममृतं करोति ॥ ३९ ॥

अथ प्रजापतेर्हृदयं गायति । असौ वा आदित्यो हृदयम् । श्लक्ष्ण एषः । श्लक्ष्णं हृदयम् ।

---

"कया नश्चित्र आभुवद्"—( वा. सं. २७ । ३९ ) इत्येतस्यामृच्युत्पन्नं साम वामदेव्यम्, तदात्मभागे गायेदित्याह—वामदेव्यमिति[1] । आत्मभागे वामदेव्यस्य गानेन वायुमेवात्मानं करोतीत्याह—प्राणो वा इति । सर्वेषाम्मु हैष देवानामात्मा यद्वायुरिति । तदभावे तेषां व्यवहाराभावादित्यर्थः ॥ ३८ ॥

अथ पुच्छे यज्ञायज्ञियं साम गायेदित्याह—यज्ञायज्ञियमिति[2] । "यज्ञायज्ञा वो अग्नयः"—( वा. सं. २७।४२ ) इत्येतस्यामृच्युत्पन्नं साम यज्ञायज्ञीयम्, यज्ञायज्ञशब्दोऽस्मिन्नस्तीति "मतौ छः सूक्तसाम्नोः"—( पा. सू. ५ । २ ५९ ) इति सामार्थे छप्रत्ययः, ( पा. सू. ७ । १ । २ ) छस्य—ईयादेशः । अत्र 'यज्ञायज्ञियम्' इति ह्रस्वत्वं छान्दसम् । यज्ञायज्ञियस्य चन्द्रात्मतां प्रतिजानीते—चन्द्रमा वै यज्ञायज्ञिय-मिति । तदेवोपपादयति—यो हि कश्चेति । यज्ञः 'संतिष्ठते' सम्पूर्णतामेति । 'तस्याहुतीनां रसः' 'एतं' चन्द्रमसम् 'एति' । अतस्ता देवतास्तमुपजीवन्ति । अतो यज्ञाहुतिरसस्य चन्द्रं प्रति प्राप्तिद्वारा यज्ञायज्ञः कृत्स्न एव यज्ञः 'एतमप्येति । 'तस्माद्' यज्ञोयज्ञ एतमेतीति 'चन्द्रमा यज्ञायज्ञियमित्यर्थः । अस्तु यज्ञा-यज्ञियस्य चन्द्रात्मकत्वं ततः किं प्रकृते समायातमिति तत्राह—चन्द्रमसमेवेति ॥ ३९ ॥

'अथ प्रजापतेर्हृदयम्' इति किंचित्साम, तदप्यत्र गायेदित्याह—अथेति । तत्साम आदित्यात्मना स्तौति—असौ वा इति । आदित्यस्य हृदयसादृश्यप्रदर्शनेनोक्तं प्रजापतेर्हृदयत्वमुपपादयति—श्लक्ष्ण एष इति ।

---

१—आत्मनि वामदेव्यम् । का. श्रौ. सू. १८ । २१ । २—पुच्छे यज्ञायज्ञियम् । का. श्रौ. सू. १८ । २१ ।
३—दक्षिणे निकक्षे प्रजापतिहृदयम् । का. श्रौ. सू. । १८ । २१ ।

यꣳ श्लक्ष्णु ऽएषु श्लक्ष्णꣳ हृदयं परिमण्डलु ऽएषु परिमण्डलꣳ हृदयमात्मुन्गायत्यात्मन्हि हृदयं निकक्षे निकक्षे हि हृदयं दक्षिणे निकक्षेऽतो हि हृदयं नेदीय ऽआदित्युमेवास्यैतद्धृदयं करोत्युथो हृदयमेवास्यैतदनुस्थिकममृतं करोति ॥ ४० ॥

प्रजासु च प्रजापतौ च गायति। तद्युत्प्रजासु गायति तुत्प्रजासु हृदयं दधात्युथ युत्प्रजापतौ गायति तुदग्नौ हृदयं दधाति ॥ ४१ ॥

---

परिमण्डल एषः। परिमण्डलं हृदयम्। आत्मन् गायति। आत्मन् हि हृदयम्। निकक्षे। निकक्षे हि हृदयम्। दक्षिणे निकक्षे। अतो हि हृदयं नेदीयः। आदित्यमेवास्यैतद्धृदयं करोति। अथ हृदयमेवास्यैतदनस्थिकममृतं करोति ॥ ४० ॥

प्रजासु च प्रजापतौ च गायति। तद्यत्प्रजासु गायति—तत्प्रजासु हृदयं दधाति। अथ यत्प्रजापतौ गायति—तदग्नौ हृदयं दधाति ॥ ४१ ॥

---

गायत्र्यादीनां गानस्य स्थानविशेष उक्तः, अथैतद्गानं कस्मिन्स्थाने कर्त्तव्यमिति तत्राह—आत्मन्निति। आत्ममार्गेऽपि यत्र क्वचित् क्रियेतेति तत्राह—निकक्ष इति। निकक्षावपि द्वौ विद्येते इति तत्रान्यतरस्मिन् क्रियेत इत्यत आह—दक्षिणे निकक्ष इति। 'अतः' अस्मान्निकक्षाद् 'हृदयं नेदीयः' अत्यन्तं सन्निहितम्। नेदीय इत्यस्यान्तिकार्थत्वात्तद्योगे "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्"—(पा. सू. २।३।३४) इति पक्षे प्रकरणात्पञ्चम्या विधानात् 'अतः' इति पञ्चमी। इत्थं प्रजापतेर्हृदयस्यादित्यात्मकत्वात्तस्य गानेनादित्यमेवाग्नेरात्मभागं करोतीत्याह—आदित्यमेवेति ॥ ४० ॥

प्रजापतेर्हृदयं गायत्र्यादिसामवत् कस्यांचिदृचि न गीयते, अपि तु केवलं प्रजापतिशब्देन गीयते। अत एव आपस्तम्बेन सूत्रितम्—"प्रजापतेः साम्नस्तृचं गायति" इति। अतस्तस्य साम्नस्तयोः शब्दयोर्गानं प्रशंसति—प्रजासु च प्रजापतौ चेति। नन्वत्र 'प्रजासु प्रजापतौ' इत्यभिधेयनिर्देशः क्रियते। नहि तत्र गानं सम्भवति, अशक्यत्वात्। न चायं शब्दनिर्देशः 'प्रजासु' इति बहुवचनवैयर्थ्यात्। अतः कथमस्य वचनस्योपपत्तिरिति? नैतदस्ति, वाच्यवाचकयोरभेदविवक्षया वाचकशब्दे क्रियमाणं गानं वाच्ये क्रियत इत्युपचर्यते। 'तद्यत्प्रजासु गायति'। 'तत्प्रजासु हृदयं दधाति'। 'अथ यत्प्रजापतौ गायति, तदग्नौ हृदयं दधाति' इत्यभिधेयफलसम्बन्धप्रदर्शनात्तदनुरोधेन अभिधेय एव गायतीति—उपचारोक्तेरभिप्रायः ॥ ४१ ॥

यद्देव प्रजासु च प्रजापतौ च गायति । ( त्य ) अयं वा ऽअग्निः प्रजाश्च प्रजापतिश्च तद्यदग्नौ गायति तदेव प्रजासु च प्रजापतौ च हृदयं दधाति ॥ ४२ ॥

ता हैताऽअमृतेष्टकाः । (स्ता) ताऽउत्तमा उपदधात्यमृतं तदस्य सर्व्वस्योत्तमं दधाति तस्मादस्य सर्व्वस्यामृतमुत्तमं नान्योऽध्वर्य्योर्गायेदिष्टका वाऽएता विचितो ह स्याद्यदन्योऽध्वर्योर्गायेत् ॥ ४३ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ९–१–२ ॥ ( १. २. ) ॥

इति प्रथमोऽध्यायः समाप्तः ॥ ९ । १ ॥

---

यद्देव प्रजासु च प्रजापतौ च गायति । अयं वा अग्निः प्रजाश्च प्रजापतिश्च । तद्यदग्नौ गायति—तदेव प्रजासु च प्रजापतौ च हृदयं दधाति ॥ ४२ ॥

ता हैता अमृतेष्टकाः । ता उत्तमा उपदधाति । अमृतं तदस्य सर्वस्योत्तमं दधाति । तस्मादस्य सर्वस्यामृतमुत्तमम् । नान्योऽध्वर्योर्गायेत् । इष्टका वा एताः । विचितो ह स्यात्—यदन्योऽध्वर्योर्गायेत् ॥ ४३ ॥

---

पूर्वं प्रजा—प्रजापतिशब्दयोर्गानेन प्रजासु—अग्नौ च हृदयं निधीयत इत्युक्तम् । अथाग्नेस्तदु[भ]यात्मकत्वात्तत्रैव गानेन उभयत्रापि हृदयं निधीयत इत्याह—यद्देवेति । प्रजाशब्देन प्रजापतिशब्देन च तस्य गानमग्नौ क्रियते । अतश्च पूर्वं तच्छब्दद्वयाभिधेयप्राधान्येनाग्नेरुपसर्जनत्वमुक्तम् । अत्र तु, अग्निप्राधान्येन तच्छब्दद्वयाभिधेयस्योपसर्जनत्वमुच्यत इति विभागः । अयं वा अग्निः प्रजाश्च प्रजापतिश्चेति । "स यः स प्रजापतिर्व्यस्रंसतायमेव स योऽयमग्निश्चीयते" ( श. प. ८ । २ । २ । ६ ) इति श्रुतेः अग्निस्तावत् प्रजापतिः, प्रजापतेश्च सर्वप्रजानिर्मातृत्वेन तदात्मकत्वात्तद्द्वाराऽग्निरपि प्रजात्मक इत्यर्थः ॥ ४२ ॥

अथैतानि गायत्र्यादीनि सामानीष्टकारूपेण स्तौति—ता हैता इति । "सामानि भवन्ति प्राणा वै सामान्यमृतमु वै प्राणा अमृतमेवास्मिन्नेतद्रूपमुत्तमं दधाति" इति साम्नां तावदमृतत्वमुक्तम् । एवमिष्टकानां प्रतिदिशमुपधीयमानत्वात्तदुपधानवदेतेषां प्रतिदिशं गानादिष्टकात्वोपचारः । एवं च तान्येतानि सामान्यमृतेष्टका भवन्ति । ता हैता इति स्त्रीलिङ्गं विधेयेष्टकापेक्षया । ताश्चेष्टका 'उत्तमाः' सर्वाभ्य इष्टकाभ्यः उपरितनीः उपदधाति । तेनास्य दृश्यमानस्य 'सर्वस्य' अपि 'अमृतम्' 'उत्तमं' 'दधाति' । 'तस्मादस्य सर्वस्य' प्रपञ्चस्य 'अमृतमुत्तमं' भवति । विहितं सामगानं समाख्यानात् उद्गातुः प्राप्नोतीति तदपवादमाह—नान्योऽध्वर्योरिति । इतरस्य गातृत्वे दोषमाह—इष्टका वा एता इति । एतेषां

साम्नामिष्टकात्वादिष्टकानां चाध्वर्युणा उपधेयत्वात् तद्व्यतिरिक्तस्य गातृत्वे तदुपधानवैधुर्येणाध्वर्युः ' विचितः विजितः पराभूतो भवेदित्यर्थः ॥ ४३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ९–१–२ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकहरिहरभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे प्रथमोऽध्यायः ( ९–१ ॥ )

# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।
# प्रथमप्रपाठके च तृतीयं ब्राह्मणम् ।

उपवसथीयेऽहन्प्रातरुदितऽआदित्ये । व्वाचं व्विसृजते व्वाचं व्विसृज्य पञ्चगृहीतमाज्यं गृहीते तत्र पञ्च हिरण्यशकलान्प्रास्यत्यथैतत्त्रयꣳ समासिक्तं भवति दधि मधु घृतं पात्र्यां वा स्थाल्यां वोरुबिल्यां तदुपरिष्टाद्दर्भमुष्टिं निदधाति ॥ १ ॥

( त्तु ) अथाग्निमारोहति । नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्चिषऽइत्यत्रैष सर्व्वोऽग्निः संस्कृतः स ऽएषोऽत्र तस्माऽअलं यद्धिꣳस्याद्यं जिहिꣳसिषेद्यमु वाऽएष हिनस्ति हरसा वैनꣳ शोचिषा वाऽर्चिषा वा हिनस्ति तथो हैनमेष ऽएतैर्न हिनस्त्यन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यꣳ शिवो भवेति यथैव यजुस्तथा बन्धुः ॥ २ ॥

---

उपवसथीयेऽहन्प्रातरुदित आदित्ये वाचं विसृजते । वाचं विसृज्य पञ्चगृहीतमाज्यं गृहीते । तत्र पञ्च हिरण्यशकलान्प्रास्यति । अथैतत्त्रयं समासिक्तं भवति—दधि, मधु, घृतम् । पात्र्यां वा स्थाल्यां वोरुबिल्याम् । तदुपरिष्टाद्दर्भमुष्टिं निदधाति ॥ १ ॥

अथाग्निमारोहति—" नमस्ते हरसे शोचिषे, नमस्तेऽअस्त्वर्चिषे "—इति । अत्रैष सर्वोऽग्निः संस्कृतः । स एषोऽत्र तस्मा अलम्—यद्धिंस्यात् । यं जिहिंसिषेत्, यमु वा एष हिनस्ति । हरसा वैनं शोचिषा वाऽर्चिषा वा हिनस्ति । तथो हैनमेष एतैर्न हिनस्ति । " अन्यांस्ते अस्मत्तपन्तु हेतयः, पावको अस्मभ्यं शिवो भव "—( वा. सं. १७ । ११ ) इति । यथैव यजुस्तथा बन्धुः ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

औपवसथ्यदिवसात्प्राचीने दिवसे कर्तव्यं प्रयोगमभिधाय तथा तस्मिन्दिवसे कर्तव्यमभिधत्ते—उपवसथीयेऽहन्नित्यादिना । ' प्रातरुदित आदित्ये वाचं विसृजते ' यजमानः । ' वाचं विसृज्य ' इत्यत्र पूर्वकालमात्रे क्त्वा—प्रत्ययः । न हि तत्र पूर्वोत्तरक्रिययोः समानकर्तृत्वमस्ति । यजमानस्य वाग्विसर्जनादध्वर्योराज्यग्रहणादिति । पात्री शरावाकारा, स्थाली तु पिठराकारा, ' उरुबिल्यां ' महामुख्याम् । व्यत्ययेन ङीप्रत्ययः । तदुपरिष्टादिति । यत्र पात्र्यां स्थाल्यां वा दध्यादित्रयं समासिक्तं तदुपरिष्टादित्यर्थः ॥ १ ॥

अथाग्निमारोहतीति । दर्भमुष्टिनिधानानन्तरं तदाज्यं दध्यादि—चादाय 'नमस्ते' इति मन्त्रेणाग्निमारोहेत् । अत एव कात्यायनः—" उभयमादाय चित्यारोहणं नमस्त इति " ( १८ । २३ ) इति । आरोहणे ' नमस्ते '

---

१—औपवसथ्ये व्विसृष्टवाग्वि पंचगृहीतं हिरण्यशकलान् प्रास्यति पंच ॥ दधि मधु घृतं पात्र्यां समासिच्य स्थाल्यां वा महामुख्यां कुशमुष्टिं चोपर्युभयमादाय चित्यारोहणं नमस्त इति । का. श्रौ. सू. १८ । २२ । २३ ।

( रा ) आरुह्याग्निꣳ स्वयमातृण्णां व्याघारयति । ( त्या ) आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ३ ॥

स्वयमातृण्णां व्याघारयति । प्राणः स्वयमातृण्णा प्राणे तदन्नं दधाति ॥ ४ ॥

यद्वेव स्वयमातृण्णां व्याघारयति । ( त्य ) उत्तरवेदिर्हैषाऽग्नेरथ यामसूं पूर्वां व्याघारयत्यध्वरस्य साऽथ हैषाऽग्नेस्तामेतद्व्याघारयति ॥ ५ ॥

---

आरुह्याग्निं स्वयमातृण्णां व्याघारयत्याज्येन पञ्चगृहीतेन । तस्योक्तो बन्धुः ॥ ३ ॥

स्वयमातृण्णां व्याघारयति । प्राणः स्वयमातृण्णा । प्राणे तदन्नं दधाति ॥ ४ ॥

यद्वेव स्वयमातृण्णां व्याघारयति । उत्तरवेदिर्हैषाऽग्नेः । अथ याममूं पूर्वां व्याघारयति–अध्वरस्य सा । अथ हैषाऽग्नेः ।–तामेतद्व्याघारयति ॥ ५ ॥

---

इत्यस्य मन्त्रस्य पूर्वार्द्धस्य पाठे प्रयोजनमाह–अत्रैष सर्वोऽग्निरिति । 'अत्र' अस्मिन्नवसरे 'एषोऽग्निः सर्वः संस्कृतः' साकल्येन कृतसंस्कारः अतोऽत्र स एषोऽग्निः यद्वस्तु हिंस्यात् यं जिहिंसिषेत् तस्मै 'अलं' समर्थः हननेच्छाया हननस्य चेत्युभयस्यापि समर्थः । 'सः' च 'यं' 'हिनस्ति' 'एनं' 'हरसा' 'शोचिषा' वा, 'अर्चिषा' 'वा हिनस्ति' । अतश्चास्य मन्त्रभागस्य पाठेन 'एनम्' 'अध्वर्युम्' 'एतैः' हरःप्रभृतिभिः 'न हिनस्ति' । 'हरः' इति हरणसमर्थं तेजः, 'शोचिः–' इति शोचनसमर्थम्, 'अर्चिः'–इति तदहतं प्रशस्तं तेजः । मन्त्रस्य द्वितीयार्धं स्पष्टार्थमित्याह–अन्यांस्ते अस्मदिति । हे अग्ने ! 'ते हरसे नमोऽस्तु,' 'शोचिषे नमोऽस्तु' । तथा 'ते अर्चिषे नमोऽस्तु' । 'अन्यान्' अस्मच्छत्रून् 'ते हेतयः' हरःप्रभृतयः 'तपन्तु' । 'अस्मभ्यं' तु त्वं 'पावकः शिवः' च 'भव' ॥ २ ॥

अग्निमारुह्य किं कुर्यादित्याह–आरुह्याग्निमिति[1] । प्रथममध्यमोत्तमासु चितिषु तिस्रः स्वयमातृण्णा उपधीयन्ते । तत्र तृतीयायां स्वयमातृण्णायां व्याघारणक्रियाया ईप्सिततमत्वात्स्वयमातृण्णामिति द्वितीया । व्याघारणं नाम एकस्मात्कोणात्कोणान्तरं प्रत्याज्यधाराक्षारणम् । तच्च व्याघारणं 'पञ्चगृहीतेनाज्येन' क्रियत इति 'तस्य' उभयस्य ब्राह्मणं प्रागुक्तमित्याह–आज्येनेति ॥ ३ ॥

अथ व्याघारणस्य स्वयमातृण्णाधारकत्वं प्रशंसति–स्वयमातृण्णामिति । स्वयमातृण्णायाः प्राणत्वं सप्तमकाण्डेऽभिहितम्–" प्राणो वै स्वयमातृण्णा प्राणो ह्येवैतत्स्वयमात्मानमातृन्ते " ( श. प. ४ । २ । २ ) इति । अतश्चाग्निसंबन्धिनि प्राणे तदाज्यलक्षणमन्नं निहितवान्भवति ॥ ४ ॥

प्रकारान्तरेणापि स्वयमातृण्णायां व्याघारणमुपपादयति–यद्वेवेति । 'एषा' स्वयमातृण्णा 'अग्नेः' 'उत्तरवेदिः' खलु । 'अथ याममूं' बुद्धौ परामर्शः । पूर्वामुत्तरवेदिं व्याघारयति, सा पुनः सोमयागस्य । अतोऽस्यां स्वयमातृण्णायां व्याघारणेन 'अग्नेस्ताम्' उत्तरवेदिं व्याघारयति ॥ ५ ॥

---

१–स्वयमातृण्णायां पंचगृहीतं जुहोति नाभिवद्धिरण्यादर्शनं च । का. श्रौ. सू. १८ । २४ ।

पश्यंस्तत्र हिरण्यं व्याघारयति । प्रत्यक्षं वै तद्यत्पश्यति प्रत्यक्षुꣳ सोत्तरवेदिः प्रास्ता ऽएवेह भवन्ति परोऽक्षं वै तद्यत्प्रास्ताः परोऽक्षमियमुत्तरवेदिः ॥ ६ ॥

स्वाहाकारेण तां व्याघारयति । प्रत्यक्षं वै तद्यत्स्वाहाकारः प्रत्यक्षुꣳ सोत्तरवेदिर्वेट्कारेणेमां परोऽक्षं वै तद्यद्वेट्कारः परोऽक्षमियमुत्तरवेदिराज्येनाज्येन ह्युत्तरवेदिं व्याघारयन्ति पञ्चगृहीतेन पञ्चगृहीतेन ह्युत्तरवेदिं व्याघारयन्ति व्यतिहारं व्यतिहारꣳ ह्युत्तरवेदिं व्याघारयन्ति ॥ ७ ॥

नृषदे वेडिति । प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमेतत्प्रीणात्यप्सुषदे वेडिति योऽप्स्वग्निस्तमेतत्प्रीणाति बर्हि-

---

पश्यंस्तत्र हिरण्यं व्याघारयति । प्रत्यक्षं वै तत्—यत्पश्यति । प्रत्यक्षं सोत्तरवेदिः । प्रास्ता एवेह भवन्ति । परोऽक्षं वै तद्—यत्प्रास्ताः । परोऽक्षमियमुत्तरवेदिः ॥ ६ ॥

स्वाहाकारेण तां व्याघारयति । प्रत्यक्षं वै तत्—यत्स्वाहाकारः । प्रत्यक्षं सा—उत्तरवेदिः । वेट्कारेणेमाम् । परोऽक्षं वै तद्—यद्वेट्कारः । परोऽक्षमियमुत्तरवेदिः । आज्येन । आज्येन ह्युत्तरवेदिं व्याघारयन्ति । पञ्चगृहीतेन । पञ्चगृहीतेन ह्युत्तरवेदिं व्याघारयन्ति । व्यतिहारम् । व्यतिहारं ह्युत्तरवेदिं व्याघारयन्ति ॥ ७ ॥

"नृषदे वेट्"—इति । प्राणो वै नृषत्, मनुष्या नरः । तद् योऽयं मनुष्येषु प्राणोऽग्निस्तमेतत्प्रीणाति । "अप्सुषदे वेट्"—इति । योऽप्स्वग्निः—तमेतत्प्रीणाति । "बर्हिषदे वेट्"—

---

ननु यद्येषा स्वयमातृण्णाऽग्नेरुत्तरवेदिस्तर्हि तद्व्याघारणं पूर्वोत्तरवेदिवद् हिरण्यदर्शनादिपूर्वकत्वेन भवितव्यमित्यत आह—पश्यंस्तत्रेति । प्रत्यक्षं सोत्तरवेदिसंयुक्तमन्त्रादिनिर्मितत्वाभावेनौपचारिकोत्तरवेदित्वाद्व्याघारणमित्यर्थः ॥ ६ ॥

स्वाहाकारस्य सर्वत्र हविःप्रदानार्थसाधनत्वेन—प्रत्यक्षत्वम्, वेट्कारस्य तु तथात्वाभावेन परोऽक्षत्वम् । आज्येन पञ्चगृहीतेन व्यतिहारमुत्तरवेदेर्व्याघारणात्तथैवास्या अपि उत्तरवेदित्वेन व्याघारणमुपपन्नमित्याह—आज्येनेत्यादिना व्यतिहारमित्यन्तेन । पूर्वं दक्षिणांसे व्याघारणम् । तत उत्तरश्रोणौ, पश्चाद्दक्षिणश्रोणौ, तत उत्तरांसे, ततो मध्ये, इत्ययं क्रमो विवक्षितः ॥ ७ ॥

अथ क्रमेण व्याघारणमन्त्रान्प्रदर्शयन् व्याचष्टे—नृषदे वेडिति[१] । नृषु सीदतीति नृषत् इति प्राणव्यतिरिक्तमपि संग्रहीतुं शक्यत इति विवक्षितोऽर्थो दर्शितः—प्राणो वै नृषदिति । नृषदित्यत्र नृशब्दस्य प्रसिद्ध एवार्थो विवक्षितो नेतर इत्युक्तं—मनुष्या नर इति । एतन्मंत्रसाध्यव्याघारणस्य फलमुक्तं—तद्योऽयमिति । 'वेट्' इति सम्प्रदानार्थीयो निपातः । 'नृषदे' मनुष्येषु वर्तमानाय प्राणरूपायाग्नये 'वेट्' इदमाज्यरूपं

---

१—नृषदे वेडिति प्रतिमन्त्रम् । का. श्रौ. सू. १८ । २४ ।

षुदे व्वेडिति यऽ ओषधिष्वग्निस्तमेतत्प्रीणाति व्वनसदे व्वेडिति यो व्वनस्पतिष्वग्निस्तमेतत्प्रीणाति स्वर्विदे व्वेडित्ययमग्निः स्वर्विदिममेवैतदग्निं प्रीणाति ॥ ८ ॥

यद्वेवाह । नृषदे व्वेडप्सुषदे व्वेडित्यस्यैवैतान्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथोऽएतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति ॥ ९ ॥

पञ्चैताऽ आहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चऽर्तवः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ १० ॥

---

इति । य ओषधिष्वग्निः—तमेतत्प्रीणाति । " वनसदे वेट् "—इति । यो वनस्पतिष्वग्निः—तमेतत्प्रीणाति । " स्वर्विदे वेट् "—( वा. सं. १७ । १२ ) इति । अयमग्निः स्वर्विद् । इममेवैतदग्निं प्रीणाति ॥ ८ ॥

यद्वेवाह—नृषदे वेडप्सुषदे वेडिति । अस्यैवैतान्यग्नेर्नामानि । तान्येतत्प्रीणाति । तानि हविषा देवतां करोति । यस्यै वै देवतायै हविर्गृह्यते—सा देवता । न सा—यस्यै न गृह्यते । अथो एतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति ॥ ९ ॥

पञ्चैता आहुतीर्जुहोति । पञ्चचितिकोऽग्निः । पञ्चऽर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतदन्नेन प्रीणाति ॥ १० ॥

---

हविर्दत्तमित्यर्थः । अयमग्निः स्वर्विंदिति । 'अयं' सञ्चितोऽग्निः 'स्वर्वित्' स्वर्गं लम्भयतीति स्वर्वित् । स्पष्टार्थमन्यत् ॥ ८ ॥

प्रकारान्तरेण मन्त्राणामभिधानं प्रशंसति—यद्वेवाहेति । अप्सुषदे वेडितीति । अत्रेतिशब्दः प्रकारवाची । तेन बर्हिषदे वेडित्यादीन्यपि संगृहीतानि भवन्ति । 'एतानि' नृषदित्यादीनि 'अस्यैव' सचिताग्नेः 'नामानि' अस्य सर्वात्मकत्वेन मनुष्यादिस्थिताग्न्यात्मकत्वात् । अत एतेन तान्येव नामानि प्रीणितवान् भवति । न केवलं तेषां प्रीणनम्, अपि तु देवतात्वसंपत्तिरपीत्याह—तानीति । 'यस्यै' खलु 'देवतायै हविर्गृह्यते सा देवता' 'यस्यै' पुनः 'न गृह्यते, 'सा देवता' 'न' भवति । अतोऽत्र नृषदादिनामानि चतुर्थ्यन्तान्युच्चार्य होमविधानात्तदर्थं हविर्ग्रहणमिति हविषा तानि नामानि देवताः कृतवान् भवति । किञ्च नृषदादिशब्दाभिधेयान् 'अग्नीन् नामग्राहम्' 'अस्मिन्' संचितेऽग्नौ निदधाति ॥ ९ ॥

आहुतीनां पञ्चत्वसंख्या अग्नेः कार्त्स्न्येन प्रीतिहेतुर्भवतीत्याह—पञ्चैता इति । पञ्चगृहीतमाज्यं दध्यादिकं चेत्युभयमपि संचितस्याग्नेरुपर्यानीतं तत्राज्यस्य विनियोगोऽभिहितः । अथावशिष्टस्य विनियोगमाह—

( त्यु ) अथैनᳪं समुक्षति । दध्ना मधुना घृतेन जायतऽएषऽ एतद्यच्चीयते सऽ एष सर्व्वस्माऽअन्नाय जायते सर्व्वम्वेतदन्नं यद्दधि मधु घृतᳪं सर्व्वेणैवैनमेतदन्नेन प्रीणाति सर्व्वतः समुक्षति सर्व्वतऽ एवैनमेतत्सर्व्वेणान्नेन प्रीणाति ॥ ११ ॥

यद्वेवैनᳪं समुक्षति । ( त्यु ) अत्रैष सर्व्वोऽग्निः संस्कृतस्तस्मिन्देवाऽ एतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमं दधात्यन्नं वै रूपमेतदु परममन्नं यद्दधि मधु घृतं तद्यदेव परमᳪं रूपं तदस्मिन्नेतदुत्तमं दधाति सर्व्वतः समुक्षत्यपि बाह्येन परिश्रितः सर्व्वतऽ एवास्मिन्नेतद्रूपमुत्तमं दधाति दर्भैस्ते हि शुद्धा मेध्याऽ अग्रैरग्रᳪं हि देवानाम् ॥ १२ ॥

यद्वेवैनᳪं समुक्षति । ( त्ये ) एतद्वै यत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निᳪं समस्कुर्वंस्तदस्मिन्नदोऽमुं पुरस्ताद्भागमकुर्व्वतादः सजूरब्दीयमथास्मि-

---

अथैनं समुक्षति—दध्ना मधुना घृतेन । जायत एषः एतत् । यच्चीयते । स एष सर्वस्मा अन्नाय जायते । सर्वम्वेतदन्नम्—यद्दधि, मधु, घृतम् । सर्वेणैवैनमेतदन्नेन प्रीणाति । सर्वतः समुक्षति । सर्वत एवैनमेतत्सर्वेणान्नेन प्रीणाति ॥ ११ ॥

यद्वेवैनं समुक्षति । अत्रैष सर्वोऽग्निः संस्कृतः । तस्मिन्देवा एतद्रूपमुत्तममदधुः । तथैवास्मिन्नयमेतद्रूपमुत्तमं दधाति । अन्नं वै रूपम् । एतदु परममन्नम्—यद्दधि, मधु, घृतम् । तद् यदेव परमं रूपम्—तदस्मिन्नेतदुत्तमं दधाति । सर्वतः समुक्षति । अपि बाह्येन परिश्रितः। सर्वत एवास्मिन्नेतद्रूपमुत्तमं दधाति । दर्भैः । ते हि शुद्धा मेध्याः । अग्रैः । अग्रं हि देवानाम् ॥ १२ ॥

यद्वेवैनं समुक्षति । एतद्वै यत्रैतं प्राणा ऋषयोऽग्रेऽग्निं समस्कुर्वन् । तदस्मिन्नदोऽमुं पुरस्ताद्भागमकुर्वत । अदः सजूरब्दीयम् । अथास्मिन्नेतं संचित उपरिष्टाद्भागमकुर्वत । तद् यत्समुक्षति—य

---

अथैनमिति । तदुपयोगमाह—जायत एष इति । दध्यादीनां बहुत्वात् सर्वान्नत्वम् विहितं[1]तत्समुक्षणं परिश्रिद्भ्यो बहिरपि कर्तव्यमित्याह—सर्वत इति । [2]उपरिष्टाद्दर्भमुष्टिं निदधातीत्युक्तान् दर्भान्समुक्षणे विनियुज्य प्रशंसति—दर्भैरिति । अग्रं हि देवानामिति ।.हिशब्दः शाखान्तरप्रसिद्धिं द्योतयति । अत एव तैत्तिरीयके श्रूयते—"यत्परुषि दिनं तद्देवानाम्"—इति । एतैर्दध्यादिभिः समुक्षणेनास्मिन् संस्कृतेऽग्नावुत्तमरूपनिधानं भवतीति प्रशंसति—यद्वेवेति । अन्नं वै रूपमित्यादिना परमरूपत्वमुपपाद्यते । 'अन्नं' तावद्रूपकारणत्वाद् 'रूपम्' परमरूपत्वं तु दध्यादीनां रसातिशयवत्त्वादिति दध्यादीनि परमं रूपमित्यर्थः ॥ १०—१२ ॥

अथ पुनस्तान्येव दध्यादीन्यग्नेरुपरिष्टाद्भागरूपेण प्रशंसति—यद्वेवैनमिति । 'अग्रे' पूर्वं 'यत्र' यस्मिन्नवसरे ऋषिशब्दाभिधेयाः 'प्राणाः' विस्रस्तं प्रजापतिं 'समस्कुर्वन्' । तद् 'अदः' काले अदःशब्द-

---

१–समासिक्तान् कुशैः प्रोक्षति सपरिश्रित्कं बाह्येन च ये देवा इति । का० श्रौ० सू० १८ । २५ ।

२–अस्मिन्नेव ब्राह्मणे प्रथमकण्डिकायाम् ।

ग्नेतᳬ सुंचितऽउपुरिष्टाद्भागमकुर्व्वत तद्युत्समुक्षुति युऽएवास्मिंस्ते प्राणाऽ ऋषयः सुंचितऽउपुरिष्टाद्भागमकुर्व्वत तानुेवैतत्प्रीणाति दध्ना मुधुना घृतेन तुस्योक्तो बुन्धुः ॥ १३ ॥

( ख़ुं ) ये देवा देवानाम् । यज्ञिया यज्ञियानामिति देवा ह्येते देवानां यज्ञियाऽ उ यज्ञियानाᳬ संव्वत्सरीणमुप भागमासतऽइति संव्वत्सरीणᳬ ह्येतुऽएतं भागमुपासतेऽहुतादो हविषो यज्ञेऽअस्मिन्नित्यहुतादो हि प्राणाः स्वयं पिबन्तु मधुनो घृतस्येति स्वयुमस्यु पिबन्तु मधुनश्च घृतस्य चेत्येतत् ॥ १४ ॥

---

एवास्मिंस्ते प्राणाः ऋषयः साश्चित उपरिष्टाद्भागमकुर्वत–तानेवैतत्प्रीणाति । दध्ना, मधुना, घृतेन । तस्योक्तो बन्धुः ॥ १३ ॥

" ये देवा देवानाम्, यज्ञिया याज्ञियानाम् "–इति । देवा ह्येते देवानाम्, याज्ञिया उ यज्ञियानाम् । " संवत्सरीणमुप भागमासते "–इति । संवत्सरीणं ह्येत एतं भागमुपासते । " अहुतादो हविषो यज्ञे अस्मिन् "–इति । अहुतादो हि प्राणाः । " स्वयं पिबन्तु मधुनो घृतस्य "–( वा. सं. १७ । १३ ) इति । स्वयमस्य पिबन्तु मधुनश्च घृतस्य चेत्येतत् ॥ १४ ॥

---

एतस्य कालस्य विप्रकर्षमभिधत्ते 'अमुं' पुरस्तात् भागम् 'अकुर्वत' । अमुमित्यपि विप्रकृष्टो भाग उच्यते । अमुं भागमिति यदुक्तं तदेवाह–अदः सजूरब्दीयमिति । " सजूरब्दो अयवोभिः " ( वा. सं. १२ । ७४ ) इत्यनेन मन्त्रेण प्रतिपादितं होमरूपमन्नम् । ' अथास्मिन् ' ' सञ्चिते ' अग्नौ ' एतं ' दध्यादिलक्षणम् 'उपरिष्टाद्भागमकुर्वत' । अतश्च दध्यादिभिरग्नेः समुक्षणेन य 'एते ऋषयः प्राणाः' संचिते तस्मिन् 'उपरिष्टाद्भागमकुर्वत' । अतश्च दध्यादिभिः संचितस्य अग्नेः प्राणविशिष्टत्वेन प्राणकृतः अग्नेर्भागः प्राणानामपि भवतीति । तस्याग्नेरनेनोपरिष्टाद्भागेन ' तानेव ' प्राणान् प्रीणितवान्भवतीत्यर्थः । दध्यादिविषयं ब्राह्मणं प्रागुक्तमित्याह–दध्नेति । तच्च सप्तमकाण्डे ( श. प. ७ । ५ । १ । ३ ) कूर्मोपधानकथनावसरेऽभिहितम् ॥ १३ ॥

अथ समुक्षणे प्रथमं मन्त्रं दर्शयन् व्याचष्टे–ये देवा देवानामिति । ' देवानाम् ' अपि ' देवाः, ' ' यज्ञियानाम् ' यज्ञार्हाणामपि तत्पूर्वकथनेन सर्वेषां यज्ञार्हत्वमित्यर्थः । ' यज्ञियाः ' ते प्राणाः । द्वितीयतृतीयपादौ प्रसिद्धावित्याह–संवत्सरीणमिति । ' संवत्सरीणं ' संवत्सरसम्बन्धिनं ' उप भागमासते ' । अस्मिन् यज्ञे एतस्य समुक्षणस्य संवत्सरक्रियमाणत्वात् संवत्सरीणे भागे यतः प्राणा दध्यादीन्यहुतान्येवादन्ति अतो ' अहुतादो हविष ' इत्युक्तम् । चतुर्थपादे मधुनो घृतस्येत्यनेन प्रकृतमेव दध्यादि उच्यत इत्याह–स्वयमस्येति । ' स्वयम् ' ' अस्य मधुनो घृतस्य पिबन्तु ' । मधुनो घृतस्येति व्यत्ययेन कर्मणि षष्ठी, मधु घृतम् । उपलक्षणमेतत् । दध्यपि पिबन्त्विति प्रथमस्यार्थः ॥ १४ ॥

(द्यु) ये देवा देवेषु। (ष्व्) अधिदेवत्वमायन्निति देवा ह्येते देवेष्वधिदेवत्वमायन्ये ब्रह्मणः पुरऽएतारोऽअस्येत्ययमग्निर्ब्रह्म तस्यैते पुरऽएतारो येभ्यो नऽऋते पवते धाम किंचनेति न हि प्राणेभ्यऽऋते पवते धाम किंचन न ते दिवो न पृथिव्याऽअधि स्नुष्विति नैव ते दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिंस्तऽइत्येतत् ॥ १५ ॥

(द्द्रा) द्वाभ्या॑ᳪ समुक्षति। द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समुक्षति ॥ १६ ॥

(त्यु) अथ प्रत्यवरोहति। प्राणदाऽअपानदाऽइति सर्वे हैते प्राणा योऽयमग्निश्चितः स यदेतामत्रात्मनः परिदां न वदेतात्र हैवास्यैष प्राणा-

---

"ये देवा देवेष्वधिदेवत्वमायन्"–इति। देवा ह्येते देवेष्वधिदेवत्वमायन्। "ये ब्रह्मणः पुरएतारो अस्य"–इति। अयमग्निर्ब्रह्म। तस्यैते पुरएतारः। "येभ्यो न ऋते पवते धाम किंचन"–इति। न हि प्राणेभ्य ऋते पवते धाम किंचन। "न ते दिवो न पृथिव्या अधि स्नुषु"–(वा. सं. १७। १४) इति। नैव ते दिवि, न पृथिव्याम्, यदेव प्राणभृत्–तस्मिंस्त इत्येतत् ॥ १५ ॥

द्वाभ्यां समुक्षति। द्विपाद्यजमानः। यजमानोऽग्निः। यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतत्समुक्षति ॥ १६ ॥

अथ प्रत्यवरोहति। "प्राणदा अपानदाः"–इति। सर्वे हैते प्राणाः–योऽयमग्निश्चितः। स यदेतामत्रात्मनः परिदां न वदेत–अत्र हैवास्यैष प्राणान्वृञ्जीत। अथ यदेतामत्रात्मनः परिदां

---

अथ द्वितीयमन्त्रं व्याचष्टे–ये देवा देवेष्विति (का. श्रौ. सू. १८। २९)। ये देवा देवेष्वपि अधिदेवत्वं प्राप्नुयुः। देवा ह्येत इति। 'एते देवाः' प्राणाः 'देवेषु अधिदेवत्वम्' अधिका देवा अधिदेवास्तेषां भावस्तत्त्वम् 'आयन्' आप्नुवन् तान्प्रति स्वेषामुपजीव्यत्वात्। अत उक्तं 'ये देवा देवेषु' इति। द्वितीयपादे सर्वात्मकत्वम्। ननु बृहत्त्वाद्ब्रह्मशब्देनाग्निरुच्यत इत्याह–अयमग्निरिति। किञ्च ये 'तस्य' अग्नेः 'पुरो' गन्तारो भवन्ति। 'येभ्यो' विना किञ्चिदपि शरीरं न प्रवर्तते। तृतीयपादः प्रसिद्धार्थ इत्याह–नहि प्राणेभ्य इति। तुरीयपादेऽभिप्रेतं विशेषमाह–नैव त इति। 'ते' प्राणाः 'दिवि' अपि 'न' सन्ति, 'पृथिव्याम्' अपि 'न' सन्ति। किन्तु 'यदेव प्राणभृद्' वस्तु 'तस्मिन्' सन्ति 'इत्येतद्' उक्तं भवति इति द्वितीयस्यार्थः ॥ १५ ॥ १६ ॥

अथ प्रत्यवरोहणे मन्त्रजपस्यान्वयव्यतिरेकयोर्गुणदोषावाह–सर्वे हैत इत्यादिना। 'योऽयमग्निः' चयनेन संस्कृतः 'एषः' 'सर्वे प्राणाः,' प्रजापत्यात्मकत्वात् सर्वेषां प्राणा इत्यर्थः। अतः 'सः' अध्वर्युः 'अत्र'

न्वृञ्जीतुाथ युदेतामुत्रात्मुनः परिदां व्वुदते तुथो हास्यैष प्राणान्नु व्वृङ्क्ते प्राणदा ऽअपानदा व्व्यानदा व्वर्चोदा व्वरिवोदा ऽइत्येतद्वा मेऽसीत्येवै-तुदाहान्यांस्तेऽअस्मुत्तपन्तु हेतयः पावकोऽअस्मुभ्यꣳ शिवो भवेति युथैव यजुस्तुथा बुन्धुः ॥ १७ ॥

प्रत्येत्य प्रवर्ग्योपसुद्भ्यां प्रचरति । प्रवर्ग्योपसुद्भ्यां प्रचर्याथास्मै व्व्रतं वाऽर्धव्व्रतं वा प्रयच्छत्युथ प्रवर्ग्योपसुद्भ्यामुथ प्रवुर्ग्यमुत्सादयत्याप्त्वा तं कामं युस्मै कामायैनं प्रवृणक्ति ॥ १८ ॥

तं वै परिष्यन्दऽउत्सादयेत् । ( त्त ) तप्तो वाऽएष शुशुचानो भवति

वदते-तथो हास्यैष प्राणान्न वृङ्क्ते । " प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः "-इति । एतद्वा मेऽसीत्येवैतदाह । " अन्यांस्ते अस्मत्तपन्तु हेतयः, पावको अस्मभ्यं शिवो भव "-( वा. सं. १७ । १९ ) इति । यथैव यजुस्तथा बन्धुः ॥ १७ ॥

प्रत्येत्य प्रवर्ग्योपसद्भ्यां प्रचरति । प्रवर्ग्योपसद्भ्यां प्रचर्य्य, अथास्मै व्रतं वाऽर्धव्रतं वा प्रयच्छति । अथ प्रवर्ग्योपसद्भ्याम् । अथ प्रवर्ग्यमुत्सादयति । आप्त्वा तं कामं-यस्मै कामायैनं प्रवृणक्ति ॥ १८ ॥

तं वै परिष्यन्द उत्सादयेत् । तप्तो वा एष शुशुचानो भवति । तं यदस्यामुत्सादयेत्-इमामस्य

अवसरे यदि ' आत्मनः ' ' एतां ' " प्राणदाः " इत्येतन्मन्त्ररूपां प्राणरक्षां न ' वदेत, ' तर्हि ' एषः ' अग्निः ' अस्य ' अध्वर्योः ' प्राणान् वृञ्जीत ' वर्जयेदपगमयेदित्यर्थः । प्राणदा इत्यादिमन्त्ररूपपरिदाभिधाने तु तथा न कुर्यात् । इत्थं मन्त्ररूपस्योपयोगमभिधायाथ मन्त्रं व्याचष्टे-प्राणदा इति । एतद्वा मेऽसीत्येवेति । एतेन मदर्थमेषां प्राणादीनां दाताऽसीत्येतदेवोक्तं भवति न पुनरन्यार्थमित्यर्थः । हे अग्ने ! त्वं मे प्राणापानव्यानानां वर्चसो धनस्य च दाताऽसि, अतो ब्रवीमि ' ते हेतयोऽस्मदन्यांस्तपन्तु ' ' अस्मभ्यं ' तु त्वं पावकः शिवश्च भव ॥ १७ ॥

अग्नेरवरुह्य पश्चात्कर्तव्यं प्रयोगमाह-प्रत्येत्येति[2] । अथास्मा इति । ' अस्मै ' यजमानाय ' व्रतं ' पयः कृत्स्नं ' वा ' ' अर्धव्रतं वा प्रयच्छति ' । ' अथ ' तदानीमेवापराह्णिकीभ्यां ' प्रवर्ग्योपसद्भ्यां ' प्रचर्य ' ' अथ प्रवर्ग्यमुत्सादयति ' ' यस्मै कामायैनं प्रवृणक्ति ' तस्य कामस्याप्तिः स्यादित्यर्थः ॥ १८ ॥

प्रवर्ग्यमुत्सादयतीति सामान्येन विधानाद्यत्र क्वचित्प्रसक्तावाह-तं वा इति[3] । परितः स्यन्दो जलस्रवणं यस्य सः ' परिष्यन्दो ' द्वीपः । ननु पृथिव्यामप्सु वा कस्मान्नोत्साद्यत इत्यत आह-तप्तो वा इति । 'एषः'

१-प्राणदा इत्यवरोहति । का. श्रौ. सू. १८ । २६ । २-एवमारोहणावरोहणमतः । का. श्रौ. सू. १८ । २७ ।
३-उपसदंते प्रवर्ग्योत्सादनं यथाक्रममो वा परिष्यन्दे वा । का. श्रौ. सू. १८ । २८ ।

तं य॒दस्या॒मुत्सा॒दयेदि॒मामस्य शु॒गृच्छे॑द्य॒दप्सूत्सा॒दयेदपो॑ऽस्य शु॒गृच्छे॑दथ य॒त्परिष्यन्द॒ऽउत्सा॒दय॑ति त॒थो ह॒ नैवापो॒ हि॑न॒स्ति नेमां य॒दहाप्सु न प्रास्य॑ति ते॒नापो न॒ हि॑नस्त्यु॒थ य॒त्सम॒न्तमा॒पः परि॑य॒न्ति शा॒न्तिर्वा॑ऽआपस्ते॒नो॑ऽइमां न॒ हि॑न॒स्ति त॒स्मात्परि॒ष्यन्द॒ऽउत्सा॒दये॑त् ॥ १९ ॥

( द ) अ॒ग्नौ त्वेवो॒त्सादयेत् । ( दि ) इमे वै॒ लोका॒ ऽएषो॑ऽग्नि॒राप॑ः परि॑श्रि॒तस्तं य॒दग्ना॒ऽ उत्सा॒दय॑ति त॒दे॒वैनं परि॒ष्यन्द॒ऽ उत्सा॒दयति ॥ २० ॥

य॒द्वेवाग्ना॒ऽउत्सा॒दय॑ति । ( ती ) इमे वै॒ लोका॒ ऽएषो॑ऽग्नि॒र॒ग्नि॒र्वा॒यु॒रादि॑त्य॒स्त॒दे॒ते प्र॒व॒र्ग्याः स य॒दन्य॒त्राग्ने॒रुत्सा॒दये॒दे॒तांस्त॒द्दे॒वान्ब॒हि॒र्धै॒भ्यो लोके॒भ्यो द॒ध्या॒दथ य॒दग्ना॒ऽ उत्सा॒दय॑त्ये॒ता॒नेवै॒तद्दे॒वा॒नेषु॒ लो॒केषु॒ दधाति ॥ २१ ॥

---

शुगृच्छेत् । यदप्सूत्सादयेत्—अपोऽस्य शुगृच्छेत् । अथ यत्परिष्यन्द उत्सादयति—तथो ह नैवापो हिनस्ति, नेमाम् । यदहाप्सु न प्रास्यति—तेनापो न हिनस्ति । अथ यत्समन्तमापः परियन्ति । शान्तिर्वा आपः । तेनो इमां न हिनस्ति । तस्मात्परिष्यन्द उत्सादयेत् ॥ १९ ॥

अग्नौ त्वेवोत्सादयेत् । इमे वै लोका एषोऽग्निः । आपः परिश्रितः । तं यदग्ना उत्सादयति—तदेवैनं परिष्यन्दऽउत्सादयति ॥ २० ॥

यद्वेवाग्ना उत्सादयति । इमे वै लोका एषोऽग्निः—अग्निर्वायुरादित्यः । तदेते प्रवर्ग्याः । स यदन्यत्राग्नेरुत्सादयेत्—एतांस्तद्देवान्बहिर्धैभ्यो लोकेभ्यो दध्यात् । अथ यदग्ना उत्सादयति—एतानेवैतद्देवानेषु लोकेषु दधाति ॥ २१ ॥

---

प्रवर्ग्यस्तप्तत्वाच्छोकविशिष्टो भवति । अतस्तं यदि पृथिव्यामुत्सादयेत्, तदा 'अस्य' शोकः पृथिवीं प्राप्नोति । अथ "यदप्सूत्सादयेत्," तदा 'अस्य' शोकोऽपः प्राप्नोति । तस्मात्तत्र नोत्सादनीयः, किन्तु परिष्यन्दे । तथा च पृथिवीमपश्च न हिनस्ति । ननु परिष्यन्द उत्सादनेऽपि तत्र तदुभयसम्भवात् कथं तासां—हिंसाभाव इति ? तत्राह—यदहाप्स्विति । अपां मध्य उत्सादनात् अपो न हिनस्ति, यद्यपि द्वीपे पृथिव्यामेवोत्सादयति तथापि परितः शान्तिहेतुभूताभिरद्भिर्वलयितत्वात् पृथिव्या अपि हिंसा नास्तीत्यर्थः ॥ १९ ॥

प्रवर्ग्योद्वासनस्य स्थानान्तरं विधत्ते—अग्नौ त्वेवेति । पूर्वोक्तपरिष्यन्दे अग्नौ वा प्रवर्ग्य उत्साद्यते इति विकल्पविधानमेतत् । अत एव कात्यायनः—"अग्नौ परिष्यन्दे वा"—( १८ । २८ ) इति । ततस्य प्रवर्ग्यस्य परिष्यन्द एव उद्वासने कस्यचिदपि बाधाभावादस्याप्यग्नेः परिष्यन्दत्वमाह—इमे वै लोका इति । पृथिव्यादिलोकात्मकस्याग्नेः समुद्रवद्वेष्टनात्परिश्रितामबात्मकत्वम् ॥ २० ॥

अथाग्नावेवोद्वासनं प्रशंसति—यद्वेवेति । अग्न्यादयो देवा दीप्यमानत्वेन प्रवर्ग्याः । अतश्च लोकत्रयात्मकादग्नेरन्यत्र प्रवर्ग्योत्सादने अग्न्यादीनेभ्यो लोकेभ्यो बहिर्द्धा कुर्यात् । अग्नौ तदुद्वासने तु एष्वेव लोकेषु अग्न्यादीन्निहितवान् भवति । 'अग्ना उत्सादयति' इति । "लोपः शाकल्यस्य"—( पा. सू. ८।३।१९ ) इति वकारलोपः ॥ २१ ॥

यद्वेवाग्नाऽउत्सादयति । शिर ऽएतद्यज्ञस्य यत्प्रवर्ग्य ऽआत्माऽयमग्निश्चितः स यदन्यत्राग्नेरुत्सादयेद्बहिर्धाऽस्माच्छिरो दध्यादथ यदग्नाऽउत्सादयत्यात्मानमेवास्यैतत्सꣳस्कृत्य शिरः प्रतिदधाति ॥ २२ ॥

स्वयमातृण्णया सꣳस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति । प्राणः स्वयमातृण्णा शिरः प्रवर्ग्य ऽआत्माऽयमग्निश्चितः शिरश्च तदात्मानं च प्राणेन संतनोति संदधात्युत्साद्य प्रवर्ग्यं यथा तस्योत्सादनम् ॥ २३ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ ९ । १ । ३ ॥ ( २–१ )
इति निरवसानः प्रथमः प्रपाठकः समाप्तः ॥
कण्डिकासंख्या ॥ ११० ॥

---

यद्वेवाग्ना उत्सादयति । शिर एतद्यज्ञस्य—यत्प्रवर्ग्यः । आत्माऽयमग्निश्चितः । स यदन्यत्राग्नेरुत्सादयेद्—बहिर्धाऽस्माच्छिरो दध्यात् । अथ यदग्ना उत्सादयति—आत्मानमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति ॥ २२ ॥

स्वयमातृण्णया संस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति । प्राणः स्वयमातृण्णा, शिरः प्रवर्ग्यः, आत्माऽयमग्निश्चितः, शिरश्च तदात्मानं च प्राणेन सन्तनोति, सन्दधाति । उत्साद्य प्रवर्ग्यम्—यथा तस्योत्सादनम् ॥ २३ ॥

---

अथ पुनस्तत्रैवोद्वासनं यज्ञस्य शिरःशरीरसन्धानरूपेण प्रशंसति—यद्वेवाग्ना उत्सादयतीति ॥ २२ ॥

यदा त्वग्नावुत्सादनं तदोक्तोद्वासने विशेषमाह—स्वयमातृण्णयेति[1] । प्रथमं प्रवर्ग्यं स्वयमातृण्णया संस्पृष्टमुद्वासयेत् । एवं च स्वयमातृण्णायाः प्राणरूपत्वात् प्रवर्ग्यात्मकस्य यज्ञस्य शिरसः संचिताग्न्यात्मकस्य यज्ञशरीरस्य प्राणेन सन्तनोति सन्दधाति सन्धानं करोति । अस्यैव विवरणम्—उत्साद्य प्रवर्ग्यमिति । 'तस्य' प्रवर्ग्यस्य 'यथा' येन प्रकारेण प्रवर्ग्यकाण्डोक्तप्रकारेण 'उत्सादनम्' उक्तं तेन प्रकारेण प्रवर्ग्यमुत्सादयेत् । प्रत्येत्याग्निं प्रहरिष्यन् इत्याद्युक्तकालक्रियापेक्षया 'उत्साद्य' इति ल्यबन्तस्य प्रयोगः ॥ २३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ९–२–१ ) ॥

---

१–स्वयमातृण्णास्पृष्टं प्रथमम् । का. श्रौ सू. १८ । २९ । २–( श. प. १४ । १ । १३–१५ ) ।

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# द्वितीयेऽध्याये च द्वितीयं ब्राह्मणम् ।

प्रत्येत्याग्निं प्रहरिष्यन् । (१) आहुतीश्च जुहोति समिधश्चादधात्येतद्वाऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णीते तस्योक्तो बन्धुः ॥ १ ॥

(२) अथ षोडशगृहीतं गृह्णीते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसंमितेनैवैनमेतदन्नेन प्रीणाति यदु वा ऽ आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति समान्याꣳ स्रुचि गृह्णीते समानो हि स यमेतत्प्रीणाति वैश्वकर्मणाभ्यां जुहोति

---

प्रत्येत्याग्निं प्रहरिष्यन्नाहुतीश्च जुहोति, समिधश्चादधाति । एतद्वा एनं देवा एष्यन्तं पुरस्तादन्नेनाप्रीणन्–आहुतिभिश्च समिद्भिश्च । तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणाति–आहुतिभिश्च समिद्भिश्च । स वै पञ्चगृहीतं गृह्णीते । तस्योक्तो बन्धुः ॥ १ ॥

अथ षोडशगृहीतं गृह्णीते । षोडशकलः प्रजापतिः । प्रजापतिरग्निः । आत्मसम्मितेनैवैनमेतदन्नेन प्रीणाति । यदु वा आत्मसम्मितमन्नं–तदवति, तन्न हिनस्ति । यद्भूयो–हिनस्ति तत् । यत्कनीयो–न तदवति । समान्यां स्रुचि गृह्णीते । समानो हि सः–यमेतत्प्रीणाति । वैश्वकर्मणाभ्यां

---

प्रवर्ग्योद्वासनानन्तरं सञ्चिते इष्टकासमूहे स्थापनायाग्निं प्रणेतुं तावद्गार्हपत्ये आज्यहोमं समिद्धोमं च विधत्ते–प्रत्येत्याग्निमिति । 'प्रहरिष्यन्' इति । प्रणेष्यन्नित्यर्थः । विहितहोम आहवनीयप्रदेशं गमिष्यतोऽग्नेः प्रीणनाय पुरस्तादन्नेन सम्पाद्यत इत्याह–एतद्वा एनामित्यादिना । 'आहुतिभिः' 'समिद्भिश्च' इत्येतद् अन्नेन इत्यस्य विशेषणम् । आहुतिसमिद्रूपेणान्नेनेत्यर्थः । आहुतिभिश्च समिद्भिश्चेति सामान्येन विधानात् कथं होमप्रकार इत्यपेक्षायामाह–स वै पञ्चगृतीतमिति । आज्यं च पञ्चगृहीतं यथा भवति तथा 'गृह्णीतें' पञ्चवारं गृह्णीत इत्यर्थः । तस्य तु '"पञ्च वा ऋतवः" इत्यादिकं ब्राह्मणं प्रागुक्तम् । अनेन पञ्चगृहीतेनाज्येनैकाहुतिः सम्पद्यते ॥ १ ॥

'अथ षोडशगृहीतम्' आज्यं 'गृह्णीते' । अष्टौ प्राणाः, अष्टावङ्गानीत्येतैः षोडशावयवः 'प्रजापतिः' अयं च चीयमानः 'अग्निः' प्रजापत्यात्मकः । अतस्तत्य षोडशगृहीतमात्मसदृशमन्नं भवतीति तदुचिते-

---

१--पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा षोडशगृहीतार्धमनुवाकशेषेण । का. श्रौ. सू. १८ । ३० ।

न्विश्वकर्मायमग्निस्तमेवैतत्प्रीणाति तिस्रऽआहुतीर्जुहोति त्रिवृदग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ २ ॥

(त्यु) अथ समिधऽआदधाति । यथा तर्पयित्वा परिवेविष्यात्तादृक्तदौ-दुम्बर्यो भवन्त्यूर्ग्वै रसऽउदुम्बरऽऊर्जैवैनमेतद्रसेन प्रीणात्यार्द्रा भवन्त्ये-तद्वै वनस्पतीनामनार्तं जीवं यदार्द्रं तद्यदेव वनस्पतीनामनार्तं जीवं ते-नैनमेतत्प्रीणाति घृते न्युत्ता भवन्त्याग्नेयं वै घृतꣳ स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति सर्वाꣳ रात्रिं वसन्ति तत्र हि ता रसेन सम्पद्यन्ते तिस्रः समिधऽआदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमे-तदन्नेन प्रीणाति ॥ ३ ॥

---

जुहोति । विश्वकर्मायमग्निः । तमेवैतत्प्रीणाति । तिस्र आहुतीर्जुहोति । त्रिवृदग्निः । यावानग्नि-र्यावत्यस्य मात्रा—तावतैवैनमेतदन्नेन प्रीणाति ॥ २ ॥

अथ समिध आदधाति । यथा तर्पयित्वा परिवेविष्यात्—तादृक् तत् । औदुम्बर्यो भवन्ति । ऊर्ग्वै रस उदुम्बरः । ऊर्जैवैनमेतद्रसेन प्रीणाति । आर्द्रा भवन्ति । एतद्वै वनस्पतीनामनार्तं जीवम्—यदार्द्रम् । तद् यदेव वनस्पतीनामनार्तं जीवं—तेनैनमेतत्प्रीणाति । घृते न्युत्ता भवन्ति । आग्नेयं वै घृतम् । स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति । सर्वां रात्रिं वसन्ति । तत्र हि ता रसेन सम्पद्यन्ते । तिस्रः समिध आदधाति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतदन्नेन प्रीणाति॥३॥

---

नैव 'अन्नेन एनं प्रीणाति' लोके हि 'यद् एव अन्नमात्मसम्मितं' तदेव रक्षति, न च 'हिनस्ति' भूयसो हिंसकत्वादल्पस्य त्वपर्याप्तत्वेनारक्षकत्वादिति । अत्र षोडशगृहीतं समं विभज्य द्वे आहुती क्रियेते, अतश्चा-हुतिभेदेन पृथगेव ग्रहणप्रसक्तावाह—समान्यामिति । 'समान्याम्' एकस्याम् 'स्रुचि गृहीते' षोडशगृहीत-माज्यं सहैव गृह्णीयादित्यर्थः । आहुतिभेदेऽपि कथमेकं गृह्यत इत्याह—समानो हीति । एतेन षोडश-गृहीतेनाज्येन 'यं' 'प्रीणाति' तस्याग्नेरेकत्वादित्यर्थः । प्रकृतेन षोडशगृहीतेनाज्येन साध्यौ द्वौ होमाविति दर्शयन् मान्त्रवर्णिकदेवतासम्बन्धस्याग्नेये प्रकृतहोमे पर्यवसानार्थतामाह—वैश्व-कर्मणाभ्यामिति । 'वैश्वकर्मण'—शब्द उद्भिदादिशब्दवत् कर्मनामधेयम् । अग्नेः प्रजापत्यात्मकत्वेन विश्व-विषयकर्मवत्त्वाद्विश्वकर्मत्वम् । पञ्चगृहीतेनाज्येनैकाहुतिः, षोडशगृहीतेन द्वे आहुती, इति तिस्र आहुतयः सम्पद्यन्ते । या च त्रित्वसङ्ख्या सा संचितस्याग्नेस्तृप्तिहेतुर्भवतीत्याह—तिस्र आहुतीर्जुहोति त्रिवृदग्निरिति॥२॥

आहुतीश्च जुहोति समिधश्चादधातीति होमद्वयमपि सामान्येन विहितम् । तत्राज्याहुतीनां होमप्रकारोऽभिहितः। अथ समिधां होमे विशेषमभिधातुमाह—अथ समिध इति । यथा तर्पयित्वेति । लोके जनः कंचित्पुरुषं साधारणान्नेन तर्पयित्वा पश्चादन्नविशेषाणां परिवेषणं करोति तद्वदेवायमपि समिद्धोमो भवति । आज्याहुति-लक्षणस्यान्नस्य प्रथमं सम्पादितत्वादित्यर्थः । 'परिवेविष्यात्' इति यङ्लुगन्तस्य लिङि रूपम् । ताश्च समिध

यद्वेवैता ऽआहुतीर्जुहोति । (त्ये) एतद्वाऽएनं देवाऽएष्यन्तं पुरस्तादन्नेन समस्कुर्वन्नेताभिराहुतिभिस्तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन सꣳस्करोत्येताभिराहुतिभिः ॥ ४ ॥

स वै पञ्चगृहीतं गृह्णीते । पञ्चधाविहितो वाऽअयꣳ शीर्षन्प्राणो मनो व्वाक्प्राणश्चक्षुः श्रोत्रमेतमेवास्मिन्नेतत्पञ्चधाविहितꣳ शीर्षन्प्राणं दधात्यग्निस्तिग्मेन शोचिषेति तिग्मवत्या शिर ऽएवास्यैतया सꣳश्यति तिग्मतायै ॥ ५ ॥

---

यद्वेवैता आहुतीर्जुहोति । एतद्वा एनं देवा एष्यन्तं पुरस्तादन्नेन समस्कुर्वन्–एताभिराहुतिभिः । तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन संस्करोति–एताभिराहुतिभिः ॥ ४ ॥

स वै पञ्चगृहीतं गृह्णीते । पञ्चधाविहितो वा अयं शीर्षन्प्राणः । मनो, वाक्, प्राणः, चक्षुः, श्रोत्रम् । एतमेवास्मिन्नेतत्पञ्चधाविहितं शीर्षन्प्राणं दधाति । “ अग्निस्तिग्मेन शोचिषा ”–( वा. सं. १७ । १६ ) इति तिग्मवत्या । शिर एवास्यैतया संश्यति तिग्मतायै ॥ ५ ॥

---

औदुम्बर्यो भवेयुरित्याह–औदुम्बर्य इति । उदुम्बरस्य च ऊर्ग्रूपरसात्मकत्वात्तेनैनं प्रीणातीत्याह–ऊर्ग्वा इति । ‘ एतद्वै वनस्पतीनाम् ’ इत्यादिकस्यायमर्थः । ‘ आर्द्रम् ’ आर्द्रत्वं गुण इति यदेतद्वनस्पतीनामार्द्रत्वमनुपहतं ‘जीवम् ’ आर्द्रेतराणामुपजीव्यत्वात् । अत आर्द्राभिः समिद्भिर्होमे तेन जीवेन एनं प्रीणाति । अग्नौ हूयमानस्य घृतस्य समिदादिवद्भस्मीभावाभावात्, केवलं ज्वालारूपेण परिणामाद् ‘ आग्नेयम् ’ अत एव श्रूयते–“ एतद्वा अग्नेः प्रियं धाम यदाज्यमिति ” ( तै. सं. ६।३।९।४ ) । ‘ ताः समिधः ’ पूर्वेद्युः रात्रौ सर्वस्यामेव घृते ‘ वसन्ति ’ । ‘ सर्वां रात्रिम् ’ इति अत्यन्तसंयोगे द्वितीया । तत्तथा निवासे हि ताः रसेन सम्पन्ना भवन्तीति । अतस्तथाविधाभिः समिद्भिर्होमे स्वकीयेन रसरूपेण भागेन ‘ एनम् ’ अग्निम् प्रीणितवान् भवतीति । समिध आदधातीति सामान्येन बहुत्वविधानात्तद्विशेषपर्यवसानमाह–तिस्र इति । तां च त्रित्वसङ्ख्यां सकलाग्निप्रीतिहेतुत्वेन प्रशंसति–त्रिवृदग्निरित्यादिना ॥ ३ ॥

यद्वेवैता इति । समस्कुर्वन्निति । आहवनीयरूपतानुगुणं संस्कार–विशिष्टमकुर्वन्नित्यर्थः ॥ ४ ॥

तत्र प्रथमाहुत्यर्थं पञ्चवारग्रहणमग्नेः शीर्षण्यप्राणपञ्चकोपाधानरूपेण प्रशंसति–स वै पञ्चगृहीतमिति । वागिति । ‘ वाग् ’ इति मुखम्, प्राण इति घ्राणम्, चक्षुर्द्वयं श्रोत्रद्वयं च द्वौ प्राणौ, मनःसहिता वागादयः शिरसि पञ्चधाविहितः प्राणः । अतश्च पञ्चवारग्रहणेन ‘ अस्मिन् ’ अग्नौ शिरसि मनः–प्रभृति प्राणपञ्चकं निदधाति । होममन्त्रस्य तिग्मपदसम्बन्धं प्रशंसति–अग्निस्तिग्मेनेति । तिग्मशब्दस्य तीक्ष्णवाचकत्वात् तद्वत्या ऋचा होमेन तैक्ष्ण्यसिद्धयेऽग्नेः शिरस्तीक्ष्णं करोति । ‘ संश्यति ’ इति “ शो तनूकरणे ”–( धा. पा, दि. प. ३९ ) अस्माल्लटि श्यनि “ ओतः श्यनि ”–( पा. सू. ७ । ३ । ७१ ) इत्याकारलोपः ॥ ५ ॥

(या॒ऽअ) अथ षोडशगृहीतं गृह्णीते । ( तेऽष्टौ ) अष्टौ प्राणा ऽअष्टावङ्गा- न्येतामभिसम्पदᳬ समान्याᳬ स्रुचि गृह्णीते समाने ह्येवात्मन्नङ्गानि च प्राणाश्च भवन्ति नाना जुहोत्यङ्गेभ्यश्च तत्प्राणेभ्यश्च विधृतिं करोति वैश्वकर्मणाभ्यां जुहोति विश्वकर्माऽयमग्निस्तमेवैतत्सᳬस्करोति तिस्रऽ आहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन सᳬस्करोति सप्तदशभिर्ऋग्भिः सप्तदशः प्रजापतिः प्रजापतिरग्निर्यावान- ग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्सᳬस्करोत्येकविᳬशतिगृहीतेन द्वादश मासाः पञ्चऽर्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविᳬशऽ एतामभिसम्पदम् ॥ ६ ॥

---

अथ षोडशगृहीतं गृह्णीते । अष्टौ प्राणाः, अष्टावङ्गानि, एतामभिसम्पदम् । समान्यां स्रुचि गृह्णीते । समाने ह्येवात्मन्नङ्गानि च प्राणाश्च भवन्ति । नाना जुहोति । अङ्गेभ्यश्च तत्प्राणेभ्यश्च विधृतिं करोति । वैश्वकर्मणाभ्यां जुहोति । विश्वकर्माऽयमग्निः । तमेवैतत् संस्करोति । तिस्र आहुतीर्जुहोति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतदन्नेन संस्करोति । सप्तदशभिर्ऋग्भिः । सप्तदशः प्रजापतिः । प्रजापतिरग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतत् संस्करोति । एकविंशतिगृहीतेन । द्वादश मासाः, पञ्चर्तवः, त्रय इमे लोकाः, असावादित्य एकविंशः—एतामभिसम्पदम् ॥ ६ ॥

---

अथ तत्राहुतिद्वयार्थं षोडशवारग्रहणं प्रशंसति—अथेति । शीर्षण्याः प्राणाः सप्त, अवाङ् प्राण एक इत्यष्टौ प्राणाः, "चत्वारि दोर्बाहवाणि, चत्वार्यूर्वष्ठीवानीति" च प्रसिद्धान्यष्टावङ्गानि । एतां सम्पदमभिलक्ष्य षोडशगृहीतस्य ग्रहणमस्मिन्नग्नौ प्राणानामङ्गानां च अष्टकसम्पादनार्थम् षोडशवारं गृह्णीत इत्यर्थः । एकस्मिन्नेव शरीरेऽङ्गानां प्राणानां चावस्थानात्षोडशगृहीतमेकस्रुचि गृह्णीते । होमं तु पृथगेव करोति । एवञ्च अङ्गानां प्राणानाञ्च 'विधृतिं' विभेदेन धारणमसङ्कीर्णतां करोति । तयोर्होमयोर्वैश्वकर्मणत्वाद् विश्वकर्मशब्दाभिधेयमग्निं संस्करोति । आहुतीनाञ्च त्रित्वात्त्रिवृतोऽग्नेः सकलस्यापि संस्कारं सम्पादयति । अत्र "अग्निस्तिग्मेन" (वा. सं. १७।१६) इत्यनया ऋचा पञ्चगृहीतं हूयते । "य इमा विश्वा" (वा. सं. १७।१७) इत्यादिभिरष्टाभिर्ऋग्भिः षोडशगृहीतार्धं हूयते । अवशिष्टं "चक्षुषः पिता" (वा. सं. १७।२९) इत्यादिभिरष्टभिर्हूयते । अत एव कात्यायनः—"पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा षोडशगृहीतार्धमनुवाकशेषेण" (१८।३०) "चक्षुषः पितेत्यपरमनुवाकेन" इति । एवं सर्वाः सम्भूय सप्तदश भवन्ति । तामेतां मन्त्रगतां संख्यां कृत्स्नाग्निसंस्कारहेतुत्वेन प्रशंसति—सप्तदशभिर्ऋग्भिरिति । प्रजापतेः सप्तदशत्वं तैत्तिरीयके श्रुतम्—"आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः

---

१—इत्युक्तसूत्रस्थकर्कभाष्यम् ।

यद्वेवैताः समिध ऽआदधाति । ( त्ये ) एतद्वाऽएनं देवाः सर्वं कृत्स्नꣳ संꣳस्कृत्याथैनमेतेनान्नेनाप्रीणन्नेताभिः समिद्भिस्तथैवैनमयमेतत्सर्वं कृत्स्नꣳ संꣳस्कृत्याथैनमेतेनान्नेन प्रीणात्येताभिः समिद्भिरौदुम्बर्यो भवन्त्यार्द्रा घृते न्युत्ताः सर्वाꣳ रात्रिं वसन्ति तस्योक्तो बन्धुरुदेनमुत्तरां नयेन्द्रेमं प्रतरां नय यस्य कुर्मो गृहे हविरिति यथा यजुस्तथा बन्धुस्तिस्रः समिधऽआदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्र ऽआहुतीर्जुहोति तत्षट् तस्योक्तो बन्धुः ॥ ७ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ९-२-१ ॥ ( २. २. ) ॥

---

यद्वेवैताः समिध आदधाति । एतद्वा एनं देवाः सर्वं कृत्स्नं संस्कृत्य—अथैनमेतेनान्नेनाप्रीणन्—एताभिः समिद्भिः । तथैवैनमयमेतत्सर्वं कृत्स्नं संस्कृत्य—अथैनमेतेनान्नेन प्रीणाति—एताभिः समिद्भिः । औदुम्बर्यो भवन्ति । आर्द्राः घृते न्युत्ताः । सर्वां रात्रिं वसन्ति । तस्योक्तो बन्धुः । " उदेनमुत्तरां नय "—( वा. सं. १७ । ५० ) " इन्द्रेमं प्रतरां नय "—( वा. सं. १७।५१ ) " यस्य कुर्मो गृहे हविः "—( वा. सं. १७ । ५२ ) इति । यथा यजुस्तथा बन्धुः । तिस्रः समिध आदधाति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति । तिस्र आहुतीर्जुहोति । तत् षट् । तस्योक्तो बन्धुः ॥ ७ ॥

---

प्रजापतिः" ( तै. सं. १।६।११।१ ) इति । अथवा अष्टौ प्राणाः, अष्टावङ्गानि, स्वयमेक इति सप्तदशात्मकः । मिलितां ग्रहणसंख्यां प्रशंसति—एकविꣳशतिगृहीतेनेति । ' द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ' एषा संपत् । एतामभिलक्ष्य एकविंशतिगृहीतेन हूयते । एतस्याग्नेर्यथोक्तैकविंशात्मकत्वसम्पादनायैकविंशतिगृहीतेन होम इत्यर्थः ॥ ६ ॥

अथ समिधां होमं प्रकारान्तरेण प्रशंसति—यद्वेवैता इति । पूर्वं " यथा तर्पयित्वा परिवेविष्याद् " इति आज्याहुतिलक्षणेनान्नेन तर्पितस्याग्नेः समिद्धोमः परिवेषणवद्भवतीति प्रशंसितः । इदानीं तु एकविंशतिगृहीतेन होमेन एकविंशत्यात्मकत्वसम्पादनात् कार्त्स्न्येन संस्कृतस्याग्नेरन्नरूपेण प्रशस्यत इति न पौनरुक्त्यम् । सर्वमित्यस्यैवार्थकथनं—' कृत्स्नम् ' इति । औदुम्बर्यो भवन्त्यार्द्रा घृते न्युत्ताः सर्वां रात्रिं वसन्तीति[२] यदस्ति तस्य ' ऊर्ग्वा उदुम्बरः ' इत्यादिरूपं ब्राह्मणमनन्तरमेवोक्तं ( तृतीयायां कण्डिकायां ) तदेवानुसंधेयमित्यर्थः । प्रकृतानां समिदाहुतीनां मन्त्रा निगदव्याख्याता इत्याह—उदेनमुत्तरां नयेति । " उदेनमुत्तरां नय" इत्यादिकः प्रथमो मन्त्रः, " इन्द्रेमं प्रतरां नय " इत्यादिको द्वितीयः, " यस्य कुर्मो गृहे हविः "—इत्यादिकस्तृतीयः, एते यथा मन्त्राः स्पष्टा स्तथैव ब्राह्मणं स्पष्टार्थमित्यर्थः । 'तिस्रः समिधः' इत्येतदुक्तार्थम् । आज्यसमिदाहुतिसङ्ख्यां भूयः स्तौति—तिस्र आहुतीरिति । प्रकृतत्वात् तिस्रः समिध आदधातीति सम्बध्यते । एवं षट्संख्या सम्पद्यते । तद्ब्राह्मणं " षड्वा ऋतवः "—इत्यादिरूपं प्रागुक्तमित्यर्थः ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे द्वितीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ९ । २ । २ ) ॥

---

२—आर्द्रौदुंबरीर्घृतोषितास्तिस्र उदेनमित्यादधाति प्रत्यृचम् । अग्निं प्रणयति । का. श्रौ. सू. १८ । ३१ । ३२ ।

अथातः सम्प्रेष्यति । ( त्यु ) उद्यच्छेध्ममुपयच्छोपयमनीरग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययाऽनूदेहि ब्रह्मन्नप्रतिरथं जपेति ॥ १ ॥

( त्ये ) एतद्वै देवानुपप्रैष्यतः । ( ऽ ) एतं यज्ञं तᳪस्यमानान्दक्षिणतोऽसुरा रक्षाᳬसि नाष्ट्रा ऽअजिघाᳬसन्न यक्ष्यध्वे न यज्ञं तᳪस्यध्वऽइति ॥ २ ॥

ते देवा ऽइन्द्रमब्रुवन् । ( वंस्त्वं ) त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यवत्तमोऽसि त्वमिमानि रक्षाᳬसि प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीयमस्त्विति तथेति तस्मै वै बृहस्पतिं द्वितीयमकुर्वन्ब्रह्म वै बृहस्पतिस्तऽ-

---

अथातः सम्प्रेष्यति—उद्यच्छेध्मम्, उपयच्छोपयमनीः, अग्नये प्रह्रियमाणायानुब्रूहि, अग्नीद् ! एकस्फ्ययाऽनूदेहि, ब्रह्मन् ! अप्रतिरथं जप इति ॥ १ ॥

एतद्वै देवानुपप्रैष्यत एतं यज्ञं तंस्यमानान् दक्षिणतोऽसुरा रक्षांसि नाष्ट्रा अजिघांसन्—'न यक्षध्वे, न यज्ञं तंस्यध्वे' इति ॥ २ ॥

ते देवा इन्द्रमब्रुवन्—' त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यवत्तमोऽसि, त्वमिमानि रक्षांसि प्रतियतस्व ' इति । ' तस्य वै मे ब्रह्म द्वितीयमस्तु ' इति । तथेति । तस्मै वै बृहस्पतिं द्वितीयमकुर्वन् । ब्रह्म वै

---

इत्थमग्निप्रणयनार्थं यथोक्तं होमं विधायाथ तत्प्रायणौपयिकीः क्रियाः कर्तुं तदुचितं संप्रैषमाह–अथातः संप्रेष्यतीति[1] । प्रणेष्यमाणाग्निसिद्ध्यर्थं गार्हपत्ये प्रक्षिप्तं काष्ठम् 'इध्मं' तद् 'उद्यच्छ' । अग्निधारणार्थमधस्तात्क्रियमाणाः सिकता उपयमन्यः, ताश्च 'उपयच्छ' ताः कुरु । तदेतदुभयं प्रतिप्रस्थातारं प्रत्युच्यते । हे होतः ! ' प्रह्रियमाणाय ' ' अग्नये ' ' अनुब्रूहि ' । अग्निप्रणयनीया ऋचः ' अनुब्रूहि ' । हे अग्नीत् ! त्वमेकया स्फ्यरेखयाऽनुगच्छ । हे ब्रह्मन् ! " आशुः शिशानः " ( वा. सं. १७ । ३३–४९ ) इत्येतदप्रतिरथाख्यं सूक्तं ' जप ' इति । एवं तत्र तत्र व्यापारे तं तं ' संप्रेष्यति ' विनियुञ्ज्यादित्यर्थः ॥ १ ॥

अत्र संप्रैषे ब्रह्मन्नप्रतिरथं जपेति यदुक्तं तस्योपयोगमभिधातुं पुराकल्पमवतारयति–एतद्वा इति । एतस्मिन्काले खलु ' एतम् ' अग्निचयनाख्यं ' यज्ञं ' ' तंस्यमानान् ' करिष्यमाणान् । इडभावश्छान्दसः । अत एवाग्निविहारसमीपे गच्छतो देवान् दक्षिणभागेन एत्य असुरा रक्षांसि च 'न यक्षध्वे' लोडर्थे व्यत्ययेन लृट्प्रत्ययः । न यज्ञं तंस्यध्वे विस्तारयध्वमिति 'अजिघांसन्' देवांना यज्ञं विहन्तुमैच्छन्नित्यर्थः ॥ २ ॥

पश्चात्तैर्देवैरस्माकं मध्ये त्वमेव प्रशस्यतमो बलवत्तमश्चासि । बलिष्ठ इत्येतद्विशेषणम् वीर्यवत्तम इति । अतः त्वमिमानि रक्षांसि ' प्रतियतस्व ' प्रतियत्नं कुरुष्व इत्युक्ते इन्द्रेण 'मे' ब्राह्मणो द्वितीयोऽस्त्वित्युक्तम् ।

---

१–अग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययाऽनूदेहि ब्रह्मन्नप्रतिरथं जपेति । का. श्रौ. सू. १८ । ३४ ।

इन्द्रेण चैव बृहस्पतिना च दक्षिणतोऽसुरान्रक्षाꣳसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञमतन्वत ॥ ३ ॥

तद्वाऽएतत्क्रियते । यद्देवाऽअकुर्व्वन्निदं नु तानि रक्षाꣳसि देवैरेवापहतानि यत्त्वेतत्करोति यद्देवाऽअकुर्व्वंस्तत्करवाणीत्यथोऽइन्द्रेण चैवैतद्बृहस्पतिना च दक्षिणतोऽसुरान्रक्षाꣳसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञं तनुते ॥ ४ ॥

स यः स इन्द्रः । (ऽ) एष सोऽप्रतिरथोऽथ यः स बृहस्पतिरेष स ब्रह्मा तद्यद्ब्रह्माऽप्रतिरथं जपतीन्द्रेण चैवैतद्बृहस्पतिना च दक्षिणतोऽसुरान्रक्षाꣳसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञं तनुते तस्माद्ब्रह्माऽप्रतिरथं जपति ॥ ५ ॥

---

बृहस्पतिः । त इन्द्रेण चैव बृहस्पतिना च दक्षिणतोऽसुरान्, रक्षांसि, नाष्ट्रा अपहत्य; अभयेऽनाष्ट्र एतं यज्ञमतन्वत ॥ ३ ॥

तद्वा एतत्क्रियते—यद्देवा अकुर्वन् । इदं नु तानि रक्षांसि देवैरेवापहतानि—यत्त्वेतत्करोति—यद्देवा अकुर्वन्—तत्करवाणीति । अथोऽइन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतोऽसुरान् रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतं यज्ञं तनुते ॥ ४ ॥

स यः स इन्द्रः—एष सोऽप्रतिरथः । अथ यः स बृहस्पतिः—एष स ब्रह्मा । तद् यद्ब्रह्माऽप्रतिरथं

---

तथैव कुर्म इति बृहस्पतेर्ब्राह्मणत्वात् तमिन्द्रस्य 'द्वितीयमकुर्वन्'। तथा कृत्वा 'ते' देवाः 'इन्द्रेण बृहस्पतिना च' 'दक्षिणतो' दक्षिणभागे नाशकान् 'असुरान्' 'रक्षांसि' चापहृत्य 'अनाष्ट्रे' अत एव 'अभये' प्रदेशे 'एतं' प्रकृतं 'यज्ञम्' अकुर्वत ॥ ३ ॥

तद्वा एतदित्यादिकस्यायमर्थः । 'देवाः' पूर्वं यत्कर्म 'अकुर्वन्' एतस्मिन्कालेऽपि 'तद्' एव 'क्रियते' खलु 'इदम्' इत्यपहननक्रियाविशेषणम् । इदं रक्षसामपहननं पूर्वं देवैरेव सम्पादितम्, तस्माच्चरितार्थत्वादेतत्कर्म यद्यपि न करणीयम्; तथापि 'यदेतत्' कर्म 'करोति' तद् 'देवाः' 'यदकुर्वन्' 'तत् करवाणीति' धिया क्रियते । न तु रक्षसामपहननार्थं तस्य तु देवैरेव सम्पादितत्वात् । किञ्च स्वयमपि चैतेन 'इन्द्रेण बृहस्पतिना च' दक्षिणभागस्थितान्नाशकान् 'असुरान् रक्षांसि' च 'अपहत्य' 'अनाष्ट्रे' 'अभये' देशे 'एतं' कृतवान् भवतीति ॥ ४ ॥

ननु देवाः पूर्वमिन्द्रबृहस्पतिभ्यां रक्षांस्यपाघ्नन्नित्येतदस्तु प्रकृते कः इन्द्रः को वा बृहस्पतिः कथं वा ताभ्यां रक्षसामपहननं कर्तुं युक्तमुपपद्यते इत्याह—स यः स इति । प्रथमतच्छन्देन पूर्वं दक्षिणभागे रक्षसामपहन्ता इन्द्रः परामृश्यते । 'सः यः' इन्द्रोऽस्ति 'एष सोऽप्रतिरथः' इत्यादि स्पष्टम् ॥ ५ ॥

(त्या) आशुः शिशानो व्वृषभो नु भीमऽ इति । ( त्यै ) ऐन्द्र्योऽभिरूपा द्वादश भवन्ति द्वादश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्याव-त्यस्य मात्रा तावतैवैतद्दक्षिणतोऽसुरान्रक्षाᳫँसि नाष्ट्रा ऽअपहन्ति त्रिष्टु-ब्भिर्व्वज्रो वै त्रिष्टुब्व्वज्रेणैवैतद्दक्षिणतोऽसुरान्रक्षाᳫँसि नाष्ट्रा ऽअपहन्ति ता द्वाविᳫँशतिर्गायत्र्यः सम्पद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म हि ॥ ६ ॥

(ह्य) अथैनमुद्यच्छति । (त्यु) उदु त्वा व्विश्वे देवा ऽअग्ने भरन्तु चित्तिभिरिति तस्योक्तो बन्धुः ॥ ७ ॥

---

जपाति–इन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतोऽसुरान् रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतं यज्ञं तनुते । तस्माद्ब्रह्माऽप्रतिरथं जपति ॥ ५ ॥

" आशुः शिशानो वृषभो न भीमः "–( वा० सं० १७ । ३३ ) इति । ऐन्द्र्योऽभिरूपा द्वादश भवन्ति । द्वादश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैतद्दक्षिणतोऽसुरान् रक्षांसि नाष्ट्रा अपहन्ति । त्रिष्टुब्भिः । वज्रो वै त्रिष्टुप् । वज्रेणैवैतद्दक्षिण-तोऽसुरान् रक्षांसि नाष्ट्रा अपहन्ति । ता द्वाविंशतिर्गायत्र्यः सम्पद्यन्ते । तदाग्नेय्यो भवन्ति । अग्निकर्म हि ॥ ६ ॥

अथैनमुद्यच्छति । " उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः "–( वा० सं० १७ । ५३ ) इति । तस्योक्तो बन्धुः ॥ ७ ॥

---

अप्रतिरथस्यैव इन्द्रात्मकत्वमुपपादयति आशुः शिशानः इति । मन्त्रप्रतिपाद्यायाः देवतायाः मन्त्रस्य चाभेदात् आशुः शिशान इत्यादिका ऐन्द्र्य ऋचोऽभिरूपाः सदृशा भवन्तीति इन्द्रत्वेन स्वीकर्तुमुचिता भवन्ती-त्यर्थः । अप्रतिरथसूक्तस्थानामृचां द्वादशसंख्यया कृत्स्नाग्नेः सकाशात् असुरा रक्षांसि च अपहन्यन्ते इति प्रसं-शति–द्वादश भवन्तीति । अप्रतिरथे ऋचो द्वादश भवन्तीति । तासां छन्दः प्रशंसति–त्रिष्टुब्भिरिति । त्रिष्टुभो वज्रत्वं वज्रिणेन्द्रेण सहोत्पत्तेः । सा चोत्पत्तिः–तैत्तिरीयके श्रूयते–"उरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप् छन्दः" ( तै.सं.७।१।१।४ ) इति । अथवा वीर्यवत्त्वात् त्रिष्टुभो वज्रत्वम्, वीर्यवत उरःप्रदेशात्तन्निर्माणात् । अत एव श्रुतं " तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त " ( तै. सं. ७।१।१।५ ) इति । ननु प्रकृतस्याग्निकर्मत्वात् तत्रैतासामैन्द्रीणामृचामसमवेतार्थत्वं स्यादित्यत आह–ता द्वाविंशति-रिति । चतुश्चत्वारिंशदक्षरा द्वादश त्रिष्टुभः सम्भूयाष्टाविंशतिपञ्चशताक्षराणि सम्पद्यन्ते । चतुर्विंशत्यक्षराणां गायत्रीणां ' द्वाविंशतिः ' च तावदक्षरा भवन्ति । अतो द्वादश त्रिष्टुभो मिलित्वा द्वाविंशतिर्गायत्र्यः । ताश्च ' आग्नेय्यो ' भवन्ति । अग्निना सहोत्पन्नत्वात् । अत एव श्रूयते–" स मुखतस्त्रिवृतं निरमिमीत तमग्नि-र्देवताऽन्वसृज्यत गायत्री छन्दः" ( तै. सं. ७।१।१।२ ) इति । प्रकृतं च कर्माग्निसम्बन्धि भवति, तत्प्रणय-नात्मकत्वात् । अतस्ता ऋच ऐन्द्र्योऽपि छन्दःसम्पत्तिद्वारा प्रकृतकर्मसमवेतार्था एवेत्यर्थः ॥ ६ ॥

इत्थं ब्रह्मणा कृतस्याप्रतिरथसूक्तजपस्योपयोगमुक्त्वा अथाग्नेरुद्यमनं समन्त्रकं विधत्ते–अथैनमिति । " उदु

---

१–त्रिरुक्तायामुद्यम्योदु त्वेति । का० श्रौ० सू० १८ । ३५ ॥

( ग ) अथाभिप्रयन्ति । पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरिति देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्द्धन्त ते देवा ऽअसुराणां दिशोऽवृञ्जत तथैवैतद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते दैवीरिति तदेना दैवीः कुरुते यज्ञमवन्तु देवीरिति यज्ञमिममवन्तु देवीरित्येतदपामतिं दुर्मतिं बाधमाना ऽइत्यशनाया वाऽअमतिरशनायामपबाधमाना ऽइत्येतद्रायस्पोषे यज्ञपतिमाभजन्तीरिति रय्यां च पोषे च यज्ञपतिमाभजन्तीरित्येतद्रायस्पोषेऽअधि यज्ञोऽअस्थादिति रय्यां च पोषे चाधि यज्ञोऽस्थादित्येतत् ॥८॥

अथाभिप्रयन्ति । " पञ्च दिशो दैवीर्यज्ञमवन्तु देवीः "–इति । देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्द्धन्त । ते देवा असुराणां दिशोऽवृञ्जत । तथैवैतद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते । दैवीरिति । तदेना दैवीः कुरुते । यज्ञमवन्तु देवीरिति । यज्ञमिममवन्तु देवीरित्येतत् । " अपामतिं दुर्मतिं बाधमानाः "–इति । अशनाया वाऽमतिः । अशनायामपबाधमाना इत्येतत् । " रायस्पोषे यज्ञपतिमाभजन्तीः "–इति । रय्यां च पोषे च यज्ञपतिमाभजन्तीरित्येतत् । " रायस्पोषे अधि यज्ञो अस्थात् "–( वा. सं १७।५४ ) इति । रय्यां च पोषे च अधि यज्ञोऽस्थादित्येतत् ॥ ८ ॥

त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः " इत्यादिना मन्त्रेणेत्यर्थः । तस्य मन्त्रस्य ब्राह्मणं ( श. प. ६ । ८ । १ । ७ ) प्रागुक्तमित्याह–तस्योक्तो बन्धुरिति ॥ ७ ॥

उद्यमनानन्तरमध्वर्युप्रभृतीनां चित्यं प्रति गमनं विधत्ते–अथेति । अत्र " पञ्च दिशो दैवीः " इत्यादिभिः पञ्चभिर्ऋग्भिराग्नीध्रपर्यन्तं गच्छन्ति । अतस्ता ऋचः क्रमेण व्याचष्टे–देवाश्चासुराश्चेत्यादिना । प्रजापत्यपत्यभूता देवाश्चासुराश्चेत्येते ' उभये ' दिग्विषये स्पर्द्धां कृतवन्तः । पश्चाद् ' देवाः असुराणां दिशोऽवृञ्जत ' उपगमय्य स्वाधीनीकृतवन्तः । मन्त्रे 'पञ्च दिशः' इत्यनेन 'तथैव' यजमानोऽपि द्वेषं कुर्वतो 'भ्रातृव्यस्य' 'दिशः' स्वाधीनाः करोति । ' दैवीः ' इत्यनेन ' एना दिशो ' देवसंबन्धिनीः ' कुरुते ' । असुरेभ्य उपगमय्य देवैः स्वाधीनीकृतत्वाद् ' दैवीः ' इत्यनेन तथैव सम्पादितवान् भवतीत्यर्थः । ' यज्ञमवन्तु देवीः ' इत्यनेन प्रकृतस्य यज्ञस्यावनं विवक्षितमिति दर्शयति–यज्ञमिममिति । ' अमति ' शब्दस्याशनेच्छाऽर्थ इति व्याचष्टे–अपामतिमिति । " अशनायोदन्यधनाया० " ( पा. सू. ७।४।३४ ) इत्यादिसूत्रेण ' अशनाया ' शब्दः क्यजन्तो निपातितः । ' रायस्पोषे ' इति धने तद्विषये पोषे चेति वक्तुमभिप्रेतमित्याह–रायस्पोष इति । रायस्पोषे अधीत्यत्रापि तथैव विवक्षितमित्याह–रायस्पोषे अधीति । मन्त्रार्थस्तु–' दैवीः ' दीव्यन्तीः देवसंबन्धिन्यः ' पञ्च दिशः ' ' अमतिम् ' अशनेच्छाम्, ' दुर्मतिम् ' अशास्त्रीयां मतिं च ' अपबाधमानाः ' धने तद्विषयपोषणे च यज्ञपतिसम्बन्धिन्यः एनं प्रणीयमानाग्निलक्षणं ' यज्ञमवन्तु ' । अस्थादिति

१–चित्यं गच्छंति पंच दिश इति । का० श्रौ० सू० १८ । ३६ ।

(त्स) सुमिद्धेऽअग्नावधि मामहान ऽइति । यजमानो वै मामहानु ऽउक्थपत्र ऽइत्युक्थानि ह्येतस्य पुत्राणीड्य ऽइति यज्ञिय ऽइत्येतद्गृभीत ऽइति धारित ऽइत्येतत्तप्तं घर्मं परिगृह्यायजन्तेति तप्तुँ ह्येतं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवाऽ इत्यूर्जा ह्येतं यज्ञमयजन्त देवाः ॥ ९ ॥

दैव्याय धर्त्रे जोष्ट्रऽइति । दैवो ह्येष धर्ता जोषयितृतमो देवश्रीः श्रीमनाः शतपया ऽइति देवश्रीर्ह्येष श्रीमनाः शतपयाः परिगृह्य देवा यज्ञमायन्निति परिगृह्य ह्येतं देवा यज्ञमायन्देवा देवेभ्योऽअध्वर्यन्तो ऽअस्थुरित्यध्वरो वै यज्ञो देवा देवेभ्यो यज्ञियन्तोऽस्थुरित्येतत् ॥ १० ॥

---

" समिद्धे अग्नावधि मामहानः "–इति । यजमानो वै मामहानः । "उक्थपत्रः"–इति । उक्थानि ह्येतस्य पत्राणि । " ईड्यः "–इति । यज्ञिय इत्येतत् । " गृभीतः "–इति । धारित इत्येतत् । " तप्तं घर्मं परिगृह्यायजन्त "–इति । तप्तं ह्येतं घर्मं परिगृह्यायजन्त । " ऊर्जा यद्यज्ञमयजन्त देवाः "–( वा. सं. १७ । ५५ ) इति । ऊर्जा ह्येतं यज्ञमयजन्त देवाः ॥ ९ ॥

" दैव्याय धर्त्रे जोष्ट्रे "–इति । दैवो ह्येष धर्ता जोषयितृतमः । " देवश्रीः श्रीमनाः शतपयाः "–इति । देवश्रीर्ह्येष श्रीमनाः शतपयाः । " परिगृह्य देवा यज्ञमायन् "–इति । परिगृह्य ह्येतं देवा यज्ञमायन् । " देवा देवेभ्यो अध्वर्यन्तो अस्थुः "–( वा० सं० १७ । ५६ ) इति । अध्वरो वै यज्ञः । देवा देवेभ्यो यज्ञियन्तोऽस्थुरित्येतत् ॥ १० ॥

---

" छन्दसि लुङ्लङ्लिटः "–( पा. सू. ३ । ४ । ६ ) इति लोडर्थे लुङ् प्रत्ययः । किञ्चायमपि यज्ञः धने तत्पोषे चाधितिष्ठत्विति प्रथममन्त्रस्यार्थः ॥ ८ ॥

यजमानस्यैव पूजकत्वात् ' मामहान ' शब्दो यजमानपर इत्याह–यजमानो वा इति । अग्नेरुक्थानि स्तोत्रशस्त्राणि पत्राण्यङ्गानि भवन्तीत्यग्निरुक्थपत्र इत्याह–उक्थानि ह्येतस्येति । यद्वा उक्थान्येव पत्रं वाहनं यस्य स उक्थपत्रः, इति । 'गृभीतः' इत्यनेनाध्वर्युणा 'धारित' इत्येतदुक्तं भवतीत्याह–गृभीत इति । यतो देवाः तप्तं 'घर्मं' घर्मलक्षणम् अग्निं ' परिगृह्य अयजन्त ' अत उच्यते मन्त्रे तप्तं घर्ममित्याह–तप्तं घर्ममिति । उत्तरवाक्यमप्येवमेव व्याचष्टे–ऊर्जेति । ' ऊर्जा ' आज्यदधिपयःप्रभृतिना रसेनेत्यर्थः । मन्त्रार्थस्तु–सम्यग्दीप्ते अग्नौ प्रणीयमाने मामहानोऽत्यर्थं पूजको यजमानोऽधिकारभावेनानुगच्छति । उक्थान्येवाङ्गानि यस्य सः ' उक्थपत्रः ' ' ईड्यः ' स्तुत्यो यज्ञियो वा स चाग्निरध्वर्युणा धारितः । किञ्च देवास्तप्तं घर्मात्मकं तमग्निं परिगृह्यायजन्त यतस्तत्तत्वादेव यज्ञरूपम् तम् आज्यादिहविर्लक्षणेनान्नेनाशमयन्तेति द्वितीयस्यार्थः ॥ ९ ॥

अग्नेर्देवसम्बन्धित्वाद् धारयितृत्वाज्जोषयितृतमत्वाच्चाग्निरेव दैव्यायेत्यादिनोच्यते इत्याह–दैव्यायेति । उत्तरवाक्यद्वयं प्रसिद्धार्थमित्याह–देवश्रीरिति । परिगृह्येति । ' देवा देवेभ्यः ' इत्यत्र ' अध्वर्यन्त ' इत्येतत्पदं

(द्वी) व्वीतꣳ हविः शमितꣳ शमिता यजध्याऽइति । (ती) इष्टꣳ स्विष्टमित्येतत्तुरीयो यज्ञो यत्र हव्यमेतीत्यध्वर्युः पुरस्ताद्यजूꣳषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष ऽएव तुरीयो यज्ञस्ततो व्वाका ऽआशिषो नो जुषन्तामिति ततो नो व्वाकाश्चाशिषश्च जुषन्तामित्येतत् ॥ ११ ॥

(त्सू) सूर्यरश्मिर्हरिकेशः पुरस्तात् । (त्स) सविता ज्योतिरुदयाँ॥ अजस्रमित्यसौ वाऽआदित्य ऽएषोऽग्निः स ऽएष सूर्यरश्मिर्हरिकेशः पुरस्तात्सवितैतज्ज्योतिरुद्यच्छत्यजस्रं तस्य पूषा प्रसवे याति विद्वानिति पशवो वै पूषा तऽएतस्य प्रसवे प्रेरते सम्पश्यन्विश्वा भुवनानि गोपा-

---

" वीतं हविः शमितं शमिता यजध्यै "-इति । इष्टं स्विष्टमित्येतत् । " तुरीयो यज्ञो यत्र हव्यमेति "-इति । अध्वर्युः पुरस्ताद्यजूंषि जपति । होता पश्चादृचोऽन्वाह । ब्रह्मा दक्षिणतोऽप्रतिरथं जपति । एष एव तुरीयो यज्ञः । " ततो वाका आशिषो नो जुषन्ताम् "-(वा० सं० १७।५७) इति । ततो नो वाकाश्चाशिषश्च जुषन्तामित्येतत् ॥११॥

" सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयां अजस्रम् "-इति । असौ वा आदित्य एषोऽग्निः । स एष सूर्यरश्मिर्हरिकेशः पुरस्तात् सवितैतज्ज्योतिरुद्यच्छत्यजस्रम् ।

---

व्याचष्टे-अध्वरो वा इति । 'अध्वर्यन्त' इति " कव्यध्वरपृतनस्यर्चि लोपः "-(पा. सू. ७।४।३९) इति क्यचि अध्वर्यूकारलोपः । मन्त्रार्थस्तु-देवसम्बन्धिने धारयित्रे जोषयितृतमायाग्नये हविर्दानार्थं तत्प्रणयनं क्रियत इति वाक्यशेषः । किञ्च यो 'देवश्रीः' श्रयन्त इति श्रियः देवाः श्रियो यस्य स तथोक्तः । भक्तेभ्यः श्रियं दातुं मनो यस्येति 'श्रीमनाः' शतानि पयांसि यस्यासौ 'शतपयाः' तमग्निं परिगृह्य देवा यजनप्रदेशं गतवन्तः गत्वा च देवा ऋत्विगादयः देवेभ्यो यज्ञमिच्छन्तः स्थितवन्त इति तृतीयस्यार्थः ॥ १० ॥

'वीतं शमितम्' इत्यस्य पदद्वयस्यार्थमाह-इष्टं स्विष्टमिति । अध्वर्युहोतृब्रह्मणां यथास्थानं यथायथं मन्त्रजप एव तुरीयो यज्ञ इति व्याचष्टे-अध्वर्युः पुरस्तादिति । 'वाकाः, आशिषः' इत्यनयोः शब्दयोः सामानाधिकरण्यशङ्कां निवारयति-ततो नो वाकाश्चाशिषश्चेति । मन्त्रार्थस्तु-शमितेति तृतीयैकवचनस्य सु इत्यादेशः । 'शमित्रा' अग्न्यर्थयागीयं हविः वीतम् इष्टं यत्र यस्मिन् प्रणयनदेशे हव्यं हवनार्हमग्निम् तुरीयो यज्ञो गच्छति । तथाविधादस्मादग्नेः अध्वर्य्वादीनाम् अप्रतिरथादयो मन्त्रा वाकाः ऋग्यजुःसामलक्षणानि वाक्यानि, आशिषश्च 'नः' अस्माकं जुषन्तामिति चतुर्थस्यार्थः ॥ ११ ॥

एतस्य प्रणीयमानस्याग्नेरादित्यात्मकत्वात् 'स एषः' प्रणीयमानाग्निलक्षणः सूर्यस्य च रश्मिभिर्युक्तो हरितवर्णकेशः तेजोरूपः 'सविता' अनवच्छिन्नं 'पुरस्तादुदयान्' यद् 'उद्यच्छति' अतो मन्त्र इममेवार्थमाचष्ट इत्याह-सूर्यरश्मिरिति । पूष्णः पशुजनकत्वेन 'पूषा' इति पशवः उच्यन्ते । 'त एतस्य' अग्नेरनुज्ञायां

ऽइत्येष वाऽइदᳬ सर्वᳬ सम्पश्यत्येष उऽएवास्य सर्वस्य भुवनस्य गोप्ता ॥ १२ ॥

तद्याऽ अमुष्मादादित्यादर्व्वाच्यः पञ्च दिशः । ( स्ता ) ताऽएतद्देवाऽ असुराणामवृञ्जताथो ता ऽएवैतत्समारोहंस्ताऽ उऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्समारोहत्यथोऽएतद्वाऽएताभिर्देवाऽ आतः सम्प्राप्नुवंस्तथैवाभिरयमेतदातः संप्राप्नोति ॥ १३ ॥

( त्य ) अथाश्मानं पृश्निमुपदधाति । ( त्य ) असौ वाऽआदित्योऽश्मा

---

" तस्य पूषा प्रसवे याति विद्वान् "–इति । पशवो वै पूषा । त एतस्य प्रसवे प्रेरते । " सम्पश्यन्विश्वा भुवनानि गोपाः "–( वा. सं. १७ । ५८ ) इति । एष वा इदं सर्वं सम्पश्यति । एष उऽएवास्य सर्वस्य भुवनस्य गोप्ता ॥ १२ ॥

तद् या अमुष्मादादित्यादर्वाच्यः पञ्च दिशः–ता एतद्देवा असुराणामवृञ्जत । अथो ता एवैतत् समारोहन् । ता उ एवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्ते । अथो ता एवैतत्समारोहति । अथो एतद्वा एताभिर्देवा आतः सम्प्राप्नुवन् । तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ १३ ॥

अथाश्मानं पृश्निमुपदधाति । असौ वा आदित्योऽश्मा पृश्निः । अमुमेवैतदादित्यमुपदधाति ।

---

प्रवर्त्तन्त इत्ययमर्थो मन्त्रभागेन विवक्षित इत्याह–पशवो वा इति । ' प्रेरते ' " ईर गतौ " ( धा. पा. अ. आ. ८ ) इत्यस्यादादिकस्य लेटि बहुवचने रूपम् । अग्नेः प्रजापत्यात्मकत्वेन सर्वस्यापि द्रष्टृत्वाद्द्रष्टा रक्षितृत्वाच्च गोपाः तत्रायं संपश्यन्नित्यादिमन्त्रभागः समवेतार्थ इत्याह–संपश्यन्निति । मन्त्रार्थस्तु–सूर्यस्य च रश्मिभिर्युक्तो हरितकेशस्तेजोरूपः प्रणीयमानाग्निः पुरस्ताद्गच्छति तस्य प्रसवे विद्वान् पूषा याति अग्नेः प्रजापत्यात्मकत्वेन, विश्वा भुवनानि संपश्यन् सर्वस्यापि भुवनस्य द्रष्टृत्वाद्द्रष्टा, ' गोपाः ' रक्षितृत्वाद् ' भुवनस्य गोप्ता ' गोपायितेति पञ्चमस्यार्थः ॥ १२ ॥

" तथैवैतद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते " इति सामान्येनोक्तम् । सम्प्रति ता एव पञ्च दिशो विशिष्य दर्शयन् तासामुक्तमन्त्रैः स्वाधीनतया प्राप्तिमाह–तद्या इति । 'तद्' इति देवा यस्मिन् काले असुराणां दिशोऽवृञ्जत तस्य कालस्य परामर्शः । एतच्छब्देनानन्तरोक्ता मन्त्राः परामृश्यन्ते । 'अवृञ्जत' एभ्य उपनमितवन्तः । 'समारोहन्' स्वाधीनीकृतवन्तः । अथो इति । किञ्च देवास्तस्मिन्काले एताभिर्ऋग्भिः ' आतः ' सूर्यावस्थानप्रदेशलक्षणान्तरिक्षपर्यन्तं ' सम्प्राप्नुवन् ' तद्वदेवायमपि यजमानो भ्रातृव्यतोऽपगमय्य स्वाधीनीकृताः ताः 'पञ्च दिशः' 'आतः सम्प्राप्नोति' अन्तरिक्षात्मकाग्नीध्रमण्डपपर्यन्तं सः सम्प्राप्नोति । उक्तैर्मन्त्रैराग्नीध्रपर्यन्तं गमने भ्रातृव्यसम्बन्धित्वादन्तरिक्षादर्वाचीनाः पञ्च दिशस्ततोऽपगमय्य स्वाधीनतायां संप्राप्ता भवन्तीत्यर्थः ॥ १३ ॥

उक्तैर्मन्त्रैः आग्नीध्रपर्यन्तं गत्वा तत्रैकस्य पृश्निवर्णस्याश्मन उपधानं विधत्ते–अथेति[1] । पृश्निशब्देन श्वैत्य-

---

1–आग्नीध्रदेशाद्दक्षिणं पृष्ठ्या सहितं पृश्न्यश्मानमुपदधाति विमान इति । का. श्रौ. सू. १८ । ३७ ।

पृश्निरश्मुसुवैतुदादित्यमुपदधाति पृश्निर्भवति रश्मिभिर्हि मुण्डलं पृश्नि तमुन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौरा-हवनीयऽ एतं तुदिमौ लोकावुन्तरेण दधाति तुस्मादेषुऽ इमौ लोकावुन्तरेण तपति ॥ १४ ॥

( त्या ) आग्नीध्रवेलायाम् । (म) अन्तुरिक्षं वाऽआग्नीध्रमेतं तुदन्तुरिक्षे दधाति तुस्मादेषोऽन्तुरिक्षायतनो व्यध्वे व्यध्वे ह्येषु ऽइतः ॥ १५ ॥

सुऽएषु प्राणः । प्राणमेवैतुदात्मुन्धत्ते तुदेतदायुरायुरेवैतुदात्मुन्धत्ते तुदे-तदन्नमायुर्ह्येतदन्नमु वाऽआयुरश्मा भवति स्थिरो वाऽअश्मा स्थिरं तदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्नम् ॥ १६ ॥

---

पृश्निर्भवति । रश्मिभिर्हि मण्डलं पृश्नि । तमन्तरेणाहवनीयं च गार्हपत्यं चोपदधाति । अयं वै लोको गार्हपत्यः, द्यौराहवनीयः । एतं तदिमौ लोकावन्तरेण दधाति । तस्मादेष इमौ लोका-वन्तरेण तपति ॥ १४ ॥

आग्नीध्रवेलायाम् । अन्तरिक्षं वा आग्नीध्रम् । एतं तदन्तरिक्षे दधाति । तस्मादेषोऽन्तरिक्षायतनः । व्यध्वे । व्यध्वे ह्येष इतः ॥ १५ ॥

स एष प्राणः । प्राणमेवैतदात्मन्धत्ते । तदेतदायुः । आयुरेवैतदात्मन्धत्ते । तदेतदन्नम् । आयु-र्ह्येतत् । अन्नमु वा आयुः । अश्मा भवति । स्थिरो वा अश्मा । स्थिरं तदायुः कुरुते । पृश्निर्भ-वति । पृश्नीव ह्यन्नम् ॥ १६ ॥

---

मुच्यते । पृश्नेरश्मन उपधानेनादित्यस्यैवोपधानं भवतीत्याह—असौ वा आदित्य इति । आदित्यमण्डलसादृश्य-प्रदर्शनेनोक्तमश्मनः पृश्नित्वमुपपादयति—पृश्निर्भवतीति । तस्य चाश्मन उपधानं गार्हपत्याहवनीययोर्मध्ये कर्तव्यमित्याह—तमन्तरेणेति । गार्हपत्याहवनीययोरधस्तनोपरितनलोकद्वयात्मकत्वाल्लोकद्वयस्य च मध्ये सूर्यस्य तपनात् सूर्यात्मकस्याश्मनस्तत्रोपधानमुपपन्नमित्याह—अयं वै लोक इति । गार्हपत्याहवनीययोर्मध्यभागस्यो-पधानस्थानतया विधानात् आग्नीध्रादन्यत्रापि तदुपधानं स्यात् इत्यत आह—आग्नीध्रवेलायामिति । वेलाशब्दः अवकाशमाचष्टे—गार्हपत्याहवनीययोरधस्तनोपरितनलोकात्मकयोर्मध्यवर्तित्वेनाग्नीध्रस्यान्तरिक्षत्वम् । 'व्यध्व' इत्यर्द्धमार्ग उच्यते । तत्रैतस्याश्मन उपधानं क्रियते । तस्मात् 'इतः' प्रदेशात् 'व्यध्वे' अर्द्धमार्गे 'एषः' सूर्यस्तपतीत्यर्थः ॥ १४ ॥ १५ ॥

अथ तस्याश्मन आदित्यात्मकत्वादादित्यस्य च प्राणाद्यात्मकत्वात् तदुपधानेनात्मनि प्राणादिधारणं सम्पाद्यत इत्याह—स एष इति । 'सः' आदित्यात्मकः 'एषः' अश्मा 'प्राणः' प्राणात्मकादित्यरूपत्वात् । आदित्यस्य च प्राणत्वं तदुदये प्राणिनश्चेष्टन्ते । तदस्तमये तु न चेष्टन्त इति । अत एव श्रूयते—" योऽसौ तपन्नुदेति

( १७ ) स उपदधाति । विमान ऽएष दिवो मध्यऽआस्तऽइति विमानो ह्येष दिवो मध्यऽआस्तऽआपप्रिवान्रोदसी ऽअन्तरिक्षमित्युद्यन्वा ऽएषऽ इमाँल्लोकानापूरयति स विश्वाचीरभिचष्टे घृताचीरिति स्रुचश्चैतद्वेदीश्चा-हान्तरा पूर्वमपरं च केतुमित्यन्तरेमं च लोकममुं चेत्येतदथो यच्चेदमे-तर्हि चीयते यच्चादः पूर्वमचीयतेति ॥ १७ ॥

( त्यु ) उक्षा समुद्रोऽअरुणः सुपर्णऽइति । ( त्यु ) उक्षा ह्येष समुद्रो-ऽरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेशेति पूर्वस्य ह्येषऽ एतं योनिं

---

स उपदधाति । " विमान एष दिवो मध्य आस्ते "–इति । विमानो ह्येष दिवो मध्य आस्ते । " आपप्रिवान्रोदसी अन्तरिक्षम् "–इति । उद्यन्वा एष इमांल्लोकानापूरयति । " स विश्वाचीरभिचष्टे घृताचीः "–इति । स्रुचश्चैतद्वेदीश्चाह । " अन्तरा पूर्वमपरञ्च केतुम् "–( वा. सं. १७।५९ ) इति । अन्तरेमं च लोकममुं चेत्येतत् । अथो यच्चेदमेतर्हि चीयते, यच्चादः पूर्वमचीयतेति ॥ १७ ॥

" उक्षा समुद्रो अरुणः सुपर्णः "–इति । उक्षा ह्येष समुद्रोऽरुणः सुपर्णः । " पूर्वस्य योनिं पितुराविवेश"–इति । पूर्वस्य ह्येष एतं योनिं पितुराविशति । "मध्ये दिवो निहितः

---

स सर्वेषां भूतानां प्राणानादायोदेति, असौ योऽस्तमेति स सर्वेषां भूतानां प्राणानादायास्तमेति"–( तै.आ. १। १४।१ ) इति । प्राणत्वादेवायूरूपत्वं प्राणिनामेव जीवनकालसम्बन्धात् । आयुर्ह्येतदिति । एषः ' अश्मा ' यतः कारणात् ' आयुः ' एव ' एतद् ' इति नपुंसकलिङ्गमायुरित्येतदपेक्षम् । तद् ' आयुः ' अन्नम् । तद्वतामेव भोक्तृत्वात् । यत् एतदन्नं तस्मात्तदुपधानेन स्वकीय आत्मनि प्राणादीन् धारितवान् सम्भवति ॥ १६॥

अथ तस्योपधाने मन्त्रद्वयं प्रदर्शयन् व्याचष्टे–स उपदधाति विमान एष इति । ' हि ' यस्मात्कारणात् ' एषः ' सूर्यो भूतग्रामस्य निर्माता द्युलोकस्य ' मध्य आस्ते ' अत उक्तम् ' विमान ' इति । उदयमानः सूर्यः पृथिव्यादीन् स्वप्रकाशेनापूरयतीति तमर्थमाहेति व्याचष्टे–आपप्रिवानिति । " प्रा पूरणे "–( धा. पा. अ. प. ५१ ) इत्यस्माद्वर्त्तमानार्थस्य लिटः क्वसुरादेशः । ' विश्वाची घृताची '–पदाभ्यां विश्वेषां हविषां घृतानां च स्थापनाद् वेदयः स्रुचश्च विवक्ष्यन्त इत्याह–स विश्वाचीरिति । पूर्वमपरमिति पृथिवी-द्युलोकावभिधीयेते । किञ्च पूर्वमित्यनेन पूर्वचितो गार्हपत्य उच्यते, अपरमित्यनेन तदानीं चीयमान आहवनीय इति व्याचष्टे–अन्तरा पूर्वमिति । भूतग्रामस्य निर्माता द्यावापृथिव्यौ अन्तरिक्षं चा समन्तात्पूरयन् एष सूर्यो द्युलोकस्य मध्ये तिष्ठति । किञ्च यः सूर्यः ' पूर्वमपरं च केतुं ' लोकम् ' अन्तरा ' द्यावापृथिव्योर्मध्ये गार्हपत्याहवनीययोर्वा मध्ये सन् विश्वाचीर्वेदीः, घृताचीः स्रुचश्च ' अभिचष्टे ' पश्यतीति प्रथमस्यार्थः ॥ १७॥

द्वितीयमन्त्रे उक्षा समुद्रः, पूर्वस्य योनिं, मध्ये दिवः इति पादत्रयार्थः प्रसिद्ध इत्याह–उक्षा समुद्रो अरुण इति । चतुर्थपादे रजःशब्देनैते लोका विवक्ष्यन्त इत्याह–विचक्रम इति । ' उक्षा ' सेचकः " आदित्याज्जायते वृष्टिः "–( म. स्मृ. ३ । ७६ ) इति तस्य वृष्टिहेतुत्वात् । अत एव

पि॒तुरावि॑शु॒ति मध्ये॑ दि॒वो नि॑हि॒तः पृश्नि॑रश्मेति॒ मध्ये॒ ह्ये॒ष दि॒वो नि॑हि॒तः पृश्नि॑रश्मा॒ विच॑क्रमे रज॑सस्पा॒त्यन्ता॑विति वि॒क्रम॑माणो॒ वाऽए॒ष ऽए॒षां लो॒काना॑मन्ता॒न्पाति ॥ १८ ॥

द्वाभ्या॒मुप॑दधाति । द्वि॒पाद्य॑जमानो॒ यज॑मानोऽग्नि॒र्याव॑ान॒ग्निर्याव॒त्य॑स्य मा॒त्रा ताव॑तै॒वैन॑मे॒तदुप॑दधाति त्रि॒ष्टुब्भ्यां॒ त्रैष्टु॑भो॒ ह्ये॒ष न साद॑यत्य॒सन्नो॒ ह्ये॒ष न सू॑ददोह॒साऽधि॑वदति प्रा॒णो वै सू॑ददो॒हाः प्रा॒णऽ ए॒ष किं प्रा॒णे प्रा॒णं द॑ध्या॒मिति॒ तं नि॒धाय॒ यथा॒ न न॒श्येत् ॥ १९ ॥

(इ) अ॒थोपा॑यन्ति । (न्ती) इन्द्रं॒ विश्वा॒ ऽअवी॑वृधन्निति॒ तस्यो॒क्तो बन्धु॑र्दे॒व॒हूर्य॒ज्ञ ऽआ च॑ वक्षत्सु॒म्नहू॑र्य॒ज्ञ ऽआऽच व॑क्षदिति दे॒व॒हूश्चै॒व य॒ज्ञः

---

पृश्निरश्मा "-इति । मध्ये ह्येष दिवो निहितः पृश्निरश्मा । "विचक्रमे रजसस्पात्यन्तौ"-(वा. सं. १७ । ६० ) इति । विक्रममाणो वा एष एषां लोकानामन्तान्पाति ॥ १८ ॥

द्वाभ्यामुपदधाति । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा-तावतैवैनमेतदुपदधाति । त्रिष्टुब्भ्याम् । त्रैष्टुभो ह्येषः । न सादयति । असन्नो ह्येषः । न सूददोहसाऽधिवदति । प्राणो वै सूददोहाः । प्राण एषः । किं प्राणे प्राणं दध्यामिति । तं निधाय यथा न नश्येत् ॥१९॥

अथोपायन्ति । "इन्द्रं विश्वा अवीवृधन्"-(वा. सं. १७ । ६१ ) इति । तस्योक्तो बन्धुः । "देवहूर्यज्ञ आ च वक्षत, सुम्नहूर्यज्ञ आ च वक्षत्"-इति । देवहूश्चैव यज्ञः सुम्न-

---

समुद्रात्मकः वर्णतोऽरुणः । पर्णशब्देन पतनमुच्यते । शोभनपतनः एवंविधः सूर्यः 'पूर्वस्य' द्युलोकस्य पितृरूपस्य 'योनिं' स्थानम् आविवेश' द्युलोकादादित्याज्जायमान इव दृश्यत इति तस्य पितृलोकोपचारः । किंच 'दिवो मध्ये' आग्नीध्रमण्डपलक्षणे 'निहितः' वर्णतः पृश्निः 'अश्मा' अश्मरूपः सूर्यः विविधं लोकान् क्रमते "छन्दसि लुङ्लङ्लिटः"-( पा. सू. ३ । ४ । ६ ) इति वर्तमाने लिट् । "विक्रममाणो वा एषः एषां लोकानामन्तान्पाति" इति श्रुतेः । रजस इत्येकवचनम् अन्ताविति द्विवचनं च अविवक्षितं, लोकानामन्तान् प्रान्तान् पाति स्वकीयेन प्रकाशेन तमो निवर्त्तयन् पदार्थांश्च दर्शयन् रक्षतीति द्वितीयस्यार्थः ॥ १८ ॥

उपधानमन्त्रयोर्द्वित्वं प्रशंसति-द्वाभ्यामिति । अथ तयोरेव च्छन्दः प्रशंसति-त्रिष्टुब्भ्यामिति । 'एषः' सूर्यः 'त्रैष्टुभः' त्रैष्टुभेऽन्तरिक्षे वर्तमानत्वात् । अन्तरिक्षस्य त्रैष्टुभत्वं तैत्तिरीयके श्रूयते-" गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षम्" (तै. सं. ५।२।१।१) इति । प्रकृतस्याश्मन इष्टकान्तरवदुपधानस्य विधानात्तद्वदेव सादनप्रसक्तौ निषेधति-न सादयतीति । तत्रोपपत्तिमाह-असन्नो ह्येष इति । 'एषः' सूर्यः 'असन्नः' क्वचिदेवावस्थितो न भवति सर्वत्र परिभ्रमणादित्यर्थः । मा भूदसन्नत्वात्तस्य सादनं सूददोहसाऽधिवदनं तु कर्तव्यमित्यत आह-न सूददोहसाऽधिवदतीति । सूददोहसाऽधिवदनमपि न कर्तव्यम्, कुत इत्यत आह-प्राणो वा इति । प्राणात्मके सूर्ये

सुम्नहूश्च युक्षदग्निर्देवो देवाँ२॥ऽआ च व्वक्षदिति युक्षच्चैवाग्निर्देवो देवाना च व्वहत्वित्येतत् ॥ २० ॥

(द्वा) व्वाजस्य मा प्रसवः । (ऽ) उद्ग्राभेणोदग्रभीत् । अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ२॥ऽ अकरिति यथैव यजुस्तथा बन्धुः ॥ २१ ॥

( रु ) उद्ग्राभं च निग्राभं च । ब्रह्म देवाऽअवीवृधन् । अधा सपत्नानिन्द्राग्नी मे व्विषूचीनान्व्यस्यतामिति यथैव यजुस्तथा बन्धुः ॥ २२ ॥

( स्त ) तद्वाऽअमुष्मादादित्यादूर्ध्वाश्चतस्रो दिशः । ( स्ता ) ताऽ एतद्देवाऽअसुराणामवृञ्जताथो ताऽ एवैतत्समारोहंस्ताऽ उऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य व्वृङ्क्तेऽथो ताऽ एवैतत्समारोहत्यथोऽएतद्वाऽ एताभिर्देवा ऽआतः संप्राप्नुवंस्तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ २३ ॥

---

हूश्च । " यक्षदग्निर्देवो देवान् आ च वक्षत "-(वा. सं. १७ । ६२) इति । यक्षच्चैवाग्निर्देवो देवान् आ च वहत्वित्येतत् ॥ २० ॥

" वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत् । अधा सपत्नानिन्द्रो मे निग्राभेणाधरान् अकः "-( वा. सं १७ । ६३ ) इति । यथैव यजुस्तथा बन्धुः ॥ २१ ॥

" उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अधा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् "-( वा. सं. १७ । ६४ ) इति । यथैव यजुस्तथा बन्धुः ॥ २२ ॥

तद्व या अमुष्मादादित्यादूर्ध्वाश्चतस्रो दिशः-ता एतद्देवा असुराणामवृञ्जत । अथो ता एवैतत्समारोहन् । ता उ एवैतद्-यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्ते । अथो ता एवैतत्समारोहति । अथो एतद्वा एताभिर्देवा आतः सम्प्राप्नुवन् । तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ २३ ॥

---

प्राणात्मकस्य सूददोहसः पिष्टपेषणवन्नैष्फल्यादित्यर्थः । तस्योपहितस्याश्मनो रक्षां विधायाहवनीयदेशं प्रति गच्छेयुरिति विधत्ते-तं निधायेति[1] । 'यथा' अश्मा 'न' नश्येत्तथा निधायाग्नीध्रसमीपदेशमतिक्रामेयुरित्यर्थः । तस्योक्तो बन्धुरिति । " इन्द्रं विश्वा अवीवृधन्नितीन्द्रं हि सर्वाणि भूतानि वर्द्धयन्ति " इत्यादिनाऽस्य ब्राह्मणं (श. प. ८।७।३।७) अष्टमकाण्डेऽभिहितम् । ' देवहूः ' इत्यादिकस्यायमर्थः । यतो यज्ञो देवानाह्वय-तीति देवहूः । सुम्नमिति सुखनामधेयम् ( निघ. ३।६।१६ ) सुम्नमाह्वयतीति 'सुम्नहूः' तत्साधनत्वात् । अतो देवहूर्यज्ञो देवान् आ च वक्षत् आवहतु सुम्नहूर्यज्ञः ' आवहतु ' इत्युच्यते-यक्षच्चैवाग्निरिति । अग्निर्देवो देवान् यक्षत् यजतु आवहतु इत्येतदुक्तं भवतीति । यक्षत् वक्षत् इति यजेर्वहतेश्च लेटि रूपम् ॥१९॥२०॥

वाजस्येति उद्ग्राभं चेति मन्त्रद्वयं निगदव्याख्यातम् इत्याह-वाजस्य मा प्रसव इति । पञ्च दिशो दैवीरि-त्यादिमंत्रैर्गार्हपत्यादाग्नीध्रपर्यन्तं गमने भ्रातृव्यसम्बन्धिनीः सूर्यादर्वाचीः पञ्च दिशः ततोपगमय्य स्वयं प्राप्तवान्

---

१-निधायैनमतिक्रामतीन्द्रं व्विश्वा इति । का. श्रौ. सू. १८ । ३९ ।

( त्यु ) अथाग्निमारोहन्ति । क्रमध्वमग्निना नाकमिति स्वर्गो वै लोको नाकः क्रमध्वमनेनाग्निनैतᳬं स्वर्गं लोकमित्येतदुख्यᳬं हस्तेषु बिभ्रतऽ इत्युख्यᳬं ह्येतऽएतᳬं हस्तेषु बिभ्रति दिवस्पृष्ठᳬं स्वर्गत्वा मिश्रा देवेभिराध्वमिति दिवस्पृष्ठᳬं स्वर्गं लोकं गत्वा मिश्रा देवेभिराध्वमित्येतत् ॥ २४ ॥

( त्या ) प्राचीमनु प्रदिशं प्रेहि विद्वानिति । प्राची वै दिगग्नेः स्वामनु प्रदिशं प्रेहि विद्वानित्येतदग्नेरग्रे पुरोऽअग्निर्भवेहेत्यस्य त्वमग्नेरग्रे पुरोऽग्निर्भवेहेत्येतद्विश्वाऽआशा दीद्यानो विभाहीति सर्व्वाऽआशा दीप्यमानो विभाहीत्येतदूर्जं नो धेहि द्विपदे चतुष्पदऽइत्याशिषमाशास्ते ॥ २५ ॥

---

अथाग्निमारोहन्ति । " क्रमध्वमग्निना नाकम् "–इति । स्वर्गो वै लोको नाकः । क्रमध्वमनेनाग्निनैतं स्वर्गं लोकमित्येतत् । " उख्यं हस्तेषु बिभ्रतः "–इति । उख्यं ह्येत एतं हस्तेषु बिभ्रति । " दिवस्पृष्ठं स्वर्गत्वा मिश्रा देवेभिराध्वम् "–( वा. सं. १७ । ६५ ) इति । दिवस्पृष्ठं स्वर्गं लोकं गत्वा मिश्रा देवेभिराध्वमित्येतत् ॥ २४ ॥

" प्राचीमनु प्रदिशं प्रेहि विद्वान् "–इति । प्राची वै दिगग्नेः । स्वामनु प्रदिशं प्रेहि विद्वानित्येतत् । " अग्नेरग्रे पुरो अग्निर्भवेह "–इति । अस्य त्वमग्नेरग्रे पुरोऽग्निर्भवेहेत्येतत् ।

---

भवति इत्युक्तम् । अथेन्द्रं विश्वा अवीवृधन्नित्यादिमन्त्रैराग्नीध्रादाहवनीयपर्यन्तं गमने सूर्यादूर्ध्वा भ्रातृव्यसम्बन्धिनीश्चतस्रो दिशः तथैव प्राप्नोतीत्याह–तद्या अमुष्मादित्यादिना । ' आतः ' इति द्युलोकपर्यन्तमित्यर्थः ॥ २१–२३ ॥

चित्याग्निसमीपगमनानन्तरं क्रमध्वमित्यादिभिः पञ्चभिर्मन्त्रैस्तस्यारोहणं विधत्ते[1]–अथाग्निमिति । चित्याग्नेरुपरि धार्यमाणे उख्याग्नौ होमविधानेन तत्र तद्धारणार्थे कस्यचिदपेक्षणादग्निनिधाने यजमानस्यापि संनिधानाचदपेक्षमारोहन्तीति बहुवचनम् । स्वर्गो वै लोको नाक इत्यादिनाऽऽरोहणमन्त्रान्व्याचष्टे । क्रमध्वमिति तेषामेव परोऽक्षेणाभिधानम् । ' अनेनाग्निना ' चित्याग्निना ' एतम् ' इत्यभिनयेन निर्देशः । एतं स्वर्गं ' क्रमध्वम् ' अप्रतिबन्धेन गच्छत इत्येतदुक्तं भवतीत्यर्थः । क्रमध्वमिति वृत्त्यर्थे तङ् । एते क्रममाणा अध्वर्युप्रभृतयः एतमुख्याग्निं हस्तेषु चितिषु बिभ्रति यतः अतः स एवार्थो मन्त्रेण प्रतिपाद्यते । ' दिवस्पृष्ठं स्वर्गं लोकम् ' इत्यनेन मन्त्रे ' स्वर्गत्वा ' इत्यत्र ' स्वः ' इत्यस्यार्थ उक्तः । अत्र दिवःशब्देन द्युलोक उच्यते । द्युलोकस्य पृष्ठम् उपरितनं स्वर्गं सुखातिशयहेतुं तस्यैव स्थानविशेषं गत्वा देवैर्मिश्राः सन्तस्तिष्ठतेत्यर्थः । 'दिवस्पृष्ठम्' इति "षष्ठ्याः पतिपुत्रपृष्ठ०" ( पा.सू. ८।३।५३ ) इत्यादिना विसर्जनीयस्य सकारः ॥ २४ ॥

प्राची वै दिगग्नेरिति । ' प्राची ' दिक् ' अग्नेः ' सम्बन्धिनी खलु । अत एव तैत्तिरीयके–" प्राची

---

१–क्रमध्वमग्निनेति चित्यमारोहंति । का० श्रौ० सू० १८ । ४० ।

पृथिव्याऽ अहम् । (मु) दुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहमिति गार्ह- पत्याद्धचाग्नीध्रीयमागुच्छन्त्याग्नीध्रीयादाहवनीयं दिवो नाकस्य पृष्ठा- त्स्वर्ज्योतिरगामहमिति दिवो नाकस्य पृष्ठात्स्वर्गं लोकमगामह- मित्येतत् ॥ २६ ॥

(त्स्व) स्वर्यन्तो नापेक्षन्ते । (न्तऽ) आ द्याᳬं रोहन्ति रोदसीऽइति न हैव तेऽपेक्षन्ते ये स्वर्गं लोकं यन्ति यज्ञं ये विश्वतोधारᳬं सुविद्वाᳬंसो वितेनिरऽइत्येषऽ एव यज्ञो विश्वतोधारऽएतऽउऽएव सुविद्वाᳬंसो यऽएतं वितन्वते ॥ २७ ॥

---

" विश्वा आशा दीद्यानो विभाहि "–इति । सर्वा आशा दीप्यमानो विभाहीत्येतत् । " ऊर्जं नो धेहि द्विपदे चतुष्पदे "–( वा. सं. १७ । ६६ ) इति । आशिषमाशास्ते ॥ २९ ॥

"पृथिव्या अहमुदन्तरिक्षमारुहम्, अन्तरिक्षाद्दिवमारुहम्"–इति । गार्हपत्याद्धचाग्नीध्रीयमागच्छन्ति, आग्नीध्रीयादाहवनीयम् । " दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम् "–( वा. सं. १७ । ६७ ) इति । दिवो नाकस्य पृष्ठात्स्वर्गं लोकमगामहमित्येतत् ॥ २६ ॥

" स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी "–इति । न हैव तेऽपेक्षन्ते–ये स्वर्गं लोकं यन्ति । " यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे "–( वा. सं. १७ । ६८ ) इति । एष एव यज्ञो विश्वतोधारः । एत उ एव सुविद्वांसो–य एतं वितन्वते ॥ २७ ॥

---

दिक् अग्निर्देवता "–इति । अस्य त्वामिति । ' अस्य ' इष्टकास्थलरूपस्य ' अग्नेः ' ' त्वं ' पुरो वर्त्तमानः ' अग्निर्भव ' हे यज्ञ ! इत्युक्तं भवति । दीप्यमान इति ' दीद्यानः ' इत्यस्यार्थकथनम् ॥ २९ ॥

पृथिव्या अहमिति । गार्हपत्याग्नीध्राहवनीयानां पृथिव्यादिलोकत्रयात्मकत्वात् क्रमेण तत्र गमनात् पृथिव्यादिलोकत्रयं क्रमेणारूढवानस्मीत्यर्थः । आरुहमिति । " कृ मृ दृ–रुहिभ्यश्छन्दसि " ( पा. सू. ३ । १ । ५९ ) इति च्लेरङादेशः । दिवो नाकस्येति । ' नाकस्य ' सुखहेतुभूतस्य द्युलोकस्य ' पृष्ठात् ज्योतिः ' विशिष्टं प्रकाशमानं ' स्वर्गं लोकमगामहमित्येतद् ' उक्तं भवति । अत्रापि पूर्ववत् सुखातिशये हेतुभूतो द्युलोको देशविशेषः स्वर्गशब्देनोच्यते ॥ २६ ॥

न हैवेति । ' ये स्वर्गं लोकं यन्ति, ' ' ते ' फलान्तरं ' नापेक्षन्ते ' खलु, अत उक्तम्–स्वर्यन्त इति । एष एवेति । सर्वेण प्रकारेण जगद्धारयतीति ' एष एव यज्ञो विश्वतोधारः ' । ' ये ' नराः ' एतं ' यज्ञं ' वितन्वते ', ' एत एव ' ' सुविद्वांसः ' खलु । विदुषामेव यज्ञनिष्पादकत्वादित्यर्थः ॥ २७ ॥

(तेऽग्ने) अग्ने प्रेहि प्रथमो देवयतामिति । (ती) इममेतदग्निमाह त्वमेषां प्रेहि प्रथमो देवयतामिति चक्षुर्देवानामुत मर्त्यानामित्युभयेषाᳬं हैतद्देवमनुष्याणां चक्षुरियक्षमाणा भृगुभिः सजोषाऽइति यजमानो भृगुभिः सजोषाऽइत्येतत्स्वर्यन्तु यजमानाः स्वस्तीति स्वर्गं लोकं यन्तु यजमानाः स्वस्तीत्येतत् ॥ २८ ॥

(त्त) तद्याऽअमुष्मिँल्लोके पञ्च दिशः । (स्ता) ताऽ एतद्देवाऽ असुराणामवृञ्जताथो ताऽ एवैतत्समारोहंस्ताऽ उऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ताऽ एवैतत्समारोहत्यथोऽएतद्वाऽएताभिर्देवाऽ आतः सम्प्राप्नुवंस्तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ २९ ॥

(त्यु) अथैनमभिजुहोति । (त्ये) एतद्वाऽएनं देवाऽ ईयिवाᳬंसमुपरिष्टादन्नेनाप्रीणन्नेतयाऽऽहुत्या तथैवैनमयमेतदीयिवाᳬंसमुपरिष्टादन्नेन प्रीणात्येतयाऽऽहुत्या कृष्णायै शुक्लवत्सायै पयसा रात्रिर्वै कृष्णा शुक्लवत्सा

---

"अग्ने प्रेहि प्रथमो देवयताम्"–इति । इममेतदग्निमाह–त्वमेषां प्रेहि प्रथमो देवयतामिति । "चक्षुर्देवानामुत मर्त्यानाम्"–इति । उभयेषां हैतद्देवमनुष्याणां चक्षुः । "इयक्षमाणा भृगुभिः सजोषाः"–इति । यजमानो भृगुभिः सजोषा इत्येतत् । "स्वर्यन्तु यजमानाः स्वस्ति"–( वा. सं. १७ । ६९ ) इति । स्वर्गं लोकं यन्तु यजमानाः स्वस्तीत्येतत् ॥ २८ ॥

तद् या अमुष्मिँल्लोके पञ्च दिशः–ता एतद्देवा असुराणामवृञ्जत । अथो ता एवैतत्समारोहन् । ता उ एवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्ते । अथो ता एवैतत्समारोहति । अथो एतद्वा एताभिर्देवा आतः सम्प्राप्नुवन् । तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ २९ ॥

अथैनमभिजुहोति । एतद्वा एनं देवा ईयिवांसमुपरिष्टादन्नेनाप्रीणन्नेतयाऽऽहुत्या । तथैवैनमयमेतदीयिवांसमुपरिष्टादन्नेन प्रीणात्येतयाऽऽहुत्या । कृष्णायै शुक्लवत्सायै पयसा । रात्रिर्वै कृष्णा शुक्ल-

---

इममेतदिति । 'त्वमेषां' देवान्यष्टुमिच्छतां 'प्रथमः प्रेहि' इति इममुख्याग्निमाह । अग्नेश्चक्षुष्ट्वं च बहूपकारकत्वात् । 'इयक्षमाणाः' इति व्याख्यातम् 'यजमानो भृगुभिः' इति । स्पष्टमन्यत् ॥ २८ ॥

उक्तमन्त्रसाध्येन चित्याग्नेरारोहणेन स्वर्गे लोके विद्यमाना भ्रातृव्यसम्बन्धिनीः पञ्च दिशः पूर्वतः प्राप्तवान् भवतीत्याह–तद्या अमुष्मिँल्लोक इति । अत्रापि 'आतः' इति द्युलोकादुपरितनस्वर्गावधित्वेनोच्यते ॥२९॥

चित्याग्निसमारोहणानन्तरमस्मिन्नुख्याग्नौ होमं विधत्ते–अथेति । 'अभिजुहोति' अभिहोमानामीप्सिततमत्वात् 'एनम्' इति कर्मणि द्वितीया । विहिताहुतिश्चित्यं प्राप्तस्याग्नेरुपरिष्टादन्नं सम्पाद्यत इत्याह–एतद्वा इति ।

---

१–स्वयमातृण्णामध्यग्निं धारयन् शुक्लवत्सापयसाऽभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिंचन्नक्तोषासेति । का० श्रौ० सू० । १८ । ४१ ।

तस्या ऽअसावादित्यो व्वत्सः स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणात्युपरि धार्यमाण ऽउपरि हि स यमेतत्प्रीणाति दोहनेन दोहनेन हि पयः प्रदीयते ॥ ३० ॥

यद्वेवैनमभिजुहोति । शिर ऽएतद्यज्ञस्य यदग्निः प्राणः पयः शीर्षंस्तत्प्राणं दधाति यथा स्वयमातृण्णामभिप्रक्षरेदेवमभिजुहुयात्प्राणः स्वयमातृण्णा रस ऽएष शिरश्च तत्प्राणं च रसेन संतनोति संदधाति नक्तोषासा समनसा व्विरूपेऽइति तस्योक्तो बन्धुः ॥ ३१ ॥

( ३ ) अग्ने सहस्राक्षेति । हिरण्यशकलैर्व्वाऽएष सहस्राक्षः शतमूर्धन्निति यददः शतशीर्षा रुद्रोऽसृज्यत शतं ते प्राणाः सहस्रं व्याना ऽइति शतᳪं

---

वत्सा । तस्या असावादित्यो वत्सः । स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति । उपरि धार्यमाणे । उपरि हि सः—यमेतत्प्रीणाति । दोहनेन । दोहनेन हि पयः प्रदीयते ॥ ३० ॥

यद्वेवैनमभिजुहोति । शिर एतद्यज्ञस्य—यदग्निः । प्राणः पयः । शीर्षंस्तत्प्राणं दधाति । यथा स्वयमातृण्णामाभिप्रक्षरेद् एवमभिजुहुयात् । प्राणः स्वयमातृण्णा । रस एषः । शिरश्च तत्प्राणं च रसेन संतनोति, संदधाति । " नक्तोषासा समनसा विरूपे "—( वा. सं. १७ । ७० ) इति । तस्योक्तो बन्धुः ॥ ३१ ॥

" अग्ने सहस्राक्ष "—इति । हिरण्यशकलैर्वा एष सहस्राक्षः । "शतमूर्द्धन्"—इति । यददः

---

विहिते होमे द्रव्यं विधत्ते—कृष्णायै शुक्लवत्सायै पयसेति । उक्तलक्षणाया गोः पयस उपादाने कारणमाह—रात्रिर्वा इति । रात्रिः खलु कृष्णा शुक्लवत्सा । अस्या रात्रेः असौ आदित्यो वत्सः यथा वत्सो गोसमीपे वर्तते तद्वदस्य रात्रिसमीपे वर्तमानत्वात् । अयमेवार्थस्तैत्तिरीयके श्रूयते—"अग्निश्चादित्यश्च रात्रेर्वत्सः"(तै.आ.१।१०।९) इति । एवं चास्याग्नेरादित्यात्मकत्वात्तथाविधाया गोः पयसा होमे स्वकीयभागेन तदेव विव्रियते—स्वेन रसेनेति । तेन प्रीणितवान् भवति । प्रीणयितव्यस्यादित्यात्मकस्याग्नेरुपरि एव वर्तमानत्वेन उपरि धार्यमाणे एव उख्याग्नौ जुहुयादित्याह—उपरीति । प्रकृतहोमे साधारणं जौहवं प्राप्नोतीति तदपवादत्वेन दोहनं विधत्ते—दोहनेनेति । दोहनेन हि पयः प्रदीयते इति । दोहनानन्तरं पात्रान्तरे दोहनेन खलु पयः प्रदीयते इत्यर्थः ॥ ३० ॥

प्रकृतमेवाभिहोमं प्रकारान्तरेण प्रशंसति—यद्वेवेति । अग्नेः शिरोवत्प्राधान्यात् स हि शिरः । पयसः प्राणत्वं तत्पुष्टिहेतुत्वात् । यथा स्वयमातृण्णामिति । होमाभिघारः स्वयमातृण्णायामुपरि किञ्चित्किञ्चिद्यथा 'प्रक्षरेत्' तथा होमं कुर्यात् । एवं च स्वयमातृण्णायाः प्राणत्वात्, अग्नेस्तु शिरस्त्वात् 'प्राणं च शिरश्च' इत्युभे अपि पयोलक्षणेन 'रसेन' 'संतनोति' । तदेव विवृणोति 'सन्दधाति' परस्परसम्बद्धं करोतीत्यर्थः । प्रकृतहोमे मन्त्रौ दर्शयन् प्रथममन्त्रस्य ब्राह्मणं षष्ठकाण्डे ( श. प. ६ । ७ । २ । ३ ) प्रागेवाभिहितमित्याह—नक्तोषासेति ॥ ३१ ॥

द्वितीयं मन्त्रं व्याचष्टे—अग्ने सहस्राक्षेति । हिरण्यशकलैर्वा इति । 'एषः' अग्निः प्रोक्षणे विनियुक्तैः

हैव तस्य प्राणाः सहस्रं व्याना यः शतशीर्षा त्वꣳ साहस्रस्य रायऽईशिषऽइति त्वꣳ सर्वस्यै रय्याऽईशिषऽइत्येतत्तस्मै ते विधेम वाजाय स्वाहेत्येष वै वाजस्तमेतत्प्रीणाति ॥ ३२ ॥

द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदभिजुहोति ॥ ३३ ॥

( त्यु ) अथैनं निदधाति । सुपर्णोऽसि गरुत्मानित्येतद्वाऽएनमदो विकृत्या सुपर्णं गरुत्मन्तं विकरोति तꣳ सुपर्णं गरुत्मन्तं चिनोति तꣳ सुपर्णं गरुत्मन्तं कृत्वाऽन्ततो निदधाति पृष्ठे पृथिव्याः सीद भासाऽन्तरिक्ष-

---

शतशीर्षा रुद्रोऽसृज्यत । "शतं ते प्राणाः सहस्रं व्यानाः"-इति । शतं हैव तस्य प्राणाः, सहस्रं व्यानाः-यः शतशीर्षा । "त्वं साहस्रस्य राय ईशिषे"-इति । त्वं सर्वस्यै रय्या ईशिष इत्येतत् । "तस्मै ते विधेम वाजाय स्वाहा"-( वा० सं० १७।७१ ) इति । एष वै वाजः । तमेतत्प्रीणाति ॥ ३२ ॥

द्वाभ्यामभिजुहोति । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा-तावतैवैनमेतदभिजुहोति ॥ ३३ ॥

अथैनं निदधाति । "सुपर्णोऽसि गरुत्मान्"-इति । एतद्वा एनमदो विकृत्या सुपर्णं

---

सहस्रसंख्याकैः 'हिरण्यशकलैः सहस्राक्षः' खलु । अतश्च मन्त्रे तथा सम्बोध्यत इत्यर्थः । प्रकाशकत्वसाधारण्येन हिरण्यशकलानामक्षित्वोपचारः । यददः शतशीर्षेति । प्रजापतिरोदनेन उदितेष्वश्रुषु अन्तर्वर्त्तमाने मन्यौ प्रतिष्ठितेषु स एव शतशीर्षा रुद्रः समभूत् इति (श. प.९।१।१।६) काण्डस्यादावुक्तम् । अतोऽत्रादः-शब्देन स कालः परामृश्यते । 'अदः' अस्मिन्काले 'शतशीर्षा रुद्रोऽसृज्यत' इति यत् अत उक्तं मन्त्रे 'शतमूर्द्धन्निति' इत्यर्थः । 'यः शतशीर्षा' भवति तस्य शतसंख्याकाः 'प्राणाः' सहस्रसंख्याका 'व्यानाः' च भवन्ति । सहस्रमित्यपरिमितनामधेयम् ( निघ. ३ । १ । १० ) तस्मादुच्यते-शतं त इति । त्वं सर्वस्यै इति । सहस्रमित्यपरिमितसंख्यावचनात् 'साहस्रस्य' इत्यनेनापरिमितसंख्यावत इत्यस्यार्थस्याभिधानात् 'सवस्या' इत्येतदुक्तं भवति । "अधीगर्थदयेशां कर्मणि" ( पा. सू. २।३।५२ ) इति षष्ठीप्राप्तौ "षष्ठ्यर्थे चतुर्थी वाच्या" ( पा. सू. २।३।६२ वा. १ ) सर्वस्यै, रय्या इति चतुर्थी । एष वै वाज इति । 'वाज' शब्दोऽन्नवाची तद्धेतुत्वाद् 'एषः' अग्निर्वाजः खलु । अतः 'तस्मै ते विधेम वाजाय स्वाहा' इत्यनेन 'तम्' अग्निं 'प्रीणाति'। हे सहस्राक्ष शतमूर्द्धन् अग्ने ! ते शतसंख्याकाः प्राणाः सहस्रसंख्याका व्यानाश्च भवन्ति । त्वं सर्वस्य धनस्य ईशिषे ईश्वरो भवसि । तस्मै 'वाजाय' अन्नहेतुत्वेन तदात्मकाय ते वयं 'विधेम' परिचरेम, इदं हविः ते 'स्वाहा' सुहुतमस्त्विति मन्त्रार्थः ॥३२॥

मन्त्रगतेन द्वित्वेन सकलस्याग्नेरभिहोमः सम्पद्यत इति प्रशंसति- द्वाभ्यामिति ॥ ३३ ॥

अभिहोमानन्तरमुख्याग्नेश्चितीनामुपरि निधानं विधत्ते-अथैनमि ति । निधानमन्त्रे सुपर्णोऽसि गरुत्मानि-

---

१-तस्यामग्निं निदधाति सुपर्णोऽसीति व्वषट्कारेण । का० श्रौ० सू० । १८ । ४३ ।

मापृण ज्योतिषा दिवमुत्तभान तेजसा दिशऽ उद्दृᳪंहेत्येवᳪं ह्येषऽ एतत्सर्वं करोति ॥ ३४ ॥

(त्या) आजुह्वानः सुप्रतीकः पुरस्तादिति । (त्या) आजुह्वानो नः सुप्रतीकः पुरस्तादित्येतदग्ने स्वं योनिमासीद साधुयेत्येष वाऽअस्य स्वो योनिस्तᳪं साध्वासीदेत्येतदस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्निति द्यौर्वाऽ-उत्तरᳪं सधस्थं विश्वे देवा यजमानश्च सीदतेति तद्विश्वैर्देवैः सह यज-मानᳪं सादयति द्वाभ्यां निदधाति तस्योक्तो बन्धुर्वषट्कारेण तस्योपरि बन्धुः ॥ ३५ ॥

---

गरुत्मन्तं विकरोति । तं सुपर्णं गरुत्मन्तं चिनोति । तं सुपर्णं गरुत्मन्तं कृत्वाऽन्ततो निदधाति । " पृष्ठे पृथिव्याः सीद । भासाऽन्तरिक्षमापृण । ज्योतिषा दिवमुत्तभान । तेजसा । दिश उद्दृंह "–( वा० सं० १७ । ७२ ) इति । एवं ह्येष एतत्सर्वं करोति ॥ ३४ ॥

" आजुह्वानः सुप्रतीकः पुरस्तात "–इति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येतत् । "अग्ने स्वं योनिमासीद साधुया"–इति । एष वा अस्य स्वो योनिः । तं साध्वासीदेत्येतत् । " अस्मिन्त्सधस्थे अध्युत्तरस्मिन् "–इति । द्यौर्वा उत्तरं सधस्थम् । विश्वे देवा यजमानश्च सीदत "–( वा. सं. १७ । ७३ ) इति । तद् विश्वैर्देवैः सह यजमानं सादयति । द्वाभ्यां निद-धाति । तस्योक्तो बन्धुः । वषट्कारेण । तस्योपरि बन्धुः ॥ ३५ ॥

---

त्यस्योपयोगमाह–एतद्वा इत्यादिना । लोके हि योनौ सिक्तं प्रजननसमर्थं रेतो विक्रियते अवयवविभागवत् क्रियते, अतोऽत्रापि योनिरूपायामुखायामाहितस्याग्नेरितरस्यान्नस्यापि विकृत्या भवितव्यमिति पूर्वं ' विकृत्या ' विकृतिसाधनभूतेन मन्त्रेण सुपर्णोऽसि गरुत्मानित्यादिकेन सुपर्णं गरुत्मन्तं कृत्वा चितवान् । तथा चयन-कालेऽपि सुपर्णं गरुत्मन्तमेव कृत्वा चितवान् । संप्रति ' सुपर्णोऽसि गरुत्मान् ' इत्यादिकेन सुपर्णं गरुत्मन्तं कृत्वा निहितवान् भवति । चीयमानस्याग्नेः पक्ष्याकारेण चयनात् सुपर्णोऽसि गरुत्मान् इत्युक्तम् । ' गरुत्मान् ' प्रशस्तपक्षवान् अत एव ' सुपर्णः ' पर्णशब्देन पतनमुच्यते शोभनपतनविशिष्ट इत्यर्थः । एवं ह्येष इति । ' एषः ' अग्निः, ' एवम् ' उक्तप्रकारम् ' एतत्सर्वं करोति ' यतः, अतः उक्तं मन्त्रे पृष्ठे पृथिव्याः सीदेत्यर्थः ॥ ३४ ॥

द्वितीयं मन्त्रं व्याचष्टे–आजुह्वान इति । 'सुप्रतीकः' शोभनावयवः । तस्त्वमितरान् प्रति न, अपि तु अस्मा-न्प्रतीति व्याचष्टे–आजुह्वानो नः सुप्रतीक इति । 'अस्य' उख्याग्नेः 'एषः' चित्याग्निः। 'स्वो योनिः' स्वसम्बन्धि स्थानम् अतोऽग्ने स्वं योनिमित्यादिना चित्याग्निं साध्वधितिष्ठेत्येतदुक्तं भवतीति व्याचष्टे–अग्ने स्वमिति । अस्मिन् इति । पृथिव्यन्तरिक्षाभ्यामुपरि वर्त्तमानत्वेन द्युलोकात्मकत्वात् 'अस्मिन्' चित्याग्निलक्षणे द्युलोके 'अध्यासीद'

(३) अथास्मिन्त्समिध ऽआदधाति । ( त्ये ) एतद्वाऽएनं देवाऽ ईयिवाᳪंसमुपरिष्टादन्नेनाप्रीणन्त्समिद्भिश्चाहुतिभिश्च तथैवैनमयमेतदीयिवाᳪंसमुपरिष्टादन्नेन प्रीणाति समिद्भिश्चाहुतिभिश्च ॥ ३६ ॥

स वै शमीमयीं प्रथमामादधाति । ( त्ये ) एतद्वाऽएषऽ एतस्यामाहुत्याᳪं हुतायां प्रादीप्यतोदज्वलत्तस्माद्देवा ऽअबिभयुर्यद्वै नोऽयं न हिᳪंस्यादिति तऽएताᳪं शमीमपश्यंस्तयैनमशमयंस्तद्यदेतᳪं शम्याऽशमयंस्तस्माच्छमी तथैवैनमयमेतच्छम्या शमयति शान्त्याऽएव न जग्ध्यै ॥ ३७ ॥

---

अथास्मिन्समिध आदधाति । एतद्वा एनं देवा ईयिवांसमुपरिष्टादन्नेनाप्रीणन् । समिद्भिश्चाहुतिभिश्च । तथैवैनमयमेतदीयिवांसमुपरिष्टादन्नेन प्रीणाति । समिद्भिश्चाहुतिभिश्च ॥ ३६ ॥

स वै शमीमयीं प्रथमामादधाति । एतद्वा एष एतस्यामाहुत्यां हुतायां प्रादीप्यतोदज्वलत् । तस्माद्देवा अबिभयुः–'यद्वै नोऽयं न हिंस्यात्' इति । त एतां शमीमपश्यन् । तयैनमशमयन् । तद्यदेतं शम्याऽशमयन् । तस्माच्छमी । तथैवैनमयमेतच्छम्या शमयति । शान्त्या एव, न जग्ध्यै ॥ ३७ ॥

---

इत्यर्थः । 'विश्वे देवाः' इत्यनेन विश्वैर्देवैः सह स्वं यजमानमत्रासादितवान् भवति । हे अग्ने ! त्वं 'गरुत्मान्' अत एव शोभनपतनोऽसि तादृशस्त्वं पृथिव्याः पृष्ठे उपरि सीद, स्वीयया भासा अन्तरिक्षमापूरय, ज्योतिषा दिवं दृढां कुरु, तेजसा दिशोऽपि दृढीकुर्विति प्रथमस्यार्थः । भाः ज्योतिस्तेज इति प्रकाशविशेषः । हे अग्ने ! त्वं पूर्वस्यां दिशि आहूयमानः अस्माकं शोभनावयवो भूयाः । अतः स्वं योनिं चित्याग्निं 'साधुया' क्रियया अधितिष्ठ । 'साधुया' इति तृतीयैकवचनस्य "सुपां सुलुक्"–( पा. सू. ७ । १ । ३९ ) इत्यादिना यादेशः । अस्मिन् चित्याग्निरूप उत्तरस्मिन् सधःस्थे द्युलोके अध्यासीद । हे विश्वे देवाः ! यूयं यजमानश्च अत्र सीदत यूयं सम्प्रदानत्वेन सीदत यजमानोऽधिकारित्वेन सीदत्विति द्वितीयऋगर्थः स्पष्टार्थः ॥ ३५ ॥

उत्तरवाक्यद्वये निधानानन्तरमस्मिन्नग्नौ समिधामाधानं विधाय ताः समिधश्चित्याग्निं प्राप्तस्याग्नेरुपरितनान्नरूपेण स्तौति–अथास्मिन्निति ॥ ३६ ॥

तत्र शमीमयीं समिधं प्रथमामादध्यादित्याह–स वा इति । शमीमय्याः प्रथममाधाने हेतुमाह–एतद्वा इति । एतस्यामाहुत्यामित्यनेन 'अथैनमभिजुहोति' इति विहिताऽऽहुतिः परामृश्यते । एतस्यामाहुत्यां हुतायामग्निः प्रदीप्तः सन्नुदज्वलत् । पश्चात् अग्निं दृष्ट्वा येनोपायेन 'नोऽयं न हिंस्यादिति' देवास्तस्माद् भीताः । पश्चादहिंसोपायत्वेन ते एतां शमीमयीं समिधं अपश्यन् दृष्ट्वा च तया एनमशमयन् । यत्त एतमनयाऽशमयन् । तस्मादसौ शमीनामधेया अभूत् । अतः प्रथमं शमीमय्याः समिध आधानेन तथैवायमपि यजमानः शान्त्यै एनं शमयति, न जग्ध्यै, जग्धिर्भक्षणं भक्षणाभावाय अहिंसायै इत्यर्थः ॥ ३७ ॥



 

ताꣳ सवितुर्व्वरेण्यस्य । चित्रामाहं व्वृणे सुमतिं व्विश्वजन्याम् । यामस्य कण्वोऽअदुहत्प्रपीनाꣳ सहस्रधारां पयसा महीं गामिति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्व्वान्कामान्दुदुहे तथैवैतद्यजमानाय सहस्रधारा सर्व्वान्कामान्दुहे ॥ ३८ ॥

( हेऽथ ) अथ व्वैकङ्कतीमादधाति । तस्याऽउक्तो बन्धुर्व्विधेम ते परमे जन्मन्नग्नऽइति द्यौर्व्वाऽअस्य परमं जन्म व्विधेम स्तोमैरवरे सधस्थऽइत्यन्तरिक्षं वाऽअवरꣳ सधस्थं यस्माद्योनेरुदारिथा यजे तमित्येष वाऽअस्य स्वो योनिस्तं यजऽइत्येतत्प्र त्वे हवीꣳषि जुहुरे समिद्धऽइति यदा वाऽएष समिध्यतेऽथैतस्मिन्हवीꣳषि प्रजुह्वति ॥ ३९ ॥

---

"तां सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो अदुहत्प्रपीनां सहस्रधारां पयसा महीं गाम्"–( वा. सं. १७ । ७४ ) इति । कण्वो हैनां ददर्श । सा हास्मै सहस्रधारा सर्वान्कामान्दुदुहे । तथैवैतद्यजमानाय सहस्रधारा सर्वान्कामान्दुहे ॥ ३८ ॥

अथ वैकंकतीमादधाति । तस्या उक्तो बन्धुः। "विधेम ते परमे जन्मन्नग्ने"–इति । द्यौर्वा अस्य परमं जन्म । "विधेम स्तोमैरवरे सधस्थे"–इति । अन्तरिक्षं वा अवरं सधस्थम् । "यस्माद्योनेरुदारिथा यजे तम्"–इति । एष वा अस्य स्वो योनिः, तं यज इत्येतत् । "प्र त्वे हवींषि जुहुरे समिद्धे"–( वा.सं.१७।७९ ) इति । यदा वाऽएष समिध्यते–अथैतस्मिन्हवींषि प्रजुह्वति ॥ ३९ ॥

---

अथास्याः शमीसमिध आधाने मन्त्रं दर्शयति–तां सवितुरिति[1] । कण्वो हैनामित्यस्यायमर्थः । 'कण्वो' महर्षिः 'एनां' शमीरूपां गां 'ददर्श' खलु । अतश्च सा सहस्रधारा भूत्वा अस्मै कण्वाय सर्वान् कामान् दुदुहे । तस्मादाहिता शमी तथैव यजमानाय सर्वान् कामान् दुग्धे । दुह इति "लोपस्त आत्मनेपदेषु" (पा.सू. ६।४।१०७) इति तकारलोपः। अस्य अग्नेरुत्पादकत्वेन सम्बन्धेन । अत एव श्रुतिः–"शमीगर्भादग्निं मन्थति" ( तै. ब्रा. १।९।१ ) इति । 'प्रपीनां' प्रकर्षेण पीवरीं 'सहस्रधारां' 'पयसा' 'महीं' महतीं टिलोपश्छान्दसः । शमीरूपां या गां कण्वमहर्षिः 'अदुहत्' । व्यत्ययेन शः । वरणीयस्य 'सवितुः' अभिमतां चित्रां चयनीयां 'सुमतिं' शोभनमतिं विश्वं जन्यं जनहितं यस्याः सा तथोक्ता । सर्वस्योत्पादयित्रीं वा तामहमावृणे इत्यर्थः ॥ ३८ ॥

शमीसमिदाधानानन्तरं वैकङ्कतसमिदाधानं विधाय तस्या वैकङ्कतसमिधो होमब्राह्मणं प्रागेव (श.प.६।६।३।१) षष्ठकाण्डेऽभिहितमित्याह–अथेति । तदाधानमन्त्रं व्याचष्टे–विधेमेति । प्रथमपादे परमे जन्मन्नित्यनेन द्युलोको

---

१–समिदाधान २ शमिलींवैकङ्कत्यौदुम्बर्यस्ता २ सवितुरिति प्रत्यृचमुत्तमा सकर्णका ॥ कर्णकाऽभावे दधिद्रप्साक्ता । का. श्रौ. सू. । १८ । ४५–४६ ।

( त्य ) अथौदुम्बरीमादधाति । (त्यू) ऊर्ग्वै रस ऽउदुम्बरऽ ऊर्जैवैनमेतद्रसेन प्रीणाति कर्णकवती भवति पशवो वै कर्णकाः पशुभिरेवैनमेतदन्नेन प्रीणाति यदि कर्णकवतीं न विन्देद्दधिद्रप्समुपहत्यादध्यात्तद्यद्दधिद्रप्सऽ उपतिष्ठते तदेव पशुरूपं प्रेद्धोऽअग्ने दीदिहि पुरो नऽइति विराजाऽऽदधात्यन्नं विराडन्नेनैवैनमेतत्प्रीणाति तिस्रः समिधऽआदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ४० ॥

( त्य ) अथाहुतीर्जुहोति । यथा परिविष्यानुपाययेत्तादृक्तत्स्रुवेण पूर्वे

---

अथौदुम्बरीमादधाति । ऊर्ग्वै रस उदुम्बरः । ऊर्जैवैनमेतद्रसेन प्रीणाति । कर्णकवती भवति । पशवो वै कर्णकाः । पशुभिरेवैनमेतदन्नेन प्रीणाति । यदि कर्णकवतीं न विन्देद्-दधिद्रप्समुपहत्याऽऽदध्यात् । तद् यद्दधिद्रप्स उपतिष्ठते-तदेव पशुरूपम् । "प्रेद्धो अग्ने दीदिहि पुरो नः"-( वा. सं. १७ । ७६ ) इति विराजाऽऽदधाति । अन्नं विराट् । अन्नेनैवैनमेतत्प्रीणाति । तिस्रः समिध आदधाति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा-तावतैवैनमेतदन्नेन प्रीणाति ॥ ४० ॥

अथाहुतीर्जुहोति । यथा परिविष्यानुपाययेत्-तादृक् तत् । स्रुवेण पूर्वे । स्रुचोत्तराम् । " अग्ने

---

विवक्ष्यत इत्याह-द्यौर्वा इति । द्वितीयपादे अवरे सधस्थे इत्यनेनान्तरिक्षमुच्यत इत्याह-अन्तरिक्षं वा इति । यस्माद्योनेरित्यत्र योनिशब्देनैष भूलोको विवक्ष्यत इत्याह एष वा इति । ' प्र त्वे हवींषि ' इति तुरीयः पादः प्रसिद्धार्थ इत्याह-यत्रा वाऽएष इति । हे ' अग्ने ' ' ते ' त्वां ' परमे जन्मन् ' उत्पत्तिस्थाने द्युलोके ' विधेम ' परिचरेम । न केवलं द्युलोक एव किन्तु ' स्तोमैः ' स्तुतिभिरुपलक्षिता वयम् ' अवरे सधस्थे ' द्युलोकादधस्थाने अन्तरिक्षेऽपि विधेम । किञ्च यस्माद्योनेः पृथिव्यात्मकयोनेः त्वम् ' उदारिथ ' उद्गतवानसि । अर्तेर्लिटि थलि " इडत्त्यर्तिव्ययतीनाम् "-( पा. सू. ७।२।६६ ) इतीडागमः । " अन्येषामपि दृश्यते " ( पा. सू. ६।३।१३७ ) इति दीर्घः । ' तम् ' एतं लोकम् अनया समिधा यजेषु द्युलोकादीनामग्निकारणत्वेनाग्नेः कारणादेकहोम उक्तः । अथ प्रत्येत्य हवींषीत्यनेन कार्याकारेऽग्नौ होमो विधीयते-समिद्ध इति । समिद्धे ' त्वे ' त्वयि छान्दसत्वात्, हवींषि ' प्रजुहुरे ' जुहविरे । विपश्चित इति शेषः । ' जुहुरे ' इति " इरयोरे " ( पा.सू.६।४।७६ ) इति रे आदेशः । अतो वयमपि समिद्धे त्वयि एतां समिधमादध्महे इत्यर्थः ॥ ३९ ॥

वैकङ्कतसमिद्धोमानन्तरमौदुम्बरसमिधो होमं विधत्ते-अथौदुम्बरीमिति । आधातव्याया उदुम्बरसमिधः कति-गुणास्तानाह-कर्णकवती भवतीति । कर्णकशब्देनात्र पत्रशाखादिकं विवक्ष्यते । पत्रादीनां पशुपुष्टिसाधनत्वेन पशुत्वात्तथाविधायाः समिधो होमेन पशुरूपेणैव अन्नेनैनं प्रीणाति । तथाविधायाः समिधोऽसम्भवे किं कुर्यादिति तत्राह-यदि कर्णकवतीं न विन्देदिति । ' दधिद्रप्सं ' दधिबिन्दुम् ' उपहत्य ' समिधि संश्लिष्य आदध्यात् । तत्र समिधि द्रप्स उपतिष्ठते इति यत् तदेव पशुरूपं भवति । अतस्तथाविधायाः समिध आधानेऽपि एनमग्निं पशुरूपेणान्नेन प्रीणाति । ' प्रेद्धो अग्ने दीदिहि ' इत्यादिकं दीप्त्यर्थम् ॥ ४० ॥

समिद्धोमानन्तरमाज्याहुतीर्विधत्ते[1]-अथाहुतीरिति । यथेति । लोके भुञ्जानस्य पुरुषस्य यथा शाकसूपौ-

---

१-स्रुवाहुती जुहोत्यग्ने तमद्येति च प्रत्यृचम् । का० श्रौ० सू० १८ । ४७ ।

स्रुचोत्तरामग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा तऽओहैरिति यस्ते हृदिस्पृक्स्तोमस्तं तऽऋध्यासमित्येतत्पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्या-वानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ४१ ॥

( त्यु ) अथ वैश्वकर्मणीं जुहोति । विश्वकर्माऽयमग्निस्तमेवैतत्प्रीणाति चित्तिं जुहोमि मनसा घृतेनेति चित्तमेषां जुहोमि मनसा च घृतेन चेत्येत-द्यथा देवाऽ इहागमन्निति यथा देवाऽ इहागच्छानित्येतद्वीतिहोत्रा ऽऋतावृध ऽइति सत्यवृधऽ इत्येतत्पत्ये विश्वस्य भूम्नो जुहोमि विश्वकर्मणऽइति

---

तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् । ऋध्यामा त ओहैः"–( वा. सं. १७।७७ ) इति । यस्ते हृदिस्पृक् स्तोमः–तं तऽऋध्यासामित्येतत् । पंक्त्या जुहोति । पञ्चपदा पंक्तिः । पञ्च-चितिकोऽग्निः । पञ्चर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेत-दन्नेन प्रीणाति ॥ ४१ ॥

अथ वैश्वकर्मणीं जुहोति । विश्वकर्माऽयमग्निः । तमेवैतत्प्रीणाति । " चित्तिं जुहोमि मनसा घृतेन "–इति । चित्तमेषां जुहोमि मनसा च घृतेन चेत्येतत् । " यथा देवा इहागमन् "–

---

दनादिकं परिविष्य पश्चात् जलादिकं पेयं पाययेत्तथाऽऽज्याहुतिकरणं भवति । प्रथमसमिद्धोमस्य परिवेषणवत् कृतत्वादित्यर्थः । तत्र साधारण्येन स्रुचैव सर्वासामेव होमप्राप्तौ आह–स्रुवेणेति । अग्ने तमद्याश्वमित्यस्य प्रथमा-हुतिमन्त्रस्य तादृशं तात्पर्यमाह–यस्ते हृदिस्पृगिति । " हृद्द्युभ्यां ङेरुपसंख्यानम् " इति सप्तम्या अलुक् । हे अग्ने ! ते हृदिस्पृग् यः स्तोमोऽस्ति ते तं स्तोमं ऋध्यासं समृद्धं क्रियासमित्युक्तं भवति अनेन मन्त्रेणे-त्यर्थः । अथास्य मंत्रस्य छन्दः प्रशंसति–पंक्त्या जुहोतीति । पंच पादा यस्याः सा पञ्चपदा । "संख्यासुपूर्वस्य" इति सूत्रस्थभाष्ये 'पादोऽन्यतरस्याम्' इति विकल्पेन ङीपि प्राप्ते टाप् प्रत्ययो दृष्टः । पंच-चितिकोऽग्निरित्यनेन अग्नेः पञ्चत्वसंख्यायोगो दर्शितः । 'पञ्चर्तवः संवत्सरः संवत्सरोऽग्निः' इत्यनेनापि प्रकारा-न्तरेण स एव योगः प्रदर्श्यते । हेमन्तशिशिरयोरुभयोरपि विहितवैशिष्ट्याविशेषेणैकत्वमभिप्रेत्योक्तम्–पञ्च-र्तव इति । होमः तत्सम्मितेनैवान्नेन एनं प्रीणातीत्यर्थः ॥ ४१ ॥

अथेति । विश्वकर्मा देवताऽस्या इति वैश्वकर्मणीमाहुतिं जुहोति कुर्यादित्यर्थः । ननु अस्य होमस्याग्न्यर्थत्वा-दत्र विश्वकर्मदेवताकत्वाच प्रकृतसमवेतार्थता न स्यादित्यत उक्तम्–विश्वकर्माऽयमग्निरिति । अथैतद्धोम-साधनमन्त्रं व्याचष्टे–चित्तिं जुहोमीत्यादिना । अत्र ' चित्ति '–शब्दार्थं दर्शयन् तस्य चात्र सम्बन्धिविशेषो-पादानाभावेन साधारण्यात् सम्बन्ध्यन्तरप्रसक्तिनिवारणेनोत्तरवाक्योपात्तादेव सम्बन्धित्वं दर्शयति–चित्तमेषा-मिति । 'यथा देवा इहागमन्' इत्यत्रागमन्नित्येतत्पदं व्याचष्टे–यथा देवा इहागच्छानिति । आगच्छानिति । आगच्छेयुरित्यर्थः । गमेर्लिङर्थे लेटि " इतश्च लोपः परस्मैपदेषु "–( पा. सू. ३ । ४ । ९७ ) इतीकारलोपः । " लेटोऽडाटौ " ( पा. सू. ३ । ४ । ९४ ) इत्यडागमः । ' ऋतावृध ' इत्यत्र ऋतशब्दस्य सत्यमर्थं

योऽस्य सर्वस्य भूतस्य पतिस्तस्मै जुहोमि विश्वकर्मणऽइत्येतद्विश्वाहादाभ्यᳪं हविरिति सर्वदेवाक्षितᳪं हविरित्येतत् ॥ ४२ ॥

(ङ) अथ पूर्णाहुतिं जुहोति । सर्वमेतद्यत्पूर्णᳪं सर्वेणैवैनमेतत्प्रीणाति ॥ ४३ ॥

सप्त तेऽअग्ने समिधऽ इति । प्राणा वै समिधः प्राणा ह्येतᳪं समिन्धते सप्त जिह्वा ऽइति यानमून्त्सप्त पुरुषानेकं पुरुषमकुर्वंस्तेषामेतदाह सप्तऽऋषय ऽइति सप्त हि तऽऋषयऽ आसन्त्सप्त धाम प्रियाणीति च्छन्दाᳪंस्येतदाह च्छन्दाᳪंसि वाऽअस्य सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्तीति सप्त ह्येतᳪं होत्राः सप्तधा यजन्ति सप्त योनीरिति चितीरेतदाहा-

---

इति । यथा देवा इहागच्छानित्येतत् । " वीतिहोत्रा ऋतावृधः "–इति । सत्यवृध इत्येतत् । " पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मणे "–इति । योऽस्य सर्वस्य भूतस्य पतिः–तस्मै जुहोमि विश्वकर्मण इत्येतत् । " विश्वाहादाभ्यं हविः "–( वा. सं. १७ । ७८ ) इति । सर्वदेवाक्षितं हविरित्येतत् ॥ ४२ ॥

**अथ पूर्णाहुतिहोमः ।**

अथ पूर्णाहुतिं जुहोति । सर्वमेतद्यत्पूर्णम् । सर्वेणैवैनमेतत्प्रीणाति ॥ ४३ ॥

" सप्त तेऽअग्ने समिधः "–इति । प्राणा वै समिधः । प्राणा ह्येतं समिन्धते । " सप्त जिह्वाः "–इति । यानमून्त्सप्त पुरुषानेकं पुरुषमकुर्वन् । तेषामेतदाह । " सप्त ऋषयः "–इति । सप्त हि त ऋषय आसन् । " सप्त धाम प्रियाणि "–इति । छन्दांस्येतदाह । छन्दांसि

---

इत्याह–सत्यवृध इति । विश्वस्येत्यादिपदद्वयं व्याचष्टे–योऽस्येति । विश्वाहादाभ्यमित्येतद्व्याख्यातम् । वीतिहोत्राः कामितयज्ञाः । ' होत्रा '–शब्दो यजमाननामसु पठितः ( निघ. ३।१७।८ ) । ' ऋतावृधः ' सत्येन वर्द्धमानाः । छांदसो दीर्घः । देवा यथा इहाग्निसमीपे आगमन् आगच्छेयुः तदर्थमेषां देवानां चित्तिं अस्य यजमानस्य यज्ञं गच्छाम इत्येवंरूपं जुहोमि सम्पादयामि । केन साधनेन ? ' समाहितेन मनसा ' हूयमानेन अनेन घृतेन च एषां चित्तं सम्पादयामि । यत एतस्य विश्वस्य अस्य सर्वस्य भुवनस्य पत्ये विश्वकर्मणे 'एतत्' सर्वदा विषयप्रकाशनमक्षितम् इदमाज्यरूपं हविर्जुहोमीत्यर्थः ॥ ४२ ॥

उक्तहोमानन्तरं पूर्णाहुतिं विधत्ते[1]–अथेति । पूर्णा चासावाहुतिश्चेति पूर्णाहुतिः । आज्यपूर्णया स्रुचा संपाद्यमाना आहुतिरित्यर्थः । सर्वमेतद्यदिति । पूर्णा चासावाहुतिरिति ' यत् ' पूर्णं तत्सर्वं अपरिमितत्वात् । अतः ' एनम् ' तेन ' सर्वेणैवानेन प्रीणाति ' ॥ ४३ ॥

सप्त तेऽअग्न इत्यादिना तन्मन्त्रं व्याचष्टे । तत्र 'समिध' इत्यनेनास्य समिन्धनहेतुत्वात्प्राणा विवक्ष्यन्त इत्याह–प्राणा वै समिध इति । प्रजापतेर्विस्रंसनेनैते निर्मिताः 'ऋषयः' पृथगेव 'यान् अमून् सप्त' देहानसृजन् । ततश्च तान् व्यवहारासमर्थान् दृष्ट्वा पश्चात्तान् 'एकमेव पुरुषमकुर्वन् । ' एतत्सर्वं सप्रपञ्चं (श.प. ६।१।१।१) षष्ठ-

---

१–पूर्णाहुतिं च सप्त त इति । का. श्रौ. सू. १८ । ४८ ।

पृणस्वेत्या प्रजायस्वेत्येतद्घृतेनेति रेतो वै घृतᳪ रेतऽ एवैतदेषु लोकेषु दधाति स्वाहेति यज्ञो वै स्वाहाकारो यज्ञियमेवैतदिदᳪ सकृत्सर्व्वं करोति ॥ ४४ ॥

सप्त सप्तेति । सप्तचितिकोऽग्निः सप्तऽर्त्तवः संव्वत्सरः संव्वत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्प्रीणाति तिस्रऽ आहुतीर्जुहोति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्रः समिधऽआदधाति तत्षट् तस्योक्तो बन्धुः ॥ ४५ ॥

(स्ति) तिष्ठन्त्समिधऽआदधाति । (त्य) अस्थीनि वै समिधस्तिष्ठन्तीव वाऽअस्थीन्यासीन ऽआहुतीर्जुहोति माᳪसानि वाऽआहुतयऽ

---

वा अस्य सप्त धाम प्रियाणि । "सप्त होत्राः सप्तधा त्वा यजन्ति"–इति । सप्त ह्येतं होत्राः सप्तधा यजन्ति । "सप्त योनीः"–इति । चितीरेतदाह । "आपृणस्व"–इति । आ प्रजायस्वेत्येतद् । "घृतेन"–इति । रेतो वै घृतम् । रेत एवैतदेषु लोकेषु दधाति । "स्वाहा"–( वा. सं. १७ । ७९ ) इति । यज्ञो वै स्वाहाकारः । यज्ञियमेवैतदिदं सकृत् सर्वं करोति ॥४४॥

सप्त सप्त–इति । सप्तचितिकोऽग्निः । सप्तर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतत्प्रीणाति । तिस्र आहुतीर्जुहोति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतदन्नेन प्रीणाति । तिस्रः समिध आदधाति । तत्षट् । तस्योक्तो बन्धुः ॥ ४५ ॥

तिष्ठन्त्समिध आदधाति । अस्थीनि वै समिधः । तिष्ठन्तीव वा अस्थीनि । आसीन आहुती-

---

काण्डस्यादावभिहितम् । स एव प्रजापतिः प्रणीयमानोऽग्निः । अतोऽत्र जिह्वाशब्देन सप्त पुरुषा विवक्ष्यन्त इत्याह–यानमून्निति । तेषामेतदाहेति । तेषाम् 'एतद्' अभिधानं करोति 'तान् आह' इत्यर्थः । अत्र प्राणशब्देन शरीरस्थानीन्द्रियाण्युच्यन्ते, जिह्वाशब्देन सप्तपुरुषात्मकानीन्द्रियाणि । ऋषिशब्देन तु निर्गतानि इष्टकास्थापनानि इन्द्रियाण्युच्यन्ते । अतश्चैषां शब्दानामन्तरम्, इन्द्रियवाचकत्वेऽपि न सांकर्यम् । 'सप्त धाम प्रियाणि' इत्यनेन छन्दांस्यभिधीयन्त इत्याह–छन्दांसीति । यत एतमग्निं होतृमैत्रावरुणादयः सप्त होत्रा अग्निष्टोमादिभेदेन सप्तधा यजन्ति । अत उच्यतेऽस्यार्थो मन्त्रेणेत्याह–सप्त होत्रा इति । स्थानवाचकत्वाद्योनिशब्देन तु चितय उच्यन्ते अत आह–सप्त योनीरिति । स्पष्टमन्यत् ॥ ४४ ॥

मन्त्रे पौनःपुन्येन सप्तशब्दप्रयोगः कृत्स्नस्याग्नेस्तृप्तिहेतुर्भवतीत्याह–सप्त सप्तेति । प्रक्रान्ताहुतीनां त्रित्वमपि तथैव प्रशंसति–तिस्र आहुतीरिति । समिधामाहुतीनां च मिलिता षट्संख्या भवति तस्य तु ब्राह्मणं ( श. प. ९ । २ । २ । ७ ) प्रागुक्तमित्याह–तिस्रः समिध इति ॥ ४५ ॥

अथ समिदाहुतीनामस्थिमांसात्मकत्वात्तत्सन्निवेशानुसारेण तास्तिष्ठन् आसीनो वा जुहुयादित्याह–तिष्ठन्नि-

---

१–तिष्ठन् समिधः सर्वत्र मध्ये । का० श्रौ० सू. १८ । ४९ ।

आसतऽइव वै माᳬसान्यन्तराः समिधो भवन्ति बाह्या ऽआहुतयोऽन्तराणि ह्यस्थीनि बाह्यानि माᳬसानि ॥ ४६ ॥

(न्य) अथातः सम्पदेव । षट् पुरस्ताज्जुहोति षडुपरिष्टात्षड्भिराश्मनः पृश्नेर्यन्ति द्वाभ्यामश्मानं पृश्निमुपदधाति चतुर्भिराग्नेर्यन्ति पञ्चभिरग्निमारोहन्ति तदेकान्नत्रिᳬशदाहुतिरेव त्रिᳬशत्तमी द्वाभ्यामग्निं निदधाति तद्द्वात्रिᳬशद्द्वात्रिᳬशदक्षराऽनुष्टुब्सैषाऽनुष्टुप् ॥ ४७ ॥

---

जुहोति । मांसानि वा आहुतयः । आसत इव वै मांसानि । अन्तराः समिधो भवन्ति । बाह्या आहुतयः । अन्तराणि ह्यस्थीनि, बाह्यानि मांसानि ॥ ४६ ॥

अथातः सम्पदेव । षट् पुरस्ताज्जुहोति, षडुपरिष्टात्, षड्भिराश्मनः पृश्नेर्यन्ति, द्वाभ्यामश्मानं पृश्निमुपदधाति, चतुर्भिराग्नेर्यन्ति, पञ्चभिरग्निमारोहन्ति–तदेकान्नत्रिंशत् । आहुतिरेव त्रिंशत्तमी । द्वाभ्यामग्निं निदधाति । तद्–द्वात्रिंशत् । द्वात्रिंशदक्षराऽनुष्टुप् । सैषाऽनुष्टुप् ॥ ४७ ॥

---

त्यादिना । कठिनावयवसन्निवेशसाधारण्यात् समिधामस्थित्वम् । तानि उच्छ्रितत्वात्तिष्ठन्तीव भवन्ति । मृद्ववयवसन्निवेशसामान्यादाज्यस्य मांसत्वम् । तानि च मांसानि आसीनानीव सन्ततानि भवन्ति । अस्थिमांसानुसारेण समिधः अन्तरा आज्याहुतयस्तु बाह्याः कर्तव्या इत्याह–अन्तरा इति ॥ ४६ ॥

अथास्याग्निप्रणयनात्मकस्य कर्मणः सम्पत्तिमभिधातुं प्रतिजानीते–अथातः सम्पदेवेति । तामेव दर्शयति–षट्पुरस्तादित्यादिना । प्रणयनात्पूर्वं तिस्र आज्याहुतीस्तिस्रः समिदाहुतीश्च जुहोति । अतस्ते षण्मन्त्रा भवन्ति । यद्यपि द्वितीयतृतीययोराज्याहुत्योः षोडश मन्त्राः प्रयुज्यन्ते । तथापि आहुत्यनुसारेण ते सर्वेऽपि द्वौ मन्त्राविति परिगण्यन्ते । 'उपरिष्टाद्' अग्निनिधानात्पश्चात्तिस्रः समिदाहुतीस्तिस्र आज्याहुतीश्च जुहोतीति तेऽपि षण्मन्त्राः । आग्नीध्रमण्डपेऽपि कश्चित् पृश्निरश्मोपधीयते, तत्पर्यन्तं षड्भिर्मन्त्रैर्गच्छन्ति । अत्र यद्यपि "पञ्च दिशो दैवीः" (वा. सं. १७ । ५४–५८) इत्यादयः पञ्चैव मन्त्रा गमने विनियुक्ताः, तथापि "उदु त्वा" (वा. सं. १७ । ५३) इति मन्त्रेण सहिताः षड् भवन्ति; इति षण्णामपि मन्त्राणां गमनसाधनत्वाभिधानं गमनमन्त्रबाहुल्याभिप्रायम् । "विमान एषः" (वा० सं० १७ । ५९) इति द्वाभ्यां पृश्निमश्मानमुपदधाति । "इन्द्रं विश्वा" (वा० सं० १७ । ६१–६४) इत्यादिभिश्चतुर्भिर्मन्त्रैरग्निपर्यन्तं गच्छन्ति । "क्रमध्वमग्निना" इत्यादिभिः पञ्चभिर्मन्त्रैश्चित्याग्निमारोहन्ति । तदेवमेकोनत्रिंशन्मन्त्रा भवन्ति । एतदुक्तमंत्रसाध्या आहुतिरेव त्रिंशत्तमी त्रिंशत्संख्यापूरणी । यद्यपि आहुतिव्यक्तयो बह्वयः सन्ति तथापि सामान्यानुसारेण ताः सर्वा अपि एकैवाहुतिर्भवति । "सुपर्णोऽसि गरुत्मान्" (वा.सं. १७।७२) इत्याभ्यां द्वाभ्यामग्निं निदधातीति द्वात्रिंशत्संख्येयं सम्पद्यते । अनुष्टुप् द्वात्रिंशदक्षरा भवति । अतस्तदेतदग्निप्रणयनं सर्वमन्त्राहुतिसंख्याद्वारा अनुष्टुप्छन्दो भवति । सैषेति स्त्रीलिङ्गाच्च 'अनुष्टुप्' इत्येतद्द्वितीयविशेषापेक्षम् ॥ ४७ ॥

( प्र ) तद्याऽअमूस्तिस्रोऽनुष्टुभः । ( भो ) गार्हपत्ये सम्पादयन्ति तासामेतामत्रैकामाहरन्ति तद्यदेतामत्राहरन्त्यत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र तस्मै नालमासीद्यदन्नमात्स्यत् ॥ ४८ ॥

( त्सो ) सोऽग्निमब्रवीत् । ( त्व ) त्वयाऽन्नमदानीति तथेति तस्माद्यदैवैतमत्राहरन्त्यथैषोऽलमन्नायालमाहुतिभ्यो भवति ॥ ४९ ॥

( त्यु ) अथोऽआहुः । प्रजापतिरेवैतं प्रियं पुत्रमुरस्याधत्तऽइति स यो हैतदेवं वेदा हैवं प्रियं पुत्रमुरसि धत्ते ॥ ५० ॥

---

तद् या अमूस्तिस्रोऽनुष्टुभो गार्हपत्ये सम्पादयन्ति–तासामेतामत्रैकामाहरन्ति । तद् यदेतामत्राहरन्ति–अत्रैष सर्वोऽग्निः संस्कृतः । स एषोऽत्र तस्मै नालमासीद्–यदन्नमात्स्यत् ॥ ४८ ॥

सोऽग्निमब्रवीत्–त्वयाऽन्नमदानीति । तथेति । तस्माद्यदैवैतमत्राहरन्ति–अथैषोऽलमन्नाय, अलमाहुतिभ्यो भवति ॥ ४९ ॥

अथो आहुः–प्रजापतिरेवैतं प्रियं पुत्रमुरस्याधत्त इति । स यो हैतदेवं वेद–आ हैवं प्रियं पुत्रमुरसि धत्ते ॥ ५० ॥

---

सप्तमकाण्डे ( श. प. ७ । १ । २ । १९ ) गार्हपत्यचयनाभिधानानन्तरं तत्र तिस्रोऽनुष्टुभः सम्पाद्य तासां मध्ये एकामाहवनीयं हरन्तीत्युक्तम्, अत्रोक्तप्रकारेणानुष्टुभः सम्पादनेन एतासामेकामनुष्टुभमत्राहृतवन्तो भवन्तीत्याह–तद्या अमूरिति । गार्हपत्यात् खल्वग्निराहवनीयस्थानं प्रति प्रणीयते । अतश्चाग्निप्रणयने विद्यमानमन्त्राहुतिसंख्याद्वाराऽस्या अनुष्टुभः सम्पादनाद् गार्हपत्ये सम्पादितानामनुष्टुभाममूमेकामत्राहृतवन्तो भवन्तीत्युच्यते । गार्हपत्यादेकस्या अनुष्टुभोऽत्राहरणे प्रयोजनमाह–तद्यदेतामिति । ‘ अत्र ’ अस्मिन्नवसरे ‘ एषोऽग्निः ’ ‘ सर्वः संस्कृतः ’ कात्स्न्येन संस्कृतः, स एषोऽग्निः ‘ अन्नमात्स्यत् ’ अभक्षयिष्यदिति यत् तस्मै ‘ नालमासीत् ’ । अन्नादनाय समर्थो नाभूदित्यर्थः ॥ ४८ ॥

पश्चात् ‘ सः ’ चित्याग्निः प्रणेष्यमाणम् ‘ अग्निम् ’ ‘ त्वया ’ आगतेन ‘ अन्नमदानि इति ’ ‘ अब्रवीत् ’ ततः ‘ तथेति ’ तेनाप्यङ्गीकृतम् । ‘ तस्मात् ’ यस्मिन्नेवावसरे ‘ एतम् ’ अग्निं गार्हपत्यादेव चित्याग्नावाहरन्ति । अनेन गार्हपत्यादनुष्टुभ आहरणमुक्तम् । ‘ अथ ’ पश्चाद् ‘ एषः ’ ‘ अन्नाय ’ समर्थो भवति । ‘ अलमाहुतिभ्यः ’ इति तदेवान्नं दर्शितम् । आहुतिरूपायान्नाय ’ समर्थो भवति । अग्निप्रणयनानन्तरं भवतीत्यग्नेराहुतिसम्बन्धादिति भावः । “ नमःस्वस्ति ”–( पा. सू. २ । ३ । १६ ) इत्यादिना ‘ अलं ’–शब्दयोगात् चतुर्थी ॥ ४९ ॥

अथोऽआहुरित्यादिकस्यायमर्थः । किंच गार्हपत्यादनुष्टुभः आहरणेन चित्याग्निरूपः प्रजापतिरेव प्रणीताग्निरूपं ‘प्रियं पुत्रमुरसि’ धारितवन् भवति ‘ इति ’ ब्रह्मवादिन ‘आहुः’ अतोऽपि तस्मादनुष्टुभमाहरन्तीत्यर्थः । उक्तार्थवेदनं प्रशंसति–स यो हैतादिति । लोके ‘ यः ’ कश्चिज्जनः ‘ एतद् ’ अर्थरूपं ‘ एवम् ’ उक्तप्रकारेण जानाति ‘ सः ’ जनश्च ‘ एवम् ’ एव ‘ उरसि प्रियं पुत्रम् ’ आधत्ते खलु । हेति निपातः प्रसिद्धयर्थद्योतकः । “ व्यवहिताश्च ” ( पा. सू. १ । ४ । ८२ ) इत्यनुशासनात्पदान्तरव्यवहितोऽप्याङित्युपसर्गो धत्त इत्यनेन सम्बध्यते ॥ ५० ॥

यद्वेवैतमत्राहरन्ति । यान्वै तान्त्सप्त पुरुषानेकं पुरुषमकुर्वन्नयमेव स योऽयमग्निश्चीयतेऽथ यामेषां तामूर्ध्वाᳬं श्रियᳬं रसᳬं समुदौहन्नेष स यमेतमत्राग्निमाहरन्ति तद्यदेतमत्राहरन्ति यैवैतेषाᳬं सप्तानां पुरुषाणाᳬं श्रीर्यो रसस्तमेतदूर्ध्वᳬं समुदूहन्ति तदस्यैतच्छिर ऽआत्माऽयमग्निश्चित ऽआत्मानमेवास्यैतत्सᳬंस्कृत्य शिरः प्रतिदधाति ॥ ९१ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ९ । २ । २ ॥ ( २–३ )

इति द्वितीयोऽध्यायः समाप्तः ॥ ९–२ ॥

---

यद्वेवैतमत्राहरन्ति । यान्वै तान्त्सप्त पुरुषानेकं पुरुषमकुर्वन्–अयमेव सः–योऽयमग्निश्चीयते । अथ यामेषां तामूर्ध्वां श्रियं रसं समुदौहन्–एष सः–यमेतमत्राग्निमाहरन्ति । तद्यदेतमत्राहरन्ति–यैवैतेषां सप्तानां पुरुषाणां श्रीः, यो रसः, तमेतदूर्ध्वं समुदूहन्ति । तदस्यैतच्छिरः । आत्माऽयमग्निश्चितः । आत्मानमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति ॥ ९१ ॥

---

अथ प्रकारान्तरेणापि गार्हपत्यादग्नेराहरणं प्रशंसति–यद्वेवैतमिति । अयमेवेति । ' योऽयमग्निः ' अधुनाऽस्माभिः ' चीयते ' । अयमेव चित्याग्निः सप्तानां पुरुषाणां समष्टिरूप एकः पुरुषः । अथ ' एषां ' पुरुषाणां यां श्रियम् ' ऊर्ध्वां समुदौहन् ' समुदाक्षिपन् । ' एषः ' सरूपा श्रीः ' सोऽग्निः ' । एष इति पुँल्लिङ्गविधिरन्यपेक्षया । एतमग्निमिदानीं चित्याग्नावाहरन्ति । इदानीं चाह्रियमाणोऽग्निः सप्तपुरुषाणां समुत्क्षिप्तश्रीरूप इत्यर्थः । तस्मात् कारणात् ' तम् ' एतमग्निम् अत्राहरन्तीति यत्तेन एतेषां सप्तानां पुरुषाणां श्रीरूपो यो रसोऽस्ति तमूर्ध्वमुत्क्षिपन्ति । किञ्च तस्याः श्रियः शिरोरूपत्वं तत्रैव षष्ठकाण्डेऽभिहितम् ( श. प. ६।१।१।७ ) तस्मात्तदेतच्छ्रीरूपो योऽग्निरस्य प्रजापतेः शिरश्चितोऽयमग्निः पुनः–' आत्मा ' शरीरम् । अत एतेन गार्हपत्यादग्नेराहरणसंस्कृतेन प्रजापतिशरीरेण स्वकीयं शिर एव सम्बध्नातीत्यर्थः ॥ ९१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे द्वितीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ९–२–३ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥ २ ॥

धान्याद्रिं धन्यजन्मा तिलमवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृगः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥ ३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे द्वितीयोऽध्यायः ॥ ९–२ ॥

# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च तृतीयं ब्राह्मणम् ।

अथातो वैश्वानरं जुहोति । (त्यु) अत्रैष सर्वोऽग्निः सꣳस्कृतः स एषोऽत्र वैश्वानरो देवता तस्मादेतद्धविर्जुहोति तदेनꣳ हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानरः ॥ १ ॥

(रो) यद्वेवैतं वैश्वानरं जुहोति । वैश्वानरं वाऽएतमग्निं जनयिष्यन्भवति तमदः पुरस्ताद्दीक्षणीयायाꣳ रेतोभूतꣳ सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यत्तत्र वैश्वानरꣳ रेतोभूतꣳ सिञ्चति तस्मा-

---

## वैश्वानरहोमः ।

अथातो वैश्वानरं जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः । स एषोऽत्र वैश्वानरो देवता । तस्मादेतद्धविर्जुहोति । तदेनं हविषा देवतां करोति । यस्यै वै देवतायै हविर्गृह्यते—सा देवता, न सा—यस्यै न गृह्यते । द्वादशकपालः । द्वादश मासाः संवत्सरः । संवत्सरो वैश्वानरः ॥ १ ॥

यद्वेवैतं वैश्वानरं जुहोति । वैश्वानरं वा एतमग्निं जनयिष्यन्भवति । तमदः पुरस्ताद्दीक्षणीयायां रेतोभूतं सिञ्चति । यादृग्वै योनौ रेतः सिच्यते तादृग् जायते । तद् यत्तत्र वैश्वानरं रेतोभूतं

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वस्मिन्नध्याये स्वयमातृण्णाव्याघारणसमुक्षणादिकर्माभिहितम् । अथास्मिन्नध्याये वैश्वानरमारुतवसोर्धारादिहोमलक्षणं कर्माभिधास्यते—तत्रादौ वैश्वानरं होमं विधत्ते—अथात इति । अथशब्देन अग्निप्रणयनानन्तर्यं द्योत्यते । अत इति अत्रैष सर्वोऽग्निः इत्याद्युत्तरकालप्रतिपाद्यमर्थं हेतुतया परामृशति । वैश्वानरशब्दस्तद्देवत्यं हविराचष्टे । यतोऽस्मिन्नवसरे अग्निर्वैश्वानरो देवता भवति । अतस्तत्प्रीणनार्थं तद्दैवत्यं हविर्जुहुयादित्यर्थः । न केवलमनेन अस्मै भागसम्पादनं क्रियते, अपि तु देवतात्वसम्पादनमपीत्याह—तदेनमिति । तदेवान्वयव्यतिरेकाभ्यामुपपादयति—यस्यै वा इति । "वैश्वानरं जुहोति"—इति सामान्येनाभिधानादग्न्यादिकमपि तच्छब्देनोपपाद्यते इत्याह—द्वादशकपाल इति । द्वादशसु कपालेषु संस्कृतः पुरोडाशः द्वादशकपालः । द्वादश मासाः सम्भूय संवत्सरो भवति, वैश्वानरोऽग्निश्च संवत्सरात्मकः । ततस्तदर्थं हविर्द्वादशकपालसंस्कृतपुरोडाशो भवतीत्यर्थः ॥ १ ॥

अथ पुनरेतमेव वैश्वानरहोमं प्रशंसति—यद्वेवैतमिति । 'अदः' शब्दो दीक्षणीयेष्टिकालं परामृशति । पुरस्ताद् इति पूर्वकालमाचष्टे । पूर्वममुष्मिन्काले दीक्षणीयेष्ट्यां तं वैश्वानरं रेतोभूतं सिञ्चतीति यत् अत

दयुमिह व्वैश्वानरो जायतऽउपाᳪंशु तत्र भवति रेतो वै तत्र यज्ञऽ उपाᳪं-शु वै रेतः सिच्यते निरुक्तऽ इह निरुक्तᳪं हि रेतो जातं भवति ॥ २ ॥ ( शतम् ४९०० ) ॥

स यः स व्वैश्वानरः । ( ऽ ) इमे स लोकाऽइयमेव पृथिवी व्विश्वमग्नि-र्नरोऽन्तरिक्षमेव व्विश्वं व्वायुर्नरो द्यौरेव व्विश्वमादित्यो नरः ॥ ३ ॥

( स्ते ) ते ये तऽइमे लोकाः । ( ऽ ) इदं तच्छिरऽ इदमेव पृथिव्यो-षधयः श्मश्रूणि तदेतद्विश्वं व्वागेवाग्निः स नरः सोपरिष्टादस्य भवत्यु-परिष्टाद्ध्यस्याऽ अग्निः ॥ ४ ॥

---

सिञ्चति । तस्मादयमिह वैश्वानरो जायते । उपांशु तत्र भवति । रेतो वै तत्र यज्ञः । उपांशु वै रेतः सिच्यते । निरुक्त इह । निरुक्तं हि रेतो जातं भवति ॥ २ ॥

स यः स वैश्वानरः–इमे स लोकाः । इयमेव पृथिवी विश्वम्, अग्निर्नरः । अन्तरिक्षमेव विश्वम्, वायुर्नरः । द्यौरेव विश्वम्, आदित्यो नरः ॥ ३ ॥

ते ये त इमे लोकाः–इदं तच्छिरः–इदमेव पृथिवी, ओषधयः श्मश्रूणि । तदेतद्विश्वम् । वागे-वाग्निः । स नरः । सोपरिष्टादस्य भवति । उपरिष्टाद्ध्यस्या अग्निः ॥ ४ ॥

---

एतमग्निं वैश्वानररूपं जनयिष्यन्भवति । दीक्षणीयायां क्रतो वैश्वानरार्थो होमः एतस्याग्नेर्वैश्वानररूपेणोत्पादनार्थ रेतःसेचनवद्भवतीत्यर्थः । लोके हि ' योनौ ' यत्प्रकारविशिष्टं ' रेतः सिच्यते ' उत्पत्तिकालेऽपि तत्प्रकार-वैशिष्ट्येनैव तज्जायते, न पुनः प्रकारान्तरवैशिष्ट्येन । ततो दीक्षणीयायां वैश्वानरं रेतोरूपेण सिक्तवानिति यत्तस्मादयमग्निरिहापि तदनुरोधेन वैश्वानर एव जायते । अतश्च वैश्वानररूपेणोत्पादनाय वैश्वानरदेवत्यं हवि-र्जुहुयादिति भावः । ' उपांशु तत्र भवति ' इत्यादिकस्यायमर्थः । ' यज्ञ ' शब्देन यष्टव्यत्वाद्वैश्वानर उच्यते । तत्र दीक्षणीयायां यज्ञो रेतोरूपो भवति खलु । रेतश्च ' उपांशु ' रहस्येन सिच्यते, न प्रकाशम् । अतस्तत्र प्रधानमुपांशु भवति । इह तु प्रधानं ' निरुक्तम् ' उच्चैरौच्चयविशिष्टं भवति । जननावस्थायां रेतसः प्रकाशमेव जायमानत्वादत्रत्यस्य वैश्वानरस्य तथाविधत्वादिति ॥ २ ॥

अथास्य वैश्वानरात्मकतामाह–स य इत्यादिना । पूर्वोक्तो ' यः वैश्वानरः ' अग्निः स ' एव ' ' इमे ' पृथिव्यादयो ' लोकाः ' । कुतः ? ' इयमेव पृथिवी विश्वम् ' तदधिष्ठाताऽग्निरेव 'नरः', तथा ' अन्तरिक्षमेव विश्वम् ' । तदधिष्ठाता ' वायुर्नरः ' एवम् ' द्यौरेव विश्वम् ' तदधिष्ठाता ' आदित्यो नरः ' पृथिव्यादीनां लोकानामनेकपदार्थाधारत्वेन विश्वत्वम् । अग्न्यादीनां च तदधिष्ठातृपुरुषत्वम् । एवं च वैश्वानर इत्यत्र तदितरस्य स्वार्थिकत्वात्साधिष्ठातृका इमे लोका एव स वैश्वानर इत्यर्थः ॥ ३ ॥

अथ शिरसो वैश्वानररूपलोकात्मकतामाह–ते य इति । ' इदम् ' इति मुखं श्मश्रुविशिष्टं हस्तेन प्रद-र्श्यते । ' इदमेव ' स्थानं ' पृथिवी ', शिरसोऽश्ममागत्वात्, अत्रत्यानि ' श्मश्रूणि ' एव ' ओषधयः ' ।

( रि ) इदमेवान्तरिक्षम् । ( न्तु ) तस्मादेतदलोमकमलोमकमिव ह्यन्तरिक्षं तदेतद्विश्वं प्राण ऽ एव वायुः स नरः स मध्येनास्य भवति मध्येन ह्यन्तरिक्षस्य वायुः ॥ ५ ॥

शिरऽ एव द्यौः । ( नुं ) नक्षत्राणि केशास्तदेतद्विश्वं चक्षुरेवादित्यः स नरस्तदवस्ताच्छीर्ष्णो भवत्यवस्ताद्धि दिव ऽआदित्यस्तदस्यैतच्छिरो वैश्वानर ऽआत्माऽयमग्निश्चित ऽआत्मानमेवास्यैतत्सꣳस्कृत्य शिरः प्रतिदधाति ॥ ६ ॥

( त्यु ) अथ मारुताञ्जुहोति । प्राणा वै मारुताः प्राणानेवास्मिन्नेतद्दधाति वैश्वानरꣳ हुत्वा शिरो वै वैश्वानरः शीर्षंस्तत्प्राणान्दधाति ॥ ७ ॥

---

इदमेवान्तरिक्षम् । तस्मादेतदलोमकम् । अलोमकमिव ह्यन्तरिक्षम् । तदेतद्विश्वम् । प्राण एव वायुः । स नरः । स मध्येनास्य भवति । मध्येन ह्यन्तरिक्षस्य वायुः ॥ ५ ॥

शिर एव द्यौः । नक्षत्राणि केशाः । तदेतद्विश्वम् । चक्षुरेवादित्यः । स नरः । तदवस्ताच्छीर्ष्णो भवति । अवस्ताद्धि दिव आदित्यः । तदस्यैतच्छिरो वैश्वानरः । आत्माऽयमग्निश्चितः । आत्मानमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति ॥ ६ ॥

## अथ मारुतहोमः ।

अथ मारुताञ्जुहोति । प्राणा वै मारुताः । प्राणानेवास्मिन्नेतद्दधाति । वैश्वानरं हुत्वा । शिरो वै वैश्वानरः । शीर्षंस्तत्प्राणान्दधाति ॥ ७ ॥

---

तदेतद्विश्वमिति । शिरसि दर्शितायाः पृथिव्या वैश्वानरात्मकत्वमुक्तम् । वागिति तत्स्थानमुच्यते । अतश्च वाक्चिबुकयोरौत्तराधर्येणोक्तं वैश्वानरत्वमुपपादयति—सोपरिष्टादिति ॥ ४ ॥

इदमिति । ' इदम् ' इति मुखादुपरितनं दन्तनेत्रनासिकाललाटस्थानं निर्दिश्यते । अलोमकमिव ह्यन्तरिक्षमिति । तत्र पृथिवीवन्महीधरमहीरुहादीनामभावादित्यर्थः । स मध्येनास्येति । वायुरन्तरिक्षस्य मध्यप्रदेशेन वर्त्तत इति ' सः ' प्राणः ' अस्य ' निर्दिष्टप्रदेशस्य ' मध्येन ' वर्तते मध्यस्थाने वर्तते । करणत्वेन विवक्षितत्वात्तृतीया ॥ ५ ॥

शिर एवेति । अत्र ' शिरः '—शब्देन ललाटादुपरितनं केशोद्गमस्थानमुच्यते । ' इदं तच्छिरः ' इत्यत्र गलादुपरितनं सर्वमपि शिरःशब्देन विवक्षितम् । अन्यथा पूर्वोक्तस्यानुपपत्तेः । तदस्यैतादिति । यत एवम् तस्माद्वैश्वानरः ' अस्य ' प्रजापतेः ' एतद् ' उक्तप्रकारं ' शिरः ' । चितोऽयमग्निस्तु शरीरम् । अत एतेन होमेन ' अस्य ' आत्मानं ' संस्कृत्य ' तत्र ' शिरः ' संबध्नातीत्यर्थः ॥ ६ ॥

वैश्वानरयागानन्तरं मारुतानां होमं विधाय तान् प्राणात्मना प्रशंसति—अथेति । तद्धोमस्य वैश्वानरसम्बन्धादित्यर्थः ॥ ७ ॥

( त्ये ) एक॒ऽ ए॒ष भ॑वति । ( त्ये ) ए॒क॑मिव॒ हि शिरः॑ स॒प्तेत॑रे स॒प्तक॑पाला॒ य॒दु वा॒ऽअ॒पि ब॑हु॒कृत्वः॑ स॒प्त स॒प्त स॒प्तैव त॒च्छीर्ष॒ण्ये॑व त॒त्स॒प्त प्रा॒णान्द॑धाति॥८॥

नि॒रु॒क्त॒ऽए॒ष भ॑वति । नि॒रु॒क्तमि॑व॒ हि शिरो॒ऽनि॑रु॒क्ता ऽइत॑रे॒ऽनि॑रु॒क्ता इ॑व॒ हि प्रा॒णास्ति॒ष्ठ॑न्ने॒तं जु॑होति॒ ति॒ष्ठ॑तीव॒ हि शिर ऽआसी॑न ऽइत॑राना॒सत॒ऽइ॑व॒ हि प्रा॒णाः ॥ ९ ॥

( स्त ) तद्यौ॑ प्र॒थमौ॑ मा॒रु॒तौ जु॒होति॑ । ( ती ) इ॒मौ तौ प्रा॒णौ तौ म॒ध्ये वै॑श्वान॒रस्य॑ जुहोति॒ म॒ध्ये ही॒मौ शी॒र्ष्णः प्रा॒णौ ॥ १० ॥

---

एक एष भवति । एकमिव हि शिरः । सप्तेतरे सप्तकपालाः । यदु वा अपि बहुकृत्वः सप्त–सप्त–सप्तैव तत् । शीर्षण्येव तत्सप्त प्राणान्दधाति ॥ ८ ॥

निरुक्त एष भवति । निरुक्तमिव हि शिरः । अनिरुक्ता इतरे । अनिरुक्ता इव हि प्राणाः । तिष्ठन्नेतं जुहोति । तिष्ठतीव हि शिरः । आसीन इतरान् । आसत इव हि प्राणाः ॥ ९ ॥

तद् यौ प्रथमौ मारुतौ जुहोति–इमौ तौ प्राणौ । तौ मध्ये वैश्वानरस्य जुहोति । मध्ये हीमौ शीर्ष्णः प्राणौ ॥ १० ॥

---

तान्प्राणात्मना प्रशंस्य प्राणात्मकत्वात्तेषां तदनुविधायिनीं संख्यामाह–एक एष इति । 'एषः' वैश्वानरः । 'इतरे' मारुताः पुरोडाशाः सप्तसु कपालेषु संस्कृताः सप्त भवेयुः । 'बहुकृत्वः अपि' सप्त–सप्तेति यदस्ति एतत्सप्तैव । यद्यपि सप्तानां कपालसप्तकानां मिलिता संख्या एकोनपञ्चाशत् भवति, मरुतां तावत्संख्याकत्वात् । तथापि सप्तधा भागेन ते सप्तैव भवन्ति । अतश्चैतच्छिरस्येव सप्त प्राणान्निदधाति ॥ ८ ॥

अथ तदेव प्राणत्वमुपजीव्य तेषामुपांशुयागादिकमाह–निरुक्त एष इति । 'एषः' वैश्वानरः 'निरुक्तः' व्यक्तः, उच्चैर्यागो भवति शिरसो व्यक्तत्वात् । 'इतरे' मारुताः 'अनिरुक्ताः' अव्यक्ता उपांशुयागा भवेयुः । प्राणानामतीन्द्रियत्वेनाव्यक्तत्वादित्यर्थः । तिष्ठतीव हीति । शिर उच्छ्रितत्वात् 'तिष्ठतीव' भवति । इन्द्रियाणि तु 'आसत इव' आसीनानीव भवन्ति ॥ ९ ॥

अथ द्वन्द्वशो मारुतानां होममनूद्य तेषां तत्तद्द्वन्द्वीभूतप्राणात्मकताप्रदर्शनेन होमस्थानप्रकारमाह–तद्यौ प्रथमावित्यादिना । अत्र प्रथमसन्निधानेन द्वितीये उपचारात् प्रथमशब्दप्रयोगः । एवमुत्तरत्र द्वितीयौ तृतीयावित्यत्रापि । इमौ ताविति । 'तौ' प्रथमौ 'प्राणौ' 'इमौ' इति कर्णयोर्हस्तेन निर्देशः । 'तौ' 'वैश्वानरस्य' पुरोडाशस्य 'मध्ये जुहोति'–अनयोः श्रोत्रयोः शिरोमध्येऽवस्थानात् । अत एव कात्यायनेन "वैश्वानरे वा वैश्वानरं पृथुं कृत्वा" ( का. श्रौ. सू. १८ । ६२ ) इति "अग्नौ वा वैश्वानरे वा" इति विकल्पः सूत्रितः । तत्र अग्नौ होमः शाखान्तरानुसारेण विकल्पितः । वैश्वानरे यदा होमस्तदा वैश्वानरस्य पृथुत्वकरणम् ॥ १० ॥

(णावु) अथ यौ द्वितीयौ । (यावि) इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्राणौ ॥ ११ ॥

(णावु) अथ यौ तृतीयौ । (यावि) इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्राणौ वागेवारण्येऽनूच्यः सोऽरण्येऽनूच्यो भवति बहु हि वाचा घोरं निगच्छति ॥ १२ ॥

यद्वेव वैश्वानरमारुतान्जुहोति । क्षत्रं वै वैश्वानरो विण्मारुताः क्षत्रं च तद्विशं च करोति वैश्वानरं पूर्वं जुहोति क्षत्रं तत्कृत्वा विशं करोति ॥ १३ ॥

(त्यु) एक एषु भवति । (त्ये) एकस्थं तत्क्षत्रमेकस्थाᳪँ श्रियं करोति बहवऽइतरे विशि तद्भूमानं दधाति ॥ १४ ॥

---

अथ यौ द्वितीयौ–इमौ तौ । तौ समन्तिकतरं जुहोति । समन्तिकतरमिव हीमौ प्राणौ ॥ ११ ॥

अथ यौ तृतीयौ–इमौ तौ । तौ समन्तिकतरं जुहोति । समन्तिकतरमिव हीमौ प्राणौ । वागेवारण्येऽनूच्यः । सोऽरण्येऽनूच्यो भवति । बहु हि वाचा घोरं निगच्छति ॥ १२ ॥

यद्वेव वैश्वानरमारुतान्जुहोति । क्षत्रं वै वैश्वानरो, विण्मारुताः । क्षत्रं च तद्विशं च करोति । वैश्वानरं पूर्वं जुहोति । क्षत्रं तत्कृत्वा विशं करोति ॥ १३ ॥

एक एष भवति । एकस्थं तत्क्षत्रमेकस्थां श्रियं करोति । बहव इतरे । विशि तद्भूमानं दधाति ॥ १४ ॥

---

अथ यौ द्वितीयौ । इमौ ताविति । 'इमौ' इति चक्षुषोः निर्देशः । 'तौ समन्तिकतरम्' सन्निहिततरं जुहुयात् चक्षुषोः परस्परं सन्निधानेनावस्थानात् । होमस्तु वैश्वानरस्य पश्चाद्भागे कर्तव्यः । पंचमषष्ठयोर्होमस्तृतीयचतुर्थयोः पश्चात् । सप्तमस्य तु होमः सर्वेषां पश्चात्क्रियते । अत एव कात्यायनः–"वैश्वानरमधिश्रित्य दक्षिणोत्तरौ मारुतौ" "पश्चाच्च सन्निकृष्टतरौ" "एवमपरौ" "पश्चादरण्येऽनूच्यम्" "होमासादनयोश्च" (का. श्रौ. सू. १८ । ९६–६०) इति । वैश्वानरस्य मारुतानामेकतन्त्रत्वाद्वैश्वानरमधिश्रित्य दक्षिणोत्तरौ मारुतावित्यर्थः । तत्प्रयोगप्रकारस्तु सूत्रतोऽवगन्तव्यः ॥ ११ ॥

अथ यौ तृतीयाविमौ तावित्यत्र इमाविति नासिकाविवरयोर्निर्देशः । इत्थं षण्णां मारुतानां तत्प्राणात्मकतामभिधाय 'अरण्येऽनूच्यं' वागात्मना प्रशंसति–वागेवेति । 'अरण्येऽनूच्यः' कश्चिदनुवाकः, तेन हूयमानोऽपि पुरोडाशः "अरण्येऽनूच्यो" भवतीत्यादिना तस्य वागात्मतामेवोपपादयति । यतः कारणाद्वाचा बहु घोरं निगच्छति । अरण्ये प्रकाश्यते यः सोऽनुवाकोऽरण्येऽनूच्यो भवति । तस्मादरण्येऽनूच्यवचनात्तस्य वागात्मकत्वमुपपन्नमिति भावः ॥ १२ ॥

पूर्वं वैश्वानरं शिरोरूपेण मारुतांस्तु तत्तत्प्राणरूपेण उक्तवान् । इदानीं तु तानेव वैश्वानरमारुतान् क्षत्रप्रजात्मना स्तौति–यद्वेवेति । वैश्वानरस्य प्रजापत्यात्मकत्वेन सर्वतः प्राधान्यात् क्षत्रत्वम् । मरुतां प्रजात्वं तैत्तिरीयके श्रूयते–"मरुतो वै देवानां विशः" (तै. सं. ९ । ४ । ७ ७) इति ॥ १३ ॥

अथ तेषामुक्तमेव क्षत्रप्रजात्मकत्वमुपजीव्य तत्संख्यादिकं प्रशंसति–एक एष भवतीति । वैश्वानरस्यैकत्वेन

निरुक्त ऽएष भवति । निरुक्तमिव हि क्षत्रमनिरुक्ताऽइतरेऽनिरुक्तेव हि विट्तिष्ठन्नेतं जुहोति तिष्ठतीव हि क्षत्रमासीन ऽइतरानास्तऽइव हि विट् ॥ १५ ॥

( इतं ) तं वाऽएतम् । ( म्पु ) पुरोऽनुवाक्यवन्तं याज्यवन्तं वषट्कृते स्रुचा जुहोति हस्तेनैवेतरानासीनः स्वाहाकारेण क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति ॥ १६ ॥

तदाहुः । कथमस्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्तीत्येतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि

---

निरुक्त एष भवति । निरुक्तमिव हि क्षत्रम् । अनिरुक्ता इतरे । अनिरुक्तेव हि विट् । तिष्ठन्नेतं जुहोति । तिष्ठतीव हि क्षत्रम् । आसीन इतरान् । आस्त इव हि विट् ॥ १५ ॥

तं वा एतं पुरोऽनुवाक्यवन्तं याज्यवन्तं वषट्कृते स्रुचा जुहोति । हस्तेनैवेतरान्–आसीनः स्वाहाकारेण । क्षत्रायैव तद्–विशं कृतानुकरामनुवर्त्मानं करोति ॥ १६ ॥

तदाहुः–कथमस्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्तीति । एतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि सा त्रिपदा गायत्री पुरोऽनुवाक्या । अथ

---

तत्र जातिनिबन्धनं प्राधान्यमेकस्थमेव करोति । अत एव 'श्रियम्' अपि 'एकस्थाम्' करोति । बहुक्षत्रप्राधान्ये परस्परैकमत्याभावेन राष्ट्रविप्लवप्रसङ्गात् । मारुतानां बहुत्वेन प्रजायामेव 'भूमानम्' बहुत्वं निदधाति । प्रजां बह्वीकृतवान् भवति । भूमानमिति "बहोर्लोपो भू च बहोः"–( पा. सू. ६ । ४ । १५८ ) इति बहुशब्दाद्विहितस्येमनिच इकारस्य लोपः । प्रकृतेश्च भू इत्ययमादेशः ॥ १४ ॥

निरुक्तमिव हि क्षत्रमिति । स्वाज्ञया सर्वां प्रजामाक्रम्योच्चैर्वर्त्तमानत्वेन क्षत्रस्य निरुक्तत्वम् । प्रजायास्तु तदाज्ञाधीनत्वात् नीचैर्वृत्तेरनिरुक्तत्वम् । अत एव क्षत्रं तिष्ठतीव भवति । प्रजा त्वासीनेव भवति ॥ १५ ॥

"वैश्वानरं जुहोति, मारुतान् जुहोति"–इति होममात्रविधानात्तत्र विशेषं विधाय प्रशंसति–तं वा एतमिति । पुरोऽनुवाक्यवन्तं याज्यवन्तमिति । छान्दसो ह्रस्वः । तमेव वैश्वानरं कीदृशं पुरोऽनुवाक्यवन्तं याज्यवन्तम् । होत्रा वषट्कृते जुह्वा जुहुयात् । इतरान्मारुतान् आसीनो हस्तेन स्वाहाकारेण जुहुयात् । एवं च वैश्वानरस्य पुरोऽनुवाक्यासम्बन्धनिबन्धनेन यागत्वेन प्राधान्यादितरेषां तु तद्वैलक्षण्येनोपसर्जनत्वात् प्रजां क्षत्राय कृतानुकारिणीमनुगतवर्त्मानं च करोति ॥ १६ ॥

अथ मारुतानामुक्तप्रकारेण होमेन वैश्वानरवद्यागसंपत्तिर्घटते इति सा संपत्तिः कथं भवतीति प्रश्नपूर्वकं तां दर्शयति–तदाहुरिति । एतेषां वै सप्तपदानामिति । अत्र मारुतशब्देन तद्धोमसाधनभूताः "शुक्रज्योतिश्च"

---

१–इयं सप्तदशी कण्डिका कपुच्छलश्रुतिः दंडश्रुतिर्वा इत्युच्यते ।

सा त्रिपदा गायत्री पुरोऽनुवाक्याऽथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब्याज्येदमेव कपुच्छलमयं दण्डः स्वाहाकारो व्वषट्कारऽएवमु हास्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो व्वषट्कृते स्रुचा हुता भवन्ति ॥ १७॥

तद्यं प्रथमं दक्षिणतो मारुतं जुहोति । याः सप्त प्राच्यः स्रवन्ति ताः स स सप्तकपालो भवति सप्त हि ता याः प्राच्यः स्रवन्ति ॥ १८ ॥

( न्त्यु ) अथ यं प्रथममुत्तरतो जुहोति । ( त्सृ ) ऋतवः स स सप्तकपालो भवति सप्त ह्यृतवः ॥ १९ ॥

( वोऽथ ) अथ यं द्वितीयं दक्षिणतो जुहोति । पशवः स स सप्तकपालो भवति सप्त हि ग्राम्याः पशवस्तमनन्तर्हितं पूर्वस्माज्जुहोत्यप्सु तत्पशून्प्रतिष्ठापयति ॥ २० ॥

---

यानि चत्वार्युत्तमानि—सा चतुष्पदा त्रिष्टुप् याज्या । इदमेव कपुच्छलम् । अयं दण्डः । स्वाहाकारो वषट्कारः । एवमु हास्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्ति ॥ १७ ॥

तद् यं प्रथमं दक्षिणतो मारुतं जुहोति—याः सप्त प्राच्यः स्रवन्ति—ताः सः । स सप्तकपालो भवति । सप्त हि ताः—याः प्राच्यः स्रवन्ति ॥ १८ ॥

अथ यं प्रथममुत्तरतो जुहोति—ऋतवः सः । स सप्तकपालो भवति । सप्त हि ऋतवः ॥ १९ ॥

अथ यं द्वितीयं दक्षिणतो जुहोति—पशवः सः । स सप्तकपालो भवति । सप्त हि ग्राम्याः पशवः । तमनन्तर्हितं पूर्वस्माज्जुहोति । अप्सु तत्पशून्प्रतिष्ठापयति ॥ २० ॥

---

(वा.सं. १७।८०) इत्यादयो मन्त्राः विवक्ष्यन्ते ते च सप्तपदा भवन्ति । अतश्चैतेषां मन्त्राणां यानि त्रीणि 'प्रथमानि पदानि' सन्ति—' सा त्रिपदा गायत्री ' सैव ' पुरोऽनुवाक्या ' भवति । ' अथ यानि चत्वारि ' उपरितनानि पदानि सन्ति तानि ' चतुष्पदा त्रिष्टुप् ' । सैव ' याज्या ' भवति । ' इदमेव ' इति प्रसृतिरभिनयेन प्रदर्श्यते । कपुच्छलमिति स्रुचो मुखम् उच्यते । ' अयम् ' इति बाहुदण्डः प्रदर्श्यते । एवं बाहुरेव स्रुक् इत्युक्तं भवति । स्वाहाकार एव वषट्कारो भवति । इत्थमुक्तेन प्रकारेणास्याग्नेर्यजमानस्य च सम्बन्धिन एव मारुताः पुरोऽनुवाक्यावन्तो याज्यावंतो ' वषट्कृते स्रुचा हुता भवन्ति ' ॥ १७ ॥

अथ होमक्रमेण तान्मारुतान् प्रत्येकं नद्यादिरूपेण प्रशंसति—तद्यं प्रथममिति । ' प्राच्यः ' प्राङ्मुखाः पूर्वसमुद्रगामिन्यो गङ्गायमुनादयो याः ' सप्त ' नद्यः स्रवन्ति । ' ताः सः ' प्रथमं दक्षिणभागे हुतो मारुतः पुरोडाशः । स सप्तसु कपालेषु संस्कृतो भवति । या नद्यः प्राच्यः स्रवन्ति तासां सप्तसंख्याप्रदर्शनेन तस्य मारुतस्योक्तसंख्यनद्यात्मकत्वं समर्थ्यते । उत्तरत्र सर्वत्राप्येवमेव ॥ १८ ॥

अधिमासापेक्षया ' सप्तहि ऋतव ' इत्युक्तम् ॥ १९ ॥

अनन्तर्हितमिति । ' तम् ' द्वितीयं पुरोडाशं ' पूर्वस्मात् ' मारुताद् ' अनन्तर्हितम् ' अव्यवहितं तत्सम्बद्धं जुहुयात् । एवं पूर्वस्याबात्मकत्वादप्स्वेव पशून् प्रतिष्ठापयति ॥ २० ॥ २१ ॥

(त्यु) अथ यं द्वितीयमुत्तरतो जुहोति । सप्तऽऋषयः स स सप्तकपालो भवति सप्त हि सप्तऽर्षयस्तमनन्तर्हितं पूर्वस्माज्जुहोत्यृतुषु तदृषीन्प्रतिष्ठापयति ॥ २१ ॥

(त्यु) अथ यं तृतीयं दक्षिणतो जुहोति । प्राणाः स स सप्तकपालो भवति सप्त हि शीर्षन्प्राणास्तमनन्तर्हितं पूर्वस्माज्जुहोत्युनन्तर्हितांस्तच्छीर्ष्णः प्राणान्दधाति ॥ २२ ॥

(त्यु) अथ यं तृतीयमुत्तरतो जुहोति । छन्दाᳫँसि स स सप्तकपालो भवति सप्त हि चतुरुत्तराणि छन्दाᳫँसि तमनन्तर्हितं पूर्वस्माज्जुहोत्यनन्तर्हितानि तदृषिभ्यश्छन्दाᳫँसि दधाति ॥ २३ ॥

(त्यु)अथ याः सप्त प्रतीच्यः स्रवन्ति।सोऽरण्येऽनूच्यः स सप्तकपालो भवति सप्त हि ता याः प्रतीच्यः स्रवन्ति सोऽस्यैषोऽवाङ्प्राण ऽएतस्य प्रजापतेः

---

अथ यं द्वितीयमुत्तरतो जुहोति–सप्त ऋषयः सः । स सप्तकपालो भवति । सप्त हि सप्तर्षयः । तमनन्तर्हितं पूर्वस्माज्जुहोति–ऋतुषु तदृषीन्प्रतिष्ठापयति ॥ २१ ॥

अथ यं तृतीयं दक्षिणतो जुहोति–प्राणाः सः । स सप्तकपालो भवति । सप्त हि शीर्षन्प्राणाः । तमनन्तर्हितं पूर्वस्माज्जुहोति । अनन्तर्हितांस्तच्छीर्ष्णः प्राणान्दधाति ॥ २२ ॥

अथ यं तृतीयमुत्तरतो जुहोति–छन्दांसि सः । स सप्तकपालो भवति । सप्त हि चतुरुत्तराणि छन्दांसि । तमनन्तर्हितं पूर्वस्माज्जुहोति । अनन्तर्हितानि तदृषिभ्यश्छन्दांसि दधाति ॥ २३ ॥

अथ याः सप्त प्रतीच्यः स्रवन्ति–सोऽरण्येऽनूच्यः । स सप्तकपालो भवति । सप्त हि ताः–याः प्रतीच्यः स्रवन्ति । सोऽस्यैषोऽवाङ्प्राण एतस्य प्रजापतेः । सोऽरण्येऽनूच्यो भवति । तिर इव तद्–

---

अनन्तर्हितांस्तच्छीर्ष्णः प्राणान्दधातीति । पूर्वमारुतपुरोडाशस्य प्रथममारुतेन सम्बन्धात्तस्य च वैश्वानरेण सम्बन्धात् प्राणान् शिरसोऽनन्तर्हितानव्यवहितान् करोतीत्यर्थः ॥ २२ ॥

सप्त हि चतुरुत्तराणीति । चतुरक्षराधिकानि छन्दांसि सप्त भवन्ति । यद्यप्यवान्तरच्छन्दांसि बहूनि सन्ति तथापि चतुरक्षराधिकानि च्छन्दांसि सप्तैवेत्यर्थः । गायत्री चतुर्विंशत्यक्षरा, उष्णिक् पुनरष्टाविंशत्यक्षरा, अनुष्टुप् द्वात्रिंशदक्षरा, एवं बृहतीपङ्क्तित्रिष्टुब्जगत्यश्चतुरक्षराधिका भवन्ति ॥ २३ ॥

अथ या इति । 'सोऽस्यैषः' इत्यादिकस्याऽयमर्थः । 'सः' 'एषः' 'अरण्येऽनूच्यः' गणः 'अवाङ्' अधस्तनः 'प्राणः' इन्द्रियम् । अस्येति पदस्यैवार्थं विवृणोति–एतस्य प्रजापतेरिति । तरुगुल्मादिभूयिष्ठत्वेनाप्रका-

---

१–व्विमुखेनारण्येऽनूच्यम् । का० श्रौ० सू० १८ । ६३ ॥ अरण्येऽनूच्यमानः उग्रश्च भीमश्चेति मंत्रो विमुखसंज्ञः ।

सोऽरण्येऽनूच्यो भवति तिरऽइव तद्यदरण्यं तिरऽ इव तद्यदवाङ्प्राणस्तुस्माद्यऽएतासां नदीनां पिबन्ति रिप्रतराः शपनतरा ऽआहनस्य वादितरा भवन्ति तद्यद्यदेतदाहेदं मारुताऽ इति तदस्माऽअन्नं कृत्वाऽपिदधाति तेनैनं प्रीणाति ॥ २४ ॥

स यः स वैश्वानरः । ( रोऽसौ ) असौ स ऽआदित्योऽथ ये ते मारुता रश्मयस्ते ते सप्त सप्तकपाला भवन्ति सप्त सप्त हि मारुता गणाः ॥ २५ ॥

स जुहोति । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मां-

---

यदरण्यम् । तिर इव तद्–यदवाङ् प्राणः । तस्माद्य एतासां नदीनां पिबन्ति–रिप्रतराः, शपनतराः, आहनस्य वादितरा भवन्ति । तद् यद् यदेतदाह–इदं मारुता इति । तदस्मा अन्नं कृत्वाऽपिदधाति । तेनैनं प्रीणाति ॥ २४ ॥

स यः स वैश्वानरः–असौ स आदित्यः । अथ ये ते मारुताः–रश्मयस्ते । ते सप्त सप्तकपाला भवन्ति । सप्त सप्त हि मारुता गणाः ॥ २५ ॥

स जुहोति । "शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च "–

---

शत्वादरण्यं तिरोहितं भवति । अवाङ्प्राणोऽप्याच्छादितो भवति । अत एव अनेन तस्योक्तमवाङ्प्राणत्वं समर्थितम् । तस्मात्तदात्मिकानाम् 'एतासां नदीनां' कर्मणि षष्ठी; नदीः ये पिबन्ति । अथवा अप इत्यध्याहार्य तासामपो ये पिबन्ति, ते 'रिप्रतराः' रिप्रमिति पापमुच्यते । पापिष्ठाः । 'शपनतराः' अत्यर्थमुपालम्भनीयाः । आहनमिति नीचोक्तिरुच्यते । तस्या अत्यर्थं वादितरा भवन्तीति, मूत्ररूपत्वात्तासां नदीनां तदिदं पयः पिबन्तोऽतितरां नीचा भवन्तीत्यर्थः । उत्तरकण्डिकायाम् 'अथ ये ते मारुताः' इत्यभिधानेन द्रव्यदेवतासम्बन्धप्रतीतेः अन्नं सम्पाद्य 'अस्मै' प्रजापतये प्रतिपादयति तेनैनं प्रीणातीत्याह–तद्यद्यदेतदिति ॥ २४ ॥

अथ वैश्वानरमादित्यरूपेण मारुतांस्तु रश्मिरूपेण प्रशंसति–स यः स वैश्वानर इति । 'ते' च 'मारुताः' मरुद्गणसंख्यानुसारेण सप्तकपाला भवेयुरित्याह–ते सप्त सप्तकपाला इति । सप्त सप्त हीति । 'मारुता गणाः' सप्त सप्तकानि भवन्ति । एकोनपञ्चाशत्संख्याका मरुतः सप्तधा विभागेन सप्त समुदाया भवन्ति । अतस्तत्संख्यानुसारेण तत्पुरोडाशाः सप्त सप्तकपाला भवेयुः । ननु च पूर्वमेव "सप्तेतरे सप्तकपालाः" इत्यत्र तेनायमेवार्थोऽभिहितः किमिति स एवात्रोच्यत इति । नैतदस्ति, पूर्वं "यद्‌ वा अपि बहुकृत्वः" इत्यादिना सप्तधा विभागेन ते सर्वे सप्तैव भवन्तीति शिरसि सप्त प्राणान्निदधातीत्युक्तम् । ननु सप्तकपालानां सप्तत्वकरणमुक्तम् । अत्र पुनस्तत्करणमुच्यते ॥ २५ ॥

अथ मारुतानां होमे मन्त्रान्दर्शयति–स जुहोतीति । "शुक्रज्योतिश्च[1] चित्रज्योतिश्च सत्यज्योतिश्च

---

1–वैश्वानरे वैश्वानरं पृथं कृत्वा शुक्रज्योतिरिति प्रतिमंत्रम् । का० श्रौ० सू० १८ । ६२ ।

इति नामान्येषामेतानि मण्डलमेवैतत्सꣳस्कृत्याथास्मिन्नेतान्रश्मीन्नामग्राहं प्रतिदधाति ॥ २६ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ९ । २ । ३ ॥ (३–१)

अथातो वसोर्धारां जुहोति । (त्यु) अत्रैष सर्वोऽग्निः सꣳस्कृतः स एषोऽत्र वसुस्तस्मै देवाऽ एतां धारां प्रागृह्णंस्तयैनमप्रीणंस्तद्यदेतस्मै वसवऽएतां धारां प्रागृह्णंस्तस्मादेनां वसोर्धारेत्याचक्षते तथैवास्माऽअयमेतां धारां प्रगृह्णाति तयैनं प्रीणाति ॥ १ ॥

यद्वेवैतां वसोर्धारां जुहोति । (त्य) अभिषेकऽएवास्यैषऽएतद्वाऽएनं देवाः सर्वं कृत्स्नꣳ सꣳस्कृत्याथैनमेतैः कामैरभ्यषिञ्चन्नेतया वसोर्धारया तथैवैनमयमेतत्सर्वं कृत्स्नꣳ सꣳस्कृत्याथैनमेतैः कामैरभिषिञ्चत्येतया वसोर्धारयाऽऽज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचा तस्योक्तो बन्धुः ॥ २ ॥

---

( वा. सं. १७ । ८० ) इति । नामान्येषामेतानि । मण्डलमेवैतत्संस्कृत्य, अथास्मिन्नेतान् रश्मीन्नामग्राहं प्रतिदधाति ॥ २६ ॥

### अथ वसोर्धाराहोमः।

अथातो वसोर्धारां जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः । स एषोऽत्र वसुः । तस्मै देवा एतां धारां प्रागृह्णन् । तयैनमप्रीणन् । तद् यदेतस्मै वसव एतां धारां प्रागृह्णन्–तस्मादेनां वसोर्धारेत्याचक्षते । तथैवास्मा अयमेतां धारां प्रगृह्णाति । तयैनं प्रीणाति ॥ १ ॥

यद्वेवैतां वसोर्धारां जुहोति । अभिषेक एवास्यैषः । एतद्वा एनं देवाः सर्वं कृत्स्नं संस्कृत्य, अथैन-

---

ज्योतिष्मांश्च ". इत्यादिकैर्मन्त्रैरित्यर्थः । नामान्येषामिति । एतानि शुक्रज्योतिरित्यादीनि एषां रश्मीनां नामानि । वैश्वानरस्यादित्यात्मकत्वं मारुतानां च रश्म्यात्मकत्वं प्रागुक्तम् । अतश्चैतैर्नामभिर्होमे आदित्यमेव संस्कृत्याथास्मिन्मण्डले एतानुक्तनाम्नो रश्मीनवस्थापयति ॥ २६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ९–३–१ ) ॥

अथात इति । अत्रैष इति । प्रकृतत्वात् ' एतत् ' शब्देन चित्याग्निं परामृशति । ' धारां प्रागृह्णन् गृहीतया तया एनमप्रीणन् । ततः ' एतस्मै वसवे एतां धारां प्रागृह्णन् ' इति ' यत् ' ' तस्मादेनां वसोर्द्धारेत्याचक्षते ' ब्रह्मवादिन इति शेषः । अतो यजमानोऽपि अनेन होमेन तथैव करोति ॥ १ ॥

अथ पुनस्तामेव वसोर्द्धारां संस्कृताग्नेरभिषेकात्मना प्रशंसति–यद्वेवैतामिति । ' सर्वम् ' इत्येतस्यैव विव-

(व्वै) व्वैश्वानरꣳ हुत्वा । शिरो वै व्वैश्वानरः शीर्ष्णो वाऽअन्नमद्यतेऽथो शीर्षतो वाऽअभिषिच्यमानोऽभिषिच्यते मारुतान्हुत्वा प्राणा वै मारुताः प्राणैरु वाऽ अन्नमद्यतेऽथो प्राणेषु वाऽअभिषिच्यमानोऽभिषिच्यते ॥ ३ ॥

तद्वाऽअरण्येऽनूच्ये । व्वाग्वाऽअरण्येऽनूच्यो व्वाचो वाऽअन्नमद्यतेऽथो व्वाचा वाऽअभिषिच्यमानोऽभिषिच्यते तदेतत्सर्व्वं व्वसु सर्व्वे ह्येते कामाः सैषा व्वसुमयी धारा यथा क्षीरस्य वा सर्पिषो व्वैवमारम्भायैवेयमाज्याहुतिर्हूयते तद्यदेषा व्वसुमयी धारा तस्मादेनां व्वसोर्धारेत्याचक्षते ॥ ४ ॥

---

मेतैः कामैरभ्यषिञ्चन्–एतया वसोर्धारया । तथैवैनमयमेतत्सर्वं कृत्स्नं संस्कृत्य, अथैनमेतैः कामैरभिषिञ्चति–एतया वसोर्धारया । आज्येन पञ्चगृहीतेन औदुम्बर्या स्रुचा । तस्योक्तो बन्धुः ॥ २ ॥

वैश्वानरं हुत्वा । शिरो वै वैश्वानरः । शीर्ष्णो वाऽअन्नमद्यते । अथो शीर्षतो वा अभिषिच्यमानोऽभिषिच्यते । मारुतान्हुत्वा । प्राणा वै मारुताः । प्राणैरु वा अन्नमद्यते । अथो प्राणेषु वा अभिषिच्यमानोऽभिषिच्यते ॥ ३ ॥

तद्वा अरण्येऽनूच्ये । वाग्वा अरण्येऽनूच्यः । वाचो वा अन्नमद्यते । अथो वाचा वा अभिषिच्यमानोऽभिषिच्यते । तदेतत्सर्वं वसु । सर्वे ह्येते कामाः । सैषा वसुमयी धारा–यथा क्षीरस्य वा, सर्पिषो वा–एवमारम्भौयेवयमाज्याहुतिर्हूयते । तद् यदेषा वसुमयी धारा–तस्मादेनां वसोर्धारेत्याचक्षते ॥ ४ ॥

---

रणम्–' कृत्स्नम् ' इति । एतैः कामैरिति । "वाजश्च मे प्रसवश्च मे" इत्यादिमन्त्रोक्ता वाजादयः काम्यमानत्वात् कामशब्देनोच्यन्ते । तैश्च ' एतया वसोर्द्धारया ' च ' अभ्यषिञ्चन् ' । अत एवोपरिष्टान्मन्त्रान्व्याचक्षमाणोऽमुमेवार्थम् " अनेन च त्वाऽभिषिञ्चाम्यनेनेन चेत्येतत् " इत्याह । अत इदानींतनोऽपि यजमानस्तथैव कृतवान् भवति । विहिता वसोर्द्धारा ' आज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचा ' कर्तव्या । ' तस्य ' आज्यादिकस्य सर्वस्यापि ब्राह्मणं प्रागुक्तमित्याह–आज्येनेति ॥ २ ॥

अथैतस्या वैश्वानरहोमानन्तर्यं प्रशंसति–वैश्वानरं हुत्वेति । ' शीर्ष्णः ' इति तृतीयार्थे पञ्चमी ' उ ' इति निपातो वा गलादुपरितनस्य सप्तकस्य सर्वस्यापि शिरस्त्वान्मुखेनाद्यतेऽपि च शिरसा वाऽन्नमद्यते । किंच लोके अभिषिच्यमानः पुरुषः शिरस आरभ्यैवाभिषिच्यते । अतोऽस्य वैश्वानरस्य शिरस्त्वादन्नाभिषेकात्मिकाया वसोर्धाराया होमस्तद्धोमानन्तरमेव युज्यत इत्यर्थः । मारुतहोमानन्तर्यमप्युक्तप्रकारेणैव प्रशंसति–मारुतान्हुत्वेति । प्राणैरु वाऽ अन्नमद्यत इति । अन्नमिति शब्दादिन्द्रियार्थात्मकं भोग्यं वस्तु उच्यते । गतार्थमन्यत् ॥ ३ ॥

वसोर्धारां जुहोतीति स्थानविशेषानुपादानेन विधानादग्नौ यत्र कुत्रापि होमप्रसक्तावाह–तद्वा इति । तत्र वसोर्धाराविषयो होमोऽरण्येऽनूच्ये पुरोडाशे कर्तव्य इत्यर्थः । अत्र कात्यायनः–"वसोर्धारां जुहोत्यौदुम्बर्या

स॒ ऽआह । (हे) इ॒दं च॑ म॒ऽइ॒दं च॑ म॒ऽइ॒त्यनेन॑ च त्वा प्रीणाम्यनेन॑ चानेन॑ च त्वाऽभिषि॒ञ्चाम्यनेन॑ चेत्येत॒दथो॒ऽइ॒दं च॑ मे देहीदं च॑ म॒ऽइ॒ति सा य॒दैवैषा धाराऽग्निं प्रा॒प्नुयाद॒थैतद्य॒जुः प्र॒तिपद्येत ॥ ५ ॥

( तै ) एतद्वा॒ऽएनं दे॒वाः । ( ऽ ) ए॒तेना॒न्नेन प्रीत्वै॒तैः का॒मैरभिषि॒च्यैत॒या व॒सोर्धा॒रया॒ऽथैनमेतान्का॒मानयाचन्त ते॒भ्य ऽइ॒ष्टः प्री॒तोऽभिषिक्त ऽएता॒न्का॒मान्प्रा॒यच्छत्त॒थैवैनमय॒मेत॒देते॒ना॒न्नेन प्रीत्वै॒तैः का॒मैरभिषि॒च्यैत॒या व॒सोर्धा॒रया॒ऽथैनमेतान्का॒मान्याचते त॒स्मा॒ऽइ॒ष्टः प्री॒तोऽभिषिक्त॒ऽएतान्का॒मान्प्र॒यच्छति द्वौ द्वौ का॒मौ संयुनक्त्यु॒व्यवच्छेदाय य॒था व्योकसौ संयु॒ञ्ज्या॒दे॒वं य॒ज्ञेन कल्पन्तामि॒ति ॥ ६ ॥

---

स आह—इदं च म इदं च म इति । अनेन च त्वा प्रीणामि, अनेन च, अनेन च त्वाऽभिषिञ्चामि, अनेन चेत्येतत् । अथो इदं च मे देहि, इदं च म इति । सा यदैवैषा धाराऽग्निं प्राप्नुयाद्—अथैतद्यजुः प्रतिपद्येत ॥ ५ ॥

एतद्वा एनं देवा एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्य, एतया वसोर्धारयाऽथैनमेतान् कामानयाचन्त । तेभ्य इष्टः प्रीतोऽभिषिक्त एतान्कामान्प्रायच्छत् । तथैवैनमयमेतदेतेनान्नेन प्रीत्वा,

---

पञ्चगृहीतं सन्ततं यजमानोऽरण्येऽनूच्येऽग्निप्रोक्ते " (का. श्रौ. सू. १८ । ६६) इति । अथ तदेव वसोर्धारापदं प्रकारान्तरेण निर्वक्ति—तदेतत्सर्वमिति । यत एते सर्वे वाजादयः काम्यमानत्वात्कामाः अतः काम्यमानस्यैव वसुत्वात् तदेतत्सर्वं वाजादिकं ' वसु ' शब्देनोच्यते । तस्मात्तत्प्रतिपादकमन्त्रसाध्या 'एषा धारा' ' वसुमयी ' भवति । किञ्च ' यैवेयमाज्याहुतिर्हूयते ' ' एषा ' लोके ' यथा क्षीरस्य वा ' ' सर्पिषो वा ' ' धारा ' क्रियते । ' एवमारम्भाय ' एवमुपक्रमाय सम्पाद्यते इदानीं क्रियमाणेयमाहुतिः क्षीरादिधारावत् सम्पाद्यत इति धाराकारता प्रदर्श्यते । तथा चोक्तप्रकारेण ' एषा वसुमयी ' या ' धारा ' भवति । यत एवं ' तस्मादेनां वसोर्द्धारेत्याचक्षते ' ॥ ४ ॥

अथ प्रकृतहोमसाधनानां मन्त्राणां तात्पर्यार्थं दर्शयति—स आहेति । ' इदं च म इदं च म इति ' " वाजश्च मे प्रसवश्च मे "—इत्यादिमन्त्राणां निर्देशः । ' अनेन च ' इति ' अनेन चानेन च ' इत्यत्र हि—वाजादयो निर्दिश्यन्ते । हे अग्ने ! त्वाम् अनेन चानेन प्रीणामि । अग्ने ! त्वां वाजादिना ' अभिषिञ्चामि च ' किञ्च—इदं च मे देहीदं च मे देहीत्यर्थो मन्त्रैर्विवक्षित इत्यत आह—अथो इति । अतस्तदात्मकस्त्वं मे वाजादिं देहीत्ययमर्थोऽमीभिर्मन्त्रैर्विवक्षित इत्युक्तं भवति । अन्यत्र सर्वत्र मन्त्रान्ते कर्मकरणात्, तद्वदत्रापि होमप्रसक्तावाह—सा यदैवेति । प्रतिपद्येतेति । मन्त्रेण संपाद्यत इत्यर्थः ॥ ५ ॥

अथ कथमेषोऽर्थो मन्त्रैर्विवक्षित इत्यत आह—एतद्वा इति । एतया वसोर्द्धारयेति । वसोर्द्धारानाम " वाजश्च मे "—( वा. सं. १८ । १–२९ ) इत्यादिमन्त्रैः क्रियमाणा आज्यधारा । अतश्च वसोर्द्धारये-

---

१–वाजश्च म इत्यष्टानुवाकेन । इति सूत्रशेषः ।

(त्ये)एतद्धै देवाऽ अब्रुवन् । (न्के) केनेमान्कामान्प्रतिग्रहीष्यामऽ इत्यात्मु-नैवेत्यब्रुवन्यज्ञो वै देवानामात्मा यज्ञऽ उऽएव यजमानस्य स यदाह यज्ञेन कल्पन्तामित्यात्मना मे कल्पन्तामित्येवैतदाह॥७॥(काण्डस्यार्धम् २०१)॥

द्वादशसु कल्पयति । द्वादश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणात्यथो तावतैवैनमेतदन्नेनाभि-षिञ्चति चतुर्दशसु कल्पयत्यष्टासु कल्पयति दशसु कल्पयति त्रयो-दशसु कल्पयति ॥ ८ ॥

---

एतैः कामैरभिषिच्य, एतया वसोर्धारयाऽथैनमेतान्कामान्याचते । तस्मा इष्टः प्रीतोऽभिषिक्त एतान्कामान्प्रयच्छति । द्वौ द्वौ कामौ संयुनक्ति—अव्यवच्छेदाय । यथा व्योकसौ संयुञ्ज्याद्—एवं यज्ञेन कल्पन्तामिति ॥ ६ ॥

एतद्धै देवा अब्रुवन्—केनेमान्कामान्प्रतिग्रहीष्याम इति । आत्मनैवेत्यब्रुवन् । यज्ञो वै देवानामात्मा । यज्ञ उ एव यजमानस्य । स यदाह—यज्ञेन कल्पन्ताम् इति । आत्मना मे कल्पन्तामित्येवैतदाह ॥ ७ ॥

द्वादशसु कल्पयति । द्वादश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति । अथो तावतैवैनमेतदन्नेनाभिषिञ्चति । चतुर्दशसु कल्पयति, अष्टासु कल्पयति, दशसु कल्पयति, त्रयोदशसु कल्पयति ॥ ८ ॥

---

त्येतदेव विविच्य दर्शितम्—एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्येति । 'अथ' प्रीणनाभिषेकानन्तरम् 'एनम्' अग्निम् 'एतान्' वाजादीन् 'कामान्' 'अयाचन्त' ततः 'इष्टः' कृतयागः प्रीतो भूत्वा तेभ्यः 'एतान् प्रायच्छत्' अतः तथैव 'यजमानोऽपि' कुरुते । अत एतदनुसारेण मन्त्राणामुक्तविध एवार्थो विवक्षित इति भावः । मन्त्रेषु प्रत्येकं पर्यवसाने व्यवच्छेदः स्यादिति—तदभावाय द्वौ मन्त्रौ संयुंज्यादित्याह—द्वौ द्वाविति । यथेति । 'व्योकसौ' विभिन्नदेशस्थावाचार्यौ 'यथा' संयुज्येते 'एवम्' एतदपि संयोजनं भवति । मंत्रेषु तत्र तत्रावसानेषु यज्ञेन कल्पन्तामित्याम्नायते तस्येदानीमुपयोगमाह—यज्ञेन कल्पन्तामिति ॥ ६ ॥

यज्ञेन कल्पन्तामित्यत्र यज्ञशब्देनात्मनेत्यर्थो विवक्ष्यत इत्याह—एतद्धै देवा इति । पूर्वं देवाः "केनेमान्कामान्प्रतिग्रहीष्यामः" इति परस्परमुक्त्वा पश्चादात्मनैव प्रतिग्रहीष्याम इति निर्णीय 'अब्रुवन्' । 'देवानां' 'आत्मा' शरीरं यज्ञः खलु शरीरवत्सर्वभोगसाधनत्वात् । अतश्च यज्ञरूपेण देवाः कामान्प्रागृह्णन् इत्यर्थः । तद्वदेव यजमानस्यापि यज्ञ एव शरीरम् । एवं च यज्ञेन कल्पन्तामिति वचने मे आत्मनैवैते कामाः कल्पन्तामित्येवैतदुक्तं भवति ॥ ७ ॥

तद्वाक्यं द्वादशमन्त्रावसाने प्रयुञ्ज्यादित्याह—द्वादशसु कल्पयतीति । तत्र कल्पनं कथं कृत्स्नाग्निप्रीतिहेतुर्भवतीत्याह—द्वादश मासा इति । ननु सर्वत्र द्वादशस्वेव कल्पयेदिति नेत्याह—चतुर्दशसु कल्पयतीति॥८॥

(त्यु) अथार्धैन्द्राणि जुहोति । सर्वमेतद्यदर्धैन्द्राणि सर्वेणैवैनमेतत्प्रीणात्यथो सर्वेणैवैनमेतदभिषिञ्चति ॥ ९ ॥

(त्यु) अथ ग्रहाञ्जुहोति । यज्ञो वै ग्रहा यज्ञेनैवैनमेतदन्नेन प्रीणात्यथो यज्ञेनैवैनमेतदन्नेनाभिषिञ्चति ॥ १० ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ९-२-४ ॥ ( ३. २. ) ॥

इति द्वितीयप्रपाठकः समाप्तः ॥ ९-२ ॥

कण्डिकासंख्या ॥ ९४ ॥

---

अथोत्तरहोमाः ।

( १ ) अथार्धैन्द्राणि जुहोति । सर्वमेतद्-यदर्धैन्द्राणि । सर्वेणैवैनमेतत्प्रीणाति । अथो सर्वेणैवैनमेतदभिषिञ्चति ॥ ९ ॥

( २ ) अथ ग्रहान् जुहोति । यज्ञो वै ग्रहाः । यज्ञेनैवैनमेतदन्नेन प्रीणाति । अथो यज्ञेनैवैनमेतदन्नेनाभिषिञ्चति ॥ १० ॥

---

"वाजश्च मे प्रसवश्च मे" (वा.सं.१८।१-२९)-इत्यारभ्याष्टाभिरनुवाकैरेषा वसोर्धारा हूयते तत्रैकस्मिन्ननुवाके "अग्निश्च म इन्द्रश्च मे, सोमश्च म इन्द्रश्च मे" ( वा. सं. १८ । १६-१८ ) इत्यादयो मन्त्राः समाम्नाताः । तत्र द्वौ द्वौ संयुनक्तीति वचनेन द्वयोर्द्वयोरवसानविधानात् प्रतिमन्त्रं "इन्द्रश्च मे"-इत्येतदर्द्धं भवति । अतस्ते मन्त्रा अर्द्धेन्द्रशब्देनोच्यन्ते । अतश्च 'अथार्द्धेन्द्राणि' इत्यनेन तन्मन्त्रसाध्यं होमं स्तोतुमनुवदति-अथार्द्धेन्द्राणीति । अर्द्धेन्द्राणीति शब्दो मन्त्रवाक्यपरः तद्विशिष्टेन द्रव्यस्य होमादुपचारेणार्द्धेन्द्राणि जुहोतीत्युक्तम् । एवमुत्तरत्रापि । अर्धेन्द्रमन्त्रकरणकान्होमान्कुर्यादित्यर्थः । सर्वाधिपतित्वेन सर्वस्येन्द्रसंबंधादर्धेन्द्राणामपि सर्वत्वात्तत्करणकहोमे कृते सर्वेणैवान्नेनैनमग्निं प्रीणात्यभिषिञ्चति चेत्याह-सर्वमेतदिति ॥ ९ ॥

"अंशुश्च मे-रश्मिश्च मे" (वा. सं. १८ । १९-२१)-इत्यादयो मन्त्रा ग्रहप्रतिपादकत्वाद् ग्रहाः तत्साध्यमपि होममनूद्य प्रशंसति-अथ ग्रहानिति । यज्ञो वै ग्रहा इति । यज्ञसाधनत्वाद् ग्रहाणां यज्ञत्वम् ॥१०॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ९-३-२ ) ॥

# अथ तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।
# तृतीयेऽध्याये च तृतीयं ब्राह्मणम् ।

अथैतान्यज्ञक्रतूञ्जुहोति । (त्य) अग्निश्च मे घर्मश्च मऽइत्येतैरेवैनमेतद्यज्ञक्रतुभिः प्रीणात्यथोऽएतैरेवैनमेतद्यज्ञक्रतुभिरभिषिञ्चति ॥ १ ॥

(त्य) अथायुज स्तोमाञ्जुहोति । (त्ये) एतद्वै देवाः सर्वान्कामानाप्त्वाऽयुग्भि स्तोमैः स्वर्गं लोकमायंस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वाऽयुग्भि स्तोमैः स्वर्गं लोकमेति ॥ २ ॥

तद्वै त्रयस्त्रिᳪंशादिति । (त्य) अन्तो वै त्रयस्त्रिᳪंशोऽयुजाᳪंस्तोमानामन्ततऽ एव तद्देवाः स्वर्गं लोकमायंस्तथैवैतद्यजमानोऽन्ततऽ एव स्वर्गं लोकमेति ॥ ३ ॥

---

(३) अथैतान्यज्ञक्रतून् जुहोति । "अग्निश्च मे घर्मश्च मे"-(वा. सं. १८ । २२) इति । एतैरेवैनमेतद्यज्ञक्रतुभिः प्रीणाति । अथो एतैरेवैनमेतद्यज्ञक्रतुभिरभिषिञ्चति ॥ १ ॥

(४) अथायुज स्तोमाञ्जुहोति । एतद्वै देवाः सर्वान्कामानाप्त्वाऽयुग्भिः स्तोमैः स्वर्गं लोकमायन् । तथैवैतद्यजमानः सर्वान्कामानाप्त्वाऽयुग्भि स्तोमैः स्वर्गं लोकमेति ॥ २ ॥

तद्वै त्रयस्त्रिंशादिति । अन्तो वै त्रयस्त्रिंशः—अयुजां स्तोमानाम् । अन्तत एव तद्देवाः स्वर्गं लोकमायन् । तथैवैतद्यजमानोऽन्तत एव स्वर्गं लोकमेति ॥ ३ ॥

---

अथ पूर्ववद्यज्ञक्रतुमन्त्रसाध्यहोमं प्रशंसति—अथैतानिति ! "अग्निश्च मे घर्मश्च मे" (वा. सं. १८ । २२ । २३) इत्यादयो मन्त्रा यज्ञक्रतवः । तत्राग्न्यादिपदानां यज्ञक्रतुप्रतिपादकत्वात् ॥ १ ॥

"एका च मे तिस्रश्च मे" (वा. सं. १८ । २४) इत्यादयो मन्त्रा अयुजस्तोमाः तत्साध्यं होमं प्रशंसति—अथायुज इति । स्तोमशब्दः स्तोत्रीया आचष्टे ॥ २ ॥

अत्र च एकादिशब्दात्त्रयस्त्रिंशस्तोमस्यावधित्वं प्रतिपादयन्ति । "स्तोमे डविधिः पञ्चदशाद्यर्थम्" (पा. सू. ५ । ४ । ७३ वा.) इति त्रयस्त्रिंशच्छब्दात् डप्रत्यये—टिलोपे त्रयस्त्रिंशः इति भवति । 'अयुजां स्तोमानां' त्रयस्त्रिंशस्तोम एवान्तिमो भवति । ततः परस्यायुजस्तोमस्याभावात् । देवाश्च सर्वान् कामानाप्त्वा 'अन्ततः' 'स्वर्गं लोकं' गतवन्तः । अतश्च यजमानोऽपि त्रयस्त्रिंशस्तोमपर्यन्तं होमेन सर्वान् कामानाप्त्वा अन्ततः स्वर्गं लोकं प्राप्नोति ॥ ३ ॥

( त्यु ) अथ युग्मतो जुहोति । ( त्ये ) एतद्वै छन्दाᳪँस्यब्रुवन्यातयामा वाऽअयुज स्तोमा युग्मभिर्वयᳪँ स्तोमैः स्वर्गं लोकमयामेति तानि युग्मभि स्तोमैः स्वर्गं लोकमायंस्तथैवैतद्यजमानो युग्मभि स्तोमैः स्वर्गं लोकमेति ॥ ४ ।

तद्वाऽअष्टाचत्वारिᳪँशादिति । ( त्यु ) अन्तो वा ऽअष्टाचत्वारिᳪँशो युग्मताᳪँ स्तोमानामन्तत ऽएव तच्छन्दाᳪँसि स्वर्गं लोकमायंस्तथैवै-तद्यजमानोऽन्ततऽ एव स्वर्गं लोकमेति ॥ ५ ॥

सऽ आह । ( है ) एका च मे तिस्रश्च मे चतस्रश्च मेऽष्टौ च मऽइति यथा वृक्षᳪँ रोहन्नुत्तरामुत्तराᳪँ शाखाᳪँ समालम्भᳪँ रोहेत्तादृक्तद्यद्वेव स्तोमाञ्जुहोत्यन्नं वै स्तोमा ऽअन्नेनैवैनमेतदभिषिञ्चति ॥ ६ ॥

( त्यु ) अथ वयाᳪँसि जुहोति । पशवो वै वयाᳪँसि पशुभिरेवैनमे-तदन्नेन प्रीणात्यथो पशुभिरेवैनमेतदन्नेनाभिषिञ्चति ॥ ७ ॥

---

( ९ ) अथ युग्मतो जुहोति । एतद्वै छन्दांस्यब्रुवन्—यातयामा वा अयुजः । स्तोमाः, युग्मभिर्वयं स्तोमैः स्वर्गं लोकमयामेति । तानि युग्मभिः स्तोमैः स्वर्गं लोकमायन् । तथैवैतद्यजमानो युग्मभिः स्तोमैः स्वर्गं लोकमेति ॥ ४ ॥

तद्वा अष्टाचत्वारिंशादिति । अन्तो वा अष्टाचत्वारिंशो युग्मतां स्तोमानाम् । अन्तत एव तच्छन्दांसि स्वर्गं लोकमायन् । तथैवैतद्यजमानोऽन्तत एव स्वर्गं लोकमेति ॥ ५ ॥

स आह–" एका च मे तिस्रश्च मे "–" चतस्रश्च मेऽष्टौ च मे "–( वा. सं. १८ । २४–२५ ) इति । यथा वृक्षं रोहन्नुत्तरामुत्तरां शाखां समालम्भं रोहेत्–तादृक्तत् । यद्वेव स्तोमाञ्जुहोति । अन्नं वै स्तोमाः । अन्नेनैवैनमेतदभिषिञ्चति ॥ ६ ॥

( ६ ) अथ वयांसि जुहोति । पशवो वै वयांसि । पशुभिरेवैनमेतदन्नेन प्रीणाति । अथो पशु-भिरेवैनमेतदन्नेनाभिषिञ्चति ॥ ७ ॥

---

"चतस्रश्च मेऽष्टौ च मे" (वा. सं. १८ । २५)–इत्यादयो मन्त्राः युग्मतः, तन्मन्त्रसाध्यं होमं प्रशंसति-अथेति । पूर्वं छन्दांसि अयुजः । स्तोमाः सर्वत्र प्रयोगात् 'यातयामाः' अतश्च युग्मभूतैः स्तोमैः 'स्वर्गं लोकं' गमिष्याम इत्युक्त्वा तथैव अकुर्वन् । ततश्च युग्मतो होमेन तथैव यजमानोऽपि करोति ॥ ४ ॥

अत्रापि पूर्ववदवधिं प्रशंसति–तद्वा अष्टाचत्वारिंशादिति ॥ ५ ॥

अथ तत्रोत्तरोत्तरस्तोमपरिग्रहे वृक्षशाखारोहणक्रमेण तानेव द्विविधान् स्तोमान् स्तौति–स आहेति । अथ पुनस्तानेव स्तोमान् अन्नात्मना प्रशंसति–यद्वेव स्तोमानिति । अन्नसाधनत्वात्स्तोमानामन्नत्वम् ॥ ६ ॥

" त्र्यविश्च मे त्र्यवी च मे " ( वा. सं. १८ । २६ । २७ ) इत्यादयो मन्त्राः वयांसि एकहायन-

( त्यु ) अथ नामग्राहं जुहोति । ( त्ये ) एतद्वै देवाः सर्व्वान्कामानाप्त्वाऽथै-तमेव प्रत्यक्षमप्रीणंस्तथैवैतद्यजमानः सर्व्वान्कामानाप्त्वाऽथैतमेव प्रत्यक्षं प्रीणाति व्वाजाय स्वाहा प्रसवाय स्वाहेति नामान्यस्यैतानि नामग्राह-मेवैनमेतत्प्रीणाति ॥ ८ ॥

त्रयोदशैतानि नामानि भवन्ति । त्रयोदश मासाः संव्वत्सरस्त्रयोदशा-ग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रीणाति यद्वेव नामग्राहं जुहोति नामग्राहमेवैनमेतदभिषिञ्चति ॥ ९ ॥

( त्यु ) अथाह । ( हे ) इयं ते राण्मित्राय यन्ताऽसि यमनऽ ऊर्जे त्वा

---

(७) अथ नामग्राहं जुहोति । एतद्वै देवाः सर्वान्कामानाप्त्वा–अथैतमेव प्रत्यक्षमप्रीणन् । तथैवै-तद्यजमानः सर्वान्कामानाप्त्वा–अथैतमेव प्रत्यक्षं प्रीणाति । "वाजाय स्वाहा, प्रसवाय स्वाहा"–( वा. सं. १८ । २८ ) इति । नामान्यस्यैतानि । नामग्राहमेवैनमेतत्प्रीणाति ॥ ८ ॥

त्रयोदशैतानि नामानि भवन्ति । त्रयोदश मासाः संवत्सरः । त्रयोदशाग्नेश्चितिपुरीषाणि । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतत्प्रीणाति। यद्वेव नामग्राहं जुहोति । नामग्राहमेवैनमेतदभि-षिञ्चति ॥ ९ ॥

अथाह–" इयं ते राण्मित्राय यन्ताऽसि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां

---

प्रभृत्यापंचहायनात्पशवो वै वयांसि इत्युच्यन्ते, तत्र तेषां प्रतिपादनात् । ततस्तन्मन्त्रसाध्यं होमं प्रशंसति–अथ वयांसीति ॥ ७ ॥

" त्र्यविश्च मे त्र्यवी च मे " इत्यादिमन्त्राणामवसाने केचन " वाजाय स्वाहा " ( वा. सं. १८।२८ ) इत्यादयो मन्त्राः समाम्नाताः । तन्मन्त्रसाध्यं होमं प्रशंसति–अथेति । नामग्राहं जुहोतीति । नाम गृहीत्वा जुहुयात् । " नाम्न्यादिशिग्रहोः " ( पा. सू. ३ । ४ । ५८ ) इति नामशब्दे उपपदे ग्रहेर्णमुल् प्रत्ययः । पूर्ववदेव–" वाजश्च मे प्रसवश्च मे "–इत्यादिभिर्मन्त्रैः ' सर्वान्कामानाप्त्वा ' अथ तमेवाग्नि ' प्रत्यक्षमप्रीणन् ' अतश्चैतेन तथैव यजमानोऽपि करोति । अत्र " वाजाय स्वाहा " इत्यादिमन्त्रेषु तु चतुर्थ्या सम्प्रदानत्वप्रतीतेर्द्रव्यदेवतासम्बन्धः प्रत्यक्ष इति ' प्रत्यक्षमप्रीणन् ' इत्युक्तम् । न चैवं ' वाजश्च मे '–इत्यादिषु द्रव्यदेवतासम्बन्धः प्रत्यक्षः किन्तु प्रथमया निर्दिष्टत्वात्परोऽक्षः । ननु कानि नामानि यानि गृहीत्वा होमः क्रियत इति तत्राह–वाजाय स्वाहेति ॥ ८ ॥

अथ तेषां मन्त्राणां संख्या कृत्स्नाग्निप्रीतिहेतुर्भवतीति प्रशंसति–त्रयोदशैतानि नामानीति । ' त्रयो-दशाग्नेश्चितिपुरीषाणि ' सप्त चितयः सप्तमचितौ पुरीषाभावात् षडेव पुरीषाणीति मिलित्वा चितिपुरीषाणि त्रयोदश भवन्तीत्यर्थः । स्पष्टमन्यत् ॥ ९ ॥

वाजाय स्वाहेत्यादिमन्त्रहोमानन्तरम् " इयं ते राट् " इति मन्त्रस्य प्रयोगं विधत्ते–अथाहेति । मन्त्रे

व्वृष्ट्यै त्वा प्रजानां त्वाऽऽधिपत्यायेत्युन्नं वाऽऊर्ग्गन्नं व्वृष्टिरन्नेनैवैनमे-तत्प्रीणाति ॥ १० ॥

युद्वेवाह । (हे) इयं ते राणिमत्राय युन्ताऽसि युमनऽ ऊर्जे त्वा व्वृष्ट्यै त्वा प्रजानां त्वाऽऽधिपत्यायेतीदं ते राज्युमभिषिक्तोऽसीत्येतुन्मित्रस्य त्वं युन्ताऽसि युमनऽऊर्जे च नोऽसि व्वृष्ट्यै च नोऽसि प्रजानां च नऽआधिपत्यायासीत्युपब्रुवतऽएवैनमेतुदेतुस्मै नः सुर्व्वस्माऽअस्येतुस्मै त्वा सुर्व्वस्माऽ-अभ्यषिचामहीति तुस्माद्दु हेदं मानुषᳪं राजानमभिषिक्तमुपब्रुवते ॥ ११ ॥

---

त्वाऽऽधिपत्याय "–( वा० सं० १८ । २८ ) इति । अन्नं वा ऊर्क् । अन्नं वृष्टिः । अन्नेनैवैन-मेतत्प्रीणाति ॥ १० ॥

यद्वेवाह–इयं ते राणिमत्राय यन्ताऽसि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाऽऽधिपत्यायेति, इदं ते राज्यम्, अभिषिक्तोऽसीत्येतत् । मित्रस्य त्वं यन्ताऽसि यमन ऊर्जे च नोऽसि वृष्ट्यै च नोऽसि प्रजानां च न आधिपत्यायासि–इति । उपब्रुवत एवैनमेतत् । एतस्मै नः सर्वस्मा असि । एतस्मै त्वा सर्वस्मा अभ्यषिचामहि–इति । तस्माद्दु हेदं मानुषं राजानमभिषिक्तमुपब्रुवते ॥ ११ ॥

---

'ऊर्जे त्वा वृष्ट्यै' इति प्रयुज्यते । उर्क् इति साक्षादन्नमुच्यते, वृष्टिरन्नहेतुत्वादन्नम् । ततश्च 'ऊर्जे' 'वृष्ट्यै' इत्यनेनान्नस्य प्रतीतेरन्नेनैवैनमग्निं प्रीणातीत्याह–अन्नं वा इति ॥ १० ॥

अथ तमेव मन्त्रं व्याख्यातुमनुवदति–यद्वेवाहेति । व्याचष्टे– इदं इति । यतः 'अभिषिक्तोऽसि' अतः 'इदं राज्यम्' तवैवेत्येतदुक्तं भवति । 'इयं ते' इत्यनेनाभिषिक्तत्वादेव 'त्वं मित्रस्य यन्ताऽसि' किञ्च 'नः' अस्मत्संबन्धिनो यजमानस्य 'ऊर्जे च नः यमनोऽसि' यमयतीति यमनो नियन्ता । "कृत्यल्युटो बहुलम्"–(पा. सू. ३ । १ । ११३) इति कर्तरि ल्युट् । 'वृष्ट्यै च प्रजानामाधिपत्याय च' 'नोऽसि' इत्यनेन प्रकारेण 'एनम्' 'उपब्रुवते' एवं स्तुत्या प्रोत्साहयत्येवैनमेतेनेत्यर्थः । मन्त्रे 'ऊर्जे त्वा वृष्ट्यै त्वा' इति त्वाशब्दः प्रयुज्यते । तस्य कथमन्वय इति तत्राह–सर्वस्मा इति । 'अस्य' यजमानस्य 'एतस्मै' ऊर्जे अन्नभूताय 'सर्वस्मै' त्वाम् 'अभ्यषिचामहीति' संबन्ध इत्यर्थः । 'अभ्यषिचामहि' इति "आत्मनेपदेष्वन्यतरस्याम्"–(पा. सू. ३ । १ । ५४) इति च्लेरङादेशः । तदयं मन्त्रस्यार्थः । हे अग्ने ! त्वमभिषिक्तोऽसि, अतस्तवेदं राज्यं भवति । मित्रायेति षष्ठ्यर्थे चतुर्थी (पा. सू. २ । ३ । ६२ वा०) । मित्रस्य च नियन्ताऽसि यजमानस्य ऊर्जे त्वामभ्यषिचामहि, वृष्ट्यै च त्वामभ्यषिचामहि, प्रजानामाधिपत्याय च त्वामभ्यषिचामहि, अतस्तस्य सर्वस्यापि यमनोऽसि । यतः एतं देवानां राजानमग्निमुपब्रुवते तस्मात् 'अभिषिक्तं मानुषम्' अपि राजानमेवमुपब्रुवते इत्याह–तस्मादिति । तवेदं राज्यम् अतोऽस्माकं सर्वेषां सर्वविषये त्वमेव नियामक एक इत्येवमादि उपब्रुवते इत्यर्थः ॥ ११ ॥

(तेऽथ) अथ कल्पाञ्जुहोति । प्राणा वै कल्पाः प्राणानेवास्मिन्नेतद्दधात्यायुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामित्येतानेवास्मिन्नेतत्क्लृप्तान्प्राणान्दधाति ॥ १२ ॥

द्वादश कल्पाञ्जुहोति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतत्क्लृप्तान्प्राणान्दधाति यद्वेव कल्पाञ्जुहोति प्राणा वै कल्पाऽअमृतमु वै प्राणाऽअमृतेनैवैनमेतदभिषिञ्चति ॥ १३ ॥

(त्यु) अथाह । स्तोमश्च यजुश्चऽर्क्च साम च बृहच्च रथन्तरं चेति त्रयी हैषा विद्याऽन्नं वै त्रयी विद्याऽन्नेनैवैनमेतत्प्रीणात्यथोऽअन्नेनैवैनमेतदभिषिञ्चति स्वर्देवा ऽअगन्मामृताऽ अभूमेति स्वर्हि गच्छत्यमृतो हि भवति प्रजापतेः प्रजा ऽअभूमेति प्रजापतेर्हि प्रजा भवति वेट् स्वाहेति वषट्कारो

---

(८) अथ कल्पाञ्जुहोति । प्राणा वै कल्पाः । प्राणानेवास्मिन्नेतद्दधाति । "आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्"–( वा. सं. १८ । २९ ) इति । एतानेवास्मिन्नेतत्क्लृप्तान्प्राणान्दधाति ॥ १२ ॥

द्वादश कल्पाञ्जुहोति । द्वादश मासाः सम्वत्सरः । सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवास्मिन्नेतत्क्लृप्तान्प्राणान्दधाति । यद्वेव कल्पाञ्जुहोति । प्राणा वै कल्पाः । अमृतमु वै प्राणाः । अमृतेनैवैनमेतदभिषिञ्चति ॥ १३ ॥

अथाह । "स्तोमश्च यजुश्च ऋक्च साम च बृहच्च रथन्तरं च"–इति । त्रयी हैषा विद्या । अन्नं वै त्रयी विद्या । अन्नेनैवैनमेतत्प्रीणाति । अथो अन्नेनैवैनमेतदभिषिञ्चति ।

---

अथ कल्पहोमं प्रशंसति–अथ कल्पानिति । "कृपि" (धा. पा. भ्वा. आ. ७६३) धातुसाहित्येन मन्त्राणां कल्पशब्देनाभिधानम् । प्राणप्रतिपादकरूपत्वात् कल्पानां प्राणत्वमित्यभिप्रायेणोक्तम्–प्राणा वै कल्पाः इति । एतानेवास्मिन्निति । 'एतानेव' आयुरादीनेव कृत्स्नान् 'प्राणान्' 'अस्मिन्' अग्नौ निदधाति । प्राणानेवास्मिन्नेतद्दधातीति परोऽक्षेणोक्तान्–'एतानेवास्मिन्' इति प्रत्यक्षेण दर्शयति ॥ १२ ॥

कल्पहोमा द्वादश भवन्ति । अग्निश्च द्वादशमाससंवत्सरात्मकः, अतस्तत्संमितेनैवैतेनाग्निं प्रीणाति–इत्याह–द्वादश कल्पानिति । अथ तानेव कल्पान्प्रकारान्तरेण प्रशंसति–यद्वेव कल्पानिति । अमृतमु वै प्राणा इति । प्राणसंबन्धे मरणाभावात् प्राणाः अमृतं खल्वित्यर्थः ॥ १३ ॥

अथान्तिमं मन्त्रं व्याचष्टे-अथाह स्तोमश्चेति । त्रयी हैषा विद्येति । 'यजुश्च ऋक् च साम च' इत्युक्तत्वात् एतानि यजुरादीनि 'विद्या' खलु । 'एषा' इति स्त्रीलिङ्गम् 'त्रयी विद्या' इति विधेयापे-

हैष पुरोऽक्षं युद्वेट्कारो वुषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते तुदेनमेताभ्यामुभाभ्यां प्रीणाति वुषट्कारेण च स्वाहाकारेण चाथोऽएताभ्यामेवैनमेतदुभाभ्यामभिषिञ्चत्युत्र ताᳪ स्रुचमनुप्रास्यति यदत्राज्यलिप्तं तन्नेद्बहिर्धाऽग्नेरसदिति ॥ १४ ॥

तुस्यै वा ऽएतुस्यै वुसोर्धारायै । द्यौरेवात्माऽभ्रमूधो विद्युत्स्तुनो धारैव धारा दिवोऽधि गामागच्छति ॥ १५ ॥

तुस्यै गौरेवात्मा । (तुमो) ऊध ऽएवोध स्तुन स्तुनो धारैव धारा गोरधि यजमानम् ॥ १६ ॥

---

" स्वर्देवा अगन्मामृता अभूम "–इति । स्वर्हि गच्छति, अमृतो हि भवति । " प्रजापतेः प्रजा अभूम "–इति । प्रजापतेर्हि प्रजा भवति । " वेट् स्वाहा "–( वा. सं. १८ । २९ ) इति । वषट्कारो हैष परोऽक्षं–यद्वेट्कारः । वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते । तदेनमेताभ्यामुभाभ्यां प्रीणाति–वषट्कारेण च स्वाहाकारेण च । अथो एताभ्यामेवैनमेतदुभाभ्यामभिषिञ्चति । अत्र तां स्रुचमनुप्रास्यति–यदत्राज्यलिप्तम् । तन्नेद्बहिर्धाऽग्नेरसदिति ॥ १४ ॥

तस्यै वा एतस्यै वसोर्धारायै । द्यौरेवात्मा, अभ्रमूधः, विद्युत्स्तनः, धारैव धारा ( १ ) । दिवोऽधि गामागच्छति ॥ १५ ॥

तस्यै गौरेवात्मा, ऊध एवोधः, स्तनः स्तनः, धारैव धारा ( २ ) । गोरधि यजमानम् ॥ १६ ॥

---

क्षम् । त्रय्या विद्याया नानाविधफललक्षणस्यान्नस्य हेतोः कर्मणः प्रतिपादकत्वादन्नत्वम् । यतोऽस्मिन्नवसरे यजमानः स्वर्गं गच्छति, अमृतो भवति अत उच्यते मन्त्रेण सोऽर्थ इत्याह–स्वर्देवा इति । यतः सर्वा अपि ' प्रजाः ' प्रजापतेरेव सम्बन्धिन्यो भवन्ति, अतस्तमर्थमाहेति व्याचष्टे–प्रजापतेरिति । वेट्कारस्य परोऽक्षे वषट्कारत्वात् वषट्कारेण स्वाहाकारेण देवेभ्योऽन्नप्रदानत्वात् वेट् स्वाहेति प्रयोगेणोभाभ्यां वषट्कारस्वाहाकाराभ्याम् ' एनम् ' ' प्रीणाति ' ' अभिषिञ्चति च ' इत्याह–वेट्स्वाहेतीति । अस्मिन्नवसरे अग्नौ स्रुचम् प्रास्येदिति विधत्ते–अत्रेति । ' आज्यलिप्तम् ' लिप्तमाज्यम् " वाऽऽहिताग्न्यादिषु "–( पा. सू. २।२।३७ ) आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । अत्र स्रुचि यल्लिप्तमाज्यं तदग्नेर्बहिर्माऽस्त्विति तामौदुम्बरीं स्रुचमग्नौ ' अनुप्रास्यति ' प्रक्षिपेदित्यर्थः ॥ १४ ॥

अथैतस्या वसोर्द्धारायाः द्युलोकादिषु गवाकारताप्रदर्शनेन पर्यावृत्तिं दर्शयति–तस्यै वा एतस्या इति । तस्या एतस्या देवान् प्राप्ताया वसोर्द्धारायाः द्युलोक एवात्मा शरीरम् ' अभ्रम् ' मेघः स एव 'ऊधः' 'विद्युत्' एव ' स्तनः ' जलधारैव ' धारा ' उक्तप्रकारेण द्युलोके गवाकारा वसोर्द्धारा दिवः सकाशाद्गामभ्यागच्छति ॥ १५ ॥

तत्र तस्याः वसोर्द्धारायाः ' गौरेवात्मा ' ' ऊध एव ऊधः ' । ' स्तनः ' एव ' स्तनः ' ' धारैव ' क्षीरधारा । एवं गवि गवाकारा सा गौः गोः सकाशाद्यजमानमभ्यागच्छति ॥ १६ ॥

तस्यै यजमानऽ एवात्मा बाहुरूधः स्रुक्स्तनो धारैव धारा यजमाना-दधि देवान्देवेभ्योऽधि गां गोरधि यजमानं तदेतदनन्तमक्षय्यं देवाना-मन्नं परिप्लवते स यो हैतदेवं वेदैवꣳ हैवास्यैतदनन्तमक्षय्यमन्नं भव-त्यथातः सम्पदेव ॥ १७ ॥

तदाहुः । कथमस्यैषा वसोर्धारा संवत्सरमग्निमाप्नोति कथꣳ संव-त्सरेणाग्निना सम्पद्यतऽइति षष्टिश्च ह वै त्रीणि च शतान्येषा वसोर्धाराऽथ षडथ पञ्चत्रिंशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सर-स्याहानि तत्संवत्सरस्याहान्याप्नोत्यथ यानि षट्षड्वाऽऋतवस्तदृ-तूनाꣳ रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिꣳशत्स त्रयोदशो मासः सऽआत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिरऽएव पञ्चत्रिꣳशमेतावान्वै संवत्सरऽ एवमु हास्यैषा वसोर्धारा संवत्सरमग्निमाप्नोत्येवꣳ संवत्सरेणाग्निना सम्पद्यतऽएतावत्य ऽउ वै शाण्डिलेऽग्नौ मध्यतो यजुष्मत्यऽ इष्टकाऽ उपधीयन्तेऽग्नयो हैते पृथग्यु-देता ऽइष्टका ऽएवमु हास्यैतेऽग्नयः पृथग्वसोर्धारयाऽभिहुता भवन्ति॥१८॥

---

तस्यै यजमान एवात्मा, बाहुरूधः, स्रुक् स्तनः, धारैव धारा (३)। यजमानादधि देवान्। देवेभ्योऽधि गाम्। गोरधि यजमानम्। तदेतदनन्तमक्षय्यं देवानामन्नं परिप्लवते। स यो हैतदेवं वेद-एवं हैवास्यैतदनन्तमक्षय्यमन्नं भवति। अथातः सम्पदेव॥ १७॥

तदाहुः-कथमस्यैषा वसोर्धारा संवत्सरमग्निमाप्नोति, कथं संवत्सरेणाग्निना सम्पद्यत इति। षष्टिश्च ह वै त्रीणि च शतानि एषा वसोर्धारा, अथ षट्, अथ पञ्चत्रिंशत्। ततो यानि षष्टिश्च त्रीणि च शतानि-तावन्ति संवत्सरस्याहानि। तत्संवत्सरस्याहान्याप्नोति। अथ यानि षट्।

---

तत्र तस्या यजमान एव शरीरम्। यजमानसम्बन्धी बाहुरेवोधः। बाहुस्था स्रुगेव स्तनः। धारैव आज्य-धारा। एवं यजमाने च गवाकारा वसोर्द्धारा यजमानाद्देवानागच्छति। देवेभ्यो गाम्। गोश्च यजमानम्। पुन-रप्येवमेवागच्छति। एवञ्च एतद्वसोर्द्धारात्मकं देवानामन्नम् 'अनन्तम्' अत एव 'अक्षय्यम्' सत् 'परिप्ल-वते' पर्यावर्तते। यजमानेन हुता वसोर्द्धारा देवादीन् प्राप्नोति। तया प्रीता देवाश्च यजमानाय पशून् सम-र्पयन्ति। ततस्तद्भवमाज्यं यजमानमेति। तेन चाज्येन पुनर्देवेभ्यो वसोर्द्धारा हूयते। इत्यनेनाभिप्रायेण वसोर्द्धारा गवाकारेण पुनः पुनः पर्यावर्तत इत्युक्तम्। उक्तार्थवेदनं प्रशंसति-स यो हैतदेवं वेदेति। अथास्याः वसो-र्द्धारायाः सम्पत्तिमभिधातुं प्रतिजानीते-अथातः सम्पदेवेति॥ १७॥

षष्टिश्च ह वै त्रीणि चेति। आवृत्तमन्त्रसाहित्येन यजूंषि षष्टिश्चेत्यादिनोक्तसंख्यानि भवन्ति।

तदाहुः । कथमस्यैषा व्वसोर्धारा महदुक्थमाप्नोति कथं महतोक्थेन सम्पद्यत ऽइत्येतस्याऽएव व्वसोर्धारायै यानि नव प्रथमानि यजूꣳषि तत्त्रिवृच्छिरोऽथ यान्यष्टाचत्वारिꣳशत्तौ चतुर्विꣳशौ पक्षावथ यानि पञ्चविꣳशतिः स पञ्चविꣳश ऽआत्माऽथ यान्येकविꣳशतिस्तदेकविꣳशम्पुच्छमथ यानि त्रयस्त्रिꣳशत्स व्वशोऽथ याऽ अशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्ध्वमशीतिभ्यो यदेवादो महत ऽउक्थस्योर्ध्वमशीतिभ्यऽ एतदस्य तदेवम्मु हास्यैषा व्वसोर्धारा महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते ॥ १९ ॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ९।३।१ ॥ ( ३-२ )

---

षड्वा ऋतवः । तदृतूनां रात्रीराप्नोति । तदुभयानि संवत्सरस्याहोरात्राण्याप्नोति । अथ यानि पञ्चत्रिंशत् । स त्रयोदशो मासः । स आत्मा । त्रिंशदात्मा । प्रतिष्ठा द्वे । प्राणा द्वे । शिर एव पञ्चत्रिंशम् । एतावान् वै संवत्सरः । एवमु हास्यैषा वसोर्धारा संवत्सरमग्निमाप्नोति । एवं संवत्सरेणाग्निना सम्पद्यते । एतावत्य उ वै शाण्डिलेऽग्नौ मध्यतो यजुष्मत्य इष्टका उपधीयन्ते । अग्नयो हैते पृथग्–यदेता इष्टकाः । एवमु हास्यैतेऽग्नयः पृथग् वसोर्धारयाऽभिहुता भवन्ति ॥ १८ ॥

तदाहुः–' कथमस्यैषा वसोर्धारा महदुक्थमाप्नोति, कथं महतोक्थेन सम्पद्यते ' इति । एतस्या एव वसोर्धारायै यानि नव प्रथमानि यजूंषि–तत्त्रिवृच्छिरः । अथ यान्यष्टाचत्वारिंशत्-तौ चतुर्विंशौ पक्षौ । यानि पञ्चविंशतिः–स पञ्चविंश आत्मा । अथ यान्येकविंशतिः–तदेकविंशं पुच्छम् । अथ यानि त्रयस्त्रिंशत्–स वशः । अथ या अशीतयः–सैवाशीतीनामाप्तिः । अशीतिभिर्हि महदुक्थमाख्यायते । अथ यदूर्ध्वमशीतिभ्यो–यदेवादो महत उक्थस्योर्ध्वमशीतिभ्यः एतदस्य तत् । एवमु हास्यैषा वसोर्धारा महदुक्थमाप्नोति, एवं महतोक्थेन सम्पद्यते ॥ १९ ॥

---

' एतस्या एव वसोर्द्धारायै यानि नव प्रथमानि ' इत्यादिना वसोर्द्धारासंबन्धिनामुक्तसंख्याकानां यजुषां क्रमेण विभज्य विनियोगः प्रदर्श्यते । ' अथ यानि त्रयस्त्रिंशत्स वशः ' वशशब्देन प्रजोत्पत्तिस्थानमुच्यते । गतमन्यत् ॥ १८ ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ९–३–३ ) ॥

अथातो व्वाजप्रसवीयं जुहोति । ( त्यु ) अन्नं वै व्वाजोऽन्नप्रसवीयᳫँ हास्यैतदन्नमेवास्माऽएतेन प्रसौति ॥ १ ॥

(त्ये) एतद्वाऽ एनं देवाः । (ऽ) एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया व्वसोर्धारयाऽथैनमेतद्भूयऽएवाप्रीणंस्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया व्वसोर्धारयाऽथैनमेतद्भूय ऽएव प्रीणाति ॥ २ ॥

यद्वेवैतद्वाजप्रसवीयं जुहोति । (त्य) अभिषेक ऽएवास्यैष ऽएतद्वाऽएनं देवा ऽएतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया व्वसोर्धारयाऽथैनमेतद्भूयऽ एवाभ्यषिञ्चंस्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया व्वसोर्धारयाऽथैनमेतद्भूयऽ एवाभिषिञ्चति ॥ ३ ॥

सर्व्वौषधं भवति । सर्व्वमेतदन्नं यत्सर्व्वौषधᳫँ सर्व्वेणैवैनमेतदन्नेन प्रीणात्यथो सर्व्वेणैवैनमेतदन्नेनाभिषिञ्चति तेषामेकमन्नमुद्धरेत्तस्य नाश्नी-

---

अथ वाजप्रसवीयहोमः ।

अथातो वाजप्रसवीयं जुहोति । अन्नं वै वाजः । अन्नप्रसवीयं हास्यैतत्—अन्नमेवास्मा एतेन प्रसौति ॥ १ ॥

एतद्वा एनं देवा एतेनान्नेन प्रीत्वा, एतैः कामैरभिषिच्य, एतया वसोर्धारयाऽथैनमेतद्भूय एवाप्रीणन् । तथैवैनमयमेतदेतेनान्नेन प्रीत्वा, एतैः कामैरभिषिच्य, एतया वसोर्धारयाऽथैनमेतद्भूय एव प्रीणाति ॥ २ ॥

यद्वेवैतद्वाजप्रसवीयं जुहोति । अभिषेक एवास्यैषः । एतद्वा एनं देवा एतेनान्नेन प्रीत्वा, एतैः कामैरभिषिच्य, एतया वसोर्धारयाऽथैनमेतद्भूय एवाभ्यषिञ्चन् । तथैवैनमयमेतदेतेनान्नेन प्रीत्वा, एतैः कामैरभिषिच्य, एतया वसोर्धारयाऽथैनमेतद्भूय एवाभिषिञ्चति ॥ ३ ॥

सर्वौषधं भवति । सर्वमेतदन्नं—यत्सर्वौषधम् । सर्वेणैवैनमेतदन्नेन प्रीणाति । अथो सर्वेणैवैनमेतदन्नेनाभिषिञ्चति। तेषामेकमन्नमुद्धरेत्—तस्य नाश्नीयाद् यावज्जीवम् । औदुम्बरेण चमसेन । औदु-

---

अथ वाजप्रसवीयहोमं विधाय तत्प्रयोजनकथनद्वारा तस्य पदस्य प्रवृत्तिनिमित्तं दर्शयति—अथात इति । वाजप्रसवीयमिति कर्म नामधेयम् । 'वाजप्रसवीयं जुहोति' वाजप्रसवीयाख्यं होमं कुर्यादित्यर्थः । वाज-शब्देनान्नस्याभिधानादस्याग्नेरर्थे क्रियमाणमेतत्कर्म अन्नप्रसवीयम् । ततश्चैतेन कर्मणा अस्मा अग्नये सर्वमप्यन्नं 'प्रसौति' अनुजानाति 'सर्वौषधं भवति' ( उत्तरत्र ४ कं. ) इति वक्ष्यमाणत्वात् सर्वस्याप्यन्नस्य स्वामिनं करोतीत्यर्थः ॥ १ ॥

पूर्वं वसोर्धारया प्रीणितस्याभिषिक्तस्य च अग्नेरयं वाजप्रसवीयो होमो भूयः प्रीणनाभिषेकहेतुर्भवतीति प्रशंसति—एतद्वा इत्यादिना भूय एवाभिषिंचतीत्यन्तेन । विस्पष्टार्थमेतत् ॥ २ ॥ ३ ॥

प्रकृतहोमे द्रव्यविशेषं विधाय प्रशंसति—सर्वौषधमिति । प्रकृतं वाजप्रसवीयं हविः सर्वौषधं सर्वाभिरोषधीभिः

याद्यावज्जीवमौदुम्बरेण चमसेनौदुम्बरेण स्रुवेण तयोरुक्तो बन्धुश्चतुस्स्रक्ती भवतश्चतस्रो वै दिशः सर्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेन प्रीणात्यथो सर्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेनाभिषिञ्चति ॥ ४ ॥

यद्वेवैतद्वाजप्रसवीयं जुहोति । ( त्ये ) एता ह देवताः सुता ऽएतेन सवेन येनैतत्सोष्यमाणो भवति ऽता ऽएवैतत्प्रीणाति ताऽअस्माऽइष्टाः प्रीताऽ एतॐ सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निमभिषिञ्चत्यथो यदेताभ्यो देवताभ्यो जुहोति तदु तान्देवान्प्रीणाति यऽ एतस्य सवस्येशते ॥ ५ ॥

---

म्बरेण स्रुवेण । तयोरुक्तो बन्धुः । चतुःस्रक्ती भवतः । चतस्रो वै दिशः । सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेन प्रीणाति । अथो सर्वाभ्य एवैनमेतद्दिग्भ्योऽन्नेनाभिषिञ्चति ॥ ४ ॥

यद्वेवैतद्वाजप्रसवीयं जुहोति । एता ह देवताः सुता एतेन सवेन—येनैतत्सोष्यमाणो भवति—ता एवैतत्प्रीणाति । ता अस्मा इष्टाः प्रीता एतं सवमनुमन्यन्ते । ताभिरनुमतः सूयते । यस्मै वै राजानो राज्यमनुमन्यन्ते—स राजा भवति । न सः—यस्मै न । तद् यदग्नौ जुहोति—तदग्निमभिषिञ्चति । अथो यदेताभ्यो देवताभ्यो जुहोति-तदु तान् देवान् प्रीणाति—य एतस्य सवस्येशते ॥ ५ ॥

---

संपादितं भवति । अत्र सर्वौषधय इति सप्त ग्राम्याः सप्तारण्याः परिगृह्यन्ते । ताश्चितिस्थले बीजवापावसरेऽभिहिताः । लोके यत्किञ्चिद्वस्तु ग्राम्यमारण्यं वा भवति । अतश्चात्र तदुभय्योऽप्योषधयः परिगृह्यन्त इति सर्वमेतदन्नमित्युक्तम् । एवं च एतेन सर्वौषधसंपादितेन होमेन एनमग्निं सर्वेणैवान्नेन प्रीणात्येनमभिषिञ्चति च । तेषां चतुर्दशानामन्नानां मध्ये एकमन्नं परित्यजेत्, तदन्नं यावज्जीवं नाश्नीयादित्याह-तेषामिति । तस्येति व्यत्ययेन कर्मणि षष्ठी । अथ तत्रैव होमे पात्रविशेषं विधत्ते[1]—औदुम्बरेण चमसेनौदुम्बरेण स्रुवेणेति । प्रकृतं वाजप्रसवीयं जुहुयात् । अत्र स्रुवेणैव वाजप्रसवीयहोमः क्रियते न तु चमसेन । अथ पुनः संपातावनयनार्थमभिषेकार्थं च । अभिषेकस्य तत्संपाद्यत्वेन तदन्तःपातित्वविवक्षयौदुम्बरेण चमसेनेति चमसः करणत्वेनाम्नातः । तयोरुक्तो बन्धुरिति । तयोरौदुम्बरयोः स्रुवचमसयोर्ब्राह्मणं सप्तमकाण्डे ( श. प. ७ । ५ । १ । १९-२२ ) उलूखलमुसलोपधानविधानावसरेऽभिहितमिति यावत् । तयोः स्रुवचमसयोराकारविशेषं विधाय प्रशंसति—चतुःस्रक्ती भवत इति । दिग्भ्योऽन्नेनेति । दिग्भ्योऽभिसंपादितेनान्नेनेत्यर्थः ॥ ४ ॥

अथ पुनस्तमेव वाजप्रसवीयहोमं प्रकारान्तरेण प्रशंसति—यद्वेवैतदिति । अत्र सव इति सर्वाधिपत्यविषयं प्रेरणमुच्यते, तन्निमित्तत्वादभिषेकस्य तत्राभिषेके सवशब्दः पर्यवस्यति । येनैतदिति । 'एतत्' शब्देन अभिषेककालः परामृश्यते । एतस्मिन्काले 'एतेन सवेन' यजमानः 'सोष्यमाणो भवति' । एतेन सवेनैता

---

१—वाजप्रसवीयानि वप्रावत्संभृत्य चमसवत् स्रुवेण वाजपेयिकानि वाजस्येममिति । आग्निकानि च वाजस्य मिति । का. श्रौ. सू. १८ । ७० ।

( तेऽथ ) अथ वाऽएतत्पार्थान्यभि जुहोति । (त्ये) एतद्वै देवा ऽअकामयन्तात्रैव सर्व्वैः सवैः सूयेमहीति तेऽत्रैव सर्व्वैः सवैरसूयन्त तथैवैतद्यजमानोऽत्रैव सर्व्वैः सवैः सूयते ॥ ६ ॥

तद्यानि पार्थानि । तानि राजसूयस्य व्वाजप्रसवीयं तद्यत्तानि जुहोति तद्राजसूयेन सूयतेऽथ यानि चतुर्दशोत्तराणि ततो यानि सप्त पूर्व्वाणि तानि व्वाजपेयस्य व्वाजप्रसवीयं तद्यत्तानि जुहोति तद्वाजपेयेन सूयतेऽथ यानि सप्तोत्तराणि तान्यग्नेस्तद्यत्तानि जुहोति तदग्निसवेन सूयते ॥ ७ ॥

---

अथ वा एतत्पार्थान्यभि जुहोति । एतद्वै देवा अकामयन्त–अत्रैव सर्वैः सवैः सूयेमहीति । तेऽत्रैव सर्वैः सवैरसूयन्त । तथैवैतद्यजमानोऽत्रैव सर्वैः सवैः सूयते ॥ ६ ॥

तद्यानि पार्थानि–तानि राजसूयस्य वाजप्रसवीयम् । तद्यत्तानि जुहोति–तद्राजसूयेन सूयते । अथ यानि चतुर्दशोत्तराणि–ततो यानि सप्त पूर्वाणि–तानि वाजपेयस्य वाज·

---

मन्त्रप्रतिपादिता ' देवताः ' पूर्वं ' सुताः ' अभिषिक्ताः । अतश्च ' एतेन ' वाजप्रसवीयेन ' ताः ' एव देवताः ' प्रीणाति ' । ता वै देवताः ' इष्टाः ' अत एव ' प्रीताः ' सत्यः ' अस्मै ' यजमानाय ' एतम् ' उपरि क्रियमाणमभिषेकम् ' अनुमन्यन्ते ' अनुजानन्ति । ततस्ताभिरनुमतोऽभिषिच्यते । ननु चाभिषेके किमर्थमेतासां देवतानामनुज्ञां प्रेप्सति तत्राह–यस्मै वा इति । यतः ' राजानो ' ' यस्मै ' पुरुषाय ' राज्यमनुमन्यन्ते ' ' स राजा भवति ' । ' यस्मै ' पुनर्नानुमन्यन्ते ' स ' राजा ' न ' भवति । अतः पूर्वमभिषेकेण प्राप्तराज्यानां देवतानामनुपेक्षणायेत्यर्थः । ननु चायं होमोऽग्नेरभिषेकत्वेन संपाद्यत इति ( पूर्वत्र ३ कं. ) प्रागुक्तम्–" अभिषेक एवास्यैषः " इति । अत्र तु स एष होमोऽभिषेकानुमत्यर्थ इति अथवा पूर्वाभिषिक्तदेवताप्रीणनार्थ इति, कथमेतदित्यत आह–तद्यदग्नाविति । अग्नौ होमादेवाग्नेरभिषेकः सिद्धः । अथ एताभ्यो मन्त्रप्रतिपाद्याभ्यो देवताभ्यो होमेनाभिषेकाधिपतीन् देवान् प्रीणाति । एवं चोक्तमुभयमपि संगच्छते इति न कश्चिद्विरोधः ॥ ५ ॥

' अग्नये स्वाहा, सोमाय स्वाहा ' इत्यादिभिश्च षड्भिर्मन्त्रैः क्रियमाणा आहुतयः पार्थानि । तेषां च पृथिना दृष्टत्वात्पार्थत्वम् । अत एव तैत्तिरीयके श्रूयते–"पृथिर्वैन्यः । अभ्यषिच्यत । स राष्ट्रं नाभवत् । स एतानि पार्थान्यपश्यत् । तान्यजुहोत् । तैर्वै स राष्ट्रमभवत् । यत्पार्थानि जुहोति । राष्ट्रमेव भवति "– ( तै. ब्रा. १ । ७ । ७ । ३ ) इति । तानि पार्थानि प्रकृतस्य वाजप्रसवीयस्याभितो जुहुयादित्याह–अथवा एतदिति । किमर्थमेवं जुहुयात् इति तत्राह–एतद्वै देवा इति । पूर्वं देवा ' अत्रैव ' आग्निकाभिषेकावसरे ' एव ' ' सर्वैः ' सवैरभिषिच्येमहीत्यकामयन्त ततः अभ्यषिच्यन्त । ' तथैव ' यजमानोऽपि विहितप्रकारेण होमेनास्मिन्नेवावसरे तथैव सर्वैरभिषेकैरभिषिच्यते । अत्र ' सर्वैः सवैः सूयेमहीति ' लिङ्गा । " अथ यानि चतुर्दशोत्तराणि, ततो यानि सप्त पूर्वाणि, तानि वाजपेयस्य " इति सिद्धवदनुवादाच्च पूर्वं पार्थहोमानन्तरं " वाजश्च मे "–इत्यादिमन्त्रसाध्यं होमं जुहुयादिति विधिरुन्नेयः ॥ ६ ॥

पूर्वोक्तप्रकारेण होमेन सर्वाभिषेकसिद्धिः कथमिति तत्राह–तद्यानीति । यानि चतुर्दशोत्तराणीति ।

---

१–अग्नये स्वाहेति षट् पार्थानि जुहोति । का. श्रौ. सू. १८ । ६८ ।

स वै राजसूयस्य पूर्व्वाणि जुहोति । ( त्यु ) अथ व्वाजपेयस्य राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन राज्यमु वाऽअग्रेऽथ साम्राज्यं तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेत प्रत्यवरोहः स यथा सम्राट् सन्राजा स्यात्ताहक्तत् ॥ ८ ॥

( द ) अग्नेरुत्तमानि जुहोति । सर्व्वे हैते सवा यदग्निसवः सर्व्वᳬ हैतदग्निसवेन सुतो भवति राजा च सम्राट्च तस्मादग्नेरुत्तमानि जुहोति ॥ ९ ॥

---

प्रसवीयम् । तद्यत्तानि जुहोति–तद्वाजपेयेन सूयते । अथ यानि सप्तोत्तराणि–तान्यग्नेः । तद्यत्तानि जुहोति–तदग्निसवेन सूयते ॥ ७ ॥

स वै राजसूयस्य पूर्वाणि जुहोति । अथ वाजपेयस्य । राजा वै राजसूयेनेष्ट्वा भवति, सम्राड् वाजपेयेन । राज्यमु वा अग्रे, अथ साम्राज्यम् । तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेत । प्रत्यवरोहः सः । यथा सम्राट् सन्राजा स्यात्–ताहक्तत् ॥ ८ ॥

अग्नेरुत्तमानि जुहोति । सर्वे हैते सवाः–यदग्निसवः । सर्वं हैतदग्निसवेन सुतो भवति–राजा च, सम्राट् च । तस्मादग्नेरुत्तमानि जुहोति ॥ ९ ॥

---

' यानि चतुर्दशोत्तराणि ' कर्माणि सन्ति । ततश्च ' यानि सप्त पूर्वाणि ' ' वाजस्येमम् ' इत्यादिमन्त्रसाध्यानि कर्माणि तानि वाजपेयस्य वाजप्रसवीयं कर्म । अथ यानीति । यानि सप्त " वाजस्य नु प्रसवे " इत्यादिमन्त्रसाध्यानि कर्माणि तान्यपि अग्निचयनस्य वाजप्रसवीयम् । स्पष्टमन्यत् ॥ ७ ॥

अथ राजसूयवाजपेयसंबन्धिनां वाजप्रसवीयकर्मणां पौर्वापर्ये कारणमाह–स वै राजसूयस्येति । राजसूययागं कृत्वा राजा भवति । वाजपेययागं कृत्वा सम्राड् भवति । साम्राज्यं च राज्यानन्तरभावित्वेन ततोऽप्यधिकम् । तस्माद्वाजपेयं कृत्वा राजसूयं न कुर्यात् । तथा करणस्य प्रत्यवरोहक्रमत्वात् । तमेव दर्शयति–यथेति । यथा सम्राट् सन् पश्चात् राजा स्यात् तदपि तादृगिति । तस्माद्राजसूयवाजप्रसवीयकर्मणोः पौर्वापर्यमुपपन्नमित्यर्थः ॥ ८ ॥

अथाग्निकानामुत्तमत्वमुपपादयति–अग्नेरुत्तमानीति । ' अग्नेः ' सर्वात्मकत्वेन तत्समवायिनः सर्वे सवाः खलु । एवं च एतेनाग्निसवेन सर्वं सुतो भवति । सर्वशब्दार्थमेव दर्शयति–राजा च सम्राट्चेति । सर्वमिति सामान्योपक्रमत्वान्नपुंसकत्वम् । सर्वसवात्मकेनाग्निसवेन राजा च सम्राट् चेत्यस्य सर्वस्याभिषेको युज्यत इत्यभिहितः क्रमः प्रशस्त इत्यर्थः ॥ ९ ॥

---

१–ग्रामपतिर्देशपतिर्भवितुमुचितम् । न देशपतिर्भूत्वा पश्चाद्ग्रामपतिना भवितुमुचितमित्याह इति क. पुस्तकेऽधिकः पाठोऽत्र दृश्यते ।

( त्यु ) अथैनं कृष्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्णाजिनं यज्ञऽएवैनमेतदभिषिञ्चति लोमतश्छन्दाᳬंसि वै लोमानि च्छन्दःस्वेवैनमेतदभिषिञ्चत्युत्तरतस्तस्योपरि बन्धुः प्राचीनग्रीवे तद्धि देवत्रा ॥ १० ॥

तᳬं हैके दक्षिणतोऽग्नेरभिषिञ्चन्ति । दक्षिणतो वाऽअन्नस्योपचारस्तदेनमन्नस्यार्धादभिषिञ्चामऽइति न तथा कुर्यादेषा वै दिक्पितॄणां क्षिप्रे हैतां दिशं प्रैति यं तथाऽभिषिञ्चन्ति ॥ ११ ॥

---

अथाभिषेकः ।

अथैनं कृष्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्णाजिनम् । यज्ञ एवैनमेतदभिषिञ्चति । लोमतः । छन्दांसि वै लोमानि । छन्दःस्वेवैनमेतदभिषिञ्चति । उत्तरतः । तस्योपरि बन्धुः । प्राचीनग्रीवे । तद्धि देवत्रा ॥ १० ॥

तं हैके दक्षिणतोऽग्नेरभिषिञ्चन्ति । दक्षिणतो वा अन्नस्योपचारः । तदेनमन्नस्यार्धादभिषिञ्चाम इति । न तथा कुर्यात् । एषा वै दिक् पितॄणाम् । क्षिप्रे हैतां दिशं प्रैति—यं तथाऽभिषिञ्चन्ति ॥ ११ ॥

---

इत्थं सक्रमं पार्थहोममभिधायेदानीं यजमानस्य कृष्णाजिनेऽभिषेकं विधत्ते—अथेति । तत् कृष्णाजिनं यज्ञात्मना प्रशंसति—यज्ञो वा इति । कृष्णमृगरूपेण यज्ञस्य पलायनात् कृष्णाजिनस्य यज्ञत्वम् । तथा पलायनं तैत्तिरीयके श्रूयते—" यज्ञो देवेभ्यो निलायत कृष्णो रूपं कृत्वा "—( तै. सं. ६ । २ । ४ । १ ) इति । " कृष्णाजिनेऽभिषिञ्चति " इति सामान्येन विधानान्निर्लोमप्रदेशे कदाचिदभिषेकः स्यादिति कस्यचित्प्रतिपत्तिं निवारयितुं विधत्ते—लोमत इति । छन्दांसि वा इति । छन्दसामृक्सामनिष्ठत्वादृक्सामयोश्च कृष्णमृगरूपेणापक्रमणात् कृष्णाजिनसंबद्धानि लोमानि च्छन्दांसि । अतश्च लोमतोऽभिषेके ' छन्दःस्वेवैनमभिषिञ्चति ' । ऋक्सामयोः कृष्णमृगरूपेणापक्रमणं तैत्तिरीयके श्रूयते " ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने कृष्णो रूपं कृत्वाऽपक्रम्यातिष्ठताम् " ( तै. सं. ६।१।३।१ ) इति । स च विहिताभिषेक उत्तरभागे कर्तव्य इत्याह—उत्तरत इति । ' एषा होभयेषां देवमनुष्याणाम् ' इत्यादिना तस्य ब्राह्मणमुपरिष्टाद्वक्ष्यते ( उत्तरत्र कं. १३ ) इत्याह—तस्योपरि बन्धुरिति । कृष्णाजिनस्य संस्थानविशेषं विधाय प्रशंसति—प्राचीनग्रीव इति । प्राच्या देवसंबन्धित्वं तैत्तिरीयके श्रूयते—" प्राचीनवंशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः " ( तै. सं. ६ । १ । १ । १ ) इति ॥ १० ॥

अथाभिषेकस्थानविषये सोपपत्तिकं केषांचिच्छाखिनां मतमनूद्य निरस्यति—तं हैके दक्षिणत इति । दक्षिणभागे स्थित्वा होमकरणादन्नस्योपचारो दक्षिणतः खलु, अतश्च अन्नस्यार्द्धात्प्रदेशात् अन्नप्रदेशमाश्रित्यैनमभिषिञ्चाम इत्यभिप्रायेणैके शाखिनोऽग्नेर्दक्षिणतस्तं यजमानमभिषिञ्चन्ति । 'तथा न कुर्यात्' । कुतः 'एषा'

( न्त्या ) आहवनीयऽउ हैकेऽभिषिञ्चन्ति । स्वर्गो वै लोकु ऽआहवनीय-स्तदेनᳯ स्वर्गे लोकेऽभिषिञ्चाम ऽइति न तथा कुर्याद्दैवो वाऽअस्यैषुऽ आत्मा मानुषोऽयमनेन हास्य ते मर्त्येनात्मनैतं दैवमात्मानमनुप्रसजन्ति यं तथाऽभिषिञ्चन्ति ॥ १२ ॥

( न्त्यु ) उत्तरतऽ एवैनमभिषिञ्चेत् । ( दे ) एषा ह्युभयेषां देवमनुष्याणां दिग्यदुदीची प्राची स्वायामेवैनमेतद्दिश्यायत्तं प्रतिष्ठितमभिषिञ्चति न वै स्वऽआयतने प्रतिष्ठितो रिष्यति ॥ १३ ॥

---

आहवनीय उ हैकेऽभिषिञ्चन्ति । स्वर्गो वै लोक आहवनीयः । तदेनं स्वर्गे लोकेऽभिषिञ्चाम इति । न तथा कुर्यात् । दैवो वाऽअस्यैष आत्मा, मानुषोऽयम् । अनेन हास्य ते मर्त्येनात्मनैतं दैवमात्मानमनुप्रसजन्ति—यं तथाऽभिषिञ्चन्ति ॥ १२ ॥

उत्तरत एवैनमभिषिञ्चेत् । एषा ह्युभयेषां देवमनुष्याणां दिक्—यदुदीची प्राची । स्वायामेवैन-मेतद्दिश्यायत्तं प्रतिष्ठितमभिषिञ्चति । न वै स्व आयतने प्रतिष्ठितो रिष्यति ॥ १३ ॥

---

दक्षिणा दिक् ' पितृणां ' सम्बन्धिनी भवति । अतस्तथा दक्षिणभागे यमभिषिञ्चन्ति स शीघ्रमेवैतां दिशं प्राप्नु-यादित्यर्थः ॥ ११ ॥

तथैवान्येषामपि मतमनूद्य निरस्यति—आहवनीय उ हैक इति । आहवनीयशब्दोऽग्नौ मुख्यः । एवं चाग्नाववस्थानस्य दुष्करत्वात् गङ्गायां घोष इत्यत्र गङ्गाशब्दवदत्राहवनीयशब्दोऽपि स्वसमीपं लक्षयति । आहवनीयस्य स्वर्लोकत्वं गार्हपत्याद्यपेक्षया परत्वात् । दैवो वा इति । ' अस्य ' यजमानस्य ' एषः ' आह-वनीयो देवसम्बन्धी ' आत्मा ' । अग्निचयनेन यजमानस्याग्नित्वप्राप्तेः । अयमिति च यजमानो निर्दिश्यते । अयं पुनर्मानुष आत्मा । एवं चाहवनीयसमीपेऽभिषिञ्चन्तस्ते ऋत्विजोऽस्य यजमानस्य दैवमात्मानम् ' मर्त्येन ' ' आत्मना ' ' अनुप्रसजन्ति ' मेलयन्ति द्वावप्यात्मानौ संकीर्णौ कुर्वन्तीत्यर्थः ॥ १२ ॥

मा भूद्दक्षिणभागे आहवनीये वाऽभिषेकः । कुत्र तर्हि तस्य करणमित्यत आह—उत्तरत एवैनमिति । ननु त्वदभिमतायामुत्तरस्यां दिश्यभिषेके को वा गुणो लभ्यत इत्यत आह—एषा ह्युभयेषामिति । उदीची प्राचीति । गार्हपत्याद्यपेक्षयोदीच्येव प्राची भवतीत्येवमुक्तम् । गार्हपत्याद्यपेक्षया प्राचीत्वसम्पादनस्यायमाशयः । अभि-षेक्तव्ययजमानस्य द्वौ दैवमानुषावात्मानौ विद्येते । प्राच्युदीच्यौ च देवमनुष्यसम्बन्धिन्यौ । एवं च देव-मनुष्यात्मकस्य यजमानस्याभिषेकस्तत्सम्बन्धिन्योर्दिशोः कर्तव्य इति । ' आयत्तम् ' इत्यस्यार्थकथनं ' प्रति-ष्ठितम् ' इति । स्वायामेवैनमेतद्दिशीति । दिशोऽत्र धनत्वेन विवक्षितत्वात् " स्वमज्ञातिधनाख्यायाम् " ( पा० सू० १।१।३५ ) इति पर्युदासेन स्वशब्दस्य धनाख्यायां सर्वनामसंज्ञावैधुर्येण ' स्वायाम् ' इत्यत्र स्याडागमाभावः । न वै स्व आयतन इति । अत्राप्येवमेव स्मिन्नादेशाभावः । न रिष्यतीति । न विनश्ये-दित्यर्थः ॥ १३ ॥

( त्या ) आसीनं भूतमभिषिञ्चेत् । ( द्वा ) आस्तऽइव वै भूतस्तिष्ठन्तं बुभूषन्तं तिष्ठतीव वै बुभूषन्बस्ताजिने पुष्टिकाममभिषिञ्चेत्कृष्णाजिने ब्रह्मवर्चसकाममुभयोरुभयकामं तदुत्तरतः पुच्छस्योत्तरलोम प्राचीनग्रीवमुपस्तृणाति ॥ १४ ॥

( त्या ) आस्पृष्टं परिश्रितः । ( स्त ) तद्यत्कृष्णाजिनमास्पृष्टं परिश्रितो भवति तथो हास्यैष दैव ऽआत्मा कृष्णाजिनेऽभिषिक्तो भवत्यथ यदेनमन्वारब्धमग्निं तिष्ठन्तमभिषिञ्चति तथा हैतस्माद्दैवादभिषेकान्न व्यवच्छिद्यते ॥ १५ ॥

---

आसीनं भूतमभिषिञ्चेत् । आस्त इव वै भूतः । तिष्ठन्तं बुभूषन्तम् । तिष्ठतीव वै बुभूषन् । बस्ताजिने पुष्टिकाममभिषिञ्चेत् । कृष्णाजिने ब्रह्मवर्चसकामम् । उभयोरुभयकामम् । तदुत्तरतः पुच्छस्योत्तरलोम प्राचीनग्रीवमुपस्तृणाति ॥ १४ ॥

आस्पृष्टं परिश्रितः । तद्-यत्कृष्णाजिनमास्पृष्टं परिश्रितो भवति-तथो हास्यैष दैव आत्मा कृष्णाजिनेऽभिषिक्तो भवति । अथ यदेनमन्वारब्धमग्निं तिष्ठन्तमभिषिञ्चति-तथा हैतस्माद्दैवाद-भिषेकान्न व्यवच्छिद्यते ॥ १५ ॥

---

अथ प्राप्तैश्वर्यस्य प्राप्स्यमानैश्वर्यस्य च यजमानस्याभिषेकसंस्थानविशेषं विधत्ते-आसीनं भूतमिति[1] । 'भूतः' प्राप्तैश्वर्यः । सर्वैश्वर्येषु प्राप्तेषु प्रयत्नवैधुर्येणासीन इव भवतीति तम् 'आसीनम् अभिषिञ्चेत्' । ऐश्वर्यं प्राप्तुमिच्छन् बुभूषन् स चोक्तवैपरीत्येन 'तिष्ठन्निव' भवतीति तिष्ठन्तं तमभिषिञ्चेदित्यर्थः । फल-विशेषानुरोधेन धर्मविशेषेऽभिषेकं विधत्ते-बस्ताजिने पुष्टिकाममिति[2] । उत्तरत एवैनमभिषिञ्चेदित्युत्तर-दिङ्मात्रं विहितम् । ततश्च तत्र विवक्षितस्थानादन्यदपि प्रसज्यत इति विवक्षितस्थानसंस्थानविशेषविशिष्टं कृष्णाजिनास्तरणं विधत्ते-उत्तरतः पुच्छस्येति । अग्नेः पुच्छभागस्योत्तरतः ॥ १४ ॥

आस्पृष्टं परिश्रित इति । 'परिश्रितः' इति तृतीयार्थे षष्ठी । आङीषदर्थे । 'परिश्रितः' किञ्चित्स्पृष्ट-मित्यर्थः । कृष्णाजिनस्य परिश्रितां स्पर्शो यजमानसंबन्धिदैवात्माऽभिषेकहेतुर्भवतीति प्रशंसति-तद्यदिति । प्रकारान्तरेणापि दैवस्यात्मनोऽभिषेकं सिद्धं दर्शयति-अथ यदेनमिति । 'अग्निम्' 'अन्वारब्धम्' स्पृष्ट-वन्तम् तिष्ठन्तमभिषिञ्चतीति यत् तेनासौ यजमानो 'दैवादभिषेकात् न व्यवच्छिद्यते' दैवात्मसंब-न्धिनोऽभिषेकान्न परिक्षीयते-स्वकीयदैवात्मनोऽग्नेः संस्पर्शेनाभिषेकसंबन्धादित्यर्थः ॥ १५ ॥

---

१-स्रुवं प्रास्य परिश्रित्स्पृक्कृष्णाजिनमास्तीर्य पुच्छादुत्तरः शेषेऽपः कृत्वा । अभिषेकसामर्थ्यात् । क्षीरोदके वा व्वाजपेयि-कानीति श्रुतेः । तत्राभिषिच्यते ब्रह्मवर्चसकामाश्वित्यन्वारब्धो देवस्य त्वेति । तिष्ठन् बुभूषुः । भूत उपविष्टः । का० श्रौ० सू० १८ । ७१-७६ । २-बस्तचर्मणि पुष्टीच्छुः । उभयेच्छुरुभयोः । एके दक्षिणतश्चित्ये वा । का. श्रौ. सू. १८ । ७७-७९ ॥

(तेऽग्नौ)अग्नौ हुत्वाऽथैनमभिषिञ्चति। दैवो वाऽअस्यैषऽआत्मा मानुषोऽयं देवाऽ उ वाऽअग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाऽथैनं तस्यैव परिशिष्टेनाभिषिञ्चत्यत्र तथ्ँ स्रुवमनुप्रास्यति ॥ १६ ॥

( त्यु ) अथैनं दक्षिणं बाहुमनुपर्यावृत्याभिषिञ्चति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याथ्ँ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामीति वाग्वै सरस्वती तस्याऽ इदथ्ँ सर्वं यन्त्रथ्ँ सवितृप्रसूतऽ एवैनमेतदनेन सर्वेण सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चत्यत्र तं चमसमनुप्रास्यति यदत्र विलिप्तं तन्नेद्बहिर्धाऽग्नेरसदिति ॥ १७ ॥

---

अग्नौ हुत्वाऽथैनमभिषिञ्चति । दैवो वा अस्यैष आत्मा, मानुषोऽयम् । देवा उ वा अग्रे, अथ मनुष्याः । तस्मादग्नौ हुत्वाऽथैनं तस्यैव परिशिष्टेनाभिषिञ्चति । अत्र तं स्रुवमनुप्रास्यति ॥ १६ ॥

अथैनं दक्षिणं बाहुमनुपर्यावृत्याभिषिञ्चति । "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि"– (वा. सं. १८ । ३७ ) इति । वाग्वै सरस्वती । तस्या इदं सर्वं यन्त्रम् । सवितृप्रसूत एवैनमेतदनेन सर्वेण सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चति । अत्र तं चमसमनुप्रास्यति । यदत्र विलिप्तम्–तन्नेद्बहिर्धाऽग्नेरसदिति ॥ १७ ॥

---

अग्नेर्यजमानदैवात्मत्वमुपजीव्य पार्थादिहोमस्याऽभिषेकस्य च पौर्वापर्यमुपपादयति–अग्नौ हुत्वेति । तस्यैव परिशिष्टेनेति । तस्यैव हुतद्रव्यस्य परिशिष्टेनांशेनाभिषिञ्चति । अस्मिन्नवसरे तमौदुम्बरं होमसाधनभूतं स्रुवमनुप्रास्येत् तत्कार्यस्य होमस्य सम्पन्नत्वादित्याह–अत्रेति ॥ १६ ॥

अथास्य यजमानस्य " देवस्य त्वा " इत्यादिना मन्त्रेणाभिषेकमाह–अथेति । स्रुवस्यानुप्रासनं होमानन्तरमेव कृत्वा पश्चात्कृष्णाजिनास्तरणादिकं क्रियते । अत एव कात्यायनः–" स्रुवं प्रास्य परिश्रित्स्पृक्कृष्णाजिनमास्तीर्य"(का.श्रौ.सू.१८।७१–७२) इति । एवं चात्राथशब्देन कृष्णाजिनास्तरणादिकार्यानन्तर्यमुच्यते । दक्षिणं बाहुमनुपर्यावृत्येति । यजमानस्य दक्षिणबाहुसमीपं गत्वेत्यर्थः । अभिषेकमन्त्रं व्याचष्टे–वाग्वै सरस्वतीति । तस्या वागात्मिकायाः सरस्वत्या इदं सर्वमपि जगत् यन्त्रं नियम्यं भवति । सर्वस्यापि वाग्विषयस्यैव सतो व्यवहारार्हत्वात् । एवं च सति सवितुर्देवस्यानुज्ञया अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां ' यन्तुः ' इति क्लीबभावश्छान्दसः । नियन्त्र्या वाग्रूपायाः सरस्वत्या नियम्येन समस्तजगल्लक्षणेनाग्नेः साम्राज्येन हेतुना त्वामभिषिञ्चामीति मन्त्रस्यार्थः । एतन्मंत्रप्रयोगादध्वर्युः सवितृप्रसूत एव अनेन सर्वेण सर्वजगदात्मकेन नियन्त्र्या वाग्रूपायाः सरस्वत्या नियम्येनाग्नेः साम्राज्येन हेतुनाऽभिषिक्तवान्भवति । अभिषेकार्थत्वाच्चमसस्येदानींतनस्य चाभिषेकलक्षणकार्यस्य निष्पन्नत्वात्तं चमसमग्नौ प्रक्षिपेदित्याह–अत्र तं चमसमिति । अन्यत्राप्रक्षेपेणाग्नावेव प्रक्षेपे कारणमाह–यदत्रेति ॥ १७ ॥

तं वै मुध्ये पार्थानामभिषिञ्चति । संव्वत्सरो वै पार्थानि संव्वत्सरस्यैवैन-मेतुन्मध्यतऽ आदधाति षट् पुरस्ताज्जुहोति षडुपरिष्टात्षड्वाऽऋतवऽऋतु-भिरेवैनमेतत्सुषुवाणमुभयतः परिगृह्णाति बृहस्पतिः पूर्व्वेषामुत्तमो भुव-तीन्द्रऽ उत्तरेषां प्रथमो ब्रह्म वै बृहस्पतिः क्षत्रमिन्द्रो ब्रह्मणा चैवैनमेतत्क्ष-त्रेण च सुषुवाणमुभयतः परिगृह्णाति ॥ १८ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ९-३-२ ॥ ( ३. ४. ) ॥
इति तृतीयोऽध्यायः समाप्तः ॥ ९ । ३ ॥

---

तं वै मध्ये पार्थानामभिषिञ्चति । सम्वत्सरो वै पार्थानि । सम्वत्सरस्यैवैनमेतन्मध्यत आदधाति । षट्पुरस्ताज्जुहोति, षडुपरिष्टात् । षड्वाऽऋतवः । ऋतुभिरेवैनमेतत् सुषुवाणमुभयतः परिगृह्णाति । बृहस्पतिः पूर्वेषामुत्तमो भवति, इन्द्र उत्तरेषां प्रथमः । ब्रह्म वै बृहस्पतिः, क्षत्रमिन्द्रः । ब्रह्मणा चैवैनमेतत्क्षत्रेण च सुषुवाणमुभयतः परिगृह्णाति ॥ १८ ॥

---

अभिषेकस्य पूर्वोत्तरपार्थमध्यवर्तित्वं प्रशंसति—तं वै मध्य इति । पूर्वोत्तराणि पार्थानि मिलित्वा द्वादश भवन्ति । संवत्सरश्च द्वादशमासात्मकः । एवं सति द्वादशपार्थानां संवत्सरात्मकत्वात्पार्थमध्याभिषेकेण ' एनम् ' यजमानं ' संवत्सरस्य ' मध्य एव निदधाति । पार्थानां पृथक् षट्संख्यां प्रशंसति—षट् पुरस्तादिति । पूर्व-पार्थमन्त्राणामुत्तममन्त्रे बृहस्पतिः प्रतिपाद्यते, उत्तरपार्थमन्त्राणामादिमे मन्त्रे इन्द्रः प्रतिपाद्यते । अतस्तयोस्ताथा-विध्यं प्रशंसति—बृहस्पतिः पूर्वेषामिति ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे तृतीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ९-३-४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥ २ ॥

धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृगः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥ ३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे तृतीयोऽध्यायः ॥ ९-३ ॥

---

१-प्रास्य चमसमिंद्राय स्वाहेति षड् जुहोति प्रतिमंत्रम् । का. श्रौ. सू. १८ । ८० ।

# अथ चतुर्थाऽध्याये प्रथमं ब्राह्मणम् ।
# तृतीयप्रपाठके च तृतीयं ब्राह्मणम् ।

अथातो राष्ट्रभृतो जुहोति । राजानो वै राष्ट्रभृतस्ते हि राष्ट्राणि बिभ्रत्येता ह देवताः सुताऽएतेन सवेन येनैतत्सोष्यमाणो भवति ता ऽएवैतत्प्रीणाति ताऽअस्माऽइष्टाः प्रीताऽ एतꣳ सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यद्राजानो राष्ट्राणि बिभ्रति राजान ऽउऽएते देवास्तस्मादेता राष्ट्रभृतः ॥ १ ॥

---

## अथ राष्ट्रभृद्धोमः ।

अथातो राष्ट्रभृतो जुहोति । राजानो वै राष्ट्रभृतः । ते हि राष्ट्राणि बिभ्रति । एता ह देवताः सुता एतेन सवेन । येनैतत्सोष्यमाणो भवति–ता एवैतत्प्रीणाति । ताऽ अस्मा इष्टाः प्रीता एतं सवमनुमन्यन्ते । ताभिरनुमतः सूयते । यस्मै वै राजानो राज्यमनुमन्यन्ते–स राजा भवति । न सः–यस्मै न । तद् यद्राजानो राष्ट्राणि बिभ्रति, राजान उ एते देवाः । तस्मादेता राष्ट्रभृतः ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ राष्ट्रभृतां होमं विधत्ते–अथात इति । 'राष्ट्रभृतो जुहोति' राष्ट्रभृदाख्यान् होमान् कुर्यात् । राष्ट्रभरणसाधारण्येनैतेषां राष्ट्रभृतां राजत्वमाह–राजानो वा इति । अथ किमर्थमयं राष्ट्रभृतां होम इति तत्राह–एता ह देवता इति । अत्र एता देवताः पूर्वमभिषिक्ता इति कथनादेतदुपयोगित्वेन अनन्तरं राजत्वमुक्तम् । ननु चात्र येनैतत्सोष्यमाणो भवतीति लृट्प्रत्ययः प्रयुज्यते । स च भविष्यति । न चात्राभिषेको भविष्यति काले क्रियते तस्य पूर्वमेव संपादितत्वात् । एवं च कथमेतत्संगच्छत इति ? उच्यते । अभिषेकात्पूर्वो यः कालस्तदपेक्षायां लृट्प्रत्ययप्रयोगः । एवं तर्हि ता एवैतत्प्रीणाति ताभिरनुमतः सूयते इत्येतन्नोपपद्यते–कुतः? न खलु अभिषेकात्पूर्वमेतासां प्रीणनार्थं होमः क्रियते । अप्रीणिताश्च नानुमन्यन्ते इति । नैष दोषः । अभिषेकात्पूर्वमेतद्देवताऽनुमत्यभावेऽपि इदानीमनेन होमेन प्रीणिताः प्राक् सम्पादितमभिषेकमनुमन्यन्ते । ततः स यजमानस्ताभिरनुमत एवाभिषिक्तो भवति । अन्यथाऽभिषेकेऽप्येतद्देवतानुमतिविरहेणानभिषिक्तप्रायो भवतीत्यर्थः । अथवा "अथ रथशीर्षे जुहोति । एष वै स सवः" इति परस्तादप्यभिषेको ( त्रयोदशकण्डिकायाम् ) वक्ष्यते तत्कालापेक्षश्चायं लृट्प्रत्ययः । अथैतेषां राष्ट्रभृत्संज्ञाप्राप्तिं दर्शयति–तद्यद्राजान इति । 'राजानो वै राष्ट्रभृतः' इति राजत्वस्योक्तत्वात् एते देवा राजानः । राजानश्च राष्ट्राणि बिभ्रति । यत एवं तस्मादेता राष्ट्रभृतः । पूर्वं राष्ट्रभरणेन राजत्वमुक्तम् । इदानीं तु राजत्वमुपजीव्य राष्ट्रभृत्संज्ञकत्वमुच्यते ॥ १ ॥

---

१–द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति प्रतिस्वाहाकारं राष्ट्रभृतो स्वाहाकारांतः पूर्वः पूर्वो मंत्रः । का. श्रौ. सू. १८।४।१।

(तो) य॒द्वे॒वैता रा॒ष्ट्रभृ॑तो जु॒होति । प्र॒जाप॑ते॒र्वि॒स्र॒स्तान्मि॑थु॒नान्यु॒द॑क्रामन्ग॒न्धर्वा॑प्सर॒सो भू॒त्वा ता॒नि र॒थो भू॒त्वा प॒र्यग॑च्छत्ता॒नि परि॒गत्या॒त्मन्न॑धत्ता॒त्मन्न॑कुरुत त॒थै॒वैना॒न्यय॒मे॒तत्परि॒गत्या॒त्मन्ध॑त्तऽआ॒त्मन्कु॑रुते ॥ २ ॥

स यः स प्र॒जाप॑ति॒र्व्य॒स्र॑ꣳसत । (ता) अय॒मेव स यो॑ऽयम॒ग्निश्ची॒यते॒ऽथ या॒न्यस्मा॒त्ता॒नि मि॑थु॒ना॒न्यु॒द॑क्राम॒न्नेता॒स्ता दे॒वता॒ याभ्य॑ ऽए॒तज्जु॒होति ॥ ३ ॥

ग॒न्धर्वा॑प्स॒रोभ्यो॑ जु॒होति । ग॒न्धर्वा॑प्स॒रसो॒ हि भू॒त्वोद॑क्राम॒न्नथो॒ ग॒न्धेन॑ च॒ वै रू॒पेण॑ च ग॒न्धर्वा॑प्स॒रस॑श्चरन्ति त॒स्माद्यः क॒श्च मि॑थु॒नमु॑पप्रै॒ति ग॒न्धं चै॒व स रू॒पं च॑ कामयते ॥ ४ ॥

---

यद्वेवैता राष्ट्रभृतो जुहोति । प्रजापतेर्विस्रस्तान्मिथुनान्युदक्रामन्—गन्धर्वाप्सरसो भूत्वा । तानि रथो भूत्वा पर्यगच्छत् । तानि परिगत्यात्मन्नधत्त, आत्मन्नकुरुत । तथैवैनान्ययमेतत्परिगत्यात्मन्धत्ते, आत्मन्कुरुते ॥ २ ॥

स यः स प्रजापतिर्व्यस्रंसत—अयमेव सः—योऽयमग्निश्चीयते । अथ यान्यस्मात्तानि मिथुनान्युदक्रामन्—एतास्ता देवताः—याभ्य एतज्जुहोति ॥ ३ ॥

गन्धर्वाप्सरोभ्यो जुहोति । गन्धर्वाप्सरसो हि भूत्वोदक्रामन् । अथो गन्धेन च वै रूपेण च गन्धर्वाप्सरसश्चरन्ति । तस्माद्यः कश्च मिथुनमुपप्रैति—गन्धं चैव स रूपं च कामयते ॥ ४ ॥

---

प्रकारान्तरेण राष्ट्रभृतां होमं प्रशंसति—यद्वेवैता इति । पूर्वं ' विस्रस्तात्प्रजापतेः ' ' गन्धर्वाप्सरसो भूत्वोत्क्रान्तानि ' मिथुनानि ' प्रजापतिः स्वयं ' रथो भूत्वा तानि ' परिगत्यात्मनि धृतवान्, धृत्वा च पुनर्यथा नोत्क्रामेयुस्तथा कृतवान् । अतश्च राष्ट्रभृतां होमेन यजमानोऽपि तथैव कुरुते ॥ २ ॥

ननु कथमग्नौ राष्ट्रभृतां होमेन प्रजापतेर्मिथुननिधानं घटत इति तत्राह—स यः स प्रजापतिरिति ॥ ३ ॥

गन्धर्वाप्सरोरूपेणोत्क्रमणात्तदुद्देशेन होमो युज्यत इत्याह—गन्धर्वाप्सरोभ्यो जुहोतीति । अथ गन्धर्वाप्सरःशब्दानुसारेण तदीयमिथुनत्वं दर्शयति—अथो गन्धेनेति । ' गन्धेन च वै रूपेण च गन्धर्वाप्सरसश्चरन्ति ' इत्यनेन गन्धर्वशब्दोऽप्सरःशब्दश्च निरुच्यते । गन्धेन विशन्तीति गन्धर्वाः । अप्शब्देन रूपमभिधीयते, तेन विशिष्टाः सरन्तीति अप्सरसः, ते च ताश्च गन्धर्वाप्सरसः । गन्धर्वाप्सरःशब्दयोः पृषोदरादित्वात्—वर्णागमादिविधानेनोक्त एवार्थे साधुत्वं द्रष्टव्यम् । तस्माल्लोके यः कश्चिदपि मिथुनमुपगच्छति । अत्र मिथुनशब्देन मिथुनभावः स्त्री चाभिधीयते । ' सः ' पुरुषो ' गन्धं चैव रूपं च कामयते ' एवं च गन्धर्वाप्सरःशब्दानुसारेण गन्धर्वाप्सरसां मिथुनत्वं दर्शितं भवति ॥ ४ ॥

मिथुनानि जुहोति । मिथुनाद्वाऽअधि प्रजातिर्यो वै प्रजायते स राष्ट्रं भवत्यराष्ट्रं वै स भवति यो न प्रजायते तद्यन्मिथुनानि राष्ट्रं बिभ्रति मिथुना ऽउऽएते देवास्तस्मादेता राष्ट्रभृतऽ आज्येन द्वादशगृहीतेन ताऽ उ द्वादशैवाहुतयो भवन्ति तस्योक्तो बन्धुः ॥ ५ ॥

पुꣳसे पूर्वस्मै जुहोति । (त्यु) अथ स्त्रीभ्यः पुमाꣳसं तद्वीर्येणात्यादधात्येकस्माऽइव पुꣳसे जुहोति बह्वीभ्यऽ इव स्त्रीभ्यस्तस्मादप्येकस्य पुꣳसो बह्व्यो जाया भवन्त्युभाभ्यां वषट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः पुमाꣳसमेव तद्वीर्येणात्यादधाति ॥ ६ ॥

( त्यू ) ऋताषाडृतधामेति । सत्यसाट् सत्यधामेत्येतदग्निर्गन्धर्वस्तस्यौ-

---

मिथुनानि जुहोति । मिथुनाद्वा अधि प्रजातिः । यो वै प्रजायते-स राष्ट्रं भवति । अराष्ट्रं वै स भवति-यो न प्रजायते । तद्यन्मिथुनानि राष्ट्रं बिभ्रति, मिथुना उ एते देवाः-तस्मादेता राष्ट्रभृतः । आज्येन द्वादशगृहीतेन । ता उ द्वादशैवाहुतयो भवन्ति । तस्योक्तो बन्धुः ॥ ५ ॥

पुंसे पूर्वस्मै जुहोति, अथ स्त्रीभ्यः । पुमांसं तद्वीर्येणात्यादधाति । एकस्मा इव पुंसे जुहोति, बह्वीभ्य इव स्त्रीभ्यः । तस्मादप्येकस्य पुंसो बह्व्यो जाया भवन्ति । उभाभ्यां-वषट्कारेण च, स्वाहाकारेण च पुंसे जुहोति । स्वाहाकारेणैव स्त्रीभ्यः । पुमांसमेव तद्वीर्येणात्यादधाति ॥ ६ ॥

“ ऋताषाडृतधामा ”-इति । सत्यसाट् सत्यधामेत्येतत् । “ अग्निर्गन्धर्वस्तस्यौषध-

---

पुनः प्रकारान्तरेणैतासां राष्ट्रभृत्संज्ञासम्बन्धं दर्शयति-मिथुनानि जुहोतीति । ‘ प्रजातिः ’ प्रकर्षेण जननं पुत्रपौत्रादीनामुत्पत्तिः सा मिथुनादेव भवति खलु । अतश्च यो वै पुरुषः प्रजायते पुत्रपौत्रादिपरंपरया विविधं जायते स एव राष्ट्रं भवति । तस्य प्रजाबाहुल्येन राष्ट्रसाधनसामर्थ्यात् । यस्तु न प्रजायते स राष्ट्रं न भवति, तस्य प्रजाभावेन राष्ट्रसाधनसामर्थ्याभावात् । एवं च मिथुनानां राष्ट्रभृत्त्वात् मिथुनभूतानामेतेषां देवानामपि राष्ट्रभृत्त्वमित्यर्थः । प्रकृतहोमे द्रव्यं तत्परिमाणं च विधत्ते-आज्येन द्वादशगृहीतेनेति । ग्रहणसंख्यानुसारेण ता द्वादशैवाहुतयो भवन्ति । तस्य द्वादशेत्यस्य ब्राह्मणं “ द्वादश मासाः संवत्सरः ”-इत्यादिना प्रागुक्तमित्याह-ता उ द्वादशैवेति ॥ ५ ॥

मंत्रे तस्मै स्वाहा वाट् ताभ्यः स्वाहेत्याम्नानात् तेनैव क्रमेण होमं प्रशंसति-पुꣳसे पूर्वस्मा इति । तत्तेन प्रथमं होमेन स्त्रीभ्यः पुमांसं वीर्येणात्यादधाति अतिशयितं करोति । तस्मै स्वाहा ताभ्यः स्वाहेत्युक्तां स्त्रीपुंसयोः संख्यां प्रशंसति-एकस्मा एवेति । वषट्कारस्वाहाकाराभ्यां पुंसे हूयते । स्वाहाकारेणैव स्त्रीभ्यो हूयते । एवं च प्रधानशब्दाधिक्यात्स्त्रीपुंभ्यः पुमांसंवीर्याधिकं कृतवान् भवतीत्याह-उभाभ्यामिति । उभशब्दार्थं दर्शयति-वषट्कारेण च स्वाहाकारेण चेति । वाडिति परोऽक्षो वषट्कार इत्युक्तम् ॥ ६ ॥

अथ क्रमेण मन्त्रान्व्याचिख्यासुस्तत्र प्रथममन्त्रे. ऋताषाडृतधामेत्यत्र ऋतशब्दस्य सत्यमर्थ इत्याह-

षधयोऽप्सुरसऽ इत्यग्निर्हि गन्धर्वऽ ओषधिभिरप्सुरोभिर्मिथुनेन सहोच्चक्राम मुदो नामेत्योषधयो वै मुदऽओषधिभिर्हीदᳬं सर्व्वं मोदते स नऽ इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्ताभ्यः स्वाहेति तस्योक्तो बन्धुः ॥ ७ ॥

सᳬंहित ऽइति । ( त्य ) असौ वाऽ आदित्यः सᳬंहित ऽएष ह्यहोरात्रे संदधाति विश्वसामेत्येष ह्येव सर्व्वᳬं साम सूर्य्यो गन्धर्वस्तस्य मरीचयो-ऽप्सरसऽ इति सूर्य्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्मिथुनेन सहोच्चक्रामायुवो नामेत्यायुवाना ऽइव हि मरीचयः प्लवन्ते स न ऽइदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः ॥ ८ ॥

---

योऽप्सरसः "–इति । अग्निर्हि गन्धर्वः–ओषधिभिरप्सरोभिर्मिथुनेन सहोच्चक्राम । " मुदो नाम "–इति । ओषधयो वै मुदः । ओषधिभिर्हीदं सर्वं मोदते । " स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्, ताभ्यः स्वाहा "–( वा. सं. १८ । ३८ ) इति । तस्योक्तो बन्धुः ॥७॥

" संहितः "–इति । असौ वा आदित्यः संहितः । एष ह्यहोरात्रे सन्दधाति । " विश्व-सामा "–इति । एष ह्येव सर्वं साम । " सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरसः "–इति । सूर्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्मिथुनेन सहोच्चक्राम । " आयुवो नाम "–इति । आयु-

---

ऋताषाडिति । यतोऽग्निरेव गन्धर्व ओषधिभिरेवाप्सरोभिः सह मिथुनभावेनोच्चक्राम । अत उच्यते मन्त्रेण–अग्निर्हि गन्धर्व इति । व्रीह्यादिभिरोषधिभिरिदं सर्वं जगन्मोदत इति ओषधयो मुदः । अत उक्तं मुदो नामेत्याह–मुदो नामेतीति । वषट्कारस्वाहाकारयोर्ब्राह्मणं "वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते" (श.प.९।३।३।१४) इत्येवं प्रागेवोक्तमित्याह–तस्मै स्वाहा वाट् ताभ्यः स्वाहेति तस्योक्तो बन्धुरिति । अत्रैवं मन्त्रविभागः । यान्यत्र पुँल्लिङ्गानि पदानि तान्येकवाक्यतामुपनेयानि, एवं स्त्रीलिङ्गान्यपि ।"ऋताषाड्ऋतधामाऽग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाड्" इति पूर्वो मन्त्रः । "तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा" इत्युत्तरो मन्त्रः। तस्यौषधय इति साकाङ्क्षत्वात्–'ऋताषाड्ऋतधामाऽग्निर्गन्धर्वः' इत्यनुवर्तते । ऋतं सत्यं सहत इति ऋताषाट् " छन्दसि सहः "–( पा. सू. ३ । २ । ६३ ) इति क्विप् प्रत्ययः । " नहिवृति० " ( पा. सू. ६ । ३ । ११६ ) इत्यादिना पूर्वपदस्य दीर्घः । ऋतं धाम यस्यासौ ऋत-धामाऽग्निरेव यो गन्धर्वः स नोऽस्मत्संबन्धिनो यजमानस्य ' इदं ब्रह्म ' ब्राह्मणजातिं ' क्षत्रम् ' क्षत्रियजातिं च पातु, तस्मा अग्नये गन्धर्वाय ' इदम् ' हविः स्वाहा वाट् इति शब्दद्वयमपि संप्रदानार्थे, स्वाहा वाट् दत्तम-स्त्विति प्रथमस्यार्थः । ऋताषाट् ऋतधामा योऽग्निर्गन्धर्वोऽस्ति तस्य मुदो नाम या ओषधय एवाप्सरसः सन्ति ताभ्य इदम् हविः स्वाहा सुहुतमस्त्विति द्वितीयस्यार्थः । उत्तरत्र सर्वत्राप्येवमेव योजना ॥ ७ ॥

अहोरात्रयोः संबन्धाधायकत्वेन संहितशब्दोऽयमादित्यसमवेतार्थ इत्याह–असौ वा आदित्य इति । " य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि " इत्यादिश्रुतेः एष एव ' आदित्यः ' ' सर्वं साम '

सुषुम्ण ऽइति । सुयज्ञिय ऽ इत्येतत्सूर्य्यरश्मिरिति सूर्य्यस्येव हि चन्द्रमसो रश्मयश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरस ऽ इति चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम भेकुरयो नामेति भाकुरयो ह नामैते भाᳬं हि नक्षत्राणि कुर्व्वन्ति स न ऽइदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः ॥ ९ ॥

( रि ) इषिर ऽ इति । क्षिप्र ऽ इत्येतद्विश्वव्यचा इत्येष हीदᳬं सर्व्वं व्यचः करोति वातो गन्धर्व्वस्तस्यापोऽअप्सरस ऽ इति वातो ह गन्धर्वोऽद्भि-रप्सरोभिर्मिथुनेन सहोच्चक्रामोर्जो नामेत्यापो वाऽऊर्जोऽद्भ्यो ह्यूर्ग्जायते स न ऽइदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः ॥ १० ॥

---

वाना इव हि मरीचयः प्लवन्ते । " स न इदं ब्रह्म क्षत्रं पातु "-( वा. सं. १८ । ३९ ) इति । तस्योक्तो बन्धुः ॥ ८ ॥

" सुषुम्णः "-इति । सुयज्ञिय इत्येतत् । " सूर्यरश्मिः "-इति । सूर्यस्येव हि चन्द्र-मसो रश्मयः । " चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसः "-इति । चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम । " भेकुरयो नाम "-इति । भाकुरयो ह नामैते । भां हि नक्षत्राणि कुर्वन्ति । " स न इदं ब्रह्म क्षत्रं पातु "-( वा० सं० १८ । ४० ) इति । तस्योक्तो बन्धुः ॥ ९ ॥

" इषिरः "-इति । क्षिप्र इत्येतत् । " विश्वव्यचाः "-इति । एष हीदं सर्वं व्यचः करोति । " वातो गन्धर्वस्तस्यापोऽअप्सरसः "-इति । वातो ह गन्धर्वोऽद्भिरप्सरोभि-र्मिथुनेन सहोच्चक्राम । " ऊर्जो नाम "-इति । आपो वा ऊर्जः । अद्भ्यो ह्यूर्जायते । " स न इदं ब्रह्म क्षत्रं पातु "-( वा० सं० १८ । ४१ ) इति । तस्योक्तो बन्धुः ॥ १० ॥

---

खलु । अत उच्यते विश्वसामेत्याह-विश्वसामेतीति । विश्वं साम यस्यासौ विश्वसामा । तत्तद्धतोरभेदमाश्रित्यो-क्तम् ' एष ह्येव सर्वं साम ' इति । यतो मरीचय आयुवाना इव प्लवन्ते अत उक्तम् आयुवो नामेत्याह-आयुवो नामेतीति । शिष्टं पूर्ववत् ॥ ८ ॥

सुम्नशब्देन सुखस्याभिधानात् सुखस्य च यज्ञसाध्यत्वेन यज्ञार्हत्वात् ' यज्ञिय ' इत्ययमर्थो विवक्षितः सुम्नशब्देनेत्याह-सुषुम्ण इति सुयज्ञिय इत्येतदिति । प्रकाशमानत्वसामान्येन चन्द्ररश्मयः सूर्यरश्मयः इव भवन्तीति, चन्द्रः सूर्यरश्मिरित्यभिधीयत इत्याह-सूर्यरश्मिरितीति । भेकुरयो नामेतीति । ' नक्षत्राणि ' भास्तेजांसि ' कुर्वन्ति ' इति ' भाकुरयः ' भाकुरय एव भेकुरयः, आकारस्य व्यत्ययेनैकारः । गतमन्यत् ॥ ९ ॥

" इष गतौ " ( धा. पा. भ्वा. आ, ६१२ ) इत्यस्मादौणादिके किरच् प्रत्यये ' इषिर ' इति भवति ।

( भु ) भुज्युः सुपर्णऽ इति । यज्ञो वै भुज्युर्यज्ञो हि सर्व्वाणि भूतानि भुनक्ति यज्ञो गन्धर्व्वस्तस्य दक्षिणाऽअप्सरसऽ इति यज्ञो ह गन्धर्वो दक्षिणाभिरप्सरोभिर्मिथुनेन सहोच्चक्राम स्तावा नामेति दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञ स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयतऽएव स स न ऽइदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः ॥ ११ ॥ ( अर्ध-प्रपाठकः ॥ कं० ४८ ) ॥

प्रजापतिर्व्विश्वकर्म्मेति । प्रजापतिर्व्वै विश्वकर्मा स हीदꣳ सर्व्वमकरोन्मनो गन्धर्वस्तस्यऽऋक्सामान्यप्सरस ऽइति मनो ह गन्धर्वऽऋक्सामैरप्सरोभिर्मिथुनेन सहोच्चक्रामेष्टयो नामेत्यृक्सामानि वाऽएष्टय ऽऋक्सामैर्ह्याशासतऽइति नोऽस्त्वित्थं नोऽस्त्विति स न ऽइदं ब्रह्म क्षत्रं पात्विति तस्योक्तो बन्धुः ॥ १२ ॥

---

" भुज्युः सुपर्णः "–इति । यज्ञो वै भुज्युः । यज्ञो हि भूतानि भुनक्ति । " यज्ञो गन्धर्व-स्तस्य दक्षिणा अप्सरसः "–इति । यज्ञो ह गन्धर्वो दक्षिणाभिरप्सरोभिर्मिथुनेन सहोच्चक्राम । " स्तावा नाम "–इति । दक्षिणा वै स्तावाः । दक्षिणाभिर्हि यज्ञः स्तूयते । अथो यो वै कश्च दक्षिणां ददाति–स्तूयत एव सः । " स न इदं ब्रह्म क्षत्रं पातु "–( वा. सं. १८ । ४२ ) इति । तस्योक्तो बन्धुः ॥ ११ ॥

" प्रजापतिर्विश्वकर्मा "–इति । प्रजापतिर्वै विश्वकर्मा । स हीदं सर्वमकरोत् । " मनो गन्धर्वस्तस्यऽऋक्सामान्यप्सरसः"–इति । मनो ह गन्धर्व ऋक्सामैरप्सरोभिर्मिथुनेन सहोच्चक्राम । "एष्टयो नाम"–इति । ऋक्सामानि वा एष्टयः । ऋक्सामैर्ह्याशासते । इति नोऽस्तु, इत्थं नोऽस्त्विति । " स न इदं ब्रह्म क्षत्रं पातु "–( वा० सं० १८ । ४३ ) इति । तस्योक्तो बन्धुः ॥ १२ ॥

---

अतश्चैतेन क्षिप्र इत्येतदुक्तं भवतीत्याह–इषिर इतीति । यतश्चैष वायुरिदं सर्वमपि व्यचो व्याप्तं करोति । अत उक्तं विश्वव्यचा इत्याह–विश्वव्यचा इतीति । अद्भ्यः सकाशादूर्क् सर्वमप्यन्नं जायत इति आप एवोर्जः । अत उक्तम् आप ऊर्जो नामेत्याह–ऊर्जो नामेतीति ॥ १० ॥

'यज्ञो हि' वृष्ट्यादिसम्पादनेन 'सर्वाणि भूतानि भुनक्ति' रक्षतीति भुज्युशब्दो यज्ञे समवेतार्थ इत्याह–यज्ञो वा इति । यज्ञः खलु दक्षिणाभिः प्रशंस्यते । साधुजातो यज्ञोऽयमिति स्वीकृतदक्षिणैर्ऋत्विग्भिः स्तूयमानत्वात् । किञ्च 'यो वै कश्चन' 'दक्षिणां ददाति' सोऽपि प्रतिग्रहीतृभिः स्तूयते । अत इत्थं स्तुति हेतुत्वाद्दक्षिणाः स्तावा नामेत्याह–दक्षिणा वै स्तावा इति । व्यत्ययेन घञ् प्रत्ययः ॥ ११ ॥

यतः प्रजापतिरिदं सर्वमकरोत्, अतः प्रजापतिर्विश्वकर्मा । अत उक्तम् प्रजापतिर्विश्वकर्मेत्याह–प्रजापति-

(ग) अथ रथशीर्षे जुहोति । (त्ये) एष वै स सवऽ एतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै नाज्येन पञ्चगृहीतेन ताऽ उ पञ्चैवाहुतयो हुता भवन्ति तस्योक्तो बन्धुः ॥ १३ ॥

शीर्षतः । शीर्षतो वाऽअभिषिच्यमानोऽभिषिच्यतऽ उपरि धार्यमाणऽउपरि हि स यमेतदभिषिञ्चति समानेन मन्त्रेण समानो हि स यमेतदभिषिञ्चति सर्वतः परिहारꣳ सर्वत ऽएवैनमेतदभिषिञ्चति ॥ १४ ॥

---

अथ रथशीर्षे जुहोति–एष वै स सवः । एतद्वै तत्सूयते–यमस्मै तमेता देवताः सवमनुमन्यन्ते । याभिरनुमतः सूयते । यस्मै वै राजानो राज्यमनुमन्यन्ते–स राजा भवति । न सः–यस्मै न । आज्येन पञ्चगृहीतेन । ता उ पञ्चैवाहुतयो हुता भवन्ति । तस्योक्तो बन्धुः ॥ १३ ॥

शीर्षतः । शीर्षतो वा अभिषिच्यमानोऽभिषिच्यते । उपरि धार्यमाणे । उपरि हि सः–यमेतदभिषिञ्चति । समानेन मन्त्रेण । समानो हि सः–यमेतदभिषिञ्चति । सर्वतः परिहारम् । सर्वत एवैनमेतदभिषिञ्चति ॥ १४ ॥

---

विश्वकर्मेतीति । मनो गन्धर्व इति । प्रजापतेर्मनस्त्वं मनोवदनियुक्ताकारत्वात् । एष्टयो नामेति । इत्येतत्फलं नोऽस्तु इत्थं नोऽस्त्विति । 'ऋक्सामैर्ह्याशासते' खलु अत इष्यमाणसाधनत्वात् इष्टयः आ इष्टय 'एष्टयः' । 'उचकामेष्टयः' इत्यत्र "ओमाङोश्च" (पा. सू. ६ । १ । ९५) इति पररूपम् । गतमन्यत् ॥ १२ ॥

राष्ट्रभृद्धोमानन्तरं रथशिरसि होमं विधत्ते–अथेति[1] । प्रकृतहोमं यजमानाय सर्वात्मना प्रशंसति–एष वै स सव इति । अस्मै यजमानाय यं सवं सम्पादयति स सव एष खलु । एतद्वै तत्सूयते इत्ययमेवार्थो विव्रियते । स एष सवः क्रियते इत्यर्थः । एतत्तदिति–धात्वर्थविशेषणत्वान्नपुंसकत्वम् । 'याभिरनुमतः सूयते' यजमानश्च तदैव 'एता देवताः' 'तम्' एतम् 'सवमनुमन्यन्ते' । अस्य होमस्य यजमानाभिषेकमनुजानन्त्यो देवता एतं होमात्मकं सवमनुमन्यन्त इत्यर्थः । तस्योक्तो बन्धुरिति । "पञ्चचितिकोऽग्निः पञ्चर्तवः संवत्सरः" इत्यादिलक्षणं ब्राह्मणं प्रागेवोक्तमित्यर्थः । स्पष्टमन्यत् ॥ १३ ॥

अभिषिच्यमानस्य शिरसः सकाशादेव तदभिषेकाद्रथशिरसो होमः प्रशस्यते इत्याह–शीर्षत इति । अभिषेकावसरे यजमानः कृष्णाजिनादेरुपरि स्थित एवाभिषिच्यत इत्यत आह–उपरि धार्यमाण इति । रथशिरसीति शेषः । अभिषिच्यमानस्य यजमानस्यैकत्वात्स पञ्चाप्याहुतयश्च एकेन मंत्रेण क्रियेरन्नित्याह–समानेन मंत्रेणेति । सर्वत एवैतस्य यजमानस्याभिषेको यथा स्यादिति प्रादक्षिण्येन क्रमेण सर्वतः परिहृत्य जुहुयादित्याह–सर्वतः परिहारमिति ॥ १४ ॥

---

१–पंचगृहीतं च रथशिरस्यध्याहवनीयं ध्रियमाणे पंचकृत्वः स नो भुवनस्येति । का० श्रौ० सू० १८ । ५२ ।

यद्देव रथशीर्षे जुहोति । ( त्य ) असौ वाऽआदित्य ऽएष रथऽएतद्वै तद्रूपं कृत्वा प्रजापतिरेतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगत्यात्मन्धत्तऽ आत्मन्कुरुतऽ उपरि धार्यमाण ऽउपरि हि स य ऽएतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत समानेन मन्त्रेण समानो हि स यऽएतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत सर्व्वतः परिहारथ्ँ सर्व्वतो हि स य ऽएतानि मिथुनानि परिगत्यात्मन्नधत्तात्मन्नकुरुत ॥ १५ ॥

स नो भुवनस्य पते प्रजापतऽ इति । भुवनस्य ह्येष पतिः प्रजापतिर्यस्य तऽउपरि गृहा यस्य वेहेत्युपरि च ह्येतस्य गृहा ऽइह चास्मै ब्रह्मणेऽस्मै क्षत्रायेत्ययं वाऽअग्निर्ब्रह्म च क्षत्रं च महि शर्म यच्छ स्वाहेति महच्छर्म यच्छ स्वाहेत्येतत् ॥ १६ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ९–३–३ ॥ ( ४. १. )

---

यद्देव रथशीर्षे जुहोति । असौ वा आदित्य एष रथः । एतद्वै तद्रूपं कृत्वा प्रजापतिरेतानि मिथुनानि परिगत्यात्मन्नधत्त, आत्मन्नकुरुत । तथैवैनान्ययमेतत्परिगत्यात्मन्धत्ते, आत्मन्कुरुते । उपरि धार्यमाणे । उपरि हि सः–य एतानि मिथुनानि परिगत्यात्मन्नधत्त, आत्मन्नकुरुत । समानेन मन्त्रेण । समानो हि सः–य एतानि मिथुनानि परिगत्यात्मन्नधत्त, आत्मन्नकुरुत । सर्वतः परिहारम् । सर्वतो हि सः–य एतानि मिथुनानि परिगत्यात्मन्नधत्त, आत्मन्नकुरुत ॥ १५ ॥

"स नो भुवनस्य पते प्रजापते"–इति । भुवनस्य ह्येष पतिः प्रजापतिः । "यस्य त उपरि गृहाः । यस्य वेह"–इति । उपरि च ह्येतस्य गृहाः, इह च । "अस्मै ब्रह्मणेऽस्मै क्षत्राय"–इति । अयं वाऽअग्निर्ब्रह्म च, क्षत्रं च । "महि शर्म यच्छ स्वाहा"–( वा. सं. १८ । ४४ ) इति । महच्छर्म यच्छ स्वाहेत्येतत् ॥ १६ ॥

---

अथ पुनस्तमेव होमं प्रकारान्तरेण प्रशंसति–यद्देवेति । एष आहवनीयस्य 'उपरि' धार्यमाणो रथः असावाकाशमध्ये वितायमान आदित्यात्मकः । रथस्यादित्यात्मकत्वम् आदित्यवन्मण्डलाकाररथाङ्गवत्त्वात्, शीघ्रगामित्वाद्वा । अतः प्रजापतिरादित्यात्मकम् एतद्रूपं रथरूपं कृत्वा एतानि पूर्वोक्तानि मिथुनानि 'परिगत्य' आत्मनि धृत्वा स्वाधीनीकृतवान् । तस्माद्यजमानोऽपि रथशिरसि होमं तद्वदेव कुरुते । स्पष्टमन्यत् ॥ १९ ॥

अथाऽस्मिन्होमे मन्त्रं दर्शयन् व्याचष्टे–स नो भुवनस्येति । एष रथरूपेण मिथुनानि परिगतवान् सर्वस्य भुवनस्य पतिः प्रजापतिश्च भवतीति मन्त्रो युक्तमाहेत्याह–भुवनस्य ह्येष इति । एतस्य प्रजापतेः सर्वाधि-

अथ व्वातहोमाञ्जुहोति । ( ती ) इमे वै लोका ऽएषोऽग्निर्व्वायुर्व्वातहोमा ऽएषु तल्लोकेषु व्वायुं दधाति तस्मादयमेषु लोकेषु व्वायुः ॥ १ ॥

( बा ) बाह्येनाग्निमाहरति । ( त्या ) आप्तो वाऽअस्य स व्वायुर्य ऽएषु लोकेष्वथ य ऽइमाँल्लोकान्परेण व्वायुस्तमस्मिन्नेतद्दधाति ॥ २ ॥

बहिर्व्वेदेरियं वै व्वेदिः । ( रा ) आप्तो वाऽअस्य स व्वायुर्योऽस्यामथ य ऽइमां परेण व्वायुस्तमस्मिन्नेतद्दधाति ॥ ३ ॥

( त्य ) अञ्जलिना न ह्येतस्येतीवाभिपत्तिरस्ति स्वाहाकारेण जुहोति ह्यधोऽधो धुरमसौ वाऽआदित्य ऽएष रथोऽर्व्वाचीनं तदादित्याद्वायुं दधाति तस्मादेषोऽर्व्वाचीनमेवातः पवते ॥ ४ ॥

---

अथ वातहोमाः ।

अथ वातहोमाञ्जुहोति । इमे वै लोका एषोऽग्निः, वायुर्वातहोमाः । एषु तल्लोकेषु वायुं दधाति । तस्मादयमेषु लोकेषु वायुः ॥ १ ॥

बाह्येनाग्निमाहरति । आप्तो वा अस्य स वायुः—य एषु लोकेषु । अथ य इमांल्लोकान्परेण वायुः—तमस्मिन्नेतद्दधाति ॥ २ ॥

बहिर्वेदेः । इयं वै वेदिः । आप्तो वा अस्य स वायुः—योऽस्याम् । अथ य इमां परेण वायुः—तमस्मिन्नेतद्दधाति ॥ ३ ॥

अञ्जलिना । न ह्येतस्येतीवाभिपत्तिरस्ति । स्वाहाकारेण । जुहोति हि । अधोऽधो धुरम् । असौ वाऽआदित्य एष रथः । अर्वाचीनं तदादित्याद्वायुं दधाति । तस्मादेषोऽर्वाचीनमेवातः पवते ॥४॥

---

पत्येन स्वर्लोके इह लोके च गृहा विद्यन्त इति यस्येत्यादिना स एवार्थोऽभिधीयत इत्याह—उपरि च ह्येतस्येति । अयमेव चीयमानोऽग्निः सर्वात्मकत्वेन ब्रह्मक्षत्रशब्दाभ्यामुच्यत इत्याह—अयं वा अग्निरिति । अग्नेश्च माविथजमानरूपत्वेन ब्रह्मणे क्षत्रायेत्यनयोः शब्दयोः यजमाने पर्यवसानमवगन्तव्यम् । ' महि शर्म यच्छ ' इत्यत्र महिशब्दस्य महदित्ययमर्थ इत्याह—महच्छर्म यच्छेत्येतदिति ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ९ । ४ । १ ) ॥

उक्तहोमानन्तरं वातहोमान्कुर्यादिति विधत्ते—अथेति । एतस्याग्नेः पृथिव्यादिलोकात्मकत्वाद्वातहोमानां वायुत्वात् तैर्होमैः पृथिव्यादिषु लोकेषु वायुं निहितवान् भवतीत्याह—इमे वै लोका इति ॥ १ ॥

होष्यमाणो वायुरग्नेर्बाह्यप्रदेशादाहरणीय इत्याह—बाह्येनाग्निमिति । एवं चाग्नेर्लोकत्रयात्मकत्वेन लोकत्रयावस्थितस्य वायोः प्रागेवाप्तत्वात्ततो बहिरवस्थितस्य वायोर्निधानमस्मिन्नग्नौ संपाद्यत इत्याह—आप्तो वा अस्येति । वेद्याः पृथिव्यात्मकत्वात्तत्रत्यस्यापि वायोः पूर्वमेवाप्तत्वाद्वेदेर्बहिराहरेदित्याह—बहिर्वेदेरिति॥ २ ॥॥ ३ ॥

तच्चाहरणमञ्जलिना कर्तव्यमित्याह—अञ्जलिनेति । ननु वायोर्होमद्रव्यत्वाज्जुह्वादिना कस्मान्नाहरेदित्यत

समुद्रोऽसि नुभस्वानिति । ( त्य ) असौ वै लोकः समुद्रो नुभस्वाना-र्द्रदानुरित्येषु ह्यार्द्रं दुदाति तुद्योऽमुष्मिँल्लोके व्वायुस्तुमस्मिन्नेतुद्दधाति शम्भूर्मयोभूरभि मा व्वाहि स्वाहेति शिवः स्योनोऽभि मा व्वाहीत्येतत् ॥५॥

( न्मा ) मारुतोऽसि मरुतां गण ऽइति । ( त्य ) अन्तरिक्षलोको वै मारुतो मरुतां गणस्तुद्योऽन्तरिक्षलोके व्वायुस्तुमस्मिन्नेतुद्दधाति शम्भू-र्मयोभूरभि मा व्वाहि स्वाहेति शिवः स्योनोऽभि मा व्वाहीत्येतत् ॥ ६ ॥

"समुद्रोऽसि नभस्वान्"–इति। असौ वै लोकः समुद्रो नभस्वान् । "आर्द्रदानुः"–इति । एष ह्यार्द्रं ददाति । तद्–योऽमुष्मिँल्लोके वायुः–तमस्मिन्नेतद्दधाति । "शम्भूर्मयोभूरभि मा वाहि स्वाहा"–इति । शिवः स्योनोऽभि मा वाहीत्येतत् ॥ ५ ॥

"मारुतोऽसि मरुतां गणः"–इति । अन्तरिक्षलोको वै मारुतो मरुतां गणः । तद् योऽन्त-

आह–न ह्येतस्येति । 'इतीव' इत्यभिनयेन दर्शितम् । 'एतस्य' वायोः 'इतीव' आज्यादिवत् स्कन्दनाद्यभिपत्तिर्नास्ति । आ अभिपत्तिरिति पदविभागः । तस्मादञ्जलिना आहरेत् । होमेषु सर्वत्र स्वाहाकार-प्रयोगादस्यापि होमः स्वाहाकारेण हूयते इत्याह–स्वाहाकारेण, जुहोति हीति । होमप्रदेशमाह–अधोऽधो धुरमिति । उपरि धार्यमाणस्य रथस्य धुरोऽधोऽधो भागे जुहुयात् । अत्र कात्यायनः–"वातहोमाञ्जुहोत्यंजलि-नाऽऽहृत्य पुरस्ताद्धविर्वेदेरधो दक्षिणस्यां धुर्युत्तरत उत्तरस्यां दक्षिणतो दक्षिणाप्रष्टेः"–(का. श्रौ. सू. १८ । ८६ ) इति । पुरस्ताद्धविर्वेदेर्वातमाहृत्य दक्षिणस्यां धुरि अधो जुहुयात् । अथोत्तरत आहृत्य उत्तरस्यां धुरि अधो जुहुयात् । अथ दक्षिणत आहृत्य दक्षिणाप्रष्टेरधो जुहुयात् । इति सूत्रस्यार्थः । तस्य रथस्यादि-त्यात्मकत्वात्, तस्याधोभागे वातहोमेन वायुमादित्यादर्वाचीनं निहितवान् भवतीत्याह–असौ वा आदित्य इति ॥ ४ ॥

अथ प्रथमं मन्त्रं व्याचष्टे[1]–समुद्रोऽसीति । 'असौ लोकः' स्वर्लोकः सर्वदा वृष्टिप्रदानेन समुन्दनशी-लत्वात् 'समुद्रः' । नभ इति नक्षत्रनाम । नभस्वान् नक्षत्रविशिष्टश्च भवति । एष ह्यार्द्रमिति । 'एषः' स्वर्लोकः 'आर्द्रं' वृष्टिं 'ददाति' यतः–तस्मात् 'आर्द्रदानुः' । तद्योऽमुष्मिन्निति । तेन समुद्रो-ऽसीत्यादिना मन्त्रप्रयोगेण 'अमुष्मिल्लोके' यो वायुः बहिःप्रदेशादाहृतोऽस्ति तमेवास्मिन्नग्नौ निदधाति । हे वायो ! त्वं समुद्रो नभस्वानार्द्रदानुर्यः स्वर्लोकस्तत्र वर्तमानस्त्वं तदात्मकोऽसीति मन्त्रेण प्रतिपादनात् बाह्यप्रदेशादाहृतं नभस्वान् आर्द्रदानुर्यः तं वायुमस्मिन्निहितवान्भवतीत्यर्थः । शम्भूर्मयोभूरित्यनयोरेकार्थताशङ्कां निवारयितुमाह–शिवः स्योन इति । 'शिवः' शोभनः 'स्योनः' सुखकरः । हे वायो ! यस्त्वं समुद्रो नभस्वा-नार्द्रदानुरसि तादृशस्त्वं शोभनः सुखकरो भूत्वा मामभिगच्छेत्यर्थः ॥ ५ ॥

द्वितीयमन्त्रं व्याचष्टे–मारुतोऽसीति । अन्तरिक्षलोको मरुद्भिर्विशिष्टत्वान्मारुतः । अत एव मरुतां गणः आधाराधेययोरभेदविवक्षयैवमुक्तम् । अवशिष्टं पूर्ववत् ॥ ६ ॥

[1]–समुद्रोऽसीति प्रतिमंत्रम् । का० श्रौ० सू० १८ । ८६ ।

(द)अवस्यूरसि दुवस्वानिति । (त्य) अयं वै लोकोऽवस्यूर्दुवस्वांस्तद्योऽस्मिँल्लोके व्वायुस्तमस्मिन्नेतद्दधाति शम्भूर्मयोभूरभि मा व्वाहि स्वाहेति शिवः स्योनोऽभि मा व्वाहीत्येतत् ॥ ७ ॥

( त्रि ) त्रिभिर्जुहोति । त्रय ऽइमे लोकाऽअथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तदेषु लोकेषु व्वायुं दधाति ॥ ८ ॥

यद्वेव व्वातहोमाञ्जुहोति । (त्ये) एतमेवैतद्रथं युनक्त्येतद्वै देवा ऽएतᳪं रथᳪं सर्व्वेभ्यः कामेभ्योऽयुञ्जत युक्तेन समश्नवामहाऽइति तेन युक्तेन सर्व्वान्कामान्त्समाश्नुवत तथैवैतद्यजमान ऽएतᳪं रथᳪं सर्व्वेभ्यः कामेभ्यो युङ्क्ते युक्तेन समश्नवाऽइति तेन युक्तेन सर्व्वान्कामान्त्समश्नुते ॥ ९ ॥

व्वातहोमैर्युनक्ति । प्राणा वै व्वातहोमाः प्राणैरेवैनमेतद्युनक्ति त्रिभिर्युनक्ति त्रयो वै प्राणाः प्राणऽउदानो व्यानस्तैरेवैनमेतद्युनक्त्यधोऽधो धुरमधोऽधो हि धुरं योग्यं युञ्जन्ति हस्ताभ्याᳪं हस्ताभ्याᳪं हि योग्यं युञ्जन्ति विपरिक्रामं विपरिक्रामᳪं हि योग्यं युञ्जन्ति ॥ १० ॥

---

रिक्षलोके वायुः—तमस्मिन्नेतद्दधाति । " शम्भूर्मयोभूरभि मा वाहि स्वाहा "-इति । शिवः स्योनोऽभि मा वाहीत्येतत् ॥ ६ ॥

"अवस्यूरसि दुवस्वान्"-इति। अयं वै लोकोऽवस्यूर्दुवस्वान् । तद्-योऽस्मिंल्लोके वायुः—तमस्मिन्नेतद्दधाति । " शम्भूर्मयोभूरभि मा वाहि स्वाहा "-( वा. सं. १८।४९ ) इति । शिवः स्योनोऽभि मा वाहीत्येतत् ॥ ७ ॥

त्रिभिर्जुहोति । त्रय इमे लोकाः । अथो त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैव तदेषु लोकेषु वायुं दधाति ॥ ८ ॥

यद्वेव वातहोमाञ्जुहोति । एतमेवैतद्रथं युनक्ति । एतद्वै देवा एतं रथं सर्वेभ्यः कामेभ्योऽयुञ्जत । युक्तेन समश्नवामहा इति । तेन युक्तेन सर्वान्कामान्त्समाश्नुवत । तथैवैतद्यजमान एतं रथं सर्वेभ्यः कामेभ्यो युङ्क्ते । युक्तेन समश्नवा ऽइति । तेन युक्तेन सर्वान्कामान्त्समश्नुते ॥ ९ ॥

वातहोमैर्युनक्ति । प्राणा वै वातहोमाः । प्राणैरेवैनमेतद्युनक्ति । त्रिभिर्युनक्ति । त्रयो वै प्राणाः—

---

तृतीयं मन्त्रं व्याचष्टे—अवस्यूरसीति । अयं लोको भूलोकः ' अवस्यूः ' । अवस्यूरित्यन्नमुच्यते । तद्विशिष्टः अत्रैव सर्वेषामन्नानामुत्पत्तेः । अत एव ' दुवस्वान् ' हविष्मान् । शेषं पूर्ववत् ॥ ७ ॥

अथैतेषां मन्त्राणां त्रित्वसंख्यां प्रशंसति—त्रिभिर्जुहोतीति ॥ ८ ॥

अथैतानेव वातहोमान् सर्वकामप्राप्त्यर्थं रथनियोजनात्मना प्रशंसति—यद्वेव वातहोमानिति ॥ ९ ॥

वातहोमानामेव नियोजनसाधनत्वं प्रशंसति—वातहोमैर्युनक्तीति । अन्तःस्थानां प्राणानां वातात्मकत्वाद्

स दक्षिणायुग्यमेवाग्रे युनक्ति । ( त्यु ) अथ सव्यायुग्यमथ दक्षिणाप्रष्टि-मेवं देवत्रेतरथा मानुषे तं नाभियुञ्ज्यान्नेद्युक्तमभियुनजानीति व्वाहनं तु दद्याद्युक्तेन भुनजाऽइति तमुपर्य्येव हरन्त्याध्वर्य्योरावसथादुपरि ह्येष तम-ध्वर्य्यवे ददाति स हि तेन करोति तं तु दक्षिणानां कालेऽनुदिशेत् ॥ ११ ॥

( द ) अथ रुक्मतीर्जुहोति । ( त्यु ) अत्रैष सर्व्वोऽग्निः संस्कृतः स ऽएषोऽत्र रुचमैच्छत्तस्मिन्देवा ऽएताभी रुक्मतीभी रुचमदधुस्तथैवास्मि-न्नयमेतद्दधाति ॥ १२ ॥

---

प्राण उदानो व्यानः । तैरेवैनमेतद्युनक्ति । अधोऽधो धुरम् । अधोऽधो हि धुरं योग्यं युञ्जन्ति । हस्ताभ्याम् । हस्ताभ्यां हि योग्यं युञ्जन्ति । विपरिक्रामम् । विपरिक्रामं हि योग्यं युञ्जन्ति ॥ १० ॥

स दक्षिणायुग्यमेवाग्रे युनक्ति, अथ सव्यायुग्यम्, अथ दक्षिणाप्रष्टिम् । एवं देवत्रा । इतरथा मानुषे । तं नाभियुञ्ज्यात्—नेद्युक्तमभियुनजानीति । वाहनं तु दद्यात्—युक्तेन भुनजा इति । तमुपर्य्येव हरन्ति—आ अध्वर्योरावसथात् । उपरि ह्येषः । तमध्वर्यवे ददाति । स हि तेन करोति । तं तु दक्षिणानां कालेऽनुदिशेत् ॥ ११ ॥

## अथ रुक्मतीहोमः ।

अथ रुक्मतीर्जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः । स एषोऽत्र रुचमैच्छत् । तस्मिन्देवा एताभी रुक्मतीभी रुचमदधुः । तथैवास्मिन्नयमेतद्दधाति ॥ १२ ॥

---

' वातहोमाः प्राणाः; ' एवं चैतेन होमेन रथं प्राणैरेव नियुनक्ति । ' प्राण उदानो व्यानः ' इति प्राणानां त्रित्वात्तदात्मकानामपि वातहोमानां त्रित्वमुपपद्यत इत्याह—त्रिभिर्युनक्तीति । लोके धुरोऽधोभागे हस्ताभ्यां विपरिक्रम्य विपरिक्रम्याश्वस्य नियोजनादत्रापि तद्वदेव नियुज्यत इत्याह—अधोऽधो धुरमित्यादिना ॥ १० ॥

रथे अश्वानां नियोजने क्रममाह—स दक्षिणायुग्यमेवेति । युगं वहतीति युग्य इति युग्यशब्देनाश्वोऽभिधीयते। ननु चोक्तप्रकारे क्रमे को गुणः तद्वैपरीत्ये वा को दोषः इत्यत आह—एवं देवत्रेति । अत एव तैत्तिरीयके—दीक्षितस्य नेत्रयोरंजनक्रमविधानावसरे श्रुतम्—" दक्षिणं पूर्वमाङ्क्ते सव्यं हि पूर्वं मनुष्या आंजते "(तै.सं.६।१।१।५) इति । ननु तर्ह्युक्तक्रमेणाश्वमेव नियुंज्यादिति नेत्याह—तं नाभियुञ्ज्यादिति । वातहोमानामश्वत्वात्तैर्युक्तं रथं नाभियुनजानीत्यभिप्रायेण तमश्वं नाभियुञ्ज्यादित्यर्थः । अभियोजनं नाम युक्ते पुनर्योजनम् । एवं तर्ह्यस्य रथस्य प्रत्यक्षाश्वसम्बन्धो न स्यादित्यत आह—वाहनं त्विति । वाहनयुक्तेन रथेन कामान् भुनजा इत्याशयेन वाहनं दद्यात् । तं रथम् अध्वर्युगृहपर्यन्तमुपरि एव आहरेयुः इत्याह—तमुपर्य्येवेति । उपरि ह्येष इति । ' एषः ' रथो होमावसरे ' उपरि ' धारितः खल्वित्यर्थः । तेन रथेनाध्वर्युरेव होमादिकं कृतवानिति—तमध्वर्यवे दद्यादित्याह—तमध्वर्यवे इति । तर्हीदानीमेव तस्मै तमनुदिशेदिति नेत्याह—तं तु दक्षिणानामिति ॥ ११ ॥

वातहोमानन्तरं रुक्मतीनां होमं विधत्ते—अथेति[1] । रुक्छब्दसम्बन्धाद्धोमसाधनभूता ऋचो रुक्मत्यः । एवं

---

[1]—नव जुहोति यास्त इति प्रतिमंत्रम् । का. श्रौ. सू. । १८ । ५१ ।

यद्देव रुङ्मतीर्जुहोति । प्रजापतेर्विस्रस्ताद्रुगुदक्रामत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेताभी रुङ्मतीभी रुचमदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १३ ॥ ( शतम् ९००० ) ॥

यास्तेऽअग्ने सूर्ये रुचः । (चो) या वो देवाः सूर्ये रुचो रुचं नो धेहि ब्राह्मणेष्विति रुचꣳ रुचमित्यमृतत्वं वै रुगमृतत्वमेवास्मिन्नेतद्दधाति तिस्रऽआहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रुचं दधाति ॥ १४ ॥

( त्यु ) अथ वारुणीं जुहोति । ( त्यु ) अत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र वरुणो देवता तस्माऽएतद्धविर्जुहोति तदेनꣳ हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते वारुण्यर्चा स्वेनैवैनमेतदात्मना स्वया देवतया प्रीणाति ॥ १५ ॥

---

यद्देव रुङ्मतीर्जुहोति । प्रजापतेर्विस्रस्ताद्रुगुदक्रामत् । तं यत्र देवाः समस्कुर्वन्–तदस्मिन्नेताभी रुङ्मतीभी रुचमदधुः । तथैवास्मिन्नयमेतद्दधाति ॥ १३ ॥

"यास्तेऽअग्ने सूर्ये रुचो, या वो देवाः सूर्ये रुचो, रुचं नो धेहि ब्राह्मणेषु"– (वा. सं. १६ । ४६–४८) इति । रुचं रुचमिति । अमृतत्वं वै रुक् । अमृतत्वमेवास्मिन्नेतद्दधाति । तिस्र आहुतीर्जुहोति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवास्मिन्नेतद्रुचं दधाति ॥१४॥

### अथ वारुणीहोमः ।

अथ वारुणीं जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः । स एषोऽत्र वरुणो देवता । तस्मा एतद्धविर्जुहोति । तदेनं हविषा देवतां करोति । यस्यै वै देवतायै हविर्गृह्यते–सा देवता । न सा–यस्यै न गृह्यते । वारुण्यर्चा । स्वेनैवैनमेतदात्मना स्वया देवतया प्रीणाति ॥ १५ ॥

---

च 'रुङ्मतीर्जुहोति' इत्यस्य तत्साध्यान् होमान्कुर्यादित्यर्थः । पूर्वं 'देवाः' संस्कृतेऽस्मिन्नग्नौ 'एताभी रुङ्मतीभी रुचमदधुः' इति तथैव यजमानोऽपि करोतीत्याह- अत्रैष इति ॥ १२ ॥

अथ तासामेव होमं प्रकारान्तरेण प्रशंसति–यद्देवेति । पूर्वं 'विस्रस्तात्' 'प्रजापतेः' उत्क्रान्तां रुचं देवाः प्रजापतिं संस्कृत्य 'अस्मिन्नेताभी रुचमदधुः' इति तथैवायमपि यजमानः संचिताग्निलक्षणेऽस्मिन् प्रजापतौ रुचं निदधाति ॥ १३ ॥

ताश्च रुङ्मतीर्ऋचो दर्शयति–यास्ते अग्न इति । मन्त्रेषु पौनःपुन्येन रुक्छन्दस्य प्रयोगादस्मिन्नग्नावमृतत्वमेव निदधातीत्याह–रुचं रुचमित्यमृतत्वमिति । आहुतीनां त्रित्वेन कृत्स्न एवाग्नौ रुचं निदधातीत्याह–तिस्र आहुतीरिति ॥ १४ ॥

"तत्त्वा यामि ब्रह्मणा वन्दमानः" इतीयमृग्वारुणी, एतत्साध्यं होमं विधत्ते–अथ वारुणीं जुहोतीति ।

य॒द्वे॒व वा॑रु॒णीं जु॒होति । प्र॒जाप॑ते॒र्विस्र॑स्ताद्वी॒र्य॒मु॒दक्रा॒म॒त्तं य॒त्र दे॒वाः स॒म॒स्कु॒र्वं॒स्त॒द॒स्मि॒न्ने॒तया॑ वी॒र्य॒म॒द॒धु॒स्त॒थै॒वा॒स्मि॒न्न॒य॒मे॒तद्द॑धाति वा॒रु॒ण्य॒ऽ॒र्चा क्ष॒त्रं वै व॒रु॒णो॑ वी॒र्यं॑ वै॒ क्ष॒त्रं वी॒र्ये॒णै॒वा॒स्मि॒न्ने॒तद्वी॒र्यं॑ दधाति ॥ १६ ॥

त॒त्त्वा या॑मि॒ ब्र॒ह्म॒णा॒ व॒न्द॒मा॒न॒ऽइति । त॒त्त्वा या॑चे॒ ब्र॒ह्म॒णा॒ व॒न्द॒मा॒न॒ऽइत्ये॒तत्त॒दा॒शा॒स्ते॒ य॒ज॒मा॒नो॒ ह॒वि॒र्भि॒रि॒ति॒ त॒द॒य॒मा॒शा॒स्ते॒ य॒ज॒मा॒नो॒ ह॒वि॒र्भि॒रि॒त्ये॒त॒द॒हे॒ड॒मा॒नो॒ व॒रु॒णे॒ह॒ बो॒धी॒त्य॒क्रु॒ध्य॒न्नो॒ व॒रु॒णे॒ह॒ बो॒धी॒त्ये॒त॒दु॒रु॒श॒ꣳस॒ मा॒ न॒ऽआ॒युः॒ प्र॒मो॒षी॒रि॒त्या॒त्म॒नः॒ प॒रि॒दां व॑दते ॥ १७ ॥

---

यद्वेव वारुणीं जुहोति । प्रजापतेर्विस्रस्ताद्वीर्यमुदक्रामत् । तं यत्र देवाः समस्कुर्वन्–तदस्मिन्नेतया वीर्यमदधुः । तथैवास्मिन्नयमेतद्दधाति । वारुण्यर्चा । क्षत्रं वै वरुणः । वीर्यं वै क्षत्रम् । वीर्येणैवास्मिन्नेतद् वीर्यं दधाति ॥ १६ ॥

"तत्त्वा यामि ब्रह्मणा वन्दमानः"–इति । तत्त्वा याचे ब्रह्मणा वन्दमान इत्येतत् । "तदाशास्ते यजमानो हविर्भिः"–इति । तदयमाशास्ते यजमानो हविर्भिरित्येतत् । "अहेडमानो वरुणेह बोधि"–इति । अक्रुध्यन्नो वरुणेह बोधीत्येतत् । "उरुशंस मा न आयुः प्रमोषीः"–( वा. सं. १८ । ४९ ) इति । आत्मनः परिदां वदते ॥ १७ ॥

---

विहितं होमं प्रशंसति–अत्रैष इति । स एषोऽत्र वरुणो देवतेति । कात्स्न्र्येन संस्कृतस्य पूर्वावस्थापन्नस्य प्रजापतेः सर्वावरणसामर्थ्यादस्मिन्नवसरे य एव प्रजापत्यात्मकोऽग्निः स वरुणो देवता भवतीत्यर्थः । गतमन्यत् । होमसाधनभूताया ऋचो वरुणसम्बन्धं प्रशंसति–वारुण्यर्चेति । स्वेनात्मना स्वरूपेण स्वया देवतया चैनं प्रीणयतीत्यर्थः ॥ १९ ॥

अथ पुनस्तेनैव होमेन विस्रस्तात्प्रजापतेरुत्क्रान्तस्य वीर्यस्य धारणमस्मिन् सम्पाद्यत इत्याह–यद्वेव वारुणीमिति ॥ १६ ॥

होममन्त्रं व्याचष्टे–तत्त्वा यामीति । तत्र यामीत्यस्यार्थं प्रदर्शयति–याच इति । 'तदाशास्ते यजमानः' इत्यत्र प्रकृतो यजमानो विवक्ष्यते नान्य इति व्याचष्टे–तदयमिति । 'अहेडमानः' इत्यनेनासमम्यमक्रुध्यन्नित्ययमर्थो विवक्षित इत्याह–अक्रुध्यन्नो वरुणेति । उरुशंसेत्यनेनात्मन आशिषमाशास्ते । मा न आयुः प्रमोषीरित्यनेन वरुणादात्मनो रक्षणमुक्तवान्भवतीत्याह–आत्मनः परिदां वदत इति । हे वरुण ! यद् यज्ञपरिसमाप्तिलक्षणं प्रयोजनमस्ति तत्प्रयोजनं ब्रह्मणा वेदेन वंदमानः स्तुतिं कुर्वाणः तत्त्वा यामि याचे । अयं यजमानो हविर्भिस्तदेव प्रयोजनमाशास्ते । तस्माद्भवानसम्यमहेडमानोऽक्रुध्यन्निहास्मद्विषये तत्प्रयोजनं प्रतिपादयितुं बोधि बुध्यस्व तदीयतामित्यर्थः । "दीनजनबुध०" इत्यादिना कर्तरि चिण् "बहुलं छन्दसि" इत्यादिनाऽडभावः । हे उरुशंस बहुस्तुतिविशिष्ट ! नोऽस्माकमायुः मा प्रमोषीर्माऽपहार्षीरिति मन्त्रस्यार्थः ॥ १७ ॥

( तेऽथा ) अथार्काश्वमेधयोः संततीर्जुहोति । (त्य) अयं वाऽअग्निरर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानेवास्तां तौ देवाऽएताभिराहुतिभिः समतन्वन्त्समदधुस्तथैवैनावयमेतदेताभिराहुतिभिः संतनोति संदधाति ॥१८॥

स्वर्ण घर्मः स्वाहेति । ( त्य ) असौ वाऽआदित्यो घर्मोऽमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति ॥ १९ ॥

स्वर्णार्कः स्वाहेति । ( त्य ) अयमग्निरर्क ऽइमं तदग्निममुष्मिन्नादित्ये प्रतिष्ठापयति ॥ २० ॥

स्वर्ण शुक्रः स्वाहेति । ( त्य ) असौ वाऽआदित्यः शुक्रस्तं पुनरमुत्र दधाति ॥ २१ ॥

स्वर्ण ज्योतिः स्वाहेति । (त्य) अयमग्निर्ज्योतिस्तं पुनरिह दधाति ॥२२॥

---

## अथ सन्ततिहोमः ।

अथार्काश्वमेधयोः सन्ततीर्जुहोति । अयं वा अग्निरर्कः, असावादित्योऽश्वमेधः । तौ सृष्टौ नानेवास्ताम् । तौ देवा एताभिराहुतिभिः समतन्वन्, समदधुः । तथैवैनावयमेतदेताभिराहुतिभिः संतनोति, संदधाति ॥ १८ ॥

" स्वर्ण घर्मः स्वाहा "–इति । असौ वा आदित्यो घर्मः । अमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति ॥ १९ ॥

" स्वर्णार्कः स्वाहा "–इति । अयमग्निरर्कः । इमं तदग्निमस्मिन्नादित्ये प्रतिष्ठापयति॥२०॥

" स्वर्ण शुक्रः स्वाहा "–इति । असौ वा आदित्यः शुक्रः । तं पुनरमुत्र दधाति ॥ २१ ॥

" स्वर्ण ज्योतिः स्वाहा "–इति । अयमग्निर्ज्योतिः । तं पुनरिह दधाति ॥ २२ ॥

---

अथ अर्काश्वमेधसन्ततिसंज्ञान् होमान् विधत्ते–अथेति । ननु कावर्काश्वमेधौ किमर्थं वा तयोः सन्धानसम्पादनमित्यत आह–अयं वा अग्निरिति । 'अयम्' इदानीं संचितोऽग्निरेवार्कः । 'असौ' इति दूरदेशवर्त्ती सूर्यो निर्दिश्यते । तस्य चाश्वमेधत्वम् अश्वमेधसंबन्धिनोऽश्वस्य तदात्मनाऽनुसन्धातव्यत्वात् । तावर्काश्वमेधौ पूर्वं संसृष्टौ सन्तौ पश्चाद्विभिन्नावभूताम्, अतो देवा विभिन्नौ ' तौ एताभिराहुतिभिः समतन्वन् ' एतस्यैव विवरणम्–समदधुरिति । पुनरपि संसृष्टावकुर्वन्नित्यर्थः । अतश्च यजमानोऽपि एताभिराहुतिभिस्तथैवैनौ संसृष्टौ करोति ॥ १८ ॥

होममन्त्रान्व्याचष्टे–स्वर्ण घर्मः स्वाहेति । असौ वा आदित्य इति । ' घर्म ' इत्यसावादित्य उच्यते । ततश्चैतन्मंत्रसाध्येन होमेनामुमादित्यमस्मिन्नग्नौ प्रतिष्ठापयति । स्वरिति स्वर्लोक उच्यते । नशब्द इवार्थे । सुखहेतुत्वेन स्वर्लोक इव यो घर्म आदित्यः तं स्वाहा अस्मिन्नग्नौ जुहोमि । प्रतिष्ठापयामीति मंत्रस्यार्थः ।

स्वर्ण सूर्यः स्वाहेति । ( त्य ) असौ वाऽआदित्यः सूर्योऽमुं तदादित्यमस्य सर्व्वस्योत्तमं दधाति तस्मादेषोऽस्य सर्व्वस्योत्तमः ॥ २३ ॥

पञ्चैता ऽआहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चऽर्तवः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनावेतत्संतनोति संदधाति॥२४॥

यद्वेवाह । स्वर्ण घर्मः स्वाहा स्वर्णार्कः स्वाहेत्यस्यैवैतान्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथोऽएतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति ॥ २५ ॥

पञ्चैता ऽआहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चऽर्तवः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ २६ ॥

---

"स्वर्ण सूर्यः स्वाहा"–( वा० सं० १८ । ५० ) इति । असौ वाऽआदित्यः सूर्यः । अमुं तदादित्यमस्य सर्वस्योत्तमं दधाति । तस्मादेषोऽस्य सर्वस्योत्तमः ॥ २३ ॥

पञ्चैता आहुतीर्जुहोति । पञ्चचितिकोऽग्निः। पञ्चऽर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनावेतत्संतनोति, संदधाति ॥ २४ ॥

यद्वेवाह–स्वर्ण घर्मः स्वाहा, स्वर्णार्कः स्वाहेति । अस्यैवैतान्यग्नेर्नामानि । तान्येतत्प्रीणाति । तानि हविषा देवतां करोति । यस्यै वै देवतायै हविर्गृह्यते–सा देवता । न सा–यस्यै न गृह्यते । अथो एतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति ॥ २५ ॥

पञ्चैता आहुतीर्जुहोति । पञ्चचितिकोऽग्निः । पञ्चर्तवः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतदन्नेन प्रीणाति ॥ २६ ॥

---

एवमुत्तरेष्वपि मन्त्रेषु योजनीयम् । " तं पुनरमुत्र दधाति, तं पुनरिह दधाति " इति मन्त्रद्वयेन अन्योऽन्यस्मिन्नन्योऽन्यस्य प्रतिष्ठापनात् आदित्य एवाग्निर्जातः; अग्निरेवादित्यो जातः । तस्मादग्निरमुत्रेति दूरदेशवर्ती परामृश्यते । आदित्यस्त्विहेति सन्निहितः परामृश्यते । अमुं तदादित्यमिति । स्वर्ण सूर्यः स्वाहेत्यनेनोपर्यादित्यस्य प्रतिष्ठापनादादित्यमस्य सर्वजगत उत्तममुपरि वर्तमानं निहितवान्भवति । यत एवं तस्माद्दिदानीमेष आदित्योऽस्य सर्वस्योत्तमो वर्तते ॥ १९–२३ ॥

आहुतीनां पंचत्वसंख्याम् अर्काश्वमेधयोः संधानसाकल्यहेतुर्भवतीति प्रशंसति–पञ्चैता आहुतीरिति ॥२४॥

अथ स्वर्ण घर्मः स्वाहेत्यादिमन्त्रप्रयोगं प्रकारान्तरेण प्रशंसति–यद्वेवाहेति । नृषदे वेडित्यादि ( श. प. ९ । २ । १ । ८–९ ) स्वयमातृण्णाव्याघारणमन्त्रव्याख्यानेनैव व्याख्यातमेतत् ॥ २५ ॥

यद्वेवाहेत्यादिकस्यार्थवादान्तरत्वानुसारेण पुनरपि तामेवाहुतिसंख्यां प्रशंसति–पञ्चैता आहुतीरिति ॥ २६ ॥

( त्य ) अथातऽआहुतीनामेवावपनस्य । यां कां च ब्राह्मणवतीमाहुतिं विद्यात्तामेतस्मिन्काले जुहुयात्कामेभ्यो वाऽएतथ्ँ रथं युङ्क्ते तद्यां कां चात्राहुतिं जुहोत्याप्तां ताथ्ँ सतीं जुहोति ॥ २७ ॥

तदाहुः । ( नं ) न जुहुयान्नेदतिरेचयानीति स वै जुहुयादेव कामेभ्यो वाऽएता ऽआहुतयो हूयन्ते न वै कामानामतिरिक्तमस्ति ॥ २८ ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ९-३-४ ॥ ( ४. २. ) ॥

---

अथात आहुतीनामेवावपनस्य । यां कां च ब्राह्मणवतीमाहुतिं विद्यात्—तामेतस्मिन् काले जुहुयात् । कामेभ्यो वा एतं रथं युङ्क्ते । तद् यां कां चात्राहुतिं जुहोति । आप्तां तां सतीं जुहोति॥ २७॥

तदाहुः—न जुहुयात्—नेदतिरेचयानीति । स वै जुहुयादेव । कामेभ्यो वाऽएता आहुतयो हूयन्ते । न वै कामानामतिरिक्तमस्ति ॥ २८ ॥

इत्याहवनीयाग्निचयनोत्तरकर्माणि ।

---

अथाहुतीनामावपनस्य मीमांसां प्रतिजानीते—अथात इति । आवपनं प्रक्षेपः, तस्य मीमांसा क्रियत इति शेषः । तामेव मीमांसां दर्शयति—यां कां च ब्राह्मणवतीमिति । ब्राह्मणसंयुक्तां शाखान्तरे अग्निचयनब्राह्मणोक्तामनारभ्याधीतां यां कांचनाहुतिं जानीयात्—तामेतस्मिन्काले जुहुयात् । ननु च कालान्तरोल्लङ्घनेनास्मिन्नेव काले कस्मात्तदाहुतिहोम इति तत्राह—कामेभ्यो वा इति । एतस्मिन्काले कामानाप्तुमेव निरवशेषं संस्कृतमेतमग्निमेव रथं युंक्ते तस्मादस्मिन्काले यां कांचनाहुतिं जुहोति । तामाप्तां सतीं जुहोतीति । पूर्वं तु हुताऽपि तदानीमग्नेरसंस्कृतत्वादनाप्तैव भवतीत्यर्थः ॥ २७ ॥

अथ ब्राह्मणोक्तानामाहुतीनामहोमं पूर्वपक्षीकृत्य पुनर्होममेव सिद्धान्तयति—तदाहुरिति । एतस्मिन्ब्राह्मणेऽनाम्नानात्तथाविधाहुतीनां होमेऽतिरेकः स्यादिति हेतुमाहुः—नेदतिरेचयानीति । इत्यभिप्रायेण न जुहुयादिति केचिच्छाखिन आहुः । न चैवमतिरेकशङ्कया न जुहुयात् । कुतः ? कामेभ्यः खल्वेता आहुतयो हूयन्ते । नहि कामानामतिरिक्तमतिरेकोऽस्ति । सर्वेषामपि कामानामपेक्षितत्वात्तथा च कामार्थानामेतासामाहुतीनां होमोऽपि नातिरेक इति जुहुयादेवेत्यर्थः ॥ २८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे चतुर्थेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ९-४-२ ) ॥

---

१—जानन् ब्राह्मणोक्ता जुहुयाद् वा । का० श्रौ० सू० १८ । ९२ ।

अथ प्रत्येत्य धिष्ण्यानां काले धिष्ण्यान्निवपति । ( त्य ) अग्नय ऽएते यद्धिष्ण्या ऽअग्नीनेवैतच्चिनोति ता ऽएता विशः क्षत्रमयमग्निश्चितः क्षत्रं च तद्विशं च करोत्यमुं पूर्वं चिनोत्यथेमान्क्षत्रं तत्कृत्वा विशं करोति ॥ १ ॥

( त्यु ) एक ऽएष भवति । ( त्ये ) एकस्थं तत्क्षत्रमेकस्थाᳫं श्रियं करोति बहव ऽइतरे विशि तद्भूमानं दधाति ॥ २ ॥

पञ्चचितिक ऽएष भवति । ( त्यु ) ऽएकचितिका ऽइतरे क्षत्रं तद्वीर्य्येणात्या-दधाति क्षत्रं विशो वीर्यवत्तरं करोत्यूर्ध्वमेतं चिनोति क्षत्रं तदूर्ध्वं चितिभिश्चिनोति तिरश्च ऽइतरान्क्षत्राय तद्विशमधस्तादुपनिषादिनीं करोति ॥ ३ ॥

---

### अथाष्टानां धिष्ण्याग्नीनां चयनम् ।

अथ प्रत्येत्य धिष्ण्यानां काले धिष्ण्यान्निवपति । अग्नय एते—यद्धिष्ण्याः । अग्नीनेवैतच्चिनोति । ता एता विशः, क्षत्रमयमग्निश्चितः । क्षत्रं च तद्विशं च करोति । अमुं पूर्वं चिनोति—अथेमान् । क्षत्रं तत्कृत्वा विशं करोति ॥ १ ॥

एक एष भवति । एकस्थं तत्क्षत्रमेकस्थां श्रियं करोति । बहव इतरे । विशि तद्भूमानं दधाति ॥ २ ॥

पञ्चचितिक एष भवति, एकचितिका इतरे । क्षत्रं तद्वीर्येणात्यादधाति । क्षत्रं विशो वीर्यवत्तरं करोति । ऊर्ध्वमेतं चिनोति । क्षत्रं तदूर्ध्वं चितिभिश्चिनोति । तिरश्च इतरान् । क्षत्राय तद्विशमधस्तादुपनिषादिनीं करोति ॥ ३ ॥

---

अथ प्रत्येत्य धिष्ण्यानां काले धिष्ण्यान्निवपेदित्याह—अथेति । धिष्ण्यानां काल इत्यनेन धिष्ण्यनिवपना-त्पूर्वभाविकर्म कृत्वा पश्चाद्धिष्ण्यान्निवपेदिति गम्यते । अत एव कात्यायनः—" हविर्धानप्रक्षालनाद्याग्नीध्रालम्भना-न्त्कृत्वा धिष्ण्यांश्चिनोति " ( का. श्रौ. सू. १८ । ९३ ) इति । धिष्ण्यानां निवपनेनाग्नीनेव चिनोतीत्याह—अग्नय एते यद्धिष्ण्या इति । धिष्ण्यानां स्वेषु अग्निविहरणादग्नित्वम् । अत एव तैत्तिरीयकेऽपि धिष्ण्यानामग्नित्वं श्रूयते " अग्नयो वा अथ धिष्णियाः " ( तै. सं. ६ । ३ । १ । २ ) इति । सञ्चितस्याग्नेः क्षत्रत्वादेतेषां धिष्ण्यानां विट्त्वात् ' क्षत्रं च ' ' विशं च ' चितवान् भवतीत्याह—ता एता विश इति । अग्निचयनस्य धिष्ण्यचय-नस्य च पौर्वापर्यात् पूर्वं क्षत्रं कृत्वा अथ विशं कृतवान् भवतीत्याह—अमुं पूर्वमिति ॥ १ ॥

संचितस्याग्नेरेकत्वात् क्षत्रजातिस्थं प्राधान्यं श्रियं चेत्युभे अप्येकस्थे करोति । धिष्ण्यानां बहुत्वात् ' विशि ' एव बहुत्वं करोतीत्याह—एक एष भवतीत्यादिना ॥ २ ॥

एषोऽग्निः ' पञ्चचितिको ' भवति ' इतरे ' धिष्ण्यास्तु एकचितिका भवेयुः । तेन चितिबाहुल्यात् ' क्षत्रम् ' एव वीर्येणोपरि करोति । ' विशः ' अपेक्षया वीर्यवत्तरं च करोतीत्याह—पञ्चचितिक इति । किञ्च ' एतम् ' अग्निम् ' ऊर्ध्वं चिनोति ' क्रमेणोपर्युपरि पञ्चानां चितीनामुपधानात् । तेन क्षत्रमेवोर्ध्वं ' चितिभिश्चि-नोति ' । इतरान् धिष्ण्यांस्तु तिर्यग्गतांश्चिनुयात्, तेनोपरि वर्त्तमानाय क्षत्राय विशमधस्तादवस्थितां करोतीत्याह—ऊर्ध्वमेतमिति ॥ ३ ॥

(त्यु) उभाभ्यां यजुष्मत्या च लोकम्पृणया चैतं चिनोति । लोकम्पृणयैवेमान्क्षत्रमेव तद्वीर्येणात्याद्दधाति क्षत्रं विशो वीर्यवत्तरं करोति विशं क्षत्रादवीर्यतराम् ॥ ४ ॥

(ण्ठें) स यदिमाँल्लोकम्पृणयैव चिनोति । क्षत्रं वै लोकम्पृणा क्षत्रं तद्विश्यत्तारं दधात्युभयांश्चिनोत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्वानथाग्नेस्तस्योक्तो बन्धुर्यं यमेवाध्वरधिष्ण्यं निवपति तं तं चिनोत्याग्नीध्रीयं प्रथमं चिनोति तण्ठें हि प्रथमं निवपति दक्षिणत ऽउदङ्ङासीनस्तस्योक्तो बन्धुः ॥ ५ ॥

( स्तु ) तस्मिन्नष्टाविष्टका ऽउपदधाति । (त्य) अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति तासामश्मा

---

उभाभ्यां–यजुष्मत्या च लोकम्पृणया चैतं चिनोति । लोकम्पृणयैवेमान् । क्षत्रमेव तद्वीर्येणात्यादधाति । क्षत्रं विशो वीर्यवत्तरं करोति । विशं क्षत्रादवीर्यतराम् ॥ ४ ॥

स यदिमाँल्लोकम्पृणयैव चिनोति । क्षत्रं वै लोकम्पृणा । क्षत्रं तद्विश्यत्तारं दधाति । उभयाँश्चिनोति–अध्वरस्य चाग्नेश्च । अध्वरस्य पूर्वान्, अथाग्नेः । तस्योक्तो बन्धुः । यं यमेवाध्वरधिष्ण्यं निवपति–तं तं चिनोति । आग्नीध्रीयं प्रथमं चिनोति । तं हि प्रथमं निवपति । दक्षिणत उदङ्ङासीनः । तस्योक्तो बन्धुः ॥ ५ ॥

तस्मिन्नष्टाविष्टका उपदधाति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावन्तमेवैनमेतच्चिनोति । तासामश्मा पृश्निर्नवमः । नव वै प्राणाः–सप्त शीर्षन्, अवाञ्चौ द्वौ । ताने-

---

' यजुष्मत्या ' ' लोकम्पृणया ' चेति ' उभाभ्याम् ' इष्टकाभ्याम् ' एतम् ' अग्निम् ' चिनोति ' । ' इमान् ' धिष्ण्यांस्तु केवलं लोकम्पृणयैव इष्टकया चिनुयात् । तेन क्षत्रमेव वीर्येण उपरि करोति । विशोऽपेक्षया वीर्यवत्तरं च करोति । विशं पुनः क्षत्रादवीर्यतरां कृतवान्भवतीत्याह–उभाभ्यामिति ॥ ४ ॥

एषां धिष्ण्यानां चयनेन क्षत्रमेव भोग्यरूपायां विशि भोक्तारं निदधातीत्याह–स यदिमांल्लोकम्पृणयैवेति । ' उभयांश्चिनोति ' इत्यस्यायमर्थः–सोमयागसंबन्धिनोऽग्निचयनसम्बन्धिनश्चेत्युभयानपि धिष्ण्यांश्चिनोति । तत्र सोमयागसम्बन्धिनः पूर्वं निवपेत् । पश्चादग्निचयनसम्बन्धिनश्चिनुयात् । तस्य तु पौर्वापर्यस्य ब्राह्मणं ( श. प. ६ । ६ । १ । ४ ) प्रागुक्तमित्याह–तस्योक्तो बन्धुरिति । ननु तर्हि सर्वानपि न्युप्य पश्चात् चिनुयादिति नेत्याह–यं यमेवेति । यं यमेवाध्वरधिष्ण्यं निवपति तदानीमेव तं तं चिनुयात् । पूर्वमाग्नीध्रीयस्याध्वरधिष्ण्यस्य निवपनात्तथैव तं पूर्वमेव चिनुयादित्याह–आग्नीध्रीयं प्रथममिति । तस्य चयनं दक्षिणभागे उदङ्मुख आसीनः कुर्यात् इत्याह–दक्षिणत इति । तस्य तु ब्राह्मणं प्रागुक्तमित्याह–तस्योक्तो बन्धुरिति ॥ ५ ॥

अथ धिष्ण्येऽष्टाविष्टका उपदधातीत्याह–तस्मिन्नष्टाविति । तामिष्टकासंख्यां प्रशंसति–अष्टाक्षरा

पृश्निर्नवमो नुव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति युश्चितेऽग्निर्निधीयुते स दशमो दश वै प्राणा मुध्यमाग्नीध्रं मध्यतस्तत्प्राणान्दधाति मुध्ये ह वाऽएतत्प्राणाः सुन्त ऽइति चेति चात्मानमनु व्युच्चरन्ति ॥ ६ ॥

( न्त्ये ) एकविꣳशतिꣳ होत्रीयऽउपदधाति । ( त्ये ) एकविꣳशतिर्वैव परिश्रितस्तुस्योक्तो बुन्धुरेकादश ब्राह्मणाच्छꣳस्यऽएकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभ ऽइन्द्र ऽऐन्द्रो ब्राह्मणाच्छꣳस्यष्टावष्टावितरेषु तुस्योक्तो बुन्धुः ॥ ७ ॥

---

वास्मिन्नेतद्दधाति । यश्चितेऽग्निर्निधीयते–स दशमः । दश वै प्राणाः । मध्यमाग्नीध्रम् । मध्यतस्तत्प्राणान्दधाति । मध्ये ह वा एतत्–प्राणाः सन्त इति चेति चात्मानमनु व्युच्चरन्ति ॥ ६ ॥

( १ ) एकविंशतिं होत्रीय उपदधाति । एकविंशतिर्वैव परिश्रितः । तस्योक्तो बन्धुः । ( २ ) एकादश ब्राह्मणाच्छंस्ये । एकादशाक्षरा वै त्रिष्टुप् । त्रैष्टुभ इन्द्रः । ऐन्द्रो ब्राह्मणाच्छंसी । ( ३, ४, ५, ६, ७ ) अष्टावष्टावितरेषु । तस्योक्तो बन्धुः ॥ ७ ॥

---

गायत्रीति । गायत्र्या सहोत्पत्तेः अग्नेर्गायत्रत्वम् । एतासामष्टानामिष्टकानाम् आग्नीध्रीये विहितोपधाने पृश्नावश्मनि नवमे सति नवत्वसंख्या संपद्यते । प्राणाश्च शिरसि सप्तावाञ्चौ द्वाविति नव भवन्ति । अतश्चानया संख्यया एतस्मिन्नव प्राणानेव दधातीत्याह–तासामश्मेति, नव वा इति । अग्नौ निहितमग्निं दशमं कृत्वा पुनरपि तथैव प्रशंसति–यश्चितेऽग्निरिति । नाभ्या सह प्राणानां दशत्वम् । अत एव श्रूयते–"नव वै पुरुषे प्राणा नाभिर्दशमी" ( तै. सं. ५ । ३ । २ । ३ ) इति । एवं चाग्नीध्रस्य मध्यप्रदेशत्वान्मध्यत एव दश प्राणान्दधाति । ननु चोर्ध्वाधोभागेभ्यः प्राणानां संचारान्मध्यतः तन्निधानमनुचितमित्यत आह–मध्ये ह वा एतदिति । इति चेति चेति ऊर्ध्वाधोभागौ हस्तेन दर्शयति । हृदयदेशे 'प्राणाः' अवतिष्ठमानाः 'आत्मानं' शरीरम् 'अनु' लक्ष्य 'इति चेति च' ऊर्ध्वभागादधोभागाच्च 'व्युच्चरन्ति' विविधमुत्क्रामन्ति । यथायथं गोलकैर्निर्गच्छन्तीत्यर्थः ॥ ६ ॥

अथ होत्रीये धिष्ण्ये एकविंशतिमिष्टका एकविंशतिपरिश्रितश्चोपदध्यादित्याह–एकविंशतिमिति । तस्य तु ब्राह्मणं "द्वादश मासाः"–इत्यादिना प्रागेवोक्तमित्याह–तस्योक्तो बन्धुरिति । अथ ब्राह्मणाच्छंसिनो धिष्ण्ये एकादशेष्टका उपदध्यादित्याह–एकादशेति । तत्रोपधेयानामिष्टकानामेकादशत्वमुपपन्नमित्याह–एकादशाक्षरा वै त्रिष्टुबिति । एकादशाक्षरपादत्वात् त्रिष्टुबेकादशाक्षरा । इन्द्रश्च त्रैष्टुभो भवति । इन्द्रस्य त्रिष्टुभा सहोत्पत्तेः । ब्राह्मणाच्छंसी पुनरैन्द्रः तेन प्रतिपादिताभिर्ऋग्भिर्यागस्य विधानात् । इत्थं परम्परया ब्राह्मणाच्छंसिनस्त्रिष्टुभा सम्बन्धात् तत्संख्यानुविधानमिष्टकानां युज्यत इत्यर्थः । नन्वितरेषु धिष्ण्येषु कति इष्टका उपदध्यादिति तत्राह–अष्टावष्टावितरेष्विति[1] ॥ ७ ॥

---

१–अष्टेष्टकां लोकंपृणाभिश्चतुःस्रक्तींस्तिरश्चो न्युप्य न्युप्य । पृश्न्यश्मा चाग्नीध्रीये । सकृन्मंत्रवचनम् । होत्रीये त्रिरेकावि ꣳशत्या । ब्राह्मणाच्छ ꣳ स्ये द्विरेकादशसु षण्मार्ज्जालीये । शेषा अष्टेष्टकाः । का. श्रौ. सू. १८ । ९३–९८ ।

षुण्मार्जालीये । षड्वा ऽऋतव ऽऋतवः पितरस्तुँ हैतमृतवः पितरो दक्षिणतः पुर्यूहिरे स ऽएषामेषु दक्षिणतः स वा ऽइतीममुपदधातीतीमानि-त्यमुं विशं तत्क्षत्रमभिसंमुखां करोति ॥ ८ ॥

( त्यु ) अथैनान्परिश्रिद्भिः परिश्रयति । ( त्या ) आपो वै परिश्रितो-ऽद्भिरेवैनांस्तत्परितनोति स वै पर्येव निदधाति क्षत्रुँ हैता ऽअपां याः खातेन यन्त्यथ हैता विशो यानीमानि वृथोदकानि स यदमुं खातेन परिश्रयति क्षत्रे तत्क्षत्रं दधाति क्षत्रं क्षत्रेण परिश्रयत्यथ यदिमान्पर्येव निदधाति विशि तद्विशं दधाति विशा विशं परिश्रयति तेषां वै यावत्य ऽएव यजुष्मत्यस्तावत्यः परिश्रितो यावत्यो ह्येवामुष्य यजुष्मत्यस्ता-वत्यः परिश्रितः क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति ॥ ९ ॥

---

( ८ ) षण्मार्जालीये । षड्वाऽऋतवः । ऋतवः पितरः । तं हैतमृतवः पितरो दक्षिणतः पर्यूहिरे । स एषामेष दक्षिणतः । स वा इतीममुपदधाति, इतीमान्, इत्यमुम् । विशं तत्क्षत्रमभिसंमुखां करोति ॥ ८ ॥

अथैनान्परिश्रिद्भिः परिश्रयति । आपो वै परिश्रितः । अद्भिरेवैनांस्तत्परितनोति । स वै पर्येव निदधाति । क्षत्रं हैता अपां—याः खातेन यन्ति । अथ हैता विशो—यानीमानि वृथोदकानि । स यदमुं खातेन परिश्रयति—क्षत्रे तत् क्षत्रं दधाति । क्षत्रं क्षत्रेण परिश्रयति । अथ यदिमान्पर्येव निदधाति—विशि तद्विशं दधाति । विशा विशं परिश्रयति । तेषां वै यावत्य एव यजुष्मत्यस्ता-वत्यः परिश्रितः । यावत्यो ह्येवामुष्य यजुष्मत्यः—तावत्यः परिश्रितः । क्षत्रायैव तद्विशं कृतानुकरा-मनुवर्त्मानं करोति ॥ ९ ॥

---

एवं—षण्मार्जालीय इति । अथ कथं तत्र षण्णामिष्टकानामुपधानमिति तत्राह—षड्वा ऋतव इति । यस्मिन्नृतौ यो म्रियेत स जनः स एवर्तुर्भवति । अयमर्थस्तैत्तिरीयके श्रूयते—" यदि वसन्ता प्रमीयते वसन्तो भवति "–( तै. ब्रा. ) इत्यादिना । यतश्च ऋत्वात्मकाः पितरस्तं मार्जालीयं धिष्ण्यं दक्षिणभागे व्यवस्थापित-वन्तः अत इदानीं स एष मार्जालीय एषां देवानां दक्षिणभागेऽवतिष्ठते । एवमृत्वात्मकपितृसम्बन्धात्तत्रोपधेयाना-मिष्टकानामृतुसंख्यानुविधानमुपपन्नम् । अथ धिष्ण्यानां चित्याग्नेश्च संस्थानं प्रशंसति—स वा इतीति । आग्नीध्र-देशे धिष्ण्योपधानप्रकारं हस्तेन दर्शयति—इतीमानिति । ' इतीमान् ' इत्यत्र 'इति' शब्देन सदसि होत्रीयादि-धिष्ण्यानामुपधानप्रकारम्, ' इत्यमुम् ' इति ' इति '—शब्देन चित्याग्न्युपधानप्रकारम् ' तत् ' तेनोक्त-प्रकारेणोपधानेनामुं धिष्ण्यरूपां विशं क्षत्रमभिसम्मुखां कृतवान् भवति । तस्माद्धिष्ण्यानामग्नेश्चोक्तप्रकारमुपधान-मुपपन्नमित्यर्थः ॥ ८ ॥

इष्टकाभिश्चितानां धिष्ण्यानां परिश्रिद्भिः परिश्रयणं विधत्ते—अथैनानिति । आपो वै परिश्रित इति ।

( त्यु ) अथैषु पुरीषं निवपति । तस्योक्तो बन्धुस्तूष्णीमनिरुक्ता हि विडथाग्नीषोमीयस्य पशुपुरोडाशमनु दिशामवेष्टीर्निर्व्वपति दिश ऽएषो- ऽग्निस्ताभ्य ऽएतानि हवीꣳषि निर्व्वपति तदेना हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते पञ्च भवन्ति पञ्च हि दिशः ॥ १० ॥

अथैषु पुरीषं निवपति । तस्योक्तो बन्धुः । तूष्णीम् । अनिरुक्ता हि विट् । अथाग्नीषोमीयस्य पशुपुरोडाशमनु दिशामवेष्टीर्निर्वपति । दिश एषोऽग्निः । ताभ्य एतानि हवींषि निर्वपति । तदेना हविषा देवतां करोति । यस्यै वै देवतायै हविर्गृह्यते—सा देवता । न सा—यस्यै न गृह्यते । पञ्च भवन्ति । पञ्च हि दिशः ॥ १० ॥

समुद्रगता आपो यथा पृथिवीं परिश्रयन्ति—तद्वत्परिश्रितोऽपि धिष्ण्यान् परिश्रयन्ति । तस्मात्परिश्रयणसाधारण्ये- नैतासामबात्मकत्वम् । चित्याग्नेः परितश्चैताः परिश्रितो धीयन्ते । अतोऽत्रापि परिश्रयतीति विधानात्तद्देव प्रस- क्तावाह—स वा इति । 'पर्येव निदधाति' परिनिदधात्येव परिनिधानमात्रमेव कर्तव्यम् । न तु खात्वा तन्नि- धानमित्येवकारार्थः । क्षत्रं हैता इति । 'अपां' मध्ये 'याः खातेन यन्ति' एताः क्षत्रं खलु । क्षत्रवद्वीर्येण भुवं विदार्य गमनात्प्रतिष्ठितत्वाच्च खातेन गच्छन्तीनामपां क्षत्रत्वम् । अथ 'यानीमानि' लौकिकानि 'वृथोदकानि' उत्तानदेशगामीनि एताः विशः खलु, विशो हि क्षत्रवत् समर्थ्याभावात्प्रतिष्ठिताश्च न भवन्ति । उत्तानदेश- गामीन्यप्युदकानि तद्वदिति तेषां विडात्मकत्वम् । अतश्चामुं चित्याग्निं खातेन परिश्रयतीति यत् तेन क्षत्रे क्षत्रं दधाति क्षत्रं क्षत्रेण परिश्रयति । अथेमान् धिष्ण्यान् परिनिदधात्येवेति यत् तेन विशि एव विशं दधाति । विशा विशं परिश्रयति । अथैतेषां धिष्ण्यानां परिश्रितां परिमाणं विधत्ते—तेषां वा इति । तत्र यजुष्मत्य इति उपहिता इष्टका एवोच्यन्ते । न त्वयजुष्मदिष्टकाव्यवच्छेदार्थमेवमुक्तम् । धिष्ण्येषूपधीयमानाः सर्वा अपि इष्टका लोकम्पृणामन्त्रेणोपधीयन्ते—"लोकम्पृणयैवेमानि" इत्युक्तत्वात् । यावत्यो ह्येवामुष्य यजुष्मत्य इति । अनेन लोकम्पृणाव्यतिरिक्तमन्त्रवत्य इष्टका उच्यन्ते । उत्तरत्राग्निरहस्ये तथैव परिगणनात् । एवं च चित्या- ग्नेर्यथा यजुष्मतीष्टकासङ्ख्यानुरोधेन परिश्रितोऽभूवन् तद्वदेव धिष्ण्यानामपि भवन्तीति विशं क्षत्राय कृतानुका- रिणीमनुगतवर्त्मानं च करोति ॥ ९ ॥

अथैतेषु धिष्ण्येषु पुरीषनिवापं विधाय तस्य ब्राह्मणं ( श. प. ८।७।३।१ ) प्रागुक्तमित्याह—अथेति[२] । पूर्वं समंत्रकस्य पुरीषनिवापस्याभिधानादत्रापि तद्वदेव प्रसक्तावाह—तूष्णीमिति । अनिरुक्तेति । क्षत्रं यथा स्वकीयया आज्ञया सर्वमप्यतिक्रम्य व्यक्तं वर्तते तथा विशो न वर्त्तन्त इति विट् 'अनिरुक्ता' अव्यक्ता । एवं च विडात्मकेषु धिष्ण्येषु पुरीषनिवपनममन्त्रकमेव युज्यत इत्यर्थः । अथाग्नीषोमीयपशुपुरोडाशात्प्राग्भावि कर्म कृत्वा अग्नीषोमीयस्य पशुपुरोडाशमनु पशुपुरोडाशस्य पश्चाद्दिशामवेष्टीर्निर्वपेत् इत्याह—दिशामवेष्टीरिति ।

१—यावदिष्टकं परिश्रितः परिनिधाय । का. श्रौ. सू. १८ । ९९ । २—पुरीषं च तूष्णीम् । का. श्रौ. सू. १८ । १०० । ३—राजसूये अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहवींषि निर्व्वपति यजमानेषाणि । का. श्रौ. सू. १५ । ६४ ।

( स्तु ) तदाहुः । ( दे ) दशहविषमेवैतामिष्टिं निर्वपेत्सा सर्वस्तोमा सर्वपृष्ठा सर्वाणि च्छन्दाꣳसि सर्वा दिशः सर्वऽऋतवः सर्वम्वेतदयमग्निस्तदेनꣳ हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते दश भवन्ति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा ऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ११ ॥

तत्त्वै देवस्वामेव । ( वै ) एतानि हवीꣳषि निर्वपेदेता ह देवताः सुता ऽएतेन सवेन येनैतत्सोष्यमाणो भवति ता ऽएवैतत्प्रीणाति ताऽअस्माऽइष्टाः प्रीता ऽएतꣳ सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो

---

तदाहुः । दशहविषमेवैतामिष्टिं निर्वपेत् । सा सर्वस्तोमा, सर्वपृष्ठा, सर्वाणि च्छन्दांसि, सर्वा दिशः, सर्व ऋतवः । सर्वम्वेतदयमग्निः । तदेनं हविषा देवतां करोति । यस्यै वै देवतायै हविर्गृह्यते–सा देवता । न सा–यस्यै न गृह्यते । दश भवन्ति । दशाक्षरा विराट् । विराडग्निः । दश दिशः । दिशोऽग्निः । दश प्राणाः । प्राणा अग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतदन्नेन प्रीणाति ॥ ११ ॥

तत्त्वै देवस्वामेवैतानि हवींषि निर्वपेत् । एता ह देवताः सुताः–एतेन सवेन–येनैतत्सोष्यमाणो भवति । ता एवैतत्प्रीणाति । ता अस्मा इष्टाः प्रीता एतं सवमनुमन्यन्ते । ताभिरनुमतः सूयते ।

---

बहुवचनं हविर्बहुत्वापेक्षम् । इष्टेरेकत्वात् । अग्नेः सर्वासु दिक्षु वर्त्तमानत्वेन दिशोऽन्यात्मिकाः । अतस्ताभ्यो दिग्भ्य एतानि हवींषि निरुप्तवान् भवतीत्याह–दिश एषोऽग्निरिति । 'तदेना हविषा' इत्यादिकं तु प्रागेव व्याख्यातम् । दिशामवेष्टीरित्युक्तस्य बहुत्वसामान्यस्य तद्विशेषे पर्यवसानमाह–पञ्च भवन्तीति ॥ १० ॥

विहितामिष्टिं पूर्वपक्षीकृत्य तत्रेष्ट्यन्तरं विधत्ते–तदाहुरिति । 'तत्' तत्राग्नीषोमीयस्य पशुपुरोडाशे दशहविषमेवैतामिष्टिं निर्वपेत् । विहितेष्टिस्थाने दशहविषमिष्टिं सर्वपृष्ठेष्टिमेव निर्वपेत् । नतु पूर्वोक्तामिष्टिमित्यर्थः । पूर्वोक्तामिष्टिमतिक्रम्यैतदिष्टिस्वीकारे कारणमाह–सर्वस्तोमेति । 'सा' इष्टिः त्रिवृदादिभिः सर्वैः स्तोमैः, रथन्तरादिभिः सर्वैः पृष्ठैश्च विशिष्टा । सर्वाणि च छन्दांसि, तद्विशिष्टत्वात् । सर्वाश्च दिशः तदीयानां पुरोऽनुवाक्यानां तल्लिङ्गत्वात् । सर्वे च ऋतवस्तद्विशिष्टत्वात् । अत एव तैत्तिरीयके श्रूयते–"अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तायाष्टाकपालः" इत्यादि ( तै. सं. ७ । ५ । १४ । ४ ) "दिग्वतीः पुरोनुवाक्यां भवन्ति सर्वासां दिशामभिजित्यै" इति च ( तै. सं. ७ । ५ । १५ ) । अयमग्निरेतत्सर्वजगदात्मकः । तथा च सर्वात्मकायाग्नये सर्वस्तोमादिविशिष्टेष्टिरुपसम्पन्नेत्यर्थः । तदेनमित्येतद्व्याख्यातम् । अथात्र हविःसङ्ख्यां प्रशंसति–दश भवन्तीति । दशाक्षरा विराडित्येतदपि प्रागेव व्याख्यातम् ॥ ११ ॥

पूर्ववद्देवतामयीष्टिं पक्षीकृत्येष्ट्यन्तरं विधत्ते–तत्त्वै देवस्वामेवेति । देवताः सुता इत्येतत् "राष्ट्रभृतो जुहोति"

राज्यमनुमन्यन्ते स राजा भवति न स युस्मै न तद्युदेता देवताः सुता ऽएतेन सवेन यद्वैनमेता देवता ऽएतस्मै सवाय सुवते तस्मादेता देवस्वः ॥ १२ ॥

(स्ता) ता वै द्विनाम्न्यो भवन्ति । द्विनामा वै सवेन सुतो भवति युस्मै वै सवाय सूयते येन वा सवेन सूयते तदस्य द्वितीयं नाम ॥ १३ ॥

( मा ) अष्टौ भवन्ति । (न्त्य) अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ १४ ॥

तदाहुः । ( नैं ) नैतानि हवीꣳषि निर्व्वपेन्नेदतिरेचयानीति तानि वै निर्व्वपेदेव कामेभ्यो वाऽएतानि हवीꣳषि निरुप्यन्ते न वै कामानामतिरिक्तमस्ति यद्वै किं च पशुपुरोडाशमनु हविर्निरुप्यते पशावेव स मध्यतो मेधो धीयतऽउभयानि निर्व्वपत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्व्वमथाग्नेस्तस्योक्तो बन्धुरुच्चैः पशुपुरोडाशो भवत्युपाꣳश्वेतानीष्टिर्ह्यनुब्रूहि प्रेष्येति

---

यस्मै वै राजानो राज्यमनुमन्यन्ते–स राजा भवति । न सः–यस्मै न । तद्यदेता देवताः सुताः–एतेन सवेन, यद्वैनमेता देवता एतस्मै सवाय सुवते–तस्मादेता देवस्वः ॥ १२ ॥

ता वै द्विनाम्न्यो भवन्ति । द्विनामा वै सवेन सुतो भवति । यस्मै वै सवाय सूयते–येन वा सवेन सूयते–तदस्य द्वितीयं नाम ॥ १३ ॥

अष्टौ भवन्ति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतदन्नेन प्रीणाति ॥ १४ ॥

तदाहुः–नैतानि हवींषि निर्वपेत्–नेदतिरेचयानीति । तानि वै निर्वपेदेव । कामेभ्यो वा एतानि हवींषि निरुप्यन्ते । न वै कामानामतिरिक्तमस्ति । यद्वै किं च पशुपुरोडाशमनु हविर्निरुप्यते–

---

इत्यत्र व्याख्यातम् । देवसूशब्दप्रवृत्तिनिमित्तं द्वेधा दर्शयति–तद्यदेता देवता इति । एता अग्न्यादयो देवताः 'एतेन' पूर्वोक्तेन 'सवेन' 'सुताः' इति 'यत्' यद्वा–एता देवता एनं यजमानम् 'एतस्मै सवाय सुवते' इति यत् तस्मादेता देवस्व इति कर्मणि कर्तरि च द्वेधा व्युत्पत्तिर्दर्शिता ॥ १२ ॥

अथैतासामग्न्यादिदेवतानां नामद्वयसंबन्धमुपपादयति–ता वै द्विनाम्न्य इति । द्विनामा वा इति । सवेन सुतो द्विनामा भवति खलु । तदेव द्वितीयं नाम दर्शयति–यस्मै वै सवाय इति । राजसूयक्रतुसंबन्धिना सवेन सुतश्चेद्राजसूययाजीत्येवमादि द्विनामा भवति । देवस्वामेवैतानि हवींषीति सामान्येन विधानादेषां संख्याविशेषं विधाय प्रशंसति–अष्टौ भवन्तीति ॥ १३ ॥ १४ ॥

तदाहुर्नैतानि हवींषीत्येतत्तु पुरस्ताद्व्याख्यातम् । ननु च कामानामतिरेकाभावेन निर्वाप्यत्वेऽपि पशुपुरोडाशमनुलक्ष्यैव कस्मान्निरुप्यन्त इति तत्राह–यद्वै किञ्चेति । 'मेधो' रसः । उभयानि निर्वपतीति । पशुपुरो-

पशुपुरोडाशस्याहानुब्रूहि यजेत्येतेषामिष्टिहिँ समानः स्विष्टकृत्समानी-डेष्टा देवता भवन्त्यसमवहितᳬं स्विष्टकृते ॥ १५ ॥

( तेऽथै ) अथैनं पूर्वाभिषेकेणाभिमृशति। सविता त्वा सवानाᳬं सुव-तामेष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳬं राजेति ब्राह्मणानेवापो-द्धरत्यनाद्यान्करोति ॥ १६ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ९-३-५ ॥ ( ४. ३. ) ॥

इति तृतीयप्रपाठकः समाप्तः ॥ ९-३ ॥

कण्डिकासंख्या ॥ ९७ ॥

---

पशावेव स मध्यतो मेधो धीयते। उभयानि निर्वपति-अध्वरस्य चाग्नेश्च। अध्वरस्य पूर्वम्। अथाग्नेः। तस्योक्तो बन्धुः। उच्चैः पशुपुरोडाशो भवति, उपांश्वेतानि। इष्टिहिं। 'अनुब्रूहि प्रेष्य'-इति पशुपुरोडाशस्याह। 'अनुब्रूहि यज'-इत्येतेषाम्। इष्टिहिं। समानः स्विष्टकृत्। समानीडा। इष्टा देवता भवन्ति। असमवहितं स्विष्टकृते ॥ १५ ॥

अथैनं पूर्वाभिषेकेणाभिमृशति। "सविता त्वा सवानां सुवताम्। एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा"-( वा. सं. ९। ३९। ४० ) इति। ब्राह्मणानेवापोद्धरति। अनाद्यान्करोति ॥ १६ ॥

इति धिष्ण्याग्निचयनम्।

अग्निचयनं वृत्तम्।

---

डाशो देवस्वां हवींषि चेज्यन्ते। गतमन्यत्। इष्टिर्हीति। काम्येष्टिषु प्रधानस्योपांशुत्वमिति व्यवस्थितत्वात् अस्या अपि कामार्थेष्टित्वादित्यर्थः। अनुब्रूहि यजेत्येतेषामिष्टिर्हीति। इष्ट्यामध्वरत्वान्मैत्रावरुणो नास्तीति अनुब्रूहि यजेत्येव ब्रूयात्। स्पष्टमन्यत्। अथ देवतायागानन्तरं स्विष्टकृद्यदानात्पूर्वं सविता त्वा सवानामित्यादिना पूर्वाभिषेकाख्येन मंत्रेणैनमग्निमभिमृशेदित्याह-इष्टा देवता भवन्तीति। "इमं देवाः" इति मन्त्रे "सोमोऽस्माकं ब्राह्मणानां राजा" इत्यनेन ब्राह्मणानेव विभजति। तेन ब्राह्मणान्प्रति क्षत्रस्य राजन्यत्वात्तानभोज्यान्करोतीत्याह-ब्राह्मणानेवेति ॥ १५ ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे चतुर्थेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ९-४-३ ) ॥

---

१-अनुपदेशाद्या पुरोडाशस्विष्टकृतोऽभिषेचनीयवत्। का. श्रौ. सू. १८। १०१ ॥

# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।
# चतुर्थाऽध्याये च चतुर्थं ब्राह्मणम् ।

अथ प्रातः प्रातरनुवाकमुपाकरिष्यन् । ( न्न ) अग्निं युनक्ति युक्तेन समश्नवाऽइति तेन युक्तेन सर्व्वान्कामान्त्समश्नुते तं वै पुरस्तात्सर्व्वस्य कर्मणो युनक्ति तद्यत्किंचात ऽऊर्ध्वं क्रियते युक्ते तत्सर्व्वᳫं समाधीयते॥ १॥

परिधिषु युनक्ति । ( त्तय ) अग्नय ऽएते यत्परिधयोऽग्निभिरेव तदग्निं युनक्ति ॥ २ ॥

---

### अथ सुत्याहकर्माणि ।

अथ प्रातः प्रातरनुवाकमुपाकरिष्यन्नग्निं युनक्ति । युक्तेन समश्नवा इति । तेन युक्तेन सर्वान्कामान्त्समश्नुते । तं वै पुरस्तात्सर्वस्य कर्मणो युनक्ति । तद् यत्किंचात ऊर्ध्वं क्रियते—युक्ते तत्सर्वं समाधीयते ॥ १ ॥

परिधिषु युनक्ति । अग्नय एते—यत्परिधयः । अग्निभिरेव तदग्निं युनक्ति ॥ २ ॥

---

इत्थमौपवसथ्यदिवसप्रयोगमभिधायाथ सुत्याहप्रयोगं विवक्षुः प्रथममग्नियोगं विधत्ते—अथ प्रातरिति[1] । प्रातर्यावभ्यो देवेभ्योऽनुब्रूहीत्येवं संप्रैषः । प्रातरनुवाकस्योपाकरणं तत् करिष्यन् प्रातरनुवाकोपाकरणात् पूर्वं युक्तेनाग्निना 'सर्वान् कामान्' प्राप्नवानीत्यभिप्रायेण 'अग्निं युनक्ति' । यथा लोके नियुक्ताश्वेन रथेन जिगमिषितप्रदेशान् गच्छति, तद्वन्नियमितेनानेन सर्वान् कामानाप्नवानीति यजमानोऽध्वर्युमुखेनाग्निं नियच्छतीत्यर्थः । येनाभिप्रायेणैनं 'युनक्ति सोऽभिप्रायस्तथैव फलतीत्याह—युक्तेन सर्वान्कामानिति । तन्नियोजनस्य सर्वस्मादपि कर्मणः पूर्वत्वं प्रशंसति—तं वै पुरस्तादिति । तद्यदिति । 'तत्' तस्मिन्नहनि 'अत ऊर्ध्वं' यत् किं च कर्म 'क्रियते' 'तत्सर्वम्' 'युक्ते' एवाग्नौ सम्यग् 'आधीयते' लोके हि नियुक्ते रथादौ निहितेन जिगमिषितप्रदेशस्य गमनात् तद्वदेव युक्तेऽग्नौ समाहितं सर्वकामप्राप्तये समर्थं भवतीति युक्त एवाग्नौ समाहितं भवतीत्यर्थः ॥ १ ॥

विहितोऽयमग्नियोगः कुत्र कर्त्तव्य इति तत्राह—परिधिष्विति । परिधीनामग्नित्वम्, अग्निभ्रात्रात्मकत्वात् । अत्र तैत्तिरीयकम्—" अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् " इत्युपक्रम्य—" अथो खल्वाहुरेते वावैनं ते भ्रातरः परिशेरे यत्पौतुद्रवाः परिधय इति " ( तै. सं. ६ । २ । ८ । ६ ) इति ॥ २ ॥

---

1· अग्नियोजनं प्रातरनुवाकमुपाकरिष्यन् परिधीनालभ्य यथापूर्व्वमग्निं युनज्मीति प्रत्यृचम् । का. श्रौ. सू. १८।१०२ ।

स मध्यमं परिधिमुपस्पृश्य । ( इयै ) एतद्यजुर्जपत्यग्निं युनज्मि शवसा घृतेनेति बलं वै शवोऽग्निं युनज्मि बलेन च घृतेन चेत्येतद्दिव्यᳪं सुपर्णं व्वयसा बृहन्तमिति दिव्यो वाऽएष सुपर्णो व्वयसा बृहद्धूमेन तेन व्वयं गमेम ब्रध्नस्य व्विष्टपᳪं स्वो रुहाणा ऽअधि नाकमुत्तममिति स्वर्गो वै लोको नाकस्तेन व्वयं गमेम ब्रध्नस्य व्विष्टपᳪं स्वर्गं लोकᳪं रोहन्तोऽधि नाकमुत्तममित्येतत् ॥ ३ ॥

( ड ) अथ दक्षिणे । ( ण५ ) इमौ ते पक्षावजरौ पतत्रिणौ याभ्याᳪं रक्षाᳪंस्यपहᳪंस्यग्ने ॥ ताभ्यां पतेम सुकृतामु लोकं यत्रऽऋषयो जग्मुः प्रथमजाः पुराणा ऽइत्यमूनेतदृषीनाह ॥ ४ ॥

---

स मध्यमं परिधिमुपस्पृश्यैतद्यजुर्जपति–" अग्निं युनज्मि शवसा घृतेन "–इति । बलं वै शवः । अग्निं युनज्मि बलेन च घृतेन चेत्येतत् । " दिव्यं सुपर्णं वयसा बृहन्तम् "–इति । दिव्यो वा एष सुपर्णो वयसा बृहन्धूमेन । " तेन वयं गमेम ब्रध्नस्य विष्टपं स्वो रुहाणा अधि नाकमुत्तमम् "–( वा. सं. १८ । ५१ ) इति । स्वर्गो वै लोको नाकः । तेन वयं गमेम ब्रध्नस्य विष्टपं स्वर्गं लोकं रोहन्तोऽधि नाकमुत्तममित्येतत् ॥ ३ ॥

अथ दक्षिणे । " इमौ ते पक्षावजरौ पतत्रिणौ याभ्यां रक्षांस्यपहंस्यग्ने । ताभ्यां पतेम सुकृतामु लोकं यत्रऽऋषयो जग्मुः प्रथमजाः पुराणाः "–( वा. सं. १८ । ५२ ) इति । अमूनेतदृषीनाह ॥ ४ ॥

---

परिधिषु नियोजनमपि कथं कुर्यादिति तत्राह–स मध्यममिति । ' सः ' अध्वर्युः ' मध्यमं परिधिमुपस्पृश्य ' ' अग्निं युनज्मि शवसा घृतेनेति ' एतद्यजुर्जपेत् । तमेतं मन्त्रं व्याचष्टे–बलं वै शव इति । ' शवः ' इति बलमुच्यते ( निघ० ९।२ ) । एवं च युनज्मीत्यनेन ' बलेन च घृतेन च ' ' अग्निं युनज्मि ' ' इत्येतत् ' उक्तं भवति । दिव्यो वा एष इति । यतः ' एषः ' अग्निर्दिवि भवो दिव्यः ' सुपर्णः ' शोभनपतनः । वयसेत्यस्य व्याख्यानम्–धूमेनेति । ' वयसा ' धूमेन बृहन् भवति; अत उच्यते–दिव्यं सुपर्णमिति । स्वर्गो वै लोक इति । नास्मिन्नकं दुःखमस्तीति नाकः, स्वर्गो लोकः खलु नाको भवति–तत्राल्पस्यापि दुःखस्याऽभावात् । एवं च 'तेन वयम्' इत्यनेन भागेन युक्तेनाग्निना ' वयं गमेम ब्रध्नस्य विष्टपम् ' कीदृशा वयम् ? ' नाकमुत्तमं ' स्वर्गं लोकमधिरोहन्त इत्येतदुक्तं भवतीत्यर्थः । मन्त्रार्थस्तु–दिवि भवं शोभनपतनं वयसा धूमेन बृहन्तमग्निं बलेन च घृतेन च युनज्मि तेन युक्तेनाग्निना वयं नाकं सुखहेतुभूतमत एवोत्तमं स्वः स्वर्गं लोकम् अधिरुहाणाः सन्तस्तदर्थं ब्रध्नस्य सूर्यस्य विष्टपं गमेम गच्छेम इति प्रथमस्यार्थः । गमेमेति " लिङ्याशिष्यङ् "–( पा. सू. ३ । १ । ८६ ) इत्यङ् प्रत्ययः ॥ ३ ॥

परिधानक्रमेण मध्यमपरिधौ प्रथमं युक्त्वा अथ दक्षिणपरिधौ इमौ ते पक्षावित्यादिना मन्त्रेण युञ्ज्यादित्याह–अथ दक्षिण इमौ ते पक्षाविति । मन्त्रे ' ऋषय ' इति ऋषिशब्देन षष्ठकाण्डस्यादावभिहितान् ऋषी-

(हा) अथोत्तरे । (र) इन्दुर्दक्षः श्येनऽऋतावा हिरण्यपक्षः शकुनो भुरण्युरित्यमृतं वै हिरण्यममृतपक्षः शकुनो भर्तेत्येतन्महान्त्सधस्थे ध्रुवऽआनिषत्तो नमस्तेऽअस्तु मा मा हिꣳसीरित्यात्मनः परिदां वदते ॥५॥

तद्यन्मध्यमं यजुः । स ऽआत्माऽथ येऽअभितस्तौ पक्षौ तस्मात्ते पक्षवती भवतः पक्षौ हि तौ ॥ ६ ॥

त्रिभिर्युनक्ति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्युनक्ति ॥ ७ ॥

---

अथोत्तरे । " इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः "–इति । अमृतं वै हिरण्यम् । अमृतपक्षः शकुनो भर्तेत्येतत् । " महान्त्सधस्थे ध्रुव आनिषत्तो नमस्तेऽअस्तु मा मा हिंसीः "–( वा. सं. १८ । ५३ ) इति । आत्मनः परिदां वदते ॥ ५ ॥

तद्यन्मध्यमं यजुः–स आत्मा । अथ येऽभितः–तौ पक्षौ । तस्मात्ते पक्षवती भवतः । पक्षौ हि तौ ॥ ६ ॥

त्रिभिर्युनक्ति । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतद्युनक्ति ॥ ७ ॥

---

नाहेति व्याचष्टे–अमूनेतदिति । मन्त्रार्थस्तु–हे अग्ने ! त्वं याभ्यां पक्षाभ्यां रक्षांसि अपहंसि पतत्रिणौ ते ताव अजरौ जरारहितौ पक्षौ इमौ परिदृश्यमानौ । वयं ताभ्यां पक्षाभ्यां सुकृतां पुण्यकृतां लोकं पतेम उत्पतेम । यत्र सुकृल्लोके प्रथमजाः प्रथमोत्पन्नाः पुराणाः पुरातनाः ऋषयो जग्मुरिति द्वितीयस्यार्थः ॥ ४ ॥

अथोत्तरपरिधौ ' इन्दुर्दक्षः श्येनः ' इत्यनेन मन्त्रेण युञ्ज्यादित्याह–अथेति । हिरण्यपक्षः शकुनो भुरण्युरिति । अत्र हिरण्यशब्दार्थं भुरण्युशब्दार्थं चाह–अमृतं वा इति । ' नमस्ते अस्तु मा मा हिंसीः ' इत्यनेनात्मनो रक्षां याचत इत्याह–आत्मनः परिदां वदते इति । मन्त्रार्थस्तु–हे अग्ने ! 'इन्दुः' ईश्वरः । " इदि परमैश्वर्ये " । 'दक्षः' उत्साहवान् 'श्येनः' श्येनवद्रुतपतनशीलः ' ऋतावा ' सत्यवान् ' हिरण्यपक्षः ' अमृतपक्षः 'शकुनः' पक्ष्याकारः 'भुरण्युः' भर्ता 'महान्' प्रभावेण 'सधस्थे' ब्रह्मणा सह स्थाने ' आनिषत्तः ' समन्तान्निषण्णः यस्त्वमेतादृशः तस्मै ते तुभ्यं नमोऽस्तु त्वं मां मा हिंसीरिति तृतीयस्यार्थः ॥ ५ ॥

अथैतानेव मन्त्रानग्नेरात्मपक्षात्मना प्रशंसति–तद्यन्मध्यममिति । अत्र मध्यमं यजुरिति यजुषो मध्यमत्वे मन्त्रक्रमापेक्षं न भवति, किन्तु परिधिमध्यमापेक्षम् । एवं चाग्निं युनज्मीत्ययं प्रथमो मन्त्रः । अथ ये इति । ये यजुषी अभितस्तौ पक्षौ तयोः पक्षत्वात्ते यजुषी इमौ ते पक्षौ हिरण्यपक्षाविति पक्षशब्देन युक्ते भवत इति स्पष्टम् ॥ ६ ॥

अग्नियोजनमन्त्राणां त्रित्वं प्रशंसति–त्रिभिर्युनक्तीति ॥ ७ ॥

( त्त्यु ) अथ राजानमभिषुत्याग्नौ जुहोति । ( त्ये ) एष वै स सव ऽएतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निमभिषिञ्चति सोऽस्यैष दैवऽ आत्मा सोमाभिषिक्तो भवत्य-मृताभिषिक्तोऽथ भक्षयति तदात्मानमभिषिञ्चति सोऽस्यायमात्मा सोमा-भिषिक्तो भवत्यमृताभिषिक्तः ॥ ८ ॥

( क्तोऽग्नौ ) अग्नौ हुत्वाऽथ भक्षयति । दैवो वाऽअस्यैष ऽआत्मा मानुषो-ऽयं देवा ऽउ वाऽअग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाऽथ भक्षयति ॥ ९ ॥

( त्यु ) अथैनं विमुञ्चति । ( त्या ) आप्त्वा तं कामं यस्मै कामायैनं युङ्क्ते यज्ञायज्ञियꣳ स्तोत्रमुपाकरिष्यन्त्स्वर्गो वै लोको यज्ञायज्ञियमे-तस्य वै गत्याऽएनं युङ्क्ते तदाप्त्वा तं कामं यस्मै कामायैनं युङ्क्ते ॥ १० ॥

---

अथ राजानमभिषुत्याग्नौ जुहोति । एष वै स सवः । एतद्वै तत्सूयते—यमस्मै तमेता देवताः सवमनुमन्यन्ते, याभिरनुमतः सूयते । यस्मै वै राजानो राज्यमनुमन्यन्ते—स राजा भवति । न सः—यस्मै न । तद् यदग्नौ जुहोति—तदग्निमभिषिञ्चति । सोऽस्यैष दैव आत्मा सोमाभिषिक्तो भवति, अमृताभिषिक्तः । अथ भक्षयति । तदात्मानमभिषिञ्चति । सोऽस्यायमात्मा सोमाभिषिक्तो भवति, अमृताभिषिक्तः ॥ ८ ॥

अग्नौ हुत्वा—अथ भक्षयति । दैवो वा अस्यैष आत्मा, मानुषोऽयम् । देवा उ वाऽअग्रे, अथ मनुष्याः । तस्मादग्नौ हुत्वा—अथ भक्षयति ॥ ९ ॥

अथैनं विमुञ्चति—आप्त्वा तं कामम्—यस्मै कामायैनं युङ्क्ते । यज्ञायज्ञियं स्तोत्रमुपाकरिष्यन् । स्वर्गो वै लोको यज्ञायज्ञियम् । एतस्य वै गत्या एनं युङ्क्ते । तदाप्त्वा तं कामं—यस्मै कामायैनं युङ्क्ते ॥ १० ॥

---

अथ प्राकृतौ सोमाभिषवहोमौ कुर्यादित्याह—अथ राजानमिति । 'एष वै स सव एतद्वा' इत्यादि-कम् 'अथ रथशीर्षे जुहोति' इत्यत्र व्याख्यातम् । ननु कथमग्नौ होमात् स्वस्याभिषेकसिद्धिरिति तत्राह—तद्यदग्नाविति । 'तत्' तत्राग्नौ जुहोतीति यत् तेनाग्निमभिषिञ्चति । 'सः' 'एषः' अग्निः 'अस्य' यजमानस्य 'दैवः आत्मा' एवं च यजमान एवाभिषिक्तो भवतीत्यर्थः । सोमस्यामृतत्वात् सोमाभिषेकेणामृता-भिषिक्त एव भवतीत्याह—सोमाभिषिक्तो भवतीति ॥ ८ ॥

होमानन्तरं हुतशेषं भक्षयेदित्याह—अग्नौ हुत्वेति । तयोरेव होमभक्षणयोः पौर्वापर्यमुपपादयति—दैवो वा इति ॥ ९ ॥

अथैतस्याग्नेर्विमोचनं विधत्ते—अथैनमिति । 'यस्मै कामाय एनं युङ्क्ते तं कामम् आप्त्वा' एनं विमुञ्चेत् ।

तं वै पुरस्तात्स्तोत्रस्य विमुञ्चति । स यदुपरिष्टात्स्तोत्रस्य विमुञ्चे-त्पराङ् हैतᳫं स्वर्गं लोकमतिप्रणश्येदथ यत्पुरस्तात्स्तोत्रस्य विमुञ्चति तत्सम्प्रति स्वर्गं लोकमाप्त्वा विमुञ्चति ॥ ११ ॥

परिधिषु विमुञ्चति । परिधिषु ह्येनं युनक्ति यत्र वाव योग्यं युञ्जन्ति तदेव तद्विमुञ्चन्ति ॥ १२ ॥

स संध्योरुपस्पृश्य । ( इयै ) एते यजुषी जपति तथा द्वे यजुषी त्रीन्प-रिधीननुविभवतो दिवो मूर्धाऽसि पृथिव्या नाभिरिति दक्षिणे विश्वस्य मूर्धन्नधि तिष्ठसि श्रित ऽइत्युत्तरे मूर्धवतीभ्यां मूर्धा ह्यस्यैषोऽप्सुमती-भ्यामग्नेरेतद्वैश्वानरस्य स्तोत्रं यद्यज्ञायज्ञियᳫं शान्तिर्वाऽआपस्तस्मा-दप्सुमतीभ्याम् ॥ १३ ॥

---

तं वै पुरस्तात्स्तोत्रस्य विमुञ्चति । स यदुपरिष्टात्स्तोत्रस्य विमुञ्चेत्–पराङ्हैतं स्वर्गं लोकमति-प्रणश्येत् । अथ यत्पुरस्तात्स्तोत्रस्य विमुञ्चति–तत्सम्प्रति स्वर्गं लोकमाप्त्वा विमुञ्चति ॥ ११ ॥

परिधिषु विमुञ्चति । परिधिषु ह्येनं युनक्ति । यत्र वाव योग्यं युञ्जन्ति–तदेव तद्वि-मुञ्चन्ति ॥ १२ ॥

स सन्ध्योरुपस्पृश्य–एते यजुषी जपति । तथा द्वे यजुषी त्रीन्परिधीननुविभवतः । " दिवो मूर्द्धाऽसि पृथिव्या नाभिः "–( वा. सं. १८ । ५४ ) इति दक्षिणे । " विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः "–( वा. सं. १८ । ५५ ) इत्युत्तरे । मूर्द्धवतीभ्याम् । मूर्धा ह्यस्यैषः । अप्सु-मतीभ्याम् । अग्नेरेतद्वैश्वानरस्य स्तोत्रं, यद्यज्ञायज्ञियम् । शान्तिर्वा आपः । तस्मादप्सुमतीभ्याम् १३

---

[1]एतस्य विमोचनस्य कालविशेषप्रदर्शनद्वारा तमेव क्रमं दर्शयति–यज्ञायज्ञियमिति । ' यज्ञायज्ञियं स्तोत्रमुपाक-रिष्यन् ' एनमग्निं विमुञ्चेत् । कुतः ? यज्ञायज्ञियस्तोत्रं स्वर्गो लोकः खलु स्वर्गलोकस्य गत्यै एवैनमग्निं युङ्क्ते । अतश्च यज्ञायज्ञियलक्षणस्य स्वर्गस्य प्राप्तेर्यस्मै स्वर्गलोकप्राप्तिलक्षणाय कामाय एनं युङ्क्ते तस्य कामस्याप्तत्वादस्मिन्नवसरे विमुञ्चेदित्यर्थः ॥ १० ॥

विपक्षे बाधकप्रदर्शनेन यज्ञायज्ञियस्तोत्रात् पूर्वमेव विमुञ्चेदित्याह–तं वै पुरस्तादिति । यदि स्तोत्रादुपरि विमुञ्चेत् तदा एनं यज्ञायज्ञियलक्षणं स्वर्गं लोकमतिक्रम्य पराङेव भूत्वा प्रणश्येत् । अथ यदि स्तोत्रात्पूर्वं विमुञ्चेत्–तदा संप्रति अनतिक्रमेण युक्तमेव स्वर्गं लोकम् आप्त्वा विमुक्तवान् भवति ॥ ११ ॥

लोके यत्राश्वं युञ्जन्ति तत्रैव तं विमुञ्चन्ति । अतोऽत्रापि अग्नेः परिधिषु योजनात्तत्रैवैनं विमुञ्चेदित्याह–परिधिष्विति ॥ १२ ॥

कथं तद्विमोचनप्रकार इति तत्राह–स सन्ध्योरिति[2] । ' सः ' अध्वर्युः परिधिसन्ध्योरुपस्पृश्यैते–वक्ष्य-माणे दिवो मूर्द्धाऽसीत्यादिके यजुषी जपेत् । ननु विमोचनमपि योजनवत्परिधिमध्यमुपस्पृश्यैव कस्मान्न क्रियत इति तत्राह–तथा द्वे यजुषी इति । पूर्व त्रिभिर्मन्त्रैस्त्रिष्वपि परिधिष्वग्नेर्युक्तत्वात्तथैव विमोचनमपि कर्तव्यं,

---

१–आग्निमारुतस्तोत्रपुरस्ताद्विमोचनम् का. श्रौ. सू. १८।१०।३। २–परिधिसंध्योर्दिवो मूर्द्धेति प्रत्यृचम् । का. श्रौ. सू. १८.१०.३।

द्वाभ्यां व्विमुञ्चति । द्विपाद्यजमानो यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्विमुञ्चति त्रिभिर्युनक्ति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चऽर्त्तवः संव्वत्सरः संव्वत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥ १४ ॥

तᳬँ हैके । प्रायणीयऽएवातिरात्रे युञ्जन्त्युदयनीये व्विमुञ्चन्ति सᳬँस्थारूपं वाऽएतद्यद्विमोचनं किं पुरा सᳬँस्थायै सᳬँस्थारूपं कुर्यामिति न तथा कुर्यादहरहर्व्वाऽएष यज्ञस्तायतेऽहरहः सन्तिष्ठतेऽहरहरेनᳬँ स्वर्गस्य लोकस्य गत्यै युङ्क्तेऽहरहरेनेन स्वर्ग्गं लोकं गच्छति तस्मादहरहरेव युञ्ज्यादहरहर्व्विमुञ्चेत् ॥ १५ ॥

---

द्वाभ्यां विमुञ्चति । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैनमेतद्विमुञ्चति । त्रिभिर्युनक्ति । तत् पञ्च । पञ्चचितिकोऽग्निः । पञ्चऽर्तवः संवत्सरः । सम्वत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावत्तद्भवति ॥ १४ ॥

तं हैके—प्रायणीय एवातिरात्रे युञ्जन्ति, उदयनीये विमुञ्चन्ति । संस्थारूपं वा एतत्—यद्विमोचनम् । किं पुरा संस्थायै संस्थारूपं कुर्यामेति । न तथा कुर्यात् । अहरहर्वा एष यज्ञस्तायते, अहरहः सन्तिष्ठते, अहरहरेनं स्वर्गस्य लोकस्य गत्यै युङ्क्ते, अहरहरेनेन स्वर्गं लोकं गच्छति । तस्मादहरहरेव युञ्ज्यात्, अहरहर्विमुञ्चेत् ॥ १५ ॥

---

न चैवमत्र सम्भवति मन्त्रयोरत्र द्वित्वेनापर्याप्तत्वात् । ततश्च परिधिसन्ध्योः संस्पर्शे त्रयाणामपि परिधीनां संस्पर्शसिद्धेर्द्वे एव यजुषी त्रीन्परिधीन्प्रति पर्याप्ते भवत इति । अथ कस्मिन्सन्धौ कं मन्त्रं जपेदिति तत्राह—दिवो मूर्द्धाऽसीति । मन्त्रयोर्मूर्द्धशब्दसम्बन्धं प्रशंसति—मूर्द्धवतीभ्यामिति । अस्याग्नेरेष विमोचनलक्षणः प्रयोगो मूर्धा मूर्द्धवत् सर्वस्याप्युपरितनो भवति । अतश्च मूर्द्धशब्दयुक्ताभ्यामृग्भ्यामस्य विमोचनमुपपन्नम् । तथैवाप्सुशब्दसम्बन्धमपि प्रशंसति—अप्सुमतीभ्यामिति । अत्रोत्तरमन्त्रे अप्सुशब्दप्रयोगादुपचारेण प्रथममन्त्रस्याप्सुमत्त्वमित्यप्सुमतीभ्यामित्युक्तम् । एतद्यज्ञायज्ञियं स्तोत्रं वैश्वानरस्याग्नेः सम्बन्धि भवति; तद्देवत्यत्वात् । अनेनास्य शान्तत्वमुक्तम् । आपस्तु दहनादिनाशस्य शान्तिहेतुत्वाच्छान्तिः खलु । तस्माद्यज्ञायज्ञियस्तोत्रे कर्तव्यं विमोचनमप्सुमतीभ्यामृग्भ्यां क्रियते ॥ १३ ॥

विमोचनमन्त्रयोर्द्वित्वसंख्यां प्रशंसति—द्वाभ्यामिति । योजनविमोचनमन्त्राणां संख्यां सम्भूय प्रशंसति—त्रिभिर्युनक्तीति । प्रकृतत्वात् द्वाभ्यां विमुञ्चतीति संबध्यते तत्तथा सति पञ्च भवन्ति । तावत्तद्भवतीति । ‘ तद् ’ योजनविमोचनात्मकं कर्म तावत्तत्परिमितमेव भवतीत्यर्थः ॥ १४ ॥

प्रसङ्गादहर्गणेष्वपि योजनविमोचनप्रकारं विवक्षुस्तत्र पूर्वपक्षत्वेन केषांचित्पक्षं सोपपत्तिकमनुवदति—तं हैक इति । ‘ एके ’ शाखिनः प्रायणीयातिरात्र एव तमग्निं ‘ युञ्जन्ति ’ । पश्चादुदयनीयातिरात्रे च ‘ विमुञ्चन्ति ’ । तथा कुर्वतां च तेषामयमाशयः-विमोचनमिति ‘ यत् ’ ‘ एतत्संस्थारूपं ’ खलु । अतश्च संस्थायाः पूर्वम्

---

१—प्रायणीयेऽतिरात्रे युक्त्वोदयनीये विमोकमेके । का. श्रौ. सू. १८ । १०४ ।

( द ) अथो यथा प्रायणीयेऽतिरात्रे । सामिधेनीरनूच्य ब्रूयादुदयनीयऽएवातोऽनुवक्ताऽस्मीति तादृक्तत्तस्मादहरहरेव युञ्ज्यादहरहर्विमुञ्चेत् ॥ १६

(त)तद्धैतच्छाण्डिल्यः।कङ्कतीयेभ्योऽहरहः कर्म प्रदिश्य प्रवव्राजाहरहरेव वो युनजानहरहर्विमुञ्चानिति तस्मादहरहरेव युञ्ज्यादहरहर्विमुञ्चेत् ॥ १७॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ९–४–१ ॥ ( ४. ४. ) ॥

इति चतुर्थोऽध्यायः समाप्तः ॥ ९ । ४ ॥

---

अथो यथा प्रायणीयेऽतिरात्रे सामिधेनीरनूच्य ब्रूयात्–उदयनीयऽएवातोऽनुवक्ताऽस्मीति–तादृक् तत् । तस्मादहरहरेव युञ्ज्याद्, अहरहर्विमुञ्चेत् ॥ १६ ॥

तद्धैतच्छाण्डिल्यः कङ्कतीयेभ्योऽहरहः कर्म प्रादिश्य प्रवव्राज–अहरहरेव वो युनजान्, अहरहर्विमुञ्चानिति । तस्मादहरहरेव युञ्ज्याद्, अहरहर्विमुञ्चेत् ॥ १७ ॥

---

किमर्थं 'संस्थारूपं कुर्यामेति' । तदेतन्मतं निरस्य स्वमतमाह–न तथेति । 'एषः' यज्ञः 'अहरहः' प्रत्यहं वितायते । प्रत्यहमेव संतिष्ठते । प्रत्यहं च यजमानः स्वर्गं लोकं गन्तुमेनं युङ्क्ते । तथैव प्रत्यहं स्वर्गं लोकं गच्छति । अतश्च प्रत्यहमेव युञ्ज्यात् । प्रत्यहमेव विमुञ्चेत् ॥ १९ ॥

अथ तदेव पूर्वपक्षीकृतं मतं तदनभिमतदृष्टान्तप्रदर्शनेन निरस्य स्वमतमेव द्रढयति–अथो यथेति । किञ्च प्रायणीयेऽतिरात्रे सामिधेनीरनूच्य अतः परम् उदयनीयातिरात्रे एव तासामनुवक्ताऽस्मीति यथा ब्रूयात् तदपि तादृग्भवति । स यदि सामिधेनीनामनुवचनमाद्यन्तयोरेवाह्नोः क्रियते तदा योजनविमोचने अपि तथैव कुर्यात्। तद्यथा सामिधेन्योऽहरहरनूच्यन्ते । तासां कर्माङ्गत्वेन प्रत्यहं परिसमाप्ते कर्मणि कर्मणि अनूच्यत्वात् । अतस्तत्समानत्वेन योजनविमोचने अपि प्रत्यहमेव कुर्यात् ॥ १६ ॥

हेत्वन्तरेणापि स्वमतमेव द्रढयति–तद्धैतदिति । 'तदेतत्' योजनविमोचनविषये शाण्डिल्यः कङ्कतीयेभ्यः प्रात्यहिकं कर्म प्रदिश्य वोऽध्वर्युः प्रत्यहमग्निं युनक्तु विमुञ्चत्वित्युक्त्वा प्रवव्राज । युनजान् विमुञ्चान् इति लोडर्थे लेट्प्रत्ययः । यत एवं तस्मादपि प्रत्यहमेव युञ्ज्यात् प्रत्यहं विमुञ्चेत् ॥ १७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ९–४–४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं, सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो, व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥२॥
धान्याद्रिं धन्यजन्मा तिलमवमतुलः स्वर्णजं वर्णमुख्यः, कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृगः शार्करं चारुतेजा, रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः॥३॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे चतुर्थोऽध्यायः ॥ ९–४ ॥

# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।
# चतुर्थप्रपाठके च द्वितीयं ब्राह्मणम् ।

अथा॒तः प॑योव्र॒तता॑यै । प॒योव्र॑तो दी॒क्षि॒तः स्या॑द्दे॒वेभ्यो॑ ह॒ वा॒ऽअमृ॑त॒मुप॑चक्राम ॥ १ ॥

ते॒ हो॑चुः । श्रमे॑ण त॒पसे॒दम॒न्विच्छा॑मे॒ति तच्छ्रमे॑ण त॒पसा॒ऽन्वैच्छं॑स्ते॒ दी॒क्षि॒त्वा प॒योव्र॑ता ऽअभवन्ने॒तद्वै त॒पो॒ यो दी॒क्षि॒त्वा प॒योव्र॒तोऽस॒त्तस्य॑ घो॒षमा॑शुश्रु॒वुः ॥ २ ॥

( स्ते॒ ) ते॒ हो॑चुः । ( नें॒ ) ने॒दी॑यो वै॒ भ॑वति भू॒यस्त॑प ऽउ॒पाया॑मे॒ति ते त्री॒न्त्स्त॒ना॒नु॒पे॑यु॒स्तत्प॒रा॑दद्दृशुः ॥ ३ ॥

---

### अथ यजमानव्रतमीमांसा ।

अथातः पयोव्रततायै । पयोव्रतो दीक्षितः स्यात् । देवेभ्यो हं वा अमृतमपचक्राम ॥ १ ॥

ते होचुः—श्रमेण तपसेदमन्विच्छामेति । तच्छ्रमेण तपसाऽन्वैच्छन् । ते दीक्षित्वा पयोव्रता अभवन् । एतद्वै तपो यो दीक्षित्वा पयोव्रतोऽसत् । तस्य घोषमाशुश्रुवुः ॥ २ ॥

ते होचुः—नेदीयो वै भवति, भूयस्तप उपायामेति । ते त्रीन्त्स्तनानुपेयुः । तत्परादद्दृशुः ॥ ३ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथावशिष्टः कृत्स्नोऽपि प्रयोगः प्रकृतिवदेवेत्यभिप्रायेण तमनभिधाय पयोव्रतस्य मीमांसा क्रियत इति प्रतिजानीते—अथातः पयोव्रततायाः इति । षष्ठ्यर्थे चतुर्थी । पयोव्रततायाः मीमांसा क्रियत इति वाक्यशेषः । विधत्ते—पयोव्रत इति । 'दीक्षितः पयोव्रतः स्यात्' । व्रतशब्देनात्राभ्यवहार उच्यते । पय एव व्रतम् अभ्यवहारो यस्य स पयोव्रतः । अथैतदेव पयोव्रतं प्रशंसितुं कांचित्कथामवतारयति—देवेभ्यो ह वा इत्यादिना । पुरा किलामृतं देवेभ्यः सकाशादपचक्राम । तत 'श्रमेण' तत्साध्येन 'तपसा' च 'इदम्' अमृतम् 'अन्विच्छाम' इति परस्परमुक्त्वा तथैवाकार्षुः । 'तच्छ्रमेण तपसाऽन्वैच्छन्' इत्येतदेव दीक्षित्वेत्यादिना विवृणोति । 'दीक्षित्वा पयोव्रतो भवेदिति' यत् तदेव तपः खलु । तस्मात् ते देवा दीक्षित्वा पयोव्रता अभवन् । ततस्तेन तपसा तस्यामृतस्य घोषमाशुश्रुवुः । श्रुत्वा च ते तदमृतं सन्निहितं भवति घोषस्य श्रुतत्वात् इति बुद्ध्वा अतोऽधिकं तप उपगच्छेमेत्युक्त्वा त्रीन्स्तनानुपेयुः । स्तनत्रयादुत्पन्नं पयोऽभ्यवहृतवन्तः । अनेन पूर्वं पयोव्रता अभवन्नित्यत्र चतुरः स्तनानुपेयुरित्यर्थोऽवगम्यते । ततो देवाः 'तत्' नेदीयोऽमृतं परादद्दृशुः । त्रीन् स्तनानित्यनेन, द्वितीयदिने प्रथमोपसदि त्रिस्तननिर्गलितपयोव्रता भवेयुरिति प्रतिपद्यते ॥ १–३ ॥

( स्ते ) ते होचुः । ( नै ) नेदीयो वै भवति भूयस्तप ऽउपायामेति ते द्वौ स्तनाऽउपेयुस्तन्नेदीयसः पुरादद्दृशुः ॥ ४ ॥

( स्ते ) ते होचुः । ( नै ) नेदीयो वै भवति भूयस्तप ऽउपायामेति तऽ-एकꣳ स्तनमुपेयुस्तदधिजगाम न त्वभिपत्तुꣳ शेकुः ॥ ५ ॥

( स्ते ) ते होचुः । ( र ) अधि वाऽअगन्न त्वभिपत्तुꣳ शक्नुमः सर्वं तप ऽउपायामेति तऽउपवसथेऽनाशकमुपेयुरेतद्वै सर्वं तपो यदनाशक-स्तस्मादुपवसथे नाश्नीयात् ॥ ६ ॥

( त्त ) तत्प्रातरभिपद्य । ( द्या ) अभिषुत्याग्नावजुहवुस्तदग्नावमृतमदधुः सर्वेषामु हैष देवानामात्मा यदग्निस्तद्यदग्नावमृतमदधुस्तदात्मन्नमृत-मदधत ततो देवा ऽअमृता ऽअभवन् ॥ ७ ॥

---

ते होचुः—नेदीयो वै भवति, भूयस्तप उपायामेति । ते द्वौ स्तना उपेयुः । तन्नेदीयसः परा-दद्दृशुः ॥ ४ ॥

ते होचुः—नेदीयो वै भवति, भूयस्तप उपायामेति । त एकं स्तनमुपेयुः । तदधिजगाम । न त्वभिपत्तुं शेकुः ॥ ५ ॥

ते होचुः—अधि वा अगत्, न त्वभिपत्तुं शक्नुमः, सर्वं तप उपायामेति । त उपवसथेऽनाशक-मुपेयुः । एतद्वै सर्वं तपो—यदनाशकः । तस्मादुपवसथे नाश्नीयात् ॥ ६ ॥

तत्प्रातरभिपद्य, अभिषुत्य, अग्नावजुहवुः—तदग्नावमृतमदधुः । सर्वेषामु हैष देवानामात्मा—यदग्निः । तद्यदग्नावमृतमदधुः—तदात्मन्नमृतमदधत । ततो देवा अमृता अभवन् ॥ ७ ॥

---

द्वितीयोपसद्दिने पूर्वदिनापेक्षया सन्निहितममृतं दृष्ट्वा भूयस्तप उपायामेति द्विस्तननिर्गलितपयोव्रता अभू-वन् इति प्रतिपादितं भवति ॥ ४ ॥

तृतीयोपसद्दिने सन्निहिततरं दृष्ट्वा भूयस्तप उपायामेति एकस्तनदुग्धपयोव्रता आसन् इति प्रति-पाद्यते ॥ ५ ॥

उपवसथीये चतुर्थदिने देवा ऊचुः । सन्निहिततरमप्यमृतं प्राप्तुं न शक्नुम इति सर्वमनाशकात्मकं तप उपायामेति तथैवाकार्षुः । अनाशकस्य सर्वतपस्त्वात् । तस्मादुपवसथे नाश्नीयात् ॥ ६ ॥

ततः पञ्चमदिने सुत्याहे तदमृतं सोमरूपं प्राप्य कण्डनं कृत्वा तदग्नावजुहवुः । कुत इत्याह—सर्वेषा-मिति । 'एषः' अग्निः सर्वेषां देवानामात्मा खलु । अतश्चामृतमग्नावदधुरिति यत् तेनात्मन्येवामृतं धृतवन्तः । तेनामृतधारणेन पश्चाद्देवा अमृता अभवन् ॥ ७ ॥

( वंस्त ) तद्यत्तदमृतꣳ सोमः सः । ( ० ) तदद्यापि यजमानः श्रमेण तपसाऽन्विच्छति स दीक्षित्वा पयोव्रतो भवत्येतद्वै तपो यो दीक्षित्वा पयोव्रतोऽसत्तस्य घोषमाशृणोतीत्यह्ने क्रय ऽइति ॥ ८ ॥

स त्रीन्त्स्तनानुपैति । तत्परापश्यति स द्वौ स्तनाऽउपैति तन्नेदीयसः परापश्यति स ऽएकꣳ स्तनमुपैति तदधिगच्छति न त्वभिपत्तुꣳ शक्नोति स ऽउपवसथेऽनाशकमुपैत्येतद्वै सर्व्वं तपो यदनाशकस्तस्मादुपवसथे नाश्नीयात् ॥ ९ ॥

( त्त ) तत्प्रातरभिपद्य । ( द्या ) अभिषुत्याग्नौ जुहोति तदग्नावमृतं दधात्यथ भक्षयति तदात्मन्नमृतं धत्ते सोऽमृतो भवत्येतद्वै मनुष्यस्यामृतत्वं यत्सर्व्वमायुरेति तथो हानेनात्मना सर्व्वमायुरेति ॥ १० ॥

( त्य ) अग्नौ हुत्वाऽथ भक्षयति । दैवो वाऽअस्यैष ऽआत्मा मानुषोऽयं देवा ऽउ वाऽअग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाऽथ भक्षयति ॥ ११ ॥

---

तद्यदमृतं–सोमः सः । तदद्यापि यजमानः श्रमेण तपसाऽन्विच्छति । स दीक्षित्वा पयोव्रतो भवति । एतद्वै तपो–यो दीक्षित्वा पयोव्रतोऽसत् । तस्य घोषमाशृणोतीत्यह्ने क्रय इति ॥ ८ ॥

स त्रीन्त्स्तनानुपैति । तत्परापश्यति । स द्वौ स्तना उपैति । तन्नेदीयसः परापश्यति । स एकं स्तनमुपैति । तदधिगच्छति । न त्वभिपत्तुं शक्नोति । स उपवसथेऽनाशकमुपैति । एतद्वै सर्वं तपो यदनाशकः । तस्मादुपवसथे नाश्नीयात् ॥ ९ ॥

तत्–प्रातरभिपद्य अभिषुत्य अग्नौ जुहोति । तदग्नावमृतं दधाति । अथ भक्षयति । तदात्मन्नमृतं धत्ते, सोऽमृतो भवति । एतद्वै मनुष्यस्यामृतत्वम्–यत् सर्वमायुरेति । तथो हानेनात्मना सर्वमायुरेति ॥ १० ॥

अग्नौ हुत्वा–अथ भक्षयति । दैवो वा अस्यैष आत्मा, मानुषोऽयम् । देवा उ वा अग्रे, अथ मनुष्याः । तस्मादग्नौ हुत्वाऽथ भक्षयति ॥ ११ ॥

---

पूर्वं यदुक्तममृतमिति तत्सोम एव नान्यदित्याह–तद्यदिति । इत्थं देवानां कथामवतार्य तथैवेदानीं तत् सर्वं करोतीत्याह–तदद्यापीत्यादिना । तस्य घोषमाशृणोतीत्यह्ने क्रय इतीति । 'अह्ने' इति लुप्तान्तादहन्-शब्दात् सप्तमी । 'इत्यह्ने' एतादृशेऽह्नि सोम–'क्रयः' इति घोषमाशृणोतीत्यर्थः ॥ ८ ॥ ९ ॥

तदग्नावमृतं दधातीति । तेनाग्निलक्षणे स्वस्य दैवात्मनि अमृतं दधाति ॥ १० ॥

अग्नौ हुत्वाऽथ भक्षयतीत्यादि । विशदार्थम् ॥ ११ ॥

( त्य ) अथातः समिष्टयजुषामेव मीमाᳫँसा । देवाश्चासुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुर्वाचमेव सत्यानृते सत्यं चैवानृतं च तऽउभयऽएव सत्यमवदन्नुभयेऽनृतं ते ह सदृशं वदन्तः सदृशाऽ एवासुः १२

( स्ते ) ते देवाऽउत्सृज्यानृतम् । ( ᳫँ ) सत्यमन्वालेभिरेऽसुराऽ उ होत्सृज्य सत्यमनृतमन्वालेभिरे ॥ १३ ॥

तद्धेदᳫँ सत्यमीक्षांचक्रे । यदसुरेष्वास देवा वाऽउत्सृज्यानृतᳫँ सत्यमन्वालप्सत हन्त तदयानीति तद्देवानाजगाम ॥ १४ ॥

( म्रा ) अनृतमु हेक्षांचक्रे । यद्देवेष्वासासुरा वाऽउत्सृज्य सत्यमनृतमन्वालप्सत हन्त तदयानीति तदसुरानाजगाम ॥ १५ ॥

---

## अथ समिष्टयजुर्मीमांसा ।

अथातः समिष्टयजुषामेव मीमांसा । देवाश्चासुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुः—वाचमेव सत्यानृते । सत्यं चैवानृतं च । त उभय एव सत्यमवदन्, उभयेऽनृतम् । ते ह सदृशं वदन्तः सदृशा एवासुः ॥ १२ ॥

ते देवा उत्सृज्यानृतं सत्यमन्वालेभिरे । असुरा उ होत्सृज्य सत्यमनृतमन्वालेभिरे ॥ १३ ॥

तद्धेदं सत्यमीक्षाञ्चक्रे—यदसुरेष्वास । देवा वाऽउत्सृज्यानृतं सत्यमन्वालप्सत—हन्त तदयानीति । तद्—देवानाजगाम ॥ १४ ॥

अनृतमु हेक्षाञ्चक्रे—यद्देवेष्वास । असुरा वा उत्सृज्य सत्यमनृतमन्वालप्सत—हन्त तदयानीति । तदसुरानाजगाम ॥ १५ ॥

---

अथ समिष्टयजुषां मीमांसा क्रियत इति प्रतिजानीते—अथात इति । अत्रापि पूर्ववत्कांचित्कथामवतारयति—देवाश्चासुराश्चेत्यादिना । पुरा किल प्रजापतेरपत्यभूता देवाश्चाऽसुराश्चोभये पितुः प्रजापतेः दायमुपेयुः । तमेव दायमाह—वाचमेवेति । कीदृशीं वाचमिति तत्राह—सत्यानृते इति । तदेव विवृणोति—सत्यं चैवानृतं चेति । सत्यानृतरूपां वाचमेव दायमुपेयुरित्यर्थः । ते देवा असुरा उभय एव सत्यमवदन् । तथा सदृशं वदन्त उभयेऽपि सदृशा बभूवुः ॥ १२ ॥

पश्चात्ते देवा वैषम्यसिद्धये अनृतमुत्सृज्य सत्यमेव स्वीकृतवन्तः । तथाऽसुरा अपि तेभ्यो वैलक्षण्यसिद्धये सत्यमुत्सृज्य अनृतं स्वीकृतवन्तः ॥ १३ ॥

ततोऽसुरेषु विद्यमानं सत्यं देवा अनृतं विसृज्य सत्यमेव स्वीकृतवन्तः, तत्रैव गच्छानीति विचार्य देवानाजगाम । हन्तेति निपातः स्वाश्रयप्राप्तिनिमित्तं हर्षं द्योतयति । देवेषु विद्यमानमनृतं च तथैव विचार्यासुरानाजगाम । ततो देवा असुरेषु विद्यमानस्य सत्यस्यात्रागमनात् सर्वं सत्यमवदन् । असुराश्च देवेषु विद्यमानस्यानृतस्यात्रागमनात् सर्वमनृतमवदन् ॥ १४ ॥ १५ ॥

ते देवाः । सुर्व्वᳫं सत्यमुवदन्त्सुर्व्वमसुरा ऽअनृतं ते देवा ऽआसक्ति सत्यं व्वदन्तऽऐषावीरतरा ऽइवासुरनाढ्यतरा ऽइव तस्माद्ध हैतद्य ऽआसक्ति सत्यं व्वदत्यैषावीरुतर ऽइवैवु भवत्युनाढ्यतर ऽइव स हु त्त्वेवान्ततो भवति देवा ह्येवान्ततोऽभवन् ॥ १६ ॥

(त्तु) अुथ ह्यसुराः । (ऽ) आसक्त्युनृतं व्वदन्त ऽऊष ऽइव पिपिशुराढ्या इवासुस्तुस्माद्ध हैतद्य ऽआसक्त्युनृतं व्वदत्यूषऽइवैवु पिश्यत्याढ्य ऽइव भवति पुरा हु त्त्वेवान्ततो भवति पुरा ह्यसुरा ऽअभवन् ॥ १७ ॥

( वंस्त ) तद्यत्तत्सत्युम् । ( न्त्र ) त्रयी सा विद्या ते देवा ऽअब्रुवन्यज्ञं कृत्वेदुᳫं सत्युं तनवामहाऽइति ॥ १८ ॥

---

ते देवाः सर्वं सत्यमवदन्, सर्वमसुरा अनृतम् । ते देवा आसक्ति सत्यं वदन्त ऐषावीरतरा इवासुरनाढ्यतरा इव । तस्माद्ध हैतद्–य आसक्ति सत्यं वदति–ऐषावीरतर इवैव भवति, अनाढ्यतर इव । स ह त्वेवान्ततो भवति । देवा ह्येवान्ततोऽभवन् ॥ १६ ॥

अथ हासुरा आसक्त्यनृतं वदन्त ऊष इव पिपिशुः, आढ्या इवासुः । तस्माद्ध हैतद्–य आसक्त्यनृतं वदति–ऊषऽइवैव पिश्यति, आढ्य–इव भवति । परा ह त्वेवान्ततो भवति । परा ह्यसुरा अभवन् ॥ १७ ॥

तद्यत्तत्सत्यम्–त्रयी सा विद्या । ते देवा अब्रुवन्–यज्ञं कृत्वेदं सत्यं तनवामहा इति ॥ १८ ॥

---

ते देवा आसक्ति सत्यं केवलं सत्यं वदन्तस्तदानीम् अवीरतरा इव अनाढ्यतरा इवाभवन् । 'ऐष' इति शब्दः तदानीमित्यस्मिन्नर्थे वर्तते । आसुरिति–च्छान्दसत्वाद् भूत्वाभावः । केवलं सत्यं वदतां कार्यानुरोधेन वचनप्रयोगस्यासंभवात्तदानीमसमर्था इव अनाढ्या इव अभवन् । तस्मादिदानीमपि तथैव तदानीमवीरतर इवानाढ्यतर इव भवति । परन्तु सः अन्ततो 'भवति ह' विजयते खलु ॥ १६ ॥

अथासुराः केवलानृतं वदन्तस्तदानीं 'पिपिशुः' "पिश अवयवे"–( धा. पा. तु. प. १९६ ) अवयविन इव बभूवुः । पुष्टा इव बभूवुरित्यर्थः । आढ्या इव च बभूवुः । तस्मादिदानीमपि स्वकार्यानुसारेण तथा वदन् पुरुषः पुष्ट इव भवति । आढ्य इव भवति । अन्ततस्तु पराभवति–तथा वदतामसुराणामन्ततः पराभूतत्वात् ॥ १७ ॥

तद्यदिति । 'तत्' देवैरुपन्यस्तं 'सत्यम्' इति यत् 'सा त्रयी विद्या' । अतस्ते देवा एतत्प्रतिपाद्यं यज्ञं कृत्वा त्रयीलक्षणमिदं सत्यं विस्तारयामेत्युक्त्वा–॥ १८ ॥

ते दीक्षणीयां निरवपन् । ( पंस्त ) तद्ध हासुरा ऽअनुबुबुधिरे यज्ञं वै कृत्वा तद्देवाः सत्यं तन्वते प्रेत तदाहरिष्यामो यदस्माकं तत्रेति तस्य समिष्टयजुरहुतमासाथाजग्मुस्तस्मात्तस्य यज्ञस्य समिष्टयजुर्न जुह्वति ते देवा ऽअसुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यत्कर्तुं दध्रिरेऽन्यद्वै कुर्व्वन्तीति पुनः प्रेयुः ॥ १९ ॥

( स्ते ) तेषु प्रेतेषु । प्रायणीयं निरवपंस्तद्ध हासुरा ऽअन्वेव बुबुधिरे तस्य शंय्योरुक्तमासाथाजग्मुस्तस्मात्स यज्ञः शंय्वन्तस्ते देवा ऽअसुरा-न्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरेऽन्यद्वै कुर्व्वन्तीति पुन-रेव प्रेयुः ॥ २० ॥

( स्ते ) तेषु प्रेतेषु । राजानं क्रीत्वा पर्युह्याथास्माऽआतिथ्यꣳ हविर्न्निरव-पंस्तद्ध हासुराऽ अन्वेव बुबुधिरे तस्येडोपहूताऽऽसाथाजग्मुस्तस्मात्स यज्ञ ऽइडान्तस्ते देवा ऽअसुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरेऽन्यद्वै कुर्व्वन्तीति पुनरेव प्रेयुः ॥ २१ ॥

---

ते दीक्षणीयां निरवपन् । तद्ध हासुरा अनुबुबुधिरे—यज्ञं वै कृत्वा तद्देवाः सत्यं तन्वते । प्रेत, तदाहरिष्यामो—यदस्माकं तत्रेति । तस्य समिष्टयजुरहुतमास । अथाजग्मुः । तस्मात्तस्य यज्ञस्य—समिष्टयजुर्न जुह्वति । ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यत्कर्तुं दध्रिरे । अन्यद्वै कुर्वन्तीति पुनः प्रेयुः ॥ १९ ॥

तेषु प्रेतेषु प्रायणीयं निरवपन् । तद्ध हासुरा अन्वेव बुबुधिरे । तस्य शंयोरुक्तमास । अथा-जग्मुः । तस्मात्स यज्ञः शंय्वन्तः । ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरे । अन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २० ॥

तेषु प्रेतेषु राजानं क्रीत्वा पर्युह्य—अथास्माऽआतिथ्यं हविर्निरवपन् । तद्ध हासुरा अन्वेव बुबु-

---

ते दीक्षणीयामिष्टिं निरवपन् । तत्तथाकरणम् असुरा अनुबुध्य, देवा यज्ञं कृत्वा तत्सत्यं तन्वते 'प्रेत' गच्छत, तत्रास्माकं यत्सत्यमस्ति तदाहरिष्याम इति यदा तस्य यज्ञस्य समिष्टयजुरहुतमभूत् अथाजग्मुः । समिष्टयजुषः पूर्वभाविकर्म कृतं समिष्टयजुर्न कृतं तस्मिन्नवसरे आगताः । तस्मादद्यापि 'तस्य' 'यज्ञस्य' 'समिष्टयजुर्न जुह्वति' । ततस्ते 'देवा' असुरान्दृष्ट्वा यज्ञं 'समुल्लुप्य' विच्छिद्य अन्यत्कार्यं कर्तुं दध्रिरे उपचक्रिरे । ततोऽसुरा नैते यज्ञं कुर्वन्ति—किन्त्वन्यदेव कुर्वन्तीति पुनः परागताः ॥ १९ ॥

तेषु प्रगतेषु 'प्रायणीयं' हविर्निरवपन् । उत्तरत्र 'तद्ध हासुरा' इत्यादिकं पूर्ववदेव । शंयोरुक्तमासेति । शंयोर्देवस्य तदीयं मन्त्रवाक्यमुक्तमभूत् । शंयुवाकान्तं कर्म कृतमित्यर्थः ॥ २० ॥

राजानं क्रीत्वेति । सोमं क्रीत्वाऽनसा 'पर्युह्याथास्मै' सोमायातिथ्यं हविर्निरवपन् ।

( स्ते ) तेषु प्रेतेषु । (षू) उपसदोऽतन्वत ते तिस्रऽ एव सामिधेनीरनूच्य देवताऽ एवायजन्न प्रयाजान्नानुयाजानुभयतो यज्ञस्योदसादयन्भूयिष्ठᳫँ हि तत्रात्वरन्त तस्मादुपसत्सु तिस्रऽ एव सामिधेनीरनूच्य देवता ऽएव यजति न प्रयाजान्नानुयाजानुभयतो यज्ञस्योत्सादयति ॥ २२ ॥

तऽउपवसथेऽग्नीषोमीयं पशुमालेभिरे । तद्ध हासुरा ऽअन्वेव बुबुधिरे तस्य समिष्टयजूᳫँष्यहुतान्यासुरथाजग्मुस्तस्मात्तस्य पशोः समिष्टयजूᳫँषि न जुह्वति ते देवाऽअसुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २३ ॥

( स्ते ) तेषु प्रेतेषु । प्रातः प्रातःसवनमतन्वत तद्ध हासुराऽअन्वेव बुबुधिरे तस्यैतावत्कृतमास यावत्प्रातःसवनमथाजग्मुस्ते देवाऽ असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्त्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २४ ॥

( स्ते ) तेषु प्रेतेषु । माध्यन्दिनᳫँ सवनमतन्वत तद्ध हासुराऽअन्वेव बुबुधिरे तस्यैतावत्कृतमास यावन्माध्यन्दिनमथाजग्मुस्ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्त्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २५ ॥

---

धिरे । तस्येडोपहूताऽऽस । अथाजग्मुः । तस्मात्स यज्ञ इडान्तः । ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरे । अन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २१ ॥

तेषु प्रेतेषूपसदोऽतन्वत । ते तिस्र एव सामिधेनीरनूच्य देवता एवायजन् । न प्रयाजान् । नानुयाजान् । उभयतो यज्ञस्योदसादयन् । भूयिष्ठं हि तत्रात्वरन्त । तस्मादुपसत्सु तिस्र एव सामिधेनीरनूच्य देवता एव यजति । न प्रयाजान्, नानुयाजान् । उभयतो यज्ञस्योत्सादयति ॥ २२ ॥

त उपवसथेऽग्नीषोमीयं पशुमालेभिरे । तद्ध हासुरा अन्वेव बुबुधिरे । तस्य समिष्टयजूंष्यहुतान्यासुः । अथाजग्मुः । तस्मात्तस्य पशोः समिष्टयजूंषि न जुह्वति । ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरे । अन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २३ ॥

तेषु प्रेतेषु प्रातः प्रातःसवनमतन्वत । तद्ध हासुरा अन्वेव बुबुधिरे । तस्यैतावत्कृतमास—यावत् प्रातःसवनम् । अथाजग्मुः । ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरे । अन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २४ ॥

तेषु प्रेतेषु माध्यन्दिनं सवनमतन्वत । तद्ध हासुरा अन्वेव बुबुधिरे । तस्यैतावत्कृतमास—याव-

---

उभयतो यज्ञस्योदसादयन्निति । यज्ञस्य पूर्वोत्तरभागावुत्सन्नावकुर्वन्प्रयाजानुयाजानामकरणात् । तस्यैतावदिति । यावत् प्रातःसवनसम्बंधि कर्मास्ति तस्यैतावत्कर्म कृतमभूत् । तत्समुल्लुप्य यज्ञमिति । माध्य-

(स्ते) तेषु प्रेतेषु। सवनीयेन पशुनाऽचरंस्तदु हासुरा ऽअन्वेव बुबुधिरे तस्यैतावत्कृतमास यावदेतस्य पशोः क्रियतेऽथाजग्मुस्ते देवा ऽअसुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्त्तुं दध्रिरेऽन्यद्वै कुर्व्वन्तीति पुनरेव प्रेयुः२६

( स्ते ) तेषु प्रेतेषु । तृतीयसवनमतन्वत तत्समस्थापयन्युत्समस्थापयंस्तत्सर्वᳪ सत्यमाप्नुवंस्ततोऽसुरा ऽअपपुप्लुविरे ततो देवा ऽअभवन्पराऽसुरा भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति यऽ एवं व्वेद ॥ २७ ॥

ते देवाऽअब्रुवन् । ( न्ये ) ये न ऽइमे यज्ञाः सामि सᳪस्थिता यानिमान्विजहतोऽगामोप तज्जानीत यथेमान्त्सᳪस्थापयामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेमान्यज्ञान्त्सᳪस्थापयामेति ॥ २८ ॥

---

न्माध्यन्दिनम् । अथाजग्मुः । ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरे । अन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २५ ॥

तेषु प्रेतेषु सवनीयेन पशुनाऽचरन् । तदु हासुरा अन्वेव बुबुधिरे । तस्यैतावत्कृतमास—यावदेतस्य पशोः क्रियते । अथाजग्मुः । ते देवा असुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरे । अन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २६ ॥

तेषु प्रेतेषु तृतीयसवनमतन्वत । तत्समस्थापयन् । यत्समस्थापयन्—तत्सर्वं सत्यमाप्नुवन् । ततोऽसुरा अपपुप्लुविरे । ततो देवा अभवन्, पराऽसुराः । भवत्यात्मना, पराऽस्य द्विषन्भ्रातृव्यो भवति-य एवं वेद ॥ २७ ॥

ते देवा अब्रुवन्—ये न इमे यज्ञाः सामि संस्थिताः, यानिमान्विजहतोऽगाम—उप तज्जानीत-यथेमान्त्संस्थापयामेति । तेऽब्रुवन्—चेतयध्वमिति । चितिमिच्छतेति वाव तदब्रुवन् । तदिच्छत यथेमान्यज्ञान्त्संस्थापयामेति ॥ २८ ॥

---

न्दिनसवनस्योपक्रमात्तावतैव यज्ञं विच्छिद्येत्यर्थः । तत्समस्थापयन्निति । तृतीयसवनं समापयन् । सर्वयज्ञनिष्पादनेन ' सर्वं सत्यमाप्नुवन् ' । तत्तथा करणेन असुराणामागमनसमये यज्ञं समापितं विज्ञाय पश्चादसुरा अपगतवन्तः । ततो देवाः समृद्धा अभूवन् । असुरास्तु पराऽभूवन् असमृद्धा अभूवन् । यः एवमुक्तप्रकारं जानाति। आत्मना स्वयमेव समृद्धो भवति । ' अस्य द्विषन् ' 'भ्रातृव्यः' पराभूतो भवति ॥ २१—२७ ॥

ते देवाः पश्चान्नः संबंधिनो य इमे यज्ञाः सामि संस्थिताः यानिमान्यज्ञान्परित्यजन्तो गता वयं, तदुपजानीत, यथेमान्यज्ञान् संस्थापयाम इत्युक्त्वा चेतयध्वमित्यब्रुवन् । तदेव विव्रियते—चितिमिच्छतेति वाव तदब्रुवन्निति । चितिविचारः अन्वेषणम् । एवमपि किमर्थमब्रुवन्नित्याशङ्क्याह—तदिच्छतेति ॥ २८ ॥

ते चेतयमानाः । ( ८ ) एतानि समिष्टयजूꣳष्यपश्यंस्तान्यजुहवुस्तैरेतान्यज्ञान्त्समस्थापयन्यत्समस्थापयंस्तस्मात्सꣳस्थितयजूꣳष्यथ यत्समयजंस्तस्मात्समिष्टयजूꣳषि ॥ २९ ॥

ते वाऽएते नव यज्ञाः । ( ० ) नवैतानि समिष्टयजूꣳषि तद्यदेतानि जुहोत्येतानेवैतद्यज्ञान्त्सꣳस्थापयत्युभयानि जुहोत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्वाण्यथाग्नेस्तस्योक्तो बन्धुः ॥ ३० ॥

( द्वे ) द्वेऽअग्नेर्जुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्यज्ञꣳ सꣳस्थापयतीष्टो यज्ञो भृगुभिरिष्टोऽअग्निराहुतः पिपर्तु न ऽइति ॥ ३१ ॥

---

ते चेतयमाना एतानि समिष्टयजूंष्यपश्यन् । तान्यजुहवुः । तैरेतान्यज्ञान्त्समस्थापयन् । यत्समस्थापयन्—तस्मात्संस्थितयजूंषि । अथ यत्समयजन्—तस्मात्समिष्टयजूंषि ॥ २९ ॥

ते वा एते नव यज्ञाः । नवैतानि समिष्टयजूंषि । तद् यदेतानि जुहोति । एतानेवैतद्यज्ञान्त्संस्थापयति । उभयानि जुहोति—अध्वरस्य चाग्नेश्च । अध्वरस्य पूर्वाणि, अथाग्नेः । तस्योक्तो बन्धुः ॥ ३० ॥

द्वेऽअग्नेर्जुहोति । द्विपाद्यजमानः । यजमानोऽग्निः । यावानग्निर्यावत्यस्य मात्रा—तावतैवैतद्यज्ञं संस्थापयति । "इष्टो यज्ञो भृगुभिः, इष्टोऽअग्निराहुतः पिपर्तु नः"—( वा. सं. १८ । ९६ । ९७ ) इति ॥ ३१ ॥

---

पश्चात्ते देवा विचारयन्तः एतानि समिष्टयजूंष्यपश्यन् । तैरेतान् यज्ञान् समस्थापयन् समापितवन्तः । अथैतेषां द्वेधा नाम निर्वक्ति—यत्समस्थापयन्निति । तैः एतैः यज्ञान् समस्थापयन्निति यत् तदेतानि संस्थितयजूंषीत्युच्यन्ते । अथैतैः सम्यगयजन्निति यत् तस्मात्समिष्टयजूंषीत्युच्यन्त इत्यर्थः ॥ २९ ॥

अथैतान्येव समिष्टयजूंषि संख्याविशेषप्रदर्शनेन प्रशंसति—ते वा एत इति । 'ते एते' असमापिता दीक्षणीयादयो 'यज्ञाः' 'नव' भवन्ति । 'एतानि समिष्टयजूंषि' च नव भवन्ति । एवं चैतेषां नवानां समिष्टयजुषां होमेन एतान् दीक्षणीयादीनपि संस्थापितवान् भवति । सौमिकान्याग्निकानि चेत्युभयान्यपि समिष्टयजूंषि जुहुयादित्याह—उभयानीति ॥ ३० ॥

आग्निकानि कति जुहुयादिति तत्राह—द्वे अग्नेरिति । तयोर्द्वित्वं प्रशंसति—द्विपाद्यजमान इति । अथ तयोरेवाग्निकयोः समिष्टयजुषोर्मन्त्रौ दर्शयति—इष्टो यज्ञ इति ॥ ३१ ॥

---

१-अध्वरसमिष्टयजुरन्त इष्टो यज्ञ इति प्रत्यृचमपरे । का. श्रौ. सू. १८ । १०५ ।

तान्युभयान्येकादश सम्पद्यन्ते । ( न्त८ ) एकादशाक्षरा त्रिष्टुब्वीर्यं त्रिष्टुब्वीर्यमेवैतद्यज्ञमभिसम्पादयति ॥ ३२ ॥

यद्वेवैकादश । (शै) एकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभऽइन्द्रऽ इन्द्रो यज्ञस्यात्मेन्द्रो देवता तद्यऽ एव यज्ञस्यात्मा या देवता तस्मिन्नेवैतद्यज्ञमन्ततः प्रतिष्ठापयति ॥ ३३ ॥ ( अर्धप्रपाठकः ॥ ९० ॥ )

समिष्टयजूꣳषि हुत्वाऽवभृथं यन्ति । ( न्त्य ) अवभृथादुदेत्योदयनीयेन चरित्वाऽनूबन्ध्यस्य पशुपुरोडाशमनु देविकानाꣳ हवीꣳषि निर्वपति ॥ ३४ ॥

( त्ये ) एतद्वै प्रजापतिः । प्राप्य राद्ध्वेवामन्यत स दिक्षु प्रतिष्ठायेदꣳ सर्वं दधद्विदधदतिष्ठद्यद्दधद्विदधदतिष्ठत्तस्माद्धाता तथैवैतद्यजमानो दिक्षु प्रतिष्ठायेदꣳ सर्वं दधद्विदधत्तिष्ठति ॥ ३५ ॥

---

तान्युभयान्येकादश सम्पद्यन्ते । एकादशाक्षरा त्रिष्टुप् । वीर्यं त्रिष्टुप् । वीर्यमेवैतद्यज्ञमभिसम्पादयति ॥ ३२ ॥

यद्वेवैकादश । एकादशाक्षरा वै त्रिष्टुप् । त्रैष्टुभ इन्द्रः । इन्द्रो यज्ञस्यात्मा । इन्द्रो देवता । तद् य एव यज्ञस्यात्मा, या देवता—तस्मिन्नेवैतद्यज्ञमन्ततः प्रतिष्ठापयति ॥ ३३ ॥

## अथ देविकाहवींषि ।

समिष्टयजूंषि हुत्वा, अवभृथं यन्ति । अवभृथादुदेत्य, उदयनीयेन चरित्वा, अनूबन्ध्यस्य पशुपुरोडाशमनु देविकानां हवींषि निर्वपति ॥ ३४ ॥

एतद्वै प्रजापतिः प्राप्य राद्ध्वेवामन्यत । स दिक्षु प्रतिष्ठायेदं सर्वं दधद् विदधत् अतिष्ठत् । यद्—दधद् विदधद् अतिष्ठत्-तस्माद्धाता । तथैवैतद्यजमानो दिक्षु प्रतिष्ठायेदं सर्वं दधद्—विदधत्—तिष्ठति ३५

---

सौमिकाग्निकानां मिलितां संख्यां प्रशंसति—तान्युभयानीति । वीर्यं त्रिष्टुबिति । " उरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवताऽन्वसृज्यत, त्रिष्टुप्छन्दः" इत्युपक्रम्य "तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त" ( तै. सं. ७ । १ । १ । ४ ) इति त्रिष्टुभो वीर्यत्वम् । एवं चैकादशसंख्यया यज्ञमभिलक्ष्य वीर्यमेव सम्पादयति यज्ञं वीर्यवन्तं करोतीत्यर्थः ॥ ३२ ॥

प्रकारान्तरेण तामेव मिलितां संख्यां प्रशंसति—यद्वेवैकादशेति । त्रैष्टुभ इन्द्र इति । त्रिष्टुभा सह इन्द्रस्योत्पत्तेः । इन्द्रश्च यज्ञस्यात्मा देवता च । अतश्चैकादशसंख्यया य एव यज्ञस्यात्मा या देवता च तस्मिन्नेवान्ततो यज्ञं प्रतिष्ठापयति ॥ ३३ ॥

समिष्टयजुर्होमानन्तरम् अनुष्ठेयं प्रयोगमाह—समिष्टयजूंषि हुत्वाऽवभृथं यन्तीति । अनूबन्ध्यस्येति । अवभृथादागत्य उदयनीयेन चरित्वा अनूबन्ध्यारम्भः । तत्र पशुपुरोडाशमनु देविकाख्यानां देवतानां हवींषि निर्वपेत् ॥ ३४ ॥

अत्र देविकानां हविःषु धात्रो द्वादशकपालो निरुप्यते । तत्र धातृशब्दस्य प्रवृत्तिनिमित्तं दर्शयन्

यद्वेवैतानि हवींषि निर्वपति । दिश एषोऽग्निस्ता ऽउऽएवामूः पुरस्ताद्दर्भस्तम्बं च लोगेष्टकाश्चोपदधाति ताः प्राणभृतः प्रथमायां चितौ सर्वैव द्वितीया सर्वा तृतीया सर्वा चतुर्थ्यथ पञ्चम्यै चितेरसपत्ना नाकसदः पञ्चचूडास्ता ऽऊर्ध्वा ऽउत्क्रामन्त्य ऽआयंस्ताभ्यः प्रजापतिरबिभेत्सर्वं वाऽइदमिमाः पराच्योऽत्येष्यन्तीति ता धाता भूत्वा पर्यगच्छत्तासु प्रत्यतिष्ठत् ॥ ३६ ॥

( त्स ) स यः स धाताऽसौ स ऽआदित्यः । ( त्योऽथ ) अथ यत्तद्दिशां परमं क्रान्तमेतत्तद्यस्मिन्नेषऽ एतत्प्रतिष्ठितस्तपति ॥ ३७ ॥

---

यद्वेवैतानि हवींषि निर्वपति । दिश एषोऽग्निः । ता उ एवामूः पुरस्ताद्दर्भस्तम्बं च लोगेष्टकाश्चोपदधाति । ताः प्राणभृतः प्रथमायां चितौ । सर्वैव द्वितीया । सर्वा तृतीया । सर्वा चतुर्थी । अथ पञ्चम्यै चितेरसपत्ना नाकसदः पञ्चचूडाः । ता ऊर्ध्वा उत्क्रामन्त्य आयन् । ताभ्यः प्रजापतिरबिभेत्—सर्वं वा इदमिमाः पराच्योऽत्येष्यन्तीति । ता धाता भूत्वा पर्यगच्छत् । तासु प्रत्यतिष्ठत् ॥ ३६ ॥

स यः स धाता—असौ स आदित्यः । अथ यत्तद्दिशां परमं क्रान्तम्—एतत्तद्—यस्मिन्नेष एतत् प्रतिष्ठितस्तपति ॥ ३७ ॥

---

तद्द्वाराऽस्य प्रयोजनमाह—एतद्वै प्रजापतिरिति । पूर्वं प्रजापतिः चयनकर्मणा स्वकीयं रूपं प्राप्य राध्वेव सिद्धिं गत्वेवामन्यत आत्मानं सिद्धममन्यतेत्यर्थः । ततः स दिक्षु प्रतिष्ठायेदं सर्वं जगद्दधद्धारयन् विदधत् कुर्वाणः अतिष्ठत् । यत एवं सर्वमपि दधद्विदधदतिष्ठत् तस्मादसौ धाता । अतश्च तद्यागेन यजमानोऽपि तथैव दिक्षु प्रतिष्ठायेदं सर्वं दधद्विदधत्तिष्ठति ॥ ३९ ॥

तथैतेषां सर्वेषामपि हविषां संभूयोपयोगं वक्तुमाह—यद्वेवैतानि इत्यादिना । एष सञ्चितोऽग्निर्दिशो, दिगात्मकत्वं च तस्य ता उ एवामूः पुरस्तादित्यादिना स्पष्टीक्रियते । दर्भस्तम्बादीनां प्रथमायां चितावुपधानात् अमूरिति विप्रकृष्टवाचिना शब्देन परामर्शः । पूर्वं प्रथमायां चितौ दर्भस्तम्बं च लोगेष्टकाश्चोपदधाति । तत्र हि प्रागादिक्रमेण चतसृषु दिक्षु लोगेष्टका मध्ये दर्भस्तम्बश्चोपधीयन्ते । अतश्च दिश एव तदात्मनोपदधाति । एवमिष्टकानां दिगात्मकत्वादेव—' दिश एषोऽग्निः ' इति अग्नेर्दिगात्मकत्वमुक्तम् । ताः दिगात्मिका दर्भस्तम्बादिदिश इष्टकाः तत्रैव प्रथमायां चितौ प्रागादिक्रमेण पञ्चसु दिक्षु प्राणभृतामुपधानात् दिगात्मिकाः प्राणभृतश्च । द्वितीयादिषु चतुर्थ्यन्तासु तिसृषु चितिषु सर्वासामपीष्टकानां प्रागादिक्रमेणैवोपधानात् तासां दिगात्मकत्वम् । ताश्च पञ्चम्याश्चितेः सम्बन्धिन्यः असपत्ना नाकसदः पञ्चचूडा इत्येता अपि तथैवोपधानाद्दिगात्मिकाः । ' ताः ' एताः सर्वा अपि दिग्रूपा इष्टकाः ऊर्ध्वा उत्क्रामन्त्योऽपगताः । ततः ' प्रजापतिः ' ' इमाः ' इष्टकाः ' पराच्यः ' सत्यः ' इदं ' ' सर्वम् ' अपि जगदतिक्रमिष्यंतीति ताभ्यो भीतस्ताः ' धाता भूत्वा ' परिगत्य तासु प्रतिष्ठितोऽभूत् ॥ ३६ ॥

अथ तमेव दिङ्निरोधार्थं परिगतं धातारं दिशामुत्क्रान्तरूपं च दर्शयति—स यः स धातेति । स दिङ्-

स यः स धाताऽयमेव स धात्रः । (त्रो) द्वादशकपालः पुरोडाशो द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरः प्रजापतिः प्रजापतिर्धाताऽथ यत्तद्दिशां परमं क्रान्तमेतानि तानि पूर्वाणि हवीꣳष्यनुमत्यै चरू राकायै चरुः सिनीवाल्यै चरुः कुह्वै चरुस्तद्यदेतानि निर्व्वपति यदेव तद्दिशां परमं क्रान्तं तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तꣳ सर्व्वं जुहोत्येतस्यैव कृत्स्नतायै ॥ ३८ ॥

ता वाऽ एता देव्यः । (व्यो) दिशो ह्येताश्छन्दाꣳसि वै दिशश्छन्दाꣳसि देव्योऽथैष कः प्रजापतिस्तद्यद्देव्यश्च कश्च तस्माद्देविकाः पञ्च भवन्ति पञ्च हि दिशः ॥ ३९ ॥

---

स यः स धाता—अयमेव स धात्रो द्वादशकपालः पुरोडाशः । द्वादशकपालः । द्वादश मासाः संवत्सरः । संवत्सरः प्रजापतिः । प्रजापतिर्धाता । अथ यत्तद्दिशां परमं क्रान्तम्—एतानि तानि पूर्वाणि हवींषि । अनुमत्यै चरुः । राकायै चरुः । सिनीवाल्यै चरुः । कुह्वै चरुः । तद्यदेतानि निर्वपति—यदेव तद्दिशां परमं क्रान्तं—तस्मिन्नेवैनमेतत्प्रतिष्ठापयति । तं सर्वं जुहोति—एतस्यैव कृत्स्नतायै ॥ ३८॥

ता वा एता देव्यः । दिशो ह्येताः । छन्दांसि वै दिशः । छन्दांसि देव्यः । अथैष कः प्रजापतिः । तद्—यद्देव्यश्च कश्च—तस्माद्देविकाः । पञ्च भवन्ति । पञ्च हि दिशः ॥ ३९ ॥

---

निरोधार्थं परिगतो यो धाताऽस्ति स धाता उपरि तपन्नादित्यः खलु । अथ दिशां तद्यत् परममन्तिमं क्रान्तं उत्क्रान्तं रूपमस्ति तदेतत् । एतच्छब्दार्थमेव दर्शयति—यस्मिन्नेष इति । 'एषः' आदित्यः 'यस्मिन्प्रतिष्ठितः' एतत् तपनं करोति । एतदन्तरिक्षं तद्दिशां परममुत्क्रान्तरूपं दिशामन्तरिक्षावधि उत्क्रांतत्वात्तदेव परममुत्क्रान्तरूपमित्यर्थः ॥ ३७ ॥

अस्त्वादित्यो धाता अन्तरिक्षमेव दिशां परममुत्क्रान्तत्वात्तदेव रूपं ततः किमायातं प्रकृत इति तत्राह—स यः स धातेति । स आदित्यात्मको यो धाता सोऽयमेव धात्रो धातृदेवत्यः पुरोडाशः । स च द्वादशकपालो भवति । द्वादश मासा इत्यादिना तां द्वादशसंख्यामुपपादयति । संवत्सरो द्वादशमासात्मकः । प्रजापतिस्तथाविधसंवत्सरात्मकः । स एव प्रजापतिर्धाता । एवं धातुर्द्वादशसंख्यासंबंधात्तद्देवत्यस्य पुरोडाशस्य द्वादशकपालत्वमुपपन्नम् । अथ तत्पूर्वोक्तं यद्दिशां परममुत्क्रांतरूपं तान्येतानि पूर्वाणि हवींषि, तान्येव दर्शयति—अनुमत्यै चरुरित्यादिना । धात्रपुरोडाशस्योत्तमत्वात्तदपेक्षया एतेषां पूर्वत्वमत एव कात्यायनेन—एतेषां हविषामन्ते धात्रो द्वादशकपालः सूत्रितः । "अनुमतिराकासिनीवालीकुहूभ्यश्चरवो धात्रो द्वादशकपालः सर्वहुतः"—( का. श्रौ सू. १८ । १०६–१०७ ) इति । तथा चैतानि देविकानां हवींषि निर्वपतीति यत् तेन यदेव तद्दिशां परममुत्क्रांतरूपं तस्मिन्नेवैनं धातारं प्रतिष्ठापयति । एतेन हविषां निर्वापेन दर्भस्तम्बादीष्टकालक्षणासु उत्क्रान्तासु दिक्षु प्रजापतिं प्रतिष्ठापितवान्भवतीत्यर्थः । तस्य धात्रपुरोडाशस्य होमावसरे पुरोडाशान्तरवदवदानप्रसक्तावाह—तं सर्वमिति । सर्वहोमस्योपयोगमाह—एतस्यैवेति ॥ ३८ ॥

अथ देविकाशब्दं निर्वक्ति—ता वा एता इति । 'ता एताः' अनुमत्यादयो 'देव्यः' खलु । एतदेवो-

(स्तु) तुदाहुः । (नै) नैतानि हवीᳬषि निर्व्वपेन्नेदतिरेचयानीति तानि वै निर्व्वपेदेव कामेभ्यो वाऽएतानि हवीᳬषि निरुप्यन्ते न वै कामानामतिरिक्तमस्ति यद्वै किं च पशुपुरोडाशमनु हविर्निरुप्यते पशावेव स मध्यतो मेधो धीयतऽउभयानि निर्व्वपत्यध्वरस्य चाग्नेश्चाध्वरस्य पूर्व्वमथाग्नेस्तस्योक्तो बन्धुरुच्चैः पशुपुरोडाशो भवत्युपाᳬश्वेतानीष्टिर्ह्यनुब्रूहि प्रेष्येति पशुपुरोडाशस्याहानुब्रूहि यजेत्येतेषामिष्टिर्हि समानः स्विष्टकृत्समानीडा ॥ ४० ॥

तस्य वाऽएतस्य पशोः । (जु) जुह्वति समिष्टयजूᳬष्यभ्युवयन्ति हृदयशूलेनावभृथᳬ सᳬस्था ह्येष पशुर्हृदयशूलेन चरित्वा ॥ ४१ ॥

---

तदाहुः—नैतानि हवींषि निर्वपेत् । नेदतिरेचयानीति । तानि वै निर्वपेदेव । कामेभ्यो वा एतानि हवींषि निरुप्यन्ते । न वै कामानामतिरिक्तमस्ति । यद्वै किं च पशुपुरोडाशमनु हविर्निरुप्यते—पशावेव स मध्यतो मेधो धीयते । उभयानि निर्वपति—अध्वरस्य चाग्नेश्च । अध्वरस्य पूर्वम्, अथाग्नेः । तस्योक्तो बन्धुः । उच्चैः पशुपुरोडाशो भवति, उपांश्वेतानि । इष्टिर्हि । ' अनुब्रूहि ' ' प्रेष्य ' इति पशुपुरोडाशस्याह । 'अनुब्रूहि' 'यज' इत्येतेषाम् । इष्टिर्हि । समानः स्विष्टकृत् । समानीडा॥४०॥

तस्य वा एतस्य पशोर्जुह्वति समिष्टयजूंषि, अभ्यवयन्ति हृदयशूलेनावभृथम् । संस्था ह्येष पशुः । हृदयशूलेन चरित्वा ॥ ४१ ॥

---

प्रपाद्यते—दिशो ह्येता इत्यादिना । ' एताः ' सिनीवाल्यादयो दिशः खलु ' दिशश्छन्दांसि ' खलु तानि च्छन्दांसि द्योतमानत्वेन देव्यः, एवं च परम्परया सिनीवाल्यादयो देव्यः । अथैष ' प्रजापतिः ' ' कः ' इत्युच्यते । तथा सति 'देव्यश्च कश्च' इति यत् 'तस्मात्' एताः ' देविकाः ' इति । " ङ्यापोः संज्ञाछन्दसोर्बहुलम् "—( पा. सू. ६ । ३ । ६३ ) इति देवीशब्दस्य ह्रस्वत्वम् । अथैतेषां पञ्चत्वसंख्यामुपपादयति—पञ्च भवन्तीति । दिशां पञ्चत्वात्तदात्मिकानां देविकानामपि हवींषि पञ्चैव भवेयुरित्यर्थः ॥ ३९ ॥

तदाहुः इत्यादिकम् समानीडा इत्यन्तम् प्रागेव व्याख्यातम् ॥ ४० ॥

दीक्षणीयादीष्टीनां समिष्टयजुर्होमात् पूर्वभावित्वेन समिष्टयजुर्होमः सिद्ध्यति, अग्नीषोमीयपशोः पुनर्न सिद्ध्यति, न चासौ पशुस्ततः पूर्वभावी । अतोऽस्य पृथगेव समिष्टयजूंषि जुहुयादित्याह—तस्य वा एतस्येति । तस्य पशोः समाप्तिरूपत्वात् हृदयशूलेन अवभृथमभ्यवेयुरित्याह—अभ्यवयन्तीति । हृदयशूलमुद्वास्य प्रत्येत्य वैश्वकर्मणानि जुहुयादित्याह—हृदयशूलेन चरित्वेति[1] ॥ ४१ ॥

---

१—हृदयशूलांते स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ । । का. श्रौ. सू. १८ । १०८ ।

प्रत्येत्य वैश्वकर्मणानि जुहोति । विश्वानि कर्माण्ययमग्निस्तान्यस्यात्र सर्वाणि कर्माणि कृतानि भवन्ति तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो विश्वकर्माऽयमग्निस्तमेवैतत्प्रीणाति ॥ ४२ ॥

यद्देव वैश्वकर्मणानि जुहोति । प्रायणं च ह्यस्याग्नेरुदयनं च सावित्राणि प्रायणं वैश्वकर्मणान्युदयनᳫं स यत्सावित्राण्येव जुहुयान्न वैश्वकर्मणानि यथा प्रायणमेव कुर्यान्नोदयनं तादृक्तदथ यद्वैश्वकर्मणान्येव जुहुयान्न सावित्राणि यथोदयनमेव कुर्यान्न प्रायणं तादृक्तदुभयानि जुहोति प्रायणं च तदुदयनं च करोति ॥ ४३ ॥

---

### अथ वैश्वकर्मणहोमः ।

प्रत्येत्य वैश्वकर्मणानि जुहोति । विश्वानि कर्माण्ययमग्निः । तान्यत्र सर्वाणि कर्माणि कृतानि भवन्ति । तान्येतत्प्रीणाति । तानि हविषा देवतां करोति । यस्यै वै देवतायै हविर्गृह्यते सा देवता । न सा–यस्यै न गृह्यते । अथो विश्वकर्माऽयमग्निः । तमेवैतत्प्रीणाति ॥ ४२ ॥

यद्वेव वैश्वकर्मणानि जुहोति । प्रायणं च ह्यग्नेरुदयनं च । सावित्राणि प्रायणम्, वैश्वकर्मणान्युदयनम् । स यत्सावित्राण्येव जुहुयात्, न वैश्वकर्मणानि, यथा प्रायणमेव कुर्यान्नोदयनं–तादृक् तत् । अथ यद्वैश्वकर्मणान्येव जुहुयात्, न सावित्राणि; यथोदयनमेव कुर्यात्, नप्रायणम्–तादृक् तत् । उभयानि जुहोति–प्रायणं च तदुदयनं च करोति ॥ ४३ ॥

---

तेषां होमस्योपयोगमाह–प्रत्येत्य वैश्वकर्मणानीति । 'अयमग्निः' एव 'विश्वानि कर्माणि' धातुविश्लेषां कर्मणां तावदग्निसाध्यत्वात्–अस्याग्नेस्तानि सर्वाणि कर्माणि अस्मिन्नवसरे 'कृतानि' भवन्ति । अतश्चैतेन होमेन 'तान्येव' कर्माणि 'प्रीणाति' । अथो विश्वकर्मेति । किंच 'अयमग्निः' विश्वस्य कर्तृत्वेन विश्वकर्मा तमेवैतेन होमेन प्रीणातीति । संप्रति विश्वकर्मविशिष्टमग्निं प्रीणातीत्युक्तत्वात् विश्वानि कर्माणि देवतैषामिति वैश्वकर्मणानीति प्रथमपक्षे व्युत्पत्तिः । द्वितीयपक्षे विश्वकर्मा देवता एषां इति वैश्वकर्मणानि इति व्युत्पत्तिः॥ ४२॥

अथ तान्येव वैश्वकर्मणानि प्रशंसति–यद्वेवेति । वैश्वकर्मणहोमेन 'अग्नेः' 'प्रायणम्' 'उदयनं च' सम्पादितं भवति । प्रायणं प्रारम्भः । उदयनं समापनम् । कथमेतदुभयमपि सम्पाद्यत इति तत्राह–सावित्राणीति । आदौ सम्पादितानि 'सावित्राणि' एव प्रायणं भवति । एतानि वैश्वकर्मणान्येवोदयनं भवतीति अग्नेस्तदुभयसिद्धिरित्यर्थः । सावित्रवैश्वकर्मणानां प्रायणोदयनात्मकत्वेनैव तेषां उभयेषामपि होमस्यावश्यकत्वमाह–स यत्सावित्राण्येवेति । सोऽध्वर्युर्यदि सावित्राण्येव जुहुयान्न वैश्वकर्मणानि तदा यथा कस्यचित्कार्यस्यारम्भमेव कुर्यात्, न समापनम् 'तादृक् तत्' तथा करणमपि तादृक् भवति । अथ यदि वैश्वकर्मणान्येव जुहुयात् न सावित्राणि तथा करणे यथा कस्यचित्कार्यस्य समापनमेव

( त्य ) अष्टावमूनि भवन्ति । ( न्त्ये ) एवमिमानि तद्यथा प्रायणं तथोदयनं करोति स्वाहाकारोऽमीषां नवमो भवत्येवमेषां तद्यथा प्रायणं तथोदयनं करोत्याहुतिरमीषां दशमी भवत्येवमेषां तद्यथा प्रायणं तथोदयनं करोति संततां तत्राहुतिं जुहोति रेतो वै तत्र यज्ञो रेतसोऽविच्छेदाय स्रुवेणेह स्वाहाकारं निरुक्तᳪं हि रेतो जातं भवति ॥ ४४ ॥

यदाकूतात् । ( त्स ) समसुस्रोद्धृदो वा मनसो वा सम्भृतं चक्षुषो वेत्येतस्माद्ध्येतत्सर्व्वस्मादग्रे कर्म समभवत्तदनु प्रेत सुकृतामु लोकं यत्र ऽऋषयो जग्मुः प्रथमजाः पुराणाऽ इत्यमूनेतदृषीनाह ॥ ४५ ॥

---

अष्टावमूनि भवन्ति। एवमिमानि । तद्यथा प्रायणं तथोदयनं करोति । स्वाहाकारोऽमीषां नवमो भवति । एवमेषाम् । तद्यथा प्रायणं तथोदयनं करोति । आहुतिरमीषां दशमी भवति । एवमेषाम् । तद्यथा प्रायणं तथोदयनं करोति । सन्ततां तत्राहुतिं जुहोति । रेतो वै तत्र यज्ञः । रेतसोऽविच्छेदाय । स्रुवेणेह स्वाहाकारम् । निरुक्तं हि रेतो जातं भवति ॥ ४४ ॥

" यदाकूतात्समसुस्रोद्धृदो वा मनसो वा सम्भृतं चक्षुषो वा "–इति । एतस्माद्ध्येतत्सर्वस्मादग्रे कर्म समभवत् । " तदनु प्रेत सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः "–( वा. सं. १८।५८ ) इति । अमूनेतदृषीनाह ॥ ४५ ॥

---

कुर्यान्न प्रारम्भं तादृक् तत्तथाकरणमपि तादृक् । तस्मादुभयेषामपि होमं कुर्यादित्याह–उभयानीति । एवं चाग्नेः प्रारम्भणं समापनं च सम्पादितवान्भवतीति ॥ ४३ ॥

अथ वैश्वकर्मणानां सावित्रवदेव संख्यासंबंधात्प्रायणवदेवोदयनमपि संपाद्यते इत्याह–अष्टावमूनीति । अमूनि इत्यदःशब्देन सर्वत्र विप्रकृष्टानि सावित्राणि परामृश्यन्ते । इमानीत्यादीदंशब्देन सर्वत्र स्वप्रकृतानि वैश्वकर्मणानि परामृश्यंते । नन्वेवं तर्हि सावित्रवदेवात्रापि किं सर्वमपि कर्तव्यमिति नेत्याह–संततां तत्राहुतिमिति । तत्र सावित्रेषु आहुतिं संततामविच्छिन्नां जुहुयात् । तत्रोपक्रमरूपत्वेन यज्ञस्य रेतस्त्वाद्रेतसो विच्छेदाभावायेति । इह वैश्वकर्मणेषु पुनः स्रुवेण स्वाहाकृत्य जुहुयात् । अनेन प्रत्याहुति विच्छेदो दर्शितः । रेतश्चोत्पत्तिसमये निरुक्तमवयवविभागविशिष्टं सत् जातं भवति । अतश्चास्य रेतोरूपस्य यज्ञस्योत्पत्तेरवसरत्वाद्विच्छेदेन जुहुयात् इति ॥ ४४ ॥

अथ तानष्टौ वैश्वकर्मणहोममन्त्रान् क्रमेण व्याख्यातुमनुवदति–यदाकूतादिति । ' अग्रे ' पूर्वं एतस्मात् खल्वाकूतादेः ' सर्वस्मात् ' ' कर्म समभवत् ' अत उक्तम्–यदाकूतादिति । सर्वत्र ' वा ' शब्दः समुच्चयार्थः । समसुस्रोदिति । समभवत् । आकूतमिति निश्चयावस्थं मन उच्यते । हृदिति मनोऽवस्थानप्रदेशः । मनो विमर्शात्मकम् । कृत्स्नमपि कर्म हृदयस्थेन विमर्शात्मना मनसा विचार्य निश्चयात्मना तेनैव निश्चित्य पश्चात् ' चक्षुषा ' तत्साधनं दृष्ट्वा क्रियते । अतश्च तस्मात् सम्भृतं ' समसुस्रोत् ' इत्युक्तम् ।

(३) एतꣳ सधस्थ । परि ते ददामीति स्वर्गो वै लोकः सधस्थस्तदेनꣳ स्वर्गाय लोकाय परिददाति यमावहाच्छेवधिं जातवेदाः॥अन्वागन्ता यज्ञपतिर्वोऽअत्र तꣳ स्म जानीत परमे व्योमन्निति यथैव यजुस्तथा बन्धुः ॥ ४६ ॥

(२) एतं जानाथ । परमे व्योमन्देवाः सधस्था विद रूपमस्य ॥ यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणवाथाविरस्माऽइति यथैव यजुस्तथा बन्धुरुद्बुध्यस्वाग्ने येन वहसीति तयोरुक्तो बन्धुः ॥ ४७ ॥

प्रस्तरेण परिधिना । स्रुचा वेद्या च बर्हिषा ॥ ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवऽइत्येतैर्नो यज्ञस्य रूपैः स्वर्गं लोकं गमयेत्येतत् ॥ ४८ ॥

---

"एतं सधस्थ परि ते ददामि"–इति । स्वर्गो वै लोकः सधस्थः । तदेनं स्वर्गाय लोकाय परिददाति । "यमावहाच्छेवधिं जातवेदाः ॥ अन्वागन्ता यज्ञपतिर्वोऽअत्र तं स्म जानीत परमे व्योमन्"–( वा. सं १८।५९ ) इति । यथैव यजुस्तथा बन्धुः ॥ ४६ ॥

"एतं जानाथ परमे व्योमन्, देवाः सधस्था विद रूपमस्य । यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणवाथाविरस्मै"–(वा. सं. १८ । ६०) इति । यथैव यजुस्तथा बन्धुः । "उद्बुध्यस्वाग्ने, येन वहसि"–( वा. सं. १८ । ६१ । ६२ ) तयोरुक्तो बन्धुः ॥ ४७ ॥

"प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे"–( वा. सं. १८ । ६३ ) इति । एतैर्नो यज्ञस्य रूपैः स्वर्गं लोकं गमयेत्येतत् ॥ ४८ ॥

---

'प्रथमजाः पुराणाः' 'ऋषयः' इति पुरस्तात् षष्ठेऽभिहितान् ऋषीनभिधत्त इत्याह–अमूनेतदिति । हृदो हृदयप्रदेशेऽवस्थितादाकूतान्मनसश्च चक्षुषश्च यत्कर्म संभृतं सत् समभवत् तदनुलक्ष्य तत्कर्म कृत्वा अनन्तरं हे यजमानाः ! आदरार्थं बहुवचनम् । शोभनकर्मकारिणां लोकं प्रगच्छत । यत्र यस्मिन् लोके प्रथमजाः पुराणाः ऋषयोऽभिहितप्रकारं कर्म कृत्वा जग्मुः तं लोकं गच्छतेत्यर्थः ॥ ४९ ॥

सधस्थशब्देन स्वर्ग उच्यते इत्याह–एतं सधस्थेत्यादिना । 'एतं' यजमानं स्वर्गाय लोकाय रक्षणार्थं दत्तवान् भवतीत्याह–तदेनं स्वर्गाय लोकाय इति । अत्रशिष्टो मन्त्रभागः स्पष्टार्थ इत्याह–यथैव यजुरिति ॥४६॥

एतं जानाथेत्ययमपि मन्त्रः स्पष्टार्थ इत्याह–एतं जानाथेति । यथैव यजुरिति । मन्त्रार्थस्तु मन्त्रव्याख्यानादेव बोद्धव्यः । अत्र पुनस्तत्र तत्र ब्राह्मणोक्तव्याख्यानाविरोधेन केषांचिन्मन्त्राणां, योजना क्रियते । न तु सर्वेषाम्, अप्रस्तुतत्वात् । "उद्बुध्यस्वाग्ने" "येन वहसि" इत्यनयोर्मन्त्रयोर्ब्राह्मणं प्रागुक्तमित्याह–उद्बुध्यस्वेति ॥ ॥ ४७ ॥

एतैर्नो यज्ञस्येति । नः अस्माकं भोगार्यैतैः प्रस्तरादिभिर्यज्ञस्य रूपैः सह यज्ञं स्वर्गं लोकं प्रापयेत्येतदुक्तं भवति । 'प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा,' 'ऋचा' च सह 'इमं यज्ञम्' अस्माकं भोगार्थं देवेषु गन्तुं स्वर्गं लोकं प्रापयेत्यर्थः ॥ ४८ ॥

( घ्र ) युद्दत्तं युत्परा॒दानम्। युत्पूर्तं याश्च दक्षिणाः ॥ तुदग्निर्वैश्वकर्मणुः स्वर्देवेषु नो दधदिति युच्चैवु सम्प्रति दध्मो यच्चासम्प्रति तन्नोऽयमग्निर्वैश्वकर्मणुः स्वर्गे लोके दधात्वित्येतत् ॥ ४९ ॥

( घ्र ) युत्र धारा ऽअनपेताः । ( ० ) मुधोर्घृतस्य च याः ॥ तुदग्निर्वैश्वकर्मणुः स्वर्देवेषु नो दधदिति यथैव युजुस्तथा बुन्धुः ॥ ५० ॥

( र ) अष्टौ वैश्वकर्मणानि जुहोति । ( त्य ) अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ५१ ॥

वैश्वकर्मणानि हुत्वा नाम करोति । यदा वै सर्वः कृत्स्नो जातो भवत्यथ नाम कुर्वन्त्यत्र वाऽएष सर्वः कृत्स्नो जातो भवति ॥५२॥ (शतं ५१००)

---

“ यद्दत्तं यत्परा-दानं यत्पूर्तं याश्च दक्षिणाः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ”–( वा. सं. १८ । ६४ ) इति । यच्चैव सम्प्रति दध्मो, यच्चासम्प्रति–तन्नोऽयमग्निर्वैश्वकर्मणः स्वर्गे लोके दधात्वित्येतत् ॥ ४९ ॥

“ यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत् ”–( वा. सं. १८ । ६९ ) इति । यथैव यजुस्तथा बन्धुः ॥ ५० ॥

अष्टौ वैश्वकर्मणानि जुहोति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवैनमेतदन्नेन प्रीणाति ॥ ५१ ॥

अथ चित्याग्नेर्नामकरणम् ।

वैश्वकर्मणानि हुत्वा नाम करोति । यदा वै सर्वः कृत्स्नो जातो भवति–अथ नाम कुर्वन्ति । अत्र वा एष सर्वः कृत्स्नो जातो भवति ॥ ५२ ॥

---

यच्चैव संप्रतीति । 'यत्' कर्म 'संप्रति' युक्तमन्यूनातिरिक्तं 'दध्मो' धारयामः कुर्मः । 'यच्च' कर्म 'असम्प्रति' न्यूनातिरिक्तं, 'नः' अस्माकं तत्सर्वं कर्मायं वैश्वकर्मणोऽग्निः स्वर्गे लोके दधात्वित्येतदुक्तं भवति । यद्दत्तं यदुचितं दानं कृतं यच्चानुचितं न्यूनमतिरिक्तं वा दानं कृतम् यत्पूर्तं आरामादिकं कर्म कृतं याश्च यज्ञे दक्षिणाः संपादिताः नोऽस्माकं सम्बन्धि तत्सर्वं अयं वैश्वकर्मणोऽग्निः स्वर्गे विद्यमानेषु देवेषु दधात्विति मन्त्रार्थः ॥ ४९ ॥

" यत्र धारा " इत्यादिको मन्त्रः स्पष्टार्थ इत्याह–यथैव यजुरिति ॥ ५० ॥

अथैतेषां वैश्वकर्मणानां संख्यां प्रशंसति–अष्टौ वैश्वकर्मणानीति ॥ ५१ ॥

वैश्वकर्मणहोमानन्तरमस्याग्नेर्नाम कुर्यादित्याह–वैश्वकर्मणानि हुत्वा नाम करोतीति । तच्च नामधेयं कात्यायनेनोक्तम्–" नाम करोति चित्रोऽसीति "–( का. श्रौ. सू. १८ । १०८ ) इति । तच्चास्मिन् प्रस्तावे नामकरणस्य कोऽभिप्राय इति तत्राह–यदा वै सर्व इति । लोके यस्मिन्नवसरे साकल्येन ' जातो भवति ' अनन्तरमेव तस्य 'नाम कुर्वन्ति' । अयमग्निश्चेदानीं साकल्येन ' जातो भवति ' । सर्वस्याप्यग्निकर्मणोऽत्र सम्पादितत्वात् । तस्मादेतस्मिन्प्रस्तावे नामकरणमुचितम् ॥ ५२ ॥

नाम कृत्वाऽथैनमुपतिष्ठते । सर्वेण वाऽएष ऽएतमात्मना चिनोति स यदेतामत्रात्मनः परिदां न वदेतात्र हैवास्यैष ऽआत्मानं वृञ्जीताथ यदेतामत्रात्मनः परिदां वदते तथो हास्यैषऽआत्मानं न वृङ्क्ते येऽअग्नयः पाञ्चजन्या ऽअस्यां पृथिव्यामधि ॥ तेषामसि त्वमुत्तमः प्र नो जीवातवे सुवेति ये के चाग्नयः पञ्चचितिका ऽअस्यां पृथिव्यामधि तेषामसि त्वँ सत्तमः प्रोऽअस्माञ्जीवनाय सुवेत्येतदनुष्टुभा वाग्वाऽअनुष्टुब्वाग्घि सर्वाणि च्छन्दाँसि सर्वैरेवास्माऽएतच्छन्दोभिर्निह्नुतऽउपस्थायाग्निँ समारोह्य निर्मथ्योदवसानीयया यजते ॥ ९३ ॥

---

## अथ चित्याग्नेरुपस्थानम् ।

नाम कृत्वाऽथैनमुपतिष्ठते । सर्वेण वा एष एतमात्मना चिनोति । स यदेतामत्रात्मनः परिदां न वदेत–अत्र हैवास्यैष आत्मानं वृञ्जीत । अथ यदेतामत्रात्मनः परिदां वदते–तथो हास्यैष आत्मानं न वृङ्क्ते । " ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि । तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव "–( वा. सं॰ १८ । ६७ ) इति । ये के चाग्नयः पञ्चचितिका अस्यां पृथिव्यामधि–तेषामसि त्वं सत्तमः, प्रोऽअस्माञ्जीवनाय सुवेत्येतत् । अनुष्टुभा । वाग्वाऽअनुष्टुप् । वाग्घि सर्वाणि च्छन्दांसि । सर्वैरेवास्मा एतच्छन्दोभिर्निह्नुते । उपस्थायाग्निं समारोह्य निर्मथ्योदवसानीयया यजते ॥ ९३ ॥

---

नामकरणानन्तरमस्याग्नेरुपस्थानं विधत्ते–नाम कृत्वेति[1] । ननु–किमर्थमुपस्थानमिति तत्राह–सर्वेण वा इति । एषोऽध्वर्युरेतमग्निं सर्वेणात्मना स्वरूपेण चिनोति । अस्याग्नेर्यावत्स्वरूपमस्ति तावता स्वरूपेणाऽधुना चितवान्भवति । अतश्चेदानीं निग्रहानुग्रहसमर्थो भवति । तस्मादत्र यद्यात्मनः परिदां रक्षणं न वदेत तदा तस्मिन्नवसरे ह्येषोऽग्निरस्याध्वर्योरात्मानं वृञ्जीत वर्जयेत् । तस्मिन्नेवोपस्थाने मन्त्रं प्रदर्श्य व्याचष्टे–येऽअग्नयः पाञ्चजन्या इति । अस्यां पृथिव्यां ये के चाग्नयः पञ्चचितिका विद्यन्ते । तेषां मध्ये त्वमुत्तमोऽसि । अतो जीवनायास्मान् सर्वाननुजानीहि इत्येतदुक्तं भवतीत्यर्थः । अथैतस्य मन्त्रस्य छन्दः प्रशंसति–अनुष्टुभेति । अनुष्टुभो वागात्मकत्वाद्वाचश्च सर्वच्छन्दोरूपत्वात्सर्वैरेव च्छन्दोभिरस्मा अग्नये निह्नुते आत्मरक्षणप्रार्थनलक्षणमपराधमपनयतीत्यर्थः । उपस्थानानन्तरं कर्तव्यं प्रयोगमाह–उपस्थायाग्निमिति । ' उपस्थायाग्निम् ' अरण्योः समारोह्य गृह गत्वा तत्र पुनर्निर्मथ्य तस्मिन्निर्मथितेऽग्नौ उदवसानीययेष्ट्या यजते इत्यर्थः ॥ ९३ ॥

---

१–चित्रोऽसीति चित्यनाम कृत्वोपतिष्ठते येऽअग्नय इति । का. श्रौ. सू. १८ । १०९ ।

( ते॒ऽथ ) अथ मैत्रावरुण्या पयस्यया यजते । देवत्रा वाऽएष भवति य ऽएतत्कर्म करोति दैवम्वेतन्मिथुनं यन्मित्रावरुणौ स यदेतयाऽनिष्ट्वा मानुष्यां चरेत्प्रत्यवरोहः स यथा दैवः सन्मानुषः स्यात्तादृक्तदथ यदेतया मैत्रावरुण्या पयस्यया यजते दैवमेवैतन्मिथुनमुपैत्येतयेष्ट्वा कामं यथाप्रतिरूपं चरेत् ॥ ९४ ॥

( य ) यद्वेवैतया मैत्रावरुण्या पयस्यया यजते । प्रजापतेर्विस्रस्ताद्रेतः परापतत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेतया मैत्रावरुण्या पयस्यया रेतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ ९५ ॥

स यः स प्रजापतिर्व्यस्रंसत । ( ता ) अयमेव स योऽयमग्निश्चीयते-

---

अथ मैत्रावरुणी पयस्या ।

अथ मैत्रावरुण्या पयस्यया यजते । देवत्रा वा एष भवति—य एतत्कर्म करोति । दैवम्वेतन्मिथुनम्—यन्मित्रावरुणौ । स यदेतयाऽनिष्ट्वा मानुष्यां चरेत्—प्रत्यवरोहः सः । यथा दैवः सन्मानुषः स्यात्—तादृक् तत् । अथ यदेतया मैत्रावरुण्या पयस्यया यजते—दैवमेवैतन्मिथुनमुपैति । एतयेष्ट्वा कामं यथाप्रतिरूपं चरेत् ॥ ९४ ॥

यद्वेवैतया मैत्रावरुण्या पयस्यया यजते । प्रजापतेर्विस्रस्ताद्रेतः परापतत् । तं यत्र देवाः समस्कुर्वन् । तदस्मिन्नेतया मैत्रावरुण्या पयस्यया रेतोऽदधुः । तथैवास्मिन्नयमेतद्दधाति ॥ ९५ ॥

स यः स प्रजापतिर्व्यस्रंसत—अयमेव सः—योऽयमग्निश्चीयते । अथ यदस्मात्तद्रेतः परापतत्—

---

उदवसानीयानन्तरं मैत्रावरुण्या पयस्यया यागं विधत्ते[1]—अथ मैत्रावरुण्येति । तस्याः प्रयोजनमाह—देवत्रा वा एष भवतीत्यादिना । ' यः ' यजमानः ' एतत् ' अग्निचयनाख्यं ' कर्म करोति ' एतेन देवेषु भवति खलु । ' मित्रावरुणौ ' इति यत् ' एतत् दैवम् मिथुनम् ' । अतश्च यदि यजमान एतया मैत्रावरुण्या पयस्यया-ऽनिष्ट्वा मानुष्यां स्त्रियं चरेत् तर्हि स प्रत्यवरोहः स्यात् । तमेव दर्शयति—यथेति । ' यथा ' यः कश्चित्पूर्वं देवसम्बन्धी सन् पश्चात् मानुषः स्यात् तदपि तद्वदेवेति । अथ यद्येतया मैत्रावरुण्या पयस्यया यजते तदा देवसम्बन्ध्येव मिथुनमुपैति । एतद्यागानन्तरं तु यथेच्छं स्वोचितमानुषस्त्रियमनतिक्रम्य चरेत् । अग्निचयनेन यजमानस्य देवत्वे प्राप्ते उचितक्रमानुसारेण मैत्रावरुण्या पयस्यया प्रथमं दैवं मिथुनमुपेत्य पश्चात् स्वेच्छया स्वकीयां भार्यामुपेयादिति यावत् ॥ ९४ ॥

अथ तमेव पयस्यायागं प्रकारान्तरेण प्रशंसति—यद्वेवैतयेति । पूर्वं प्रजासर्जनेन विस्रस्तावयवात् ' प्रजापतेः ' सकाशात् ' रेतः ' पराचीनमगमत् । ' तम् ' प्रजापतिं यस्मिन्नवसरे 'देवाः' संस्कृतमकुर्वन् तदा तद्रेतः ' एतया ' मैत्रावरुण्या पयस्यया अस्मिन्निहितवन्तः । अतोऽयमिदानींतनोऽपि यजमानो मैत्रावरुण्या पयस्यया अस्मिन् प्रजापतौ तथैव रेतो निदधाति ॥ ९५ ॥

ननु कथमस्मिन्नग्नौ पयस्यया होमेन प्रजापतौ रेतोनिधानं घटते तत्राह—स यः स प्रजापतिरिति ।

---

१—पयस्या मैत्रावरुणी । का. श्रौ. सू. १८।१।१० ।

ऽथ यदस्मात्तद्रेतः परापतदेषा सा पयस्या मैत्रावरुणी भवति प्राणोदानौ वै मित्रावरुणौ प्राणोदानाऽउ वै रेतः सिक्तं विकुरुतः पयस्या भवति पयो हि रेतो यज्ञो भवति यज्ञो ह्येव यज्ञस्य रेत ऽउपाᳩंशु भवत्युपाᳩंशु हि रेतः सिच्यतेऽन्ततो भवत्यन्ततो हि रेतो धीयते ॥ ९६ ॥

तस्यै वाजिनेन चरन्ति । तस्मिन्दक्षिणां ददाति तूपरौ मिथुनौ दद्यादित्यभ्याज्ञाय नैवमन्यऽइति ह स्माह माहित्थिः स्रवत्यु हैषाऽग्निचित ऽआहुतिः सोमाहुतिर्यामनिष्टके जुहोति ॥ ९७ ॥

---

एषा सा पयस्या । मैत्रावरुणी भवति । प्राणोदानौ वै मित्रावरुणौ । प्राणोदाना उ वै रेतः सिक्तं विकुरुतः । पयस्या भवति । पयो हि रेतः । यज्ञो भवति । यज्ञो ह्येव यज्ञस्य रेतः । उपांशु भवति । उपांशु हि रेतः सिच्यते । अन्ततो भवति । अन्ततो हि रेतो धीयते ॥ ९६ ॥

तस्यै वाजिनेन चरन्ति । तस्मिन्दक्षिणां ददाति । तूपरौ मिथुनौ दद्यात्–इत्यभ्याज्ञाय नैवमन्य इति ह स्माह माहित्थिः । स्रवत्यु हैषाऽग्निचित आहुतिः सोमाहुतिः–यामनिष्टके जुहोति ॥ ९७ ॥

---

स इति यस्मिन्नवसरे प्रजापतिर्व्यस्रंसत सोऽवसरः परामृश्यते । स यः स प्रजापतिर्व्यस्रंसत सोऽयमेव योऽयमग्निः इदानीं 'चीयते' । अथास्मात्प्रजापतेः सकाशात् यद्रेतः परापतदेषा सा पयस्या, । एषा सेति स्त्रीलिङ्गं विधेयपयस्यापेक्षम् । तस्मादस्मिन् संचितेऽग्नौ पयस्यायागेनैव प्रजापतौ पराचीनं रेतः पुनरेवाहितं भवतीत्यर्थः । अथैतस्याः पयस्यायाः मित्रावरुणदेवतासंबन्धं प्रशंसति–मैत्रावरुणी भवतीति । मित्रावरुणौ प्राणोदानौ खलु । तयोः प्राणोदानवत्साहचर्यात् । प्राणोदानौ हि सिक्तं रेतो विकुरुतः । प्राणोदानविशिष्टायामेव स्त्रियामन्तःसिक्तस्य रेतसोऽवयवसंनिवेशेन अवयविवृद्धेः । तस्माद्रेतोरूपायाः पयस्यायाः प्राणोदानात्मकमित्रावरुणसम्बन्धो युज्यते । इत्थं देवताविशेषसम्बन्धमुपपाद्य हविषः पयस्यात्मकत्वमुपपादयति–पयस्या भवतीति । रेतोऽभिवृद्धिहेतुत्वेन पयसो रेतस्त्वम् । अथास्य यज्ञात्मकत्वमुपपादयति–यज्ञो भवतीति । लोके रेत उपांश्वेव सिच्यते तद्वदेवात्रापि भवेदित्याह–उपांशु भवतीति । लोके शरीरस्यान्ततो रेतो निधीयते इति तदात्मकोऽयमपि यज्ञः अन्ते भवेदित्याह–अन्ततो भवतीति ॥ ९६ ॥

अथैतस्मिन्यागे कालविशेषे दक्षिणादानं विधत्ते–तस्यै वाजिनेनेति । तस्या इति षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ वा. ) तस्याः पयस्यायाः वाजिनेन चरन्त्यध्वर्यवः । तस्मिन्वाजिने दक्षिणां दद्यात् । तूपरौ मिथुनौ दद्यादित्यादेरयमर्थः ! माहित्थिर्नाम महर्षिः तत्र तूपरौ शृंगरहितौ मिथुनौ गावौ दद्यादिति विधार्य–अन्ये एवं दक्षिणां न ददति–इत्याह । अथैकवारमग्निं चितवतो यजमानस्य पश्चात्क्रियमाणे क्रतौ इष्टकावैधुर्यदोषमाह–स्रवतीत्यादिना । इष्टकारहितेऽग्नौ यामाहुतिं जुहोत्यग्निचितः सा सोमाहुतिः स्रवति प्रच्यवते निष्फला भवतीत्यर्थः । अत एव तैत्तिरीयके–"न वा एतस्यानिष्टक आहुतिरवकल्पते यां वा एषोऽनिष्टक आहुतिं जुहोति स्रवति वै सा, तां स्रवन्तीं यज्ञोऽनु पराभवति यज्ञं यजमानः" ( तै. सं. ५।४।१०।३ ) इति ॥९७॥

---

१–तूपरमिथुनदक्षिणोदवसानीयान्ते । का० श्रौ० सू० १८ । ११० ।

स स्वयमातृण्णाऽएवोपदधीत । ( ते ) इमे वै लोकाः स्वयमातृण्णा ऽइमुऽउ लोका ऽएषोऽग्निश्चितः ॥ ५८ ॥

( ऽ ) ऋतव्याऽएवोपदधीत । संव्वत्सरो वाऽऋतव्याः संव्वत्सरऽएषोऽग्निश्चितः ॥ ५९ ॥

( तो ) व्विश्वज्योतिषऽएवोपदधीत । ( तै ) एता वै देवता व्विश्वज्योतिष ऽएता ऽउ देवता ऽएषोऽग्निश्चितः ॥ ६० ॥

पुनश्चितिमेवोपदधीत । पुनर्यज्ञो हैषऽउत्तरा हैषा देवयज्या पुनर्यज्ञमेवैतदुपधत्तऽउत्तरामेव देवयज्यामुप हैनं पुनर्यज्ञो नमतीति न तथा कुर्याद्यो वाव चितेऽग्निर्निधीयते तामेवेष्टकामेष सर्व्वोऽग्निरभिसम्पद्यते तद्यदग्नौ जुहोति तदेवास्य यथा सर्व्वस्मिंश्छाण्डिलेऽग्नौ संचिते पक्षपुच्छवत्याहुतयो हुताः स्युरेवमस्यैता ऽआहुतयो हुता भवन्ति ॥ ६१ ॥

---

स स्वयमातृण्णा एवोपदधीत । इमे वै लोकाः स्वयमातृण्णाः । इम उ लोका एषोऽग्निश्चितः ॥ ५८ ॥

ऋतव्या एवोपदधीत । संवत्सरो वा ऋतव्याः । संवत्सर एषोऽग्निश्चितः ॥ ५९ ॥

विश्वज्योतिष एवोपदधीत । एता वै देवता विश्वज्योतिषः । एता उ देवता एषोऽग्निश्चितः ॥ ६० ॥

अथ गार्हपत्यस्य पुनश्चितिः ।

पुनश्चितिमेवोपदधीत । पुनर्यज्ञो हैषः, उत्तरा हैषा देवयज्या । पुनर्यज्ञमेवैतदुपधत्ते, उत्तरामेव देवयज्याम्, उप हैनं पुनर्यज्ञो नमतीति । न तथा कुर्यात् । यो वाव चितेऽग्निर्निधीयते–तामेवे-

---

ननु तर्हि पूर्ववदेव किमग्निचयनं कृत्स्नमपि कुर्यादिति तत्राह–स स्वयमातृण्णा एवेति । 'सः' अध्वर्युः अनन्तरं क्रियमाणे क्रतौ स्वयमातृण्णा एवोपदधीत, न पुनरिष्टकान्तरमित्यर्थः । एतावता कथं तस्याग्नेः सिद्धिरिति तत्राह–इमे वै लोका इति । प्रथममध्यमोत्तमासु तिसृषु उपधीयमानास्तिस्रः स्वयमातृण्णाः पृथिव्यादिलोकत्रयात्मिकाः । 'एषः' संचितोऽग्निरपि प्रजापतिरूपत्वाल्लोकत्रयात्मकः । एवं च स्वयमातृण्णोपधानेनैव स संचितोऽग्निः सेत्स्यतीत्यर्थः ॥ ५८ ॥

अथवा ऋतव्या; विश्वज्योतिषो वा पुनश्चितिमेव वोपदधीतेत्याह–ऋतव्या एवेति । अत्र सर्वत्र एवकारस्यावधारणार्थत्वादितरनिषेधसिद्धौ स्वयमातृण्णादीनां सर्वासामपि विधिनिषेधसम्भवात् षोडशीग्रहणाग्रहणवद्विकल्पसिद्धिः । अत एव कात्यायनः–" चित्याशक्तौ पुनः सोमेज्यायां स्वयमातृण्णाविश्वज्योतिर्ऋतव्यानामन्यतमाः । पुनश्चितिम् " ( का. श्रौ. सू. १८।११९–१२० ) । एता वै देवता इति । 'एताः' अग्निवाय्वादित्यात्मिका देवता विश्वज्योतिषः 'एषः सञ्चितोऽग्निः अपि' एता अग्निवाय्वादित्या देवता इत्यर्थः ॥५९॥६०॥

पुनर्यज्ञो हैष इति । पुनश्चितिरिति यत् 'एषः' पुनर्यज्ञः । किंच एषः पुनश्चितिलक्षणो यज्ञः उत्तरा देवयज्या । अत एतेन पुनर्यज्ञं देवयज्यां चोपधत्ते–'एनम्' यजमानं पुनर्यज्ञ उपनमतीति हेतोः पुनश्चितिमेवोपदधी-

सर्व्वाणि वाऽएष भूतानि । सर्व्वान्देवान्गर्भी भवति योऽग्निं बिभर्ति स योऽसंव्वत्सरभृतं चिनुतऽएतानि ह स सर्व्वाणि भूतानि गर्भं भूतं निर्हते यो न्वेव मानुषं गर्भं निर्हन्ति तन्न्वेव परिचक्षतेऽथ किं य ऽएतं दैवो ह्येष नासंव्वत्सरभृतस्यर्त्विजा भवितव्यमिति ह स्माह वात्स्यो नेदस्य देवरेतसस्य निर्हण्यमानस्य मेद्यसानीति ॥ ६२ ॥

षण्मास्यमन्तमं चिन्वीतेत्याहुः । षण्मास्या वाऽअन्तमा गर्भा जाता जीवन्तीति स यद्यसंव्वत्सरभृते महदुक्थꣳ शꣳसेदृगशीतीः शꣳसेद्-

---

ष्टकामेष सर्वोऽग्निरभिसंपद्यते । तद्यदग्नौ जुहोति—तदेवास्य—यथा सर्वस्मिञ्छाण्डिलेऽग्नौ संचिते पक्षपुच्छवत्याहुतयो हुताः स्युः—एवमस्यैता आहुतयो हुता भवन्ति ॥ ६१ ॥

अथ उख्यसम्भरणमीमांसा ।

सर्वाणि वा एष भूतानि सर्वान्देवान् गर्भी भवति । योऽग्निं बिभर्त्ति । स योऽसंवत्सरभृतं चिनुते—एतानि ह स सर्वाणि भूतानि गर्भं भूतं निर्हते । यो न्वेव मानुषं गर्भं निर्हन्ति—तन्न्वेव परिचक्षते—अथ किं य एतम् । दैवो ह्येषः । नासंवत्सरभृतस्यर्त्विजा भवितव्यमिति ह स्माह वात्स्यः । नेदस्य देवरेतसस्य निर्हण्यमानस्य मेद्यसानीति ( १ ) ॥ ६२ ॥

षण्मास्यमन्तमं चिन्वीतेत्याहुः । षण्मास्या वा अन्तमा गर्भा जाता जीवन्तीति । स यद्यसंवत्सरभृते महदुक्थं शंसेद्—ऋगशीतीः शंसेत् । असर्वं वै तद्—यदसंवत्सरभृतः । असर्वं तद्—यद-

---

तेत्यर्थः । उक्त्वाऽपि पक्षानितरस्य प्रकारान्तरस्य दर्शनेन विवक्षितसिद्धिमाह—न तथा कुर्यादिति । अथ पूर्वोक्तप्रकारेणोपधानं न कुर्यात्; कुतः संचितेऽग्नौ य एवाग्निर्निधीयते—तदग्निरूपामेवेष्टकामभिलक्ष्य एष सर्वोऽपि चित्याग्निः संपद्यते । उपरिनिधीयमानायामग्निरूपायामेतदिष्टकायामिष्टकासमूहरूपः कृत्स्नोऽप्यग्निरन्तर्भवतीत्यर्थः । तथा सत्यग्नावेव जुहोतीति यत् तेनैवास्य यजमानस्य यथा सर्वस्मिन् शाण्डिल्यमुनिसंस्कृते पक्षपुच्छवति संचितेऽग्नौ आहुतयो हुता भवेयुः एवमेवास्य यजमानस्य आहुतयो हुता भवन्ति । अग्नावेव कृत्स्नस्य चित्याग्नेरन्तर्भावमनुसंदधानस्य यजमानस्याग्निचयने क्रियमाणे चाक्रियमाणे कृतानपि सोमाहुतीनां स्वयमातृण्णादीनां इष्टकानां प्राधान्यतः तासामप्युपधानमाद्रियते इत्यर्थः ॥ ६१ ॥

अस्याग्नेः संवत्सरभरणमवश्यं क्रियत इति दर्शयति—सर्वाणि वा इति । यो यजमानोऽग्निं बिभर्ति स सर्वाणि भूतानि सर्वान्देवान् गर्भी भवति गर्भीभावयति । अन्तर्भावितण्यर्थोऽत्र भूः । अतश्च यो यजमानः स यदि असंवत्सरभृतमग्निं चिनुते स एतानि गर्भीभूतानि सर्वाणि भूतानि निर्हन्ति । लोके खलु यो जनः मानुषं एव गर्भं निर्हन्ति तं लोकाः परिवर्जयन्त्येव । अथ यः एतं दैवं गर्भं निर्हन्ति तं परिवर्जयन्तीति किमु वक्तव्यम् । अत एवास्य निर्हण्यमानस्य देवरेतसस्य भागी न असानीति असंवत्सरभृतस्याग्नेर्ऋत्विजा न भवितव्यमिति वात्स्यो महर्षिराह स्म ॥ ६२ ॥

तत्र पक्षान्तरमाह—षण्मास्यमिति । अन्ततः षण्मास्या भृता गर्भा जाताः सन्तो जीवन्तीति अन्ततः

---

१–अचयनं वा, चित्यस्याहवनीयाभिसंपत्तेः । का० श्रौ० सू० १२१ । १२२ ।

सर्व्वं वै तद्यदसंव्वत्सरभृतोऽसर्व्वं तद्यदृगशीतयो विक्रुष्टं त्वेनᳪं स भूयो विकर्षेद्यदि चैव संव्वत्सरभृतः स्याद्यदि चासंव्वत्सरभृतः सर्व्वमेव महदुक्थᳪं शᳪंसेत् ॥ ६३ ॥

( ३ ) अथ ह शाण्डिल्यायनः प्राच्यां जगाम । तᳪं ह दैयाम्पातिरुवाच शाण्डिल्यायन कथमग्निश्चेतव्यो ग्लायामो ह संव्वत्सरभृतायाग्निमु चिकीषामहऽइति ॥ ६४ ॥

स होवाच । कामं न्वाऽएनᳪं स चिन्वीत येन पुरा संव्वत्सरं भृतः स्यात्तᳪं ह्येव तं भृतᳪं सन्तं चिनुतऽइति ॥ ६५ ॥

काममन्वेवैनᳪं स चिन्वीत । यः संव्वत्सरमभिषविष्यन्त्स्यादेष वाऽएनं प्रत्यक्षमन्नेन बिभर्त्येताभिराहुतिभिः ॥ ६६ ॥

---

गशीतयः । विक्रुष्टं त्वेनं स भूयो विकर्षेत् । यदि चैव संवत्सरभृतः स्यात् । यदि चासंवत्सरभृतः–सर्वमेव महदुक्थं शंसेत् ( २ ) ॥ ६३ ॥

अथ ह शाण्डिल्यायनः प्राच्यां जगाम । तं ह दैयाम्पातिरुवाच–शाण्डिल्यायन कथमग्निश्चेतव्यः । ग्लायामो ह संवत्सरभृताय, अग्निमु चिकीषामह इति ॥ ६४ ॥

स होवाच–कामं न्वा एनं स चिन्वीत–येन पुरा संवत्सरं भृतः स्यात् । तं ह्येव तं भृतं सन्तं चिनुत इति ( ३ ) ॥ ६५ ॥

काममन्वेवैनं स चिन्वीत–यः संवत्सरमभिषविष्यन्त्स्यात् । एष वा एनं प्रत्यक्षमन्नेन बिभर्ति–एताभिराहुतिभिः ( ४ ) ॥ ६६ ॥

---

षण्मासान्भृतमग्निं चिन्वीतेत्याहुः केचिच्छाखिनः । यथा महाव्रते महदुक्थस्य शंसनादि अग्निचित्ये अस्मिन् असंवत्सरभरणपक्षेऽपि तथैव शंसनप्रसक्तावाह–स यद्यसंवत्सरभृत इति । असंवत्सरभृते यदि महदुक्थं शंसेत् तदा ऋगशीतीरेव शंसेत्; कुतः ? ' असंवत्सरभृत ' इति यत् तदप्यसर्वम् । ऋगशीतय इति यत् तदप्यसर्वमिति । एवं तर्हि असंवत्सरभरणेन विक्रुष्टं सेंधनमग्निमृगशीतिमात्रशंसनेन भूयोऽपि विकर्षेदित्याह–विक्रुष्टं त्वेनमिति । कथं तर्हि शंसेदिति तत्राह–यदि चैवेति । ' यदि ' अयमग्निः ' संवत्सरभृतः स्यात् '–यदि वाऽसंवत्सरभृतस्तदा सर्वदापि ' सर्वमेव महदुक्थं शंसेत् ' न ऋगशीतीरेवेत्यर्थः ॥ ६३ ॥

अथाग्निभरणविषये अन्यानपि कांश्चित् पक्षान् दर्शयितुमुपोद्घातयति–अथ हेति । ' शाण्डिल्यायनः ' कश्चिदृषिः ' प्राच्यां ' दिशि ' जगाम ' । ' तं ' शाण्डिल्यायनं ' दैयाम्पातिर्नाम ' अन्यो महर्षिः ' उवाच ' हे शाण्डिल्यायन ! अग्निं चेतुमिच्छामः । संवत्सरभृतायाग्नये ' ग्लायामः ' । ' कथमग्निश्चेतव्यः ' इति ॥ ६४ ॥

स होवाचेत्यादिना तानेव पक्षान्दर्शयति । पूर्वं येन यजमानेनैकवारमग्निः संवत्सरभृतः स्यात् । स यजमानो यथेच्छमेवैनमग्निं चिन्वीत न तस्य संवत्सरभरणनियमः । किन्तु कानिचिद्दिनानि भृत्वा चयनम् । पूर्वं संवत्सरभरणात्तमग्निमिदानीमनियमेन भरणेऽपि संवत्सरभृतं सन्तमेव चिनुत इति ॥ ६५ ॥

अथवा यः संवत्सरं सोममभिषविष्यन् स्यात् । गवामयनादौ संवत्सरं सोमस्याभिषवात् । तत्र चिचीषमाणो

---

१–संवत्सरभृतिनोऽसंवत्सरभृतेऽपि । संवत्सरं सोष्यतः । संवत्सराहिताग्नेः । जातस्य च । षण्मास्यमन्त्यम् । का० श्रौ० सू० १६ । १७८–१८२ ।

कामम्न्वेवैनथ्ँ स चिन्वीत । यः संव्वत्सरमग्निहोत्रं जुहुयाद्बिभर्ति वाऽएनमेष योऽग्निहोत्रं जुहोति ॥ ६७ ॥

कामम्न्वेवैनथ्ँ स चिन्वीत । यः संव्वत्सरं जातः स्यात्प्राणो वाऽअग्निस्तमेतद्बिभर्त्यथ ह वै रेतः सिक्तं प्राणोऽन्ववरोहति तद्विन्दते तद्यज्जातं जातं विन्दते तस्माज्जातवेदास्तस्मादप्येवंवित्कामथ्ँ सद्योभूतं चिन्वीत यद्दु ह वाऽएवंवित्पिबति वा पाययति वा तदेवास्य यथा सर्वस्मिञ्छाण्डिलेऽग्नौ संचिते पक्षपुच्छवत्याहुतयो हुताः स्युरेवमस्यैता ऽआहुतयो हुता भवन्ति ॥ ६८ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ९-४-२ ॥ ( ५. १. ) ॥

---

कामम्न्वेवैनं स चिन्वीत । यः संवत्सरमग्निहोत्रं जुहुयात् । बिभर्ति वा एनमेषः—योऽग्निहोत्रं जुहोति ( ५ ) ॥ ६७ ॥

कामम्न्वेवैनं स चिन्वीत—यः संवत्सरं जातः स्यात् । प्राणो वा अग्निः—तमेतद्बिभर्ति । अथ ह वै रेतः सिक्तं प्राणोऽन्ववरोहति, तद्विन्दते । तद्यज्जातं जातं विन्दते—तस्माज्जातवेदाः । तस्मादप्येवंवित् कामं सद्योभूतं चिन्वीत । यद्दु ह वाऽएवंवित्पिबति वा पाययति वा—तदेवास्य यथा सर्वस्मिञ्छाण्डिलेऽग्नौ संचिते पक्षपुच्छवत्याहुतयो हुताः स्युः—एवमस्यैता आहुतयो हुता भवन्ति ( ६ ) ॥ ६८ ॥

---

यजमानो यथेच्छमेवैनमग्निं चिन्वीत । एष यजमानः एताभिः पुरस्तात् क्रियमाणाभिराहुतिभिरन्नेनाहुतिलक्षणेन चैनमग्निं प्रत्यक्षं बिभर्तीति ॥ ६६ ॥

अथवा यः ' संवत्सरमग्निहोत्रं जुहुयात् ' सोऽपि यथेच्छमग्निं चिन्वीत तेनाग्निहोत्रहोमेन संवत्सरभरणस्य संपादनात् ॥ ६७ ॥

अथवा यः ' संवत्सरं जातः स्यात् ' द्वादशसु मासेषु पूर्णेषु जातः स्यात् । सोऽपि काममेवैनमग्निं चिन्वीत । कुतः शरीरान्तर्वर्त्तमानः ' प्राणो ' यतोऽग्न्यात्मकः । तमेतमग्निमसौ संवत्सरं जातो बिभर्त्ति । रेतसा सह प्राणसाहित्येनैव सिच्यमानत्वात् । प्रसङ्गात् प्राणस्य जातवेदस्त्वं दर्शयति—अथेति । ' अथ ' खलु ' सिक्तं रेतः प्राणोऽन्ववरोहति ' तदा ' तद्रेतः प्राणो विन्दते ' लभते । तस्मात् ' जातं जातं ' रेतो विन्दत इति यत् तस्मात्प्राणो जातवेदाः । उक्तार्थवेदिताऽपि सद्योभूतमपि तं चिन्वीतेत्याह—तस्मादप्येवमिति । एतस्यैवार्थस्य वेदिता स्वयं यत्किञ्चित् ' पिबति ' वा अन्यं ' पाययति वा ' ' तदेवास्य यथा सर्वस्मिन् संचिते पक्षपुच्छवति ' ' शाण्डिलेऽग्नौ ' ' या आहुतयो हुताः ' एवमेवास्यैता आहुतयो हुता भवन्तीत्याह—यद्दु ह वा एवं विदिति ॥ ६८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ९-५-१ ) ॥

इन्द्रऽएतुत्सप्तर्चुमपश्युत्। (न्यू) न्यूनस्युाप्त्याऽअुतिरिक्तस्यानतिरिक्त्यै व्यृद्धस्य सुमृद्ध्याऽअुथ ह वुाऽईश्वुरोऽग्निं चित्वा किंचिद्दौरितमुापत्तोर्व्विं वा ह्वलितोर्युद्वा यदु ह वु एतच्छ्रचुापर्णः सायकायनुः शुश्रावुाथ हैतत्कर्म्मोपदधर्षु ॥ १ ॥

सैषु त्रयुस्य सुमृद्धिः । ( २ ) अग्नेः सुमृद्धिर्योऽग्निं चिनुते तुस्य सुमृद्धिर्योऽग्निं चिनोति तुस्य सुमृद्धिः ॥ २ ॥

(स्त) तद्युदेतुेनोपतिष्ठते । युदेवास्युात्र विद्वान्वाऽविद्वान्वाऽति वा रेचुयति नु वाऽभ्यापुयति तुदेवास्यैतेन सुर्व्वमाप्तं भवति युदस्य किं चानाप्तं

---

## अथ सर्वचित्यन्तसाधारणोपस्थानम् ।

इन्द्र एतत्सप्तर्चमपश्यत्–न्यूनस्याप्त्यै, अतिरिक्तस्यानतिरिक्त्यै, व्यृद्धस्य समृद्ध्यै । अथ ह वा ईश्वरोऽग्निं चित्वा किंचिद्दौरितमापत्तोर्विं वा ह्वलितोः यद्वा । यदा ह वा एतच्छ्रचापर्णः सायकायनः शुश्राव–अथ हैतत्कर्मोपदधर्ष ॥ १ ॥

सैषा त्रयस्य समृद्धिः । अग्नेः समृद्धिः ( १ ) । योऽग्निं चिनुते तस्य समृद्धिः ( २ ) । योऽग्निं चिनोति तस्य समृद्धिः ( ३ ) ॥ २ ॥

तद्यदेतेनोपतिष्ठते–यदेवास्यात्र विद्वान्वाऽविद्वान्–वा–अति वा रेचयाति, न वाऽभ्यापयति–

---

अथ " येऽअग्नयः पाञ्चजन्याः " इत्यस्य मन्त्रस्यानन्तरं " वार्त्रहत्याय शवसे " इत्यादयः सप्त मन्त्राः समाम्नायन्ते तेषामिदानीं विनियोगमभिधातुमुपोद्घातमाह–इन्द्र एतदिति । ' एतत् ' इति वक्ष्यमाण परामर्शः । सप्त ऋचो यस्मिन् समुदायें स सप्तर्चः "ऋक्पूरब्धूःपथामानक्षे " ( पा. सू. ५ । ४ । ७४ ) इति अकारः समासान्तः । ' एतत् ' इति लिङ्गव्यत्ययः छान्दसः । ' इन्द्र एतं सप्तर्चमपश्यत् ' । किमर्थं समपश्यदिति तत्राह–न्यूनस्येति । ' न्यूनस्य ' अकृतस्य कर्मणः प्राप्त्यै, आधिक्येन कृतस्यानाधिक्याय, अन्यथा कृतस्य च यथाकरणाय सप्तर्चमपश्यत् इति[3] ॥ १ ॥

---

१–अत्र पंचम्याः सप्तर्चोपस्थान ँ सर्व्वोपधानात् । धिष्ण्यान्वा चित्वोत्तमासंयोगात् । अभिमृशेदिच्छन् संवत्सरोऽसीति । एवं यथाचितिः । का. श्रौ. सू. १८ । ५१–५४ ।

२–चितिं पुरीषवतीमुपतिष्ठते व्वार्त्रहत्यायेति सप्तभिः । अष्टाभिरेके दशभिर्वा । का० श्रौ० सू० १७ । १३५–१३६ ।

३–इतोऽग्रेऽस्य ब्राह्मणस्य सायणभाष्यं वा हरिस्वामिभाष्यं वा नोपलब्धम् । अतो मूलमात्रं ऋजुपाठसहितं मुद्रितम् । यच्चे तद्भाष्यं केषांचन महाभागानां सविधे वर्तते तैर्दीयेत चेद्द्वितीयावृत्तौ संगृह्य मुद्रितं भवेदिति ते प्रार्थ्यन्ते ॥

य उ तस्यामनुष्टुभ्यृचि कामोऽत्रैव तमाप्नोत्यथोऽएतस्माद्देवैतत्कर्म्मणो रक्षाᳪंसि नाष्ट्रा ऽअपहन्ति नो हैनमनुव्याहारिण स्तृण्वते तस्मादप्येवंवित्कामं परस्माऽअग्निं चिनुयादीश्वरो ह श्रेयान्भवितोः ॥ ३ ॥

( वा ) वार्त्रहत्याय शवसे । सहदानुं पुरुहूत क्षियन्तमिति वार्त्रघ्नीभ्यां प्रथमाभ्यामुपतिष्ठतऽएतद्वै देवा वृत्रं पाप्मानᳪं हत्वाऽपहतपाप्मान ऽएतत्कर्माकुर्व्वत तथैवैतद्यजमानो वृत्रं पाप्मानᳪं हत्वाऽपहतपाप्मैतत्कर्म कुरुते ॥ ४ ॥

वि न ऽइन्द्र मृधो जहि । मृगो न भीमः कुचरो गिरिष्ठा ऽइति वैमृधीभ्यां द्वितीयाभ्यामेतद्वै देवा मृधः पाप्मानᳪं हत्वाऽपहतपाप्मान ऽएतत्कर्माकुर्व्वत तथैवैतद्यजमानो मृधः पाप्मानᳪं हत्वाऽपहतपाप्मैतत्कर्म कुरुते ॥ ५ ॥

वैश्वानरो नऽऊतये । पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यामिति वैश्वानरीभ्यां तृतीयाभ्यामेतद्वै देवा वैश्वानरेण पाप्मानं दग्ध्वाऽपहतपाप्मान ऽएतत्कर्माकुर्व्वत तथैवैतद्यजमानो वैश्वानरेण पाप्मानं दग्ध्वाऽपहतपाप्मैतत्कर्म कुरुते ॥ ६ ॥

---

तदेवास्यैतेन सर्व्वमाप्तं भवति—यदस्य किं चानाप्तम् । य उ तस्यामनुष्टुभ्यृचि कामः—अत्रैव तमाप्नोति । अथो एतस्माद्देवैतत्कर्मणो रक्षांसि नाष्ट्रा अपहन्ति । नो हैनमनुव्याहारिणः स्तृण्वते । तस्मादप्येवंवित् कामं परस्मा अग्निं चिनुयात्—ईश्वरो ह श्रेयान्भवितोः ॥ ३ ॥

( १ ) " वार्त्रहत्याय शवसे, ( २ ) सहदानुं पुरुहूत क्षियन्तम् "—( वा सं. १८।६९ ) इति वार्त्रघ्नीभ्यां प्रथमाभ्यामुपतिष्ठते । एतद्वै देवा वृत्रं पाप्मानं हत्वाऽपहतपाप्मान एतत्कर्माकुर्वत । तथैवैतद्यजमानो वृत्रं पाप्मानं हत्वाऽपहतपाप्मैतत्कर्म कुरुते ॥ ४ ॥

( ३ ) " वि न इन्द्र मृधो जहि, ( ४ ) मृगो न भीमः कुचरो गिरिष्ठाः "—( वा. सं. १८।७०, ७१ ) इति वैमृधीभ्यां द्वितीयाभ्याम् । एतद्वै देवा मृधः पाप्मानं हत्वाऽपहतपाप्मान एतत्कर्माकुर्वत । तथैवैतद्यजमानो मृधः पाप्मानं हत्वाऽपहतपाप्मैतत्कर्म कुरुते ॥ ५ ॥

( ५ ) " वैश्वानरो न ऊतये, ( ६ ) पृष्टो दिवि पृष्टो अग्निः पृथिव्याम् "—( वा. सं. १८।७२,७३ ) इति वैश्वानरीभ्यां तृतीयाभ्याम् । एतद्वै देवा वैश्वानरेण पाप्मानं दग्ध्वाऽपहतपाप्मान एतत्कर्माकुर्वत । तथैवैतद्यजमानो वैश्वानरेण पाप्मानं दग्ध्वाऽपहतपाप्मैतत्कर्म कुरुते ॥ ६ ॥

( तेऽश्या ) अश्याम तं काममग्ने तवोतीति । ( त्ये ) एकया कामवत्यै- तद्वै देवाः षड्चेन पाप्मानमपहत्यैकया कामवत्यैकधाऽन्ततः सर्वान्कामा- नात्मन्नकुर्वत तथैवैतद्यजमानः षड्चेन पाप्मानमपहत्यैकया कामव- कधाऽन्ततः सर्वान्कामानात्मन्कुरुते ॥ ७ ॥

सप्तर्चं भवति । सप्तचितिकोऽग्निः सप्तऽर्तवः सप्त दिशः सप्त देवल सप्त स्तोमाः सप्त पृष्ठानि सप्त च्छन्दाꣳसि सप्त ग्राम्याः पशवः सप्तार सप्त शीर्षन्प्राणा यत्किं च सप्तविधमधिदेवतमध्यात्मं तदेनेन सर्वमाप्न ता ऽअनुष्टुभमभिसंपद्यन्ते व्वाग्वाऽअनुष्टुब्वाचैवास्य तदाप्नोति यद किं चानाप्तम् ॥ ८ ॥

( म ) अष्टर्चेनोपतिष्ठेतेत्यु हैकऽआहुः । ( व्वं ) व्वयं तेऽअद्य ररिम हि काममिति द्वितीयया कामवत्या सप्त पूर्वास्तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किं चानाप्तमथोऽएवꣳ समं देवते भजेतेऽइति न तथा कुर्यादेता वाव सप्ता- ष्टावनुष्टुभो भवन्ति स योऽष्टर्चे कामोऽत्रैव तमाप्नोति ॥ ९ ॥

(त्यै) ऐन्द्राग्नीभिरुपतिष्ठते । ( तऽऐ ) ऐन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किं चानाप्तमिन्द्राग्नी वै सर्वे देवाः सर्व

---

( ७ ) "अश्याम तं काममग्ने तवोती"-( वा. सं. १८ । ७४ ) इति एकया वत्या । एतद्वै देवाः षड्चेन पाप्मानमपहत्यैकया कामवत्यैकधाऽन्ततः सर्वान्कामानात्मन्नकुर्व तथैवैतद्यजमानः षड्चेन पाप्मानमपहत्यैकया कामवत्यैकधाऽन्ततः सर्वान्कामानात्मन्कुरुते ॥ ७ ॥

सप्तर्चं भवति । सप्तचितिकोऽग्निः, सप्तऽर्तवः, सप्त दिशः, सप्त देवलोकाः, सप्त स्तोमाः, पृष्ठानि, सप्त च्छन्दांसि, सप्त ग्राम्याः पशवः; सप्तारण्याः, सप्त शीर्षन्प्राणाः-यत्किं च ; त माधिदेवतमध्यात्मं-तदेनेन सर्वमाप्नोति । ता अनुष्टुभमभि सम्पद्यन्ते । वाग्वा अनुष्टुप् । तदाप्नोति-यदस्य किं चानाप्तम् ॥ ८ ॥

अष्टर्चेनोपतिष्ठेतेत्यु हैक आहुः । "वयं ते अद्य ररिमा हि कामम्"-( वा. सं. १८ इति द्वितीयया कामवत्या । सप्त पूर्वाः । तदष्टौ । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । याव यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किं चानाप्तम् । अथो एवं समं देवते भजेते न तथा कुर्यात् । एता वाव सप्ताष्टावनुष्टुभो भवन्ति । स योऽष्टर्चे कामः-अत्रैव तमाप्नोति ॥

ऐन्द्राग्नीभिरुपतिष्ठते । ऐन्द्राग्नोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति-

देवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किं चानाप्तम् ॥ १० ॥

( न्त ) तद्धैके । कर्मणः कर्मण ऽएवैतां प्रतिपदं कुर्व्वतेऽपहतपाप्मान ऽएतत्कर्म करवामहाऽइति पुरीषवतीं चितिं कृत्वोपतिष्ठेतेत्यु हैकऽआहुस्तत्र हि सा सर्व्वा कृत्स्ना भवतीति स यथा कामयेत तथा कुर्यादिति नु चयनस्याथातोऽचयनस्य ॥ ११ ॥

त्रयो ह वै समुद्राः । ( ऽ ) अग्निर्यजुषां महाव्रतꣳ साम्नां महदुक्थमृचाꣳ स य ऽएतानि परस्मै करोत्येतान्ह स समुद्राञ्छोषयते ताञ्छुष्यतोऽन्वस्य च्छन्दाꣳसि शुष्यन्ति च्छन्दाꣳस्यनु लोको लोकमन्वात्माऽऽत्मानमनु प्रजा पशवः स ह श्वः श्व ऽएव पापीयान्भवति य ऽएतानि परस्मै करोति ॥ १२ ॥

( त्यु ) अथ य ऽएतान्यकृत्वा । परस्माऽअपि सर्व्वैरन्यैर्यज्ञक्रतुभिर्याजयेदेतेभ्यो हैवास्य समुद्रेभ्यश्छन्दाꣳसि पुनराप्यायन्ते च्छन्दाꣳस्यनु लोको लोकमन्वात्माऽऽत्मानमनु प्रजा पशवः स ह श्वः श्व ऽएव श्रेयान्भवति य ऽएतानि परस्मै न करोत्यथैष ह वाऽअस्य दैवोऽमृत ऽआत्मा स य

---

तदेवाः चानाप्तम् । इन्द्राग्नी वै सर्वे देवाः । सर्वदेवत्योऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवास्य मोऽदाप्नोति यदस्य किं चानाप्तम् ॥ १० ॥

तस्म तद्धैके—कर्मणः कर्मण एवैतां प्रतिपदं कुर्वते । अपहतपाप्मान एतत्कर्म करवामहा इति । पुरीषवतीं कृत्वोपतिष्ठेतेत्यु हैक आहुः । तत्र हि सा सर्वा कृत्स्ना भवतीति । स यथा कामयेत तथा कुर्यात् । इति नु चयनस्य । अथातोऽचयनस्य ॥ ११ ॥

त्रयो ह वै समुद्राः—अग्निर्यजुषाम्, महाव्रतं साम्नाम्, महदुक्थमृचाम् । स य एतानि परस्मै करोति—एतान् ह स समुद्राञ्छोषयते । ताञ्छुष्यतोऽन्वस्य च्छन्दांसि शुष्यन्ति । छन्दांस्यनु लोकः । लोकमन्वात्मा । आत्मानमनु प्रजा पशवः । स ह श्वः श्व एव पापीयान्भवति—य एतानि परस्मै करोति ॥ १२ ॥

( अथ य एतान्यकृत्वा परस्मा अपि सर्वैरन्यैर्यज्ञक्रतुभिर्याजयेत्—एतेभ्यो हैवास्य समुद्रेभ्यश्छन्दांसि पुनराप्यायन्ते । छन्दांस्यनु लोकः । लोकमन्वात्मा । आत्मानमनु प्रजा पशवः । स ह श्वः श्व एव श्रेयान् भवति । य एतानि परस्मै न करोति । अथैष ह वाऽअस्य दैवोऽमृत आत्मा । स य

ऽएतानि पुरस्मै करोत्येतुꣳ ह स दैवमात्मानं पुरस्मै प्रयच्छत्युथ शुष्क ऽएव स्थाणुः परिशिष्यते ॥ १३ ॥

तद्धैके । कृत्वा कुर्व्वते वा प्रति वा कारयन्तऽएषा प्रायश्चित्तिरिति न तथा कुर्याद्यथा शुष्कꣳ स्थाणुमुदकेनाभिषिञ्चेत्तादृक्तत्पूयेद्वा वै स वि वा म्रित्येन्नैतस्य प्रायश्चित्तिरस्तीत्येव विद्यात् ॥ १४ ॥

( तु ) अथ ह स्माह शाण्डिल्यः । ( स्तु ) तुरो ह कावषेयः कारोत्यां देवेभ्योऽग्निं चिकाय तꣳ ह देवाः पप्रच्छुर्मुने यदलोक्यामग्निचित्यामाहु रथ कस्मादचैषीरिति ॥ १५ ॥

स होवाच । किं नु लोक्यं किमलोक्यमात्मा वै यज्ञस्य यजमानो ऽङ्गान्यृत्विजो यत्र वाऽआत्मा तदङ्गानि यत्रोऽअङ्गानि तदात्मा यदि वाऽऋत्विजोऽलोका भवन्त्यलोकऽउ तर्हि यजमानऽउभये हि समानलोका भवन्ति दक्षिणासु त्वेव न संवदितव्यꣳ संवादेनैवर्त्विजोऽलोका ऽइति । १६

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ९-४-३ ॥ ( ५. २. ) ॥

चतुर्थः प्रपाठकः समाप्तः ॥९-४॥ (कण्डिकासंख्या १००)

इति पञ्चमोऽध्यायश्च समाप्तः ॥ ९-५ ॥

अस्मिन् काण्डे कण्डिकासंख्या ॥ ४०२ ॥ ब्राह्मणानां संख्या ॥ १९

इति माध्यन्दिनीये शतपथब्राह्मणे संचितिनामकं नवमं काण्डं समाप्तम् ॥ ९ ॥

---

एतानि परस्मै करोति–एतं ह स दैवमात्मानं परस्मै प्रयच्छति । अथ शुष्क एव स्थाणुः शिष्यते ॥ १३ ॥

तद्धैके कृत्वा कुर्वते वा, प्रति वा कारयन्ते–एषा प्रायश्चित्तिरिति । न तथा कुर्यात् । यथा स्थाणुमुदकेनाभिषिञ्चेत्–तादृक्तत् । पूयेद्वा वै सः । वि वा म्रियेत् । नैतस्य प्रायश्चित्तिर इत्येव विद्यात् ॥ १४ ॥

अथ ह स्माह शाण्डिल्यः–तुरो ह कावषेयः कारोत्यां देवेभ्योऽग्निं चिकाय । तं ह देवाः प मुने ! यदलोक्यामग्निचित्यामाहुः–अथ कस्मादचैषीरिति ॥ १५ ॥

स होवाच–किं नु लोक्यम्, किमलोक्यम् । आत्मा वै यज्ञस्य यजमानः, अङ्गान्यृत्विज

वा आत्मा—तदङ्गानि । यत्रो अङ्गानि—तदात्मा । यदि वा ऋत्विजोऽलोका भवन्ति—अलोक उ तर्हि यजमानः । उभये हि समानलोका भवन्ति । दक्षिणासु त्वेव न सम्वदितव्यम् । संवादेनैव-र्त्विजोऽलोका इति ॥ १६ ॥

इति संचितिप्रकरणं सम्पूर्णम् ।

---

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे पञ्चमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ९—५—२ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये नवमकाण्डे पञ्चमोऽध्यायः ॥ ( ९—५ ) ॥

अत्रादितः षष्ट्यध्यायसंमितो नवकाण्डात्मकः
ऐष्टिक-पाशुक-सौमिक-चैत्यकेतिप्रकरण-
चतुष्टयप्रतिपादकः शतपथब्राह्मणान्तर्गतः
षष्टिपथसंज्ञको ब्राह्मणभागश्चरमध्वंस-
मगात् इति ॥

